|| श्रीः ||

# झापञ्जादर्शः

रचयिता

विद्यावाचस्पति पं. मणिनाथ झा

सम्पादकः

डॉ. शशिनाथ झा

कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयः
कामेश्वरनगरम्, दरभङ्गा (बिहार)

# ज्ञापकादर्शः

## (पाणिनीयव्याकरणे ज्ञापकानां परिशीलनम्)

रचयिता

**विद्यावाचस्पतिः पं. मणिनाथ झा**



सम्पादकः

**डॉ. शशिनाथ झा**




**कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयः**

**दरभङ्गा**

विश्वविद्यालय अनुदान आयोग, नई दिल्ली के वित्तीय साहाय्य से प्रकाशित


प्रथमं संस्करणम् – 500 प्रति
प्रकाशनवर्षम् – 2002 ई.
मूल्यम् – 650/ रु.

# JNAPAKADARSH

**(JNAPAKAS IN PANINIAN GRAMMAR)**

**By— Dr. Maninath Jha**

*Edited by—*
**Dr. Shashi Nath Jha**
**Professor (Vyakaran),**
**K.S.D. Sanskrit University, Darbhanga**

*Published by*
**K.S.D. Sanskrit University,**
Darbhanga (Bihar) 846408. INDIA

मुद्रक :
**रत्ना ऑफसेट्स लिमिटेड,**
कमच्छा, वाराणसी
फोन : ३९२८२०

# ज्ञापकादर्शस्य विषयसूची



**प्रथमो भागः**

## द्वितीयो भागः



## तृतीयो भागः



●

# भूमिका

व्याकरणशास्त्रे लक्षणानि (सूत्र-वार्तिक-भाष्यवचनानि) शब्दसाधुतासम्पादकानि तत्तद्व्याख्यातृभिः सोदाहरणं विवेचितानि सन्ति । परन्तु तेषां लक्षणानां प्रवृत्तौ निवृत्तौ, विरोधे, संशये च परिभाषा रूपाणि राजन्तेतरां व्यवस्थापकानि । तानि च लक्षणैरेव ज्ञापितानि भवन्ति । तथाहि – क्वचित् पाणिनिसूत्राण्येव "तस्मिन्निति निर्दिष्टे पूर्वस्य", "तस्यादित्युत्तरस्य", "अलोऽन्त्यस्य" इत्यादीनि विधिसूत्रोपकारकाणि भवन्ति[1] । क्वचिच्च सम्पूर्णं सूत्रमेव स्वयं व्यर्थतादशायां स्वसार्थक्याय अवान्तरनियमं कल्पयन्ति, एवमेव सूत्रांशाः, वार्तिकतदंश - भाष्य - तदंशाः किमपि लक्षणकल्पमुपकल्पयन्ति । तात्पर्यमिदं यद् मुनित्रयोक्तिषु "वर्णेनाप्यनर्थकेन नभवितव्यमि'ति भाष्याभिप्रायतया यत्र यत्र तद्वैयर्थ्यं प्रतीयते तत्र तत्र तत्सार्थक्याय नियमान्तरमाक्षिप्यते, येन तद्वैयर्थ्यं न भवति, तच्च सार्थकतामेत्य किमपि प्रयोगसाधनरूपं फलं समुपस्थापयति । एवंविधा अंशा एव ज्ञापकान्युच्यन्ते । ज्ञापकत्वं नाम सूत्रादिभिरर्थापत्त्या बोधितत्वम्, व्यञ्जनात्मकनियमत्वं वा ।

ननु सूत्रस्याचेतनत्वात् कथं तेन नियमान्तरसाधनमिति चेदुच्यते – "लक्षणं नाम ध्वनति, भ्रमति मुहूर्त्तमपि नावतिष्ठते' – इति 'इको गुणवृद्धी' इति सूत्रस्थभाष्यप्रामाण्येन तत्र चैतन्यारोपादिति । यो हि अव्यक्तं कथयति स ध्वनति, एकं निषिद्ध्य (संकोच्य) अपरमपि निषेधतीति भ्रमति, एककालावच्छेदेन नानाप्रयोगे, सर्वत्र व्यापृतं भवतीति मुहूर्त्तमपि नवतिष्ठत इति कैयटाशयः ।

यद्यपि संज्ञासूत्राण्यपि विधिसूत्रोपकारितया परिभाषारूपतां यन्ति तथापि संज्ञाशास्त्रं शक्तिग्राहकं, परिभाषा तु लक्षणाग्राहिकेत्यनयो र्भेदः स्फुटः प्रतिभाति । किञ्च संज्ञाशास्त्रं पदार्थबोधकतयैव प्रसिद्ध्यति, परिभाषा च अव्याप्त्यतिव्याप्तिवारिकेति चोभयो र्भेदः । तथा च जगद्गुरु म. म. शिवकुमार शास्त्रिचरणाः परिभाषालक्षणमाहुः। –

"शास्त्रजन्यबोधीयविषयगतन्यूनवृत्तित्वाधिकवृत्तित्वान्यतर-सम्पादकत्वं परिभाषात्वमिति" । एतल्लक्षणसमन्वयो यथा– 'तस्मिन्निति' परिभाषाया 'इको यणचीति' शास्त्रीयेक्त्वावच्छिन्नविषयतायां पूर्वस्येत्यस्योपस्थापनद्वारा न्यूनवृत्तित्वसम्पादकत्वम्, 'तस्मिन्निति' परिभाषया पूर्वस्योपस्थितेः प्राक् इक्त्वावच्छिन्ना विषयता पूर्व-परयोः समानरूपेण तथा व्यवहिताव्यवहितसमानरूपेणोपस्थिता आसीत् । एवमेव 'स्थानिवद्' 'यदागमा' इत्यादिपरिभाषाया आदेशादौ स्थानिधर्मादिशसम्पादनादिना 'आङो

---

1. पाणिनीयव्याकरणतत्त्वप्रदीपः – महावैयाकरण दीनबन्धु झा ।

यमहन'. इत्यादिशास्त्रीयहन्त्वावच्छिन्नविषयतायामादेशीभूत-वधादिप्रवृत्तिप्रयोजकतया अधिकदेशवृत्तित्वमिति ।

ज्ञाप्यं हि द्विधा–परिभाषारूपं, तदितरवचनरूपं चेति । पुरुषोत्तमदेवसीरदेवाभ्यामपि ज्ञापकत्वमिङ्गितेन सूचकत्वमुक्तम् । अर्थात् सूत्राद्युक्त्यानुमानिक- नियमो ज्ञाप्यं, तन्मूलं ज्ञापकमिति "ज्ञापकसिद्धं न सर्वत्र" इति परिभाषायां भट्टनागेश आह–

"स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकमिति" ।

किमपि सूत्रादिकं तदंशादिकं यदि अन्यथासिद्धं (एतद्विनैव एतत्कार्यनिष्पन्नत्वं) भवति तर्हि तद्व्यर्थीभूय स्वसार्थक्याय अर्थापत्तिमूलकं नियमस्वरूपं ज्ञापयति । इयं स्थितिः नियमसूत्रविषयेऽपि तुल्यैव । यथा– 'कृत्तद्धितसमासाश्च' इत्यत्र समासग्रहणं विनापि समासे पूर्वसूत्रेणैव प्रातिपदिकत्वसिद्धौ तद्व्यर्थीभूय स्वसजातीय-विषयकं संकोचं पूर्वसूत्रविषये करोति– अर्थात् "समास सदृशानां पदसमुदायानां प्रातिपदिकसंज्ञा चेद्भवति तर्हि समासस्यैवेति" नियमाकारः । तेन समासस्थले पूर्वसूत्राप्रवृत्तौ तत्संज्ञार्थं सूत्रेऽस्मिन् समासग्रहणं चरितार्थम् । एतन्नियमफलन्तु वाक्यस्य प्रातिपदिकसंज्ञा मा भूत् सत्यां च तस्यां सुलोपाद्यापत्तिरिति ।

एवं हि व्यर्थीभूय नियमज्ञापनं, ज्ञापनेन स्वस्य चारितार्थ्यं, ज्ञापकस्थले च तुल्यम् । परन्तु नियमशास्त्रमेवघटितत्वेन इतरव्यवच्छेदकम्, ज्ञापकन्तु विध्यादिसकलसूत्रविषयेऽव्याप्त्यतिव्याप्तिवारकमित्यस्त्यनयो र्भेदः । नियमे हि व्यर्थीभूतोंशः स्वसार्थक्याय स्वस्मिन्नेव तत्कार्यं नेतरत्रेति सजातीयविषयकं वचनं कल्पयति, ज्ञापकन्तु विध्यादिसूत्रनियन्त्रणाय अनियमप्रसंगे नियमस्वरूपं प्रस्तौति । सूत्र-तदंशादिकं ज्ञापकं, तदिङ्गितं वचनञ्च ज्ञाप्यमिति कथ्यते ।

यद्यपि सन्ति ज्ञापकविषयका ग्रन्था प्रामाणिकैराचार्यै रचिताः तथापि साकल्येन साङ्गोपाङ्गनिष्पक्षतया विवेचकग्रन्थानामभावमाकलय्य विद्वन्मूर्द्धन्यैः स्व. पं. मणिनाथ झा महोदयैः **'ज्ञापकादर्श'** नामको महाग्रन्थो रचितः । दृश्यन्ते च भूयांसः प्रयोगा ज्ञापितवचनद्वारैव व्यवस्थापिताः । मन्ये एवंविधशब्दानां संकलनं यदि क्रियेत तर्हि बृहदाकारकः कोशग्रन्थो भवितुमर्हति । प्रस्तुततस्य ज्ञापकादर्शस्य किमपि वैशिष्ट्यं प्रस्तूयते–

1. अत्र परम सरलशैल्या विषयप्रतिपादनं कृतम् । विशेषतः शिक्षमाणाश्छात्रा अपि स्वयं निभाल्य विषयं ज्ञातुमर्हन्ति ।
2. सूत्र-वार्तिक-भाष्यवचनेषु ज्ञापकांशस्य वैयर्थ्यं (अनुपपत्तिः), तद्द्वारा वचनज्ञापनं, ज्ञापनेन वैयर्थ्यनिराकरणेन सार्थक्यं (तच्चारितार्थ्यं), ज्ञापनस्य फलं, तद्विषये विशेषविचारः, नानामतसमीक्षणं, स्वमतेन निर्णय इति प्रतिज्ञापकं निरूपणक्रमो दृश्यते ।

3. प्राचीनतोऽर्वाचीनकालपर्यन्तानां प्रमुखाचार्याणां मतसमीक्षावसरे तत्तद्ग्रन्थानां पंक्तयोऽविकलरूपेणात्र टिप्पण्यां सन्दर्भनिर्देशपूर्वकं स्थापिताः । ततश्च ज्ञापकविषये ग्रन्थान्तरावलोकनक्लेशोऽपाकृतोऽस्ति । इत्थमयं ग्रन्थो ज्ञापक-विषये 'विश्वकोशः' कथयितुं शक्यते ।
4. पण्डितवर्य रामानुज ताताचार्यमहाशयानां समालोचना बहुत्र कृता विद्यते[2] । ज्ञापकसंग्रहकारः श्रीनागेशः परिभाषेन्दुशेखरकारान्नागेशभट्टाद् भिन्न इति बहुत्रोभयो र्मतभेदप्रदर्शनेनात्र निरूपितमस्ति (पृ.– 198, 210) ।
5. अत्र प्रायः समेषां ज्ञापकानां (खण्डितानामपि) संग्रहः स्वशैल्या निरूप्य कृतः । समर्थनार्हमतं समर्थितम् । खण्डनार्हं तु खण्डितमेव (पृ. 409, 410,210) ।
6. प्रसंगाद् अन्यदपि विवेचनं प्रौढ्या कृतम्–यथा-अष्टाध्याय्याः प्रथमं सूत्रं 'वृद्धिरादैच्' इत्येव (पृ.–91) ।
7. विशेषरूपेण बहुत्र विशदा समालोचनाकृता, सा हि 'विशेष-समीक्षास्थलसूची'– इति संकेतद्वारा आदौ एव निर्दिष्टास्ति ।
8. आत्, इति, उत् – इत्येतेषु दीर्घेषु न तपरसूत्रप्रवृत्तिरिति विशदतया निरूपितम् – पृ.– 132.
9. रप्रत्याहारं मण्डनम् पृ. 279 विशेषतोऽवलोकनीयं वर्तते ।
10. अत्र व्याकरणस्य सर्वे मूर्धन्यग्रन्था उपयुक्तास्तेषां सूची ग्रन्थान्ते द्रष्टव्या ।
11. टिप्पण्यां प्रयोगाणां साधनिका सर्वोपकारिणी विस्तेरण निरूपिता । इत्यादि ।

**संस्कृतव्याकरणे ज्ञापक निरूपणपरम्पराः–**

1. **व्याडिः** – (700 ई. पू.) – संग्रहग्रन्थकारो दाक्षायणो व्याङिः परिभाषा-पाठस्य प्राचीनतमो ग्रन्थकारोऽस्ति, येन तद्विवरणं परिभाषासूचनं प्रणीतम् । सौभाग्यवशाद् ग्रन्थरत्नमिदमुपलभ्यते, परिभाषासंग्रहे च प्रकाशितोऽस्ति । महाभाष्यकारीया शैली अत्र द्रष्टुं शक्यते । व्याङिः पाणिनेर्नाम गृह्णाति, न तु पतञ्जलेः । अथ च पतञ्जलिः व्यडिं स्मरतीति पाणिनेः पश्चात् पतञ्जलेश्च पूर्वं व्याडेः कालोऽस्ति । अस्य परिभाषासूचने 93 परिभाषा व्याख्याताः, परन्तु तत्प्रणीते परिभाषासूत्रे 140 परिभाषाः सन्ति । का परिभाषा केन सूत्रेण ज्ञाप्यते, कथं ज्ञाप्यते इत्यादिकं सविस्तरं चात्र वर्णितमस्ति ।

2. **पतञ्जलिः**– (500 ई. पू.) अस्य व्याकरणमहाभाष्ये बहुत्र परिभाषाज्ञापन-प्रकारोऽवलोक्यते, बहुत्र च परिभाषा वा अन्यद्वचनं वा ज्ञाप्यते, बहुत्र च

2. यथा– द्रष्टव्यम् – पृ.– 30,172.

ज्ञापनमुपस्थाप्य प्रत्याख्यायते च । अस्मादेव ग्रन्थात् श्रीनागेशेन ज्ञापकानां संग्रहं विधाय ज्ञापकसंग्रहो ग्रन्थः प्रणीतः ।

3. **शाकटायनः–** (ई. पू. 1000) अस्य परिभाषासूत्राणि स्वव्याकरण-सम्बद्धानि उपलभ्यन्ते ।

4. **चन्द्राचार्यः–** (ई. पू. 300) अनेन स्वशब्दानुशासनसम्बद्धानि परिभाषा-सूत्राणि रचितानि । व्यडिकृतपरिभाषापाठस्य प्रचुरः प्रभावोऽत्र दृश्यते ।

5. **शर्ववर्मा–** (ई. पू. 300) अनेन कातन्त्रसम्बद्धपरिभाषापाठस्य रचना कृता । एतद्व्याकरणसम्बद्धश्चत्वारः परिभाषापाठाः परिभाषासंग्रहे प्रकाशिताः सन्ति । तत्र प्रथमे दुर्गसिंहस्य (700 ई.), द्वितीये भावमिश्रस्य (1500 ई.) व्याख्या वर्तते ।

6. **देवनन्दी–** (200 ई.) जैनेन्द्रव्याकरणसम्बद्धः परिभाषापाठः अनेन विरचितः ।

7. **भोजदेवः–** (1000 ई.) सरस्वतीकण्ठाभरणकारो भोजदेवः स्वशास्त्रसम्बद्धं परिभाषापाठं व्यधात् ।

8. **वामन-जयादित्यौ–** (600 ई.) काशिकावृत्तौ प्रचुराणि ज्ञापकसिद्धानि ज्ञाप्यवचनानि व्याख्यातानि । एतद्व्याख्याकारौ जिनेन्द्रबुद्धि- (न्यसकार)-हरदत्त मिश्रावपि स्पष्टतया परिभाषाणामन्यज्ञाप्यवचनानां च विषये भूयांसं प्रकाशं दत्तवन्तौ ।

9. **कैयटः–** (1000 ई.) काश्मीराभिजनेन कैयटेन महाभाष्यप्रदीपकारेण बहुशो ज्ञाप्यवचनानां स्फुटतया विवेचना प्रदीपे कृता ।

10. **पुरुषोत्तम देवः–** (1150 ई.) बंगप्रान्तीयेन बौद्धविदुषा अनेन ज्ञापक-समुच्चयः, परिभाषासमुच्चयश्च प्रणीतौ । तत्रानेन तत्तद्वचनानां वृत्तिरपि कृता ।

11. **हेमचन्द्रः–** (1000 ई.) अनेन 'सिद्धहैमशब्दानुशासन'कारेण परिभाषापाठः कृतो यस्य व्यवस्थितरूपेणोपस्थापनं 'हेमहंसगणि'द्वारा कृतम् ।

12. **सीरदेवः–** (1200 ई.) बंगाभिजनेनानेन बृहत्परिभाषावृत्ती रचिता ।

13. **भट्टोजिदीक्षितः–** (1600 ई.) अनेन वैयाकरणसिद्धान्तकौमुद्यां, शब्दकौस्तुभे प्रौढमनोरमायाञ्च ज्ञापकानां विवेचनं प्रचुरतया कृतम् । एवमेव तद्व्यातारो ज्ञानेन्द्रभिक्षुः, जयकृष्णः, वासुदेवदीक्षितश्च विषयेऽस्मिन् स्पष्टतया प्रकाशं दत्तवन्तः ।

14. **नीलकण्ठदीक्षितः–** (1600 ई.) अनेन परिभाषावृत्ती रचिता । अत्र 130 परिभाषाः सन्ति ।

15. **हरिभास्करः–** (1650 ई.) अनेन 'परिभाषाभास्कर'– नामा ग्रन्थो विद्वत्तापूर्णो रचितः ।

16. **नागेशभट्टः–** (1700 ई.) अनेन परिभाषेन्दुशेखरो रचितो यत्र स्वकीयक्रमानुसारं परिभाषाः संगृह्य व्याख्याताः । एतद्ग्रन्थोपरि भूयस्यो व्याख्या विराजन्ते–

गदा, परिभाषार्थमंजरी (भीमकृता), त्रिपथगा, भैरवी (तत्त्वप्रकाशिका), सर्वमङ्गला, हैमवती, भूतिः, विजया इत्याद्याः ।

17. **श्री नागेशः–** (1750 ई.) अनेन 'ज्ञापकसंग्रहः' प्रणीतः । तत्र महाभाष्योक्तानां कतिपय ज्ञापकानां संग्रहो विवरणसहितः कृतो विद्यते । उद्योतकारान्नागेशादयं भिन्नः परस्परविरुद्धविचारप्रतिपादनादिति तत्र-तत्र ज्ञापकादर्शोऽस्मिन् प्रदर्शित एवं ।

18. **शेषादि सुधीः–** (1800 ई.) अनेन परिभाषाभास्करो ग्रन्थो रचितः, यत्र नागेश भट्टस्य समालोचना कृता ।

19. **पद्मनाभदत्तः–** (1450 ई.) सुपद्मव्याकरणकर्ता पद्मनाभः स्वव्याकरणसम्बद्धं परिभाषापाठमपि प्रणीतवान् । अयं मैथिलपण्डितः वंगदेशमेव कर्मक्षेत्रं कृतवान् ।

20. **म.म. चन्द्रदत्त झा–** (1800 ई.) – अनेन संस्कृत भक्तमालाख्यग्रन्थकारेण चन्द्रदत्तेन 'परिभाषामणिमाला' प्रणीता, यत्र परिभाषेन्दुशेखरस्य एकैका परिभाषा एकैकस्मिन् पद्ये निबद्धा, तत्र परिभाषाया अवतरणं, स्वरूपं, ज्ञापकं फलञ्च समाविष्टमस्ति । एतस्य हस्तलेखः दरभङ्गा संस्कृत विश्वविद्यालये, पटनाविश्वविद्यालये च वर्तते । प्रस्तुत पंक्तिलेखकेन सम्पादितोऽयं ग्रन्थः प्रकाशनं प्रतीक्षते । चन्द्रदत्तो मिथिलाया हरिनगरे वसति स्म ।

21. **श्रीरामानुज ताताचार्यः–** अनेन श्रीनागेशकृतो ज्ञापकसंग्रहो व्याख्यातः, तदितरज्ञापकानां संग्रहं विधाय च व्याख्यातः ग्रन्थोऽयं तिरुपतिस्थ संस्कृत विद्यापीठतः 1972 ई. वर्षे प्रकाशितः । अत्र प्रत्याख्याताः परिभाषाः परित्यक्ताः । अयं महानुभावो व्याकरण – न्यायादिशास्त्रावतारस्वरूपः तिरुपतिनगरमध्यास्ते ।

22. **पं. मणिनाथ झा–** (1928-1988 ई.) – मैथिलपण्डितोऽयं दिल्लीनगरे श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृत विद्यापीठे व्याकरण-प्राचार्यः प्रस्तुत ग्रन्थं 'ज्ञापकादर्शं' प्रणीतवान् । अत्र पूर्वाचार्याणां समालोचना वर्तते ।

इत्थं ज्ञापकविचारपरम्परा संक्षेपेणोदीरिता । प्रस्तुतोऽयं ग्रन्थः साङ्गोपाङ्गतया अतिविशालो जातः ।

**ज्ञापकादर्शप्रणेता पं. मणिनाथ झा**

अयं मैथिलश्रोत्रियब्राह्मणानां 'पलिवार महिषी' संज्ञके वंशे 24.2.1928 ई. दिनांके मिथिलावयव– 'सरिसव'– ग्रामैकदेशे 'पाहीटोल'– संज्ञकस्थाने स्वगृहे जन्म गृहीतवान् । अस्य वंशावली मैथिलपञ्जीप्रबन्धानुसारेण प्रस्तूयते– नवमशताब्दीस्थः वत्सगोत्रीयः कपिलदेवोऽस्य वंशस्य ज्ञातः प्राचीनतमः पुरुष आसीत् । तत्पुत्रक्रमानुसारं पं. मणिनाथः सप्तदशो वंशधर आसीत् । तथाहि–
(१) कपिलदेवः (२) राउल भृगुः (३) दुर्गादित्यः (पालीग्रामवासी) (४) धरादित्यः (महिषी ग्रामवासी) (५) देवादित्यः (६) शिवादित्यः (७) कान्हः (८) रतिदेवः (९) अच्युतः, (१०) कमलनयनः (११) लक्ष्मीदेवः (१२) शिवनाथः (१३) **उमानाथः**, (१४) हरिनारायणः (दामोदरः) (१५) खड्गनाथः (अर्जुनः) (१६) **तन्त्रविद्** एकनाथः (१७) पं. मणिनाथः (१८) श्री वैद्यनाथ –श्री जगन्नाथौ ।

अस्मिन्नेव वंशे नवमपुरुषाद् अच्युतात् षष्ठः पुरुषो म. म. डॉ. गङ्गानाथ झा बभूव । पं. मणिनाथ झा शर्मणः शिक्षा (1934-43 ई.) सरिसवस्थ संस्कृत पाठशालायां पं. मधुसूदन मिश्रात् महावैयाकरण पं. दीनबन्धु झा शर्मणश्च जाता । तत्रायं विहार प्रदेशे व्याकरणाचार्ये स्वर्णपदकं प्राप्तवान् (1943 ई.) । ततश्च सुलतानगंजे (भागलपुरे) नैयायिकमूर्धन्यात् पं. रूपनाथ झा शर्मणो नव्यन्यायं (1943-48 ई.) पठितवान् । ततः स्वग्राममेत्य शास्त्रार्थमहारथि पं. मार्कण्डेय-मिश्रात् कविशेखर कविशेखर बदरीनाथ झा शर्मणश्च विविधविद्यामधिगतवान् (1948 ई.) ।

**अस्याध्यापन विवरणम्–**

| | | |
|---|---|---|
| (1) प्रधानाध्यापकः – | | 1949–52 संस्कृतमहाविद्यालयः, रैयामः । |
| (2) व्याकरणप्राध्यापकः – | | 1952–55 संस्कृतमहाविद्यालयः, देवघरः । |
| (3) " – | | 1955–60 संस्कृतमहाविद्यालयः, रहीमपुरम् । |
| (4) " | (रीडर, प्रोफेसर) | 1960–88 – श्री लालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठम् - दिल्ली । |

**सम्मान विवरणम्–**

(1) साहित्य व्याख्यान प्रतियोगिता 1943 स्वर्णपदकम् – पटना

(2) धर्मशास्त्र निबन्ध प्रतियोगिता 1944 स्वर्णपदकम् – पटना

(3) साहित्य निबन्ध प्रतियोगिता 1946 स्वर्णपदकम् – पटना

(4) न्यायशास्त्रार्थः 1950 सम्मानम् – पटना

(5) विद्यावाचस्पतिः (उपाधिप्राप्तिः) 1960 संस्कृत प्रचारक मण्डलम्, दिल्ली

(6) क्षयमासनिर्णय–शास्त्रार्थः 1962 सम्मानम् – दरभङ्गा

(7) विद्यावाचस्पतिः (डी. लिट्) 1983 ई. शोधोपाधिः (ज्ञापकादर्श ग्रन्थे)–"

**विशिष्टं कार्यम्–**

(1) अखिल भारतीय संस्कृतसम्मेलनम्, दिल्ली द्वारा नियुक्तः 'बिहारप्रदेश-संस्कृतशताब्दीग्रन्थं, (२००० पृष्ठानि) लिखितवान् ।

(2) 'राजलक्ष्मी'कृत श्रीमद्भागवतप्रकाश ग्रन्थोपरि विदुषां सम्मतीनां सम्पादनम् ।

**प्रमुखाः शिष्याः–**

(1) डॉ. कृष्णानन्द झा – व्याकरणविभागाध्यक्षः, दरभङ्गा

(2) डॉ. सतीश शर्मा दिल्ली

(3) डॉ. भवेन्द्र झा "

(4) डॉ. सुधीर कुमार झा– "

(5) श्रीमती शकुन्तला 'पराशरा'

(6) डॉ. सुरेन्द्र झा– जम्मू

(7) डॉ. शिवकान्त झा– "

(8) डॉ. अर्कनाथ चौधरी–जयपुरम्

(9) डॉ. विष्णुकान्त झा– देवघरम्

**पं. मणिनाथ झा शर्मणो रचनाः–**

(1) ज्ञापकादर्शः–

(2) व्यक्तिवादः (व्यञ्जनासमीक्षा) – म. म. उमेशमिश्र अभिनन्दन ग्रन्थः, प्रयागः ।

(3) लकाराणां कृतौ शक्तिः कर्तरि वा ? – संस्कृतरत्नाकरः, अप्रैल- 1966

(4) अधिमास क्षयमास विवेकः – " फरवरी– 67

(5) शाब्दिकानां शब्दः – संस्कृतरत्नाकरः, दिल्ली– अप्रैल 1967
(6) म.म. डॉ. उमेश मिश्राणां संस्मरणम् – " " अक्टूबर 1967
(7) शब्दानां शब्दपरत्वमर्थपरत्वं वा – बुलेटिन, मिथिला विद्यापीठम्, दरभंगा– 4,5-68
(8) आदिशङ्कराचार्य प्रतिस्पर्धी मण्डनमिश्रो मैथिलः – भारती-मंडन स्मारिका, महिषी– 1970
(9) विद्यापतेः पशुपतिभामिनी – विद्यापति स्मारिका, अप्रैल – 63 अखिल भारतीय मिथिलासंघ, दिल्ली
(10) रप्रत्याहार विमर्शः – डॉ. बी. आर. शर्मा अभिनन्दनग्रहथः, पूना
(11) सौन्दर्यानुभूतिः (संस्कृतानुवादः)– मूललेखकः – डॉ. नगेन्द्रः – दिल्ली
(12) भारतीया संस्कृतिः शिक्षा च – भारत शिक्षा उन्नयन समिति, पचही (मधुवनी)
(13) संस्कृति-संस्कृत सेवकाः दरभंगाराजस्य महाराजाः, परिवारश्च – वैदेही कला केन्द्रम्, पटना
(14) महातीचार सिद्धान्त(मैथिलीभाषा) – वैदेही, दरभंगा – 1963
(15) जन्मनापण्डित पद्मविभूषण आदित्यनाथ झा – मिथिलांचल पत्रिका, दिल्ली (एक संस्मरण) – (मैथिलीभाषा)
(16) शारद नवरात्र ओ दुर्गापूजा – विहार लोकमंच पत्रिका, दिल्ली (मैथिली)
(17) मिथिलाक पाग स्व. ललितनारायण मिश्र – मिथिलांचल पत्रिका, दिल्ली (मैथिली)
(18) विद्यापतिक समीक्षात्मक अध्ययन – स्मारिका, राँची (मैथिली)

दिल्लीस्थ-विवेकविहारस्य- विवेकानन्दमहिला-महाविद्यालये पं. मणिनाथ झा-कृतमेकं पद्यं टेपरेकर्डरयन्त्रे तस्यैव स्वरे सुरक्षितं विद्यते । प्रतिदिनं तस्य पाठानन्तरमेव तत्र कक्षा प्रारभ्यते–

सिता शान्ताकारा शशिविजयहाराम्बरधरा
रमारामा-राकारमणवदनाराधितकरा ।
सती साध्वी दिव्या विदितरचनाचारुरुचिरा
सदा सा नो भूयादभिमुखकरी कापि चतुरा ॥ इति ।

अवकाशप्राप्त्यनन्तरमेव दुर्दैववशादयं इहलोकलीलां समाप्य दिल्लीनगरे स्वर्वासाय प्रस्थानमकरोत् 3-6-1988 तमे दिनाङ्के ।

एतस्य प्रौढ़ता, निर्भीकता, स्पष्टवादिता, निष्कपटता सर्वतोन्मुखी प्रतिभा च नितरां विशिष्टा आसीत् । दिल्लीराजधान्यां मैथिलानां सर्वथा अवलम्बः आसीत् । तन्माध्यमेन तत्र शतशश्छात्राः सौविध्यपूर्वकं विद्यार्जनं कृतवन्तः । यथैवायं सभायां स्वभाषणेन सर्वान् मुग्धान् कृतवान् तथैवाध्यापनशासत्रार्थ-लेखनादिष परमोच्चं स्थानमस्यासीदिति । अस्यं सुयोग्यौ द्वौ पुत्रौ विराजेते–

(१) श्री वैद्यनाथ झा – प्राध्यापकः, लोहना संस्थविद्यापीठे ।

(२) श्री जगन्नाथ झा – प्राध्यापकः, लखनऊस्थे केन्द्रीय – संस्कृत विद्यापीठे ।

प्रस्तुतो ग्रन्थो ज्ञापकापर्शः तस्य पाण्डित्यपराकाष्ठाज्ञापकोऽस्ति । अयं ग्रन्थोऽस्मिन् विश्वविद्यालये विद्यावाचस्पति (डी.लिट्) शोध प्रबन्धरूपेण 1982 तमे कृस्ताब्दे समर्पित उपाधिप्राप्तश्च । एतत्सन्दर्भे परमश्रेयोभाजनं विश्वविद्यालयस्य **कुलपतिः आचार्यः किशोरकुणालः**, यो हि एतत्प्रकाशनाय दत्तचित्तीभूय गुणग्रहितां प्रादर्शयत् । ग्रन्थकृतः पुत्रौ परिचय – ग्रन्थ – चित्राद्युपलब्धं कारयित्वा स्वोत्साहं प्रकटितवन्तौ धन्यवादार्हौ स्तः । व्याकरणविभागाध्यक्षः (डॉ.) **विद्वत्तल्लजः पं. कृष्णानन्दझा**शर्मा ग्रन्थकृच्छिष्यः सत्परामर्शदानेन अनुगृहीतवान् इति तं प्रति कृतज्ञतां वच्मि ।

मूलग्रन्थे टंकणजन्यास्पष्टतादिनिराकरणेन सुव्यवस्थिततत्वेनोपस्थाय ग्रन्थमिमं सम्पाद्य विदुषां पुरः समुपस्थापयन्नमन्दानन्दसन्दोहं लभे । अत्रत्या गुणाः ग्रन्थकृतो, दोषास्तु ममैवेति क्षमायाचनां कुर्वन् विरमामीतिशम् ।

30.9.2002 ई.

**(डॉ.) पं. श्री शशिनाथ झा**
विश्वविद्यालय प्राचार्यः
व्याकरणविभागः
का. सि. द. संस्कृत विश्वविद्यालयः, दरभङ्गा

# किञ्चिन्निवेदनम्

**सिता शान्ताऽऽकारा शशिविजयिहाराम्बरधरा**
**पराऽपारा सारा क्वणितनववीणाधरकरा ।**
**रसाऽऽरामा राकारमणवदनाऽऽराधिततरा**
**सदा नौ बोभूयादभिमुखचरी काऽपि चतुरा ॥**

अथेदानीं "ज्ञापकादर्श"नामानं ग्रन्थाऽऽत्मकं "पाणिनीयव्याकरणे ज्ञापकानां परिशीलन"मिति विषयकं शोधप्रबन्धमिमं शोधप्रबन्धपरीक्षाचणानां नीरक्षीरविवेकि-हंसायितानां पण्डितपुण्डरीकमार्तण्डानां विदुषां पुरः परीक्षार्थं समुपस्थापयन् "निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजितार्जितान्यपी"ति महाकविकालि-दासोक्तिं भावयन्नप्यमन्दानन्दमनुविन्दे । यद्यपि व्याडि - पतञ्जलि - प्रमुखैः पूर्वाचार्यैर्यथावसरं ज्ञापक-विचारः परमरमणीयः कृत एवास्ति, तथापि न केनाप्येकेन पूर्वाचार्येण समेषां ज्ञापकानां विवेचना प्रस्तुता, नापि च केनापि सर्वासां स्वपूर्वाचार्यकृतानां ज्ञापक - विवेचनानां समीक्षा प्रस्तुतेति तदभावापाकरणाय –

**तत्त्वं प्रसिद्धचरमपि, लभते काञ्चिद् विवेचनात् स्फुटताम् ।**
**रत्नं प्रत्नमपि ध्रुव-मधिगच्छति शाण-घर्षणात् सुषमाम् ॥**

इति साहित्यशास्त्र - गुरुवर-**कविशेखर-बदरीनाथझाशर्म**-सूक्तिमनुसन्धाय दर्शन-शास्त्र - गुरुवर -द्वादशदर्शनतीर्थपण्डित-**रूपनाथझाशर्म**प्रेरणया पाणिनीयव्याकरणे ज्ञापकानां-परिशीलनाय तन्त्रशास्त्रनिष्णातमहाकौलस्य **पितुः एकनाथझाशर्मणश्चरणौ** स्मरन् प्रवृत्तोऽभूवम् । यद्यपि नभसि नक्षत्राणामिव पाणिनीयव्याकरणे ज्ञापकानामानन्त्यमनुभूय प्रमुखा एव ज्ञापकाः सामान्यापेक्षविशेषापेक्षेति भेदाभ्यां पूर्वाचार्यैर्निरूपिताः, तथापि केषाञ्चनाप्रमुखानामपि ज्ञापकानां परिशीलनं कर्तुकामोऽहं कृत्स्नानां तेषां स्फुटप्रतिपत्तयेऽकाराद्यक्षरक्रमेण - "अतिदेशानुबन्धा-नुवृत्त्युच्चारणार्थकाज् - गणपाठ - तपरकरण-निपातन - निर्देश- नुमनुषक्तधातु-पाठपरिगणन-भाष्योक्ति - योगविभाग - वार्तिक - वार्तिकांश - सूत्र-सूत्रांश - स्वरितत्वानुसञ्जने"ति सप्तदशभेदान् प्रकल्प्य क्रमशोऽत्र बाणग्रहयुग (495) मितान् ज्ञपकान् सप्तस्वध्यायेषु ससमीक्षं चारु पर्यशीलयम् । ज्ञापकानामियत्तां वक्तुं न कश्चन पूर्वाचार्यः प्रभुर्बभूवेति नाहमपि तां वक्तुमात्मानं क्षमं मन्ये । यतः स्वाध्यायतपोनिष्ठानां शाब्दिकानां प्रतिभाः प्रतिक्षणं नूतनानां ज्ञापकानामुद्भावने प्रभवो दरीदृश्यन्ते । विभिन्नसंस्कृतविश्वविद्यालय - नव्यव्याकरणाचार्यपरीक्षा-

पाठ्यत्वेन निर्धारितस्यापि भट्टनागेशप्रणीतस्य लघुशब्देन्दुशेखरस्या- जन्तपुंलिङ्-गादारभ्याव्ययीभावान्तो भागोऽधुनाऽऽपणे नोपलभ्यत इत्यागामिकाले पाणिनीयव्याकरणग्रन्थानां विशेषतः पाठ्येऽनिर्धारितानां दुर्लभतां संभाव्यात्र टिप्पण्यां ज्ञापकसिद्धान्तसम्बद्धाः पूर्वाचार्य - ग्रन्थांशाः प्रायःपूर्णाः समुपन्यस्ताः, तथा लघुसिद्धान्तकौमुद्या द्वित्रप्रकरणान्येवाधीत्य व्याकरणाचार्यकक्षाप्रविष्टा-नामाधुनिकान्तेवासिनां व्याकरण-प्रक्रियांशज्ञानाभावं परिलक्ष्य मूलग्रन्थ-प्रबन्ध-समुपन्यस्तानां प्रयोगाणां प्रक्रियादिगप्यत्र टिप्पण्यां प्रायो न्यस्तेत्यस्य महती कायवृद्धिः संजातेति विभाव्य विद्वांसः परीक्षका अस्य कायवृद्ध्या नासन्तुष्टा भवेयुरिति मन्ये। यदत्र चतुरचेतसां विद्वज्जनानां मनोहारि तत्त्वं दरीदृश्यते, तत् प्रातः स्मरणीयानां सर्वतन्त्रस्वतन्त्राणां शिवकुमारमिश्राणां शिष्यस्य लिङ्गवचनविचाराद्यनन्तमौलिक-ग्रन्थकारस्य मम **गुरोर्महावैयाकरणदीनबन्धुझाशर्मणः** पाद-पङ्कज-पराग-कणप्रसूतिः, यच्चात्र प्राचीनविदुषामसन्तोषकरं तत्त्वं दृश्येत तन्मम जाड्यप्रसूतिः। यतो मणिः स्वाभाविको जडः पदार्थो भवतीति तन्नाथस्य महाजडत्वं नैसर्गिकम्। प्राच्यपद्धत्यनुसारिणी चेयम् **"ऋष्यर्चा" (रिसर्च)** इति प्रतिपाद्यविषयस्य प्रधानतयात्राऽऽमुखोपसंहारौ कृशकायतां गतौ स्तः। यतोऽत्राऽऽधुनिक्या ऋष्यर्चापद्धतेः केवलं गुणा एव गृहीताः। श्रीमद्भिः शोधमार्गनिर्देशकैः श्रद्धेयैः आचार्य डा. महाप्रभुलालगोस्वामिमहानुभावैर्यत् साहाय्यं मह्यं दत्तं, संस्कृतप्राणैः पाणिनिशास्त्रनिष्णातैः कामेश्वरसिंहदरभङ्गा संस्कृत विश्वविद्यालय-कुलपति-पदमलङ्कुर्वद्भिः श्रीमद्भिः सुहृद्भिः डा. रामकरणशर्ममहाभागैः शोधविषयस्यास्य स्वीकृत्या या स्वकीया नैसर्गिकी करुणा मह्यं ससम्मानं प्रदत्ता, तदर्थं तान् प्रति निजां कृतज्ञतां नतकन्धरोऽहं सादरभरं विज्ञापयामि।

**वि. सं. -२०३७**
१-२-१९८० ई.

विद्वच्चरणषट्पदस्य
**आचार्यश्रीमणिनाथ झा-शर्मणः**

# ज्ञापकादर्शः

(पाणिनीय व्याकरणे ज्ञापकानां परिशीलनम्)

(प्रथमो भागः)

विद्यावाचस्पतिः पं. मणिनाथ झा

# ज्ञापकादर्शः

## आमुखम्

श्रीताराचरणाम्भोजं कल्पवृक्ष-विजित्वरम् ॥
सरस्वतीं गणाधीशं महेशं पाणिनिं मुहुः ॥ १ ॥
व्याडिं वररुचिं चैव फणीशं पितरौ गुरून् ॥
नत्वाऽऽचार्यपदासीनो विद्वच्चरण-षट्पदः ॥ २ ॥
शब्दशास्त्रे तथा न्याये साहित्ये च कृत श्रमः ॥
एकनाथ-सुधी-सूनुः श्रीमणिनाथमैथिलः ॥ ३ ॥
महाशक्तिकृपोद्भूतं समीक्षोद्भासितं नवम् ॥
पाणिनीये महातन्त्रे नानाऽऽचार्यवचोऽन्वितम् ॥ ४ ॥
ज्ञापकादर्शनामानं प्रबन्धमतिमञ्जुलम् ॥
कुरुते विदुषां प्रीत्यै पूर्वाचार्याङ्घ्रिरेणुभिः ॥ ५ ॥

### ज्ञापक-स्वरूपं तत्प्रयोजनं च

[1] त्रिमुनितन्त्रेऽस्मिन्[2] यः[3]

---

1 "त्रयो मुनयः (पाणिनि-(क) - कात्यायन- (ख) (वररुचि)–(ग) पतञ्जलयः ) वंश्या "इति विग्रहे "संख्या वंश्येन"–अष्टा. 2/1/19 इत्यव्ययीभावः । त्रिमुनि व्याकरणमिति सामानाधिकरण्यानुपपत्तिस्तु न विद्यातद्वतामभेदविवक्षा ह्यत्र स्वीकृता, भ. दी. –वै. सि. कौ. अव्ययीभाव प्र. पृ. 414 । यद्यपि त्रयो मुनयो वंश्या यस्येति बहुव्रीहिणाप्येतत् सिद्धं तथापि विभक्त्यन्तरेषु रूपभेदः । ज्ञा. भि. तु 'लक्षणेनाभिप्रती आभिमुख्ये'–अष्टा. 2/1/14, इत्यत्र आभिमुख्यग्रहणाद् बहुव्रीहि–विषयेऽप्यव्ययीभावो भवतीत्याह त. बो. अव्ययीभाव प्र. पृ. 414 ।
(अ) – तथा हि – "परे तु इतः पूर्वमपि 'अथशब्दानुशासन' - मिति, 'रक्षोहे' ति. 'इमानि च भूयः' – इत्यादीनि च त्रीणीमानि वार्तिकानि भगवतः कात्यायनस्यैवे" ति (राजलक्ष्मी 1/1/1 पृ. 47) ग्रन्थेन गु.शा. कात्यायनो वार्तिककारः इतिन्यरूपयत् ॥
(आ) – तथाहि तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिनेति सा. आ. न्यरूपयत् ।

2. तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेन इति तन्त्रं व्याकरणम् । स्थितानामन्वाख्यानं व्याकरणम् । 'स्थितानामन्वाख्यान' मिति च 'पृषोदरादीनि यथोपदिष्टम्' - अष्टा. 6/3/109. इति सूत्रेण, 'सिद्धे शब्दार्थसम्बन्धे, इति वार्तिकेन, 'कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्? सिद्धे शब्देऽर्थे सम्बन्धे चे' ति (व्या. म. भा. 1/1/1 पृ. 47) भाष्येण च विज्ञायते । तदाह –

'नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां चानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥

(वा. प. 1/23 ) व्याकरणं तु 'सूत्रं, लक्ष्यलक्षणे वा' (व्या. म. भा. 1/1/1 पृ. 68, 71)

3. अतिदेशानुबन्धोच्चारणार्थकाज्- गणशब्दपाठ - निर्देश - नुमनुपक्तधातुपाठ-योगविभाग-वार्तिकांश – सूत्रांशान्यतम इत्यर्थः ।

या[1] यच्च[2] अर्थापत्त्या[3] किमपि परिभाषारूपं[4] तद्व्यतिरिक्तं वचनं[5] वा ज्ञापयति सः सा तच्च क्रमशः ज्ञापिका ज्ञापकमित्युच्यते । यतो ज्ञापकमन्यथानुपपत्तिलक्षणं भवति । त्रिमुनिव्यतिरिक्तानां शब्दशास्त्र-निष्णातानां केषांचिदप्युक्तिर्यदि महामहिम-

---

1. अनुवृत्तिः, भाष्योक्तिश्चेत्यर्थः ।
2. तपरकरण-निपातन - परिगणन - वार्तिक - सूत्र स्वरितत्वाऽऽसञ्ज्ञनान्यतममित्यर्थः ।
3. अनुमानेनेत्यर्थः ।
4. "नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्थाः, यावन्तो वा (सन्ति) ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च व्याकरणे या षष्ठी सा स्थान-योगैव स्यादिति । तच्च नान्तरेण यत्नं सिद्ध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम्" – इति ग्रन्थेन 'अनियमे नियमकारिणी परिभाषे'ति सूचयति । पत. : व्या. म. भा. 1/1/7/48 पृ. 392 ।

   (ख) "स्थान्यन्तर-व्यवच्छेदेनैकत्र प्रवर्तनम् । सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता" – इत्याह जि. बु. न्या. 1/1/3 ।

   (ग) "विनियम्य नियच्छन्तीः सूत्रार्थस्योपकारिकाः ।
   परितो व्यापृता भाषाः परिभाषाः प्रचक्ष्महे ॥"
   – इत्याह सी. दे. बृ.प. वृ. पृ. 1. ।

   (घ) "परिभाषा हि नाम न साक्षात् पाणिनीय-वचनानि किन्तर्हि नानाचार्याणाम्" इति - सी.दे.बृ.प.वृ.प. 123 पृ. 268 ।

   (ङ) "तत्र तावद् भाषव्यक्तायां वाचीत्यत्मात् परितो भाष्यते इति व्युत्पत्तेः, कर्माण घञुत्पत्तेस्तथा प्रतीतेश्च परिभाषापदं यौगिकम् । नचैवं संज्ञादिष्वतिप्रसङ्गः । निर्मन्थ्येनेष्टकाः पचन्तीत्यत्र पाकादौ निर्मन्थ्य-पदस्येव तत्र परिभाषापदस्य प्राचीन-प्रयोगाभावात् । नचैवं सति रूढ्यनङ्गीकारे दाक्षायणयज्ञेन स्वर्गकामो यजेतेति वाक्यगत-दाक्षायणपदस्य यौगिकत्वेन संज्ञात्वाभावात् "पूर्वपदात् संज्ञायामगः" (8/3/3) इति णत्वानापत्तिरिति वाच्यम् । संज्ञात्वं हि नियत-प्रयोग-शब्दनिष्ठोपाधित्वम् । स चोपाधिर्दाक्षायणपदेऽप्यस्तीत्याहुः । अथवा छान्दसं तत्र णत्वम् । यद्वा निर्मन्थ्य-दाक्षायणादिशब्दानां योगरूढता-मते इदं योगरूढमेवास्तु । एवं च 'परितोव्यावृतां भाषां परिभाषां प्रचक्षते'–इति प्राचीनकारिकायाः, 'परिभाषा पुनरेकदेशस्था सती कृत्स्नं शास्त्रमभिज्वलयति तद् यथा प्रदीपः सुप्रज्वलित एकदेशस्थः कृत्स्नं वेश्माभि- ज्वलयति' इति भाष्यस्य चात्रैव तात्पर्यमुन्नेय"मित्याह ह. भ. प. भास्कर. पृ. 317

   (च) "पारितः सर्वतो भाष्यन्तेऽर्था आभिरिति परिभाषाः"इत्याह दुर्गसिंहः कात. प. सृ. वृ. पृ. 49

   (छ) "भाष्यन्ते परितो यस्मात् परिभाषास्ततः स्मृताः"–इत्याह भा. मि. कात. प. सू. वृ. पृ. 67 ।

   (ज) "संकेतग्राहकभिन्नत्वे सति शब्दधार्मिक-साधुत्व-प्रकारक-शास्त्र-जन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वे सति अधिकारशास्त्र-भिन्नत्वं परिभाषात्व"-मिति मनुते तात्येति प्रसिद्धः राम. शा. प. शे. भूतिः. पृ. 4 ।

   (झ) "विधिशास्त्र-प्रवृत्ति-निवृत्त्युपयोगि-साधुत्वप्रकारक-शक्यविषयक-बोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं परिभाषात्व"-मिति मनुते ज. मि. प. शे. वि. पृ. 5 ।
5. उक्तिरुच्यते वेति वचनमिति व्युत्पत्त्या सूत्र-वार्तिक-परिभाषा-भिन्नं विध्युपकारकं वाक्यं वचनमत्र, तद्व्यतिरिक्तं वचनम् ।

पाणिनि – कात्यायन – (वररुचि) पतञ्जल्यन्यतमवचन - तदंश-मूला, लौकिक-न्यायमूला वा भवति तर्हि प्रामाण्यं पाणिनीयव्याकरणेऽधिगच्छतीति परिभाषारूपाणां तद्व्यतिरिक्त-वचनानां[1] च ज्ञापकप्रामाण्यात्[2] प्रामाण्यं मन्वाना व्याडि[3]-पतञ्जलि[4]-कैयट[5]-वामन[6]-जयादित्य[7]-जिनेन्द्रबुद्धि[8]-पुरुषोत्तमदेव[9]-हरदत्त[10]मिश्र-सीरदेव[11]-भट्टोजि[12]दीक्षित-ज्ञानेन्द्र[13]भिक्षु-नीलकण्ठ[14]दीक्षित-हरिभास्कर[15]-भट्ट[16]नागेश-वासुदेव-[17]दीक्षित-शेषाद्रि[18]-राघवेन्द्राचार्य[19]-श्रीनागेश[20]-रामकृष्णशास्त्रि[21]-जयदेव[22]मिश्र-प्रमुखाः पूर्वाचार्यास्तत्तज्ज्ञापकान्युपस्थापितवन्तः । अमी च पूर्वाचार्याः न केवलं येषां

---

1. 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' 'गर्गाः शतं दण्ड्यन्ताम्' 'कर्णच्छेदेऽपि श्वा श्वैव नाश्वो न गर्दभः' इत्यादयो लौकिकन्यायाः ।
2. (क) "आसां परिभाषाणां पाणिनि-सूत्राणामिव यद्यपि पृथगेव प्रामाण्यमिष्यते विधि-निग्रहा-विष्टाः सूत्र-सूत्रैकदेशान्यथानुपपत्तिलक्षणेन ज्ञापकेनैताः प्रमाणयन्ती"ति ग्रन्थेन तथ्यमिदं सूचयति पु. दे. ल. प. वृ. प. 1 पृ. 112.

(ख) "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके ।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ।।"

इति ग्रन्थेन दु. सिं. परिभाषारूपाणां तद्व्यतिरिक्तवचनानां च प्रामाण्यं सूत्र-प्रमाण्यात् स्वीचकार, कात. प. सू. वृ. पृ. 49.

3. लक्षश्लोकाऽऽत्मकसंग्रहग्रन्थरचनाचणः 'परिभाषासूचन'-कारः ।
4. व्याकरण-महाभाष्य-योगदर्शन-चरक-रचनाचुञ्चुः शेषावतारः ।
5. व्याकरणमहाभाष्य-'प्रदीप'-टीकाकारः ।
6. काशिकावृत्तेः षष्ठ-सप्तमाष्टमाध्यानानां प्रणेता ।
7. काशिकावृत्तेः प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चमाध्यायानां रचयिता ।
8. काशिकावृत्ते 'न्यास'–टीकाकारः ।
9. भाषावृत्ति-लघुपरिभाषावृत्ति-ज्ञापकसमुच्चयादि-ग्रन्थरचनाचणः ।
10. काशिकावृत्तेः 'पदमञ्जरी'-टीकाकारः ।
11. बृहत्परिभाषावृत्ति-रचनाचुञ्चुः ।
12. शब्दकौस्तुभ-भूषणकारिका-वैयाकरणसिद्धान्तकौमुदीप्रभृतिग्रन्थकारः ।
13. वैयाकरणसिद्धान्तकौमुदी-तत्त्वबोधिनी-टीकाकारः ।
14. परिभाषावृत्तिप्रमुखनानाग्रन्थकारः ।
15. परिभाषाभास्कररचयिता ।
16. उद्योत-लघुशब्देन्दुशेखर-परिभाषेन्दुशेखरादि-नानाग्रन्थकारः ।
17. वैयाकरणसिद्धान्तकौमुदी-बालमनोरमाटीकाकारः ।
18. परिभाषाभास्कर-रचयिता ।
19. लघुशब्देन्दुशेखर-विषमपदविवृति-टीकाकारः ।
20. ज्ञापकसंग्रहकारः भट्टनागेशाद्भिन्नः ।
21. परिभाषेन्दुशेखर-भूति-टीकाकारः ।
22. परिभाषेन्दुशेखर-विजया-टीकादि-ग्रन्थकारः ।

लौकिकन्यायो[1]मूलं नास्ति तेषामेव, प्रत्युत लौकिकन्यायमूलानामपि परिभाषारूपाणां वचनानां स्थूणा-जनन-न्यायेन ज्ञापकान्युपस्थापितवन्तः । इत्थम् 'अन्यथानुपपत्ति-लक्षणं ज्ञापकम्, ज्ञाप्यानामुक्तीनां प्रामाण्याय च ज्ञापकोपादान'मिति राद्धान्तश्चतुर चेतसां चेतसि चिराच्चारु चकास्ति ।

तदुक्तमभियुक्तैः–

'ज्ञापकं तदेव, वचनसिद्धिः, स्वांशचारितार्थ्यं, फलमन्यत्रे'ति ।

## ज्ञापक-भेद-प्रभेदाः

यद्यपि सामान्यपेक्षो[2], विशेषाप्रेक्षश्चे'[3]ति ज्ञापकानां द्वैविध्यमेवात्र-शास्त्रे पूर्वाचार्यैः स्वीकृतम्, तथापि स्फुटप्रतिपत्तये-'अदिदेशानुबन्धा-नुवृत्त्युच्चारणार्थकाज्-गणशब्दपाठ-तपरकरण-निपातन-निर्देश-नुमनुषक्तधातुपाठ-परिगणन-भाष्योक्ति-योगविभाग-वार्तिक-वार्तिकांश-सूत्र-सूत्रांश-स्वरितत्वाऽऽसञ्जनेति सप्तदश भेदा मया प्रकल्पिताः ।

## ज्ञापित-वचन-भेदौ

ज्ञापितं वचनं द्विविधं परिभाषारूपं[4] तद्व्यतिरिक्तं[5]चेति । तत्र परिभाषा-रूपमित्यस्य 'संकेतग्राहक-भिन्नं शब्दधर्मिकसाधुत्वप्रकारकशास्त्र-जन्यप्रामाण्य-ज्ञानाना-स्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतमधिकारशास्त्रभिन्नं पाणिन्यनुच्चरित'-मिति, विधिशास्त्रप्रवृत्ति-निवृत्त्युपयोगि साधुत्वप्रकारकशक्तविषयकबोधजनकं सदधिकार-शास्त्रभिन्नं पाणिन्यनुच्चरित'-मिति वा परिष्कृतोऽर्थः । तद्व्यतिरिक्त-मित्यस्य 'निरुक्तपरिभाषा-भिन्नं शब्दधर्मिक-साधुत्वप्रकारकशास्त्र-जन्याप्रामाण्य-ज्ञानास्कन्दित-बोधे सहकारित्वेन मुन्यभिप्रेतं सत् पाणिनि-कात्यायनाभ्यामनुच्चरित'-मितिपरिष्कृतोऽर्थः ।

---

1. प्रत्येकं वाक्यपरिसमाप्तिः 'इत्यादि न्याय इत्यर्थः' ।
2. तथाहि–"चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्यात्' 'चिन्त्यते'– इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षामित्येके । 'अत एक-हलि'त्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वा" -दित्याह भ. दी. वै. सि. कौः चुरा. प्र. पृ. 22 ।
3. तथाहि–"विशेषापेक्षमित्यपरे । अतएव 'आधृषाद्वेत्यस्य न वैयर्थ्य' मित्याह भ. दी. वै. सि. कौ. चुरा. प्र.–पृ. 222 ।
4. परिभाषापदव्यवहार्यमित्यर्थः
   'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमित्याद्याकारकम् ।
5. परिभाषापदाव्यवहार्यम् उत सूत्र-वार्तिक-भिन्न-वचनपदव्यवहार्यमित्यर्थः । स्त्रीप्रत्ययेषु तदन्त-विधिर्भवती'-त्याद्याकारकम् ।

## ज्ञापित-परिभाषारूप-वचनभेदौ

ज्ञापितं परिभाषारूपं वचनमपि द्विविधम् । लिङ्गवद् विध्यङ्गशेषभूतं चेति[1] । तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे'–इत्यादि लिङ्गवत्[2] । अर्थवद्ग्रहणे नानर्थकस्येत्यादि विध्यङ्गशेषभूतम्[3] ।

इत्थं ज्ञापकसिद्धानां परिभाषारूपाणां तद्व्यतिरिक्तानां च वचनानां ज्ञापक-प्रामाण्यादेव प्रामाण्यमस्तीति तेषां ज्ञापकानां निरूपणमत्र प्रस्तूयते ।

---

1. तथाहि–"अथेयं परिभाषा लिङ्गवती, विध्यङ्गशेषभूता वा ? ... इत्याह पु. दे. ल. प. वृ. प. 1 पृ. 112
2. अन्तरङ्गशास्त्रत्वमस्या लिङ्गम्' भ. ना. प. शे. प. 51 पृ. 194
3. विध्यङ्गानां = विधिसूत्राणां शेषभूतम्=एकदेशं प्राप्तमित्यर्थः । तथा हि–"विध्यङ्गानां विधिसूत्राणां शेषभूता एकदेशं प्राप्ता त्वियम् । 'शे' (1/1/13) इत्यनेन अनया (अर्थवद्ग्रहणपरिभाषया) सह संहत्यार्थवतः 'शे' शब्दस्य ग्रहणेन प्रगृह्यसंज्ञा विधीयते"–इत्याह पु. दे. ल. प. वृ. प. 1 पृ. 112

# प्रथमोऽध्यायः

## (क) ज्ञापका अतिदेशाः

अतिपूर्वकाद् दिश्[1] धातो र्भावे घञि[2] निष्पन्नोऽयमतिदेशशब्दः 'अन्यधर्मस्यान्यत्राऽऽरोपण'[3]-मित्यर्थमभिधत्ते । 'इण्वदिकः'[4] इत्यादीनि चास्योदाहरणानि सुप्रसिद्धानि सन्ति । "विनापि वतिं' तदर्थो गम्यते' अब्रह्मदत्तं ब्रह्मदत्तमित्याह"[5] --इतिभाष्योक्तेः 'इकोझल्'[6] 'हलन्ताच्चे'[7]-त्यादीनामप्यतिदेशत्वं विज्ञायते । 'शास्त्रातिदेश[8]-कार्यातिदेश[9] – निमित्तातिदेश[10] – व्यपदेशातिदेश[11] – रूपातिदेशो'[12]-तिभेदैः पञ्चविधो-यद्यप्यसौ दरीदृश्यते तथापि प्राधान्यादत्र व्याकरणे कार्यातिदेशो

---

1. 'दिश अतिसर्जने' धा.पा. तुदा. 1284 ।
2. 'भावे' – अष्टा. 3। 3। 8।
3. तथाहि – "अति + दिश् + भावेघञ् । अन्यधर्मस्यान्यत्र आरोपणम् । यथा – 'इणुवदिकः' इत्यादि" इतिदुर्गादासः – श.क.द्रु. भाग - 1 पृ. 26. । मलमासतत्त्वे तु –
   "प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
   धर्मोऽतिदिश्यते येन अतिदेशः स उच्यते ।।"
   इत्युक्तम् –श. क. द्रु. अतिदेशब्दः भाग - 1, पृ. 26. ।
4. "इण्दिक इतिवक्तव्यम्' - वा. वै. सि. कौ. अदा. प्र. पृ. 165.
5. व्या. म. भा. 1।2।1. 'अनन्तरेणापि वतिमतिदेशो गम्यते, अब्रह्मदत्तं-ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति भाष्याक्षराणि ।
6. अष्टा. 1/2/9
7. अष्टा. 1/2/10
8. नित्येन तुल्यं शेषं स्याद् इत्यत्र तुल्यशब्देन अतिदेशः श. क. द्रु. भाग 1 पृ. 26 ।
9. "अप्रयाजास्ताः' इत्यत्र कार्येण निषेधेन दर्शपौर्णमासधर्मातिदेशः" – श. क. द्रु. भाग-1 पृ. 26।
10. 'विकृतौ मौद्गचरुत्यागे ब्रीहिकार्यकारिणि मुद्गे ब्रीहिकार्य - निमित्तत्वात् धर्माः प्रोक्षणादयः कल्प्यन्ते'–श. क़. द्रु. भाग- 1 पृ. 26।
11. 'मासमग्निहोत्रं जुहोति' इत्यत्र माससाध्यायनाख्ययागे अग्निहोत्र-पदव्यपदेशाद् अग्निहोत्रधर्मातिदेशः –क. द्र शु, भाग-1, पृ. 26 ।
12. 'यजमानाद् भिन्नो यूपः' इत्यत्र यूपे यजमानादन्यत्वरूपावगमाद् यजमानधर्मस्य तदायपरिमाणस्यातिदेशः–इति श्राद्धविवेकटीकायां श्रीकृष्णः–श. क. द्रु. भाग–1, पृ.–26 ।

बहुधा व्यवहृतः[1] । ये चातिदेशाः किमपि वचनं ज्ञापयन्त एवाऽऽत्मनः सार्थकतां लभन्ते, ते 'ज्ञापका अतिदेशाः 'इत्युच्यन्ते । ते चात्र यथाक्रमं निरूप्यन्ते । तत्र –

## कित्त्वातिदेशः (१)

१ 'स्थाघ्वोरिच्चेत्यनेन[2] कृतः सिचः[3] कित्त्वातिदेशः 'स्थान्यलाश्रय-विधौ कार्येऽनल् विधाविति प्रतिषेधो नाऽऽदेशाश्रयः'इति वचनस्य ज्ञापकः[4] । 'अदित'[5] 'अधित'[6]

---

1. "प्राधान्यात् कीर्यातिदेशोऽयम् । 'शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः' तस्यापि कार्य-फलकत्वा'दिति तृजवत्सूत्रे कैयटः । भाष्येऽपि "तत्राऽऽङ्गशास्त्रातिदेशात् सिद्धम्– आङ्गं यत्कार्यं तदतिदिश्यते"–इत्युक्त्वा तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्नि-धानस्तत्तन्निमित्तस्य कार्यव्यवहार-एवानेन, कार्यं तु स्वशास्त्रेणैवेति । अतएव रामायेत्यादौ' स्थानिवत्त्वेन सुप्त्वात् 'सुपिचे' ति दीर्घ इति संगच्छते । यद्वा. किञ्चिन्निमित्त-वैकल्येऽपि दीर्घादिकार्यमनेन क्रियते । तच्च कार्यं किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्र-मूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां वोद्ध्यम् । एतदेवाभिप्रेत्य अति-दिश्यमानकार्याणामुपदेश-देश एव देश इत्यभियुक्ताः । अत्राऽऽद्यपक्ष एव भाष्यसम्मतः । अत्रैव 'स्थान्यल्विधिप्रतिषेधे कुरु-वध-पिबां प्रतिषेधो वक्तव्य' इत्येतदुपपादनावसरे - 'स्थानिवद्भावादङ्गसंज्ञा' स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोतीत्यादि-भाष्योक्तरिति बोद्ध्य"मित्याह भ. ना. ल. श. शे. अचूसन्धि प्र. पृ. 222 - 224.
2. अष्टा. 1/2/17
3. 'च्लेः सिच्' – अष्टा. 3/1/44
4. तथाहि – "स्थाघ्वोरिच्चेति (1/2/17) गुणनिषेधाय सिचः कित्त्वं ज्ञापयति – 'स्थान्यला-श्रयविधौ कार्येऽनल्विधाविति प्रतिषेधो नादेशाश्रय' इति । अन्यथा हि अदित अधितेत्यादा-वादेशस्येकोऽलाश्रयत्वे सति स्थानिवत्त्वाभावादनङ्गत्वादेव गुणो नास्तीति कित्त्वमनर्थकं स्यात् । तेन वृक्षायेत्यत्र स्थानिवद्भावेन सुप्त्वादादेशाश्रयं यञमाश्रित्य सुपि चेति (7/3/102) दीर्घः सिद्ध्यति । तथा भुवनं धुवनमिति ल्युडादेशालमचमाश्रित्याजादौ प्रत्ययेऽङ्गस्योवङ् भवती" त्याह पु. दे. ज्ञा. समु. द्वितीये कुटादि पादे पृ. 62. ।
5. 'देङ् रक्षणे' धा. पा. भ्वा. 962 , इति देधातोर्लुङ् ते अडागमे च्लौ सिचि 'आदेच उपदेशेऽशिति - अष्टा. 5/1/25, इतिधातोरेकारस्याऽऽत्वे दाधाघ्वदाप् – अष्टा. इति 1/1/20, 'दा' इत्यस्य घुत्वादाकारस्य 'स्थाघ्वोरिच्च' – अष्टा. 1/2/17, इति इत्वे सिचः कित्त्वे च कृते इकारस्य 'सार्वधातुकार्धधातुकयोः' – अष्टा. 7/3/84, इति प्राप्तस्य- गुणस्य 'क्ङिति च' – अष्टा. 1/1/5, इति निषेधे सिचः सकारस्य 'ह्रस्वादङ्गात्' – अष्टा. इति लोपे पुनः 'सार्वधातु.' – अष्टा. 7/3/84, इति प्राप्तस्य गुणस्य 'त' – इत्यस्य ङित्त्वात्' क्ङिति च – अष्टा. 1/1/5, , इति निषेधे रूपमिदम् ।
6. 'डुधाञ् धारण-पोषणयोः' धा. पा. जुहो. 1092, इति धा धातोर्लुङि अडागमे ते च्लौ सिचि, दाधाघ्वदाप्' – अष्टा. 1/1/20 इति घुत्वे धातोराकारस्य 'स्थाघ्वोरिच्च'–अष्टा. 1/2/17, इति सिचः कित्त्वे च कृते इकारस्य 'सार्वधातुकार्धधातुकयोः' – अष्टा. 7/3/34, इति प्राप्तस्य गुणस्य 'क्ङिति च'–अष्टा. 1/1/5, इति निषेधे 'ह्रस्वादङ्गात्'–अष्टा. 8/2/27, इति सकारलोपे पुनः 'सार्वधातु.'–अष्टा. 7/3/84, इति प्राप्तस्य गुणस्य क्ङिति च–अष्टा. 1/1/5, इति निषेधे रूपमिदम् ।

इत्यादाविकारस्य गुण[1]-निषेधाय[2] कृतोऽयं सिचः कित्त्वातिदेशोऽस्य वचनस्याभावे व्यर्थः । आदेशस्येकोऽ[3]लाश्रयत्वेनानल्विधाविति स्थानिवत्त्वप्रतिषेधादङ्गत्वाभावादेव[4] हि गुणाभावोऽत्र[5] सुलभः । ज्ञापिते चास्मिन् वचने 'आदेशाल इकः[6] स्थानिवत्त्वे[7] कर्तव्येऽनल्विधाविति प्रतिषेधाप्राप्त्या स्थानिवत्त्वादङ्गत्वमदित इत्यादौ 'अदि' इत्यादीनां सुलभमिति प्राप्तस्य गुणस्य[8] प्रतिषेधार्थं[9] कित्त्वातिदेशोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [10]'वृक्षाये'त्यादौ स्थानिवद्भावेन यकारस्य सुप्त्वाद् यञमाश्रित्य 'सुपिचेति[11] दीर्घस्य, 'भुवनं[12]' 'धुवन'[13]-मित्यादौ [14]ल्युडादेशस्यालमचमाश्रित्याजादौ प्रत्ययेऽङ्गस्योवङश्च[15] सिद्धिः । अस्य वचन-

1. 'सार्वधातुकार्धधातुकयोः' – अष्टा. 7/3/84 !
2. 'क्ङितिच' – अष्टा. 1/1/5. ।
3. 'स्थाघ्वोरिच्च' – अष्टा. 1/2/17 ।
4. यस्मात् प्रत्यय-विधिस्तदादि प्रत्ययेऽङ्गम्' – अष्टा. 1/4/13 ।
5. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84 ।
6. स्थाघ्वोरिच्च' – अष्टा. 1/2/17
7. 'स्थानिवदादेशोऽनल्विधौ' – अष्टा. 1/1/56
8. 'सार्वधातुकार्धधातुकयोः' – अष्टा. 7/3/84
9. 'क्ङितिच' – अष्टा. 1/1/5
10. 'वृक्षशब्दाच्चतुर्थ्येकवचने रूपमिदम् ।
11. अष्टा. 7/3/102
12. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोः
'कृत्यल्युटोबहुलम्' – अष्टा. 3/3/113. इति ल्युटि
'युवोरनाकौ' – अष्टा. 7/1/1. इति योरनादेशे
'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' – अष्टा. 6/4/77.
इत्युकारस्योवङ्ङादेशे स्वादिकार्येषु कृतेषु रूपमिदम् ।
13. 'धू विधूनने' धा. पा. तुदा. 1399. 'धुञ् कम्पने'
धा. पा. स्वा. 1256. 'धूञ् कम्पने' धा. पा. क्र्या.
1488. इति धूधुधूभ्यः 'कृत्यल्युटोबहुलम्' अष्टा. 3/3/113. इति ल्युटि 'युवोरनाकौ' – अष्टा. 7/1/1. इति योरनादेशे 'अचिश्नु. - अष्टा. 6/4/77. इत्युकारोकारयोरुवङ्ङादेशे स्वादि-कार्येषु कृतेषु रूपमिदम् ।
14. 'युवोरनाकौ – अष्टा 7/1/1 ।
15. 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' अष्टा. 6/4/77 ।

स्यासत्त्वे हि क्रमशोऽत्राऽदेशालं यकारमाश्रित्य दीर्घः,[1] ल्युडादेशालमाश्रित्या-जादिप्रत्ययनिमित्तक उवङ्[2] च न सिद्ध्येताम् । नहि यकारे सुप्त्वम् अनादेशे च प्रत्ययत्वं स्थानितो लभ्यम् । यतः आदेशालाश्रयत्वाद्दीर्घो-[3]वङो[4]-'रलाश्रयत्वेन स्थानिवत्त्व- प्रतिषेधो[5] दुर्वारः ।

## कित्त्वातिदेशः (२)

'हनः[6] सि'-जिति सूत्रेण हन्तेः परस्य सिचः कित्त्वातिदेशः 'सिजन्तस्योपधाया नकारस्या-'निदिता'-मिति लोपो नेतिवचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्या-भावेऽनेन सिचः कित्त्वातिदेशो व्यर्थः । तथाहि –'आहत'[8] इत्यत्र हन्ते र्नकारस्य 'अनुदात्तोपदेश[9]-वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिती'ति लोपं सिद्धये सिचः[10] कित्त्वातिदेशः कृतः । स चातिदेशोऽस्य वचनस्याभावे व्यर्थः, 'अनिदितां

---

1 'सुपि च' – अष्टा 7/3/102 ।

2 'अचिश्नु. ' – अष्टा. 6/4/77 ।

3 'सुपि च' – अष्टा 7/3/102 ।

4 अचिश्नु. ' -- अष्टा. 6/4/77 ।

5. स्थानिवदादेशोऽनल्विधौ' – अष्टा. 1/1/56 ।

6. अष्टा. 1/2/14

7. तथाहि –

(क) "यदयं 'हनः सि' जिति हन्तेः सिचः कित्त्वं शास्ति तज्ज्ञापयत्वाचार्यो 'न सिजन्तस्य नकारलोपो भवती" – त्याह पत. व्या. म. भा. 3/1/4/44

(ख) "हनः सिजिति" (1/2/14) कित्त्वं ज्ञापकमेव 'सिजन्तस्य नलोपो न भवती' ति । सिचस्त्विकार उच्चारणार्थ इति 'च्लेः सिजिति सूत्रे (3/1/44) भाष्ये उक्त' मित्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे –पृ. 62.

(ग) "च्लेः सिच्" (सू. 3/1/44) । सिचः कित्करणात् ज्ञापकात् सिजन्तस्य न-लोपो नेती"–त्याह श्रीना. ज्ञा. सं. 3 - पृ. 64.

8. 'हन हिंसागत्योः 'धा. प्रा. अदा., इति. हन्
धातोराङ्पूर्वकाल्लुङि च्लौ च्लेः सिचि ते 'आहन् स्त' –
इत्यवस्थायां 'हनः सिच्'–अष्टा. 1/2/14. इति सिचः कित्त्वात्तस्मिन् परतः 'अनुदात्तोप-देशवनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति' – अष्टा. 6/4/37. इति नकारस्या-नुनासिकस्य लोपे 'ह्रस्वादङ्गात्' – अष्टा. 8/2/27 इति सकारस्य लोपे च सति, रूप-मिदम् ।

9. अष्टा. 6/4/37 ।

10. 'हनः सिच' - अष्टा. 1/2/14 ।

हल[1] उपधायाः क्ङिती'त्यनेनैव हि 'आहत'[2] –इत्यत्र नलोपः सुलभः । न च सिच[3] इदित्त्वाद् 'अनिदिता'[4]-मिति नलोपोऽत्र न प्राप्नोती'ति शङ्क्यम् । यतः सिचस्त्विकार उच्चारणार्थ इत्युक्तं[5] भगवता । ज्ञापिते चास्मिन् वचने 'आहत' इत्यत्र हन्तेर्नकारस्य लोपसिद्धये सिचः कित्त्वातिदेशः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अमंस्त'[6]–इत्यत्र नलोपाभावः सिद्धः । अस्यासत्त्वे हि अत्र 'अमन् स्त' इत्यवस्थायां सिच[7] इकारस्योच्चरणार्थकतया तस्येदित्त्वा-भावेन सिजन्ताङ्गस्यानिदित्तया तदुपधाया नकारस्य 'अनिदितां हल[8] उपधायाः क्ङिती'ति नलोपाऽऽपत्तिर्दुवारा स्यात् ।

व्याडिस्तु 'हनः[9] सिच्'–इत्यनेन विहितः सिचः कित्त्वातिदेशः 'समानाश्रय-मसिद्धं व्याश्रयं[10] सिद्धं भवती' ति परिभाषाया ज्ञापक[11] इति मनुते । यतोऽस्या अभावे आहत[12] इत्येतदर्थं सिचः कित्त्वातिदेशोऽयं व्यर्थः । तथाहि–सिचोऽनेन कित्त्वातिदेशे कृते सिचमाश्रित्य 'अनुदात्तोपदेश[13]-वनतितनोत्यादीनामनुनासिकलोपो

---

1. अष्टा. 6/4/24 ।
2. रूपसिद्धिः प्राग् दर्शिता ।
3. 'च्लेः सिच्' – अष्टा. 3/1/44 ।
4. 'अनिदितां हल उपधायाः क्ङिति' – अष्टा. 6/4/24 ।
5. व्या. म. भा. 31/4/44 ।
6. 'मन ज्ञाने' धा. पा. दिवा. 1176, इति, 'मनु अवबोधने' धा. पा. 1472 इति च मन् धातोर्लुङि ते च्लौ सिचि रूपम् ।
7. 'च्ले सिच्' –अष्टा. 3/1/44
8. अष्टा. 6/4/24
9. अष्टा. 1/2/14
10. व्याडिः प. सू. प. 38, पृ. 18
11. तथाहि – "समानाश्रयमसिद्धं व्याश्रयं सिद्धं भवति' । कथं ज्ञायते अस्त्येषा परिभाषा । यदयं 'हनः सिच्' (1/2/14) इति सिच; कित्त्वे कृते सिचमाश्रित्य 'अनुदात्तोपदेश. (6/4/37) इत्यनेनानुनासिकलोपः । तकारमाश्रित्य ह्रस्वादङ्गात्' (8/2/27) इति सकार लोपः । एवमाहतेति सिद्धं भवति असत्यपि सूत्रे सिचं 'च्लेः सिच्' (3/1/44) इति कृत्वा 'हन् स्त' इति स्थिते 'सार्वधातुकमपित्' (1/2/4) इति ङि. त् । तकाहस्य ङित्त्वे सति तमाश्रित्य 'अनिदितां हल उपधायाः क्ङिति' (6/4/24), इति लोपः । 'ह्रस्वादङ्गात्' (8/2/26) इति च सलोपः । तत आहतेति सिद्धं भवति । नार्थो हनः सिच् (1/2/14) इति सूत्रेणेत्याह व्याडिः प. सू. प. 38 पृ. 18 ।
12. आङ्पूर्वकाल' 'हन हिंसागत्योः धा. पा. अदा. 1012, इतिहन् धातो लुङि 'आङोयमहनः' इत्यात्मनेपदे ते रूपमिदम् ।
13. अष्टा. 6/4/37।

झलि क्ङिती'ति हनोऽनुनासिकलोपे तकारमाश्रित्य 'ह्रस्वादङ्गात्[1] इति सकारलोपे यथा रूपमिदं सिद्ध्यति आहते'ति तथा अस्या अभावे एतस्यातिदेशस्याभावेऽपि 'हनूस्त' इति स्थिते 'सार्वधातुकमपित्[2] 'इति तकारे ङित्त्वातिदेशे 'अनदितां[3] हल उपधायाः क्ङिती'ति नलोपे 'ह्रस्वादङ्गा'[4]-दिति सलोपे रूपमिदं सिद्ध्यति 'आहते'-ति । न चास्यातिदेशस्यानारम्भे सकारलोपे कृते हकारे योऽकारस्तस्य सकार-माश्रित्य आर्धधातुके 'अतोलोपः'[5] इति लोपाऽऽपत्तिरिति शङ्क्यम्, यतोऽस्याऽऽरम्भेऽप्यसौ दुर्वारः । यदि एतदनारम्भे 'असिद्धवदत्राभादिति[6] नलोपस्यासिद्ध-त्वान्नकारेण व्यवधानादलोपाभाव इति समाधीयते तर्हि एतदनारम्भेऽपि 'अनि-दिता'[7]-मिति सूत्रस्याप्याभाच्छास्त्रत्वात् तदसिद्धत्वेन नकारेण व्यवधानादलोपाभावः सुलभः । ज्ञापितायां चास्यां सकारमाश्रित्य नकारलोपः[8] अकारलोपश्च[9] प्राप्नुत इति नकारलोस्यासिद्धत्वं समानाश्रयत्वान्नूनं सिद्ध्यतीत्यल्लोपाभाव-सम्पादनाय अतिदेशोऽयं स्वांशे चरितार्थो भवति । अस्य अभावे हि व्याश्रयस्याप्यसिद्धत्वादसौ व्यर्थः । अनारभ्यमाणे चास्मिन् अतिदेशे तकारमाश्रित्य नकारलोपः[10] सकार-माश्रित्याकार[11]-लोपो वक्तव्यइति तद् व्याश्रयमिति तस्य सिद्धत्वादलोपाऽऽ-पत्तिर्दुवारा स्यात् । ज्ञापिताया अस्याः फलं तु पुपुष[12] इत्यस्य सिद्धिः । अत्र हि शसमाश्रित्य वसुसंप्रसारणम्[13], उसमाश्रित्य 'आतोलोप[14] इटिच, इत्याकारलोपः; तदेतद् व्याश्रयं भवति, व्याश्रयं च सिद्धं भवत्यनयेत्याकारलोपे कृते पुपुष इति

---

1. अष्टा. 8/2/27।
2. अष्टा. 1/2/4 ।
3. अष्टा. 6/4/24 ।
4. अष्टा. 8/2/27 ।
5. अष्टा. 6/4/48
6. अष्टा. 6/4/22 ।
7. 'अनिदितां हल उपधायाः क्ङिति' – अष्टा. 6/4/24 ।
8. अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति' – अष्टा. 6/4/37 ।
9. 'अतोलोपः' – अष्टा 6/4/48 ।
10. 'अनिदितां हल उपधायाः क्ङिति' – अष्टा. 6/4/24 ।
11. 'अतोलोपः' – अष्टा. 6/7/48 ।
12. पाधातोर्लिटि तस्य वसादेशे कृदन्तत्वात्प्रातिपदिकत्वे द्वितीया-बहुवचने शसि रूपमिदम् ।
13. 'वसोः सम्प्रसारणम्' – अष्टा. 6/4/13 ।
14. अष्टा. 6/4/64 ।

सिद्ध्यति । अस्या अभावे तु व्याश्रयस्यापि सम्प्रसारणस्य 'असिद्धवदत्राभा'-[1]-दित्यसिद्धत्वादचोऽभावेन नात्र आकारलोपः प्राप्नोतीति नायं प्रयोगः सिद्ध्येत् ।

## कित्त्वातिदेशः (३)

३. 'हलन्ताच्चेति'[2] सूत्रेण इकूसमीपाद्धलः परस्य झलादेः सनः कित्त्वातिदेशः धात्वन्त-प्रत्यययोर्हलोः संयोग-संज्ञां निमित्तीकृत्य लब्धगुरुव्यपदेशानामिकां गुणो भवती' ति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावेऽसौ व्यर्थः । तथाहि – बिभित्सती'[4]त्यादौ गुणस्य[5] निषेधाय[6] हलन्ताच्चे'[7] ति सूत्रेण इकूसमीपाद्धलः परस्य झलादेः सनः कित्त्वातिदेशोऽयं कृतः । स चास्य वचनस्याभावे व्यर्थः । यतो

---

1. अष्टा. 6/4/22.
2. अष्टा. 1/2/10
3. तथाहि –
   (क) "यदयं' त्रसिगृधिधृषिक्षिपेःक्नुः' 'इकोझल्' 'हलन्ताच्चे' ति क्रुसनौ कितौ करोति तज्ज्ञापयत्याचार्यो – 'भवत्येवंजातीयकानां गुण' इतीत्याह पत. व्या. म. भा. 7/3/2/86 ।
   (ख) "प्रत्ययादेरङ्गावयवस्य च हलोरान्तर्ये सति लघूपधगुणो न व्यावर्त्त्यते – इति ज्ञापितमेतत् क्नुसनोः किलकरणेन । 'त्रसिगृधिधृषिक्षिपेः क्नुः' । हलन्ताच्च'इतीत्याह वाम. का. 7/3/86.।
   (ग) "त्रसि गृधि धृषि क्षिपे क्नुः' 'हलन्ताच्च' – इति कनु-सनोः कित्करणस्यैतदेव प्रयोजनमृगृध्नुः बिभित्सतीत्यादौ गुणो माभूदिति । यदि प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति लघूपधगुणो न स्यात् तयोः कित्त्वं न कुर्यात्, कृतञ्च. तस्मात् क्नु-सनोः कित्त्वं कुर्वता – प्रत्ययाङ्गावयवयोर्हलोरान्तर्येऽपि लघूपधगुणो न व्यावर्त्यत इति ज्ञापितमेत"दित्याह जि. बु. न्या 7/8/86 ।
   (घ) "क्ङितिचेत्यत्र (1.1.5) परसप्तमी पक्षे व्यवहितस्याप्युपधालक्षण-गुणनिषेध इत्यत्रार्थे हलन्ताच्चेति (1.2.10) सनः कित्त्वे त्रसिगृधिधृषीति (3.2.40) क्रु-प्रत्ययस्य कित्वे ज्ञापकमुक्तं भाष्ये" इत्याह पु. दे. ज्ञा. समु. द्वितीये कुटादि पादे पृ. 6 ।
   (ङ) "पुगन्त (सू. 7/3/86) । क्नुसनोः कित्करणं ज्ञापकं भवत्येवंजातीयकानां गुण इतीत्याह एन. एस. रामा. ज्ञा. सं. परि. 7/ पृ. 190. ।
4. 'भिदिर् विदारणे' धा. पा. रुधा. 1439 इति भिद्धातोः सनि लटि तिपि रूपम् ।
5. 'पुगन्त लघूपधस्य च' – अष्टा. 7/3/86, इति विहितस्येत्यर्थः ।
6. 'क्ङितिच' – अष्टा. 1/1/5, इत्यनेनेत्यर्थः ।
7. अष्टा. 1/2/10

'बिभित्सतीत्यादौ धात्वन्तदकार-प्रत्यायादिसकारयोः संयोग[1]-संज्ञायां तस्मिन् परे इकारस्य गुरुत्वेन[2] लघुताभावादेव गुणाप्रवृत्तिः सुलभा । ज्ञापिते चास्मिन् वचने 'बिभित्सती'त्यादौ पुगन्तलपूपधस्य चे'[3] ति गुणः प्राप्नोतीति तस्य 'क्ङिति चे'[4] ति प्रतिषेधाय कित्त्वातिदेशोऽयं स्वांशे चरितार्थोभवति । ज्ञापिस्यास्य वचनस्य फलं तु 'भेत्ता'[5] भेत्तु'[6]-मित्यादौ लघूपधगुणसिद्धिः ।[7] अस्यासत्त्वेहि नात्र गुणः सिद्धयेत् । यतः 'भिद् + तृ' 'भिद् + तुम्' इत्यवस्थयोः धात्वन्त-प्रत्ययाद्योर्हलोरनन्तरयोः संयोग-संज्ञायां[8] 'संयोगे गुरु'[9] इति इकारस्य गुरुसंज्ञयां 'ह्रस्वंलघु'[10] इति लघुसंज्ञायाः बाधात् उपधाया इकारे लघुत्वं नास्ति ।

हरदत्तमिश्रस्तु ज्ञापकमिमं प्रतिपाद्य वचनेऽस्मिन्नस्य ज्ञापकत्वं निराकृतवान्[11] । यतः [12]'सिसृक्षति' [13]'दिदृक्षते' इत्यत्र अमोऽभावाय[14] 'धिप्सती'[15] त्यत्र नलोपाय चायं कित्त्वातिदेशश्चरितार्थः ।

---

1. 'हलोऽनन्तराः संयोगः', अष्टा. 1/1/7
2. 'संयोगे गुरु' – अष्टा-अष्टा. 1/4/11.
3. अष्टा. 7/3/86.
4. अष्टा. 1/1/5
5. 'भिदिर्' विदारणे'
धा. पा. रुधा. 1439 इति भिद्धातो : ण्वुल्तृचौ'–अष्टा 1/1/133 इति तृचि सौ रूपम् ।
6. 'भिदिर् विदारणे' धा. पा. रुधा. 1439 – इति भिद् धातोः 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' अष्टा. 3/4/10 इति तुमुनि रूपम् ।
7. 'पुगन्त-लधूपधस्य च' – अष्टा. 7/3/86
8. 'हलोऽनन्तराः संयोगः' – अष्टा 1/1/7
9. अष्टा. 1/4/11
10. अष्टा. 1/4/10
11. तथाहि – "त्रसि गृधि धृषि क्षिपेः क्नुः 'इतिक्नोः कित्करणस्यैतत् प्रयोजनम् - गृध्नुरित्यादौ गुणो माभूदिति । यदि चैवंविधे विषये गुरूपधत्वाद् गुणो न स्यात्, क्नोः कित्करणमनर्थकं स्यात् तथा 'हलन्ताच्च' इति सनः कित्त्वविधानस्यैतत् - प्रयोजनम् - 'पित्सती'–त्यादौ गुणो माभूदिति, तदपि ज्ञापकमुक्तार्थस्य । इदं तु ज्ञापकं नोपपद्यते, सिसृक्षति, दिदृक्षते इत्यत्र 'सृजिदृशोः 'इत्यमागमो माभूदित्येवमर्थमेतत् स्यात्, तथा धिप्सतीत्यत्र नलोपार्थं तत् स्यात् तस्मात् क्नोरेव कित्करणं ज्ञापकम् । पदमं. 7/3/86।
12. 'सृज विसर्गे' धा. पा. दिवा. 1178, इति सृज्धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/7 इति सनि द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे 'सन्यतः' अष्टा. 7/4/70 इति अभ्यासस्य अत इत्वे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांषः - अष्टा 8/2/36 इति जकारस्य षत्वे 'षढोः कः सि' अष्टा. 8/2/41 इति षकारस्य ककारे 'आदेशप्रत्यययोः' -अष्टा. 8/3/59 इति सनः सकारस्य षत्वे 'हलन्ताच्च' -अष्टा. 1/2/10 इतिसनः कित्त्वात् 'सृजदृशोर्झल्यमकिति' अष्टा. 6/1/58 इत्यमागमाभावे लटि तिपि शपि पररूपे रूपमिदम् ।
13. 'दृशिर्प्रेक्षणे' धा. पा. भ्वा. 988 , इति दृश् धातोः 'धातोः कर्मणः 0' - अष्टा. 3/1/7. इति सनि द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे 'सन्यतः' – अष्टा. 7/4/79 इति अभ्यासस्य अत इत्वे 'व्रश्च.' – अष्टा. 8/2/36 शकारस्य षत्वे 'षढोः कः सि' - अष्टा. - 8/2/41. इति षकारस्य ककारे 'आदेशप्रत्यययोः' – अष्टा. 8/3/59. इति सनः

# ङित्त्वातिदेशः

'यासुट्परस्मैपदेषूदात्तोङिच्चे'[1]-ति सूत्रेण विहितस्य यासुटो ङित्त्वातिदेशः 'ङिदादेशानां ङिति यत् कार्यं तन्ने' ति वचनस्य, 'लकाराऽश्रयं ङित्त्वमादेशानां न भवती' ति वचनस्य वा ज्ञापकः[2] । यतोऽस्य वचनस्याभावे यासुटो ङित्त्वातिदेशोऽयं

---

सकारस्य षत्वे 'हलन्ताच्च' – अष्टा. 1/2/10, इति सनः कित्त्वात् 'सृजदृशोर्झल्यमकिति' – अष्टा. 6/1/58 इत्यमागमाभावे लटि 'ज्ञा श्रु स्मृ दृशांसनः "अष्टा. 1/3/57 इत्यात्मनेपदे ते शपि पररूपे रूपमिदम् ।

14. 'सृजदृशोर्झल्यमकिति' – अष्टा. 6/1/58

15. 'दम्भुदम्भने' धा. पा. स्वा. 127/, इति दम्भ् धातोरुपदेशे नोपधात् सनि द्वित्वे 'दम्भ इच्च' –अष्टा. 7/4/56, इति अस्य इत्वेऽभ्यासत्वे' 'अत्रलोपोऽभ्यासस्य'–अष्टा. इत्यभ्यासलोपे 'दिम्भ् स' इति स्थिते 'हलन्ताच्च' – अष्टा. 1/2/10, इति सनः कित्त्वे 'अनिदितां हल उपधायाः क्ङति' – अष्टा. 6/4/24, इति नलोपे 'एकाचो वशो भष् झषन्तस्य स्ध्वोः' अष्टा. 8/2/37, इति भष्भावेन दकारस्य धकारे भकारस्य 'खरिच' - अष्टा. 8/4/55, इति चर्त्वेन पकारे लटि तिपि शपि पररूपे धिप्सती'तिरूपम् ।

1. अष्टा. 3/4/103 ।

2. तथाहि –

(क)" यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो न ङिदादेशा ङितो भवन्तीति । यद्येतज् ज्ञाप्यते, कथं – 'नित्यङ्ङितः' इतश्चेति? । ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवतीति । किं वक्तव्यमेतत्? । नहि कथमनुच्यमानं गंस्यते? यासुट एव ङिद्वचनात् । अपर्याप्तञ्चैव हि यासुट्समुदायस्य ङित्त्वम् । ङितं चैनं करोति । तस्यैतत् प्रयोजनं – ङितो यत्कार्यं तद्यथास्यान् ङिति यत्कार्यं तन्माभूदिती"त्याह वार्तिककारमतं पतञ्जलिः व्या. म. भा. 1/1/4/1 ।

(ख) "ङितो यत्कार्यं तद् यासुटो न किंचिदतिदेष्टव्यमस्ति, किंतु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते । तच्चेत् स्थानिवद्भावेन स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणे ङिति यत्कार्यं तद्भावस्यैव ज्ञापकः" इत्याह कै. प्रदी. 1/1/4/1 ।

(ग) "स्थानिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटोङिद्वचनं ज्ञापनार्थम् – लकाराश्रय-ङित्त्वमादेशानां न भवतीति । अचिनवम् । अकरवम्" – इत्याह जया. का. 3/4/103," अचिनवम्; 'असुनव'मित्यादौ लकारस्य सत्यपि ङित्त्वे यासुटोङिद्वचनं ज्ञापकम् – ङिति यत्कार्यं तल्लकारे ङिति न भवति 'इति' – इति चाऽऽह जया. 1/1/5

(घ) "यदि ङिति यत्कार्यं विधीयते तल्लकारे ङिति स्यात्, ततो लिङ एव ङित्त्वेन चिनुयादित्यादौ गुण-प्रतिषेधस्य सिद्धत्वाद् 'यासुट्' परस्मैपदेषूदात्तो ङिच्च' इति यत्तस्य यासुटो ङिद्वचनं तन्न कुर्यात्, कृतं च ततोऽवसीयते-ङिति यत्कार्यं तल्लकारे ङिति भवति' इतीत्याह जि. बु. न्या. 1/1/5.

(ङ) "यासुटो ङिद् वचनं (3/4/103) ज्ञापकं 'लकाराश्रयं ङित्त्वमादेशानां न भवति' । तेन अचिनवम्, 'असुनव'–मित्यत्र गुणः सिद्ध्यतीति वृत्तिः । ननु चाविभयुरितिवत् चिनुयुः सुनुयुरित्यत्र जुसाश्रयो ङित्त्वापवादो जुसिचेति (7/3/83) गुणः प्राप्नोति तद्बाधने यासुटो ङित्त्वं चरितार्थम् इति कथं ज्ञापकम् ? उच्यते– जुसिचेत्यत्र क्सस्याचि (7/3/72) इत्यतोऽचीत्यनुवर्तते । तेन चिनुयुः सुनुयुरित्यादौ

व्यर्थः । यासुटो ङित्त्वाभावेऽपि हि 'भूयास् ति' इत्यत्र लिङादेशस्य तिपः स्थानिवद्भावेन[1] ङित्त्वादेव यासुटो 'यदागमे'[2]ति परिभाषयैव ङित्त्वं सुलभम् । ज्ञापिते चास्मिन् वचने ङितो लिङ आदेशेऽपि-तिप् ङित् न भवतीति यासुटो ङित्त्वं दुर्लभमिति तस्य ङित्त्वायादेशोऽयं स्वांशे चरितार्थो भवति । न च 'अबिभयु'[3]-रित्यादाविव 'चिनुयुः[4] 'सुनुयु'[5]-रित्यत्र ङित्त्वापवादस्य जुसाश्रयस्य 'जुसिचेति[6] गुणस्य बाधनार्थं यासुटो ङित्त्वं चरितार्थमिति कथमयमतिदेशो ज्ञापक इतिशङ्क्यम्", यतो 'जुसिचे'[7]-त्यत्र 'क्सस्याची'[8]-ति सूत्रादचीत्यस्यानुवर्तनाद् अजादौ जुसीत्यर्थाद् यासुटो ङित्त्वातिदेशाभावेऽपि 'चिनुयु' – रित्यादौ गुणाभावः सुलभः । नह्यत्र जुस् अजादिः किन्तु हलादिः । न च [9]'स्तौति'-तूयादाविव 'स्तुयादित्यादावपि'[10] उतोवृद्धिर्लुकि हली'[11]-ति वृद्धिः प्राप्नोतीति तन्निवृत्तये[12]

---

गुणाभावः सिद्ध्यति इति ज्ञापकवादिनोऽयमभिप्रायः । नन्वेवमपि स्तौतीत्येतद्वत् स्तुयादित्यत्रापि 'उतो वृद्धिर्लुकि हलीति' (7/3/89) वृद्धिः प्राप्नोति । तन्निवृत्तये यासुटो ङित्वस्य ङिच्च पिन्न भवतीति पित्त्वनिषेधार्थत्वात् कथं ज्ञापकता ? उच्यते– उत औदति वक्तव्ये उतोवृद्धिरिति (7/3/89) वृद्धिग्रहणात् संज्ञापूर्वकत्वे सत्यनित्यत्वादेव स्तुयादित्यत्र वृद्धिरोकारो न भविष्यतीति ज्ञापकवादिनोऽभिप्रायः' – इत्याह पु. दे. ज्ञा. समु. द्वादशे धातु-सम्बन्ध-पादे – - पृ. 76 ।

(च) "यदि ङिति यत् कार्यं तद् ङितो लकारस्यादेशे स्थानिवद्भावात् स्यात् यासुटो ङिद्वचनमनर्थकं स्याद्, लिङो ङित्त्वादेव तदादेशेषु ङित्कार्यस्य सिद्धत्वा"–दित्याह ह. मि. पदम. 1/1/5.

(छ) "यासुटो ङिद्वचनात् ज्ञापकात् ङिदादेशानां ङिति यत्कार्यं तन्न । तेन 'अचिनव'-मित्यादौ न निषेध इति वार्तिकमतम् (1/1/5)" – इत्याह श्रीना. ज्ञा. सं. पृ.-16.

1. 'स्थानिवदादेशोऽनल्विधौ' – अष्टा. 1/1/56.
2. 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' ।
3. 'ञिभी भये' धा. पा. जुहो. 1084, इति भीधातोर्लङिझौ श्लौ द्वित्वादिषु कृतेषु झेः 'सिजभ्यस्तविदिभ्यश्च' – अष्टा. 3/4/109, इति जुसि 'जुसिच' – अष्टा. 7/3/83, इति गुणेऽयादेशे जुसः सकारस्य रुत्वे विसर्गे च रूपम् ।
4. 'चिञ् चयने' धा. पा. स्वा. इति चिधातो र्विधिलिङि झौ श्नुविकरणे यासुडागमे 'झेर्जुस्' – अष्टा. इति जुसादेशे रूपम्
5. 'षुञ् अभिषवे' धा. पा. स्वा. इति सुधातोः विधिलिङि झौ चिनुयुरितिवद् रूपम्
6. अष्टा. 7/3/83
7. अष्टा. 7/3/83.
8. अष्टा. 7/3/32.
9. 'ष्टुञ् स्तुतौ' धा. पा. अदा. 1043, इति स्तुधातोर्लटि तिपि शपि तस्यादादित्वाल्लुकि 'तुरुस्तुशम्यमः सार्वधातुके'– अष्टा. 7/3/95, इति ईडभावपक्षे उतोवृद्धिर्लुकिहलि' – अष्टा. 7/3/89, इति धातोरुकारस्य वृद्धावौकारे रूपम् ।
10. 'ष्टुञ् स्तुतौ' धा. पा. अदा. 1043, इतिस्तुधातोः विधिलिङि तिपि शपि 'अदिप्रभृतिभ्यः शपः – अष्टा. 2/4/72, इति शपो लुकि यासुडागमे 'तुरुस्तुशम्यमः सार्वधातुके' – अष्टा. 7/3/95, इति ईडभाव-पक्षे रूपम् ।
11. अष्टा 7/3/89.
12. उतो वृद्धिवारणायेत्यर्थः ।

यासुटो ङित्त्वातिदेशो'ङिच्च- पिन्न भवती'[1]-ति पित्त्वनिषेधार्थं चरितार्थ इति कथं ज्ञापक इत्यपि शङ्कनीयम्, यतः 'उत औ'दिति वक्तव्ये 'उतोवृद्धि'[2]रिति वृद्धि-ग्रहणात् संज्ञापूर्वकोऽयं विधिरिति विज्ञायते, तथा सति संज्ञापूर्वकत्वेन तदनित्यतया[3] यादित्यादौ तदप्रवृत्तिर्यासुटो ङित्त्वातिदेशाभावेऽपि सुलभा । तस्मादस्य ज्ञापकत्वं युक्तम् । ज्ञापितस्यास्य वचनस्य फलं तु 'अचिनव'[4]–मित्यादौ लङादेशस्य अमो ङित्त्वाभावात् 'क्ङितिचे'[5] ति गुण-निषेधस्याभावः । अस्यासत्त्वे हि चिधातोर्लङि मिपि अमादेशे[6] स्थानिवद्भावेन[7] ङित्त्वात् 'क्ङितिचे'[8] ति गुणनिषेधाऽऽपत्तिर्दुर्वारा स्यात् ।

भट्टोजिदीक्षितस्तु यासुटो ङित्त्वातिदेशः 'लाश्रयमनुबन्धकार्यं नादेशाना' मिति वचनस्य ज्ञापक[9] इति मनुते । अस्य वचनस्याभावे हि व्यर्थोऽसौ । तथाहि–'यासुट् परस्मैपदेषूदात्तो[10] ङिच्चे' ति सूत्रेण लिङादेशानां–तिप् तस् झीत्यादिपरस्मैपदानां यासुडागमस्य ङित्त्वातिदेशो विहितः, स चास्य वचनस्याभावे व्यर्थः । यतो 'यदागमे'[11]– ति परिभाषया यासुडागमो लिङादेशावयव इति स्थानिवत्त्वेनैव तत्र ङित्त्वं सुलभम् । ज्ञापिते चास्मिन् वचने तिबादिपरस्मैपदानां ङित्त्वस्य दुर्लभतया तदवयवे यासुटि 'यदागमे'ति परिभाषया तल्लब्धुमशक्यमिति 'स्तुया'दित्यादौ गुणस्य निषेधाय यासुटोङ्ित्त्वातिदेशः[12] स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य

---

1. भगवद्वचनम् – व्या. म. भा. 3/1/4/83.
2. अष्टा. 7/3/89.
3. 'संज्ञापूर्वको विधिरनित्यः' – इतिपरिभाषयेत्यर्थः ।
4. चिञ् चयने' धा. पा. स्वा. 1252, इति चिधातो-र्लङि अडागमे लङो मिपि श्नुविकरणे मिपः 'तस्थस्थमिपां तां तं ताऽमः'–अष्टा. 3/4/101, इति अमादेशे 'सार्वधातुकार्ध-धातुकयोः'–अष्टा. 7/3/84, इति विकरणोकारस्य गुणे ओकारे अवादेशे रूपम् ।
5. अष्टा. 1/1/5.
6. 'तस्थस्थ मिपां तां तं ताऽमः' –अष्टा. 3/4/101.
7. 'स्थानिवदादेशोऽनल् विधौ' –अष्टा. 1/1/56.
8. अष्टा. 1/1/5.
9. तथाहि–"वक्ष्यमाणे'त्यत्र टित्त्वादुगित्वाच्च ङीप्प्राप्तः, यासुटो ङित्त्वेन' लाश्रयमनुबन्धकार्यं नादेशाना'मिति ज्ञापनान्न भवती"त्याह भ. दी. वै. सि. कौ. स्त्रीप्रत्यय प्र. पृ. 268 । "ङित्त्वोक्त्ये ज्ञायते–'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इती"ति चाऽऽह भ. दी. वै. सि. कौ. भ्वा. प्र. पृ. 25 ।
10. अष्टा. 3/4/103
11. 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' ।
12 'स्थानिवदादेशोऽनल्विधौ' –अष्टा. 1/1/56

फलं तु 'वक्ष्यमाणे'[1]- त्यत्र ङीबभावः[2] । अस्य वचनस्यासत्त्वे हि लृडादेशस्य शानचः[3] स्थानिवत्त्वेन[4] टित्त्वादुगित्वाच्च 'टिड्ढाण'[5]ञिति, 'उगितश्चे'[6] ति च ङीबापत्तिरत्र दुर्वारा स्यत् । नचात्र स्थानिनो लृटष्टकारस्य अकारस्य च इत्त्वाश्रयणान् ङीब्विधेरल्विधित्वाद् 'अनल्विधा'[7]– विति स्थानिवत्त्वनिषेधः शङ्क्यः यतो [8]'घुमास्थागापा जहातिसां हली'. ति ङिति विहितस्य ईत्त्वस्य 'न ल्यपी'[9]- ति निषेधेन लिङ्गेन 'अनुबन्धकार्ये अनल्विधावितिनिषेधो ने'ति वचनं ज्ञापितम् । अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तौ हि[10] 'प्रधाये'त्यादौ क्त्वाऽऽदेशस्य[11] ल्यपः[12] कित्त्वाप्रसक्तेस्तस्मिन् परत ईत्त्वस्याप्राप्त्या तन्निषेधवैयर्थ्यं स्पष्टमिति दीक्षितस्याभिप्रायः । भट्टोजिदीक्षितस्य मतमिदं पुरुषोत्तमदेवेनापि समुपन्यस्तं 'केचित्तु'–इत्यादि ग्रन्थेन ।[13]

भट्टनागेशस्तु यासुटो ङित्त्वातिदेशस्य पूर्वोक्तं वचनद्वयज्ञापकत्वं न मनुते[14] । यतः पिदर्थं ङित्त्वं चरितार्थम् । अनुबन्धकार्ये सर्वत्र 'अनल्विधा'विति[15] निषेधाभावे सत्यपि यासुटो ङित्त्वातिदेशो हि तिप्-सिप्-मिबागमयासुटो ङित्त्वार्थमावश्यकम् ।

---

1. 'वच परिभाषणे' धा. पा. अदा. 1063, इतिवच् धातोः कर्मणि लृटि 'लृटः सद्वा'–अष्टा. 3/3/14, इति शानजादेशे 'स्यतासी लृलुटोः'–अष्टा. 3/1/33, इति स्यप्रत्यये कुत्वे षत्वे 'आनेमुक्'–अष्टा. 7/2/82, इति मुगागमे णत्वे टापि रूपम् ।
2. 'टिड्ढाणञ् द्वयसज् दघ्नञ् मात्रच्तयप् ठक्ठञ् कञ् क्वरपः'–अष्टा. 4/1/15, इति विहितस्य, 'उगितश्च'–अष्टा. 4/1/6, इति विहितस्य च ङीपोऽभाव इत्यर्थः ।
3. 'लृटः सद्वा'–अष्टा. 3/3/14.
4. 'स्थानिवदादेशोऽनल्विधौ'–अष्टा. 1/1/56.
5. अष्टा. 4/1/15.
6. अष्टा. 4/1/6
7. अष्टा. 1/1/56
8. अष्टा. 6/4/66.
9. अष्टा. 6/4/69.
10. 'धेट् पाने' धा. पा. भ्वा. 902, इतिधेधातोः प्रपूर्वकात् 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21, इति क्त्वा प्रत्यये 'आदेच उपदेशेऽशिति'–अष्टा. 6/1/45 प्रशब्देन समासे 'समासेऽनञ् पूर्वे क्त्वो ल्यप्'–अष्टा.. 7/3/37, इति ल्यबादेशे 'प्रधाय' इत्यवस्थायां ल्यपि क्त्वः कित्त्वं स्थानिवद्भावप्राप्तमादाय' घुमास्थागापाजहातिसां हलि'–अष्टा. 6/4/66, इति प्राप्तस्य ईत्त्वस्य 'न ल्यपि'–अष्टा. 6/4/69, इति निषेधे रूपम् ।
11. 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21
12. 'समासेऽनञ् पूर्वे क्त्वो ल्यप्'–अष्टा. 7/3/37
13. तथादि–"केचित्तु यासुटो ङिद्वचनं सामान्येनैव ज्ञापकमाहुः–'लादेशेषु स्थानिवद् भावेनानुबन्धकार्यं न भवती'ति । तेन करिष्यमाण इत्यत्र स्त्रीविवक्षायां करिष्यमाणेत्यत्र लृट उगित्वमाश्रित्य ङीप् न भवति । कारयमाण इत्यत्र नुम् न भवति"–इति-ज्ञा. समु. द्वादशे धातु संबन्धपादे–पृ. 76 ।
14. तथाहि–"परे तु–यासुटो ङित्त्वं न ज्ञापकं, 'पिदर्थं ङित्त्व' मिति भाष्यात्, 'सार्वधातुक'-मिति सूत्रेऽपिदित्यावर्त्य प्रसज्य सिद्धेन 'ङिच्च पिन्न, पिच्च ङिन्ने'त्यनेन 'हलः श्न' इति सूत्र-भाष्योक्तेन पित्सु ङित्वाप्रसक्तेः" इति ल. श. शे. स्त्री प्रत्यय प्र. पृ. 554 ।
15. 'स्थानिवदादेशोऽनल् विधौ'–अष्टा. 1/1/56

नहि लिङादेशत्वेऽपि तिपू-सिप्-मिपो ङित्त्वं स्थानिवत्त्वेन लभ्यम् । यतो –हलः श्नः[1] शानज्झा,' -विति सूत्रे भाष्ये 'ङिच्च पिन्न पिच्च ङिन्ने'त्युक्तम्[2] । 'वक्ष्यमाणे'त्यत्र तु ङीबेव युक्तः, टाप्त्वसाधुरेव, सत्यभिधाने अजादौ तत्पाठं स्वीकृत्य तत्र अजादित्वाट्टापः[3] साधुत्वं वा स्वीकरणीयम् । न च 'क्ङिति चे'[4]– ति सूत्रस्थ-भाष्य[5]– विरोधः शङ्क्यः, यतस्तत्सूत्रस्थं भाष्यं वार्तिकमतोपपादकम् । नहि वार्तिककृत् 'ङिच्च-पिन्ने'- ति मनुते ।[6]

इत्थमत्र वार्तिककार–काशिकाकार–न्यासकार–ज्ञापकसमुच्चयकार–पदमञ्जरीकार-लघुशब्देन्दुशेखरकाराणां, वररुचि-जयादित्य-जिनेन्द्रबुद्धि-पुरुषोत्तमदेव-हरदत्त-मिश्र-भट्टनागेशानां मतेषु कस्य मतं युक्तमिति यदि जिज्ञास्यते तर्हि भट्टनागेश-मत-मेवात्र युक्तमित्यवेहि । यतोऽस्य मतं भाष्यकृत्सम्मतम् । भाष्यकारेण हि–'सार्व-[7]धातुकमपि'- दिति सूत्रेऽपिदिति योगं विभज्य ङिदिति चानुवर्त्य आवृत्तिं चाश्रित्य 'ङिच्च पिन्न, पिच्च ङिन्न-भवती'तिं वाक्यार्थद्वयं[8] निरूपितम् । अतो भाष्यसिद्धान्ते यासुटो ङित्त्वातिदेशो न ज्ञापकः, किन्तु [9]मृज्यादित्यादावप्राप्तङित्त्वस्य लाभाय चरितार्थ इति स्फुटं विज्ञायते । तस्मान्नासौ ङित्त्वातिदेशो ज्ञापक इति निश्चीयते ।

---

1. अष्टा. 3/1/83.
2. व्या. म. भा. 3/1/4/83.
3. 'अजाद्यतष्टाप्'–अष्टा. 4/1/4
4. अष्टा. 1/1/5
5. "यदयं यासुटो ङिद् वचनं शास्ति तज्ज्ञापयत्याचार्यो– ङितो यत्कार्यं तद् यथा स्यान् ङिति यत्कार्यं तन्माभूदिति"–1/1/4/1
6. तथाहि–
"यत्तु -क्ङिति चे'ति सूत्रस्थभाष्ये यासुटोङिद्वचनस्य 'न ङिदादेशानां ङित्त्व'मित्यर्थे ज्ञापकतोक्ता, तत्तु वार्तिकमतम्, 'ङिच्च पिन्ने'त्यादेस्तेनानुक्तेः"–इत्याह भ. ना. ल. श. शे. स्त्रीप्रत्यय प्र. पृ. 555.
7. अष्टा. 1/2/4.
8. अयमाशयः–'सार्वधातुकमपि'- दित्यत्र–अपि'दिति योगो विभज्यते । स चाऽऽवर्तते, प्रसज्य-प्रतिषेधश्चायं-पिन्न भवतीति तदर्थः, किं न भवतीत्याकाङ्क्षायां-ङिन्न भवतीत्यस्य सम्बन्धः, एवञ्च 'पिच्च ङिन्ने' तिलब्धम् । अपरस्य च ङित् पिन्न भवतीत्यर्थः । एवञ्च ङित्त्व-पित्त्वयोरेकाधिकरणावृत्तित्वं बोध्यते, यदा ङित्त्वं परमनवकाशं च तदा ङिदेव यदा च पित्त्वे परमनवकाशं च तदा पिदेवेति । 'ङिच्च पिन्ने'-त्यंशस्य फलं-'युया'दित्यत्र परेण यासुटो ङित्त्वेन पित्त्वस्यातिदेशिकस्य बाधाद् युयादित्यादौ 'उतोवृद्धि'रिति वृद्ध्यभावः । 'पिच्च ङिन्ने'त्यपरांशस्य फलन्तु 'अकरोदित्यादौ तिपि लङ्वृत्तिङित्त्वस्यानतिदेशाद्गुणनिषेधाभावः । लङ्विधायकशास्त्रापेक्षया तिबादिविधायकशास्त्रं हि परमिति ।
9. 'मृजू शुद्धौ' धा. पा. अदा. 1066, इति मृज् धातोर्लिङि तिपि यासुडागमे तस्य ङित्त्वात् क्ङिति च–अष्टा. 1/1/5. इति निषेधेन 'मृजेर्वृद्धिः'–अष्टा. 7/2/114, इति वृद्ध्यभावे रूपम् ।

## (ख) ज्ञापका अनुबन्धाः

यद्यप्यनुबन्धशब्दोऽनुबन्धनमित्यनुबन्धः[1], अनुबध्यत[2] इत्यनुबन्धः, अनुबध्नात्यनेनेत्यनुबन्धः,[3] इत्येवं भाव-कर्म-करणादिव्युत्पत्तिषु तां तां व्युत्पत्तिमादाय 'अनुबन्धं[4] बुद्ध्वास्य दण्डो विधीयता'मित्यत्र दोषोत्पत्तौ, 'बालकानुबन्धेन[5] यात्राभङ्गो माभू'– दित्यत्र मुख्यानुयायि-शिशौ, 'भोक्तुमनुबन्धः[6] कृतः' इत्यत्र प्रकृतस्यानुवर्तने, 'सानुबन्धाः[7] कथं न स्युः सम्पदो मे निरापदः, 'वाष्पं कुरु स्थिरतया विरतानुबन्ध'[8]- मित्यत्र सन्तत-सम्बन्धे (अविच्छेदे शृङ्खलायां वा), 'अनुबन्धक्षयं[9] हिंसामनपेक्ष्य च पौरुष'- मित्यत्र पश्चाद्भाविनि शुभाशुभे, 'यदग्रे चानुबन्धे[10] च सुखं मोहनमात्मनः' इत्यत्र पश्चात् सम्बन्धे, 'अनुबन्धो[11] नाम विषय-प्रयोजनाधिकारिसम्बन्धः, अस्य वेदान्त-प्रकरणत्वात्तदीयैरनुबन्धैस्तद्वत्तासिद्धे'-रित्यादौ विषय-प्रयोजनाधिकारिसम्बन्धरूपानुबन्धचतुष्टये, 'अनुबन्धं[12] परिज्ञाय देशकालौ च तत्त्वतः । सारापराधौ चालोक्य दण्डं दण्ड्येषु पातये' - दित्यत्र फल-साधने च प्रयुक्तो दरीदृश्यते, तथाप्यत्र पाणिनीयव्याकरणे सूत्र[13]–धातू[14]पसर्ग[15]–निपात[16]–प्रातिपदिक[17]–[18]प्रत्ययागमा–[19] देशेषु[20] तत्तदुपदेश-काले श्रूयमाणेष्वपि

---

1. भावे घञ् ।
2. कर्मणि घञ् ।
3. करणे घञ् ।
4. शब्द क. पृ. 50 ।
5. शब्द क. पृ. 50 ।
6. शब्द क. पृ. 50 ।
7. रघु. 1/64 ।
8. अ. सा. 4/14 ।
9. भ. गी. 18/25 ।
10. भ. गी. 18/39.
11. वे. सा. पृ. ।
12. म. स्मृ. 8/67
13. 'अइउण्'–इत्यादि ।
14. 'एध वृद्धौ' धा. पा. भ्वा. 2 इत्यादौ ।
15. 'आङ्'–इत्यत्र ।
16. 'माङ्'–इत्यादौ ।
17. 'देवेट्'–इत्यादौ ।
18. 'सन्'–इत्यादौ ।
19. 'इट्'–इत्यादौ ।
20. 'अनङ्' 'इश्'–इत्यादौ ।

[1]परिनिष्ठितप्रयोग-कालेऽश्रूयमाणतया नश्वरेष्वित्संज्ञकेषु तत्तद्वर्णेषु[2] तत्तद्-वर्णसमूहेषु[3] चानुबन्धशब्दः 'अनुबध्यते[4] स्वपरस्मिन् सम्बध्यते' इति व्युत्पत्त्या, अनु=पश्चाद् बध्यते[5] = सम्बध्यते' इति व्युत्पत्त्या वा योगरूढः[6] । यतः 'अइउण्[7]' इत्यादि चतुर्दशसूत्रेषु णकारादयोऽनुबन्धाः सनकसनन्दनपाणिन्यादीनामिष्टसिद्ध्यर्थं पश्चादनुबद्धा[8] भगवता महेश्वरेण, 'बुभूषति'[9] इत्याद्यखण्डेषु पदेषु[10] प्रकृति-प्रत्यय-विभाग कल्पनायां[11] सत्यां सकारे नकार [12]आद्युदात्तत्वस्वर- सिद्ध्यर्थं पश्चादनुबद्धो दाक्षीपुत्रेण । यद्यपि भगवान् पाणिनिः स्वकीयाष्टके कण्ठ- रवेण इच्छब्दं प्रयुञ्जानः क्वापि अनुबन्धशब्दं न प्रायुङ्क्त, तथापि व्याकरणमहाभाष्ये बहुशो भगवता पतञ्जलिना प्रयुक्तोऽनुबन्धशब्दः । 'त्रिमुनि व्याक्ररण' मिति प्रसिद्धेः पतञ्जलिप्रयुक्तस्याप्यनुबन्धशब्दस्य पाणिनीयत्वे नास्ति काचन विप्रतिपत्तिः । व्याक-रणमहाभाष्ये हि–"अनुबन्धकरणार्थश्च वर्णानामुपदेशः, अनुबन्धानासङ्क्ष्यामीति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम्"[13] इति, "अनुबन्धसङ्करस्तु प्राप्नोति 'कर्मण्यण्'[14] 'आतोऽनुपसर्गे कः'[15] इति केऽपि णित्कृतं प्राप्नोती"[16] ति, "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ग्रहणं[17] ने"– ति चोक्तम् । अतोऽत्र व्याकरणे

---

1. "परिनिष्ठितत्वं च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्" परमलघु म. नामार्थ प्र. पृ. 195
2. णकारादिषु इत्यर्थः ।
3. 'ञि' 'टु' 'डु'–इत्यादावित्यर्थः ।
4. कर्मणिलट् ।
5. कर्मणिलट् ।
6. शास्त्रकल्पितावयवार्थान्वित- विशेष्यभूतार्थनिरूपितशक्त्या बोधकः पङ्कजपदवत् ।
7. मा. सू. 1
8. 'अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
   धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये" ।। –न. का. ।
9. भूधातोः सनि लटि प्रथमपुरुषैकवचने रूपम् ।
10. 'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
    वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन" ।। –भू.का. 68
11. लघूपायेन पदज्ञानाय पदेषु प्रकृति-प्रत्ययाः कल्प्यन्ते शाब्दिकैः तथाचाऽऽह भगवान् भर्तृहरिः–
    "उपायाः शिक्षमाणानां बालानामुपलालनाः ।
    असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" ।।
    वाक्य प. 2/238
12. 'ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197.
13. व्या. म. भा. 1/1/1 -पृ. 74
14. अष्टा. 3/2/1.
15. अष्टा. 3/2/3.
16. व्या. म. भा. 1/1/2 'अइउण्'–मा. सू. 1, पृ. 86
17. व्या. म. भा. 1/1/2 'हयवरट्'–मा. सू. 5, पृ. 144

इत्संज्ञक एवानुबन्ध इति प्रोच्यते । अतएव परिभाषेन्दुशेखरे–"इत्संज्ञका अनुबन्धाः"[1] इति, न्यायकोशे–"प्रकृतिप्रत्ययागमादेशानां विकरणागमगुणवृद्ध्यादिकार्यविवशेषार्थमनुबन्धनीयः परिनिष्पन्नपदकालेषु-अश्रूयमाणतया नश्वर इत्संज्ञकतयाकृतलोपो वर्ण इतिशाब्दिकाः"[2]–इत्युक्तम् । इत्थमित्संज्ञकोऽनुबन्ध इति राद्धान्तश्चात्र चिराच्चकास्ति । इत्संज्ञकपदेन च ते वर्णा इह गृह्यन्ते येषाम् 'आदिर्ञिटुडवः'[3] 'इर इत्संज्ञा वाच्या'[4] 'उपदेशेऽजनुनासिक इत्'[5] 'चुटू'[6] 'लशक्वतद्धिते'[7] 'षः प्रत्ययस्य'[8]–'हलन्त्यम्'[9] –इत्यन्यतमेनानुशासनेनेत्संज्ञा भवति । अमी चानुबन्धा यत्र विकरणा[10] - [11]गमवृद्धी-[12]-शाद्यादेशसम्पादनाय[13] गुण[14]-वृद्धि[15]-प्रतिषेधाय[16] विशेषणार्थं[17] स्वरार्थं[18] वा नाऽऽत्मनः सार्थकतामावहन्ति तत्र तेऽनुपपन्नाः सन्तो भवन्ति ज्ञापकाः । अतस्ते 'ज्ञापका अनुबन्धा' इत्युच्यन्ते । ते चात्र यथाक्रमं निरूप्यन्ते । तत्र–

---

1. प. शे. प. 4, पृ. 20
2. अनुबन्धशब्दे ।
3. अष्टा. 1/3/5
4. वा. वै. सि. कौ. भ्वा. प्र. पृ. 55
5. अष्टा. 1/3/2
6. अष्टा. 1/3/7
7. अष्टा. 1/3/8
8. अष्टा. 1/3/6
9. अष्टा. 1/3/3
10. 'शप्'–'तिङ् शित् सार्वधातुकम्' अष्टा. 3/4/113, 'कर्तरि शप्'–अष्टा. 3/4/68
11. 'तुक्' 'ह्रस्वस्य पितिकृतितुक्'–अष्टा. 6/1/71
12. (क) 'अचोञ्णिति'–अष्टा. 7/2/115
    (ख) 'अत उपधायाः'–अष्टा. 7/2/116
    (ग) 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117
    (घ) 'किति च'–अष्टा. 7/2/118
13. 'इदम इश्'–अष्टा. 5/3/3 'अनेकाल् शित् सर्वस्य' –अष्टा. 1/1/55
14. 'सार्वधातुकार्धधातुकयोः'–अष्टा. 7/3/84
15. 'मृजेर्वृद्धिः'–अष्टा. 7/2/114
16. 'क्ङिति च'–अष्टा. 1/1/5
17. 'सोरुकारानुबन्धः' 'अर्वणस्त्रसावनञः'–अष्टा 6/4/127
18. 'ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197

## इकारः

'चिति[1]स्मृत्या'मित्यत्र चितेरिकारानुबन्धः 'सर्वे चुरादयो विकल्पेन णिचं लभन्ते' इति, 'चितिधातुर्विकल्पेन णिचं लभते' इति वा वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याभावे इकारानुबन्धोऽत्र व्यर्थः । तथाहि - प्रक्रियालाघवायात्र 'चिन्त स्मृत्या-' मिति पाठेनैव चिन्तेर्णिचि[3] लटि[4] तिपि[5] शपि[6] गुणे[7]ऽयादेशे[8] चिन्तयतीत्यादि-प्रयोगाणां सिद्धिः सुलभेति [9]नुंमर्थमत्रेकारानुबन्धो व्यर्थः ।

नच [10]नलोपनिवृत्त्यर्थमिकारानुबन्धोऽत्र चरितार्थ इति शङ्क्यम् । यतः 'चिन्तयति'[11] [12]'चिन्तयाञ्चकार'–इत्यादौ णिचः क्ङित्वाभावान्नलोपस्य प्राप्तिरेव नास्तीत्यत्र इकाराननुबन्धनेऽपि नलोपनिवृत्तिः सुलभा । नच णिजभावपक्षे चितेरा-शीर्लिङि[13] तिपि[14] यासुटि[15] 'किदाशिषीति'[16] यासुटः कित्त्वे 'चिन्त्या'दित्यत्र,

---

1. धा. पा. चुरा. 1536
2. (क) "चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्यात्' 'चिन्त्यते'-इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । 'अत एकहलि'त्यत्र वृत्तिकृता 'जगाण' 'जगणतु'-रित्युदाहृतत्वात् । विशेषापेक्षमित्यपरे । अतएव 'आधृषाद्वे'त्यस्य न वैयर्थ्य'मित्याह भ.दी.वै.सि.कौ.चुरा. प्र. पृ. 221 – 222.
   (ख) "चिति स्मृत्याम् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यात्' 'चिन्त्यते' - इत्यादौ नलोपो न । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । विशेषापेक्षमित्यपरे' - इत्याह एन्.एस.. रामा., ज्ञ .परि. 2, पृ. 222.
3. 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' - अष्टा. 3/1/25.
4. 'वर्तमाने लट्' - अष्टा. 3/2/123.
5. 'तिप्-तस्-झि. - अष्टा. 3/4/78.
6. 'कर्त्तरि शप्' - अष्टा. 3/1/68.
7. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84.
8. 'एचो ऽयवायावः' - अष्टा. 6/1/78.
9. 'इदितो नुम् धातोः ' - अष्टा. 7/1/58.
10. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24.
11. चिन्तेर्णिचि लटि तिपि शपि गुणेऽयादेशे रूपम् ।
12. चिन्तेर्णिचि लिटि आमि लिट्परककृञोऽनुप्रयोगे लिट-स्तिपि णलि द्वित्वादिषु कृतेषु रूप-मिदम् ।
13. 'आशिषि लिङ्लोटौ' - अष्टा. 3/3/173
14. 'तिप्तस् झि.' - अष्टा. 3/4/78
15. 'यासुट्परस्मैपदेषूदात्त' - अष्टा. 3/4/102.
16. अष्टा. 3/4/104

चितेः कर्मणिलटि[1] ते[2] [3]यकि 'चिन्त्यते' - इत्यत्र क्ङितोः सत्त्वान्नलोपनिवृत्त्यर्थमिकारानुबन्धश्चरितार्थ इति शङ्क्यम् । यतश्चुरादिणिचो नित्यत्वेन प्रयोगावेवेमौ गगनकुसुमायितौ । ज्ञापिते चास्मिन् वचने णिजभाव-पक्षे चिन्त्यात्-'चिन्त्यते'-इत्यनयोः प्रयोगयोः सम्भवात्तत्र क्ङितोः परयोः प्राप्तस्य नलोपस्य[4] निवृत्तये इकारानुबन्धोऽत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'चिन्तति'[5] 'चिन्तेत्'[6] इत्यादिप्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि चुरादिणिचो नित्यतया नैतेषां साधुत्वं सिद्धयेत् ।

अत्र जिज्ञास्यते चितेरिकारानुबन्धः किं विशेषापेक्षो ज्ञापकः, सामान्यापेक्षो वा? तत्राद्यपक्षाभ्युपगमे "यत्र नलोपप्रसक्तिस्तत्रैव चितेर्णिज्विकल्पः स्यात् । यथा - 'चिन्त्यात्'[7] चिन्त्यते'[8] इति । तथा सति 'चिन्तति' चिन्तेत्' - इत्यादीनां साधुत्वं न सिद्ध्येत् । यतोऽत्र[9]शपा व्यवधानेन नलोपस्य[10] प्राप्तिरेव नास्तीति नात्र णिज्विकल्पः स्यात् । यदि द्वितीयः पक्षस्तदा जिज्ञास्यते चितित्वसामान्यापेक्षो ज्ञापकः, उत चुरादित्वसामान्यापेक्षः ? यद्यत्राप्याद्यः पक्षोऽभ्युपेयते तदा 'अत एक-[11]हल्मध्येऽनादेशादेर्लिटी'ति सूत्रे वृत्तिकृतः 'जगाण'[12] 'जगणतु'[13]रित्युदाहरणदानमसंगतं भवेत् । न हि चितित्वसामान्यापेक्षज्ञापकत्वे गणधातो[14] र्णिज्विकल्पः सम्भवति । यतो गणधातौ चितित्वं खपुष्पायितम् । यदि च द्वितीयः पक्षः स्वीक्रियते तदा 'आधृषाद्वे'[15]त्यस्य वैयर्थ्याऽऽपत्तिः । ज्ञापनेनैव आधृषादपि णिज्विकल्पो हि सुलभः ? अत्रोच्यते 'चितिधातुर्वा णिचं लभते' इति विशेषापेक्षोऽयं ज्ञापंक इति ।

---

1. (1) 'लः कर्मणि च भावे चाकर्मकेभ्यः' - अष्टा. 2/4/69 (2) वर्तमानेलट्,' - अष्टा. 3/2/123. 'भावकर्मणोः ' - अष्टा. 1/3/3 'तिप् तस् झि.' अष्टा. 3/4/78.
2. 'सार्वधातुके यक्' – अष्टा. 3/1/67.
3. 'अनिदितां हल उपधायाः क्ङिति'- अष्टा. 6/4/24.
4. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24
5. 'चितेर्णिजभावपक्षे लिटि तिपि शपि रूपम् ।
6. 'चिते र्विधिलिङि तिपि णिजभावपक्षे रूपम् ।
7. चितेराशिषि लिङि तिपि रूपम् ।
8. चितेः कर्मणि लटि ते यकि रूपम् ।
9. 'कर्त्तरिशप्' - अष्टा. 3/1/68 ।
10. 'अनिदिताम्.' - अष्टा. 6/4/24 ।
11. अष्टा. 6/4/120 ।
12. 'गण संख्याने' धा. पा. चुरा. 1854, इति गणधातोश्चुरादिणिजभाव पक्षे लिटि तिपि णलि द्वित्वादिषु कृतेषु रूपम् ।
13. 'गण संख्याने' धा. पा. चुरा. 1854, इतिगणधातोश्चुरादिणिजभावपक्षे लिटि तसि अतुसि द्वित्वादिषु कृतेषु रूपम् !
14. 'गणसंख्याने' धा. पा. चुरा. 1854, इति
15. ग. सू. वै. सि. कौ. चुरा. प्र., पृ. 231.

नचास्य विशेषापेक्षज्ञापकत्वे 'आधृषाद्वे'[1]त्यस्य सार्थक्येऽपि 'जगाण'[2] 'जगणतु'[3]रिति वृत्तिकृतः प्रयोगयोः साधुत्वानुपपत्तिः शङ्क्या । यतो भ्वादेराकृतिगणतया तत्र गणधातुं पठित्वा वृत्ति-प्रयोगयोरनयोः साधुत्वोपपत्तिः सुलभा ।

यद्यपि चुरादित्वसामान्यापेक्ष-ज्ञापकत्वपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकतया[4] 'आधृषाद्वे'त्यस्य सार्थक्यं सुलभं, तथाप्यत्र पक्षे "आधृषीयाणां णिज्विकल्प ऐच्छिकः, अन्येषां[5] तु णिज्विकल्पः शिष्टप्रयोगाद् व्यवस्थित", इति कल्पनाजन्यः क्लेशोऽपरिहार्य इति चितित्वविशेषापेक्षोऽयं ज्ञापको न तु क्ङिति परकत्वविशिष्ट - चितित्वविशेषापेक्ष इति निश्चीयते ।

## उकारः

[6]'इदमस्थमु'रिति सूत्रे थमोरुकारानुबन्धः 'तद्धित-[7]विभक्तिस्थ-तुस्मानामित्संज्ञा-निषेधो ने'ति[8] वचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याभावेऽत्र थमोरुकारानुबन्धो व्यर्थः ।

तथाहि–सूत्रेऽस्मिन् थमोरुकारानुबन्धोऽन्त्यत्वाभावसम्पादनद्वारा मकारस्य [10]'हलन्त्य' मितीत्संज्ञावारणायानुबद्धोऽस्य वचनस्याभावे व्यर्थः । यतोऽत्र 'थम्' इति मान्तेपि प्रत्यये विहिते तस्य–'प्रागृदिशो[11] विभक्ति'रिति विभक्तिसंज्ञकत्वात्, 'न विभक्तौ तुस्माः'[12] इति सूत्रेणेत्संज्ञाप्रतिषेधात् 'मकारस्ये'त्संज्ञापरित्राणमुकारानुबन्धाननुबन्धनेऽपि सुलभम् । ज्ञापिते चास्मिन् वचनेऽत्र 'न विभक्तौ तुस्माः'[13]

---

1. ग. सू. वै. सि. कौ., चुरा. प्र. पृ. 231.
2. अस्य सिद्धिः पूर्वमेव निर्दिष्टा ।
3. अस्य सिद्धिः पूर्वमेव निर्दिष्टा ।
4. 'ज्ञापकसिद्धं न सर्वत्रे'ति परिभाषयेत्यर्थः ।
5. चिति-प्रभृतीनामित्यर्थः ।
6. अष्टा. 5/3/14.
7. 'प्रागृदिशो विभक्तिः'–अष्टा. 5/3/1.
8. 'न विभक्तौ तुस्माः'–अष्टा. 1/3/4.
9. तथाहि–
(क) आचार्य प्रवृत्तिर्ज्ञापयति–'न विभक्तौ तद्धिते प्रतिषेधो भवतीति, यदयमिदमस्थमुरिति मकारस्येत्संज्ञापरित्राणार्थमुकारमनुबन्धं करोती"त्याह पत. व्या. म. भा. 1/3/1/4.
(ख) "न विभक्तौ (सू. 1/3/4) अतद्धित इति वक्तव्यमिति थमो मकारस्येत्संज्ञापरित्राणार्थेनोकारेणानुबन्धेन विभक्तौ तद्धिते प्रतिषेधाभावज्ञापनात् प्रत्याख्यात"मित्याह श्री ना. ज्ञा. सं. पृ. 43.
10. अष्टा. 1/3/3.
11. अष्टा. 5/3/1.
12. अष्टा. 1/3/4.
13. अष्टा. 1/3/4.

इत्यस्याप्रवृत्त्या थमो मकारस्य [1]'हलन्त्य' मितीत्संज्ञाया आपत्तिर्दुर्वारा स्यादिति थमो-रुकारानुबन्धो मकारस्येत्संज्ञापरित्राणार्थं स्वांशे चरितार्थो भवति ।

न चास्य वचनस्य ज्ञापने 'इदानी'मित्यत्र 'दानीम्[2] चे' ति सूत्रेण इदमो विहितो यो 'दानीम्' प्रत्ययस्तदन्त्यस्य मकारस्येत्संज्ञाया[3] आपत्तिः शङ्क्या । यतोऽत्रानेन[4] 'दानीम्य्' इतियकारान्त एव प्रत्ययो विधीयते, यकारस्यास्य 'लोपो [5]व्योर्वली'ति लुप्तत्वात् सूत्रे श्रवणं नास्ति, तथा सति दानीमो मकारस्य उपदेशेऽन्त्य-त्वाभावान्नेत्संज्ञा[6] प्राप्नोतीति नेत्संज्ञाया आपत्तिः । तदुक्तं भगवता–"एवं तर्हि यकारान्तो दानीं करिष्यते । किं यकारो न श्रूयते ? । लुप्तनिर्दिष्टो यकारः"[7] इति । ज्ञापितस्यास्य वचनस्य फलं तु 'विभक्तौ [8]तवर्ग प्रतिषेधोऽतद्धिते' इति वार्तिक-स्यानारम्भजन्यं लाघवम् । तथाहि क्वेत्यत्र[9] किम्शब्दात् 'किमोऽत्'[10] इति अत्प्रत्यये तकारस्य 'हलन्त्यमिती'त्संज्ञा[11]न प्राप्नोति यतः अत्प्रत्ययस्य तद्धितस्य 'प्राग्दिशो[12] विभक्ति'रिति विभक्तिसंज्ञकतया तत्स्थस्य तकारस्य 'न विभक्तौ[13] तुस्माः' इतीत्संज्ञाप्रतिषेधाऽऽपत्तिर्दुर्वारेति वार्तिकमिदमारब्धम् । ज्ञापिते चास्मिन् वचनेऽनेनैव [14]'अत'स्तकारस्येत्संज्ञानिषेधो न प्राप्नोतीति 'विभक्ता'[15]वित्येतद् वार्तिकस्याभावेऽपि[16] 'हलन्त्य'मिति तकारस्येत्संज्ञया तस्य लोपे किमः क्वातीति[17] क्वादेशे 'क्वे'ति सिद्धमिष्टं रूपमतो वार्तिकमिदं नाऽऽरम्भणीयं भवति ।

---

1. अष्टा. 1/3/3
2. अष्टा. 5/3/10.
3. 'हलन्त्यम्'–अष्टा 1/3/3.
4. दानीञ्च'–अष्टा. 5/3/10.
5. अष्टा. 6/1/66.
6. 'हलन्त्यम्'–अष्टा. 1/3/3.
7. व्या. म. भा. 1/3/1/4.
8. वा. व्या. म. भा. 1/3/14, पृ. 186.
9. कस्मिन्नित्यर्थके' इत्यर्थः' ।
10. अष्टा. 5/3/12.
11. अष्टा. 1/3/3.
12. अष्टा. 5/3/1.
13. अष्टा. 1/3/4.
14. किमोऽत्'–अष्टा. 5/3/12-इति विहितस्येत्यर्थः ।
15. विभक्तौ तवर्गप्रतिषेधोऽतद्धिते'–वा. व्या. म. भा. 1/3/1/4
16. अष्टा. 1/3/3.
17. अष्टा. 7/2/105.

जयादित्य[1]–जिनेन्द्रबुद्धि[2]–हरदत्तमिश्र[3]–ज्ञानेन्द्रभिक्षवस्तु[4] [5]'इदमस्थमु' रिति सूत्रे थमोरुकारानुबन्धः 'न विभक्तौ[6] तुस्मा' इति 'निषेध-विधिरनित्य' इति वचनस्य ज्ञापक इति मन्वते । पूर्वोक्त-वचनसाध्यफलस्यैतद्वचनेनापि सिद्धिः सुलभेति मतमिदममीषामपि युक्तं मन्ये ।

### उकाराः

'स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भ्यः श्नुश्चे'ति[7] सूत्रे स्तम्भु स्तुम्भु स्कम्भु स्कुम्भूनामुकारा' एषां धातूनां सर्वप्रत्ययविधिविषयते'ति वचनस्य ज्ञापकाः[8], यतोऽस्य वचनस्याभावे सौत्रेभ्य उपदेशेनोपधेभ्यः स्तम्भु प्रभृतिभ्यश्चतुर्भ्योधातुभ्यः श्नु-श्नाविकरण[9]-साधकास्तिबादिप्रत्यया[10] एव भवेयुरेतत्सूत्रारम्भसामर्थ्याद् नान्ये क्त्वादयः ।[11]

---

1. अनेन हि 'किमोऽत्' 'इटोऽत्'–इत्यत्र प्रतिषेधो न भवति अनित्यत्वादस्य प्रतिषेधस्य । 'इदमस्थमुः इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते" इत्युक्तम्–का. 1/3/4
2. अनेन हि–"अनित्यत्वमस्य विधेः 'इदमस्थमुः' इत्यस्य मकारस्येत्संज्ञापरित्राणार्थादुकारानुबन्धाद् विज्ञायते । नित्यत्वे हि सत्येतस्मादेव प्रतिषेधान् मकारस्येत्संज्ञा न भविष्यतीत्युकारानुबन्ध-ग्रहणमनर्थकं स्या"दित्युक्तम्–न्या. 1/3/4.
3. अनेन हि–"अनित्यत्वं तु 'इदमस्थमुः' इति थमोरुकारानुबन्धाद् विज्ञायते" इत्युक्तम्–पदम. 1/3/4.
4. अनेन हि–'इदमस्थमु'रित्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति ज्ञाप्यते । अन्यथा 'प्रागुदिशो विभक्ति'रिति थमो विभक्तित्वाद्दानीमो मकारस्येवानेनैव सूत्रेणेत्त्वनिषेध-सिद्धेः किं तेनेति । तेन 'किमोऽत्' क्वेति सिद्धमित्युक्तम्–त. बो. अजन्त पुंलिङ्ग प्र. पृ. 96.
5. अष्टा. 1/3/4.
6. अष्टा. 1/3/4.
7. अष्टा. 3/1/82.
8. तथाहि–
   (क) "उदित्त्वप्रतिज्ञानात् सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद् विकरणविषयत्वमेवे"त्याह जया. का. 3/1/82.
   (ख) "एषां ह्युकार इत्संज्ञकः प्रतिज्ञायते, तस्य क्त्वाप्रत्यये इड्विकल्पः फलम् । यदि तु एतद्विकरणविषयाः स्युः, उदित्करणमनर्थकं स्यात् । तस्मादुदित्करणप्रतिज्ञानात सर्वार्थविषयत्वमेषामवसीयते । अर्थशब्दोऽयं विषयवाची । सर्वविषयत्वमित्यर्थ" इत्याह जि.-बु॰ न्या. 3/2/82.
   (ग) "एषां ह्युकारोऽनुनासिक इत्संज्ञकः प्रतिज्ञायते, तस्य प्रयोजनम् 'उदितो वा' इति क्त्वा प्रत्यये इड्विकल्पः । यदि चैतद्विकरणविषया एवैते स्युस्तन्नोपपद्यते । तस्मादुदित्त्वेन प्रतिज्ञानात् सर्वार्थत्वं विज्ञायते, सर्वे प्रत्ययाः प्रयोजनमेषामित्यर्थः इत्याह ह. मि. पदम. 3/1/82.
   (घ) "स्तम्भु स्तुम्भु इति (3/1/82) सौत्रधातूनामुदित्त्वप्रतिज्ञानात् ज्ञापकात् सर्व-प्रत्यय-विधि- विषयतेति । तेन प्रस्तब्ध इत्यादेः सिद्धि"रित्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 71.
9. धातुप्रत्यययोर्मध्ये विहिताः शबादयः प्रत्यया विकरण शब्देन व्यवह्रियन्ते ।
10. तिबादीनामादेशत्वेऽपि स्थानिवद्भावेन प्रत्ययत्वं प्रसिद्धचरम् ।
11. 'समानकर्तृकयोः पूर्वकाले:'–अष्टा. 3/4/21 इत्यादि सूत्रैर्विहता इत्यर्थः ।

यतो नामी धातुपाठे पठिता इति "भूवादयो धातवः[1] इति धातुत्वाभाव एषां विद्यते । तथा सति [2]'धातो'रित्यधिकारे विहितानां क्त्वादिप्रत्ययानामेभ्योऽनुत्पत्त्या क्त्वः [3]'उदितो वे'–तीड्विकल्पफलका एषामुकारानुबन्धा व्यर्थाः । ज्ञापिते चास्मिन् वचनेऽनेन सर्वप्रत्ययानामेभ्यः सुलभतया 'स्तभि+त्वा' 'स्तब्ध्वा'–इत्यादौ क्त्वा[4]-प्रत्यये कृते[5]'उदितो वे' तीड्विकल्पं सम्पादयितुमेषां समेषामुकारा अनुनासिकाः[6] स्वांशे चरितार्था भवन्ति । ज्ञापितस्यास्य वचनस्य फलं तु 'प्रस्तब्धः[7] इत्यादीनां सिद्धिः । अस्य वचनस्यासत्त्वे हि सौत्रधातोःस्तम्भोः क्तप्रत्ययस्य गगनकुसुमायिततया नैषां साधुत्वं सिद्ध्येत् ।

## ॠकारः

'ओणृ[8] अपनयने' इति ओणृ-धातोः ऋकारानुबन्धः 'द्विर्वचनाद्ध्रस्वत्वं बलीयः' इति वचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याभावेऽत्र अकारानुबन्धो व्यर्थः ।

---

1. अष्टा. 1/3/1.
2. अष्टा. 3/1/91.
3. अष्टा. 6/2/56.
4. समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21.
5. अष्टा. 7/2/56.
6. 'उपदेशेऽजनुनासिक इत्'–अष्टा. 1/3/2 इतीत्संज्ञका इत्यर्थः ।
7. प्र पूर्वकात् 'स्तुम्भु स्तुम्भु.'–अष्टा. 3/1/82 सौत्रस्तन्भु धातोः 'निष्ठा'–अष्टा. 3/2/102 इति क्तप्रत्यये 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24, इति नलोपे 'झषस्तथोर्धोऽधः'–अष्टा. 8/2/40, इति निष्ठातकारस्य धकारे भकारस्य जश्त्वे स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
8. धा. पा. भ्वा. 424 ।
9. तथाहि–
   (क) "अथेह कथं भवितव्यम्–माभवानटिटदिति, आहोस्विन् माभवानाटिटदिति । मा भवानाटिटदिति (एव) भवितव्यम् । ह्रस्वत्वं कस्मान्न भवति ? द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा । इदमिह संप्रधार्यं द्विर्वचनं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ? । परत्वाद्ध्रस्वत्वम् नित्यं द्विर्वचनम् । कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि । एवं तर्ह्याचार्य- प्रवृत्तिर्ज्ञापयति–'द्विर्वचनाद्ध्रस्वत्वं बलीय इति यदयमोणिमृदितं करोति । कथं कृत्वा ज्ञापकम् ? । ऋदित्करण एतत्प्रयोजनम्–ऋदितां नेति प्रतिषेधो यथा स्यात् । यदि चात्र पूर्वं द्विर्वचनं स्याद् ऋदित्करणमनर्थकं स्यात्, द्विर्वचने कृते परेण रूपेण व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति । पश्यति त्वाचार्यो–'द्विर्वचनाद्ध्रस्वत्वं बलीय' इति तत ओणिमृदितं करोति । तस्मान्माभवानटिटदित्येव भवितव्य"मित्याह पत. व्या. म. भा. 7/4/1/1 ।
   (ख) "ओणेर्ॠदित्करणं ज्ञापकम्–'नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत' इती"त्याह वाम. का. 7/4/1/1
   (ग) "ओणृ अपनयने"–इत्येतस्य ऋदित्करणस्यैतत् प्रयोजनम्-ऋदित्त्वाद् 'नागूलोपी' त्यादिना ह्रस्वप्रतिषेधो यथा स्यादिति । यदि च नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन न बाध्यते, तदोणेर्ॠदित्करणमनर्थकं स्यात् । द्विर्वचने हि कृते परेण णि-शब्दरूपेण व्यवधानादेव ह्रस्वो न भविष्यति, किमोणेर्ॠदित्-करणेनेति ? आचार्य-प्रवृत्तिर्ज्ञापयति–

तथाहि–[1]'औणिण'दित्यत्र [2]'नागूलोपिशास्वृदिता'मित्युपधाह्रस्वप्रतिषेधार्थमनुबद्धोऽत्र ऋकारानुबन्धः । अथ वचनस्याभावे हि 'औणिण'दित्यत्रोपधाह्रस्वात्प्रागेवान्तरङ्गत्वाद्[3] '[4]अजादेर्द्वितीयस्ये'ति 'णी'त्यस्य द्वित्वे 'ओणिणि अत्' इत्यवस्थायामोकारस्य परेण

---

'नित्यमपि द्विर्वचनमुपधा- ह्रस्वत्वेन बाध्यत इति, यत ओणे-र्ऋदित्करणं करोती''त्याह जि. बु. न्या. 7/4/1.

(घ) "ओणृ अपनयने" इत्यस्य ऋदित्करण एतत्प्रयोजनम्–ऋदितो नेति प्रतिषेधो यथा स्यात् । यदि चात्र द्विर्वचनं स्याद्, ऋदित्करणमनर्थकं स्यात् द्विर्वचने कृते पर-रूपेण व्यवहितत्वादेव ह्रस्वत्वं न भविष्यति, पश्यति त्वाचार्यः–द्विर्वचनाद् ह्रस्वत्वं बलीय इति, तत ओणिमृदितं करोती"त्याह ह. मि. पदम. 7/4/1

(ङ) "बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेव, ओणेर्ऋदित्करणाल्लिङ्गात् । मा भवानिदिधत्" इत्याह भ. दी. वै. सि. कौ. ण्यन्त प्र., पृ. 247

(च) "ऋदित्करणाल्लिङ्गादिति । यदि पूर्वं द्विर्वचनं भवेत्तदा णि-शब्दस्य द्वित्वे सत्युपधा ह्रस्व-स्याप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं व्यर्थं स्यादतस्तदुक्तेऽर्थे ज्ञापकमेवे"त्याह ज्ञा. भि. त. बो. ण्यन्त प्र., पृ. 247

(छ) "ऋदित्करणादिति । अन्यथा नित्यत्वाद् द्वित्वे उपधात्वाभावात् प्राप्त्यभावे किं तेन ?"–इत्याह भ. ना. ल. श. शे. ण्यन्त प्र., पृ. 247-248.

(ज) "ओणृ अपनयने' इति धातोः ऋदित्करणम्' 'औणिण'दित्यत्र 'नाग्लोपि' इति उपधा-ह्रस्वप्रतिषेधार्थम् । यदि तु उपधा-ह्रस्वात् प्रागेव अन्तरङ्गत्वाद् द्वित्वं स्यात्तदा 'ओण् इ अत्' इत्यत्र अजादेर्द्वितीयस्ये'ति णीत्यस्य णिचा सह द्वित्वे सति पश्चादीकारस्य चङ् परे णौ उप- धात्वाभावादेव ह्रस्वस्याप्रसक्तत्वाद् ऋदित्करणं व्यर्थं स्यात् । 'द्वित्वात् प्रागेव उपधाह्रस्व' इत्य- भ्युपगमे तु 'ओण् इ अत्' इत्यस्यामवस्थायां प्राप्तस्य ह्रस्वस्य निषेधार्थमृदित्करणमर्थवत् । अतो 'बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेवेति विज्ञायते इत्यर्थः–इत्याह वा. दी. बाल. मनो. ण्यन्त प्र., पृ. 247-248.

(झ) "णौ चङ्यु' (सू. 7/4/1) । ओणेर्ऋदित्करणाज् ज्ञापकाद् द्विर्वचनाद्ध्रस्वत्वं बलीय इतीत्याह श्री ना. ज्ञा. सं. 7, पृ. 124.

(ञ) "हलादेः किम् ? । एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्-प्रबलम्, ओणेऋदित्करणस्य सामान्यापेक्षज्ञापकत्वा"दिति चाऽऽह भ. दी. वै. सि. कौ. सनन्त-प्र., पृ. 261.

(ट) "एषिषति । इह नित्यमपि द्वित्वं गुणेनं बाध्यते । उपधाकार्यं हि द्वित्वात् प्रबलम् । ओणेऋदित्करणस्य सामान्यापेक्षज्ञापकत्वा"दित्याह–एन्. एस. रामा. ज्ञा. सं. परि. 2 पृ. 223

1. 'ओणृ अपनयने' धा. पा. भ्वा. 454, इति ओण्धातोर्णिच् ण्यन्ताल्लुङि तिपि च्लोच्लेश्चङि उपधाह्रस्वे ततो णिशब्दस्य द्वित्वादौ कृते सति रूपमिदं सिद्धयति ।
2. अष्टा. - 7/4/2.
3. 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयेति शेषः ।
4. अष्टा. 6/1/2.

णिशब्देन व्यवधानाच्चङ्परे णौ उपधात्वस्याभावेन [1]ह्रस्वस्य प्राप्तिरेव नास्तीति [2]तत्प्रतिषेधार्थमृकारानुबन्धोऽयं व्यर्थः । ज्ञापिते चास्मिन् वचने [3]द्वित्वात् प्रागेव प्राप्तस्योपधाह्रस्वस्य[4] प्रतिषेधार्थमृकारानुबन्धोऽत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'मा भवानटिट'दित्यादि प्रयोगाणां सिद्धिः । तथाहि– माङ्पूर्वकाद् 'अट्' धातोर्ण्य[5]न्ताल्लुङि[6] तिपि[7] च्लौ[8]च्लेश्चङि[9] 'नमाङ्योगे'[10] इत्याटः प्रतिषेधे 'अट्इ अत्' इत्यवस्थायामुपधावृद्धौ[11] आट् इ अत्' इति स्थिते द्वित्वात्[12] प्रागेव 'णौचङ्युपधाया[13]ह्रस्वः' इति ह्रस्वत्वे 'अटि अत्' इत्यवस्थायाम् [14]'अजादे- र्द्वितीयस्ये'ति टिशब्दस्य द्वित्वे 'अटिटि अत्' इति स्थिते णिलोपे[15] सिद्ध्यति माभवान्नटिट'दिति । अस्य वचनस्याऽसत्त्वे हि अत्र 'आटि अत्' इत्यवस्थायामेव परमप्युपधाह्रस्वं[16] बाधित्वा टिशब्दस्य द्वित्वे[17] 'आटिटि अत्' इति स्थितौ परेण टिशब्देन व्यवधानात् णेः चङ्परकत्वाभावेनोपधाह्रस्वस्य[18] अप्रवृत्तौ [19]णिलोपे 'आटिट'दित्यनिष्टरूपमापद्येत ।

---

1. 'णौ चङ्युपधाया ह्रस्वः'–अष्टा. 7/4/1.
2. 'नाग्लोपि शास्वृदिताम्'–अष्टा. 7/4/2.
3. 'अजादेर्द्वितीयस्य'–अष्टा. 6/1/2.
4. 'णौ चङ्युपधाया ह्रस्वः' अष्टा. 7/4/1.
5. 'हेतुमतिच'–अष्टा. 3/2/26, इति णिजन्तादित्यर्थः ।
6. 'माङि लुङ्'–अष्टा. 3/2/175
7. 'तिप्तस्झि.'–अष्टा. 3/4/78.
8. 'च्लिलुङि'–अष्टा- 3/1/43.
9. 'णि-श्रि-द्रु-स्रुभ्यः कर्तरिचङ्'–अष्टा. 3/1/48.
10. अष्टा.–6/4/74.
11. 'अत उपधायाः'–अष्टा. 7/2/116.
12. 'अजादेर्द्वितीयस्य'–अष्टा. 6/1/2.
13. अष्टा.-7/4/1.
14. अष्टा. 6/1/2.
15. 'णेरनिटि'-अष्टा. 6/4/51.
16. 'णौचङ्युपधाया ह्रस्वः'–अष्टा. 7/4/1.
17. 'अजादेर्द्वितीयस्य'–अष्टा. 6/1/2.
18. 'णौचङ्युपधाया ह्रस्वः'–अष्टा. 7/4/1.
19. 'णेरनिटि'–अष्टा. 6/4/51.

अत्र "ओणे[1] ऋकारानुबन्ध 'उपधाकार्यं द्वित्वात् प्रबल'मिति वचनस्य सामान्यापेक्षो ज्ञापकः । तेन एधिषिषतीतिप्रयोगः सिद्ध्यति । तथाहि इध्[2] धातोः [3]सनि [4]इटि [5]तिपि हलादित्वाभावेन [6]कित्त्वाभावाद् गुणे[7] 'एध इसति' इति स्थिते 'अजादे[8] र्द्वितीस्ये' ति 'धिस्' इत्यस्य द्वित्वे हलादिशेषे सनः सकारस्य षत्वे[9] रूपमिदं सिद्ध्यति । अस्य वचनस्य असत्त्वे हि द्वित्वस्यात्र गुणे कृतेऽकृते च प्राप्त्या नित्यत्वेन[10] गुणं बाधित्वा प्रथमं द्वित्वे कृते धात्ववयवस्य इकारस्योपधात्वा-भावेन[11] गुणस्य[12] प्राप्तिरेव नास्तीति नेदं रूपं सिद्ध्येत् । 'ओणे ॠकारानुबन्धेन सामान्यापेक्षेण ज्ञापकेन ज्ञापिते चास्मिन् वचने द्वित्वापेक्षयोपधाकार्यस्य प्राबल्येन प्रथममुपधागुणे पश्चाद्द्वित्वे रूपमिदं सिद्ध्यती'ति यदुक्तं[13] **भट्टोजिदीक्षितेन**, तदनु-वदता एन्. एस्. **रामानुज ताताचार्येण च, तन्न युक्तम्**, यतो 'णौ[14] चङि' इति सूत्रस्थं 'यदयमोणिमुदितं करोति तज्ज्ञापयति–'द्विर्वचनाद्ध्रस्वत्वं बलीय इति, भाष्यमस्य सामान्यापेक्षज्ञापकत्वे न सङ्गच्छते । नहि तत्र 'उपधाकार्यं' द्वित्वाद् बलीय इत्युक्तम् । ओणे ॠदित्करणस्य सामान्यापेक्षज्ञापकत्वे तु तदेव वदेत् । अपि च स्वीकृतेऽप्यस्य सामान्यापेक्षज्ञापकत्वे 'एषिषिषती'त्यस्य सिद्धिर्न भवति । यतोऽत्र नित्यत्वाद्द्वित्वे[15]ऽभ्यासस्य [16]नैरर्थक्यादिटः[17] प्राप्तिर्न भवति । अस्वीकृतेऽप्यस्य सामान्यापेक्षज्ञापकत्वे रूपस्यास्य सिद्धिरन्यथा चोपपद्यते । तथाहि–

---

1. 'ओणृ अपनयने' धा. पा. भ्वा. 454.
2. 'इध गतौ' धा. पा. दिवा. 1127.
3. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा'–अष्टा. 3/1/7.
4. 'आर्धधातुकस्येड्वलादेः'–अष्टा. 7/2/35.
5. 'तिप्तस् झि.'–अष्टा. 3/4/78.
6. 'हलन्ताच्च'–अष्टा. 1/2/10
7. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86.
8. अष्टा.–6/1/2.
9. 'आदेश प्रत्यययोः'–अष्टा. 8/3/59.
10. 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय' इति परिभाषयेति शेषः ।
11. 'अलोऽन्त्यात्पूर्व उपधा'–अष्टा. 1/1/65.
12. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86.
13. वै. सि. कौ. सन्नन्त प्र.–पृ. 261, –तथा ज्ञा. सं. परि. 2, पृ. 233.
14. अष्टा. 7/4/1.
15. 'अजादेर्द्वितीयस्य'–अष्टा. 6/1/2.
16. 'अर्थवद् ग्रहणे नानर्थकस्येति' परिभाषया ।
17. 'आर्धधातुकस्येड् वलादेः'–अष्टा. 7/2/35.

शब्दान्तरप्राप्त्या[1] द्वित्वस्याप्यनित्यत्वाद् द्वयोरनित्ययोः [2]परत्वादिड् वाच्य[3] इति ततोऽपि पूर्वं परत्वाद्[4] गुणे[5] पश्चादिटि[6] 'अजादेर्द्वितीयस्ये'ति[7] षिस्' इत्यस्य द्वित्वेन रूपस्यास्य सिद्धिः सुलभा ।

## ककारः

[8]'त्रसि-गृधिधृषिक्षिपेः क्नु'रिति सूत्रे क्नोः ककारानुबन्धः [9]'क्ङितिचेतिगुण-प्रतिषेध उपधालक्षणस्यापि' इतिवचनस्य ज्ञापकः[10] । यतोऽस्य वचनस्याभावे क्नोः ककारानुबन्धो व्यर्थः । तथाहि–'गृध्नुः[11] इत्यादौ 'क्ङितिचे'[12] ति गुणनिषेधाय क्नौ ककारानुबन्धोऽस्य वचनस्याभावे व्यर्थः, यतोऽस्य वचनस्याभावेऽत्र धकारेण व्यवधानाद् अकारस्य क्नुपरकत्वं नास्तीति'क्ङितिचे'ति[13] गुणप्रतिषेधो नप्राप्नोति । ज्ञापिते चास्मिन् वचने व्यवहित-विषयस्याप्युपधालक्षणस्य गुणस्य प्रतिषेधः प्राप्नोतीति 'गृध्नु'रित्यादौ गुण-निषेधाय क्नोः ककारानुबन्धः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोर-

---

1. 'शब्दान्तरेण प्राप्नुवन् विधिरनित्यो भवतीति' परिभाषया ।
2. 'विप्रतिषेधे परं कार्यम्'–अष्टा. 1/4/2.
3. 'आर्धधातुकस्येड् वलादेः'–अष्टा. 7/2/35.
4. 'विप्रतिषेधे परं कार्यम्' –अष्टा. 1/4/2.
5. 'पुगन्तलघूपधस्य च', –अष्टा. 7/3/86.
6. 'आर्धधातुकस्येड् वलादेः'–अष्टा. 7/2/35.
7. अष्टा. 6/1/2.
8. अष्टा. 3/2/140.
9. अष्टा. 1/1/5.
10. तथाहि–
    (क) "अथवाचार्य-प्रवृत्तिर्ज्ञापयति–'भवत्युपधा-लक्षणस्य गुणस्य प्रतिषेध' इति, यदयं 'त्रसि-गृधि धृषि क्षिपेः क्नुः' 'इकोझल्' 'हलन्ताच्चे'ति क्नुः सनौ कितौ करोति । कथं कृत्वा ज्ञापकम् ? कित्करण एतत् प्रयोजनम्–गुणः कथं न स्यादिति । यदि चात्र गुणप्रतिषेधो न स्यात्, कित्करणमनर्थकं स्यात् । पश्यत्याचार्यो–'भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध' इति, ततः क्नुसनौ कितौ करोति' इत्याह पत. व्या. म. भा.–1/1/4/5.
    (ख) क्ङितिचेत्यत्र (1/1/5) परसप्तमीपक्षे 'व्यवहितस्याप्युपधालक्षणगुणनिषेध' इत्यत्रार्थे हलन्ताच्चेति (1/2/10) सनः कित्त्वं त्रसि गृधि धृषेति (3/2/140) क्नुप्रत्ययस्य च कित्त्वं ज्ञापकमुक्तं भाष्ये" इत्याह पु. दे. ज्ञा. समु. द्वितीये कुटादि-पादे, पृ. 61.
    (ग) 'क्ङिति च' (सू. 1/1/5) 'त्रसि गृधि धृषि क्षिपेः क्नुः' (सू. 3/2/140) 'इकोझल्' (सू. 1/2/9) इति क्नुसनोः कित्वाज् ज्ञापकाद् उपधालक्षणस्यापि गुणस्य प्रतिषेधोऽयमिति तन्निमित्तग्रहणं न कार्य"मित्याह श्री ना. ज्ञा. सं. 1 पृ. 14
11. 'गृधु अभिकाङ्क्षायाम्' धा. पा. दिवा. 1246. इति गृध् धातोः 'त्रसि गृधि.'–अष्टा. 3/2/140 इति क्नौ गुणनिषेधे रूपम् ।
12. अष्टा. 1/1/5.
13. अष्टा. 1/1/5.

वीत्यर्थमति[1]वार्तिकानारम्भजन्यं लाघवम् । इदं हि वार्तिकं 'भिन्नः'[2] भिन्नवान्[3] इत्यादावुपधालक्षण-गुणस्य[4] 'क्ङिति चे'ति[5] निषेधार्थम् 'रोरवीती- त्यत्र'[6] 'किङ्तिचे'[7] ति गुण-निषेधाभावार्थं चाऽऽरब्धम् । अस्य वार्तिकस्यनारम्भे तु 'भिन्नः' इत्यादौ गुण-निषेधो न प्राप्नोति । नापि च रोरवीत्यत्र गुणप्रतिषेधाभावश्च सिद्ध्यति । [8]क्ङितिचेति सूत्रेहि 'इको गुणवृद्धी'[9] इति सूत्रमनुवर्तते, तत्र यदि क्ङितीत्येतत् इको विशेषणं तदा किति ङिति च परतो योऽव्यवहितपूर्वो भवतीक् तस्य गुणावृद्धी न भवत इति सूत्रा[10]र्थो भवेत् तथासति 'चितं'[11] 'स्तुत'[12]- मित्यादावेव इकः क्ङित्यव्यवहितपूर्वत्वमस्तीति तत्रैव गुण-निषेधः[13] स्यात्, भिन्नः[14] इत्यादौ तु 'भिद्+त' इत्यवस्थायामुपधाया इकारे दकारव्यवधानात् किङ्त्य- वहितपूर्वत्वं नास्तीति गुण-निषेधो[15] न भवेत् एवं [16]रोरवीतीत्यादौ क्ङित्यवहित- पूर्वत्वमुकारेऽक्षतमितिगुणनिषेधा[17]पत्तिर्दुर्वारा स्यात् । कृतेत्वेतद्वार्तिकारम्भे 'क्लिन्निमिति ये[18] गुण-वृद्धी प्राप्नुतस्ते न भवत इति सूत्रस्यार्थो भवति । तथा सति 'भिन्नः' इत्यादावुपधागुणस्यापि क्ङिन्निमित्तत्वात् प्रतिषेधः सिद्धयति, 'रोरवीत्यादौ गुणस्य[19] ङित् यो यङ् तन्निमित्तकत्वं नास्तीति गुण-निषेधाभावश्च[20] सिद्ध्यति । सति चास्मिन् वचनेऽनेनैव 'भिन्नः' इत्यादौ गुण-निषेधः 'रोरवीत्यादौ गुण- निषेधाभावश्च सुलभाविति नेदं वार्तिकमारम्भणीयं भवति ।

---

1. वा. व्या. म. भा. 1/1/4/5.
2. 'भिदिर् विदारणे' धा. पा. स्वा. 1439, इति भिद्धातोः निष्ठाक्तप्रत्यये गुणनिषेधे रूपम् ।
3. 'भिदिर् विदारणे' धा. पा. स्वा. 1439, इति भिद्धातोः निष्ठाक्तवतुप्रत्यये गुणनिषेधे रूपम् ।
4. 'पुगन्त.'–अष्टा. 7/3/86.
5. -अष्टा. 1/1/5.
6. 'रुशब्दे' धा. पा. अदा. 1034, इति रुधातोर्यङ्लुकि तिपि ईडागमे रूपम् ।
7. अष्टा. 1/1/5.
8. अष्टा. 1/1/5.
9. अष्टा. 1/1/3.
10. 'क्ङिति च'–अष्टा. 1/1/5 इत्यस्येतिशेषः ।
11. 'चिञ् चयने' धा. पा. स्वा. 1251, इति चिधातोः निष्ठाक्तप्रत्यये रूपम् ।
12. 'ष्टुञ् स्तुतौ' धा. पा. अदा. 1043, इति स्तुधातोः निष्ठाक्तप्रत्यये रूपम् ।
13. 'क्ङिति च' – अष्टा. 1/1/5.
14. 'भिदिर् विदारणे' धा. पा. स्वा. 1439, इति भिद् धातोः निष्ठाक्तप्रत्यये रूपम् ।
15. 'क्ङिति च'–अष्टा. 1/1/5.
16. 'रुशब्दे' धा. पा. अदा. 1034, इति रुधातोर्यङ्लुकि तिपि ईडागमे रूपम् ।
17. 'क्ङिति च'–अष्टा. 1/1/5.
18. 'क्ङिति च'–अष्टा. 1/1/5.
19. 'सार्वधातुकार्धधातुकयोः'–अष्टा. 7/3/84.
20. 'क्ङिति च'–अष्टा. 1/1/5.

अस्य वचनस्य ज्ञापकः केवलं क्नोः ककारानुबन्ध एव न, किन्तु 'इकोझल्'[1] 'हलन्ताच्चेति[2] कित्त्वातिदेशोऽपि । यतोऽस्य वचनस्याभावे 'बिभि[3]त्सती'त्यादौ सनः [4]हलन्ताच्चे'ति कित्त्वातिदेशेऽपि 'क्ङितिचेति''[5] गुण-निषेधस्याऽप्राप्त्या कित्त्वाऽतिदेशोऽयं व्यर्थः । ज्ञापिते चास्मिन् वचने 'बिभित्सती'त्यादौ[6] 'क्ङितिचेति'[7] गुणनिषेधस्य प्राप्त्याऽसौ कित्त्वाऽतिदेशः स्वांशे चरितार्थो भवति । ज्ञापितस्य वचनस्य फलं तु पूर्वोक्तं वार्तिकानारम्भ-लक्षणम् ।

पुरुषोत्तमदेवस्तु[8] ''क्नोः[9] ककारानुबन्धः धातु-प्रत्यय-संयोगाद् गुरुत्वेन लघूपध-गुणो भवतीति वचनस्य ज्ञापकः । यतः अस्य वचनस्याभावे 'गृध्नुरित्यादौ[10] लघूपध-[11]गुणस्य प्राप्तिरेव नास्तीति [12]तन्निषेधार्थमनुबद्धः क्नोः ककारानुबन्धो व्यर्थः । ज्ञापिते चास्मिन् वचनेऽनेन 'गृध्नु'रित्यादौ लघूपधगुणस्य प्राप्तिर्भवतीति तन्निषेधार्थमसावनुबन्धः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'भेत्ते[13] त्यादौ लघूपधगुणस्य[14] सिद्धि'रित्यपि मनुते । मतमिदं पूर्वोक्त-भाष्यं नानुसरतीति न श्रद्धेयमिति मन्ये ।

---

1. अष्टा. 1/2/9.
2. अष्टा. 1/2/10
3. 'भिदिर् विदारणे' धा. पा. रुधा. 1439, इति भिद् धातोः सनि लटि तिपि रूपम् ।
4. अष्टा. 1/2/10.
5. अष्टा. 1/1/5.
6. 'भिदिर् विदारणे' धा. पा. स्वा. 1439, इति भिद्धातोः सनि प्रथमपुरुषैक वचने रूपम् ।
7. अष्टा. 1/1/5.
8. अनेन हि–''भेत्ताछेत्तेत्यादौ धातुप्रत्ययावयवसंयोगात् गुरुत्वेन लघूपध-गुणो (7/3/86) भवतीत्यर्थस्य त्रसि गृधि धृषीति (3/2/180) क्नु प्रत्ययस्य कित्त्वं गुणनिषेधार्थमिति ज्ञापयतीत्युक्तम्–ज्ञा. समु. दशमे कर्मणि पादे, पृ. 73.
9. 'त्रसि गृधि.'–अष्टा. 3/2/140.
10. 'गृधु अभिकाङ्क्षायाम्' धा. पा. दिवा. 1246, इति गृध्धातोः च 'त्रसि गृधिः'–अष्टा. 3/2/140, इति क्नौ गुणनिषेधे रूपम् ।
11. 'पुगन्त लघूपधस्य च'–अष्टा. 7/3/86.
12. 'क्ङिति च'–अष्टा. 1/1/5.
13. भिदिर् विदारणे धा. पा. रुधा. 1439, इति भिद् धातोर्लुटि प्रथमपुरुषैकवचने तृचि वा रूपम् ।
14. 'पुगन्त.'–अष्टा. 7/3/86.

## ककारः

[1]गापोष्टगिति सूत्रे टकः ककारानुबन्धः "नाऽऽकारस्थस्याकारस्य लोपो भवती"ति वचनस्य ज्ञापकः[2] । यतोऽसौ" सामगः"[3], "सुराप"[4] इत्यादौ "साम गा + अ" - "सुरा पा+ अ" इत्यवस्थायाम्" आतो लोप[5] इटि च" इत्याकारलोपार्थमनुबद्धोऽस्य वचनस्याभावे व्यर्थः । वर्णैकदेशा वर्गग्रहणेन गृहयून्ते[6] इति पक्षे आकारावयवस्य अकारस्यात्र "अतो लोप"[7] इति लोपे कृते हि "सामग + अ" "सुराप + अ" इत्यवस्थायां द्वयोरकारयोः पररूपेण[8] सिद्ध्यन्तीष्टानि रूपाणीत्याकार-लोपार्थं[9] टकः ककारानुबन्धो नाऽऽवश्यकः । ज्ञापिते चास्मिन् वचनेऽनेनात्राऽऽकारस्थस्य अकारस्य लोपाभावे[10] आकारस्यापि यदि लोपो न स्यात्तदा नेष्टानि रूपाणि सिद्ध्यन्तीत्याकारलोपार्थमयं[11] ककारानुबन्धः स्वांशे

---

1. अष्टा. 3/2/8
2. तथाहि –
   (क) एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति "नाऽऽकारस्थस्याकारस्य लोपो भवति" इति, यदयम् 'आतोऽनुपसर्गे क इति ककारमनुबन्धं करोति । कथं कृत्वा ज्ञापकम् ? कित्करणे एतत् प्रयोजनम् -- "किती"त्याकारलोपो यथा स्यादिति । यद्याकारस्थस्याकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात्, परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात् - गोदः कम्बलद इति । पश्यति त्वाचार्यो - नाऽऽकारस्थस्याकारस्य लोपः स्यादिति, अतः ककारानुबन्धं करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत् स्यात् "तुन्दशोकयोः परिमृजापनुदोः" इति । यत्तर्हि गापोष्टग् इत्यन्यार्थं ककारमनुबन्धं करोतीत्याह– पत.व्या.म.भा. 1/1/2 मा.सू. 3/4
   (ख) गापोष्टक् (सू. 3/2/8) इति ककारानुबन्धो ज्ञापयति नाऽऽकारस्थस्य अकारस्य लोपो भवतीत्याह एन्.एस.रामा. ज्ञा. सं. परि. 1. पृ. 135
3. साम गायतीत्यर्थे सामेतिकर्मोपपदाद् "गै शब्दे" धा. पा. भ्वा. 917 इति गै धातोः "गापोष्टक्" अष्टा. 3/2/8 इति टक् प्रत्यये "उपपदमतिङ्" अष्टा. 2/2/19, इति समासे समासत्वात् "कृत्तद्धितसमासाश्च" – अष्टा. 1/2/46, इति प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" अष्टा. 2/4/71, इति विभक्तेर्लुकि धातोरैकारस्य "आदेच उपदेशे शिति" – अष्टा. 2/1/45, इत्यात्वे गकारोत्तराऽऽकारस्य –"आतोलोपइटि च" – अष्टा. 6/4/64, इति लोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. सुरां पिबतीत्यर्थे सुरामिति कर्मोपपदात् "पा पाने" – धा पा. भ्वा. 925, इति पाधातोः "गापो." - अष्टा. 3/2/8 इति टक् प्रत्यये "उपपद." – अष्टा. 2/2/19, इति समासे "कृत्तद्धित." - अष्टा. 1/2/46, इति प्रातिपदिकसंज्ञायां "सुपोधातु." - अष्टा 2/4/71, इति विभक्तेर्लुकि धातोराकारस्य "आतोलोप." - अष्टा. 6/4/64, इतिलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. अष्टा. 6/4/64
6. व्या.म.भा. 1/1/2 - मा.सू. 3/4
7. अष्टा. 6/4/48
8. "अतो गुणे" – अष्टा. 6/1/97
9. "आतो लोप इटि च" – अष्टा. 6/4/64
10. "अतो लोपः" - - अष्टा. 6/4/48
11. "आतो लोप." – अष्टा. 6/4/64

चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु "याता"[1] वाते"त्यादौ[2] "अतो लोपः"[3] इत्यकारलोपाभावः । अस्य वचनस्यासत्त्वेहि आकारस्थस्याप्यकारस्यात्र [4]लोपापत्तिर्दुर्वारा स्यात् । [5]"गापोष्ट"गिति सूत्रे टकः क़कारानुबन्धः आकारस्य गुणो न भवतीति वचनस्यापि ज्ञापकः[6] । यतोऽस्य वचनस्याभावे "सामगः" इत्यादौ "सामगा + अ" इति स्थिते "आतो लोप"[7] इटि च "इत्याकारलोपार्थमनुबद्धोयं ककारो व्यर्थः । आकारस्य सार्वधातुकार्धधातुकयोः"[8] इति गुणेऽकारे "सामग + अ "इति स्थिते द्वयोरकारयोः पररूपेण[9] "सामगः" इत्यादि रूपाणि "आतो लोप[10] इति च" इत्याकारलोपं विनैव हि सिद्धयन्ति । ज्ञापिते चास्मिन् वचनेऽनेनात्र आकारस्य गुणाभावेऽसति[11] चाऽऽकार-लोपे[12] नेष्टं रूपं सिद्धयतीत्याकारलोपार्थमयमनुबन्धः[13] स्वांशे चारितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु "याता" "वाते"त्यादावाकारस्य गुणाभावः[14] ।

---

1. "या प्रापणे" धा.पा. अदा. 1049 इति या धातोर्लुटि प्रथम-पुरुषैकवचने, या धातोस्तृचि प्रथमैकवचने च रूपमिदम् ।
2. "वा गतिगन्धनयोः" धा.पा.अदा. 1050 इति वाधातोर्लुटि प्रथमपुरुषैकवचने, वा-धातोस्तृचि प्रथमैकवचने च रूपमिदम् ।
3. अष्टा. 6/4/48
4. "अतोलोपः" - अष्टा. 6/4/48
5. अष्टा. 3/2/8
6. तथाहि –
   (क) आचार्यप्रवृत्तिर्ज्ञापयति" नाकारस्य गुणो भवति यत्तर्हि "गापोष्टगि"त्यनन्यार्थं ककारानुबन्धं करोती"त्याह. पत. व्या. म. भा. 1/1/3/3
   (ख) "इको गुणवृद्धी" (सूत्र - 1/1/x) "गापोष्टक्" ( सू. 3/2/8) इत्यनन्यार्थ-ककारानुबन्धकरणाज् ज्ञापकात् न आकारस्य गुणो भवती"त्याह एन्.एस.रामा. ज्ञा.सं. परि. । पृ. 136
7. अष्टा. 6/4/64
8. अष्टा. 7/3/84
9. "अतो गुणे" - अष्टा. 6/197
10. अष्टा. 6/4/64
11. "सार्वधातुकार्धधातुकयोः" - अष्टा. 7/3/84
12. "आतो लोप इटि च" अष्टा. 6/4/64
13. "आतो लोप इटि च" अष्टा. 6/4/64
14. "सार्वधातुकार्धधातुकयोः" - अष्टा. 7/3/84

अस्य वचनस्यासत्त्वे हि आकारस्यात्र गुणाऽऽपत्तिर्दुर्वारा स्यात्[1] न च "इको गुणवृद्धी"[2] इति - सूत्रस्थमिग्ग्रहणादेवाकारस्य गुणो नात्र भविष्यतीति शङ्क्यम् ।यतो ज्ञापकेनैव आकारस्य गुणाभावे सिद्धे तदर्थमेतत्परिभाषासूत्रे नेग्ग्रहणमावश्यकमिति ज्ञापकवादिनोऽभिप्रायः । न चैकस्य ककारानुबन्धस्य वचनद्वयज्ञापकत्वमयुक्त"मिति शङ्क्यम् । यतो "यावता यदनुपपन्नं तावत्सर्वं तज्ज्ञापयति "इति भाष्यसम्मतः सिद्धान्तः "अनुपसर्जना"[3] दित्यधिकारसूत्रं व्याचक्षणेन भट्टनागेशेन लघुशब्देन्दुशेखरे[4] स्थिरीकृतः ।

## ककारः

[5]"कण्ड्वादिभ्योयगि"ति सूत्रे यकः ककारानुबन्धः "कण्ड्वादयो धातुभ्य एव यक् प्रत्ययमुत्पादयती"ति वचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याभावे

---

1. "सार्वधातुकार्धधातुकयोः" ।
2. अष्टा. 1/1/3
3. अष्टा. 4/1/14
4. स्त्रीप्रत्ययप्रकरणे, पृ. 544-552
5. अष्टा. 3/1/27
6. तथाहि –
   (क) "अपर आह - "धातुप्रकरणाद् धातुः कस्य वाऽऽसञ्जनादपी" त्याह पत.व्या.म.भा. 3/1/3/27
   (ख) "धातुविधान-प्रतिबद्धार्धधातुकसंज्ञाश्रय-गुणनिषेधार्थात् ककराऽऽसञ्जनादपि धातुः = कण्ड्वादि र्यकमुत्पादयतीति ज्ञायत इत्यर्थः = इत्याह कै प्रदी. 3/1/3/27
   (ग) "द्विविधाः कण्ड्वादयो धातवः, प्रातिपदिकानि च । तत्र धात्वधिकाराद्धातुभ्य एव प्रत्ययो विधीयते, न प्रातिपदिकेभ्यः । तथा च गुणवृद्धिप्रतिषेधार्थः ककारोऽनुवध्यते । "धातुप्रकरणाद्धातुः कस्य चाऽऽसञ्जनादपि" इत्याह जया. का. 3/1/27
   (घ) "यच्चेदं ककारानुबन्धाऽऽसञ्जनम्, अतो ऽपि हेतोरेव धातुः प्रत्ययमुत्पादयति अन्यथा ककारानुबन्धकरणं पूर्वोक्तया रीत्या निरर्थकमेव स्या"दित्याह जि.बु.न्या. 3/1/27
   (ङ) "कण्ड्वादिभ्यो यक् (3/1/27) इत्यत्र कण्ड्वादीनां गुणनिषेधार्थं यकः कित्त्वाज् ज्ञापकाद् धातुत्वमवसीयते इत्याह पु. दे. ज्ञा. समु. नवने प्रत्ययपादे, पृ. 70
   (च) अनुवृत्तेन धातुग्रहणेन विशेषणात् ककाराऽऽसञ्जनाच्च धातुत्वमेषामभिमतमिति विज्ञायत इत्यर्थः " इत्याह ह. मि.पदम. 3/1/27
   (छ) "यकः कित्त्वेन धातव इति ज्ञायते" - इत्याह ज्ञा. भि. त. बो. कण्ड्वादि प्र., पृ. 313

कण्ड्वादिभ्यः प्रतिपदिकेभ्यो यक् स्यात् तथा सति तस्यानार्धधातुकत्वेन[1] गुणस्य[2] प्राप्तिरेव नास्तीति तत्प्रतिषेधार्थोऽत्र[3] ककारानुबन्धो व्यर्थः । ज्ञापिते चास्मिन् वचने कण्ड्वादिभ्यो धातुभ्योयकि "कण्डूयति", "कण्डूयते" इत्यादौ गुणस्य[4] प्रतिषेधार्थं[5] यकः ककारानुबन्धः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलन्तु "मन्तुः"[6] "बल्गुः"[7] इत्यनयोः प्रयोगयोः साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे ह्यत्र यकि दीर्घे च कृते "मन्तूः"[8] "बल्गूः[9] इत्यनयोरेव साधुत्वं स्यादनयोः[10] साधुत्वं न सिद्ध्येद् यतोऽस्य वचनस्याभावेऽत्र यग् दुर्वारः[11] ।

## ककारादयः

[12]"क्विप् च" इत्यादि सूत्रेषु क्विबादीनां ककारादयोऽनुबन्धाः "अत्यन्तापरदृष्टाः परभूता लुप्यन्ते" इति वचनस्य ज्ञापकाः[13] ।

यतोस्य वचनस्याभावेऽत्र क्विबादीनां ककाराऽऽदयोऽनुबन्धा व्यर्थाः । सर्वाणि हि

---

1. "आर्धधातुकं शेषः" - अष्टा. 3/4/114, इत्यत्र "धातोः" - अष्टा. 3/1/91, इत्यस्य सम्बन्धादिति शेषः ।
2. "सार्वधातुकार्धधातुकयोः" - अष्टा. 7/3/54
3. "क्ङिति च" - अष्टा. 1/1/5
4. "सार्वधातुकार्धधातुकयोः" - अष्टा. 7/3/84
5. "क्ङिति च" - 1/1/5
6. अपराधार्थक-मन्तु-प्रातिपदिकात् सौ रूपम् "मन्तु अपराधे" पदम. 3/1/1/27
7. पूजामाधुर्यार्थक-वल्गु-प्रतिपदिकात् सौ रूपम् । "वल्गु पूजामाधुर्ययोः" - पदम. 3/1/27
8. "मन्तुधातोः "क्विप् च" - अष्टा. 3/2/76, इति क्विपि 'कण्ड्वादिभ्योयक्' अष्टा. 3/1/27, इति यकि 'अकृत्-सार्वधातुकयोदीर्घः, अष्टा. 7/4/25, इति दीर्घे "अतोलोपः" - अष्टा. 6/4/4}, इत्यकारलोपे "लोपोव्योर्वलि" - अष्टा. 6/1/66, इति यलोपे कृदन्तप्रातिपदिकत्वेन सौ रूपम् ।
9. "मन्तू"रितिवदिदं रूपं सिद्ध्यति ।
10. 'मन्तुः' 'बल्गुः' - इत्येतयोरित्यर्थः ।
11. "कण्ड्वादिभ्यो यक्" - अष्टा. 3/1/27
12. अष्टा. 3/2/16
13. तथाहि –
    (क) अत्यन्तापरभूतानां वा परभूतलोपार्थम् । अत्यन्तापरदृष्टानां तर्हि परभूतलोपाय परग्रहणं कर्त्तव्यम् । य एतेऽत्यन्तापरदृष्टाः क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यादपरभूतानां माभूदिति । किं पुनरत्यन्तापरदृष्टानां परभूतलोपवचने प्रयोजनम् ? । किति णितीति कार्याणि यथा स्युरिति । एतदपि नास्ति प्रयोजनम्– आचार्यप्रवृत्तिर्ज्ञापयति - "अत्यन्तापरदृष्टाः परभूता लुप्यन्त "इति – यदयं तेषु कादीननुबन्धानासजति । कथं कृत्वा ज्ञापकम् ? । अनुवन्धाऽऽसञ्जन एतत्प्रयोजनं "कितिणितीति कार्याणि यथा स्यु"रिति । यदि चात्रात्यन्तापरदृष्टाः परभूता लुप्यन्ते ततो नुबन्धाऽऽसञ्जनमर्थवद् भवती "त्याह. पत. - व्या. म. भा. 3/1/1/2
    (ख) "परश्च (सू. 3/1/2) । काद्यनुबन्धासञ्जनं ज्ञापयति अत्यन्तापरदृष्टाः परभूता लुप्यन्त इती"त्याह एन्.एस्. रामा. ज्ञा. सं. परि. 3, पृ. 158

किति[1] णिति[2] कार्याणि[3] परभूतप्रत्ययनिमित्तानीति पूर्वभूतानां क्विबादीनां लोपे तेषु ककाराऽऽद्यनुबन्धानुबन्धनं व्यर्थम् । ज्ञापिते चास्मिन् वचने सर्वलोपिनः क्विबादयः प्रत्ययाः परभूता एव लुप्यन्त इति तेष्वनुबद्धाः ककाराऽऽदयोऽनुबन्धाः कितिणितीति कार्याणि सम्पादयितुं स्वांशे चरितार्था भवन्ति । ज्ञापितस्यास्य वचनस्य फलं तु "अत्यन्तापरदृष्टानां वा परभूतलोपार्थ" मिति[4] वार्तिकानारम्भः, यतोऽस्य वचनस्य सत्त्वेऽनेनैव परभूतानामेव क्विबादिप्रत्ययानां लोपः सुलभ इति नैतद् वार्त्तिकमारम्भणीयं भवति । "परेण प्रधानेन प्रमाणेन प्रत्यक्षेण न क्वचिद्दृष्टा ये क्विबादयस्तेषां परभूतानां लोपो भवत्वेतदर्थं परश्चेति सूत्रम्, तथासति हि "किति" इत्यादिना विहितं कार्यं क्विपि परे स्यान्नान्यथेति वार्तिकमिदमारब्धम्[5] । वचनेनानेन चेदं वार्तिकं भगवता प्रत्याख्यातम्[6] ।

## घकारः

[7]"खनो घञ् चे"ति सूत्रे घस्य घकारोऽनुबन्धः "खन् भिन्नेभ्योऽपि धातुभ्यो घ प्रत्ययो भवती"ति वचनस्य ज्ञापकः[8] । यतोऽस्य वचस्याभावेऽत्र घस्य घकारोऽनुबन्धो व्यर्थः ।

---

1. "ककारानुबद्धप्रत्यये परे" इत्यर्थः ।
2. "णकारानुबद्धप्रत्यये परे इत्यर्थः ।
3. "अग्निचिद्" इत्यादौ" "ह्रस्वस्य पिति कृति तुक्" अष्टा. 6/4/34 । ज्वाल इत्यादौ" अतउपधायाः" अष्टा. 1/2/116, इति तुगुवृद्ध्यादीनीत्यर्थः ।
4. वा. व्या. म. भा. 3/1/1/2
5. व्या. व्या. म. भा. 3/1/1/2
6. व्या. म. भा. 3/1/1/2
7. अष्टा. 3/3/125
8. तथाहि– -
   (क) "अथ किमर्थं खनेर्घः प्रत्ययो विधीयते, यावता कुत्वार्थं तस्य विधानम्, नच खनेः कश्चिदवयवः कुत्वभागस्ति? एवं तर्ह्येतज् ज्ञापयति– अन्येभ्योऽप्ययं भवतीति । तेन खलः भगम् पदमित्येवमादयः सिद्धा भवन्ती"त्याह जि. बु. न्या. 3/3/125
   (ख) "घित्करणं किमर्थम्, यावता न खनः कश्चिदवयवः कुत्वभागस्ति? ज्ञापनार्थं तु, एतज् ज्ञापयति– "अन्येभ्योऽप्ययं भवती'ति । तेन भजेर्भगः, पदेः पदम्, करणे घः, "खल सञ्चलने' अधिकरणे घः खल एवमादि सिद्धं भवती"त्याह. ह. मि. पदम. 3/3/125
   (ग) "खनो घ च" इति (3/3/125) इति कुत्वार्थं चित्त्वं ज्ञापकम्" अन्यतोऽपि घभावस्य । तेन भजेरपि घः भगमिती"त्याह. पु. दे. ज्ञा. समु. एकादशे बहुलपादे पृ. 75
   (घ) "घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् । तेन भगः पदमित्यादी"त्याह. भ. दी. वै. सि. कौ. उत्तरकृदन्त– प्र. पृ. 569
   (ङ) "खनो घ च (सू. 3/3/125) घित्करणम् "अन्यतोऽप्यय"मिति ज्ञापनार्थम् । तेन भजेः भगः, पदम्, "करणे घः" इत्याह– एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 2/2

तथाहि– घे घकारानुबन्धः "चजोः कु घिण्ण्यतोः"[1] इति कुत्वार्थमनुबद्धोऽस्य वचनस्याभावे व्यर्थः, नहि "आ च खनः"[2] इत्यादौ खनो घ चेति घान्तेषु खन्[3] धातोश्चकार-जकारौ स्तः । ज्ञापिते चास्मिन् वचने "भगः"[4] इत्यत्र "भज्"[5] धातोः घ प्रत्यये [6]कुत्वार्थमत्र घकारानुबन्धः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु "भगः", "पदम्"[7] खलः[8] इत्यादौ क्रमशो भज्[9] पद्[10] खल्[11] धातुभ्यो घप्रत्ययस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि खन्व्यतिरिक्त-धातुभ्यो घप्रत्ययस्य गगनकुसुमायिततया नैतेषु प्रयोगेषु घप्रत्ययाः[12] सिद्ध्येयुः ।

## ङकारः

[13]"गाङ् लिटी"ति सूत्रे गाङ् ङकारानुबन्धः "सानुबन्धकाद्यत्र षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते" "यत्र सानुबन्धस्य आदेश उच्यते

---

1. अष्टा. 7/3/52
2. "खनु अवदारणे" धा. पा. भ्वा. 878 इति आङ्पूर्वकात् खन् धातोः आखनति अनेनेत्यर्थे "खन." – अष्टा. 3/3/125 इति घ प्रत्यये रूपम् ।
3. "खनु अवदारणे" धा. पा. भ्वा. 878
4. "भज सेवायाम्" धा. पा. भ्वा. 998 इति भज् धातोः भज्यते इति, भजति अनेन इति वा विग्रहे "खनो घ च" अष्टा. 3/ 3/ 125, इति कर्मणि करणे वा घप्रत्यये जकारस्य "च-जोः कुघिण्ण्यतोः"– अष्टा. 7/3/52, इति कुत्वेन गकारे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. "भज सेवायाम्" धा. पा. भ्वा. 998
6. "चजोः कुघिण्ण्यतोः"– अष्टा. 7/.3/52
7. "पदगतौ" धा. पा. दिवा. 1169 इति पद् धातोः पद्यतेऽनेनेत्यर्थे "खनो."– अष्टा. 3/3/125, इति च प्रत्यये रूपम् ।
8. "खल संचये" धा. पा. भ्वा. 545 इति खल् धातोः खलत्य-स्मिन्नित्यर्थे "खनो." अष्टा. 3/3/125 इति घप्रत्यये रूपम् ।
9. "भज सेवायाम्" धा. पा. भ्वा. 998
10. "पद गतौ" धा. पा. दिंवा. 1169
11. "खल संचये" धा. पा. भ्वा. 545
12. "खनो घ च"– अष्टा. 3/3/125
13. अष्टा. 2/4/49

तत्राऽऽदेशे इत्यसंज्ञाप्रयुक्तानि कार्याणि न प्रवर्तन्ते" इति वा वचनस्य ज्ञापकः[1] । यतोऽस्य वचनस्याभावे स्थानिन इङो[2] ङित्त्वात्तदादेशस्य "गा" इत्यस्यापि स्थानिवद्भावेन[3] ङित्त्वं सुलभमिति सूत्रे ऽस्मिन् गाङो ङकारानुबन्धो व्यर्थः । ज्ञापिते चास्मिन् वचनेऽत्राकृतायामेवेङो ङकारस्येत्संज्ञायां[4]. गाऽऽदेशेऽपि सानुबन्धकाऽऽदेशतया इङ्धातुनिष्ठं ङित्त्वं तत्कार्यं वा स्थानिवद्भावेन भवितुं न शक्नोतीति माङो ङकारानुबन्धः "अधिजगे'[5] इत्यादौ ङित्कार्यस्याऽऽत्मनेपदस्य[6] सम्पादनाय स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलानि तु [7]"चख्या"-वित्यादौ [8]"अनुदात्तङित आत्मनेपद"मिति नित्यात्मनेपदस्याभावः, पचमान"[9] इत्यादौ शानचोऽकारस्य[10] "टित आत्मनेपदाना" टेरे[11] इत्येत्वस्याभावः "नन्दनः"[12]

---

1. तथाहि–
   (क) "ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य" । अथवैतज्ज्ञापयत्याचार्यः– "सानुबन्धकस्याऽऽदेशे इत्कार्यं न भवती" त्याह. पत. व्या. म. भा. 2/4/1
   (ख) "ज्ञापकं वेति । "सानुबन्धाद्यत्र षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते, कृतायां वेत्संज्ञायां तन्निबन्धनानि कार्याणि न प्रवर्तन्त इति ज्ञापनार्थं ङकारोच्चारणमित्यर्थः इत्याह– कै. प्रदी. 2/4/1/49
   (ग) 'टित आत्मनेपदानां टेरे, (सू. 3/4/79) टित आत्मनेपदानामिति सूत्रे आनस्य प्रतिषेधो वक्तव्यः । उक्तं वा । ज्ञापकं वा सानुबन्धकस्यादेश वचनमित्कार्या–भावस्येती"त्याह. श्री ना. ज्ञा. सं. 3, पृ. 74
2. "इङ् अध्ययने" "नित्यमधिपूर्वः" धा. पा. अदा. 1046
3. "स्थानिवदादेशो ऽनल्विधौ" अष्टा. 1/1/56
4. "हलन्त्यम्" अष्टा. 1/1/3
5. "अधिपूर्वकाद् "इङ् अध्ययने" धा. पा. अदा. 1046 इति इधातोर्लिटि ते इङो गाङादेशे रूपम् ।
6. "अनुदात्तङित आत्मनेपदम्" अष्टा. 1/4/12
7. "चक्षिङ् व्यक्तायां वाचि" धा. पा. अदा. 1017, इति चक्ष् धातोर्लिटि तिपि "चक्षिङः ख्याञ्"– अष्टा. 2/4/54 इति ख्याऽदेशेरूपम् ।
8. अष्टा. 1/4/12
9. "डुपचष् पाके" धा. पा. भ्वा. 996, इति पच् धातोर्लटि लटः शानजादेशे शपि "आनेमुक्"– अष्टा. 7/2/82, इति मुगागमे रूपम् ।
10. "लटः शतृशानचावप्रथमासमानाधिकरणे" अष्टा. 3/2/124
11. अष्टा. 6/4/179
12. "टुनदि समृद्धौ" धा. पा. भ्वा. 67, इति नदिधातोरिदित्वान्नुमि नन्दतेः "नन्दि-ग्रहि-पचादिभ्यो ल्युणिन्यचः"– अष्टा. 3/1/134 इति ल्युप्रत्यये "युवोरनाकौ"– अष्टा. 7/1/1, इति योरन' गे पुंसि सौ रूपम् ।

कारकः[1] "नन्दना"[2] "कारिका"[3] इत्यादौ क्रमश उगिल्लक्षणयोर्नुम्-[4]ङीपोरभावौ च[5] । अस्य असत्त्वे हि "चख्या"वित्यादौ "चक्षिङः[6] ख्याञ्" इति ख्याऽऽदेशे चक्षिङो ङित्त्वं[7] स्थानिवद्भावेनाऽऽदाय "अनुदात्तङित[8] आत्मनेपद"-मिति नित्याऽऽत्मनेपदं "पचमान" इत्यादौ [9]"लटः" शतृशानचावाप्रथमा-समानाधिकरणे" इति लटश्शानजादेशे स्थानिवद्भावेन टित्त्वमादाय शानचोऽकारस्य "टित आत्मनेपदानांटेरे"[10] इत्येत्वं, "नन्दनः" "कारकः" "नन्दना" "कारिका" - इत्यादौ [11]"युवोरनाका"विति सूत्रेऽनुनासिकोकारानुबन्धो "युवु" इति निर्दिष्टाविति अनाकाऽऽदेशयोः स्थानिवद्भावेनोगित्त्वमादाय क्रमशो नुम्[12] ङीपौ[13] वाऽऽपद्येरन् । जयादित्यस्तु[14] भाष्योक्तं[15] प्रथमपक्षमाश्रित्य गाङो ङकारस्य ज्ञापकत्वं न मनुते, किन्तु "गाङ्कुटादिभ्योऽञ्णिन्ङिदि"त्यत्र इणादेशगा-शब्दस्य व्यवृत्तये विशेषणार्थत्वं मनुते । मतमिदमपि युक्तमेव, यतो भाष्य

---

1. "डुकृञ् करणे" धा. पा. तना. 1473, इति कृधातोः "ण्वुल्तृचौ" अष्टा. 3/1/133, इति ण्वुलि "युवोरनाकौ" अष्टा. 7/1/1, इति वोरकादेशे पुंसि सौ रूपम् ।
2. "टुनदि समृद्धौ" धा. पा. भ्वा. 67, इति नदिधातोरिदित्त्वान्नुमि नन्दतेः 'नन्दिग्रहि."– अष्टा. 63/1/134 इति ल्युप्रत्यये "युवो."– अष्टा. 7/1/1 इति योरनादेशे स्त्रियां टापि सौ रूपम् ।
3. "डुकृञ् करणे" धा. पा. तना. 1473 इति कृधातोः "ण्वुल्तृचौ" अष्टा. 3/1/133, इति ण्वुलि "युवोरनाकौ" अष्टा. 7/1/1, इति वोरकादेशे पुंसि सौ रूपम् ।
4. "उगिदचां सर्वनामस्थानेऽधातोः"– अष्टा. 7/1/70
5. "उगितश्च"– अष्टा. 4/1/4
6. अष्टा. 2/4/54
7. "चक्षिङ् व्यक्तायां वाचि" धा. पा. अदा. 1017
8. अष्टा. 1/4/12
9. अष्टा. 3/2/124
10. अष्टा. 6/4/79
11. अष्टा. 7/1/1
12. "उगिदचां सर्वनामस्थानेऽधातोः" - अष्टा. 7/1/70
13. "उगितश्च" - अष्टा. 4/1/4
14. अनेन हि – "गाङो ऽनुबन्धकरणं विशेषणार्थम् "गांङ्कुटादिभ्यः" इत्यत्रास्य ग्रहणं यथा स्यात् । नहि स्थानिवद्भावेन "गाङ् "इति रूपं लभ्यते" इत्युक्तम् - का. 2/4/49
15. तथाहि –

"ङित्करणं किमर्थम् ? गाङ्यनुबन्धकरणं विशेषणार्थम् । गाङ्यनुबन्धकरणं क्रियते । किं प्रयोजनम् ? । "विशेषणार्थम्" । क्व विशेषणार्थेनार्थः ? गाङ्कुटादिभ्योऽञ्णिन्ङिदिति । "गाङ्कुटादिभ्योऽञ्णिन्ङि" - दित्युच्यमाने इणादेशस्यापि प्रसज्येत" - इति भगवतोक्तम् व्या. म. भा. 2/4/1

एतज्ज्ञाप्यफलानामन्यथा सिद्धत्वं निरूपितम्[1], हरदत्तमिश्रेण च तथ्यमिदं चारु समुपपादितञ्च[2] ।

## ङकारः

"चक्षिङ्[3] व्यक्तायां वाचि" - इति चक्षिङो ङकारानुबन्धः "अनुदात्तेत्त्वलक्षण-मात्मनेपदमनित्यमिति[4] परिभाषाया ज्ञापकः[5] । यतोऽस्य अभावेऽत्र आत्मनेपदाय[6]

---

1. तथा हि – "अस्य ज्ञापकस्य सन्ति दोषाः । सन्ति प्रयोजनानि । समा दोषा भूयांसो वा । तस्मान्नार्थोऽनेन ज्ञापकेन । कथं यानि प्रयोजनानि ? । नैतानि सन्ति । इह तावत् – "चक्षिञः ख्या"ञिति ञित्करणसामर्थ्याद् विभाषाऽऽत्मनेपदं भविष्यति । "लटः शतृ-शानचा"विति । वक्ष्यत्येतत् - "प्रकृतानामात्मनेपदानां टेरेत्वं भवती"ति । "युवोरनाका"-विति । वक्ष्यत्येतत् "सिद्धं तु युवोरनुनासिकत्वा""दितीति - व्या. म. भा. 2/4/1/49
2. तथाहि – "गाकुटादिभ्यः" इत्युच्यमाने "कै गै शब्दे" "इणो गा लुङी"त्येतयोरपि ग्रहणं प्राप्नोति, ततश्चागासीन्नटः, अगासातां ग्रामौ देवदत्तेनेत्यत्रापि घुमास्थादिसूत्रेणेत्वंप्रसज्येत" । इति । "अपर आह-यत्र सानुबन्धकात् षष्ठ्युच्चार्यते, तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते, सत्यामपि वा तस्यामनुबन्धकार्यमादेशे न भवती"त्यस्यार्थस्य ज्ञापनार्थं गाङ्यनु-बन्धकरणमिति । किं प्रयोजनम् ? । "चक्षिङः ख्याञ्" "ङित" इत्यात्मनेपदं न भवति, ञिदादेशकरणसामर्थ्यात् "स्वरितञितः" इत्येतदेव भविष्यति । इह तर्हि "लटः शतृशानचौ" लट इति सानुबन्धकात् षष्ठी, पचमानः, टितः इत्येवं न भवतीति ? प्रकृतानामात्मनेपदानामेत्वविधानादिह न भवति । इह तर्हि "युवोरनाकौ" इत्यत्र भुज्युः, शंयुरित्यत्र माभूदिति, अनुनासिकावकारानुबन्धौ युवू सूत्रे निर्दिष्टौ, ततश्च नन्दनः, कारकः, नन्दना, कारिका स्थानिवद्भावादुगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः, अस्माज् ज्ञापकान्न भवतः । अनुनासिकयणोस्तत्र ग्रहणम्, न त्वनुनासिकोकारानुबन्धनयोरिति नात्रोगित्कार्यप्रसङ्गः ——तदेवमस्य पक्षस्य मन्दत्वादनुपन्यास "इति" - पदम. 2/4/49
3. धा. पा. अदा. 1017 .
4. (क) भ. ना.पा.शे.प. पृ. 328
   (ख) शेषा..प.भा. प. 84, पृ. 446
5. तथाहि –
   (क) चक्षिङोऽनुबन्धद्वयमात्मनेपदानित्यत्वे ज्ञापकमित्याह सी.दे.वृ. प.वृ.प. 118. पृ. 267
   (ख) "ङकारस्तु अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः । तेन स्फाय-निर्मोकसन्धीत्यादि सिद्ध्यती" त्याह - भ. दी. वै. सि. कौ. अदा. प्र., पृ. 153
   (ग) "चक्षिङो ङित्करणाद्" अनुदात्तेत्त्वलक्षणमात्मनेपदमत्यिम्" - तेन स्फायनिर्म्मोक इत्यादि सिद्धमित्याह भ.ना.प.शे.प. 97, पृ. 328
   (घ) "ज्ञापकम्-चक्षिङो ङित्करणम् । यत्तु - ङकारस्य अन्तेदित्त्वाभावसंपादनेन नुम्वारणेन चारितार्थ्याद्ज्ञापकत्वमिति, तदयुक्तम् । नुम्वारणैकप्रयोजनत्वे चक्षेत्यकारमनुदात्तं पठेत् । एवं स्थिते ङकारोच्चारणं ज्ञापकमेवेती"त्याह शेषा. प,भा.प. 84, पृ. 446
6. "अनुदात्त ङित आत्मनेपदम्" - अष्टा. 1/4/12

ङकारानुबन्धो व्यर्थः । तथाहि चक्षिङ इकार अनुदात्तः[1], अनुनासिकत्वेन[2] इच्चेत्यवश्यं[3] स्वीकार्यम् । अन्यथासौ व्यर्थः स्यात् । न चात्र सुखोच्चारणार्थ इकार इति शङ्क्यम् । अकारोच्चारणेनापि सुखोच्चारणं हि सुलभम् । स्वीकृते चात्र इकारस्यानुदात्तत्वे इत्त्वे च "विचक्षणः[4] प्रथयन्" इत्यत्र "अनुदात्तेतश्च हलादेः"[5] इति ल्युडपवाद-युच् प्रत्ययः सिद्ध्यति । अथात्र "विचक्षणः" इति[6]ल्युट्प्रत्ययेनापि सिद्ध्यतीति चक्षिङ इकारस्यानुदात्तेत्त्वं नाऽऽवश्यकमिति चेत्सत्यम् । ल्युटिसत्यत्र "लित्स्वरः"[7] प्रसज्येत । न चासाविष्ट इति युच्प्रत्ययसिद्ध्यर्थमत्रेकारस्यानुदात्तेत्त्वमावश्यकम्, तथा सत्यनिष्टो लित्स्वरो माभूदित्येतदर्थत्वमिकारस्यात्र पर्यवसितम् । इत्थं चक्षिङ इकारेऽनुदात्तत्वस्य इत्त्वस्य चाऽऽवश्यकत्वे तत एवात्मनेपदसिद्धेः[8] सुलभतयाऽस्या अभावेऽत्र आत्मनेपदार्थमनुबद्धोऽयं ङकारानुबन्धो व्यर्थः । ज्ञापितायां चास्यामनयाऽनुदात्तेत्त्वप्रयुक्तमात्मनेपदं[9] कदाचिन्न स्यादिति नित्याऽऽत्मनेपदसिद्धयेऽत्र ङकारानुबन्धः स्वांशे चरितार्थो भवति । न चात्र ङकारस्य अन्तेदित्त्वाभावसम्पादनद्वारा नुम्वारणेन[10] चारितार्थ्यादज्ञापकत्वमिति मतं[11] युक्तम् यतो नुम्वारणैकप्रयोजनत्वे चक्षेत्यकारमनुदात्तमिह पठेत् । नहि तथा पठितः । अपि

---

1. "नीचैरनुदात्तः" -
   - अष्टा. 1/2/30
2. "मुखनासिकावचनोऽनुनासिकः" - -अष्टा.1/1/8
3. "प्रतिज्ञानुनासिक्याः पाणिनीयाः" -
   वै. सि. कौ. संज्ञा. प्र., पृ. 6
   "उपदेशेऽजनुनासिक इत्" – अष्टा. 1/3/2
4. "विपूर्वकात्" "चक्षिङ् व्यक्तायां वाचि"
   धा.पा.अदा. 1017, इति चक्ष् धातोः
   - "अनुदात्तेत्तश्च हलादेः" - अष्टा. 3/2/149.
   - इति युचि योः "युवोरनाकौ" -अष्टा. 7/1/1.
   - इत्यनाऽऽदेशे कृदन्तप्रातिपदिकत्वेन सौ रूपमिदम् ।
5. अष्टा. 3/2/149
6. "कृत्यल्युटो बहुलम्" -
   अष्टा. 3/3/113
7. "लिति" -
   - अष्टाः 6/1/193
8. "अनुदात्त ङित आत्मनेपदम्" -
   - अष्टा. 1/4/12
9. "अनुदात्त ङित आत्मनेपदम्" -
   - अष्टा. 1/4/12
10. "इदितो नुम् धातोः" - अष्टा. 7/1/58
11. मतमिदं वासुदेवदीक्षितेन "वस्तुतस्तु अन्त्येत्कत्वव्याघातेन चरितार्थत्वान् ङकारोच्चारणमुक्तार्थे कथं ज्ञापकम् ? । भाष्ये-तथानुक्तत्वाच्चे"ति ग्रन्थेन समुपन्यस्तम्, बा.मनो. अदा. प्र., पृ. 153, शेषद्रिणा चैतन्मतं समुपन्यस्य निराकृतम् प.भा स्क. प. 84, पृ. 446

च [1] [2]"इदितो नुम् धातोरित्यत्र "गोः पादान्ते"[3] इत्यस्मादन्ते इत्यनुवृत्त्या "अन्ते इदितः" इति व्याख्यानेन इकाराननुबन्धनेऽपि नुम्वारणमत्र[4] सुलभम् । ज्ञापिताया अस्याः फलं तु [5]"स्फायन्निर्मोकसन्धी"त्यादीनां साधुत्वसिद्धिः । अस्या असत्त्वे हि "स्फाय"न्निति न सिद्धयेत् । [6]"स्फायी वृद्धा"वित्यनुदात्तेतः स्फाय् धातोर्लटि हि शानजादेशाऽऽपत्तिर्दुर्वारा स्यात्[7] । सत्यां चास्यां परिभाषायामनयात्र लटः शत्रादेशः[8] सुलभ इत्यमीषां प्रयोगाणां सिद्धिः सम्पद्यते । न चात्र प्रथमासमाना- धिकरणे शत्रादेशो गगनकुसुमायित इति शङ्का कार्या, यतः क्वचिदप्रथमासमाना-धिकरणेऽपि शतृशानचौ भवत एवेति भाष्य[9]-कांशिका[10]- वैयाकरणसिद्धांन्त[11]-

---

1. अष्टा. 7/1/58
2. अष्टा. 7/1/58
3. अष्टा. 7/1/57
4. "इदितोनुम् धतोः" -
   - अष्टा. 7/ 1/58
5. स्फायी वृद्धौ" धा. पा. भ्वा. 487
   इति स्फाय् धतोः लटि"लटः शतृशानचावप्रथमासमानाधिकरणे" - अष्टा. 3/2/124 इत्यनेन "अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति" परिभाषाबलेन "लडिति वर्तमानेन पुनर्लड्ग्रहणमधिकविधानार्थम् । क्वचित् प्रथमासमानाधिकरणेऽपि भवति" इति काशिका (3/2/124) प्रथमासमानाधिकरणेऽपि लटः शत्रादेशे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्धयति ।
6. धा. पा. भ्वा. 487
7. "लटः शतशानचावप्रथमासमानाधिकरणे" - अष्टा. 3/2/124
8. "लटः शतृशानचावप्रथमासमानाधिकरणे" - अष्टा. 3/2/124
9. अत्र हि लटः शतृशानचौ । विभाषेति वर्तते । ततः अप्रथमासमानाधिकरणे नियमार्थमिदमित्युक्तम् - व्या.म. भा. 3/2/2/124
   अत्र योगविभागं स्वीकृत्य प्रथमासमानाधिकरणे कदाचिद्विभाषा शतृशानचौ, अप्रथमासमानाधिकरणे तु नित्यं ताविति भगवता प्रतिपादितम् । तेन पचन् पचति पचमानो पचते वा ब्राह्मणः, इत्येतेषां साधुत्वं सिद्धयति ।
10. अत्र हि – "लट्" इति वर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् क्वचित्प्रथ-मासमानाधिकरणेऽपि भवति । सन् ब्राह्मणः । अस्ति ब्राह्मणः । इत्युक्तम् 3/2/124
11. अत्र हि "लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरणेऽपि क्वचित्, सन् ब्राह्मणः " इत्युक्तम्, पूर्वकृदन्त प्र., पृ. 446

कौमुदीप्रमुखग्रन्थेषु प्रतिपादितम् । इमां परिभाषां भट्टोजिदीक्षित-शेषाद्री स्वीकुरुतः[1] । भट्टानागेश एनां व्याचक्षाणोऽपि न स्वीकरोति, यतोऽमुना "इत्यादि" भाष्यानुक्तं बोध्यमित्युक्तम्[2] । इत्थं व्याडिप्रमुखैराचार्यैरस्वीकृतायामस्यां तेषां मतेषु कथं स्फायन्नित्यत्र शतुः साधुत्वमिति चेदत्रोच्यते तेषां मतेषु "स्फायन्नित्यस्य" पृषोदरादिगणे पाठं प्रकल्प्य "पृषोदरादीनि यथोपदिष्ट"मित्यनेन[3] कथंचित् साधुत्वमुपपाद्यम् ।

## ङकारः

[4]'तुह्योस्तातङ्ङाशिष्यन्यतरस्या'मिति सूत्रे तातङो ङकारानुबन्धः 'न तातङ् अन्त्यस्य स्थाने भवती'ति वचनस्य ज्ञापकः[5] । यत्रोऽत्र तातङो ङकारानुबन्धः [6]'ब्रूताद्भवा'नित्यादौ [7]गुणप्रतिषेधार्थं[8], मृष्टाद्'[9] इत्यत्र [10]वृद्धिप्रतिषेधार्थं[11]

---

1. वै. सि.कौ.अदा.प्र., पृ. 153, तथा प.भा.प. 84, पृ. 446
2. प. शे.प. 95, पृ. 330
3. अष्टा. 6/3/109
4. अष्टा. 7/1/35.
5. तथाहि–
   (क) एवं तर्ह्येतदेव ज्ञापयति न तातङ् अन्तस्य स्थाने भवति, यदेनं ङित्तं करोति । इतरथा हि लोट एरुप्रकरण एव ब्रूयात् 'तिह्योस्तादाशिष्यन्यतरस्याम्' इतीत्याह–पत. व्या. म. भा. 1/1/7/52.
   (ख) ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति । ङित्त्वाच्चास्य स्थानिवद्भावाद्यत्पित्त्वं प्राप्नोति तन्निवर्त्तते, ङिच्च पिन्नभवति । तेन 'ब्रुव ईट्' इति ब्रूताद्भवान्–इतोण् न भवति ।
   "तातङि ङित्त्वं संक्रमकृत् स्यादन्त्यविधिश्चेत्तच्च तथा न ।
   हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥
   तातङो ङिच्चसामर्थ्यान्नायमन्त्यविधिः स्मृतः ।
   न तद्वदनङादीनां तेन तेऽन्यविकारजाः" ॥ इत्याह–वाम. का. 7/1/35.
   (ग) सेर्ह्यपिच्च (3/4/87) इत्यादि लोडादेशप्रकरणे अकृतत्वादन्यत्र तातङः (ङित्) करणम् अन्येभ्य आदेशेभ्योऽस्य-वैलक्षण्यमिति ज्ञापयितुम् । तेनायं तातङ् ङित्त्वेऽपि सर्वादिशस्तातङ्ङिति (7/1/35)" इत्याह पु. दे. ज्ञा. समु. पञ्चविंशे युवपादे, पृ. 88.
   (घ) "'एकः' इत्यस्यानन्तरं 'तुह्योस्तादाशिषि' इति वक्तव्यम्, एरुरित्येव, एवं सिद्धे ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति निश्चीयते । न च सर्वादेशतामन्तरेण तत्तत्प्रतिषेधार्थत्वं ङित्त्वस्योपपद्यत इति सर्वादेशस्तातङ् भवती"त्याह ह. मि. पदम. 7/1/35.
   (ङ) "ङिच्च (सू. 1/1/73) । लोट एरुप्रकरणे तुह्योस्तादाशिषीत्येव सिद्धे ङित्करणाज् ज्ञापकात् तातङ् सर्वदेश इती'त्याह श्री ना. ज्ञा. सं. 1, पृ. 28.
6. 'ब्रूञ् व्यक्तायां वाचि' -
   धा. पा. अदा. 1044, इति ब्रूधातोर्लोटि तिपि तातङि रूपमिदम् ।
7. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84.
8. 'क्ङिति च' - अष्टा. 1/1/5.
9. 'मृजू शुद्धौ'
   धा. पा. अदा. 1066, इति मृज्धातोर्लोटि तिपि सिपि च तुह्योस्तातङि रूपमिदम् ।
10. 'मृजेर्वृद्धिः' - अष्टा. 7/2/114.
11. 'क्ङिति च' - अष्टा. 7/2/114.

चानुबद्धोऽस्य वचनस्याऽभावे व्यर्थः । नहि तातङ् सर्वादेशोऽभवन् गुणवृद्धि-प्रतिषेधे प्रभुः । यतस्तस्यान्त्यादेशत्वे प्रत्ययत्वं न सम्भवति । ज्ञापिते चास्मिन् वचने सम्पूर्णयोः तुह्योः स्थाने जातस्य तातङः प्रत्ययत्वं स्थानिवद्भावेन सुलभमितीदमीयो ङकारानुबन्धः गुणवृद्धि-प्रतिषेधाय स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'जीवताद्भवान्'[1] जीवतात्त्वम्'[2] - इत्यादि प्रयोगाणां सिद्धिः । अस्य वचनस्यासत्त्वे हि[3] 'ङिच्चे'त्यनेनात्र तुह्योरिकारयोरेव तातङ् स्यात्, तथा सति नैतेषां प्रयोगाणां सिद्धिः स्यात् ।

न [4]चैवमानङादिरपि 'होतापोतारौ' - इत्यादौ सर्वदेशः [5]स्यादनेकाल्त्वादिति शङ्क्यम् । यतस्तातङः सर्वादेशतायाः प्राग् गुणवृद्धि-प्रतिषेधार्थत्वमिदमीय - ङकारानुबन्धस्य न निश्चितं, सर्वादेशत्वे हि ङित्त्वस्य प्रयोजनं तातङो ङकारस्य सम्भवतीति भवत्यसौ सर्वाऽऽदेशः; आनङादिषु च नैव सर्वाऽऽदेशत्वे प्रयोजनं सम्भवतीति तेष्वनन्यार्थङित्त्वेषु 'ङिच्च'[6] इत्येतत् सहसा प्रवर्तते । तातङ्विषये हि उत्सर्गापवादयोस्तुल्यकालाप्रवृत्तिरित्यपवादमपि ङिच्च'[7] इत्येतद्बाधित्वा 'अनेकाल्[8] शित्सर्वस्य' इत्येतदेवोत्सर्गः परत्वात् प्रवर्तते । यदि हि तातङो ङकारस्य आनङ्ङादीनां ङकाराणामिवान्यत् प्रयोजनं[9] न स्यात् तदा स्यादेवान्त्यस्य तातङ् ।

---

1. 'जीव प्राणधारणे' धा. पा. भ्वा. 562, इति ज़ीव् धातोर्लोटि तिपि 'एरुः' - अष्टा. 3/4/86, तैरिकारस्योकारेतोः तातङादेशे रूपम् ।
2. जीव प्राणधारणे' धा. पा. भ्वा. 562, इति जीव्धातोर्लोटि सिपि 'सेर्ह्यपिच्च' - अष्टा. 3/4/87, इति सेर्हौ हेस्तातङि रूपम् ।
3. अष्टा. 1/1/53.
4. 'आनङ् ऋतोद्वन्द्वे' - अष्टा. 6/3/25.
5. 'अनेकाल् शित्सर्वस्य' - 1/1/55.
6. अष्टा. 1/1/53.
7. अष्टा. 1/1/53.
8. अष्टा. 1/1/55.
9. 'अनेकाल् शित्सर्वस्य' - अष्टा. 1/1/55 - इति सर्वादेशः ।

अस्ति च तस्यैतत् प्रयोजनं गुणवृद्धि प्रतिषेधः । न चैवं परत्वात् सर्वादेशता[1] तातङः सुलभेति किमर्थं ज्ञापकं - ज्ञाप्यं चात्र स्वीक्रियत इति शङ्क्यम् । यतो नापवाद-विषये परत्वं बलीय इति ज्ञापकेन परत्वस्याप्यस्मिन् विषयेऽपवादबलीयस्त्वं ज्ञाप्यते ।

अथ तातङः सर्वादेशत्वे ज्ञापिते 'जीवतात्त्व'मित्यत्र स्थानिवद्भावेन[2] तातङो हि-ग्रहणेन ग्रहणात् 'अतोहे'[3]रितिलुगापत्तिर्न शङ्क्या । यतो 'हुझल्भ्योहेर्द्धि'[4]-रित्यतो हेरित्यनुवर्तमाने पुनः 'अतोहे'[5] रित्यत्र हेर्ग्रहणादिह न लुगापत्तिर्भवति । तस्य ह्युक्तं प्रयोजनम् हि रूपावस्थितस्यैव हेर्लुग् यथा स्यात् स्थानिवद्भावेन यच्छब्दान्तरं हिग्रहणेन गृह्यते तस्य माभूदिति ।

## ङकारः

'यज याचयतविच्छ प्रच्छरक्षो न'ङिति सूत्रे नङो ङकारः – 'क्वचिद्व्याश्र-येऽपि[6] वार्णादा[7]ङ्गं बलीय 'इति प्रवर्तते' इति वचनस्य ज्ञापकः[8] । यतोऽस्य

---

1. 'अनेकाल्शित्सर्वस्य' अष्टा. 1/1/5.
2. 'स्थानिवदादेशोऽनल्-विधौ' - अष्टा. 1/1/56.
3. अष्टा. 6/4/105.
4. अष्टा. 6/4/101.
5. अष्टा. 6/4/105.
6. अष्टा. 3/3/190.
7. (क) व्याडिः प. पा. प. 39 पृ. 40
   (ख) पु. दे. ल. प. वृ. प. 74, पृ. 144
   (ग) सी. दे. बृ. प. वृ. प. 66, पृ. 231.
   (घ) नी. दी. प. वृ. प. 60, पृ. 305.
   (ङ) ह. भा. प. भास्क. प. 68, पृ. 351.
   (च) भ. ना. प. शे. प. 56, पृ. 238.
   (छ) शेषा. प. भास्क. प. 47 पृ. 425.
8. तथाहि (क) "तत्रास्याः क्वचिद् व्याश्रयेऽपि प्रवृत्तिरित्यत्रार्थे 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (3/3/90), इति नङो ङित्करणं गुणनिषेधार्थं क्रियमाणं ज्ञापकं भविष्यति । अन्यथा हि विच्छेरन्तरङ्गत्वात् तुकि छकारनिमित्ते सति कः प्रसङ्गो बाह्य-सार्वधातुकप्रत्ययाऽऽश्रयस्य गुणस्य । न च प्रच्छेः संप्रसारणार्थम् । 'प्रश्ने चासन्नकाले' (3/2/117) इति निर्देशा" दित्याह पु. दे. ल. प. वृ. प. 74, पृ. 145.
   (ख) तत्रास्याः क्वचिद्व्याश्रयेऽपि प्रवृत्तिरित्यत्रार्थे 'यज-याचयत-विच्छ प्रच्छ रक्षो नङ्' (3/3/90) इत्यत्र नङो ङित्करणं गुणप्रतिषेधार्थं क्रियमाणं ज्ञापकम् । अन्यथा हि विच्छेस्तुकि सति गुणप्रसङ्ग एव नास्तीति नङि ङित्करणमनर्थकं स्या"दित्याह - सी. दे. बृ. प. वृ. प. 66 पृ. 231.
   (ग) व्याश्रये पि क्वचित् प्रवृत्तेरभ्युपगमात् । 'यजयाच.' (3/3/90), इति विहितनङो ङित् करणाज् ज्ञापकात् । तदि्ध ङित्त्वं 'प्रश्नः' इत्यत्र 'ग्रहिज्या' (6/1/16), इति संप्रसारणार्थः 'विश्न' इत्यत्र गुणनिषेधार्थः वा । नाद्यः 'प्रश्ने चासन्न' (3/2/117) इति निर्देशेन संप्रसारणस्यासाधुत्वात् । नान्त्यः । अन्तरङ्गस्य तुकः प्रवृत्या गुणाप्रवृत्तेः । अतो व्याश्रयेपीयं-प्रवर्तते" इत्याह ह. भा. प. भा. प. 68.

वचनस्याभावेऽत्र नङो ङकारो व्यर्थः । न चासौ प्रश्न[1] इत्यत्र 'ग्रहिज्ये'ति[2] संप्रसारणाय सार्थक इति शङ्क्यम्, यतः 'प्रश्ने चासन्नकाले'[3] इति निर्देशेनात्र संप्रसारणस्य साधुत्वं नेष्टम्' नापि विश्न[4] इत्यत्र गुणस्य[5] निषेधार्थं[6] नङो ङकारानुबन्ध इति शङ्कनीयम् । यतोऽत्रान्तरङ्गत्वात् 'तुकि'[7] कृते गुणस्य[8] प्राप्तिरेव नास्ति[9] । ज्ञापिते चास्मिन् वचने विश्न इत्यत्र व्याश्रयस्यापि गुणस्य 'वार्ण' - परिभाषया तुकः[10] प्राक् प्रवृत्तिर्दुर्वारेति तन्निषेधार्थमसौ स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'च्यवन्ते'[11] । 'प्लवन्ते'[12] इत्यत्र वार्ण - परिभाषया

---

1. 'प्रच्छ ज्ञीप्सायाम्' - धा. पा. तुदा. 1413, इति प्रच्छ धातोः 'यजयाचयतविच्छप्रच्छ रक्षो नङ्' - अष्टा. 3/3/90, इति नङि 'च्छ्वोः शूडनुनासिके च' - अष्टा. 6/4/19, इति च्छः शकाराऽऽदेशे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
2. 'ग्राहिज्या वयि व्यधि वष्टि विचति वृश्चति पृच्छति भृज्जतीनां ङिति च' - अष्टा. 6/1/16.
3. अष्टा. 3/2/117.
4. 'विच्छं गतौ' - धा. पा. तुदा. 1423 , इति विच्छ् धातोः 'यजयाचयतविच्छ' - अष्टा. 3/3/90, इति नङि 'च्छ्वोः' अष्टा. 6/4/19, इति च्छः शकाराऽऽदेशे कृदन्त-प्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्धयति ।
5. 'विछ् + न' इत्यवस्थायां 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86, इति प्राप्तस्येत्यर्थः ।
6. 'क्ङिति च' - अष्टा. 1/1/5.
7. 'विछ् + न' इत्यवस्थायामेव' छे च' - अष्टा. 6/1/73, इति तुकीत्यर्थः ।
8. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86.
9. लघूपधत्वाभावादित्यर्थः ।
10. 'छे च' - अष्टा. 6/1/73
11. 'च्युङ् गतौ' - धा. पा. भ्वा. 955,
    इति च्युधातोर्लटि झे रूपम् ।
12. 'च्युङ् गतौ' - धा. पा. भ्वा. 958,
    इति च्युधातोर्लटि झे रूपम् ।

व्याश्रयस्याप्याङ्गस्य गुणस्य[1] वार्णादेकादेशात्[2] प्राक् प्रवृत्तिः । अस्य असत्त्वेऽहि प्राक्शपोऽकारस्य[3] अन्ताऽऽदेशाकारेण[4] पररूपै[5]कऽऽदेशे 'सार्वधातुकमपि'[6]-दिति ङित्त्वादन्ताऽऽदेशस्य तस्मिन् परे क्ङिति[7] चे' ति गुणनिषेधस्य दुर्वारतया नात्रगुणः[8] सिद्ध्येत् । जिनेन्द्रबुद्धिस्तु सूत्रेऽस्मिन्[9] नङो ङकारः 'अनित्यमागमशास्त्र'[10]-मिति परिभाषाया ज्ञापकः [11]। यतोऽस्य वचनस्याभावे नङो ङकारानुबन्धो व्यर्थः । न च

1. 'सार्वधातुकार्धधातुकयोः' -अष्टा. 7/3/84
2. अतोगुणे' - अष्टा. 6/1/67.
3. 'कर्त्तरि शप्' -अष्टा. 3/1/68
4. 'झोऽन्तः' - अष्टा. 7/1/3.
5. 'अतो गुणे' - अष्टा. 6/1/67.
6. अष्टा. 1/2/4.
7. अष्टा. 1/1/5.
8. सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84
9. 'यजयाचयतविच्छप्रच्छरक्षो नङ्' - अष्टा. 3/3/90.
10. (क) 'अनित्यमागमशासनम्' -
    व्याडिः प. सू. प. 76 पृ. 32 ।
    (ख) 'अनित्यमागमशासनम्' -
    पु. दे. ल. प. वृ. प. 84, पृ. 149 ।
    (ग) 'अनित्यमागमशासनम्' -
    सी. दे. बृ. प. वृ. प. 98, पृ. 254 ।
    (घ) 'आगमशास्त्रमनित्यम्' –
    नी. दी. प. वृ. प. 87, पृ. 310 ।
    (ङ) 'अनित्यमागमशासनम्' -
    -ह. भा. प. भास्क. प. 100, पृ. 365 ।
    (ङ) 'अनित्यमागमशासनम्' -
    -ह. भा. प. भास्क. प. 100, पृ. 365 ।
    (च)'आगमशास्त्रमनित्यम्' –
    -भ. ना. प. शे. प. 95, पृ. 328 ।
    (छ) 'अनित्यमागमशासनम्' -
    शेषा. पा. भास्क. प. 82, पृ. 445 ।
11. तथाहि - 'यजयाचयतविच्छप्रच्छरक्षो नङि'ति (3/3/90) नङो ङित्कारणं तावत् प्रच्छेः सम्प्रसारणार्थं प्रश्नेचासन्नेति (3/2/117) निपातनात् सिद्धम् । विच्छेस्तु गुणनिरोधार्थं कृतम् । यदि चापि नित्यं तुक् स्यात् गुणनिषेधार्थता नोपपद्यते । न च व्याश्रये वार्णादाङ्गं बलीय (परिभाषा 74) इति अस्ति येन तुकं बाधित्वा प्रागेव'च्छवोः शूडिति' (3/4/19) प्रवर्तेत । तस्मात् विच्छेर्गुण - निषेधार्थं क्रियमाणमिदं नङो ङित्त्वम् आगमशास्त्रस्यानित्यतां ज्ञापयति इत्यचः परस्मिन् सूत्रे (1/1/57) न्यासः । तेन 'इच्छ' इत्यत्र तुकः, पुराणमित्यत्र तुटः, 'सागरं तर्तु'मित्यत्रेटः 'सनाद्यन्ता धातव' इत्यत्र (3/1/32) रुटः अभावमिच्छन्ती"-त्याह पु. दे. ज्ञा. समु. एकादशे बहुलपादे, पृ. 75

नङो ङित्करणं प्रच्छेः[1] संम्प्रसारणार्थमिति[2] वक्तुं शक्यम् । यतः 'प्रश्नेचासन्नकाले'[3] इति निपातनात् सम्प्रसारणं तत्र नेष्टम् । न च विश्न इत्यत्र विच्छेर्गुणनिषेधार्थं[4] तदिति शङ्क्यम्, तुको नित्यतया[5] शाऽऽदेशात्[6]प्रागेव प्रवृत्तौ लघूपधत्वाभावात् गुणस्य[7] प्राप्तिरेव नास्ति । न च तुकः प्रागेव 'वार्णादाङ्गं बलीय' इति-परिभाषया च्छ्वोः शूडिति[8] शाऽऽदेशः प्रवर्तेत, तथा सति गुण-निषेधार्थं नङो ङकारानुबन्धश्चरितार्थ इति शङ्कनीयम्, यतो व्याश्रये वार्णपरिभाषा न प्रवर्तते । इत्त्थं विच्छेर्गुणनिषेधार्थं क्रियमाणो नङो ङकारानुबन्धः परिभाषामिमां ज्ञापयति । ज्ञापितायां चास्यामनयात्र [9]तुकोऽप्राप्त्या प्राप्तस्य लघूपधगुणस्य[10] प्रतिषेधार्थं[11] ङकारानुबन्धोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'उछि उञ्छे'[12] 'विछ[13]गतौ' सनाद्यन्ता धातवः'[14] इत्यादिनिर्देशानामुपपत्तिः । अस्या अ सत्त्वेहि [15]आद्ययोस्तुकोऽन्त्ये [16]रुटो दुर्वारतया नामी निर्देशा उपपद्येरन्' [17]इत्याह ।

---

1. 'प्रच्छ ज्ञीप्सायाम्'–धा. पा. तुदा. 1413.
2. 'ग्रहिज्यावयिव्यधिवष्टिविचति वृश्चतिपृच्छति भृज्जतीनां ङिति च'–अष्टा. 6/1/16.
3. अष्टा. 3/2/117.
4. 'क्ङिति च' अष्टा. 1/1/5.
5. 'छे च' अष्टा. 6/1/73
6. 'च्छ्वोः' अष्टा. 6/4/19.
7. 'पुगन्तलघूपधस्य च' अष्टा 7/3/86.
8. अष्टा. 6/4/19.
9. 'छे च'–अष्टा. 6/1/73.
10. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86.
11. 'क्ङिति च'–अष्टा. 1/1/5.
12. धा. पा. भ्वा. 215.
13. धा. पा. तुदा. 1423, अधुना तु 'विच्छ गतौ' इत्येव पाठः प्रकाशितपुस्तकेषु दृश्यते ।
14. अष्टा. 3/1/32.
15. 'छे च' –अष्टा. 6/1/73.
16. 'बहुलं छन्दसि'–अष्टा. 7/1/8
17. न्या.– 1/1/57.

## ङ्कारौ

'रीङ्[1] ऋतः' . - [2]'रिङ्शयग्लिङ्क्षु'–इति सूत्रयोः रीङ्-रिङो ईकारानुबन्धो "निर्दिश्यमानस्याऽऽदेशा भवन्ती' ति परिभाषा[3] वर्णग्रहणे न प्रवर्तते" इति वचनस्य ज्ञापकौ[4] । यतोऽमू 'मात्रीयति'[5] 'मात्रीयते'[6] 'पित्रीयति'[7] 'पित्रीयते'[8] 'चेक्रीयते'[9] 'मात्रीभूतः'[10] 'पित्र्यम्'[11]–इत्यादौ, 'आद्रियते'[12] 'अध्रियते'[13] ।

---

1. अष्टा. 7/4/27.
2. अष्टा. 7/4/28.
3. (क) व्याडिः प. पा. 106, पृ. 42.
   (ख) पु. दे. ल. प. वृ. प. 35, पृ. 127.
   (ग) सी. दे. बृ. प. वृ. प. 5, पृ. 167.
   (घ) नी. दी. प. वृ. प. 5, पृ. 294.
   (ङ) ह. भा. प. भास्क. प. 5, पृ. 320.
   (च) भ. ना. प. शे. प. 13, पृ. 89.
   (छ) शेषा. प. भास्क. प. 12, पृ. 395.
4. तथाहि–"रिङादीनां ङित्करणाद्वर्णग्रहणे नैषा प्रवर्तते"–इत्याह नी. दी. प. वृ. प. 5, पृ. 294.
5. आत्मनो मातरमिच्छतीत्यर्थे 'सुप आत्मनः क्यच्'–अष्टा. 3/1/8, इति सुबन्तात् क्यचि तदन्ताल्लटि तिपि रीङादेशो रूपमिदम् ।
6. माता इवाऽऽचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च'–अष्टा. 3/1/11, इति सुबन्तात् क्यङि तदन्ताल्लटि ते ऋकारस्य रीङादेशो रूपमिदम् ।
7. आत्मनः पितरमिच्छतीत्यर्थे 'सुप आत्मनः क्यच्'–अष्टा. 3/1/8, इति सुबन्तात् क्यचि तदन्ताल्लटि तिपि ऋकारस्य रीङादेशो रूपमिदम् ।
8. पिता इवाचरतीत्यर्थे 'कर्त्तुः क्यङ् सलोपश्च'–अष्टा. 3/1/11, इति सुबन्तात् क्यङि तदन्ताल्लटि ते ऋकारस्य रीङादेशो रूपमिदम् ।
9. 'डुकृञ् करणे' धा. पा. तना. 1472, इति कृधातोः 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' अष्टा. 3/1/22, इति यङि तदन्ताल्लटि ते ऋकारस्य रीङादेशो रूपमिदम् ।
10. मातृशब्दात् अभूततद्भावे 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि'–अष्टा. 5/4/50, इति च्वि प्रत्यये ऋकारस्य रीङादेशो रूपमिदम् ।
11. पितुरागतमित्यर्थे पितृशब्दात् 'पितुर्यच्च'–अष्टा.- 4/3/79, इति यत्प्रत्यये ऋकारस्य रीङादेशे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
12. आङ् पूर्वकात् 'धृङ् आदरे' धा. पा. तुदा. 1411, इति धृधातो र्लटि ते 'तुदादिभ्यः शः'–अष्टा. 3/1/77, इति श प्रत्यये अकारस्य रिङादेशो इयङि रूपम् ।
13. आङ् पूर्वकात् 'धृङ् अवस्थाने' धा. पा. तुदा. 1412, इति धृधातोर्लटि ते 'तुदादिभ्यः शः'–अष्टा. 3/1/77, इति शप्रत्यये ऋकारस्य रिङादेशो इयङि रूपम् ।

क्रियते'[1] 'ह्रियते'[2] 'क्रियात्'[3] 'ह्रियात्'[4] इत्यादौ च क्रमशो 'री-रि'–इत्यादेशावनेकाल्त्वात्[5] सम्पूर्णस्य सकारस्याङ्गस्य माभूतां, किन्तु 'ङिच्चे' ति[6] परिभाषया अकारस्यैव भवतामित्येतदर्थमनुबद्धौ । अस्य वचनस्याभावे हि तौ व्यर्थौ । यतो [7]'निर्दिश्यमान'–परिभाषया सकारस्यैव तौ सुलभौ । ज्ञापिते चास्मिन् वचनेऽनेन वर्ण-ग्रहणे 'निर्दिश्यमानस्यादेशा भवन्ती'ति परिभाषाया अवृत्त्या तयोरन्त्याऽऽदेशत्वसिद्ध्यर्थं ङकाराऽनुबन्धौ स्वांशे चरितार्थौ भवतः ।

अस्य वचनस्य फलाभावाद् भाष्यविरोधाच्च ङकारानुबन्धावत्र नोक्तवचनस्य ज्ञापकाविति भट्टनागेशो [8]मनुते । 'वृक्षस्तत्र'–इत्यत्र विसर्गस्य सत्वे कर्तव्ये 'अलोऽ-[9]न्त्यस्ये'त्यस्य प्रवृत्तये अयोगवाहानामट्सूपदेशो हि नाऽऽवश्यकः । यतो निर्दिश्यमान-परिभाषयैव विसर्गस्य सत्त्वं सुलभमिति भाष्येण सह निर्दिश्यमान-परिभाषा वर्णग्रहणे न प्रवर्तते' इत्युक्तिविरोधः स्पष्टः, फलं च किमप्यनन्यथा-सिद्धमस्य वचनस्यास्तीति नैतद् वचनं स्वीकार्यं, किन्तु रीङ्-रिङोर्ङकारानुबन्धौ स्पष्टार्थावेवेति भट्टनागेशस्याऽऽशयः । अतो नैतौ ङकारानुबन्धावस्य वचनस्य ज्ञापका विति भट्टमतमत्र युक्तमिति मन्ये ।

---

1. 'डुकृञ्करणे' धा. पा. तना. 1472 इति कृधातोः, कर्मणि लटि ते 'सार्वधातुके यक्'–अष्टा. 3/1/67, इति यकि ऋकारस्य रिङादेशे रूपम् ।
2. 'हृञ् हरणे' धा. पा. भ्वा. 899, इति हृधातोः कर्मणि लटि ते 'सार्वधातुके यक्'–अष्टा. 3/1/67, इति यकि अकारस्य रिङादेशे रूपम् ।
3. 'डुकृञ्करणे' धा. पा. तना. 1472, इति कृधातोः आशिषि लिङि तिपि यासुडागमे ऋकारस्य रिङादेशे रूपम् ।
4. 'हृञ्हरणे' धा. पा. भ्वा. 899, इति हृधातोः आशिषि लिङि तिपि यासुडागमे ऋकारस्य रिङादेशे रूपम् ।
5. 'अनेकाल् शित्सर्वस्य'–अष्टा. 1/1/55
6. अष्टा. 1/153
7. 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'तिपरिभाषास्वरूपम् ।
8. अनेन हि–"रीङ्रिङों ङित्त्वं तु स्पष्टार्थमेव । एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमान-परिभाषाया अवृत्तिज्ञापकमित्यपास्तम् । हयवरट्सूत्रस्थेन अयोगवाहानामट्सूपदेशेऽलोन्त्य-विधिः प्रयोजनम् । वृक्षस्तत्र । नैतदस्ति प्रयोजनं निर्दिश्यमानमित्येव सिद्ध'मिति भाष्य-विरोधा"दित्युक्तम् प. शे. प. 13. पृ. 91-92
9. अष्टा. 1/1/52.

## चकारः

'अग्राघद्'[1]-'घच्छौ चे'[2]–त्यत्र घचश्चकारानुबन्धः '[3]आयन्नादय उपदेशे भवन्ती'ति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावेऽत्र यचश्चकारानुबन्धो व्यर्थः । तथाहि–अग्रशब्दात् घच् [5]प्रत्यये यकारस्य च [6]इयादेशे 'अग्रिय'–शब्देऽन्तिमाकारस्योदात्तत्व[7] -स्वर-सिद्धये घचि चकारानुबन्धोऽनुबद्धः । स चोदात्तत्वस्वर उपदेश काल एव घकारस्येयादेशो सम्भवति, न चोपदेशकाले वचनमेतद् विना इयादेशः कर्तुं शक्य इत्यसौ व्यर्थः । ज्ञापिते चास्मिन् वचने 'अग्रिय'–इत्यत्रोपदेशावस्थायामेव घस्य इयादेशे प्रत्यय[8] स्वरेण आदेरिकारस्योदात्तत्त्वे प्राप्ते तत् प्रबाध्य 'चित'[9]–इत्यन्तोदात्तत्वार्थमयं चकारानुबन्धः स्वांशे चरितार्थो भवति । अस्य वचनस्यासत्त्वे हि नोपदेशकाल एव इयादेशो भवेत्, तथासति 'घ'–इत्यकारस्य प्रत्ययस्वरेणोदात्तत्वे[10] कृते पश्चात् 'घ्'–इत्यस्यास्वरकस्य इयादेशे कृते अस्वरक एवासावादेशो भविष्यतीति पूर्वप्रवृत्तोऽकारस्वर एव स्थास्यति । तथा च अग्रिमशब्दस्यार्थादन्तोदात्तत्वं सुलभमित्यसौ चकारानुबन्धः स्वांशे चरितार्थो न भवेत् । ज्ञापितस्यास्य वचनस्य फलं तु नाडायनः'–इत्यत्राऽऽयन आकारस्योदात्तत्व[11]-

---

1. अष्टा. 4/4/116.
2. अष्टा. 4/4/117.
3. 'आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्'–अष्टा. 7/1/2.
4. तथाहि–
   (क) "यदयं क्वचिद् धातोश्चितः करोति, 'अग्राघद्धच्छौ च' तज् ज्ञापयत्याचार्यः–'उपदेशावस्थायामायन्नादयो भवन्ती' ति । कथं कृत्वा ज्ञापकम् ? । चित्करणे एतत् प्रयोजनं 'चित्'–इत्यन्तोदात्तत्वं यथास्यादिति । यदि चोपदेशावस्यायामायन्नादयो भवन्ति ततश्चित्करण- मर्थवद् भवती"–त्याह पत. व्या. म. भा. 7/1/1/2.
   (ख) "घच् छौचेति (4/4/117) घचः चित्करणं ज्ञापकमायन्नादिषूपदेशिवद्वचनमिति । यस्मादायन्नादिषु अनेकाक्षु अन्तोदात्तत्वार्थं चित्त्वमर्थवन्नान्यथेती"त्याह पु. दे. ज्ञा. समु. षोडशेश्क पादे, पृ. 79
   (ग) "आयनेयी. (सू. 7/1/2) 'घच्छौच' (सू. 4/4/117) इति चित्करणं ज्ञापकम् आयन्नादय उपदेशे भवन्ती' 'त्याह श्री. ना. ज्ञा. स. 7, पृ. 117.
5. 'घच् छौच'–अष्टा. 4/4/117.
6. 'आयनेयी.'–अष्टा. 7/1/2.
7. 'चितः'–अष्टा. 6/1/163.
8. 'आद्युदात्तश्च'–अष्टा. 3/1/3.
9. अष्टा. 6/1/163.
10. 'आद्युदात्त श्च'–अष्टा. 3/1/3.
11. 'आद्युदात्तश्च'–अष्टा. 3/1/3.

स्वर-सिद्धिः । अस्य वचनस्यासत्त्वे हि अत्र प्रयोगे नडशब्दात् षष्ठ्यन्तात् [1]'नडादिभ्यः फक्'—इतिफक्प्रत्यये 'नड+फ'—इति स्थिते [2]प्रत्ययस्वरेण फकारोत्तराकारस्योदात्तत्वे कृते अस्वरकस्य फ्'—इत्यस्य स्थाने जात [3]आयन्नादेशोऽस्वरकः स्यात् तथा सति 'नाडायन'—इत्यत्रान्तोदात्तत्वमापद्येतेति न आयन आकारस्येष्टमुदात्तत्वं[4] सिद्ध्येत् ।

## चकारः

'द्वित्रिभ्यां [5]तयस्यायज् वे'ति सूत्रेऽयचश्चकारानुबन्धः "अनुदात्तस्य[6] च यत्रोदात्तलोप" इत्यत्र 'कर्षात्त्वतो[7] धञोऽन्त' इति सूत्रस्थस्यान्त इत्यस्यासम्बन्ध'—इति वचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याभावेऽयचश्चकारानुबन्धो व्यर्थः । तथाहि—वयवावस्य, त्रयोऽवयवा अस्येति चार्थे 'संख्याया[9] अवयवे तय'बित्ति सूत्रेण द्वित्रिभ्यां तयपि तयपश्च 'द्वित्रिभ्यां [10]तयस्यायज् वे'ति अयजादेशे तयपः पित्त्वादनुदात्तत्वे[11] तत्स्थानिकस्य अयचोऽपि [12]स्थानिवद् भावेनानुदात्तत्वे तस्मिन् परे च [13]'यस्येतिचे'ति इकारलोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु निष्पन्नयोः 'द्वयं' 'त्रय'मित्यनयोः 'अनुदात्तस्य[14] यत्रोदात्तलोप'—इत्यनेन 'यस्मिन्नुदात्ते परे उदात्तो लुप्यते तस्यानुदात्तस्योदात्तो भवती'त्यर्थकेन 'अय'—इत्यस्याऽऽदेर-

---

1. 'अष्टा.— 4/1/99.
2. 'आद्युदात्तश्च' 3/1/3.
3. 'आयनेयी.'—अष्टा. 7/1/2.
4. 'आद्युदात्तश्च'—अव्टा. 3/1/3.
5. अष्टा. 5/2/43.
6. अष्टा. 6/1/161.
7. अष्टा. 6/1/159.
8. तथाहि—
   (क) "अयचि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यती"ति ग्रन्थेन वचनेऽस्मिन् ज्ञापकत्वमस्य सूचयति पत. व्या. म. भा. 6/1/6/161.
   (ख) "चित्करणमेव ज्ञापकमन्त इतीह न सम्बध्यते । तत्सम्बन्धे चित्त्वेन नार्थः स्या"दित्याह कै. प्रदी. 6/1/6/161.
   (ग) "अनुदात्तस्य यत्रो.' (सू. 6/1/161) । अयचश्चकारकरणादत्र अन्त इत्यस्यासम्बन्धो ज्ञाप्यते । एवं चार्थादादिरुदात्तः"—इत्याह श्री ना. ज्ञा. सं. 6 पृ. 100
9. अष्टा. 5/2/42.
10. अष्टा. 5/2/43.
11. 'अनुदात्तौ सुप्पितौ'—अष्टा. 3/1/4.
12. 'स्थानिवदादेशोऽनल्
    विधौ'—अष्टा. 1/1/56.
13. अष्टा. 6/4/148.
14. अष्टा. 6/1/161.

कारस्योदात्तत्वे प्राप्ते अन्तोदात्त्वत्वार्थमयचि चकारानुबन्धोऽनुबद्धः । यदि च 'अनुदात्तस्य[1] यत्रोदात्तलोपः'—इति सूत्रे 'कर्षात्त्वतो[2] धञोऽन्त उदात्त' इति सूत्रादन्त इत्यनुवर्तेत तदा अनुदात्तस्य 'अय'—इत्यस्यान्त एवोदात्तो भविष्यतीति अन्तोदात्तत्वायाऽयचश्चकाराऽनुबन्धो व्यर्थः । ज्ञापिते चाऽस्मिन् वचने अनुदात्तस्य 'अय'—इत्यस्य उदात्तइत्युक्ते प्रथमाऽतिक्रमे कारणाऽभावादर्थादिवोदात्तत्वं[3] भवेत् तन्माभूत् किन्त्वन्तस्योदात्तत्वं[4] भवत्वित्येतदर्थमत्र चकारोऽनुबन्धः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्यं वचनस्य पक्षे तु 'विन्दाते'[5]—इत्यत्र अकारस्योदात्तत्व-सिद्धिः । अस्य वचनस्याऽसत्त्वे हि अत्र एकारस्यैवोदा[6]त्तत्वमापद्येत । यतो [7]'विद-विचारणे' इति विद् धातोः परस्य 'आते'—इत्यस्य 'तास्यनुदात्तेन[8] ङिददुप-देशाल्लसार्वधातुकमनुदात्त'मित्यनेनाऽनुदात्तत्वे, श्नमः प्रत्ययत्वादुदात्तत्वे[9] च कृते 'श्नसोरल्लोपः'[10] इत्यल्लोपे आकारस्योदात्तत्वमिष्टं[11] न स्यात्, किन्त्वन्त-ग्रहणानुवृत्तौ एकारस्यैवोदात्तत्वं[12] भवेत् ।

## टकारः

'तिप्-तिस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-तातां-झ-थासाथां ध्वमिड्[13]-वहि-महिङ्' -इति सूत्रे इटष्टकारानुबन्धः 'न वर्ण-ग्रहणेषु'[14] - इतिपरिभाषाया ज्ञापकः[15] ।

---

1. अष्टा. 6/1/161.
2. अष्टा. 6/1/159.
3. 'अनुदात्तस्य यत्रोदात्तलोपः'—अष्टा. 6/1/161.
4. 'चितः'—अष्टा. 6/1/163.
5. 'विद् विचारणे' धा. पा. स्वा. 1451 इति विद् धातो र्लटि लटः आतामित्यादेशे 'स्वादिभ्यः श्नम्'—अष्टा. 3/1/78, इति श्नमि 'श्नसोरल्लोपः'—अष्टा. 6/4/111, इति नकारा-कारस्य लोपे टित एत्वे रूपमिदम् ।
6. 'अनुदात्तस्य यत्रोदात्तलोपः'—अष्टा. 6/1/161.
7. धा. पा. स्वा. 1451.
8. अष्टा. 6/1/186.
9. 'आद्युदात्तश्च'—अष्टा. 3/1/3.
10. अष्टा. 6/4/111.
11. 'अनुदात्तस्य यत्रोदात्तलोपः'—अष्टा. 6/1/161.
12. " " " " 6/1/161.
13. अष्टा. 3/4/78.
14. (क) व्याडिः प. सू. प. 2, पृ. 2 ।
    (ख) पु. दे. ल. प. वृ. प. 2, पृ. 113.
    (ग) सी. दे. बृ. प. वृ. प. 10, पृ. 172.
    (घ) नी. दी. प. वृ. प. 12, पृ. 295.
    (ङ) ह. भा. प. भास्क. प. 10, पृ. 326.
15. तथाहि—"न वर्णग्रहणेषु । कथं ज्ञायते । यदयमिड्वहि-महिङिति अत्रैकं टितं करोति । अस्य किल टित्करणं विशेषणार्थम् । तच्च शक्यमकर्तुम् । 'एरत्' इति वक्ष्यामः । न च वहिमह्योरपि इकारस्यात् प्राप्नोति, अर्थवत इकारस्य ग्रहणात् । यश्च वहिमह्योरिकारः

यतोस्या अभावे 'इटो[1]ऽत्'—इत्यत्र विशेषणार्थः[2] इटष्टकारानुबन्धो व्यर्थः । तथाहि— अस्या अभावे 'एरत्'—इति सूत्रे कृतेऽपि न किञ्चिदनिष्टं प्राप्नोतीति' 'इटोऽ'दिति सूत्रस्यैवाकरणात्तत्र विशेषणार्थमिटष्टकारानुबन्धो नाऽऽवश्यकीभवति । नच 'इटोऽ'[3]दिति सूत्रस्थाने 'एर'दिति सूत्रं यदि क्रियते तर्हि वहिमह्योरपीकारयोरदादेशापत्तिरिति शङ्कनीयम् यतोऽर्थवद्ग्रहणपरिभाषया[4] अर्थवत एव इकारस्य 'एर'दित्यत्र ग्रहणं सुलभम् । न हि वहिमह्योरिकारावर्थवन्तौ । न च आर्धधातुकस्य विभक्तेश्चेटः सामान्यस्य ग्रहणार्थेऽत्रेटष्टकारानुबन्ध आवश्यक इत्यपि शङ्क्यम् । यतो 'लविषीय'[5]—इत्यादावार्धधातुकस्थेटोऽकार[6] एव नेष्टः । न चानिष्टोऽप्यकारः प्राप्नोतीति शङ्कनीयम्, यतोऽत्र ङित इति इड् विशेष्यते ङितो य इडिति । आर्धधातुकस्येड्हि ङितश्चान्येषां च भवतीति न तस्येकारस्याकारः प्रसज्यते । नच 'कुटिषीय'[7]—इत्यत्रार्धधातुकस्येटोऽदादेशः प्राप्नोति, यतोऽसाविडागमो ङित एव विहितः, 'गाङ्[8]कुटादिभ्योञ्णिन् ङि'दित्यनेन हि तिङ इटो ङित् क्रियते, 'यदागमन्यायेन[9] सीयुडागमविशिष्ट इट्प्रत्ययो ङिद् वलाद्यार्धधातुकश्चेति ततो

---

असावनर्थकः । अनर्थकत्वादस्य न भविष्यति । अर्थवद् ग्रहणे नानर्थकस्येति सिद्धे सति यट्टकारं करोति विशेषणार्थं तज् ज्ञापयति वर्गग्रहणमिदं, नचैषा परिभाषा वर्णग्रहणेषु भवति । नच सामान्यग्रहणमेतत् स्यात् आर्धधातुकेटश्च विभक्तेश्चेति । अस्य चाकारो यथा स्यात् । लविषीय । पविषीय । न चात्रेष्यते । यद्यपि नेष्यते तथापि प्राप्नोति । न प्राप्नोति । कथम् । ङित इति इड् विशेष्यते । ङितो य इडिति । यश्चार्धधातुके असौ ङितश्चान्येषां च भवति । तेन तस्य न भविष्यति । एवमपि पुटषीयेत्यत्र प्राप्नोति । अयं हि 'गाङ् कुटादिभ्योञ्णिन् ङित्, (1/2/1) इति ङित्—क्रियते । एवं तर्हि 'लस्य' (3/4/77) इत्येतदपि वर्तते, तेन विशेषणं क्रियते । कथम् । लस्य तिङो य इडिति तस्याकारो भवति । स चेण् ङितो यदि भवतीति । तस्माज् ज्ञापनार्थमिदं टित्करणं न सामान्य-ग्रहणार्थ"मित्याह व्याडिः प. सू. प. 2, पृ. 2

1. अष्टा. 3/4/106.
2. तथाहि—"इटष्टकारः 'इटोऽत्' इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वान्नादेश-विध्यर्थः"—इत्याह जया. का. 3/4/78.
3. अष्टा. 3/4/106.
4. 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहण'मिति परिभाषास्वरूपम् ।
5. 'लूञ् छेदने'—धा. पा. क्र्या. 1483, इति लूधातोराशिषि लिङि तस्य इडादेशे सीयुटि इटोऽदादेशे रूपमिदम् ।
6. 'आर्धधातुकस्येड्वलादेः'—अष्टा. 7/2/35.
7. 'कुट कौटिल्ये' धा. पा. तुदा. 1366, इति कुट्धातोराशिषि लिङि तस्य इडादेशे सीयुटि उत्तम-पुरुषैक-वचनस्येटोऽदादेशे रूपमिदम् ।
8. अष्टा. 1/2/1.
9. 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'—इति परिभाषयेत्यर्थः ।

विहित इडागमो ङितो विहित इति शङ्क्यम्, यतो [1]'लस्ये' त्येतदपि 'इटोऽ[2]' दित्यत्रानुवतर्ते, तच्चेटो विशेषणं, तथा सति लस्य तिश्नेय इट् तस्यादादेशो भवति, सचेण् ङि त एव यदि भवतीति सूत्रार्थ सम्पद्यत इति नाऽऽर्ध-धातुकस्येदोऽत्रादादेशः प्राप्नोति । नहि 'पुटिषोयेत्यत्रेडागमो ङित एव विहितः । अथवा [3]'इटोऽ' दित्यत्र 'लिङः[4] सीयु''डित्यतो लिङ्त्यिनुवर्त्य लिङादेशस्येटोऽद्भवतीति सूत्रार्थं स्वीकृत्य आगमस्येटोऽदादेशाभाव उपपादयितुं शक्य इति न सामान्य-ग्रहणार्थमत्रेटष्टकारानुबन्धः ।

नच 'आद्यन्तौ टकितौ'[5]–इति विशिष्टदेश आगम भूतस्यास्य विधानं यथा स्यादेवमर्थष्टकारानुबन्धोऽत्र कुतो न विज्ञायते ? इति शङ्काप्यत्र युक्ता, यतस्तिबादिभिरादेशैः सादृश्यान्नेटष्टकारो देशविध्यर्थः । आदेशोह्ययं नाऽऽगमः । तिबादिभिः सादृश्यं चेटः एकयोग-निर्दिष्टत्वेन प्रसिद्धचरम् । यतस्तिबादि-विधायकसूत्रे[6]ऽनुवृत्तस्य [7]'लक्ष्ये' त्यस्य स्थानषष्ठ्या सर्वेषां तिबादीनां सम्बन्धो भवति । इत्थम् इटष्टकारो न विशेषार्थः, नापि सामान्य-ग्रहणार्थः, न च देशविध्यर्थ इति सर्वथासौ व्यर्थोऽस्याः परिभाषाया अभावे । ज्ञापितायांचास्याम् एर दिति न्यासे 'अर्थवद्-ग्रहणे नानर्थकस्यग्रहण'मित्यस्याः परिभाषायां अनयात्राप्रवृत्त्या तिबादीनामपीकाराणामदादेशाऽऽपत्तिः स्यादिति 'इटोऽ'[8]दिति न्यासस्याऽऽवश्यकतया तत्र विशेषणार्थत्वेन इटष्टकारानुबन्धः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः परिभाषायाः फलं तु 'इको [9]यणचि' 'अस्य[10]च्वौ' -यस्येति[11] चे' ति सूत्राणामनर्थकेष्विकारादिषु प्रवृत्तिः । अस्या अभावे हि अर्थवद्ग्रहण-परिभाषया सार्थकिष्वेवेकारादिषु तेषां प्रवृत्तिः स्यात्, तथासति 'दध्यत्र' शुक्लीकरोति' 'दाशरथि'रित्यादौ क्रमशो यण् ईत्वम् अकारादिलोपश्च न स्यात् । नचास्याः परिभाषाया अभावे सूत्राणामेषां वैयर्थ्यमिति शङ्क्यम्, यतः 'कुमार्यौ'–इत्यादौ सार्थके ङीपईकारे इकि

---

1. अष्टा. 3/4/77.
2. अष्टा. 3/4/106.
3. अष्टा. 3/4/106.
4. अष्टा. 3/4/102.
5. अष्टा. 1/1/46.
6. 'तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-तातां-झ-थासाथां ध्वमिड्वहि महिङ्'–अष्टा. 3/4/78.
7. अष्टा. 3/4/77.
8. अष्टा. 3/4/106.
9. अष्टा. 6/1/77.
10. अष्टा. 6/4/32.
11. अष्टा. 6/4/48.

विभक्त्यौकारेऽचि 'इको[1]णयची'ति, 'ईर्भवती'त्यत्र वासुदेव[2]वाचकेऽकारे 'अस्यच्वा'-[3]विति, 'अस्यापत्यम् 'इः'–इत्यत्र वासुदेववाचकेऽकारे 'यस्येति[4] चे'- त्येतानि त्रीण्यापि सूत्राणि 'न वर्णग्रहणेषु'–इत्यस्या अभावेऽपि चरितार्थानि सन्ति ।

भट्ट[5]नागेश-शेषाद्रिसुधीभ्यां[6] तु अर्थविशिष्ट-शब्दोपादानेऽर्थवद्ग्रहण-परिभाषायाः प्रवृत्तिं स्वीकृत्यानावश्यकतया 'न वर्णग्रहणेषु' इति परिभाषैव न स्वीकृता । भगवता च 'वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषा न प्रवर्तते' इत्युक्तम्[7] ।

## टकारौ

'सायं चिरम् प्राह्णे[8] प्रगेऽव्ययेभ्यष्ट्युटुलौ तुट् चे' ति सूत्रे ट्युट्युलोष्टकारानुबन्धौ 'आममटित्त्वमनिमित्तं ङीप् प्रत्ययस्ये'ति वचनस्य ज्ञापकौ[9] । यतोऽस्य वचनस्याभावेऽनुबन्धानामनवयवत्वपक्षे तुटष्टित्त्वेनैव ट्युट्युलोरपि टित्त्वात् 'सायंतनी[10] क्रिये'त्यादौ टित्त्वप्रयुक्तस्य ङीपः[11] सुलभतयानयोष्टकारानुबन्धौ व्यर्थौ । ज्ञापिते चास्मिन् वचनेऽनेन 'सायंतनी'त्यादौ टित्त्वप्रयुक्तस्य ङीपो[12] ऽप्रसक्तौ तत्सिद्ध्येऽनयोष्टकारानुबन्धौ स्वांशे चरितार्थौ भवतः । ज्ञापितस्यास्य वचनस्य फलं तु [13]'पठिते'त्यादौ इटष्टित्त्वात् [14]'टिड्ढे'ति ङीपोऽभावः । अस्य वचनस्यासत्त्वे हि ङीबत्र दुर्वारः स्यात् । तथाहि–अनुबन्धानामनवयवत्वपक्षे 'टकार

---

1. अष्टा. 6/1/77.
2. 'अकारो वासुदेवः स्या'दित्येकाक्षरकोषः ।
3. अष्टा. 7/4/32.
4. अष्टा. 6/4/48.
5. 'अनेन हि–"एषा विशिष्टरूपोपादान-विषये'तिवृद्धाः'–इत्युक्तम् प. शे. प. 15 पृ. 99 ।
6. अनेन हि–"इदं च विशिष्टस्वरूपोपादान-विषयम् तत्रोपस्थितार्थस्य शब्दं प्रति विशेषणत्वे संभवति परित्यागायोगा"दित्युक्तम् प. भास्क. प. 14 पृ. 397.
7. व्या. म. भा. 3/4/2/77.
8. अष्टा. 4/3/23
9. तथाहि–"पठितेत्यादौ स्त्रियाम् इटष्टित्वात् टिड्ढाणञिति (4/1/15) ङीपा भवितव्यम् । तन्न । ट्युट्युलौ तुट्चेति (4/3/23) अनेन 'आगमटित्त्वमनिमित्तं ङीप् प्रत्ययस्ये'त्यर्थस्य ज्ञापितत्वा"दित्याह पु. दे. ज्ञा. समु. पञ्चदशे युष्मत्पादे-पृ. 78
10. सायं शब्दात् सायं भवेत्यर्थे 'सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्यु ट्युलौ तुट् च'–अष्टा. 4/3/23, इति ट्युट्युलोरन्यतरप्रत्यये योः 'युवोरनाकौ'–अष्टा. 7/1/1, इत्यनाऽऽदेशे तुटि 'टिड्ढ.'–अष्टा. 4/1/15, इति ङीपि स्वादिकार्येषु कृतेषु रूपमिदम् ।
11. 'टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः,–अष्टा.– 4/1/15
12. 'टिड्ढ.'–अष्टा. 4/1/15.
13. 'पठ व्यक्तायां वाचि' धा. पा. भ्वा. 330, इति पठ्धातोः कर्मणि 'निष्ठा'–अष्टा. 3/2/102, इतिक्तप्रत्यये इडागमे स्त्रियां टापि रूपमिदम् ।
14. अष्टा. 4/1/15.

इद् यस्य समीपेऽसौ टि'दिति नूनं स्वीकार्यम्, तथा सति इटष्टकारेण तकारस्यापि टित्त्वात् तदन्तात् 'पठित'–इत्यस्मात् प्रातिपदिकात् स्त्रियां 'टिड्ढे'[1]ति ङीबापत्तिर्दुर्वारा स्यात् ।

वस्तुतस्तु पुरुषोत्तमदेवोक्तमनयोष्टकारानुबन्धयोरेतद्वचनज्ञापकत्वं न युक्तम् । यतोऽत्र नाऽऽगमटकारेण प्रत्यययोरनयोष्टित्त्वं सम्भवति । भगवता हि 'अनुबन्धा एकान्ता इत्येव न्याय्य'-मित्युक्तम् ।[2] न च 'यदागम'–परिभाषया तुटष्टित्त्वेन [3]प्रत्यययोष्टित्त्वं सुलभमिति–शङ्क्यम्, यतः परिभाषयानया प्रत्ययधर्मा आगमे भवन्ति प्रत्ययावयवत्वादागमस्य । नचाऽऽगमधर्माः प्रत्यये सम्भवन्ति, आगमानवयवत्वात् प्रत्ययस्य । इत्थमत्र ट्युट्युलोष्टकारानुबन्धौ तयोष्टित्त्वाय वचनमेतद्विनापि सार्थकाविति नानयोष्टकारानुबन्धयोर्ज्ञपकत्वं युक्तम् । पठिताऽऽदौ स्त्रियां टिदन्तादन्तप्रातिपदिकत्वाभावाद् ङीपः[4] प्राप्तिरेव नास्तीति तदभावोऽपि स्वतः सिद्ध इति मन्ये ।

## ङकारौ

[5]'वामदेवाड् ड्यड्ड्यौ'विितिसूत्रे ड्यड्ड्योर्ङकारानुबन्धौ 'एकानुबन्ध[6]-ग्रहणे न द्व्यनुबन्धकस्य' 'निरनुबन्धकग्रहणे[7] न सानुबन्धकस्य' 'तदनुबन्धकग्रहणे नातदनु[8]-

---

1. " "
2. व्या. म. भा. 1/3/1/1.
3. ट्युट्युलोरित्यर्थः ।
4. 'टिड्ढाणञ्.'–अष्टा. 4/1/15.
5. अष्टा.– 4/2/9.
6. (क) व्याडिः प. सू. प. 46, पृ. 22.
   (ख) पु. दे. ल. प. वृ. प. 37, पृ. 128.
   (ग) सी. दे. बृ. प. वृ. प. 51, पृ. 218.
   (घ) ह. भा. प. भास्क. प. 53, पृ. 345.
7. (क) व्याडिः प. सू. प. 47, पृ. 22.
   (ख) पु. दे. ल. प. वृ. प. 36, पृ. 128.
   (ग) सी. दे. प. वृ. प. 50, पृ. 217.
   (घ) नी. दी. प. वृ. प. 69, पृ. 307
   (ङ) ह. भा. प. भास्क. प. 52, पृ. 345.
   (च) भ. ना. प. शे. प. 82, पृ. 306.
   (छ) शेषा. प. भास्क. प. 69, पृ. 438.
8. (क) व्याडिः प. पा. प. 54, पृ. 40.
   (ख) पु. दे. ल. प. वृ. प. 38, पृ. 128.
   (ग) सी. दे. बृ. प. वृ. प. 52, पृ. 220.
   (घ) नी. दी. प. वृ. प. 70, पृ. 307.
   (ङ) ह. भा. प. भास्क. प. 54, पृ. 346.
   (च) भ. ना. प. शे. प. 83, पृ. 307.
   (छ) शेषा. प. भास्क. प. 70, पृ. 438.

बन्धकस्ये'त्येतासां परिभाषाणां[1] ज्ञापकौ यतोऽमीषां परिभाषाणामभावेऽत्र ङ्यङ्योर्ङकारानुबन्धौ व्यर्थौ । तथाहि–वामदेवेन दृष्टं सामेत्यर्थे 'वामदेव्यं सामे'त्यत्र

---

1. तथाहि–
(क) "एकानुबन्धक-ग्रहणे द्व्यनुबन्धकस्य ग्रहणं न भवति । कथं ज्ञायते । यदयं 'वामदेवाड्ड्यड्ड्यौ' (4/2/9) इत्यत्र यस्येति लोपेन सिद्धे यड् डित्करणमकारलोपार्थं करोति तज् ज्ञापयति–'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणं भवति । किमेतस्या ज्ञापने प्रयोजनम् । ययतो. (6/2/156) पृ. 46, 22.
(ख) "निरनुबन्धक-ग्रहणे सानुबन्धकस्य ग्रहणं न भवति । कथं ज्ञायते । यदयं 'वामदेवाड् ड्यड्यौ (4/2/9) इति यकारं डितं करोति टिलोपार्थम् ।अत्र हि यस्येतिलोपेन सिद्धम् । एवं तर्हि ज्ञापयति । यकारस्याननुबन्धकस्य ग्रहणे न सानुबन्धकस्य तस्य ग्रहणं भवति । किमेतस्या ज्ञापने प्रयोजनम् । 'ययतोश्चातदर्थे' (6/2/156) इति यकारग्रहणे वामदेव्यमित्यत्रैष स्वरो न भवतीति चाऽऽह व्याडिः प. सू. प. 47, पृ. 22-23.
(ग) "किमर्थो डकारः ? । डितीति टिलोपो यथा स्यात् । नैतदस्ति प्रयोजनम् । यस्येति लोपेनाप्येतत् सिद्धम् । एवं तर्हि सिद्धे सति यद् ययतौ डितौ करोति तज् ज्ञापयत्याचार्यो भवत एते परिभाषे 'अतदनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणं' 'तदनुबन्धक ग्रहणेना- तदनुबन्धकस्य ग्रहणमिति । किमेतस्य ज्ञापने प्रयोजनम् । 'अवामदेव्य'मित्येतत् सिद्धं भवति ।
"सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थे मृद् वामदेव्यस्य नञ् स्वरे" ।।–इत्याह पत. व्या. म. भा. 4/2/1/9.
(घ) "तित्करणं स्वरार्थम् । डित्करणं किमर्थम् ? ययतोश्चातदर्थे' इति नञ् उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत् । अननुबन्धकपरिभाषया, एकानुबन्धक-ग्रहण- परिभाषया चानयो र्निवृत्तिः क्रियते । अवामदेव्यम् ।
"सिद्धे यस्येति लोपेन किमर्थं य यतौ डितौ ।
ग्रहणं माऽतदर्थे भूद् वामदेव्यस्य नञ् स्वरे" ।।–इत्याह जया. का. 4/2/9.
(ङ) "ज्ञापकं चानयोः 'वामदेवाड्ड्यड्ड्यौ' (4/2/9), इति ड्यड् ड्यो र्डित्करणम् । तद्धि न कर्तव्यम् । 'यस्येति च' (6/4/148) इति लोपेन वामदेव्यशब्दस्य सिद्धत्वात् । तत् क्रियते 'य यतोश्चातदर्थे' (6/2/156) इत्यनेन नञ उत्तरपदस्यान्तोदात्तविधौ अवामदेव्यमित्यत्र निरनुबन्धकैकानुबन्धक-परिभाषाबलादनयोर्ययतोर्ग्रहणं मा भूदिति । तदेतद् डित्त्वमनयोः परिभाषयोरस्तित्वे ज्ञापक" मित्याह पु. दे. ल. प. वृ. प. 36, पृ. 128.
(च) ज्ञापकं चात्र 'वामदेवाड्यड्यौ (4/2/9) इति ड्य-ड्यतोर्डित्वम् । तच्च न कर्तव्यम् । 'यस्येति च' (6/4/148) इति लोपेनैव वामदेव्यस्य सिद्धत्वात् । तत् कृत्–मनयोरस्तित्वं ज्ञापयति । तदुक्तम्–
"सिद्धे यस्येति लोपेन किमर्थं य यतौ डितौ ।
ग्रहणं मा तदर्थे भूद् वामदेव्यस्य नञ् स्वरे" ॥
–इती"त्याह सी.दे. वृ. प. वृ. प. 50, 51 प. 228
(छ) "सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थेभूद् वामदेव्यस्य नञ् स्वरे" ।।
–इत्याह भ. दी. वै. सि. कौ. रक्तार्द्यर्थ प्र. पृ. 614-615.
(ज) "अनयोश्च ज्ञापकं 'वामदेवाड् ड्यड्यौ' (4/2/9) इत्यत्र ड्यड्यो र्डित्त्वम् । तद्धि 'ययतोश्चातदर्थे' (6/2/156) इत्यत्रानयोरग्रहणार्थे सत् परिभाषाद्वयं ज्ञापयतीति 'वामदेवा- ड्यड्यौ' (4/2/9) इति सूत्रेभाष्ये स्पष्ट'मित्याह नी. दी. प. वृ. प. 69. 70, पृ. 307.
(झ) "अत्र पूर्वत्र च ज्ञापकम्–'वामदेवाड्ड्यड्यौ' (4/2/9) इति ड्यड्ययो र्डित्त्वम् । तदुक्तं भाष्ये–

ङ्यङ्ङ्योः प्रत्यययोर्विधानाय सूत्रमिदमारब्धम् । तत्र च ङ्यङ्-ङ्योर्ङकारानुबन्धौ 'अवामदेव्य' मित्यत्र[1] 'ययतोश्चातदर्थे'[2] इति विधीयमानमन्तोदात्तत्वं माभूत्, किन्तु अव्यय-पूर्वपदस्वर[3] एव यथा स्यादित्येदतर्थमुपात्तावेतासां परिभाषाणामभावे व्यर्थौ । यतोऽत्र ङकारे लुप्ते[4] ययद्रूपताया अनपायादसौ स्वरोऽत्र दुर्वार एव स्यादेतासां परिभाषाणामसत्त्वे । नच 'वामदेव्य'मित्यत्र वकारोत्तरस्याकारस्य ङितोर्ययतोः परयोः, 'ङिती' ति[5] लोपार्थमनयोर्ङकारानुबन्धावावश्यकाविति शङ्क्यम् । यतो 'यस्येति[6]चेति सूत्रेणैव वकारोत्तराकारस्यात्र लोपः सुलभः । ज्ञापितासु चैतासु परिभाषासु 'अवामदेव्य'मित्यत्र वामदेवशब्दात् तृतीयासमर्थात् दृष्टं साम इत्यर्थे ङ्यति ङ्ये वा प्रत्यये कृते नञ् - समासे च कृते ङ्यङ्ङ्योर्यद् - य - शब्दाभ्यां

---

'सिद्धे यस्येति लोपेन किमर्थं य-यतौ ङितौ ।
ग्रहणं माऽतदर्थेऽभूद् वामदेव्यस्य नञ् स्वरे" ॥ इति ।

आस्यार्थ :–यस्येति लोपेन सिद्धे ङ्यङ्यो र्ङित्त्वे 'ययतोश्च' (6/2/156) इति सूत्रेण विधीयमानं नञ उत्तरस्य ययदन्तस्य अन्तोदात्तत्वमवामदेवशब्दस्य माभूत्, किन्तु अव्ययपूर्वपदस्वर एव यथास्यात् इत्येवमर्थं क्रियते । तत्र यद्येते परिभाषे न स्यातां तर्हि कृतेऽपि ङित्त्वे अवाम-देव्यशब्दे ययतोरिति स्यादेव इति ङित्त्वमनर्थकं स्यात् । अतो ङित्त्वमनयोरस्तित्वं ज्ञापयती"त्याह ह. भा. प. भास्क. प. 53, पृ. 345.

(ञ) "वामदेवाड् ङ्यङ्यौ' इति सूत्रे ङ्यङ्यतो र्ङित्त्वमनयोर्ज्ञापिकम्...... इत्याह भ. ना. प. शे. प्र. 82, 83, पृ. 307.

(ट) "अनयोर्ज्ञापकम्–""वामदेवाड् ङ्यङ्ङ्यौ' (4/2/9) इति ङ्यतो ङ्यस्य च ङित्करणम् । तद्धि न टिलोपाय, 'यस्य.' (6/4/148) इति लोपेन सिद्धत्वात् । किन्तु 'ययतोश्चातदर्थे' (6/1/156), इति विधीयमानमुत्तर-पदान्तोदात्तत्वम् अवामदेव्यशब्दे माभूदित्येवमर्थम् । यद्येते परिभाषे न स्याताम्, तर्हि उकारे लुप्ते ययद्रूपत्वानपायाद् भाव्यमेव स्वरेणेति ङित्करणमनर्थकं स्या"दित्याह शेषा. प. भास्क. प. 70, पृ. 438

(ठ) "टिड्ढाणञ्" (सू. 4/1/15) । 'वाम देवाड् ङ्यङ्ङ्यौ' (सू. 4/2/1) इति ङित्त्वम्' अननुबन्धक-ग्रहणे न सानुबन्धक-ग्रहणम्', 'तदनुबन्धकग्रहणे अतदनुबन्धकग्रङणं न' इति परिभाषयोः ज्ञापक"मित्याह श्री. ना. ज्ञा. सं. 4, पृ. 76.

1. न वामदेव्यमित्यर्थे 'नञ्' - अष्टा. 2/2/6. इति समासे रूपमिदम् ।
2. अष्टा. 6/2/156.
3. 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाऽव्ययद्वितीयाकृत्याः' - अष्टा. 6/2/2. 'अव्यये नञ् कु निपातानाम्' - वा. वै. सि. कौ. समासस्वर प्र. पृ. 658.
4. ङकारस्य 'चुटू' - अष्टा. 1/3/7. इतीत्संज्ञायां 'तस्यलोपः' - अष्टा. 1/3/9. इति लोपे इत्यर्थः ।
5. 'टेः' - अष्टा. 6/4/143 । ङित्यभस्याप्यनुबन्धकरण-सामर्थ्यात् टिलोपो भवतीति जया. का. 6/4/143.
6. अष्टा. 6/4/148.

'ययतोश्चातदर्थे'[1] इति सूत्रोक्ताभ्यां क्रमशः 'एकानुबन्धग्रहणे न द्वयनुबन्धकस्ये'-ति परिभाषया 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'तिपरिभाषया च ग्रहीतुमशक्यतया तद्विहितान्तोदात्तत्वस्वर-व्यावृत्तये, अव्ययपूर्वपद-स्वरसिद्धये चानुबन्धावमू स्वांशे चरितार्थौ भवतः । तत्र ज्ञापितासु परिभाषासु आद्यायाः फलम् 'ययतोश्चातदर्थे'[2] - इत्यत्र यद्ग्रहणेन ड्यतो ग्रहणाभावः । द्वितीयस्याः फलम् – 'पूरण-गुण-सुहितार्थ-[3]सदव्ययतव्यसमानाधिकरणेने'ति षष्ठीसमास-निषेधे तव्यतो ग्रहणाभावः । तेन तव्यता सानुबन्धकेन समासो[4] 'ब्राह्मण-कर्तव्य'मित्यत्र भवत्येव । तृतीयस्याः फलम् - अङ्ग्रहणे[5] [6]चङो ग्रहणाभावः । तेन [7]'श्वयतेरः' इति सूत्रम् अङिपरे [8]'अश्व' दित्यत्रैव प्रवर्तते न तु चङि परे [9]'अशिश्वय'दित्यत्र, तथा 'चङी'-ति क्रियमाणं द्विर्वचनं चङः शून्ये' [10]अपुषदित्यत्राङि न प्रवर्तते । इत्त्थं 'माङि[11]लुङ्' - इत्यत्राङितो मा शब्दस्य ग्रहणाभावोऽप्यस्याः फलम् । तेन 'माभवतु' 'मा भविष्यती'त्यादीनामपि प्रयोगाणां साधुत्वमुपपद्यते । न चैवं 'माजीवन्[12] यः परावज्ञा- दुःखदग्धोऽपि जीवती' ति प्रयोगे माजीवन्निति लटोऽ साधुत्वं शङ्क्यम् । यतो 'माङ्याक्रोशे'[13] - इति शदादेश-विधान-सामर्थ्यादत्र लटः साधुत्वं सुलभम् ।

इदमत्रावधेयम् - 'निरनुबन्धकेति परिभाषा प्रत्ययविषये ज्ञापितत्वाद् वर्णग्रहणे न प्रवर्तते, यदि तत्र प्रवर्तेत तर्हि 'यू'[14] - इति नदीसंज्ञा निरनुबन्धकयोरेव स्यात्

---

1. अष्टा. 6/2/156.
2. अष्टा. 6/2/156.
3. अष्टा. 2/2/11.
4. 'षष्ठी' - अष्टा. 2/2/37.
5. 'श्वयतेरः' - अष्टा. 7/4/18. इत्यत्रेत्यर्थः ।
6. 'विभाषा धेट्श्वोः' - इति च्ल्यादेशस्येत्यर्थः ।
7. अष्टा. 6/4/18.
8. 'टुओ श्वि गतिवृद्ध्योः'. धा. पा. भ्वा. अष्टा. 1010, इति श्वि धातोर्लुङि तिपि च्लौ 'जॄ स्तम्भु म्रुचु म्लुचु ग्रुचु ग्लुचु- ग्लुञ्चु श्विभ्यश्च' अष्टा. 3/1/58, इति च्लेरङि रूपमिदम् ।
9. 'टु ओ श्वि गतिवृद्ध्योः' धा. पा. भ्वा. 1010, इति श्वि धातोर्लुङि तिपि च्लौ 'विभाषा धेट् श्व्योः - अष्टा. 3/1/49, इति च्लेश्चङिरूपमिदम् ।
10. 'पुष् पुष्टौ' धा. पा. दिवा. 1182, इति पुष् धातोर्लुङि तिपि च्लौ 'पुषादि द्युताद्यॢदितः - अष्टा. 3/1/55, इति च्लेरङ् रूपमिदम् ।
11. अष्टा. 6/1/11.
12. शि. पा. व. 2.
13. वा. का. 3/2/124.
14. 'यू स्त्राख्यौ नदी' अष्टा. 1/4/3

'लक्ष्मीः'[1] 'चमू' रिति[2], न सानुबन्धकयोः - 'कुमारी'[3] 'ब्रह्मबन्धूः'[4] - एतयोरिति तथा 'एकानुबन्धके' ति परिभाषा 'वसोः [5]सम्प्रसारण' मित्यत्र नोपतिष्ठते, वसोरुगित्करण - सामर्थ्यात् तेन वसुग्रहणे क्वसु[6] - वस्वो[7]रुभयोर्ग्रहणं भवतीति । न चा सति वसोरुगित्त्वे 'वसोः सम्प्रसारणम्'[8] इत्युच्यमाने 'वस आच्छादने'[9] इति वस्धातोः 'चर्मवसः पश्ये'त्यत्रापि सम्प्रसारणं प्राप्नोतीति शङ्क्यम् यतो 'वस आच्छदने'[10] इति वस् धातोः सानुबन्धकत्वमेवास्ति । नापि 'वस[11] - निवासे' - इत्यस्य निरनुबन्धकस्यात्र ग्रहणं शङ्कनीयम्, यतस्तत्र [12]क्विपमाश्रित्यैव सम्प्रसारणं[13] सिद्धम् । न च वसोरुगित्त्वं विद्वानिवाचरतीति क्विबन्तात्[14] [15]क्त्वाप्रत्यये 'विद्वसित्वा' - इत्यत्र 'उदितो[16] वे'ति विकल्पेनेडागमार्थं कुतो न ? प्रत्ययानुबन्धो ह्येष समुदायानुबन्ध एवेत्याशङ्कनीयम् । यतोऽनभिधानात् क्बित्र नास्ति ।

---

1. 'लक्ष दर्शनाङ्कनयोः' धा. पा. चुरा. 1538, इति लक्ष्धातोः 'सत्यापपाशरूप-वीणा-तूल-श्लोक-सेना-लोमत्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्' - अष्टा. 3/1/25, इति णिचि तदन्तात् 'लक्षेर्मुट् च' उणा. सू. 3/4/40 इति ई प्रत्यये मुडागमे च कृते 'णेरनिटि' - अष्टा. 6/4/51, इति णिलोपे प्रतिपदिकत्वात् सौ रूपमिदम् ।
2. 'चम अदने' धा. पा. भाव. 469, इति चम् धातोः 'कृषि चमि तनि धनि सर्जिश्वर्जिभ्य ऊः' - उणा. सू. 1/81, इति ऊ प्रत्यये प्रातिपदिकत्वात् सौ रूपमिदम् ।
3. कुमारशब्दात् स्त्रियां 'वयसि प्रथमे' –
 अष्टा. 4/1/20, ङीपि रूपमिदम् ।
4. ब्रह्मबन्धुरस्या इत्यर्थे बहुव्रीहिसमासनिष्पन्नब्रह्मबन्धुशब्दात् 'ऊङुतः' -
 अष्टा. 4/1/66, इति ऊङ्प्रत्यये रूपमिदम् ।
5. अष्टा. 6/4/131.
6. 'क्वसुश्च' - अष्टा. 3/2/107.
 'भाषायां सदवस श्रुवः' - अष्टा. 3/2/108
7. 'विदेः शतुर्वसुः' - अष्टा. 7/1/36.
8. अष्टा. 6/4/131.
9. धा. पा. अदा. 1023.
10. धा. पा. अदा. 1023.
11. धा. पा. भ्वा. 1005, चुरा. 1943.
12. 'क्विपूच' - अष्टा. 3/2/76.
13. 'वचि स्वपि यजादीनां किति' - अष्टा. 6/1/15.
14. 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' - वा. वै. सि. कौ. नामधातु प्र. पृ. 295 इति क्विपूप्रत्ययान्तादित्यर्थः ।
15. 'समान कर्तृकयोः पूर्वकाले' -अष्टा. 3/4/21.
16. अष्टा. 7/2/56.

## णकारः

'अइउण्'[1] - इत्यत्र सकृदनुबद्धोऽपि 'लण्'[2] - सूत्रे पुनरनुबद्धो णकारानुबन्धः [3]'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षण'मिति परिभाषाज्ञापकः[4] । यतो

---

1. मा. सू. 1.
2. मा. सू. 6.
3.(क) व्याडिः पः सू. प. 58 पृ. 26.
 (ख) पु. दे. ल. पः व. प. 120, पृ. 160.
 (ग) सी. दे. बृ. प. वृ प. 1, पृ. 161.
 (घ) नी. दी. प. वृ. प. 1, पृ. 161.
 (ङ) ह. भा. प. भास्क. प. 1, पृ. 318.
 (च) भ. ना. प. शे. प. 1, पृ. 8.
 (छ) शेषा. प. भास्क. प. 1, पृ. 378.
4. तथाहि –
 (क) "कथं पुनर्ज्ञायते इयमस्तिपरिभाषेति । यदयं प्रत्याहारग्रहणेऽणिति णकारमासजति । कथं कृत्वा ज्ञापकम् । अत्र हि किम् अन्यो वर्ण आसङ्क्तव्यः । सन्ति हि बहवो वर्णाः । द्विरनुबध्यमाने चाऽस्मिण् णकारेऽण् - ग्रहणेषु संदेहो भवति । किंनु खलु पूर्वेणाऽऽहोस्वित्परेणेति । पश्यति त्वाचार्यः । अस्त्यणुग्रहणेषु संदेहः । व्याख्यानतो विशेषं प्रतिपादयिष्यामः । अतो ज्ञायतेऽस्तीयं परिभाषेति व्याख्यानतो विशेष-प्रतिपत्तिर्नहि संदेहहादलक्षणमिति । किमेतस्या ज्ञापने प्रयोजनम् । 'सनी- वन्तर्ध.' (6/2/49) इत्यत्र संदेहः । किंनु खलु इवन्तानामाहोस्विद् ईवन्तानामिति । अनया स दोषो न भवति । सनि इबन्तानामिति - व्याख्यायते" - इत्याह व्याडिः प. सू. प. 58, पृ. 26-27.
 (ख) "कथं पुनर्वर्णोत्सत्ताविवाऽयं णकारो द्विरनुबध्यते ?। 'व्याख्यानाच्च द्विरुक्तितः' । एतज् ज्ञापयत्याचार्यो भवत्येषा परिभाषा - व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहा-दलक्षणमिति । 'अणुदित्सवर्णस्ये' त्येतत्परिहाय पूर्वेणाण्-ग्रहणम्, परेणेण् ग्रहणमिति व्याख्यास्यामः" - इत्याह पत. व्या. म. भा. 1/1/2 - लण् मा. सू. 6.
 (ग) "इयं च परिभाषा 'लण्' (शिवसूत्र -6) इत्यत्र सूत्र - कारेण भाष्यकारेण च ज्ञापिते"-त्याह पु. दे. ल. प. वृ. प. 120, पृ. 160.
 (घ) "इयं परिभाषा 'लण्' (माहेश्वर सूत्र -6) इत्यत्र भाष्यकारेण ज्ञापिते"त्याह सी. दे. बृ. प. वृ. प. 1, पृ. 162.
 (ङ) "अण् ग्रहणेषु पूर्वणकारेण परणकारेण वेति संदेह-वारणाय 'लण्' (माहे. सू. 6) इति सूत्रे अन्यानुबन्धे कर्तव्ये पुनर्णकारानुबन्धनादियं परिभाषा ज्ञाप्यते" - इत्याह नी. दी. प. वृ. प. 1, पृ. 293.
 (च) "परिभाषायां ज्ञापकं तु 'वर्णोत्सत्ताविव लणूसूत्रे णकारोपादानम् इति भाष्यकारादयः" - इत्याह ह. भा. प. भास्क. प. 1, पृ. 318.
 (छ) "असन्दिग्धानुष्ठान-सिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारण - रूपाचार्यव्यवहारेण संदेह-निवृत्ते-र्व्याख्यानातिरिक्त-निमित्तानपेक्षत्वं बोध्यते" - इति ग्रन्थेन ज्ञापकत्वमस्य सूचयति भ. ना. प. शे. प. 1, पृ. 8-9.
 (ज) "अत्र च ज्ञापकम् - 'अइउण्' - इत्यत्र आसक्तस्यैव णकारस्य 'लण्' - इत्यत्र पुनरासञ्जनम् । तद्धि अनभिमत-प्रतीति-कृदपि क्रियते अभिमतार्थ-प्रतीते-र्व्याख्यान-साध्यत्व-बोधनाये"त्याह शेषा. प. भास्क. प. 1, पृ. 378.
 (झ) "व्याख्यानतो विशेषप्रतीतिर्नहि संदेहा-दलक्षणम्' - इति परिभाषाज्ञापनाय पुनर्णकारोऽनुबन्ध इतिस्थितमाकरे" – इत्याह त. बो. संज्ञा. प्र., पृ. 3.

भगवत्पाणिनितपस्तुष्टो महेश्वरः स्वढक्कानादैः पाणिनीयव्याकरणनिदान - चतुर्दश-सूत्राणि समुपदिशन् प्रतिसूत्रमेकैकमनुबन्धमन्वबध्नादणादिप्रत्याहार - सिद्धि - द्वारा लाघवेन पाणिनि-शास्त्रस्योद्गमायेति प्रसिद्धचरं तथ्यम् ।[1] तत्र ककार-ङकार - चकार - टकार - मकार - ञकार - षकार - शकार - वकार - यकार - रेफ - लकारेति द्वादश अनुबन्धाः सकृदनुबद्धाः, किन्तु णकारानुबन्धः प्रथमसूत्रेऽनु-बद्धोऽपि पुनः षष्ठसूत्रे कुतोऽनुवद्धः ? इति प्रश्नः समुदेति, प्रथम-षष्ठ-सूत्रयोरेकस्यैव णकारस्यानुबन्धने हि 'अण्' 'इण्' - प्रत्याहारघटित-सूत्रेषु पाणिनि-तात्पर्य-संदेहोऽपि समुदेति, स च 'अण्पदम् 'अइउ' - इत्येतत्त्रितयविषयक बोधतात्पर्येणोच्चरितम्, उत 'अ इ उ ऋ - ऌ - ए - ओ - ऐ - औ - ह - य - व - र - ल - इत्येतच्चतुर्दश-वर्ण - विषयकबोधतात्पर्येणोच्चरितम् ? 'इण्पदम् - 'इ - उ' - इत्येतद् वर्णद्वयविषयकबोधतात्पर्येणोच्चरितम्', उत 'इ - उ - ऋ - ऌ - ए - ओ- ऐ - औ - ह - य - व - र - ल' -इत्येतत्त्रयोदश-वर्णविषयकतात्पर्येणोच्चरितं वा' इत्याकारकः । इत्थं संदेहरहितप्रवृत्ति-प्रयोजकेऽत्र शास्त्रे संदेहजनकं 'लण्' - घटकणकारानुबन्धनं 'व्याख्यानतः. - इति परिभाषाया ज्ञापकमिति निश्चीयते । ज्ञापितायां चास्यामनया संदेहेऽपाकृते तत्तत्प्रत्याहारसिद्धिद्वारायं णकारोऽनुबन्धः स्वांशे चरितार्थो भवति । अस्याः परिभाषाया अर्थस्तु 'व्याख्यानतः अभिमतार्थ-बोधकाभियुक्तवचनाद् विशेषस्य अभिमतार्थस्य निर्णयो भवति, यस्याः शास्त्रमलक्षण-मनभिमतार्थबोधकं न भवतीति । अत्र संदेह-पदेन कोटि-द्वयावगाहिज्ञानम्, अभिमतानभिमतसाधारणज्ञानम्, अनभिमतमात्रज्ञानं चोच्यते । अस्याः फलन्तु अण्-इण्ग्रंहणेषु [2]'अणुदित्सवर्णस्य चाप्रत्ययः' - इत्येकं सूत्रं विहाय सर्वत्र पूर्वेणाण्ग्रहणम्,

---

(ञ) "किं पुनरिमे वर्णा उत्सन्ना यदनुबद्धोऽपि पुनर्णकार एवानुबध्यते, यत एवमण्ग्रहणेषु इण्ग्रहणेषु सन्देहो भवति ? सत्यमेतत्, ज्ञापयत्याचार्यो भवत्येषा परिभाषा - 'व्याख्यानतो विशेष-प्रतिपत्तिर्नहि संदेहादलक्षणम्' - इतीत्याह ह. मि. पदम. लण् - 6.

1. "येनाक्षर समाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पणिनये नमः ।।" -
इति पा. शि. 57 ।
"इमानि माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि" वै. सि. कौ. संज्ञा प्र., पृ. 3
"अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्धं समुपादिष्टं पाणिन्यादीष्ट-सिद्धये ।।" - न. का. 2,
"अनुबन्धाश्च महेश्वरकृता एव" - ल. श. शे. संज्ञ प्र. पृ. 19 इति हि शिक्षाकार - भट्टोजिदीक्षित-नन्दिकेश्वर - भट्टनागेशैरुक्तम् ।

2. अष्टा. 1/1/69.

इणग्रहणं च सर्वत्र परेणैवेति अभिमतार्थ-बोधकाभियुक्तवचनादभिमतार्थनिर्णयो बोध्यः । एवं [1]'ङेर्यः' 'ङेराम् [2]नद्याम्नीभ्यः' - इत्यादौ कोटिद्वयावगाहि-ज्ञाने प्राप्ते [3]'ङेर्यः' -इत्यत्र चतुर्थ्येकवचनस्य [4]'ङेराम्' -इत्यत्र सप्तम्येकवनस्य ग्रहणमिति व्याख्यानादभिमत-निर्णयः, [5]'प्रातिपदिकान्तनुम्- विभक्तिषु चे' - त्यादौ उत्तरपद - तदितर - प्रातिपदिकान्तमात्रग्रहणे प्राप्ते 'उत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव णत्व'मितिव्याख्यानादभिमतनिर्णयः, [6]अट् कुप्वाङ् नुम एव ग्रहणे प्राप्ते 'नुम्ग्रहणमनुस्वारोपलक्षणार्थ'मिति व्याख्यानादभिमत-निर्णयः, [7]सनीवन्तर्धभ्रस्जदम्भु श्रि-यूर्णुभर-ज्ञपिसनामित्यत्र किन्नु खलु इवन्तानामाहोस्विद् ईवन्तानामिति संदेहे प्राप्ते 'सनि इवन्ताना'मिति व्याख्यानादभिमतार्थ-निर्णयः, 'इको [8]गुण वृद्धी' इति संज्ञासूत्रं, परिभाषासूत्रं, विधिसूत्रं, नियमसूत्रम्, अतिदेशसूत्रम्, अधिकारसूत्रं वेति संदेहे 'नेदं संज्ञासूत्रं, संज्ञयोः कृतत्वात् असम्भवाच्च, नापि विधिः, तत्तद्विधिवैयर्थ्यापत्तेः, पूर्वोत्तर-साहचर्येण परशास्त्रोपकारकत्व-निर्णयाच्च, नाऽपि नियमः, वाक्यभेदापत्तेस्तथासति तत्-प्रकरणे पाठौचित्याच्च, नाप्यतिदेशः, असम्भवात्, नाप्यधिकारः, तथा सति 'इको गुणवृद्धी नेति पाठौचित्यात्, किन्तु परिभाषेति "नापि तच्छेषो नापि तदपवादोऽन्यदेवेदं परिभाषान्तरमसम्मबद्धमनया परिभाषये"ति [9]भाष्य–व्याख्यानादभिमतार्थ-निर्णयश्चास्याः फलानि ।

## णकार-नकारौ

[10]'मन्त्रे श्वेतवहोक्थशस् पुरोडाशो ण्विन्निति' सूत्रे ण्विनो णकारनकारावनुबन्धौ [11]'एकानुबन्धकृतमनित्य' मिति परिभाषाया [12]ज्ञापकौ । यतोऽस्या अभावेऽमू

1. अष्टा. 7/1/13.
2. अष्टा. 7/3/116.
3. अष्टा. 7/1/13.
4. अष्टा. 7/1/116.
5. अष्टा. 8/4/11.
6. अष्टा. 8/4/2.
7. अष्टा. 7/2/49.
8. अष्टा. 1/1/3.
9. व्या. म. भा. 1/1/3/3.
10. अष्टा. 3/2/71
11. व्याडिः प. सू. प. 45, पृ. 22.
12. तथाहि–'इह शास्त्रे एकानुबन्धकृतं ञित्वं णित्वं तावदनित्यं भवति । कथं ज्ञायते । यदयं 'मन्त्रे श्वेतवहोक्थशस्.' (3/2/71) इति णित्त्वन्नित्याह । तत्र णित्करणं वृद्ध्यर्थम् । नित्करणं स्वरार्थं तत्त्वेकानुबन्धेन शक्यते लब्धुम् । अत्र ञिरिति वक्तव्यम् । स्वरश्च वृद्धिश्च भविष्यति । एवं सिद्धे यदयं द्व्यनुबन्धं करोति तज् ज्ञापयति अस्तीयं परिभाषा एकानुबन्धकृत- मनित्यमिति । किमेतस्या ज्ञापने प्रयोजनम् । ज्योतिरधिकृत्य कृते ग्रन्थे ज्योतिषम्, सोमेन्द्रावस्य चरोर्देवता सोमेन्द्रश्चरुः । णकृतस्यानित्यत्वाद् वृद्धिर्न भवती"त्याह व्याडिः प. सू. प. 45, पृ. 22

व्यर्थौ । तथाहि–'श्वेतवा इन्द्रः' 'उक्थशा यजमानः' 'पुरोदाशन्त एनं पुरोडाः'–इत्यादौ क्रमशो [1]वह् [2]शंस् [3]दाश् धातुभ्यो ण्विन् सूत्रेणानेन विहितस्तत्र णकारो वृद्ध्यर्थः[4] नकारश्च [5]स्वरार्थोऽनुबद्धौ । अस्या अभावेऽनेन ञिप्रत्ययविधानेऽपि ञकारानुबन्धेनैव [6]वृद्धि–स्वरौ[7] सुलभावित्यमू व्यर्थौ । ज्ञापितायां चास्यामनयामीषु प्रयोगेषु कदाचिद् वृद्धि–स्वरौ न स्यातामिति नियमेन तौ सम्पादयितुमिमौ णकार-नकारानुबन्धौ स्वांशे चरितार्थौ भवतः । ज्ञापिताया अस्याः फलं तु 'ज्योतिरधिकृत्य कृतो ग्रन्थः [8]ज्योतिषम्', 'सोमेन्द्रावस्य चरोर्देवता [9]सोमेन्द्रश्चरु'रित्यादौ णकृतस्यानित्यत्वाद् [10]वृद्ध्यभावः । अस्या असत्त्वे हि [11]वृद्धिरत्र दुर्वारा स्यात् ।

## पकारः

'दैप्[12]शोधने' इत्यत्र दैपः पकारानुबन्धः [13]'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकः[14] । यतोऽस्या अभावेऽत्र दैपः पकारानुबन्धो व्यर्थः । अयं हि

---

1. 'वह प्रापणे' धा. पा. अदा. 1004.
2. 'शंसु स्तुतौ' धा. पा. भ्वा. 728.
3. 'दाशृ दाने' धा. पा. भ्वा. 882.
4. 'अचोऽ ञ्णिति'–अष्टा. 6/2/115, 'अत उपधायाः' अष्टा. 7/2/116
5. 'ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197
6. 'अचोऽ ञ्णिति'–अष्टा. 7/2/115, 'अत उपधायाः' अष्टा. 7/2/116
7. 'ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197
8. 'ज्योतिष-शब्दात् 'अधिकृत्य कृते ग्रन्थे'–अष्टा. 4/3/87, इत्यणि रूपम् ।
9. सामेन्द्र-शब्दात् 'सास्य देवता'–अष्टा. 4/2/24, इत्यणि रूपम् ।
10. 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117.
11. 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117
12. धा. पा. भ्वा. 924.
13. (क) व्याडिः प. पा. 124, पृ. 42.
    (ख) पु. दे. ल. प. वृ. प. 69, पृ. 142.
    (ग) सी. दे. बृ. प. वृ. प. 105, पृ. 260.
    (घ) नी. दी. प. वृ. प. 103, पृ. 112.
    (ङ) ह. भा. प. भास्क. प. 107, पृ. 367.
    (च) भ. ना. प. शे. प. 115, पृ. 351.
    (छ) शेषा. प. भास्क. प. 98, पृ. 1
14. तथाहि–
    (क) "ननु च 'लक्षणप्रतिपादोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् । न तु लाक्षणिकस्य 'इत्यनया परिभाषया' दो अवखण्डने', 'देङ् रक्षणे', 'धेट्पाने'–इत्येतेषां ग्रहणं न स्यात्, नैतदस्ति, तस्या हि परिभाषाया 'गामादाग्रहणेष्वविशेषः' इत्यपवादोऽस्ति, तेन सत्यपि लाक्षणिकत्वे दो- देङौ तावद्गृह्येते । धेटोऽपि लिङ्गाद्ग्रहणमनुमीयते । तत्पुनर्लिङ्गं दैपः पकारानुबन्धः, स हि 'अदाप्' इति दाप्प्रतिषेध-सामान्यग्रहणार्थः क्रियते । यदिचास्याः परिभाषाया इह व्यापारः स्याद्, दैपः पकारानुबन्धकरणमनर्थकं स्यात् । लाक्षणिकत्वादेव ह्यस्य ग्रहणं न भविष्यतीति किं प्रतिषेधेऽस्य ग्रहणेने"त्याह जि. बु. न्या. 1/1/20.
    (ख) "अस्याश्च परिभाषाया दैपः पित्त्वं लिङ्गम्, अन्यथा हि लाक्षणिकत्वादेवास्य ग्रहणं न भविष्यती" त्याह ह. मि. पदम. 1/1/20.

न [1]'अनुदात्तौ सुप्पिता'वित्यनुदात्तार्थः प्रत्ययस्यैव पितोऽनुदात्तत्वमनेन विधीयते । नापि च 'दाधाघ्वदा'बिति[2] दापो घुत्वप्रतिषेधार्थः, स च प्रतिषेधोऽत्र पकारानुबन्धानुबन्धनं विना न सम्भवति, तदनुबन्धनं विना कृतेऽप्यात्वे दाबूरूपताया असम्भवादित्यप्यस्या अभावे वक्तुं शक्यम् ? यतो 'लक्षणप्रतिपदोक्तयोः[3] प्रतिपदोक्तस्य ग्रहण' मिति परिभाषयैवैतत्सूत्रस्थ-दाग्रहणेन दैप आत्वे कृते निष्पन्नस्य दापो दाशब्दस्य ग्रहणाभावः सुलभः । इत्थम् अदाबिति प्रतिषेधार्थमनुबद्धो दैपः पकारानुबन्धः सर्वथा व्यर्थः । ज्ञापितायां चास्यामनया दैपो दाशब्दस्यापि 'दाधाघ्वदा'बिति सूत्रस्थदाशब्देन ग्रहीतुं शक्यतया प्राप्ताया घुसंज्ञाया 'अदा'बिति प्रतिषेधाय पकारानुबन्धोऽत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्या 'घुमास्थागापाजहातिसां हली[4]'त्यादौ' [5]दाधाघ्वदा'बित्यादौ च गामादाग्रहणेषु अविशेषेण सर्वेषामेव गामादारूपाणां ग्रहणं भवति न तु विशेषभूतानामेवेत्यर्थः । ज्ञापिताया अस्याः फलन्तु 'गीत'मित्यत्र 'गैशब्दे'[6] इत्यस्माद्धातोः क्तप्रत्यये[7] 'आदेच उपदेशेऽशिती'त्यात्वे[8] निष्पन्नस्य गारूपस्य लाक्षणिकत्वेऽपि - 'घुमास्था

---

(ग) "दैपः पित्त्वमिह प्रतिषेधार्थं, न त्वनुदात्तार्थम्, 'अनुदात्तौ सुप्पितौ 'इति प्रत्ययस्यैव पितोऽनुदात्तत्वात् । न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शङ्क्यं, पित्करणस्यानर्थक्य- प्रसङ्गात् । इदमेव च दैपः पित्त्वं 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहु" रित्याह ज्ञा. भि. त. बो. भ्वा. प्र. पृ. 123-124.

(घ) "अत्र च ज्ञापकं दैपः पित्त्वम् । तद्धि अदाप् इति सामान्यग्रहणार्थम् । लाक्षणिकत्वादेवाग्रहणे सिद्धे किं निषेधसामान्यग्रहणार्थेन पित्त्वेनेत्याह नी. दी. प. वृ. प. 103, पृ. 312.

(ङ) "अत्र च ज्ञापकं दैपः पित्त्वम् । तद्ध्यदाबिति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन । तेन चैकदेशानुमति द्वारा सम्पूर्णपरिभाषा ज्ञाप्यते" इत्याह भ. ना. प. शे. प. 115, पृ. 351

(च) "ज्ञापकमदाबिति प्रतिषेधार्थं क्रियमाणं दैपः पित्त्वम् । इतरथा लाक्षणिकत्वादेव दैपो दारूपस्याग्रहणसिद्धे"-रित्याह शेषा. प. भास्क. प. 98, पृ. 456.

1. अष्टा 3/1/4.
2. अष्टा. 1/1/20
3. (क) व्याडिः प. सू. प. 3, पृ.3
   (ख) "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य - पु. दे. प. वृ. प. 3, पृ. 113
   (ग) " " "
   सी.दे. वृ.प. वृ. प. 39, पृ. 208
   (घ) 'लक्षणप्रतिपदोक्तयोः, प्रतिपदोक्तस्यैव ग्रहणम्' नी. दी. प. प. 102
   (ङ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य - ह. भा. प,भास्क. प. 41, पृ. 341
   (च) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' - भा. ना. प. शे. प. 114, पृ. 348.
   (छ) " " " - शेषा. प. भाष्क. प. 97, पृ. 455
4. अष्टा. 6/4/66
5. अष्टा. 1/1/20.
6. धां.पा.भ्वा. 917.
7. 'निष्ठा' - - अष्टा. 3/2/102.
8. अष्टा. 6/1/45.

[1]गापाजहातिसांहली' ति ईत्वस्य 'प्रणिमाते'त्यत्र प्रनिपूर्वकात् 'मेङ्प्रणिदाने'[2] इति मेधातोस्तृचि[3] 'आदेच उपदेशेऽशिती'त्यात्वे[4] मारूपस्य लाक्षणिकत्वेऽपि' नेर्गदे-'[5] ति णत्वस्य, 'देङ्रक्षणे'[6] इत्यस्य कृतात्वस्य दारूपस्य लाक्षणिकत्वेऽपि 'दाधाघ्वदाप्'[7] इतिघुसंज्ञायाश्च सिद्धिः । अस्य असत्त्वे हि 'लक्षणप्रतिपदोक्त' - परिभाषया तत्र तत्र सूत्रेषु गामादानां ग्रहणं न स्यादिति नैतेषु [8]ईत्व- [9]णत्वघुत्वानि सिद्ध्येयुः[10] ।

इदमत्रावधेयम् – 'घुमास्था गा पा जहातिसां हलि'[11] इतिसूत्रे माग्रहणेन मा[12]-माङ्[13]-मेङः[14] गाग्रहणेन 'गैशब्दे'[15] 'गा स्तुतौ'[16] 'गाङ्[17] गतौ' 'गाङ्लिटि'[18] 'णौ च संश्चङोः'[19] इत्येते च गृह्यन्ते, [20]'दाधाघ्वदा'बित्यत्र

---

1. अष्टा. 6/4/66.
2. धा.पा. भ्वा. - 961
3. 'ण्वुल्तृचौ' - अष्टा. 3/1/133.
4. अष्टा. 6/1/45
5. 'नेर्गद - नद - पत - पद - घु - मा - स्यति - हन्ति - याति - वाति - द्राति - प्साति - वपति - वहति - शाम्यति - चिनोति - देग्धिषुच । - अष्टा. 8/4/17.
6. धा. पा. भ्वा. 962.
7. अष्टा. 1/1/20
8. 'घुमास्थागापाजहातिसां हलि' - - अष्टा. 6/4/66
9. 'नेगदनद.' - - अष्टा. 3/4/17.
10. 'दाधाघ्वदाप्' - - अष्टा 1/1/20.
11. अष्टा. 6/4/66.
12. 'मा माने' धा. पा. अदा. 1062.
13. 'माङ् माने शब्दे च' धा. पा. जुहो 1088, तथा 'माङ्माने' धा. पा. दिवा. 1142
14. 'मेङ् प्रणिदाने' धा. पा. भ्वा. 961
15. धा. पा. भ्वा. 917.
16. धा. पा. जुहो. 1106.
17. धा.पा. भ्वा. 950
18. अष्टा. 2/4/49
19. अष्टा. 2/4/51
20. अष्टा. 1/1/20

दाग्रहणेन च 'दो[1]' -'दाञ्[2] -देङ्दाण[3]., [4]इति । इयं च परिभाषा लक्षण-प्रतिपदोक्तपरिभाषाया एवापवादो, न तु 'अर्थवत्'[5] - 'सहचरित'[6] - 'लुग्विकरण'[7] - निरनुबन्धक[8] - परिभाषाणामपि । तथाहि यदीय'मर्थवत्' - परिभाषाया अप्यपवादः स्यात्तदा घुसंज्ञायां[9] दाशयतेर्दाशब्दस्यापि[10] ग्रहणाऽऽपत्तिः स्यात्, यदि चेयं 'सहचरित' - परिभाषाया अप्यपवादः स्यात्तर्हि 'ह्वावामश्चे'[11]-त्यत्र 'मामाने'[12] इत्यस्य, 'गापोष्टक्'[13] इत्यत्र गाङ्ोऽपि[14] ग्रहणापत्तिः - स्यात् यदि पुनः 'लुग्विकरण' - परिभाषाया अपीयमपवादः स्यात्तर्हि 'नेर्गदे-'[15] ति सूत्रे 'मामाने'[16] इत्यस्यापि ग्रहणापत्तिः स्यात् । नापीयं 'निरनुबन्धक' परिभाषाया अपवादः, यतः सा प्रत्यय-विधि-विषया । इत्थं घुसंज्ञायां [17]दाशयतेर्दाशब्द-स्यानर्थकत्वाद् अर्थवद्- ग्रहणपरिभाषया ग्रहणाभावः, ह्वावामश्चे[18] त्यत्र 'सहचरित' - परिभाषया - सानुबन्धकह्वेञ्[19]मेङ्[20]साहचर्यान् माङ्[21]

1. 'दो अवखण्डने' दिवा. 1148
2. 'डुदाञ् दाने' जुहो. 1091
3. 'देङ्रक्षणे' धा. पा. भ्वा. 962
4. 'दाण् दाने' धा. पा. भ्वा. 930.
5. 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' ।
6. 'सहचरितसहचरितयोः संहचारितस्यैव ग्रहणम्' ।
7. 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' ।
8. 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' ।
9. 'दाधाघ्वदाप्' अष्टा. 1/1/20.
10. 'दाशहिंसायाम्' धा. पा. भ्वा. 1280, इति दाशधातोर्णिचि तदन्तस्य दाशधातोरित्यर्थः ।
11. अष्टा. 3/2/2
12. धा. पा. अदा. 1062.
13. अष्टा. 3/2/8
14. 'गाङ्गतौ' धा. पा. भ्वा. 950
15. अष्टा. 8/4/17
16. धा. पा. अदा. 1062.
17. ण्यन्तस्य 'दाश हिंसायाम्' धा. पा. स्वा. 1280, इति दाशधातोरित्यर्थः ।
18. अष्टा. 3/2/2
19. 'ह्वेञ् स्पर्धायां शब्दे च'– धा. पा. भ्वा. 1009
20. 'मेङ् प्रणिदाने'– धा. पा. भ्वा. 961.
21. 'माङ् माने शब्दे च धा. पा. जुहो. 1088 तथा माङ् माने' धा. पा. दिवा. 1142.

मेङोरेव[1] ग्रहणं 'मानाने'[2] इत्यस्य ग्रहणाभावः., तथा [3]'गापोष्टगि'त्यत्र परस्मैपदिना [4]पिबतिना साहचर्याद्, [5]गायतेरेव ग्रहणं गाङो[6] ग्रहणाभाव, एवं लुग्विकरणपरिभाषया 'नेगर्द'[7] इत्यत्र माङ्[8]- मेङोरेव ग्रहणं'[9] 'मा[10] माने' इत्यस्य ग्रहणाभावश्च सिद्धयन्ति । तथ्यमिदं पुरुषोत्तमदेवेन स्फुटमन्यथा प्रतिपादितम्[11] । न चैवं [12]'दाधाघ्वदा'बितिसूत्रे सहचरितपरिभाषया गायतेरेव[13] ग्रहणं शङ्क्यम्, यतो 'गाङ्कुटदिभ्योऽञ्णिन् ङि'दिति सूत्रे गाङो ग्रहणम् ईत्वविधौ'[14] सहचरित-

---

1. 'मेङ् प्राणदाने'–
   धा. पा. भ्वा. 961.
2. धा. पा. अदा. 1062
3. अष्टा. 3/2/8
4. 'पा पाने'–
   धातु पा. भ्वा. 9/17
5. 'गै शब्दे'– धा. पा. भ्वा. 917
6. 'गाङ्गतौ'–
   धा. पा. भ्वा. 950
7. अष्टा. 8/4/17
8. माङ्माने शब्दे च' धा. पा. जुहो. 1088, तथा माङ्माने धा. पा. दिवा. 1142.
9. 'मेङ्प्रणिदाने' धा. पा. भ्वा. 961.
10. धा. पा. अदा. 1062.
11. तथाहि– माग्रहणे यदि निरनुबन्धक-परिभाषया व्यवस्था-स्यात्तदा कै गै शब्दे, गा स्तुतौ 'इणो गा लुङि' (2/4/45) इत्यमीषामेव ग्रहणं स्यान्न गाङ्गतावित्यस्यापि । अथ लक्षण-प्रतिपदोक्त-परिभाषया व्यवस्था तदा कैगैशब्दे इत्यस्य ग्रहणं न स्यात् । अथवा लुग्-विकरणपरिभाषया व्यवस्था तदा 'इणो गा लुङि' (2/4/49) इति इण्वदिकः" (2/4/45 वा. 1) इत्यनयोर्ग्रहणं न स्यात् । एवं माग्रहणेऽपि यदि निरनुबन्धक-परिभाषया व्यवस्था स्यात्तदा मा माने इत्येतस्यैव ग्रहणं स्यात्, न माङ्मेङोः । अथ लक्षणप्रतिपदोक्तपरिभाषया तदा मामाङोरेव ग्रहणं नस्यान्न मेङः । लुग्विकरणपरिभाषया च माङ्मेङोरेव ग्रहणं स्यान्न मामाने इत्यस्य । तथा दाग्रहणेऽपि यदि निरनुबन्धकपरिभाषया-व्यवस्था स्यात्तदा दोऽव-खण्डने इत्यस्यैव ग्रहणं स्यान्नान्येषाम् । अथ एकानुबन्धकपरिभाषया तदा दाण् देङो ग्रहणं स्यात् न तु डुदाञः । अथ लक्षणप्रतिपदोक्तपरिभाषया तदा दाण्डुदाञोरेव ग्रहणं स्यान्न दा-देङो-रिति । तत्रैवं गामादाग्रहणेषु परिभाषाणां विरोधे सति द्वयं भवति । अप्रवृत्तिः स्यात् पर्यायप्रवृत्तिर्वा । तत्र यदा प्रवृत्तिः सिद्धमविशेषेण ग्रहणम् । अथ पर्यायेण प्रवृत्तिस्तथापि सर्वेषां ग्रहणे गामादाग्रहणेष्वविशेष इति सिद्धो भवतीति ल. प. वृ. प. 69, पृ. 142.
12. अष्टा. 1/1/20.
13. 'गै शब्दे धा. पा. भ्वा. 917
14. 'घुमास्था गापा जहातिसांहलि'–
   अष्टा. 6/4/66.

परिभाषाया अप्रवृत्तिं ज्ञापयति । यतोऽत्र तद् अध्य गीष्टेत्यत्र[1] ङित्त्वार्थं' क्रियते, ङित्त्वं चेत्त्वार्थम्, 'सहचरितपरिभाषाया ईत्वविधौ[2] प्रवृत्तौ हि 'गाङ.[3] इति सूत्रे गाङो ग्रहणं व्यर्थम् ।

## लकारः

'परस्मैपदानां[4] णलतुसुस्थलथुसणल्वमाः' इति सूत्रे णलि [5]स्वरार्थमनुबद्धो लकारानुबन्धः 'भवति लकारस्येत्संज्ञे'ति वचनस्य-ज्ञापकः[6], यतोऽस्य वचनस्याभावेऽत्र स्वरार्थमनुबद्धो लकारो व्यर्थः । न हिं लकारस्यात्र केनापीत्संज्ञा प्राप्नोतीति [7]'लितो' तिस्वरसंभवः । न च [8]'हलन्त्य' मित्यनेनेत्संज्ञा सुलभेति शङ्क्यम् । यतो लकारस्येत्संज्ञां विना 'आदिरन्त्येन[9] सहेते'ति हल्संज्ञाया अभावेन हल्पदेन लकारो

---

1. 'अधिपूर्वकात्' 'इङ्अध्ययने' धा. पा. अदा. 1046, इति इङ् धातोर्लुङि ते 'विभाषालुङ्-लृङोः– अष्टा. 2/4/50 इति इङो गादेशपक्षे च्लेः सिचि 'घुमास्थागापाजहातिसां हलि' अष्टा. 6/4/66, इतीत्वे षत्वे ष्टुत्वे च कृते रूपमिदम् ।
2. 'घुमास्यागापा-जहातिसांहलि'– अष्टा. 6/4/66.
3. 'गाङ् कुटादिभ्योऽञ्णिन् ङित्'– अष्टा. 1/2/1.
4. अष्टा. 3/4/82.
5. 'लिति'– अष्टा. 6/1/193 तथाहि– "अवश्यमेवात्र स्वरार्थो लकार इत् कर्त्तव्यः । 'लिति प्रत्ययात् पूर्वमुदात्तं भवती'त्येष स्वरो यथा स्यात् । नैतदस्ति प्रयोजनम् । धातुस्वरे कृते द्विर्वचनं, तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति । कथं पुनरयमन्तोदात्तः स्याद् यदैकाच्? । व्यपदेशिवद्भावेन । यथैव तर्हि व्यपदेशिवद्भावेनाऽन्तोदात्त एवमाद्युदात्तोऽपि, तत्रान्तर्यत आद्युदात्तस्याऽऽद्युदात्त आदेशः प्रसज्येत । सत्यमेवमेतत् । न खल्विदं लक्षणमस्ति धातोरादिरुदात्तो भवती'ति, इदं पुनरस्ति 'धातोरन्त उदात्तो भवती'ति । सोऽसौ लक्षणेनान्तोदात्तस्तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति । एतदप्यादेशे नास्ति 'आदेशस्यान्त उदात्तो भवती'ति, प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य यथैवान्तोदात्त एवमाद्युदात्तोऽपि । द्विः प्रयोगे खल्वपि द्विर्वचने उभयोरन्तोदात्तत्वं प्रसज्येत । 'अनुदात्तं पदमेकवर्ज'मिति नास्ति यौगपद्येन संभवः । पर्यायः प्रसज्येत । तस्मात् स्वरार्थो लकारः कर्त्तव्य" इत्याह पत. व्या. म.. भा. 3/4/1/82.
6. तथाहि–
(क) अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति– 'भवति लकारस्येत्संज्ञेति यदयं णलं लितं करोती'त्याह पत. व्या. म. भा.–1/3/2/3
(ख) "स्वरार्थं णलो लकाराऽऽसञ्जनं (3/4/82) ज्ञापकं 'भवति लकारस्येत् संज्ञेति । तेन हलन्त्यमित्यत्र (1/3/3) इतरेतराऽऽश्रयं न भवतीति भाष्य"मित्याह पु. दे. ज्ञा. समु. द्वादशे धातुसम्बन्धपादे पृ. 76.
7. अष्टा. 6/1/193.
8. अष्टा. 1/3/3.
9. अष्टा. 1/1/71

न ग्रहीतुं शक्यः । ज्ञापिते चास्मिन् वचनेऽनेनात्र लकारत्येत्संज्ञायाः सुलभतया [1]स्वरार्थो लकारानुबन्धः स्वांशे चरितार्थो भवति । न च णलो लकारः श्रुत्यर्थ इति नास्य वचनस्य ज्ञापकत्वं तस्येति शङ्क्यम्, यतोऽसौ लकारः क्वापि न श्रूयते । किञ्चास्य श्रुत्यर्थत्वे [2]हल्ङ्यादिसूत्रेऽपृक्तं हलिति हल्ग्रहणं व्यर्थं भवेत् । तथाहि– 'बिभेद'[3] इत्यादौ णलोऽकार-लोपनिवृत्त्यर्थं हल्ग्रहणमत्र सूत्रे कृतं विद्यते । यदि तु णलो लकारः श्रुत्यर्थः स्यात्तदा अपृक्तग्रहणेनैव लोप-निवृत्तौ सिद्धायां हल्ग्रहण-मत्रानार्थंक स्यात् । ज्ञापितस्यास्य वचनस्य फलन्तु [4]'हलन्त्य' मित्यत्रान्योन्याश्रयाभावः । अस्यासत्त्वे हि इत्पदार्थ-ज्ञानसापेक्षं हल्पदार्थ-ज्ञानम्, हल्पदार्थज्ञान-सापेक्षं चेत्पदार्थ-ज्ञानमितीत्पदार्थ हल्पदार्थज्ञानयोः परस्परापेक्षत्वेन नैकतरस्यापि ज्ञानं सम्भवति, तथा सति वाक्यार्थज्ञानं प्रति पदार्थज्ञानं कारणमिति कार्यकारणभावपक्षे[5] आदिरन्त्येन[6] सहेता' 'हलन्त्य'[7]-मिति वाक्यार्थयोः परस्परापेक्षत्वेन तयोर्ज्ञानं नोपपादयितुं शक्यत इति [8]'हलन्त्य'मित्यत्र ज्ञप्तावन्योन्याश्रय-दोषो दुर्वारः स्यात् । ज्ञापिते चास्मिन् वचनेऽनेन हल्पदार्थज्ञानं विनापीत्पदार्थज्ञानं सुलभमिति 'हलन्त्य'[9]-मित्यत्रान्योन्याश्रयो दोषो नाऽऽपतति । नचास्य वचनस्याभ्युपगमे 'हल विलेखने'[10] इति हल् धातोर्लकारस्यापीत्त्वाऽऽपत्तिः शङ्क्या, यतो 'हलसीराट्ठग्'[11] इति

---

1. लिति–
   अष्टा. 6/1/193.
2. 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' –
   अष्टा. 6/1/68.
3. 'भिदिर् विदारणे' धा. पा. स्वा. 1440. इति भिद् धातोर्लिटि तिपि तिपो णलि द्वित्वादिषु कृतेषु रूपमिदम् ।
4. अष्टा. 1/3/3.
5. सिद्धान्ते वाक्य-स्फोटस्याखण्डस्य तद्गतजातेर्वाचकत्वाभ्युपगमात् वाक्यार्थोऽखण्ड एवेति 'पक्ष' इत्युक्तम् ।
6. अष्टा. 1/1/71
7. अष्टा. 1/3/3.
8. अष्टा. 1/3/3
9. अष्टा. 1/3/3.
10. धा.पा. भ्वा. 837.
11. अष्टा. 4/3/124, तथा अष्टा 4/4/81

निर्देशेन हलो लकारस्य नेत्संज्ञेति विज्ञायते । तस्मात् णलो लकारोऽस्य वचनस्य ज्ञापक इति निश्चीयते ।यद्यपि भट्टोजिदीक्षितेन[1] 'हलन्त्य'मिति सम्पूर्ण-सूत्राऽऽवृत्त्या परिहृतोऽन्योन्याश्रय-दोषस्तथाप्युपायस्योपायान्तरादूषकत्वादेतज्ज्ञापक-ज्ञापितैतद्वचनेनापि तत्परिहारो युक्त एव ।

## शकारः

[2]'लिटस्तझयोरेशिरे'जितिसूत्रे एशः सर्वादेशार्थः[3] शकारानुबन्ध 'आतृतीयाध्याय-समाप्ते-र्धातोरित्यधिकारो, न तु प्राग् लादेशा'दिति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावेऽत्र सवादेशार्थ[5] एशः शकारानुबन्धो व्यर्थः । तथाहि-संपूर्णस्य त-शब्दस्य स्थाने एकारादेशायात्र एशि शकारानुबन्धोऽनुबद्धः, स चास्य वचनस्या-भावे व्यर्थः । यतोऽत्र शकारानुबन्धनेऽपि [6]'जरसा'वित्यादौ जराशब्दस्य सम्पूर्णस्य स्थाने यथा जरसादेशो[7] भवति तथैव 'निर्दिश्यमान'[8]-परिभाषया सम्पूर्णस्य त-शब्दस्य 'एधाञ्चक्रे'[9] - इत्यादौ एकारादेशः सुलभः । न च [10]'अलोऽन्त्यस्ये'ति

---

1. अनेन हि वैयाकरण-सिद्धान्त-कौमुद्यां संज्ञा-प्रकरणे 'हलन्त्य'-मिति सूत्रं द्विः प्रपठ्य प्रथमस्य सूत्रस्य 'हलिति सूत्रेऽन्त्यमित्स्यात्' द्वितीयस्य च 'उपदेशेऽन्त्यं हलित्स्यात्' इत्यर्थोऽभ्युपगतः, पृ. 4 - 5 ॰
2. अष्टा. 3/4/81
3. 'अनेकाल् शित्सर्वस्य' -
   अष्टा 1/1/55
4. तथाहि-'लिस्तझयोरेशिरेजिति (3/4/81) एशः शित्वं ज्ञापयति - 'आतृतीयाध्यायसमाप्ते र्धातोरित्यधिकारो (3/1/91) न तु प्राग् लादेशात् । तथा ह्येकारे तकारस्य विहिते नालोन्त्यस्य शङ्का, टेरेत्वेनैव सिद्धेरेतद्वचनानर्थयप्रसङ्गात् । आदेश-भावश्च निबन्धनं नास्तीति सर्वावयवानुग्राहौ सर्वस्यैव स्थानिनो भविष्यतीति किं शित्त्वेन ।
   यदा तु तत्र धातोरित्यर्स्ति तदा तस्मादित्युत्तरस्याऽऽदेःपरस्येति आदेर्माभूदिति शित्त्वमर्थव-द्भवति । एतेनादूर्धधातुक-संज्ञायां धात्वधिकारेण संज्ञिनो विशेषणात् लूभ्यामित्यादौ सुप आर्द्धधातुकत्वं निवर्तितं भवति । यद्येवं स्यादिविषये लादेशाप्रवृत्तेर्नित्यत्वमस्तु लावस्यायामेव स्यादिषु कृतेषु तै र्व्यवधानात् धातोरनन्तरो लकारो न भवतीति लादेशा न स्युः, उच्यते धातो : विहितस्य लस्येति विहित-विशेषण-पक्षे लुटः प्रथमस्य डारौरस इति (2/4/85) ज्ञापकाच्च तत्र सिद्धि''रित्याह पु. दे. ज्ञा. समु. द्वादशो धातुसम्बन्धपादे पृ. 76
5. 'जनेकाल् शित्सर्वस्य' -
   - अष्टा. 1/1/55.
6. जराशब्दस्य प्रथमाया द्वितीयाया वा द्विवचने रूपमिदम् ।
7. 'जराया जरसन्यतरस्याम्' -
   अष्टा. 7/2/101.
8. 'निर्दिश्यमानस्यादेशा भवन्तीति परिभाषा-स्वरूपम् ।
9. 'एधवृद्धौ' धा. पा. भ्वा. 2, इति एध् धातोः लिटिप्रथमपुरुषैकवचने रूपम् ।
10. अष्टा. 2/1/52

परिभाषया तकारोत्तराकारस्य एकारादेशाऽऽपत्तिः शङ्क्या, यतोऽस्मिन् सूत्रे[1] तकारस्यैकाराऽऽदेशविधानसामर्थ्यात् तकारोत्तराकारस्य नैकाराऽऽदेशो भविष्यति। टेरेत्वेनैव हि तकारोत्तराकारस्य एकारे लब्धेऽस्मिन् सूत्रे[2] तकारस्यैकाराऽऽदेशविधानं व्यर्थम्। ज्ञापिते चास्मिन् वचनेऽसति चात्र शकारानुबन्धने [3]'धातो'-रित्यधिकारात् 'तस्मादित्युत्तरस्य'[4] 'आदेः परस्ये'[5]ति तकारस्यैकाराऽऽदेशः प्रसज्यत इति शकारानुबन्धोऽत्र 'अनेकाल्[6] शित् सर्वस्ये'ति सर्वस्याऽऽदेशार्थं स्वांशे चरितार्थो भवति। ज्ञापितस्यास्य वचनस्य फलं तु आर्धधातुकसंज्ञायां[7] धात्वधिकारेण संज्ञिनौ विशेषणात् लूभ्यामित्यादौ[8] सुप[9] आर्धकत्वाभावः[10]। तस्याऽऽर्धधातुकत्वे हि 'सार्वधातुकार्धधातुकयो'रिति[11] लोरुकारस्यात्र गुणाऽऽपत्तिर्दुर्वारा स्यात्। अथैवं [12]स्यादिविषये लादेशाप्रवृत्त्या नित्य[13]-त्वात्[14] लावस्थायामेव स्यादिषु कृतेषु स्यादिभिर्व्यवधानेन धातोरनन्तरो लकारो नास्तीति लादेशा[15] न भवेयुरिति शङ्क्यम्। यतो धातोर्विहितस्य लस्येति विहितविशेषण-पक्षे

---

1. 'लिटस्तझयोरेशिरेच्' -
   अष्टा. 3/4/81.
2. 'लिटिस्तझयोरेशिरेच्' - अष्टा. 3/4/81.
3. अष्टा. 3/1/91.
4. अष्टा. 1/1/67.
5. अष्टा. 1/1/54.
6. अष्टा. 1/1/55.
7. 'आर्धधातुकं शेषः' -
   अष्टा. 3/1/144.
8. लुनातीत्यर्थे 'लूञ् छेदने' धा. पा. क्र्या. 1494, इति लूधातोः 'क्विपूच' - अष्टा. 3/1/76, इतिक्विपि तदन्ताद् भ्यामि रूपम्।
9. सुप् प्रत्याहारः 'स्वौजसमौट्छस्टाभ्यां भिस्ङेभ्यांभ्यस् - ङसिभ्यांभ्यस् - ङसोसामूङ्योः सुप् इति आद्यन्ताभ्यां सु-पाभ्यां सिद्धयति।
10. 'आर्धधातुकंशेषः' -
    अष्टा. 3/144
11. अष्टा. 7/3/84.
12. 'स्यतासीलृलुटोः' -
    अष्टा. 3/1/33
13. 'लस्य' - अष्टा. 3/4/77 'तिप्-तस्-झि - सिप् - थस्-थ-मिब्-वस्-मस्-तातां झ-थासाथां ध्व-मिड्-वहि-महिङ्' - अष्टा. 3/4/78.
14. 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषयेति शेषः।
15. 'तिपतस् झि.' - अष्टा. 3/4/78

लादेशः सुलभः । विहित-विशेषणपक्षाभावेऽपि 'लुटः प्रथमस्य डारौरसः'[1] इतिज्ञापकाद् व्यवधानेऽपि स्यादिभिर्लादेशाः सुलभाः । अन्यथा तासा व्यवधानात्तत्-द्धातोर्लुटः प्रथम-पुरुषाभावेन सूत्रमिदं व्यर्थं स्यात् ।

'हलः श्नः शानज्झा'विति[2] सूत्रे शानचः शकारोऽनुबन्धः 'क्वचिदनुबन्ध-कार्येऽप्यनल्विधा'विति प्रतिषेध' इति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावे श्नः शित्त्वात्तदादेशस्य शानचः[4] शित्त्वं स्थानिवद्भावेन[5] सुलभमिति शानचः शकारानुबन्धो व्यर्थः । न चात्र'नल्विधा'विति[6] स्थानिवत्त्वनिषेधः शङ्क्यः । यतो 'न ल्यपि'[7] इति निषेधसूत्रं व्यर्थं सद् 'अनुबन्धकार्ये अनल्विधाविति निषेधो न' इतिवचनं ज्ञापयति । अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तौ हि क्त्वाऽऽदेश-स्य[8] ल्यपः[9] कित्त्वाप्रसक्तेस्तस्मिन् परत ईत्त्वस्याप्राप्त्या[10] तन्निषेधार्थं' निषेध-सूत्रमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने अनल्विधाविति[11] स्थानिवत्त्वप्रतिषेधात्

---

1. अष्टा. 2/4/85.
2. अष्टा. 3/1/83.
3. "तथाहि -"श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाति निषेधज्ञापनाद्वे" त्याह भ. दी. वै. सि. कौ. स्त्रीप्रत्यय प्र. पृ. 268.
   "आदेशस्य शानचः शित्त्वमपीह लिङ्गमिति चाह भ. दी. वै. सि कौ. भ्वा. प्र. पृ. 25.
4. 'हलः श्नः शानज्झौ' - अष्टा. 3/1/83.
5. 'स्थानिवदादेशोऽनल्विधौ' -
   -अष्टा. 1/1/56.
6. 'स्थानिवदादेशोऽनल्विधौ' -
   - अष्टा. 1/1/56.
7. अष्टा. - 6/4/69.
8. 'समानकर्तृकयोः पूर्वकाले' -
   - अष्टा. 3/4/21.
9. 'समासेऽनञ् पूर्वे क्त्वो ल्यप्' –
   - अष्टा. 7/3/37
10. 'घुमास्था गापा जहातिसां हलि' –
    - अष्टा. 6/4/66.
11. 'स्थानिवदादेशोऽनल्विधौ' – अष्टा. 1/1/56.

शानचि शित्त्वं श्नातो लब्धुमशक्यं, शित्त्वाभावे च [1]'सार्वधातुकमपि'दिति ङित्त्वं न सम्भवतीति [2]'मुषाणे'त्यात्यादौ क्ङिति चेति गुणनिषेधार्थं[3] शानचः शित्त्वं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु - [4]'वक्ष्यमाणे' त्यादौ ङीबभावः । अस्य वचनस्यासत्त्वे हि लृडादेशस्य शानचः[5] स्थानिवत्त्वेन टित्त्वादुगित्त्वाच्च [6]'टिड्ढे' ति 'उगितश्चे' ति[7] ङीबापत्तिरत्र दुर्वारा स्यात् ।

वस्तुतस्तु 'हलः श्नः[8] शानज्झा'विति सूत्रे भाष्ये शानचः शित्त्वं [9]प्रत्याख्यातमिति [10]नायं ज्ञापको भाष्यसम्मतः । 'वक्ष्यमाणे'स्य सत्यभिधानेऽजादित्वाट्टापि[11] वचनमेतद् विनापि साधुत्वं सुलभम्[12] ।

---

1. अष्टा. 1/2/4.
2. क्र्यादेर्मुषेर्लोटि मध्यमपुरुषैकवचने रूपम् ।
3. अष्टा. 1/1/5.
4. 'वच परिभाषणे' धा. पा. अदा. 1063, इति वच् धातोः कर्मणि लृटि 'लृटः सद्वा' – अष्टा. 3/3/14, इति शानजादेशे 'स्यतासी लृलुटोः ' – अष्टा. 3/1/33, इति स्यप्रत्यये कुत्वे षत्वे 'आने मुक्' – अष्टा. 7/2/82, मुगागमे णत्वे टापि रूपम् ।
5. 'लृटः सद्वा' –
   अष्टा. 3/3/14.
6. 'टिड्ढाणञ् द्वयसज् दघ्नञ् मात्रच् तयप् ठक् ठञ् कञ् क्वरपः' -
   - अष्टा. 4/1/15.
7. अष्टा. 4/1/6.
8. अष्टा. 3/1/83.
9. तथाहि – "यत्तु खलु पिति ङित्कृतं प्राप्नोति ङिति च पित्कृतं केन तन्न स्यात् । तस्माद् वाक्तव्यं 'पिन्न ङिद्वद् भवती'ति 'ङिच्च न पिद्वद् भवती'ति । न वक्तव्यम् । एवं वक्ष्यामि (सार्वधातु कमपित्) सार्वधातुकं ङिद्वद् भवति पिन्न । एवं तावत् पितो ङित्त्वं प्रतिषिद्धम् । ततः (असंयोगाल्लिट् कित्) असंयोगाल्लिट् किद्भवति, ङिच्च पिन्न भवति । एवं ङितः पित्त्वं प्रतिषिद्धम्" व्या. म. भा. 3/1/4/83.
10. तथाहि – "शानचः शित्त्वमपि तत्सूत्रे भाष्ये प्रत्याख्यातम् । हेरपित्त्वस्य तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये" – इत्याह भ. ना. ल. रा. शे. स्त्री-प्रत्यय प्र. पृ. 554.
11. 'अजाद्यतष्टाप्' –
    - अष्टा. 4/1/4.
12. तथाहि– "तस्माद् 'वक्ष्यमाणे'त्यादौ सत्यभिधानेऽजादिपाठाट्टाप्"- इत्याह भ. ना. ल. शे. शे. स्त्रीप्रत्यय प्र. पृ. 554.

## शकाराः

[1]'दिवादिभ्यः श्यन्'· स्वादिभ्यः श्नुः'[2] 'तुदादिभ्यः शः'[3] 'स्वादिभ्यः श्नम्'[4] 'क्र्यादिभ्यः[5] श्ना' – इत्येतेषु सूत्रेषु श्यन् - श्नु - श - श्नम् - श्नानां शकारानुबन्धाः 'नापवादे उत्सर्ग-कृतं कार्यं भवती'ति वचनस्य ज्ञापकाः[6] । यतोऽस्य वचनस्याभावे श्यन्नादिषु शकारानुबन्धाः व्यर्थाः । एते हि श्यन्नादिषु [7]शित्कार्यार्थमनुबद्धाः, शित्कार्याणि च स्थानिवद्भावेनैव[8] सुलभानि । तथाहि – स्थानिवद्भावः 'आदेशबुद्धेः प्रसङ्गे स्थानिबुद्धिः कर्तव्ये'ति बुद्धिविपरिणाम मात्रम् । [9]दिवादिभ्यः शब्बुद्धिप्रसङ्गे हि श्यन्नादिबुद्धिः कर्तव्ये'त्येतदेव हि 'दिवादिभ्यः श्यन्' - इत्यादिसूत्रैः प्रतिपाद्यते । तथा सति श्यन्नाद्यादेशबुद्धेः प्रसङ्गे स्थानिशब्बुद्धिः कर्तव्येति स्थानिवद्भावेनैव श्यन्नादिषु शपि विद्यमानत्वाच्छित्त्वं सुलभमित्येषां शकारानुबन्धा व्यर्थाः । ज्ञापिते चास्मिन् वचने स्थानिवद्भावेन श्यन्नाद्यपवादेषु शबुत्सर्गकृतं कार्यं न सिद्ध्यतीति शित्त्वार्थं श्यन्नादीनां शकारानुबन्धाः स्वांशे चरितार्था भवन्ति । ज्ञापितस्यास्य वचनस्य फलं तु 'आतोनुपसर्गे कः'[10] - इति सूत्र-विहितापवादरूप-क-प्रत्ययेऽपि स्थानिवद्भावेन [11]उत्सर्गभूताण्प्रत्यय-प्रयुक्तकार्यस्याभावः[12] । अस्य वचनस्यासत्त्वे तु क-प्रत्ययेऽप्यण्कृतं कार्यं स्थानिवद्भावेन दुर्वारं स्यात् ।

---

1. अष्टा. 3/1/69.
2. अष्टा. 3/1/73.
3. अष्टा. 3/9/77.
4. अष्टा. 3/1/78.
5. अष्टा. 3/1/81.
6. तथाहि –
   (क) "अथवाऽऽचार्य-प्रवृत्तिर्ज्ञापयति - 'नापवादे उत्सर्ग-कृतं भवती'ति यदयं श्यन्नादीन् कांश्चिच्छितः करोति । श्यन् श्नम् श्ना शः श्नुरिती"त्याह पत. व्या. म. भा. 1/1/8/55.
   (ख) "स्थानिवदादेशो (सू. 1/1/56) नापवादे उत्सर्गकृतं, श्यन्नादीनां शित्करणाज्ज्ञापका"-दित्याह - श्री. ना. ज्ञा. सं. 1, पृ. 29.
7. 'तिङ् शित् सार्वधातुकम्' - अष्टा. 3/4/113. इति सार्वधातुकसंज्ञार्थमित्यर्थः ।
8. 'स्थानिवदादेशोऽनल्विधौ' –
   - अष्टा. 1/1/56.
9. अष्टा. - 3/1/69.
10. अष्टा. - 3/2/3.
11. 'कर्मण्यण्' - अष्टा. - 3/2/1.
12. 'धनदा' इत्यादौ स्त्रियामणन्तत्वप्रयुक्तस्य 'टिड्ढ' –
   - अष्टा. 4/1/15,. इति ङीप इत्यर्थः ।

[1]कैयटस्तु [2]'गापोष्टक्' – इति सूत्रे टकः ककारानुबन्धः 'नोत्सर्गकृतमपवादे भवती' ति वचनस्य ज्ञापक इति मनुते[3] । इदमपि मतं युक्तम् । यतो भगवता "विषयेण तु नाना-लिङ्गकरणात् सिद्ध"मित्युक्त्या सूचितमेतत् ।

## षकारः

[4]क्षमूष् सहने' इत्यत्र षकारोऽनुबन्धः [5]'गणकार्यमनित्य'मिति परिभाषाया [6]ज्ञापकः । यतोऽस्या अभावेऽत्र षकारानुबन्धो व्यर्थः । क्षमेत्यत्र स्त्रियां 'षिद्भिदादिभ्योऽङ्[7]' इति अङ् प्रत्ययो हि भिदा दित्वादेव सिद्धः । न च षित्वमस्य [8]षिद्गौरादिभ्यश्च' इति ङीबुत्पत्त्यर्थमिति शङ्क्यम् । यतः आगमेः क्षमायामिति निर्देशन 'क्षमे' त्यत्र ङीष् नेष्टः । ज्ञापितायां चास्यां कदाचिदङोऽभावो मा भूदित्येतदर्थं क्षमूषः षित्त्वप्रयुक्तस्य नियमेनाङः सिद्धये चायं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु [9]'विश्वसेत्' 'अहनत्'[10] इत्यादिप्रयोगाणां साधुत्वसिद्धिः । अस्या असत्त्वे

---

1. अनेन हि – "यदयं गापोष्टगिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति –'नोत्सर्गकृतमपवादे भवती'त्युक्तम् - प्रदी. 1/1/8/55, पृ. 435.
2. अष्टा 3/2/8.
3. व्या. म. भा. 1/1/8/55.
4. धा. पा. भ्वा. 442.
5. (क) पु. दे. ल. प. कृ. प. 109, पृ. 156.
   (ख) सी. दे. बृ. प. वृ. प. 118, पृ. 267.
   (ग) नी. दी. प. वृ. प. 92, पृ. 310.
   (घ) ह. भा. प. भास्क. प. 120, पृ. 370.
   (ङ) भ. ना. प. शे. प. 96, पृ. 328.
   (च) शेषा. प. भास्क. प. 83, पृ. 445.
6. तथाहि –
   (क) "अयमर्थः क्षमूष् सहने इत्यस्य भिदादित्वादेवाङि सिद्धे षित्करणेन ज्ञापितः । तेन अदादित्वाच्छब्लुकोऽभावात् 'न विश्वसेत् पूर्वविरोधितस्य' 'मण्डपे शयामि तत्परम्' इत्यादि सिद्ध्यती"त्याह पु. दे. ल. प. वृ. प. 109 पृ. 156.
   (ख) "गणकार्यानित्यत्वे तु ज्ञापकं क्षमूष् सहने इत्यस्य घटादित्वादेव षित्त्वे सिद्धे षित्करणम् । न च षित्त्वं 'षिद्गौरादिभ्यश्च' (4/1/41) इति ङीबर्थं स्यात् । यथा धेटष्टित्त्वं स्तनंधयीति ङीबर्थम् । आगमेः क्षमायामित्यत्र क्षमायामिति निर्देशात्" इत्याह - सी. दे. बृ. प. वृ. प. 118, पृ. 268.
7. अष्टा. 4/1/41.
8. वा. वै. सि. कौ. आत्मने पद. प्र. पृ. 317.
9. 'श्वस प्राणने' धा. पा. अदा. 1069,
   इतिविपूर्वकात् श्वसधातोः विधिलिङि 'गणकार्यमनित्य'मितिपरिभाषया शपो लुगभावे रूपम् ।
10. हन् हिसागत्योः' धा. पा. अदा. 1012,
   इतिहन्धातो र्लङि तिपि 'गणकार्यमनित्य'मिति परिभाषया शापो लुगभावे रूपम् ।

तु अदादित्वादत्र शब्लुको[1] दुर्वारतया नानयोः साधुत्वं सिद्ध्येत् । वस्तुतस्तु भिदादिगणे[2] क्षमूषः पाठो नास्तीति षित्त्वाऽर्थं षकारोऽनुबन्धोऽत्र चरितार्थ इति नास्यास्यां ज्ञापकत्वं युक्तम् । घटादित्वात् षित्त्वं क्षमूषश्चिन्त्यमेव । एतयोः प्रयोगयोरार्षत्वादेव साधुत्वं वक्तुं शक्यम् । अगत्या वा असाधुत्वमेव वानयोः स्वीकार्यम् ।



1. 'आदिप्रभृतिभ्यः शपः' –
   अष्टा. 2/4/72.
2. 'भिदा विदारणे' । 'छिदा द्वैधीकरणे' । विदा । क्षिपा । गुहा - गिर्योषध्योः । श्रद्धा, मेधा, गोधा । आरा शस्त्र्याम् । हारा । 'कारा बन्धने' । क्षिया । 'तारा ज्योतिषि' । 'धारा प्रपातने' । रेखा चूडा पीडा वपा वसा मृजा । 'क्रपेः - संप्रसारणं च' कृपा । इति भिदादिः । ग. पा. 3/3/104.

# द्वितीयोऽध्यायः

## (क) ज्ञापिका अनुवृत्तयः

अनुपूर्वकाद् 'वृत्'[1] धातोः [2]क्तिनि निष्पन्नोऽयमनुवृत्तिशब्दो यद्यप्यनुवर्तनानुरोधानुसरणानुमोदनार्थेषु[3] प्रसिद्धस्तथापि व्याकरणे सूत्रान्तरस्थ - पदस्य सम्पूर्णसूत्रस्य वा सूत्रान्तरेषूपस्थितः[4] प्रयुज्यते । अधिकारश्चास्य शब्दस्य [5]पर्यायः । सिंहावलोकित - मण्डूकप्लुति - गङ्गास्रोत इति नामभिरधिकारस्त्रिविधः[6] । यदासौ किमपि वचनं ज्ञापयन्ती एवाऽऽत्मनः सार्थकतां लभते तदासौ ज्ञापिकानुवृत्तिरित्युच्यते । ता एव ज्ञापिका अनुवत्तयो यथाक्रमं निरूप्यन्ते । तत्र –

### [7]'अतोदीर्घो यञि' – इति सूत्रानुवृत्तिः

'सुपि[8]चे'ति सूत्रेऽस्य सूत्रस्यानुवृत्तिः [9]'संनिपातलक्षणो विधिरनिमित्तं तद् विघातस्ये'ति परिभाषाया [10]ज्ञापिका । अस्या अभावे हि 'वृक्षाये'त्यादौ

---

1. 'वृतु वर्तने' धा. पा. भ्वा. 758.
2. 'स्त्रियां क्तिन्' – अष्टा. 3/3/94.
3. (अनु + वृत् + क्तिन्) – अनुवर्तम्; अनुरोधः, – इति हेमचन्द्रः, श. क. दु. भागः – 1, पृ. 51. "अनुवर्तनम्, अनुसरणम्, अनुमोदनम्, अनुरञ्जन"मिति मु. बो. टी. दु. दा., श. क. द्रु. भागः - 1, पृ. 51
4. "व्याकरणमते पूर्वसूत्रस्थितपदस्य पूर्वसूत्रेषूपस्थितिः" दु. दा., श. क. द्रु. भागः–1, पृ. 51. "सूत्रेष्वदृष्टं पदं सूत्रान्तरदनुवर्तनीयं सर्वत्रे"ति व. रा. भट्टा. ल. सि. कौ. संज्ञा. प्र. पृ. 2.
5. "तत्पर्यायः अधिकारः" – इति दु. दा., द्रु श. क. दु. भागः - 1, पृ. 51, 'स्वरितेनाधिकारः' – अष्टा. 1/3/11.
6. तथाहि–"सिंहावलोकिताख्यं च मण्डूकप्लुतिरेव च । गङ्गास्रोत इति ख्याता अधिकारास्त्रयो मताः " – इत्याह दु. दा., श. क. द्रु. भागः – 1, पृ. 51.
7. अष्टा. 7/3/101.
8. अष्टा. 7/3/102.
9. (क) व्याडिः प. सू. प. 10, पृ. 7.
   (ख) पु. दे. ल. प. वृ. प. 10, पृ. 117.
   (ग) सी. दे. बृ. प. वृ. प. 64, पृ. 229.
   (घ) नी. दी. प. वृ. प. 75, पृ. 308.
   (ङ) ह. भा. प. भास्क. प. 66, पृ. 350.
   (च) भ. ना. प. शे. प. 86, पृ. 310.
   (छ) शेषा प. भास्क. प. 73, पृ. 439.
10. तथाहि – संनिपातेन लक्ष्यते यो विधिः सोऽनिमित्तं तद् विघातस्य । कथम् । यदयम् – 'अतो दीर्घो यञि' – (7/3/101). इति ब्रवीति । एतत्किल न वक्तव्यम् ।' अतो दीर्घो

[1]'अकृत्सार्वधातुकयोः 'इति दीर्घस्य सुलभतयात्रास्यानुवृत्तिर्व्यर्था । ज्ञापितायां चास्याम् अकारान्तसंनिपातेन जातो 'डेर्य'[2] इतियादेशोऽनया निमित्तं न भवतीत्यनुवृत्तिरियं स्वांशे चरितार्था भवति । न चात्र सुपि[3]चेति सूत्रेण दीर्घः संनिपातविघातान्नैव स्यादिति शङ्क्यम् । यतो वचनसामर्थ्यात्तत्र दीर्घोऽनेन सुलभः । ज्ञापिताया अस्याः प्रयोजनम् - 'अतिजरै'रित्यत्र अकारान्ताङ्गसम्बन्ध-निमित्तकस्य ऐसो जरसादेशस्यानिमित्तत्वेन जरसादेशाभावः[4] । अस्या अभावे हि जरसादेशाऽऽपत्तिरत्र दुर्वारा स्यात् ।

## एज्ग्रहणानुवृत्तिः

[5]'मीनातिमिनोतिदीङां ल्यपि चे'ति सूत्रे कृता 'आदेच[6] उपदेऽशिती'ति सूत्रादेचोऽनुवृत्तिः 'आदेच' - इत्यनेन परनिमित्तकस्यैव आत्वं न भवतीति वचनस्य ज्ञापिका[7] । यतोऽस्य वचनस्याभावे [8]'माते'त्यादौ [9]मीधातोर्गुणे कृते 'मे ता' इत्यवस्थायाम् 'आदेच [10]उपदेशेऽशिती' – ति सूत्रेण एजन्तत्वादेवात्वस्य सुलभतया

---

यञि' (7/3/101) इति । वृक्षाय प्लक्षाय' अकृत्सार्वधातुकयोः' (7/4/25) इति भविष्यति एवं सिद्धे यद् यञीत्याह तपश्यति नैवंजातीयकानां दीर्घो भविष्यति । कथं जातीयकश्चायम् अकारान्तः, संनिपातजातीयकः नाकारविघाताय निमित्तं भवति । अनेन वचनेन दीर्घत्वं भवति । किंकृतं भवति–सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ग्रन्थेन – सूचयति व्याडिः प. सू. प. 10, पृ. 7.

1. अष्टा. 7/4/25.
2. अष्टा. 7/1/9.
3. अष्टा. 7/3/102.
4. 'जरायाजरसन्यतरस्याम्'- अष्टा. 7/2/101.
5. अष्टा. 6/1/50.
6. अष्टा. 6/1/45.
7. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति – 'न पर-निमित्तकस्यात्वं भवती'ति यदयं 'क्रीङ्जीनं णा' – वित्यात्वं शास्ति । नैतदस्ति ज्ञापकं, नियमार्थमेतत् स्यात् – क्रीङ् जीनां णावेवेति । यत्तर्हि 'मीनाति मिनोति दीङां ल्यपि चे'त्यत्रैज् ग्रहणमनुवर्तयति" – इत्याह पत. व्या. म. भा. 6/1/3/45, पृ. 573 - 574.
   (ख) "आदेच उपदेशे (6/1/45) । 'मीनाति मिनोति) (सू. 6/1/50) इत्यत्र एज् ग्रहणानुवर्तनं ज्ञापयति 'न परनिमित्तकस्यात्वं भवती'ति" – इत्याह एन्. एस. रामा. ज्ञा. सं. परि. 1 पृ. 174.
8. 'मीञ् हिंसायाम्' धा. पा. क्र्या 1477, इति मीधातोर्लुटि प्रथम-पुरुषैक-वचने 'डुमिञ् प्रक्षेपणे' धा. पा. स्वा. 1251, इति मिधातोर्लुटि प्रथम-पुरुषैक-वचने च रूपम् ।
9. 'मीञ् हिंसायाम' धा. पा. कृपा. 1477.
10. अष्टा. 6/1/45.

तत्रात्वाय 'मीनाती'ति[1] सूत्रे कृता एज्ग्रहणानुवृत्तिर्व्यर्था । ज्ञापिते चास्मिन् वचने 'माते'त्यादावेकारस्य परनिमित्त[2]कत्वेनात्वाप्राप्त्या तत्रात्वार्थमत्र सूत्रे कृता एज्-ग्रहणानुवृत्तिः स्वांशे चरितार्थाभवति । ज्ञापितस्यास्य वचनस्य फलं तु [3]'चेता' 'स्तोता'[4] – इत्यादावेच [5]आत्वस्याभावः । अस्य वचनस्यासत्त्वे हि 'आदेच [6]उपदेशेऽशिती'त्यात्वाऽऽपत्तिरत्र दुर्वारा स्यात् ।

भट्टनागेशस्तु 'एजन्तानां मीनात्यादीनामात्वमित्यर्थकं 'मीनाति मिनोती'ति सूत्रमेव व्यर्थं सदस्य वचनस्य ज्ञापकं न तु तत्र एजग्रहणानुवृत्तिमात्रमिति [7]मनुते । 'मीनाति-[8]मिनोति-दीङां ल्यपिचे'ति सूत्रे चकारमहिम्ना एजन्तानां मीनात्यादीनां विधीयमानम् 'आदेच [9]उपदेशेऽशिती'ति सूत्रेण परनिमित्तकस्यात्वं न भवतीति ज्ञापयति । यतः मीधातो र्गुणे[10] कृते 'मे ता' इत्यत्र एजन्तत्वादेव [11]'आदेच' – इत्यनेन आत्वे मातेत्यादिरूपाणां सिद्धिः सुलभा । तथा च परनिमित्तकेन[12] गुणेन[13] सम्पन्नो य एच् तदन्तस्य आत्वं न प्राप्नोतीति तत्प्राप्ति-फलकं [14]'मीनाती'ति सूत्रं सार्थकं भवतीति भट्टनागेशाशयः ।

---

1. अष्टा. 6/1/50.
2. तासृनिमित्तकत्वेनेत्यर्थः ।
3. 'चिञ् चयने' धा. पा. 1252, इति चिधातोर्लुटि प्रथम-पुरुषैकवचने रूपम् ।
4. 'ष्टुञ् स्तुतौ' धा. पा. अदा. 1043, इति स्तुधातोर्लुटि प्रथमपुरुषैक-वचने रूपम् ।
5. 'आदेच उपदेशेऽशिति' - अष्टा. 6/1/45.
6. अष्टा. 6/1/45.
7. तथाहि – "एज्ग्रहणमनुवर्तयतीति । एजन्तानां मीनात्यादीनामात्वमित्यर्थेऽनेनैवात्वसिद्धे-स्तत्सूत्रं व्यर्थं सदेतदर्थज्ञापकमिति भावः । अत्र चकारलब्धमशित्यात्त्वमेज् ग्रहण सहितं ज्ञापकं बोध्य" मि त्याह भ. ना. उद्यो. 6/1/3/45. पृ. 574
8. अष्टा. 6/1/50.
9. अष्टा. 6/1/45.
10. 'सार्वधातुकार्धधातुकयोः' – अष्टा. 7/3/84.
11. 'आदेच उपदेशेऽशिति – -अष्टा. 6/1/45.
12. आर्ध-धातुक तास् निमित्तत्वेनेत्यर्थः ।
13. 'सार्वधातुकार्ध-धातुकयोः' – अष्टा. 7/3/84.
14. ''मीनाति मीनोति दीङां ल्यपि च' - अष्टा 6/1/50.

## 'मपर्यन्तस्ये'त्यनुवृत्तिः

[1]'प्रत्ययोत्तरपदयोश्चे'त्यत्र [2]'मपर्यन्तस्ये'त्यस्यानुवृत्तिः –[3]'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' – इति परिभाषाया ज्ञापिका[4] । यतोऽस्या अभावेऽत्रेयं

---

1. अष्टा. 7/2/98.
2. अष्टा. 7/2/91.
3. (क) व्या. प. पा. प. 128, पृ. 42.
   (ख) पु. दे. ल. प. वृं. प. 68, पृ. 141.
   (ग) सी. दे. बृ. प. वृ. प. 85, पृ. 245.
   (घ) नी. दी. प. वृ. प. 63, पृ. 306.
   (ङ) ह. भा. प. भास्क प. 88, पृ. 359.
   (च) भ. ना. प. शे. प. 53, पृ. 224.
   (छ) शेषा प. भास्क. प. 44.
4. तथाहि –
   (क) "एवं तर्हि सिद्धे सति यत् प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज् ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गो लुग् भवती'ति । किमेतस्या ज्ञापने प्रयोजनम् ? गोमान् प्रियो यस्य गोमत्प्रियः यवमत् प्रियः । गोमानिवाचरति गोमत्यते यवमत्यते । अन्तरङ्गानपि नुमादीन् बहिरङ्गो लुग् बाधत इति । नैतदस्ति ज्ञापकम्, अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? येऽन्ये एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत् स्यात् । तद्यथा तव पुत्रः त्वत्पुत्रः, मम पुत्रो मत्पुत्रः । तुभ्यं हितं त्वद्धितं, मह्यं हितं मद्धितमिति । यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति । यद्यत्रान्ये एकवचनादेशाः स्युर्मपर्यन्तानुवृत्तिरनर्थिका स्या"दित्याह पत. व्या. म. भा. 7/212/98.
   (ख) "अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते? लक्ष्यस्थित्यपेक्षया । ज्ञापकार्थे ह्येतस्मिन् बहुतरमिष्टं संगृह्यते' इति ग्रन्थेन अस्या ज्ञापकत्वमसूसुचत्" जया. का. 7/2/98.
   (ग) "कथं पुनः सत्येवं प्रयोजने सत्यामपि लब्धस्थित्यपेक्षायां ज्ञापकार्थमेतत् शक्यं विज्ञातुम्? एवं मन्यते-प्रयोजनमेवैतन्नभवति, मपर्यन्तग्रहणस्य चकारेणानुकर्षणार्थत्वात् । तदनुकर्षणस्य तदेव प्रयोजनम् – मपर्यन्तयोरादेशौ यथा स्यातामिति । यदि चादेशान्तराणां बाधनार्थमेतत्, अनुकर्षणं तस्यापार्थकं स्यात् । यद्बाध - नार्थमेतत्सूत्रं प्रकल्प्यते तान्यादेशान्तराणि मपर्यन्तस्यैव प्रयुक्तानि, नान्यस्य । ततश्चान्तरेणापि मपर्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्यैव भविष्यति इति किं मपर्यन्तस्येत्यनुवर्त्तनेन? आदेशान्तराणामबाधनार्थे ह्येतस्मिन् सर्वादेशनिवृत्त्यर्थं मपर्यन्तग्रहणमनुवर्त्तयितुं युक्तम् । तस्मादेतस्मान् मपर्यन्त-ग्रहणानुवर्त्तनान् नादेशान्तरबाधनमस्य प्रयोजनम् । अतो ज्ञापकं विज्ञायते" इत्याह जि. बु. न्या. 7/2/98.

व्यर्था । तथाहि – [1]'त्वत्कृतं' [2]'मत्कृत'मित्यादौ [3]सर्वादिशबाधनार्थमत्रास्यानुवृत्तिः क्रियते, अस्या असत्त्वे हि विभक्ति-लुकः प्रागेवात्रान्तरङ्गत्वात् [4]'त्वमावेकवचने' इत्यनेन त्वमादेश-प्रवृत्तेः सुलभतयेयं व्यर्था ।

---

(घ) "यदि तव-तुभ्यादेशं बधित्वा प्रत्ययोत्तर-पदयोश्चेत्यनेन-भवितव्यं तदोत्सर्गसमानत्वाद-पवादानां मपर्यन्तस्यैव तौ भविष्यतौ न सर्वस्येति किं मपर्यन्तस्येतत्यनुकर्षणार्थेन चकारेणेति तवतुभ्यादेश-बाधनया भवितव्यम् । तदा चकारेण मपर्यन्तस्येत्यनुकर्षणं यत्कृतं तदनर्थकं स्या"दित्याह सी. दे. बृ. प. वृ. प. 85, पु. 246.

(ङ) "अत्र च ज्ञापकं 'प्रत्ययोत्तरपदयोश्च' (7/2/98) इति सूत्रे उत्तर-पद-ग्रहणम् । प्रत्यय-ग्रहणं त्वाचारक्विबन्तादौ चरितार्थम् । न च तदपि तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादि बाधनेन चरितार्थमिति वाच्यम् । 'त्वमौ.' (7/2/97) इति सूत्रे मपर्यन्तस्यैव स्थानित्वनिर्णयेन अधिकस्य स्थानित्वे मानाभावेन सर्वादिशत्वाभावे सिद्धे पुनर्मपयन्तानुवृत्ति र्वाक्यभेदेन पुनर्विधानार्थास्यार्थस्य ज्ञापिकति भाष्ये स्पष्ट"मित्याह नी.दी. प. वृ. प. 63 पृ. 306.

(च) "अत्र च 'प्रत्यययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्ग-त्वाद् विभक्ति - निमित्ततत्कत्वेन 'त्वमावेकवचने' इत्यनेन सिद्धे इदं व्यर्थं सदेतज् ज्ञापकम् । ननु तव पुत्रस्त्वत्पुत्र इत्यादौ त्वमादिबाधनार्थं तदावश्यकमितिचेत् - एवं-तर्ह्यत्रत्यमपर्यन्त-ग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः' —इत्याद भ. ना. प. शे. प. 53, पृ. 225-226.

(छ) "अत्र च ज्ञापकम् 'प्रत्ययोत्तर - पदयोश्च' (7/2/98) इति सूत्रे मपर्यन्तस्य 7/2/91) इत्यस्यानुवृत्तिः । सा हि त्वकृतं मत्कृतमित्यादौ सर्वादिशत्व-बाधनार्था । यदि च लुग्-विषये स्यात् - तर्हि विभक्तिमपेक्ष्यत्वमावेकवचने (7/2/97) इति - सूत्रेणान्तर-ङ्गत्वात्त्वमादेश-प्रवृत्तौ व्यर्था स्या"दित्याह शेषा. प. भास्क. प. 44, पृ. 423.

1. त्वया कृतमित्यर्थे 'कर्त्तृकरणे कृता बहुलम्' - अष्टा. 2/1/32 इति तृतीयातत्पुरुष - समासे समासप्रातिपदिकतया 'सुपोधातु प्रातिपदिकयोः' – अष्टा. 2/4/71 इति विभक्तेर्लुकि 'प्रत्ययोत्तरपदयोश्च' अष्टा. 7/2/98, इति मप्रर्यन्तस्य युष्मदस्त्वादेशे 'शेषे - लोपः' - अष्टा. 7/2/90, इतिटिलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।
2. मया कृतमित्यर्थे 'कर्त्तृकरणे कृता बहुलम्' अष्टा. 2/1/32, इति तृतीयातत्पुरुषसमासे समास-प्रातिपदिकतया 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71 इति विभक्तेलुर्कि 'प्रत्ययोत्तरपदयोश्च' -अष्टा. 7/2/98 इति मपर्यन्तस्य अस्मदो मादेशे 'शेषे लोपः' – अष्टा. 7/2/90इति टिलोपे स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
3. 'अनेकाल्-शित्सर्वस्य' –
—अष्टा. 1/1/55.
4. अष्टा. 7/2/97.

न च [1]'तव पुत्रस्त्वत्पुत्रः'तुभ्यंहितं [2]त्वद्धितमित्यादौ तव [3]ममाद्यादेशबाधनाय प्रवर्तमानयोस्त्वमयोः [4]सावादेशबाधनार्थं [5]'मपर्यन्त' स्ये'त्यस्यानुवृत्तिश्चरितार्थेति शङ्क्यम् । यतो मपर्यन्ताधिकारेण विहितानां तवममाद्यादेशानां मपर्यन्त एव प्रवृत्त्या तदपवादभूतयोस्त्वमयोरपि विनैव मपर्यन्तानुवृत्तिम् 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन मपर्यन्तादेशत्वस्य सर्वादेशत्वस्य च सिद्धिः सुलभा ।

न च [6]श्नम् [7]बहुजकक्षु[8] भिन्नदेशेष्वपि शप्[9-10]कल्पबादीनामपवादत्व-दर्शनान्नोत्सर्गसमानदेशत्व-नियमोऽपवादस्येति शङ्कनीयम् । यतः श्नमो मित्-करणेन बहुचि पुरस्ताद् ग्रहणेनाकचि प्राग्ग्रहणेन चोक्तनियमभङ्गेऽपि अन्यत्र तत्स्वीकारे नास्ति बाधकः ।

न चात्र युष्मदस्मद्भ्यामाचारक्विपि[11] आचक्षाणदणिचि[12] च विभक्ति - परकत्वाभावेन 'त्वमावेक[13]वचन' इत्यस्याप्रवृत्त्या प्रत्ययनिमित्तकत्वमादेशाय प्रत्ययांशे

---

1. 'षष्ठी' – अष्टा. 2/2/37 इति षष्ठीतत्पुषसमासे समासप्रातिपदिकतया 'सुपो धातु-प्रातिपदिकयोः' – अष्टा. 2/4/71 इति विभक्तेर्लुकि 'प्रत्ययोत्तरपदयोश्च' – अष्टा. 7/2/98 इति मपर्यन्तस्य युष्मदस्त्वादेशे 'शेषे लोपः' – अष्टा. 7/2/90 इति टिलोपे स्वादि कार्येषु कृतेषु रूपमिदम् ।
2. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' – अष्टा. 2/1/36, इति चतुर्थीतत्पुरुष-समासे समास-प्रातिपदिकतया 'सुपो धातुप्रातिपदिकयोः' अष्टा. 2/4/71 इति विभक्ते लुंकि 'प्रत्ययोत्तरपदयोश्च' - अष्टा. 7/2/98 इति मपर्यन्तस्य युष्मदस्त्वादेशे 'शेषे लोपः' अष्टा. 7/2/90 इतिटिलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. 'तवममौ ङसि.' – अष्टा. 7/2/96, 'तुभ्यमह्यौ ङयि' –अष्टा.7/2/95.
4. 'अनेकाल् शित्सर्वस्य' – –अष्टा. 1/1/55.
5. अष्टा. 7/2/91.
6. 'स्वादिभ्यः श्नम्' – –अष्टा. 3/1/78.
7. 'विभाषा सुपो बहुच्पुरस्तात्तु' – –अष्टा. 5/3/68.
8. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' – –अष्टा. 5/3/71.
9. 'कर्त्तरि शप्' - अष्टा. 3/1/68.
10. 'ईषदसमाप्तौ कल्पब् देश्य देशीयरः' – अष्टा. 5/3/67.
11. 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' – वा. वै. सि. कौ. नामधातु प्र., पृ. 295.
12. 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' वा. वै. सि. कौ. चुरादि प्र. पृ. 238 तथा 'तत्करोति तदाचष्टे' - ग. सू. वै. सि. कौ. चुरा- दि. प्र. पृ. 239.
13. अष्टा. 7/2/97.

चारितार्थ्येन तदंशेऽपवादत्वाभावेनोत्सर्गसमानदेशा अपवादाः इतिन्यायस्याप्रवृत्त्या तत्र सर्वादेश[1]वारणाय [2]मपर्यन्तानुवृत्तेश्चारितार्थ्यान्नास्यां ज्ञापकत्वमस्यामित्यपि शङ्क्यम् । यतः सम्पूर्णसूत्रज्ञापकतापर-भाष्य[3]-प्रामाण्येन युष्मदादिभ्य आचार क्विबेव न भवति । अपि च हलन्तेभ्य आचारक्विपो[4]ऽभावे [5]'ह्रस्वनद्यापोनु'-डितिसूत्रस्थं भाष्यमपि मानम् । तत्रहि [6]कास्प्रत्ययादिति विहित स्याऽऽमो नुट्[7] कस्मान्नेत्याशङ्क्याकारानुबन्धेन सानुबन्धकत्वान्निरनुबन्धक-ग्रहणे न सानुबन्धकस्येति समाधायोक्तं तर्ह्यकारानुबन्धः कर्तव्योऽवश्यं कर्तव्योऽन्यथा मकारस्येत्संज्ञाऽऽ-[8]पत्तिः । न चेत्संज्ञकत्वे मकारोच्चारणं व्यर्थम् । न च 'मिदचोऽन्त्यात्पर' [9]इत्य-स्य प्रवृत्त्यर्थं कास्धातोर्विधीयमानस्यामोऽन्त्यादचः परत्वेफलाभावात् प्रत्ययान्ताद्-विधीयमानस्यान्त्यादचः परत्वे 'परश्च'[10] इत्यनेन प्रत्यय-परत्वे वा विशेषाभावादिति मकारोच्चारणसामर्थ्यान्नेत्संज्ञा' इत्युक्तम्[11] । हलन्तेभ्य आचारक्विपः सत्त्वे हि युष्मदादिशब्देभ्य आचारक्विबन्तेभ्य आमि प्रत्ययपरत्वेऽन्त्यादचः परत्वे विशेषसम्भ-वेन भाष्यमिदमसङ्गतं स्यात् । एवमेकार्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यभावो ज्ञापकतापरभाष्य-प्रामाण्यात् । अतो नास्यास्तत्रापि चारितार्थ्यम् । न च [12]मपर्यन्त-स्येति सूत्रे परिग्रहणाभावे यत्रैव मान्ते युष्मदस्मदौ तत्रैव स्यात् । क्व च मान्ते युष्मयतेरस्मयतेरप्रत्यय इति [13]भाष्ये युष्मदस्मच्छब्दाभ्यां णिच उक्तत्वादिदमसङ्गत-मिति शङ्क्यम् । यतो भाष्यमिदं बहुत्वार्थकयुष्मदस्मद्विषयकमिति नेदमसङ्गतम् ।

---

1. 'अनेकाल् शित्सर्वस्य' - अष्टा.1/1/95.
2. 'मपर्यन्तस्य' अष्टा. 7/2/91.
3. व्या.म.भा. 7/2/2/98.
4. 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' – - वा. वै. सि. कौ. नामधातु प्र. पृ. 295.
5. अष्टा. 7/1/54.
6. 'कास् प्रत्ययादाममन्त्रे लिटि' - अष्टा. 3/1/35.
7. ह्रस्वनद्यापो नुट्' - -अष्टा. 7/1/54.
8. 'हलन्त्यम्' – -अष्टा. 1/3/3.
9. अष्टा. 1/1/47.
10. अष्टा. 3/1/2.
11. व्या. म. भा. 7/1/1/54 पृ. 52.
12. अष्टा. 7/2/91.
13. व्या. म. भा. 7/2/2/9:. पृ. 157-158

ज्ञापितायां चास्यां बहिरङ्गस्यापि लुकः[1] तवाद्यादेशात् प्रागेव प्रवृत्त्या त्वत्पुत्र इत्यत्र 'तवककममकावेवंवचने'[2] इत्यस्य प्राप्तिरेव नास्तीति नोत्सर्ग-समान-देशत्व-मपवादस्येति नात्र न्यायेन मपर्यन्तस्यादेशः सुलभ इति त्वाद्यादेशानां सर्वादिशत्व-बाधनाय मपर्यन्तानुवृत्तिरत्रसूत्रे स्वांशे चरितार्था भवति । ज्ञापिताया अस्याः फलं तु गोमान् प्रियो यस्येति विग्रहे [3]बहुव्रीहौ 'गोमत् सु प्रिय सु' इति स्थिते पदद्वयापेक्ष-समासापेक्षलुकः[4] प्रागेवान्तरङ्गत्वात् सुप्रत्ययमपेक्ष्य 'उगिदचां सर्वनामस्थाने[5]ऽ-धातोः' इति नुमः, 'अत्वसन्तस्य[6]-चाधातोः' इति दीर्घस्य चाभावः । अस्या असत्त्वे ह्यत्र तयोरापत्तिर्दुवारा स्यात् । कैयटस्तु [7]प्रत्ययोत्तरपदयोश्चे'ति सूत्रे स्थानि-प्रक्लृप्त्यर्थं तवममाऽऽद्यादेशानाममुवृत्तिं स्वीकृत्य एकार्थयोर्युष्मदस्मदोस्तवममाद्या-देशस्थानिनोरनेन सूत्रेणादेशविधानं स्वीकृत्य तवममाद्यादेश-स्थले मपर्यन्तस्थानि-कत्वस्य स्थानिप्रक्लृप्त्यर्थानुवृत्ततव-ममादिभिरेव सिद्धत्वात्तत्र प्रयोजनाभावेन मपर्यन्त-ग्रहणस्या-संबन्धात् त्वया कृतं त्वत्कृतं, मया कृतं मत्कृतमित्यत्र सर्वादिशत्व-वारणायैव मपर्यन्तानुवृत्तिः । यदि लुग्विषये अन्तरङ्ग-परिभाषा स्यात्, तर्हि 'त्वमावेक-वचने'[8] इत्यनेनैव तत्सिद्धे व्यर्था स्यादिति 'उत्सर्गसमानदेशा अपवादा' इति नियमाभावेऽपि परिभाषाया अस्या ज्ञापिका सा सम्पद्यते' – इत्याह[9] । मतमिदं

---

1. 'सुपोधातुप्रातिपदिकयोः' - - अष्टा. 2/4/71. .
2. अष्टा. 4/3/3.
3. 'अनेकमन्यपदार्थे' – अष्टा. 2/2/24.
4. 'सुपोधातुप्रातिपदिकयोः' – अष्टा. 2/4/71.
5. अष्टा. 7/1/70
6. अष्टा. 6/4/14.
7. अष्टा. 7/2/98.
8. अष्टा. 7/2/97.
9. तथाहि – "केचिद् व्याचक्षते -- यद्यादेशान्तराणां त्वमौ बाधकौ स्यातां तदा मपर्यन्त-ग्रहणानुवृत्तिमन्तरेणोत्सर्ग्रसमानदेशत्वादपवादानां मपर्यन्तस्य त्वमौ सिद्धाविति किं तदनुवृत्त्या । अनुवृत्त्या तु ज्ञाप्यते - प्रागेव लुकि कृते विभक्त्यभावात् सत्स्वादेशान्तरेषु त्वमौ विधीयेते इति । एतच्चायुक्तम् । नायं नियोग 'उत्सर्गसमानदेशोऽपवाद' इति, श्नम्-बहुजकचां भिन्न-देशानामप्यपवादत्वदर्शनात् । ततश्चासत्यां मपर्यन्तानुवृत्तावादेशान्तराणा-मपि बाधकौ त्वमौ सर्वादेशौ स्यातामनेकाल्त्वादिति सप्रयोजना मपर्यन्तानुवृत्तिः । तस्मादन्यथा व्याख्यायते – तवममादय आदेशाः स्थानिप्रक्लृप्त्यर्थमिहानुवर्तन्ते । तत्र तवादीनां प्रसङ्गो सिद्धयोस्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति । ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्ति ज्ञापनाय भवति । केवला हि मपर्यन्तानुवृत्तिर्लाघवाय स्यात् । गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः, ततो ज्ञापनाय न प्रभवेत् । तस्मात्तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्यथोक्तार्थज्ञापनायालम्पिति" – प्रदी. 7/2/2/98. । हरदत्तमिश्रोऽपि कैयटस्य मतमिदमुपपादयत्

भट्ट[1]नागेशाय न रोचते । यतो ज्ञापितेऽपि तवाद्यनुवृत्तेः सार्थक्यमुपपादयितुमशक्यम् ।

हरदत्त मिश्रस्तु – 'यदि लुग्विषये अन्तरङ्गं स्यात्, तर्हि अन्तरङ्गत्वात्तवममाद्यादेशेषु कृतेषु मपर्यन्ताभावान् मपर्यन्तानुवृत्तिः [2]'प्रत्ययोत्तरपदयोश्चे'ति सूत्रे व्यर्था सती 'परिभाषाया अस्या ज्ञापिके'त्याह[3] ।

'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता' इत्यभियुक्तोक्तेर्मतमिदं सर्वं सम्यगेव प्रतिभाति । 'वार्तिकरीत्या इदं ज्ञापकं, भाष्यमते तु वाचनिकमेवे'ति भट्ट[4]-नागेशमतं तु न युक्तम् । यतः कैयटेन भाष्यमतेऽपि ज्ञापकत्वमुपपादितम्[5] । अस्या ज्ञापकत्वे नानामतानि[6] सन्ति[7] । इयं च न लुग्विशेष-विषया, किन्तु लुक्सामान्य-

---

1. तथाहि – "अपर आह – यद्येतदादेशान्तराणां" बाधनार्थं स्यात् 'मपर्यन्तस्य' इत्यनुवृत्तिरपार्थिका स्यात् । कथम्? उत्सर्गसमानदेशत्वादपवादानां श्यनादिषु तथा-दृष्टत्वादिति । नायं नियमः - 'उत्सर्गसमानदेशा अपवादाः' इति, स्यनादिषु व्यभिचारात् । नहि श्नम् बहुजकचः शबादिभिः समानदेशाः । तस्माद्यद्यस्यामुपपत्तिः.- कर्त्तव्या, एवं वक्तव्यम् - इह त्वाहादयोऽप्यनुवर्तन्ते, मपर्यन्तस्येति च, तत्र त्वाहाद्यनुवृत्त्यैव तद् बाधेसिद्धे मपर्यन्तानुवृत्तिरप्राप्तप्रापणार्थासती ज्ञापकमुक्तार्थस्ये' ति" - पदम. 7/2/98.
2. अष्टा. 7/2/98.
3. तथाहि – "वयं तु ब्रुमः - 'मपर्यन्तस्य' इत्येवानुवर्त्यं तस्यादेशौ विधेयौ । यदि चान्तरङ्गा आदेशाः स्युः, प्रत्ययोत्तरपदयोर्मपर्यन्तस्य न क्वापि सम्भव इति तस्यादेशविधानमनुपपन्नं स्यादिति ज्ञापकमुक्तार्थ स्येति" - पदम. 7/2/98.
4. 'अनेन हि,–
   (क) "यद्यपि असंभवे एव बाधकत्वमिति वार्तिकमते 'उत्सर्गसंमानदेशा अपवादा" इति न्यायो, भाष्यमतेतु, सत्यपि संभवे बाधस्वीकारस्थापिभाष्यमते वाचनिक्यैवैषा । ज्ञापकोपन्यासस्तु वार्तिकरीत्येति बोध्य" मित्युक्तम् - उद्यो. 7/2/2/98. पृ. 161.
   (ख) "वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव । भाष्यरीत्या तु वाचनिक एवायमर्थः, इतिचोक्तम् – प. शे. प. 53, पृ. 231-238.
5. प्रदी. 7/2/2/98, पृ. 160 - 161.
6. तानि च तात्याशास्त्रीति प्रसिद्ध रामकृष्णकृत परिभाषेन्दुशेखर भूति टीकायामुल्लिखितानि – तथाहि –
   (क) "अन्येतु प्रत्यय इत्यधिकारे कर्तव्ये' ऽङ्गस्ये' त्यधिकार - करणमस्यां ज्ञापकम्, तत्फलं ' पञ्च क्रोष्टीति । अत्रहि पञ्चभिः क्रोष्ट्रीभिः क्रीतमित्यर्थे तद्धितस्त्रीप्रत्यययोर्लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञायां 'स्त्रियां चेति तृज्वत्वं भवति । 'प्रत्यय' इत्यधिकारे तु न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधेन प्रत्यय परत्वाभावात्तृज्वत्वा नापत्तिः । एततूपरिभाषा भावे 'तु' 'प्रत्यय' इत्यधिकारेऽप्यन्तरङ्गत्वात् पूर्वमेव तृज्वत्वे'ऽङ्- गस्ये' त्यस्य वैयर्थ्यं स्पष्टमेवेति" वदन्ति" ।
   (ख) "केचितु" त्वामावेकवचने' इति सूत्रे विभक्तावित्यनुवृत्तिरेतज्ज्ञापिका । तत्पलन्तु 'युस्मत् सुन्दरपुत्र, इत्यत्रैतदप्रवृत्तिरेव । एतत्परिभाषाऽसत्त्वेतु विभक्तिपदानुवृत्तेः सत्त्वासत्वयोरपित्वमयोर्दुवारतया तदसङ्गतिः स्पष्टैवेति प्राहुः" ।

विषया । यतः 'हे त्रपु' इत्यादौ अनेन न्यायेन लोपं बाधित्वा लुग् [1]भवतीत्युक्तं भगवता, अन्तरङ्गांश्च विधीन् सर्वोऽपि लुग् बाधते, न तु सुब्लुगेवेति [2]चोक्तं कैयटेन । तेन 'सनीस्रंस इत्यादावनया परिभाषया [3]नलोपं बाधित्वाचि यङो [4]लुकि ततो 'न[5]लुमतेति' निषेधान्नलोपाभावः सिद्ध्यति । आस्याः 'सुपो [6]धातुप्रातिपदिकयो'रितिलुङ्मात्रविषत्वे तु न केवलं भाष्य - कैयटोक्तिविरोधः स्यात् किन्तु 'सनीस्रंस' इत्यादौ यङो लुकः प्राक् नलोपाऽऽपत्तिरपि दुर्वारा स्यात् । भट्टनागेशस्तु 'अनेन च न्यायेनान्तरङ्गनिमित्त-विनाशकलुकस्तत्प्रयोजकसमासादीनां प्राबल्यं [7]बोध्यत इत्याह ।

## 'वा' – इत्यनुवृत्तिः

[8]'द्युद्भ्योलुङी'त्यत्र 'वा[9]क्यषः' इति सूत्राद् 'वे'त्यनुवृत्तिः 'न परस्मैपदविषये आत्मनेपदं भवती'ति वचनस्य ज्ञापिका[10] । यतोऽस्य वचनस्याभावे

---

(ग) "अन्ये तु त्वमेति सिद्धे 'प्रत्ययोत्तरपदयोश्चे'त्यस्य वैयर्थ्येन सामर्थ्यात्तवममादिशास्त्रबाधकल्पनापेक्षयान्तरङ्गपरिभाषाऽप्रवृत्ति-बोधकैतत्परिभाषाज्ञापकत्वस्यैवौचित्यमिति वदन्ति" ।

(घ) "परे तु तवममौ ङस्यलुकीति न्यासेनालुकीत्यस्य 'तुभ्यमह्या'वित्यत्र सम्बन्धेन 'त्वत्पुत्र' इत्यादौ तवममादिव्यावृत्त्या' तवपुत्र' इत्यादावलुक्समासे व्यासे च तवादिसिद्ध्या प्रत्ययोत्तरेति सूत्रमेवोक्तार्थे ज्ञापकम् । ज्ञापिते त्वेतस्मिन् वचने 'त्वदीयस्त्वत्पुत्र' इत्यादौ 'त्वमावेकवचने' इत्यस्य विभक्तिपरत्वाभावेनाप्राप्त्या त्वाद्यादेशार्थं सूत्रं तच्चरितार्थमिति प्राहुः भूतितिलके प. 52, पृ. 203 - 204.

7. अष्टा. 7/1/23.
1. व्या.म. भा. 6/1/3/69, पृ. 597.
2. प्रदी. 7/3/1/45, पृ. 201 - 202.
3. अनिदितां हल उपधायाः क्ङिति' –
 -अष्टा. 6/4/24.
4. 'यङोऽचि च' – अष्टा. 2/4/74.
5. 'न लुमताऽङ्गस्य' – अष्टा. 2/4/74.
6. अष्टा. 2/4/71.
7. उद्यो. 7/2/2/98, पृ. 161,
 तथा प.शे.प. 53 पृ. 233.
8. अष्टा. 1/3/91.
9. अष्टा. 1/3/90.
10. तथाहि –
 (क) "यदयं द्युतादिभ्यो वा वचनं करोति तज् ज्ञापयत्याचार्यो - 'न परस्मैपदविषये आत्मनेपदं भवती" – त्याह पत. व्या. म. भा. 1/3/2/79, पृ. 297.
 (ख) "अनुपराभ्यां कृञः (सू. 1/3/79) द्युतादिभ्यो वा वचनात् ज्ञापकात् न परस्मै-पद-विषये आत्मने-पदं भवती"त्याह श्री ना. ज्ञा. सं. 1 पृ. 149.

[1]'व्यद्युतत्' [2]'व्यद्योतिष्ट' – इत्यादौ – [3]पदद्वयसिद्ध्यर्थं कृता 'वे'-त्यनुवृत्तिर्व्यर्था । परस्मैपदविषयेऽप्यात्मनेपदं यदि स्यात्तर्हि तदनुवृत्तिमन्तरेणापि हि पदद्वय - सिद्धिरत्र सुलभा । ज्ञापिते चास्मिन् वचने तत्र पदद्वय-सिद्ध्यर्थमनुवृत्तिरियं स्वांशे चरितार्था भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अनुकरोति' पराकरोति'- इत्यादावात्मनेपदाभावः[4] । अस्यासत्त्वे हि 'अनुपराभ्यां[5]-कृञ' इतिसूत्रेण परस्मैपदविधानेऽपि परस्मैपदमेव भवतीति नियमाभावादत्राऽऽत्मने-पदाऽऽपत्तिर्दुवारा स्यात् ।

## (ख) ज्ञापक उच्चारणार्थकोऽच्

येषां वर्णानामुच्चारणसौलभ्य - व्यतिरिक्तं किमप्यन्यत् प्रयोजनं नास्ति ते उच्चारणार्थका वर्णा इत्युच्यन्ते । तत्र ये स्वतः किञ्चन वचनं ज्ञापयन्त एवाऽऽत्मनः सार्थकतां लभन्ते, ते ज्ञापका उच्चारणार्थकाः स्वरा इत्युच्यन्ते । तेषामेवाचूपदव्यवहार्याणामत्र ज्ञापकत्वं निरूप्यते । तत्र–

### अकारः

पाणिनीय-व्याकरणस्य [6]निदानानि चतुर्दश-प्रत्याहार-सूत्राणि[7] नटराजराजो[8] भगवान् महेश्वरः परमभागवताय दाक्षीपुत्रायोपदेष्टुं चतुर्दशवारं– स्वढक्कां [9]नादितवानित्येतेषां सूत्राणां माहेश्वरत्वं[10] निश्चप्रचम् । यत्तु युधिष्ठिर- मीमांसको नाना-प्रमाणानि समुपस्थापयन् 'अइउण्' – इत्यारभ्य हल्पर्यन्तानि चतुर्दश

---

1. विपूर्वकात् (द्युतदीप्तौ धा. पा. भ्वा. 741,) इति द्युत् धातोर्लुङि 'द्युद्भ्योलुङि' - अष्टा. 1/3/91 इति परस्मैपदपक्षेतिपि च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' – अष्टा. 3/1/55. इति च्लेरङादेशे रूपम् ।
2. विपूर्वकात् 'द्युतदीप्तौ' धा. पा. भ्वा. 741 इति द्युत्धातोर्लुङि परस्मैपदाभावपक्षे 'अनुदात्तङित आत्मनेपदम्' - अष्टा. 1/3/12 इत्यनुदात्तेल्लक्षणमात्मनेपदे ते च्लौ सिचि इडागमे षत्वे ष्टुत्वे च कृते रूपमिदम् ।
3. पदद्वयेत्यस्याऽऽत्मनेपद-परस्मैपद इत्यर्थः ।
4. 'स्वरित ञितः कर्त्रभिप्राये क्रियाफले' – इति ञिल्लक्षणस्यात्मनेपदस्याभाव इत्यर्थः ।
5. अष्टा. 1/3/79
6. 'निदानं त्वादिकारणम्' - अ. को. 1/4/28
7. 'अ' 'इ' 'उ' 'ण् - 1/ ऋ लृक् -2/ ए ओ ङ् -3/ ऐ औच्' -4/ हयवरट् -5/ लण् -6/ ञ म ङ ण न म् -7/ झ भ ञ् -8/ घ ढ ध ष् -9/ ज ब ग ड द श् -10/ ख फ. - छ ठ थ च ट त व् -11/ क प य् -12/ श ष श र् -13/ हल् -14.
8. विश्वरूपविलास-वैचित्र्यचमत्कार-प्रवीणत्वान्नटराजराजः, ताण्डवाख्य-लासमात्र-विलासवैचित्र्यचमत्कारप्रवीणत्वस्य त्वन्यत्र नटादावपि सत्त्वादिति भावः ।
9. (क) "नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।

प्रत्याहार-सूत्राणि न माहेश्वराणि, किन्तु पाणिनि - रचितानीत्याह[1], तन्न युक्तं प्रतिभाति । यतोऽस्य मतं न केवलं नन्दिकेश्वर [2]काशिकापाणिनीयशिक्षा[3]- भर्तृहरिकृत व्याकरणमहाभाष्यदीपिका[4]–भट्टोजिदीक्षित कृ त वैयाकरणसिद्धान्त- कौमुदी[5], - भट्टनागेशकृत - लघुशब्देन्दुशेखर[6] - विरुद्धधं प्रत्युत व्याकरण- महाभाष्य- विरुद्धमपि भवति । तत्र हि - "एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते' इत्युक्तम्[7] । नहि मीमांसकमते पाणिनिव्याकरणशास्त्रस्याऽऽदिमं सूत्रं [8]'वृद्धिरादै'जिति । असौ हि पाणिनेरादिमं सूत्रम् 'अथ शब्दानुशासन'मिति वार्तिकं भाष्यं वा स्वीकरोति[9] ।

---

उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् ॥
न. का. 1.

(ख) "अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुदर्शम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये" ॥ –
न. का. 2.

(ग) "तत्त्वातीतः परं साक्षी सर्वानुग्रहविग्रहः ।
अहमात्मा परो हल् स्यादिति शम्भुस्तिरोदधे" ॥ –
न. का. 27.

10. (क) "शंकरः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः" ॥
पा. शि. 56.

(ख) "येनाक्षरसमाम्नान्यमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः" ॥ –
पा. शि. 57.

(ग) "तत्कथं शिवसमुदाये कार्यभाजिनि अवयवा न लक्ष्यन्ते"
– भ. ह. व्या. म. भा. दी. पृ. 175.

(घ) "इमानि माहेश्वरसूत्राण्यणादिसंज्ञार्थानि"
–भट्टोजि. वै. सि. कौ. संज्ञा प्र. पृ. 3.

(ङ) "माहेश्वरादागतानि । (ततः आगत इत्यण्) महेश्वरप्रसादलब्धानीति"
–भट्टना. ल. श. शे. संज्ञा प्र. पृ. 16.

1. संस्कृत व्याकरणशास्त्र का इतिहास भाग - 1
पृ. 204 - 217.
2. श्लो. 1, 2, 27.
3. श्लो. 56, 57,
4. पृ. 175.
5. संज्ञा. प्र. पृ. 3.
6. संज्ञा. प्र. पृ. 16.
7. व्या. म. भा. 1/1/3/1.
8. अष्टा. 1/1/1.
9. संस्कृत व्याकरणशास्त्र का इतिहास भाग - 1,
पृ. 204 - 207.

किंच चतुर्दश प्रत्याहारसूत्राण्युद्दिश्य भाष्यकृत्-कृतः [1]'अक्षरसमाम्नाय' इति पदप्रयोगोऽप्येषां पाणिनिरचितत्वे नोपपद्येत । [2]आम्नाय-[3]साम्नायशब्दौ हि वेद-पर्यायौ । ऋक्तन्त्रव्याकरणे शाकटायनोऽप्येषां चतुदर्शसूत्राणां श्रुतित्वं स्वीच[4]कार ।

अथात्र 'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यता'मिति[5]भाष्यं प्रौढोक्तिः, यतो भगवान् पाणिनिः 'अपृक्त [6]एकाल्प्रत्ययः' इत्यादावपि संज्ञां पूर्वमाहेति तु नाशङ्कनीयम् । यतः कैयट-भट्टनागेशाभ्यां वृद्धिसंज्ञासूत्रादन्यत्र संज्ञायाः पूर्वोक्तो हेतुरुपपादितः । तथाहि- "अपृक्त [7]एकालप्रत्ययः" इति तु परिभाषा, न संज्ञेति नास्ति व्यभिचारः । अपृक्तशब्देन ह्येकाकी कथ्यत इत्यनेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते"–इत्याह कैयटः[8] । भट्टनागेशस्तु" 'अपृक्त [9]एकाल्' 'स्वं[10] रूपं' 'तपर[11]' - इत्यादौ

---

1. "सोऽयमक्षरसमामान्यो वार्णसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः" - –व्या. म. भा. 1/1/2.
2. (क) "आम्नायस्य क्रियार्थत्वात्"–मी. द. 1/2/1.
   (ख) "आम्नायः पुनर्मन्त्रा ब्राह्मणानि च" - -कौशिक सू. 1/3.
   (ग) "श्रुतिः स्त्री वेद आम्नायः" –अ. को. 1/6/3.
3. "समाम्नायः समाम्नातः" –या. नि. 1/1/1.
4. तथाहि – "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाचार्याऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिरिति" शाकटायनग्रन्थो भट्टनागेशेनोद्धृतः ल. श. शे. संज्ञा. प्र. पृ. 22.
5. 1/1/3/1.
6. अष्टा. 1/2/41.
7. अष्टा. 1/2/41.
8. प्रदी. 1/1/3/1.
9. 'अपृक्त एकाल् प्रत्ययः' –
   -अष्टा. 1/2/41.
10. 'स्वं रूपं शब्दस्याशब्दसंज्ञा'–
   -अष्टा. 1/1/88.
11. 'तपरस्तत्कालस्य' -अष्टा. 1/1/70.

संज्ञायाः पूर्वपाठः 'विधेयस्य प्राक् प्रयोगेऽसाधुत्वभ्रमनिवारणाये'त्याह[1] । इत्थं युधिष्ठिरमीमांसकस्य तदुपजीव्यानां [2]मेधातिथि - [3]सृष्टिधराचार्य-स्वामिदयानन्द-सरस्वतीनां[4] पाणिनीयव्याकरणप्रत्याहारसूत्राणां माहेश्वरत्वमस्वीकुर्वताम् 'अथशब्दानुशासन'मितिवार्तिकस्य भाष्यस्य वा पाणिनेरष्टकस्याद्य-सूत्रत्वोपपादनं नास्मभ्यं रोचते । **अस्तु** । **प्रकृतिमनुसरामि** ।

'हयवरट्- हल् इत्येतेषु दशमाहेश्वर- सूत्रेषु '[5]लं' विहाय 'हय व र -' इत्यादिषु पुनः पुनरुच्चारितोऽकारः' **'हकारादिष्वकार [6]उच्चारणार्थः'** – इति वचनस्य ज्ञापकः । यतोऽसौ एतद्वचनाभावे व्यर्थः । न च "नान्तरेणाचं व्यञ्ज नस्योच्चारणमपि [7]भवती'ति भगवदुक्तेस्तत्सार्थक्यमिति वक्तुं शक्यते । यतो द्वित्रादिवर्णानन्तरमपि तदुच्चारणे यकारादिव्यञ्जनोच्चारणसम्भवेन पुनः पुनस्तत्रा कारोच्चारणं व्यर्थमस्त्येव । अतो 'हकारादिष्वकार उच्चारणार्थ' इति वचन-ज्ञापनायैव हकारादिषु पुनः पुनः - अकारो महेश्वरोच्चारितः इति निश्चिनुमः । वचनस्यास्य फलं तु 'सोऽस्ती'त्यादौ [8]'एतत्तदोस्सुलोपोऽकोरनञ्समासे हली' ति सुलोपाभावः । अस्य वचनस्यासत्त्वे हि हल् - प्रत्याहारेऽप्यकारस्य पाठो दुर्वार इति तत्र सुलोपाऽऽपत्तिः स्यात् ।

भट्टनागेशेन तु "प्रधानाप्रधानयोः प्रधानस्यैव ग्रहण"मिति न्यायान्नाकारस्य हलादिप्रत्याहारेषु ग्रहणं प्राप्नोति, तेषां तत्राप्राधान्यात् । प्राधान्यं चात्र प्रत्याहारे ग्रहणार्थत्वरूपम् । नाप्यजादिप्रत्याहारेषु 'ण'कारादीनां ग्रहणं प्राप्नोति, तेषां

---

1. ल. श. शे. प. प्र. पृ. 138.
2. अनेन हि - "पौरुषेयेष्वपि ग्रन्थेषु नैव सर्वेषु प्रयोजनाभिधानमाद्रियते । तथाहि - भगवान् पाणिनिरनुक्त्वैव प्रयोजनम्' - अथशब्दानुशासन' मिति सूत्रसन्दर्भमारभते" इत्युक्तम् - मनु. टी. 1/1.
3. अनेन हि - "व्याकरणशास्त्रमारभमाणो भगवान् पाणिनिमुनिः प्रयोजन - नामनी व्याचिख्यासुः प्रतिजानीते - अथशब्दानुशासन'मित्युक्तं भाषावृत्त्यर्थविवृतिप्रारम्भे ।
4. अनेन हि - "अथशब्दानुशासनम् । इदं सूत्रं पाणिनीयमेव । प्राचीन - हस्तलिखित-पुस्तकेषु आदाविदमेवास्ति । दृश्यन्ते च सर्वेष्वार्षेषु ग्रन्थेषु प्रतिज्ञासूत्राणीदृशानि । 'एषा हि आचार्यस्य शैली - लक्ष्यते - यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्ष्विति भाष्यस्य आचार्य - पदेन पाणिनिरेव ग्रहीतुं शक्यः" इत्युक्तम् - अष्टाध्यायीभाष्यप्रारम्भे ।
5. लकारोत्तराकारस्यानुनासिकतया इत्त्वात्तूतं विहायेत्यर्थः ।
   तथ्यमिदमत्र प्रबन्धे 'ज्ञापिका भाष्योक्तयः' –इति प्रघट्टके निरूपितम् ।
6. वै. सि. कौ. संज्ञा प्र. पृ. 24.
7. व्या. म. भा. 1/2/1/29.
8. अष्टा 6/1/132.

तत्राप्राधान्यात् । अतो हकारादिषु पुनः पुनरुच्चारितोऽकारः."उच्चारणार्थ - वर्ण - रहित - हलां तद्घटितप्रत्याहारे ग्रहणं ने'ति वचनस्य ज्ञापक" इति सूचितम् [1]।

भट्टनागेशज्ञापितवचनाकारे – 'तद्घटितप्रत्याहारे' - इत्यस्य 'तेन = उच्चारणार्थवर्णेन, घटिताः = सहितास्तद्घटित-हादि-शब्दास्तेषां प्रत्याहारे = बोधके' –इत्यर्थो विवक्षितः । अतः इणादेरपि हादिबोधकत्वेन तत्त्वात्तत्रापि न तेषां ग्रहणम्, अजादीनां तु न तत्त्वमतोनेदं समाधानं तत्र, एतदर्थमेव 'तद्घटित' इत्युक्तम् । अन्यथा 'प्रत्याहारे' इत्येव वदेत् ।

अत्राह राघवेन्द्राचार्यः 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवती'[2] ति भाष्योक्तन्यायेन हकारादिषु पुनः पुनरकारोच्चारणस्य सार्थक्यान्नागेशोक्त-मयुक्तमेतत् । हश्-प्रत्याहारे तु न टकार - ग्रहणम् । यत्तुल्य - जातीयाँस्तुल्य-जातीयेषूपदिशतीति[3] भाष्यस्यअन्तःस्थानामन्तःस्थेषु पञ्चमानां पञ्चमेषु चतुर्थानां चतुर्थेषु तृतीयानां तृतीयेषु द्वितीयानां द्वितीयेषु प्रथमानां प्रथमेषूष्मणामूष्मसूपदेशस्य ग्रहणार्थत्वं नेतरेषामित्यर्थकत्वात् । 'अचोऽक्षु [4]हलो हल्ष्वि'ति भाष्यस्योप-लक्षणार्थत्वान्न कश्चि[5]द्बोध इति वासुदेवदीक्षितस्तु 'उच्चैरुदात्तः[6]' –इति सूत्रस्थेन 'नान्तरेणाचं व्यञ्जनस्योच्चारणमपि [7]भवती'ति भगवद्वचनेन हकारादिषु तेषां सुखोच्चारणार्थं पुनः पुनरकारोच्चारणं चरितार्थमिति नैतज् ज्ञापकमुक्तवचनस्य । हकारादिषु पुनः पुनरकारोच्चारणं 'नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवतीति वचनस्यैव वा ज्ञापकम् । अतो-'वर्णात् कारः[8]' इति कार - प्रत्यये सति 'ककारः' इत्यादिरूपाणि सिद्धयन्ति । 'वा'गित्यवसानेषु 'वृक्ष' इत्यादौ संयुक्तवर्णेषु च पदान्ते 'चोः[9] कुः 'इत्यादिबलात् [10]'हलोऽनन्तराः संयोगः' – इत्यादिबलाच्च नायं नियम [11]इयाह ।

अत्र राघवेन्द्राचार्य - मतं न युक्तम् । यतस्तेनोक्तं हकारादिषु पुनः पुनरकारोच्चारणस्य सार्थक्यं न विद्वज्जनमनोग्राहि । यथा पूर्वाचं गृहीत्वा

1. ल. श. शे. संज्ञा. प्र. 34 .
2. व्या. भ. भा. 1/2/1/29
3. व्या. म. भा. 1/1/2/5.
4. व्या. म. भा. 1/1/2/5.
5. ल. श. शे. - –विषमपद-विवृतौ संज्ञा प्र. पृ. 33-34.
6. अष्टा. 1/2/29.
7. व्या. म. भा. 1/2/1/29.
8. वा. वै. सि. कौ. उत्तर कृदन्त प्र. पृ. 565.
9. अष्टा. 8/2/30.
10. अष्टा. 1/1/7.
11. बा. मनो. संज्ञा प्र. - पृ. 4.

'अनङादौ' अन्त्यानुबन्धानामक्लिष्टतया स्पष्टतया चोच्चारणोपपत्तिस्तथा'ह य् वरि'-त्याद्युक्तावपि तदुपपत्तौ यादावकारोच्चारणस्य वैयर्थ्यं तदवस्थमेव । अतएव 'पुनः पुन'रिति वीप्सितं भट्टनागेशेन । इत्थं प्रथमहलनन्तरमचमुच्चार्य पुनर्व्यञ्जनानन्तर-मच उच्चारणेऽपि बाधकाभावेन हकारादिषु प्रतिव्यञ्जनोत्तरमुच्चरितोऽकारो व्यर्थ एवेति तस्य ज्ञापकत्वं युक्तमेव ।

इत्त्थमत्र वासुदेवदीक्षितमतमपि न युक्तम् उक्तयुक्तेः । तथ्यमिदं स्वीकुर्वन्नसौ यत् पक्षान्तरमाह 'नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवती'ति भाष्यवचनमेव पुनः पुनरकारोच्चारणं [1]ज्ञापयती'ति, तदपि न युक्तम् ।

वस्तुतस्तु भट्टनागेशमतमप्यत्र न युक्तम् । यतो हशादिप्रत्याहारेषु टकारस्य ग्रहणाभावाय हकारादिषु पुनः पुनरुच्चारितोऽकारः 'हादिबोधकप्रत्याहारे उच्चारणार्थकवर्णरहित-हलां ग्रहणं न भवती' ति वचनज्ञापकत्वं तेन सूचितम् । हशादिप्रत्याहारेषु टकारस्य ग्रहणाभावश्चान्यथा सिद्धः । कथमन्यथासिद्ध इति चे-दित्त्थम् –टादेरुपदिष्टत्वान्न हशादौ ग्रहणं भविष्यति. यदि तत्रापि तस्य ग्रहणमिष्टं स्यादाचार्यस्य तर्हि द्विवारमुपदिशेत् 'ह' व दिति ।

## उकारः

[2]'इदमस्थमु'रित्यत्र स्थमोर्मकारस्येत्संज्ञापरित्राणार्थमुच्चरितः[3] स्थमोरुकारः "तद्धित-विभक्तौ" [4]'न विभक्तौ तुस्माः' इत्ययं प्रतिषेधो नास्ती"ति वचनस्य [5]ज्ञापकः । यतोऽस्याभावे स्थमोरुकारो व्यर्थः । न च '[6]हलन्त्य'मिति

---

1. बा. मनो. संज्ञा प्र. - पृ. 4
2. अष्टा. 5/3/24.
3. (क) "उकारो मकारपरित्राणार्थः"-
   का. 5/3/24.
   (ख) "प्रत्यये उकार उच्चारणार्थः । मकारस्य उपदेशेऽन्त्यत्वाभावान्नेत्त्वम्"
   बा. मनो. तद्धिते प्रागृदिशीय प्र. पृ. 758.
4. अष्टा. 1/3/4.
5. तथाहि–
   (क) "इदमस्थमुरिति (4/3/24) मकारस्येत्संज्ञापरित्राणार्थमुकारमुच्चारयन् आचार्यो ज्ञापयति 'तद्धित-विभक्तौ 'न विभक्तौ तुस्माः' (1/3/4) इत्ययं प्रतिषेधी-नास्ती'ति । तेन कमोदित्यत्र (5/3/12) इत्संज्ञा तकारस्य सिद्ध्यति । यद्येवमिदानीं तदानीमिति दानीमि मकारस्य इत्संज्ञा प्राप्नोति । सत्यम् । यद्ययं मान्तः स्यात् । चकारान्तस्त्वयं भाष्ये उपगतः संयोगान्तलुप्तनिर्दिष्टश्चकार" इतीत्याह पु. दे. ज्ञा. समु. एकोनविंशे विभक्तिपादे पृ. 80.
   (ख) "यद्यपि 'न विभक्तौ.' इति निषेधादेव मस्येत्वं न भवति, तथापि तदनित्यत्वज्ञापनार्थं मकारोच्चारणमित्याह वा. दी. बा. मनो. तद्धिते प्रागृदिशीय प्र. पृ. 758.
6. अष्टा. 1/3/3.

मकारस्येत्संज्ञावारणायोकारश्चरितार्थ इति शङ्क्यम् । यतो 'न विभक्तौ तुस्माः[1]' इत्यनेनैव मकारस्येत्संज्ञावारणं सुलभम् । ज्ञापिते चास्मिन् वचने [2]'इत्थ'मित्यत्र 'न विभक्तौ तुस्माः[3]' इतीत्संज्ञाप्रतिषेधाप्रवृत्त्या प्राप्ताया [4]इत्संज्ञायाः परित्राणार्थं स्थमोरुकारः स्वांशे चरितार्थो भवति ।

न चास्य वचनस्य स्वीकारे [5]'इदानीं' [6]'तदानी'मित्यत्र [7]दानीमो [8]मकारस्येत्संज्ञाया आपत्तिः । यतो मान्तो नास्ति 'दानीम्' किन्तु चकारान्तः, संयोगान्तलुप्त-निर्दिष्टोह्यत्र चकारः । ज्ञापितस्यास्य वचनस्य फल तुं '[9]क्वे'त्यत्र[10] [11]'किमोऽदिति विहितस्य अतस्तकारस्येत्संज्ञा[12]-सिद्धिः । अस्य असत्त्वे हि 'प्रागदिशो[13]विभक्ति'रित्यतो विभक्तित्वेनेत्संज्ञाप्रतिषेधापत्तिरत्र[14] दुर्वारा स्यात् । वस्तुतस्तु थमोरुकारः अनुबन्ध इति 'ज्ञापका अनुबन्धाः' इति प्रघट्टकेऽप्यस्य ज्ञापकत्वं निरूपितम् ।

---

1. अष्टा. 1/3/4.
2. 'अनेन एतेन वा प्रकारेणेत्यर्थे इदमेतंच्छब्दाभ्यां क्रमशः 'इदमस्थमुः' – अष्टा. 5/3/24 इत्यनेन 'एतदोऽपि वाच्यः' वा. वै. सि. कौ. तद्धित प्रागुदेशीय प्र. पृ. 758, इत्यनेन थमु-प्रत्यये इदमः 'एतेतौरथोः' - अष्टा. 5/3/4, इति एतदस्तु 'एतद' इतियोगविभागाद् इदादेशे रूपम् ।
3. अष्टा. 1/3/4.
4. 'हलन्त्यम्' - अष्टा. 1/3/3.
5. 'अस्मिन् काले' इत्यर्थे इदमः सप्तम्यन्ताद् 'दानीञ्च' - अष्टा. - 5/3/18, इति दानीम्-प्रत्यये 'इदम इश्' - अष्टा. 5/3/3, इदम इशादेशे रूपम् ।
6. 'तस्मिन् काले' - इत्यर्थे तदः सप्तम्यन्तात् 'तदो दा च' - अष्टा. 5/3/19, इति 'दानीम्'-प्रत्यये स्वादिकार्येषु कृतेषु रूपम् ।
7. 'दानींच' - अष्टा. 5/3/18, 'तदो दा च' - अष्टा. 5/3/19.
8. 'हलन्त्यम्' - अष्टा. 1/3/3.
9. सप्तम्यन्तात् किम् शब्दात् 'किमोऽत्' – अष्टा. 5/3/12. इति 'अत्' प्रत्यये 'क्वाति' - अष्टा. 7/2/105, इति किमः क्वादेशेऽकारलोपे 'क्व' इति रूपम् । अव्ययत्वादत्र तत आगतस्य सुपो लुक् ।
10. अष्टा. 5/3/12.
11. 'हलन्त्यम्' - -अष्टा. 1/3/3.
12. अष्टा. 5/3/1.
13. 'किमोऽत्' – अष्टा. 5/3/12.
14. 'न विभक्तौ तुस्माः' – अष्टा. 1/3/4.

## (ग) ज्ञापका गणेषु शब्दपाठाः

सुविदितमिदं समेषां पाणिनीय-व्याकरण-पण्डितानां यद् भगवान् पाणिनिः '[1]सर्वादि' रित्यारभ्य [2]'क्षुम्नादि'रित्यन्तं गणपाठमपि [3]रचयांबभूवेति । तत्तद्-गणेषु ये केचन शब्दपाठाः परिभाषारूपं तद् व्यतिरिक्तं किमपि वचनं वा ज्ञापयन्त एवाऽऽत्मनः सार्थकतां लभन्ते, ते एव 'ज्ञापका गणेषु शब्दपाठाः' - इत्युच्यन्ते । तेषामेवात्र यथाक्रमं निरूपणं प्रस्तूयते । तत्र–

### 'अश्वसनिशब्दपाठः'

'न रपर सृपि सृजि स्पृशि स्पृहि सव[4]नादीना'मितिसूत्रस्थ सवनादिगणे[5] अश्वसनिशब्दस्य पाठः "क्वचिदनिणन्तात्परस्यापि 'पूर्वपदात्[6]संज्ञायामग' इतिणत्वं भवती"ति वचनस्य [7]ज्ञापकः । यतोऽस्यवचनस्याभावे '[8]पूर्वपदात्संज्ञायामग' इति सूत्रे 'इणः[9] षीध्वं लुङ् लिटां धोऽङ्गा'दित्यत इण इत्यस्यानुवृत्त्या इणन्तपूर्वपदात्

---

1. ग. पा. 1/1/27.
2. ग. पा. 8/4/39.
3. 'इति श्रीपाणिनिमुनि प्रणीतो गणपाठः'–इति हि मुद्रित-गणपाठ-पुस्तकेषु गणपाठान्त-पुष्पिका ।
4. अष्टा. 8/3/110.
5. "सवने सवने, सूते सूते, सोमे सोमे,सवनमुखे सवनमुखे, किंसं किंसम्, (किंसः किंसः) अनुसवनमनुसवनम्, गोसनिं गोसनिम्, अश्वसनिमश्वसनिम्, (सवने सवने, सवनमुखे सवनमुखे, अनुसवनमनुसवनम्, संज्ञायां बृहस्पतिसवः शकुनिसवनम्, सोमे सोमे, सुते सुते, संवत्सरे संवत्सरे बिंसं बिसम्, किंसं किंसम्, मुसलं मुसलम्, गोसनिम्, अश्वसनिम् - इति सवनादिः ग. पा. 8/3/110.
6. अष्टा. 8/3/104.
7. तथाहि–
   (क) "किमर्थं सवनादिष्वश्वसनिशब्दः पठ्यते ? षत्वबाधनार्थम् । 'पूर्वपदात्' इति षत्वं प्राप्नोति तद्बाधार्थम् । नैतदस्ति प्रयोजनम् । इणन्तादिति तत्रानुवर्तते, अनिणन्तश्चायं, नैव प्राप्नोति, नार्थः प्रतिषेधेन । एवं तर्हि सिद्धे सति यत् सवनादिष्वश्वसनिशब्दं पठति तज् ज्ञापयत्याचार्योऽनिणन्तादपि षत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? जलाषाहं माष इत्येतत् सिद्धं भवती"त्याह पत. व्या. म. भा. 8/3/110.
   (ख) "अश्वसनिग्रहणमनिणोऽपि षत्वमस्तीति ज्ञापनार्थम् । तेन जलाषाहम्, अश्वषाहमित्येतत् सिद्धं भवती"त्याह वाम. का. 8/3/108.
   (ग) "न रपर सृपि (8/3/110) । सवनादिषु अश्वसनि-पाठो ज्ञापयति – 'अनिणन्तादपि षत्वं भवती"त्याह एन्. एस्. रामा. ज्ञा. सं..परि. 1, पृ. 201.
8. अष्टा. 8/3/104.
9. अष्टा. 8/3/78.

परस्यैव सस्य [1]षत्वमनेन विधीयत इति अश्वसनिशब्दे सकारस्य षत्वं नानेन प्राप्नोतीति तत्र षत्वाभावाय सवनादिगणे अश्वसनिशब्दस्य पाठो व्यर्थः । ज्ञापिते चास्मिन् वचने 'पूर्वपदा'दिति षत्वमश्वसनिशब्दे सकारस्य प्राप्नोतीति तत्प्रतिषेधार्थमत्रगणे तस्य पाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [2]'जलाषाहम्'. '[3]माष' – इत्यादौ सकारस्य षत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि इणन्तपूर्वपदात् परत्वस्य सकारेऽत्राभावेन भत्वस्याप्राप्त्या नात्र षत्वं सिद्धयेत्। कैयटस्तु अथवैकदेश-विकृतार्थोऽयमारम्भः । 'अश्वषा इती'ति ग्रन्थं[4] व्याचक्षाणः अश्वसनिशब्दविषयमेव ज्ञापकम् - 'अनिणन्तादप्यश्वशब्दात् षत्वं भवती'ति । माषो जलाषाहमित्यत्र तु [5]सुषामादित्वात् षत्वसिद्धि''रित्याह[6] ।

## [7]कण्डूञ् - हृणीङ् - महीङां दीर्घपाठः

[8]'कण्ड्वादिभ्यो यगि'ति सूत्रस्थ-कण्ड्वादिगणे कण्डूञ्-हृणीङ् - महीङां दीर्घ-पाठः 'प्रातिपदिकत्वमपि कण्ड्वादीना'मिति वचनस्य [9]ज्ञापकः । यतोऽस्य

---

1. पूर्वपदात् संज्ञायामगः' - अष्टा. 8/3/104.
2. 'जलं सहते'- –इत्यर्थे जलमिति कर्मोपपदात् 'षहमर्षणे' धा. पा. भ्वा. 852, इति सहधातोः 'छन्दसिसहः' - अष्टा. 3/2/63, इति णिच्-प्रत्यये 'अत उपधायाः' - अष्टा. 7/2/116. इत्युपधावृद्धौ कृदन्त-प्रातिपदिकत्वेन ततोऽमि विभक्तौ रूपम् ।
3. "मानं माः, मां सनोतीति । जनसनेति विट् । विड्वनोरित्यात्वम् । विभक्तौ ङसि परत 'आतो धातो'रित्याल्लोपः" - इत्याह कै. प्रदी. 8/3/2/110.
4. व्या. म. भा. 8/3/2/110.
5. 'सुषामादिषु च' - अष्टा. 8/3/98.
6. प्रदी. 8/3/2/110.
7. कण्डूञ, मन्तु, हृणीङ्, वल्गु, असु (मनस्) महीङ्, लाट्, लेट्, इरस्, इरज्, इरञ् उवस्, उषस्, वेट्, मेधा, कुषुभ, (नमस्) मगध, तन्तस्, पम्पस्, (पपस्) सुख, दुःख, (भिक्ष, चरण, चरम, अवर) सपर, अरर, (अरर्) भिषज्, भिष्णुज्, (अपर, आर) इषुध, वरण, चुरण, तुरण, भरण, गद्गद, एला, केला, खेला, (वेला, शेला) लिट्, लोट्, (लेखा, लेख) रेखा, द्रवस्, तिरस्, अगद, उरस्, तरण, (तरिण) पयस्, संभूयस्, सम्बर । इति कण्ड्वादिः । आकृतिगणोऽयम् । ग. पा. 3/1/27.
8. अष्टा. 3/1/27.
9. तथाहि–
   (क) "उभयं कण्ड्वादीनि - धातवश्चैव प्रातिपदिकानि च । आतश्चोभयं, - कण्डूयतीति हि क्रियां कुर्वाणे प्रयुज्यते, 'अस्ति मे कण्डू'रिति वेदनामात्रस्य सांनिध्ये । अपर आह –

   धातुप्रकरणाद्धातुः कस्य चाऽऽसञ्जनादपि ।
   आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः" ।।

   इत्युक्त्या ज्ञापकत्वमप्यस्य सूचयति पत. व्यां. म. भा. 3/1/3/27.

वचनस्याभावेऽत्रैतेषां दीर्घ-पाठो व्यर्थः । तथाहि - यदि कण्डूञ्-हृणीङ्-महीङां प्रातिपदिकत्वं न स्यात्तर्हि नित्यमेषां धातुत्वमिति स्वीकरणीयं, तथा सति कण्डूयति कण्डूयते, हृणीयते महीयते -इत्यादौ '[1]कण्ड्वादिभ्यो यगिति' यकि कृते

---

(ख) "आह चेति । दीर्घान्तपाठाच्च पाक्षिकं धातुत्वमेषां निश्चीयते । नित्ये हि धातुत्वे नित्ये च यकि सति अकृद्यकार इति दीर्घस्य सिद्धत्वाद्दीर्घपाठोऽनर्थकः स्यादित्यर्थः" - इत्याह. कै. प्रदी. 3/1/3/27.

(ग) "अह चायमिमं दीर्घं मन्ये धातुर्विषाषितः" - इति- ग्रन्थेन ज्ञापकत्वमस्य सूचयति जया. का. 3/1/27.

(घ) "अथ प्रातिपदिकत्वं कण्ड्वादीनां कथमवसीयते ? इत्याह - आह चायमित्यादि । चकारो हेतौ । यद्येते धातव एव स्युस्ततो यकि कृते 'अकृत्' इति दीर्घत्वस्य सिद्धत्वात् कण्डूञ् हृणीङ्, महीङिति दीर्घं नोच्चारयेत्, उच्चारयति च दीर्घम, अतोऽवसीयते - धातुर्विभाषित इति । धातुत्वमेषां विकल्पितमित्यर्थः । ननु च पक्षे यत्र यङ् नास्ति तत्रायगन्तेभ्यः । क्विबादौ प्रत्यय उत्पन्ने कण्डूः, कण्डूतिः, कण्डूत, कण्डूतवानिति दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणं स्यात् । तत् कुतस्तस्यानर्थक्यम् ? कथं पुनरयगन्तेभ्यः क्विबादयो भवन्ति, यकः पाक्षिकत्वात् तदपि कुतः ? वेत्यनुवृत्तेः, नैतत्, नित्यत्वादस्य विधेः । नित्यत्वन्तु वाग्रहणस्य निवर्तितत्वात् । कुतः पुनस्तन्निवृत्तिरवसीयते ? 'आयादयः' इत्यादेः सूत्रारम्भात् । यद्यत्र वेत्यनुवृत्तिस्तदोत्तरत्राप्यनुवर्तनादायादयो वा भविष्यन्तीत्येतन्नारभेत । न च तदनारम्भे सार्वधातुकेऽप्यायादयो विकल्पेन प्राप्नुवन्ति, वाग्रहणस्य व्यवस्थित-विभाषात्वात् । तस्मादायादय इत्यादेशारम्भाद् वाग्रहणनिवृत्तिरवसीयत इति नित्यं यका भक्तिव्यम्, ततश्च यद्येषां पक्षे प्रातिपदिकत्वं न स्याद् दीर्घोच्चारणमनर्थकं स्यात् । तस्माद्दीर्घोच्चारण-सामर्थ्यात् प्रतिपदिकत्वमेषामस्तीत्येकान्त एष पक्षः । तत्र धातुपक्षे कण्डूयत इत्यादयः सिद्धयन्ति, प्रातिपदिकत्वपक्षे त्वसति यकि कण्डूर्मन्तु-र्वल्गुरित्यादयः" - इत्याह जि. बु. न्या. 3/1/27.

(ङ) "कण्ड्वादिभ्यो यग् (3/1/27) इत्यत्र कण्ड्वादीनां गुणनिषेधार्थं यकः कित्त्वाज्-ज्ञापकाद् धातुत्वमवसीयते । नित्ये च धातुत्वे यकोकृद्यकारे दीर्घत्वमस्त्येवेति कण्डूञ् हृणीङित्यादेर्गणपाठे दीर्घोऽनर्थकः इति ततो ज्ञापकात् 'प्रातिपदिकत्वमपि कण्ड्वादीनामङ्गीक्रियत इति धातुत्वमेषामपि विभाषितमुच्यते । यदि हि धातुत्वमेव हि केवलं स्यात् मन्तुर्वल्गुरिति न सिद्धयति, अविभक्तिकं च रूपं स्यादित्युक्तं न्यासे । अथ यकमकृत्वैव धातुत्वात् क्विप् क्रियते एवमपि ह्रस्वस्य पितिकृति तुगिति (6/1/71) तुकि मन्तुरितिरूपं न स्यात् । अथ प्रातिपदिकत्वमेवाङ्गीक्रियते तदा मृश्यति सुख्यति इति न - सिद्धयेत् । प्रातिपदिक-विहितत्वात् यक्प्रत्ययस्यादर्धधातु-कत्वाभावादतो लोपो न स्या"दित्याह पु. दे. ज्ञा. समु. नवमे प्रत्यय-पादे पृ. 70 ।

(च) "यतस्तु खल्वयमाचार्यः क्वचिद्दीर्घमुच्चारयति - कण्डूञ् - हृणीङ् - महीङिति, ततो मन्ये - धातुर्विभाषित इति । धातुत्वमेषां विभाषितमिति मन्य इत्यर्थः" - इत्याह ह. मि. पदम. 3/1/27.

(छ) "द्विधा हि कण्ड्वादयः धातवः प्रातिपदिकानि चे'तिग्रन्थेन ज्ञापकत्वमस्य सूच्यति भ. दी. वै. सि. कौ. तिङन्ते कण्ड्वादि प्र. पृ. 312.

1. अष्टा. 3/1/27.

'[1]अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घस्य सौलभ्येन 'कण्डुञ्-हृणिङ्-महिङ्' - इति पाठेऽपि क्षतिविरहादेषां दीर्घ-पाठो व्यर्थः । न च '[2]कण्ड्वादिभ्यो य'गित्यत्र 'धातोः कर्मणः [3]समान-कर्तृकादिच्छायां वा' इत्यतो 'वा' इत्यस्यानुवर्तनाद् यगभावपक्षेऽ-यगन्तेभ्यः क्विप्[4]-क्तिन्[5]-क्त[6]-क्तवतुषु[7] प्रत्ययेषु समुत्पन्नेषु कण्डूः, कण्डूतिः, कण्डूतः कण्डूतवानित्यादौ दीर्घस्य श्रवणं यथा स्यादित्येवमर्थमेषां दीर्घपाठश्चरितार्थ इति नैषां दीर्घपाठोऽस्य वचनस्य ज्ञापक इति शङ्क्यम् । यतोऽयं[8]यग् विधिर्नित्यः । वा-[9]ग्रहणमिह सूत्रे हि निवर्तते । न च 'वा' इत्यस्यात्र [10]सूत्रे निवृत्तौ मानाभावः शङ्क्यः । यतः 'आयादय [11]आर्द्धधातुके वे'ति सूत्रारम्भ एवात्र वेत्यस्य निवृत्तौ मानम् । अत्र[12] 'वे'त्यस्यानुवृत्तौ हि उत्तरसूत्रेष्वपि तदनुवृत्तिः सुलभेति सूत्रस्यास्यानारम्भेऽपि आयादयो वा भविष्यन्तीति सूत्रमिदं नारब्धं स्यात् । न चैतस्य सूत्रस्यानारम्भे सार्वधातुकेऽपि विकल्पेनायादय आपद्येरन्नित्यपि शङ्कनीयम् । यतो वाग्रहणस्य[13]व्यवस्थित - विभाषात्वं स्वीक्रियेत । ज्ञापिते चास्मिन् वचने 'कण्डूः[14]' इत्यादौ दीर्घश्रवणार्थमेषां दीर्घपाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं 'मन्तुः[15]' 'वल्गुः'[16] इत्यस्य साधुत्व-सिद्धिः । अस्य वचनस्यासत्त्वे हि यको[17]ऽत्र दुर्वारतया धातुत्वादप्रातिपदिकत्वेन[18]सुब्विभक्तेर-

---

1. अष्टा. 7/4/25.
2. अष्टा. 3/1/27.
3. अष्टा. 3/1/7.
4. क्विप् च' - अष्टा. 3/2/76.
5. 'स्त्रियां क्तिन्'- अष्टा. 3/3/94.
6. 'निष्ठा' - अष्टा. 3/2/102.
7. 'निष्ठा' - अष्टा. 3/2/102.
8. 'कण्ड्वादिभ्यो यक्' - अष्टा. 2/1/127.
9. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/7, इति सूत्रस्थमित्यर्थः ।
10. 'कण्ड्वादिभ्यो यक्' - अष्टा. 3/1/27.
11. अष्टा. 3/1/31.
12. 'कण्ड्वादिभ्यो यक्' - अष्टा. 3/1/27 इत्यत्रेत्यर्थः ।
13. विशेषेण लक्ष्यानुसारेणावस्थिता विभाषा व्यवस्थितविभाषा । तेन क्वचिदियं वा, क्वचिन्नित्यं क्वचिन्नैव च प्रवर्तत इति व्यवस्थितविभाषात्वं 'वा' इत्यस्यास्वीकारे सार्वधातुके यकोऽभाव इत्यर्थः ।
14. कण्डूशब्दस्य प्रातिपदिकत्वेन सौ रूपम् ।
15. मन्तुशब्दस्य प्रातिपदिकत्वेन सौ रूपम् ।
16. वल्गुशब्दस्य प्रातिपदिकत्वेन सौरूपम् ।
17. 'कण्ड्वादिभ्यो यक्' - अष्टा. 3/1/27.
18. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 इत्युक्तेरिति शेषः ।

नुत्पत्त्या चानयोः साधुत्वं न सिद्ध्येत् । न च मन्तु - वल्वोः धात्वोः [1]क्विप्यनयोः साधुत्वं शङ्क्यम्, यतः क्विपि [2]तुगापत्तिर्यगापत्तिश्च[3] दुर्वारे स्याताम् ।

## 'कुङ् शब्दे' इत्यस्य पाठः

[4]कुटादि–गुणे 'कुङ् शब्दे' इत्यस्य पाठो[5] 'नहि कार्यी निमित्तत्वेनाश्रीयते[6]' इति परिभाषाया [7]ज्ञापकः । अस्या अभावे हि [8]कुङो ङित्त्वादेव[9]चुकुविषे इत्यादौ [10]गुणनिषेधस्य[11] सुलभतया [12]ङित्त्वार्थमस्य कुटादौ पाठो व्यर्थः । ज्ञापितायां चास्यां परिभाषायामनया कुङो ङित्त्वेन चुकुविषे - इत्यादौ गुणनिषेधाप्राप्त्या 'गाङ् - [13]कुटादिभ्योऽञ्णिन् ङि'दिति थलो ङित्त्वाय कुटादौ कुङः पाठः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'अध्येता[14]' 'शयिता[15]' – इत्यादौ इङ्-

---

1. 'क्विप् च' - अष्टा. 3/2/76.
2. 'ह्रस्वस्य पिति कृति तुक्' - अष्टा. 6/1/71.
3. 'कण्ड्वादिभ्यो यक्' - अष्टा. 3/1/27.
4. 'कुट कौटिल्ये' धा. पा. तुदा. 1367 - इत्यारभ्य 'कुङ् शब्दे' धा. पा. तुदा. 1402 इत्यन्ता धातवः कुटादयः - वै. सि. कौ. तुदा. प्र. पृ. 206 - 207.
5. धा. पा. तुदा. 1402.
6. (क) पु. दे. स. प. वृ. प. 75, पृ. 151.
   (ख) सी. दे. बृ. प. वृ. प. 2, पृ. 164.
   (ग) नी. दी. प. वृ. प. 2, पृ. 293.
   (घ) ह. भा. प. भास्क. प. 2, पृ. 319.
   (ङ) 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' -भ. ना. प. शे. प. 12, पृ. 41.
   (च) शेषा. प. भास्क. प. 10, पृ. 386.
7. तथाहि -
   (क) "स्थण्डिलाच्छयितरि.' (4/2/15) इत्यत्र शयितरीतिनिर्देशोऽस्या लिङ्गं कुटादिषु कुङ्शब्दे इत्यस्य पाठो वे"त्याह सी. दे. बृ. प. वृ. प. 2, पृ. 165.
   (ख) "परिभाषाज्ञापकं तु दीधीवेव्योर्गुणप्रतिषेध इति केचित् । कुटादौ कुङ्पाठ इत्यन्ये । शयितरि इति निर्देश इत्यपरे" इत्याह ह. भा. प. भास्क. प. 2, पृ. 319.
   (ग) "कुटादिषु 'कुङ्शब्दे' इतिधातुपाठश्चास्या ज्ञापकः" इत्याह शेषा. प. भास्क. प. 10, पृ. 347.
8. 'कुङ्शब्दे' धा. पा. तुदा. 1402.
9. 'कुङ्शब्दे' धा. पा. तुदा. 1402, इति कुधातोर्लिटि सिपि थलादेशे द्वित्वादौ कृते 'क्क्ङति च' - अष्टा. 1/1/5. इति गुणनिषेधे उवङि रूपमिदम् ।
10. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84.
11. 'क्ङिति च' -अष्टा. 1/1/5.
12. 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' - अष्टा. 1/2/1.
13. अष्टा. 1/2/1.
14. अधिपूर्वकात् 'इङ् अध्ययने' -
    –धा. पा. अदा. 1046 इति-इधातोः लुटि ते शतरि वा गुणे रूपमिदम् ।
15. 'शीङ्स्वप्ने' –
    -धा. पा. अदा. 1032 इति शीधातोः लुटि ते शतरि वा इडागमे गुणे रूपमिदम् ।

शीङोर्ङित्त्वात् [1]'क्ङित चे'ति गुणनिषेधाभावः । अस्या असत्त्वे हि गुणनिषेधोऽत्र दुर्वारः स्यात् ।

## कौतस्कुतःशब्दपाठः

[2]कस्कादिषु चेति सूत्रस्थ-कस्कादिगणे[3] 'कौतस्कुतः' - शब्दस्य पाठः 'द्विरुक्त-प्रातिपदिकादपि तद्धितोत्पत्ति र्भवती' ति वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याभावे 'कुतस्कुतः' शब्दस्याप्रातिपदिकतया ततो[5]ऽणो दुर्लभत्वादिह गणे 'कौतस्कुतः' इति शब्दपाठोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने कुतस्कुतः 'शब्दस्याप्रातिपदिकत्वेऽपि [6]ततोऽणः [7]सुलभतया गणेऽस्मिन् तस्य पाठः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'सर्वस्य द्वे'; - इति सूत्रेण विधीयमानं द्विर्वचनं द्विःप्रयोग इति पक्षे पुनः शब्दस्य द्विर्वचने पुनः पुनर्भवितरि विद्यमानात् पुनः-पुनः शब्दाद्भावे ष्यञ् प्रत्यये[8] कृते 'पौनपुन्य'मित्यस्य, भवार्थे ठञि[9] पौनःपुनिक'मित्यस्य च सिद्धिः । अस्य वचनस्यासत्त्वे हि कृत्तद्धितसमासाश्चेतिसूत्रस्थसमास-ग्रहणकृतनियमेनार्थवतः समास-

---

1. अष्टा. 1/1/5.
2. अष्टा. 8/3/48.
3. कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः, संद्यस्कालः, सद्यस्क्रीः, साद्यस्कः, कांस्कान्, सर्पिष्कुण्डिका, धनुष्कपालम्, बहिष्पलम्, (बर्हिष्पलम्) यजुष्पात्रम्, अयस्कान्तः, तमस्काण्डः, अयस्काण्डः, मेदस्पिण्डः, भास्करः, अहस्करः - इति कस्कादिराकृतिगणः - ग. पा. 8/3/48.
4. तथाहि –
   (क) "अथवाऽऽचार्य-प्रवृत्तिर्ज्ञापयति - 'भवत्येवंजातीयकेभ्यस्तद्धितोत्पत्ति'रिति, यदयं कस्कादिषु कौतस्कुतःशब्दं पठती"त्याह पत. व्या. म. भा. 8/1/1/1.
   (ख) "अथवाऽऽचार्य-प्रवृत्तिर्ज्ञाययति - 'भवत्येवंजातीयकेभ्यस्तद्धितोत्पत्ति'रिति, यदयं कस्कादिषु कौतस्कुतशब्दं पठति । कुतः कुत आगत इति 'अव्यायात्त्यप्' इति त्यपि प्राप्तेऽस्मादेव निपातनादण्" - इत्याह जि. बु. 8/1/1.
   (ग) "कस्कादिषु कौतस्कुतपाठेन कृताष्टमिकद्वित्वादप्रातिपदिकत्वेऽपि तद्धितोत्पत्तिज्ञापनेन द्विःप्रयोगपक्षेऽपि न दोष इत्यन्ये" - इत्याह भ. ना. ल. श. शे. द्विरुक्त प्र. पृ. 801.
   (घ) "सर्वस्य द्वे (सू. 8/1/1) । कस्कादिषु कौतस्कुतशब्दपाठात् ज्ञापकात् द्विः-प्रयोग-पक्षेऽपि पौनःपुन्यमित्यादिसिद्धि"रित्याह श्रीना. शा. सं. 8, पृ. 131.
5. 'अव्ययात्त्यप्' - अष्टा. 4/2/104, इति त्यपो बाधकस्य 'तत आगतः' अष्टा. 4/3/74. इत्यण इत्यर्थः ।
6. 'अव्ययात्त्यप्' - अष्टा. 4/2/10 इति त्त्यपो बाधकस्य 'ततआगतः'
   - अष्टा. 4/3/74, इत्यण इत्यर्थः ।
7. अष्टा. 8/1/1.
8. 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' –
   - अष्टा. 5/1/124.
9. 'कालाट्ठञ्' –
   - अष्टा. 4/3/11.

समुदायस्यैव प्रातिपदिकसंज्ञायाः स्वीकारात् पुनःपुनरिति समुदायस्याप्रातिपदिकत्वेन प्रातिपदिकाधिकारीयतद्धितोत्पत्तेरसंभावतया नानयोः सिद्धिः स्यात् ।

## क्षुद्रकमालवशब्दपाठः

[1]'खण्डिकादिभ्यश्चे'ति सूत्रस्थ-खण्डिकादिगणे[2] क्षुत्रक-मालवशब्दपाठः-'पूर्वोऽपि वुञ् परमञं बाधते' इति वचनस्य, 'भवति समूहार्थक-प्रत्ययविधौ तदन्तविधि'रिति वचनस्य च [3]ज्ञापकः । यतोऽनयोर्वचनयोरभावेऽत्र क्षुद्रक-मालवशब्दपाठो व्यर्थः । तथाहि क्षुद्रक-मालवानां-समूह इत्यर्थे अञः सिद्ध्यर्थं खण्डिकादिगणेऽसौ शब्दः पठितः । क्षुद्रकस्यापत्यानि बहूनीत्यर्थे क्षुद्रकशब्दात् 'जनपदशब्दात् [4]क्षत्रियादञ्' इत्यञि कृते' [5]तद्राजस्य बहुषु तेनैवास्त्रिया'मिति बहुषु अञा लुकि क्षुद्रका इति, मालवस्यापत्यानि बहूनीत्यर्थे मालवशब्दात् [6]'वृद्धेत्कोसलाजादाञ् ञ्यङ्' इतिञ्यङि कृते [7]'तद्राजस्य' बहुषु तेनैवास्त्रिया'मिति ञ्यङो लुकि मालवा इति च सिद्ध्यति ।

---

1. अष्टा. 4/2/45.
2. खण्डिका, वडवा । क्षुद्रकमालवात् सेना । संज्ञायाम् । भिक्षुक, शुक, उलूक, श्वन्, अहन्, युगवरत्रा, (युगवरत्र) हलबन्धा, (हलबन्ध) इति खण्डिकादिः ।
   - ग. पा. 4/2/45.
3. तथाहि–
   (क) "अथवा ज्ञापयत्याचार्यः - पूर्वोऽपि वुञ्, परमञं बाधत इति । एवं तर्हि ज्ञापयत्याचार्यो - भवतीह तदन्त-विधिरिति । कथं पुनरेतदुभयं शक्यं ज्ञापयितुम् - 'भवति च तदन्त-विधिः -'पूर्वश्च वुञ् परमञं बाधत - 'इति ? उभयं ज्ञाप्यते" इत्याह - पत. व्या. म. भा. 4/2/1/45.
   (ख) "क्षुद्रकमालवशब्दोऽत्र पठ्यते । क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः । ततः पूर्वेण वाञि सिद्धे वचनं गोत्रवुञ्बाधनार्थम् । ननु च परत्वादञा बुञ् बाधिष्यते, नच गोत्र-समुदायो गोत्रम् । न च तदन्त-विधिरत्रास्ति ? एवं तर्हि एतज् ज्ञापयति - वुञि पूर्व-विप्रतिषेधः, सामूहिकेषु च तदन्त-विधिरस्तीति । प्रयोजनम् - औपगवकं कापटवकमिति वुञ् भवति, वानहस्तिकं गौधेनुकमिति च तदन्त-विधि"रित्याह जया. का 4/2/45.
   (ग) "यदयं क्षुद्रकमालवग्रहणं करोति वुञ्बाधनार्थम्, तज् ज्ञापयति वुञ् पूर्वविप्रतिषेधो भवति, न परविप्रतिषेधः । सामूहिकेषु च तदन्त-विधिरस्ती"त्याह जिनेन्द्रबुद्धिः न्या. 4/2/45.
   (घ) "खण्डिकादिभ्यश्च (सू. 4/2/45) । खण्डिकादिषु क्षुद्रकमालवशब्दपाठो ज्ञापयति भवतीह तदन्त-विधिरिति पूर्वस्योपपत्त्या वुञ् परमञं वाधत इति च । अन्यथानुपपत्त्या एकस्यैवोभयस्यापि ज्ञापनं न विरुध्यते" - इत्याह श्री. ना. ज्ञा. सं. परि. 1, पृ. 166.
4. अष्टा. 4/1/168.
5. अष्टा. 4/4/62.
6. अष्टा. 4/1/171.
7. अष्टा. 4/4/62.

ततः क्षुद्रकाश्च मालवाश्चेति विग्रहे क्षत्रियद्वन्द्वे[1] कृते निष्पन्नस्य क्षुद्रकमालवशब्दस्य समासान्तोदात्तत्वे[2] सति [3]शेषनिघातेनानुदात्तादित्वात् ततोऽञ् प्रत्ययः क्षुद्रक-मालवानां समूह इत्यर्थे [4]'अनुदात्तादेर'ञिति सूत्रेणैव सिद्ध इति समूहार्थेऽत्र अञर्थं खण्डिकादिष्वस्य शब्दस्य पाठो व्यर्थः । न च क्षुद्रक-मालवशब्दात् समूहार्थे [5]'गोत्रोक्षोष्ट्रोरभ्रराजराजन्य-राजपुत्र-वत्स-मनुष्याजाद् वुञ्' इति प्राप्तस्य वुञो बाधनार्थमत्र गणे तस्य पाठश्चरितार्थ इति शङ्क्यम् । यतः [6]'अनुदात्तादेर'ञि त्यस्य परत्वेन तद्विषयेऽत्र गोत्रलक्षणस्य[7] पूर्वस्य वुञः संभव एव नास्ति; अपि च 'गोत्र[8]' इत्यादिसूत्रे गोत्र-पदेन [9]न शास्त्रीयं गोत्रं गृह्यते किन्तु लौकिकम्,[10] अपत्याधिकारादन्यत्र हि लौकिकं गोत्रं गृह्यते, तथा सति क्षुद्रकमालवशब्दो न गोत्र-शब्देन ग्रहीतुं शक्यः, यतो गोत्रसमुच्चयोऽयम् । नच गोत्रसमुदायो गोत्र-ग्रहणेन गृह्यते, यथा जनपदसमुदायो न जनपदग्रहणेन, तथा च काशयश्च कोसलाश्च काशि-कोशलाः तेषु भवाः काशिकोसलीयाः[11], जनपदत्वाभावात् [12]'जनपदवध्योश्चे'- ति वुञिह न भवति किन्तु [13]'वृद्धाच्छः' इति छ एव भवति । इत्थं क्षुद्रकमालवशब्दे गोत्रत्वमेव नास्ति, अतो गोत्र-[14]लक्षणवुञोऽप्राप्त्या तद्बाधनार्थमत्र गणेऽस्य पाठो न चरितार्थः । न च [15]'गोत्रे'त्यादिसूत्रे तदन्तविधिना[16] गोत्रान्तादपि वुञ् भवतीति क्षुद्रकमालवशब्दस्य गोत्रान्तत्वात्ततो वुञः प्राप्तिरस्तीति तद् बाधनार्थमत्र

---

1. 'चार्थे द्वन्द्वः - अष्टा. 2/2/29.
2. 'समासस्य' - अष्टा. 6/1/223.
3. 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158.
4. अष्टा.4/2/44.
5. अष्टा. 4/2/39.
6. अष्टा. 4/2/44.
7. गोत्रोक्षोष्ट्रोरभ्रराजराजन्य-राजपुत्र-वत्स-मनुष्याजाद् वुञ्' - अष्टा. 4/2/39.
8. गोत्रोक्षोष्टो रभ्रराजराजन्य-राजपुत्र-वत्स-मनुष्याजाद् वुञ्' - अष्टा. 4/2/39
9. 'अपत्यं पौत्र प्रभृति गोत्रम्' – अष्टा. 4/1/v{w.
10. अपत्यमात्रम् ।
11. काशि-कोसलशब्दोद्भवार्थे वृद्धाच्छः' - अष्टा. 4/2/114 इति छ प्रत्यये 'आयनेयीनीयियः प. - ढ- ख- छ - घां प्रत्ययादीनाम्' - अष्टा. 7/1/2 इति ईयादेशे रूपम् ।
12. अष्टा. 4/2/124.
13. अष्टा. 4/2/114.
14. 'गौत्रोक्षो.' - अष्टा. 4/2/39.
15. 'गोत्रोक्षो. -अष्टा. 4/2/39. '
16. 'येन विधि स्तदन्तस्य' - अष्टा. 1/1/72.

गणेऽस्य पाठश्चरितार्थ इति शङ्क्यम् । यतः 'समास-[1]प्रत्यय विधौप्रतिषेधः 'इति प्रतिषेधादिह वुञ्प्रत्ययविधौ तदन्त-विधिरेव न सम्भवति । ज्ञापितयोश्चानयोर्वचनयोः क्षुद्रकमालवकशब्दस्य गोत्रान्ततया परमप्यञं[2] बाधित्वा [3]वुञः प्राप्तिर्भवतीति वुञं बाधित्वा समूहार्थेऽञः सिद्धये खण्डिकादिगणे क्षुद्रकमालव-शब्द-पाठः स्वांशे चारतार्थो भवति । ज्ञापितयोरनयोर्वचनयोः प्रथमस्य फलम् - [4]'औपगवकं' [5]'कापटवक'मित्यत्र [6]वुञः सिद्धिः । यतोऽस्य वचनस्याभावे परत्वादत्र [7]'अनुदात्ता-देरञ्' इत्यञ् आपद्येत । वुञ् हि ग्लुचुकस्यापत्यं गलुचु[8]कायनिः, तेषां समूहो ग्लैचुकाय[9]नकमित्यत्र, अञ् च [10]'कापोत' इत्यत्रागोत्रे चरितार्थ इति गोत्रादनुदात्तादेरत्रोभय[11]-प्रसङ्गेऽस्य वचनस्याभावे अञ्[12] प्रत्ययो दुर्वारः स्यात् । दितीयस्य फलं '[13]वानहस्तिकं', '[14]गौधेनुक'मित्यत्र ठकः सिद्धिः । अस्याभावे ह्यत्र [15]'अचित्तहस्ति-धेनोष्ठक्' इति धेनु-हस्ति-शब्दाभ्यां न सिद्ध्येत् । न चात्रैकस्य वचनद्वयज्ञापकत्वासङ्गतिः शङ्क्या । यतोऽन्यथानुपपत्तिर्ज्ञापकत्वे निदानम् । नचोभयं

---

1. वा. वै. सि. कौ. संज्ञा प्र. वृ. 20, 'समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः' - वा. का. 1/1/72.
2. 'अनुदात्तादेरञ्' - अष्टां. 4/2/44.
3. 'गोत्रोक्षो.' - अष्टा. 4/2/39.
4. उपगोरपत्यमित्यर्थे उपगुशब्दात् 'तस्यापत्यम् - अष्टा. 6/1/92 इत्यणि आदिवृद्धौ औपगव-शब्दो निष्पद्यते । ततः औपगवानां समूह इत्यर्थे 'गोत्रोक्षो.' - अष्टा. 4/2/39 इति वुञि वोः 'युवोरनाकौ' - अष्टा. 7/1/1 इति अकादेशे तद्धितान्त-प्रातिपदिकत्वेन स्वादि-कार्येषु कृतेषु रूपमिदम् ।
5. कपटोरपत्यमित्यर्थे 'तस्यापत्यम् ' - अष्टा. 4/1/92 इति कपटुशब्दादणि आदिवृद्धौ 'ओर्गुणः' –अष्टा. 6/4/146 इत्युकारस्य गुणेऽवादेशे कापटवशब्दो निष्पद्यते । ततः कापटवानां समूह इत्यर्थे 'गोत्रोक्षो.' - अष्टा. 4/2/39, इति वुञि वोः 'युवोरनाकौ' - अष्टा. 7/1/1 इत्यकादेशे तद्धितान्त-प्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. 'गोत्रोक्षो.' - अष्टा. 4/2/39.
7. अष्टा. 4/2/44.
8. 'प्राचामवृद्धात् फिन् बहुलम् ' - अष्टा. 4/1/160 इति फिन् प्रत्यये फस्यायन्नादेशे रूपमिदम् ।
9. 'गोत्रोक्षो.' - अष्टा. 4/2/39, इति वुञि रूपमिदम् ।
10. 'कपोतानां' समूह इत्यर्थः ।
11. अञ्-वुञोः प्रसङ्गे' इत्यर्थः ।
12. 'अनुदात्तादेरञ्' - अष्टा. 4/2/44.
13. वनहस्तिनां समूह इत्यर्थे 'अचित्तहस्तिधेनोष्ठक्' - अष्टा. 4/2/47, इति ठकि ठस्य 'इसुसु-क्तान्तात् कः' - अष्टा. 7/3/51 कादेशेआद्यचो वृद्धौ रूपमिदम् ।
14. गोधेनूनां समूह इत्यर्थे गोधेनु-शब्दात् 'अचित्तहस्तिधेनोष्ठक्' - अष्टा. 4/2/47, इति ठकि ठस्य 'इसुसुक्तान्तात् कः' - अष्टा. 7/3/51 इतिकाऽऽदेशे आद्यचो वृद्धौ रूपमिदम् ।
15. अष्टा. 4/2/47.

विनात्रास्य पाठ उपपद्यते । नहि क्षौद्रकमालवमित्यत्र प्रथमवचनं विना [1]प्रसक्तिर्वुञः पूर्वस्य, ज्ञापितेऽपि प्रथमवचने द्वितीयवचनं विना न प्रसक्तिर्गोत्रान्ताद् [2]वुञ इति वचनद्वयज्ञापकत्वमत्रास्य शब्दपाठस्य निर्विवादं सिद्ध्यति ।

## खाडायन (खाण्डायन) शब्दपाठः

[3]'शौनकादिभ्यश्छन्दसी'ति सूत्रस्थे [4]शौनकादिगणे खाडायनशब्दपाठः [5]'कलापि वैशम्पायनान्तेवासिभ्यश्चे'त्यत्रान्तेवासिशब्देन साक्षादन्तेवासिन एव ग्रहणं न त्वन्तेवास्य- न्तेवासिन" इति वचनस्य [6]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र शौनकादिगणे [7]खाडायनशब्दस्य [8]खाण्डायनशब्दस्य वा पाठो व्यर्थः । तथाहि - [9]'शौनकादिभ्यश्छन्दसी'ति सूत्रं शौनकादिभ्यस्तृतीयान्तेभ्यः 'तेन प्रोक्तमधीयते' इत्यर्थे णिनिप्रत्ययं विधत्ते, 'शौनकेन प्रोक्तमधीयते शौनकिनः इत्याद्यस्य सूत्रस्योदाहरणानि सन्ति । तत्र "खाडायनिः" "खाण्डायनिः" - इति वा प्रयोगं साधयितुं शौनकादि-गणे 'खाडायन' - इति खाण्डायन' - इति वा शब्दः पठितः । अस्य वचनस्याभावे लोके शिष्य-शिष्योऽपि शिष्य इति व्यवहारदर्शनात् वैशम्पायन-शिष्य-कठशिष्यता

---

1. 'अनुदात्तादेरञ्' - अष्टा. 4/2/44.
2. 'गोत्रोक्षो.' - अष्टा. 4/2/39.
3. अष्टा. 4/3/106.
4. 'शौनक, वाजसनेय, शार्ङ्गरव, शापेय, शाष्पेय, खाडायन, (खाण्डायन), स्तम्भ, स्कन्ध. देवदर्शन, रज्जुमार, रज्जुकण्ठ, कठशाप, कषाय, तल, दण्ड, (तलवकार), पुरुषांसक, अश्वपेज - (अश्वपेय) - इति शौनकादिः ग. पा. 4/3/106.
5. अष्टा. 4/3/104.
6. तथाहि –
   (क) "यदयं कलापिखाडायनग्रहणं करोति तज्ज्ञापयत्याचार्यो-'नान्तेवास्यन्तेवासिभ्यो भवतीति । कथं कृत्वा ज्ञापकम् ? वैशम्पायनान्तेवासी कठः । कठान्तेवासी खाडायनः । वैशम्पायनान्तेवासी कलापी । यद्यन्तेवास्यन्तेवासिभ्योऽपिस्यात्- कलापिखाडायनग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो - नान्तेवास्यन्तेवासिभ्यो भवतीति - ततः कलापिखाडायनग्रहणं करोती"त्याह पत. व्या. म. भा. 4/3/1/104.
   (ख) "प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः । कुतः ? कलापि - खाण्डायन ग्रहणात् । तथाहि - वैशम्पायनान्तेवासी कलापो, तदन्तेवासिनो वैशम्पायनान्तेवासिन एवभवन्ति किं कलापिग्रहणेन ? तथा वैशम्यायनान्तेवासी- कठस्तदन्तेवासीखाण्डायनस्तस्य किं शौनकादिषु पाठेन ? तदेतत् प्रत्यक्षकारिग्रहणस्य लि" मित्याह जया. का. 4/3/104.
   (ग) "कलापिवैशम्पायना. (स. 4/3/104) । कलापिखण्डायनग्रहणात् ज्ञापकात् नान्तेवास्यन्तेवासिभ्यो भवती" त्याह एन. एस. रामा. ज्ञा. सं. परि. 1. पृ. 168.
7. अयं पाठः गुरुप्रसादाशास्त्रिसम्पादित-तत्वबोधिनी-बालमनोरमा - शेखरान्वित वै. सि. कौ. गणपाठे दृश्यते ।
8. अयं पाठः ताराप्रकाशन - प्रकाशित - पदमञ्जरी-न्यासान्वित-काशिका-वृत्तिपुस्तके दृश्यते ।
9. अष्टा. 4/3/106.

खाडायनस्य खाण्डायनस्य वा वैशम्पायनान्तेवासित्वेन ग्रहणं दुर्निवारमिति[1] 'कलापि-वैशम्पायनान्तेवासिभ्यश्चे'ति सूत्रेणैव णिनिप्रत्ययस्य प्रोक्तार्थे सुलभतया प्रोक्तार्थे णिनिप्रत्ययाय शौनकादिगणेऽस्य पाठो व्यर्थः। ज्ञापिते चास्मिन् वचने वैशम्पायनान्ते-वासिनः कठस्यान्तेवासिनो वाचकात् खाडायनशब्दात् खाण्डायनशब्दाद्वा न वैशम्पायनान्तेवासित्वेन प्रोक्तार्थे णिनिः प्राप्नोतीति ततः प्रोक्तार्थे णिनिप्रत्ययाय शौनकादिगणे खाडायनशब्दस्य खाण्डायनशब्दस्य वा पाठः स्वांशे चरितार्थो भवति। ज्ञापितस्यास्य वचनस्य फलं तु वैशम्पायनान्तेवास्यन्तेवासिभ्यः कलाप्यन्तेवास्यन्ते-वासिभ्यश्च णिनेः प्रोक्तार्थेऽभावः।

## गर्भिणीशब्दपाठः

[2]'भिक्षादिभ्यो'ऽणिति सूत्रस्थ-[3]भिक्षादिगणे गर्भिणीशब्दस्य पाठः 'यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघातः' इति वचनस्य ज्ञापकः[4]। यतोऽस्य वचनस्याभावेऽत्र गणेऽस्य शब्दस्य पाठो व्यर्थः। तथाहि – [5]'गार्भिण'-

---

1. अष्टा. 4/3/104.
2. अष्टा. 4/2/38.
3. भिक्षा, गर्भिणी, क्षेत्र, करीष, (अङ्कार) अङ्गार चर्मिन्, धर्मिन्, सहस्र, युवति, पदाति, पद्धति, अथर्वन्, दक्षिणा, भूत, विषय, श्रोत्र। इति भिक्षादिः - ग. पा. 4/2/38.
4. तथाहि –
   (क) "आचार्यप्रवृत्ति र्ज्ञापयति–'यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात' इति। यदयं भिक्षादिषु गर्भिणीशब्दस्य पाठं करोति। कथं कृत्वा ज्ञापकम् ? भिक्षादिषु गर्भिणीशब्दस्य पाठे एतत्प्रयोजनम् – 'अनुदात्तादिलक्षणोऽञ् माभूदिति। यदि च पदस्य निघातो गर्भशब्दोऽयमाद्युदात्तस्तस्मादिनिः, इन्नन्ताद्यः प्रत्ययः प्राप्नोति स तावत् स्यात्। तस्मिन्नवस्थिते निघातः। तत्र कोऽनुदात्तादि-लक्षणस्याञः प्रसङ्गः ? पश्यति त्वाचार्यः यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भाव-स्तावत्येव पूर्वस्य निघात' इति। अतो भिक्षादिषु गर्भिणीशब्दं' पठती"त्याह पत. व्या. म. भा. 4/3/2/140.
   (ख) "अनुदात्तादेश्च (सू. 4/3/140)। भिक्षादिषु गर्भिणी-शब्दपाठो ज्ञापयति यावत्येव द्वितीयस्वरस्य प्रादुर्भावस्तावत्येव पूर्व-निघातः प्रतीक्षेत (प्रवर्तेत)। तर्हि गर्भशब्दादाद्युदात्तादिनिस्ततो ङीपि तदन्तादणेव प्राप्नोति नानुदात्तलक्षणोऽञिति तद्वैयर्थ्यं स्पष्टमेवे"त्याह श्री ना. ज्ञा. सं. 4, पृ. 36, 87.
5. गर्भशब्दात् 'अत इनिठनौ' - अष्टा. 5/2/115. इति मत्वर्थीये इन्प्रत्यये कृते 'प्रत्ययः' अष्टा. 3/1/1 'परश्च' अष्टा. 3/1/2 'आद्युदात्तश्च' - अष्टा. 3/1/3 इति इकारस्य उदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158 इति शिष्टस्यानुदात्तत्वे गर्भिन् शब्दः अनुदात्तादिः, ततः, 'ऋन्नेभ्यो ङीप्' - अष्टा. 4/1/5, इति नान्तलक्षणङीपि तस्य "अनुदात्तौ सुप्पितौ' - अष्टा. 3/1/4 इत्यनुदात्तत्वे गर्भिणी-शब्दोऽप्यनुदात्तादिरेव। ततः समूहेऽर्थे 'अनुदात्तादेरञ्' अष्टा. 4/2/14 इति अञि प्राप्ते भिक्षादित्वादणि 'भस्याढे तद्धिते' वा. वै. सि. कौ. बहुव्रीहि प्र. पृ. 490 इति पुंवद् भावे कृते 'गर्भिन् + अ' इति स्थिते 'इनण्यनपत्ये' - अष्टा. 6/4/164 इति प्रकृतिभावेन 'नस्तद्धिते' - अष्टा. 6/4/144. - इति

मित्यत्र गर्भिणीनां समूह इत्यर्थे गर्भिणीशब्दात् [1]अनुदात्तादेरञिति अञ्प्रत्यये प्राप्ते तदपवादतया [2]अण्प्रत्ययसिद्ध्यर्थमत्र गणेऽसौ शब्दः पठितः। अस्य वचनस्याभावे हि पदस्य [3]निघातो दुर्वारः स्यादित्यस्य पाठोऽत्र व्यर्थः । यतो गर्भशब्दः [4]'अर्तिगृभ्यामन्' इति सूत्रेण 'गॄ' [5]धातोर्मनूप्रत्यये सति निष्पन्नो [6]नित्त्वादाद्युदात्तः, ततो गर्भ-शब्दाद् गर्भोऽस्त्यस्या इत्यर्थे [7]इन् प्रत्यये [8]ङीपि च कृते निष्पन्नस्य ङ्यन्तस्य गर्भिणीशब्दस्यासुबन्ततया [9]पदत्वाभावेन [10]'अनुदात्तं पदमेकवर्ज'मिति सूत्रस्य प्राप्तिर्नास्तीति गर्भिणीशब्दस्याऽऽद्युदात्तत्वमक्षुण्णमिति [11]'अनुदात्तादेर'ञिति सूत्राप्रवृत्त्यानेन प्राप्तस्याञो बाधनार्थमत्र गणेऽस्य पाठो व्यर्थः। ज्ञापिते चास्मिन् वचनेऽत्र [12]इनुस्वरप्रवृत्तिकाले पूर्वप्रवृत्तः आद्युदात्तो निघातो भवतीति [13]अनुदात्तादेरञिति अनुदात्तादित्वलक्षणस्याञः प्राप्तेर्दुवारतयाञ्बाधनार्थं' भिक्षादि-गणे गर्भिणी-शब्दस्य पाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [14]कौवलमित्यादौ अञः सिद्धिः । यतः कुवलशब्दः [15]'ग्रामादीनांवे'त्याद्युदात्तः ।

---

टिलोपाभावे णत्वे तद्धितान्त-प्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् सिद्ध्यति । अत्र अञि 'ञ्नित्यादिर्नित्यम्' - अष्टा. 6/1/197, इत्याद्युदात्तत्वं 'नस्तद्धिते' - अष्टा. 6/4/144 इति टिलोपश्चापद्येत, अणि तु प्रत्यय-स्वरेणान्तोदात्तत्वम् 'इनण्यनपत्ये' - अष्टा. 6/4/164 इति प्रकृति-भावे टिलोपाभावश्च सिद्ध्यति ।

1. अष्टा. 4/2/44.
2. 'भिक्षादिभ्योऽण्' - अष्टा. 4/2/38.
3. 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158.
4. उणादि सू. 432.
5. 'गॄ निगरणे' - धा. पा. तुदा. 1411.
6. 'ञ्नित्यादिर्नित्यम्' - -अष्टा. 6/1/197.
7. 'अत इनि-ठनौ' - - अष्टा. 5/2/115.
8. 'ऋन्नेभ्यो ङीप्' - - अष्टा. 4/1/5.
9. सुप्तिङन्तं पदम्'– - अष्टा. 1/1/14.
10. अष्टा. 6/1/158.
11. अष्टा. 4/2/44.
12. 'आद्युदात्तश्च- - अष्टा. 3/1/3.
13. अष्टा.4/3/140.
14. कुवलीनां समूह इत्यर्थः ।
15. फिट् सू. 38.

ततो गौरादित्वात् [1]ङीपि ईकार [2]अनुदात्तः, अस्मिन् द्वितीये स्वरे प्रादुर्भूते पूर्वस्याऽऽद्युदात्तस्य निवृत्तिरनुदात्तश्चानेन वचनेन भवतीति कुवलीशब्दस्यानुदात्तादित्वात् ततः कुवलीनां समूह इत्यर्थे [3]अनुदात्तादेरञिति अञ्प्रत्ययः सिद्ध्यति । अस्य वचनस्यासत्त्वे हि कुवलीशब्दस्य ङ्यन्तत्वेन पदत्वाभावात् शेष-[4]निघाताप्राप्त्यानुदात्तादित्वाभावेन ततोऽञ् प्रत्ययो न सिद्ध्येत्[5] ।

## तृप्नोति शब्द-पाठः

[6]'क्षुभ्नादिषु चे'ति सूत्रस्थक्षुभ्नादि[7]गणे [8]'तृप्नोती'तिशब्द-पाठः 'वर्णैकदेशा[9] वर्ण-ग्रहणेन न गृह्यन्ते'– इति पक्षे 'ऋवर्णान्नस्य णत्वं भवती'ति वचनस्य [10]ज्ञापकः । यतोऽस्मिन् पक्षेऽस्य वचनस्याभावेऽत्र गणे णत्वाभावाय तृप्नोतीति शब्दपाठो व्यर्थः । नहि तृप्नोतीत्यत्र 'रषाभ्यां नो णः [11]समानपदे' इतिणत्वं प्राप्नोतीति णत्वाभावोऽत्रास्य पाठं विनापि सुलभः । ज्ञापिते चास्मिन् वचनेऽनेनात्र

---

1. 'षिद्गौरादिभ्यश्च' - अष्टा. 4/1/41.
2. अनुदात्तौ सुप्पितौ' - अष्टा. 3/1/4.
3. अष्टा. 4/2/44.
4. 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158.
5. 'अनुदात्तादेरञ् - अष्टा 4/2/44.
6. अष्टा. 8/4/39.
7. क्षुभ्न, नृगमन, नन्दिन् नन्दन, नगर । एतान्युत्तर-पदानि-संज्ञायां प्रयोजयन्ति । हरिनन्दो, हरिनन्दनः, गिरिनगरम् । नृतिर्यङि प्रयोजयति । नरीनृत्यते । नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम्, परिगहनम्, परिनन्दनम्, शरनिवेशः शरनिवासः, शराग्निः, दर्भानूपः । आचार्यादणत्वं च । आचार्य-भोगोनः । आकृतिगणोऽयम् । पाठान्तरम्- भुभ्ना, तृप्नू, नृनमन, नरनगर, नन्दन । यङ्नृतो । गिरिनदी, गृहगमन, निवेश, निवास, अग्नि, अनूप, आचार्य भोगोन, चतुर्हायत । हरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका, तिमिर, समीर, कुवेर, हरि, कर्मार । इति क्षुभ्नादिः । ग. पा. 8/4/39.
8. 'तृपप्रीणने' - धा. पा. दिवा. 1195, इति तृप्धातोर्लटि तिपि' छन्दसि व्यत्ययेन श्नुः ।
9. व्या. म. भा. 1/1/2 -
   मा. सू. 3,4 पृ. 122 ।
10. तथाहि –
    (क) "यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्य प्रवृत्ति ज्ञापयति - 'भवत्यृकारान्नो णत्व' मिति, यदयं क्षुभ्नादिषु नृनमन शब्दं पठति । नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत् स्यात्नार्नमनिः । यत्तर्हि तृप्नोति शब्दं पठती" त्याह व्या. म. भा. 1/1/2, मा. सू. 3, +
    (ख) "वर्णैकदेशानां वर्गग्रहणेनाग्रहणमिति पक्षे बुन्तादिषु तृप्नोति शब्द-पाठात् ऋवर्णान्नानस्य णत्वं ज्ञाप्यते" - इत्याह श्रीना ज्ञा. सं. 1, पृ. 5.
11. अष्टा. 8/4/1.

णत्वं प्राप्नोतीति तत्प्रतिषेधायात्र गणे तृप्नोतीति शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [1]'मातृणा'मित्यादौ णत्वस्य साधुत्वसिद्धिः । अस्य वचनस्या सत्त्वे हि वर्णैकदेशानां वर्ण-ग्रहणनेनाग्रहणमिति पक्षे ऋकारमध्यस्थरेफमादाय 'रषाभ्यां नो णः [2]समानपदे' इति-णत्वस्याप्राप्त्या नात्र णत्वस्य साधुता सिद्ध्येत् । न चात्र गणे 'नृनमन' - शब्दपाठोऽप्यस्य वचनस्य ज्ञापकः, यतोऽस्य वचनस्याभावेऽस्मिन् शब्दे न केनापि सूत्रेण णत्वं प्राप्नोतीति तत्प्रतिषेधायात्र पाठो व्यर्थ इति शङ्क्यम् । यतोऽस्य वचनस्याभावेऽपि 'नार्नमनि[3]'रित्यत्र रेफात् परस्य नस्य 'रषाभ्यां नो णः[4] समानपदे' इति णत्वं वर्णैकदेशानां वर्णग्रहणेना- ग्रहणमिति पक्षेऽपि प्राप्नोतीति तत्प्रतिषेधायात्र गणे नृनमनशब्दपाठ आवश्यकः । न चैतद्वचनमेव वार्तिकरूपं स्वीकार्यं, किं ज्ञापकेनेति मन्तव्यम् । यतोऽस्य ज्ञापकसिद्धत्वे लाघवं भवति । वाचनिकत्वे हि गौरवं भवेत् । तदुक्तम्–

'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते [5]वैयाकरणा' इति ।

## द्रोण-कुण्ड-शब्दपाठौ

[6]'षिद्गौरादिभ्यश्चे'ति [7]सूत्रस्थगौरादिगणे द्रोण-कुण्डशब्दपाठो [8]"जातेरस्त्री-विषयादयोपधाद्" इति ङीब्विधौ समाने प्रवृत्तिनिमित्ते-अस्त्रीविषयत्वं गृह्यते इति वचनस्य [9]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र द्रोणीतिकुण्डीति ङीषर्थं द्रोण-कुण्डयोः

---

1. 'मातृ + नाम् इत्यवस्थायामिति शेषः । अष्टा. 8/4/1.
2. अष्टा. 8/4/1.
3. नृनमनस्यापत्यमित्यर्थे ' अत इञ्'–
   अष्टा. 4/1/95 - इति इञि 'तद्धितेष्वचामादेः -
   अष्टा. 7/2/116 इति अत्रास्य वृद्धौ रपरत्वे रूपमिदम् ।
4. अष्टा. 8/4/1.
5. (क) पु. दे. प. पा. म. 92, पृ. 160 व ।
   (ख) भ. ना. प. शे. प. 134, पृ. 366
6. अष्टा. 4/1/41.
7. गौरादिगणः । श्वन्-शब्दस्यात्र गणे पाठस्य ज्ञापकत्वनिरूपणावसरेऽत्र प्रबन्धेऽस्मिन्नेव प्रघट्टके उल्लिखितो द्रष्टव्यः ।
8. अष्टा. 4/1/63.
9. तथाहि–
   (क) "जातेरस्त्रीविषयादिति (4/1/63) 'ङीषूविधौ' समाने प्रवृत्तनिमित्ते अस्त्रीविषयत्वं गृह्यते' गौरादिषु (4/1/41) द्रोणकुण्डशब्दयोः पाठात् ज्ञापकात् । यदि भिन्नेऽपि प्रवृत्तिनिमिते यदस्त्रीविषयत्वं तदिह विवक्षितं स्यात् एतयो गौरादिषु पाठो विफलः स्यात् । परिमाणे घटे चास्त्रीविषयत्वात् एतयोरपि जातेरस्त्रीत्यनेन ङीषूसिद्धे"रित्याह पु. दे. ज्ञा. समु. त्रयोदशे ङ्यापूपादे पृ. 77 ।

पाठौ व्यर्थौ । तथाहि - यदि भिन्नेऽपि प्रवृत्तिनिमित्ते यदस्त्रीविषत्वं तद् '[1]जाते'-रिति सूत्रे विवक्षितं स्यात्तर्ह्येतयोर्गौरादिगणे पाठोविफलः, क्रमशः परिमाणे घटे चास्त्रीविषत्वात् द्रोण-कुण्ड-शब्दाभ्यामपि 'जातेर[2]स्त्री'त्यनेनैव हि ङीषःसिद्धिश्च सुलभा । ज्ञापिते चास्मिन् वचनेऽनेनाभ्यां शब्दाभ्यां जाते[3] रिति ङीष् प्रत्ययो न प्राप्नोतीति ङीष्प्रत्ययानयोरत्र गणे पाठौ स्वांशे चरितार्थौ भवतः । ज्ञापितस्यास्य वचनस्य फलं तु 'माला' 'बलाके'त्यत्र ङी[4]षोऽभावः । अस्य वचनस्यासत्वे हि स्रजि बकजातौ च क्रमशोऽनयोः स्त्रियां विद्यमानत्वाद् भिन्नप्रवृत्तिनिमित्तेऽस्त्रीविषत्वाच्च ङीषो[5]ऽत्राऽऽपत्तिर्दुवारा स्यात् । मालाशब्दो हि मलनं माल इति [6]घञन्तः पुंलिङ्गः क्षेत्रविशेषे नपुंसकः, स्रजि स्त्रीलिङ्गः, तथा बलाका शब्दः बलां कायतीति यौगिकः सर्वलिङ्गः, बकजातिवचनः स्त्रीलिङ्गः ।

वस्तुतस्तु मालाबलाकयोरजादौ पाठं स्वीकृत्य ङीषो वारणं सुलभमिति ज्ञाप्यवचने फलाभावादस्य पाठस्य ज्ञापकत्वं न युक्तमिति मन्ये । अतएवानयोः [7]अजादिगणे पाठो भगवता[8] स्वीकृतः संगच्छते ।

---

(ख) "नात्र यथाकथञ्चिदस्त्रीलिङ्गविषयत्वं विवक्षितम्, किं तर्हि ? यस्मिन् प्रवृत्तिनिमित्ते स्त्रीलिङ्गस्तस्मिन्नेव निमित्ते यल्लिङ्गान्तरेऽपि वर्तते । तेन निमित्तभेदेन नाना-लिङ्गेषु नायं विधिर्भवति । यद्येवम्, द्रोणीकुटी, पात्रीत्यत्र न प्राप्नोति ? द्रोणशब्दः प्रमाणविशेषे पुंलिङ्गः, गवादिन्यां तु स्त्रीलिङ्गः, कुण्ड-शब्दो घटे पुंलिङ्गः, गेहे तु स्त्रीलिङ्गः, पात्रशब्दो भाजनसामान्येऽर्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्रीलिङ्गः, गौरादिपाठात् सिद्ध"मिति ग्रन्थेन ह. मि. अस्य पाठस्य ज्ञापकत्वं सूचयति - पदम. 4/1/63.

1. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा 4/1/63.
2. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63.
3. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63.
4. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63.
5. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63.
6. 'भावे' अष्टा. 3/3/8.
7. "अजा, एडका, कोकिला, चटका, अश्वा, मूषिका, बाला, होडा, पाका, वत्सा, मन्दा, विलाता, पूर्वापिहाणा, (पूर्वापहाणा) अपरापहाणा, । 'संभस्त्राजिनशणपिण्डेभ्यः फलात्' । 'सदच् काण्ड प्रान्तशतैकेभ्यः पुष्पात्' । 'शूद्रा चामहत्पूर्वा जातिः" क्रुञ्चा, उष्णिहा, देवविशा, ज्येष्ठा, कनिष्ठा । 'मध्यमा पुंयोगेऽपि' । 'मूलान्नञः' । दंष्ट्रा । एतेऽजादयः - ग. पा. 4/1/4.
8. अनेन हि - "अथास्त्रीविषयादिति कथमिदं विज्ञायते – 'समानायामाकृतौ यदस्त्रीविषयमिति, आहोस्वित्-क्वचिद् यदस्त्रीविषयमिति । किं चातः ? यदि विज्ञायते 'समानायामाकृतौ यदस्त्रीविषयमिति द्रोणी कुटी पात्रीति न सिद्ध्यति । अथ विज्ञायते क्वचिदस्त्रीविषयमिति - माला बलाका । अत्रापि प्राप्नोति । अस्तु क्वचिदस्त्रीविषयमिति । कथं माला बलाकेति ? अजादिषु पाठः करिष्यत" - इत्युक्तम् व्या. म. भा. 4/1/2/63.

## पिच्छादि-तुन्दाद्योः पृथक् पाठः

[1]'लोमादिपामादिपिच्छादिभ्यः शनेलच' - इतिसूत्रे [2]'पिच्छादेः' [3]'तुन्दादिभ्य इलच्' - इति सूत्रे [4]तुन्दादेश्च पृथक् पाठः 'प्राणिस्थादातोल[5]जन्य-तरस्या'मितिसूत्रात् [6]''सिध्मादिभ्यश्चे त्यत्राऽनुवृत्तोऽन्यतरस्यामिति शब्दः समुच्चयार्थको न विकल्पार्थकः'' इति वचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्याभावेऽत्रानयोः पृथक्

---

1. अष्टा. 5/2/100.
2. 'पिच्छा, उरस्, धुवक, ध्रुवक, 'जटायटाकालाः क्षेपे' । वर्ण, उदक, पङ्क, प्रज्ञा, - इति पिच्छादिः'' ग. पा. 5/2/100.
3. अष्टा. 5/2/117.
4. ''तुन्द, उदर, पिचण्ड, यव, व्रीहि । 'स्वाङ्गाद् विवृद्धौ । – इति तुन्दादिः'' - ग. पा. 5/2/117.
5. अष्टा.5/2/96.
6. अष्टा. 5/2/97
7. तथाहि–
   (क) 'यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः? । ज्ञापकार्थ एवे'ति । 'यानि तर्ह्यनकारान्तानि तेषां पाठः किमर्थः । ज्ञापकार्थ एवे'–ति चाऽह पत. व्या. मा. भा. 5/2/2/97.
   (ख) ''कानिचिदकारान्तानि पिच्छादिषु पठितानि कानिचित्तु तुन्दादिषु पठितानि । तत्र भेदेन पाठो ज्ञापक एव यथोक्तार्थस्येत्यर्थः'' इत्याह कै. प्रदी. 5/2/2/97
   (ग) ''अन्यतरस्यां ग्रहणेन मतुप् समुच्चीयते, न तु प्रत्ययो विकल्प्यते । तस्मादकारान्तेभ्य इनिठनौ प्रत्ययौ न भवतः'' – इति ग्रन्थेन ज्ञापकत्वमस्य सूचयति जया. का. 5/2/97
   (घ) ''कथं पुन र्ज्ञायते– समुच्चयोऽत्रार्थः, क्व विकल्पोऽर्थ इति? ज्ञापकात् । यदयं पिच्छादीन्, तुन्दादींश्च पृथक् पठति । कथं कृत्वा ज्ञापकम्? इह 'तुन्दादिभ्य इलच्च'– इति चत्वारः प्रत्यया इष्यन्ते– इलच्, इनि– ठनौ, मतुबिति, तत्र यद्यन्यतरस्यां ग्रहणं विकल्पार्थं स्यात्, पिच्छादिभ्योऽपि प्रत्ययचतुष्टयं स्यात् । कथम् ? इलचो विकल्पितत्वादिनिठनौ, तयोरपि विकल्पित्वान् मतुबिति, ततश्च तुन्दादिष्वेव पिच्छादयः पाठ्याः, पिच्छादिषु वा तुन्दादयः, पृथक् पाठाद् विज्ञायते– अन्यतरस्यां ग्रहणेन मतुप् समुच्चीयते, न यथाप्राप्तमभ्यनुज्ञायते, इति । एवं हि पिच्छादिभ्यः प्रत्ययद्वयम् इलच् मतुप्च तुन्दादिभ्यश्चत्वार इति पृथक् पाठोऽर्थवान् भवति । ननु च तुन्दादिभ्योऽनकारान्तेभ्योऽपीनिठनाविष्येते, पिच्छादिभ्यस्त्वकारान्तेभ्य एव, तत्र यदि तुन्दादिषु पिच्छादयः पठ्येरन्, तदा पिच्छादिभ्योऽप्यनकारान्तेभ्य इनिठनौ स्याताम् अथ पिच्छादिषु तुन्दादयः पठ्येरन्, तदा तुन्दादिभ्योऽप्यनकारन्तेभ्य इनिठनौ न स्याताम्? यत्तर्हि कानिचिदकारान्तानि पिच्छादिषु पठति, कानिचित्तुन्दादिषु, तद्यथोक्तार्थस्य ज्ञापकं भावष्यती''त्याह ह. मि. पदम. 5/2/97
   (ङ) ''अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं, न तु प्रत्ययविकल्पार्थम्? तेनानकारान्तेभ्य इनि-ठनौ नेति ग्रन्थेन ज्ञापकत्वमस्य सूचयति भ. दी. वै. सि. कौ. मत्वर्थीय प्र. पृ. 745

पाठो व्यर्थः । तथाहि अस्य वचनस्याभावे [1]सिध्मादिभ्यश्चेत्यत्र [2]प्राणिस्थादातो लजन्यतरस्या'मित्यस्यार्थो विकल्पो भवेत्, तथा सति तदनुवृत्त्यैव तुन्दादीनां पिच्छादिगणे पाठेऽपि तेभ्यः 'लोमादि-पामादि[3]- पिच्छादिभ्यः शनेलचः' इत्यनेन प्रत्ययचतुष्टस्य सिद्धिः सुलभेति' 'तुन्दादिभ्य[4] इलच्चे'तिसूत्रे तुन्दादिपाठो व्यर्थः । एवं पिच्छादीनां तुन्दादिगणे पाठेनैव पिच्छादिभ्योऽपि 'तुन्दादिभ्य इलच्चे'ति सूत्रेण प्रत्ययचतुष्टयसिद्धिः सुलभेति 'लोमादि-पामादि-पिच्छादिभ्यः शनेलचः, इत्यत्र पिच्छादिपाठो व्यर्थः[5] । न केवलं पच्छिादि-तुन्दाद्योः पृथक् पाठ एव व्यर्थः किन्तु पृथग् योगौ चेमौ व्यर्थौ । अन्यतरस्यैकत्रगणे पाठेनैव द्वाभ्यामपि प्रत्ययचतुष्टय-सिद्धिरेकतरयोगेनैव हि सुलभा[6] ।

अथात्र तुन्दादिभ्योऽनकारान्तेभ्यो[7]ऽपीनिठनावपीष्टौ[8], पिच्छादिभ्यस्त्वकारेन्तेभ्य[9] एवेनिठनाविष्टौ, तत्र यदि तुन्दादिषु पिच्छादीनां पाठः क्रियेत तर्हि पिच्छादिभ्योऽप्यनकारान्तेभ्य[10] इनिठनावापद्येताम्, यदि च पिच्छादिषु तुन्दादीनां पाठः क्रियेत तर्हि तुन्दादिभ्योऽप्यकारान्तेभ्य[11] एव इनिठनावापद्येता-मित्यापत्तिद्वयवारणाय तुन्दादि-पिच्छाद्योः पाठश्चरितार्थ इति नानयोः पृथक् पाठो ज्ञापकोऽस्य वचनस्येति चेदुच्येत, तर्हि यत् केचनाकारान्ताः शब्दाः [12] पिच्छादिषु पठिताः, केचनचाकारान्ताःशब्दाः[13] तुन्दादिषु पठिताः, तदेवास्य वचनस्य ज्ञापकमित्यवेहि । अस्य वचनस्यासत्त्वे हि केषांचनाकारान्तानां पिच्छादिषु केषांचनाकारान्तानां तुन्दादिषु च पाठो नोपपद्यते । ज्ञापिते चास्मिन् वचने प्रवृत्तस्य

1. अष्टा. 5/2/97
2. अष्टा. 5/2/96
3. अष्टा. 5/2/100
4. अष्टा. 5/2/117
5. अष्टा. 5/2/117
6. अष्टा. 5/2/100
7. व्रीहिप्रभृतिभ्य इत्यर्थः ।
8. अकारान्तेभ्य एव 'अत इनिठनौ' अष्टा. 5/2/155 इति विहितावपीत्यर्थः ।
9. ध्रुवक-ध्रुवक-वर्ण-कालोदक-पङ्केभ्य एवेत्यर्थः ।
10. पिच्छा-उरस्-जटा-घटा-प्रज्ञाभ्य इत्यर्थः ।
11. तुन्दोदर-पिचण्ड-यवेभ्य एवेत्यर्थः ।
12. धुवक-ध्रुवक-वर्ण-कालोदकपङ्का इत्यर्थः ।
13. तुन्दोदर-पिचण्डयवा इत्यर्थः ।

मतुपः[1] समुच्चयेन [2]प्रत्ययद्वय सिद्धिसौलभ्येऽपि प्रत्ययचतुष्टयं[3] तुन्दादिभ्यो न सिद्ध्यतीति तुन्दादेः पृथक् पाठः, 'तुन्दादिभ्य इलच्चे'[4]ति पृथग् योगश्च स्वांशे चरितार्थौ भवतः । यतः. सत्यस्मिन् वचने मतुप्- इनि ठन्भ्योऽनन्तरं 'तुन्दादिभ्य इलच्चे'[5]ति सूत्राऽऽरम्भात् चकारेण मतुब् इनिठनौ च समुच्चीयन्ते, इति तुन्दादिभ्यः प्रत्ययचतुष्टयं सिद्ध्यति ।

ज्ञापितस्यास्य वचनस्य फलं तु सिध्मादिभ्यः पिच्छादिभ्यश्च प्रत्ययद्वयस्यैवेष्टस्य सिद्धिः । यतः सत्यस्मिन् वचने [6]'सिध्मादिभ्यश्चे' ति 'लोमादि-पामादि[7]-पिच्छादिभ्यः शनेलचः' इति च सूत्रयोरनुवृत्तेन समुच्चयार्थकेनान्यतरस्यांशब्देन पूर्वप्रवृत्तो मतुबेव समुच्चीयते, न तु परोक्तौ इनिठनावपि, ताभ्यां हि पूर्वमिमे सूत्रे पठिते । अस्य वचनस्याऽसत्त्वे हि सूत्रयोरनयोरन्यतरस्यामित्यस्य विकल्पोऽर्थः स्यात्, तथा सति अभावपक्षे पूर्वेण परेण वा सूत्रेण विहिताः सर्वेऽपि चत्वारः प्रत्यया यथाप्राप्तमापद्येरन् । नहि सिध्मादिभ्यः पिच्छादिभ्यश्च इतिठनौ प्रत्ययाविष्टौ किन्तु क्रमशः 'लच् मतुपौ,' इलच्-मतुपौ' इत्येतावेव । तुन्दादिभ्यश्च 'इलच्मलुप्इनि-ठन्' इत्येते चत्वारोऽपि प्रत्यया इष्टाः । यतः 'तुन्दादिभ्य इलच्चे'[8] ति सूत्रं मतुब्-इनि ठन्भ्योऽनन्तरमारब्धमिति तत्र चकारेण मतुब्इनिठनां समुच्चयो भवति ।

[9]"सिध्मादिभ्श्चेति सूत्रेऽनुवृत्तमन्यतरस्यामितिशब्दः समुच्चयार्थको, न विकल्पार्थकः" इति वचनस्य 'केशाद्वोऽन्यतरस्यामिति'[10] सूत्रस्याऽन्यतर-स्यामिति शब्दोऽपि ज्ञापकः[11] । यतोऽत्रासौ शब्दोऽस्य वचनस्याभावे व्यर्थः ।

---

1. 'तदस्यास्त्यस्मिन्निति मतुप्'– अष्टा. 5/2/94
2. इलचो मतुपश्चेति ।
3. इलच् मतुप्, इनि, ठन्–
   इत्येतच्चतुष्टयमित्यर्थः ।
4. अष्टा. 5/2/117
5. अष्टा. 5/2/117
6. अष्टा. 5/2/17
7. अष्टा. 5/2/100
8. अष्टा. 5/2/117
9. अष्टा. 5/2/97
10. अष्टा. 5/2/109
11. तथाहि–
   (क) "वस्य च पुनर्वचनं सर्वविभाषार्थम् । वस्य खल्वपि पुनर्वचनं क्रियते, सर्वविभाषार्थं– 'केशाद्वोऽन्यतरस्यामिति' । एतदेव ज्ञापत्याचार्यः समुच्चयो न विभाषेती" त्याह पत. व्या. म. भा. 5/2/2/97.
   (ख) "केशाद्व' इत्येव वक्तव्यम् । तत्र प्रकृतान्यतरस्यांग्रहणानुवृत्त्या ठन्निनिमतुपो भविष्यन्तीति किमन्यतरस्यां ग्रहणेन ठन्निनिप्राप्त्यर्थेन । तत्पुनः क्रियमाणं पूर्वस्याऽ-न्यतरस्यांग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थः" इत्याह कै. प्रदी. 5/2/2/97

[1]प्राणिस्थादातोलजन्यतरस्या'मित्यतोऽन्यतरस्यामित्यस्य 'केशाद्वोऽन्यतरस्या'-[2]मित्यत्रानुवृत्त्यैव 'व' प्रत्ययस्य वैकल्पित्वं हि सुलभम् । ज्ञापिते चास्मिन् वचने च [3]ततोऽन्यतरस्यामित्यस्यानुवृत्तौ समुच्चयार्थ एव लभ्येत, न विकल्पार्थः, इति विकल्पार्थलाभायात्र[4] सूत्रे उपात्तोऽन्यतरस्यामितिशब्दः स्वांशे चरितार्थो भवति । विकल्पार्थलाभस्य फलन्तु केशात् इतिठन्मतुपां सिद्धिः । तेन केशवः[5] केशी[6] केशिकः[7] केशवानिति[8] रूपचतुष्टयस्य साधुत्वमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु प्रागुक्तमेव ।

---

(ग) ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्तत एव ? मतुप्समुच्चयार्थं तदित्युक्तम्, अनेन त्विनिठनौ प्राप्येते । ततश्चात्र रूपं भवति केशव, केशी, केशिकः, वेशवानिति" इति ग्रन्थेन ज्ञापकत्वमस्य सूचयति जया. का. 5/2/109

(घ) "तथा 'केशाद्वोऽन्यतरस्याम्' इति न वक्तव्यम्, प्रकृतान्यतरस्यांग्रहणानुवृत्त्या इन्-ठन्-मतुपां सिद्धत्वात् । तदिनिठनोः प्राप्त्यर्थं क्रियमाणं पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चायार्थत्वं ज्ञापयती"त्याह ह. मि. पदम. 5/2/97

(ङ) "प्रकृतेनान्यतरस्याङ्ग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थ"मिति ग्रन्थेन ज्ञापकत्वमस्य सूचयति भ. दी. (केशाद्वोऽन्यतरस्याम्) वै. सि. कौ. मत्वर्थीय प्र. पृ. 748

(च) "अस्ति चेह लिङ्गं 'केशाद्वः' इत्यत्रान्यतरस्यांग्रहणम् । तद्धि इनिठनोः प्राप्त्यर्थं क्रियते । प्रकृतस्यान्यतरस्यांग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धे किं तेन? क्रियमाणं तु पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चार्थकतां ज्ञापयत्येव । तथा च वार्तिकं 'लजन्यतरस्या-मिति समुच्चयः' इति । अयं भावः–प्राणिस्थादिति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिद्ध्यति, तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः । समुच्चयार्थत्वे तु न दोष इति । एवं च 'लज् वा स्या'-दितिवृत्तौ वाशब्दः समुच्चये बोध्यः । 'वास्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इत्यमरः" इत्याह ज्ञा. भि. मत्वर्थीय प्र. पृ. 745-746.

(ङ) "वस्य विधायके शास्त्रेऽन्यतरस्यांग्रहणानुवृत्त्यैव सिद्धे पुनरन्यतरस्यामिति वचनं सर्वेषामिनादीनां विभाषार्थम् पक्षे प्राप्त्यर्थं सदेतदर्थज्ञापकमित्यर्थः ।' इत्याह भट्टनागेशः उद्यो. 5/2/2/97 पृ. 416.

(ज) "केशाद्वोऽन्यतरस्याम्' (सू. 5/2/109) इत्यन्यतरस्यांग्रहणस्य पुनःकरणाच्चेदं समुच्चयार्थ"– मित्याह श्रीनागेशः ज्ञा. सं. 5, पृ. 93.

1. अष्टा. 5/2/96
2. अष्टा. 5/2/109
3. .अष्टा. 5/2/109.
4. 'केशाद्वोऽन्यतरस्याम्'– अष्टा. 5/2/109
5. केशोऽस्त्यस्येत्यर्थे केशोद्वोऽन्यतरस्याम्' अष्टा. 5/2/109 इतिवप्रत्यये रूपमिदम् ।
6. केशशब्दात् केशोऽस्त्यस्येत्यर्थे 'अत इनिठनौ'–अष्टा. 5/2/115 इति इनिप्रत्यये रूपमिदम् ।
7. केशशब्दात् केशोऽस्त्यस्येत्यर्थे 'अत इनिठनौ'– अष्टा. 5/2/115 इति ठनि ठस्य 'ठस्येकः'– अष्टा. 5/3/50 इति इकादेशे आद्यचः 'किति च'– अष्टा. 7/2/118 इति वृद्धौ रूपमिदम् ।
8. केशशब्दात् केशोऽस्त्यस्येत्यर्थे 'तदस्यास्त्यस्मिन्निितिमतुप्'– अष्टा. 5/2/94 इति मतुपि मतुपोमकारस्य मादुपधायाश्च मतोर्वोऽयवादिभ्यः' अष्टा. 8/2/9. इति वकाराऽऽदेशे रूपमिदम् ।

अत्र कश्चित् [1]"केशाद्वोऽन्यतरस्या'मितिसूत्रस्थस्य 'अन्यतरस्या'मिति शब्दस्य नास्य वचनज्ञापकत्वं युक्तम्, यतोऽसौ शब्दः 'द्युद्रु भ्यांम'[2] इति पूर्वसूत्रस्य नित्यत्वज्ञापनार्थं चरितार्थः ।अयं हि शब्दः 'द्युद्रुभ्यां'[3] इत्यक्षान्यतरस्यामित्यस्य निवृत्तिं सूचयति विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति ।अन्यथात्राप्यन्यतरस्यामित्यस्यानुवृत्तिर्दुर्वारित्यस्याप्यनित्यत्वमापद्येते'त्याह[4] । मतमिदं न युक्तम् । यतो 'द्युद्रुभ्यां[5] मो नित्य'मिति नित्यपदं संयोज्य पूर्वसूत्रस्यास्य नित्यत्वमुपपादयितुं शपथम् । अतो न पूर्वसूत्रस्य[6] नित्यत्वसूचनायोत्तरसूत्रे[7]ऽन्यतरस्यामिति शब्दस्य चारितार्थ्योपपादनं युक्तमिति 'केशाद्वोऽन्यतरस्या'मिति[8] सूत्रस्थोऽन्यतरस्या'मितिशब्दोऽपि ज्ञापक एवोक्तवचनस्येति[9] निश्चप्रचम् ।

## पितामह-मातामहशब्दपाठौ

[10]'षिद्गौरादिभ्यश्चे'ति सूत्रस्थगौरादिगणे[11] पितामह–मातामहशब्दपाठौ 'अनित्यः षिल्लक्षणो ङीष्' इति वचनस्य ज्ञापकौ[12] । यतोऽस्य वचनस्याभावे

---

1. अष्टा. 5/2/109
2. अष्टा. 5/2/108
3. अष्टा. 5/2/108
4. तथाहि–
   (क) द्युद्रुभ्यां नित्यार्थमित्येके । द्युद्रुभ्यां नित्यार्थमेकेऽन्यतरस्यां ग्रहणमिच्छन्ति । कथम् ? विभाषामध्येऽयं योगः क्रियते । विभाषामध्ये च ये विधयो नित्यास्ते भवन्ती'त्याह पत. व्या. म. भा. 5/2/2/97
   (ख) "द्युद्रीभ्यां नित्यार्थमेके एतदन्यतरस्यां ग्रहणमिच्छन्ति, विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीती" त्याह श्रीना. ज्ञा. सं. 5, पृ. 93.
5. अष्टा. 5/2/108.
6. द्युद्रुभ्यां मः'– अष्टा. 5/2/108, इति सूत्रस्येत्यर्थः ।
7. 'केशाद्वोऽन्यतरस्याम्'– अष्टा. 5/2/109, इति सूत्रे इत्यर्थः ।
8. अष्टा. 5/2/109.
9. तथाहि– "वस्तुतस्तु द्युद्रुभ्यां नित्य'मित्येव सिद्धेऽन्यतरस्यांग्रहणं ज्ञापकमेव । इदमेव भाष्ये" 'एके' इत्यत्रारुचिबीज"मित्याह भ. ना. उद्यो. 5/2/2/97.
10. अष्टा. 5/1/41
11. 'गौरादिगणः श्वन्-शब्दस्यात्र गणे पाठस्य ज्ञापकत्वनिरूपणावसरेऽत्र प्रबन्धेऽस्मिन्नेव प्रघट्टके उल्लिखितो द्रष्टव्यः ।
12. तथाहि–
   (क) "मातामहपितामहयोः 'मातरि षिच्च' इतिषित्त्वादेव सिद्धे ज्ञापनार्थं वचनम् 'अनित्यः षिल्लक्षणो ङीष्' इति । तेन दंष्ट्रेत्युपपन्नं भवती"त्याह जया. का. 4/1/41
   (ख) "षिन्निमित्तो ङीष् अनित्यः पितृव्यादौ सूत्रे (4/2/36) मातरि षिच्चेति षित्त्वादेव सिद्धे गौरदिषु पितामहमातामहशब्दयोः ज्ञापकात् । तेन दंशेः ष्ट्रनिति दंष्ट्रेति सिद्ध्यतीत्याह पु. दे. ज्ञा. समु. त्रयोदशे ङ्याप्पादे पृ. 77
   (ग) "मातरि षिच्चेति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष् । दंष्ट्रा"– इत्याह भ. दी वै. सि. कौ. स्त्रीप्रत्यय प्र. पृ. 282

गौरादिगणे 'पितामही-मातामही'त्यत्रङीष्प्रत्ययार्थं पितामह-मातामहशब्दपाठौ व्यर्थौ। [1]'मातारि षिच्चे'ति वार्तिकेन [2]'पितृव्यमातुलमातामहपितामहाः' इति निपातनानुमतपितृमातृभ्यां डामहच्प्रत्ययस्य षित्त्वातिदेशेनैव हि पितामह-माता-महशब्दयोः स्त्रियां 'षिद् गौरादिभ्यश्चे'ति[3] ङीषृप्रत्ययः सुलभः। ज्ञापिते चास्मिन् वचने कदाचिदाभ्यां ङीषोऽभावो मास्त्वित्येदर्थं गौरादिगणेऽनयोः शब्दयोः पाठौ स्वांशे चरितार्थौ भवतः। ज्ञापितस्यास्य वचनस्य फलं तु दंष्ट्रेत्यत्र[4] ङीषोऽभावः[5]। अस्य वचनस्यासत्त्वे हि षित्त्वादत्र ङीष आपत्तिर्दुवारा स्यात्।

भट्ट नागेश–ज्ञानेन्द्रभिक्षुभ्यां तु नैतद् वचनं[6] स्वीक्रियते। यतोऽमूभ्यां क्रमशः "गौरादिगणे मातामहीशब्दपाठोऽनार्षः"[7] इति, "मातरि षिच्चे'ति पितामहीति रूपसिद्ध्यर्थमवश्यं वक्तव्यमिति न वार्तिकस्य वैयर्थ्यम्। ये तु पितामहशब्दमपि गौरादिषु पठन्ति, तन्मते वचनमिदं स्वरसतो न सङ्गच्छते। यदि त्वनित्यत्वज्ञापनमेव वचनस्य फलमिति ब्रूषे, तर्हि 'षिद्गौरे'ति सूत्र एव 'अनित्यं षितः' इति वक्तव्यं, किमनेन वक्रमार्गेणेति"[8] चोक्तम्। दंष्ट्रेत्यस्याजादौ[9] पाठः स्वीकर्तव्य[10] इति चानयोराशय इति मन्ये। ज्ञापकस्यास्य भाष्यांनुक्ततया वचनस्यास्यास्वीकारोऽपि सम्यगेव प्रतिभाति।

---

1. वा. व्या. म. भा. 4/2/1/35 तथा का. 4/2/36.
2. अष्टा. 4/2/36
3. अष्टा. 4/1/41
4. 'दंश दशने' धा. पा. भ्वा. 989 इति दंश्धातोः दशति अनेनेत्यर्थे 'दाम्नी शस यु युजस्तु तुद सिसिव मिहमतदशनहः करणे'– अष्टा. 3/2/182 इति करणे ष्टन् प्रत्यये शपोऽभावात् 'दंश सञ्ज स्वञ्जां शपि' अष्टा. 6/4/25. इतिनलोपाभावेऽदन्तत्वाट्टापि रूपमिदम्।
5. 'षिद्गौरादिभ्यश्च' अष्टा. 4/1/41
6. 'अनित्यः षिल्लक्षणो ङीष्' इति.
7. उद्यो. 4/2/1/35.
8. त. बो. स्त्री प्रत्यय प्र. पृ. 282.
9. 'अजाद्यतष्टाप्'– अष्टा. 4/1/4, इति सूत्रस्थाजादि गणे इत्यर्थः।
10. अजादेराकृतिगणत्वादिति शेषः।

## पुष्करसच्छब्दपाठः

'अनुशतिकादीनां[1] चे'ति सूत्रस्थानुशतिकादिगणे[2] पुष्करसच्छब्दस्य पाठः 'सत्यपि संभवे बाधनं[3] भवती' ति परिभाषाया ज्ञापकः[4] । यतोऽस्या अभावेऽत्र गणे पौष्करसादिरित्यत्रोभयपदवृद्ध्यर्थमस्य[5] शब्दस्य पाठो व्यर्थः । आद्यज्वृद्ध्यु[6]-पधावृद्धिभ्यां[7] हि पौष्करसादिरित्यस्य सिद्धिः सुलभा । न चादिवृद्ध्योपधावृद्धिबाधः शङ्क्यः । यतोऽत्र विभिन्नविषयत्वेन नादिवृद्धिरुपधावृद्धिमस्या अभावे बाधते । ज्ञापितायां चास्यां परिभाषायामनयाऽऽदिवृद्ध्योपधावृद्धे र्बाधादुभयपदवृद्ध्यर्थमत्र गणेऽस्य पाठः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलन्तु

---

1. अष्टा. 7/3/20
2. अनुशतिक, अनुहोड, अनुसंवरण, (अनुसंचरण) अनुसंवत्सर, अङ्गारवेणु, असिहत्य, (अस्यहत्य) अस्यहेति, वध्योग, (वध्ययोग) पुष्करसद्, अनुहरत्, कुरुकत, कुरुपञ्चाल, उदकशुद्ध, इहलोक, परलोक, सर्वलोक, सर्वपुरुष, सर्वभूमि, प्रयोग, परस्त्री । 'राजपुरुषात् ष्यञि' । सूत्रनड । इत्यनुशतिकादिः । आकृतिगणोऽयम् । ग. पा. 7.3.20.
3. (क) व्याडिः प. सू. प. 22, पृ. 12
   (ख) पु. दे. ल. प. वृ. प. 23 पृ. 122.
   (ग) सी. दे. बृ. प. वृ. प. 86, पृ. 246.
   (घ) नी. दी. प. वृ. प. 47, पृ. 301.
   (ङ) ह. भा. प. भास्क. प. 89, पृ. 358.
4. तथाहि–
   (क) "अनुशतिकादिषु (7/3/20) उभयपदवृद्ध्यर्थः पुष्करसत् इत्यस्य पाठो ज्ञापकः 'सत्यपि संभवे बाधनं भवती'ति । अन्यथा हि भिन्नविषयत्वात् उपधावृद्धिराद्यज्-वृद्ध्या न बाध्यत इत्येव सिद्धः पौष्करसादिरिति किमस्योभयपदवृद्ध्यर्थेन पाठेन । एतेन त्वाष्ट्रः पारिषद इत्यत्र अन्त्योपधावृद्ध्योरादिवृद्ध्या वारणं भवति । अजादेर्द्वितीयस्येति ( 6/1/2) द्वितीयद्विर्वचनेन च प्रथमद्विर्वचनस्य सत्यपि संभवे बाधनं युज्यते' इत्याह पु. दे. ज्ञा. समु. सप्ताविंशे देविक्रापादे पृ. 92
   (ख) "ज्ञापकंचात्रानुशतिकादिषु पुष्करसच्छब्दपाठः । अन्यथा हि भिन्नविषयत्वा-दाद्यज्वृद्ध्योपधावद्धिर्न बाधितव्येति सिद्धं पौष्करसादिरित्यनर्थः पाठो भवे"दित्याह सी. दे बृ. प. वृ. प. 86.
   (ग) "ज्ञापकमप्यत्र अनुशातिकादिषु (7 2.220) पुष्करसच्छब्दपाठः । अन्यथा आदि-वृद्ध्या उपधावृद्धिर्न बाध्येति सिद्धं पौष्करसादिरिति किं तेन । पुष्करसच्छब्दाट्टक् तु नैवास्त्यनभिधानादित्याहु'रित्याह ह. भा. प. भास्क. प. 89.
5. पुष्करसदोऽपत्यमित्यर्थे पुष्करसच्छब्दात् 'बाह्वादिभ्यश्च' – अष्टा. इति इ प्रत्यये 'अनुशतिकादीनां च'– अष्टा. 7/3/20 इत्युभयपदवृद्धौ रूपम् ।
6. 'तद्धितेष्वचामादेः' – अष्टा. 7/2/117.
7. 'अत उपधायाः' अष्टा. 7/2/116.

'त्वाष्ट्रो[1] जागतः[2], पारिषदः[3] इत्यादौ आदिवृद्ध्या[4] क्रमशोऽन्त्यवृद्धेरुपधा[5]-वृद्धेश्च[6] बाधः । अस्या असत्त्वे हि नान्त्यवृद्ध्युपधावृद्ध्योरादिवृद्ध्या बाधः स्यात् । तथा सति नेष्टानि रूपाण्यत्र सिद्ध्येयुः ।

## प्रशान्शब्दपाठः

[7]'स्वरादि निपातमव्यय'मिति सूत्रस्य स्वरादिगणे[8] प्रशान्शब्दपाठः [9]'प्रत्यय-लक्षणेनाव्ययसंज्ञा न भवती'ति वचनस्य ज्ञापकः[10] । यतोऽस्य वचनस्याभावे प्रशान्शब्देऽपि[11]नत्वस्यासिद्धत्वात् मान्तत्वं, प्रत्ययलक्षणेन कृदन्तत्वं चास्तीति कृदन्तं यन्मान्तं तदव्ययसंज्ञं स्यादिति द्वितीयव्याख्याने 'कृन्मेजन्तः[12]' इत्यनेनैवाव्ययसंज्ञायाः

---

1. त्वष्टुरयमित्यर्थे षष्ठ्यन्तात् त्वष्ट शब्दात् 'तस्येदम्'– अष्टा. 4/3/120 इत्यणि रूपम् ।
2. जगत इदमित्यर्थे षष्ठ्यन्ताज्जगच्छब्दात्' तस्येदम् – अष्टा. 4/3/120 इत्यणि रूपम् ।
3. परिषदि भव इत्यर्थे सप्तम्यन्तात् परिषच्छब्दात् 'तत्र भवः' अष्टा. 4/3/53 इत्यणि रूपम् ।
4. 'तद्धितेष्वचामादेः' – अष्टा. 7/2/117.
5. 'अचोञ्णिति' अष्टा. 7/2/115
6. 'अत उपधायाः' अष्टा. 7/2/116.
7. "स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि(वत्) ब्राह्मणवत्, क्षत्रियवत् । सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, (प्रवाहिका) आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अथ, अम्, आम्, प्रताम् (प्रशान्) प्रतान्, मा, माङ्– इति स्वरादिराकृतिगणोऽयम् ग. पा. 1/1/37.
8. अष्टा.1 //37
9. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62.
10. तथाहि –
    (क) "आचार्यप्रवृत्ति र्ज्ञापयति - 'न प्रत्ययलक्षणेनाव्ययसंज्ञा भवती'ति, यदयं प्रशान् शब्दं स्वरादिषु पठति" इत्याह भगवान् पत. व्या. म. भा. 1/1/6/38 .
    (ख) "कारयामास इत्यामन्तस्य सुब्लुगर्थं यदा कृन्मेजन्त इत्यत्र (1/1/39) मान्तः कृदन्त इति पृथगाश्रितम्, तदा प्रतामौ प्रताम इत्यत्रापि सुब्लुक् प्राप्नोति । तदर्थः स्वरादि-सूत्रे (1/1/37) प्रशान्शब्दपाठो भाष्ये ज्ञापक उपन्यस्तः - 'न धातोर्मकारस्य प्रत्ययलोपलक्षणेन कृदन्तत्वे कृन्मेजन्त इत्यव्ययत्वं भवतीति' इत्याह पु. दे. ज्ञा. समु. प्रथमे पादे पृ. 58.
    (ग) "कृन्मेजन्तः (सू. 1/1/39) कृदन्तं यन्मान्तमिति पक्षे प्रशान्शब्दस्य स्वरादिषु पाठात् ज्ञापकान्न प्रत्ययलक्षणेनाव्ययसंज्ञे"त्याह श्रीना. ज्ञा. सं. 1, पृ. 24.
11. 'मो नो धातोः' - अष्टा. 8/2/64.
12. -अष्टा. 1/1/39.

सुलभतया स्वरादिगणेऽव्ययसंज्ञार्थं प्रशान्-शब्द-पाठो व्यर्थः । ज्ञापिते चास्मिन् वचने प्रत्ययलक्षणेन कृदन्तत्वं स्वीकृत्य 'कृन्मेजन्त - इत्यव्ययसंज्ञा द्वितीयव्याख्यानेऽपि प्रशान् शब्दस्य न प्राप्नोतीति तस्याव्ययसंज्ञायै स्वरादिगणे पाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु प्रताम्शब्दस्याव्ययसंज्ञाया अभावः । अस्य वचनस्यासत्त्वे हि प्रपूर्वकात् [1]तमुधातोः क्विपि[2] तस्मिन् [3]लुप्तेऽपि [4]प्रत्ययलक्षणेन 'प्रताम्'इत्यस्य कृदन्तत्वश्रुत्या मकारान्तत्वं चास्तीति कृदन्तं यन्मान्तं तदव्ययसंज्ञं स्यादिति द्वितीयव्याख्याने 'कृन्मेजन्तः[5]' इत्यव्ययसंज्ञापत्तिर्दुवारा स्यात् ।

## भ्रातृष्पुत्रशब्दपाठः

[6]'कस्कादिषु चे'ति सूत्रस्य [7]कस्कादिगणे भ्रातुष्पुत्रशब्दपाठः 'एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्य विसर्गस्य षत्वंने'ति[8] वचनस्य[9]ज्ञापकः । यतोऽस्य वचनस्याभावे भ्रातुष्पुत्रशब्देऽपि [10]इदुदुपधस्य चाप्रत्ययस्येति षत्वस्य सुलभतया षत्वार्थं कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठो व्यर्थः । न चात्र ङसो कारस्य

---

1. 'तमु काङ्क्षायाम्' धा. पा. दिवा: 1202.
2. 'क्विप्च' - अष्टा. 3/2/76.
3. 'सर्वापहारे-' - इत्यर्थः ।
4. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/2/62.
5. अष्टा. 1/1/39.
6. अष्टा. 8/3/48.
7. "कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः, सद्यस्कालः, सद्यस्कीः, साद्यस्कः, कांस्कान्, सर्पिष्कुण्डिका, धनुष्कपालम्, बहिष्पलम्, बर्हिष्पलम्, यजुष्पात्रम्, अयस्कान्तः, तमस्काण्डः, अयस्काण्डः, मेदस्पिण्डः, भास्करः, अहस्करः - इति कस्कादिराकृतिगणः ग. पा. 8/3/48.
8. 'इदुदुपधस्य चाप्रत्ययस्य' - अष्टा. 8/3/41.
9. तथाहि –
   (क) "यद्ययं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात् षत्वं भवती"त्याह पत. व्या. म. भा. 1/1/6/50.
   (ख) "कस्कादिषु (8/4/48) षत्वार्थं भ्रातुष्पुत्र-शब्दपाठेन 'एकादेशनिमित्तादिणः परस्य विसर्जनीयस्य षत्वाभावज्ञापकात् मातुः करोतीति इदुदुपधस्यचाप्रत्ययस्येति (8/3/41) प्राप्तं विसर्जनीयस्य षत्वं न भवतीति । यद्येवं कथं शकहूषु । तर्हि तुल्यजातीयापेक्षं ज्ञापकमिति । कश्च तुल्यजातीयः । कस्कादिषु चेत्यत्र कुप्वोरित्यधिकारात् कुप्वोर-नन्तरं षत्वमिति षत्वतुकोरसिद्ध इति भाष्य"मित्याह पु. दे. ज्ञा. समु. एकविंशे मतुप्पादे पृ. 98.
   (ग) "एकादेशशास्त्रनिमित्तकस्य न षत्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् । तेनह न, मातुः कृपा" – इत्याह भ. दी. वै. सि. कौ. सिवर्गसंधि प्र. पृ. 77-78.
   (घ) "उरण् रपरः सू. 1/1/51, भ्रातुष्पुत्रग्रहणं ज्ञापकम् एकादेशनिमित्तात्परस्य' इदुदुपधस्य' (सू. 8/3/41) इतिषत्वं ने'त्याह श्रीना. ज्ञा. सं. 1, पृ. 26.
10. अष्टा. 3/8/41.

प्रत्ययावयवत्वात् तदादेशस्य विर्गस्यापि प्रत्ययावयवत्वमस्तीति कथं षत्वस्य प्राप्तिरिति शङ्क्यम् । यतोऽत्र अकाराऽऽदेशे 'उर[1]' - इत्यस्मिन् प्रत्ययावयवत्वस्य कथंचिदुपपादनेऽपि तदवयवरेफस्थानिकविसर्गे[2]प्रत्ययावयवत्वं दुर्लभम् । न च 'षत्वतुकोरसिद्धः'[3] -इत्येकाऽऽदेशशास्त्र-[4]स्यासिद्धत्वात् षत्वाप्राप्तौ विध्यर्थ एव[5]तत्रास्य पाठो न ज्ञापनार्थ इति शङ्क्यम् । यतोऽत्र' षत्वे तुकि च कर्तव्ये पदान्तपादाद्योः सतोरेवैकाऽऽदेशोऽसिद्धः' - इति सिद्धान्तः स्वीक्रियते । अन्यथा 'शकहूष्वि'त्यत्रापि षत्वं[6] न स्यात् । यतः 'शकान् ह्वयन्ती' त्यर्थे शकानिति कर्मोपदात् ह्वेधातोः[7] क्विपि[8] 'आदेच[9]उपदेशेऽशिती'त्यनेन धातोरेकारस्यात्वे सम्प्रसारणे[10] कृते 'संप्रसारणाच्चे[11]' ति पूर्वरूपैकाऽऽदेशे कृते 'हलः'[12] इति दीर्घे च कृते रूपमिदं सिद्ध्यति । भवति हि 'कोऽसिचत्'[13] 'सोऽसिचदित्यादौ[14] पदान्त-पदाद्योरादेश[15] इति षत्वनिषेधोऽत्र[16] भवति, न तु 'शकहूष्वि'त्यत्र । इत्थं भ्रातुष्पुत्र इत्यत्रापि 'षत्वतुकोरसिद्धः'[17] इत्यनेन एकाऽऽदेशशास्त्रमसिद्धं[18] न भवतीति कस्कादिगणे भ्रातुष्पुत्रशब्दे षत्वं[19] न प्राप्नोति, यतोऽत्र विसर्गः 'ऋत उत्'[20] - इति शास्त्रं

---

1. 'ऋत उत्' - अष्टा. 6/1/111.
2. 'खरवसानयोर्विसर्जनीयः' - अष्टा. 8/3/15.
3. अष्टा. 6/1/86.
4. 'ऋत उत्' - अष्टा. 6/1/111.
5. 'कस्कादिगणे' - इत्यर्थः ।
6. 'आदेश-प्रत्यययोः' - —अष्टा. 8/3/59.
7. 'ह्वेञ् स्पर्धायां शब्दे च' - —धा. पा. भ्वा. 1008.
8. 'क्विप्च' - —अष्टा. 3/2/76.
9. अष्टा. 6/1/45.
10. 'वचिस्वपि यजादीनां किति' – —अष्टा. 6/1/15.
11. अष्टा. 6/1/108.
12. अष्टा. 6/4/2.
13. 'को + असिचत्' - इति च्छेदः ।
14. 'सो + असिचत्' - इतिच्छेदः ।
15. 'एङः पदान्तादति' - -अष्टा. 6/1/109
16. 'सातूदाद्योः' - -अष्टा. 8/3/111.
17. अष्टा. 6/1/86.
18. 'ऋत उत्' - -अष्टा. 6/1/111.
19. 'इदुदुपधस्य चाप्रत्ययस्य' - -अष्टा. 8/3/41
20. अष्टा. 6/1/111.

निमित्तं यस्य उकारस्य तस्मात् परो विद्यत इति षत्वार्थोऽत्र गणे भ्रातुष्पुत्र-शब्दपाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'मातुः[1] कृपे'त्यादौ षत्वास्याभावः[2] । अस्य वचनस्यासत्त्वे हि षत्वापत्तिरत्र दुर्वारा स्यात् । यतो 'मातृ +अस्' - इत्यवस्थायाम् 'ऋत उत्'[3] - इति ऋकाराकारयोरुकारे रपरत्वे[4] च सति मातुर् +स्' - इति स्थिते 'रात्सस्ये'[5]ति सकारलापे रेफस्य विसर्गे च[6] कृते निष्पन्नस्य 'मातुः' - इत्यस्य कृपेत्यनेन पदेन सम्बन्धे विसर्गस्य प्रत्ययभिन्नतया 'इदुदुपधस्य चाप्रत्ययस्ये'[7]ति षत्वं प्राप्नोति । नचात्र सूत्रे '[8] 'अप्रत्ययस्ये'त्यस्य 'प्रत्ययावयवभिन्नस्ये'त्यर्थः, तथा सति ङसोऽकारस्यात्र प्रत्यया-वयवत्वात् तदादेशस्य विसर्गस्यापि प्रत्ययावयवत्वं विद्यत इति कथं षत्वप्राप्तिरिति शङ्क्यम् । यतोऽत्राकारस्याऽऽदेशस्य 'उर्' - इत्यस्य प्रत्ययावयवत्वस्य कथंचिदुप-पादनेऽपि तदवयवरेफस्थानिकविसर्गे प्रत्ययावयवत्वं दुर्लभम् । न चास्य वचनस्य स्वीकारे 'शकहू'ष्वित्यत्रापि षत्वं[9] न स्यादिति शङ्क्यम् । यतः कस्कादिगणे भ्रातुष्पुत्रशब्दपाठस्तुल्यजातीयस्य ज्ञापको न त्वतुल्यजातीयकस्य । कस्तुल्यजातीय इति चेत् ? यः कुप्वोरित्यवेहि ।

## राजन्शब्द-पाठः

'प्रतेरंश्वादयस्तत्पुरुषे'[10] इति सूत्रस्थांश्वादिगणे[11] राजन्शब्दस्य पाठः 'समासान्तविधिरनित्यः'[12] इति परिभाषाया

---

1. मातृशब्दात् षष्ठ्यैकवचने निष्पन्नस्य "मातुः" - इत्यस्य 'कृपे'त्यनेन सम्बन्धे मातुः कृपेति ।
2. 'इदुदुपधस्य चाप्रत्ययस्य' - अष्टा. 8/3/41.
3. अष्टा. 6/1/11.
4. 'उरण्रपरः' - अष्टा. 1/1/51
5. अष्टा. 8/2/24
6. 'खरवसानयो र्विसर्जनीयः' - -अष्टा. 8/3/15.
7. अष्टा. 8/3/41.
8. 'इदुदुपधस्य चाप्रत्ययस्य' - -अष्टा. 8/3/15
9. 'आदेश-प्रत्यययोः' - -अष्टा. 8/3/59
10. अष्टा. 6/2/193.
11. "अंशु जन, राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा, श्रवण, कृत्तिका, अर्धपुर" –इत्यंश्वादिः ग. पा. 6/2/192
12. (क) व्याडिः प. सू. प.75, पृ. 32. ।
    (ख) पु. दे. ल. प. वृ. प. 82, पृ. 148 ।
    (ग) सी. दे. बृ. प. वृ. प. 63, पृ. 228 ।
    (घ) नी. दी.प.वृ.प. 74, पृ. 307 ।
    (ङ) ह.भा.प. भास्क.प. 65, पृ. 350 ।
    (च) भ. ना.प. शे.प, 85, पृ. 309
    (छ) शेषा. प.भास्क.प. 72, पृ. 438.

ज्ञापकः[1] । यतोऽस्या अभावेऽत्र गणे राजञ्शब्दस्य पाठो व्यर्थः । तथाहि 'प्रतिराजः[2] 'इत्यत्रान्तोदात्तत्वाय कृतोऽत्रास्य शब्दस्य पाठः । स चास्या अभावे व्यर्थः । 'राजाहःसखिभ्यष्ट' जिति[3] टचश्चित्त्वेनैवान्तोदात्तत्वमत्र हि[4] सुलभम् । ज्ञापितायां चास्यां परिभाषायां समासान्तविधेरनित्यतया [5]'प्रतिराजे'-

---

1. तथाहि–
   (क) "ये समान्ता विधीयन्ते न ते सर्वकालं भवन्ति । कथं ज्ञायते । यदयं राजञ्शब्दं प्रतेरंश्वादिषु (6/2/193) पठति । इदमंश्वादिषु पाठप्रयोजनम् । 'प्रतेरश्वादयः' (6/2/193) इत्यन्तोदात्तत्वं यथा स्यात् । प्रतिराज इति । कथं कृत्वा ज्ञापकम् । अत्रांश्वादिषु पाठोऽनर्थकः । अयं 'राजाहःसखिभ्यष्टच्' (5/4/91) विधीयते । तत्र टचोऽन्तोदात्तत्वं सिद्धं, नार्थः पाठेनेति । तत्राचार्यः पश्यति अनित्यष्टच् समासान्त इति । तस्मात् पाठोऽन्तोदात्तार्थं' क्रियते । किमेतस्या ज्ञापने प्रयोजनम् । शताध्वनि इत्यत्र 'उपसर्गादध्वनः' (5/4/85) समासान्तो न भवती"त्याह व्याडिः प.सू.प.75, पृ. 32.
   (ख) "राजशब्दः समासान्तस्यानित्यत्वाद् यदा टज् नास्ति तदा प्रयोजयति । तस्मिन् हि सति चित्त्वादेवान्तोदात्तत्वं सिद्ध"मिति ग्रन्थेन ज्ञापकत्वमस्य सूचयति वाम. का. 6/2/193.
   (ग) "राजशब्दस्य चेह पाठः समासान्तविधेरनित्यत्वं ज्ञापयती"त्याह - जि. बु.न्या. 6/2/193.
   **(घ)** "तथा प्रतेरंश्वादयस्तत्पुरुषे' इति सूत्रेंऽश्वादिगणे राजन् शब्दस्य पाठोऽपीह लिङ्गम् । अन्यथा 'राजाहः सखिभ्यष्ट'जिति टजैव सिद्धे किं तेन ? - इत्याह भ. दी. श. कौ. 1/1/3/1 पृ. 160 - 161.
   (ङ) "प्रतेरंश्वादयस्तत्पुरुषे" (6/2/193) इति सूत्रेऽन्तोदात्तार्थमंश्वादिषु राजञ्-शब्दस्य पाठोऽस्या ज्ञापकः । अन्यथा 'राजाहःसखिभ्यष्टच्' (5/4/91) इति टचि चित्त्वादेवोदात्तत्वे सिद्धे किं तदुपादानेनेति वृद्धिसूत्रे शब्दकौस्तुभे स्पष्ट"मित्याह नी. दी. प. वृ. प. 74, पृ. 307.
   (च) "समासान्तविधेरनित्यत्वात् 'प्रतेरंश्वादय' इति सूत्रेंऽश्वादिगणे राजञ्शब्दपाठा-ल्लिङ्गात् । अन्यथा 'राजाह' इति टचा सिद्धे किं तेनेत्याह भा. ना. उद्यो. 1/1/2 "प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वायांश्वादिषु राजञ्शब्दपाठोऽस्यां ज्ञापकः । अन्यथा टजेवान्तोदात्तत्वे सिद्धे किं तेने"ति चाऽऽह भ. ना. प.शे.प. 85, पृ. 309.
   (छ) "ज्ञापकम् - 'प्रतेरंश्वादयस्तत्पुरुषे' (6/2/193) इति अन्तोदात्तत्वाय अंश्वादिगणे राजन्शब्दपाठः । समासान्तविधेर्नित्यत्वे 'राजाहः सखिभ्यष्टच् (5/4/91) इति टचश्चि-त्वेन अन्तोदात्तत्वासिद्धौ किं तेने"त्याह शेषा.प.भास्क.प. 72, पृ. 439.
2. राजानं प्रतीत्यर्थे 'कुगति प्रादयः' -अष्टा. 2/2/18, इति समासे 'राजाहः सखिभ्यष्टच्' - अष्टा. 5/4/91 इति टचि रूपम् ।
3. अष्टा. 5/4/91.
4. 'चितः' -अष्टा. 6/1/163.
5. राजानं प्रतीत्यर्थे 'कुगति प्रादयः' - अष्टा. 2/2/18, इति समासे 'समान्तविधिरन्त्यिः' -इति परिभाषया. 'राजाहः सखिभ्यष्टच्' -अष्टा. 5/4/91 इति टचोऽभावे रूपम् ।

त्यत्रान्तोदात्तत्वार्थमत्र गणेऽस्य शब्दस्य पाठः स्वांशे चरितार्थो भवति, यतोऽत्र टचोऽभावादन्तोदात्तत्वं[1] नान्यथा सिद्धम् । ज्ञापिताया अस्याः फलं तु 'शताध्वनि[2]' - इत्यत्र [3]'उपसर्गादध्वनः' इति समासान्तस्य अचः, 'युवोरनाका[4]'विति सूत्रस्थभाष्योदाहृते 'सुपथी[5] नगरी'त्यत्र 'इनः स्त्रिया'[6]मितिकपः, 'बह्वाम्पि[7] तडागानी'त्यत्र 'ऋक्पूरब्धूः[8] पथामानक्षे' इति अकारस्य, 'धृतधनुष[9]'मित्यत्र 'धनुषश्चे[10]'त्यनङश्चाभावः । अस्या असत्त्वेहि प्रयोगे तेषु क्रमशोऽजाद्यङ्ङन्तानां समासान्तानामापत्तिर्दुवारा स्यात् ।

## विपाट्शब्दपाठः

[11]'अव्ययीभावे शरत्प्रभृतिभ्यः' – इति सूत्रस्थशरदादिगणे[12] विपाट्शब्द - पाठः [13]'नदीपौर्णमास्याग्रहणयणीभ्य' इत्यनेन विधीयमानष्टच् नदीविशेषवाचि-गङ्गादिशब्देभ्यो न भवती''ति वचनस्य ज्ञापकः[14] । यतोऽस्य वचनस्याभावे [15]'नदीपौर्णमासी' ति सूत्रे नदीपदेन लोकप्रसिद्धनदीविशेषवाचिनां गङ्गा-यमुना-विपाशाप्रभृतीनामपि ग्रहणं स्यात्तथा सति प्रतिविपाशमित्यत्र विपाट्शब्दादपि

---

1. 'राजाहः सखिभ्यष्टच्' - अष्टा. 5/4/91.
2. शतस्याध्वनां समाहार इत्यर्थे 'तद्धि तार्थोत्तरपदसमाहारे- च'- अष्टा. 2/1/51, इति द्विगु समासे समासप्रातिपदिकत्वेन ङौ रूपम् ।
3. अष्टा. 5/4/85.
4. अष्टा. 7/1/1.
5. 'शोभना पथी अस्या इत्यर्थे 'अनेकमन्यपदार्थे' - अष्टा. 2/2/24 इति बहुव्रीहिसमासे सौ रूपम् । प्र. व्या. म. भा. 7/1/1/1.
6. अष्टा. 5/1/52.
7. 'बह्व्यः आपः एषु' - इत्यर्थे 'अनेकमन्यपदार्थे' - अष्टा. 2/2/24 इति बहुव्रीहिसमासे नपुंसके जसि शसि वा जशशसोः श्यादेशे च नुमि रूपमिदम् ।
8. अष्टा. 5/4/74.
9. धृतं धनुर्येनेत्यर्थे 'अनेकमन्य पदार्थे' - अष्टा. 2/2/24 इति बहुव्रीहि - समासादमिरूपम् । ''स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्'' - शि. म. स्तो.
10. अष्टा. 5/4/132.
11. अष्टा. 5/4/107.
12. शरद्, विपाश्, अनस्, मनस्, उपानङ्, द्वि, हिमवत्, हिरुक्, विद्, सद् दिश्, दृश्, विश्, चतुर् त्यद्, तद्, यद्, एतद्, कियत् । 'जरा या जरस्च' । प्रतिपरसमनुभ्योक्ष्णः, पथिन्-इति शरदादिः - ग. पा. 5/4/107.
13. अष्टा. 5/4/110.
14. तथाहि–
    (क) ''एवं तर्ह्याचार्यवृत्तिर्ज्ञापयति - 'न तद्विशेषेभ्यो भवतीति, यदयं विपाट्शब्दं शरबत् प्रभृतिषु पठती''त्याह पत. व्या. म. भा. 1/1/5/22.
    (ख) ''शरदादिषु विपाट् शब्द पाठात् ज्ञापकान्न विशेष ग्रहण''मित्याह श्रीना. ज्ञा. सं. 1, पृ. 19.
15. अष्टा. 5/4/110.

नदीविशेषत्वेनैव टचः सुलभतया शरदादिषु प्रतिविपाशमित्यत्र टजर्थं विपाट्शब्दपाठो व्यर्थः । ज्ञापिते चास्मिन् वचने विट्शब्दाट्टज्न प्राप्नोतीति प्रतिविपाशमित्यत्र टच्-प्रत्ययाय शरत्प्रभृतिगणे विपाट्शब्दपाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अपगङ्गम्[1], 'परियमुन[2]' मित्यादौगङ्गायमुनादिशब्देभ्य[3]ष्टचोऽभावः । अस्य वचनस्यासत्त्वे हि टच आपत्तिर्दुर्वारा स्यात् । न चेष्टापत्तिः, रूपे विशेषाभावेऽपि स्वरविशेषाऽऽपत्तेः । अत्र हि टचि 'चितः[4]' इत्यन्तोदात्तत्वाऽऽपत्तिः स्यात् । तदभावे तु [5]'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' इति पूर्वपदप्रकृतिस्वरत्वमिष्टं सिद्ध्यति ।

## श्रमणादिस्त्रीलिङ्गशब्दपाठः

[6]'कुमारः श्रमणादिभि'रिति सूत्रस्थ-श्रमणादिगणे स्त्रीलिङ्गश्रमणादिशब्दपाठः [7]'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति परिभाषाया ज्ञापकः[8] ।

---

1. गङ्गां वर्जयित्वेत्यर्थे 'अपपरिबहिरञ्चवः पञ्चम्या' - अष्टा. 2/1/12, इत्यव्ययीभावसमासः ।
2. यमुनां वर्जयित्वेत्यर्थे 'अपपरि.' - अष्टा. 2/2/12, इत्यव्ययीभावसमासः ।
3. 'नदीपौर्णमास्याग्रहायणीभ्यः
   —अष्टा. 5/4/110.
4. अष्टा. 6/1/163.
5. अष्टा. 6/2/33.
6. अष्टा. 2/1/70.
7. (क) व्याडिः प. सू. प. 25, पृ. 13
   (ख) पु. दे. ल. प. वृ. प. 26, पृ. 123.
   (ग) सी. दे. बृ. प. वृ. प. 28, पृ. 193.
   (घ) नी. दी. प. वृ. प. 38, पृ. 300.
   (ङ) ह. भा. प. भास्क. प. 28, पृ. 334.
   (च) भ. ना. प. शे. प. च 72, पृ. 288.
   (छ) शेषा. प. भास्क. प. 61, पृ. 432.
8. तथाहि–
   (क) "प्रातिपदिकग्रहणे स्त्रीपुंनपुंसकलिङ्गविशिष्टस्यापि ग्रहणं भवति । कथं ज्ञायते । यदयं 'कुमारः श्रमणादिभिः' (2/1/70) इत्याह । कथं कृत्वा ज्ञापकम् । अत्र कुमारशब्दस्य श्रमणादिभिः सह समासः क्रियते । अयं कुमारशब्दः पुँलिङ्गः । श्रमणादयश्च स्त्रीलिङ्गाः । समानाधिकरणाधिकारश्च वर्तते । तत्र सामानाधिकरण्यं न प्राप्नोति । पश्यति त्वाचार्यः कुमारग्रहणे स्त्रीलिङ्विशिष्टस्यापि ग्रहणं भवति । तेन कुमारः श्रमणेति - कुमारशब्दस्य श्रमणादिभिः सह समास उपपन्नो भवति । किमेतस्या ज्ञापने प्रयोजनम् । 'युवा खलति पलित वलिन जरतीभिः' (2/1/67,

यतोऽस्या अभावे स्त्रीलिङ्गैः श्रमणादिशब्दैः सह कुमारशब्दस्य सामानाधिकरण्यं न संभवतीति समानाधिकरणाधिकारस्थेन 'कुमारः श्रमणादिभिः' इत्यनेन समासार्थं पठ्यमाने [1]श्रमणादिगणे श्रमणादिशब्दपाठो व्यर्थः । ज्ञापितायां चास्यामनया कुमारी-शब्दस्यापि ग्रहणसंभवात्, तस्य च श्रमणदिशब्दैः सह समानाधिकरण्यं सुलभमिति तत्र स्त्रीलिङ्गश्रमणादिशब्दपाठस्तेन सामासार्थः स्वांशे चरितार्थो भवति ।लक्ष्यानुरोधादियं स्वरूपग्रहणे प्रातिपदिकविशेषग्रहणे प्रातिपदिकसामान्यग्रहणे च प्रवर्तते । ज्ञापिताया अस्याः फलं युवतिः पलिता युवपलिते'त्यत्र 'युवाखलतिपलित[2]वलिन-जरतीभिः' इति समासस्य, 'भवत्या हेतुने'त्यत्र 'सर्वनाम्नस्तृतीयाचे-[3]'ति तृतीयायाः, 'कुसूलीबिल'-मित्यत्र 'कुसूल-कूप[4]-कुम्भ-शालं बिले' इति पूर्वपदान्तोदात्तत्वस्वरस्य, 'दाससदृशी'त्यत्र 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इतितत्पुरुषसमासस्य[5], 'अपां स्रष्टी'-त्यत्र तृजन्तेन समासनिषेधस्य[6], 'हस्तिनीनां समूहो हास्तिक'मित्यत्र 'अचित्तहस्तिधेनो-ष्ठक्[7]' इतिठकः, स्थण्डिलशायिनीत्यत्र 'नेनूसिद्धबध्नातिषु चे'ति[8] सप्तम्या

---

इत्यत्र समास उच्यते, सच समासो युवतिशब्दस्यापि, भवति ! युवतिः पलिता युवपलिते"ति ग्रन्थेनज्ञापकत्वमस्यासूसुचद् व्याडिः प. सू. प. 25, पृ. 13.

(ख) "अत्र च ज्ञापकं 'कुमारः श्रमणादिभिः (2/1/70) इत्यत्र स्त्रीलिङ्गश्रमणाशब्दपाठः" इत्याह नी. दी. प. वृ. प. 38, पृ. 300.

(ग) 'केचित्तु श्रमणादीनां स्त्रीलिङ्गानां पाठो ज्ञापक इति वदन्ती"त्याह ह. भा. प. भास्क. प. 28, पृ. 334.

(घ) "अस्याश्च ज्ञापकं समानाधिकरण्ये 'कुमारः श्रमणादिभिः'इतिसूत्रे स्त्रीलिङ्गश्रमणादि-शब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेदज्ज्ञापक"मित्याह भ. ना. प. शे. प. 72, पृ. 289.

(ङ) "ज्ञापकं चात्र 'कुमारः श्रमणादिभिः' (2/1/70) इति समासार्थं पठ्यमाने श्रमणादिगणे श्रमणा प्रव्रजिता गर्भिणीत्यादिस्त्रीलिङ्गपाठः । नह्यन्तरेण लिङ्गविशिष्ट-ग्रहणं स्त्रीलिङ्गैः श्रमणादिशब्दैः कुमारशब्दस्य सामानाधिकरण्यं संभवतीति श्रमणा-दिपाठो युज्यते" इत्याह शेषा. प. भास्क. प. 61, पृ. 432.

1. अष्टा. 2/1/70.
2. अष्टा. 2/1/67.
3. अष्टा. 2/3/72.
4. अष्टा. 6/2/102.
5. अष्टा. 2/1/31.
6. 'तृजकाभ्यां कर्तरि' –अष्टा. 2/2/15.
7. अष्टा. 4/2/47.
8. अष्टा. 6/3/19.

अलुग्निषेधस्य, 'ग्रामे वासिनी'त्यत्र 'शयवासवासिष्वकालात्'[1]इत्यलुकः, 'कुमारीमाचष्टे कुमारयती'त्यत्र 'प्रातिपदिकाद्धात्वर्थे [2]बहुलमिष्ठवच्चे'ति णिचः, 'बहुश्रेयसी'त्यत्र - 'ईयसश्चे'[3]ति समासान्तनिषेधस्य च सिद्धिः । अस्या अभावे हि नैतेषु प्रयोगेषु ते सिद्ध्येयुः ।

## श्वचाण्डालशब्दपाठः

[4]'गवाश्वप्रभृतीनिचे'ति सूत्रे [5]गवाश्वादिगणे विरोध्यर्थकश्वचाण्डालशब्दस्य पाठः 'यदा विरोधिना द्वन्द्वो विवक्षितस्तदैकवद्भाव' इतिवचनस्य [6]ज्ञापकः । यतोऽस्य वचनस्याभावे श्वचाण्डालमित्यत्र 'येषां च विरोधः [7]शाश्वतिक' इत्यनेनैवैकवद्भावस्य सिद्धतयात्रगणेऽस्यैकवद्भावाय पाठो व्यर्थः । ज्ञापिते चास्मिन् वचने यदा श्वचाण्डालयोरविरोधस्तदा द्विवचनमपि स्यात्, तन्माभूदित्येतदर्थमत्रगणेऽस्य पाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [8]'देवासुरै'रित्यत्रैकवद्भावाभावः । अस्य वचनस्यासत्त्वे हि 'येषां च विरोधः [9]शाश्वतिकः' इत्यनेनैकवद्भावाऽऽपत्तिरत्र दुर्वारा स्यात् ।

वस्तुतस्तु पुरुषोत्तमदेवोक्तं गवाश्वादिषु श्वचाण्डालशब्दपाठस्योक्तवचन ज्ञापकत्वं न युक्तम् । यतो 'येषां च विरोधः [10]शाश्वतिकः' इत्यनेन श्वचाण्डालमित्यत्र नैकवद्भावः प्राप्नोति, नहि तयोर्विरोधः [11]शाश्वतिकः । अतस्तत्रैकवद्भावायात्र गणे तत्पाठश्चरितार्थः । देवासुरैरित्यत्रैकवद्भावाभावश्चेदं वचनं विनापि

---

1. अष्टा. 6/3/1.
2. ग. सू. वै. सि. कौ. चुरादि प्र. पृ. 238.
3. अष्टा. 5/4/156.
4. अष्टा. 2/4/11.
5. "गवाश्वम्, गवाविकम्, गवेडकम्, अजाविकम्, (अजैडकम्) कुब्जवामनम्, कुब्जकिरातम्, पुत्रपौत्रम्, श्वचाण्डालम्, स्त्रीकुमारम्, दासीमाणवकम्, शाटीपटीरम्, शाटीप्रच्छदम्, शाटीपटिट्कम्, उष्ट्रखरम्, उष्ट्रशशम्, मूत्रशकृत्, मूत्रपुरीषम्, यकृन्मेदः, मांसशोणितम्, दर्भशरम्, दर्भपूतीकम्, अर्जुनशिरीषम्, अर्जुनपुरुषम्, तृणोपलम्, (तृणोलपम्) दासीदासम्, कुटीकुटम्, भागवतीभागवतम्, इति गवाश्वप्रभृतीनि - ग. पा. 2/4/11.
6. तथाहि – "गवाश्वप्रभृतीनि चेत्यत्र (2/4/11) गवाश्वादिषु विरोध्यर्थः पठितो ज्ञापको 'यदा द्वन्द्वो विरोधिनामेकवद्भाव' इति । तेन 'देवासुरै'रित्येकवद्भावो न भवति विरोधस्याविवक्षितत्वा"दित्याह पु. दे. ज्ञा. समु. अष्टमे द्विगुपादे पृ, 68.
7. अष्टा. 2/4/9.
8. 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' - त. बो. द्वन्द्व प्र. पृ. 522.
9. अष्टा. 2/4/9.
10. अष्टा. 2/4/9.
11. नित्य इत्यर्थः ।

स्वतः सिद्धः । यतो न देवासुराणां विरोधः शाश्वातिकः किन्त्वमृतादिप्रयुक्तः कादाचित्कः । न हि समुद्रमन्थनप्रवृत्तिकाले तेषां विरोधो दृष्टचरः । इत्थं वैयर्थ्याभावाद् ज्ञापितवचन-फलस्यान्यथासिद्धत्वाच्चात्रगणे नास्य शब्दपाठस्य ज्ञापकत्वं युक्तमिति निश्चीयते ।

## श्वन्शब्दपाठः

'षिद्गौरादिभ्यश्चे'ति[1] सूत्रस्थ-गौरादि[2] गणे श्वन्शब्दस्य पाठः 'नोदात्तस्वरः । शुन्यवतरती'ति वचनस्य [3]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र श्वन्शब्दो व्यर्थः । तथाहि 'शुनी'तिरूपसिद्धये शुनो ङीषर्थं गौरादिषु श्वन्शब्दः पठितः, स च व्यर्थः, [4]'ऋन्नेभ्योङी'बिति ङीपैवास्य रूपस्य सिद्धिर्हि सुलभा । न चात्र ङीपि सति तस्य पित्त्वात् [5]'अनुदात्तौ सुप्पिता''वित्यनुदात्तत्वेन शुनीशब्द-घटक ईकारोऽनुदात्तः

---

1. अष्टा. 4/1/5.
2. "गौर, मत्स्य, मनुष्य, शृङ्ग, पिङ्गल, हय, गवय, मुकय, ऋष्य, (पुट तूण) द्रुण, द्रोण, हरिण, कोकण, (काकण) पटर, उणक, उकण, (आमल) आमलक, कुम्बक, बिम्ब, बदर, फर्करक, कर्करक, तर्कार, शर्कार, पुष्कर, शिखण्ड, सलद, शष्कण्ड, सनन्द, सुषम, सुषव, अलिन्द, गडुल, षाण्डश, आढक, आनन्द, आश्वत्थ, सृपाट, सृगेट, आखक, (आपच्चिक) शष्कुल, सूर्य, (सूर्म) शूर्प, सूच, यूष, (पूष) यूथ, सूप, मेथ, वल्लक, धातक, सल्लक, माल्लक, मालत, साल्वक, वेतस, वृक्ष, (वृस) अतस, (उभय) भृङ्ग, महमठ, मेह, छेद, पेश, मेद, श्वन्, तक्षन्, अनडुही, अनड्वाही । एषणः करणे । देह, देहल, काकादन, गवादन, तेजन, रजन, लवण, औद्गाहमानि, (आद्गाहमानि), गौतम (गोतम), (पारक), अयस्थूण, (अयः स्थूण) भौरिकि, भौलिकि, भौलिङ्गि, यान, मेघ, आलम्बि, आलजि, आलब्धि, आलक्षि, केवाल, आपक, आरट, नट, टोट, नोट, मूलाट, मुलाट, शातन, (पोतन) पातन, पाठन, (पानठ) आस्तरण, अधिकरण, अधिकार, अग्रहायणी (आग्रहावणी) । प्रत्यवरोहिणी, (सेचन) । सुमङ्गलात् संज्ञायाम् । अण्डर सुन्दर, मण्डल, मन्थर, मङ्गल, पट, पिण्ड, (षण्ड) उर्द, गुर्द, सम, सूद, औड, (आर्द्र) हृद (ह्रद) पाण्ड, (भाण्डल) भाण्ड, (लोहाण्ड) कदर, कन्दर, कदल, तरुण, तलुन, कल्माष, बृहत्, महत् (सोम) सौधर्म, । रोहिणी नक्षत्रे' । 'रेवती नक्षत्रे' । विकल निष्फल पुष्पकल ।' कटाच्छोणिवचने' । पिप्पल्यादयश्च । पिपली, हरितकी, (हरीतकी), क्रोशातकी, शमी, वरी, शरी, पृथिवी, स्रोष्टु, मातामह, पितामह" - इति गौरादिः - ग. पा. 4/1/41.
3. तथाहि –
   (क) "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति - नोदात्तनिवृत्तिस्वरः शुन्यवतरती'ति, यदयं श्वन् शब्दं गौरदिषु पठति" – इत्याह पत. व्या. म. भा. 1/4/1/2.
   (ख) "विप्रतिषेधे परम्, (सू. 1/4/2) । गौरादिषु श्वनुशब्दपाठो ज्ञापयति नोदात्तनिवृत्तिस्वरः शुन्यवतरतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1/ पृ. 149.
4. अष्टा 4/1/5.
5. अष्टा. 3/1/4.

स्यात्, ङीषि तु [1]'आद्युदात्तश्चे'ति प्रत्ययस्वरेण तस्योदात्ततया शुनीशब्दघटक ईकार उदात्तो भवेदिति स्वरभेददर्शनादन्तोदात्तत्वस्वरार्थमिह गणे तत्पाठस्यावश्यकत्वेन नास्य पाठस्योक्तवचनज्ञापकत्वं सम्भवतीति शङ्क्यम् । यतोऽत्र सत्यपि ङीपि 'श्वन् + ई' इत्यवस्थायां [2]सम्प्रसारणे जाते 'शु अन् ई' इति स्थिते [3]'अल्लोपोऽनः' इत्युदात्तस्याकारस्यलोपे अनुदात्तस्य ईकारस्य अनुदात्तस्य च [4]'यत्रोदात्तलोपः' इत्युदात्तेनान्तोदात्तत्वस्वरसिद्धिः सुलभा । ज्ञापिते चास्मिन्वचनेऽनेन उदात्तत्वनिवृत्तिस्वरस्य श्वन् शब्देऽप्रवृत्त्या 'शुनी'त्यादावन्तोदात्तत्वस्वरसिद्धयेऽत्रास्य पाठः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [5]'विप्रतिषेधे परं कार्यमिति सूत्रे [6]'अन्तरङ्गं चे'तिवार्तिकस्य 'शुने'त्यत्र अल्लोपादेकादेशानाऽऽनारम्भः । तथाहि–शुने'त्यत्र 'श्वन् + आ' इत्यवस्यायां '[7]श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे 'शु + अन् + आ' इति स्थिते '[8]अल्लोपोऽनः' इत्यल्लोपः [9]'संप्रसारणाच्चे'ति पूर्वरूपं च प्राप्नोति तत्रान्तङ्गत्वात् पूर्वरूपं यथा स्यान्नाल्लोप इत्येतदर्थमपि वार्तिकमिदमारब्धम् । यद्यप्यत्र पूर्वरूपेऽल्लोपे वा नास्ति रूपे कश्चन विशेषस्तथापि यद्यत्र अल्लोपो भवति तदा अकारस्योदात्तत्वेन लुप्ते तस्मिन् अनुदात्ताया विभक्तेः [10]'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वं भवतीति शुनाशब्दोऽन्तोदात्तः सम्पद्यते । यद्यत्र [11]पूर्वरूपं स्यात्तर्हि 'एकादेश [12]उदात्तेनोदात्तः' इति उकारस्य पूर्वरूपैकादेशरूपस्योदात्तत्वे विभक्तिरनुदात्तैव तिष्ठतीति मध्योदात्तः शुनाशब्दः सम्पद्यत इति स्वरभेदस्याभावोऽप्यत्र वार्तिकारम्भप्रयोजनं, तच्च प्रयोजनमनेन ज्ञापितेन वचनेन सिद्धमिति नैतद्वार्तिकमारम्भणीयं भवति ।

---

1. अष्टा. 3/1/3.
2. 'श्वयुवमघोनामतद्धिते' – - अष्टा. 6/4/133.
3. अष्टा. 6/4/134.
4. अष्टा. 6//161.
5. अष्टा. 1/4/2.
6. वा. व्या. म. भा. 1/4/1/2, पृ. 295.
7. अष्टा. 6/4/133.
8. अष्टा. 6/4/134.
9. अष्टा. 6/1/108.
10. अष्टा. 6/1/161.
11. सम्प्रणारणाच्च' – अष्टा. 6/1/108.
12. अष्टा. 8/2/5.

यतः 'शुना' - इत्यत्राप्यनेन वचनेन विभक्त्युदात्तत्वं न प्रवर्तत इति[1]अल्लोपे [2]पूर्वरूपे च स्वरे रूपे वा कश्चन भेदो न भवति ।

## (घ) "ज्ञापकानि तपरकरणानि"

पाणिनीयेऽस्मिन् व्याकरणे तपरकरणानि तपरवर्णानां स्व-स्वोच्चारणसमकालस्यैव संज्ञार्थं कृतानि दरीदृश्यन्ते । तपरवर्णानां स्व-स्वोच्चारणसमकालस्यैव बोधकता तु तपरस्त[3]त्कालस्ये'त्यनेन सिद्ध्यति । तथाहि - अत्र सूत्रे तपर [4]इत्यावर्त्तते, तत्र प्रथमतपरशब्दे - 'तः परो यस्मादिति बहुव्रीहिः, द्वितीये तु 'तात्पर' इति पञ्चमी [5]तत्पुरुषसमासः, '[6]अणुदित्सवर्णस्य चाप्रत्ययः' इतिसूत्रादण्ग्रहणं चानुवर्तते । तत्र ह्रस्वाकारादीनां तपराणां स्वस्वह्रस्वप्रपञ्च-वाचकत्वम् एकारादीनां दीर्घाणां च स्व-स्वदीर्घप्रपञ्चवाचकत्वं लोकसिद्धमिति 'सिद्धे सत्यारम्भो नियमार्थः'[7] – इतिन्यायेन सूत्रमिदं नियमार्थं सम्पद्यते - 'अण् - तपरश्चेत्तत्कालस्यैव सवर्णस्य ग्राहको, न त्वतत्कालस्येति ! इत्थम् अतत्कालनिवृत्त्यात्मकं परिसंख्यार्थं तपरसूत्रम् । शाब्दिकैर्हि परिसंख्येति शब्दो नियमेऽपि व्यवह्रियत[8] इति सूत्रमिदं नियमार्थमिति वक्तुं शक्यते । अत्र च तः परो यस्मादिति बहुव्रीहेः - 'अत्, इत्, उत्, लृत्, एत्, ऐत्, ओत्, औत्, - इत्युदाहरणानि । एते हि अष्टौ तपरा अणः स्व-स्व-समानकालानां षण्णां षण्णामेव बोधकाः, न त्वतत्कालानाम् । ऋदिति तु द्वादशानां बोधकाः । यतो वार्तिककृता 'ऋलृवर्णयोर्मिथः सावर्ण्यं [9]वाच्य'मित्यनेन ऋलृवर्णयोः सावर्ण्यं प्रोक्तम् । न चैवं 'लृदित्यपि द्वादशानां बोधकः स्यात्, तथा सति 'पुषादि द्युताद्य्[10]लृदितः परस्मैपदेषु' इत्यादिविधयः

---

1. 'अल्लोपोऽनः' अष्टा. 6/4/134.
2. सम्प्रसारणाच्च अष्टा. 6/1/108.
3. अष्टा. 1/1/70.
4. "तन्त्रादिना उभयं विवक्षित' मित्याह ज्ञा.भि. त. बो. संज्ञा प्र. पृ. 16.
5. (क) "तः परो यस्मात् सोऽयं तपरः, तादपि परस्तपरः"- इत्याह जया. का. 1/1/70.
   (ख) "तः परो यस्मात् स च तात्परश्चोच्चार्यमाणः समकालस्यैव संज्ञास्या" - -दित्याह भ. दी वै. सि. कौ. संज्ञा प्र. पृ. 16.
6. अष्टा. 1/1/69.
7. अयं न्यायः बा. मनो. संज्ञा प्र. पृ. 16, वासुदेवदीक्षितेनोद्धृतः ।
8. तथाहि – "नियमपदेन परिसंख्यापि व्याकरणे गृह्यते" – इत्याह भ. ना. परम लघु म. निपातार्थविचारे पृ. 143.
9. वै. सि. कौ. संज्ञा प्र. पृ. 13.
10. अष्टा. 3/1/55.

ॠत्स्वपि प्रवर्तेरन्नित्याशङ्क्नीयम् । यतः ॠदित्यनेन ॡकारप्रपञ्चस्य ग्रहणेऽपि क्वचित् ॡदिदग्रहणबलेन 'ॡ' इत्यनेन ॠकारप्रपञ्चस्य ग्रहणाभावो व्याख्यायते । अन्यथा 'ऋतो ङि [1]सर्वनामस्थानयो'रित्यादौ क्वचिद् ॠद्ग्रहणस्य, 'पुषादिद्युताद्यॢदितः[2] परस्मैपदेषु' - इत्यादौ क्वचिद् ॡद्ग्रहणस्य च वैयर्थ्यापत्तिः स्यात् । प्रथमातिक्रमणे कारणाभावेन सर्वत्र ॠद्ग्रहणमेव कर्तुं शक्यम् । 'तपर'-इति पञ्चमी तत्पुरुषसमासस्य तु [3]'वृद्धिरादै'जित्यत्र ऐकार उदाहरणम् । 'आत्, ईत्, ऊत्' - इत्यादि तु न तपरसूत्रोदाहरणम् । यतः आकारादिषु तपरसूत्रम् अपूर्व-विधानार्थम्, उत नियमार्थम् ? इति प्रश्नः समुदेति । न तावद् आद्यः । यतस्तपरसूत्रे [4]ग्रहणकसूत्रादनुवृत्तमणीतिपदं वर्णसमाम्नाय-पठित-वर्ण-मात्रपरम्, न चामी आप्रभृतयो वर्णसमाम्नाये सन्ति पठिताः, तपरसूत्रे अण्ग्रहणानुवृत्त्यभावेऽपि जातिपक्षे आकारादिभिः दीर्घैः स्वसमानकालिकप्रपञ्चस्य वाच्यताया लोकसिद्धत्वेन तेषु तपरसूत्रप्रवृत्तिःनिष्फलत्वात् कर्तुमशक्या । न द्वितीयः । यतो ग्रहणकसूत्रस्य [5]वाक्यापरिसमाप्ति' - न्यायेन अक्षरसमाम्नायस्य वर्णमात्रविषयकतया आकारादिषु तत्प्रवृत्त्यसम्भवेन तपरसूत्रस्य तेष्वकालनिवृत्तिफलकं नियमार्थत्वं नोपपद्यते । सिद्धे सत्यारम्भो हि नियमार्थः । एवं च आत्, ईदित्यादितपरकरणमसन्देहार्थमेव । पूर्वोक्तेषु अत्-इत्यादिषु अष्टसु यत्र यत्र **तपरकरणानि** तपरसूत्रप्रवृत्तिसम्पादकत्वेन[6], असंदेहार्थत्वेन,[7] मुखसुखार्थत्वेन[8] वा आत्मनः सार्थकतामुपपादयितुं न प्रभवः, तत्र तत्र ज्ञापकानि भवन्ति । ज्ञापकानि च 'अत्' इत्' उत्' ॠत्, ओत्, गोत् – इतीमानि पञ्च तपरकरणानि समुपलभ्यन्ते । तत्र-

1. अष्टा. 7/3/110.
2. अष्टा. 3/1/55.
3. अष्टा. 1/1/1.
4. 'अणुदित्सवर्णस्य चाप्रत्ययः' – अष्टा. 1/1/69.
5. तथाहि – "वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल 'आदिरन्त्येन सेहेते'ति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सर्वणसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवती'ति वाक्यापरिसमाप्तिन्यायो भगवता उक्तः -व्या.म. भा. - 1/1/4/10. पृ. 363.
6. 'अतोभिस ऐस्' – अष्टा. 7/1/9. इत्यादौ – इतिशेषः ।
7. 'औत्' – अष्टा. 7/3/118. इत्यादौ इति – शेषः ।
8. 'ॠदोरप्' - अष्टा. 3/3/57. इत्यादौ इति शेषः ।

## 'अत्'

'[1]अल्लोपोऽनः' इति सूत्रे कृतमदिति तपरकरणम् [2]'अकृतव्यूह–परिभाषाऽनित्ये'ति वचनस्य [3]ज्ञापकम् । यतोऽस्य वचस्याभावे '[4]आनः' इत्यत्रोपधालोपवारणाय कृतमिदं व्यर्थम् । तथाहि – अकृतव्यूह - परिभाषाया नित्यत्वे तया भाविना लोपेन[5] विनङ्क्ष्यतोऽकारस्य सर्वणदीर्घं[6] प्रति निमित्तत्वेनानाश्रयणाद् 'आन' इत्यत्र सवर्णदीर्घप्रवृत्तौ तपरकरणमिदमनर्थकं भवति । न च

---

1. अष्टा. 6/4/134.
2. (क) अकृतव्यूहाः पाणिनीयाः' व्याडिः प. सू. प. 65, - पृ. 29.
   (ख) अकृतव्यूहाः पाणिनीयाः प्रवर्तितमपि शास्त्रं व्यावर्तयन्ति' - पु. दे. ल. प. वृ. प. 104, - पृ. 155.
   (ग) 'अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति' – सी. दे. बृ. प. वृ. प. 49, - पृ. 216.
   (घ) 'अकृतव्यूहाः पाणिनीयाः' – नी. दी. प. वृ. प. 61, - पृ. 305.
   (ङ) 'अकृतव्यूहा; पाणिनीया' – ह. भा. प. भास्क. प. 51, - पृ. 10 345.
   (च) अकृतव्यूहाः पाणिनीयाः' – भ. ना. प. शे. प. 57, - पृ. 250.
   (छ) अकृतव्यूहाः पाणिनीयाः' – शेषा. प. भास्क. प. 48, - पृ. 425.
3. तथाहि –
   (क) इयं चानित्या । 'अल्लोपोऽनः' इतिसूत्रे तपरकरणात् । तद्धि अनितेः क्विपि आन् इत्यत्र लोपाभावाय क्रियते । अन्यथा दीर्घाभावे लोपसंभावनासत्त्वेनानया तदप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः' इत्याह नी. दी. प. वृ. प. 61, - पृ. 305.
   (ख) "अल्लोपोऽन 'इति सूत्रस्थतपरकरणं तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम् । तद्ध्यान इत्यादौ लोपवारणाय । अन्यंथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्-दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः" – इत्याह -भ. ना. प. शे. प. 57, - पृ. 253.
   (ग) "अनित्या चेयम्, 'अल्लोपोऽनः' (6/4/134) इति तपरकरणात् । तद्धि 'अन प्राणने इतिधातोराङि उपपदे विचि सवर्णदीर्घत्वे 'आनः' इत्यत्रोपधालोपवारणाय । यदीयं परिभाषा स्यात्, तर्हि भाविना लोपेन विनङ्क्ष्यतोऽकारस्य सवर्णदीर्घं प्रति निमित्तत्वे-नानाश्रयणात् सवर्णदीर्घप्रवृत्तौ अनर्थकं स्या" दित्याह – शेषा. प. भास्क. प. 48, - पृ. 426.
4. 'अन प्राणने' धा. पा. अदा. 1070 'इति अन्धातोराङि उपपदे 'अन्येभ्योऽपि दृश्यन्ते' – अष्टा. 3/2/75 इति विचि सवर्णदीर्घत्वे कृदन्तत्वेन प्रातिपदिकत्वाच्छसि रूपमिदं सिद्ध्यति ।
5. 'अल्लोपोऽनः' - अष्टा. 6/4/134
6. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101.

[1]दान्-[2]शान् धातुभ्यां [3]क्विपि शसि दानः शान इत्यादावकारस्य लोपाभावाय तपरकरणमिहाऽऽवश्यकमिति शङ्क्यम् । यतो दान्शानो र्नित्यण्यन्तत्वेन[4] णिलोपस्य स्थानिवद्भावेन लोपस्य प्राप्तिरेव नास्ति । ज्ञापिते चास्मिन् वचने 'आनः' इत्यादावकृतव्यूहपरिभाषाया अनित्यत्वेनाप्रवृत्त्या सवर्णदीर्घस्य दुर्वारतयोपधालोपवारणाय तपरकरणमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[5]अतिभवकानित्यत्राकच्सिद्धिः[6] । अस्याभावेऽत्र सर्वनामसंज्ञाया निमित्तभूतानुपसर्जनत्वस्य भाविना[7] समासेन विनाशसंभावनायामकृतव्यूहपरिभाषया वाक्येऽपि [8]सर्वनामत्वाप्राप्तावकचोऽप्रवृत्त्या[9]ऽऽपत्तिः स्यात् । सति चास्मिन् वचने तस्या अनित्यत्वेनेहाप्रवृत्तौ सिद्ध्यत्यकच् ।

## 'अत्'

'[10]श्नसोरल्लोपः' इति सूत्रे 'अ'दिति तपरकरणम् [11]'असिद्धवदत्राभा'-दित्यसिद्धत्वमनित्य'मिति वचनस्य ज्ञापकम्[12] । यतोऽस्य वचनस्याभावे तपकरणम्'

---

1. 'दान खण्डने' – - धा. पा. भ्वा. 994.
2. 'शान तेजने' – - धा. पा. भ्वा. 995.
3. 'क्विप् च' - -अष्टा. 3/2/76.
4. 'अर्थविशेषे सन् । अन्यत्र दानयति शानयति' इत्याह - -भ. दी. वै. सि. कौ. भ्वा. प्र. पृ 141.
5. 'अर्थविशेषे इति आर्जवे निशाने चार्थे सनित्यर्थः ।
'अन्यत्रेति । आर्जवनिशानाभ्यामन्यत्र णिजन्तात् परस्मैपदमेवेत्यर्थः ।
'अर्थान्तरे अननुबन्धकाश्चुरादय' इत्युक्तेरिति भावः' – इत्याह – वा. दी. बा. मनो. भ्वा. प्र. पृ. 142.
6. भवतोऽतिक्रान्तानित्यर्थः ।
7. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71.
8. सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27.
9. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71.
10. अष्टा. 6/4/111.
11. अष्टा. 6/4/22.
12. तथाहि –
(क) "दम्भ एत्वमलक्षणम्' - असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिद्ध्यति । श्नसोरत्वे तकारेण ज्ञाप्यते त्वे त्वशासनम् ।।" – इत्युक्त्या ज्ञापकत्वमस्य सूचयति पत. व्या. म. भा. 6/4/3/120.
(ख) "असिद्धत्वस्यानित्यत्वज्ञापनाय तकारः कृतः । नित्ये ह्यसिद्धत्व आसन्नित्यादावाटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण, तेनासिद्धत्वाभावाद् दम्भ एत्वं सिद्ध्यतीत्यर्थः" इत्याह कै. प्रदी. 6/4/3/120.
(ग) "श्नसोरत्वे तकारेण असिद्धवदत्र' (सू. 6/4/22) इत्यस्यासिद्धत्वज्ञापनात् देभतुरितिसिद्धि"रित्याह श्रीना. ज्ञा. सं. 6, पृ. 113.

[1]'आसन्' इत्यत्र [2]आटो लोपाभावाय कृतम् । तच्चास्य वचनस्याभावे व्यर्थम् । 'आसन्' - इत्यत्र हि आटः [3]आभादित्यनेनासिद्धत्वाल्लोपाभावोऽन्यथासिद्धः । ज्ञापिते चास्मिन् वचनेऽनेन[4] आटोऽसिद्धत्वात् तस्य लोपो माभूदित्येतदर्थं तपरकरणमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्थ फलं तु 'देभतु'-रित्यादौ [5]नलोपस्यासिद्धत्वाभावात् [6]एत्वाभ्यासलोपयोः सिद्धिः । अस्य वचनस्या-सत्त्वे हि दम्भु[7] धातोर्लिटि तसि तसोरतुसादेशे धातो र्द्वित्वे - 'दन्भूदन्भ् अतुस्' इति स्थिते हलादिशेषे 'अनिदिता'मिति[8] नलोपे[9]च कृते [10]'असिद्धवदत्राभा'दिति नलोपस्यासिद्धत्वात् अकारस्य संयुक्तहल्मध्यस्थत्वादेकारोऽभ्यासलोपश्च न सिद्धये-ताम् । वस्तुतस्तु तपरकरणमिदं 'दम्भ एत्वं'मिति वचनज्ञापकमित्यत्रैव [11]भाष्य-तात्पर्यम् । अतएव भट्टोजिदीक्षितः - "श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तवान् । 'अनिदितामिति' नलोपः । तस्याऽऽ-भीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ । देभतुरिति [12]यदाह तदुपपन्नं भवति । भाष्ये च 'दम्भ एत्व'मिति वार्तिक-मपि[13]पठितम् ।

## 'इत्'

'शास [14]इदङ्हलो'रिति सूत्रे 'इ'दिति तपरकरणं 'क्वचिद् भाव्य[15]मानोऽप्यण् सवर्णान् गृह्णाती'ति परिभाषाया [16]ज्ञापकम् । यतो यदि भाव्यमानः सर्वथैव

---

1. 'अस भुवि' धा. पा. अदा. 1065, इति अस् धातोर्लङि प्रथमपुरुषबहुवचने रूपम् ।
2. 'आडजादीनाम्' अष्टा. 6/4/27.
3. अष्टा. 6/4/22.
4. 'आडजादीनाम्' - अष्टा. 6/4/27.
5. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24.
6. 'अत एकहल्मध्येऽनादेशादेलिटि' - अष्टा. 6/4/120 इत्यनेनेत्यर्थः ।
7. 'दम्भु दम्भने' धा. पा. स्वादि. 1270, उपदेशे नोपधोऽयम् ।
8. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24.
9. श्रन्थि ग्रन्थि दम्भिस्वञ्जीनां लिटः कित्त्वं वे'ति व्याकरणान्तरसूत्रेण लिटः कित्त्वादिति भावः ।
10. अष्टा. 6/4/22.
11. 'दम्भ एत्वमलक्षण'मित्यादि (व्या. म. भा. 6/4/3/120) भाष्यस्येत्यर्थः ।
12. वै. सि. कौ. स्वादि प्र. पृ. 200.
13. व्या. म. भा. 6/4/3/120.
14. अष्टा. 6/4/34
15. (क) पु. दे. ल. प. वृ. प. 31, पृ. 126.
    (ख) शेषा. प. भास्क. प. 20, पृ. 403.
16. तथाहि –"शास इदङ्हलोः ' (6/4/34) इति वा तपरकरणमुक्तार्थे ज्ञापकं भविष्यती"त्याह पु. दे. ल. प. वृ. प. 31, पृ. 136.

सवर्णान् न गृह्णीयात्तर्हि सूत्रेऽस्मिन् 'इ'दिति तपरकरणं व्यर्थम् । दीर्घेकारव्यावृत्तिर्भाव्यमानतयैवात्र हि सुलभा । ज्ञापितायां चास्यामनया प्राप्तस्य दीर्घेकारस्य निवृत्त्यर्थमिदं तपरकरणं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु 'अमू' 'अमूभ्या'मित्यादौ स्थनिन आन्तर्यात् 'अदसोऽसेर्दादुदो मः'[1] इतिदीर्घस्य दीर्घादेश - सिद्धिः । अस्या अभावे तु उकारस्यात्र भाव्यमानतया सवर्णाग्रहणाद् दीर्घस्यापि स्थानिनो ह्रस्व एवोकारादेश आपद्येत् । 'सनाशंस [2]भिक्ष उः' '[3]तनादिकृञ्भ्य उः' इत्यादौ वोः सवर्णग्रहणाऽऽपत्ति - वारणम् '[4]उदिति' '[5]ऋदिति' तपरकरणज्ञापक - विवेचनावसरेऽत्र प्रबन्धे चारु प्रदर्शितमिति नेह तत् प्रतन्यते ।

## 'उत्'

[6]'दिव उदि'ति सूत्रे 'ऋत[7] उदिति' सूत्रे च 'उ'दिति तपरकरणे [8]भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती'ति परिभाषाया ज्ञापिके । यतोऽस्या

---

1. अष्टा. 8/2/80.
2. अष्टा. 3/2/168.
3. अष्टा. 3/1/79.
4. 'दिव उत्' - अष्टा. 6/1/131. 2 'ऋत उत्' - अष्टा. 6/1/111.
5. अष्टा. 6/1/131.
6. अष्टा. 6/1/111.
7. (क) 'उकार एवैको भाव्यमानोऽपि सवर्णान् गृह्णाती'ति व्याडिः प. सू. प. 31, पृ. 16.
   (ख) क्वचिद् भाव्यामानोऽप्यण् सवर्णान् गृह्णाति' इति पु. दे. प. पा. 31, पृ. 12 अ ।
   (ग) भ. ना. प. शे. प. 21, पृ. 116.
   (घ) 'क्वचिद् भाव्यमानोऽप्यण् सवर्णान् गृह्णाती'त्याह शेषा. प. भास्क. प. 20, पृ. 403
8. तथाहि –
   (क) "दिव उत्' (6/1/131) इत्यत्र उकारस्य तपरकरणं न कर्तव्यम् । कथं वकारस्य स्थानेऽयमुकारो भाव्यते । तेन भाव्यमानः सवर्णान् न ग्रहीष्यतीति ह्रस्व एव भविष्यति न दीर्घप्लुतौ । तस्मान्नार्थस्तपरकरणेन । पश्यत्याचार्यः – 'उकार एवैको भाव्यमानोऽपि सवर्णान् गृह्णति' । किमेतस्या ज्ञापने प्रयोजनम् ! 'अंदसोऽसे र्दादुदोमः' (8/2/80) इत्यत्र उकारः सवर्णं गृह्णातीति, अमुष्मिन् अमूभ्याम् इत्यत्र ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः" इत्याह व्याडिः प. सू. 30 - 31 पृ. 16.
   (ख) "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति - 'भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहण'मिति, यदयं 'दिव उ'दिति उकारं' तपरं करोती"त्याह पत. व्या. म. भा. 6/1/6/185.
   (ग) "भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति 'ऋत उ'दिति तपरत्वेन ज्ञापना"दित्याह कै. प्रदी. 6/4/2/19, पृ. 862.
   (घ) एवं तर्ह्येतज् ज्ञापयति - 'भवत्यत्र ह्युकारेण भाव्यमानेन सवर्णस्य ग्रहणमिति । तेनामू, अमूभ्यामित्यत्र (अदसोसेर्दादुदोमः' इति दीर्घस्य स्थाने दीर्घ ऊकारो भवती'- त्याह जि. बु. न्या 6/1/111.

अभावेऽत्र 'द्यु[1]भ्यामित्यादौ दीर्घव्यावृत्त्यर्थम् 'उदितितपरकरणं, 'होतु'[2] रित्यादौ दीर्घव्यावृत्त्यर्थं च 'उ' दिति तपरकरणञ्च व्यर्थे । 'भाव्यमानेन सवर्णानां ग्रहणं ने'-ति परि[3]भाषयैव हि दीर्घव्यावृत्ती सुलभे । ज्ञापितायां चास्यां तत्र तत्र दीर्घव्यावृत्तये इमे तपरकरणे स्व-स्वांशे चरितार्थे भवतः । न च ज्ञापितायामप्यस्यां 'होतु'-रित्यादौ द्विमात्रस्य स्थाने द्विमात्र एवाऽऽदेशः प्रमाणत[4] आन्तर्यात्प्राप्नोतीति दीर्घव्यावृत्त्यर्थम् 'ऋत[5] उत्' इत्यत्र 'उ' दिति तपरकरणं स्वांशे चरितार्थं भवतीति स्थाने, किन्तु 'दिव[6] उत्' इत्यत्र 'उ' दिति तपरकरणं स्वांशे चरितार्थं न भवति, यतः [7]सवर्णग्राहकत्वेऽपि 'द्युभ्या'[8]मित्यादौ स्थानिनो वकारस्य

---

(ङ) "ज्ञापितमेतत् 'दिव उत्' 'ऋत उत्' इति तपरकरणेन - 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती"त्याह ह. मि. पदम. 6/1/111.

(च) "ज्ञापकं चात्रार्थे 'दिव उत्' (6/1/131) इति तपरकरणम् । यदि हि भाव्यमानः सर्वथैव सवर्णान् न गृह्णाति द्युभ्यामित्यादौ सिद्धा दीर्घनिवृत्तिः । किं तपरकरणेन-तत् कृतं 'क्वचिद् भाव्यमानोऽप्यण् सवर्णान् गृह्णातीति ज्ञापयति" इत्याह पु. दे. ल. प. वृ. प. 31, पृ. 126.

(छ) "अनित्या चेयं परिभाषा । तेनामू इत्यत्र द्विमात्रस्याकारस्य द्विमात्र एव ऊकारो भवति । अत्र चार्थे 'दिव उत् (6/1/131) इति तपरकरणं ज्ञापकम् । यदि भाव्य-मानोऽण् सर्वथैव सवर्णान् न गृह्णाति तदा द्युभ्यामित्यत्र 'च्छ्वोः शूडनुनासिके च' (6/4/19) इत्यूठ्यपि कृते दीर्घस्य स्थाने ह्रस्वः सिद्धः स्यात् । किं तपरकरणेन । तत् कृतं ज्ञापयति 'क्वचिद् भाव्यमानोऽण् सवर्णान् गृह्णाती"त्याह सी. दे. बृ. प. वृ प. 11, पृ. 173.

(ज) "दिव उत्' 'ऋत उत्' तपरकरणमस्या ज्ञापक"मित्याह भ. ना. प. शे. प. 21, पृ. 116.

(झ) "अत्रच ज्ञापकम् - 'ऋत उत्' (6/1/111) इति तपरकरण' मित्याह शेषा. प. भा. प. 20 पृ. 403 ।

"दिव उत्' (सू. 6/1/131) इति तपरत्वं ज्ञापयति- उकारेण भाव्यमानेन सवर्णानां ग्रहणमिती"त्याह श्रीना. ज्ञा. सं. 6 पृ. 103.

1. दिवृशब्दात् भ्यामि रूपम् ।
2. होतृ शब्दात् ङसिङसो रूपे ।
3. (क) पु. दे. प. पा. प. 19, पृ. 12 अ.
   (ख) भ, ना, प. शे. प. 20 पृ. 113.
   (ग) शेषा प. भास्क. प. 19, पृ. 402.
4. 'स्थानेऽन्तरतमः -अष्टा. 1/1/50. इति परिभाषया ।
5. अष्टा. 6/1/111.
6. अष्टा. 6/1/113.
7. 'अणुदित्सवर्णस्य चाप्रत्ययः' – -अष्टा. 1/1/69. इत्यनेनेति शेषः ।
8. 'दिवृशब्दाद्भ्यामि रूपमिदम् ।

द्विमात्रान्यूनकालिकत्वेन प्रमाणत [1]आन्तर्याद् ह्रस्वस्यैव प्रवृत्तिस्तपरकरणाभावेऽपि सुलभेत्याशङ्कनीयम् । यतो दिवमिच्छतीत्यर्थे दिवशब्दात् क्यचि[2] तदन्तात् क्विपि[3] अल्लोप-[4]यलोपयो;[5] भ्यामि 'च्छ्वोः [6]शूडनुनासिके चे'ति ऊठि 'दिऊ भ्या'मिति स्थिते दीर्घस्य उकारस्य स्थाने ह्रस्वविधानार्थम् 'उ'दिति तपरकरणं चरितार्थम् । 'दिऊभ्या'मिति स्थिते उकारस्य स्थानिवत्त्वेन[7] वकारबुद्ध्या 'दिव उ'दिति[8] यणि[9] च प्रकृते द्युभ्यामिति हि सिद्ध्यति । न चौठि अल्लोपस्य 'अचः परस्मिन्[10] पूर्वविधा'विति स्थानिवत्त्वमत्र शङ्क्यम् । यतः क्वौ विधिं प्रति स्थानिवत्त्वं प्रतिषिद्धम् । नाप्युत्वे तस्य स्थानिवत्त्वेनापदान्तत्वादुत्वाभावः शङ्क्यः । यतः स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कार्यमत्र नास्ति कर्तव्यम् । कार्यं हि कर्तव्यमुकारस्य, स च न स्थानिभूतादचः पूर्वत्वेन दृष्टः । न च स्थानिवत्सूत्रेण[11] तथा दृष्टत्वं लभ्यम् अशास्त्रीयत्वात् । तदाह **वामनः** - 'तपरकरणमूठो निवृत्त्यर्थम् - द्युभ्याम्, द्युभिरिति । अत्र हि परत्वादूठ् प्राप्नोतीति[12] । जिनेन्द्रबुद्धि - हरदत्तावपि "उत्वस्यावकाशो यत्र झलादिः क्विप् परो न विद्यते - विमलद्युदिनमिति, ऊठोऽवकाशः - अक्षद्यूभ्यामिति, द्युभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ् प्राप्नोतीति काशिकाग्रन्थाशयं मन्वाते[13] ।

**इदमत्रावधेयम्** - 'उदिति तपरकरणस्य चारितार्थ्यप्रतिपादनमिदं ये 'च्छ्वोः[14]' **इतिसूत्रे 'क्ङिति'** इति नानुवर्तयन्ति तन्मते, ये तु तत्र 'क्ङिति' इति अनुवर्तयन्ति

---

1. 'स्थानेऽन्तरतमः' –अष्टा. 1/1/50, इति परिभाषयेत्यर्थः ।
2. 'सुप आत्मनः क्यच्' - -अष्टा. 3/1/8
3. 'क्विप् च' - अष्टा. 3/2/76.
4. 'अतोलोपः' - अष्टा. 6/4/48.
5. 'लोपो व्योर्वलि' - अष्टा. 6/1/66.
6. अष्टा. 6/4/19.
7. स्थानिवदादेशोऽनल्विधौ, -अष्टा. 1/1/56
8. अष्टा. 6/1/131.
9. 'इको यणचि' -अष्टा. 6/1/77.
10. अष्टा. 6/1/57.
11. अष्टा. 1/1/56.
12. का. 6/1/131.
13. द्रष्टव्ये न्या. पदम. 6/1/131.
14. अष्टा. 6/4/19.

तेषां मते उदिति तपरकरणं स्पष्टार्थमेव । परिभाषाया अस्या ज्ञापकं तु 'ऋत उ'-[1] दिति सूत्रे 'उ'दिति तपरकरणमेवेति ।

न च 'ऋत[2] उत्' - इत्यत्रापि 'उ'दितितपरकरणं 'द्रलोपे पूर्वस्य[3] दीर्घोऽणः' इति दीर्घबाधनार्थं चरितार्थम्, अत एव [4]पितूराज्यमित्यादौ दीर्घस्यासाधुत्वमिति वाच्यम् । यतो 'द्रलोपे'ति दीर्घस्य बहिरङ्गत्वेनासिद्धतया[5]तद्बाधकत्वे किमपि मानं नास्ति । पितूराज्यमित्यत्र च दीर्घस्य साधुत्वमेव । अत एव 'ऊरपरः' इति भगवता कृतः[6] प्रयोगः संगच्छते ।

ज्ञापिताया अस्याः फलं तु 'अमू' 'अमूभ्या'मित्यादौ 'अदसोऽसेर्दादुदो मः'[7] इति दीर्घस्थाने दीर्घस्योकारस्य सिद्धिः । यतोऽस्या अभावेऽत्र 'अदौ' 'अदाभ्या'-मित्यवस्थयोः तकारात् परस्य औकारस्य आकारस्य च ह्रस्व एवोकारः स्यात् । विधीयमानत्वाद्धि 'अदसोऽसे'रिति विहित उकारः सवर्णस्य ग्राहको न स्यात् । सत्यां चास्यां भाव्यमानोऽप्यत्रोकारः सवर्णान् गृह्णातीति दीर्घस्य स्थानिनो दीर्घ आदेशः सिद्ध्यति ।

न चास्या अभावेऽपि' अदसोऽसेर्दादुदो मः[8] इत्यत्र' उश्च उश्चे'ति समाहार-द्वन्द्वस्वीकाराद् दीर्घस्य स्थाने दीर्घ आदेशः 'अमू' 'अमूभ्या'मित्यादौ सुलभ इति शङ्कनीयम् । यतोऽ'दसोसे'[9]रित्यत्र 'उश्च उश्चे'तिसमाहारद्वन्द्वस्वीकारे घित्वात्[10] 'द्वन्द्वेघी'ति[11] ह्रस्वस्य उकारस्य पूर्वनिपाते नपुंसकह्रस्वत्व[12] - दीर्घत्वयोः[13] प्राप्तयोरपरनिमित्तकत्वेनान्तरङ्गत्वात् लक्ष्ये लक्षणन्यायेन[14] पुनर्ह्रस्वाप्रवृत्तौ दीर्घस्यैव

---

1. अष्टा. 6/1/111.
2. अष्टा. 6/1/111.
3. अष्टा. 3/3/111.
4. 'पितुर् + राज्यमितिच्छेदः ।
5. 'असिद्धं बहिरङ्गमन्तरङ्गे' - इति परिभाषयेति शेषः ।
6. व्या. म. भा. 1/1/7/59..
7. अष्टा. 8/2/80.
8. अष्टा. 8/2/80.
9. अष्टा. 8/2/80.
10. 'शेषो घ्यसखि' - -अष्टा. 1/4/7..
11. अष्टा. 2/2/32.
12. 'ह्रस्वो नपुंसके प्रातिपदिकस्य' - -अष्टा. 1/2/47.
13. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101.
14. 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' - इति परिभाषयेत्यर्थः ।

श्रवणापत्तिः स्यात् । न चास्याः स्वीकारे [1]'सनाशंसभिक्ष उः' [2]तनादि कृञ्भ्य उ'-रित्यादौ सवर्णग्रहणाऽऽपत्तिः स्यादितिं शङ्क्यम् । यतोऽत्र ज्ञाप्ये परिभाषाशरीरे 'क्वचित्' इत्यशः प्रवेश्यते । तथा सति भाव्यमानोऽप्युकारः क्वचित् सवर्णान् गृह्णातीति परिभाषास्वरूपं सम्पद्यते । तेन तत्र सवर्णाग्रहणात् 'जिगमिषूः' 'कुरूतः' इत्याद्यनिष्ट - प्रयोगाणामापत्तिर्न भवति । अत्र क्वचिदित्यंशप्रवेशः पुरुषोत्तमदेव[3]-श्रीमच्छेषाद्रिभ्यां च कृतः, [4]श्रीनागेशोऽपि तथ्यमिदमसूसुचत् । तर्ककुशलाः शाब्दिकास्तु 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती'त्यत्र अपेर्भिन्नक्रमं स्वीकृत्य 'भाव्यमान उकारः सवर्णान् गृह्णात्यपीति परिभाषार्थं स्वीकृत्यात्र क्वचि-दित्यंशप्रवेशं विनैव प्रत्ययोकारे सवर्णग्रहणाभावं साधयन्ति ।

यद्यप्यस्याः परिभाषाया असाधारणं प्रयोजनं नास्ति । यतः 'अदसोऽसे-[5]र्दादुदो मः' इत्यत्र दीर्घोकारस्य नपुंसकस्य ह्रस्वत्वे परेण ह्रस्वोकारेण सह तन्त्रेणोच्चारणं स्वीकृत्य द्वयोर्विधानादेवेष्टं' सिद्ध्यति, तथापि[6] भाष्यप्रामाण्यादियं स्पष्टप्रतिपत्तये स्वीकार्यैव ।

यत्तु केचित् "इयं परिभाषा सूत्र - भाष्य - विरुद्धा, यतोऽस्याः स्वाकीरे 'ऊदुपधाया[7] गोहः' - इत्यत्र ह्रस्वोकारविधानेऽपि अस्याः सत्त्वे ओकारस्य स्थाने आन्तर्याद्[8] दीर्घ एव स्यादिति सूत्रकृतो दीर्घविधानं व्यर्थम्, एवं 'गोह' इति विकृति-निर्देशप्रत्याख्यानाय 'उ ऊ' इति प्रश्लिष्य[9]भाष्यकृता गुणे कृते ओकारस्य दीर्घ ऊकारः ह्रस्वस्य च ह्रस्वो विहितः । अस्याः सत्त्वे हि तत्र ह्रस्वमात्र-विधानेनोभयत्रापि [10]यथायथमान्तर्यत उभयोः सिद्ध्या भाष्यकृत्कृतं दीर्घाविधानं च

1. अष्टा. 3/2/168.
2. अष्टा. 3/1/79.
3. द्रष्टव्यम् - ल. प. वृ. प. 31, पृ. 126,
   तथा - प. भास्क. प. 20, पृ. 403.
4. 'ऋत उत्' - अष्टा. 6/1/111, इति सूत्रं व्याचक्षाणेनानेन "तपरत्वं भाव्यमानस्यापि क्वचित् सवर्णग्राहकताज्ञापनद्वारांन्तर्यतो द्विमात्रनिवृत्त्यर्थम्, तेनामू इत्यदिसिद्धिरिति 'च्छ्वो'रिति सूत्रे कैयटः" इत्युक्तम् ल. श. शे. अजन्त पुलिङ्ग प्र. पृ. 289.
5. अष्टा. 8/2/80.
6. व्या. म. भा. अष्टा. 6/1/6/185, - पृ. 708 - इत्यत्रस्थादित्यर्थः ।
7. अष्टा. 6/4/89.
8. 'स्थानेऽन्तरतमः' – अष्टा. 1/1/50, इति परिभाषया ।
9. 'प्रश्लिष्टनिर्देशोऽयम् । उ - ऊत् - उ३दिति' हि भगवतोक्तम्-व्या. म. भा. 6/4/3/89.
10. 'स्थानेऽन्तरतमः' - अष्टा. 1/1/50, इति परिभाषया ।

व्यर्थं स्या"दित्याहुः[1] । तन्न युक्तम् । यतो 'दोषो णौ' इत्यत्र 'दुषो णौ'[2] इत्यस्यैव सुवचत्वेन तत्र दीर्घविधानार्थम् 'ऊ'दिति दीर्घोच्चारणं सार्थकम् । न च ह्रस्वाकारानुवृत्तावप्यनया परिभाषया दीर्घसिद्धिः शङ्क्या । यतस्तक्रन्यायेन[3] गुणं[4] बाधित्वाऽऽन्तरतम्याद् ह्रस्वस्यैव विधानाऽऽपत्तिः स्यात् । नापि ह्रस्वस्य ह्रस्व-विधानं व्यर्थमिति.वाच्यम्, यतो गुणबाधनार्थं तत्सार्थकम् । न चापि भाष्यकृत्कृतं दीर्घविधानं व्यर्थम् । यतो गुहे[5]र्ण्यन्तात्लुङि 'अजुगुहत्' इत्यत्र उपधागुणे[6] उत्वे[7] णौ चङी'[8]ति ह्रस्वत्वाभावाय दीर्घविधानं' चरितार्थम् । इत्थं सूत्रभाष्यकृत्-कृताभ्यां दीर्घ विधानाभ्यां नैतस्या अभावः साधयितुं शक्यः ।

## "ॠत्"

[9]'उर्ॠ'दितिसूत्रे 'ॠ'दिति तपरकरणम् "[10]अणुदत्-सूत्रे परेण णकारेणाण्-ग्रहण"मिति वचनस्य [11]ज्ञापकम् । यतोऽत्र सूत्रे 'ॠ'दिति तपरकरणमस्य वचन-स्याभावे व्यर्थम् । तथाहि–तत् 'अचीकृतत्'[12] इत्यत्र दीर्घस्थानिनि आन्तरतम्याद्दी-

---

1. मतमिदं समुपन्यस्य म. म. तात्याशास्त्रि -म. म. जयदेवमिश्राभ्यां निराकृतम् । द्र. प. शे. भूतितिलकम्, पृ, 97-98, तथा प. शे. विजया पृ. 117.
2. अष्टा. 6/4/90.
3. 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'ति न्यायस्वरूपम् ।
4. 'पुगन्तलघूपधस्य च' – अष्टा. 7/3/86.
5. 'गुहू संवरणे' धा. पा. भ्वा. 896.
6. 'पुगन्तलपूपधस्य च' - अष्टा. 8/3/86.
7. 'ऊदुपधाया गोहः' - अष्टा. 6/4/89
8. 'णौ चङ्युपधाया ह्रस्वः'. - अष्टा. 7/4/1.
9. अष्टा. 7/4/7
10. 'अणुदित्सवर्णस्य चाप्रत्ययः'–अष्टा. 1/1/69.
11. तथाहि–
    (क) "सवर्णेऽण्, तपरं ह्युर्ॠत्' । यदयम् 'उर्ॠत्' इत्यृकारे तपरकरणं करोति-तज्ज्ञापयत्याचार्यः–परेण न पूर्वेणे"त्याह–पत. व्या. म. भा. 1/1/2 लण्- 6
    (ख) "अणुदित्सवर्णस्य चाप्रत्ययः' इत्येतदेकं परेणेति । अत्र च 'उर्ॠत्' इति अकारस्य तपरकरणं लिङ्ग"मित्याह जि. बु. न्या. लण्-6
    (ग) "अत्र च ज्ञापकम्–'उर्ॠत्'' इति तपरकरण"मित्याह ह. मि. पदम. लण्-6
    (घ) 'अणुदिदित्यत्र परेण' उर्ॠत्' इतितपरकरणात् ज्ञापका"दित्याह श्रीना. ज्ञा. सं. 1. पृ. 11
    (ङ) "अत्र च 'उर्ॠत्' इति सूत्रे तपरत्वं मान"मित्याह ह. दी. श. र. संज्ञाप्र. पृ. 44
12. 'कृत संशब्दने' धा. पा. चुरा. 1654 इति कृत् धातोः 'सत्यापपाशरूपवीणातूलश्लोक-सेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्'–अष्टा. 3/1/25, इति णिचि तदन्तात् 'सनाद्यन्ता धातवः'–अष्टा. 3/1/32. इतिधातुत्वेन लुङि अडागमे च्लिप्रत्यये तस्य 'णि श्रि-द्रु सुभ्यः कतर्त्तरि चङ्–अष्टा. 3/1/48. इति चङ्यादेशे 'उर्ॠत्'–अष्टा. 7/4/7. इति ॠकारस्य अकाराऽऽदेशे 'णेरनिटि'–अष्टा. 6/4/51. इति णिलोपे 'चङि'–अष्टा. 6/1/11. इति

र्घो मा मूदित्येतदर्थं क्रियते, अस्य वचनस्याभावे '[1]अणुदित्'–इत्यत्रापि पूर्वेण णकारेणाण्ग्रहणं स्यात् । तथा सति [2]'उर्ऋत्' इत्यत्रानण्त्वादृकारः सवर्णानां ग्राहको न स्यादिति दीर्घस्यापि स्थानिनो यथाश्रुतेन ह्रस्वेनैवात्र भाव्यमिति व्यर्थमत्र सूत्रे तपरकरणम् । यतो नास्ति तपरकरणस्य किमपि व्यावर्त्यम् । ज्ञापिते चास्मिन् वचने ऋकारस्याप्यण्त्वात् स सवर्णस्य अकारस्यापि ग्राहक इति कदाचित् ऋकारोऽपि माभूद् अकार एव भवत्वेतदर्थं तपरकरणमिह स्वांशे चरितार्थं भवति ।

अथात्र सत्यपि परेण णकारेणाण्ग्रहणे [3]'उर्ऋत्'–इत्यत्र भाव्यमानत्वेन ऋकारः सवर्णानां ग्राहको नैव स्यात् 'भाव्यमानेन सवर्णानां ग्रहणं ने'तिपरिभाषा हि भाव्यमानस्याणः सवर्णग्रहणं प्रतिषेधति, तत्कथमिह तपरकरणं स्वांशे चरितार्थमिति तु नाशङ्कनीयम् । यतोऽत्र सूत्रे यदि तपरकरणं न स्यात्तदा आदेशान्तरनिवृत्तये स्वरूपाभ्यनुज्ञानार्थतयाऽऽपूर्वबोध्यत्वाभावेन ऋकारे विधेयत्वमेव नास्ति । कृते तु तपरकरणेऽत्र भाव्यमानता सिद्ध्यति । तथा सति स्वरूपाभ्यनुज्ञानासंभवादपूर्व-विधित्वमत्र सिद्ध्यतीति भाव्यमानत्वसिद्धये 'ऋ'दिति तपरकरणमत्र स्वांशे चरितार्थं भवति । तस्मादत्र तपरकरणमुक्तवचनज्ञापकमेवेति निश्चप्रचम् । ज्ञापितस्यास्य वचनस्य फलं तु [4]'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यनेन अकारेणाष्टादशानामृकाराणां द्वादशानाम् ऌकाराणां च 'उरण्रपरः'[5] 'इत्यादौ ग्रहणम् । तेन 'किरति' 'गिरति' 'कीर्णः' 'गीर्णः' 'स्तीर्णः'–इत्यादौ कॄ[6]-गॄ[7]-स्तॄ[8]धातूनाम् ऋकारस्य 'ॠत[9] इद्धातोः' इति इत्त्वे 'उरण्[10]रपरः' इति रपरत्वं सिद्ध्यति । अन्यथा तत्र ऋकारस्य 'उ'रिति [11]ऋकारेणाग्रहणात् रपरत्वं न सिद्ध्येत् । अत्र–[12]'उपसर्गादृति धातौ'

---

कृतशब्दस्य द्वित्वेऽभ्याससंज्ञायाम् 'उरत्'–अष्टा. 7/4/66, इत्यभ्यासावयवस्य ऋवर्णस्य अत्वे रपरत्वे हलादिशेषे 'कुहोश्चुः'–अष्टा. 7/4/62, इति अभ्यासककारस्य चुत्वे' सन्वल्लघुनि चङ्परेऽनग्लोपे'–अष्टा. 7/4/95, इति सन्वद्भावे 'सन्यतः' 7/4/79 इत्यभ्यास्यात इत्वे 'दीर्घो लघोः'–अष्टा. 7/4/94, इति इकारस्य दीर्घे कृते लुङस्तिपि 'इतश्च'–अष्टा. 3/4/100, इति तिप इकारलोपे च कृते सति रूपमिदं सिद्ध्यति ।

1. 'अणुदित्सवर्णस्य चाप्रत्ययः'–अष्टा. 1/1/69.
2. अष्टा. 7/4/7.
3. अष्टा. 7/4/7.
4. अष्टा. 1/1/69.
5. अष्टा. 1/1/51.
6. कॄ विक्षेपे' धा. पा. तुदा. 1410.
7. 'गॄ निगरणे' धा. पा. तुदा. 1411.
8. 'स्तॄञ् आच्छादने' धा. पा. क्र्या. 1485.
9. अष्टा. 1/1/51.
10. अष्टा. 1/1/51.
11. 'उरण् रपरः'–अष्टा. 1/1/51, इति सूत्रस्थेनेत्यर्थः ।
12. अष्टा. 6/1/91.

[1]'ऋतउत्'–इति सूत्रयोः 'ऋ'दिति तपरकरणे उक्तवचनस्य [2]ज्ञापिके" इत्याह ज्ञानेन्द्रभिक्षुः । नैतद्युक्तम् । यतो [3]'वा सुप्यापिशलेरित्युत्तरसूत्रे 'उपसर्गादृतीति-तपरकरणं लृकारग्रहणाय सार्थकम् । अन्यथा 'उपाल्कारीयति' 'उपल्कारी-यती'त्यादौ 'वासुपी'तिवृद्धिविकल्पो न सिद्ध्येत् । न च [4]'उपसार्गादृतिधाता'विति पूर्वसूत्रे 'ऋ'दिति तपरकरणं दीर्घव्यावृत्त्यर्थमावश्यकमिति शङ्क्यम् । यतो दीर्घर्कारादेर्धातोरनुपलम्भेन तद्व्यावर्त्यं न लभ्यते । 'ऋत[5] उ' दित्यत्रापि 'ऋ'दिति तपरकरणं लृकारग्रहणाय सार्थकमन्यथा 'गमुल्[6]' इत्यादावुत्वं न सिद्ध्येत् । न चात्र तपरकरणम् लृकारग्रहणाय सार्थकमित्यत्र [7]सूत्रकारस्य सम्मतिर्नास्ति, नह्यनेन ऋलृवर्णयोः [8]सावर्ण्यमुक्तमित्यपि शङ्कनीयम् । यतो 'यो ह्युत्सूत्रं कथयेत् नादो [9]गृह्येत' इति भाष्योक्तेः 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च[10]वार्तिके' इति हर्युक्तेश्च तयोः सावर्ण्यमपि सूत्रसम्मतमेव ।

वस्तुतस्तु [11]'तपरस्तत्कालस्ये'ति सूत्रेऽणूपदानुवृत्तिपक्षे ज्ञानेन्द्रभिक्षूक्तमपि वचनैतज्ज्ञापकत्वं युक्तमन्यथा तपरसूत्रेण तत्र[12] ऋदिति तपरकरणेन लृकारग्रहणं-वक्तुमशक्यम् । [13]उत्तरसूत्रेऽपि 'ऋ'दिति तपरकरणं नैतद्वचनं विना लृकारग्रह-णाय सार्थकम् । तपरसूत्रेऽणूपदाननुवृत्तिवादिनो [14]भट्टनागेशमते तु नैतत्

---

1. अष्टा. 6/1/11.
2. तथाहि–"परेण णकारेण=व्याख्यानतो विशेषप्रतिपत्तेः, 'उपसर्गादृति' 'ऋतउत्' इत्यादौ तपरकरणलिङ्गाच्च । यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात् ऋकारस्यानण्त्वेन सवर्णा-ग्राहकत्वा"दित्ययमाह"त. बो. संज्ञा. प्र. पृ. 15.
3. अष्टा. 6/1/92.
4. अष्टा. 6/1/91.
5. अष्टा. 6/1/111.
6. 'गम्लृ गतौ' धा. पा. भ्वा. 982, इति गम्लृधातोरनुकरणे अनुकार्यानुकरणयोर्भेद-विवक्षायामनुकार्यस्वरूपबोधकत्वेनार्थवत्त्वात् । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'–अष्टा. 1/2/45, इति 'गम्लृ' इत्यस्य प्रातिपदिकत्वे ततो ङसि च विभक्तौ' गम्लृ–अस्' इत्यवस्थयोः, 'ऋत उत्'–अष्टा. 6/1/111, इति लृकारस्य उत्वे लपरत्वे 'गमुल्स्' इति स्थिते 'संयोगान्तस्य लोपः' अष्टा. 8/2/23 इति सकारलोपे च कृते रूपमिदं सिद्ध्यति ।
7. पाणिनेरित्यर्थः ।
8. ऋलृवर्णयो र्मिथः सावर्ण्यं वाच्यम्' वा. वै. सि. कौ. संज्ञा. प्र. पृ. 13.
9. व्या. म. भा. 1/1/1
10. वाक्यप. का. उद्योते उद्धृता, 1/1/1
11. अष्टा. 1/1/70.
12. 'उपसर्गादृति धातौ'–अष्टा. 6/1/91.
13. 'ऋत उत्'–अष्टा. 6/1/111.
14. 'अनेन हि 'तपरस्तत्कालस्य'–अष्टा. 1/1/70. इति सूत्रे "इदञ्च विध्यर्थमेव अणुग्रहणान-नुवृत्ते"रित्युक्तम्–ल. श. शे. संज्ञा. प्र. पृ. 133

तपरकरणमुक्तवचनज्ञापकमिति प्रतिभाति । नीलकण्ठदीक्षितस्तु[1] "उर्ऋत्"[2] इति सूत्रे 'ऋ'दिति तपरकरणं 'भाव्यमानोऽण् सवर्णान्न गृह्णाती'ति[3]परिभाषाऽनित्येति वचनस्य ज्ञापकम् । यतोऽत्र भाव्यमानत्वादृकारस्य सवर्णग्रहणं न प्राप्नोतीति तन्निवृत्त्यर्थम् 'ऋ'दिति तपरकरणं व्यर्थ'मिति मनुते । इदमपि युक्तमेवेति मन्ये ।

[4]'ऋतश्चे'ति सूत्रे 'ऋ'दिति तपरकरणम् 'अत्र ऋत इत्यङ्गविशेषण'मिति वचनस्य [5]ज्ञापकम् । यतश्चाकर्तीत्यादौ[6] रुक्-रिक्-रीकामागमानां व्यावृत्तयेऽत्र सूत्रे

---

1. अनेन हि–"इयमनित्या । 'उर्ऋत्' (7/4/7) इत्यादौ तपरकरणाल्लिङ्गात् । अन्यथा विधीयमानत्वादृकारस्य सवर्णग्राहकत्वाप्राप्तेः किं तन्निवृत्त्यर्थेन तपरकरणेति स्पष्टमाक" इत्युक्तम् ।
2. अष्टा. 7/4/77.
3. (क) व्याडिः प. सू. प. 30, पृ. 15
   (ख) पु. दे. ल. प. वृ. प. 31, पृ. 126.
   (ग) सी. दे. बृ. प. वृ. प. 11, पृ. 173.
   (घ) नी. दी. प. वृ. प. 16, पृ. 296.
   (ङ) ह. भा. प. भास्क. प. 11, पृ. 326.
4. अष्टा. 7/4/92.
5. तथाहि–
   (क) "तपरकरणसामर्थ्यादङ्गविशेषणम् 'ऋतः'–इत्येत"दित्याह वाम. का. 7/4/92.
   (ख) "द्वयमिह प्रकृतम्–अङ्गम् अभ्यासश्चेति । ऋत इतिविशेषणमुपात्तम्, तत्र यद्यप्युभयं प्रकृतं तथाप्यृत इत्येतदङ्गस्यैव विशेषणम्, नाभ्यासस्य । कुतः ? तपरकरणसामर्थ्यात् । सर्वत्रैव ह्यभ्यासस्य 'ह्रस्व'इति ह्रस्वत्वेन भवितव्यम्, अतो-दीर्घस्याभ्यासस्याभावात् । यदि 'ऋत'–इत्येतदभ्यासस्य विशेषणं स्यात्, तदा तपरकरणमनर्थकं स्यात् ।तस्मात् तपरकरण–सामर्थ्यादङ्गस्यैव विशेषणमृत इत्येतत्, नाभ्यासस्ये"त्याह जि. बु. न्या. 7/4/92
   (ग) "अभ्यासविशेषणे तु भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणमिति व्याख्येयम् । नहि मुख्य-निवर्त्यसम्भवे गौणकल्पना न्याय्येति अङ्गविशेषणभूत इत्याश्रितमित्यर्थः" इत्याह ह. मि. पदम. 7/4/92
   (घ) "तपरत्वान्नेह कॄ विक्षेपे–चाकर्ती"त्याह भ. दी. वै. सि. कौ. यङ्लुक् प्र. पृ. 283
6. 'कॄ विक्षेपे' धा. पा. तुदा. 1410, इति कॄधातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'–अष्टा. 3/1/22, इति यङि, तस्य 'यङोऽचि च'–अष्टा. 2/4/74 इति लुकि प्रत्ययलोपे प्रत्यय–लक्षणम्' अष्टा. 1/1/62, इति प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः'–अष्टा. 6/1/9; इति कॄधातो र्द्वित्वे 'कॄ कॄ' इत्यवस्थायां प्रथमकॄशब्दस्य 'पूर्वोऽभ्यासः'–अष्टा. 6/1/4, इत्यभ्याससंज्ञायां 'ह्रस्वः'–अष्टा. 7/4/59, इत्यभ्यासस्य ह्रस्वत्वे 'कृ कॄ' इत्यवस्थायाम् 'उरत्'–अष्टा. 6/4/66, इत्यभ्यासस्य ऋकरस्य अकारे 'उरण् रपरः'–1/1/51, इति रपरत्वे 'कर् कॄ' इत्यवस्थायां 'हलादिः शेषः'–अष्टा. 7/4/60 इति हलादिशेषे 'कुहोश्चुः'–अष्टा. 7/4/62 इत्यभ्यासककारस्य चकारे 'दीर्घोऽकितः'–अष्टा. 7/4/83, इत्यभ्यासाकारस्य दीर्घे 'चाकॄ' इत्यस्मात् 'सनाद्यन्ता धातवः'–अष्टा. 3/1/32, इति धातुसंज्ञकात् लटि तिपि 'चाकॄति' इत्यवस्थायां 'कर्त्तरि शप्'–अष्टा. 3/1/68, इति शपि 'चर्करीतं चेत्यदादौ पाठाच्छपो लुकि 'सार्वधातुकार्धधातुकयोः'–अष्टा. 7/3/84, इति ऋकारस्य गुणेऽकारे रपरत्वे च कृते 'यङोवा'–अष्टा. 7/3/94, इति इडभावपक्षे रूपमिदं सिद्ध्यति ।

कृतमिदमस्य वचनस्याभावे व्यर्थम् । तथाहि–यद्यत्र सूत्रे 'ऋतः' इत्यभ्यासस्यविशेषणं स्यात् तदा 'ऋदन्तस्याभ्यासस्य रुक्-रिक् रीको यङ्लुकि स्यु'रिति सूत्रार्थः स्यात्, तथा सति 'ह्रस्वः'[1] इति ह्रस्वत्वं [2]नित्यतया रुगाद्यागमेभ्यः प्रागेवात्र प्रवर्तेत इत्यभ्यासे दीर्घो नात्रोपलभ्येत । इत्थम् अभ्यासस्थस्य ऋकारस्य व्यावर्तनाय कृतमिदं तपरकरणमात्मनः सार्थक्याय वचनमिदं ज्ञापयति । ज्ञापिते चास्मिन् वचने [3]'ऋतश्चे'ति सूत्रस्य ऋकारान्तस्य धातोरवयवस्य रुगाद्यागमाः स्युरित्यर्थः सम्पद्यते, तथा सति 'चाकर्ती'त्यादौ अभ्यासस्य ह्रस्वत्वेऽपि 'कृकॄ' इत्यङ्गस्य दीर्घान्तस्य सम्भवात् तदवयवस्याभ्यासस्य रुगाद्यागमव्यावृत्तये तपरकरणमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'चर्कर्त्ति' 'चरिकर्ति' 'चरीकर्ति'–इत्यनिष्ट-रूपाणामभावः । यतः 'कृ कॄ' इत्यङ्गस्य ह्रस्वर्कारान्तत्वाभावात् न तदवयवस्य रुगाद्यागमाः प्राप्नुवन्तीति तपरकरणसार्थक्योपपत्तिद्वारा वचनमिदम् 'ऋ'दिति तपरकरणं ज्ञापयतीति काशिका-न्यास-पदमञ्जरीग्रन्थैः[4] भट्टोजिग्रन्थेन[5] च संसूचितं दरीदृश्यते ।

## "ओत्" "गोत्"

'[6]औतोऽम्शसो'रिति सूत्रे '[7]गोतोणि'दिति सूत्रे च क्रमशः ओद्-गो'दिति तपरकरणे 'स्थानिवद्भावलभ्यौत्वगोत्वयोरात्वणिद्वत्त्वे न भवतः' इति वचनस्य [8]ज्ञापिके । यतोऽस्य वचनस्याभावेऽत्र तपरकरणे व्यर्थे । तथाहि–अत्र सतोरपि तपरकरणयोः 'चित्रगुम्' 'चित्रगु'–रित्यादौ चित्रा गावो यस्येति [9]बहुव्रीहौ एकविभक्ति[10]चापूर्वानिपाते' इति गोशब्दस्योपसर्जनत्वात् [11]'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वत्वेन उकारे सति तस्य [12]स्थानिवत्त्वेनौत्वात् तदन्ताद् अमि अचि परे

---

1. अष्टा. 7/4/51.
2. 'परनित्यान्तरङ्गापवादानामुत्तारोत्तरं बलीयः'–इतिपरिभाषयेति शेषः ।
3. अष्टा. 7/4/92.
4. 7/4/92.
5. वै. सि. कौ. यङ्लुक् प्र. पृ. 283.
6. अष्टा. 6/1/13.
7. अष्टा. 7/1/90.
8. तथाहि–"'गोतः' (सू. 7/1/90) 'ओतः' (सू. 6/1/13) इति च तपरकरणसामर्थ्यात् चित्रगुश्चित्रगुमित्यादौ न णित्वात्वे" इत्युक्त्या ज्ञापकत्वमस्य सूचयति श्री. ना. ज्ञा. सं. 1. पृ. 30.
9. 'अनेकमन्यपदार्थे'–अष्टा. 2/2/24.
10. अष्टा. 1/1/44.
11. अष्टा. 1/2/48.
12. 'स्थानिवदादेशोऽनल्विधौ'–अष्टा. 1/1/56.

'औतोऽम्- [1]शसो'रिति सूत्रेण पूर्वपरयोः आकाराऽऽदेशस्य, सौ 'गोतोणित्[2] इति णिद्वत्वे [3]अचोञ्णितीति वृद्धेश्चाऽऽपत्ती दुर्वारे एवेति तपरकरणे व्यर्थे । ज्ञापिते चास्मिन् वचने तत्रात्वणिद्वत्त्वयोरभावायेमे तपरकरणे स्व-स्वांशे चरितार्थे भवतः । न च 'गोत' इति गोशब्दस्य अण्त्वाभावात् '[4]तपरस्तत्कालस्ये' ति सूत्रस्याप्रवृत्तिः शङ्क्या, यतस्तत्र सूत्रेऽण् इतिपदं[5]नानुवर्त्तते । ज्ञापितस्यास्य वचनस्य फलं तु 'चित्रगुं' 'चित्रगु'रित्यादौ गोरुकारस्यात्वणिद्वत्त्वयोः क्रमशोऽभावः । अस्यासत्वे ह्यत्र तयोरापत्तिर्दुवारा स्यात् ।

भट्टनागेशस्तु 'गोतः'[6] इति तपरकरणम् 'अत्र गकारोऽविवक्षित' इति वचनस्य [7]ज्ञापकमिति मनुते । [8]तपरस्तत्कालस्ये ति सूत्रे 'अणुदित्सर्वणस्य चा प्रत्ययः'–इतिसूत्रादणोऽनुवर्तनाद् गोशब्दस्य चाणूत्वाभावाद् गकारो नात्र विवक्षितः । अन्यथा तपरकरणमत्रानुपपन्नं भवति । ज्ञाप्यवचनफलं तु चित्रगुरित्यादौ णित्त्वातिदेशाभाव[9] इति तदाशयः ।

वस्तुतस्तु 'गोतो णि'दिति सूत्रे तपरकरणं [10]प्रत्याख्यातमिति नास्य ज्ञापकत्वम् । न चात्र तपरकरणप्रत्याख्याने चित्रगुरित्यादौ णिद्वत्त्वातिदेशापत्तिः शङ्क्या । यतो 'गोः पूर्वणित्त्वाऽऽत्त्वस्वरेषु स्थानिवद्भावः प्रतिषिद्धः । न चैवं 'हे चित्रगो' इत्यादौ णित्त्वातिदेशाऽऽपत्तिः शङ्कनीया । यतोऽस्य गोशब्दस्य लाक्षणिकत्वेन[11], ग्रहणं न णिद्वत्त्वे भवति । एवम्–'[12]औतोऽम्शसो'रिति सूत्रेऽपि' 'ओ'दिति तपरकरणं '[13]तपरस्तत्कालस्ये'ति समकालसंज्ञार्थमिति नैतद्वचनज्ञापकम् । न चात्र कृतेऽपि तपरकरणे 'चित्रगु'मित्यत्र स्थानिवद्भावेनाऽऽकाराऽऽदेशः शङ्क्यः, यतोऽत्र '[14]अनल्विधा'वितिस्थानिवद्भावस्य प्रतिषेधो दुर्वारः । इत्त्थमत्र तपरकरणं ज्ञाप्यैत-

---

1. अष्टा. 6/1/93.
2. अष्टा. 7/1/90.
3. अष्टा. 7/2/115.
4. अष्टा. 1/1/70.
5. 'अणुदित्सवर्णस्य चाप्रत्ययः'–अष्टा. 1/1/69-इत्यतः ।
6. 'गोतोणित्'–अष्टा. 7/1/90.
7. तथाहि–"सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः" इत्युक्त्या ज्ञापकत्वमत्रार्थे सूचयति भ. ना. श. शे. अजन्तपुंल्लिङ्ग प्र. पृ. 295.
8. अष्टा. 1/1/70
9. अष्टा. 1/1/69.
10. व्या. म. भा. 7/1/2/90 पृ. 80-81.
11. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'–मिति परिभाषयेत्यर्थः ।
12. अष्टा. 6/1/93.
13. अष्टा. 1/1/70.
14. "स्थानिवदादेशोऽनल्विधौ"–अष्टा. 1/1/56.

तद्वचनं विनाप्युपपन्नमिति न ज्ञापकमिति मन्ये । तस्माद् ज्ञापकसंग्रहोक्तमत्रार्थे[1]-ऽस्य तरपरकरणस्य ज्ञापकत्वं न युक्तमिति विज्ञेयम् । अत्र उद्योत-लघुशब्देन्दुशेखर-प्रभृतिग्रन्थकार **भट्टनागेश-ज्ञापकसंग्रहकारनागेशयोः पार्थक्यमपि** सिद्धान्तभेदात् स्फुटं परिलक्ष्यते ।

## (ङ) "ज्ञापकानि निपातनानि"

यद्यपि "निपात्यतेऽनेने"त्यर्थे निपूर्वकात् ण्यन्तात् पत् [2]धातोः करणे ल्युटि[3] निष्पन्नोऽयं निपातनशब्दः खलीकाराधोनयनोरर्थयोः[4] प्रसिद्धस्तथाप्यत्र व्याकरणे व्याकरणलक्षणानुत्पन्नपदसाधनेऽर्थे[5] प्रयुज्यते । अत्र हि सामान्यैर्विशेषैर्वानुशासनै[6]-र्येषामाप्तप्रयुक्तानां शब्दानां साधुत्वं[7] नोपपद्यते तेषां साधुत्वाय "पृषोदरादीनि[8] यथोपदिष्ट"मित्यादि-निपांतनानि दरीदृश्यन्ते । यत्र यानि निपातनत्वं पूर्वोक्तं नाव-हन्ति तानि स्वकीयनिपातनत्वसिद्धये किंचन परिभाषारूपं तद्व्यतिरिक्तं वा वचनं

---

1. पृ. 30.
2. "पत्लृ गतौ" धा. पा. भ्वा. 845, "पत गतौ वा" धा. पा. चुरा. 1862.
3. "कृत्यल्युटोबहुलम्"–अष्टा. 3/34/113.
4. (निपात्यतेऽनेनेति–नि+पत्+णिच्+करणे ल्युट्) "खलीकारः" इति भरतः, "अधोनयनम्" इति सर्वस्वम्, "अवनायस्तु निपातनम्" (3/2/27) इत्यमरः श. क. द्रु. भागः-2, पृ. 883
5. तथाहि–"व्याकरणलक्षणानुत्पन्नपदसाधनम् । यथा निपातनादिष्टसिद्धिः । "यल्लक्षणेनानु-त्पन्नं तत्सर्वं निपातनात् सिद्ध"मितिभाष्यम् । निपातन-लक्षणं यथा–"वर्णागमो वर्णविपर्यश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति प्राञ्चः" इति दुर्गादासः श. क. द्रु. भागः–2, पृ. 883. "निपातनं नाम–अन्यादृशप्रयोगेप्राप्तेऽन्यादृशप्रयोगकरणमिति भ. ना. प. शे., पृ. 354.
6. "आप्तो नाम वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः"–इति चरके तपतञ्जलि"रित्याह भ. ना. परमल. म. शक्तिनि. पृ. 10.
7. "अनपभ्रष्टतानादि र्यद्वाभ्युदययोग्यता । व्याक्रिया व्यजनीया वा जातिः कापीह साधुता"–इति ह. मि. पदम. पृ. 10.
8. अष्टा. 6/3/101.
   "पृषोदरप्रकाराणि शिष्टैर्यथोच्चरितानि तथैव साधूनि स्युः । "भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृते र्वर्णनाशात् पृषोदरम्"–इति भ. दी. वै. सि. कौ. सामासाश्रय प्र. पृ. 559-560.
   "पृषोदरादि । आदिशब्दः प्रकारे, यथोपदिष्टमित्युक्तेः । उपदिष्टमिति कर्मणि क्तः । उपदेशः उच्चारणम् । तस्य कर्त्राकाङ्क्षायां शिष्टैरित्यध्याहारलब्धम् । शिष्टश्च शब्दतत्त्वसाक्षात्कार-वन्तो योगिन इति भाष्ये स्पष्टम् । उत्तरपदाधिकारात् समासविषयमिदम् । हंस-सिंहयो-र्दृष्टान्तार्थमुपादानम् । यथा तयोरुणादित्वात् साधुत्वं तथा गूढोत्मादेः पृषोदरादित्वादित्यर्थ इत्येके । परे तु इदन्तद्धितविषयमपि । पुराणशब्देऽनेन तलोप इति सर्वादिसूत्रे कैयटात् एवं च हंसादेरुणाद्यन्तत्वेन शास्त्रान्तरोक्तस्यापि अनेन साधुत्वं, सर्पिषेत्यादौ षत्वमप्यनेनैवेत्याहुः–इति भ. ना. ल. श. शे. समासाश्रय प्र. पृ. 559-560.

ज्ञापयन्तीति "ज्ञापकानि निपातनानी"त्युच्यन्ते । तेषामेवात्र यथाक्रमं निरूपणं प्रस्तूयते । तत्र–

## अग्नीषोमेति

"[1]द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति गृहमेधाच्छचे"ति सूत्रेऽ"ग्नीषोमे"तिषत्वनिपातनं "गौणमुख्ययोर्मुख्येकार्यसम्प्रत्ययः"[2] इति परिभाषाया– ज्ञापकम्[3] । यतोऽस्या अभावे अग्नीषोमेत्यत्र "[4]अग्नेःस्तुत् स्तोमसोमाः" इति षत्वस्य सुलभतया तन्निपातनमनुपपन्नम् । ज्ञापितायां चास्यां ह्रस्वेकारान्तान्मुख्यादग्निशब्दात्परस्य सोमशब्दस्योच्यमानं षत्वम् अग्निश्च सोमश्चेति देवताद्वन्द्वे "ईदग्नेः सोम[5]- वरुणयोः" इति ईत्वे कृते "[6]एकदेशविकृतमनन्यवदिति" परिभाषया स

1. अष्टा. 4/2/32
2. (क) व्याडि प. सू. प. 4, पृ. 4.
   (ख) पु. दे. ल. प. वृ. प. 5, पृ. 114.
   (ग) सी. दे. बृ. प. वृ. प. 100, पृ. 256.
   (घ) नी. दी. प. वृ. प. 14, पृ. 295.
   (ङ) ह. भा. प. भास्क. प. 102, पृ. 365.
   (च) भ. ना. प. शे. प. 16, पृ. 101.
   (छ) शेषा. प. भास्क. प. 15, पृ. 398.
3. तथाहि–
   (क) "गौणस्य मुख्यस्य च ग्रहणे मुख्यस्य ग्रहणं भवति । कथं ज्ञायते । यदयं द्यावापृथिवीशुनासीर. (4/2/32) इत्यत्र अग्नीषोमेत्यलाक्षणिकं षत्वं पठति । "इह अग्नेः स्तुत्स्तोमसोमाः" (8/3/82) इतिषत्वं विधीयते ह्रस्वात् तत्र कः प्रसङ्गः यद्दीर्घादग्निशब्दात् सोमशब्दस्य षत्वं स्यात् । ननु च वचनाद्भविष्यति । अस्ति वचनस्यावकाशः । अग्निगुणोऽग्निः सोमगुणः सोमः अग्निश्च सोमश्चाग्निसोमावित्ययमवकाशः । ननु चात्रापीत्वेन भवितव्यं" देवता द्वन्द्वे च" "ईदग्नेः" (6/3/26,27) इति । नैष देवताद्वन्द्वः । अस्मिन्नवकाशे सति यदग्नीषोमेति पठति तज्ज्ञापयत्याचार्यः मुख्योऽग्निशब्दो यस्तस्य तद्ग्रहणं भवतीति तत्र दीर्घः" इत्याह व्याडिः म. सू. प. 4, पृ. 4.
   (ख) "ज्ञापकं चात्र द्यावापृथिव्यादि (4/2/32) सूत्रे अग्नीषोम इति षत्वार्थं निपातनम्–" इत्याह पु. दे. ल. प. वृ. प. 5, पृ. 114.
   (ग) "ज्ञापकमप्यत्र वर्णयन्ति" द्यावापृथिव्यादि (4/2/32) सूत्रे अग्नीषोम इतिषत्वार्थंनिपातनम् । षत्वं ह्यत्र "अग्नेः स्तुत्स्तोमसोमाः "इति ह्रस्वेकारान्मुख्यादग्निशब्दात्परस्य सोम-सकारस्योच्यमानम् "ईदग्नेः सोमवरुणयोः" (6/3/27) इतीत्वे कृते विकारेण स एवायमिति संप्रत्ययेऽपि गौणत्वान्न प्राप्नोतीत्यग्नीषोमा इति षत्वार्थं निपातन"मिति पुरुषोत्तमदेवोक्तमेव ज्ञापकमाह सी. दे. बृ. प. वृ. प. 100, पृ. 256.
4. अष्टा. 8/3/82
5. अष्टा. 6/3/27.
6. (क) एकदेशविकृतमनन्यवद् भवति" व्याडिः प. पा. 16, पृ. 39.

एवायमिति संप्रत्यये गौणत्वान्न प्राप्नोतीति निपातनमिदमुपपद्यते । न चात्र षत्वं न निपात्यते, किन्तु "अग्नेः स्तुत्स्तोमसोमाः" इति वचनसामर्थ्यादिव षत्वं भवती"ति शङ्क्यम् । यतः "अग्नीसोमाख्यौ कौचिद्देवा"विति देवताद्वन्द्वे वचनस्य चारितार्थ्यं संभवति । शब्दश्रुतिमात्रेण प्रतीयमानोऽर्थो मुख्यः, प्रयत्नोपपादितश्च गौणः,– तयोर्मध्ये भवति कार्ययोगित्वं मुख्य एवेति परिभाषार्थः । ज्ञापिताया अस्याः फलं तु "अग्निसोमौ माणवकौ" इत्यत्र सोमसकारस्य "अग्नेः स्तुत्स्तोमसोमाः" इतिषत्वाभावस्य "अग्निर्माणवक" इत्यादेरुपचरितार्थवृत्तेरग्निशब्दात्-"अग्ने[1]र्ढक्" इति ढगभावस्य "महद्भूतश्चन्द्रमा" इत्यत्र अमहति महच्छब्दस्य "[2]आन्महतः समानाधिकरणजातीययो"रित्यात्वाभावस्य च सिद्धिः । अस्या अभावे हि क्रमशः षत्वढगात्वान्यत्रदुर्वाराणि स्युः । [3]जयादित्य-जिनेन्द्र[4]बद्धीतु" अग्नेः स्तुत्स्तोमसोमाः" इत्यत्र "विभाषेटः"[5] इत्यतोऽनुवृत्तविभाषेत्यस्य व्यवस्थितविभाषात्वेन दीर्घादेवाग्नी-शब्दात् षत्वं स्वीकृत्य "अग्निसोमौ माणवकौ" इत्यत्र षत्वं ने"ति मन्वाते । तस्मान्नानयोर्मतेऽस्य निपातनस्य ज्ञापकत्वम् । अतएव भगवान् पतञ्जलिः परिभाषामिमां लौकिकन्यायसिद्धां मनुते[6] । शास्त्रे वास्तविकसत्ताया अनुपयोगेन गौणार्थप्रतिपादकत्वप्रकारकज्ञानस्यैव गौणमुख्यन्यायप्रवृत्तिप्रयोजकतया बोद्धृभिः सर्वत्र पदस्यैव गौणार्थग्रहो भवतीत्यस्याःपरिभाषायाः पदकार्यविषयत्वं युक्तम् ।[7]

---

(ख) पु. दे. ल. प. वृ. प. 14, पृ. 118
(ग) सी. दे. बृ. प. वृ. प. 40, पृ. 210.
(घ) नी. दी. प. वृ. प. 125, पृ. 314.
(ङ) ह. भा. प. भास्क. प. 42, पृ. 341.
(च) भ. ना. प. शे. प. 38, पृ. 154.
(छ) शेषा. प. भास्क. प. 37, पृ. 411.

1. अष्टा. 4/2/33.
2. अष्टा. 6/3/46.
3. "अनेन हि–अग्नेर्दीर्घात् सोमस्येष्यते । तेनेह न भवति–अग्निसोमौ माणवकौ । तथा च ज्योतिः=अग्निः सोमः=लताविशेषः–अग्निसोमौ तिष्ठतः" इत्युक्तम् । का. 8/3/82.
4. अनेन हि–अग्नेर्दीर्घात् सोमशब्दस्य षत्वमिष्यते । एतच्च "विभाषेटः" इत्यतो विभाषा-ग्रहणानुवृत्तेर्लभ्यते । न च तदनुवृत्तावतिप्रसङ्गः स्यात् व्यवस्थितविभाषाविज्ञानादित्युक्तम् न्या. 8/3/82.
5. अष्टा. 8/3/76
6. अमुना हि "अग्नेर्दीर्घात् सोमस्य" । अग्नेर्दीर्घात् सोमस्येति–वक्तव्यम् । अग्नीषोमौ । "इतरथा ह्यनिष्टप्रसङ्गः । इतरथा ह्यनिष्टं प्रसज्येत अग्निसोमौ माणवकाविति । तत्तर्हि–वक्तव्यम् । न वक्तव्यम् । गौणमुख्ययोर्मुख्ये सम्प्रतिपत्तिः । तद्यथा "गौरनुबन्ध्योऽजोऽग्नी-षोमीय" इति न वाहीकोऽनुबध्यते" इत्युक्तम्–व्या. म. भा. 8/3/2/82.
7. तथाहि–किंचायं न्यायो न प्रातिपादिककार्ये किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव । परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे

अतएव "गौर्वाहीकः" "गाम्पाठय"[1] इत्यादौ अगवि गौणार्थस्य गोशब्दस्य[2] क्रमशो-णित्त्वप्रयुक्ता वृद्धिरात्वं[3] च सिद्धयतः ।

## "कार्म" इति

"[4]कार्मस्ताच्छील्ये" इति सूत्रेण ताच्छील्ये "कार्मः" इति टिलोपनिपातनम् "ताच्छीलिके णेऽप्यणूकृतानि कार्याणि भवन्ती"ति[5] परिभाषाया ज्ञापकम्[6] । यतोऽस्या अभावे व्यर्थमिदम् । तथाहि - "कर्मशीलमस्य" इत्यर्थे कर्मशब्दात्

---

बीजम् । श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत इञः सिद्धये–उपात्तमित्यादि । न च प्रातिपदिकपदं तादृशमितिवाच्यम् । तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके "ओत्" इत्यादावेतत्प्रवृत्त्या "गोऽभव"दित्यादौ दोषो न ---------" इत्याह. भ. ना. प. शे. प. 16, पृ. 103-108.

1. "गोतोणित्"–अष्टा. 7/1/90
2. "अचोञ्णिति"–अष्टा. 7/2/115.
3. "औतोऽम्शसोः"–अष्टा. 6/1/93.
4. अष्टा. 6/4/172.
5. (क) पु. दे. ल. प. वृ. प. 66, पृ. 141
   (ख) "ताच्छीलिकणेऽप्यण् कृतं कार्यं भवति–सी. दे. बृ. प. वृ. प. 73, पृ. 237
   (ग) "ताच्छीलिकेष्वण्कृतं भवति"–नी. दी. प. वृ. प. 79, पृ. 308
   (घ) "ताच्छीलिके णेऽप्यणूकृतं कार्यं भवति"–ह. भा. पा. भास्क. प. 75 पृ. 354
   (ङ) "ताच्छीलिके णेऽण् कृतानि भवन्ति" भ. ना. प. शे. प. 88 पृ. 32
   (च) "ताच्छीलिके णेऽप्यणि कृतं कार्यं भवति" शेषा. प. भस्क. प. 75, पृ. 443.
6. तथाहि–
   (क) किमर्थमिदमुच्यते, नस्तद्धिते इत्येव सिद्धम् । न सिद्धयति । अनणीति प्रकृतिभावः प्रसज्येत । अणीत्यच्युते णश्चायम् । एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽण् कृतानि भवन्तीति । किमेतस्य ज्ञापनस्य प्रयोजनम् ? । चौरी तापसीति, अणन्तादितीकारः सिद्धो भवती"त्याह पत. व्या. म. भा. 6/4/4/172.
   (ख) "यद्येवं, किमर्थमिदम्, "नस्तद्धिते" इत्येव टिलोपः सिद्धः । सत्यमेतत्, ज्ञापकार्थं तु, एतज्ज्ञापयति–ताच्छीलिके णेऽण्कृतानि भवन्तीति । तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवती"त्याह वामनः का. 6/4/172.
   (ग) "कार्मस्ताच्छील्ये (6/4/172) इत्यत्र भाष्ये ज्ञापितो ह्येवमर्थः । अत्रहि कर्मशब्दात् ताच्छीलिक छत्रादित्वाण्णप्रत्यये टिलोपो निपात्यते।तत्रोक्तम्–अणि "अन्" (6/4/167) इति प्रकृतिभाव उक्तः । णे तु "नस्तद्धिते" (6/4/144) इति टिलोपः सिद्ध एव । किं निपातनेन । तदिदं ज्ञापयति ताच्छीलिके णेऽप्यण्कृतं कार्यं भवतीति । अणन्तं णान्तस्यापि प्राप्नोतीति, निपातन"मित्याह पु. दे. ल. प. वृ. प. 66, पृ. 141
   (घ) "कार्मस्ताच्छील्ये" (6/4/172) इत्यत्र ज्ञापितेयम् । तत्र कर्मशब्दात्तच्छीलमित्यनुवर्तमाने छत्रादित्वाण्णप्रत्यये कार्म इति निपात्यते । अत्रोच्यते । "नस्तद्धिते" (6/4/144)इति टिलोपेन कार्म इति सिद्धे टिलोपार्थं निपातनमयुक्तम् । न च "अन्" (6/4/167) इति प्रकृतिभावोऽस्ति, अणि तस्य विधानात् । एवं तर्ह्येतज्ज्ञापयत्यस्तीयं परिभाषेति । अत्रोच्यते । यदि ताच्छीलिकेऽप्यण्कृतं कार्यं भवतीति किमर्थं तर्हि

"छत्रादिभ्यो णः"[1] इति णप्रत्यये "कर्मन् + अ" इत्यवस्थायां "कार्मस्ताच्छील्ये[2] इति निपातनात् "नस्तद्धिते"[3] इति "टि"लोपे[4] तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु कार्म इति रूपं सिद्ध्यति । तत्र अणूप्रत्ययनिमित्तस्य "अन्"[5] इति प्रकृतिभावस्य बाधनाय टिलोपनिपातनं व्यर्थम्, यतोऽस्य अभावे णप्रत्ययेऽत्र "अन्"[6] इति प्रकृतिभावो न प्राप्नोतीति निपातनं विनैव "नस्तद्धित" इति टिलोपः सुलभः । ज्ञापितायां चास्यां परिभाषायामणि विहितस्य प्रकृतिभावस्य णेऽपि प्राप्ति-

---

ताच्छीलिकेष्वणप्रत्यय एव न विधीयते । एवं च ज्ञापकं कर्तव्यं न भवति । उच्यते । वैचित्र्यार्थं न कृतमित्याह सी. दे. बृ. प. वृ. प. 73, पृ. 238.

(ङ) ताच्छीलिके णेऽपि" । चौरी ।"–इति ग्रन्थेन ज्ञापकत्वमस्य सूचयति भ. दी. वै. सि. कौ. स्त्रीप्रत्यय प्र. पृ. पृ. 269 तथा "नस्तद्धिते" इत्येव सिद्धे "अण्कार्यं ताच्छीलिके णेऽपि" । तेन चौरी तापसीत्यादिसिद्धमिति चायमाह वै. सि. कौ. ठगधिकार प्र. पृ. 683

(च) "अन्" (6/4/167) इति अणि विहितप्रकृतिभावबाधनार्थेन "कार्मस्ताच्छील्ये" (6/4/172) इति निपातनेनैषा ज्ञाप्यत" इत्याह नीलकण्ठदीक्षितः प. वृ. प. 79 पृ. 308.

(छ) "ज्ञापकं चात्र "कार्मस्ताच्छील्ये" इति वचनम् । तद्धि "अन्" (6/4/167) इत्यणि विधीयमानो "नस्तद्धिते" (6/4/44) इति टिलोपनिवर्तकः प्रकृतिभावो माभूदत्येवमर्थम् । यदि तु "छत्रादिभ्योऽण्" इत्योवोच्येत तदेयं मास्त्विति वदन्ती"त्याह ह. भा. प. भास्क. प. 75, पृ. 355.

(ज) "अन्" इत्यणि विहितप्रकृतिभावबाधनार्थं "कार्मस्ताच्छील्ये" इति निपातनमस्या ज्ञापक"मित्याह भ. ना. प. शे. प. 88 पृ. 323.

(झ) "अत्र च ज्ञापकम् । "कार्मस्ताच्छील्ये" (6/4/172) इति निपातनम् । तद्धि "अन्" (6/4/167) इति विहितस्यान्प्रकृतिभावस्य बाधनार्थं क्रियते । यदि ताच्छीलिके णे अण् कृतं कार्यं न स्यात्, तर्हि वैयर्थ्यं स्पष्टमेवे"त्याह शेषा. भास्क. प. 75, पृ. 443-444.

(ञ) "कार्मस्ताच्छील्ये" (सू. 6/4/172) "नस्तद्धिते" (सू. 6/4/144) इत्येव सिद्धे इदं निपातनं ज्ञापयति ताच्छीलिकेष्वणकृतानि भवन्तीती"त्याह श्रीना. ज्ञा. सं. 6 पृ. 115.

1. अष्टा. 4/4/62.
2. अष्टा. 6/4/172.
3. अष्टा. 6/4/144.
4. "अचोऽन्त्यादिटि" - अष्टा. 1/1/64.
5. अष्टा. 6/4/167.
6. अष्टा. 6/4/167.

र्भवतीति "नस्तद्धिते"[1] इति टिलोपः "कार्मः" इत्यत्र न स्याददतोऽत्र प्रकृतिभावबाधितटिलोपसिद्ध्यर्थम् निपातनमिदं स्वांशे चरितार्थं भवति । अस्या असत्त्वे हि "चुरा शीलमस्याः" "तपःशीलमस्याः" "छत्रं[2] शीलमस्याः" इत्यर्थेषु क्रमशः चुरा-तपश्छत्रशब्देभ्यः [3]"छत्रादिभ्यो णः" - इति णप्रत्यये "चुटू"[4] इतिणकारस्येत्संज्ञायां "तस्यलोपः"[5] इति लोपे "तद्धितेष्वचामादेः"[6] इत्याद्यचो वृद्धौ [7]"यस्येति चे"ति आकाराकारयोर्लोपे "चोर" "तापस" "छात्र" इत्यवस्थायाम् अणन्ताद् विहितस्य [8]"टिड्ढे"तिङीपोऽप्राप्त्या नैतेषां साधुत्वं सिद्ध्येत् । सत्यां त्वस्यां ताच्छीलिकणान्तेभ्योऽप्येभ्योऽणन्ताद् विहितो ङीब् भवतीति [9]"यस्येति चे"ति णस्याकारस्य लोपे स्वादिकार्येषु कृतेषु साधुत्वमेषां सिद्ध्यति । परिभाषायामस्यां ताच्छीलिकपदोपादानस्य प्रयोजनं दण्डः [10]प्रहरणमस्यामित्यर्थे दण्डशब्दात् "तदस्यां प्रहरणमिति क्रीड़ायां णः "इति णप्रत्यये [11]तदन्तान्ङीपोऽभावः । तेनात्र "दाण्डा" इतिटाबेव भवति न तु ङीप् । अन्यथायात्रापि दण्शब्दाण्णान्तादणन्तत्वप्रयुक्तो ङीब्[12] दुर्वारः स्यात् । कैयटस्तु[13] "छत्रादिभ्योऽण्"[14] इतिन्यासं स्वीकृत्य ज्ञापकत्वमस्य न स्वीकरोति । कैयटमतमिदं न युक्तमिति भट्टनागेशो [15]मनुते । यतोऽण्विधाने ज्ञापकत्वमस्य निपानस्यास्यां न स्यात् । तथा सति [16]"छात्रे"ति भूरिप्रचारस्य टाबन्तप्रयोगस्य साधुत्वं दुर्लभं स्यात् ।

---

1. अष्टा. 6/4/144.
2. "गुरोर्दोषाणामावरणं छत्र"मिति भ. दी. वै. सि. कौ. ठगधिकार प्र., पृ. 683.
3. अष्टा. 4/4/62.
4. अष्टा. 1/3/1.
5. अष्टा. 1/3/9.
6. अष्टा. 7/2/117.
7. अष्टा. 6/4/148.
8. "टिड्ढाणञ् - द्वयसज् - दघ्नञ् - मात्रच् - तयप् - ठक् - ठञ् - कञ् - क्वरपः" - अष्टा. 4/1/15.
9. अष्टा. 6/4/148
10. अष्टा. 4/2/57.
11. "टिड्ढ." - अष्टा. 4/1/15.
12. "टिड्ढ." - अष्टा. 4/1/15.
13. अनेन हि - "एवं च च्छत्रादिभ्योऽणिति लाघवाय कर्तव्यम् । णवचने प्रयोजनाभावात् । "प्रज्ञाश्रद्धे"ति "ज्वलिति कसन्तेभ्यः" इति "तदस्यां प्रहरण"मिति णवचने ङीबभावः प्रयोजन"मित्युक्तम् प्रदी. 6/4/172.
14. अष्टा. 4/4/62.
15. अनेन हि - एवंचेति । ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्छात्रेति सिद्ध्यतीति चिन्त्यमिदमित्यन्ये" इत्युक्तम् उद्यो. अष्टा. 6/4/4/172.
16. छत्रं गुरोर्दोषावरणं तदस्या इति विग्रहे "छत्रादिभ्यो णः" अष्टा. 4/4/62. इतिङीपो णान्तादप्राप्त्या टापि रूपम् ।

भगवत्पाणिनिकृतस्य [1]"छत्रादिभ्योणः" इति न्यासस्य स्वीकारे तु निपातनस्य ज्ञापकत्वमस्यामुपपद्यत इति [2]ज्ञापकसिद्धस्यासार्वत्रिकतया "छात्रे"ति टाबन्त-प्रयोगस्यापि साधुत्वमुपपद्यते । मतमिदं नागेशस्य न स्वकीयं नूतनं किन्तु स्वपूर्वाचार्येण सीरदेवेनोक्तस्य "वैचित्र्यार्थमणूप्रत्यय एवात्र न विधीयते" इत्यभि-प्रायकस्य बृहत्परिभाषावृत्तिग्रन्थोक्तवैचित्र्यस्य [3]परिष्कृतिरेव । स्थितेर्गतिश्चिन्त-नीयेति सिद्धान्तान्नागेशभट्टमतमत्राशोभनं मन्ये ।

## "गदमदचरयमः" इति

"[4]गदमदचरयमश्चानुपसर्गे" इति सूत्रे कृतं बहुष्वेकवचननिपातनम् [5]"सर्वो द्वन्द्वो विभाषयैकवद्भवती" ति परिभाषाया ज्ञापकम्[6] । यतोऽस्या अभावे "गदमद-चरयमः" इति बहुष्वेकवचननिपातनं व्यर्थम् । सत्यां त्वस्यां समाहारे कदाचिद्बहुवचनमिह माभूदित्येतदर्थं निपातनं स्वांशे चरितार्थं भवति । न चास्या अभावेऽपीतरेतरद्वन्द्वे बहुवचनसंभवेऽपि समाहारद्वन्द्वे स्वतः सिद्धमेकवचनमिति-इदं निपातनमेवाप्रामाणिकमिति शङ्क्यम्, इतेरेतरद्वन्द्वेप्येकवचनस्य साधुत्वाय निपातनमिदमावश्यकम् । [7]ज्ञापिताया अस्याः फलं "घटपटं" "घटपटा"वित्यनयोः साधुत्वमित्यत्रैव प्रबन्धेऽन्यत्र निरूपितमतो नेहेदं प्रतन्यते ।

---

1. अष्टा. 4/4/62.
2. "ज्ञापकसिद्धं न सर्वत्र" - इत्यनया परिभाषयेत्यर्थः ।
3. द्र.प.शे. प. 73, पृ. 238.
4. अष्टा. 3/1/100.
5. (क) व्याडिः प. सू. प. 73, पृ. 31.
   (ख) पु. दे. ल. प. वृ. प. 50, पृ. 134.
   (ग) सी. दे. बृ. प. वृ. प. 16 पृ. 177.
   (घ) नी. दी. प. वृ. प. 22, पृ. 297.
   (ङ) ह. भा. भास्क. बृ. प. 16, पृ. 358.
   (च) भ. ना. प. शे. प. 35, पृ. 160.
   (छ) शेषा. प. भास्क. प. 34, पृ. 410.
6. तथाहि – "सर्वो द्वन्द्वो विभाषयैकवद्भवति । कथं ज्ञायते । यदयं सूत्रे क्वचिद् बहूनामेकवचनं निपातयति - "गदमदचरयमः (3/1/100) इति । किमेतस्या ज्ञापने प्रयोजनम् । यो द्वन्द्वैकवद्भावे अपरिगणितानां द्वन्द्व एकवत् दृश्यते तत्रैव परिभाषा वर्तते" – इत्याह व्याडिः प. सू. प. 73, पृ. 31.
7. "ज्ञापकाः सूत्रांशाः "इति प्रघट्टके "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्" - अष्टा. 1/2/63 इति सूत्रस्थ बहुवचनस्येतिशब्दज्ञापकतानिरूपणावसरे" इत्यर्थः ।

## "बोभूतु-तेतिक्ते" इति

[1]"दाधर्ति दधर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदद् भरिभ्रद् दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजन् मर्मृज्याऽऽगनीगन्तीति चे"त्यत्र "बोभूतु" इति, तेतिक्ते" इति च निपातने क्रमशः "भवते र्यङ्लुगन्तस्य गुणप्रतिषेधो न भवती"ति वचनस्य, "यङ्लुकि यङन्तादात्मनेपदं न भवती"ति वचनस्य च ज्ञापिके[2] । यत आद्यवचनस्याभावे "[3]बोभू"त्वितिभवतेर्यङ्लुगन्तस्य लेटि गुणाभावनिपातनं व्यर्थम् । [4]भूसुवोस्तिङी-त्यनेनैव हि गुणाभावोऽत्र सुलभः । तथा द्वितीयवचनस्याभावे "तेतिक्ते"इति तिजेर्यङ्लुगन्त[5]स्यात्मनेपदनिपातनं व्यर्थम् । यङो ङित्त्वादत्र [6]प्रत्ययलक्षणेन "अनुदात्तङित[7] आत्मनेपद"मिति ङिल्लक्षणमात्मनेपदं सुलभम् । ज्ञापिते चाऽऽद्यवचने "बोभू-"[8] त्वित्यत्र गुणाभावविपातनं स्वांशे चरितार्थं भवति । ज्ञापिते च द्वितीयवचने "तेतिक्ते" इत्यत्राऽऽत्मनेपदनिपातनं स्वांशे चरितार्थं भवति ।

---

1. अष्टा. 7/4/65.
2. तथाहि –
   (क) "बोभूत्विति किं निपात्यते । भवते र्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम्, सिद्धमत्रागुणत्वं भूसुवोस्तिङी"ति । एवं तर्हि नियमार्थं भविष्यति" - अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्रेति । क्व माभूत् । बोभवतीती"त्याह पत. व्या. म. भा. - अष्टा. 1/4/165.
   (ख) "ज्ञापनार्थं तर्हि निपातनमेतत्, ज्ञापयति - अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवति । बोभोति, बोभवीति" इति, "ज्ञापनार्थं तु आत्मनेपदनिपातनम् - "अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति" - इति चाऽऽह वाम. का. 7/4/65.
   (ग) "दाधर्ति सूत्रे (7/4/65) बोभूत्विति गुणाभावार्थं निपातनात् ज्ञापकात् बोभवीतीत्यत्र "नाभ्यस्तस्याचि पिति सार्वधातुक (7/3/87) इति गुणनिषेधो न भवति । तथा तेतिक्ते इति आत्मनेपदार्थं निपातनात् - ज्ञापकात् "यङ्लुकि यङो ङित्त्वात् आत्मनेपदं न भवतीति शीङः शेशेति शेशयिता शेशीतः शेश्यतीत्यादी"त्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 94.
   (घ) "ननु" भूसुवोस्तिङि" इत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्ः सत्यम् । ज्ञापकार्थं तर्हि निपातनम् । एतज् ज्ञापयति - अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति । तेन बोभवीतीत्यत्र भाषायां गुणः सिद्ध इत्याह जयकृष्णः सुबो. स्वरवैदिकी प्रक्रियायां सप्तमाध्याये पृ. 613.
3. "भू सत्तायाम्" – धा..पा. भ्वा. ।
4. अष्टा. 7/3/88.
5. "तिज निशाने" धा. पा. भ्वा. 1040.
6. "प्रत्ययलोपे प्रत्ययलक्षणम्" अष्टा. 1/1/62.
7. अष्टा. 1/3/12.
8. "भू सत्तायाम्" धा. पा. भ्वा. । इति भूधातो र्लेटिर्यङ्लुगन्तात्प्रथमपुरुषैकवचने वेदे रूपम् ।

ज्ञापितस्यास्य वचनस्य फलं तु "[1]बोभवीती"त्यत्र "[2]नाभ्यस्तस्याचि[2] पिति सार्वधातुके" इतिगुणनिषेधाभावः । अस्य वचनस्यासत्वे हि गुण निषेधोऽनेनात्र दुर्वारः स्यात् । यद्यप्यनुदात्तङित[3] इति ङिन्निमित्तमात्मनेपदमिह न प्रत्ययनिमित्तं तथापि लोलूयत इत्यादौ यदूयङन्तादात्मनेपदं तत्प्रत्ययनिमित्तं भवत्येव । न चात्र "न लुमताङ्गस्ये"ति[4] प्रत्ययलक्षणप्रतिषेधः शङ्क्यः । यत आत्मनेपदस्याङ्गकार्यत्वं नास्ति । ज्ञापितस्य द्वितीयवचनस्य फलं तु शीङः यङो लुकि[5] शेशेति शेशयिता शेशीतः शेश्यतीत्यादौ [6]ङिल्लक्षणमात्मनेपदस्याभावः । अस्य वचनस्यासत्त्वे हि ङिल्लक्षणमात्मनेपदमत्र प्रत्ययलक्षणेन दुर्वारं स्यात् । भट्टनागेशस्तु "तेतिक्ते" इति निपातनं नियमार्थतयोक्तवचनज्ञापकं, प्रत्ययलक्षणसूत्रं विध्यर्थमिति वार्तिककृन्मते, नियमार्थत्वपक्षे तु प्रत्ययासाधारणरूपानाऽऽश्रयणात् प्रत्ययलक्षेणेनात्मनेपदप्राप्तिरेव नेति विध्यर्थमिदं निपातनं, न ज्ञापकमिति मनुते[7] ।

## "भ्रौणहत्ये"ति

[8]"दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेय-वासिनायनि-भ्रौणहत्य-धैवत्य-सारवैक्ष्वाकमैत्रेयहिरण्यानी"ति सूत्रे "भ्रौणहत्ये"त्यत्र तत्वनिपातनं "तद्धिते परे हन्तेः[9] "हनस्तो चिण्णलो[10]रिति तकाराऽऽदेशो न भवती"ति वचनस्य ज्ञापकम्[11] । यतोऽस्य वनचस्याभावेऽत्र भ्रौणहत्येत्यत्र[12] तत्वनिपातनं व्यर्थम् । चिण्णल्भिन्ने

---

1. "भू सत्तायाम्" धा. पा. भ्वा. । इति भूधातोर्यङ्लुगन्ताल्लोटि प्रथमपुरुषैकवचने अदादित्वाच्छपो "बहुलं छन्दसि" - अष्टा. 2/4/73, इति बहुलवचनाल्लुकि "यङो वा" अष्टा. 7/3/94 इति पक्षे इटि गुणे च कृते रूपमिदम् ।
2. अष्टा. 7/3/87.
3. अष्टा. 1/3/12
4. अष्टा. 1/1/63
5. "यङोऽचि च" - अष्टा. 2/4/74
6. "अनुदात्तङित आत्मनेपदम्" - अष्टा. 1/3/12.
7. उद्यो. 7/4/65 पृ. 257-258.
8. अष्टा. 6/4/174.
9. "हन हिंसागत्योः" धा. पा. अदा. 1012, इति हन्धातोरित्यर्थः ।
10. अष्टा. 7/3/32
11. तथाहि –
    (क) "एवं हि ज्ञापयत्याचार्यो, न तद्धिते तत्वं भवती"ति । किमेतस्य ज्ञापने प्रयोजनम् । भ्रौणघ्नः वार्त्रघ्न इत्यत्र तत्वं न भवती"त्याह पत. व्या. म. भा. 6/4/4/174.
    (ख) "दाण्डिनायन" (सू. 6/4/4/174), "हनस्तो चिण्णलोः" (सू. 7/3/32) इत्येव भ्रौणहत्ये तत्वे सिद्धे तत्वनिपातनं तद्धिते तत्वप्रतिषेधस्य ज्ञापक"मित्याह श्रीना. ज्ञा. सं. 6, पृ. 115.
12. "भ्रूणमिति कर्मोपदात् "हन हिंसागत्योः" धा. पा. अदा. 1082, इतिहन् धातोः भ्रूणं हन्तीत्यर्थे"क्विप् च" अष्टा. 3/2/76 इति क्विपि तस्य सर्वापहारे "उपपदमतिङ्" अष्टा.

ञिति णिति च परे हन्तेस्तकाराऽऽदेशविधायकेन [1]"हनस्तोऽचिण्णलो" रिति-सामान्यसूत्रेणैव हि ञिति ष्यञि परेऽत्र तकाराऽऽदेशः सुलभः । ज्ञापिते चास्मिन् वचनेऽत्र ष्यञि [2]"हनस्तो चिण्णलो" रित्यनेन तत्वाप्राप्तौ तत्वनिपातनमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु "भ्रौणघ्नो"[3] "वार्त्रघ्नः"[4] इत्यादौ तद्धितेऽणि परे हन्तेर्नकारस्य तत्वाभावः । अस्य वचनस्यासत्त्वे हि तत्वाऽऽपत्तिरत्र[5] दुर्वरा स्यात् ।

वस्तुतस्तु सूत्रेऽस्मिन् "भ्रौणहत्ये"त्यत्र तत्वनिपातनं "धातोः कार्यमुच्यमानं[6] तत्प्रत्यये भवती"ति परिभाषाया ज्ञापकम्[7] । यतोऽस्या अभावेऽत्र तत्वनिपातनं

---

2/2/19 इत्युपपदसमासे समासप्रातिपदिकत्वेन "सुपो धातुप्रातिपदिकयोः" - अष्टा. 2/4/71, इति प्रातिपदिकावयवस्य सुपो लुकि "अनुनासिकस्यक्विझलोः क्ङिति" - अष्टा. 6/4/15 इत्युपधादीर्घे स्वादिकार्येषु कृतेषु भ्रूणहा इति रूपम् । ततो भ्रूणहनो भाव इत्यर्थे भ्रूणहन्शब्दात् षष्ठ्यन्ताद् ब्राह्मणादित्वाद्" गुणवचनब्राह्मणादिभ्यः कर्मणि च" - अष्टा. 5/1/124 इति ष्यञ्प्रत्यये "तद्धितेष्वचामादेः" - अष्टा. 7/2/117 इत्याद्यचो वृद्धौ "भ्रौणहन् य" - इत्यवस्थायां दाण्डिनायन." - अष्टा. 6/4/174, इति निपातनान्नकारस्य तत्वे "होहन्तेर्ञ्णिन्नेषु" - अष्टा. 7/3/54 इति हस्य कुत्वे तद्धितान्तप्रातिपदिकत्वेन सौ सकारस्य रुत्वे विसर्गे च कृते "भ्रौणहत्य" इति रूपम् ।

1. अष्टा. 7/3/32
2. अष्टा. 7/3/32
3. भ्रूणहनोऽपत्यमित्यर्थे षष्ठ्यन्ताद् भ्रूणहन् शब्दात् "तस्यापत्यम्" - अष्टा. 6/1/92 इत्यणि "कृदन्तप्रातिपदिकत्वात् सुपो लुकि "षपूर्वस्य हन्धृतराज्ञामणि" - अष्टा. 6/4/135 इत्यतो लोपे "तद्धितेष्वचामादेः" अष्टा. 7/2/117, इत्याद्यचो वृद्धौ सौ रूपमिदम् ।
4. वृत्रहनोऽपत्यमित्यर्थे षष्ठ्यन्ताद् वृत्रहन्शब्दात् "तस्यापत्यम्" अष्टा. 6/1/92 इत्यणि कृदन्तप्रातिपदिकत्वात् सुपो लुकि "षपूर्वधृतराज्ञामणि" - अष्टा. 6/4/135 इत्यतो लोपे "तद्धितेष्वचामादेः" - अष्टा. 7/2/117, इत्याद्यचो वृद्धौ सौ रूपम् । "कुमति च" - अष्टा. 8/4/13, इति णत्वमिह न भवति "कुव्यवाये हादेशेषु प्रतिषेधः" इति णत्वप्रतिषेधात्" ।
5. "हनस्तोऽचिण्णलोः" - अष्टा. 7/3/32
6. (क) धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यविज्ञानम्" -
   पु. दे. ल. प. वृ. प. 55, पृ. 137
   (ख) सी. दे. वृ. प. वृ. प. 74, पृ. 238
   (ग) "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्" -
   नी. दी. प. वृ. प. 80, पृ. 309
   (घ) "धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति" - ह. भा. प. भास्क. प. 76, पृ. 355
   (ङ) भ. ना. प. शे. प. 89, पृ. 323
   (च) शेषा. प. भास्क. प. 76, पृ. 444.
7. तथाहि –
   (क) "एवं तर्हीयं परिभाषा कर्तव्या - "धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति । सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति - भवत्येषा परिभाषा यदयं भ्रौणहत्ये तत्वं शास्ती"त्याह पत. व्या. म. भा. 7/2/2/114.
   (ख) "हनस्तोऽचिण्णलोः" इति यत्तत्वं तद्धातुप्रत्यय एवेति - भ्रौणघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते" - इति ग्रन्थेन ज्ञापकत्वमस्यामस्य सूचयति वाम. का. 6/4/174.

(ग) "कथं पुनर्ज्ञायते - धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं भवतीति । अतएव निपातनात् ननु च "होहन्तेर्ग्णिन्नेषु" इति कुत्वप्रतिषेधार्थं निपातनं स्यात् । नैतदस्ति, "न क्वादेः" इत्यत्र हि नेति योगविभागादपि शक्यते कुत्वनिवृत्तिः कर्तु"मित्याह जि. बु. न्या. 6/4/174.

(घ) "इह च स्वरूपग्रहणे इतिवचननात् प्रसृड्भ्यां प्रसृड्भिः इत्यत्र "अनुदात्तस्य चर्दुपधस्य." (6/1/59) इति अम्प्राप्तिदोषमुद्भाव्य "मृजेर्वृद्धिः" (7/1/14) इत्यत्र भाष्ये परिभाषान्तरमाश्रितम् । "धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति" इति । अयं चार्थः भ्रूणहनो भाव इति क्विबन्तात् भ्रौणहत्यः इत्यत्र "दाण्डिनायन." (6/4/174) इत्यादिना तकारनिपातनेन ज्ञाप्यते । यति धातोः कार्यमधातुप्रत्ययेऽपि स्यात्तदा "हनस्तोऽचिण्णलोः" (7/3/32) इत्यनेन टिलोपं बाधित्वा तकारः सिद्धः स्यात् किं निपातनेन । "होहन्तेः." (7/3/54) इति कुत्वनिपातनार्थमिदं निपातनं न ज्ञापकम्" इति वाच्यम्, कुत्वनिषेधार्थस्य "नक्वादेः " (7/3/59) इत्यत्र नेति योगविभागेन साधितत्वादिति भाष्ये । इह तु नियौ नियः भुवौ भुवः इत्यत्र "क्षियः" (6/4/59) इतिनिर्देशाज्ज्ञापकादधातुप्रत्ययेष्वपि इयङुवङावितीत"त्याह पु. दे. ल. प. वृ. प. 55, पृ. 137.

(ङ) "एतस्याः परिभाषायाः दाण्डिनायनादि (6/4/174) सूत्रे भ्रौणहत्यशब्दे तत्वनिपातनं लिङ्गम् । तथाहि– यद्येषा न स्यात्तदा "हनस्तोऽचिण्णलोः" (7/3/32) ष्यञि तत्वं सिद्धमिति निपातनमनर्थकं स्यात् । अत्रोच्यते– निपातनमिदं कुत्वाभावार्थं स्यात् । "नक्वादेः" (7/3/59) इति योगिविभागेन कुत्वं न भविष्यति । टिलोपार्थमपि न वाच्यम् । परत्वाट्टिलोपं बाधित्वा "हनस्तोऽचिण्णलोः" (7/3/32) इति तस्य विद्यमानत्वात् । उपधावृद्ध्यभावार्थमपि न, आदिवृद्ध्योपधावृद्धे र्बाधितत्वात् त्वाष्ट्रो जागत इतियथा । ञ्नित्यादिस्वरबाधानार्थमपि न. तस्येष्यमाणत्वा"दित्याह सी. दे. बृ. प. वृ. प 74, पृ. 238.

(च) "कथं पुन ज्ञायते - "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते" इति । अतएव निपातनात् । एवं तर्हि कुत्वनिवृत्त्यर्थं निपातनम् । मैवम्, तथाहि – नक्वादेः" इत्यत्र प्रकरणे "भ्रूणहनः ष्यञि" इत्यवक्ष्यत्, अतस्तत्वार्थमपि निपातनं सत् ज्ञापकमेवे"त्याह ह. मि. पदम. 6/4/174.

(छ) "हनस्तोऽचिण्णलोः" इत्यनेनैव हन्तेस्तत्वे सिद्धे तकारनिपातनं ज्ञापयति - "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्" इति । तेन वार्त्रघ्नमित्यत्र तत्वं न । नन्वेवं प्रसृड्भ्याम् इत्यादौ "अनुदात्तस्य चर्दुपधस्य" इत्यम् दुर्वारः स्यात्, अमविधौधातोः स्वरूपग्रहणाभावत् । अत्राहुः – मृजेर्वृद्धिः" इति भाष्यपर्यालोचनया "धातोः कार्यमुच्यमानं तत्प्रत्यये भवति "इति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम् । तेन न कोऽपि दोष इती"त्याह ज्ञा. भि. त. बो. तद्धितेऽपत्याधिकारप्र. पृ. 599.

(ज) "अत्र ज्ञापकम् - भ्रौणहत्ये तत्वनिपातनम् । अन्यथा "हनस्त." (7/3/32) इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेवे"त्याह - नी. दी. प. वृ. प. 80, पृ. 309.

(झ) "ज्ञापकमत्र "दाण्डिनायन." (6/4/174) सूत्रे भ्रौणहत्यशब्दे तत्वनिपातनम् । तद्धि अनया परिभाषया"हनस्तोऽचिण्णलोः" (7/3/32) इति न प्राप्नोतीति क्रियते" इत्याह ह. भा. प. भास्क. प. 76, पृ. 355.

(ञ) "भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापक" मित्याह भ. ना. प. शे. प. 89, पृ. 324

(ट) "ज्ञपकम् - "दाण्डिनायन." (6/4/174) सूत्रे भ्रौणहत्येतितत्वनिपातनम् । यदीयं परिभाषा न स्यात् तर्हि "हनस्तोः." (7/3/32) इत्यनेनैव तत्सिद्धेः किन्तेने"-त्याह शेषा. प. भास्क. प. 76, पृ. 444

(ठ) "मृजेर्वृद्धिः (सू. 7/2/114) । भ्रौणहत्ये तत्वनिपातनं धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीत्यस्यार्थस्य ज्ञापक"मित्याह श्रीना. ज्ञा. सं. 7, पृ. 120

व्यर्थम् । तथाहि – "भ्रौणहत्य" इत्यत्र "भ्रूणहन् य" इत्यवस्थायां "नस्तद्धिते"[1] इति टिलोपं बाधित्वा "[2]दण्डिनायने"त्यादिसूत्रेण तत्वस्य निपातनं कृतमाचार्येण । अस्या परिभाषाया अभावे हि "[3]हनस्तोऽचिण्णलो"रित्यनेनैव नकारस्य ष्यञि परे तत्वं सुलभमितीदं तत्वनिपातनं व्यर्थम् । न चात्रानेन तत्वं न निपात्यते किन्तु "[4]होहन्ते र्ञ्णित्रे"ष्विति प्राप्तस्य कुत्वस्याभाव इति शङ्क्यम् । यतोऽत्र "[5]न क्वादे"रितियोगविभागेन कुत्वाभावो निपातनं विनापि सुलभः । अपिच यदि कुत्व-निवृत्त्यर्थं निपातनमत्र स्यात्तदा "नक्वादेः"[6] इत्यत्र प्रकरणे "भ्रूणहनः ष्यञि" इत्यवक्ष्यत्, न चावक्ष्यत्तथेति कुत्वाभावः सुलभः । न च "[7]नस्तद्धिते"इति प्राप्तस्य टिलोपस्याभावोऽत्र निपात्यत इत्यपि शङ्क्यम् । यतोऽत्र टिलोपाभावनिपातनं विनापि परत्वाट्टिलोपं बाधित्वा "हनस्तोऽ[8]चिण्णलो" रिति तत्वं सुलभवम् । नापि "अत [9]उपधायाः" इत्युपधावृद्ध्यभावोऽत्र निपात्यत इति शङ्कनीयम् । यतः "सत्यपि संभवे बाधनं[10] भवती "ति परिभाषया त्वाष्ट्रो जागत इत्यत्रेवात्रापि निपातनं विनैवो-पधावृद्धिं[11] बाधित्वाऽऽदिवृद्धिः[12] प्रवर्तेत । इत्थमत्र तत्वार्थमेव निपातनं, तच्च व्यर्थमस्या अभावेऽत इदं ज्ञापकमेव । ज्ञापितायां चास्यां "भ्रौणहत्य"

---

1. अष्टा. 6/4/144.
2. अष्टा. 6/4/174.
3. अष्टा. 7/3/32.
4. अष्टा. 6/3/54.
5. अष्टा. 7/3/59.
6. अष्टा. 7/3/59.
7. अष्टा. 6/4/144.
8. अष्टा. 7/3/32.
9. अष्टा. 7/2/116.
10. (क) व्याडिः प. सू. प. 22 पृ. 12.
    (ख) पु. दे. ल. प. वृ. प. 23 पृ. 122.
    (ग) सी. दे. बृ. प. वृ. प. 86 पृ. 246.
    (घ) नी. दी. प. वृ. प. 47 पृ. 301.
    (ङ) ह. भा. प. भास्क. प. 89 पृ. 359.
11. "अतउपधायाः"–अष्टा. 7/2/116.
12. "तद्धितेष्वचामादेः"–अष्टा. 7/2/117.

इत्यत्राधातोः ष्यञो[1] विहितत्तया "[2]हनस्तोऽचिण्णलो"रिति तत्वं न प्राप्नोतीति तत्वार्थमत्र निपातनं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु भ्रौणघ्नः वार्त्रघ्न इत्यत्राणो[3]धातुविहितप्रत्ययत्वाभावेन "हनस्तोऽचिण्णलो"रिति[4] तत्वाभावः, "सुदृग्भ्यां" "सुदृग्भि"रित्यत्र क्विबन्तानां धातुत्वेऽपि भ्यां-भ्यसोः प्रातिपदिक-प्रत्ययत्वात् "सृजिदृशोर्झल्यमकिती"ति[5] धात्वधिकारीयप्रत्यये विहितस्यामोऽभावः, "उदकमग्भ्यां" प्राणनग्भ्या"मित्यादौ" "मस्जिनशोर्झली"ति[6] नुमोऽभावः, "देवगिरौ" "देवगिरः"-इत्यत्र "अचि विभाषे"ति[7] रेफस्य लत्वाभावः, "कीलालपः पश्ये" त्यत्र "पाघ्राध्मे"[8] ति पिबादेशाभावः, "कंसपरि- मृड्भ्या"मित्यादौ "मृजेर्वृद्धि"रिति वृद्ध्यभावश्च । अस्या असत्त्वे हि "भ्रौणहत्य"[9] इत्यादौ क्रमशः तत्वा-मनुमूलत्वपिबवृद्ध्यादेशानामापत्तयो दुर्वाराःस्युः ।

"धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान" मिति वार्तिककृदुक्तं परिभाषास्वरूपं "प्रसृड्भ्यां" "प्रसड्भि"रित्यत्र "अनुदात्तस्य [10]चर्दुपधस्ये"त्यमोऽभावाया-स्वीकृत्य"धातोः कार्यमुच्यमानं तत्प्रत्यये भवती"ति स्वरूपमुक्तं[11]भगवतेति तदेवास्याः स्वरूपं निर्दुष्टं प्रामाणिकं चेति तदेवात्र परिगृहीतम् । कैयटस्तु "न तद्धिते तत्वं भवती"ति वचनज्ञापकपरं भाष्यं[12] "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य-विज्ञान"मित्यनपेक्ष्यैव प्रवृत्तमित्याह[13] । भट्टनागेशस्तु परिभाषामिमां ज्ञापयितुं तदिति[14] मनुते ।

---

1. "गुणवचनब्राह्मणादिभ्यः कर्मणि च"–अष्टा. 5/1/124.
2. अष्टा. 7/3/32.
3. "तस्यापत्यम्"–अष्टा. 4/1/92.
4. अष्टा. 7/3/32.
5. अष्टा. 6/1/58.
6. अष्टा. 7/1/60
7. अष्टा. 8/2/21.
8. "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः–अष्टा. 7/3/78.
9. अष्टा. 7/2/114.
10. अष्टा. 6/1/59.
11. व्या. म. भा. 7/2/2/114.
12. व्या. म. भा. 6/4/4/174.
13. प्रदी. 6/4/4/174.
14. अनेन हि–"वस्तुतः स एवार्थोऽनेन ज्ञाप्यत इति शब्दान्तरेण भाष्य उक्तमिति बोध्य"मित्युक्तम् उद्यो. 6/4/4/174.

## "समां समाम्"इति

"समां समां[1] विजायते" इति सूत्रेण "[2]समांसमीना गौ"रित्यत्र यलोपनिपातनं "पूर्वपदेऽत्र सुब्लङ्न भवती"ति वचनस्य ज्ञापकम्[3] । यतोऽस्य वचनस्याभावे याटोऽत्र[4] सुबयवतया यदागमन्यायेन[5] सुपो ग्रहणेन ग्रहणात् [6]सुब्लुकैव यलोपः सुलभ इति यलोपनिपातनं व्यर्थम् । ज्ञापिते चास्मिन् वचने पूर्वपदे सुपो लुङ् न भवतीति सुब्लुका यलोपो न सिद्ध्येदतोऽत्र यलोपनिपातनं त्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु समांसमीनागौरित्यत्र पूर्वपदे सुब्लुकोऽभावः । अस्य वचनस्यासत्त्वेहि उत्तरपदवत्पूर्वपदेऽपि सुपो लुगापत्तिरत्र दुर्वारा स्यात् । सूत्रे कुतो नोत्तरपदे सुपो लुगिति तु न शङ्कनीयम् । यतोऽत्र समांसमामिति निर्देश-सामर्थ्यादुत्तरपदे सुपो लुगभावो भवति ।

जयादित्येन तु "पूर्वपदे सुपो लुग्वक्तव्यः" इति वार्तिकमेवात्राऽऽरब्धमिति[7] नासौ यलोपनिपातनस्य ज्ञापकत्वं मनुते । भट्टोजिदीक्षितस्तु "समांसमां विजायते" -इत्यनेन [8]"यलोपोऽवशिष्टविभक्तेरलुक्च निपात्यते" इति सूत्रार्थं स्वीकृत्य नास्य निपातनस्य ज्ञापकत्वं मनुते । मतद्वयमपीदं [9]भाष्यविरुद्धमिति न युक्तमिति मन्ये ।

---

1. अष्टा. 5/2/12.
2. समायां समायां प्रसूयते इत्यर्थे समायां समायामित्यस्मात्समुदायात् "समांसमां विजायते" - अष्टा. 5/2/12 इति खप्रत्यये निपातनाद्यलोपे ज्ञापितवचनात् पूर्वपदस्थस्य सुपोऽलुकि उत्तर-पदस्थस्य सुपो लुकि "ख"स्य "आयनेयीनीयियः फ - ढ - ख - छ - घां प्रत्ययादीनाम्" - अष्टा. 7/1/2 इति ईनादेशे स्त्रीत्वात् टापि रूपमिदम् ।
3. तथाहि–
   (क) "समांसमां विजायत" इति यलोपवचनादलुग्विज्ञानं भविष्यति । यदयं यलोपं शास्ति तज् ज्ञापयत्याचार्यो "नात्रलुग् भवती"त्याह पत. व्या. म. भा. 5/2/1/12.
   (ख) 'पूर्वपदे यलोपनिपातनसामर्थ्यादलुगिति भाष्यकृत' इत्याह भ. ना. ल. श. शे. तद्धिते पाञ्चमिकप्रकरणे पृ. 725-726.
   (ग) "समां समां विजायते (सू. 5/2/12) यलोपवचनं ज्ञापयति नात्र लुग्भवतीती" इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 170.
4. "याडापः" - अष्टा. 1/3/113.
5. "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" - इति परिभाषयेत्यर्थः ।
6. "सुपो धातुप्रातिपदिकयोः" - अष्टा. 2/4/71.
7. द्र. का. 5/2/12.
8. द्र. वै. सि. कौ. तद्धिते पाञ्चमिकप्रकरणे, पृ. 726.
9. द्र. व्या. मं. भा. 5/2/1/12.

## "सर्वनामानी"ति

"सर्वादीनि[1] सर्वनामानी"ति सूत्रे "सर्वनामानी"ति णत्वाभावनिपातनं "सर्वनामशब्दे णत्वं ने"ति वचनस्य [2]ज्ञापकम् । यतोऽस्य वचनस्याभावे निपातनमिदं व्यर्थम् । कृतेऽपि हि णत्वाभावनिपातनेऽत्र [3]पूर्वपदात्संज्ञायामगः" इति णत्वापत्तिर्दुवारा स्यात् । ज्ञापिते चास्मिन् वचने[4]णत्वस्य बाधनार्थमत्राणत्वनिपातनं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु लोके शास्त्रे वा सर्वनामशब्दे णत्वाभावस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि निपातनेनानेन शास्त्रे "सर्वनामानी"त्यस्याकृतणत्वस्य साधुत्वेऽपि लोके सणत्वस्यास्य शब्दस्य साधुत्वाऽऽपत्तिः स्यात् । अथात्र "नाप्राप्ते णत्वे निपातनमारभ्यते तद्बाधकं भविष्यतीति[5] ग्रन्थेन च भगवता "बाधकान्येव[6] निपातनानी"ति परिभाषा सूचिता । तथा सति "अपरस्पराः क्रिया[7]सातत्ये"इति निपातनात् "सम् + तत इत्यवस्थायां मकारस्य लोपेन सततशब्दस्य साधुत्वेऽपि नाप्राप्ते अलोपे आरभ्यमाणमिदं लोपनिपातनमलोपस्य बाधकं भवेदिति संततमित्यस्य साधुत्वं न स्यात्, तथा [8]"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" - इत्यत्र निपातितेन पुराणशब्देन पुरातनशब्दस्य बाधः स्यात्तथा सति पुरातनशब्दस्य साधुत्वं न स्यादिति शङ्कनीयम् । यतः संतत - सततयोः पुराणपुरातनयोश्च पृषोदरादिगणे पाठेन "पृषो दरादीनि[9] यथोपदिष्ट"-मित्यनेनैव साधुत्वं, न तु निपातनादिति स्वीक्रियते ।

---

1. अष्टा. 1/1/27.
2. तथाहि–
   (क) "सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति" - इति ग्रन्थेन ज्ञापकत्वमस्य सूचयति पत. व्या. म. भा. 1/1/6/26.
   (ख) "सर्वादीनि...., (सू. 1/1/27) इति सर्वनामसंज्ञायाम् अतएव निपातनान्नणत्वम् । पुराणपुरातनौ सतत -संततौ च पृषोदरादित्वात् सिद्धा"वित्याह श्रीना. ज्ञा. सं. 1, पृ. 21.
3. अष्टा. 8/4/4.
4. अष्टा. 8/4/3.
5. व्या. म. भा. 1/1/6/26.
6. (क) नी. दी. प. वृ. प. 109, पृ. 312.
   (ख) भ. ना. प. शे. प. 119, पृ. 355.
   (ग) शेषा. प. भा. प. 102, पृ. 457 "बाधकानि निपातनानि" ।
7. अष्टा. 6/1/144.
8. अष्टा. 4/3/105.
9. अष्टा. 6/3/109.

## "सुप्रतिने"ति

"सुप्रतिना मात्रार्थे[1]" इत्यत्र सुप्रतिनेति तृतीयानिपातनम् "अर्थवशाद् [2]विभक्तिविपरिणामो भवती" ति परिभाषाया [3]ज्ञापकम् । सुप्शब्दादुत्पत्स्यमानाया-स्तृतीयैकवचनविभक्तेरिह सुप्रतिशब्दान्निपातनं हि अस्या अभावे व्यर्थम् । यतः [4]"सहसुपे"ति तृतीयानिर्दिष्टं सुब्ग्रहणमिहानुवृत्तमित्यनिर्दिश्यमानेऽपि तृतीयैकवचने तृतीयासम्प्रत्ययोऽत्र सुलभः । न चात्र प्रतेरुत्तरस्या विभक्तेः श्रवणादिह निपातन-मेव नास्तीति शङ्क्यम् । यतः प्रतेरव्ययतया तत उत्पन्नाया विभक्तेः [5]"अव्ययादाप्-सुपः" इतिलुग्दुर्वारः । ज्ञापितायां चास्यां [6]"सहसुपे"त्यत्र तृतीयानिर्दिष्टमपि सत् सुप्पदमर्थवशादन्यविभक्त्यन्तं स्यात्तन्मा भवत्वित्येतदर्थं निपातनमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु "आङो[7] नाऽस्त्रिया"मित्यत्र [8]"अच्चघेः" इत्यतोऽनुवृत्तस्य षष्ठीवृत्तस्यापि "घे"रितिपदस्यार्थात् पञ्चमीनिर्दिष्टत्वंसिद्धिः, तथा "आने[9]मुक्" इत्यत्र "अतः" इतिपञ्चमीनिर्दिष्टस्यापि षष्ठीनिर्देशसिद्धिः ।

---

1. अष्टा. 2/1/9.
2. (क) व्याडिः प. सू. प. 63, पृ. 28,
   (ख) "अर्थाद् विभक्तिविपरिणामः" -
   - पु. दे. ल. प. वृ. प. 88, पृ. 150.
   (ग) "अर्थाद् विभक्तिविपरिणामः"-
   - सी. दे. बृ. प. वृ. प. 120, पृ. 268.
   (घ) "अर्थवशाद् विभक्तिविपरिणामः" -
   - ह. भा. प. भास्क. प. 122, पृ. 371.
3. "ज्ञापकं" च "सुप्रतिना मात्रार्थे (2/1/9) इति यस्मान्निपातयति । अत्र "सहसुपा" (2/1/4) इति तृतीयानिर्दिष्टं सुब्ग्रहणमनुवर्तते । तेनैवानिर्दिश्यमानेऽपि तृतीयासम्प्रत्ययो भविष्यति । न च प्रतेरुत्तरस्या विभक्तेः श्रवणमस्ति । लुका भवितव्यम् । "अव्ययादाप्सुपः" (2/4/82) इति । तदैतज् ज्ञापकं क्रियते । पश्यति तत्र तृतीयानिर्दिष्टमपि सत् अर्थादन्यविभक्त्यन्तं स्यादिति । किमेतस्या ज्ञापने प्रयोजनम् । "आनेमुक्" (7/2/82) इत्यत्र अत इति पञ्चमीनिर्दिष्टं सत् षष्ठीनिर्दिष्टं भवती" त्याह व्याडिः प. सू. प. 63, पृ. 28.
4. अष्टा. 2/1/4.
5. अष्टा. 2/4/82.
6. अष्टा. 2/1/4.
7. अष्टा. 1/3/120.
8. अष्टा. 1/3/119.
9. अष्टा. 1/2/82

[1]"एकवच्चास्यान्यतरस्याम्" [2]"वश्चास्यान्यतरस्या"मित्यत्र "अस्ये"ति तु अस्या [3]अनित्यत्वज्ञापनार्थं कृतम् ।

## "हलकले" ति

[4]"मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णि"जित्यनेन हलिकल्योर-दन्तत्वनिपातनं "वृद्धौ सत्यां टिलोप" इति वचनस्य [5]ज्ञापकम् । यतोऽस्य वचनस्याभावे निपातनमिदं व्यर्थम् । तथाहि – सूत्रेऽस्मिन् काभ्यां णिज् विधीयते । इकारान्ताभ्यां हलिकलिभ्याम्, अकारान्ताभ्यां हलकलाभ्यां वेति ? प्रश्ने इकारान्ताभ्यां णिज् विधीयते तयोर्णिच्यत्वं निपात्यते, यतो यदिअकारान्तेभ्यो णिज् विधीयेत हलिकल्योरत्वं च निपात्येत, तर्हि "अजहलत्" "अचकल"दित्यत्र सन्वद्भावप्रतिषेधो न स्याद् वृद्धौ कृतायामैकारस्य "टे"रितिलोपे कृतेऽनग्लोपि-त्वाद्रूपेऽत्रा निष्टे ·स्याताम् । तदुक्तम् - "हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थ[6]"मिति । यदि हि इकारान्ताभ्यां हलिकलिभ्यां णिच्यत्वं न निपात्येत, तर्हि इकारान्ताभ्यामाभ्यां णिचि[7] लुडि. च्लेश्चङि तिपि" णाविष्ठवत्[8]"

---

1. अष्टा. 1/2/69.
2. अष्टा. 6/1/39.
3. तथाहि– "यद्येवमस्येति शास्त्रे ग्रहणानि कर्तव्यानि न भवन्ति । 'एकवच्चास्यान्तरस्याम्' (1/2/69) 'वश्चास्यान्तरस्याम्' (6/1/39) अस्या एवानित्यत्वज्ञापनार्थं क्रियते" – इत्याह व्याडिः प. सू. प. 63, पृ. 28.
4. अष्टा. 3/1/21.
5. तथाहि–
   (क) "हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थ"मिति ग्रन्थेन ज्ञापकत्वमस्यास्मिन् सूचयति पत. जयादित्यश्च व्या. म. भा. 3/1/2/21, तथा का. 3/1/21.
   (ख) "हलिकल्योरदन्तत्वं निपात्यते । हलिंकलिं वा गृह्णाति हलयति, कलयति । महद्धलं हलिः । परत्वाद् वृद्धौ सत्यामपीष्ठवद्भावेन अगेव लुप्यते, अतः सन्वद्भावदीर्घौ न अजहलत्, अचकलत् " इति ग्रन्थेनास्य ज्ञापकत्वमस्मिन् सूचयति - भ. दी. वै. सि. कौ. नामधातु प्र. पृ. 304.
   (ग) "अयमेव निपातो "वृद्धौ सत्यां टिलोपः" इत्यत्र ज्ञापकः । यदि पूर्वं लोपो भवेत् तदाग्लोपकार्यसिद्धौ किमनेन निपातनेन ।" इत्याह ज्ञा. भि. त. बो. नामधातु प्र. पृ. 304.
   (घ) "मुण्डमिश्रेत्यत्र (सू. 3/1/21) हलिकल्योरत्वविधानात् ज्ञापकात् वृद्धौ कृतायां लोपः" – इत्याह श्रीना. ज्ञा. सं. 3, पृ. 63.
6. वा. व्या. म. भा. 3/1/2/21, पृ. 70 तथा का. 3/1/21.
7. "मुण्डमिश्र." अष्टा. 3/1/21.
8. "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" – ग. सू. वै. सि. कौ. ।

इति इष्ठवद्भावातिदेशात् "टेः[1] "इति इकारस्य लोपः, अचोञ्णिति[2]" इतिवृद्धिश्च प्राप्नोति, तत्र परत्वाद् वृद्धौ ऐकारे तस्य [3]"टे रिति लोपेऽप्यैकारस्य टेर्लोपो नाग्लोप इति "अनग्लोपे" इति प्रतिषेधाप्रवृत्त्या "सन्वल्लघुनि[4]चङ्परेऽनग्लोपे" इति सन्वद्भावे, [5]सन्यत" इत्यभ्यासस्य इत्वे, "दीर्घो[6]लघो"रितिदीर्घे च कृते "अजीहलत्" अचीकलत्" इत्यनिष्टे रूपे स्यातामिति वार्तिकस्यास्याऽऽशयः । अस्य वचनस्याभावे · तु" [7]"नाग्लोपिशास्वृदिता"मितिसूत्रस्थागितिप्रत्याहार-शब्दज्ञापितेन वृद्धेर्लोपोबलीया"निति वचनेनात्र "अहलि इ अत्" "अकलि इअत्" इत्यवस्थयोर्वृद्धिं बाधित्वा"हलि" इतीकारस्य [8]"टे"रिति टेर्लोपे ऽगूलोपित्वमङ्गमस्यास्तीति" अनगूलोपे" इति निषेधोऽत्वनिपातनं विनापि सुलभ इति सन्वद्भावप्रतिषेधार्थं हलिकल्योरत्वनिपातनं व्यर्थम् । ज्ञापिते चास्मिन् वचनेऽनेन वृद्धौ[9]कृतायां टेर्लोपे[10] ऐकारस्य अकृत्वाभावात् सन्वद्भावप्रतिषेधो न प्राप्नोतीति अग्लोपित्वसम्पादनद्वारा सन्वद्भावप्रतिषेधार्थं निपातनमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलम् [11]"अपीपटदि"त्यस्य साधुत्वसिद्धिः अस्य वचनस्याभावे हि साधुत्वमस्य न सिद्ध्येत् । वृद्धौ[12]कृतायां [13]टिलोपेऽनग्लोपित्वात् [14]सन्वद्भावदीर्घौ[15]हि संभवतः।

भट्टनागेशस्तु मुण्डमिश्रेति भाष्यसिद्धान्तं [16]व्याख्याय तद्भाष्यमेकदेश्युक्तिरिति निश्चिन्वन् "णौ चङ्युपधाया ह्रस्वः" इति सूत्रस्थम् "नाग्लोपिशास्वृदिता"मिति

---

1. अष्टा. 6/4/155.
2. अष्टा. 7/2/115.
3. अष्टा. 6/4/155.
4. अष्टा. 7/4/93.
5. अष्टा. 7/4/79.
6. अष्टा. 7/4/94.
7. अष्टा. 7/4/2.
8. अष्टा. 6/4/155.
9. "अचो ञ्णिति" - अष्टा. 7/2/115.
10. "टेः" - अष्टा. 6/4/155.
11. "पटु"शब्दात् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" - ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 238, इतिणिचि सनाद्यन्तधातुत्वेन णिजन्ताल्लुङि च्लौ च्लेश्चङि तिपि द्वित्वादिकार्येषु कृतेषु रूपमिदम् ।
12. "अचोऽ ञ्णिति" - अष्टा. 7/2/115.
13. "टेः" - अष्टा. 6/4/155.
14. "सन्वल्लघुनि चङ्परेऽनग्लोपे" - अष्टा. 7/4/93.
15. "दीर्घो लघोः" - अष्टा. 7/4/94.
16. "परत्वाद्वृद्धाविति । अतएव "मुण्डमिश्रे"त्यत्र हलकलेति हलिकल्योरदन्तत्वनिपातनं भाष्योक्तं सार्थकम् । वृद्धेः पूर्वं लोपे तु इकारलोपेऽप्यग्लोपित्वसैत्त्वेन तद्वैयर्थ्यं स्पष्टमेव ।

सूत्रस्था"गि"ति प्रत्याहारग्रहणज्ञापितं "वृद्धे लोपोबलवा"नित्येव वचनं सिद्धान्तिभाष्य-सम्मतं मत्वा अपपटदित्येव रूपं साधु [1]मनुते । तस्मादेकदेशिभाष्यसूचित- ज्ञापकत्वमत्रा-दन्तत्वनिपातनस्य न युक्तम् । ज्ञाप्यवचनस्यान्यत्र फलाभावश्च ! "सिद्धान्तिभाष्यरीत्या हि "अपीपट"दित्यस्य साधुत्वं गगनकुसुमायितमिति भट्टाऽऽशयः ।

अत्र सिद्धान्ते भट्टनागेश-श्रीनागेशयोः परस्परं मतभेदोऽपि 'तौ नैकाविति' निर्विवादं साधयति. यतो यद्युभावभिन्नौ स्यातां तर्हि स्वसिद्धान्तस्य ज्ञापक- संग्रहे दिङ्मात्रदर्शनमपि श्रीनागेशेन यन्न कृतं तन्न संघटते ।

भट्टोजिदीक्षितोऽपि "वृद्धेर्लोपो बलीया"निति भाष्यसम्मतं मत्वा "अपपट"-दित्यस्य साधुत्वं [2]मनुते । तस्मादत्र भट्टनागेशमतमेव युक्तं, न तु ज्ञापकसंग्रहोक्तं श्रीनागेशमतं, नापि चान्यमतमिति मन्ये । तस्मादस्य निपातनत्वं तस्य ज्ञापकत्वं- च न युक्तमिति निश्चीयते ।

---

लोपस्य शब्दान्तरप्राप्त्या, वृद्धेः स्वत एवानित्यत्वेनोभयोर्नित्ययोः परत्वाद् वृद्धौ आवादेशात् पूर्वं परत्वादाङ्गत्वाच्च लोपे इत्यनग्लोपित्वात् सन्वत्त्वं भवत्येवेति भावः" - इत्यनेन ग्रन्थेन भाष्यसिद्धान्तो व्याख्यातोऽनेन. ल. श. शे. तिङन्ते चुरादि प्र. पृ. 240.

अनेन हि – "वृद्धे र्लोप इति । अतएव "नाग्लोपी"ति सूत्रेऽग्लोपीत्यत्रागितिप्रत्याहारग्रहणं चरितार्थम् । इदुदुपधेभ्यो लुङ् तु न भाष्यप्रामाण्यादितिभावः । साम्प्रतमिकमेव ज्यायः । "मुण्ड मिश्रे"ति सूत्रस्थन्त्वेकदेश्युक्तिः, "अचकल"दित्यादौ वृद्धेरपि नित्यत्वमाशङ्क्य शब्दान्तरप्राप्त्या अनित्यत्वप्रतिपादकस्य "मुण्डे"ति सूत्रस्थभाष्यस्य तत्त्वाऽऽवश्यकत्वात् । लोपस्य स्थानिवत्त्वेन "अत उपधायाः" इत्यस्याप्राप्ते., "अचोऽञ्णिती"त्यस्य स्थान्यभावेनाप्राप्तेश्च, "अत उपधाया" इत्यस्याभिन्नलक्षणत्वाद् भिन्नस्थानिकत्वाच्च । अतएव "णौचङी" तिसूत्रे "अवीवद"दित्यत्र णिलोपेऽग्लोपित्वाद् ह्रस्वप्रतिषेधः प्राप्नोति । नच परत्वाद् वृद्धौ कृतायां लोप इत्यग्लोपित्वाभावः । "नाग्लोपी"तिसूत्रे प्रत्याहारग्रहणेन वृद्धेर्लोपस्य बलवत्त्वज्ञापनात् । अथवा "ण्यल्लोपौ" इति पूर्वविप्रतिषेधात् पूर्वंणिलोप' इत्याशङ्क्य णेर्णिच्युपसंख्यानेन परिहृतम् । एतदेवाभिप्रेत्य सप्तमे कैयटआह - "अनाश्रित्य ज्ञापकमत्वनिपातनमुक्तं, ज्ञापकाश्रयणं तु ज्याय"इति । किंच हलकलेत्यकारान्तयोरेव सूत्रे ग्रहणात् "अचकल"दित्यादिसिद्धं, हलिकलिभ्यां णिजेव नास्तीत्यफलमत्वनिपातनम् । न च तत्करोतीति णिच् , इकारान्तयोरकारान्तयोश्च पर्यायत्वेन हलकलग्रहणस्य नियमार्थत्वेन तयोर्णिजभावादिष्टसिद्धेः । एवं च चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कार्यः, तत्साध्यस्यावीवददित्यादेर्णेर्णिच्युपसंख्यानेन सिद्धेः । अन्येषान्तु तत्साध्यानामनभिधानमेवेति नाग्लोपीति सूत्रे कैयटे स्पष्ट"मित्युक्तम् ।

2 अनेन हि - "णौ चङी'त्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीया'निति स्थितम् । अपपटत्" इत्युक्तम् वै. सि. कौ. चुरादि प्र. पृ. 239.

# तृतीयोऽध्यायः

## ज्ञापका निर्देशाः

भगवतः पाणिनेराचार[1] एवात्र निर्देशपदेन व्यवह्रियते । सच आचारो[2]व्यवहारात्मकः । ये च निर्देशाः किमपि परिभाषारूपं, तद्व्यतिरिक्तं वचनं वा ज्ञापयन्त एवोपपद्यन्ते, ते 'ज्ञापका निर्देशाः' - इत्युच्यन्ते । निर्देशश्च द्विविधः शब्दनिर्देशोऽर्थनिर्देशश्चेति । तत्र तावच्छब्दनिर्देशा निरूप्यन्ते ।

## (क) ज्ञापकाः शब्दनिर्देशाः

### 'अ'जिति, 'इ'जिति निर्देशौ

[3]उपदेशेऽजनुनासिक इत्' 'इजादेश्च [4]सनुमः' इतिसूत्रयोः क्रमशः 'अजि'ति 'इजि'ति निर्देशौ 'क्वचिदेवंविध-चकारस्य कुत्वं न भवती'ति वचनस्य [5]ज्ञापकौ । यतोऽत्रोभयत्र [6]प्रत्ययलक्षणेन 'अजि'त्यस्य 'इजि'त्यस्य च पदत्वेन[7] तदन्तजकारयोः [8]चोः कुरिति कुत्वस्य दुर्वारतया निर्देशाविमावनुपपन्नौ । ज्ञापिते चास्मिन् वचने कुत्वाभावस्यात्र सुलभतया निर्देशाविमौ समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु '[9]अल्पाच्तरम्' इत्यादौ कुत्वाभावस्य साधुत्वसिद्धिः ।

वस्तुतस्तु 'छन्दोवत्सूत्राणि भवन्ती'ति [10]भगदुक्तप्रमाणेन निर्देशयोरनयोरप्युपपत्तौ नैतावुक्तवचनस्य ज्ञापकौ । ज्ञापितवचनस्य फलमपि 'अल्पाच्तर'मित्यत्र 'चोः

---

1. तथाहि – "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः"- इत्याह – पत. व्या. म. भा. 1/1/2/5.
2. तथाहि - "आचारो व्यवहारः" - इत्याह कै. प्रदी. 1/1/2/5
3. अष्टा. 1/3/2.
4. अष्टा. 8/4/32.
5. तथाहि - उपदेशेऽजनुनासिक इत्' (1/3/2) 'इजादेशच सनुमः (8/3/32) इत्यादिनिर्देशो लिङ्गम् - 'एवंविधचकारस्य कुत्वं न भवति । तेनाल्पाच्तरम् (2/2/15) इत्यादेः सिद्धिरित्युक्तं पु. दे. - ज्ञा, समु. तृतीये भूपादे पृ. 63.
6. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62.
7. 'सुप्तिङन्तं पदम्' - अष्टा. 1/4/14.
8. अष्टा. 8/2/30.
9. अष्टा. 2/2/15.
10. 'वृद्धिरादैच् (1/1/1) कुत्वं कस्मान्न भवति 'चोः कुः' पदस्येति ?। भत्वात् । कथं भसंज्ञा ? । 'अयस्मयादीनिच्छन्दसी'ति । 'छन्दसी'त्युच्यते । न चेदं छन्दः । छन्दोवत्सूत्राणि । छन्दोवत्सूत्राणि भवन्ति । यदिभसंज्ञा 'वद्धिरादैजदेङ्गुणः' - इति जश्त्वमपि न प्राप्नोति । उभयसंज्ञान्यपि च्छन्दांसि । उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद् यथा 'स सुष्टुभा स ऋक्वता गणेन' । पदत्वात् कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात् कुत्वं न भविष्यति' इति पूर्णा भगवदुक्तिः व्या. म. भा. 1/1/3/1.

कु'रिति कुत्वाभावस्य साधुत्वं भाष्यरीत्यान्यथासिद्धम् । अतोऽनयो र्निर्देशयोः पुरुषोत्तमदेवोक्तं ज्ञापकत्वं न युक्तमिति मन्ये । इत्थम् - 'एवं च तृजकाभ्यामिति (2/2/15) निर्देशात् 'प्रत्ययचकारस्यापि कुत्वं न भवति' इति पुरुषोत्तमदेवोक्तिर-प्ययुक्ता[1], उक्तभाष्यात् ।

## 'अजे'रिति निर्देशः

'[2]अजेर्व्यघञपो'रिति सूत्रे 'अजे'रिति निर्देशः 'अनित्यमार्धधातुकाधिकारीय-'मिति वचनस्य [3]ज्ञापकः । यतोऽत्र 'इक्श्तिपौ धातुनिर्देशे'[4] इति वार्तिकेन [5]अज्धातोरिक्प्रत्यये कृते सति निष्पन्नस्याजीत्यस्य कृतः षष्ठ्या निर्देशोऽजेरित्यनुप-पन्नः । अस्य वचनस्याभावे हि इक् प्रत्ययस्याऽऽर्धधातुकतयात्र वीभावो दुर्वारः । ज्ञापिते चास्मिन्वचने वीभावस्याऽऽर्धधातुकाधिकारीयतया तदनित्यत्वेनात्र तदप्रवृत्तौ निर्देशोऽयं समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु '[6]ब्रुविशासिगुणेन चे'ति श्लोकवार्तिके 'ब्रुवी'त्यस्य साधुत्व-सिद्धिः । एतद्वचनाभावे हि 'ब्रुवोवचि'रिति वच्यादेशस्य दुर्वारतया नास्य साधुत्वं सिद्ध्येत् ।

## 'अध्ययने' इति निर्देशः

'[7]णेरध्ययने वृत्त'मिति सूत्रे 'अध्ययने' इति निर्देशः 'पूर्वं धातुः साधनेन युज्यते[8] पश्चादुपसर्गेणे'ति परिभाषाया ज्ञापकः[9] । यतोऽस्या अभावेऽत्र पूर्वं धातोः

---

1. ज्ञा. समु. तृनीयें भूपादे पृ. 63. ।
2. अष्टा. 2/4/56 ।
3. तथाहि – 'अजेर्वीत्यत्र (2/4/56) अजेरकृतवीभाव-निर्देशात् ज्ञापकात् 'अनित्यमार्द्धधातु-काधिकारीय'मिति सामान्यज्ञापकात् ब्रुविशासिगुणेनेति श्लोकवार्तिक (1/4/51) निर्देशे ब्रुवोवचिरिति (2/4/53) वच्यादेशो न भवति । क्तिचि ब्रूतिरित्यपि भवतीत्यन्ये' इत्याह पु. दे. ज्ञा. समु. अष्टमे-द्विगुपादे पृ. 69.
4. वा. वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 565.
5. 'अज गतिक्षेपणयोः' धा. पा. भ्वा. 230 ।
6. 'दुहि याचि रुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
   ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना" ।।
   –इतिपूर्वश्लोकवार्तिकम् म. भा. 1/4/3/51. ।
7. अष्टा. 7/2/26.
8. (क) सी. दे. बृ. प. वृ. प. 128, पृ. 271 ।
   (ख) नी. दी. प. वृ. प. 29, पृ. 298 ।
   (ग) ह. भा. प. भास्क. प. 131, पृ. 372.
9. तथाहि–
   (क) "अत्र च ज्ञापकं 'णेरध्ययने वृत्तम्' (7/2/26) इतिनिर्देशः" इत्याह नी. दी. प. वृ. प. 29, पृ. 298 ।

इङः[1] उपसर्गेण अधिना योगः स्यात् । तथा सति अधेरिकारस्य इङः इकारेऽचि परे 'अकः [2]सवर्णे दीर्घः' इतिसवर्णदीर्घेकारादेशे कृते 'अधी' इत्यस्मात् पश्चात् साधनयोगे कर्मणि '[3]कृत्यल्युटो बहुल'मिति ल्युटि '[4]युवोरनाका'विति योरनाऽऽदेशे यणि कृदन्तत्वात् प्रातिपदिकत्वे[5] सप्तम्येकवचने 'अध्यने' इति निर्देशस्यैवौचित्येन निर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यामत्र पूर्वं धातोरिङः साधनेन योगे कर्मणि ल्युटि योरनाऽऽदेशे '[6]सार्वधातुकार्धधातुकयो'रिति गुणे 'अयने'त्यस्य पश्चादुपसर्गेण अधिना योगो भवतीत्युपसर्गेकारस्य 'अध्ययने'ति प्रातिपदिकात् सप्तम्येकवचने निर्देशोऽयमुपपद्यते । न चात्र '[7]इङिकोरधि- पूर्वकयोरेवाध्ययनस्मरणवृत्तित्वात् ज्ञापितायामप्यस्यां केवलस्य इङोऽनर्थकस्य पूर्वं साधन-सम्बन्धोऽशक्यः कर्त्तुमित्यपि शङ्क्यम् । यस्मादिङिकावेवाध्ययनस्मरण- योरभिधायकौ अधिस्तु द्योतकः । निपाता हि द्योतकाः । निपातानां वाचकत्वे तु धातोरनर्थकतया [8]धातुसंज्ञैव न स्यात् क्रियाया अभावात् । ज्ञापिताया अस्याः फलं तु 'संस्क्रियते' इत्यत्र '[9]गुणोऽर्तिसंयोगाद्योः' इति गुणाभावः । अस्या अभावे हि पूर्वमत्र धातोः कृञः[10] उपसर्गेण समायोगे 'संपरिभ्यां[11] करोतौ भूषणे' इति सुटि 'संस्कृ'' इत्यस्य पश्चात् साधनयोगे कर्मणि लटि ते '[12]सार्वधातुके यक्, इति यकि टितस्तकारस्य[13]टेरेत्वे[14] संस्कृयते' इत्यवस्थायां 'स्कृ' इत्यस्य ऋकारान्त-

---

(ख) "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' । 'णेरध्ययने वृत्तम्' (7/2/26) इत्यत्र अध्ययने इति निर्देशात्" इत्याह ह. भा. प. भास्क. प. 131, पृ. 372.

1. धा. पा. 'इङ् अध्ययने' - अदा. 1046 ।
2. अष्टा. 6/1/101 ।
3. अष्टा. 3/3/113 ।
4. अष्टा. 7/1/1 ।
5. 'कृत्तद्धितसमासाश्च' - -अष्टा. 1/2/46.
6. अष्टा. 7/3/84 ।
7. धा. पा. 'इङ् अध्ययने' 'इक् स्मरणे' अदा. 1046, 1047 ।
8. 'भूवादयो धातवः' - अष्टा. 1/3/1 ।
9. अष्टा. 7/4/29.
10. धा. पा. 'डुकृञ् करणे' तना. 1473 ।
11. अष्टा. 6/1/137 ।
12. अष्टा. 3/1/67 ।
13. 'अचोऽन्त्यादि टि' - अष्टा. 1/1/64 ।
14. 'टित आत्मनेपदानां टेरे' - अष्टा. 6/4/79 ।

संयोगादिधातुतया 'रिङ्[1]शयग्लिङ्क्षु' इति रिङोऽपवादो '[2]गुणोऽर्तीति गुणो दुर्वारः स्यात् । अस्याः सत्त्वे तु कृञोऽत्र पूर्वं साधनयोगे 'कृयते' इत्यवस्थायां रिङोऽपवादस्य गुणस्याप्राप्त्या ऋकारस्य रिङि 'क्रियते' - इत्यस्य पश्चादुपसर्गेण समायोगे सुटि[3] 'स्क्रि' इत्यस्य संयोगादित्वेऽपि ऋकारान्तत्वाभावाद् गुणाभावः सिद्ध्यति ।

वस्तुतस्तु परिभाषाया अस्याः किमपि फलं नास्तीति नास्य निर्देशस्यैतस्या ज्ञापकत्वं युक्तम् । निर्देशस्तु सौत्रत्वादप्युपपद्यते । नहि ज्ञाप्यस्य प्रयोजनं विना कश्चित् किमपि ज्ञापयितुं प्रभुः । न च 'संस्क्रियते' इत्यत्र ज्ञापिताया अस्याः फलं 'गुणोर्ती'ति- गुणाभावः शक्यो वक्तुम् । 'प्रयोजनं नाम तदेव यन्नियोगतः स्या'-दित्युक्तेर्नात्र[4] गुणाभावः प्रयोजनम् ।यतोऽसौ 'पूर्वं [5]धातुरुपसर्गेण युज्यते पश्चात् साधनेने'ति पक्षेऽप्यन्यथासिद्धः । तथाहि – 'गुणोर्ती'ति सूत्रे 'नित्यं [6]छन्दसी'ति सूत्रा'न्नित्य'-मित्यनुवर्तते । तथा सति "अर्तेः नित्यं संयोगादीनाम् ऋदन्तानां 'स्मृ' प्रभृतीनां च यकि लिङि च यकारादावसार्वधातुके गुणः स्या"दिति' 'गुणोऽर्ती'ति सूत्रार्थः पर्यवसन्नः । अतः कृञोऽत्र न नित्य-संयोगादित्वमिति गुणाभावोऽन्यथा-सिद्धः । [7]जयादित्यः जिनेन्द्रबुद्धिः[8] हरदत्तमिश्रश्च[9] 'संस्क्रियते' इत्यादौ गुणाभावोऽन्यथा मन्वते । सर्वथापि ज्ञापिताया अस्याः प्रयोजनं नास्तीति नास्य

---

1. अष्टा. 7/4/28 ।
2. अष्टा. 7/4/29 ।
3. 'संपरिभ्यां करोतौ भूषणे' - अष्टा. 6/1/137 ।
4. व्य. म. भा. ।
5. (क) 'अन्ये तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेत्याहुः' सी. दे. बृ. प. वृ. प. 129, पृ. 272 ।
   (ख) 'पूर्वं धातुरुपसर्गेण युज्येत पश्चात् साधनेन' - नी. दी. प. वृ. प. 28, पृ. 298 ।
6. अष्टा. 7/4/8 ।
7. अनेन हि – "इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वात्, अभक्तत्वाद्वा संयोगादित्वभङ्गस्य नास्तीति गुणो न प्रवर्तते" इत्युक्तम् – का. 7/4/29 ।
8. अनेन हि – "अथ संस्क्रियते, संस्क्रियादित्यत्र कस्मान्न भवति, भवति हि करोतिरपि सुटि कृते संयोगाद्यङ्गम्; इत्यत आह - इहेत्यादि । बहिरङ्गत्वं तु सुटो द्विपदाश्रयत्वात् । गुणस्य पुनरन्तरङ्गत्वमेकपदाश्रयत्वात् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति सुटोऽसिद्धत्वात् संयोगादित्वमङ्गस्य नास्ति । अथापि कथञ्चित् सुटः सिद्धत्वं स्यात्, एवमप्यभक्तत्वात् सुटः संयोगादित्वं नास्ति, अतो गुणो न प्रवर्तते । अङ्गाधिकारादङ्गावयवः संयोगो गृह्यते । नह्यत्राभक्तत्वे सुटोऽङ्गावयवसंयोग उपपद्यते" इत्युक्तम् न्या. 7/4/29 ।
9. अनेन हि – "संस्क्रियते, संस्क्रियादित्यत्र सुटि कृते संयोगाद्यङ्गमिति गुणप्रसङ्ग इत्यत आह - इहेति । बहिरङ्गत्वं सुटो द्विपदाश्रयत्वात्, इदं तु पूर्वं धातुः साधनेन युज्यते' इत्याश्रित्योक्तम् । पक्षान्तरेऽप्याह - अभक्तत्वाद्वेति" इत्युक्तम् – पदम. 7/4/29 ।

निर्देशस्यैतस्याः परिभाषाया ज्ञापकत्वं युक्तमिति निश्चिनुमः । सम्मतोऽयं राद्धान्तः सीरदेव - हरिभास्करयोर्यतोऽमू तथ्यमिदमुपन्यस्तवन्तौ[1] ।

## 'अनपुंसकस्य' 'असूर्यललाटयो'रिति निर्देशौ'

'[2]सुडनपुंसकस्ये'तिसूत्रे 'अनपुंसकस्ये'ति, '[3]असूर्यललाटयोर्दृशितपो'रिति सूत्रे 'असूर्येति च निर्देशौ 'प्रसज्य [4]प्रतिषेधेऽपि नञ्समासोऽस्ती'वचनस्य ज्ञापकौ[5] । यतोऽत्र नञो नपुंसकेन, सूर्येण चान्वयौ न स्तः, किन्तु क्रमशो भवतिना पश्यतिना चेति नञ्नपुंसकयोः, नञ्सूर्ययोश्च सामर्थ्याभावात् समासो न प्राप्नोतीति निर्देशाविमावनुपपन्नौ । ज्ञापिते चास्मिन् वचने सामर्थ्याभावेऽपि समासस्य सुलभतया निर्देशावमू समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'असूर्यं पश्यानि मुखानि' 'अपुनर्गेयाः श्लोकाः' 'अश्राद्धभोजी ब्राह्मणः' इत्येतेषु प्रयोगेषु[6] नञ्-समासस्य साधुत्व-सिद्धिः । एतद्वचनाभावे हि नैषां साधुत्वं सिद्ध्येत् ।

---

1. तथाहि–
   - (क) "संस्क्रियते इत्यत्रापि 'नित्यं छन्दसि' (7/4/8) इत्यतो नित्यग्रहणानुवृत्तेर्नित्यसंयोगादेर्ग्रहणात्" इत्याह -सी. दे. बृ. प. वृ. प. 129, पृ. 272 ।
   - (ख) "यद्यपि 'ओमाङोश्च' (6/1/95) इतिसूत्रीयाङ्ग्रहणमूलकः, 'पूर्वं धातुरुसर्गेण युज्यते इत्यादिपक्षः 'परिष्कण्णः' इत्यत्रेवात्र गृह्यते तथापि न गुणः । नित्यग्रहणानुवृत्त्या नित्यसंयोगादेरेव तद्विधानात्" इत्याह ह. भा. प. भास्क. प. 131, पृ. 372.
2. अष्टा. 1/1/43 ।
3. अष्टा. 3/2/36 ।
4. प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्" इत्युक्तं हरिणा । वाक्यपदीयकारिकांशोऽयं परमलघुमञ्जूषायां निपातार्थ-विचारे समुद्धृतम् पृ. 128 ।
5. तथाहि–
   - (क) 'असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति । नहि नञो नपुंसकेन सामर्थ्यम् । केन तर्हि ? । भवतिना । न भवति नपुंसकस्येति ग्रन्थेन भगवता ज्ञापकत्वं सूचितम् - व्या. म. भा. 1/1/6/42 ।
   - (ख) 'तत्र स्त्रीपुंसयोरितिवक्तव्ये 'अनपुंसकस्ये'ति वचनं ज्ञापकम् – 'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीत्याह कै. प्रदी. 1/1/6/42 ।
   - (ग) 'समासश्चायमसामर्थ्येऽपि भवति गमकत्वात्, अस्मादेव वचनाद्वेत्याह जया. का. 1/1/43 ।
   - (घ) 'सुट्स्त्रीपुंसयो'रिति वाच्ये सुडनपुंसकस्येति (1/1/43) ज्ञापकं प्रसज्यप्रतिषेधेऽपि नञ्-समासोऽस्ती' ति कैयटः । तेनाश्राद्धभोजीति सिद्ध्यती'त्याह पु. दे. ज्ञा. समु. प्रथमे पादे पृ. 58 ।
   - (ङ) 'प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः । तत्र विशेष्यतया क्रियान्वयनियमात्सुबन्तेनासामर्थ्येऽपि असूर्यललाटयोरित्यादिज्ञापकात्समास इत्याह भ ना. परमलघुमञ्जूषा निपातार्थ-विचारे पृ. 128 ।
6. व्या. म. भा. 1/1/6/42 ।

## 'अनुनासिक' इत्यादिनिर्देशाः[1]

'मुखनासिकावचनो नुनासिकः'[2], इत्यादिसूत्रेषु 'अनुनासिक' इत्यादौ ककारादिवर्णाऽव्यवहितपूर्ववर्तिन इकारादेर्यण्करणरूपाचारात्मका निर्देशाः 'प्रत्याहारेष्वितां न ग्रहण'मिति वचनस्य [3]ज्ञापकाः । यतोऽत्र यदि प्रत्याहारेषु इतामपि ग्रहणं भवेत्तर्हि 'ऋलृक्[4]' इति ककारस्याप्यचि पाठस्य दुर्वारतया तस्मिन् परे इकारस्य 'इको[5]यणची'ति यकारादेशे'लोपो व्यो[6]र्वली'ति यकारस्य लोपे च सति 'अनुनास्क' इत्यादिनिर्देशानामेवौचित्यात् 'अनुनासिक' इत्यादि निर्देशा- अनुपपन्नाः । ज्ञापिते चास्मिन् वचने ककारस्याच्त्वाभावात् तदव्यवहित - पूर्वस्येकारस्य यणोऽप्राप्त्या 'अनुनासिक' इत्यादिनिर्देशाः समुपपद्यन्ते ।

'ऋलृक्' इति ककारस्याचि पाठेऽपि '[7]प्रत्ययस्थात्' इति सूत्रेणेत्त्व-विधान-सामर्थ्यदिवानुनासिक इत्यादौ यण्लोपौ न भवेताम्, अन्यथाकारलोपमेव विदध्यात्, अतोऽनुनासिक इत्यादिनिर्देशाः 'प्रत्याहारेष्वितां न ग्रहण'मिति वचनस्य न ज्ञापकाः इति तु नाऽऽशङ्कनीयम् । यतो लोपविधाने 'प्रत्ययस्थात्कात्पूर्वस्यातो लोप आपूसुप'इति न्यासस्यावश्यकतया तत्र वर्णाधिक्याद्गौरवं दुर्निवारं स्यात् । तस्मादेतेषां निर्देशानामुक्तवचनज्ञापकत्वं स्थाने । ज्ञापनफलं तु 'गौरीकान्त - ' प्रभृतिशब्देषु यणाद्यभावः ।

श्रीनागेशस्तु–अच्तद्व्याप्यप्रत्याहारेष्वितां न ग्रहणम्, 'उणादयः'[8] इत्यादि [9]ज्ञापकादित्याह । 'उणादयो बहुल'मित्यादि निर्देशा अन्यथानुपपत्त्या 'अच्त-द्व्याप्ये'त्यादि वचनज्ञापकाः, ज्ञापिते च वचने णकारस्याचि प्रवेशाभावादुकारस्य यणोऽप्राप्त्या निर्देशा अमी समुपपद्यन्त इति श्रीनागेशाशयः । अत्र श्रीनागेशोक्तं ज्ञापकत्वं युक्तं, किन्तु ज्ञापितवचनाकारो न युक्तः प्रतिभाति । यतो हलादिप्रत्याहारमध्यवर्तिनामपीतो हलादि प्रत्याहारेषु ग्रहणं नेष्टम् । तत्र तद्ग्रहणं श्रीनागेशोक्त - ज्ञापितवचनाकारेण न सिद्ध्यति । नहि हलादिप्रत्याहारा

---

1. अत्रादिपदेन 'तृषिमृषिकृषेः काश्यपस्य' 1/2/25, इत्यादि-निर्देशा ग्राह्याः ।
2. अष्टा. 1/1/8 ।
3. तथाहि – "प्रत्याहारेष्वितां न ग्रहणम्, अनुनासिक - इत्यादि-निर्देशा' दित्याह - भ. दी. वै. सि. कौ. संज्ञा प्र. पृ. 7. ।
4. मा. सू. 2 ।
5. अष्टा. 6/1/77 ।
6. अष्टा. 6/1/66 ।
7. अष्टा. 7/3/44 ।
8. 'उणादयो बहुलम्'– –अष्टा. 3/3/1 ।
9. ज्ञा, सं. 1/1, पृ. 6 ।

अच्प्रत्याहारव्याप्याः, किन्तु 'अण्' 'अक्' 'इक्' 'उक्' 'एङ्' 'एच्' इत्यादि प्रत्याहारा एव अच्प्रत्याहारव्याप्याः ।

अत्र एन. एस. रामानुजताताचार्यकृतं श्रीनागेश-ग्रन्थ-विवरणमपि न युक्तम् । तेन हि 'वस्तुतस्तु' अच्प्रत्याहारे इतां ग्रहणं न' इत्येव ज्ञापकसिद्धं वचनम्, न तत्र 'तद्व्याप्य' इत्यस्य प्रवेशः । न च अगादिप्रत्याहारे इतां ग्रहणापत्तिरितिवाच्यम् । हल्षु उच्चारणार्थकाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वा'दित्याह[1] । तत्र – अगादिप्रत्याहारेषु हल्घटितप्रत्याहारत्वं नोपपादयितुं शक्यमिति विवरणासङ्गतिः किं न स्पष्टा ?

'अनुनासिक' इत्यादि निर्देशाः प्रत्याहारेष्वितां न ग्रहण'मिति वचनं ज्ञापयन्तीत्यत्र भाष्यमपि प्रमाणम् । तत्र हि 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ग्रहणं न ? आचारा'दित्युक्तम्[2] । अत्र च 'आचारो व्यवहारः' । 'तृषिमृषिकृषे'रिति यण् न कृत[3] इत्याह कैयटः ।

'प्रत्याहारेऽनुबन्धाना'मिति भाष्यात् - 'अच्प्रत्याहारे इतां न ग्रहण'मित्येव वचनं लभ्यत' - इति तु न शङ्कनीयम् । तथा सति हल्प्रत्याहारे – '[4]लणो'ऽकारस्य प्रवेशो दुर्वार इति 'सोऽस्तीत्यादि - प्रयोगेषु सुलोपापत्तिः स्यात् । न च लणोऽकारो नेत्संज्ञकः किन्तूच्चारणार्थक इति वाच्यम्, लणोऽकारस्येत्संज्ञकत्वे 'लृकारस्य लपरत्वं [5]वक्ष्यामी'ति भाष्योक्तेरेव ज्ञापकत्वात् । कैयटेन हि 'लृकारस्य लपरत्वं वक्ष्यामी'ति भाष्यं व्याचक्षाणेन "व्याख्यास्यामीत्यर्थः । रपर इत्यत्र 'र' इति लणिति-लकाराकारेण प्रत्याहार आश्रीयते । तत्रान्तरतम्यादृकारस्याण् रपरः, लृकारस्य [6]लपर" इत्युक्तम् । भट्टोजिदीक्षितोऽपि 'लण्सूत्रेऽकारश्चे'त्याह[7] ।

अत्र- 'भट्टनागेशो लण्सूत्राकारस्यानुनासिकत्वमप्रामाणिक'मिति[8] निरचैषीदतोरप्रत्याहारो गगन-कुसुमायित इत्यपि कथनं न स्थाने । यतोऽत्र भट्टनागेशस्य महान् प्रमादः परिलक्ष्यते । स च प्रमादोऽत्र प्रबन्धे 'ज्ञापिका भाष्योक्तयः' इति विवेचनावसरे स्फुटीभविष्यति । इत्थं पूर्वोक्तभाष्येऽच्पदं 'हल्' 'हश्' प्रभृतीनामप्युपलक्षणमिति निश्चिनुमः । यतो हल्प्रत्याहारेऽपि इतां ग्रहणाभावम्

1. ज्ञा. सं. वि. 1/1, पृ. 6 ।
2. व्या. म. भा. 1/1/2/5 ।
3. प्रदी. 1/1/2/5 ।
4. मा. सू. 6 ।
5. व्या. म. भा. 1/1/4/9 ।
6. प्रदी. 1/1/4/9 ।
7. वै. सि. कौ. संज्ञा. प्र. पृ. 4 ।
8. ल. श. शे. संज्ञा प्र. पृ. 34 ।

[1]'एतत्तदोः सुलोपोऽकोऽनञ् समासे हली'ति निर्देशो ज्ञापयति । नह्यत्राकारे परे सुलोपो दृश्यते । हलि लणोऽकारस्य पाठे हि 'अको' - घटकाकारे परे सुलोपशब्दोत्तरस्य सोर्लोपो दुर्वार इति निर्देशोऽयमनुपपन्नः ।

ज्ञापिते चास्मिन् वचनशरीरे प्रविष्टं प्रत्याहारपदं 'प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्र (बाहुलकादधिकरणे घञ्) इति व्युत्पत्त्या निष्पन्नं योगरूढम् । योगमात्रस्वीकारे हि 'अणुदित्'[2] - सूत्र-सिद्धासु 'अ' 'इ' 'उ' इत्यादिसंज्ञास्वतिप्रसङ्गोऽस्य दुर्वारः स्यात् । अत एवोक्तं भट्टोजिदीक्षितेन - 'आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन [3]व्यवह्रियन्ते' इति । ताश्च 'अण्' 'इण्' 'अक्' 'उक्' 'अच्' 'अल्' 'हल्' इत्यादिस्वरूपाः सुप्रसिद्धाः सन्ति ।

[4]भाष्यवार्तिके यद्यपि 'प्रत्याहार' - शब्दोऽक्षरसामाम्नायेऽपि[5] प्रयुक्तस्त - थाप्यसौ तादर्थ्यात्[6] तदर्थे [7]लाक्षणिकः । यतो महाभाष्येऽपि अजादिसंज्ञासु कृतः प्रत्याहारशाब्द-प्रयोगः[8] ।

## 'अन्यतरस्यां' 'विभाषा' 'वे'ति निर्देशाः

'आपोऽन्य[9]तरस्याम्' [10]'विभाषाश्वेः' 'वृतोवा'[11] इत्यादि सूत्रेषु क्रमशः 'अन्यतरस्यां' 'विभाषा' 'वा' इत निर्देशाः 'पर्यायशब्दानां गुरुलाघव[12]चर्चा नाद्रियते' इति परिभाषाया [13]ज्ञापकाः । यतोऽत्र सर्वत्र लाघवानुरोधेन 'वे'ति

---

1. अष्टा. 1/1/132 ।
2. 'अणुदित्सवर्णस्य चाप्रत्ययः' –अष्टा. 1/1/69 ।
3. वै. सि. कौ. संज्ञा प्र. पृ. 7 ।
4. 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ग्रहणं ने'ति व्या. म. भा. 1/1/2/5 ।
5. 'प्रत्याहारेऽक्षरसमाम्नायेऽज्ग्रहणेषु अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानां प्रत्यासत्त्याऽक्षु ग्रहणं कुतो नेत्यर्थ, इत्युद्योतः 1/1/2/5 ।
6. 'तात्स्थ्यात् तथैव ताद्धर्म्यात् तत्सामीप्यात्तथैव च ।
तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः" ॥ - इत्याह भ. ना. परम. ल.म. लक्षणाविचारे पृ. 41 ।
7. 'वार्तिकि तादर्थ्यात्ताच्छब्द्य'मिति भाव 'इत्याह भ.ना.ल.श.शे. संज्ञा प्र. पृ. 82 ।
8. 'य एते प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामजूग्रहणेन ग्रहणं कस्मान्न भवति ? व्या.म.भा. 1/1/2/5 ।
9. अष्टा. 7/4/15 ।
10. अष्टा. 6/1/30 ।
11. अष्टा 7/2/38 ।
12. (क) सी. दे. बृ. प. वृ.प. 122 पृ. 268
13. तथाहि–
(क) 'तेन' 'आपो वा' इतिवक्तव्ये 'आपोऽन्यतस्याम्' (7/4/15) इति किमर्थमिति न पूर्वपक्षणीयम् । वैचित्र्यफलमेतत् पर्यायशब्दानामिति । यद्येवं कथं 'कर्त्तृस्थे चाशरीरे कर्मणि' (1/3/37) इत्यत्र लाघवार्थं' कायशब्दे कर्तव्ये शरीरग्रहणं

निर्देशस्यैवौचित्येन अमी निर्देशा अनुपपन्नाः । ज्ञापितायां चास्यां तेषां पर्यायशब्दत्वेन लाघवस्याकिञ्चित्करत्वादिमे निर्देशाः समुपपद्यन्ते । ज्ञापिताया अस्याः फलं तु 'ह्रक्रोरन्यतरस्या'मित्यादिनिर्देशेषु गौरवशङ्कानिरासः ।

## 'अर्त्तिपिपर्त्यो'रिति निर्देशः'

'[1]अर्तिपिपर्त्योश्चे'ति सूत्रे 'अतिपिपर्त्यो'रिति निर्देशः 'नानर्थकेऽलोन्त्यविधिरनभ्यास-विकारे'[2]इत्येतत्परिभाषाया 'अनभ्यासविकारे'' इत्यंशस्य [3]ज्ञापकः । यतोऽनर्थकेऽनया अलोन्त्यविधिप्रतिषेधादभ्यासस्याप्यनर्थकतया[4]तत्राप्यलोन्त्यस्येत्यस्याप्रवृत्त्या पिपर्तीत्यत्राभ्यासस्येकारान्तादेशाभावेन तदसिद्ध्या अर्ति पिपर्त्योरिति निर्देशोऽनुपपन्नः । पिपर्तीति हि [5]पृधातोः '[6]इक्श्तिपौ धातुनिर्देशे' इति [7]श्तिपि [8] शपोरित्वे [9] सार्वधातुक-

---

शरीरैकदेशग्रहणार्थमिति शरीरग्रहणस्य ज्ञापकत्वमुक्तं न्यासकृता । तथा 'कर्णेलक्षण.' (6/3/115) इत्यादौ सूत्रे चिह्नग्रहणे कर्तव्ये यल्लक्षण-ग्रहणं कृतं तल्लक्षणविशेषग्रहार्थं न्यासकृतोक्तम् । कथं वा 'अनभिहिते' (2/3/1) इति सूत्रे अनुन्यासकृता लाघवार्थमनुक्त इति कर्तव्ये यदनभिहित इत्युच्यते तेनाभिमुख्येन नैरन्तर्येण यत्प्रतिपादितं तत्रायं प्रतिषेध इत्युक्तम् । उच्यते । यत्र ज्ञाप्यं न विद्यते तत्र वैचित्र्यार्थमुच्यते । यत्र तु ज्ञाप्यं विद्यते तत्र नोच्यते वैचित्र्यार्थमिति' इत्याह सी.दे.बृ.प.वृ.प. 122, पृ. 268 ।

(ख) 'तत्र तत्र अन्यतरस्यां, विभाषा, वा इति सूत्र-निर्देशादिदं सिद्ध'मित्याह नी.दी.प, वृ. प. 116, पृ. 313 ।

(ग) 'तेन' नद्याः शेषस्यान्यतरस्याम्' (6/3/44) इत्यत्र वाग्रहणेनान्यतरस्यामित्यस्य गतार्थत्वं न शङ्क्यम् । ज्ञाप्याभावविषयिका चेयम् । इत्याह ह.भा. प. भास्क. प. 124, पृ. 371 ।

(घ) 'तत्र तत्रान्यतरस्यां विभाषा वेति सूत्र-निर्देशज्ञापितमिदमित्याह भ.ना.प.शे.प. 125, पृ. 359 ।

1. अष्टा. 7/4/77 ।
2. (क) नी.दी.प.वृ.प. 95, पृ. 310 ।
   (ख) ह.भा.प.भास्क. प. 115, पृ. 369 ।
   (ग) भ.ना.प.शे.,प. 105, पृ. 340 ।
   (घ) शेषा.प.भास्क.प. 90, पृ. 453 ।
3. तथाहि – 'अनभ्यासविकार इति तु 'अर्तिपिपर्त्योश्च' (7/4/77) इति निर्देशेन ज्ञाप्यते' इत्याह नी.दी.प.वृ.प. 95, पृ. 310 ।
4. अष्टा. 1/1/52 ।
5. 'पॄ पालनपूरणयोः' धा.पा. जुहो. 1086 ॰
6. वा वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 565 ।
7. 'लशक्वतद्धिते' – अष्टा. 1/3/8 ।
8. 'हलन्त्यम्' - अष्टा. 1/3/3 ।
9. 'तिङ् शित् सार्वधातुकम्' – -अष्टा. 3/4/113 ।

संज्ञायां शपि[1] शपः 'श्लौ'[2] 'श्ला'विति[3] द्वित्वे पृ पृति' इत्यवस्थायाम् 'अर्तिपिपर्त्योश्चे'ति ऋकारस्य इत्वे रपरत्वे हलादिशेषे उत्तरखण्डस्थस्य ऋकारस्य गुणे[4] रपरत्वे[5] च सिद्ध्यति । ज्ञापिते चैतत्परिभाषांशेऽत्राभ्यासविकारात्मकेऽनर्थकेऽपि इत्वेऽलोन्त्यविधिप्रवृत्तेः सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यैतत्-परिभाषांशस्य फलं तु 'पिपर्ति' बिभर्तीत्यादावनर्थकेऽप्यभ्यासर्कारस्यात्वेऽ-'लोन्त्यस्ये'त्यस्य प्रवृत्त्या क्रमशः ऋकारर्कारयोः 'अर्त्ति-पिपर्त्योश्च' '[6]भृञामित्' इति इकारादेश-सिद्धिः । एतदभावे नात्रेकारादेशः सिद्ध्येदनर्थकेऽलोन्त्यविधिप्रतिषेधात् । द्वित्वस्थले हि संघात एवार्थवान् न तु द्वित्वीयपूर्वोत्तरखण्डोऽपि ।

वस्तुतस्तु परिभाषा एवैषा भगवता प्रत्याख्यातेति[7] ज्ञापकत्वमिदमकिञ्चित्कर-मित्यन्यत्रात्रैव शोध-प्रबन्धे निरूपितम् ।

## 'अर्द्धर्चाः 'इति, पृतनर्ताभ्या'मिति च निर्देशौ

'अर्द्धर्चाः पुंसिचे'ति[8] सूत्रे 'अर्द्धर्चाः 'इति, [9]'सहेः पृतनर्ताभ्यां च' इति सूत्रे 'पृतनर्ताभ्या'मिति च निर्देशौ 'अकाराकारसमुदायस्थानिकस्याप्यणो रपरत्वमिष्यते' इति वचनस्य ज्ञापकौ[10] । यतोऽस्य वचनस्याभावे 'चकारे'त्यादौ ऋकारमात्र-स्थानिकस्य '[11]उरत्' इति विहितेऽकारादावणि 'उरण्[12]रपरः' इति सूत्रं सार्थकमिति ऋकाराकारसमुदायस्थानिकेऽणि तदप्रवृत्त्या निर्देशाविमावनुपपन्नौ ।

---

1. 'कर्त्तरि शप्' – अष्टा 3/1/68 ।
2. 'जुहोत्यादिभ्यः श्लुः' – -अष्टा. 2/4/75 ।
3. अष्टा. 6/1/10 ।
4. 'सार्वधातुकार्धधातुकयोः' – -अष्टा. 7/3/84 ।
5. 'उरण् रपरः' – -अष्टा. 1/1/51 ।
6. अष्टा. 7/4/76 ।
7. व्या.म.भा. 1/1/9/64 ।
8. अष्टा. 2/4/31 ।
9. अष्टा. 8/3/109 ।
10. तथाहि – 'अर्धर्च'इत्यादौ ऋकाराऽकारसमुदायस्थानिकस्यापि अणो रपरत्वमिष्यते । अर्द्धर्चा इति (2/4/31) ज्ञापयति । तथा सहेः पृतनर्ताभ्यामिति (8/3/107) इत्याह पु.दे.ज्ञा.समु. अष्टमे द्विगुपादे पृ. 69 ।
11. अष्टा 7/4/66 ।
12. अष्टा. 1/1/51 ।

ज्ञापिते चास्मिन् वचने निर्देशावमू समुपपद्येते । यतोऽत्र '[1]आद्गुणः' इति गुणैकादेशनिष्पन्नयोः ऋकाराकारसमुदायस्थानिकयोरप्यणो रकारयो रपरत्वं सुलभम् । ज्ञापितस्यास्य वचनस्य फलं तु 'कृष्णर्द्धिः' इत्यादिप्रयोगेषु ऋकाराकारसमुदाय-स्थानिकस्याप्यणो रपरत्वसिद्धिः । अतएव-'ऋकारस्य[2]गुणवृद्धी अरारावेवे'ति नियमोऽपि सङ्गच्छते' ।

## 'अस्मिन्नधिकम्' इति, 'यस्मादधिकम्' इति च निर्देशौ

[3]'तदस्मिन्नधिकमिति दशान्ताड्डः' इति सूत्रे 'अस्मिन्नधिक'मिति '[4]यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'ति सूत्रे 'यस्मादधिकमिति च निर्देशौ 'अधिकशब्दयोगे सप्तमीपञ्चम्याविष्येते' इति वचनस्य ज्ञापकौ[5] । यतोऽत्रोभयत्रावधित्वसम्बन्धे षष्ठ्या[6] एवौचित्येन निर्देशाविमावनुपपन्नौ । ज्ञापिते चास्मिन् वचनेऽधिकशब्दयोगे सप्तमीपञ्चम्योः सुलभतया निर्देशावमू समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'लोके लोकाद् वा अधिको हरिः' इत्यादौ अधिकशब्दयोगे सप्तमीपञ्चम्योः साधुत्व-सिद्धिः । एतद्वचनाभावे हि तद्योगे तयोर्विधायकाभावात् तयोरत्र साधुत्वं न सिद्ध्येत् ।

## 'अष्टे'त्याकारनिर्देशः

[7]'अष्टाभ्य औश्' इति सूत्रे 'अष्टे'त्याकारनिर्देशो 'जश्शसोर्विषयेऽप्यष्टन आत्वं भवती'ति वचनस्य ज्ञापकः[8] । यतोऽत्र भ्यसि 'अष्टभ्यः' 'अष्टाभ्यः, इति

---

1. अष्टा. 6/1/87 ।
2. प.शे.प. 12 पृ. 72 ।
3. अष्टा. 5/2/45 ।
4. अष्टा. 2/3/9 ।
5. तथाहि –
   (क) 'अधिकशब्दयोगे सप्तमीपञ्चम्याविष्येते, 'तस्मिन्नधिक'मिति 'यस्मादधिक'मिति चेति सूत्र-निर्देशात् । लोके लोकाद्वाधिको हरिः' इत्याह भ.दी.वै.सि.कौ.सप्तमीकारक प्र. पृ. 399 ।
   (ख) अनूदितोऽयं दीक्षित-ग्रन्थः ज्ञा.सं. परि. 2, पृ. 207 ।
   (ग) 'यस्मादधिक'मिति तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोः पर्यायेण सप्तमीपञ्चम्यौ भवतः' - इत्याह ह.मि.पदम. 2/3/1 तथा 5/2/45 ।
6. 'षष्ठी शेषे' - अष्टा. 2/3/50 ।
7. अष्टा. 7/1/21 ।
8. तथाहि –
   (क) "अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसो-र्विषये आत्वं ज्ञापयती" त्याह भ.दी. वै.सि.कौ. हलन्तपुंलिङ्ग प्र.पृ. 195 ।

रूपद्वये सत्यपि लाघवाद् 'अष्टभ्य' इति निर्देशस्यैवौचित्याद् 'अष्टाभ्य' इति गुरुनिर्देशोऽनुपपन्नः । स च निर्देशः स्वोपपत्तये कृताकारानुकरणत्वमात्मनो बोधयन् 'जश्शसोर्विषयेऽप्यष्टन आत्वं भवती'ति वचनं ज्ञापयति । वचनस्यास्याभावे हि '[1]अष्टन आ विभक्ता' विति सूत्रे 'रायो[2]हली'ति सूत्राद् 'हली'- त्यस्यापकर्षणे [3]तदादिविधौ च सति हलादिविभक्तौ परत एवात्वस्य लाभाद् जशशसोरौश्विधौ 'अष्टे'ति कृताकारानुकरणनिर्देशो नोपपद्येत ।

न च 'अष्टन आ विभक्ता'वित्यनेन हलादिविभक्तौ अष्टनो नित्यमात्वं विधीयत इति प्रामाणिक-गौरवस्यादोषतया 'अष्टाभ्य' इति निर्देशः सुतरां समुपपद्यत इति नास्य निर्देशस्योक्त-वचनज्ञापकत्व'मिति शङ्क्यम् । यतोऽ'[4]ष्टनो दीर्घा' दिति सूत्रस्य दीर्घग्रहणेन अष्टन आत्वस्य वैकल्पिकत्वज्ञापनाद्[5] - जश्शसोरौश्विधौ लाभादष्टभ्य इति निर्देशस्यौचित्येऽपि 'अष्टे'ति कृताकारानुकरणनिर्देश स्योक्तवचनं विना न भवत्युपपत्तिः । इत्थं कृताकाराष्टनानुकरणमिह जश्श सोरष्टन आत्वमनुपायतीति युक्तम् ।

अथात्र 'अष्टभ्यः' 'अष्टाभ्यः-इत्यनयोः पर्यायशब्दतया 'विसर्ग' - 'वे'त्यपहाय विसर्जनीयान्यतरस्यामितत्यादिनिर्देशवद् 'अष्टाभ्य' इति निर्देशे गौरवाभावात् 'अष्टाभ्य' इति निर्देशस्योपपत्त्या नास्य निर्देशस्य ज्ञापकत्वं युक्तमिति शङ्कापि न कार्या । यतो लक्षणावशात्सम्पन्नस्य 'अष्टाभ्य' इति निर्देशस्यात्र स्वीकारे अष्टञ्-शब्दस्येदं रूपमुत अकारान्तानुकरणाष्टाशब्दस्येदं रूपमिति सन्देहः सम्भवति । अतोऽसन्देहाय 'अष्टभ्य' इत्येवात्र निर्देष्टव्यमासीत्, अष्टभ्य इति निर्देशे हि अष्टञ् शब्दस्येदं रूपमुत अकारान्तानुकरणाष्ट शब्दस्यैवेदं रूपमिति सन्देहो न भवति, अकारान्तानुकरणे 'अष्टेभ्य' - इत्यापत्तेः । इत्थं सत्यामपि 'पर्याय-शब्दानां लाघव-गौरव-चर्चा नाद्रियते'[6] इति परिभाषायाम्, असन्देहाय 'अष्टभ्य' इति

---

(ख) "अष्टाभ्य औश्'.(सु. 7/1/21) कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयतीत्याह एन.एस. रामा. ज्ञा.सं.परि. 2 पृ. 218 ।

1. अष्टा. 7/2/84 ।
2. अष्टा. 7/2/85 °
3. 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषयेति शेषः ।
4. अष्टा. 6/1/172 ।
5. तथाहि –
("वैकल्पिकं चेदमष्टन आत्वम् । अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज् ज्ञापकात्" इत्याह भ.दी.–वै सि.कौ. हलन्तपुंलिङ्ग प्र. पृ. 195 ।
6. (क) 'पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते' - सी.दे. बृ.प.वृ.प. 122, पृ. 268 ।
(ख) नी.दी.प.वृ.प. 116, पृ. 313 ।
(ग) ह.भा. प.भास्क. प. 124, पृ. 371 ।
(घ) भ.ना.प.शे.प. 125, पृ. 359 ।

निर्देष्टव्ये सन्देहाधायकः कृतात्वानिर्देशो भवति जश्शसोरष्टन आत्वस्य ज्ञापकः । अतएव – 'अथेह कस्मान्न भवत्यौश्त्वम् – अष्ट तिष्ठन्ति' 'अष्टपश्येति ? आत्वं यत्र तु तत्रौश्त्वम् । यत्रैवात्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् । तथाह्यस्य ग्रहः कृतः । तथा ह्यात्वभूतस्य ग्रहणं क्रियते - अष्टाभ्य इति । ननु च नित्यमा- त्वम् । एतदेव ज्ञापयत्याचार्यो विभाषा आत्वमिंति यदयमात्वभूतस्य ग्रहणं करोति – अष्टाभ्य इति । इतरथा हि अष्टन-इत्येव ब्रूया'दित्युक्तम्[1] ।

इदमत्रावधेयम्–'अष्टाभ्य' इति निर्देशः '(1) 'अष्टाभ्य' इति कृतात्व--निर्देशोऽयम्, (2) 'आत्वं जश्शसोरष्टनः, (3) अनुमितात्वं च वैकल्पिकम्, इत्यंशत्रयस्य ज्ञापकः । यतः 'अष्टाभ्य' इति कृतात्व-निर्देशोऽयम्', आत्वं जश् शसोः परतः 'इत्यंशद्वयस्य ज्ञापनेऽपि कृतात्व-निर्देशो व्यर्थः, कृतात्वेऽपि स्थानिवत्त्वेनाष्टञ्शब्दतया 'अष्टभ्य' इत्युक्तावपि दोषो नास्ति । अतो ज्ञापितेऽपि न स्वांशे तच्चरितार्थम् । कृतात्वनिर्देशोऽनुमितात्वस्य वैकल्पिकतां ज्ञापयतीत्युक्तौ तु अष्टेत्यादि वारणाय तच्चरितार्थं 'भवती'ति ।

ज्ञापन-फलं तु 'अष्टौ' इति प्रयोग-सिद्धिः । अन्यथाष्टनो जश्शसोरात्वस्या-सम्भवात् कृताकारादष्टनः परयोर्जश्शसोः स्थाने विहितस्यौशादेशस्याप्राप्त्या तदसिद्धिः स्यात् ।

## इत्युत्तरस्येति निर्देशः

[2]'तस्मादित्युत्तरस्ये'तिसूत्रे 'इत्युत्तरस्ये' ति निर्देशः [3]'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानिति परिभाषाऽनित्येति' वचनस्य ज्ञापकः[4] । यतः – 'इको यणची'त्यत्र[5] इक्त्वेन उकारस्य कार्यित्वं श्रुतं निमित्तत्वमच्त्वेनानुमितमिति परिभाषयानया कार्यित्वेनैव सम्बन्धः स्यान्न तु निमित्तत्वेन, तथा सति उकारे परे इकारस्यात्र यणोऽप्राप्त्या निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽत्र तस्या अप्रवृत्तौ

---

1. व्या.म.भा. 7/1/1/21 ।
2. अष्टा. 1/1/67 ।
3. (क) पु.दे.ल.प.वृ.प. 102, पृ. 154 ।
   (ख) श्रुतानुमितयोः श्रौतः सम्बन्धो बलीयान्' – सी.दे.बृ.प.वृ.प. 107, पृ. 262 ।
   (ग) नी.दी.प.वृ.प. 100, पृ. 311 ।
   (घ) ह.भा.प,भास्क.प. 109, पृ. 368 ।
   (ङ) भ.ना.प.शे.प. 113, पृ. 347 ।
   (च) शेषा.प.भास्क.प. 96, पृ. 455 ।
4. तथाहि – "अनित्या चेयं 'तस्मादित्युत्तरस्य (1/1/6) इति लिङ्गात् इत्याहु"रित्याह नी. दी.प.वृ.प. 100, पृ. 311 ।
5. अष्टा. 6/1/77 ।

प्रकरण-प्राप्ततयानुमितेनापि निमित्तत्वेन उकारस्य सम्बन्धो भवतीति - यणः सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'सुद्ध्युपास्यः' इत्यादि प्रसिद्धेषु प्रयोगेषु 'इको यणची'[1]ति यणः साधुत्वसिद्धिः । अन्यथा नास्य साधुत्वं सिद्ध्येत् ।

वस्तुतस्तूकारस्य कार्यित्वं निमित्तत्वं च श्रुतमनुमितं वेति नास्य निर्देशस्य ज्ञापकत्वं युक्तमिति मन्ये ।

हारिभास्करस्तु '[2]तस्मादित्युत्तरस्ये'ति सूत्रे 'इत्युत्तरस्ये'ति निर्देशो नहि कार्यी निमित्तत्वेनाश्रीयत[3] इति परिभाषाऽनित्येति वचनस्य ज्ञापकः[4] । यतोऽस्या नित्यत्वेऽत्रोकारस्य 'इको यणची[5]'ति यणः कार्यितया निमित्तत्वेनाश्रयणासंभवाद् निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचने तस्या अनित्यत्वेनात्राप्रवृत्तौ इक्त्वेन कार्यिणोऽप्युकारस्याच्त्वेन निमित्तत्वस्य सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'सुद्ध्युपास्यः' इत्यादिप्रसिद्धप्रयोगेषु यणः साधुत्व-सिद्धिः । अन्यथास्य साधुत्वं न सिद्ध्येदिति मनुते ।

वस्तुतस्तु कार्यीति मत्वर्थेनन्तेन कार्यानुभवं कुर्वत[6] एव निमित्तत्वस्यानया निषेधादत्रोकारः कार्यं यणं नानुभवतीति तदनित्यत्वज्ञापनं विनापि निर्देशोऽयं

---

1. अष्टा. 6/1/77 ।
2. अष्टा. 1/1/67 ।
3. (क) कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' - पु.दे.प.पा.प. 11, पृ. 12 अ ।
   (ख) 'न हि कार्यी निमित्तत्वेनाश्रीयते' – सी.दे.बृ.प.वृ.प. 2, पृ. 164 ।
   (ग) 'न हि कार्यी निमित्तत्वेनाश्रीयते' – नी.दी.प.वृ.प. 1, पृ. 193 ।
   (घ) 'न हि कार्यी निमित्तत्वेनाश्रीयते' – ह.भा.प. भास्क.प. 2, पृ. 319 ।
   (ङ) कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' – भ.ना.प.शे.प. 11, पृ. 41 ।
   (च) 'नहि कार्यी निमित्तायते' – शेषा.प.भास्क.प. 10, पृ. 386 ।
4. तथाहि – "सुद्ध्युपास्यः इत्यादौ व्यक्तिपदार्थाङ्गीकारेण निर्वाहः । 'तस्मादित्युत्तरस्य' (1/1/67) इति निर्देशाद् वा" इति ग्रन्थेन ज्ञापकत्वमस्याः सूचयति – ह.भा.प.भास्क.प. 2, पृ. 319 ।
5. अष्टा. 6/1/77 ।
6. "कार्यमस्मिन्नस्तीति कार्यी, यद्यत् कार्याधिकरणं. तत्तत्कार्यं प्रति निमित्ततया नाश्रीयते इत्यर्थो हि परिभाषायाः ।

सुतरामुपपन्नः । तस्मान्नास्य हरिभास्करोक्तं ज्ञापकत्वं युक्तमिति मन्ये । अस्योक्तवचन-ज्ञापकत्वाभ्युपगमे च स्ववचविरोधोऽपि वज्रलेपायते [1]हरिभास्करस्येत्यपि निश्चप्रचम् ।

## 'इत्युत्तरस्य' '........कर्णीष्वनव्ययस्य' 'वाय्वृतु-'पित्रुषसः' - इत्यादि निर्देशाः

[2]'तस्मादित्युत्तरस्ये'ति सूत्रे 'इत्युत्तरस्य', अतः [3]कृकमी'त्यादिसूत्रे '.........कर्णीष्वनव्ययस्य', [4]वाय्वृतुपित्रुषसो य'दितिसूत्रे 'वाय्वृतु' 'पित्रुषस' इति च निर्देशाः 'असिद्धं बहिरङ्गमन्तरङ्गे'[5] इति परिभाषायाः, 'इयं त्रिपाद्यां प्रवर्तते' इति वचनस्य च [6]ज्ञापकाः । यतोऽस्याः परिभाषाया अभावेऽस्य वचनस्य चाभावेऽत्र यकार-वकार-रेफाणां संयोगान्तलोपस्य[7] दुर्वारत्वेन इमे निर्देशा अनुपपन्नाः । ज्ञापितायामस्याम् अन्तरङ्गे संयोगान्तलोपे बहिरङ्गस्य यणोऽसिद्धतया' ज्ञापिते चास्मिन् वचने [8]'पूर्वत्रासिद्ध'मिति बलेनान्तरङ्गस्य [9]संयोगान्तलोपस्य सपादसप्ताध्यायी-

---

1. अनेन हि– "नन्वेवमूर्णुनविषतीत्यत्र सन्नन्तस्य कार्यित्वाद् द्विर्वचनेऽचीति कर्तव्ये कथं निमित्ततेति चेन्न । कार्यीति मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वाभिधानात् । तथा च परिभाषान्तरं पठ्यते 'कार्यमनुभवन् हि कार्यी निमित्तत्वेन नाश्रीयते' इति । उर्णोतेर्हि नुशब्द एव द्वित्वाख्यं कार्यमनुभवति न तु सन् । एवं च द्विर्वचने चेति सूत्रे अज्ग्रहणप्रत्युदाहरणे जेघ्रीयते देध्मीयते इति भाष्याद्युक्ते चिन्त्ये" इत्युक्तम्–
   प. भास्क. प. 2, पृ. 319 ।
2. अष्टा. 1/1/67 ।
3. 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' –
   –अष्टा. 8/3/46 ।
4. अष्टा. 4/2/31 ।
5. (क) व्याडिः. प. सू. प. 36, 79, पृ. 18, 33 ।
   (ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
   (घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
   (ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।
   (च) भ. ना. प. शे. प. 51, पृ. 184 ।
   (छ) शेषा. प. भास्क. प. 42, पृ. 417 ।
6. तथाहि–
   "वस्तुतस्तु 'तस्मादित्युत्तरस्य' (1/1/67) 'कर्णीष्वनव्ययस्य' (8/3/46) इत्यादि निर्देशा एव इमां परिभाषां त्रिपाद्यामस्याः प्रवृत्तिं च ज्ञापयन्ती'ति न किंचिदनुपपन्न"मित्याह शेषा. प. भास्क. प. 42, पृ. 422 ।
7. 'संयोगान्तस्य लोपः' –
   –अष्टा. 8/2/23 ।
8. अष्टा. 8/2/1 ।
9. 'संयोगान्तस्य लोपः' –
   –अष्टा. 8/2/23 ।

स्थामन्तरङ्गपरिभाषां प्रत्यसिद्धत्वाभावादन्तरङ्गस्य लोपस्य विद्यमानतया च तं प्रति बहिरङ्गस्य यणोऽनयासिद्धत्वेन च संयोगान्तलोपो न प्राप्नोतीत्यमी निर्देशाः समुपपद्यन्ते ।

अस्याः परिभाषायाः फलं 'सुद्ध्युपास्य इत्यादि प्रसिद्ध-प्रयोगेषु संयोगान्त-लोपाभावः । 'पचावेद'मित्यत्र 'एत[1] ऐ' इति एत ऐत्वाभावः । ज्ञापितस्यास्य वचनस्य फलं तु 'नार्कुटो नार्पत्यः' इत्यादौ रेफस्य[2] विसर्गाभावः[3] । अस्या अभावे हि पदद्वयापेक्षत्वेन बहिरङ्गस्यापि गुणैकाऽऽदेश एकपदापेक्षत्वेनान्तरङ्ग्म् ऐत्वं प्रत्यसिद्धत्वासंभवादत्र ऐत्वाऽऽपत्तिर्दुवारा स्यात् । अस्य च वचनस्याभावे हि सपादसप्ताध्यायीस्थामन्तरङ्ग्परिभाषां प्रति त्रिपादीस्थस्य संयोगान्तलोपस्य 'पूर्वत्रे'त्य-सिद्धत्वादन्तरङ्गाभावेन तं प्रति यणोऽसिद्धत्वस्यानयाऽसंभवात् संयोगान्तलोपापत्ति-दुर्वारा स्यात् ।

सति चास्मिन् वचने 'इयं परिभाषा न यथोद्देशपक्षे, नापि च कार्यकालपक्षे त्रिपाद्यां प्रवर्तते'' इति [4]भट्टनागेशसिद्धान्तो न युक्त इति मन्ये ।

## 'इत्युत्तरस्य' 'वायृतु' 'पित्रुषसः' इत्यादिनिर्देशाः

[5]'तस्मादित्युत्तरस्य' [6]'वाय्वृतुपित्रुषसः' इत्यादिसूत्रेषु 'इत्युत्तरस्य' 'वाय्वृतु' 'पित्रुषसः' इत्यादिनिर्देशाः 'स्थानित्वेन निमित्तत्वमिको न बाध्यते' इति वचनस्य ज्ञापकाः[7] । यतोऽत्रास्य वचनस्याभावे स्थानित्वेन निमित्तत्वस्य क्रमशः

---

1. अष्टा. 3/4/93 ।
2. 'तद्धितेष्वचामादेः' – अष्टा. 7/2/117, इति क्रमशोऽण्-ण्यनिमित्तकवृद्धौ सत्याम् 'उरण्रपरः' अष्टा. 1/1/51, इति रपरत्वेन जातस्येत्यर्थः ।
3. 'खरवसानयोर्विसर्जनीयः' – -अष्टा. 8/3/1 ।
4. अनेन हि – ''इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात् । अस्या च 'वाह ऊठ्' सूत्रस्थमूठ्-ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । ...... । न च कार्यपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेतिवाच्यम् । पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् । न चानया पूर्वस्यासिद्धत्त्वात् तदभावेन तं प्रति परासिद्धत्वे - 'पूर्वत्र' - इत्यनेन वक्तुमशक्यमितिवाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किंच पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचित इत्युक्तम् प. शे. प. 51, पृ. 199 ।
5. अष्टा. 1/1/67 ।
6. अष्टा. 4/2/31 ।
7. तथाहि –
   (क) 'दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यते । इत्याह कैयटः प्रदी. 1/1/2/5 पृ. 131 ।

उकारर्कारोकारेषु बाधात् 'इत्युत्तरस्य' 'वाय्वृतु' 'पित्रुषसः' इत्यादौ क्रमशः इकारोकारर्काराणाम् 'इको [1]यणची'ति यण् न प्राप्नोतीतीमे निर्देशा अनुपपन्नाः । ज्ञापिते चास्मिन् वचने इकृत्वेन स्थानित्वं दधत्स्वपि उकारर्कारोकारेषु निमित्तत्वमच्त्वंरूपं न बाध्यते' अतोऽमी निर्देशाः समुपपद्यन्ते । ज्ञापितस्यास्य वचनस्य फलं तु 'सुद्ध्युपास्य' इत्यादौ यणः सिद्धिः । अस्य वचनस्याभावे हि उकारस्येक्त्वेन स्थानित्वात् तेन निमित्तत्वस्य बधादच्त्वाभावादिह यण् न सिद्ध्येत् ।

अयमाशयः - 'धात्रंश' इत्यत्र रेफस्य 'यणो मयोद्वे वाच्ये'[2] इति वार्तिकेन 'मय' इति पञ्चमी, 'यण' इति षष्ठी'ति पक्षे प्राप्तं द्वित्वम् 'अचो रहाभ्यां[3] द्वे' इति साक्षाच्छ्रुतेन द्वित्वनिमित्तत्वेन द्वित्वकार्यित्वस्य बाधाद् यथा न भवति तथा 'इको [4]यणची'ति सूत्रेऽपि श्रूयमाणेन इकः स्थानित्वेन इको यण्निमित्तत्वबाधात् इत्युत्तरस्य' 'वाय्वृतु' 'पित्रुषसः' इत्यादौ इकि परतः इको यणादेशो न स्यादितीमे निर्देशा आत्मन उपपत्तये वचनमिदं ज्ञापयन्तीति ।

न च निमित्तत्वेन कार्यित्वस्य बाधे मानाभावः शङ्क्यः । यतो 'हयवरट्' इति सूत्रस्थं भाष्यमेवात्र मानम् । तत्रहि - 'रेफस्य परोपदेशेऽनुनासिक - परसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः । स्वर्नयति । कुण्डं रथेन । मद्रह्रदः । भद्रह्रदः । न वक्तव्यम् । रेफोष्मणां सवर्णा न सन्ति । नेमौ रहौ कार्यिणौ, किं तर्हि, निमित्तमिमौ हरौद्विर्वचनस्ये'त्युक्तम्[5] ।

अत्र 'कैयट'[6] इतिपदं प्रयुञ्जानो भट्टोजिदीक्षितः [7]स्वारुचिं प्रादर्शयत् । तथाहि – 'द्वित्वप्रकरणे 'रहाभ्या'मिति साक्षाच्छ्रुतेन निमित्तत्वेन रेफस्य कार्यित्वबाधो-

---

(ख) 'स्थानित्वेन निमित्तत्वमिकः 'तस्मादित्युत्तरस्ये'ति निर्देशान्न बाध्यते, इति कैयट' इत्याह भट्टोजिदीक्षितः प्रौ. मनो. अच्सन्धि प्र. 111 ।

(ग) 'इकोयणचि (सू. 6/1/77) । स्थानित्वेन निमित्तत्वमिको न बाध्यते । तस्मादित्युत्तरस्य (सू. 1/1/67) वाय्वृतु पित्रुषसः (सू. 4/5/31) इत्यादि निर्देशात् ज्ञापकात्' इत्याह एन्. एस्. ताता-रामानुजाचार्यः ज्ञा. सं. परि. 2, पृ. 225 ।

1. अष्टा. 6/1/77 ।
2. वा. वै. सि. कौ. अच्सन्धि प्र. प्र. 36 ।
3. अष्टा. 8/4/57 ।
4. अष्टा. 6/1/77 ।
5. व्या. म. भा. 1/1/2/5 ।
6. प्रौ. मनो. अच्सन्धिप्र. पृ. 111 ।
7. तथाहि –

'अत्रारुचि बीजं तु अत्र स्थानित्वस्य नानवकाशत्वं, मध्वत्रेत्यत्र निमित्तत्वाप्रसक्त्या तत्र स्थानित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एव, इति स्पष्टं 'तद्धितेष्वचामादेः (7/2/117) इति सूत्रे भाष्ये । तदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये । न च तक्रकौण्डिन्यन्यायो विधेयविषय एव, विशेषविहितेन सामान्य-विहितं बाध्यत' इति अभियुक्तव्यवहारादितिवाच्यम् । अपूर्वबोध्यत्वेन निमित्तत्वादे रपि विधेयत्वात् । नहि निमित्तत्ववत्तत्त्वमपि मानान्तरसिद्धमितिदि'गित्याह ह. दी. श. र. अच्सन्धिप्र. पृ. 112 ।

युक्तः । यतो यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र [1]'अनचि च'ेति सूत्रेण द्वित्वकार्यित्वप्रसक्तेरनवकाशेन निमित्तत्वेन सामान्य एव द्वित्वकार्यित्वं बाध्यते । [2]'इको यणची'त्यत्र कथं स्थानित्वेन निमित्तत्वमिको बाध्येत । नहि यत्र यत्र यणूनिमित्तत्वं तत्र सर्वत्र यणः स्थानित्वम् । 'मध्वत्रे'त्यत्र निमित्तत्वाभाववत्युकारे हि स्थानित्वं दरीदृश्यते । अतो 'येन नाप्राप्ति'[3]-न्यायेन यथा रेफे निमित्तत्वेन कार्यित्वबाधस्तथा इकि स्थानित्वेन निमित्तत्वबाधो न प्राप्नोतीति' स्थानित्वेन निमित्तत्वमिको न बाध्यत इतिवचनं विनापि' 'इत्युत्तरस्ये'त्यादि निर्देशाः समुपपद्यन्त एवेति नामीषां निर्देशानामुक्तवचनज्ञापकत्वं युक्तम् । न च तक्रकौण्डिन्यन्यायेनात्र[4] स्थानित्वेन निमित्तत्वबाधः शङ्क्यः । यतोऽस्यापि न्यायस्यानवकाशविषय एव प्रवृत्तिर्भवति[5] ।

पण्डितमाधवशास्त्रिणस्तु 'इत्युत्तरस्ये'त्यादिनिर्देशानां 'स्थानित्वेन निमित्तत्वमिको न बाध्यत' इति वचनज्ञापकत्वं तककौण्डिन्यन्यायातिरिक्तेन 'सर्वे ब्रह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टा'-(पारिवेविषाता-) मितिन्यायेन कैटयोक्तमपि युक्तमित्याहुः[6] । इत्थमत्र कैयट - भट्टोजिदीक्षित-हरिदीक्षित-माधवशास्त्रिकृतान् विचारान् पर्यालोचयन् 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता'[7] इत्यभियुक्तोक्तेः

---

1. अष्टा. 8/4/47 ।
2. अष्टा. 6/2/77 ।
3. 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषास्वरूपम् ।
   (क) व्यडिः प. सू. प. 42, पृ. 20 ।
   (ख) पु. दे. प. पा. प. 51, पृ. 160 ब ।
   (ग) नी. दी. प. वृ, प. 48, पृ, 301 ।
   (घ) भ. ना. प. शे. प. 58, पृ. 261 ।
   (ङ) शेषा. प. भास्क. प. 49, पृ. 426 ।
4. अयं न्यायः स्वयं भगवता प्रोक्तः । तथाहि – 'सत्यपि संभवे बाधनं भवति । तद्यथा – 'दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्याये'ति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवतीति - व्या. म. भा. 7/2/2/117 ।
5. यतः 'नाप्राप्ते दधिदाने तक्रदानमारभ्यते तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यती'त्युक्तं भगवता – व्या. म. भा. 7/2/2/117, ।
6. तथाहि तैः 'वस्तुतस्तु बाध्यबाधकत्वेनाभिमतशास्त्रीयविषययोर्यत्र व्याप्य-व्यापक-भाव स्तत्रैव तक्रकौण्डिन्यन्यायः प्रवर्तते । अतएव 'आदिवृद्धिरन्त्योपधावृद्धी बाधते, अनुशति कादिषु पुष्करसच्छब्दस्य पाठसामर्थ्यात्' इति भाष्ये सामर्थ्योपवर्णनं सङ्गच्छते । उद्देश्यादिदलप्रविष्टधर्मयोर्व्याप्य-व्यापक-भावमात्रेणैतन्न्यायप्रवृत्तिस्वीकारे तु तद्भाष्यासङ्गतिरेव स्यात् । अस्ति हि अत्रापि ञिद्णित् तद्धितत्वञिद्णित्प्रत्ययत्वरूप- धर्मयोर्व्याप्य-व्यापक-भाव इति न्यायेनैवेष्टसिद्धिः स्यात् । एवमनेन न्यायेन बाधोऽपि व्याप्यविषयताऽऽश्रयातिरिक्तत्वेन व्यापकविषयताऽऽश्रये सङ्कोचरूपो बोध्यः । अतएव 'आट' 'आटतुः' इत्यादौ द्वित्वसिद्धिः । अन्यथा व्याप्यविषयतावच्छेदकधर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावछिन्ने सङ्कोचस्वीकारे तु 'लिटि धातोरनभ्यासस्य' इति सूत्रीयोद्देश्यताम्प-

'इत्युत्तरस्ये'त्यादिनिर्देशाः 'स्थानित्वेन निमित्तत्वमिको न बाध्यते' इति वचनज्ञापका एवेति निश्चिनुमः ।

## 'रयो'रिति द्विवचन-निर्देशः

'इरयोरे'[1] इति सूत्रे 'इरयो'रिति द्विवचननिर्देशो 'लक्ष्ये लक्षणस्य सकृदेव [2]प्रवृत्तिः' इतिपरिभाषाया ज्ञापकः[3] । यतोऽत्र सूत्रे इरेश्च इरेश्चेत्येकशेषं कृत्वा कृतः 'इरयो'रिति द्विवचननिर्देशो व्यर्थः । स हि इटि कृते पुनारेभावो यथा

---

व्यापकविषयताऽवच्छेदकप्रथमैकाच्त्वरूपधर्मावच्छिन्ने 'अजादेर्द्वितीयस्य' इति सूत्रीयोद्देश्यतावच्छेदकतारूपव्याप्यविषयतावच्छेदकाजादिप्रथमैकाच्त्वरूपपधर्मावच्छिन्नातिरिक्तत्वेन संकोचे 'लिटि धातोः' - इत्यनेन द्वित्वं न स्यात् । नापि 'अजादेः' – इत्यनेन, द्वितीयस्यैकाचोऽभावात् । पूर्वोरीत्या द्वितीयाजवधिकपूर्वत्ववदजादिप्रथमैकाच्त्वावच्छिन्नविषयताऽऽश्रयातिरिक्तत्वेन व्यापकविषताऽऽश्रये प्रथमैकाच्त्वावच्छिन्ने तु प्रकृते द्वितीयाजवधिकपूर्वत्ववत्त्वाभावत् तदतिरिक्तत्वेनासंकोचात् 'लिटि धातो'रित्यनेन द्वित्वसिद्धिरिति न दोषः । एवञ्च प्रकृते ('अचोरहाभ्याम्' - 'अनचि च ' 'यणोमयो द्वे' इत्यादौ) यरव्यवहितपूर्वत्वविशिष्टाजव्यवहितोत्तरत्वविशिष्टरेफत्वावच्छिन्न-विषयताऽऽश्रयातिरिक्तत्वेन अजव्यवहित्तोरयर्त्वावच्छिन्न-विषयताश्रये संकोचे क्रियमाणे 'हर्यनुभव' इत्यादौ रेफस्य द्वित्ववारणेऽपि 'अर्हेणे'त्यादौ यरव्यवहित - पूर्वत्वाभाववतो रेफस्य द्वित्वाऽऽपत्तिस्तदवस्थैव । एवं 'मद्रह्रद' इत्यत्र पूर्वरेफस्य 'यणो मय' इत्यनेन, द्वितीयरेफस्य 'अचो रहाभ्यां द्वे' इत्यनेन द्वित्वाऽऽपत्तिः स्यादेव । तस्मादत्र तक्रन्यायातिरिक्तेन 'माठरपरिवेषणन्यायेन व्यवस्थेति भाष्यकाराऽऽशयः । 'सर्वे ब्राह्मणा भोज्यन्तां, माठरकौण्डिन्यौ परिवेविष्टामिति च न्यायाऽऽकारः, एकविधेयता निरूपितोद्देश्यदलप्रविष्टधर्मयोर्यत्र व्याप्य-व्यापकभावस्तत्रायं न्यायः प्रवर्तते । अनेन च बाधो व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापक-धर्मावच्छिन्ने संकोचरूपः क्रियते । तथा च प्रकृते द्वित्वरूपैकविधेयतानिरूपितोद्देश्यदलप्रविष्टयो रेफत्वयर्त्वरूपधर्मयोर्व्याप्यव्यापकभावसत्त्वादेतन्यायप्रवृत्तौ रेफत्वावच्छिन्नातिरिक्तत्वेन यर्त्वावच्छिन्ने संकोचाद् 'हर्यनुभवः' 'अर्हेण' इत्यादौ 'अनचि च' इत्यनेन न द्वित्वम् । तत्र संकुचितस्यैव यर्पदस्यानुवृत्तत्वात् । एवं 'यणो मय" इति तत्सूत्रस्थ वार्तिकेऽपि संकुचितयर्पदस्यानुवर्तनाद् रेफातिरिक्तयरन्तर्गतो यो यण् तस्य मयः परीभूतस्य द्वित्वमित्यर्थेन 'मद्रह्रद' इत्यत्र पूर्वरेफस्य द्वित्वं न । एवं द्वितीय-रेफस्यापि "अचोरहाभ्याम्' इति व्यावस्था सम्पद्यते । अस्य न्यायस्य तक्रन्यायातिरिक्तत्वादेव चानेन न्यायेन 'इको यणचि' इत्यादावपि इक्त्वावच्छिन्नातिरिक्तत्वेनाच्त्वावच्छिन्ने संकोचो माभूदित्येतदर्थं 'तस्मादित्युत्तरस्य' इति निर्देशेन ज्ञापकेन समाधानं कैयटोक्तमपि सङ्गच्छते' इत्युक्तम्' प्रौ. मनो. श. र. प्रभा. अचूसन्धिप्र. पृ. 113 ।

7. परमल. म. शब्दनिरूपणे पृ. 9 ।

1. अष्टा. 6/4/76 ।
2. (क) नी. दी. प. वृ प. 112, पृ. 313 ।
(ख) 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति भ. ना. प. शे. प. 121, -पृ. 355 ।
3. तथाहि – 'इरयोरे' (6/4/76) इति द्विवचननिर्देशोऽस्या ज्ञापक इत्याह नी. दी. प. वृ. प. 112, पृ. 313 ।

स्यादित्येवमर्थः कृतः । अन्यथा 'ददृश्रे'[1] इत्यत्र 'इरे' इत्यस्य रेभावे कृते दृशः सेटत्वात् ततः परस्य रेशब्दस्य क्रादिनियमादिटि कृते 'ददृशिरे' इत्यनिष्टमापद्येत । इरे रेभावविधानसामर्थ्याद् इडिह न भविष्यतीति न शक्यते वस्तुम्, यतो रेभावः क्रादिषु चरितार्थः । तेभ्यो हि परस्य लिटः 'कृसृ'[2] इत्यादिनेट् प्रतिषिद्धः । कृते चास्मिन् द्विवचननिर्देशे यो झस्थाने इरेच्[3] शब्दः क्रियते, यश्च 'रे' इत्यस्येटि कृते सत्युत्तरकालमिरेशब्दः सम्पद्यते तयोरपि रेभावः सिद्ध्यति । इत्थं पुनारेभाव-सम्पादनार्थं कृतोऽयं द्विवचननिर्देशोऽस्या अभावे व्यर्थः । एकवचननिर्देशेऽप्यत्र पुनारेभावे हि सुलभः । ज्ञापितायां चास्यां झस्य इरेजादेशे कृतेऽवशिष्टस्य 'इरे' इत्यस्य सकृद् रेभावे कृते पुनरिटि 'इरे' इत्यस्य रे'भावोऽनया न प्रवर्तेतेति पुना 'रे'भावसम्पादनार्थमिह इरयोरिति द्विवचन-निर्देशः स्वांशे चरितार्थतामेति । ज्ञापिताया अस्याः फलं तु 'ऊखतु'[4]रित्यादौ पर्जन्यवल्लक्षण – प्रवृत्ति'[5]-रितिपरिभाषया ह्रस्वस्याप्यभ्यास[6]-ह्रस्वत्वे[7] ततः [8]सवर्णदीर्घे पुनर्ह्रस्वाभावस्य सिद्धिः । अस्या अभावे हि सवर्णदीर्घे कृते पुनर्ह्रस्वता दुर्वारा स्यात् । न च दीर्घेऽभ्यासत्वाभावः शङ्क्यः । [9]स्थानिवद्भावेन हि तत्र तत् सुलभम् ।

---

1. दृशेश्छन्दसि लिटि प्रथमपुरुषबहुवचने रूपमिदम् ।
2. 'कृसृभृवृस्तुद्रुसुश्रुवो लिटि' – -अष्टा. 7/2/13 ।
3. 'लिटस्तझयोरेशिरेच्' – -अष्टा. 3/4/81 ।
4. गत्यर्थक - भ्वा 128, –
   ऊखेर्लिटि प्रथमपुरुषद्विवचने रूपमिदम् ।
5. (क) व्याडि प. सू. प. 64, पृ. 28 ।
   (ख) पु. दे. ल. प. वृ. प. 86, पृ. 149 ।
   (ग) 'पर्जन्यवदिह लक्षणप्रवृत्तिः' –
   -सीः दे. बृ. प. वृ. प. 87, पृ. 247 ।
   (घ) नी. दी. प. वृ प. 111,, पृ. 313 ।
   (ङ) ह. भा. प. भास्क. प. 90 पृ. 360 ।
   (च) भ. ना. प. शे. प. 120 पृ. 355 ।
   (छ) शेषा. प. भास्क. प. 103, पृ. 458 ।
6. पूर्वोभ्यासः ' – -अष्टा. 6/1/4 ।
7. 'ह्रस्वः' -अष्टा. 7/4/51 ।
8. 'अकः सवर्णेदीर्घः' – -अष्टा. 6/1/101 ।
9. 'स्थानिवदादेशोऽनल्विधौ' – -अष्टा. 1/1/56 ।

## 'ईवत्या' इति निर्देशः

'ईवत्या'[1] इति निर्देशो 'भवत्यहीवत्यादौ वत्वमिति वचनस्य ज्ञापकः[2] । यतः 'ईवत्या' इति सूत्रेण ईवत्यन्तस्य शब्दस्यान्तोदात्तत्वस्वरो विधीयते, 'अहीवती' मुनीवती' इति तदुदाहरणे तत्र 'संज्ञायाम्'[3] 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद् द्रुमाण्वच्चर्मण्वती[4]' इत्यनयोरेकसूत्रत्वपक्षे तत्रापठिततया 'अहीवतीत्यादौ-वत्वस्या सम्भवाद् 'ईवती' शब्दस्यैव दुर्लभत्वे 'ईवत्या' इति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने अहीवत्यादौ वत्वस्य सुलभतया निर्देशोऽसौ समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अहीवती'त्यादौ वत्वसिद्धिः ।एतद्वचनाभावे हि 'आसन्दीव'-दित्यादावस्यापठिततया वत्वं न सिद्ध्येत् । न च 'आसन्दीवदित्याद्यर्थम्' 'ईवत्या' इत्यस्योपपन्नतया नासौ निर्देशो ज्ञापक इति शङ्क्यम् । यतः 'आसन्दीव'दित्यादीनां स्त्रियां प्रयोगो नास्तीति तेषाम् 'ईवती' - शब्दान्तताऽसम्भवा ।

वस्तुतस्तु 'संज्ञायाम्'[5] 'आसन्दीवत्'[6] इतीमे मिथो भिन्ने सूत्रे स्तः । तयोर्भिन्नसूत्रत्वे च 'अहीवती'त्यादीनां संज्ञात्वेन[7] 'संज्ञाया'मिति वत्वं सुलभम् । तथा सति 'ईवत्या' इति निर्देशः सुतरामुपपद्यते । अतो नायमुक्तवचन-ज्ञापकः । तथ्यमिदं भाष्यसम्मतम्[8] । यतो भाष्ये तयोरेकसूत्रत्वपक्षे 'ईवत्या' इति निर्देशस्य ज्ञापकता न दर्शिता ।

---

1. अष्टा. 6/1/221 ।
2. तथाहि –
   (क) 'किमयमेकयोग आहोस्विन्नानायोगौ ? । किंचातः ? । यद्येकयोगः 'अहीवती' 'कपीवती' – अत्र न प्राप्नोति । अथ नानायोगौ – 'इक्षुमती' 'द्रुमती' - अत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावदेकयोगः । कथमहीवती कपीवती ? आचार्यप्रवृत्ति र्ज्ञापयति 'भवत्येवं जातीयकानां वत्व'मिति यदयमन्तोऽवत्या इत्याहे'त्याह भगवान् पतञ्जलिः व्या. म. भा. 8/2/1/11 - 12 पृ. 101 ।
   (ख) " 'संज्ञायाम्' 'आसन्दीवत्' (सू. 8/2/11 (8/2/12) " ।। 'ईवत्याः' (सू. 6/1/221) इति ज्ञापयति' भवत्यहीवत्यादौ वत्व'मिति' त्याह एन्. एस्. ताताराමानुजाचार्यः, ज्ञा. सं. परि. ।, पृ. 197 ।
3. अष्टा 8/2/11 ।
4. अष्टा 8/2/12 ।
5. अष्टा. 8/2/11 ।
6. अष्टा 8/2/12 ।
7. 'अहीवतीत्यादि नदीविशेषस्य नगरीविशेषस्य वा संज्ञे'त्याह वा. दी. बा. मनो. मत्वर्थ प्र. पृ. 744 ।
8. 'अथवा पुनरस्तु नानायोगौ । ननु चोक्त्वमिक्षुमती द्रुमती अत्रापि प्राप्नोति । यवादिषु पाठः करिष्यते' इतिहि तत्रोक्तम् - व्या. म. भा. 8/2/1/11 - 12 ।

## 'उपसर्गप्रादुर्भ्या'मिति पृथङ्निर्देशः'

'[1]उपसर्गप्रादुर्भ्यामस्तिर्यच् परः' इति सूत्रे उपसर्गात्पृथक् प्रादुरो निर्देशः 'अन्यत्र प्रादुःशब्दस्योपसर्गसमुदाय-रूपत्वेऽप्युपसर्गकार्यं न भवतीति वचनस्य ज्ञापकः[2] । यतोऽत्र प्रादुःशब्दस्याप्युपसर्ग-समुदायतयोपसर्गत्वात् पृथङ् निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽत्र 'प्रादुःष्यात्' इत्यत्र षत्वाय प्रादुरः उपसर्गतया ग्रहणेऽप्यत्र तस्य तत्त्वेनाग्रहणायोपसर्गात् पृथक् प्रादुरो निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'ब्राह्मणानां प्रादुर्भावः' इत्यत्र प्रादुःपूर्वकाद्भुवः 'श्रोणी भुवोऽनुपसर्ग'[3] इति घञः सिद्धिः । अन्यथा प्रादुरोऽप्युपसर्गतयात्र घञ् न सिद्ध्येत् ।

वस्तुतोऽत्र 'उपसर्गत्वेन प्रादुरो ग्रहणं न भवती'त्येव ज्ञाप्यवचनस्वरूपं स्वीकार्यमति मन्ये । अन्यथा प्रादुरः स्वांशे चारितार्थ्याभावेन तत्पृथङ्निर्देशस्य ज्ञापकत्वं न संघटेत ।

## 'उभयथर्क्षु' 'चर्षिदेवतयो'रिति निर्देशौ

'उभयथर्क्षु'[4] 'कर्त्तरि चर्षिदेवतयो'[5]रिति सूत्रयोः 'उभयथर्क्षु' 'चर्षि'- इतीमौ निर्देशौ 'अन्तवद्भावेन पदान्तरेफस्य न विसर्गः 'इति वचनस्य[6] ज्ञापकौ । यतोऽत्र 'उभयथा + ऋक्षु' 'च + ऋषिदेवतयोः' इति च स्थिते 'आद्गुण'[7] इतिगुणैकादेशरपरत्वयोः[8] 'उभयथर्क्षु' 'चर्षिदेवतयोः' इतीमौ निर्देशौ कृतौ । तत्रैका-

---

1. अष्टा. 8/3/87 ।
2. तथाहि –
   "षत्वविधौ उपसर्गप्रादुर्भ्यामिंति (8/3/87) पृथङ्निर्देशो ज्ञापयति, अन्यत्र प्रादुःशब्दस्य उपसर्गसमुदायरूपत्वेऽपि उपसर्गकार्यं न भवति । तेन ब्राह्मणानां प्रादुर्भाव इति 'श्रोणी भुवोऽनुपसर्ग' (3/3/24) इति घञ् सिद्ध्यती"त्याह पु. दे. ज्ञा. समु. त्रिंशत्तमे मतुप्पादे पृ. 99 ।
3. अष्टा 3/3/24 ।
4. अष्टा. 8/3/8 ।
5. अष्टा. 3/2/186 ।
6. तथाहि –
   (क) 'अन्तवद्भावेन पदान्तरेफस्य न विसर्गः । 'उभययर्क्षु' 'कर्त्तरि चर्षिदेवतयोरिति निर्देशा'दित्याह भ. दी. वै. सि कौ. अच्संधि प्र. पृ. 48. ।
   (ख) "खरवसानयोः (सू. 8/3/15) अन्तवद्भावेन पदान्तरेफस्य न विसर्गः । 'उभयथर्क्षु' (सू. 8/3/8) 'कर्त्तरि चर्षिदेवतयोः' (सू. 8/2/186) इत्यादिनिर्देशा'दित्याह एन्. एस्. राम". ज्ञा. सं. परि. 2. पृ. 221 ।
7. 6/1/17 ।
8. 'उरण्रपरः' – अष्टा. 1/1/51 ।

देशयोरुभयोरेफयोः 'अन्तादिवच्चेति[1] पूर्वान्तवद्भावेन पदान्तत्वाद् विसर्गौ दुर्वाराविवितीमौ निर्देशावनुपपन्नौ । ज्ञापिते चास्मिन् वचने तत्र रेफयोः विसर्गप्रतिषेधादिमौ निर्देशौ समुपपन्नौ भवतः ।

न चाऽत्र कार्यकालपक्षे त्रिपाद्यामप्यन्तरङ्गपरिभाषायाः[2] प्रवृत्तिं स्वीकुर्वतः कैयटस्य मते गुणैकाऽऽदेशस्य पदद्वय-सम्बन्धिवर्णद्वयापेक्षतया बहिरङ्गत्वाद् अन्तरङ्गे विसर्गे कर्तव्येऽनया परिभाषयाऽसिद्धत्वाद् रेफभावेन विसर्ग-प्राप्तिरेव नास्तीति नेमौ निर्देशौ ज्ञापकावुक्तवचनस्ये'ति शङ्कनीयम् । यतोऽत्र विसर्गोऽपि[3] पदद्वय-सम्बन्धिरेफखराऽऽत्मक वर्णद्वयसापेक्षतया गुणैकाऽऽदेशापेक्षया बहिरङ्ग एव नान्तरङ्गः । नापि परनिमित्तकत्वेन गुणैकाऽऽदेशस्य बहिरङ्गतयाऽसिद्धत्वं शङ्क्यम् । यतो विसर्गोऽपि परिनिमित्तकत्वेन बरिङ्गतामेति नान्तरङ्गताम् । 'कार्यकालपक्षेऽपि त्रिपाद्यां नान्तरङ्परिभाषा प्रवर्तते' इति भट्टनागेश-मते तु शङ्कापीयं नोपस्थापयियुं शक्या[4] । इत्थं निर्देशद्वयमिमुक्तवचनस्य ज्ञापकमिति निश्चनुमः । ज्ञापितस्यास्य वचनस्य फलं तु 'प्रार्च्छति'[5] 'सुखार्तः'[6] इत्यादौ रेफस्य विसर्गाभावः ।

अस्यासत्त्वे हि रेफस्य विसर्गोऽत्रान्तवद्भावेन दुर्वारो भवेत् ।

## 'करे' 'घटः' इति निदेशौ

'शिवशमरिष्टस्य करे'[7] 'कर्मणि घटोऽठच्'[8] इति सूत्रयोः क्रमशः 'करे' 'घटः' 'इति निर्देशौ 'पचादिराकृतिगणः' इतिवचनस्य ज्ञापकौ[9] । यतो 'नन्दिग्रहिपचा-

---

1. 6/1/85 ।
2. 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषास्वरूपम् ।
3. 'खरवसानयोर्विसर्जनीयः' 8/3/15 ।
4. इमे कैयट - भट्टनागेशमते 'वाह उठ्' इति उठ्ग्रहणज्ञापकत्व-निरूपणावसरे प्रतिपादिते स्तः ।
5. प्र. + ऋच्छतीतिच्छेदः ।
6. सुख + ऋत इति च्छेदः ।
7. अष्टा. 4/4/143 ।
8. अष्टा. 5/2/35 ।
9. तथाहि –
   (क) "पचादिराकृतिगण इति । तत्सम्बन्धिन आदिशब्दस्य प्रकारवचनत्वात् । तथा च 'शिवमरिष्टस्य करे' इति कृञोऽच् प्रत्ययः कृतः । घटेश्च 'कर्मणि घटोऽठंच्' इतीत्याह – ह. मि. पदम. 3/1/134 ।
   (ख) 'पचादिराकृतिगणः ।' ' शिवशमरिष्टस्य करे' 'कर्मणि घटोऽठच्'जिति सूत्रयोः करोतेर्घटेश्चाऽच् प्रयोगा'दित्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 400 ।
   (ग) 'नन्दग्रहि' (सू. 3/1/134) । पचादिरकृतिगणः । 'शिवशमरिष्टस्यकरे' (सू. 4/4/143) 'कर्मणि घटोऽठच् (सू. 5/2/35) इति सूत्रयोः करोतेर्घटेश्चाच्प्रयोगात्' इत्याह एन. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 210 ।

दिभ्यो ल्युणिन्यचः'[1] इति सूत्रे नन्द्यादिः, ग्रह्यादिः, पचादिश्चेति गणत्रयनिविष्टम् । तत्र नन्द्यादिग्रह्यादी न आकृतिगणौ, ताभ्यां साकं पचादेर्निवेशात् पचादिरप्याकृतिगणो न स्यात् । तथा सति करोतीति करस्तस्मिन् 'करे' इत्यत्र पचादिगणेऽपठितस्य करशब्दस्य कृधातोरचूप्रत्ययासंभवात् 'करे' इति - निर्देशः, तत्रापाठादेव पटशब्दस्य घट्धातोरप्यचूप्रत्ययासंभवाद् 'घटः 'इति निर्देशश्चानुपपन्नौ । ज्ञापिते चास्मिन् वचनेऽनेन कर-घटयोरपि तत्र पाठसंभवात् कृ-घड्भ्याम् अचः सुलभतया निर्देशावमू समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'चक्रधरः' 'गङ्गाधरः' 'मनोरमा' इत्यादि प्रयोगाणां सिद्धिः । एतद्वचनाभावे हि धर-रम-शब्दयोः पचादिगणेऽपाठाद् धृ - रमूभ्याम् अचोऽप्राप्त्या नैषां सिद्धिः स्यात् । इमे हि प्रयोगाः क्रमशो धरतीति धरः, 'रमते इति रमा' पचाद्यति, 'चक्रस्य धरः, गङ्गाया धरः, मनसो रमा' इति षष्ठीतत्पुरुष-समासे कृते सति सिद्ध्यन्ति ।

## 'कष्टाये' ति निर्देशः

'अष्टाय क्रमणे'[2] इति सूत्रे 'कष्टाये'ति निर्देशः 'सन्निपाते'[3]तिपरिभाषाऽनित्ये'ति वचनस्य ज्ञापकः[4] । यतोऽदन्तत्वसम्बन्धमाश्रित्य प्रवृत्तौ 'ङेर्य'[5]इति

---

1. अष्टा. 3/1/134 ।
2. अष्टा. 3/1/14 ।
3. (क) 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातकस्ये'ति व्याडिः प. सू. प. 10, पृ. 7 ।
   (ख) पु. दे. ल. प. वृ. प. 10, पृ. 117 ।
   (ग) सी. दे. बृ. प. वृ,.प. 64, पृ. 229 ।
   (घ) नी. दी. प. वृ. प. 75, पृ. 308, ।
   (ङ) ह. भा. प. भास्क. प. 66, पृ. 350 । भ. ना. प. शे. प. 86, पृ. 310 ।
   (च) शेषा. प. भास्क. प. 73, पृ. 73 ।
4. तथाहि –
   (क) 'नहि दोषाः सन्ती'ति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्ती'ति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । नहि दोषाणां लक्षणमस्ति । तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या, प्रतिविधेयं दोषेष्वित्यत्र प्रतिविधेयमित्यनेन 'कष्टाये'ति निर्देशस्य सन्निपात परिभाषाज्ञापकत्वं सूचयति पत.व्या. म. भा. 1/1/6/29 ।
   (ख) 'कष्टाये' ति ज्ञापिकाद् यशब्दे दीर्घो भविष्यती'त्याह कै. प्रदी. 1/1/6/29 ।
   (ग) 'तच्चानित्यत्वमस्याः' 'कष्टाय क्रमणे' (3/1/14 इति निर्देशेऽकारान्तत्वनिमित्ते 'ङेर्यः' (7/1/13) इति यकारे यञि'सुपिच' (7/3/102) इति अकारस्य दीर्घकरणादवसीयते' इत्याह पु. दे. ल. प. वृ. प. 10 पृ. 118 ।

याऽऽदेशोऽदन्तत्वसम्बन्धविघातकस्य '[1]सुपिचे'ति दीर्घस्य निमित्तं न स्यादनया परिभाषयेति 'कष्टाये'ति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने 'सन्निपात'-परिभाषायाः 'सुपिचे'ति दीर्घेऽप्रवृत्त्या निर्देशोऽयमुपपद्यते । न चैतद्वचन-ज्ञापनेऽपि याऽऽदेशस्य सुप्त्वाभावात् तस्मिन् परतः 'सुपिचे' ति दीर्घाप्राप्त्या निर्देशोऽयमनुपपन्न एवेति शङ्क्यम् । यतोऽत्र स्थानिवद्भावेन याऽऽदेशे 'ङे'गतं सुप्त्वं सुलभम् । न चात्र दीर्घो यञादित्वेन सुप्त्वेन च याऽऽदेशं परनिमित्तीकृत्य प्रवर्तते, स च दीर्घो यञंशेऽलाश्रयः, तस्मिन् कर्तव्ये याऽऽदेशस्य 'स्थानिव'[2]दिति स्थानिवद्भावो न प्राप्नोति 'अनल्विधा'[3]विति प्रतिषेधा'दित्यपि शङ्का कार्या । यतोऽत्र दीर्घस्य यञादिसुबाश्रयतयाऽऽदेशघटकयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये स्थानिवद्भावेन याऽऽदेशे सुप्त्वं सुलभमेव । 'अनल्विधा'[4]विति हि स्थान्यलाश्रय एव प्रवर्तते । तदुक्तं भट्टोजिदीक्षितेन 'अल् चेह स्थान्यवयव एव गृह्यते । तेन 'रामाये'त्यादौ'सुपिच' इति दीर्घः सिद्धः । तद्विधौ हि यञादित्वमाश्रितं यञ्चादेशावयवो न तु स्थान्यवयव[5] इति ।

नच यञादित्वसापेक्षदीर्घस्य बहिरङ्गतया 'असिद्धं बहिरङ्गमन्तरङ्गे'[6]-

---

(ग) 'अनित्या चेयं' 'कष्टाय क्रमणे' (3/1/14) इति निर्देशेऽकारान्तनिमित्तेन 'ङेर्यः' (7/1/13) इति ये कृते यादौ दीर्घकरणादाहु'रित्याह सी. दे. बृ.प. वृ. प. 64, पृ. 229 ।

(घ) इयं चानित्या । 'कष्टाय क्रमणे' इत्यादिनिर्देशाद्' इत्याह नी. दी. प. वृ. प. 75 पृ. 308 ।

(ङ) 'प्रत्युत स्वस्रादौ तिसृचतस्रोः पाठादनित्यं 'कष्टाय क्रमणे' (3/1/4) इति निर्देशा'-दित्याह - ह. भा. प. भास्क. प. 66, पृ. 351 ।

(च) 'कष्टाये'ति निर्देशेन तस्या अनित्यत्वज्ञापना'दित्याह - भ. दी. वै. सि. कौ. स्वर-सन्धि प्र. पृ. 101 ।

(छ) 'कष्टाये' ति निर्देशेनैतस्या अनित्यत्वा'दित्याह भ. ना. प. शे. प. 86, पृ. 314 ।

5. अष्टा. 7/1/13 ।

1. अष्टा. 7/3/102 ।

2. अष्टा. 1/1/56 ।

3. अष्टा. 1/1/56 ।

4. अष्टा. 1/1/56 ।

5. प्रौ. मनो. स्वरसन्धिप्र. पृ. 83 ।

6. (क) व्याडिः प. सू. प. 36, 79, पृ. 18, 33,
(ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
(ग) सी. दे. बृ. प. वृ..प. 69, पृ. 234 ।
(घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
(ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।

इति परिभाषयाऽसिद्धत्वात् संनिपातविघाताभावेन 'कष्टाये'ति निर्देशस्य ज्ञापितैतद्वचनाभावेऽप्युपपत्तेर्नास्य निर्देशस्य ज्ञापकत्वमुक्त'मित्यपि शङ्कनीयम् । यत आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानतया संनिपातपरिभाषा-प्रवृत्तिरेतद् वचनाभावेऽत्र दुर्वारा । ज्ञापितस्यास्य वचनस्य फलं तु 'रामाय' दाक्षिरित्यादौ दीर्घादि-सिद्धिः । अन्यथा क्रमशोऽदन्तसन्निपातेन जातो याऽऽदेशः[1], इञ्प्रत्ययश्च[2] तत्संनिपातविघातकं 'सुपि[3]चे' ति दीर्घं 'यस्येति चे[4]'ति लोपं च प्रति निमित्तमनया न स्यादिति दीर्घलोपौ नात्र स्याताम् ।

अन्ये तु 'कष्टाय क्रमणे' इत्यत्र 'कष्टाये'ति निर्देशो नैतद्वचनज्ञापकः । यतोऽत्र 'यञी'ति यकारेण प्रत्याहाराऽऽश्रयणसामर्थ्यात् 'सुपिचे'ति दीर्घस्य सुलभतया नायं निर्देश एतद्वचनं विनानुपपन्न इत्याहुः[5] । तस्मादेतद्वचनज्ञापकम् 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' (8/2/2) इति तुग्ग्रहणम् । यदीयं नित्या स्यात्तदा वृत्रहभ्यामित्यत्रानयैव तुग्न भविष्यतीति तुग्ग्रहणमनर्थक'मित्याह सीरदेवः[6] ।

---

(च) भा. ना. प. शे. प. 51, पृ. 183 ।
(छ) शेषा. प. भास्क. प. 42, पृ. 417 ।

1. 'ङेर्यः' - अष्टा. 7/1/13 ।
2. 'अत इञ्' - अष्टा. 4/1/95 ।
3. अष्टा. 7/3/102 ।
4. अष्टा. 6/4/148 ।
5. तथाहि –
'ननु कथं 'कष्टाय' 0 (3/1/14) इति ज्ञापकं यावता 'अतो दीर्घो यञि' (7/3/101) इति यकारेण प्रत्याहारसामर्थ्यात् 'कष्टाय.' (3/1/14) इत्यत्र 'सुपिच' इति दीर्घत्वं सिद्ध्यति । उच्यते । 'प्वादीनां ह्रस्वः' (7/3/80) इत्यत्राऽऽगणान्ताः प्वादय इतिदर्शने 'जानाती'त्यत्र 'ज्ञाजनोर्जा' इति आदेशे कृते ह्रस्वत्वं प्राप्नोति । तन्माभूदित्येवर्थं दीर्घान्तादेशविधानमुक्तम् । अन्यथा यदि जानातीत्यत्र 'प्वादीनांह्रस्व' इति (7/3/80) ह्रस्वत्वेन भवितव्यं तदा ह्रस्वमेव क्रियात् 'ज्ञाजनोर्ज' इति । ननु 'जायत' इत्यत्र दीर्घश्रुत्यर्थं' दीर्घान्तादेशविधानं स्यात् । नैतत् । जभावेऽपि कृते 'अतोदीर्घो यञि' (7/3/101) इतिदीर्घत्वमिति न शक्यते वक्तुम् । यदि पुनरागणान्ताः प्वादयो न भवन्तीति दर्शनं तदा जानातीत्यत्र 'प्वादीनाम् (7/3/80) इति नास्ति । अङ्गवृत्तपरिभाषया वा ह्रस्वाभावोऽभिधीयते । कृते वा ह्रस्वत्वे तु पुनः 'अतोदीर्घो यञि' इति दीर्घत्वम् । तदा यकारेण प्रत्याहारग्रहणसामर्थ्याद्दीर्घत्वं शक्यत एव वक्तुमिति नानित्यत्वे ज्ञापक'मित्याह सी. दे. बृ. प. वृ. प. 64, पृ. 229 - 230 ।
(ख) 'यत्तु - 'कष्टाय क्रमणे' इति निर्देशो ज्ञापक इति, तत् यञीति यकारेण प्रत्याहाराश्रयणसामर्थ्याद् दीर्घसिद्धेरयुक्तमित्यपि वदन्ती'त्याह शेषा. प. भास्क. प. 73. पृ. 442 ।
6. बृ. प. वृ. प. 64, पृ. 230 ।

## 'कुप्वोःके'ति विसर्गनिर्देशः

[1]'कुप्वोः ≍ क ≍ पौ चे'ति सूत्रे 'कुप्वोः के'ति विसर्गनिर्देशः 'अयोगवाहानां[2] प्रत्याहारेषु सामान्येनोपदेशः' इतिवचनस्य ज्ञापकः[3] । यतोऽत्र जिह्वामूलीयस्य[4] प्रत्यहारसूत्रे पाठो नास्तीति खर्त्वाभावात् 'खरिचे'[5]त्यस्याप्राप्त्या 'कुप्वोः ≍ के'ति विसर्गनिर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने जिह्वामूलीयस्यायोगवाहतया खरि पाठात् तस्मिन् परे 'खरिचे'ति विसर्गः प्राप्त इत्ययं निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु संपूर्वकात् करोतेरभूषणे[6] यदा सुड्न भवति तदानुस्वारस्यायोगवाहतया यण्त्वात् 'यणो मयो[7] द्वे' इति ककारस्य द्वित्वे 'संक्करोती'ति द्विककारकप्रयोगसिद्धिः । एतद्वचनाभावे हि यणि नानुस्वारस्य पाठः सम्भवतीति ककारस्य द्वित्वाप्राप्त्या नासौ सिद्ध्येत् ।

अत्रावधेयम् – 'अयोगवाहानां यत्र यत्र प्रत्याहारे प्रयोजनं तत्र तत्रोपदेशः' इति ज्ञाप्यवचनस्वरूपं स्वीकार्यं सामान्यापेक्षं ज्ञापनमिति सिद्धान्तात् । विशेषापेक्षं ज्ञापनमिति सिद्धान्ते तु 'अयोगवाहानां खर्युपदेशः 'इत्येव ज्ञाप्यवचनस्वरूपं युक्तम् । अत्र पुरुषोत्तमदेवोक्तम् 'अयोगवाहानां प्रत्याहारेषु सामान्येनोपदेशः' इति ज्ञाप्यवचन-स्वरूपं न युक्तम् । यतस्तेषां प्रत्याहारेषु सामान्येनोपदेशस्वीकारे इणि तत्पाठस्य दुर्वारतया 'छन्दःसु' 'पयःसु' इत्यादौ इणः परस्य विहितम् 'आदेशप्रत्यययोरिति[8] षत्वमापद्येत । अतएव भट्टोजिदीक्षितेन 'अनुस्वारविसर्गजिह्वामूलीयो-

---

1. अष्टा. 8/3/37 ।
2. 'अयोगवाहाः' = 'अविद्यमानो योगः प्रत्याहारेषु सम्बन्धो येषां तेऽयोगाः, अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसम्बन्धशून्या इत्यर्थः । वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः । अयोगाश्च ते वाहाश्चेति कर्मधारयः । अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयामाणा इत्यर्थः, ते च विसर्जनीय - जिह्वामूलीयोपध्मानीयानुस्वारयमा इति भाष्यमित्याह भ. दी. – श. कौ. हयवरट् सू. 5 ।
3. (क) 'कुप्वो ≍क≍ पौचेति (8/3/37) निर्देशे विसर्जनीयकरणं ज्ञापकम् । अयोगवाहानां सामान्येनोपदेश इति । एवं च जिह्वामूलीयस्यात्र खर्यन्तर्भावात् तस्मिन् खरीति (8/3/15) विसर्जनीय उपपन्नो भवति नान्यथा । तेन संपूर्वकात् करोतेरभूषणे यदा सुट् नास्ति तदायोगवाहानां सामान्येनोपादानेऽनुस्वारस्य यण्त्वात् यणोमय इति (8/4/47 वा.) ककारस्य द्वित्वे संक्करोतीति सिद्ध्यती'त्याह पु. दे. ज्ञा. समु. विंशतितमे मतुपपादे पृ. 98।
4. ≍'कैत्यत्र ककात्प्राग् विद्यमानोर्द्धविसर्गसदृशो जिह्वामूलीय इति भ. दी. वै. सि. कौ. संज्ञा प्र. पृ. 13 ।
5. अष्टा. 8/3/15 ।
6. 'संपर्युपेभ्यः करोतौ भूषणे' – 6/1/137 । इत्युक्तत्वादिति शेषः ।
7. का. वा. 8/4/47 ।
8. अष्टा. 8/3/59 ।

पध्मानीययमानामकारोपरि शर्षु च पाठः स्वीकृतः[1] । वार्तिककारोऽपि प्रत्याहारविशेषेषु तेषां पाठं स्वीचक्रे न तु प्रत्याहारसामान्ये । यतस्तेन–

'अयोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे । अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यविधिद्विर्वचनं स्थानिवत्त्वनिषेधाः' ।। इत्युक्तम्[2] ।

पुरुषोत्तमदेवोक्तं यणि तेषां पाठस्य [3]'संक्करोती'ती द्विककारप्रयोगसिद्धिरूपं फलमपि प्रत्याहारविशेषेषु तत्पाठाभ्युपगमे यणि तत्पाठात्सूपपन्नम् । अतः प्रत्याहारेषु सामान्येनोपदेशस्तेषामिति ज्ञाप्यवचनस्वरूपं न युक्तमिति मन्ये ।

## 'क्षियः' 'क्रिय' इतीयङ्-निर्देशौ

'क्षियो[4] दीर्घा'दिति सूत्रे 'क्षियः' इति, 'परिव्यवेभ्यः-क्रियः'[5] इति सूत्रे 'क्रियः' इतीयङ्-निर्देशौ 'प्रकृतिवदनुकरणं भवती'ति परिभाषाया[6] [7]ज्ञापकौ । यतोऽत्र

---

1. वै. सि. कौ. हल्सन्धिप्र..पृ. 71 ।
2. वार्तिकमिदं समुद्धृत्य चारु व्याख्यातं भट्टोजिदीक्षितेन–श. कौ. हयवरट् ।
3. ज्ञा. समु. पृ. 98 ।
4. अष्टा. 8/2/46 ।
5. अष्टा. 1/3/18 ।
6. (क) व्याडि प. सू. प. 86, पृ. 35 ।
   (ख) पु. दे. ल. प. वृ. प. 114, पृ. 159 ।
   (ग) सी. दे. बृ. प. वृ. प. 18, पृ. 181 ।
   (घ) नी. दी. प. वृ. प. 23, पृ. 297 ।
   (ङ) ह. भा. प. भास्कर. प. 18, पृ. 329 ।
   (च) भ. ना. प. शे. प. 37, पृ. 163 ।
   (छ) शेषा. प. भास्क. प. 36, पृ. 410 ।
7. (क) 'क्षिय' इतीयङ्-निर्देशोऽस्या ज्ञापकः' इत्याह भ. ना. प. शे. प. 37, पृ. 163 ।
   (ख) अस्याश्च ज्ञापकम्–'क्षियोदीर्घात् (8/2/46) इति धात्वनुकरणस्य धातुप्रयुक्तेयङ्-निर्देशः' इत्याह शेषा. प. भास्क. प. 36, पृ. 111 ।
   (ग) "अलुक् ।। 2 ।। प्रकृतिवदनुकरणं भवति । 'क्षियः' (सू. 8/2/46) इत्यादावियङ्-निर्देशा"दित्याह श्रीना. ज्ञा. सं. 1/1, पृ. 3 ।
   (घ) "ज्ञापकं चात्रार्थे'परिव्यवेभ्यः क्रियः' (1/3/18) इत्यादौ निर्देशे क्रीत्यादेरनुकरणस्य विभक्त्युत्पत्त्यर्थं–प्रातिपदिकत्वाभ्युपगमेऽपि धातुत्वाश्रयमियङादेशकरणमि"त्याह पु. दे. ल. प. वृ. प. 114, पृ. 159
   (ङ) "ज्ञापकं चात्र 'परिव्यवेभ्यः क्रियः' (1/3/18) इत्यादौ निर्देशे क्रीत्यादेरनुकरणशब्दस्य विभक्त्युत्पत्त्यर्थं प्रातिपदिकसंज्ञाभ्युपगमेऽपि धातुत्वाश्रयस्येङादेशस्य करण"मित्याह सी. दे. वृ. प. वृ. प. 18, पृ. 181 ।
   (च) "अत्र ज्ञापकं 'परिव्यवेभ्यः क्रियः' (1/3/18) इत्यत्र क्रियः इति इयङादेशकरण"-मित्याह ह. भा. प. भास्क. प. 18, पृ. 329 ।

सूत्रस्थौ 'क्षि'शब्दः 'क्री' शब्दश्च क्रमशः 'क्षि क्षये'[1] 'क्षि[2]निवासगत्योः' 'डुक्रीञ्[3] द्रव्यविनिमये' इति धातुपाठपठितक्षि-क्रियोरनुकरणे, अनुकरणशब्दयोरनयोरनुकार्य-धातुपाठपठित-क्षिक्री-[4]भिन्नतया क्रियावाचित्वाभावेन धातुत्वाभावाद् 'अचिश्नुधातु-[5]भ्रुवां य्वोरियङुवङा'वितीयङ् न प्राप्नोतीति निर्देशाविमावनुपपन्नौ ।

ज्ञापितायां चास्यां क्षि-क्रियोरनुकरणयोरपि धातुत्वस्यानयातिदेशादियङोः सुलभतया निर्देशावमू समुपपद्येते । ज्ञापिताया अस्याः परिभाषायाः फलं तु 'द्विः पचन्त्वित्याहे'त्यत्र 'पचन्तु' शब्दे निघातस्वर-सिद्धिः । अस्या अभावे हि अत्र 'पचन्तु' शब्दस्य क्रियासाधनत्वाद्यवाचकत्वात्तिङन्तत्वं नास्तीति 'तिङ्ङतिङः[6]' इति सूत्रेण 'अतिङन्तात्परं तिङन्तमनुदात्त' मित्यर्थकेन निघात-स्वरो न सिद्ध्येत् । अस्याः सत्त्वे तु अनुकार्ये 'पचन्तु' इति तिङन्ते यथा निघातो भवति तथात्रानुकरणे 'पचन्तु' शब्देऽपि स सिद्ध्यति । अनुकरणं प्रकृतिवत् अनुकार्यतुल्यं भवति, अनुकार्ये यत्कार्यं भवति अनुकरणेऽपि तद्भवतीति हि तत्परिभाषार्थः ।

## 'तदि'ति द्वितीयान्तनिर्देशः

'तदर्ह[7]'मिति सूत्रे 'तदि'ति द्वितीयान्तनिर्देशः 'कर्तृकर्मणोः[8] कृती'ति षष्ठी अनित्ये'ति वचनस्य ज्ञापकः[9] । यतोऽत्रार्हशब्दः पचाद्यजन्त-[10]स्तद्योगे तच्छब्दात् षष्ठ्या दुर्वारतया 'तदि'ति द्वितीयान्तनिर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने कर्मषष्ठ्या अनित्यत्वेनात्र तदप्रवृत्तौ 'तदि'ति निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'धायैरामोदमुत्तमम्' इति [11]भट्टिप्रयोगे 'धाये'ति कृद्योगे 'आमोद-

---

1. धा. पा. भ्वा. 236 ।
2. धा. पा. तुदा. 1408 ।
3. धा. पा. क्र्या. 1474 ।
4. अनुकार्यादनुकरणं भिन्नं भू सत्तायामित्यादिनिर्देशादित्यत्रैव शोधप्रबन्धेऽन्यत्र निरूपितम् ।
5. अष्टा. 6/4/77 ।
6. अष्टा. 8/1/28 ।
7. अष्टा. 5/1/117 ।
8. अष्टा. 2/3/65 ।
9. तथाहि–
   (क) 'तदर्हमि'ति (5/1/117) निर्देशेन कर्तृकर्मणोः कृतीत्यस्यनित्यत्वात् 'धायैरामोदमुत्तमम्' इतिभट्टिप्रयोगे द्वितीयास्ती'–त्याह पु. दे. ज्ञा. समु. सप्तदशे क्रीतपादे पृ. 79 ।
   (ख) 'तदर्हमिति निर्देशात् 'कर्तृकर्मणोः कृति' इत्येतदनित्यम् । तथाच 'धायैरामोदमुत्तमम्' इतिभट्टिप्रयोगः संगच्छत' इत्याह ज्ञा. भि. त. बो. षष्ठीकारक प्र. पृ. 348-349, तद्धिते च भावकर्मार्थ प्र. पृ. 717 ।
10. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः'–अष्टा. 3/1/134
11. भ. का. ।

मुत्तमम्' इति द्वितीयान्तस्य साधुत्व-सिद्धिः । अत्र 'धाय' शब्दः पोषणार्थक- [1]धाञ्-धातोः 'ददातिदधात्योर्विभाषा' इति 'ण' प्रत्ययान्तत्वेन कृदन्तः । एतद्वचनाभावे हि 'कर्तृकर्मणो'रिति षष्ठ्या दुर्वारत्वेन 'आमोद'मिति द्वितीयान्तस्यात्र साधुत्वं न सिद्ध्येत् ।

हरदत्तमिश्रोऽत्र निर्देशे निपातनाद् द्वितीये[2]'ति, भट्टनागेशोऽत्र निर्देशे सौत्र-त्वाद् [3]द्वितीये'ति, वासुदेवदीक्षितश्चात्र निर्देशे कृद्योगलक्षणषष्ठ्यभावस्तु [4]आर्षः' इति स्वीकृत्य नास्य निर्देशस्योक्तवचनज्ञापकत्वं मन्यन्ते ।

न चैषां मतेषु 'धायैरामोदमुत्तमम्' इति भट्टिप्रयोगे द्वितीयायाः साधुत्वानुपपत्तिः । तत्र श्लोक 'गृहीत्वे'त्यध्याहृत्य द्वितीयायाः साधुत्वोपपत्तेः[5] । इत्थं 'कर्तृकर्मणोः कृती'ति षष्ठी अनित्येति वचनस्य प्रयोजनाभावात् 'तदर्ह'मित्यस्य सौत्रत्वादप्युपपत्तौ 'तदि'ति निर्देशस्योक्तवचनज्ञापकत्वं पुरुषोत्तमदेवोक्तं न युक्तम् । यतो 'ज्ञापकं तदेव भवति यदनुपपन्नं ज्ञापिते चोपपन्नं तज्ज्ञापितस्य फलमप्यन्यत्र भवती'त्यभियुक्तैरुक्तम् ।

## 'तेन उपज्ञाते' इति निर्देशः

'तेन[6]' इत्यधिकारे 'उपज्ञाते'[7] इति निर्देशः [8]मतिबुद्धीति सूत्रविहितो वर्तमाना-र्थकक्तप्रत्ययो भूतार्थकक्तप्रत्ययस्य[9] बाधको ने'ति वचनस्य ज्ञापकः[10] । यतो 'मति-

---

1. 'डुधाञ् धारणपोषणयोः'–धा. पा. जुहो. 1092 ।
2. पदम. 5/1/117 ।
3. ल. श. शे. तद्धिते भावकर्मार्थप्र. पृ. 717 ।
4. बा. मनो. तद्धिते भावकर्मार्थ प्र. पृ. 717 ।
5. अयमाशयः–भट्टिकाव्ये विरहार्तस्य श्रीरामस्य–
   'ददैर्दुःखस्य मातृभ्यो धायैरामोदमुत्तमम् ।
   लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलोनकः" ॥
   इत्युक्तिः । अत्र दुःखस्य तनोरिति च कर्मणि षष्ठी । मातृभ्यो दुःखस्य=दुःखं, ददैः= ददद्भिः, (पुष्पाऽऽदीनाम्) उत्तमम् आमोदं (गृहीत्वा) दुःखस्य धायैः=पोषकैः, तनोः=तनुं शरीरं लिम्पैः=लिम्पद्भिः, वातैः=पवनैः, कः, चेतयः=प्राणी, ज्वलः=ज्वलन्निव न स्यादिति ।
6. अष्टा. 4/3/112 ।
7. अष्टा. 4/3/115 ।
8. 'मतिबुद्धिपूजार्थेभ्यश्च 2/2/108 ।
9. 'निष्ठा'–अष्टा.– 3/2/102
10. तथाहि–
   (क) 'पूजितो यः सुरासुरैः' 'त्वया ज्ञातो घटः' इत्यादौ तु भूते क्तप्रत्ययो बोध्यः । न च 'मतिबुद्धी'त्यनेन भूतक्तस्य बाधः शङ्क्यः, तेन' इत्यधिकारे 'उपज्ञाते' इतिलिङ्गात्तद्-बाधकत्वज्ञापनादित्याहु' रित्याह वा. दी. बा. मनो. षष्ठीकारक प्र. पृ. 350 ।
   (ख) 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तो, न तु वर्तमाने । तेन तृतीया तत्रोपपद्यते । न च 'मतिबुद्धि' इति सूत्रेण भूते क्तस्य बाधः शङ्क्यः 'तेन' इत्यधिकारे 'उपज्ञाते' इतिलिङ्गेनाबाधकत्वज्ञापना'दित्याह ज्ञा. भि. त. बो. षष्ठीकारक प्र. पृ. 350 ।

बुद्धि' इति सूत्र-विहितः वर्तमानार्थकक्तप्रत्ययः 'निष्ठे'ति सूत्र-विहितस्य भूतार्थकक्त-प्रत्ययस्यापवादतया बाधको भवतीति निर्देशोऽयमनुपपन्नः । अत्र हि भूतार्थे क्तप्रत्ययो न तु वर्तमानार्थे, 'तेने'ति तृतीया नान्याथास्यात्, 'क्तस्य च [1]वर्तमाने'इति षष्ठ्या दुर्वारत्वात् । ज्ञापिते चास्मिन् वचनेऽत्र भूते क्तप्रत्ययस्य सुलभतया षष्ठ्या अप्राप्त्या 'तेन' 'उपज्ञाते' इति निर्देशः समुपपद्यते । ज्ञापितस्यास्व वचनस्य फलं तु 'पूजितो यः सुरासुरैः' इत्यादिप्रयोगेषु तृतीयायाः साधुत्व-सिद्धिः । एतद्वचनाभावे हि पूजितइत्यंत्र वर्तमानार्थकक्तप्रत्ययस्य 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं [2]बलीयः' इति परिभाषाबलेनापवादताया दुर्वारत्वात् 'सुरासुरै'रिति तृतीयायाः साधुत्वं न सिद्ध्येत् ।'क्तस्यच[3] वर्तमाने' इति हि षष्ठी एवोचिता । सति चास्मिन् वचनेऽत्रा-पवादोऽपि [4]'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमानार्थकक्तप्रत्ययो भूतार्थकक्तप्रत्ययस्य[5]-बाधको न भवतीति भूतार्थकक्तप्रत्ययस्य सुलभतया षष्ठ्या अप्राप्त्या तृतीयायाः साधुत्वं सिद्ध्यति । अतएव 'पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्' [6] इति ग्रन्थश्च सङ्गच्छते ।

## 'तौ'इति निर्देशः

[7]'तौ स'दिति सूत्रे 'तौ' इति निर्देशः 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिवि-शते'[8] इति परिभाषाया [9]ज्ञापकः । यतोऽत्र तच्छब्दादौविभक्तौ [10]'त्यदादीनामः'

---

(ग) 'मतिबुद्धि' (सू. 2/2/188) अयं न भूते क्तस्य बाधकः । 'तेन' (सू. 4/3/112) इत्यधिकारे 'उपज्ञाते' (सू. 4/3/115) इतिलिङ्ग'दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2 पृ. 211 ।

1. अष्टा. 2/2/67 ।
2. (क) भ. ना. प. शे. प. 39, पृ. 170 ।
   (ख) शेषा. प. भास्क. प. 38,–'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' पृ. 413 ।
3. अष्टा. 2/2/67 ।
4. अष्टा. 2/2/188 ।
5. 'निष्ठा'–अष्टा. 3/2/102–इतिविहितस्येत्यर्थः ।
6. का. 4/3/115 ।
7. अष्टा. 3/2/127 ।
8. (क) पु. दे. ल. प. वृ. प. 115, पृ. 159 ।
   (ख) सी. दे. बृ. प. वृ. प. 33, पृ. 200 ।
   (ग) नी. दी. प. वृ. प. 44, पृ. 301 ।
   (घ) ह. भा. प. भास्क. प. 33, पृ. 337 ।
   (ङ) भ. ना. प. शे. प. 59, पृ. 273 ।
9. तथाहि–'तौसत्' (3/2/127) इति निर्देशोऽत्र लिङ्ग'मित्याह नी. दी. प. वृ. प. 44, पृ. 301 ।
10. अष्टा. 7/2/102 ।

इत्यत्वे [1]पररूपे च कृते 'त-औ' इति स्थिते [2]'वृद्धिरेची'ति वृद्ध्यैकादेशस्यापवादभूतस्य [3]'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घैकादेशस्य विषये, [4]'नादिची'ति पूर्वसवर्णैकादेशप्रतिषेधेऽपि वृद्ध्यैकादेशस्याप्रवृत्तौ निर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यामपवादस्य पूर्वसवर्णदीर्घैकादेशस्यापि विषये, उत्सर्गस्य वृद्ध्यैकादेशस्य प्रवृत्तेः सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'रामा'वित्यादौ वृद्ध्यैकादेशापवादभूतस्य पूर्वसवर्णदीर्घैकादेशस्योत्सर्गस्य सिद्धिः । अस्या अभावे हि 'नादिची'ति प्रतिषेधेऽप्यपवादविषये सर्वदोत्सर्गाप्रवृत्तौ वृद्ध्यैकादेशोऽत्र न सिद्ध्येत् । अत्र 'अभिनिविशते' इत्यस्य 'प्रवर्तते' इत्यर्थः । 'दे'[5]धातोर्लिटि 'दिग्धे' इत्यादौ [6]'दयतेर्दिगि लिटी'ति दिग्योगे दिगूत्वप्रवृत्त्यदर्शनादिह 'क्वचि'दित्युक्तम् ।

## 'तत्र इवे'ति निर्देशः

'तत्र[7] तस्येवे'ति सूत्रे 'तत्र इवे'ति निर्देशः 'इवशब्दयोगे सप्तमी भवती'ति वचनस्य [8]ज्ञापकः । यतोऽस्य वचनस्याभावे सम्बन्ध-सामान्ये षष्ठ्या इवशब्दयोगे सम्भवेऽपि तद्योगे सप्तम्याः केनापि सूत्रेणाविधानात् 'तत्रइवे'ति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने सप्तम्या इवशब्द-योगे सुलभतया निर्देशोऽयमुपपद्यते । एतद्वचनाभावे न केवलं निर्देशोऽयमनुपपन्नः, किन्तु सप्तम्यन्ताद् इवार्थे वतिप्रत्ययविधानमपीदमनुपपन्नम् । ज्ञापिंते चास्मिन् वचने 'मथुरायामिव मथुरावत् स्रुघ्ने प्राकार' इत्यादौ इवशब्द-योगे सप्तम्याः सुलभतया 'मथुरायाम्' इति सप्तम्यन्ताद्वतिप्रत्ययविधानमिदमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'देवेष्विव नाम' 'ब्राह्मणेष्विव नाम'—इत्यादीनां प्रयोगाणामुपपत्तिः । कैयटस्तु नास्य निर्देशस्य विधानस्य

---

1. 'अतो गुणे'—अष्टा. 6/1/97 ।
2. अष्टा. 6/1/88 ।
3. अष्टा. 6/1/102 ।
4. अष्टा. 6/1/104 ।
5. 'देङ्रक्षणे' धा. पा. भ्वा. 962 ।
6. अष्टा. 7/4/9 ।
7. अष्टा. 5/1/116 ।
8. तथाहि—
   (क) 'एवं तर्हि सिद्धे सति यदिवशब्देन योगे सप्तमी समर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यो 'भवतीवशब्देन योगे सप्तमी'ति । किमेतस्य वचनस्य ज्ञापने प्रयोजनम् ? 'देवेष्विव नाम' 'ब्राह्मणेष्विव नाम'—एष प्रयोग उपपन्नो भवती'त्याह पत.व्या. म. भा. 5/1/2/116 ।
   (ख) 'तत्र तस्येह' (सू 5/1/116) । अस्मादेव ज्ञापकादिवशब्देन सप्तमी भवतीत्याह श्रीना. ज्ञा. सं. 5 पृ. 91 ।
   (ग) 'अस्मादेव निर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तमी'ति भाष्य'मित्याह ज्ञा. भि. त. बो. तद्धिते भावकमार्थ प्र. पृ. 716 ।

वा ज्ञापकत्वं [1]मनुते । भट्टनागेशस्तु कैयटमतं निरस्यन् 'इवशब्दयोगे उपमानविशेषणादुपमानविशेष्याच्च षष्ठ्यर्थे सप्तमी'ति वचनस्यापि ज्ञापकत्वमस्य [2]मनुते । [3]भाष्याक्षरस्वारस्यात्, ज्ञानेन्द्रभिक्षु-ग्रन्थ[4]स्वारस्यात्, श्रीनागेश-[5]ग्रन्थस्वारस्याच्चास्य निर्देशस्य विधानस्य वा 'इवशब्दयोगे सप्तमी भवती'ति वचनज्ञापकत्वं चारु प्रतिभाति ।

इदमप्यत्रावधेयं यद् उद्योत-प्रभृति-ग्रन्थरचनाचुञ्चुर्भट्टनागेशः ज्ञापकसंग्रह-कर्ता नागेशस्तु नैव । यतोऽत्रापि नानयोर्विचार एकः । अतएवात्र प्रबन्धे सर्वत्र मया तयोः पार्थक्यधिया भट्टनागेशः श्रीनागेशः इति पृथङ्नामभ्यामनयोर्निर्देशः कृत इति ।

## 'तस्मै प्रभवति' 'स एषां ग्रामणीः' इति निर्देशौ

'तस्मै[6] प्रभवति' 'स एषां [7]ग्रामणीः' इतीमौ सूत्र-निर्देशौ 'प्रभ्वादियोगे षष्ठ्यपि साधुः' इति वचनस्य [8]ज्ञापकौ । यतः पर्याप्त्यर्थक-शब्द-योगे चतुर्थ्याः साधुत्वं, 'नमः

---

1. अनेन हि–'नन्वसति प्रयोजने ज्ञापकं भवति । अस्ति च सप्तम्युपादानस्य प्रयोजनं मथुरायामिव मथुरावत् पाटलिपुत्रे प्राकार इत्यादौ प्राकाराद्याधेयापेक्षयाधिकरणविहितसप्तम्यन्तात् प्रत्ययविधानम् । किंच ज्ञापकात् सप्तम्यनुमानेऽधिकरणसप्तम्यन्ताद् वतेरनुपपत्तिः स्यात् । एवं तर्हि तन्त्रेण सूत्रद्वयमुच्चारितमिति भाष्यकाराभिप्रायः । तत्रैकेन सूत्रेण स्वलक्षणविहितषष्ठी सप्तम्यन्ताद् वतिर्विधीयते, द्वितीयेन त्विवशब्दयोगे तस्येत्यस्यार्थे तत्रेति सप्तमी विधीयते । सप्तम्या षष्ठी माबाधीति 'तस्ये'त्यनेन प्रतिप्रसूयते । महाविभाषाधिकाराद्वा षष्ठी न बाध्यत' इत्युक्तम् प्रदी. 5/1/2/119 ।
2. अनेन हि–'परे तु षष्ठ्यर्थसप्तम्यन्तात् षष्ठ्यन्ताच्चायं साधुः । अधिकरणसप्तम्यन्तात्तु नायम्, असामर्थ्यात् । अत एवैतत्सूत्रे तत्र ग्रहणस्येवशब्दयोगे षष्ठ्यर्थे सप्तमी ज्ञापकतोक्ता भाष्ये । देवेष्विव मनुष्येषु नामेति उदाहृतम् । तत्रैव देववन्मनुष्येषु नामेति साधु । उपमानदेवसम्बन्धिनामाभिन्नं मनुष्यसम्बन्धिनामेति बोधः । 'मथुरावत् पाटलिपुत्रे प्राकार' इत्यस्य उपमानमथुरासम्बन्धिप्रकाराभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येवं बोध एव साधुत्वम् । अस्मादेव ज्ञापकादिवयोगे उपमानविशेषणादुपमानविशेष्याच्च षष्ठ्यर्थे सप्तमी'त्युक्तम् ल. श. शे. तद्धिते भावकर्मार्थ प्र. पृ. 717 । उद्योते च 5/1/2/116, पृ. 335 ।
3. व्या. म. भा. 5/1/2/116, पृ. 335 ।
4. त. बो. तद्धिते भावकर्मार्थ प्र. पृ. 716 ।
5. ज्ञा. सं. 5, पृ. 91 ।
6. अष्टा. 5/1/101 ।
7. अष्टा. 5/2/78 ।
8. तथाहि–
   (क) 'अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुःसमर्थ इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै-प्रभवति, स एषां ग्रामणी'रित्यादिनिर्देशात् । तेन

[1]स्वस्ति स्वाहा स्वधाऽलंवषड्योगाच्चे'ति सूत्रस्थेन'अलमिति [2]पर्याप्त्यर्थग्रहण'मिति वार्तिकेन लभ्यते । तथा सति 'एषां ग्रामणीः 'इत्यत्र 'एषा'मिति षष्ठीनिर्देशोऽनुपपन्नः । ग्रामणीशब्दस्यात्र हि प्रधानं मुख्यः पर्याप्त इत्यर्थः । यदि च 'स एषां ग्रामणीः' इति निर्देशाद् 'नमः स्वस्ती'त्यादौ 'अलं' शब्दः पर्याप्तीतरार्थकः, तद्योगे चतुर्थी भवतीति नात्र निर्देशे एतच्छब्दाच्चतुर्थी प्राप्नोतीत्युच्येत तथापि 'तस्मै प्रभवती'ति सूत्रे'तस्मै 'इति चतुर्थ्या निर्देशोऽनुपपन्नः । यतोऽत्र प्रभवतिना समर्थः शक्त इत्युच्यते । इत्थमिमौ निर्देशावनुपपन्नौ भूत्वाऽऽत्मनः समुपपत्तये वचनमिदं ज्ञापयतः । ज्ञापितेचास्मिन् वचने प्रभ्वादियोगे षष्ठीचतुर्थ्योरुभयोः पर्यायेण साधुत्वलाभादमू निर्देशौ समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'प्रभुर्बुभूषुर्भुवनत्रयस्ये'ति[3] महाकविप्रयोगे भुवनत्रयस्ये'ति षष्ठ्याः साधुत्व-सिद्धिः । अन्यथा भाष्यवार्तिकबलेन चतुर्थ्या दुर्वारतया नात्र षष्ठ्याः साधुत्वं सिद्ध्येत् ।

## 'तस्य पर'मिति निर्देशः

'तस्य[4]परमाम्रेडित'मिति सूत्रे 'तस्य पर'मिति निर्देशः 'अवयववाचियोगे न पञ्चमी'ति वचनस्य ज्ञापकः[5] । यतोऽ'न्यारा'[6]दिति सूत्रे दिक्शब्देन दिशि दृष्टः शब्दो गृह्यते,[7] तथा सति कदाचिद् दिग्वाचकानामधुना कालवाचकानामपि योगे यथा

---

'प्रभुर्बुभूषुर्भुवनत्रयस्ये'ति सिद्ध्यती'त्याह भ. दी. वै. सि. कौ. चतुर्थीकारक प्र. पृ. 333 ।

(ख) 'नमः स्वस्ति' (सू. 2/3/16) ।। प्रभ्वादियोगे षष्ठ्यपि साधुः । 'तस्मै प्रभवति' (सू. 5/1/101) 'स एषां ग्रामणीः (सू. 5/2/78) इति निर्देशा'दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2 पृ. 208 ।

1. अष्टा. 2/3/16 ।
2. व्या. म. भा. 2/3/1/16 ।
3. शिशु. वध. ।
4. अष्टा. 8/1/2 ।
5. तथाहि–
   (क) 'अवयववाचि योगे तु न, तस्य परमाम्रेडितमिति निर्देशात् । पूर्वं कायस्ये'त्याह भ. दी. वै. सि. कौ. पञ्चमीकारक प्र. पृ. 339 ।
   (ख) 'अन्यारात् (सू. 2/3/29) ।। अवयववाचियोगे तु न । 'तस्य परमाम्रेडितम्' (सू. 8/1/2) इति निर्देशा'दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2 पृ. 208 ।
6. 'अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते'–अष्टा. 2/3/29
7. (क) दिक्शब्द इत्यत्र शब्द-ग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात् । इतरथा हि दिग्वृत्तिनैव स्यात् । इयमस्याः पूर्वेति । इह तु न स्यात् । अयमस्मात् पूर्वः काल इति जया. का. 2/3/39
   (ख) 'दिशि दृष्टः शब्दो दिक्शब्दः । तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात् पूर्वः फाल्गुनः 'इति भ. दी. वै. सि. कौ. पञ्चमीकारक प्र. पृ. 338-339 ।

'चैत्रात्पूर्वः फाल्गुनः' इत्यत्र पञ्चमी भवति तथा परशब्दस्य दृग्दृष्टतया इदानीमवयववाचकस्यापि योगे 'तस्य पर'मित्यत्र तच्छब्दात् पञ्चम्या दुर्वारतया 'तस्य पर'मिति निर्देशोऽनुपपन्नः । अत्र हि 'तस्ये'त्यनेन पूर्वप्रकृतं द्विरुक्तं परामृश्यते, पराशब्देन च परावयवः । ज्ञापिते चास्मिन् वचने [1]'तस्यपर'मित्यत्र परशब्दस्य दिग्दृष्टत्वेऽपि अवयववाचकत्वात् 'अन्यारा'[2]दिति दिक्शब्दयोगे विहितायाः पञ्चम्या निषेधात् षष्ठ्युपपत्तौ निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'पूर्वं कायस्ये'–त्यादौ षष्ठ्याः साधुत्वम् । अन्यथा प्रकृते पूर्वशब्दस्य शरीरावयववाचकत्वेऽपि, अन्यत्र दिग्वाचकत्वात् तद्योगे पञ्चमी दुर्वारेति षष्ठ्याः साधुत्वं न स्यात् ।

## 'तृणह' इति निर्देशः

'तृणह[3] इम्' इति सूत्रे 'तृणह' इति निर्देशः 'आगमस्य श्नमः प्रत्ययत्वमिष्यते' इतिवचनस्य [4]ज्ञापकः । यतः प्रत्यय[5] इत्यन्वर्थसंज्ञा श्नमो न प्राप्नोति । नहि श्नमा कस्यचनार्थस्य प्रतीति र्भवति । अतोऽस्य वचनस्याभावे प्रत्ययादित्वाभावात् श्नमः शकारस्य [6]'लशक्वतद्धिते' इतीत्त्वा-प्राप्त्या 'तृणह' इत्यागतश्नम्को निर्देशो नोपपद्यते । ज्ञापिते चास्मिन् वचने श्नमोऽप्यागमस्य प्रत्ययत्वादसौ निर्देशःसमुपपन्नः । ज्ञापितस्यास्य वचनस्य फलन्तु 'तृणेढी'त्यादौ श्नमः शकारस्येत्त्वसिद्धिः । एतद्वचनाभावे हि श्नमः प्रत्ययत्वाभावात् तन्न सिद्ध्येत् ।

वस्तुतस्तु पुरुषोत्तमदेवोक्तमस्य निर्देशस्योक्तवचनज्ञापकत्वं न युक्तम् । यतः [7]शपोऽपवादस्य [8]श्नमः कर्तृरूपार्थप्रत्यायकतया प्रत्ययत्वं स्वतः सिद्धम् । अतः 'तृणह' इति निर्देशो विनापि 'आगमस्य श्नमः प्रत्ययत्वमिष्यते' इति वचनं स्वयमुपपद्यते । अनुपपन्न एव हि ज्ञापको भवति न तूपपन्नोऽपि । नहि मित्त्व-प्रयुक्तमागमत्वं दधतः श्नमः प्रत्ययत्वमपैति । श्नमि 'परश्चे'[9]त्यस्य प्रवृत्तिस्तु 'मिदचोऽन्त्यात्परः[10] 'इतिशास्त्रबलान्न भवति[11] बहुचि यथा तदप्रवृत्तिः 'पुरस्ता'-

1. अष्टा. 8/1/2 ।
2. अष्टा. 8/2/29 ।
3. अष्टा. 7/3/92 ।
4. 'तृणह इम् (7/3/92) इति निर्देशात् आगमस्य श्नमः प्रत्ययत्वमिष्यते शकारस्येत्संज्ञा यथा स्यात् तृणढ्ढीती'त्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 93 ।
5. अष्टा. 3/1/1 ।
6. अष्टा. 1/3/8 ।
7. 'कर्त्तरिशप्'–अष्टा. 3/1/68 ।
8. 'रुधादिभ्यः श्नम्'–अष्टा. 3/1/78 ।
9. अष्टा. 3/1/2 ।
10. अष्टा. 1/1/47 ।
11. अष्टा. 5/3/68 ।

दित्युक्तेर्न । [1]वार्तिककृन्मतेन श्नमः प्रत्ययत्वाभावं विभाव्य ज्ञापकत्वमस्य निर्देशस्योक्तं ज्ञापकसमुच्चयकृतेति मन्ये ।

## 'द्वयो'रिति निर्देशः

'किंयत्तदोर्निर्धारणे [2]द्वयोरेकस्य डतरच्' इति सूत्रे 'द्वयो'रितिनिर्देशः 'अङ्ग-वृत्ते पुनर्वृत्तावविधि'रिति[3] परिभाषा अनित्ये'ति वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याभावे 'द्वयो'रित्यत्र द्विशब्दादोसि विभक्तौ [5]'त्यादादीनामः' इत्यङ्गाधिकारीयेऽत्वे कृते पररूपे च सति 'द्व ओस्' इति स्थितेऽनया परिभाषया 'ओसि[6]चे'ति पुनरङ्गाधिकारीयस्यैत्वस्याप्राप्त्या निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽनेन तस्या अत्राप्रवृत्तावेत्वस्य सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'तयोर्द्वयो'रित्यादीनां लौकिकप्रयोगाणां साधुत्व-सिद्धिः । एतद्वचनाभावे हि नात्रात्वे कृते पुनरेत्वं प्रवर्तेत, तथा प्रतिषेधादिति नैषां साधुत्वं सिद्ध्येत् । अङ्गवृत्तपरिभाषाया अनित्यत्वबोधकैतद्वचनफलमन्यथोपपादयितुं पतञ्जलि[7]व्याडि-[8]- पुरुषोत्तमदेव[9]-सीरदेवाः[10] 'अङ्गवृत्त' इति परिभाषायां 'निष्ठितस्ये'तिपदं निवेशितवन्तः । 'निष्ठितस्ये'त्यस्य 'प्रयोगार्हस्येत्यर्थः । तेनाप्रयोगार्हे पुनरङ्गकार्यप्रवृत्तौ बाधकाभावेन द्वयोरित्यादिनिर्देशास्तयोर्द्वयो'रित्यादि लौकिकप्रयोगश्च सुतरामुपपद्यन्त इति तेषामाशयः ।

---

1. 'विकारागमेषु परत्वविज्ञानात्' वा. व्या. म. भा. 3/1/1/1 ।
2. अष्टा. 5/3/92 ।
3. (क) 'अङ्गवृत्ते पुनर्वत्तावविधिः' 'अङ्गे अङ्गाधिकारे वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रम्, तस्मिन् कृते सति पुनः शास्त्रान्तरं न प्रवर्तते' इत्यर्थः' नी. दी. प. वृ. प. 86, पृ. 308 ।
   (ख) ह. भा. प. भास्क. प. 94, पृ. 361 ।
   (ग) भ. ना. प. शे. प. 93, पृ. 327 ।
   (घ) शेषा. प. भास्क. प. 80, पृ. 445 ।
4. तथाहि–
   (क) 'अनित्या चेयम् । द्वयोरित्यादिनिर्देशा'दित्याह नी. दी. प. वृ. प. 86, पृ. 310 ।
   (ख) 'अनित्या चेयं 'द्वयोः' 'एकस्य' इत्यादिनिर्देशा'दित्याह ह. भा. प. भास्क. प. 24, पृ. 361 ।
   (ग) इयं चानित्या द्वयोः इति निर्देशा'दित्याह भ. ना. प. शे. प. 93, पृ. 327 ।
   (घ) अनित्येयं द्वयोरितिनिर्देशात् । त्यदाद्यत्वे कृते'ओसिच' (7/3/104) इत्येत्वमपि निर्दिष्ट'मित्याह शेषा. प. भास्क. प. 80 पृ. 445 ।
5. अष्टा. 7/2/102 ।
6. अष्टा. 7/3/104
7. अनेन हि–"अस्तु तावद्व्यम् शब्दः शेषेलोपश्चान्त्यस्य । ननु चोक्त'मेत्वं प्राप्नोती'ति । नैष दोषः, अङ्गवृत्तेपुनर्वृत्तावविधिर्निष्ठितस्ये' ति न भविष्यती'त्युक्तम् ।
8. अनेन हि–'अङ्गवृत्ते पुनर्वृत्तादविधिर्निष्ठितस्ये'ति परिभाषास्वरूपमुक्तम्–प. सू. प. 34, पृ. 17 ।
9. अनेन हि–'अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्ये'त्युक्तम्-ल. प. वृ. प. 71, पृ. 143 ।
10. अनेन हि–'अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्ये'त्येतत्स्वरूपमुक्तम्–बृ. प. वृ. प. 91, पृ. 248।

## 'द्विर्वचने'ति निर्देशः

'न पदान्तद्विर्वचनवरेयलोप[1]-स्वर-सवर्णानुस्वारदीर्घजश्चर्विधिषु' इति, 'द्विर्वचनेऽचीति[2]' च सूत्रयोः 'द्विर्वचने'ति निर्देशौ 'कृदभिहितो भावो द्रव्यवत् प्रकाशत इत्यसार्वत्रिक'मिति वचनस्य ज्ञापकौ[3] । यतोऽस्य वचनस्याभावे वचनशब्दस्य 'उक्तिर्वचन'मिति व्युत्पत्त्या निष्पन्नस्य भावल्युट्कृदन्ततया तदभिहितभावरूप द्रव्यवत्प्रकाशस्य दुर्निवारतया क्रियाभ्यावृत्तिगणानाश्रयस्य 'द्वित्रिचतुर्भ्यः सुच्' इति सुचो दिवशब्दादप्राप्त्या 'द्विर्वचन'मिति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने कृदभिहितभावस्यात्र क्रियात्वेन प्रकाशस्य सुलभतया सुचःप्राप्त्या निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'द्विरुक्तिः' 'द्विपाक' इत्यादौ क्रियाभ्यावृत्तिगणनाश्रयस्य सुचः सिद्धिः । एतद्वचनाभावे हि भावकृत्क्तिना घञा चात्र भावस्य द्रव्यवत् प्रकाशस्यानिवार्यतया क्रियाभ्यावृत्तिगणनाश्रयः सुच्न सिद्धयेत् ।

## 'दीव्यतः' 'तस्मै' 'तस्मात्' 'तस्मिन्' इति निर्देशाः

'प्राग् दीव्यतोऽण्'[4] इति सूत्रे 'दीव्यतः' इति, [5]'तस्मै हितम्' 'तस्मै प्रभवति[6] सन्तापादिभ्यः' इति सूत्रयोः 'तस्मै इति, 'तस्माच्छसो[7] नः पुंसि' [8]'तस्मादित्युत्तरस्य' [9]-'तस्मान्नुडचि' [10]'तस्मान्नुड् द्विहलः' इति सूत्रेषु 'तस्मात्' इति, [11]-तस्मिन्नणि च युस्माकास्माकौ', [12]'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति सूत्रयोः 'तस्मिन्' इति च

---

1. अष्टा. 1/1/58.
2. अष्टा. 1/1/59.
3. तथाहि–
   (क) 'घञन्ताद्यन्तप्रयोगेऽपि कृत्वोऽर्थप्रत्ययः क्वचित् लिङ्गाद् 'द्विर्वचनेऽचि' इति साधनीयो मनीषिभि'रित्याह ह. मि. पदम. 5/4/19.
   (ख) न पदान्त ( 5/1/59) इत्यत्र द्विर्वचन इति निर्देशात् ज्ञापकात् यद्यपि 'कृदभिहितो भावो द्रव्यवत् प्रकाशत इत्युक्तं तन्न सर्वत्र । तेन द्विरुक्तिरित्यादौ क्रियाभ्यावृत्तिगणनाश्रयः सुच् (5/4/18) भवत्येवेत्याह भागवृत्तिरित्युक्तं पु. दे. ज्ञा. समु. प्रथमे पादे पृ. 60
4. अष्टा. 4/1/83.
5. अष्टा. 5/1/5.
6. अष्टा. 5/1/101
7. अष्टा. 6/1/103.
8. अष्टा. 1/1/67.
9. अष्टा. 6/3/74.
10. अष्टा. 7/4/71.
11. अष्टा. 4/3/2.
12. अष्टा. 1/1/66.

निर्देशाः 'एकदेशविकृतमनन्यवत्'[1] इति परिभाषाया ज्ञापकाः[2] । योतऽस्या अभावेऽत्र सूत्रे 'तेन दीव्यति खनतीत्यत्रत्य'-दीव्यतीत्यस्यानुकरणत्वं दीव्यच्छब्देनोपपादयितुं शक्यते । अनुकरणे हि अनुकार्यसमानानुपूर्वीकत्वनियमः । न च दीव्यति-दीव्यतोः समानानुपूर्वीकत्वं वक्तुं शक्यते । इत्थमत्र सूत्रे दीव्यतेरनुकरणस्य दीव्यच्छब्दस्य पञ्चम्या विकृतनिर्देशो 'दीव्यत' इति सर्वथानुपपन्नः । ज्ञापितायां चास्यां 'दीव्यती'त्येकदेशविकृतस्य 'दीव्यतो' 'दीव्यतितो, भिन्नत्वमनया सुलभतया समानानुपूर्वीकत्वाद्दीव्यतेरनुकरणत्वस्य 'दीव्यत' इत्यत्रापि सत्त्वात् विकृतनिर्देशोऽयमुपपद्यते ।

वस्तुतस्तु दीव्यतिशब्दवाक्यार्थवाचकतावच्छेदकं तान्ते दीव्यच्छब्दे आरोप्य कृतोऽयं विकृत-निर्देशः परिभाषाया अस्या अभावेऽनुपपन्नः । यतोऽस्या अभावे तान्तेत्यन्त शब्दवाच्यार्थवाचकतावच्छवेदकमारोपयितुं न शक्यते । अत एवावध्यवधिमतोः साजात्यादर्थनिर्देशघटितसूत्रे एवाणः सम्बन्धो, न तु 'बाह्वादिभ्यश्चे'त्यादावपि । ज्ञापितयां चास्यां तत्र तदारोप्य कृतोऽयं निर्देशः स्वांशे चरितार्थतामेति । यदि दीव्यतिशब्दैकदेश-दीव्यच्छब्दमात्रानुकरणमिदमिति स्वीक्रियते तदा ततोऽपि लाघवात् 'प्राग्दीवोऽण्' इत्येवाचार्येण निर्दिश्येत, न च तथा निर्दिष्टम् । इत्थमत्र

---

1. (क) एकदेशविकृतमनन्यवद्भवति'– व्याडिः प. पा. 16, पृ. 39.
   (ख) पु. दे. ल. प. वृ. प. 14, पृ. 118.
   (ग) सी. दे. कृ. प. वृ. प. 40, पृ. 210.
   (घ) नी. दी. प. वृ. प. 125, पृ. 314.
   (ङ) ह. भा. प. भास्क. प. 42, पृ. 341.
   (च) भ. ना. प. शे. प. 38, पृ. 164.
   (छ) शेषा. प. भास्क. प. 37, पृ. 411.
2. तथाहि–
   (क) 'अयुक्तोऽयं निर्देशः । नहि तत्र कश्चिद्दीव्यच्छब्दः पठ्यते । कस्तर्हि? दीव्यति शब्दः । कथं तर्हि निर्देशः कर्तव्यः? प्राग् दीव्यतेरिति । स तर्हि तथा निर्देशः कर्तव्यः प्राग् दीव्यतेरिति? न कर्तव्यः दीव्यतिशब्दे च दीव्यच्छब्दोऽस्ति तस्मादेषा पञ्चमी । किं पुनः कारणं विकृतनिर्देशः क्रियते? एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'एकदेशविकृतमनन्यवद् भवती'ति । किमेतस्य ज्ञापने प्रयोजनम्? एकदेशविकृतेषूपसंख्यानं चोदितं तन्न वक्तव्यं भवतीत्याह पत. व्या. म. भा. 4/1/3/83.
   (ख) अतएव 'प्राग्दीव्यत' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा, 'किमर्थं' विकृतनिर्देशः? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदि'त्युक्तमित्याह भ. ना. प. शे. प. 38 पृ. 167-168.
   (ग) 'ज्ञापकं चास्याः................ 'तस्मै' 'तस्मात्' 'तस्मिन्'– इति आचार्यनिर्देशेषु त्यदाद्यत्वेनैकदेशविकृते तस्मै तस्मादित्यादौ सर्वनामसंज्ञाकार्यकरण'– मित्याह पु. दे. ल. प. वृ. प. 14, पृ. 118.

दीव्यतेरित्यनिर्देश्य 'दीव्यत' इति विकृतनिर्देशः इमां परिभाषां ज्ञापयति । ज्ञापितायां चास्यां प्राग्दीवोऽण् इति न्यासो न कर्तुं शक्यते, अर्धाधिकविकारे अस्या अप्रवृत्तेरिति 'दीव्यत' इति विकृतनिर्देशः स्वांशे चरितार्थो भवति ।

एवं 'तस्मै' तस्मात्' 'तस्मिन्' इति निर्देशा अपि 'एकदेशविकृतमनन्यव'दिति परिभाषाज्ञापकतां यन्ति । यतोऽस्या अभावे [1]त्यदाद्यत्वेनैकदेशविकृते 'त'शब्दे सर्वनामत्वाभावेन सर्वनामकार्याणां [2]स्मै-स्मात्[3-4]स्मिनामप्राप्त्या निर्देशा इमेऽनुपपन्नाः । ज्ञापितायां चास्यां 'त'शब्देऽपि सर्वनामत्वमनया सुलभमिति सर्वनामकार्याणां प्राप्त्या निर्देशा अमी समुपपद्यन्ते । ज्ञापिताया अस्याः फलं तु 'अतिजरसै'रित्यत्र 'जराया [5]जरसन्यतरस्या'मिति जरसाऽऽदेशस्य, 'प्रहिणोमि' 'प्रमिणीते' इत्यत्र [6]'हिनुमीना' इति णत्वस्य, 'अभवत्' इत्यादौ 'इतश्च'[7] इतीकारलोपे कृते तिङाश्रयायाः सार्वधातुकसंज्ञायाः[8], पदसंज्ञायाश्च[9] 'कारिषीष्टे'त्यत्र 'स्य-[10] सिच्सीयुट्' इति सीयुड्ग्रहणेन सीमात्रग्रहणस्य च सिद्धिः । न्यायसिद्धेयमित्यप्याह पतञ्जलिः[11] ।

स्थानिवत्सूत्रे वार्तिकत्वेन भाष्ये पठितैषा ।

---

1. 'त्यदादीनामः' – अष्टा. 7/2/102.
2. सर्वनाम्नः स्मै'– अष्टा. 7/1/14
3. 'ङसिङ्योः स्मात्स्मिनौ'– अष्टा. 7/1/15
4. 'ङसि ङ्योः स्मात् स्मिनौ'– अष्टा. 7/2/15
5. अष्टा. 7/2/101
6. अष्टा. 8/4/15
7. अष्टा. 3/4/100.
8. 'तिङ् शित् सार्वधातुकम्'– अष्टा. 3/4/113
9. 'सुप्तिङन्तं पदम्' – अष्टा. 1/4/14
10. स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च – अष्टा. 6/4/62
11. अनेन हि– 'एकदेश विकृतस्योपसंख्यानम् । एकदेशविकृतस्योपसंख्यानं कर्तव्यम् । किं प्रयोजनम्? पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । एकदेशविकृतस्यानन्यत्वात् सिद्धम् । एकदेशविकृतमनन्यवद् भवती'ति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति नाश्वो न गर्दभ इति, इत्युक्तम् व्या. म. भा. 1/1/8/55

'स्थानिवत्सूत्रादेशग्रहणसिद्धार्थकथनमेत'दित्याहनीलकण्ठः[1] । 'स्थानिवत्सूत्रेण गतार्थमिद'मित्याह शेषाद्रिः[2] । सर्वमिदं युक्तमेवेति मन्ये ।

## 'धिन्वि'-'कृण्वी'ति निर्देशौ

धिन्विकृण्व्यो रचे'ति[3] सूत्रे 'धिन्वि'-'कृण्वी'ति सनुमूनिर्देशौ 'उपदेश एव नुम् भवती'ति वचनस्य ज्ञापकौ[4] । यतो धातुपाठे[5] 'धिवि'-'कृवि' इत्येतौ नुमूरहितावेव पठिताविति हेतोर्लाघवार्थं च 'धिवि'-'कृवि' इत्येतयोर्नुम्रहितयोरेव निर्देशस्यौचित्याद् 'धिन्वि'-'कृण्वी'ति सनुमूनिर्देशावनुपपन्नौ । ज्ञापिते चास्मिन् वचने 'इदितो नुम् [6]धातो' रिति नुमः उपदेश एव प्रवृत्तेरावश्यकतया सुनुमूनिर्देशावमू समुपपद्येते ।

अथात्र [7]'इक्श्तिपौधातु निर्देशे' इतीका निर्देशात्[8] इकि प्रत्यये सति अङ्गसंज्ञायां[9] सत्यां नूनं नुमा भवितव्यम्, तथा सति लक्षणवशादेव 'धिन्वि'-'कृण्वी'ति निर्देशौ नुमनुषक्तौ समुपपन्नाविति नेमौ ज्ञापकाविति शङ्क्यम् । यतोऽत्र 'धिन्वि कृण्वी'त्ययं नेका निर्देशः । इक्प्रत्ययो हि 'रोगाख्यायां ण्वुल्बहुल'[10]मिति [11]बहुलवचनेन सन्निधानात् क्वचिदेव भवति, न सर्वत्र । अतएव

---

1. प. वृ. प. 125, पृ. 314.
2. प. भास्क. प. 37, पृ. 411.
3. अष्टा. 3/1/80
4. तथाहि–
   (क) 'लाघवार्थं 'धिविकृव्योः' इति वक्तव्ये नुमनुषक्तयोर्ग्रहणं कृतमुपदेशावस्थायामेव नुम् भवती'ति ज्ञापनार्थम् । तेन 'नुमूविधावुपदेशिवद्वचनमिष्टबुद्ध्यर्थ'मिति न वक्तव्यं भवती'त्याह जि. बु. न्या. 3/1/80
   (ख) 'धिन्विकृण्व्योर च' इत्युप्रत्ययविधानकाले नुमनुषक्तयोर्ग्रहणं सनुम्कयोरेव प्रकृतत्वं यथा स्यात् । एवं सनुम्कयोः प्रकृतत्वं भवति यद्युपदेशावस्थायामेव नुम् भवति, नान्यथा । तस्मान्नुमनुषक्तयोर्ग्रहणाज्ज्ञापकादवसीयते धातूपदेशावस्थायामेव नुम्भवतीति' तस्य ह्येतत् प्रयोजनम् उपदेशावस्थायामेव नुम्यथा विज्ञायेतेति । नहि तन्नुमर्थं प्रयुज्यते, नुम इदित्वादेव सिद्धत्वा'दिति चाह जि. बु. न्या. 7/1/58
   (ग) 'धिन्विकृण्व्योरिति, ( 3/1/80) सनुमूनिर्देशो ज्ञापयति 'उपदेश एव नुम भवती'ति । तेन 'कुण्डाहुण्डेति, 'गुरोश्च हलः' (3/3/103) इत्यकारप्रत्ययसिद्धि'रित्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 71.
5. 'धिवि' प्रीणनार्थः भ्वा. 593.
   'कृवि' हिंसाकरणयोश्च भ्वा. 518.
6. अष्टा. 7/1/58
7. वा. वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 565
8. 'धिन्विकृण्वी'ति निर्देशात् ।
9. 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' अष्टा. 1/4/13.
10. अष्टा. 3/3/108.
11. 'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
    क्वचिद् विभाषा क्वचिदन्यदेव ।
    विषेर्विधानं बहुधा समीक्ष्य–

[1]'गुपतिज्किभ्यः सन्' इत्येवमादयो निर्देशा उपपद्यन्ते । तस्माद् यथा 'इन्धिभवतिभ्याम्'[2] इत्यत्रोच्चारणार्थेनेकारेण 'इन्धी'ति निर्देशः, अन्यथा 'अनिदिता'[3]मित्यनुनासिकलोपो दुर्वारस्तथैव 'धिन्विकृण्व्यो'रिति निर्देशः, उच्चारणार्थेन इकारेणेत्यवश्यं स्वीकरणीयम् । इम् 'उपदेश एव नुम् भवती'ति वचनं विना नेमौ निर्देशौ समुपपद्येते, इति निर्देशावमू ज्ञापकावेवास्य वचनस्येति निश्चीयते । ज्ञापितस्यास्य वचनस्य फलं तु 'कुण्डा' इत्यत्र 'गुरोश्च[4] हलः' इत्यकारप्रत्ययस्य सिद्धिः । एतद्वचनाभावे हि [5]'कुडि-[6]हुड्योर्गुरुमत्त्वाभावादप्रत्ययो न सिद्ध्येत् । सति चास्मिन् वचने उपदेश एव नुमः[7] प्रवृत्तौ कुण्डहुण्डोर्गुरुमत्त्वादप्रत्ययः सुतरां सिद्ध्यति । 'गुरो'रित्यनेनात्र सूत्रे गुरुमान् धातुर्विवक्षित इति [8]जयादित्य-जिनेन्द्रबुद्धि[9]– [10]हरदत्त- भट्टोजिदीक्षित[11]-

---

चतुर्विधं बाहुलकं वदन्ति' ।। वै. सि. कौ. ।

1. अष्टा. 3/1/5.
2. अष्टा. 1/2/6.
3. अष्टा. 6/4/24
4. अष्टा. 3/3/103.
5. 'कुडि दाहे' धा. पा. भ्वा. 270.
6. 'हुडि संघाते' धा. पा. भ्वा. 269.
7. 'इदितो नुम् धातोः' अष्टा. 7/1/58
8. अनेन हि 'हलन्तो यो धातु र्गुरुमान् ततः स्त्रियामकारप्रत्ययो भवति । क्तिनोऽपवादः । कुण्डा । हुण्डा । ईहा । ऊहा । गुरोरिति किम्? भक्तिः । हल इति किम्? नीति'-रित्युक्तम्– का. 3/3/103
9. अनेन हि– 'कथं पुनर्गुरोरित्युच्यमाने गुरुमान् धातुर्लभ्यते? सामर्थ्यात् । नहि हलन्तस्य धातोः कस्यचिद् गुरुसंज्ञा विहिता, उच्यते चेदं गुरोरिति, तत्र सामर्थ्याद् गुरुमान् धातुर्गुरु-संज्ञकेनाभेदोपचारं कृत्वा गुरुशब्देनोक्त इति गम्यते । इष्यते ह्यभेदोपचाराद् विनापि मतुपा तद्वतोरभिधानम्, यथा शुक्लः पट इति । अथ रुध्यादिभ्य एव यथा स्यात्, कुडिप्रभृतिभ्यो माभूदित्येवमर्थो विपर्ययः कस्मान्न विज्ञायते? 'गुर्वन्तो यो धातुर्हल्वान्' इति ज्ञापकात्, यदयं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इत्यप्रत्यायन्तस्य चेष्टाशब्दस्य 'शकिशङ्कायाम्' इति च शङ्काशब्दस्य निर्देशं करोति, ततो ज्ञायते नात्र विपर्यय इति । विपर्यये हि नहि चेष्टेति गुर्वन्तः, नापि शङ्के'त्युक्तम् न्या. 3/3/103
10. अनेन हि– 'अज्विशेषवाचिनो गुरुशब्दस्य हलन्ते धातौ न मुख्या वृत्तिः सम्भवतीति तद्वति तच्छब्दो विज्ञायत इत्याह गुरुमानिति । विपर्ययस्तु न भवति गुर्वन्तो यो धातुर्हल्वानिति, 'चेष्टायामनध्वनि' 'आशंसायां भूतवच्च' इति । निर्देशा'दित्युक्तम्– पदम. 3/3/103
11. अनेन हि– 'गुरुमतो हलन्ताच्च स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम्? (विंतिः) भक्तिः । हलः किम् ? (शीतिः) नीति'रित्युक्तम्– वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 563-564.

ज्ञानेन्द्रभिक्षु[1]-वासुदेवदीक्षितैरुक्तम्[2] ।

जिनेन्द्रबुद्धि-पुरुषोत्तमदेवाभ्यामुक्तमस्य निर्देशस्य ज्ञापकत्वं भाष्यविरुद्धत्वाद-श्रद्धेयम् । तत्र हि– 'अथ किमर्थं' नुमनुषक्तयोः (धिन्विकृण्व्योः) ग्रहणं क्रियते, न 'धिविकृव्यो'रित्येवोच्येत? धिविकृव्यो'रित्युच्यमाने कृतेऽनिष्टे देशे नुम् प्रसज्येत । इदमिह संप्रधार्यमत्वं क्रियतां, नुमिति, किमत्रकर्तव्यम्? परत्वान्नुमागमः । अन्तरङ्ग-मत्वम् । कान्तरङ्गता? प्रत्ययोत्पत्तिसंनियोगेनात्वमुच्यते । उत्पन्ने प्रत्यये प्रकृतिप्रत्यया-वाश्रित्याङ्गस्य नुमागमः' । नुमप्यन्तरङ्गम् । कथम्? वक्षत्येतद् 'नुम्विधावुपदेशिव-द्वचनं प्रत्ययविध्यर्थ'मिति उभयोरन्तरङ्गयोः परत्वान्नुमागमः । तस्माद्धिविकृव्योरिति वक्तव्य' मित्युक्तम्[3] । अत्र वक्षत्यनेनोपदर्शितं वार्तिकं च चारु व्याख्यातम्[4] । इत्थं 'तस्माद्धिविकृव्योरिति वक्तव्य'मिति भाष्योक्तिर्नुमनुषक्तयोर्ग्रहणं नावश्यकमिति प्रत्याय-यन्ती 'धिन्विकृण्वयो'रिति निर्देशस्योक्तवचनज्ञापकत्वाभ्युपगमे स्फुटं विरुद्ध्यति ।

वस्तुतस्तु 'इदितो [5]नुम् धातो'रिति सूत्रे धातु-ग्रहणं 'धातूपदेशे नुम् भवती'ति वचनस्य ज्ञापकम् । यतोऽत्र धातुग्रहणं व्यर्थम् । न च 'अभैत्सीत्' 'अच्छैत्सी'-दित्यादौ नुमोऽभावाय धातुग्रहणामावश्यक'मिति शङ्क्यम् । यतः 'सिचि इकारो नेत्संज्ञकः किन्तूच्चारणार्थोऽतः 'सच्' इत्येवाऽऽदेशो विधातुं शक्यते । भाष्य-सम्मतं चेदं ज्ञापकम् । यतस्तत्र 'धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम्' । धातुग्रहणसामर्थ्याद् वा तदुपदेशे धातूपदेशे नुम् भविष्यति । ननु च अन्यद् धातुग्रहस्य प्रयोजंनमुक्म् ? किं तत् ? अभैत्सीत् । अच्छैत्सीदिति । नैतदस्ति प्रयोजनम् । प्रयोजनं नाम तद् वक्तव्यं यन्नियोगतः स्यात् । यच्चात्रेकारेण क्रियतेऽकारेणापि तच्छक्यं कर्त्तुमित्युक्तम्[6] ।

---

1. अनेन हि– 'धातोरित्यनुवृत्त्या हल इतिधातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते । न चायं गुरुरिति सम्भवति । अज्विषयो हि गुरुः, अतो मत्वर्थो लक्ष्यते' इत्युक्तम् त. बो. उत्तरकृदन्त प्र. पृ. 563
2. अनेन हि– 'धातोरित्यनुवृत्तं हला विशेष्यते । तदन्तविधिः । हलन्त-धातोर्गुरुत्वासंभवाद् गुरुमान् लक्ष्यते' इत्युक्तम्– बा. मनो. उत्तरकृदन्त प्र. पृ. 563-564
3. व्या. म. भा. 3/1/4/80.
4. तथाहि– 'नुम्विधावुपदेशिवद्भावो न वक्तव्यः । 'उपदेशावस्थायां नुम् भवती'ति वक्तव्यम् । किं प्रयोजनम्? प्रत्ययविध्यर्थम् । उपदेशावस्थायां नुमि कृते इष्टः प्रत्ययविधिर्यथा स्यात् कुण्डा हुण्डेति । इतरथा ह्यनकारे प्रत्ययः । अक्रियमाणे हि उपदेशिवत्त्वेऽनकारे यः प्रत्ययः प्राप्नोति स तावत् स्यात् तस्मिन्नवस्थिते नुम् । तत्र को दोषः? तत्रायथेष्टप्रसङ्गः । तत्रायथेष्टं प्रसज्येत । अनिष्टे प्रत्ययेऽवस्थिते नुम् । अनिष्टप्रत्ययस्य श्रवणं प्रसज्येते'ति । व्या. म. भा. 7/1/2/58.
5. अष्टा. 7/1/58.
6. व्या. म. भा. 7/1/2/58.

इत्थं यदुक्तमेतन्निर्देशज्ञापकोद्बलकं जिनेन्द्रबुद्धिना 'नुम्विधावुपदेशिवद्वचन-मिष्टबुद्ध्यर्थमिति न वक्तव्यं भवती'ति तदपि न युक्तम् । यतो वचनमिदं नापूर्वं किन्तु 'इदितो'रिति सूत्रस्थ– धातुग्रहणलभ्यमेव ।

अत्र यदुक्तं पुरुषोत्तमदेवेन 'अथवा धिन्विकृण्व्योरचेतिनुम्ग्रहणं कृते नुमि अत्वं यथा स्यादिति । अकृते नुम् माभूत् इत्येवं, च ज्ञापयति अन्तरङ्गविधेश्च प्रतिपदविधिर्बलीयानिति । अन्यथा हि नुम्विधौ उपदेशिवद्वचनादन्तरङ्गत्वादेव प्राग् नुमि कृते प्रत्ययसन्नियुक्तमत्वं पश्चाद् भवेत् । पश्यति त्वाचार्यः अन्तरङ्गोऽपि नुम् प्रतिपदविहितेन अत्वेन बाध्यत इति सनुमूकस्य निर्देशं कृतवान् । अन्तरङ्गविधेरिति चोपलक्षणं सर्वतः प्रतिपदविधिर्बलीयानित्येव तु सामान्येन ज्ञापकमिति । परनित्यान्तरङ्गप्रतिपदविधयो यथोत्तरं बलिन इति । तेन स्वस्ति गोभ्योभूयादिति परादपि कुशलार्थविकल्पतः प्रतिपदोक्ता 'नमः स्वस्तीति' (2/3/16).नित्यं चतुर्थी भवती'त्युक्तम् [1]। तदपि न श्रद्धेयम् । यतो 'धिविकृव्योरिति वक्तव्यम्'[2] इति भगवदुक्ति-विरोधोऽत्रापि वज्रलेपायते । ज्ञापितस्य 'परनित्यान्तरङ्गप्रतिपदविधयो यथोत्तरं बलिनः' इति वचनस्य च 'स्वस्ति गोभ्यो भूयादिति नित्यं चतुर्थीसिद्ध्यात्मकं फलं चान्यथासिद्धम् । यतो 'नमः[3] स्वस्ती'ति सूत्रं व्याचक्षाणेन भट्टोजिदीक्षितेन 'चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि 'चतुर्थी [4]चाशिषी'ति षष्ठींबाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूया'दित्युक्तम्[5] ।

## 'निरः' इति निर्देशः

'निरः कुषः'[6] इति सूत्रे 'निरः 'इति निर्देशः निरिति रेफान्तमुपसर्गान्तरमस्ती'-ति वचनस्य ज्ञापकः[7] । यतः प्रादिषु[8] निसिति पठ्यते न निरिति । अतएव

---

1. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 71.
2. व्या. म. भा. 3/1/4/80.
3. अष्टा. 2/3/16..
4. 'चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः'–
   अष्टा. 2/3/73 .अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम्'– वा. का. 2/3/73..
5. वै. सि. कौ. चतुर्थीकारक प्र. पृ. 333.
6. अष्टा. 7/2/46.
7. (क) 'निस' इति वक्तव्ये 'निरः' इति निर्देशने रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । तस्य हि निलयनमिति 'उपसर्गस्यायतौ' इति तत्वं भवति, निसो हि रुत्वस्य सिद्धत्वाल्लत्वं न स्यादित्याह वांम. वा. 7/2/46
   (ख) "निरः कुष' इत्यत्र निर इति निर्देशेन ज्ञापितमेतत् निरिति रेफान्तमुपसर्गान्तरमस्ती'-त्याह जि. बु. न्या. 7/2/46
   (ग) "निस' इति वक्तव्ये 'निरः कुष' इति (7/2/46) निर्देशो ज्ञापयति । रेफान्तोप्युपसर्गोऽस्तीति । तेन निलयनमिति भवति । न चायं निसोरुत्वे रप्रयोगः 'उपसर्गस्यायतौ, (8/2/19) इति लत्वे कर्तव्ये रुत्वस्यासिद्धत्वा'दित्याह पु. दे. ज्ञा. समु. षड्विंशे सिचिपादे पृ. 19.
8. "यद्यपि 'प्र परा अप् सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप' इत्याऽऽधुनिकप्रादिगणपाठे निरोऽपि पाठो दरीदृश्यते, तथापि

'निसस्तपतावनासेवने'[1] इत्यत्र 'निसः' इत्येवोक्तम् । इत्थमत्रापि 'निसः' इत्यनेनैव निर्देशेन भाव्यम् इति 'निरः' इति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने 'निरि'त्युपसर्गस्यापि सत्तालाभान् 'निरः' इत्ययं निर्देशोऽत्र समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं निष्पूर्वकादयतेर्ल्युटि 'निलयन'मित्यत्र 'उपसर्गस्यायता'[2]विति लत्वसिद्धिः । न चात्र निसः सकारस्य '[3]ससजुषोरु'रिति रुत्वे कृते लत्वं सुलभमतो नैतद्वचनफलमिति शङ्कनीयम् । यतोऽत्र रुत्वस्य [4]'पूर्वत्रासिद्ध'मित्यसिद्धत्वाल्लत्वं न सिद्ध्येत् ।

अतएव निसः प्रयोगे 'निरयणम्'[5] इत्यत्रायम् लत्वाभावः, रेफान्तस्य निरः प्रयोगे 'निलयनम्'[6] इत्यत्र लत्वं च दृश्येते । अत्र वचने अपि शब्देन सान्तस्यापि सत्ता द्योत्यते ।

न चैतद्वचनाभ्युपगमे 'एकाच [7]उपदेश' इत्यनन्तरं 'निरः कुषोऽनिष्ठायामिति' लघुन्यासेन सिद्धे 'स्वरति- [8]सूती'ति विकल्पप्रकरणे 'निरः[9] कुषः' इण् निष्ठाया[10]' मिति गुरुभूतन्यासौ व्यर्थौ 'निर्निसिति' उपसर्गद्वयेन रूपद्वयस्य सिद्धत्वादिति शङ्क्यम् । यतोऽनिष्ठायामिति पर्युदासेन कृत्स्वेवासौ प्रसज्येत ।

## 'नोपधाया' इति निर्देशः

'नोपधायाः[11]' इति निर्देशः 'पूर्वत्रासिद्ध'[12]मित्यसिद्धत्वमनित्य'मिति वचनस्य ज्ञापकः[13] । अत्र हि न+उपधाया इतिच्छेदः, तत्र 'न्' शब्दात् षष्ठ्येकवचने ङसि

---

प्राचीनपाणिनिगणपाठे आदौ निरः पाठो नाऽऽसीदिति काशिकादिप्राचीनव्याकरण-ग्रन्थादवसीयते ।

1. अष्टा. 8/3/102
2. अष्टा. 8/2/19
3. अष्टा. 8/2/66
4. अष्टा. 8/2/1.
5. का. 8/2/19 इत्यत्रास्योद्धृतिः ।
6. पदम. 8/2/19 इत्यत्रास्योद्धृतिः ।
7. अष्टा. 7/2/10
8. अष्टा. 7/2/44
9. अष्टा. 7/2/46
10. अष्टा. 7/2/47
11. अष्टा. 6/4/7
12. अष्टा. 8/2/1
13. तथाहि– 'नोपधाया (6/4/7) इत्यनेन निर्देशेन असिद्धत्वानित्यत्वज्ञापनात् 'अर्थाः पाद-रजोपमाः' इत्यादि सिद्ध्यती'त्याह पुरुषोत्तमदेवः ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 85.

'नस्' इत्यवस्थायां सकारस्य [1]'ससजुषोरु'रिति रुत्वे नर्+उपधाया' इति स्थिते रेफस्य उकाराऽत्मके अशि परे 'भो भगो अघो अपूर्वस्य[2] योऽशीति' यकारे 'लोपः शाकल्यस्ये'[3] ति यलोपे 'आद्गुणः'[4] इति गुणैकाऽऽदेशे इति कृतो 'नोपधायाः' इति निर्देशो नोपपद्येते । यतः 'पूर्वत्रासिद्ध' मित्यसिद्धत्वस्य नित्यत्वे 'देवा इह' इतिवदत्रापि यलोपस्यासिद्धत्वाद् गुणैकादेशो न प्राप्नोति । ज्ञापिते चास्मिन् वचने 'पूर्वत्रे'त्यसिद्धत्वस्यानित्यत्वादत्र तदप्रवृत्तौ यकारलोपस्यासिद्धत्वाभावाद् गुणैकादेशस्य सुलभतया निर्देशोऽपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अर्थाः पादरजोपमा-[5]' इत्यादि प्रयोगाणां साधुत्वसिद्धिः अन्यथात्र यलोपस्यासिद्धत्वाद् गुणैकादेशस्याप्राप्त्या साधुत्वमस्य न सिद्धयेत् ।

जिनेन्द्रबुद्धि[6]-हरदत्तमिश्रौ[7] त्वत्र सौत्रत्वाद् गुणैकादेशमाहतुः, वासुदेवदीक्षित[8]-ज्ञानेन्द्रभिक्षू[9] चात्र 'नेति लुप्तषष्ठीको निर्देश इति मन्वाते । अतो मन्ये यदमी 'नोपधाया' इति निर्देशस्योक्तवचनज्ञापकतां न स्वीकुर्वन्ति । इत्थमेषां मते 'अर्थाः पादरजोपमाः' इति प्रयोगः अपाणिनीय एव । स्थितस्य गतिश्चिन्तनीये-'त्यभियुक्तोक्तेः पुरुषोत्तमदेवोक्तं प्रकृतज्ञापकलभ्यवचनस्य फलत्वेन निर्दिष्टं 'रजोपमे'त्यत्र गुणस्य साधुत्वं पाणिनिसम्मतमेवेति मन्ये । न चैवं 'हरे-हे'त्यादिप्रयोगाणां साधुत्वापत्तिः, ज्ञापकसिद्धस्यासार्वत्रिकत्वाभ्युपगमात् ।

वस्तुतस्तु स्त्रीकुसुमे रजेत्यकारान्तो नपुंसकलिङ्गःपरागे च पुंलिङ्गः शब्दोऽयं शब्दरत्नावल्यां शब्दकल्पद्रुमे चोपन्यस्त[10] इति एतद्वचनं विनापि रजोपमेत्यस्य साधुत्वं

---

1 अष्टा. 8/2/66

2 अष्टा. 8/3/17

3. अष्टा 8/3/19

4. अष्टा 6/1/87

5. उवलदत्तस्य 4/216 पद्यमिदं हितोपदेशे पूर्णमुपलभ्यते यथा 'अर्थाः पादरजोपमा गिरिनदीवेगोपमं जीवन-, मायुष्यं जलविन्दुलोलचपलं फेनोपमं यौवनम् । धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं, पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते' ॥

6. "न इति षष्ठ्येकवचनान्तम्, सौत्रत्वान्निर्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्य 'आद्गुणः' कृतः" इति अनेनोक्तम् न्या. 6/4/7

7 "न इति षष्ठ्येकवचनान्तम् । सौत्रत्वान्निर्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्य गुणः" इति अनेनोक्तम् । प म. 6/4/7

8 अनेन हि 'नोपधाया । 'ने' ति लुप्तषष्ठीकम्, 'अङ्गस्ये'त्यधिकृतस्य विशेषणम्" इत्युक्तम् बा. मनो. हलन्तपुंल्लिङ्ग प्र. प 195.

9 अनेन हि 'ने' ति लुप्तषष्ठीकं पदमङ्गस्य विशेषणम्' इत्युक्तम् त. वो. हलन्तपुंलिङ्ग प्र. पृ. 195

10 रजं कली, स्त्रीकुसुमम्, इतिशब्दरत्नावली, रजः पु. (रञ्जयतीति रञ्ज+अच् निपततान्नलोपः) परागः । यथा गो. रामायणे 3/79/29

पद्मपुष्परजोन्मिश्रोवृक्षान्तर्विनिःसृतः ।
निश्वास इव सीताया वायुर्वाति मनोरमः ॥

श. क. द्रु. ।

सुलमिति फलाभावात् 'नोपधाया' इति निर्देशस्योक्तवचनज्ञापकत्वं पुरुषोत्तमदेवमात्रोक्तं न युक्तम् । यतः सौत्रत्वादिनापि निर्देशस्यास्योपपत्तिः सुलभा ।

## 'पुंव'दिति निर्देशः

'स्त्रियाः [1]पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणी - प्रियादि'ष्विति सूत्रे 'पुंव'दिति निर्देशो 'न वत्यर्थे नञ्स्नञौ भवतः' इति वचनस्य ज्ञापकः[2] । यतः [3]'स्त्रीपुंसाभ्यां नञ्स्नञौ भवना'दिति सूत्रेण प्राग् भवनाद् येऽर्थास्तेषु सर्वेष्वर्थेषु प्रकृतिविशेषाभ्यां विधीयमानौ नञ्स्नञौ सर्वस्यापि प्रत्ययस्य बाधकाविति 'तेन तुल्यं क्रिया[4]चेद् वति'रिति वतिमपि बाधित्वात्र पुंशब्दात् नञ्स्नञौ प्रत्ययौ स्यातां, न तु वतिरतः 'पुंवदिति' निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचने 'स्त्रीपुंसाभ्या'मिति योगस्य वत्यर्थेऽप्रवृत्त्या 'तेन तुल्य'मिति वतेः पुंशब्दात् सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्ट'मिति[5] शिष्टप्रयोगे 'पुंव'दित्यस्य साधुत्व-सिद्धिः ।

## पूर्वत्रोत्तरत्रेति निर्देशौ

'[6]पूर्वत्रासिद्ध'मित्यत्र 'पूर्वत्रे'ति 'जश्भावादिति चेदुत्तरत्र[7]ढस्याभावादपवादप्रसङ्गः' इत्यत्रोत्तरत्रेति च निर्देशौ पूर्वादीनां 'किं सर्वनामबहुभ्योऽद्व्यादिभ्य' इति [8]द्व्यादि-

---

1. अष्टा. 6/3/34.
2. तथाहि–
   (क) 'आचार्यप्रवृत्तिर्ज्ञापयति - 'न वत्यर्थे नञ्स्नञौ भवतः' - इति । यदयं स्त्रियाः पुंवदिति निर्देशं करोती'त्याह पत. व्या. म. भा. 5/1/2/118 ।
   (ख) 'स्त्रियाः पुंवत्' इति निर्देशो ज्ञापयति 'न वत्यर्थे नञ्स्नञौ भवत' इतीत्याह श्रीना. ज्ञा. सं. 5 पृ. 69 ।
   (ग) 'स्त्रीपुंसाभ्याम् (सू. 4/1/87) वत्यर्थेन 'स्त्रीपुंवच्च' इति ज्ञापकात् । स्त्रीवत् । पुंवत् । - इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 213
3. अष्टा. 4/1/87 ।
4. अष्टा. 5/1/115 ।
5. सर्वस्य द्वे सुमतिकुमती संपदापत्तिहेतू
   वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः ।
   एको गोत्रे भवति स पुमान् यः कुटुम्बान् बिभर्ति
   स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥
   इति पूर्णः श्लोकः ।
6. अष्टा. 8/2/1 ।
7. वा. व्या. म. भा. 8/3/1/13 ।
8. अष्टा. 5/3/2 ।

पर्युदासेन पर्युदासो ने'ति वचनस्य [1]ज्ञापकौ । यतोऽस्य वचनस्याभावे पूर्वत्रोत्तरत्रेति निर्देशावनुपपन्नौ । यैः त्यदादीनि पठित्वा गणे पूर्वादीनि पठितानि तेषां मते द्व्यादिपर्युदासेन[2] हि पूर्वोत्तरशब्दाभ्यां [3]त्रल् प्रत्ययो न प्राप्नोति । ज्ञापिते चास्मिन् वचने निर्देशाविमौ समुपपद्येते । यतः पूर्वादीनां द्व्यादिपर्युदासेन पर्युदासो न भवतीति त्रल् प्रत्ययः सुलभः। 'पूर्वत्र' 'परत्रे'ति च प्रयोगयोः सर्वेषां मते साधुत्वसिद्धिरस्य वचनस्य फलम् ।

## 'पूर्वपरावरदक्षिणोत्तरापराधराणी'ति निर्देशः'

'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञाया'मिति [4]गणसूत्राष्टकसूत्रयोः[5] 'पूर्वपरावरदक्षिणोत्तरापराधराणी'ति निर्देशः 'आगमास्तदगुणीभूतास्तद्ग्रहणेन गृह्यन्ते'[6] इति परिभाषाया ज्ञापकः[7] । पूर्वाद्यधरान्तस्य [8]द्वन्द्वे कृते

---

1 तथाहि –
(क) 'आचार्यप्रवृत्तिर्ज्ञापयति – 'नैषां द्व्यादिपर्युदासेन - पर्युदासो भवती'ति यदयं 'पूर्वात्रासिद्ध'मिति निपातनं करोति । वार्तिककारश्च पठति – 'जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः इती'त्याह पत. व्या. म. भा. 1/1/6/33 ।
अत्र भाष्ये निपातनमित्यस्य निर्देश इत्यर्थः ।
(ख) 'पूर्वत्रासिद्धम्' (सू. 8/2/1) इत्यादेर्ज्ञापकात् पूर्वादीनां द्व्यादिपर्युदासो ने'त्याह श्रीना. ज्ञा. सं. 1, पृ. 23 ।

2. 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' -
- अष्टा. 5/3/2 ।

3 'सप्तम्यास्त्रल्' -
-अष्टा. 5/3/10 ।

4. गणपाठान्तर्गतप्रथमाध्यायस्य प्रथमगणसूत्रमेतत् ।

5 अष्टा. 1/1/34 ।

6 (क) 'तद्भक्तस्तद्ग्रहणेन गृह्यते' –
व्याडि - प. सू. प. 17 पृ. 10 ।
(ख) 'आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' -
-पु. दे. ल. प. वृ. प. 18, पृ. 120 ।
(ग) 'आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते -
-सी. दे. बृ. प. वृ. प. 4 पृ. 166 ।
(घ) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' -
-नी. दी. प. वृ. प. 4. पृ. 293 ।
(ङ) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' -
-ह. भा प. भास्क. प. 4, पृ. 319 ।
(च) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' -
भ. ना. प. शे. प. 12 पृ.63 ।
(छ) 'तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' -
-शेषा. प. भास्क. प. 11, पृ. 387 ।

7 तथाहि – "परिभाषायां ज्ञापकम् ....... 'अधराणि' (1/1/34) इति निर्देश इत्यपरे" इत्याह ह. भा. प. भास्क. प. 4, पृ. 320 ।

८ 'चार्थे द्वन्द्वः'. - अष्टा. 2/2/29 ।

[1]प्रातिपदिकत्वान्नपुंसके जसि तस्य [2]'जश्शसोः शि'रिति श्यादेशे शेः [3]'शिसर्वनामस्थान'मिति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य[4] झलचः' इति नुमि [5]उपधादीर्घे च कृते कृतोऽयं निर्देशोऽनुपपन्नः अस्या अभावे हि नहि पूर्वाद्यपराधरान्तान्तं नान्तमिति 'सर्वनामस्थाने [6]चासम्बुद्धा'विति उपधादीर्घो न प्राप्नोति । ज्ञापितायां चास्यां नुमोऽनया पूर्वाद्यपराधरान्तेन ग्रहणान्नान्तत्वेन दीर्घस्य सुलभतया निर्देशोऽयमुपपद्यते । न चात्र 'मिदचोऽन्त्यात्परः'[7] इत्यनेनैव तस्य नान्तत्वादुपधादीर्घस्य[8] सुलभतया निर्देशोऽयं सुतरामुपपद्यत इति नास्य ज्ञापकत्वमिति शङ्क्यम् । यतोऽनतिदिष्टे नान्ते 'राजे'त्यादौ उपधादीर्घस्य सार्थकतयाऽत्रातिदिष्टे नान्ते तदप्रवृत्तौ परिभाषामिमां विना निर्देशोऽयं नूनमनुपपन्न एव । ज्ञापिताया अस्याः फलं तु [9]'कुण्डे'त्यादौ 'गुरोश्च [10]हलः' इत्यप्रत्ययस्य, 'सर्वेषा'मित्यादौ 'बहुवचने झल्येत्'[11] इत्येत्वस्य, 'षट्त्सन्तः' इत्यत्र 'न पदान्ताट्टोरना'मिति[12] ष्टुत्वनिषेधस्य च सिद्धिः । यतोऽस्याः सत्त्वे क्रमशो नुमा[13] धातुग्रहणेन ग्रहणादप्रत्ययः, [14]सुट आम्ग्रहणेन ग्रहणादेत्वं, [15]धुटः [16]परादित्वाट्टवर्गस्य पदान्तत्वेन ष्टुत्व-निषेधश्च सिद्ध्यन्ति । अस्या अभावे हि नैताः सिद्ध्येयुः ?

---

1. 'कृत्तद्धितसमासाश्च' - अष्टा. 1/2/46 ।
2. अष्टा. 7/1/20 ।
3. अष्टा. 1/1/42 ।
4. अष्टा. 7/1/72 ।
5. 'सर्वनामस्थाने चासम्बुद्धौ – अष्टा. 6/4/8 ।
6. अष्टा. 6/4/8 ।
7. अष्टा. 1/1/47 ।
8. सर्वनामस्थाने चासम्बुद्धौ - अष्टा. 6/4/8, इति विहितस्य ।
9. 'कुडि दाहे' धा. पा. भ्वा. 270 ।
10. अष्टा. 3/3/103 ।
11. अष्टा. 7/1/103 ।
12. अष्टा. 8/4/42 ।
13. 'इदितो नुम् धातोः' - अष्टा. 7/1/58 - इति विहितस्य ।
14. 'आमि सर्वनाम्नः सुट्' - अष्टा. 7/1/52 - इति विहितस्य ।
15. 'ड: सिधुट्' - अष्टा. 8/3/29' इति विहितस्य ।
16. 'आद्यन्तौ टकितौ' - अष्टा. 1/1/46 'इति बलेन ।

अथास्याः स्वीकारे [1]शितुकः पूर्वग्रहणेन ग्रहणात् 'कुर्वञ्छेते' इत्यत्र नकारस्यापदान्तत्वात् '[2]पदान्तस्येति' निषेधाप्राप्त्या णत्वाऽऽ[3]पत्तिः, '[4]अग्निचितः' इत्यादौ '[5]जसिचे'ति गुणाऽऽपत्तिः, 'छो [6]छेदने' [7]अस्माल्लिटि 'चच्छौ' इत्यादौ [8]अभ्यासे [9]तुको निवृत्त्यापत्तिश्च स्यादिति चेत् ? उच्यते । '[10]स्तोः श्चुना' इतियोगविभागेन स्तोः श्चुना योगे णत्वनिषेधान्न तत्र[11]णत्वाऽऽपत्तिः, [12]'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति सूत्रे 'ब्रुवः' इति निर्देशादनया वर्णप्रयुक्तकार्याभाव-ज्ञापनान्न [13]तत्र गुणाऽऽपत्तिः; [14]'छेचे'ति सूत्रे '[15]ह्रस्वस्य पिति कृति तुक्' इतिह्रस्वग्रहणे अनुवर्तमाने पुनस्तदनुकर्षणार्थं चकारकरणात् ह्रस्व एवागमो, न ह्रस्वान्तः, स च समुदायग्रहणेन गृह्यते इत्यभ्यासग्रहणेनाग्रहणान्न [16]तत्र तुको निवृत्त्यापत्तिश्च प्राप्नोति ।

वस्तुतस्तु 'मिदचोऽन्त्यात्परः'[17] इति परिभाषैव, नातिदेशः, अनियमे नियम-कारिणी हि परिभाषा । तथा सति '........ अधराणी'त्यत्र 'अधर' इत्यस्यानयैव नान्तत्वाद्दीर्घस्य [18]सुलभतयास्य निर्देशस्योपपत्तौ नोक्तपरिभाषा-

---

1. शि तुक्' - अष्टा. 8/3/31' इति विहितस्य ।
2. अष्टा. 8/4/37 ।
3. 'अट् - कु - प्वाङ् - नुम् - व्यवायेऽपि' - -अष्टा. 8/4/2 ।
4. 'अग्निं चितवान् इति विग्रहे' अग्नौ चेः' - अष्टा. 3/2/91 इति क्विपि पित्त्वात्, तुकि प्रातिपदिकत्वाज्जसि निष्पन्नोऽयम् ।
5. अष्टा. 7/3/109 ।
6. धा. पा. दिवा. 1146 ।
7. 'परोक्षे लिट्' - -अष्टा. 3/2/125 ।
8. 'पूर्वोऽभ्यासः' - -अष्टा. 6/1/4 ।
9. 'शि तुक्' – अष्टा. 8/3/31 इतिविहितस्य ।
10. 'स्तोः श्चुना श्चुः' - अष्टा. 8/4/40' इत्यत्र ।
11. 'कुर्वञ्छेते' इत्यत्र ।
12. अष्टा. 3/4/88 ।
13. 'अग्निचितः' - इत्यादौ ।
14. अष्टा. 6/1/73 ।
15. अष्टा. 6/4/34 ।
16. 'चच्छौ' इत्यत्र ।
17. अष्टा. 1/1/47 ।
18. 'सर्वनामस्थाने चासम्बुद्धौ -

ज्ञापकत्वमस्य हरिभास्करोक्तं युक्तम् । अतोऽस्या अन्यद् ज्ञापकमत्रैव प्रबन्धेऽन्यत्र निरूपितम् ।

## 'प्रथमयो'रिति निर्देशः

'प्रथमयोः पूर्वसवर्णः'[1] इति सूत्रे 'प्रथमयो'रिति निर्देशः 'क्वचित्समुदायेन [2]वाक्यपरिसमाप्ति'रितिपरिभाषाया [3]ज्ञापकः । यतः प्रत्येकं वाक्यपरिसमाप्तौ प्रत्येकं प्रथमासंज्ञा[4] स्यात्तदात्र सूत्रे प्रथमाशब्देन सोः सामीप्याच्च अमोऽपि ग्रहणं भवेत्, तथा सति लाघवात् 'स्वमो'रित्यस्यैव निर्देशस्यौचित्त्येन 'प्रथमयो'–रिति गुरु-निर्देशोऽनुपपन्नः । ज्ञापितायां चास्यां सुपां त्रिकस्य 'सु औ जस्' इत्यस्य समुदायस्यैव प्रथमा संज्ञा भवति, सामीप्याच्च 'अमौट् शस्' इति त्रिकेऽप्यसौ संज्ञा

---

-अष्टा. 6/4/8 इति ।

1. अष्टा. 6/1/102 ।
2. (क) पु. दे. ल.प. वृ. प. 30, पृ. 125 ।
   (ख) सी. दे. बृ. प. वृ. प. 79, पृ. 240 ।
   (ग) 'क्वचित्समुदायेऽपि' नी. दी. प. वृ. प. 105, पृ. 312 ।
   (घ) ह. भा. प. भास्क. प. 81, पृ. 356 ।
   (ङ) 'क्वचित्समुदायेऽपि' भ. ना. प. शे. प. 117, पृ. 352 ।
3. तथाहि –
   (क) "ज्ञापकं चात्र 'प्रथमयोः पूर्वसवर्णः' (6/1/102) इत्यत्र प्रथमाद्वितीययोः वचनषट्करूपयोरस्मिन्नर्थे प्रयुक्तं प्रथमयोरिति पदम् । प्रथमाशब्दो हि यदि सुपां त्रिकस्य सु औ जसित्यस्य समुदायस्य संज्ञा स्यात् सामीप्याच्च अमौट्शस् इति त्रिके प्रवर्तते तदा प्रथमयोरिति निर्देशः साधीयान् स्यात् । यदि तु प्रत्येकं प्रथमा शब्दः स्यात्तदा सोरेकवचनस्य प्रथमाशब्देन ग्रहणं सामीप्याच्च अम इति लाघवार्थं स्वमोरित्येव निर्देशं कुर्यात् । तस्मात् प्रथमयोरिति निर्देशेन समुदाये वाक्यपरिसमाप्तिं बोधयती"त्याह पु. दे. ल. प. वृ. प. 30, पृ. 125 ।
   (ख) 'पुरुषोत्तमदेवोक्तमेवेदं ज्ञापकमविकलं' 'ज्ञापकमप्याहु' रित्यन्तेन ग्रन्थेनाऽऽह सी. दे. बृ. प. वृ. प. 79, पृ. 240 ।
   (ग) "ज्ञापकमप्याहुः । 'प्रथमयोः पूर्वसवर्णः' (6/1/102) इत्यत्र प्रथमाद्वितीययो-र्वचनषट्कयोः प्रयुक्तं प्रथमयोरितिपद"मित्याह ह. भा. प. भास्क. प. 81, पृ. 356 ।
   (घ) 'प्रथमयोरित्यादौ व्याख्यात् प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययो र्ग्रहणं बोध्यम् । अन्यथा 'औजसोः पूर्व इत्येव वदे"दि ग्रन्थस्य व्याख्यानादित्यनेनास्य निर्देशस्य ज्ञापकत्वं सूचयति - भा. ना. ल. श. शे. अजन्तपुंलिङ्ग प्र. पृ. 63 ।
4. तथाहि–
   (क) "तत्र सु' औ 'जस्' इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः'. इत्याह भ. दी. वै. सि. कौ. अजन्तपुंलिङ्ग प्र., पृ. 93 ।
   (ख) दीक्षितग्रन्थमिमं व्याचक्षाणो वासुदेवदीक्षितोऽप्याह-"प्राचामिति । पाणिनेः पूर्वेषां स्फोटायनाद्याचार्याणां शास्त्रे प्रथमाद्याः सप्तम्यन्ताः संज्ञाः स्थिता इत्यन्वयः 'इति" बा. मनो. अजन्तपुंलिङ्ग्प्र., पृ. 93 ।

प्रयुज्येत अतः 'स्वमो'रिति निर्देशस्य सत्यपि लाघवे विवक्षितार्थप्रत्यायकतयाऽनौचित्यात् 'प्रथमयो'रिति गुरुनिर्देशोऽत्र समुपपद्यते । ज्ञापिताया अस्याः फलं तु 'रामाः' 'रामान्' इत्यादौ [1]पूर्वसवर्णदीर्घस्य, 'दृषद्बिभर्ती'त्यत्र दकारस्य संयोगा[2]न्तलोपाभावस्य, 'निर्याया'दित्यत्र 'वान्यस्य संयोगादे'[3] -रित्येत्वाभावस्य सिद्धिः । अस्या अभावे हि प्रत्येकं वाक्य-परिसमाप्तौ प्रथमाशब्देन जश्शसोर्ग्रहीतुमशक्यतया 'रामाः' रामा'नित्यादौ पूर्वसवर्णदीर्घो न सिद्ध्येत्, बकारसंन्निधौ दकारस्य [4]संयोगत्वाद् दृषद् बिभर्तीत्यत्र संयोगान्तलोपस्य दुर्वारतया तदभावो न सिद्ध्येत् । सत्यां चास्यां नात्र क्रमशः प्रत्येकं [5]प्रथमासंज्ञा [6]संयोगसंज्ञा च भवतः, प्रत्युत समुदाय एव, इत्यमी प्रयोगाः समुपपद्यन्ते । प्रत्येकं [7]गुण[8]वृद्धयादिसंज्ञासिद्ध्यर्थमत्र 'क्वचि'दिति प्रविष्टम् । संयोगसंज्ञा तु यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण भवतीति 'शिक्षे'त्यत्र 'गुरोश्च[9] हलः' इत्यप्रत्ययः, 'गोमान् करोती'त्यत्र मतुपस्तकारस्य संयोगान्तलोपश्च[10]सिद्ध्यतः ।न च '[11]हलः' इति बहुवचन- निर्देशात्कथं द्वयोः संयोगसंज्ञेति शङ्का कार्या । यतो 'जात्याख्यायामेकस्मिन् बहुवचन'-मितिवचनाज्जातावत्र बहुवचनम् । [12]पतञ्जलिस्तु लौकिकन्यायसिद्धामिमां मनुते ।

---

1. 'प्रथमयोः पूर्वसवर्णः' –
अष्टा. 6/1/102 ।
2. 'संयोगान्तस्य लोपः' –
अष्टाः 8/2/23 इति यः संयोगान्तलोपस्तदभावस्येत्यर्थः ।
3. अष्टा. 6/4/68 ।
4. 'हलोऽनन्तराः संयोगः' -
अष्टा. 1/1/7 ।
5. 'सु औ जस्' इति प्रथमा' इति व. भ. ल. सि. कौ. अजन्तपुंलिङ्ग प्र. पृ. 36 ।
-अष्टा. 1/1/7 ।
6. 'हलोऽन्तराः संयोगः' –
-अष्टा. 1/1/7 ।
7. 'अदेङ्गुणः' -
अष्टा. 1/1/2 ।
8. 'वृद्धिरादैच्' -
- अष्टा. 1/1/1 ।
9. अष्टा. 3/3/103 ।
10. 'संयोगान्तस्य लोपः -
-अष्टा. 8/2/23 ।
11. 'हलोऽनन्तराः संयोगः' -
अष्टा. 1/1/7 इत्यत्रेतिशेषः ।
12. अमुना हि 'ननु चायमप्यस्ति दृष्टान्तः - 'समुदाये वाक्यरिसमाप्ति' - रिति । तद्यथा - 'गर्गाः शतं दण्ड्यन्ता'मिति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ती'त्युक्तम् व्या. म. भा. 1/1/3 ।

## 'प्रश्ने'इति निर्देशः

'प्रश्ने चासन्नकाले'[1] इति सूत्रे 'प्रश्न'इति निर्देशः 'प्रच्छेर्नङि संप्रसारणं न भवती-' ति वचनस्य [2]ज्ञापकः । यतः [3]प्रच्छधातोः 'यज याच यत विच्छ–[4]प्रच्छ रक्षो नङ्' इति नङि च्छस्य 'च्छवोः शूडनुनासिके[5] च' इति शकारे कृदन्तत्वात् प्रातिपदिकत्वे[6] सप्तम्येकवचने निष्पन्ने 'प्रश्ने' इत्यत्र नङो ङित्त्वात् तस्मिन् परे धातो रेफस्य [7]'ग्रहिज्ये'ति सम्प्रसारणस्य दुर्वारतया निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽनेन सम्प्रसारणप्रतिषेधात्संप्रसारणाभावस्य सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'प्रश्नः' इत्यस्य प्रयोगस्य साधुत्वम् । अन्यथा सम्प्रसारणस्य दुर्वारतया नास्य साधुत्वं सिद्ध्येत् ।

भगवान् भाष्यकारस्तु निपातनादत्र सम्प्रसारणाभावं [8]मनुते । काशिका-कारोऽप्येतदाह[9] सर्वथास्य ज्ञापकत्वे न कश्चन विवादो यतो निपातनमपि ज्ञापकं भवत्येव ।

न चैतद्वचनसत्त्वे नङो ङकारस्य वैयर्थ्यं शङ्क्यम् । यतो [10]'विच्छे'. र्नङि[11]

---

1. अष्टा. 3/2/117 ।
2. तथाहि –
   (क) 'प्रच्छेरसंप्रसारणं ज्ञापकात् - 'प्रश्ने चासन्नकाले' इती'त्याह जाय. का. 3/3/90 ।
   (ख) 'प्रश्नः' । 'प्रश्नेचासन्ने'ति ज्ञापकान्न सम्प्रसारण' मित्याह भ. दी. वै. सि. कौ. उत्तरकृदन्तप्र. पृ. 560 ।
   (ग) 'यज याच' (सू. 3/3/90) प्रश्नः । 'प्रश्ने चासन्न' (सू. 3/2/117) इति ज्ञापकान्न सम्प्रसारण' मित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 211 ।
3. 'प्रच्छ ज्ञीप्सायाम्' – धा. पा. तुदा. 1414 ।
4. अष्टा. 3/3/90 ।
5. अष्टा. 6/4/19 ।
6. 'कृत्तद्धितसमासाश्च' - अष्टा. 1/2/46 ।
7. 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' - अष्टा. 6/1/16 ।
8. 'निपातनादेतत् सिद्धम् । किं निपातनम् ? । प्रश्ने चासन्नकाल इती'त्युक्तमनेन' - व्या. म. भा. 3/3/1/90 ।
9. 'अनेन हि - 'प्रश्नः' नङि तु 'प्रश्ने चासन्नकाले' इति निपातनादसम्प्रसारण'मित्युक्तम् - का. 6/1/16 ।
10. 'विच्छ गतौ' धा. पा. तुदा. 1424 ।
11. 'यज याच यत विच्छ प्रच्छो नङ्' - -अष्टा. 3/390 ।

'विश्न' इत्यत्र 'पुगन्ते'ति[1] प्राप्तस्य लघूपधलक्षणगुणस्य' 'क्ङिति[2]चे' ति प्रतिषेधाय तत् सार्थकम् । तथ्यमिदं [3]जयादित्य - [4]भट्टोजिदीक्षिताभ्यां स्वीकृतम् । जिनेन्द्रबुद्धिना[5] चैतद् भृशं परीक्ष्य स्थिरीकृतम् ।

## 'प्रशास्तृणा'मिति कृतणत्व निर्देशः

'अप् तृन् तृच् स्वसृ नप्तृ नेष्टृत्वष्टृ क्षतृ होतृ पोतृ - प्रशास्तृणा'[6]मिति कृतणत्वनिर्देशः ' वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति परिभाषाया[7] ज्ञापकः[8] । यतोऽत्र रेफषकारयोरभावेन 'रषाभ्यां नो णः समानपदे'[9] इति णत्वस्याप्राप्त्या 'प्रशास्तृणा'मिति कृतणत्वस्य निर्देशोऽनुपपन्नः । ज्ञापितायां चास्यां परिभाषायां वर्णकरैकदेशरेफमादाय णत्वस्य सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापिताया अस्याः प्रयोजनं तु 'आनृधु'रित्यादौ ऋधेर्द्विहल्त्व-सिद्धिः । अन्यथात्र द्विहल्त्वा-

---

1. 'पुगन्तलघूपधस्य च' ।-अष्टा. 7/3/86 ।
2. अष्टा. 1/1/5 ।
3. 'ङकारो गुणप्रतिषेधार्थः' - इतिह्यनेनाह का. 3/3/90 ।
4. 'अनेन हि - 'ङित्वं तु विश्न इत्यत्र गुण-निषेधाये'त्याह वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 560 ।
5. अनेन हि - 'ङकारो गुण-प्रतिषेधार्थ इति । विच्छेगुर्णप्रतिषेधो माभूदित्येवमर्थः । ननु चान्तरङ्गत्वात् 'छे च' इति तुकैव विच्छेस्तावद् भवितव्यम्, तत्रालघूपधत्वादेव गुणो न भविष्यति, तत् किं तत्प्रतिषेधार्थेन ङकारेण ? सत्यम्, यदा तुग् भवति तदा नार्थस्तेन । यदा त्वनित्यत्वादागमशासनस्य तुङ्न भवति तदावश्यं गुणप्रतिषेधार्थो ङकारः कर्तव्यः । 'अनित्यमागमशासनम्' इत्यस्य चैतदेव नङो ङित्करणं ज्ञापकम् । यदा तर्ह्यनित्यत्वात् तुङ् न, तदा 'च्छ्वोः शूडनुनासिके च' इति सतुक्कस्य च्छकारस्य शादेशो विधीयमानः केवलस्य न प्राप्नोति ? नैष दोषः, यस्मात् 'च्छ्वोः' इति द्विच्छकारो निर्देशः । तत्रैकः सतुक्कः, द्वितीयः केवल एव, तेन केवस्यापि शादेशो भविष्यति । यदि तु द्विच्छकारो निर्देशः, 'च्छ्वोः' इति द्विवचनं न प्राप्नोति, बहुत्वात् स्थानिनाम् ? सौत्रत्वान्निर्देशस्य बहुवचनस्य व्यत्ययेन द्विवचनं भविष्यतीत्यदोषः । अवश्यं द्विच्छकारो निर्देशः कर्तव्यः,अन्यथा 'राल्लोपः' इत्यत्र केवस्य लोपो न स्यात्, केवलस्य च्छकारस्याप्रकृतत्वात् । वचनं तु वकारलोपार्थमेवस्या'-दित्युक्तम् - न्या. 3/3/90 ।
6. अष्टा. 6/4/11 ।
7. व्याडिः पं. सू. प. 26, पृ. 14 ।
8. तथाहि - 'यच्चापि' 'होतृप्रशास्तृणाम्' (6/4/11) इति कृतणत्वमुच्चारयति । कथं कृत्वा ज्ञापकम् । इह 'रषाभ्यां.' (8/4/1)- णत्वमुच्यते । न चात्र रषौ पश्यामः । पश्यति त्वाचार्यः । ऋवर्णे रेफोऽस्ति यतो णत्वमुच्चारयति । अतो वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते । ......,किमतेस्या ज्ञापने प्रयोजनम् । आनृधुरित्यत्र ऋवर्णस्य रेफं दृष्ट्वा द्विहल इति नुट् सिद्धो भवती'त्याह व्याडि प. पू. स. 26, पृ. 14 ।
9. अष्टा. 8/4/11 ।

वाभावाद् [1]ऋधेः '[2]तस्मान्नुड् द्विहलः' इति नुड् न भवेत् । निर्देशस्यास्यैतत्परिभाषास्वरूपज्ञापकत्वं केवलं व्याडि - सम्मतम् ।

पुरुषोत्तमदेवस्तु 'वर्णैकदेशा अपि क्वचिद् वर्णग्रहणेन गृह्यन्ते' इत्याकारकवचनज्ञापकत्वमस्य निर्देशस्य [3]मनुते । तस्योपजीव्यं जयादित्यस्य ग्रन्थः । यतस्तेन काशिकायाम्[4] "ऋकारैकदशो रेफो हल्ग्रहणेन गृह्यते । तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति - आनृधतुः, आनृधुः "इत्युक्तम् ।

[5]जिनेन्द्रबुद्धिस्तु 'प्रशास्तृणा'मिति निर्देशस्य 'यतो विहितं णत्वं ततोऽन्यत्रापि भवती'तिवचनज्ञापकता मन्यते । [6]भट्टोजिदीक्षितस्तु 'प्रशास्तृणा'मिति निर्देशः 'ऋवर्णान्नस्य णत्वमेव' ज्ञापयतीति ब्रूते ।

वस्तुतस्तु 'प्रशास्तृणा'मिति निर्देशो नानुपपन्न इति न भवत्यसौ ज्ञापकः । यतोऽत्र णत्वम् उक्तपरिभाषाम् उक्तवचनं च विनापि सूत्रत एव सुलभम् । तथाहि– '[7]छन्दस्यृदवग्रहा'दित्यत्र 'ऋतः' इत्येको योगः, अतो नो णो भवति, 'छन्दस्यवग्रहात्' इत्यपरः, अत इत्येवे'त्युक्तं[8] भगवता ।

न चास्य निर्देशस्य ज्ञापकत्वास्वीकारे आनृधतुरानृधुरित्यत्र कथं नुट् स्यात्, नह्यत्र ऋधिर्द्विहल् भवति, 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते'इति–पुरुषोत्तमदेव-वचनस्य च प्रमाणाभावेनासद्भावा'दिति शङ्कनीयम्, यतो भगवता 'तस्मान्नु'डिति सूत्रे द्विहल्ग्रहणं नावश्यकमित्युक्तम्[9] ।

---

1. धा. पा. ऋधु वृद्धौ दिवा. 1246, -स्वा. 1272 ।
2. अष्टा. 7/4/71 ।
3. तथाहि- 'तथा च ऋवर्णस्य रेफमाश्रित्य कृतणत्वे प्रशास्तृणामिति ज्ञापयति 'वर्णैकदेशा अपि क्वचिद् वर्णग्रहणेन गृह्यन्ते इति । तेनाऽऽनृधतुरानृधुरिति नुड्विधौ ऋधे र्द्विहलन्तत्वं सिद्धं भवतीत्याह पु. दे. ज्ञा. समु. चतुर्बिंशे अङ्गपादे पृ. 85 ।
4. 7/4/71 ।
5. 'अथ प्रशास्तृणामित्यत्र केन णत्वम् 'रषाभ्याम्' इत्यादिना इतिचेत् ? न, 'रषाभ्याम्' इत्युच्यते, न चात्र रषौ स्तः । एवं तर्ह्येष निर्देशो ज्ञापयति - 'यतो विहितं णत्वं ततोऽन्यत्रापि भवती'ति । तेन मातृणाम्, पितृणाम्, ग्रामणीः, अग्रणी 'रित्यादौ णत्वं सिद्धं' भवति ततश्च 'रषाभ्यां णत्वं ऋवर्णाच्चेति वक्तव्यमिति न वक्तव्यं भवतीत्ययमाह न्या. 6/4/1 ।
6. 'होतृ पोतृ प्रशस्तृणा'मिति निर्देशेन च ऋवर्णान्नस्य णत्वमेव ज्ञाप्यते लघवा'दित्यसावाह–श. कौस्तु. 1/1/2/4 ।
7. अष्टा. 8/4/26 ।
8. व्या. म. भा. 8/4/1/1 ।
9. तथाहि–'द्विहल्ग्रहणं न करिष्यते । तस्मान्नुड् भवतीत्येव । यदि न क्रियते,आटतुः, आटुरित्यत्रापि प्राप्नोति । अश्नोतिग्रहणं नियमार्थं भविष्यति–अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति' व्या. म. भा. 1/1/2/4 ।

अतोऽत्र जयादित्य-जिनेन्द्रबुद्धि-भट्टोजिदीक्षितानामेव न, किन्तु व्याडि-पुरुषोत्तम-देवयोरपि 'प्रशास्तृणा'मिति निर्देशस्य ज्ञापकत्वोपपादनं भाष्यचरमसिद्धान्तप्रतिकूलं प्रतिभाति ।

## 'पाद्दन्मूर्धस्वि'ति निर्देशः

[1]'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'विति ति सूत्रे 'पाद्दन्मूर्धस्वि'ति निर्देशो 'विभाषा समासान्तो भवती'ति वचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याभावे समासान्तप्रत्ययस्य नित्यतया [3]'द्वित्रिभ्यां ष मूर्ध्नः' इति सूत्रेण समासान्तः 'ष' प्रत्ययोऽत्र दुर्वार इति निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचने समासान्तप्रत्ययस्यानित्यतया 'ष'-प्रत्ययस्यात्राप्रवृत्तौ निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'सुपथी नगरी' इत्यादौ 'इनः [4]स्त्रिया'मिति विहितस्य कपो वैकल्पिकत्वादभावः । इदमत्रावधेयम्–'द्वित्रिभ्यां पाद् [5]दन्मूर्धसु बहुव्रीहौ' इति सूत्रेण द्वित्रिभ्यां परेषु 'पाद्दन् मूर्धन्' इत्येतेषु बहुव्रीहिसमासेऽन्तोदात्तस्वरो विधीयते । तत्र मूर्धन्-शब्दस्योदाहरणेषु 'द्विमूर्धः' 'त्रिमूर्धः' इति कृतसमासान्ते, 'द्विमूर्धा' 'त्रिमूर्धा' इत्यकृतसमासान्ते चोदाहरणे । यद्यत्राचार्यो 'मूर्धेष्वि'ति कृतसमासान्तं निर्दिशेत् तदा अकृतसमासान्ते 'द्विमूर्धा' 'त्रिमूर्धा'इत्यादौ स्वरोऽयं न सिद्ध्येत् । 'मूर्धस्वि'ति अकृतसमासान्तनिर्देशे तु अकृतसमासान्ते कृतसमासान्ते च'द्विमूर्धः' 'त्रिमूर्धः' इत्यादौ

1. अष्टा. 6/2/197 ।
2. तथाहि–
   (क) 'नन्वनेनासंदिग्धेन नकारान्तस्य ग्रहणेन भवितव्यं–यावता मूर्द्धस्वित्युच्यते । यद्यकारान्तग्रहणं स्यान् मूर्द्धेष्विति ब्रूयात् । सैषा समासान्तार्था विचारणा । एवं तर्हि ज्ञापयत्याचार्यो 'विभाषा समासान्तो भवती'त्याह पत. व्या. म. भा. 6/2/2/197 ।
   (ख) 'यदि नित्यः समासान्तः स्यात्तदा कार्यिविशेषसन्देहव्यावृत्तये प्रक्रमाभेदाय वासमासान्त एवोच्चार्येत । तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते । तत्र यदा समासान्तो नास्ति तदा समासस्योत्तरपदस्य वा कार्यित्वे विशेषाभावः । यदा तु समासान्तः क्रियते तदा समासस्य कार्यित्वे सिद्धं समासान्तस्योदात्तत्वम् । यदाप्युत्तरपदस्य कार्यित्वं तदा परत्वादन्तोदात्तत्वे कृते समासान्तः, तत्र टिलोप इति उदात्त-निवृत्ति-स्वरेणापि सिद्ध'मित्याह कै. प्रदी. 6/2/2/197 ।
   (ग) 'मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्दः । तस्यैतत्प्रयोजनम्-असत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम्–अनित्यः समासान्तो भवतीति । यदापि च समासान्तः क्रियते तदापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः । त्रिमूर्धः । इत्याह भ. दी. वै. सि. कौ. समासस्वरप्र. पृ. 694 ।
   (घ) 'द्वित्रिभ्यां पात्' (6/2/197) "मूर्धस्विति निर्देशो ज्ञापयति विभाषा समासान्त इती'त्याह श्रीना. ज्ञा. सं. 6 पृ. 107 ।
3. अष्टा. 5/4/115 ।
4. अष्टा. 5/4/152 ।
5. अष्टा. 6/2/117 ।

स्वरोऽसौ सिद्ध्यति । स चाकृतसमासान्त-निर्देशो नैतद्वचनं विना समुपपद्यत इत्यसौ निर्देशो 'विभाषा समासान्तो भवती'ति वचनं ज्ञापयंतीति । न चात्र लाघवार्थं समासान्तनिर्देशो न कृतोऽन्यथा 'मूर्धेष्वि'ति गौरवं स्यादित्यपि शङ्कनीयम् । यतो लाघवानुरोधेन 'मूर्धपाददत्स्वि'त्येव निर्दिश्येत । न च निर्दिष्टमतोऽयं निर्देशो नूनमेतद्वचनज्ञापक इति निश्चिनुमः ।

भट्टनागेशस्तु [1]'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'विति सूत्रे बहुव्रीहिग्रहणमपि 'विभाषा समासान्तो भवती'ति वचनस्य ज्ञापकमिति 'केचित्'[2] इत्यादि–ग्रन्थेन न्यरूपयत् । न केवलं महामहोपाध्यायजयदेवमिश्रो भट्टनागेशोक्तमिदं तथ्यं [3]स्वीचकार, किन्तु 'तात्याशास्त्री'ति प्रसिद्धो म. म. रामकृष्णोऽपि तत् [4]स्वीचक्रे ।

पुरुषोत्तमदेव-सीरदेव-हरिभास्करास्तु 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'विति स्वरसूत्रे 'मूर्धसु' इत्यकृतसमासान्तनिर्देशः 'समासान्तविधिरनित्यः इति परिभाषा-ज्ञापक इत्याहुः[5] ।

---

1. अष्टा. 6/2/197 ।
2. तथाहि–'केचित्तु-अतएव बहुव्रीहिग्रहणं चरितार्थम् । अन्यथा 'मूर्धेष्वि'त्येव वदेत् । बहुव्रीहिभिन्नं च समासान्तविरहादेव वारयिष्यते । न च 'द्विदन्त'–इति बहुव्रीहौ वयोवाचकत्वाभावाद् दत्रादेशाभावे शसादौ 'पद्दन्'इति ददादेशप्रवृत्त्यर्थं बहुव्रीहिग्रहणस्यावश्यकत्वेन समासान्त निर्देशे गौरवम् । किं च समासान्तनिर्देशेऽत्र प्रवृत्तिर्न सुलभा । कृतसमासान्तसाहचर्येण दत्रादेशस्यैव ग्रहणापत्तेः । अतएव 'द्वयोर्दन्ता'इति विग्रहे 'द्विदतः पश्ये'त्यादौ षष्ठीतत्पुरुषे न प्रवृत्तिरिति वाच्यम्, यथान्यासे हि पूर्वोत्तर-साहचर्येण विभक्त्यनिमित्तददादेशस्यैव ग्रहणात्, शसादिनिमित्तकस्य बहिरङ्गत्वेनासिद्धत्वाच्च, भाष्योक्तप्रकृत्यन्तरत्वपक्षेऽत्र तदप्राप्तेश्च । एवञ्च बहुव्रीहिग्रहणमपि समासान्तानित्यत्वे ज्ञापकमित्याहुः'–ल. श. शे. समास- स्वरप्र. पृ. 694 ।
3. तेन हि 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहा'विति सूत्रे 'मूर्द्धेष्विति' कृतसमासान्तनिर्देशेन बहुव्रीहावेव समासान्तत्वेन बहुव्रीहिग्रहणं व्यर्थं सत् (समासान्तविधिरनित्यः इति) परिभाषां ज्ञापयति । ज्ञापितायां च तस्यां समासान्ताभावे 'द्विमूर्धा'इत्यत्र स्वरप्रवृत्तयेऽकृत-समासान्तनिर्देशस्यावश्यकत्वेन बहुव्रीहीतरसमासे स्वराभावाय बहुव्रीहिग्रहणं चरितार्थमित्युक्तम्–विजयायां प. 85, पृ. 310 ।
4. तेन हि 'द्वित्रिभ्यां पाद्दन्मूर्धस्वि'ति कृत-समासान्तमूर्धशब्दपाठेन द्व्यादिभ्यः परस्य कृतसमासान्तमूर्धशब्दस्य बहुव्रीहावसत्त्वेनार्थत एव तल्लाभावाद् बहुव्रीहिग्रहणमस्यां (समासान्तविधिरनित्य इति परिभाषायां) मानम् । परिभाषासत्त्वे तु समासान्तस्यानित्यत्वेन 'द्विमूर्द्धा' इत्यत्रोक्तस्वरप्रवृत्तयेऽकृतसमासान्तमूर्धशब्दपाठस्यावश्यकतया बहुव्रीहीतरसमासे एतदप्रवृत्तये बहुव्रीहिग्रहणं चरितार्थमित्युक्तम्, भूतितिलके प. 85, पृ. 283 ।
5. तथाहि–
   (क) 'ज्ञापिता चेयं भाष्यकृता 'द्वित्रिभ्यां पाद् दन्मूर्धसु बहुव्रीहौ' (6/2/197) इत्यत्र स्वर-सूत्रे अकृतसमासान्तमूर्धशब्दस्योपादानेन । नित्ये हि समासान्ते यथा स्यादिति ददिति च 'पादस्य लोपोऽहस्त्यादिभ्यः' (5/4/138) इति 'वयसि दन्तस्य दतृ' (5/4/141)इति कृतसमासान्तौ निर्दिष्टौ मूर्धशब्दोऽपि तथा निर्दिष्टः स्यात् । तथा च मूर्धेषु इति निर्दिष्टः स्यात् । 'मूर्धसु'–इति चाकृतसमासान्तो निर्देशः समासान्-

यद्यपि ज्ञापितस्य 'विभाषासमासान्तो भवती'ति वचनस्य 'समासान्तविधिर-नित्यः' इति परिभाषायाश्च अर्थः फलं च तुल्ये, तथापि ज्ञापितस्य परिभाषात्वं यदेभिर्मनीषिभिः स्वीकृतं तच्चारु प्रतिभाति यत इयं परितो व्यावृता, वचनन्त्वेकदेशव्यापि अपि भवति ।

## 'फाल्गुनी'त्यादिनिर्देशाः

[1]'विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः 'इति सूत्रे 'फाल्गुनी'कार्तिकी' 'चैत्री'ति निर्देशः 'पौर्णमास्यां 'लुबविशेष'[2]इति लुब्ने'ति वचनस्य [3]ज्ञापकाः । यतोऽद्य पुष्य इत्यत्र 'न ह्यः न श्वः' इति विशेषे गम्यमानेऽपि अहोरात्रात्मक-

---

विधेरनित्यत्वं ज्ञापयति । तेन द्विमूर्धा, त्रिमूर्धा, द्विमूर्धः, त्रिमूर्ध इत्युभयत्राप्यन्तोदात्तो भवति । यतश्चेयं ज्ञापिता भाष्यकृता ततो यदुक्तं 'यस्मात्प्रत्ययविधि-सूत्रे (1/4/13) भागवृत्तिकृता समासान्तो विधिरनित्य इति नैषा परिभाषा, भाष्ये ज्ञापकाभावादिति तदसमीक्षिताभिधान'मित्याह पु. दे. ल. प. वृ. प. 82, पृ. 148 ।

(ख) 'तथा भाष्ये 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ' (6/2/197) इत्यत्र सूत्रे कृतसमासान्तस्य मूर्धशब्दस्योपादानं लिङ्गम् । नित्ये हि समासान्ते यथा पादिति दर्दिति च 'पादस्य लोपोऽहस्त्यादिभ्यः' (5/4/138) इति ''वयसि दन्तस्य दतृ' (5/4/141) इति कृतसमासान्तौ निर्दिष्टौ तथा मूर्द्धशब्दोऽपि 'द्वित्रिभ्यां ष मूर्ध्नः' (5/4/115) इति कृतसमासान्तो निर्दिष्टः स्यात् । ततश्च मूर्धेष्विति निर्देशः स्यात् तथा चाकृतसमासान्तनिर्देशः समासान्तविधेरनित्यत्वं ज्ञापयति । तेन द्विमूर्धा त्रिमूर्धेत्य-त्राप्युदात्तत्वं भवति । यतश्च ज्ञापितेयं परिभाषा भाष्ये ततो यदुक्तम् 'यस्मात्प्रत्य-यविधि-(1/4/13) सूत्रे भागवृत्तिकृता 'समासान्तो विधिरनित्यः 'इति नैषा परिभाषा भाष्ये ज्ञापकाभावादिति तदयुक्तम्' इत्याह सी. दे. बृ. प. वृ. प. 63 पृ. 228-229 ।

(ग) 'अत्र ज्ञापकं भाष्ये 'द्वित्रिभ्यां पाद्दन् मूर्धसु' (6/2/197) इति मूर्धशब्दे समा-सान्ताकरणमित्युक्त'मित्याह ह. भा. प. भास्क. प. 65, पृ. 350 ।

1. अष्टा. 4/2/23 ।
2. अष्टा. 4/2/4
3. तथाहि–

(क) 'इह पुष्येण युक्ता पौर्णमासी पौषी, मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयं 'विभाषा फाल्गुनी श्रवणा कार्तिकी चैत्रीभ्यः' इति निर्दिशति, तज् ज्ञापयति–पौर्णमस्यां लुब्न भवती'त्याह ह. मि. पदम. 4/2/4 ।

(ख) 'कथं तर्हि पुष्ययुक्ता पौर्णमासी पौषीति ? 'विभाषा फाल्गुनीश्रवणा कार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यामयं लुब् नेति ज्ञापितत्वा'दित्याह भ. दी. वै. सि. कौ. तद्धिते रक्ताद्यर्थकप्र. पृ. 613-614 ।

(ग) 'लुबविशेषे (4/2/4) ।। 'विभाषा फाल्गुनी श्रवणा कार्तिकी चैत्रीभ्यः (सू. 4/2/23) इति निर्देशेन पौर्णमास्यामयं लुब् नेति ज्ञाप्यते । तेन पुष्ययुक्ता पौर्णमासी पौषीति सिद्ध्यती'त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2 पृ. 213 ।

कालावान्तरविशेषस्यानवगमाद्[1] 'लुबविशषे'[2] इति यथा लुब् भवति तथा फल्गुन्या युक्ता पौर्णमासीत्यर्थे फल्गुनीत्यादिशब्देभ्योऽपि 'नक्षत्रेण युक्तः कालः[3] 'इति विहितस्याणो लुप् दुर्वार इत्यणन्तत्वाभावात् [4]'टिड्ढे'ति ङीपोऽप्राप्त्या 'फाल्गुनी कार्तिकी चैत्री'ति ति निर्देशा अनुपपन्नाः । ज्ञापिते चास्मिन् वचने पौर्णमास्यां लुपः प्रतिषेधादणन्तत्वेन ङीपः सुलभतया निर्देशा अमी समुपपद्यन्ते । न चैवमत्र श्रवणेति लुपानिर्देशोऽसङ्गत इति शङ्क्यम् । यतोऽत्र श्रवणेति लुब्युक्तवद्भावाभावौ [5]निपातितौ । न च श्रावण्यां पूर्णिमायामिति प्रयोगानुपपत्तिः । अबाधकान्यपि[6] निपातनानि भवन्ती'त्युक्तेः । ज्ञापितस्यास्य वचनस्य फलं तु पौर्णमास्यां 'पौषी माघी'त्यादि प्रयोगाणां साधुत्व-सिद्धिः । एतद्वचनाभावे हि लुपो दुर्वारतया नैषां साधुत्वं सिद्ध्येत् ।

## 'बहुषु'इति बहुवचननिर्देशः

'बहुषु बहुवचन'[7]मिति सूत्रे 'बहुष्वि'ति बहुवचननिर्देशो 'नानाद्रव्यवाचिबहुशब्दस्य बहुशब्देनात्र ग्रहण'मिति वचनस्य ज्ञापकः[8] । यतो बहुत्वस्यैकत्वाद् 'बहौ बहुवचन'मिति निर्देशस्यौचित्येन 'बहुष्वि'ति निर्देशोऽत्रानुपपन्नः । ज्ञापिते चास्मिन् वचने नानाद्रव्यवाचितयात्र बहुशब्दस्य 'बहुष्विति, निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'बहुरोदनः' 'बहुपर्वतः 'इत्यादौ वैपुल्यवाचिबहुशब्दाद्

---

1. यावान् कालो नक्षत्रेण तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशाभिधानं विशेषः' पदम. 4/2/4 ।
2. अष्टा. 4/2/4.
3. अष्टा. 4/2/3.
4. टिड्ढाणञ् द्वयसज् दघ्नच् मात्रच् तयप् ठक्ठञ् कञ् क्वरपः'- अष्टा. 4/1/15.
5. तथाहि –
   (क) श्रवणाशब्दात्तु भवति -'श्रवणाकार्तिकी' इति निर्देशादेवे'त्याह ह. मि. पदम. 4/2/4 ।
   (ख) 'श्रवणाशब्दात्त्वत एव लुप्, युक्तवद्भावाभावश्चे'त्याह- भ. दी. वै. सि. कौ. तद्धिते रक्ताद्यर्थ प्र. पृ. 616 ।
6. 'कथं तर्हि श्रावण्यां पौर्णमास्यामिति? अबाधकान्यपि निपातनानि भवन्तीत्याह ह. मि. पदम. 4/2/4 'अबाधकान्यपि निपातनानि । 'श्रावणी' इत्याह भ. दी. वै. सि. कौ. तद्धिते रक्ताद्यर्थ प्र. पृ. 614 ।
7. अष्टा. 1/4/21 ।
8. तथाहि –
   (क) कथं बहुषु बहुवचनमिति ? । एतदेव ज्ञापयत्याचार्यो 'नानाधिकरणवाची यो वहुशब्दस्तस्येदं ग्रहणं न वैपुल्यवाचिनः, इति । किमेतस्य ज्ञापने प्रयोजनम् ? । यदुक्तं 'बहुरोदनः' बहुसूपः' इति परत्वाद् बहुवचनं प्राप्नोति, स दोषो न भवती'त्याह पत. व्या. म. भा. 1/4/2/21 ।
   (ख) 'बहुषु बहुवचनम्' (2/4/21) बहुवचननिर्देशो ज्ञापको नानाद्रव्यवाचिवहुशब्दस्य ग्रहणं न वैपुल्यवाचिन इती-' त्याह श्रीना. ज्ञा. सं. । पृ. 46।

बहुवचनाभावः । न च 'इत्येके [1]मन्यन्ते' 'तदेके [2]मन्यन्ते' इत्यादावेकशब्दात् परत्वादेकवचनापत्तिः शङ्क्या । यतोऽत्रान्यार्थकोऽयमेकशब्दः । एकशब्दे हि संख्याऽसहायाऽन्यार्थेषु 'एको द्वौ बहवः 'एकाग्नयः' 'सधमादोद्युम्न एकास्ताः'[3] इत्यादौ क्रमशः प्रयुक्ता दरीदृश्यन्ते ।

इदमत्रावधेयम् - "यथा [4]'द्व्येकयो'रित्यत्र द्व्येक-शब्दौ संख्यापरौ, न तु संख्येयपरौ, संख्येयपरत्वे हि 'द्व्येकयो'रित्यत्र बहुवचनमापद्येत । तथा 'बहुषु [5]बहुवचन'मित्यत्रापि बहुशब्दो बहुत्वपरः । बहुत्वं च त्रित्व - चतुष्ट्वादिपरार्द्ध-संख्याव्यापकीभूतधर्मविशेषः । इत्थं बहुत्वस्यैकत्वाद् 'बहुषु' इति बहुवचनं नोपपद्यते । अतोऽत्र सूत्रे बहुत्वस्यैकत्वेऽपि बहुत्वाश्रयस्य द्रव्यस्य बहुत्वाद् आश्रयगतं बहुत्वं बहुत्वे समारोप्य 'बहुष्वि'ति बहुवचन-निर्देश आचार्येण कृत इति स्वीकार्यः । नहि वैपुल्यवाचिनो बहुशब्दस्यात्र ग्रहणे बहुवचननिर्देशस्य साधुत्वं समर्थयितुं शक्यम् । इत्थं यस्य बहुत्वस्याश्रयो नाना, तस्मिन् बहुत्वे बहुवचनं, न तु एकाश्रिते वैपुल्यात्मके बहुवचनं भवतीति ।

अथैक्यमपि एकस्या एव स्त्र्यादिव्यक्तेः कृते क्रियमाणेषु 'दाराः' इत्यादि प्रयोगेषु बहुवचनं न सिद्ध्येत्, यतो न तत्र बहुत्वाश्रयो नानेति चेन्मैवम् । कोश[6]-वृद्ध-[7]व्यवहार-बलात्तत्रावयवगतबहुत्वस्यावयविन्यारोपेण बहुवचनोपपत्तेः । अतएव - एकस्मिन्नपि गुरावाचार्ये च 'गुरवः समागताः' 'आचार्याः कथयन्ती'त्यादि-शिष्ट-प्रयोगाश्चिरांच्छ्रूयन्ते । न च 'भर्तृदारकयोः'[8] 'अप्तेजसोः'[9] इत्यत्र द्विवचनानुपपत्तिः । आरोपे मानाभावात् । न च कोश[10] एव मानम् । कोशादपि वृद्धव्यवहारस्य प्राबल्यात् । वृद्ध-व्यवहारो हि अत्रारोपाभावमेवानुमापयतीति वक्तुं शक्यते ।

---

1. व्य. म. भा. 1/4/2/21 ।
2. व्य. म. भा. 1/4/2/21 ।
3. व्य. म. भा. 1/4/2/21 ।
4. 'द्व्येकयोर्द्विवचनै'. - अष्टा. 1/4/22 ।
5. अष्टा. 1/4/21 ।
6. 'पुं' भूम्निदाराः' - अम. को. 1/6/6 ।
7. मैथिली तस्य दाराः' -वा.रामाय. ।
8. अयं स्मार्तः प्रयोग इत्याह सदाशिवभट्टः ल. श. शे. तिलके. पृ. 65 ।
9. अयं शाबरभाष्यीयः प्रयोग इत्याह सदाशिवभट्टस्तत्रैव ।
10. 'पुं भूम्नि दाराः' - अम.को. 'आपः स्त्री भूम्नि .... अम. को. 1/10/3.

## 'भुव'इति निर्देशः

[1]'भुवो वुग्लुङ्लिटो'रिति सूत्रे 'भुवः' इति सविभक्ति-निर्देशः 'अनुकार्यानुकरण-योर्भेदः' इति वचनस्य ज्ञापकः[2] । यस्तयोरभेदाभ्युपगमेऽत्र 'भुव' इति सविभक्तिको निर्देशोऽनुपपन्नः । भूशब्दस्यात्रानुकार्यभूधात्वभिन्नतया 'अधातु'[3]रिति प्रतिषेधात् प्रातिपदिकत्वाभावेन हि ततो विभक्त्युत्पत्तिरेतद्वचनं विना न सम्भवति । ज्ञापिते त्वस्मिन् वचनेऽत्र भूशब्दस्यानुकार्यभूधातुभिन्नतयाऽधातुरिति प्रतिषेधाप्रवृत्त्या प्रातिपदिकत्वस्य सुलभतया ततो विभक्त्युत्पत्तौ निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'रामशब्दात् सौ विभक्तौ रामः 'इत्यादिषु 'सौ'इत्यादि शिष्ट-प्रयोगाणां साधुत्व-सिद्धिः । अन्यथा सोः प्रत्ययत्वेनाप्रातिपदिकतया सावित्यस्यासाधुत्वं स्यात् । न चास्मिन् वचने सत्यपि भूशब्दात् सुशब्दाच्च विभक्त्युत्पत्ती न सम्भवतस्तयोर्भेदेऽर्थेवाचकत्वाभावादिति तु वक्तव्यम् । यतोऽनुकरणमनुकार्य-शब्दोपस्थापकमिति तत्तदनुकार्यशब्द एव तत्तदनुकरणशब्दार्थः । 'पञ्चकं प्रातिपदिकार्थः' इति सिद्धान्तात्[4] षष्ठस्य शब्दस्य प्रातिपदिकार्थत्वं गगनकुसुमायित'- मित्यपि न शङ्क्यम् । यतः क्वचित् षष्ठोऽपि प्रातिपदिकार्थो भवति । तदुक्तं भट्टोजिदीक्षितेन -

**'शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।**
**नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते[5] ॥ 'इति ।**

अथ शब्दरूपार्थस्य शाब्दबोधः कथम् ? इतिचेत्, इत्थम् - घटपदादाकाशादीनां शाब्दबोध-वारणाय 'तत्पदजन्यतद्विषयक-शाब्दबोधं प्रति तत्पदनिष्ठवृत्तिज्ञानाधीन-तद्विषयकोपस्थितिः कारणामिति कार्यकारणभावोऽवश्यं स्वीकार्यः । तत्राश्रयता-सम्बन्धेन शब्दस्य, निरूपकतासम्बन्धेनार्थस्य च वृत्तिमत्तया शाब्दबोधविषयत्वम् । तत्तदर्थनिरूपितवृत्त्याश्रयो हि शब्दः, अर्थश्च तत्तदर्थनिरूपितवृत्तिनिरूपकः ।

---

1. अष्टा. 6/4/88 ।
2. तथाहि –
   (क) "भेदविवक्षायां तु संज्ञा स्यादेव 'भुवो वुक्'इति यथे'ति ग्रन्थेनास्य निर्देशस्य ज्ञापत्वं सूचयति भ. दी. प्रौ. मनो. अजन्तपुंलिङ्ग प्र. पृ. 219 ।
   (ख) 'भेदपक्ष-ज्ञापकः भुवो वुग्लुङ्लिटो'रित्यादि निर्देशः' इत्याह भ. ना. परमल. म. नामार्थविचारे पृ. 195 ।
3. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम् - अष्टा. 1/2/45 ।
4. "एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
   नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ "इति ह्युक्तं भट्टोजिदीक्षितेन भू. कारि. 25 वै. भूषण सा. नामार्थनिर्णय प्र. पृ. 216 ।
5. भू. कारि. 26, वै. भूषणसा. नामार्थनिर्णयप्र. पृ. 236 ।

अत्रैतदवधेयम् - 'अनुकार्याकरणयोरभेद' - इतिपक्षफलितार्था 'प्रकृतिवदनुकरणं भवती'ति परिभाषा, अनुकार्यानुकरणयोर्भेद' इति पक्षफलितार्थरूपं च 'क्षियः' इतिविभक्तिनिर्देशादनुमितं 'प्रकृतिवदनुकरणं भवती'ति परिभाषाऽनित्ये'-ति वचनमिति ।

## 'भू'इति निर्देशः

'भू सत्ताया[1]'मित्यत्र 'भू' इति निर्देशः 'अनुकार्यानुकरणयोरभेदः इतिवचनस्य ज्ञापकः[2] । यतोऽनुकार्यानुकरणयोर्भेदाभ्युपगमेऽत्र 'भू' इत्यस्यानुकार्याद्भूधातोर्भिन्नतया [3]'अधातु'रिति प्रतिषेधस्याप्राप्त्या सत्यां प्रातिपदिकसंज्ञायां सोर्दुर्वारतया 'भू'इति निर्विभक्तिको निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽत्र 'भू' इत्यस्य 'अधातु'- रिति प्रतिषेधात् प्रातिपदिकसंज्ञाया अभावे सति स्वाद्यनुत्पत्तौ निर्देशोऽयमुपपद्यते ।

न च [4]'अनुकरणञ्चानितिपर'मित्यनेनात्र भूशब्दस्य गतिसंज्ञायां निपातत्वादव्ययत्वे 'अव्ययादाप्सुपः' इतिसुब्लुको दुर्वारतया 'भूसत्ताया'मित्यत्र 'भू'इत्यविभक्तिको निर्देशः एतद्वचनं विनापि समुपपन्न इति नास्य निर्देशस्योक्तवचनज्ञापकत्वं सम्भवतीति शङ्क्यम् । यतः कृञो योग एव 'अनुकरण'मिति गतिसंज्ञा प्रवर्तते । जयादित्येन हि सूत्रस्यास्य 'खाट्कृत्य' 'खाट्कृतम्' 'यत् - खाट्करोती'त्युदाहरणानि समुपन्यस्तानि[5] ।

ज्ञापितस्यास्य वचनस्य फलं तु 'भवती'त्यत्र को धातुः ? इति प्रश्ने 'भू' इत्युत्तरे 'भू' इत्यस्य, गवित्ययमाहेति प्रयोगस्य च साधुत्व-सिद्धिः । न च 'अपदं न प्रयुञ्जीत' इति निषेधात् कथं तादृशप्रयोग इति शङ्का कार्या, यतो निषेधवाक्ये-

---

1. धा. पा. भ्वा. 1
2. (क) अनुकरणेषु तु अनुकार्येण सहाभेद-विवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम् । 'भू सत्तायाम्' इति यथे'ति ग्रन्थेन अस्य निर्देशस्य ज्ञापकत्वमसूसुचत्, भ. दी. प्रौ. मनो. अजन्तपुंलिङ्गप्र. पृ. 219 ।
   (ख) अभेदपक्षज्ञापकस्तु 'भू सत्ताया'मित्यादि निर्देशः । प्रातिपदिकत्वपदत्वाभावेऽपि 'भू' इत्यादि साधु भवत्येवे'त्याह भ. ना. परम. ल. मञ्जू. नामार्थविचारे पृ. 195 ।
3. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
4. अष्टा. 1/4/62 ।
5. का. 1/4/62 ।

ऽपदमित्यस्यापरिनिष्ठितमित्यर्थः[1]। न चात्र मानाभावः, भू सत्तायामित्यादिनिर्देशस्यैव मानत्वात् । अतएव भट्टोजिदीक्षितेन –

**'अतएव गविल्याह भूसत्तायामितीदृशम् ।**
**न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम् ॥** इत्युक्तम्[2] ।

## 'भूसुधियो'रिति निर्देशः

[3]'न भूसुधियो'रिति सूत्रे 'भूसुधियो'रिति निर्देशो 'यस्मिन् [4]विधिस्तदादावल्ग्रहणे'इति परिभाषाया ज्ञापकः[5] । यतोऽस्या अभावे 'अचिश्नु - धातुभ्रुवां य्वो- रियङुवङा'वित्यत्र 'अङ्गस्य'[6] इत्यधिकारेण 'प्रत्यय'[7] इत्यस्य लाभात्तद्विशेषणाच्चाचो 'येन विधिस्तदन्तस्ये'ति[8] तदन्तविधौ 'अजन्ते प्रत्यये परे' - इत्यर्थः स्यात्तथा सति व्यवदेशिवद्भावेन[9] 'श्रियौ' 'भ्रुवौ' 'शिश्रियः' 'लुलुवः' इत्यादावियङुवङोः सौलभ्येऽपि ससहाये 'भूसुधियो'रित्यत्र ओसि व्यपदेशिवद्भावासंभवादियङोऽप्राप्त्या निर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यामियङ्विधौ 'अजादौ प्रत्यये' इत्यर्थलाभाद् ओसि विभक्तावपीयङः प्राप्त्या निर्देशोऽयमुपपद्यते । 'सप्तम्यन्ते अल्ग्रहणे विशेषणे

---

1. तथाहि – 'परिनिष्ठितत्वं च 'अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाऽऽक्रान्तत्वम्' । देवदत्तो भवतीत्यादौ 'तिङ्ङतिङः' 'इति निघाते जातेऽतिङन्तपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्ववारणाय 'अप्रवृत्ते'ति । स्वरतीत्यादि विकल्पसूत्रस्य पाक्षिकप्रवृत्तौ सेद्धेत्यादावसाधुत्ववारणाय 'नित्यविधी'ति । अभेदपक्षे तु 'अर्थवदि'ति सूत्रस्यार्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि 'भू' इत्यादिपरिनिष्ठितम् । परिनिष्ठतसाधुशब्दौ पर्यायौ 'इत्याह भ. ना. परमल. मञ्जू नामार्थ-विचारे पृ. 195 । अनेन ग्रन्थेनाऽसौ तादृशपरिनिष्ठितत्वभिन्नत्वमेवापरिनिष्ठितत्वमित्यसूसुचत् ।
2. कारि. 57, (वै. भू. सा. नामार्थनिर्णये) ।
3. अष्टा. 6/4/85 ।
   (क) व्याडि - प. पा. प. 127, पृ. 42 ।
   (ख) पु. दे. ल. प. वृ. प. 75, पृ. 145 ।
   (ग) सी. दे. बृ. प. वृ. प. 12, पृ. 174 ।
   (घ) नी. दी. प. वृ. प. 17, पृ. 266 ।
   (ङ) ह. भा. प. भास्क. प. 12, पृ. 326 ।
   (च) भ. ना. प. शे. प. 34, पृ. 156 ।
   (ङ) शेषा. प. भास्क. प. 33, पृ. 409 ।
4. तथाहि – " अत्र ज्ञापकमप्यहुः 'न भूसुधियोः' (6/4/85) इत्यत्र इयङादेशकरण"मित्याह ह. भा. प. भास्क. प. 12, पृ. 327 ।
5. अष्टा. 6/4/77 ।
6. अष्टा. 6/4/1 ।
7. 'प्रत्यये परेऽङ्गसंज्ञायाः 'यस्मात्प्रत्यय-विधिस्तदादि-प्रत्ययेऽङ्गम्'-अष्टा. 1/4/13 । इत्यनेनोक्तेनाङ्गेन प्रत्यय इत्याक्षिप्यत इत्याशयः ।
8. अष्टा. 1/1/72 ।
9. 'व्यपदेशिवदेकस्मिन्' इति परिभाषयेत्यर्थः ।

यो विधिः स तदादौ स्या'दित्यर्थिका चेयं तदन्तविधेरपवाद[1] इति नास्या विषये तदन्तविधिः प्रवर्तते । ज्ञापिताया अस्याः फलं तु 'श्रियः' 'भ्रुवः' 'शिश्रियतुः' 'लुलुवतुः' इत्यादावियङुवङोः सिद्धिः । अस्या अभावे हि तदन्तविधौ 'श्रियौ' 'श्रुवौ' 'शिश्रियः' 'लुलुव'इत्यादावेव व्यवदेशिवद्भावेन 'अचीति [2]सूत्रं प्रवर्त्तेत, न तु 'श्रियः' 'ध्रुवः' शिश्रियतुः 'लुलुवतुः' इत्यादौ, तत्र प्रत्ययानां हलन्तत्वात् । अपि चास्याः फलं 'वान्तोयि[3] प्रत्यये' इत्यत्र यादौ प्रत्यय इत्यर्थलाभाद् 'गव्य'मित्यादीनां सिद्धिः । अस्या अभावे हि तदर्थालाभात् तत्सिद्धिर्न स्यात् । [4]भाष्ये त्वियं वार्तिकरूपेण पठिता । अस्या अन्यदपि ज्ञापकमत्र प्रबन्धेऽन्यत्र निरूपितम् ।

## 'माङः'इति निर्देशः

[5]'उदीचांमाङो व्यतोहारे' इति सूत्रे 'माङ' इति निर्देशो 'नानुबन्धकृतमनेजन्तत्व'-मिति परिभाषाया[6] ज्ञापकः[7] ।

---

1. 'येन विधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
2. अष्टा. 6/4/77 ।
3. अष्टा. 6/1/79 ।
4. 'येन विधिस्तदन्तस्य' 1/1/9/71, इति सूत्रस्थे'इत्यर्थः ।
5. अष्टा. 3/4/19 ।
6. (क) पु. दे. ल. प. वृ. प. 13, पृ. 118 ।
   (ख) सी. दे. बृ. प. प. प. 45, पृ. 212 ।
   (ग) नी. दी. प. वृ. प. 7, पृ. 294 ।
   (घ) ह. भा. प. भास्क. प. 47, पृ. 343 ।
   (ङ) भ. ना. प. शे. प. 7, पृ. 36 ।
   (च) शेषा. प. भास्क. प. 8, पृ. 384 ।
7. तथाहि –
   (क) "एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्याऽऽत्वभूतस्य ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'नानुबन्धकृतमनेजन्तत्वं भवती'त्याह पत. व्या. म. भा. 3/4/1/19 ।
   (ख) "ज्ञापकं चात्र 'उदीचां माङो व्यतीहारे (3/4/19) इति व्यतीहारवृत्तेर्मेङः कृताऽऽत्वस्य निर्देशः । अनेजन्तत्वे हि स न स्या"दित्याह पु. दे. ल. प. वृ. प. 13, पृ. 118 ।
   (ग) ज्ञापकं 'चात्र' 'उदीचां माङो व्यतीहारे' (3/4/19) इति - कृताऽऽत्वस्य निर्देशः । अनेजन्तत्वे हि स न स्यात् । न च माङ् माने इत्यस्यैव निर्देशस्तस्य व्यतीहारे वृत्त्यसंभवा'दि त्याह सी. दे. बृ. प. वृ. प. 45 पृ. 212 ।
   (घ) "अत्र च ज्ञापकम् - 'उदीचां माङो व्यतीहारे (3/4/19) इति सूत्रे कृताऽऽत्वस्य मेङ : सानुबन्धकनिर्देश "इत्याह नी. दी. प. वृ. प. 7, पृ. 294 ।
   (ङ) "अत्र ज्ञापकमपि स एवाऽऽह 'उदीचां माङो व्यतीहारे (3/4/19) इति सानुबन्धकस्य आत्वभूतस्य मेङो ग्रहण"मित्याह ह. भा. प. भास्क. प. 47, पृ. 343 ।
   (च) "उदीचां माङ 'इति निर्देशोऽस्या ज्ञापकः । 'आदेच उपदेशे' इति सूत्रेणोपदिश्यमानस्यैजन्तस्याऽऽत्वं क्रियते । ङकारसत्व एजन्तत्वाभावात् कथमात्वमिति वाच्यम् । तत्र 'धतो'रित्यस्य निबृत्तेरित्यन्यत्रविस्तर" इत्याह भ. ना. प. शे. प. 7, पृ. 36 ।
   (छ) 'उदीचां माङः' (सू. 3/4/19) इति सानुबन्धकस्याऽऽत्वभूतस्य निर्देशात् "नानुवन्धकृतमनेजन्तत्व"मित्याह श्रीना. ज्ञा. सं. 1/3. पृ. 45 तथा 3/4 पृ. 74 ।

यतोऽत्र [1]'मेङ् प्रणिदाने'इति मेङः कृताऽऽत्वस्य निर्देशः परिभाषमिमां विनानुपपन्नः । मेङो हि 'उपदेशे एजन्तत्वाभावाद्' आदेच [2]उपदेशेऽशिती'ति विहितमात्वं न प्राप्नोति । ज्ञापितायां चास्यां मेङो ङकारस्यानुबन्धतया तत्कृतानेजन्तत्वाभावादेजन्तत्वेनाऽऽत्वस्य सुलभतया निर्देशोऽयमुपपद्यते । न चात्र [3]'माङ्माने' इत्यस्यायं निर्देश इति नास्य ज्ञापकत्वमनुपपत्त्यभावादिति शङ्कनीयम्, व्यतीहार-ग्रहणात् । मेङेव हि व्यतीहारे वर्तते न माङ् ।

अथात्र ङकारसत्त्वे मेङो धातुत्वमेव नास्ति, यतः कैयटः –'उपदेश एवानुबन्धलोपे कृते ततोऽवशिष्टस्य धातुसंज्ञा भवती'ति [4]मनुते, इत्थं ज्ञापितायामप्यस्यां परिभाषायां 'मेङ' इति निर्देशोऽनुपपन्न एवेति तु न शङ्कनीयम् । यतः 'आदेच' इति सूत्रे धातोरित्येतन्नानुवर्तत इति [5]'अणिञो'रिति सूत्रे भाष्ये ध्वनितम् । तत्र हि 'अवश्यमात्वार्थं धातुग्रहणं कर्तव्यम्, इह माभूत्–'गोभ्यां गोभिः' । 'नौभ्यां नौभिः' । उपदेशे यदेजन्तं तस्येदमात्वमिष्यते । उपदेशो रूढिशब्दानां, तेन गोर्न भविष्यतीत्युक्तम्[6]।

न च [7]'इरे'प्रभृतीनामुपदेशे एजन्तत्वादात्वव्यावृत्तये 'आदेच' इति सूत्रे धातोरित्यस्यानुवृत्तिरावश्यकीत्यपि शङ्कनीयम् । यतस्तत्र सूत्रे 'अशीती'ति प्रसज्यप्रतिषेधः स्वीक्रियते, तथाच–'शिति ने'ति लभ्यते । तेन शित्परत्वयोग्यस्यैवैजन्तस्य ग्रहणं भवति, 'इरे'प्रभृतयो हि न शित्परत्वयोग्य एजन्ताः ।

अत्राशीतीति पर्युदासस्तु न युक्तः । यतः पर्युदासे 'जग्ले' 'मम्ले' इत्यादौ [8]'द्विर्वचनेऽची'ति निषेधादात्वं न स्यात् । अभ्यासे इकारश्च श्रूयेत । अपि च 'सुग्ल'इत्यत्र [9]'आतश्चोपसर्गे'इति कः, 'सुग्ले'त्यत्र-'आतश्चोपसर्गे'[10] इतिस्त्रियामङ्, 'सुग्लान'इत्यत्र [11]'अतो युजि'ति युज् न स्यात् । प्रत्ययनिमित्तं ह्यात्वम्, आदन्ताच्च प्रत्यय इत्यन्योन्याश्रयात् ।

---

1. धा. पा. भ्वा. 961 ।
2. अष्टा. 6/1/45 ।
3. धा. पा. दि वा. 1142
4. "अनुबन्धो न धात्वेकदेशः । यस्मादुदपदेश एवेत्संज्ञा । प्रयोगे तु 'लू' शब्द एव धातुसंज्ञः । केवलमसौ ञित्कार्यं लभते । लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ते'ति प्रदी. 1/1/4/4.
5. 'अणिञोरनार्षयो गुरूपोत्तमयोः ष्यङ् गोत्रे'–अष्टा. 4/1/78 ।
6. व्या. म. भा. 4/1/2/78 ।
7. 'लिटस्तझयोरेशिरेच्'–अष्टा. 3/4/81
8. अष्टा. 1/1/59 ।
9. अष्टा. 3/1/136 ।
10. अष्टा. 3/3/106 ।
11. अष्टा. 3/3/128 ।

ज्ञापिताया अस्याः फलं तु दाप इव दैपोऽपि–[1]'अदाप्'इति घुत्वप्रतिषेधः । तेन च 'अवदातं मुख' मित्यत्र 'अच [2]उपसर्गात्तः' इति तत्वाभावः सिद्ध्यति । अस्या अभावे हि दैपः पकारसत्त्वे अनेजन्तत्वादात्वाप्राप्त्या पलोपोत्तरमात्वं स्यादेजन्तत्वात्, तथा सति पकाराभावेन दाप्रूपताया अभावाद् दैपोऽदाबिति प्रतिषेधाप्राप्तेर्घुत्वस्य दुर्वारतया 'दा' इत्यस्य ताऽऽदेशे 'अवत्तं मुख' मित्यनिष्टं रूपमापद्येत । इत्थमत्र 'दैप्' इत्यस्योपदेशकाल एवाऽऽत्वप्रवृत्तिसम्पादनद्वारा घुत्वप्रतिषेधं सम्पादयन्ती 'नानुबन्धकृतमनेजन्तत्व'मिति परिभाषाऽऽत्मनः सफलतां लभते ।

अत्र 'पकारेत्संज्ञकत्वे सति दात्वमेव दाप्त्वं, तच्च दैपः पकारेत्संज्ञालोपयोरनन्तरमप्यात्वे सुलभम् । स्थानिवत्त्वेन हि पकारेत्संज्ञकत्वं स्वतोदात्वं च 'अवदातं मुख'- मित्यत्र 'दा' शब्दे विद्यते । अतोऽत्र 'अदाबि'ति घुत्वप्रतिषेधात् तत्वाभावः परिभाषाया अस्या अभावे संसिद्ध इति नास्याः किमपि फल'मिति शङ्कापि न युक्ता । यतः दाप्त्वमानुपूर्वीरूपमेव । 'स्वं [3]रूप'मिति सूत्रं हि तस्यैव दाप्पदशक्यतावच्छेदकत्वं बोधयति । 'पकारेत्संज्ञत्वे सति दात्वं'तु न शक्यतावच्छेदकम् । नापि च तल्लक्ष्यतावच्छेदकम् । यतो लक्षणाया किमपि मानं नास्ति ।

अपि च एवं रीत्या टकारेत्संज्ञकत्वस्य, ङकारेत्संज्ञकत्वस्य च क्रमशः 'इट्' 'ङे' पदशवयतावच्छेदकत्वमपि वक्तुं शक्यते, तथा सति 'अग्रहीत्' 'रामाये'त्यादौ 'अनल्विधा'विति[4] निषेधाऽऽपत्तिः स्यात् । अण्त्वानणत्वयोः साङ्कर्यापत्तिश्च स्यात् । नापि पूर्वत्वपरत्वयोः प्रवेशेन साङ्कर्यपरिहारो युक्तः गौरवात् । तस्मादानुपूर्वीरूपं दाप्त्वं दैपः पकारेत्संज्ञालोपयोरनन्तरमात्वे न सम्भवतीति पकारसत्त्वे एव दैप आत्वार्थमियं परिभाषा ।

अथात्र बोधके बोध्ये वा आत्वप्रवृत्तिः ? न तावद् बोधके 'दैप्[5]शोधने' 'धेट्[6] पाने' इत्यादावप्यात्वश्रवणाऽऽपत्तिः स्यात् । नापि बोध्ये, अनुबन्धरहितस्यैव बोध्यत्वेन तावतापि दाप्त्वाभावेन [7]'अदा'बिति निषेधप्रवृत्तिर्न स्या'दित्यपि नाऽऽशङ्कनीयम् । यतो बोधके एव आत्व-प्रवृत्तिर्भवति । 'बोधकत्वेनं तात्पर्यविषयीभूतमैकारादि-घटितमेवौपदेशिक'मिति बोधयितुमेव बोधकमात्वघटितं नोच्चरितम् । बोधकगतदाप्त्वं बोध्यबोधकयोरभेदेन बोध्येऽपि नूनं स्वीकार्यमिति 'दा' इति बोध्येऽप्यत्र 'अदा'बिति प्रतिषेधश्चारु समुपपद्यते ।

---

1.- 'दाधाघ्वदाप्'–अष्टा. 1/1/20 ।
2. अष्टा. 7/4/47 ।
3. 'स्वं रूपं शब्दस्याशब्दसंज्ञा'–अष्टा. 1/1/68 ।
4. 'स्थानिवदादेशोऽनल्विधौ' –
–अष्टा. 1/1/56 ।
5. धा. पा. भ्वा. 924 ।
6. धा. पा. भ्वा. 902 ।
7. 'दाधाघ्वदाप्' –
–अष्टा. 1/1/20 ।

अथात्र [1]'अदा'बिति' घुत्वप्रतिषेध एव यदि प्रयोजनमस्यास्तदा 'दाधाघ्वपित्' इति न्यासः क्रियताम्, तथा सति दैपोऽपि पित्त्वाद्घुसंज्ञाप्रतिषेधः सिद्ध्यति, लाघवं च भवति, नानुबन्धकृतपरिभाषापि नावश्यकी भवतीत्यपि शङ्का, आपातमनोहरैव । यतो 'दाधाघ्वपि'दिति न्यासे कृते लक्षणप्रतिपदोक्तपरिभाषात्र[2] न प्रवर्तत'इत्यत्र प्रमाणं न सिद्ध्येत् । 'अदा'-बिति तु कृते यथा प्रतिषेधे लाक्षणिकस्याऽपि दैपो ग्रहणं तथा विधावपि दाग्रहणेन लाक्षणिकस्यापि ग्रहणमुपपद्यते ।

हरदत्तमिश्रस्तु 'उदीचामङ' इति कृतात्वनिर्देशाज् ज्ञापकादनुमीयते 'कार्येष्व-नुबन्धाः श्रूयमाणा अपि न प्रतिबन्धकाः 'इत्याह[3] । नैतद् युक्तम् । यतस्यथा सति 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' तदनुबन्धग्रहणे[4] नातदनुबन्धकस्य'[5] इत्यादीनां सङ्गतिर्न स्यात् ।

वस्तुतस्तु पाणिनीयव्याकरणे लक्ष्यवशादनुबन्धानामेकान्तत्वम[6]नेकान्तत्वं[7] च स्वीक्रियेते । तत्रानेकान्तत्वैकान्तत्वपक्षौ 'माङः' इति 'धेट्' इति च क्रमशो निर्देशौ ज्ञापयतः । तदुक्तं पुरुषोत्तमदेवेन 'एकान्ताः अनेकान्ताश्चानुबन्धाः' इति द्वावपि

---

1. 'दाधाघ्वदाप्'–
   –अष्टा. 1/1/20 ।
2. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्'–
   -व्याडिः प. सू. प. 3, पृ. 3 ।
   (ख) पु. दे. ल. प. वृ. प. 3, पृ. 113 ।
   (ग) सी. दे. बृ. प. वृ. प. 30, पृ. 208 ।
   (घ) नी. दी. प. वृ. प. 102, पृ. 311 ।
   (ङ) ह. भा. प. भास्क. प. 41, पृ. 341 ।
   (च) भ. ना. प. शे. प. 114; पृ. 348 ।
   (छ) शेषा. प. भा. स्क. प. 97, पृ. 455 ।
3. पदम 6/1/186 ।
4. (क) व्याडिः प. सू. प. 46, पृ. 22 ।
   (ख) प. दे. ल. प. वृ. प. 37, पृ. 128 ।
   (ग) सी. दे. बृ. प. वृ. प. 51, पृ. 218 ।
   (घ) ह. भा. प. भास्क. प. 53, पृ. 345 ।
5. (क) व्याडिः प. पा. प. 54, पृ. 40 ।
   (ख) प. दे. ल. प. वृ. प. 38, पृ. 128 ।
   (ग) सी. दे. बृ. प. वृ. प. 52, पृ. 220 ।
   (घ) नी. दी. प. वृ. प. 70, पृ. 307 ।
   (ङ) ह. भा. प. बास्क. प. 54, पृ. 346 ।
   (च) भ. ना. प. शे. प. 83, पृ. 307 ।
   (छ) शेषा. प. भास्क. प. 70, पृ-. 438 ।
6. अवयवत्वमित्यर्थः ।
7. अनवयवत्वमित्यर्थः ।

पक्षौ लक्ष्यवशादाश्रीयेते, 'पाघ्राध्माधेट्' इति (3/1/137) 'उदीचां माङो व्यतीहारे (3/4/19) इति च निर्देशाभ्यामाचार्येण ज्ञापितम्[1] इत्युक्तम् । अनुबन्धानामनेकान्तत्वे एकान्तत्वे च क्रमशो निर्देशावेतौ समुपपद्येते, नहि 'माङ[2]' इति निर्देश एकान्तत्वे 'पाघ्राध्माधे[3]'डिति निर्देशश्चानेकान्तत्वे समुपपादयितुं शक्याविति तदाशयः । अत्र 'पक्षा'वित्युक्त्या परिभाषात्वमनयोर्न पुरुषोत्तमदेवसम्मतमित्यपि नाऽऽशङ्कनीयम्, यतः 'अनेकान्ता अनुबन्धाः[4]' 'एकान्ता अनुबन्धाः[5]' इतीमे परिभाषे स्वकृत - परिभाषापाठेऽनेनापि परिगृहीते स्तः । 'अनुबन्धा एकान्ता इत्येव न्याय्य'[6]मिति चरमसिद्धान्तमनुसृत्य 'माङ' इति निर्देशस्य 'नानुबन्धकृतमनेजन्तत्व'मित्येतत्परिभाषा-ज्ञापकत्वं युक्तमेवेति निश्चप्रचम् ।

## 'मातृष्वि'ति निर्देशः

[7]'मातच् मातृक मातृषु ष्यङः सम्प्रसारणं - विभाषया बहुव्रीहौ'इति - वार्तिके मातृशब्दस्योत्तरपदस्य कपोऽनुच्चार्य निर्देशः '[8]नद्यृतश्चे'ति कप्विधिः पाक्षिकः' इति वचनस्य ज्ञापकः[9] । यतोऽत्र 'नद्यृतश्चे'ति कपो दुर्वारतया 'मातृष्वि'ति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने कपः पाक्षिकतया कबभावेन निर्देशोऽयं

---

1. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 72 ।
2. अष्टा. 3/4/19 ।
3. अष्टा. 3/1/137 ।
4. (क) पु. दे. प. पा. प. 4, पृ. 12 अ ।
   (ख). भ. ना. प. शे. प. 4, पृ. 20 ।
   (ग) शेषा. प. भास्क. प. 4, पृ. 383 ।
5. (क) पु. दे. प. पा. प. 5, पृ. 12 अ ।
   (ख) भ. ना. प. शे. प. 5, पृ. 28 ।
   (ग) शेषा. प. भास्क. प. 5, पृ. 383 ।
6. 'अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः ? एकान्तस्तत्रोपलब्धेः । तत्रस्थोह्यसावुपलभ्यते । तद्यथा वृक्षस्य शाखा वृक्षैकान्तोपलभ्यते' इत्याह पत. व्या. म. भा. । 3/1/9 ।
7. 'मातच् मातृक मातृषु ष्यङः प्रसवो विभाषया' वा. – व्या. म. भा. 6/1/2/14 ।
   वामनः 'मातच् मातृक मातृषु' इत्येतद् वार्तिकस्वरूपमाह - का. 6/1/14 भट्टोजिदीक्षितस्तु 'मातच् मातृक मातृषु वा'इति वार्तिकस्वरूपमाह – वै. सि. कौ. समासाश्रय प्र. पृ. 554 ।
8. अष्टा. 5/4/153 ।
9. मातच् मातृक मातृषु ष्यङः सम्प्रसारणं विभाषया बहुव्रीहा'विति वार्तिके (6/1/14) मातृशब्दस्योत्तरपदस्य पक्षे कपोऽनुच्चारणं नद्यृतश्चेति (5/4/153) कप्विधेः पाक्षिकत्वं सूचयति । कारीषगन्धीमाता, कारीषगन्धीमातृक इति । तेन 'अरुन्धत्येकभर्तृणी'ति व्यासप्रयोगः सिद्ध्यती'त्याह पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे पृ. 80 ।

चारु समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अरुन्धत्येकभर्तृणी'ति[1] व्यासप्रयोगे 'एकभर्तृणी'त्यस्य साधुत्व-सिद्धिः । एतद्वचनाभावे हि कपो दुर्वारतया नास्य साधुत्वं सिद्ध्येत् ।

## या-सेति निर्देशौ

'न यासयो'रिति[2] सूत्रे 'या' 'सा' इति टाबन्तनिर्देशौ 'सन्निपातलक्षणोविधिर-निमित्तं तद्विघातस्ये'ति परिभाषाऽनित्येति वचनस्य [3]ज्ञापकौ । यतोऽस्य वचनस्याभावे 'या' 'सा' इतीमौ निर्देशावत्राऽनुपपन्नौ । अत्र हि यत्तच्छब्दाभ्यां सौ 'त्यदादीनामः'[4] इति दकारस्यात्वे [5]पररूपे च अदन्तत्वात् '[6]अजाद्यतष्टाप्, इति टापा भाव्यम्, न च स सम्भवति । विभक्ति - सन्निपातनिमित्तकस्य अत्वस्य तद्विघातकटापं प्रति संनिपातपरिभाषया निमित्तत्वासम्भवात् । टापोऽभावे च सति सूत्रकृत्कृतौ 'या' 'सा' इति टाबन्तनिर्देशौ समुपपद्येते । ज्ञापितैतद्वचनफलन्तु 'रामाय' 'दाक्षि'रित्यादौ 'सुपिचेति'[7] दीर्घस्य, '[8]यस्येति चेति' लोपस्य च सिद्धिः ।

## 'युवा खलती'त्यादिनिर्देशः

[9]'युवा खलति पलित वलिन जरतीभि'रिति निर्देशो 'यथाजातीयकमुत्तरपदं तथा जातीयकेन पूर्वपदेन समासो भवती'ति वचनस्य [10]ज्ञापकः । यतोऽत्र सूत्रे

---

1. पुरुषोत्तमदेवेन व्यासप्रयोगोऽयं समुद्धृतः - ज्ञा. समु. एकविंशे एकाच्पादे पृ. 80 ।
2. अष्टा. 7/3/45 ।
3. तथाहि–
   (क) 'न यासयो'रितिं लिङ्गादाब्भविष्यती'त्याह कै. प्रदी. 1/1/6/39 ।
   (ख) 'न यासयोः (7/3/45) इति ज्ञापकसिद्धा संनिपातपरिभाषाऽनित्यत्वमूलेय'मित्याह नी. दी. प. वृ. प. 139, पृ. 316 ।
   (ग) 'न यासयोः' (सू. 7/3/45) इत्यादिनिर्देशैर्ज्ञापकैः संनिपातपरिभाषा अनित्ये'त्याह श्रीना. ज्ञा. सं. 1/1. पृ. 25 ।
   (घ) 'अनित्या चेयम् ।' 'न यासयोः' (7/3/45) इति निर्देशात् । अत्र हि विभक्त्यानन्तर्यं निमित्तीकृत्य त्यबाद्यत्वस्य टाप्प्रवर्तकत्वमाश्रित्य निर्देशः' इत्याह शेषा. प. भास्क. प. 74, पृ. 442 ।
4. अष्टा. 7/2/102 ।
5. 'अतोगुणे'—अष्टा. 6/1/67 ।
6. अष्टा. 4/1/4 ।
7. अष्टा. 7/3/102 ।
8. अष्टा. 6/4/148 ।
9. अष्टा. 2/1/66 ।
10. तथाहि–
   (क) "अयुक्तोऽयंनिर्देशः । समानाधिकरणेनेत्यनुवर्तते । कः प्रसङ्गो यद् व्यधिकरणानां समासः स्यात् ? एवं तर्हि ज्ञापयत्याचार्यो-'यथाजातीयकमुत्तरपदं तथाजातीकेन

[1]'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'ति सूत्रात् 'समानाधिकरणेने'त्यस्यानुवृत्ति र्भवतीति पुंलिङ्गयुवञ्शब्दस्य स्त्रीलिङ्गबलत्यादिभिः सामानाधिकरण्यासम्भवेन निर्देशोऽयमनुपपन्नः। ज्ञापिते चास्मिन् वचने उत्तरपदस्य जरतीशब्दस्य स्त्रीलिङ्गत्वात् तेन समासे विवक्षिते स्त्रीलिङ्गयुवतिशब्द एव तेन समस्यते'इति सूत्रार्थलाभान्निर्देशोऽयमुपपद्यते। ज्ञापितस्यास्य वचनस्य फलं तु युवती चासौ खलतिश्चेति विग्रहे 'युवखलति'रित्यादावनेन सूत्रेण समाससिद्धिः। न च 'प्रातिपदिक-ग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'[2]मिति परिभाषयैवात्र समासः सुलभ इति नेदं वचनं सप्रयोजन'मिति शङ्क्यम्। यतः प्रातिपदिके'ति परिभाषाया अकरणजन्यलाघवमेवास्य वचनस्य प्रयोजनं भगवता स्वीकृतम्[3]। पुरुषोत्तमदेवः 'प्रतिपदिक.- ग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति परिभाषाज्ञापकत्वमेतन्निर्देशस्य भाष्य - कृतोक्तमित्याह[4]। तन्न युक्तम्। भाष्ये तदनुपलम्भात्। अतः सीरदेवस्य 'युवा खलति.' इति समास-विधानं[5] प्रातिपदिक-ग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहण'मिति परिभाषाज्ञापकमित्युक्तिरप्यसंगता।

---

पूर्वपदेन समासो भवतीति। किमेतस्य ज्ञापने प्रयोजनम्? प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'त्येषा परिभाषा न कर्तव्या भवती'त्याह पत. व्या. म. भा. 2/1/67।

(ख) 'युवा खलति' (सू. 2/1/66) इति समानाधिकरणेनेति वर्तमाने व्यधिकरणनिर्देशात् ज्ञापकात् यथाजातीयकमुत्तरपदं तथाजीतयकेन पूर्वपदेन समासो भवतीत्याह एन. एस. रामा. ज्ञा. सं. परि. 1 पृ. 152।

1. अष्टा. 2/1/49।
2. (क) व्याडिः. प. सू. प. 25, पृ. 13।
 (ख) पु. दे. ल. प. वृ. प. 26, पृ. 123।
 (ग) सी. दे. बृ. प. वृ. प. 28, पृ. 193।
 (घ) नी. दी. प. वृ. प. 38, पृ. 300।
 (ङ) ह. भा. प. भास्क. प. 28, पृ. 334।
 (च) भ. ना. प. शे. प. 72, पृ. 288।
 (छ) शेषा. प. भास्क. प. 61, पृ. 432।
3. व्या. म. भा. 2/1/3/67।
4. "भाष्यकारेण तु सौकर्याद् 'युवा खलति., (2/1/67) इत्यत्र युवशब्दस्य स्वरूपस्थजरतीशब्देन सामानाधिकरण्यान्यथानुपपत्त्या ज्ञापिते'ति पु. दे. ल. प. वृ. प. 26. पृ. 123।
5. तथाहि – 'ज्ञापकं चास्या भाष्यकारेण 'युवा खलति पलित वलिनजरतीभिः, (2/1/67) इत्यत्र समानाधिकरणाधिकारे युवजरत्योः समासविधानमुक्तम्। अन्यथा यद्येषा न स्यात्तदानयोः समानाधिकरणायानुपपत्तेः सामासोऽघटमानः स्या'दित्याह सी. दे. बृ. प. वृ. प. 28, पृ. 194।

## 'वयस्या'स्विति निर्देशः

[1]'वयस्यासु मूर्ध्नो मतु'बिति सूत्रे 'वयस्या'स्विति निर्देशः 'छान्दसा अपि भाषायां प्रयुज्यन्ते' इति वचनस्य ज्ञापकः[2] । यतो वयःशब्दस्यैव लोके प्रयोगाद् 'वयः'स्विति निर्देशस्यौचित्येन 'वयस्या'स्विति निर्देशोऽनुपपन्नः । 'वयस्या'शब्दो हि 'वयःशब्दो यत्रासौ वयस्वान् स उपधानो मन्त्रः आसामिष्टकानां वयस्याः इष्टका इति' 'मत्वन्तप्रकृतिकात् प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकाद् इष्टिकारूप-सम्बिन्धिनि यत् स्यान् मतोश्च लुगि'त्यर्थकाद्' 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च[3] मतो'रिति सूत्राच्छन्दसि निष्पद्यते । ज्ञापिते चास्मिन् वचने छान्दसोऽपि वयस्याशब्दस्य लोके प्रयोगस्य सुलभतया वयस्यास्वित्ययं निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु [4]गिरिशप्रभृतेर्भाषायां प्रयोगस्य साधुत्वम् । एतद्वचनाभावे हि 'गिरौडश्छन्दसि'[5] इति वार्तिकेन 'गिरौ शेते' इति विग्रहे छन्दसि 'गिरिश'शब्दस्य व्युत्पादनाल्लोके तस्य प्रयोगस्य साधुत्वं न सिद्ध्येत् । यतो लोके गिरावुपपदाच्छीङः '[6]अधिकरणे शेतेः' इति अचि प्रत्यये 'गिरिशयः' इत्येव प्रयोगेण साधुना भाव्यम् ।

जिनेन्द्रबुद्धिस्तु 'वयस्यास्वि'ति निर्देशो 'हकारो गृह्यमाणो नाऽऽकारं ग्राहयती'ति वचनस्य ज्ञापकः' इति [7]मनुते । यतोऽस्य वचनस्याभावेऽत्राऽऽकारहकारयोः [8]कण्ठस्थान-[9]विवृतप्रयत्न-साम्यात् 'तुल्यास्य प्रयत्नं[10] सवर्ण'मिति सवर्णसंज्ञायां कृतायाम् 'अणुदित्सवर्णस्य चाप्रत्ययः'[11] इत्यनेन हकारस्याप्यण्त्वात् सवर्णस्याऽऽ-कारस्य ग्रहणं दुर्निवारमित्याकारादुत्तरस्य प्रत्ययावयवसकारस्येणः परत्वेन 'आदेश [12]प्रत्यययोः' इति मूर्धन्याऽऽदेशस्यौचित्येन 'वयस्यास्विति, निर्देशोऽनुपपन्नः ।

---

1. अष्टा. 4/4/127 ।
2. 'वयस्यासु मूर्ध्नो मतुबित्यत्र (4/4/127) व्यस्यास्विति निर्देशेन छान्दसा अपि भाषायां प्रयुज्यन्ते इति सूचितम् ..... एतेन गिरिशप्रभृतेर्भाषायां प्रयोगः साधुर्भवति' इत्याह पु. दे. ज्ञा. समु. षोडशे ठक्पादे पृ. 79 ।
3. अष्टा. 4/4/125 ।
4. 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' कालिदासः कु. सं.
5. वा. वै सि. कौ. उत्तरकृदन्त प्र. पृ. 408 ।
6. अष्टा. 3/2/15 ।
7. अनेन हि 'यदयं वयस्यासु मूर्ध्नो मतुप्' इत्यत्राकारादुत्तरस्य सकारस्य मूर्द्धन्यमकृत्वा निर्देशं करोति, ततोऽवसीयते 'हकारो गृह्यमाणो नाकारं ग्राहयति, अन्यथरा 'वयस्यासु' इति निर्देशं न कुर्या'दित्युक्तम् न्या. 8/3/57 ।
8. 'अकुहविसर्जनीयानां कण्ठः' इत्याह भट्टोजिदीक्षितः वै. सि. कौ. संज्ञा प्र. पृ. 10 ।
9. 'विवृतमूष्मणां स्वराणां च' इत्याह भट्टोजिदीक्षितः वै. सि. कौ. संज्ञा प्र. पृ. 11 ।
10. अष्टा. 1/1/9 ।
11. अष्टा. 1/1/69 ।
12. अष्टा. 8/3/59 ।

ज्ञापिते चास्मिन् वचंने हकारस्याऽऽकारेण ग्रहणाभावादत्रेणः परस्य सकारस्याभावा- न्मूर्धन्याऽऽदेशस्याप्राप्त्या निर्देशोऽयमुपपद्यते ।

न चाऽऽकारहकारयोः सावर्ण्यस्य 'नाज्झ[1]ला'विति प्रषेधात् स्वतोऽयं निर्देशः समुपपन्न इति नास्य निर्देशस्योक्त-वचन-ज्ञापकत्वं युक्त'मिति शङ्कनीयम् । यतो 'नाज्झला'विति सूत्रम् अज्झलोरेव सावर्ण्यं निषेधति । नात्राऽऽकारोऽच् । आक्षरसमाम्नायिकानामेव हि वर्णानामत्र सूत्रेऽज्झल्वाच्यत्वम् । आकारस्तु [2]नाक्षरसमाम्नायिकः ।

नापि चात्र 'अकारस्याच्त्वात् तेनाकारस्यापि 'अणुदित्' सूत्रेण ग्रहणात् 'नाज्झला'विति सावर्ण्यप्रतिषेधेन आकार-हकारयोः सावर्ण्यं गगनकुसुमायितमेवेति शङ्क्यम् । यतः 'अणुदित्सूत्र'लब्धाऽऽत्मकमेव सत् '[3]अस्यच्वौ'इत्यादौ प्रवृत्तिमर्हति । 'नाज्झला[4]'विति प्रवृत्तिदशायां च [5]ग्रहणकशास्त्रं न लब्धाऽऽत्मकम् । तद्धि सवर्णपदघटिम् । अतः सवर्णपदार्थावगमोत्तरमेव लब्धाऽऽत्मकं भवेत् । सवर्ण-संज्ञासम्पादकं च '[6]तुल्यास्ये'ति सूत्रं सामान्यतः स्वार्थं बोधयदपि 'नाझला'-वित्यपवाद-विषयं परिहृत्य तदन्यत्रैव पर्यवसन्नं स्वकार्यक्षमम् । तदुक्तम् - 'प्रकल्प्य[7]चापवादविषयं तत उत्सर्गोऽभिनिविशते'इति ।

'नाज्झला'वित्यत्र आक्षरसमाम्नायिकानामेव ग्रहणं भवतीत्येतत्तथ्यं भाष्यसम्म-तम् । यतस्तत्र–

'वर्णानामुपदेशस्तावत्, उपदेशोत्तरकाला इत्संज्ञा, इत्संज्ञोत्तरकाल आदि -रन्त्येन सहेतेति प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसंज्ञा, सवर्णसंज्ञोतत्तरकाल'-मणु दित्सवर्णस्य चाप्रत्ययः' इति सवर्णग्रहणम्, एतेन सर्वेण समुदितेन वाक्यैनान्यत्र सवर्णग्रहणं भवती[8]'त्युक्तम् । अत्र भाष्ये 'अन्यत्रे'त्यस्य 'अस्यच्वा' वित्यादावित्यर्थः । ज्ञापितस्य चास्य हकारो गृह्यमाणो नाऽऽकारं ग्राहयतीति वचनस्य फलं तु

---

1. अष्टा. 1/1/10 ।
2. "चतुर्दश - प्रत्याहार-सूत्रेषु पठिता एव वर्णा आक्षरसमाम्नायिका इत्युच्यन्ते । यतः 'अक्षराणां समाम्नायः उपदेशसूत्राणि, तत्र भवा आक्षरसमाम्नायिकाः । 'बह्वचोऽन्तो-दात्ताट्ठञ्'इतिठञ्" इत्याह ज्ञानेन्द्रभिक्षुः तत्त्वबो. संज्ञा प्र. पृ. 15-16 ।
3. अष्टा. 7/4/32 ।
4. अष्टा. 1/1/10 ।
5. 'अणुदित्सवर्णस्यचाप्रत्ययः –
   –अष्टा. 1/1/69 ।
6. अष्टा. 1/1/9 ।
7. परिभाषा –
   (क) ना. भ. प. शे. प. 64 पृ. 278 ।
   (ख) प्रकल्प्य वापवाद-विषयं तत उत्सर्गोऽभिर्निविशते 'शेषा. प. भाम्क प. 54 पृ. 428।
8. व्या. म. भा. 1/1/4/10 ।

'विश्वपाभि'रित्यादौ 'होढ[1]' इति ढत्वाभावः, 'रमासु' इत्यादौ 'आदेश-प्रत्यययो' रिति[2] सुप्प्रत्ययावयव-सकारस्य षत्वाभावः, वागाशीरित्यादौ 'झयोहोऽन्य-[3]तर-स्या'मिति आकारस्य पूर्वसवर्णदीर्घत्वाभावः, 'दासीष्टे'त्यादौ [4]'दादेर्धातोर्घः 'इति आकारस्य घत्वाभावश्च । वस्तुतस्त्वमीषु प्रयोगेषु 'पूर्वत्रासिद्ध[5]'मित्यनेन ढत्वादी-नामसिद्धतया '[6]संयोगान्तस्य लोपः' इति संयोगान्तलोपाऽऽपत्तिः स्यादित्येतेषु प्रयोगेषु संयोगान्त-लोपाभाव एवास्य वचनस्य फलम् ।

भट्टोजिदीक्षित - ज्ञानेन्द्रभिक्षु-वासुदेवदीक्षितास्तु '[7]कालसमय-वेलासु तुमुन्' इति सूत्रे 'कालसमयवेलासु' इति षत्वाभाव-निर्देशेन [8]'नाज्झला' - विति सूत्रे दीर्घप्लुत-योराकारयोः प्रश्लेषं स्वीकृत्य 'विश्वपाभि'रित्यादौ आकारहकारयोः सावर्ण्य-प्रतिषेधादेव ढत्वाद्यभावं [9]मन्वते । अत एतेषां मते 'हकारो गृह्यमाणो नाऽऽकारं ग्राहयती'ति वचने 'नाज्झला'विति सूत्रे कृताऽऽकारद्वयप्रश्लेष एवबीजम् । इत्थममीषां मते 'वयस्यास्वि'ति षत्वाभाव-निर्देशः सूत्रे आकारप्रश्लेषस्य ज्ञापक इति वक्तुं शक्यते ।

---

1. अष्टा. 8/2/31 ।
2. अष्टा. 8/3/59 ।
3. अष्टा. 8/4/62 ।
4. अष्टा. 8/2/32 ।
5. अष्टा. 8/2/1 ।
6. अष्टा. 8/2/23 ।
7. अष्टा. 3/4/167 ।
8. अष्टा. 1/1/10 ।
9. तैर्हि क्रमशः –
   (क) नाज्झलावितिनिषेधो यद्यप्याक्षस्समाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः, तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र 'होढ' इति ढत्वं न भवतीत्युक्तम् - वै. सि. कौ. संज्ञा प्र. पृ. 16 ।
   (ख) 'होढ' (पा. सू. 8/2/31) इत्युपलक्षणं, 'रमास्वि'-त्यत्यत्र षत्वं, 'वागाशी'रित्यत्र 'झयोहः' (पा. सू. 8/4/62) इत्याकारस्य घकारः, 'दासीष्टे'त्यादौ 'दादेः' (पा. सू. 8/4/62) इति घत्वं च नेति बोध्यं मित्युक्तम् - प्रौ. मनो. संज्ञा. प्र. पृ. 45 ।
   (ग) 'यद्वाऽऽकारसहितोऽच् आच्, स च हल् च आज्झलाविति सूत्रे अकारप्रश्लेषो व्याख्येयः । तेनाऽऽकारस्याचां च हल्भिः सह सार्वण्यं निषिद्ध्यते । आकार - प्रश्लेषे लिङ्गन्तु 'कालसमयवेलासु तुमु'न्नित्यादि निर्देशः । अत्र पक्षे आश्च आश्चेति द्वन्द्वेन सवर्णदीर्घेण च नाज्झलाविति सूत्रे दीर्घात् परः प्लुतोऽपि निर्दिष्ट इति व्याख्येयम् । तेन 'यियासो'-इत्यादौ 'गुरोरनृत' इति प्लुतादावाकारात्परस्य सन : सस्य षत्वं नेत्यवधेय'मिति चोक्तम् – श. कौ. 1/1/4/10 ।
   (ङ) ''कालसमयवेलासु'इति सूत्रे वेलास्विति लकारादाकारस्य निर्देशो नाज्झलावित्यत्र आकारप्रश्लेषे प्रमाणम् । अन्यथा तत्र ढत्वस्य संयोगान्तलोपस्य वाऽऽपत्तावाकारो न श्रूयेतेत्यल'मित्युक्तम् - बा. मनो. संज्ञा. प्र. पृ. 16 ।

हरदत्तमिश्रस्तु 'आकार-हकारयोः प्रयत्नभेदादेव सावर्ण्यं न प्राप्नोति, यतः शिक्षावाक्याद् - 'आकारो विवृततरः' 'हकारश्च' विवृत इति विज्ञायते । इत्थम् 'इष्टकासु' 'वयस्यासु' - इत्यादिनिर्देशाः स्वत एव समुपपन्नाः सन्तीति नैतेषां हकारो गृह्यमाणो नाकारमित्यादिवचन-ज्ञापकत्वमित्यसूसुचत्[1] ।

अत्रेदमवधेयं यद् हरदत्तमिश्रोक्तं [2]शिक्षावाक्यं न पाणिनीयं किन्तु मतान्तरीयम् । यतः 'आकारो विवृत'इत्येव भाष्यवार्तिकस्वरससिद्धं, न तु विवृततर इति । अतएव पाणिनीय-शिक्षायाम् –

**'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ।**
**तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ।।** [3] इत्युक्तम् इति ।

वस्तुतस्तु भट्टोजिदीक्षित - ज्ञानेन्द्रभिक्षु - वासुदेवदीक्षितैरुक्तो 'नाज्झलाविति सूत्रे दीर्घप्लुताऽऽकारयोः प्रश्लेषे ज्ञापकः, जिनेन्द्रबुद्ध्युक्तो 'हकारो गृह्यमाणो नाऽऽकारं ग्राहयती'ति वचनज्ञापकश्च सूत्रसम्मत एव, न तु भाष्य-सम्मतः । यतो भाष्ये हलचोः प्रयत्नभेदं [4]स्वीकृत्य 'नाज्झला' विति सूत्रं प्रत्याचख्यौ ।

पुरुषोत्तमदेवोक्तं 'वयस्यास्वि'ति निर्देशस्य' छान्दसा अपि भाषायां प्रयुज्यन्ते' इति वचनज्ञापकत्वं यद्यप्युपपद्यते तथापि ज्ञापितस्यास्य वचनस्य फलं - 'लोके प्रयुक्तस्य गिरिशशब्दस्य साधुत्व-सिद्धिरिति न युक्तम् । यतो गिरिरस्यास्तीति विग्रहे गिरिशब्दाल्लोमादित्वात् 'लोमादिपामादिपिच्छादिभ्यः शनेलचः'[5] इति शप्रत्यये कृते निष्पन्नो गिरिशशब्दो ज्ञापितैतद्वचनं विनापि लोके साधुतामावहति । तदुक्तम् - 'गिरौ डश्छन्दसि' गिरौ शेते गिरिशः, 'कथं तर्हि 'गिरिशमुपचचार प्रत्यहं सा सुकेशीति ? गिरिरस्यास्ती विग्रहे लोमादित्वाच्छः[6]' इति ।

---

1. तेन हि - 'ननु च 'नाज्झलौ' इत्यत्राऽगृहीत-सवर्णानामचां ग्रहणम् - इत्यसकृदुक्तम्, ततश्च यथा'कुमारी शेते' इत्यत्रेकारशकारयोः सावर्ण्यमप्रतिषिद्धं तथा आकार-हकारयोरपि, ततः किम् ? हकारेणाऽऽकारस्य ग्रहणात् षत्वप्रसङ्गः ? नैष दोषः, हकारो विवृतः, आस्कारो विवृततरः । एवं हि पठन्ति - विवृतकरणाः स्वराः, तेभ्य एओ बिवृततरौ, ताभ्यामै औ, ताभ्यामप्याकारः, संवृतोऽकार इति - इत्युक्तम् न्या. 8/3/57 ।
2. 'विवृतकरणाः स्वरास्तेभ्य ए ओ विवृततरौ, ताभ्यमै औ, ताभ्यामप्यकारः । संवृतोऽकार इति । पा. शि. ।
3. पा. शि. ।
4. 'स्पृष्टं' करणं स्पर्शानाम् । 'ईषत्स्पृष्टमन्तस्थानाम्' विवृतमूष्मणाम् । 'ईष'दित्येवानुवर्तते । 'स्वराणां च विवृतम् । ईषदिति निवृत्तमिति हि भगवदुक्तिः व्या. म. भा. 1/1/4/10 ।
5. अष्टा. 5/2/100 ।
6. वै. सि. कौ. उत्तरकृदन्त प्र. पृ. 79 ।

अतोऽस्य वचनस्य फलं लोके घृतशब्द-प्रयोगस्य साधुत्वमिति स्थाने । यतो 'घृत'शब्दो लोके भूरिशः[1] प्रयुज्यते । 'घृ[2]' धातुर्हि छन्दोमात्रगोचरः । मन्येऽत एव तेनैतत्प्रयोजन-प्रतिपादक-ग्रन्थे [3]प्रभृतिपदमुपात्तमिति ।

## 'वासुदेवार्जुनाभ्या'मिति निर्देशः

'[4]वासुदेवार्जुनाभ्यां वुन्' इति सूत्रे 'वासुदेवार्जुनाभ्या'मिति निर्देशः 'अभ्यर्हितं पूर्व'मिति वचनस्य ज्ञापकः[5] । यतोऽत्रार्जुनशब्दस्य वासुदेव-शब्दापेक्षयाऽल्पाच् तरत्वेन '[6]अल्पाच्तर'मिति सूत्रेण प्राक्प्रयोगस्य दुर्निवारतयैतद्वचनाभावे निर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽर्जुन-वासुदेवयोर्मध्ये वासुदेवस्य

---

1. (क) यावज्जीवेत्सुखं जीवेद् ऋणंकृत्वा घृतं पिबेत् ।
भस्मी भूतस्य देहस्य पुनरागमनं कुतः ? ॥
इति चार्वाकाः ।
(ख) 'घृताऽऽधारं पात्रं पात्राधारं धृत'मिति तार्किकाः ।
(ग) घृतकुम्भसमानारी तप्ताङ्गारसमः पुमान् ।
तस्माद् घृतं च वह्निं च नैकत्र स्थापयेद् बुधः" ॥
इति नीतिशतके चाणक्यः ।
(घ) विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधि युतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद् विन्ध्यस्तरेत्सागरम् ॥
इति शृङ्गारशतके भर्तृहरिः ।
2. 'अथ आगणान्तं परस्मैपदिनश्छान्दसाश्च 1096 घृ क्षरणदीप्त्योः । जिघर्म्याग्निं हविषा घृतेन । 'भृञामित्' बहुलं छन्दसीति इत्व'मित्याह भ. दी. वै. सि. कौ. जुहोत्यादि प्र. पृ. 184 ।
3. 'एतेन गिरिशप्रभृतेर्भाषायां प्रयोगः साधुर्भवतीत्याह - पु. दे. ज्ञा. समु. षोडशे ठक्पादे पृ. 79 ।
4. अष्टा. 4/3/98 ।
5. तथाहि–
(क) 'इदं तर्हि प्रयोजनं वासुदेवशब्दस्य पूर्वनिपातं वक्ष्यामी'त्युक्त्या ज्ञापकत्वमस्य निर्देशस्य सूचयति पत. व्या. म. भा. 4/3/1/98 ।
(ख) 'पूर्वनिपातमिति । अभ्यर्हितं पूर्वं निपततीयर्थस्य ज्ञापनार्थमित्यर्थ इत्याह कै. प्रदी. 4/3/1/98 ।
(ग) 'वासुदेवार्जुना.., (4/3/98) ॥ अयमेवनिर्देशो ज्ञापयति अभ्यर्हितं पूर्वमिति । वासुदेवेति तत्र भगवतः संज्ञे'त्याह श्रीना. ज्ञा. सं. 4 पृ. 86 ।
(घ) 'अजाद्यदन्तम्' 'अल्पाच्तरम्' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपततीति, ज्ञापनार्थमित्याह ज्ञा. भि. त. बो. शैषिक प्र. पृ. 662 ।
6. अष्टा. 2/2/34 ।

परमात्मत्वेनाभ्यर्हितत्वात् तत्प्राक्प्रयोगस्यौचित्येन निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'माता-पितरौ 'तापसपर्वता'वित्यादिप्रयोगाणां साधुत्व-सिद्धिः ।

## 'विदिभिदिच्छिदे'रिति 'शाच्छो'रिति च निर्देशौ

[1]'विदिभिदिच्छिदेः कुरच्' '[2]शाच्छोरन्यतरस्याम्' इति सूत्रयोः क्रमशो 'विदिभिदिच्छिदेः' 'शाच्छो'रितीमौ निर्देशौ "छेचेत्यत्र[3] छकारोपरि अकार उच्चारणार्थ" इति वचनस्य [4]ज्ञापकौ । यतश्छेचेति सूत्रेऽकारवतः छकारादेषा सप्तमी दृश्यत इत्यकारवाञ्छकार एव तुको निमित्तं, तथा सति इकारौकारवतोः छोस्तुकोऽप्राप्त्या निर्देशाविमावनुपपन्नौ । ज्ञापिते चास्मिन् वचनेऽनेन छकारमात्रस्य तुकि निमित्तत्वस्य सुलभतया निर्देशावमू समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'विच्छिन्न'मित्यादौ तुकः सिद्धिः । एतद्वचनाभावे हि – इकारवतः छकारस्यात्र तुक् न सिद्ध्येत् ।

जिनेन्द्रबुद्धिस्तु[5] वचनस्यास्य ज्ञापकः 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रतिषेध इति मनुते । एतदपि युक्तं मन्ये ।

## 'विंशतिका'दिति निर्देशः

[6]'विंशतिकात्खः' इति सूत्रे 'विंशतिका'दिति निर्देशो 'विंशतित्रिंशद्भ्यां कन् भवती'ति वचनस्य [7]ज्ञापकः । यतोऽत्र [8]'संख्याया अतिशदन्तायाः कन्' इति

---

1. अष्टा. 3/2/162 ।
2. अष्टा. 7/4/41 ।
3. अष्टा. 6/1/73 ।
4. तथाहि–
   (क) 'छकारेऽकार उच्चारणार्थः, विदिभिदिच्छिदेः' 'शाच्छोरन्यतरस्याम्' इत्यादिनिर्देशा'दित्याह - ह. मि. पदम. 6/1/73 ।
   (ख) 'छे च । छकारोपरि अकार उच्चारणार्थः, 'विदिभिदिच्छिदेरिति निर्देशा'दित्याह ज्ञा. भि. त. बो. हल्संधि प्र. पृ. 74 ।
5. अनेन हि–'छकार एव केवलस्तुको निमित्तम्, अकारस्तूच्चारणार्थः एतच्च 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रतिषेधादवसीयते । यदि ह्यकारसहितश्छकारस्तुको निमित्तं स्यात्, तदा ऋच्छेस्तुगभावादसति गुरुमत्त्व आमः प्रसङ्गो नास्तीति प्रतिषेधं न कुर्यादित्युक्तम् - न्या. 6/1/73 ।
6. अष्टा. 5/1/32 ।
7. तथाहि–
   (क) 'एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति - 'भवत्यत्र कन्निति' - यदयं विंशतिकात् ख इति प्रत्ययान्त-निपातनं करोती'त्याह पत. व्या. म. भा. 5/1/1/24 ।
   (ख) 'विंशति-त्रिंशद्भ्याम्' (सू. 5/1/24) ॥ विंशतिकात् खः' (सू. 5/1/32) इति ख प्रत्ययान्तोच्चारणं ज्ञापयति भवत्येतत्सूत्रोपात्ताभ्यां कन्निती'त्याह श्रीना. ज्ञा. सं. 5, पृ. 90 ।
8. अष्टा. 5/1/22 ।

विहितस्य कन्प्रत्ययस्य त्यन्तत्वेन प्रतिषेधात् कन्प्रत्ययान्तविंशतेर्दुर्लभतया पञ्चम्यन्तोऽयं विंशतिकादिति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽनेन विंशतिशब्दादपि कनः सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'विंशतिकः' 'त्रिंशत्कः' इत्यत्र त्यन्तशदन्ताभ्यां विंशति - त्रिंशद्भ्यां कनः सिद्धिः । एतद्वचनाभावे हि 'अतिशदन्तायाः'इति कनः प्रतिषेधात् नात्र कन् सिद्ध्येत् ।

नचात्र ज्ञापक-निर्देशे विंशतिकशब्द एवोच्चारितो न त्रिंशत्कशब्दस्तत्कथमयं निर्देशो 'विंशति-त्रिंशद्भ्यां कन् भवतीति' वचनं ज्ञापयेद् ? "विंशतिशब्दात् कन् भवती'त्येवानेन ज्ञापयितुं शक्य'मिति शङ्क्यम् । यतो ज्ञापकमिह [1]योगापेक्षम् । योगे हि 'अतिशदन्तायाः'इत्युक्तं, न त्वतेरित्येव । न च 'विंशतिकः 'त्रिंशत्कः' इत्यनयोःसाधुत्वाभावः शङ्क्यः । यतो 'विंशति त्रिंशद्भ्यां[2] ड्वुन्नसंज्ञाया'मिति सूत्रोदाहणत्वेन 'विंशकः' 'त्रिंशकः' [3]इत्यनयोः, प्रत्युदाहरणत्वेन च 'विंशतिकः' त्रिंशत्कः' [4]इत्यनयोः साधुत्वमाचार्यैः स्वीकृतम् । अतएव बहुधा समीक्ष्य निर्देशस्यास्य ज्ञापकत्वं कैयटेन[5] स्पष्टीकृतम् ।

पश्चाद् भाष्यकृता विंशतिक - त्रिंशत्कशब्दयोः साधुत्वमन्यथा स्वीकृत्य ज्ञापकत्वमस्याकिञ्चिकरमिति [6]न्यरूपि । अस्य निर्देशस्य ज्ञापकत्वमब्रुवन् जयादित्यः भट्टोजिदीक्षितश्च भाष्योक्तं द्वितीयपक्षमेव [7]जग्राह । सर्वथा 'विंशतिकः' 'त्रिंशत्कः'

---

1. 'विंशतेरेतज्ज्ञापकं स्यात् । नेत्याह, योगापेक्षं ज्ञापक'मित्याह पत. व्या. म. भा. 5/1/1/24 । 'योगापेक्षंमिति' यथा पुंवदिति योगापेक्षत्वाज्ज्ञापकस्य वत्यर्थे नञ्स्नञोरप्रवृत्तौ 'स्त्रीव'दित्यपि भवति, एवमेतद्योगापेक्षं 'विंशतिका'दिति ज्ञापकमिति त्रिंशत्कशब्दोऽपि संज्ञायां भवतीत्यर्थः, इति चाह कै. प्रदी. 5/1/1/24 ।
2. अष्टा. 5/1/24 ।
3. 'विंशति-त्रिशद्भ्यां ड्वुन् प्रत्ययो भवति, असंज्ञायां विषये, आर्हीयेष्वर्थेषु । विंशकः । त्रिंशकः । 'ति विंशतेर्डिति' इति टिलोपः, - का. 5/1/24 ।
4. 'असंज्ञायामिति किमर्थम् ? त्रिंशत्को विंशतिकः । व्या. म. भा. 5/1/1/24 ।
5. तथाहि – 'ननु विंशतिशब्दे शतिचः प्रत्ययत्वात्तिशब्दस्यानर्थक्यात् प्रतिषेधप्रसङ्गाभावात् किं ज्ञापकाश्रयणेन ? । उच्यते द्विदशशब्दस्य विंशादेशस्तिप्रत्यय इत्येषा प्रक्रियाऽऽश्रीयते । एवं हि ज्ञापकाश्रयेण त्रिंशत्कशब्दोऽपि सिद्ध्यति । अन्यथा त्रिंशच्छब्दे शतोऽर्थवत्वादशदन्ताया इति प्रतिषेधः स्यात् । ननु विंशतिशब्दादज्ञाताद्यर्थविवक्षायांकन्-प्रत्यये विंशतिकशब्दः स्यादिति कथं ज्ञापकम् ? । नैतदस्ति । स्वार्थिके कन्प्रत्यये 'विंशतिकाया' इति निर्देशः स्यात् । असंज्ञायां ड्वनो विधानात् संज्ञाविषयमेव ज्ञापकमाश्रयणीय'मित्युक्तमनेन । प्रदी. 5/1/1/24 ।
6. तथाहि – 'अथवा योगविभागः करिष्यते । 'विंशति त्रिंशद्भ्यां' कन्भवतीति । ततो ड्वुनसंज्ञाया'मित्युक्तम् - व्या. म. भा. 5/1/1/24 ।
7. 'असंज्ञायामिति किम् ? विंशतिकः । त्रिंशत्कः । कथं पुनरत्र कन्, यावता 'अतिशब्दान्तायाः' इति पर्युदासेन भवितव्यम् ? योगविभागः करिष्यते विंशति त्रिंशद्भ्यां कन् प्रत्ययो भवति, ततः 'ड्वुनसंज्ञायाम्' इति । का. 5/1/24 ।
'विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायायाम्' 5/1/24 योग विभागः कर्तव्यः । आभ्यां कन् स्यात् । असंज्ञायां (कु) ड्वुन् स्यात् । कनोपवादः । विंशकः । त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः । - वै. सि. कौ. आर्हीय प्र. पृ. 698 ।

इत्यनयोः साधुत्वे नास्ति कश्चन विवाद इति निर्देशस्यास्य ज्ञापकत्वं स्थाने । नह्युपायो भवत्युपायान्तरस्य दूषकः ।

## 'वृद्धिर्' इति निर्देशः

[1]'वृद्धिरादैच्' इति सूत्रे 'वृद्धिर्'इति निर्देशः 'कार्यकालं [2]संज्ञापरिभाष'मिति परिभाषाया ज्ञापकः[3] । यतोऽस्याभावेऽत्र त्रैपादिकस्य 'ससजुषोरुः[4]' इति सोः सकारस्थाने जातस्य रोरुकारस्य सपादसप्ताध्यायीस्थाम्, 'उपदेशेऽजनुनासिक इत्'[5] इतीत्संज्ञां प्रत्यसिद्धतयेत्संज्ञाया अभावे लोपस्य सुतरामभावान्निर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यां कार्याणां काल एव कालो यस्येति विग्रहेण संज्ञापरिभाषस्य कार्यदेशस्थत्वलाभेनेत्संज्ञाया रुत्वदेशस्थतया तां प्रति तदसिद्धत्वस्याप्राप्त्या इत्संज्ञायाः सुलभतया सति चेत्त्वे लोपस्यापि सौलभ्येन निर्देशोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'नार्कुटः' इत्यत्र रेफस्थाने 'खरवसानयो[6]र्विसर्जनीयः' इति त्रिपादीस्थस्य विसर्जनीयस्याभावः 'विसर्गदेशस्थया असिद्ध-परिभाषया अन्तरङ्गे विसर्गे कर्तव्ये बहिरङ्गा हि [7]वृद्धिरसिद्धा भवति । अस्या अभावे तु [8]षाष्ठ्या अन्तरङ्गपरिभाषाया[9] दृष्ट्या त्रैपादिकस्य विसर्जनीयस्यासिद्धतयाऽन्तरङ्गाभावेन तत्कर्तव्ये बहिरङ्गवृद्धेर-सिद्धत्वस्यासंभवादत्र रेफस्य विसर्जनीयो दुर्वारः स्यात् ।

---

1. अष्टा. 1/1/1 ।
2. (क) व्याडि प. पा. प. 58 पृ. 40 ।
 (ख) पु. दे. ल. प. वृ. प. 106 पृ. 155 ।
 (ग) सी. दे. वृ. प. वृ. प. 117, पृ. 267 ।
 (घ) नी. दी. प. वृ. प. 118, पृ. 314 ।
 (ङ) ह. भा. प. भास्क. प. 119, पृ. 370 ।
 (च) भ. ना. प. शे. प. 3, पृ. 10 ।
 (छ) शेषा. प. भास्क. प. 3, पृ. 368 ।
3. तथाहि – 'अत्र च' वृद्धिरादैच्' (1/1/1) इत्यत्र त्रैपादिकस्य रोरुकारस्येत्संज्ञाप्रयुक्तलोप-करणं ज्ञापकम् । इत्त्वे हि लोपः तत्सामर्थ्यादिव सिद्धः 'इत्याह नी. दी. प. वृ. प. 118, पृ. 314 ।
4. अष्टा. 8/2/66 ।
5. अष्टा. 1/3/2 ।
6. अष्टा. 8/3/15 ।
7. 'तद्धितेष्वचामादेः' –
 –अष्टा. 7/2/117 ।
8. 'वाह ऊठ्' –
 -अष्टा. 6/4/132 – इति सूत्रस्थोठ्ग्रहणज्ञापिततर्येतिशेषः ।
9. 'असिद्धं वहिरङ्गमन्तरङ्गे'इत्यस्या इत्यर्थः ।

## 'व्यः 'इति निर्देशः

'न व्यो[1] लिटि' इति सूत्रे 'व्येञ् संवरणे'[2] इति व्येञः आत्वभूतस्य 'व्य 'इति षष्ठ्या निर्देशो 'विकृतिरपि प्रकृतिं गृह्णाती'ति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावे व्य इति निर्देशे व्येञो ग्रहणाभावात् निर्देशोऽयं व्यञो ग्रहणार्थं कृतोऽनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽनेन तद्ग्रहणस्य सुलभतया निर्देशोऽय-मुपपद्यते । एतद्वचानाभावे च प्रतिषेध-विधानमपीदमनुपपन्नम् । नानेन हि कस्याप्यात्वप्रतिषेधः कर्तुं शक्यः । ज्ञापितस्यास्य वचनस्य फलं तु 'नि समुपविभ्यो[4] ह्व' इत्यत्र ह्वेञो ग्रहण-सिद्धिः । एतद्वचनाभावे हि तत्र तस्य ग्रहणं न सिद्ध्येत् । वचनशरीरेऽत्र अपिशब्दस्य फलं क्वचिद् विकृतिः प्रकृतिं न गृह्णात्येवेति । तेन 'तुरासाह'मित्यादौ[5] 'सहेः साडः सः 'इति मूर्द्धन्याऽऽदेशाभावः सिद्ध्यति ।

## 'व्यवस्थाया'मिति निर्देशः

'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञाया'मिति[6] सूत्रे 'व्यवस्थाया'-मिति निर्देशः 'स्थाधातोः स्त्रियां भावेऽङपि भवती'ति वचनस्य ज्ञापकः[7] । यतः 'स्थागापापचो[8] भावे' इत्यनेन भावे स्त्रियाम् 'आतश्चोपसर्गे'[9] इत्यङोऽपवादस्य क्तिनो विधानाद् [10]वासरूपविधेरभावाद् 'व्यवस्थिता'विति निर्देशस्यैवौचित्येन

---

1. अष्टा. 6/1/46 ।
2. धा. पा. भ्वा. 1007 ।
3. तथाहि – 'न व्यो लिटि, इत्यात्वभूतस्य व्येञो निर्देशेनात्वनिषेधविधानं ज्ञापयति 'विकृतिरपि प्रकृतिं गृह्णाती'त्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 81 ।
4. अष्टा. 1/3/30 'निह्वयंते, संह्वयते, उपह्वयते, विह्वयते, इत्युदाहरणानि का. 1/3/30 ।
5. अष्टा. 8/3/56 ।
6. अष्टा. 1/1/34 ।
7. तथाहि –
   (क) 'कथमवस्था, संस्थेति ? 'व्यवस्थायामसंज्ञायाम्' इति ज्ञापकाद् नात्यन्ताय बाधा भवती'ती'त्याह ज्या. का. 3/3/95 ।
   (ख) 'यदिदं व्यवस्थाशब्दस्याङन्तस्य सूत्र उच्चारणमेतदेव ज्ञापकम्, अतः क्तिनात्यन्तबाधा न भवतीति, तेनावस्थेत्याद्यपि 'सिद्ध्यती'त्याह जि. बु. न्या. 3/3/95 ।
   (ग) 'कथमवस्था संस्थेति ? व्यवस्थायामिति ज्ञापका'दित्याह भ. दी. वै. सि. कौ. उत्तरकृदन्तप्र. पृ. 562 ।
   (घ) 'स्थागापापचो...' (सू. 3/3/95) ॥ अवस्था संस्थेति 'व्यवस्थायाम्' (सू. 1/1/34 ) इति ज्ञापका'दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2 पृ. 212 ।
8. अष्टा. 3/3/95 ।
9. अष्टा. 3/3/106 ।
10. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 3/1/94 ।

'व्यवस्थाया' मिति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने व्यवपूर्वकात् स्थाधातोरङ्प्रत्ययस्यापि सुलभतया निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अवस्था' 'संस्था' प्रभृतीनां प्रसिद्धानामङन्त-प्रयोगाणां साधुत्वसिद्धिः । एतद्वचनाभावे हि क्तिनोऽङपवादस्यात्र दुर्वारतया नैषां साधुत्वं सिद्ध्येत् ।

## 'शयग्लिङ्क्षि्व'ति निर्देशः

[1]'रिङ्शयग्लिङ्क्षि्व'ति सूत्रे 'शयग्लिङ्क्षि्व'ति निर्देशः 'इत्संज्ञायां पूर्वत्रासिद्धत्वं नाश्रीयते' इति वचनस्य ज्ञापकः[2] । यतोऽत्र 'शयग्लिङ्'- एषां द्वन्द्वे ततः सप्तमीबहुचने 'ङणोः कुक् टुक् शरी'ति कुगागमे कुकः[3] ककार-स्येत्संज्ञालोपयोः यकः ककारस्य जश्त्वे सुपः सकारस्य षत्वे च कृते 'शयग्लिङ्-क्षि्वति' निर्देशः कृतः । स चानुपपन्नः, यतोऽत्र सपादसप्ताध्यायीस्थां 'हलन्त्य-'[4] मितीत्संज्ञां प्रति त्रिपादीस्थः कुक् 'पूर्वत्रासिद्ध'-[5] मित्यनेनासिद्धः । असत्यां चेत्संज्ञायां कुकः ककारस्य लोपासंभवान्निर्देशानुपपत्तिः स्पष्टा । ज्ञापिते चास्मिन् वचनेऽत्रेत्संज्ञायां पूर्वत्रासिद्धत्वस्यानाश्रयणान्निर्देशोऽयं सुतरामुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अनोनु'[6] - डिति नुटष्टकारस्य 'हलन्त्य'मितीत्संज्ञासिद्धिः । एतद्वचनाभावे हि त्रैपादिकस्य नुटोऽसिद्धत्वादित्संज्ञा न सिद्ध्येत् । तथा सति 'अक्षण्वतः कर्णवन्तः सखायः 'इत्यादिवैदिकप्रयोगा न सिद्ध्येयुः । 'अक्षण्वन्तः' इति हि अक्षि शब्दान्म-तुपि 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः[7] 'छन्दस्यपि[8] दृश्यते' इत्यनङि 'अनोनु'डिति नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या पश्चान्नुटि नुटष्टकारस्येत्संज्ञा-लोपयोः कृतयोः नस्य णत्वे कृते प्रातिपदिककार्येषु कृतेषु च सिद्ध्यति ।

निर्देशस्यास्य ज्ञापकत्वमपि 'यथोद्देशं संज्ञापरिभाष'मिति पक्षे एव, 'कार्यकालं संज्ञापरिभाषा' मिति पक्षे तु नास्य ज्ञापकत्वमित्यवधेयम् ।

---

1. अष्टा. 7/4/28 ।
2. 'रिङ्शयग्लिङ्क्षु (7/4/28) इति निर्देशात् ज्ञापकात् इत्यसंज्ञायां पूर्वत्रासिद्धत्वं नाश्रीयते । अन्यथा कुकोऽसिद्धत्वात् असत्यामित्संज्ञायामेष निर्देशो न स्यात् तेना'नो नुड्' (8/2/16) इत्यादेर्हलन्त्यमिति (1/3/3) इत्संज्ञा सिद्ध्यति । 'कार्यकाले संज्ञापरिभाषे' इत्यत्र तु पक्षे यत्किञ्चिदेतदिति **शशधरः** । तेन 'शितुगादे- (8/3/31) रित्संज्ञा सिद्धरित्याह पु. दे. ज्ञा. समु. अष्टाविंशे णौपादे पु. 95 ।
3. अष्टा. 8/3/28 ।
4. अष्टा. 1/3/3।
5. अष्टा. 8/2/1 ।
6. अष्टा. 8/2/16 ।
7. अष्टा. 7/1/75 ।
8. अष्टा. 7/1/76 ।

## 'शयितरी'ति निर्देशः

'स्थण्डिलाच्छयितरि व्रते'[1] इति सूत्रे 'शयितरी'ति निर्देशः 'कार्यमनुभवन् हि कार्यी निमित्तया नाश्रीयते' इति परिभाषायाः[2] 'कार्यी निमित्ततया नाश्रीयते इत्यंशस्य ज्ञापकः[3] । यतोऽत्र पाणिनीयतन्त्रे निमित्तपदं कारणमात्रपरं, न केवलं निमित्तकारणपरं प्रमाणाभावादतः 'शयितरी'त्यत्र शीङ्धातोरीकारस्य[4] ङित्त्वात् 'सार्वधातुकार्द्धधातुकयो'[5]रिति विहितगुणस्य कारणत्वाच्च 'क्ङितिचे'[6]ति गुणनिषेधस्य दुर्वारतया गुणासम्भवाच्छयितरी'ति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् परिभाषांशे शीङः ईकारस्य कार्यितया निमित्तत्वेनाश्रयणं न भवतीति 'क्ङितिचे'ति गुणनिषेधाप्रवृत्त्या 'सार्वधातुकार्धधातुकयो'रिति गुणस्य सुलभतया 'शयितरी' ति गुण-निर्देशः समुपपद्यते ।

न चासौ निर्देशः 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते 'इति सम्पूर्ण-परिभाषां ज्ञापयतीति शङ्क्यम् । यतः प्रमाणानां सामान्ये पक्षपातेन लाघवानुगृहीतेन चासौ निर्देशः 'कार्यीनिमित्ततया नाश्रीयते' इत्यंशमेव ज्ञापयतीति वक्तुं शक्यते । 'कार्यमनुभवन्'इत्यंशस्तु 'द्विर्वचनेची[7]'ति सूत्रस्थयाऽज्-ग्रहण-प्रयोजन-प्रतिपादिकया 'अचि किं जेघ्रीयते देध्मीयते' इति भाष्योक्त्या ज्ञाप्यत इति प्रबन्धेऽत्र भाष्योक्तीनां ज्ञापकत्वनिरूपणावसरे स्फुटीकृतम् । 'शयिता' 'शायक' इत्यादौ क्रमशः गुणवृद्धिप्रतिषेधाभावो ज्ञपितस्यास्य परिभाषांशस्य फलं प्रसिद्धम् ।

---

1. अष्टा. 4/2/15 ।
2. (क) पु. दे. प. पा. प. 11, पृ. 12 अ ।
   (ख) भ. ना. प. शे. प. 11 पृ. 41 ।
3. तथाहि –
   (क) ' न च कार्यी निमित्तत्वेनाश्रीयते । तथाहि क्ङिन्निमित्तयो र्गुणवृद्ध्योः प्रतिषेधो विधीयमानः 'शयिते'त्यत्र न भवति, नहि कार्यिणः शीङो गुणं प्रति निमित्तभावः 'इति ग्रन्थेन निर्देशस्यास्यैतत्परिभाषांशज्ञापकत्वमप्यसूसुचद् जया. का. 6/1/2 ।
   (ख) 'यस्मात् क्ङिन्तिमित्तयोः गुणवृद्ध्योः 'क्ङितिच' इति प्रतिषेधो विधीयमानः शयितेत्येवं प्रकारविषये न भवति ततो ज्ञायते - 'नहि कार्यी निमित्तत्वेनाश्रीयत' इति । यदि ह्याश्रीयेत तदा शीङो ङित्त्वात् तन्निमित्तत्वाच्च गुणवृद्धयोः 'क्ङिति च' इति विधीयमानः शयितेत्यत्र गुणप्रतिषेधश्च स्यात् 'शायकः इत्यत्र वृद्धिप्रतिषेधश्चे'ति ग्रन्थेन निर्देशस्यास्य ज्ञापकत्वमप्यसूसुचद् जि. बु. न्या. 6/1/2 ।
   (ग) ' स्थण्डिलाच्छयितरि व्रते' इति निर्देशश्चास्या ज्ञापक इत्याह भ. ना. प. शे. प. 11, पृ. 50 ।
4. 'शीङ् स्वप्ने' धा. पा. अदा. 1032 ।
5. अष्टा. 7/3/84 ।
6. अष्टा. 1/1/5 ।
7. अष्टा. 1/1/19 ।

वस्तुतस्तु 'शयितरीति' निर्देशः 'कार्यी निमित्तया नाश्रीयत' इत्यंशस्यापि न ज्ञापकः । यतः 'क्ङिति चे'त्यत्र गित्साहचर्येण प्रत्ययस्यैव ङितौ ग्रहणमिति वक्तुं शक्यते । तथा सति शीङ्धातोरीकारस्य प्रत्ययत्वाभावाद् गुण-निषेधाप्रवृत्त्या 'शयितरी'ति निर्देशः 'कार्यी निमित्ततया नाश्रीयत' इत्यस्याभावेऽपि सुतरां समुपपद्यते । न च 'जहती'त्यादौ 'दीर्घोऽकितः'[1] इत्यस्याप्रवृत्तये हाधातो- र्गित्त्वस्यैव वक्तव्यत्वेन गित्त्वस्य प्रत्ययमात्रवृत्तित्वाभावत् साहचर्यासम्भवः शङ्क्यः । यतः 'क्ङितिचे'ति प्रवृत्ति-प्रयोगे प्रत्ययस्यैव गितः सम्भवेन साहचर्य-परिभाषा[2]-प्रवृत्तौ बाधको न दृश्यते । अपि च 'ओहाक्[3] 'इत्यस्य कित्त्वेऽपि दोषाभावात्तस्य गित्त्वाभ्युपमोऽपि नावश्यकः । 'दीर्घोऽकितः - इत्यत्र हि 'न कित् यस्मिन्' इति बहुव्रीहिगर्भबहुव्रीहिणा दीर्घसाहचर्येण च कित्पदेन यङ् - यङ्-लुङ्-निमित्तकगुणादेरेव ग्रहणमिति वक्तुं शक्यम् ।

अतः 'कथं पुनर्ज्ञार्यते - नहि कार्यी निमित्तत्वेनाऽऽश्रीयते इति? [4]'दीधीवेवीटा- म्' इति दीधीवेव्योर्गुणप्रतिषेधात् । यदि हि निमित्तत्वेनाश्रीयेत दीधीवेव्योर्ङित्त्वात् किन्निमित्तित्वाच्च गुणवृद्ध्योः 'क्ङितिच' इति प्रतिषेधः सिद्ध एवेति तयो- र्गुणप्रतिषेधोऽनर्थकः स्या'[5]दिति यदुक्तं जिनेन्द्रबुद्धिना तदपि न युक्तम् । यतो दीधीवेव्योर्ङकारो न प्रत्ययङकारः ।

अतएव भट्टनागेशेन प्राक् 'स्थण्डिलाच्छयितरीतिनिर्देशाच्चायं ज्ञापक इत्युक्त्वा पश्चात् 'वस्तुतः समवायिकारण-निमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः । स हिस्तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीतितत्त्व[6]'मित्युक्तम् । 'कार्यी निमित्तं न भवती'त्यंश एव लोकप्रसिद्धः, कार्यमनुभवन्नित्यंशस्तु भाष्योक्तिलभ्य इत्याशयेन च

1. अष्टा. 7/4/83 ।
2. 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहण' मिति - परिभाषास्वरूपम् ।
 (क) व्याडि. प. पा. प. 67 पृ. 40 ।
 (ख) पु. दे. ल. प. वृ. प. 49 पृ. 134 ।
 (ग) सी. दे. बृ. प. वृ प. 115, पृ. 266 ।
 (घ) नी. दी. प. वृ. प. 99 पृ. 311 ।
 (ङ) ह. प. भास्क. प. 117, पृ. 370 ।
 (च) भ. ना. प. शे. प. 112 पृ. 345 ।
 (छ) शेषा. प. भास्क. प. 95 पृ. 454 ।
3. 'ओहाक्त्यागे' धा. पा. जुहो. 1090 ।
4. अष्टा. 1/1/6 ।
5. न्या. 6/1/2 ।
6. प. शे. प. 11, पृ. 50 ।

'द्विर्वचनेऽची'ति सूत्रे भाष्ये ध्वनितैषे'[1]ति चोक्तम् । तस्मान्नायं निर्देशः 'कार्यमनुभव'न्निति सम्पूर्णपरिभाषायाः, किन्तु 'कार्यी निमित्ततया नाश्रीयत' इति तदंशस्य तु ज्ञापक इति निश्चिनुमः ।

## 'शेते'रिति निर्देशः

'अधिकरणे[2] शेतेः' इति सूत्रे शेतेरिति निर्देशो 'नहि कार्यी निमित्तत्वेनाश्रीयते'[3] इति परिभाषाया ज्ञापकः[4] । यतोऽस्या अभावे शीङः[5] श्तिपि कृते[6] - 'क्ङितिचे'[7]ति गुणनिषेधस्य दुर्वारतया 'शेते'रितिगुणनिर्देशोऽनुपपन्नः । ज्ञापितायां चास्यां शीङोऽत्र गुणकार्यभाक्त्वेन गुणनिमित्तत्वाभावात् गुणनिषेधाप्राप्त्या गुणनिर्देशोऽयमुपपद्यते । अस्याः फलं तु 'शयितः'[8] 'शायकः'[9] इत्यादौ क्ङितिचे'-ति क्रमशो गुणस्य वृद्धेश्च प्रतिषेधाभावः । अस्या अभावे हि कार्यभाजोऽपि शीङः कार्यं प्रति निमित्ततया गुणवृद्धिप्रतिषोऽत्र दुर्वारः स्यात्, इत्यपि पुरुषोत्तमदेवोक्तं न युक्तम्, प्रागुक्तयुक्तेः ।

## श्रवणेति टाबन्तनिर्देशः

[10]'विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः' इति सूत्रे 'श्रवणे' ति टाबन्तनिर्देशः 'वर्णाश्रये प्रत्ययलोपलक्षणप्रतिषेधः[11] 'इति परिभाषाया

---

1. तत्रैव ।
2. अष्टा. 3/2/15 ।
3. (क) पु. दे. ल. प. वृ. प. 95 पृ. 151 ।
   (ख) सी. दे. बृ. प. वृ. प. 2 पृ. 164 ।
   (ग) नी. दी. प. बृ. प. 2 पृ. 293 ।
   (ध) ह. भा. प. भास्क. प. 2, पृ. 319 ।
   (ङ) "कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते" भ. ना. प. शे. म. ११ पृ, ४1
   (च) शेषा. प. भास्क. प. 10 पृ. 386 ।
4. तथाहि + "तत्र 'अधिकरणे शेतेः' (3/2/15) इति शीङः श्तिपि कृते गुणनिर्देशो ज्ञापकः कार्यः" इत्याह पु. दे. ल. प. वृ. प. पृ. 152 ।
5. 'शीङ् स्वप्ने' धा. पा. अदा. 1032 ।
6. 'इक्श्तिपौ धातुनिर्देशे' वा. वै. सि. कौ. उत्तरकृदन्तप्र. पृ. 565 ।
7. अष्टा. 1/1/5 ।
8. शेतेः तृचि लुटः प्रथमपुरुषैकवचने वा रूपमिदम् ।
9. शेतेः 'ण्वुल्तृचौ - अष्टा. '3/1/133' इतिण्वुल् ।
10. 4/2/23 ।
11. अयं परिभाषाऽऽकारः. केवलं पुरुषोत्तमदेवेन स्वीकृतः ल. प. वृ. प. 52 पृ. 135 । सीरदेव - नीलकण्ठदीक्षित-हरिभास्कर - भट्टनागेश - शेषाद्रिभिः क्रमशः बृ. प. वृ प. 7 पृ. 169 प. वृ. प. 9 पृ. 295, प. भास्क. प. 7 पृ. 320 प. शे. प. 22 पृ. 120, प. भास्क. प. 21 पृ. 403, वर्णाश्रये प्रत्ययलक्षणं नास्ति' 'वर्णाश्रये नास्ति प्रत्यय लक्षणम्' इत्याकारावस्याः स्वीकृतौ । सर्वत्राऽऽकारेषु फलाभेदः ।

ज्ञापकः[1] । यतोऽस्या अभावे 'श्रवण[2]-नक्षत्रेण युक्ता पौर्णमासी'ति विग्रहे 'नक्षत्रेण युक्तः[3] कालः इत्यणि तस्य 'लुबविशेषे'[4] इत्यनेन लुपि निष्पन्नस्य श्रवणशब्दस्यात्र टाबान्तनिर्देशोऽनुपपन्तः । कृतेऽपि हि लुपि प्रत्ययलक्षणेन[5] श्रवणशब्दस्याणन्तत्वात् 'टिड्ढे'- तिर्ङीबत्र दुर्वारः । ज्ञापितायां चास्यां टिदादिभिः षष्ठ्यन्तैरकारविशेषणाद् अणो योऽकारस्तदन्तादेति[6] सूत्रार्थतया टिड्ढे'ति[7] ङीपीवर्णाश्रयत्वात् तत्र कर्तव्ये प्रत्ययलक्षणस्यानया प्रतिषेधेनाणन्तत्वप्रयुक्तङीपोऽत्राप्राप्तेः'श्रवणे'ति टाबन्तनिर्देशोऽयं समुपपद्यते । न चात्र कृत्तिका श्रवणः पुष्यः चित्रास्वात्योर्यदन्तरमित्यादौ श्रवणशब्दस्य पुंलिङ्गत्वदर्शनेन तस्मादणो लुपि कृते-'लुपि युक्तवद् व्यक्तिवचने' इति पुंलिङ्गत्वावश्यंभावाद् श्रवणेत्यस्य कथं स्त्रीलिङ्गतेति शङ्क्यम् । यतो विभाषेत्यत्र सूत्रे श्रवणेति निपातनाद्युक्तवद्भावाभावः सुलभः । ज्ञापिताया अस्याः फलं तु 'गवे हितं गोहितम्' 'रायःकुलं रैकुल'मित्यादौ क्रमशः चतुर्थी[8] - षष्ठी[9] - तत्पुरुषयोः कृतयोः समासत्वात् प्रादिपदिकत्वे[10] सुपो लुकि[11] प्रत्ययलक्षणेन अजूनिमित्तकयोः 'एचोऽयवायावः[12] 'इत्यवायादेशयोरभावः । अस्या अभावे हि प्रत्ययलक्षणेन तौ दुर्वारौ स्याताम् ।

---

1. तथाहि –
   (क) 'ज्ञापकं चात्रार्थे' श्रवणाकार्तिकीचैत्रीभ्यः' (4/2/23) इत्यत्र टाबन्तनिर्देशः श्रवणाशब्द इतीत्याह पु. दे. ल. प. वृ. प. 52 पृ. 136 ।
   (ख) 'ज्ञापकं चात्र श्रवणाकार्तिकीचैत्रीभ्यः' (4/2/23) इति श्रवणेति टाबन्तो निर्देशः' 'इत्याह सी. दे. बृ. प. वृ. प. 7, पृ. 169 ।
2. कृत्तिकाश्रवणः पुष्यः चित्रास्वात्योर्यदन्तरमित्यभियुक्तोक्तेः श्रवणशब्दो नक्षत्रवाचकः पुंलिङ्गः ।
3. अष्टा. 4/2/6 ।
4. अष्टा. 4/2/4 ।
5. 'प्रत्ययलोपे प्रत्ययलक्षणम्'– अष्टा. 1/1/62 ।
6. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रचूतयपूठक्ठञ्कञ्क्वरपः - अष्टा. 4/1/15 ।
7. ङीपूत्वत्र प्रत्ययलक्षणेन न भवति 'अणो योऽकारः' इति विज्ञानात्' - न्या 4/2/5 ।
8. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' - अष्टा. 2/1/36 ।
9. 'षष्ठी' – अष्टा. 2/2/8 ।
10. 'कृत्तद्धितसमासाश्च' - अष्ठा. 1/2/46 ।
11. 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/1/71 ।
12. अष्टा. 6/1/78 ।

## 'श्वयुवमघोना'मिति निर्देशः

'श्वयुवमघोनामतद्धित'[1]इति सूत्रे 'श्वयुवमघोना'मिति निर्देशः 'अभ्यर्हितं पूर्वमित्यनित्य'मिति वचनस्य ज्ञापकः[2] । यतोऽभ्यर्हितं पूर्वमिति वचनस्य नित्यत्वे श्वञ्शब्दस्य प्राक्प्रयोगोऽत्र गगनकुसुमायित इत्यसौ निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने श्वञ्शब्दस्य प्राक्प्रयोगः सुलभ इत्यसौ निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'कुक्कुरमार्जारौ'[3] इत्यादिप्रयोगाणां साधुत्वसिद्धिः ।

## 'षपूर्वहन्धृतराज्ञा'मिति निर्देशः

[4]'षपूर्वहन्धृतराज्ञामणी'ति सूत्रे 'षपूर्वश्च हन् च धृतराजा चेति' द्वन्द्वं[5] कृत्वा समस्तषपूर्वहन्धृतराजञ्शब्दस्य षष्ठीबहुवचने कृतः 'षपूर्वहन्धृतराज्ञा'मिति निर्देशो 'यथोद्देशं संज्ञापरिभाषा'मिति परिभाषाया[6] ज्ञापकः[7] । यतोऽत्राल्लोपो[8] बहिर्भूतिस्वादिप्रत्ययापेक्षभसंज्ञापेक्षतया[9] बहिरङ्गः, श्चुत्वं[10] तु श्चुयोगमात्रा-पेक्षत्वादन्तरङ्गः, तथा सति 'षपूर्वहन्धृतराजन्आम्' इति स्थितौ भस्यानोऽकारस्य

---

1. अष्टा. 6/4/133 ।
   सूत्रमिदमधिकृत्य सूक्तिरियं चिराय श्रूयते - "काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नासि बाले किमिदं विचित्रम् । विचारवान् पाणिनिरेकसूत्रे श्वानं - युवानं मघवानमाह" ।। इति ।
2. 'अभ्यर्हितं पूर्वमिति तु प्रसङ्गाज् ज्ञापितम्, तदप्यनित्यं, श्वयुवमघोनामित्यादिलिङ्गा-दित्यवधेय' मित्याह ज्ञा. भि. त. बो. शौषिकप्र. पृ. 662 ।
3. 'कुकुरबिलाड़ि' इति मिथिलाव्यवहारानुसार्ययं प्रयोगः ।
4. अष्टा. 6/4/135 ।
5. चार्थे द्वन्द्वः' अष्टा. इत्येनेनेतरेतरद्वन्द्वं कृत्वेत्यर्थः । अत्र 'धृतराजे'ति बहुव्रीहिः ।
6. (क) व्याडि प. पा. 59, पृ. 40 ।
   (ख) पु. दे. ल. प. 105, पृ. 155 ।
   (ग) सी. दे. बृ. प. वृ. प. 116, पृ. 267 ।
   (घ) नी. दी. प. वृ. प. 117, पृ. 313 ।
   (ङ) ह. भा. प. भास्क प. 119, पृ. 370 ।
   (च) भ. ना. प. शे. प. 2 पृ. 10 ।
   (छ) शेषा. प. भास्क. प. 2, पृ. 368 ।
7. तथाहि 'धृतराज्ञाम्' (6/4/135) इत्यादिनिर्देशाश्चास्या लिङ्ग'मित्याह नी. दी. प. वृ. प. 117, पृ. 313 ।
8. 'अल्लोपोऽनः' -
   अष्टा. 6/4/134 ।
9. 'यचिभम्' -
   अष्टा. 1/4/18 ।
10. 'स्तोः श्चुनाश्चुः' -
    अष्टा. 8/4/40 ।

'अल्लोपोऽन'[1] इत्यल्लोपे कृते 'षपूर्वहन्धृतराज्न्आम्' इत्यवस्थायां 'स्तोः श्चुना श्चु'[2]रिति श्चुत्वेऽन्तरङ्गे कर्तव्ये बहिरङ्गस्याल्लोपस्य 'असिद्धं बहिरङ्गमन्तरङ्गे'[3] इति परिभाषया असिद्धत्वाद् अकारेण व्यवधानात् श्चुत्वस्याप्राप्तौ कृतश्चुत्वनिर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यां षष्ठाध्याये 'वाह ऊठ्'[4] इति सूत्रे तदीयोठ्ग्रहणज्ञापितत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यस्याः परिभाषाया अपि षष्ठाध्यायस्थत्वेन एनां प्रति त्रिपादीस्थस्य 'स्तोः श्चुना[5] श्चुः 'इत्यस्य 'पूर्वत्रासिद्ध' [6]मित्येनासिद्धत्वाद् अन्तरङ्गाभावेन कं प्रतीयं बहिरङ्गमल्लोपमसिद्धं कुर्यादिति नेयमत्र प्रवर्तते । अतः श्चुत्वं प्रत्यल्लोपस्यासिद्धत्वाभावेन व्यवधानाभावात् श्चुत्वस्य सुलभतया निर्देशोऽयमुपपद्यते ।

यद्यपि 'कार्यकालं संज्ञापरिभाष[7]'मिति परिभाषान्तरेणेह श्चुत्वमन्तरङ्गं पुरस्कृत्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इतिपरिभाषायाः प्रवृत्तिः संभवति तथापि लक्ष्यानुरोधान्नात्र तदाश्रीयते ।

ज्ञापिताया अस्याः 'उद्देशयमनतिक्रम्य यथोद्देश्यम् । यथार्थेऽव्ययीभावः[8] । उद्देश्यपदेन ज्ञापकदेश उच्यते । स च पठितानां पाठदेशः । इतरेषां ज्ञापनदेशः ।

---

1. अष्टा. 6/4/134 ।
2. अष्टा. अष्टा. 8/4/40 ।
3. (क) व्याडि प. सू. 36 पृ. 18 तथा प. 79 पृ. 33 ।
   (ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
   (घ) नी. दी. प. वृ प. 58, पृ. 304 ।
   (ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।
   (च) भ. ना. प. शे. प. 51 पृ. 184 ।
   (छ) शेषा. प. भास्क. प. 42, पृ. 417 ।
4. अष्टा. 6/4/132 ।
5. अष्टा. 8/4/40 ।
6. अष्टा. 8/2/1 ।
7. (क) व्याडि प. पा. प. 58 पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 106 पृ. 155 ।
   (ग) सी. दे. बृ. प. बृ. प. 117 पृ. 267 ।
   (घ) नी. दी. प. वृ प. .118, पृ. 314 ।
   (ङ) ह. भा. प. भास्क. प. 119, पृ. 370 ।
   (च) भ. ना. प. शे. प. 3, पृ. 10 ।
   (ङ) शेषा. प. भास्क. प. 3, पृ. 368 ।
8. योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः, वै. सि. कौ. अव्ययीभावप्र. पृ. 408 । समाससूत्रम् - 'अव्ययं विभक्तिसमीप-समृद्धि - व्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपर्व्ययौगपद्य - सादृश्य-संपत्ति-साकल्यान्तवचनेषु' – अष्टा. 2/1/6

तमनतिक्रम्य संज्ञापरिभाषं वर्तत इत्यर्थः' । संज्ञासूत्राणि[1] सर्वोच्चारणप्रदेशे वृद्ध्यादिपदानां शक्तिं ग्राहयन्ति सर्वशास्त्रे व्यवहारं प्रवर्तयन्ते, परिभाषाश्च[2] स्वप्रदेशे स्वार्थं बोधयन्त्यः सकलप्रदेशमुपकुर्वन्ती'ति भावः । फलं चास्याः –

'राज्ञ' इत्यादौ श्चुत्वस्य 'अग्नीन्' इत्यत्र 'अणोऽप्रगृह्यस्यानुनासिकः'[3] इति वैकल्पिकानुनासिकाभावस्य च सिद्धिः । अस्या अभावे हि 'राज्ञ' इत्यादावल्लोपस्य श्चुत्वं प्रति 'असिद्धं बहिरङ्गमन्तरङ्गे'इति परिभाषाया असिद्धत्वात् श्चुत्वं न सिद्ध्येत् तथा 'अग्नी' इत्यत्र ईकारस्य 'दूराद्धूते चे'ति[4] एतस्य 'इदूदेद्द्विवचनं प्रगृह्य'मिति प्रगृह्य[5] संज्ञां प्रत्यसिद्धत्वाभावेन 'ई'दिति तपरणकरणात् प्रगृह्यसंज्ञाया अप्राप्त्या 'अणोऽप्रह्येत्यनुनासिकापत्तिर्दुर्वारा स्यात् । सत्यां त्वस्यां षाष्ठ्या अन्तरङ्गपरिभाषाया अन्तरङ्गे श्चुत्वे त्रिपादीस्थेऽप्रवृत्तौ श्चुत्वं, तथा अग्नी३ इत्यत्र संपादसप्ताध्यायीस्थां प्रगृह्यसंज्ञां प्रति त्रिपादीस्थस्य प्लुतस्यासिद्धत्वात्, ईदिति प्रगृह्यसंज्ञायाः सुलभतया अप्रगृह्यस्येति प्रतिषेधादनुनासिकस्या प्राप्त्या सुतरामनुनासिकाभावः सिद्ध्यति ॥

## 'संज्ञाप्रमाणत्वा' दिति निर्देशः

[6]'तदशिष्यं संज्ञाप्रमाणत्वा' दितिसूत्रे 'संज्ञाप्रमाणत्वा'दिति निर्देशः 'अनित्योऽयं[7] गुणेन निषेधः' इति वचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याभावे 'संज्ञाप्रमाणत्वा'दिति समासनिर्देशोऽनुपपन्नः । 'संज्ञाप्रमाणत्वा'दित्यस्य हि 'संज्ञायाः

---

1. 'वृद्धिरादैच्' –
   अष्टा. 1/1/1 - इत्यादीनि ।
2. इकोगुणवृद्धी' -
   अष्टा. 1/1/3 - इत्यादिकाः ।
3. अष्टा. 8/4/57 ।
4. अष्टा. 8/2/84 ।
5. अष्टा. 1/1/11 ।
6. अष्टा. 1/2/53 ।
7. 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' - अष्टा. 2/2/11. गुणेन सह षष्ठ्याः समासनिषेधोऽनित्य' इति वचनार्थः ।
8. तथाहि –
   (क) 'अनित्योऽयं गुणेन निषेधः, तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशात् । तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्ध्यती'त्याह भ. दी. वै. सि. कौ. तत्पुरुषसमासप्र. पृ. 428 ।
   (ख) पूरणगुण... (सू.2/2/11) । अनित्योऽयं गुणेन निषेधः । 'तदशिष्यं संज्ञाप्रमाणत्वात्' (सू. 1/2/53) इत्यादि निर्देशा'दित्याह एन. एस्. रामा. ज्ञा. सं. परि. 2. पृ. -206 ।

प्रमाणत्वं तस्मा'दिति विग्रहः, तत्र प्रमाणत्वस्य गुणत्वात् तेन सह 'षष्ठी'[1] ति सूत्रविहितस्य षष्ठीतत्पुरुषसमासस्य 'पूरणगुणे[2]'ति सूत्रेण निषेधो दुर्वारः। ज्ञापिते चास्मिन् वचने तन्निषेधस्यासार्वत्रिकतया गुणवाचिना प्रमाणत्वशब्देन षष्ठ्यन्तसंज्ञा-शब्दस्य समासः सुलभ इत्ययं निर्देशः समुपपद्यते। ज्ञापितस्यास्य वचनस्य फलं तु 'अर्थगौरवम्' बुद्धिमान्द्य'मित्यादि प्रयोगाणां साधुत्व-सिद्धिः। एतद्वचनाभावे हि गौरवमान्द्यादिशब्दानां गुणवाचकत्वेन तैः सह षष्ठ्यन्तानामर्थादिशब्दानां समासस्य 'पूरणगुणे'ति सूत्रेण निषेधो दुर्वार इति प्रयोगाणाममीषां साधुत्वं गगनकुसुमायितं भवेत्। ज्ञापिते चास्मिन् वचने सति तन्निषेधस्यात्राप्रवृत्त्या साधुत्वमेतेषां समुपपद्यते।

भट्टनागेशस्तु - 'संज्ञागतं प्रमाणत्वं संज्ञाप्रमाणत्वं तस्मा'दिति शाकपार्थिवादित्वा दुत्तरपदलोपिसमासेन[3] 'संज्ञाप्रमाणत्वात्'[4] 'लोपेचेत् पादपूरणम्'[5] इत्यादिनिर्देशानां समुपपत्तौ नामी निर्देशा 'अनित्योऽयं गुणेन निषेधः' इतिवचनस्य ज्ञापकाः। 'कृष्णैकत्व'मित्यादौ समासानुपपत्तिस्तु नापाद्या, यतः 'पङ्क्तिविंशति' सूत्रे भाष्ये 'विंशत्यादिशब्दा भाववचना भवन्ती'त्युक्त्वा गवां विंशतिर्गवां सहस्रमित्यर्थे गोविंशतिः, गोसहस्र'मित्यादिप्रयोगः कृतः' इति मनुते[6]। 'अर्थगौरव'मित्यादौ 'अर्थगतं गौरव'मिति उत्तरपदलोपिसमास एवे'ति तदाशयः।

---

1. अष्टा. 2/2/8।
2. 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'- अष्टा. 2/2/11।
3. शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' वा. वै. सि. कौ. तत्पुरुषसमास प्र. पृ. 447।
4. अष्टा. 1/2/53।
5. 'सोऽचि लोपे चेत् पादपूरणम्' – अष्टा. 6/1/134।
6. तेन हि अनित्योऽयं गुणेनेति। पूरणार्थेनेति च बोध्यम्। इत्यादीति। 'लोपे चेत् पादपूरणम्' इति आदिशब्दार्थः। तेन 'कुम्भपूरणभव' उञ्छषष्ठः' इत्यादिसिद्धम्। परे तु 'एषु कुम्भसम्बन्धिपूरणमुञ्छसम्बन्धी षष्ठ इति मध्यमपदलोपी समासः। अतएवभाष्येऽनित्यत्वं नोक्तम्। अन्यत्रास्यानभिधानम्। अतएव 'सर्वश्वेतः' इत्यादौ गुणेनेति निषेधात् कथं समास इत्याशङ्क्य 'गुणात्तरेण समासस्तरलोपश्च'इति वचनमारब्धं 'सर्वगुणे'ति सूत्रे भाष्ये। संख्याशब्दात्तु भावशब्दा इति योजनशतादौ क्रोशशतादौ गोविंशतिरित्यादौ च नायं निषेधः। तथा च 'पङ्क्तिविंशति' इति सूत्रे भाष्ये'ते एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति' इति, विंशत्यादिषु भाववचनेषु इति च। यस्तु तत्रैषां गुणवचनव्यवहारोऽपि, स तु तत्सादृश्यात्। अन्यथा धनमित्युपक्रम्य 'धनमेको गुणः' 'अपत्यमेको गुणः' इतिभाष्योक्तेः 'चैत्रधनम्' 'चैत्रापत्यम्' इत्यादि न स्यादिति वदन्ती'त्युक्तम् - ल. श. शे. तत्पुरुष समास प्र. पृ. 228।

**'सप्तम्यर्थ-मिश्रीकरणागस्त्य-कश्यप-कौशिके'ति निर्देशाः**

'ईदूतौ च सप्तम्यर्थे'[1] इति सूत्रे 'सप्तम्यर्थे' इति 'भक्ष्येण मिश्रीकरण-[2]'मितिसूत्रे 'मिश्रीकरणे'ति, 'आगस्त्यकौण्डिन्ययोरगस्ति कुण्डिनच्'[3] इति सूत्रे 'आगस्त्य-कौण्डिन्ये'ति, 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इतिसूत्रे 'काश्यपकौशिके'ति च निर्देशा 'न वर्णग्रहणेषु' इति परिभाषाया ज्ञापकाः । यतोऽस्याः परिभाषाया अभावे 'अर्थवद् ग्रहणे नानर्थकस्ये'त्युत्सर्गपरिभाषया[4] 'इको यणची'[5]ति यण् 'लक्ष्यौ'इत्यादा-वर्थवत्यचि औकारे इकिच ङीप कारे प्रवर्तेत, न तु दध्याशयतीत्यादावनर्थके आकारेऽचि इकि चे, कारे । तथा '[6]अस्य च्वा'वितीत्वम्' भवती'त्यादौ कृष्ण[7] -वाचकेऽर्थवति अकारे प्रवर्तेत न त्वनर्थके 'मिश्रीकरण'मित्यत्र रेफोत्तरेकारे, '[8]यस्ये'ति चे'त्यकारलोपोऽर्थवति अस्यापत्यम् 'इः (कामदेवः) इत्यादावेव च

---

1. अष्टा. 4/3/103 ।
2. (क) व्याडि प. सू. प. पृ. 2 ।
   (ख) पु. दे. ल. प. वृ. प. 2 पृ. 113 ।
   (ग) सी. दे. बृ. प. वृ. प. 10. पृ. 172 ।
   (घ) नी. दी. प. वृ. प. 12 पृ. 295 ।
   (ङ) ह. भा. प. भास्क. प. 10 पृ. 326 ।
   वर्णा अकारेकारादयः तद्ग्रहणे अर्थवद्ग्रहणपरिभाषा नोपतिष्ठते' इति परिभाषार्थः ।
3. तथाहि –
   (क) 'अत्र ज्ञापकम् - 'भक्ष्येण मिंश्रीकरणम्' (2/1/35) 'आगस्त्यकौण्डिन्ययोः0' (2/4/70) 'काश्यपकौशिकाभ्याम्. (4/3/103) इत्यादिनिर्देशाः 'इत्याह पु. दे. ल. प. वृ. प. 2. पृ. 113 ।
   (ख) 'अथवा' 'भक्ष्येण मिश्रीकरणम्' (2/1/35) इति निर्देशो ज्ञापकः' इत्याह सी. दे. बृ. प. वृ प. 10, पृ. 173 ।
   (ग) 'न वर्णग्रहणेषु 11 10 11 तेन दध्याशयति इत्यादौ यण् । तद्विधानं हि 'अकारो वासुदेवः स्यात् 'इत्यादिकोशप्रतिपादितात् 'अतेर्डः' इत्यादिभाष्यकार -व्युत्पादिताकारादिषु चरितार्थम् । । अत्र च 'ईदूतौ च सप्तम्यर्थे' (1/1/17) इति निर्देशो ज्ञापक इत्याहु'रित्याह ह. भा. प. भास्क. प. 10 पृ. 326 ।
4. (क) व्याडि प. सू. प. 1 पृ. 1 ।
   (ख) पु. दे. ल. प. वृ. प. 1 पृ. 112 ।
   (ग) सी. दे. बृ. प. वृ. प. 9, पृ. 170 ।
   (घ) नी. दी. प. वृ. प. 11 पृ. 295 ।
   (ङ) ह भा. प. भास्क. प. 9, पृ. 323 ।
   (च) भ. ना. प. शे. प.15, पृ. 98 ।
   (छ) शेषा. प. भास्क. प. 14 पृ. 397 ।
5. अष्टा. 6/1/77 ।
6. अष्टा. 7/2/32 ।
7. 'अकारो वासुदेवः स्यात्' अने. को. ।
8. अष्टा. 6/4/148 ।

प्रवर्तेत, न तु 'अगस्ति' शब्दघटकेऽनर्थके इकारे, अनर्थकयोः कश्यप-कुशिकयोर-कारयोस्तथा सति सूत्रेष्वेतेषु 'सप्तम्यर्थ-मिश्रीकरणागस्त्यकाश्यपकौशिके'ति निर्देशा अनुपपन्नाः । ज्ञापितायां चास्यां वर्णग्रहणेषु 'अर्थव'दिति परिभाषाया अपवादात्मिक-यानया बाधेनाप्रवृत्तौ सर्वेष्वत्रानर्थकेषु दध्यादिघटकेकारादिषु इव 'इकोयणचि' 'अस्यच्वौ' 'यस्ये ति चे'त्येतेषां प्रवृत्तेः सुलभतया निर्देशा अमी समुपपद्यन्ते । ज्ञापिताया अस्याः फलं तु 'इको यणचि' 'अस्यच्वौ' 'यस्येति चे'त्यादि सूत्राणाम् अनर्थकेऽपि इकि अचि अकारयोश्च प्रवृत्तिः । अतएव 'दध्याशयति' 'शालीभवति' दाशरथिः[1] इत्यादिप्रोगाणां साधुत्वं सिद्धयति । अस्या अभावे हि एतेषु प्रयोगेषु इकाराऽऽकाराहकाराणामनर्थकतया क्रमशस्तेषामप्राप्ते- र्दुवारतया नैतेषु क्रमशः यण:[2] ईत्वस्य अकारलोपस्य च साधुत्वं सिद्धयेत् ।

जिनेन्द्रबुद्धिस्तु[3] इटष्टकारं प्रत्याचक्षाणो वर्णग्रहणेऽपि 'अर्थवद्ग्रहणे'ति परिभाषाप्रवृत्तिं मनुते । नैतद् युक्तम् । भाष्यविरोधात् । तत्र हि 'न चैदत् वर्णग्रहणेषु भवत्यर्थवद्ग्रहणेनानर्थकस्ये'[4]त्युक्तम् । अस्य मते न केवलं भाष्यविरोध एव प्रत्युत दध्यत्रेत्यादिप्रयोगाणमसिद्धिरपि वज्रलपायते ।

भट्टनागेशो यद्यपि 'न वर्णग्रहणेषु' इति परिभाषां परिभाषेन्दुशेखरेऽव्याच-क्षाणो नेमां स्वतन्त्रां परिभाषां मनुते, तथापि वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषायाः प्रवृत्तिं लक्ष्यानुरोधात् पूर्वोक्तभाष्य - वचनप्रामाण्याच्च न स्वीकरोति[5] । न केवलं ज्ञापकसिद्धाया अस्या अपलापे बीजं नास्तीति कृत्वा परिभाषेयं पुरुषोत्तमदेव – सीरदेवाभ्यामेव स्वीकृता व्याख्याता च, किन्तु व्याडि - नीलकण्ठ -हरिभास्करैरपीयं व्याख्याता स्वीकृता चेति तत्सम्मतेदसीयज्ञापकपरिशीलनावसरे स्फुटीभविष्यति ।

---

1. 'अतइञ्' – अष्टा. 4/1/95 ।
2. अष्टा. 6/1/77।
3. इटष्टकारः 'इटोऽत्' इति विशेषाणार्थः' इति काशिकाग्रन्थं व्याचक्षाणेन अमुना हि 'ननु चासत्यप्येतस्मिन् विशेषणार्थे नैव किञ्चिदनिष्टं प्राप्नोति, 'इटोऽत्' इत्यत्र सूत्रे लिङादेशस्येटोऽद्विधानात्, ततोऽन्यस्य लिङादेशस्येकारस्यासम्भवात् । तिबाद्यवय-वोऽस्तीति चेत्? न, तस्यालादेशत्वात् । तिबादयो हि समुदाया लादेशाः, न च तदवयवा इकारादयः । अर्थवद्ग्रहणपरिभाषयाऽर्थवदिकारस्य ग्रहणे सति कुतस्तिबाद्यवयवस्य प्रसङ्गः? नहि तेऽर्थवन्तः, तिबादीनामेव समुदायानामर्थवत्त्वात् । तस्मान्न कर्तव्य एव टकारः ? सत्यं न कर्तव्य एवं प्रतिपत्तुं समर्थस्तं प्रति, यस्त्वसमर्थस्तं प्रति कर्तव्य एवेत्युक्तम् - न्या. 3/4/77 ।
4. व्या. म. भा. 3/4/1/77 ।
5. अनेन हि - इयं वर्णग्रहणे नेति 'लस्ये'त्यत्र भाष्ये स्पष्टम् । अतएवैषा विशिष्टरूपो-पादानविषयेति वृद्धाः । एतन्मूलकमेव 'येनविधि'रित्यत्र भाष्ये पठ्यतेऽलैवानर्थकेन तदन्तविधिरितीत्युक्तम् प. शे. प. 15, पृ. 99 ।

## 'समाना'मिति निर्देशः

'[1]यथासंख्यमनुदेशः समाना'मिति सूत्रे 'समाना'मिति निर्देशः 'तुल्यपर्यायस्तु नेह[2]गृह्यते' इति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावेऽर्थविशेषस्यानिर्देशात् तुल्यपर्यायस्यापि समशब्दस्य सर्वादिगणे पाठस्य दुर्वारतया तस्य 'सर्वादीनि सर्वनामानी'[4]ति सर्वनामसंज्ञायाम् 'आमि सर्वनाम्नः[5] सु'डिति सुटो निरोद्धुमशक्यत्वात् 'समेषा'मिति निर्देशस्यौचित्येन 'समाना'मिति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने तुल्यपर्यायस्य समशब्दस्यासर्वनामत्वात् सुटोऽप्राप्त्या 'समाना'मिति निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'समेऽपि बले पूर्वः परेण बाध्यते, विप्रतिषेधशास्त्रा'दित्यादिशिष्टप्रयोगाणां साधुत्व-सिद्धिः । अन्यथा सर्वादिगणे तस्य पाठो दुर्वार इति नैतेषां साधुत्वं सिद्ध्येत् ।

## 'संस्कृत'मिति निर्देशः

'संस्कृतं भक्षाः'[6] इति सूत्रे 'संस्कृत'मिति निर्देशः 'संपूर्वकस्य क्वचिदभूषणेऽपि सुडिति वचनस्य ज्ञापकः[7] । यतोऽत्र पाकादिना गुणविशेषाऽऽधानात्मके संस्कारे सुटो निर्देशोऽनुपपन्नः । '[8]संपरिभ्यां करोतौ भूषणे' 'समवाये च[9]'इत्येतत्सूत्राभ्यां हि क्रमशो भूषणे संघाते चार्थे सुडागमो विधीयते। ज्ञापिते चैतद् वचनेऽभूषणेऽप्यत्र 'संस्कृत'- मिति सुटो निर्देशः समुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः' 'भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः 'इत्यादिप्रयोगेषु भूषणसंघात-भिन्ने पाकादिना गुणविशेषाऽऽधानाऽऽत्मकेऽप्यर्थे प्रयुक्तानां संस्कृत-शब्दानां साधुत्वसिद्धिः । एतद्वचनाभावे हि सुटोऽत्रासाधुत्वान्नैषां साधुत्वं सिद्ध्येत् ।

---

1. अष्टा. 1/3/10 ।
2. 'सर्वादिगणे तुल्यपर्यायः समो न गृह्यत' इति वचनार्थः ।
3. तथाहि –
   (क) 'समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते, 'यथासंख्यमनुदेशः समाना'मिति निर्देशा'दित्याह भ. दी. वै. सि. कौ. अजन्त पुलिङ्ग प्र. पृ. 111 ।
   (ख) समः सर्वपयार्यः । तुल्य पर्यायस्तु नेह गृह्यते । यथासंख्यमनुदेशः समानाम्' (सू. 1/3/10) इति ज्ञापका'दित्याह एन. एस. रामा. ज्ञा. सं. परि. पृ. 203 ।
4. अष्टा. 1/1/27 ।
5. अष्टा. 7/1/52 ।
6. अष्टा. 4/2/16 ।
7. तथाहि–
   (क) 'संपूर्वकस्य क्वचिदभूषणेऽपि सुट्' 'संस्कृतं भक्षाः' इति ज्ञापका'दित्याह भ. दी. वै. सि. कौ. तनादि प्र. पृ. 214 ।
   (ख) संपरिभ्यां करोतौ (सू. 6/1/137) । संपूर्वकस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' (सू. 4/2/16) इति ज्ञापका'दित्याह एन. एस. रामा. ज्ञा. सं. परि. 2, पृ. 216 ।
8. अष्टा. 6/1/137 ।
9. अष्टा. 6/1/138 ।

# सूति-सूयत्योः पृथङ्निर्देशः

'स्वरति सूतिसूयति धूञूदितो वे'ति[1] सूत्रे 'सूति-सूयत्योः' पृथङ् निर्देशः 'लुगविकरणालुगविकरणयोरलुगविकरणस्यैव ग्रहणमिति, परिभाषाया[2] ज्ञापकः[3] । यतोऽत्र 'सूतिसूयत्योः पृथङ्निर्देशः'षू[4] प्रेरणे'इति-तौदादिकस्य ग्रहणाभावाय कृतः, स चास्या अभावेऽनुपपन्नः । 'सू'ङिति सामान्य निर्देशेनैव हि 'तदनुबन्धकग्रहणे

---

1. अष्टा. 7/2/44 ।
2. (क) व्या. प. सू. प. 43 पृ. 21 ।
   (ख) सी. दे. बृ. प. वृ. प. 83, पृ. 242 ।
   (ग) नी. दी. प. वृ. प. 83, पृ. 309 ।
   (घ) ह. भा. प. भास्क. प. 86, पृ. 358 ।
   (ङ) भ. न. प. शे. प. 91, पृ. 325 ।
   (ख) शेषा. प. भास्क. प. 78, पृ. 444 ।
3. (क) "लुगविकरणस्यालुगविकरणस्य च ग्रहणे लुगविकरणस्यैव ग्रहणं भवति । कथं ज्ञायते । यदयं - 'स्वरति - सूति.' (7/2/44) इत्यत्र सूति-सूयत्योर्ग्रहणं करोति, तन्निर्देशस्य प्रयोजनं सुवति - निवृत्त्यर्थः, नैतदस्ति । सूतिरिति ङानुबन्धस्यैव सूयतेरिष्यते, तेन सुवतेर्न भविष्यति । एवं सिद्धे सति यन्निर्देशं करोति तज्ज्ञापयति भवतीयं परिभाषेति ..... "इत्याह व्याडिः प. सू. प. 43, पृ. 21 ।
   (ख) "अथ किमर्थं सूति - सूयत्योः पृथग्ग्रहणं क्रियते ? सुवतेर्माभू"दित्याह - पत. व्या. म. भा. 7/2/2/44 ।
   (ग) "अथ किमर्थमिति । 'सू'ग्रहणमेव क्रियतामिति भावः । सुवतेरिति । 'अननुबन्धकग्रहणे न सानुबन्धकस्ये'ति सुवतेरेव ग्रहणं स्यात् सूङ्ग्रहणेऽपि क्रियमाणे 'लुगविकरणालुगविकरणयोरलुगविकरणस्यैव ग्रहण'मिति सूयतेरेव ग्रहणं स्यात् । अस्याश्च परिभाषायाः सूङ्ग्रहणे कर्तव्ये 'सूति-सूयत्योरि'ति भेदेनोपादानमेव ज्ञापक"मित्याह कैयटः प्रदी. 7/2/2/44 ।
   (घ) "अस्याश्चास्तित्वे 'स्वरति सूति सूयति' (7/2/44) इत्यत्र सूतिसूयत्योर्विकरणनिर्देशो ज्ञापकः - इत्याह - सी. दे. बृ. प. वृ. प. 83, पृ. 242 ।
   (ङ) "अत्र च ज्ञापकं स्वरति सूति. (7/2/44) इति सूत्रे सूतिसूयत्योः पृथङ् निर्देशः । अन्यथा सूङ् इत्येव वदे'-दित्याह नी. दी. प. वृ. प. 83, पृ. 309 ।
   (च) "ज्ञापकमत्र 'स्वरति सूति.' (7/2/44) इत्यत्र सूति सूयत्योर्विकरण निर्देशः .... इत्याह' ह. भा. प. भास्क. प. 86 पृ. 358 ।
   (छ) "ज्ञापकम् 'स्वरति सूति. (7/2/44) - इति सूत्रे सूतिसूयत्योः पृथग्ग्रहणम् । इतरथा षूङिति सानुबन्धकस्य निर्देशेनैव 'षू प्रेरणे'इतितौदादिकस्य निवृत्तिसिद्धे पृथग्ग्रहणमनर्थकंस्या"दित्याह शेषा. प. भास्क. प. 78, पृ. 444 ।
4. धा. पा. तुदा. 1409 ।

नातदनुबन्धकस्ये'[1]ति परिभाषया तौदादिकस्य [2]सुवतेर्ग्रहणाभावः सिद्धः । ज्ञापितायां चास्यां परिभाषायां सूत्रेऽस्मिन् सूङ्ग्रहणे कृते सत्यनया परिभाषया दैवादिकस्य सूयतेरेव[3] ग्रहणं स्यान् नादादिकस्य [4]सूतेरिति पृथक्पृथङ्कनिर्देशोऽयं तद्ग्रहणाय स्वांशे चरितार्थो भवति ।

अत्र **भट्टनागेशस्य** 'अस्याश्च ज्ञापकः 'स्वरति सूति' इति सूत्रे सूङिति कर्त्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः । तन्न । [5]साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवा'**दित्युक्तिर्न**[6] **युक्ता** । यतो 'द्विस्त्रिचतुरिति[7] कृत्वोऽर्थे' - इति सूत्रस्य कृत्वोऽर्थग्रहणं 'साहचर्यस्यासार्वत्रिकत्वं [8]ज्ञापयतीति इहेष्टवशात् साहचर्यस्यानाश्रयणेन कैयटोक्तं ज्ञापकत्वं चारु समुपपद्यते । किञ्च 'स्वरति धूञूदित् सुङो वेति'न्यासे साहचर्याश्रयणेऽपि दोषाभावेनेष्ट - सिद्धेः कैयटोक्तं 'सूति -सूयत्योः' पृथङ्निर्देशस्य 'लुग्विकरण'-परिभाषाज्ञापकत्वं[9] सूपपद्यते ।

अत्र – 'सूति-सूयत्योः' पृथङ्निर्देशः 'लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव ग्रहण' मित्येव ज्ञापयती'ति [10]कथनमपि न स्थाने । यतोऽत्र विपरीतार्थस्यास्य ज्ञापने [11]।'वेत्तेर्विभषे'ति सूत्रे 'वेत्ते'ति श्तिपा निर्देशोऽनुपपन्नः स्यात् । तस्य हि एतत्

---

1. (क) व्याडिः प. पा. 64, पृ. 40 ।
   (ख) पु. दे. ल. प.वृ.प. 49, पृ. 134 ।
   (ग) सी.दे. बृ.प.वृ.प. 11, पृ.266 ।
   (घ) नी.दी.प.वृ.प. 99, पृ. 311 .
   (ङ) ह.भा.प. भास्क.प. 117, पृ. 370 ।
   (च) भ.ना.प,शे.प. 112, पृ. 346 ।
   (छ) शेषा.प. भास्क. प. 95, पृ. 454 ।
2. धा. पा. 'सू प्रेरणे' 1409 ।
3. धा.पा. 'सूङ् प्राणिप्रसवे' 1132 ।
4. धा.पा. 'षू प्रसवैश्वर्ययोः' 1441 ।
5. पूर्वोत्तरयोरलुग्विकरणयोः स्वरति -धूञोः साहचर्यादित्यर्थः- ।
6. प.शे.पृ. 325 ।
7. अष्टा. 8/3/43 ।
8. तथ्यमिदं 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे 'इत्यत्र न्यासकारेण कृत्वोऽर्थग्रहणाच्चतुरो विशेषणाद् विज्ञापितम् । तस्य सार्वत्रिकत्वे हि द्विस्त्रिः शब्दयोः सुच्प्रत्ययान्ततया तत्साहचर्यात् कृत्वोऽर्थवृत्तेरेव ग्रहणं सिद्धं चतुरोऽपीति कृत्वोऽर्थग्रहणं व्यर्थम् - द्र.न्या. 8/3/43 ।
9. 'अस्याश्च परिभाषायाः सूङ्ग्रहणे कर्तव्ये 'सूति - सूयती'ति भेदेनोपादानमेव ज्ञापक- 'मित्युक्तं तेन प्रदी. 7/2/2/44 ।
10. भट्ट नागेश-ग्रन्थं व्याचक्षाणः म. म. जयदेव मिश्रः "सूति-सूयत्योः पृथङ्निर्देशस्य 'लुग्विकरणस्यैव ग्रहण'मित्यर्थज्ञापनेऽपि चारिदतार्थ्यादलुग्विकरणस्यैवेत्यर्थ ज्ञापकत्वास- म्भवात्" इत्याह प.शे. विजयायाम् पृ. 326 ।
11. अष्टा. 7/1/7 ।

प्रयोजनम्, लुग्विकरणपरिभाषया रौधादिकस्य [1]'विदविचारणे' इत्यस्य ग्रहणं माभूदिति । यदि च 'लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव ग्रहणं'मिति भवेत्तदा 'विद्' इत्यपि कृते 'विद' ज्ञाने[2] इत्यस्यैव ग्रहणं भविष्यति किं शितपा निर्देशेन ? 'यङ्लुग्निवृत्त्यर्थः श्तिपा निर्देश' इत्यपि वक्तुं न शक्यम्, यतः 'शोङो[3]रुट्' शीङोऽयङ्लुग्ग्रहणेन साहचर्याद् यङ्लुग्ग्रहणाभावः सुतरां सिद्धः ।

ज्ञापिताया अस्याः फलन्तु '[4]गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इत्यत्र पिबतेरेव[5] ग्रहणं पातेरग्रहणं[6] च । तेन 'अपात्' इत्यत्र सिचो लुग्भवति, न तु 'अपासीत्' इत्यत्र । इत्थं 'गापोष्टक्[7] - इत्यत्र अलुग्विकरणस्यैव पिबतेर्ग्रहणं न तु लुग्विकरणस्य पातेरित्याद्यपि फलमस्या उन्नेयम् ।

पुरुषोत्तमदेवस्तु 'स्वरतिसूतिसूयतिधूञूदितो वेति' सूत्रे 'सूती'-ति निर्देशः 'श्तिपि पित्कार्यं न भवत्यवश्य'मितिवचनस्य ज्ञापकः । यतः श्तिपि[8] यदि पित्कार्यमवश्यं भवेत्तर्हि '[9]सार्वधातुकमपि'दिति ङित्त्वतिदेशाप्राप्त्या 'क्ङिति[10] चे'ति गुणनिषेधासंभवात् 'सूती'ति निर्देशोऽनुपपन्नः । ज्ञापिते चास्मिन् वचने श्तिपि पित्कार्यस्य क्वचिदभावः सुलभ इति ङित्त्वातिदेशाद् गुणप्रतिषेधे 'सूती'ति निर्देशः समुपपद्यते । ज्ञापितस्य चास्य वचनस्य फलं तु 'मनुतेः'इति शिष्ट - प्रयोगे गुणाभावस्य, 'विन्ते[11]र्विन्नश्च वित्तश्चे' ति भाष्यप्रयोगे विनत्तेरिति स्थिते[12] 'श्नसोरल्लोपः' इत्यकारलोपस्य च सिद्धिरित्याह[13] । एतदपि युक्तमेव । किन्त्वत्रेदमवधेयं यत् 'सूती'ति निर्देशः 'श्तिपि क्वचित् पित्त्वाभावं बोधयन् 'लुग्विकरणालुग्विकरणयोर-

---

1. धा.पा. 1451 ।
2. धा.पा. अदा. 1064 ।
3. अष्टा. 7/1/6 ।
4. अष्टा. 2/4/77 ।
5. धा. पा. 'पा पाने' भ्वा. 925 ।
6. धा.पा. 'पा रक्षणे' अदा. 1056 ।
7. अष्टा. 7/1/6 ।
8. 'इक्श्तिपौ धातुनिर्देशे' वा. 'पचिः.' 'पचतिः इत्युदाहरणे वै.सि. कौ. उत्तरकृदन्त प्र. पृ. 565
9. अष्टा. 1/2/4 ।
10. अष्टा. 1/1/5
11. "वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः" ।
श्लो.वा.व्या.म.भा. 8/2/2/58 ।
12. अष्टा. 6/4/111 ।
13. तथाहि –
'स्वरति सूतिरिति (7/2/44) अत्र सूतीति निर्देशेन श्तिपि पित्कार्यं न भवति अवश्यमिति ज्ञापितत्वात् मनुतेरिति गुणाभावः सिद्ध्यति । तथा 'विन्तेर्विन्नश्च वित्तश्च' इत्यत्र विन्तेरिति स्थिते श्नसोरल्लोपः (6/4/111) सिद्ध्यति' इत्याह पु. दे. ज्ञा.समु.षड्विंशे सिचिपादे पृ. 90 ।

लुगविकरणस्यैव ग्रहण'मिति परिभाषाया अस्तित्वं ज्ञापयति । अन्यथा यद्यत्र विकरणनिर्देशस्य श्तिपि क्वचित् पित्त्वाभाव - ज्ञापनमेव केवलं प्रयोजनं स्यात्तदा 'सूती'ति निर्देशमकृत्वा 'सूङ्' ग्रहणमेव कृतं स्यात् 'स्वरतिसूतिसूङ्धूञूदितो वा'इति । यतोऽत्रापि सूतिसूङोरुपादानं पित्त्वाभावज्ञापनार्थं भविष्यति। 'सूतिसूयत्योर्विकरण-निर्देशस्य - 'लुगविकरणपरिभाषाज्ञापकत्वं च पुरुषोत्तमदेवसम्मतम्[1] ।

अत्र 'सूती'ति गुणाभावः सौत्रः 'इति [2]भट्टनागेशोक्तिर्न युक्ता । यतस्तन्मते एतद्वचन-ज्ञापनासंभवात् 'मनुतेः' इति शिष्ट-प्रयोगस्य 'विन्त्तेः' इति भाष्यप्रयोगस्य च साधुत्वं नोपपद्यते' 'ङिच्च पिन्न पिच्च ङिन्ने'[3] ति भाष्यवचनन्तु श्तिब्-भिन्नविषयकं 'मनुतेः' 'विनुत्तेः' इति प्रयोगदर्शनादिति मन्ये ।

## 'सेना सुराच्छाये'ति 'शाच्छोः'इति च निर्देशौ

'विभाषा सेनासुराच्छायाशालानिशाना'मिति[4] सूत्रे 'सेनासुराच्छाये'ति [5]'शाच्छो-रन्यतरस्या'मिति सूत्रे च 'शाच्छो'रिति च निर्देशौ 'दीर्घादिति[6] तुग् दीर्घस्य, न तु छस्ये'ति वचनस्य ज्ञापकौ[7] । यतोऽस्य वचनस्याभावेऽत्र 'उभयनिर्देशे [8]पञ्चमी-निर्देशो बलीया'निति परिभाषया छकारस्य तुगन्तावयवः स्यादितीमौ निर्देशावनुपपन्नौ । ज्ञापिते चास्मिन् वचनेऽनेन दीर्घस्यैवान्तावयवत्वेनात्र तुकः सुलभतया निर्देशावमू समुपपद्येते । ज्ञापितस्यास्य वचनस्य फलं तु 'चेच्छिद्यते' इत्यादौ छकार-श्रवणम् ।

---

1. अनेन हि – "अस्याश्च 'स्वरति सूति.' (7/2/44) इत्यत्र सूत्रे सूति-सूयत्योर्विकरणनिर्देशो ज्ञापकः ............ इत्युक्तम् ल.प.वृ.प. 67, 141 ।
2. ल.श.शे. भ्वादिप्र. पृ. 58 ।
3. व्या.म.भा. 3/1/4/83 ।
4. अष्टा. 2/4/25 ।
5. अष्टा. 7/4/41 ।
6. अष्टा. 6/1/75 ।
7. तथाहि –
   (क) 'दीर्घस्ये ति । अत्र च लिङ्गम् - 'शाच्छा', विभाषासेनासुराच्छाया' इत्यादि निर्देशः 'इत्याह ह. मि.पदम. 6/1/75 ।
   (ख) 'दीर्घात्' (6/1/75) दीर्घाच्छे परे तुक्स्यात् । दीर्घस्यायं तुक्, न तु छस्य । 'सेनासुराच्छाये'ति ज्ञापकादित्याह भ.दी.वै.सि.कौ. हल्सन्धि प्र पृ. 74 - 75 ।
   (ग) 'दीर्घात्' (सू. 6/1/75) ।। दीर्घस्यायं तुक् न तु छस्य । 'सेनासुराच्छाया' (सू. 2/4/25) इति ज्ञापका'दित्याह एन्. एस्. रामा. ज्ञा.सं. परि. 2, पृ. 225 ।
8. (क) पु. दे. ल. प. वृ. प. 63 पृ. 139 ।
   (ख) सी. दे. बृ. प. वृ. प. 23 पृ. 187 ।
   (ग) नी. दी. प. वृ. प. 37, पृ. 300 ।
   (घ) ह. भा. प. भास्क. प. 23 पृ. 331 ।
   (ङ) भ. ना. प. शे. प. 71, पृ. 287 ।
   (च) शेषा. प. भास्क. प. 60 'उभयनिर्देशे पञ्चमीनिर्देशो विप्रतिषेधेन' - पृ. 431 ।

एतद्वचनाभावे हि पञ्चमीनिर्देशस्य बलीयस्त्वेन 'दीर्घाद्' इति पञ्चमी 'छेचे'ति सूत्रादनुवृत्तस्य 'छे'इतिपदस्य सप्तम्याः षष्ठीं प्रकल्पयेत्, तथा सति 'दीर्घात्परस्य 'छस्य' तुक्' इति 'दीर्घात्' इति सूत्रार्थः स्यादिति छकारस्य तुगन्तावयवः स्यात्, ततश्च छिदिधातो र्यङि, द्वित्वे, हलादिशेषे अभ्यासस्य चर्त्वे 'गुणो यङ्लुको[1]'रिति अभ्यासगुणे तङि 'चेछिद्‌यते' इति स्थिते " छकारस्यान्त्यावयवे तुकि[2], तस्य चुत्वेन चकारे सति तत्पूर्वस्य छकारस्य 'खरिचे'ति[3] चर्त्वेन चकारे सति, चेच्चिद्यत इति एकारोत्तरद्विचकारकमेव रूपं स्यात्, छकारो न श्रूयेत । सति चास्मिन् वचनेऽत्र छकारात् 'दीर्घस्योपरि तुकि जश्त्वचुत्वचर्त्वेषु 'चेच्छिद्यत' इति भवति । छकारस्य खर्परकत्वाभाच्चर्त्वं न भवतीति चकाराच्छकारश्रवणमिष्टमत्र निर्बाधं सिद्ध्यति ।

## 'स्तो'रिति निर्देशः

'स्तोः श्चुना श्चु'रिति[4] सूत्रे 'स्तो'रिति निर्देशः 'अनित्यमागमशासन'मिति[5] परिभाषाया ज्ञापकः[6] । यतोऽत्र 'स् च तुश्चे'ति समाहारद्वन्द्वे[7] 'स्तु'इति [8]प्रातिपदिकात् ङसि 'इकोऽचि विभक्तौ[9]' इति नुमो दुर्वारत्वेन 'स्तुनः' इति निर्देशस्यैवौचित्यात् 'स्तो'रिति निर्देशोऽनुपपन्नः । ज्ञापितायां चास्यामागमशासन-

---

1. अष्टा. 7/4/82 ।
2. 'दीर्घात्' - अष्टा. 6/1/75 ।
3. अष्टा. 8/4/55 ।
4. अष्टा. 8/4/40 ।
5. (क) व्याडि प. सू. प. 76 पृ. 32 ।
   (ख) पु. दे. ल. प. वृ. प. 84, पृ. 149 ।
   (ग) सी. दे. वृ. प. वृ. प. 98, पृ. 254 ।
   (घ) 'आगमशास्त्रमनित्यम्' नी. दी. प. वृ. प. 87, पृ. 310 ।
   (ङ) ह. भा. प. भास्क. प. 100, पृ. 364 ।
   (च) 'आगमनशास्त्रमनित्यम्' - भ. ना. प. शे. प. 95, पृ. 328 ।
   (छ) 'अनित्यमागमानुशासनम्' शेषा. प. भास्क. प. 82, पृ. 445 ।
6. तथाहि–
   (क) 'ज्ञापितश्चायमर्थः 'स्तोः श्चुना श्चुः' (8/4/40) इत्यत्र नुममकृत्वा 'स्तोरिति निर्देशेन । अन्यथा तत्र स् च तुश्चेति समाहारद्वन्द्वे ङसि नुमि'स्तुनः' इति निर्देशः स्यात्' इत्याह पु. दे. ल. प. वृ. प. 84, पृ. 149 ।
   (ख) 'केचित्तु 'स्तोः श्चुना श्चुः' (8/4/40) इत्यकृतनुमागमनिर्देशं ज्ञापकमाहुः,' इत्याह - सी. दे. वृ. प. वृ. प. 255, पृ. 254 ।
   (ग) 'स्तोः श्चुनाश्चुः' (8/4/40) इति सूत्रे स्तोरिति निर्देशो ज्ञापक इतिसीरदेवः । अत्रनुमकरणं ज्ञापकमिति तदाशयः' इत्याह शेषा. प. भास्क. प. 82, पृ. 445 ।
7. 'चार्थे द्वन्द्वः' - अष्टा. 2/2/29 ।
8. 'कृत्तद्धितसमासाश्च' -- अष्टा. 1/2/46 ।
9 अष्टा. 7/1/73 ।

स्यानित्यतया नुमोऽत्राप्रवृत्तौ 'स्तु'शब्दस्य घिसंज्ञकतया[1] घेर्ङितीति[2] गुणे ङसिङसोश्चेति[3] पूर्वरूपे ङसेः सकारस्य रु[4]त्वविसर्गयोः[5] 'स्तो'रिति निर्देशः समुपपद्यते । ज्ञापिताया अस्याः फलं तु 'अपि शाकं पचानस्ये'त्यत्र 'आनेमुक्'इति[6] मुकोऽभावस्य, 'सागरं तर्तुमिच्छती'त्यत्र 'आर्धधातुकस्येड्वलादे'[7]रितीटोऽभावस्य च सिद्धिः ।

## 'स्तौति' 'स्था' इतीमौ निर्देशौ

उपसर्गात् सुनोतीत्यादिषु[8] सूत्रेषु 'स्तौति' 'स्थेति' निर्देशौ 'निमित्ताभावे नैमित्तिकस्याप्यभावो[9] भवती'ति परिभाषाया [10]ज्ञापकौ । यतोऽत्र 'धात्वादेः षः सः'[11] इति षकारस्य सकारेऽपि टठयोर्निवर्तकसूत्राभावान्निर्देशाविमावनुपपन्नौ । ज्ञापितायां चास्यां [12]ष्टुत्वनिमित्तस्य षकारस्याभावे नैमित्तिकस्य ष्टुत्वस्याप्यभावस्य सुलभतया

---

1. 'शेषोध्यसखि' - अष्टा. 1/4/7 ।
2. अष्टा. 7/3/111 ।
3. अष्टा. 6/1/110 ।
4. अष्टा. 7/2/82 ।
5. अष्टा. 7/2/35 ।
6. अष्टा. 7/2/82 ।
7. अष्टा. 7/2/82 ।
8. अष्टा. 7/2/35 ।
9. (क) व्याडिः प. सू. प. 40, पृ. 19 ।
   (ख) पु. दे. ल. प. वृ. प. 113, पृ. 158 ।
   (ग) सी. दे. बृ. प. वृ. प. 99, पृ. 256 ।
   (घ) नी. दी. प. वृ. प. 64, पृ. 306 ।
   (ङ) ह. भा. प. भास्क. प. 101, पृ. 365 ।
10. तथाहि–
   (क) "शास्त्रेऽपि ज्ञापकं यदयं सुनोत्यादिषु स्तौतीति - ब्रवीति । कथं कृत्वा ज्ञापकम् । अत्र 'ष्टु' इत्ययं शब्द उपदेशो पठितः । तस्य धात्वादेरिति षकारस्य सकारः कृतः षत्वनिमित्तं च ष्टुत्वम् । तस्याभावे ष्टुत्वस्याभावो भवति । ततः स्तौतीति भवति । एवं निमित्ताभावे इति सिद्ध'मित्याह व्याडिः प. सू. प. 40, पृ-. 19-20.
   (ख) "ज्ञापकं चास्यार्थस्य 'उदः स्थास्तम्भोः पूर्वस्य' (8/4/61) इत्यादौ षकारानिवृत्तौ तन्निमित्तठकारस्य थकारोच्चारणमिति निर्देशः' इत्याह पु. दे. ल. प. वृ. प. 113, पृ. 158 ।
   (ग) 'ज्ञापकं चास्याः 'उदः स्थास्तम्भोः पूर्वस्य' (8/4/61) इत्यादौ षकारनिवृत्तौ ठस्य थकारोच्चारण'मित्याह सी. दे. बृ. प. वृ. प. 99, पृ. 256 ।
   (घ) 'घुमास्था..' (6/4/66) इति निर्देशोऽपि ज्ञापकः 'इत्याह नी. दी. प. वृ. प. 64, पृ. 306 ।
   (ङ) 'अत्र ज्ञापकमपि' उदः स्थास्तम्भोः' (8/4/61) इत्यत्र 'स्था'इति निर्देशः 'इत्याह ह. भा. प. भास्क. प. 101, पृ. 365 ।
11. अष्टा. 6/1/64 ।
12. 'ष्टुना ष्टुः'––अष्टा. 8/4/41 ।

निर्देशावमू समुपपद्येते । ज्ञापिताया अस्याः फलं तु 'पपुषः' 'तस्थुषः[1]' इत्यादौ 'वसोः सम्प्रसारण'मिति[2] सम्प्रसारणेन इड्निमित्तलोपाऽभावे इटोऽप्य[3]- भावः, 'राजागमनमाचष्टे''-राजागमनायति 'इत्यत्र'आख्यानात् कृदन्ताद् णिचि कृल्लुक्[4]' इति कृतो निवृत्तौ, तन्निमित्ता षष्ठीसमासनिवृत्तिः, तथा विभक्तिनिमित्तं पदत्वं निवृत्तम्, ततश्च तन्निमित्तनलोपाभावात् 'प्रकृतिवच्च कारकम्'[5] इति प्रकृतिवत् कारकातिदेशात् नकारान्तादेव राजञ्शब्दाद् द्वितीयासिद्धिः, एवं 'स्नाती'- त्यत्र मूर्धन्याभावे णत्वनिवृत्तिः, 'पटुभार्यः' इत्यत्र ङीब्निवृत्तौ यणादेश-निवृत्तिः ।

नीलकण्ठदीक्षित-हरिभास्करौ नेमां पृथक् स्वीकुरुतः । यत इयम् 'अकृतव्यूह-परिभाषायाः [6]प्रपञ्चभूतेत्याभ्यामुक्तम् ।

## 'स्थानिव'दिति निर्देशः

'स्थानिवदादेशोऽनल्विधावि'ति सूत्रे[7] 'स्थानिव'दिति निर्देशः 'लिङ्गद्रव्यतौल्येऽपि वतिरस्ती'ति वचनस्य ज्ञापकः[8] । यतः 'स्थानिना तुल्यमादेश'इति विग्रहे 'तेन तुल्यं क्रिया[9]चेद्वतिः' इति वतिप्रत्ययस्याप्राप्त्या 'स्थानिव'दिति निर्देशोऽनुपपन्नः । 'तेनतुल्य'मिति सूत्रे क्रियाग्रहणं हि क्रियातिरिक्तगुणद्रव्यतौल्ये वतिप्रत्यय- वारणार्थं कृतम् । ज्ञापिते चास्मिन् वचने लिङ्गद्रव्यतौल्येऽपि वतेः सुलभतया निर्देशोऽयं समुपपद्यते ।

वस्तुतस्तु 'स्थानिवदादेशः' इत्यत्र 'वर्तते' इति क्रियाध्याहारात् तत्तुल्यकार्य[10]- सम्पादकतया 'तेन तुल्य'मिति वतेः 'स्थानिना तुल्यं वर्तते[11]' इति विग्रहेऽत्रैतद्वचनं

---

1. पा - स्था = धातुभ्यां लिटि तस्य क्वस्वादेशे शसि विभक्तौ रूपे ।
2. अष्टा. 6/4/131
3. आर्द्धधातुकस्येड् वलादेः' –
–अष्टा. 7/2/35 ।
4. का. 3/1/26 वा. 6 ।
5. का. 3/1/26 वा. 6 ।
6. (क) इयमपि 'अकृतव्यूहाः' (परि. 61) इत्यस्या एव प्रपञ्चः' इत्याह नी. दी. प. वृ. प. 64, पृ. 306 ।
(ख) 'वस्तुतः अकृतव्यूहपरिभाषाया एवेयं प्रपञ्चभूता' इत्याह ह. भा. प. भास्क. प. 101, पृ. 365 ।
7. अष्टा. 1/1/56 ।
8. तथाहि–
'स्थानिवदादेशः (1/1/56) इत्यत्र स्थानिवदिति निर्देशो 'लिङ्गद्रव्यतौल्येऽपि वतिरस्ती'तीत्याह पु. दे. ज्ञा. समु. प्रथमपादे पृ. 58 ।
9. अष्टा. 5/1/115 ।
10. 'तत्तुल्यकार्यत्वात्, तेन तुल्य'मित्याह जिनेन्द्रबुद्धिः न्या. 1/1/56 ।
11. स्थानिना तुल्यं वर्तत इति स्थानिव'दित्याह जया. का. 1/1/56 ।

विनापि सुलभतया 'स्थानिव'दिति निर्देशः समुपपन्न इति नास्य निर्देशस्योक्तवचनज्ञापकत्वं युक्तम् । नापि च लिङ्गद्रव्यतौल्ये क्वचन वतेः प्रयोगो दृग्गोचरतामञ्चति । तस्मात् पुरुषोत्तमदेवमात्रेण स्वीकृतमस्य निर्देशस्योक्तवचनज्ञापकत्वं न समीचीनमिति मन्ये ।

## 'स्पर्धाया'मिति निर्देशः

'[1]स्पर्धायामाङः' इति सूत्रे 'स्पर्धाया'मिति निर्देशः 'निमित्तकार्य[2] न तन्निमित्तस्ये'ति परिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्राचः परस्य रेफस्य यर्त्वेन '[4]अनचि चे'ति द्वित्वस्य दुर्वारतया निर्देशोऽयमनुपपन्नः । ज्ञापितायां चास्यामनयात्र द्वित्वाप्राप्त्या अकृतद्विर्वचननिर्देशोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'कुण्डं रथेन' इत्यादौ रेफस्य द्वित्वाभावः । अन्यथानुस्वारस्याच्त्वात् ततः परस्य रेफस्य यर्त्वेन 'अनचि चे'ति द्वित्वापत्तिरत्र दुर्वारा स्यात् । '[5]अचो रहाभ्यांद्वे ' इत्यत्र रेफस्य द्वित्वनिमित्तायाः साक्षाच्छ्रुततया तया कार्यित्वस्य बाधादेवात्र द्वित्वाभावः सुलभ इति ज्ञापकाभावात् फलाभावाच्च नान्यः[6] कश्चिदिमां परिभाषां मनुते ।

## 'हितं भक्षाः' इति निर्देशः

[7]'तस्ये'त्यस्याधिकारे 'हितं[8] भक्षा' इति निर्देशो हितयोगे षष्ठी अस्ति' इति वचनस्य [9]ज्ञापकः । यतो हितयोगे षष्ठ्या अभावात् तस्येत्यधिकारे 'हितं भक्षा'इति निर्देशोऽनुपपन्नः । हितयोगे हि चतुर्थ्यात्र भवितव्यम्, 'तस्मै[10] हित'मिति निर्देशेन हित-योगे चतुर्थी भवतीत्युपसंख्यानात् । ज्ञापिते चास्मिन् वचने तस्येत्यधिकारे

---

1. अष्टा. 1/3/31 ।
2. पु. दे. ल. प. वृ. प. 94, पृ. 151 ।
3. तथाहि–
   'ज्ञापकं चात्र .................... 'स्पर्धायामाङः' (1/1/31) इति ................. 'अनचि च' (8/4/47) इति द्विर्वचनाकरण''मित्याह पु. दे. ल. प. वृ. प. 94, पृ. 151 ।
4. अष्टा. 8/4/47 ।
5. अष्टा. 8/4/46 ।
6. पुरुषोत्तमदेवव्यतिरिक्त इत्यर्थः ।
7. 'तदस्य पण्यम्'-4/4/51 ।
8. अष्टा. 4/4/65 ।
9. तथाहि–
   ''तस्येत्यधिकारे (4/4/51) हितं भक्षा इति (4/4/65) निर्देशो ज्ञापकः हितयोगे षष्ठी अस्तीति । तेन प्रमाद्यद्-गुणिनां हिते'इति भट्टिप्रयोगः (xvii-31) सिद्ध्यती''त्याह पुरुषोत्तमदेवः ज्ञा. समु. षोडशे ठक्पादे पृ. 781
10. अष्टा. 5/1/5 ।

निर्देशोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'प्रमाद्यद् [1]गुणिनां हिते' इति भट्टिप्रयोगे 'गुणिना'मिति षष्ठ्याः साधुत्वम् ।

ज्ञापकमिदं भाष्यप्रतिकूलम् । यतस्तत्र 'हितं भक्षा इति चतुर्थीनिर्देशः' । हितं भक्षा इति चतुर्थीनिर्देशः कर्त्तव्यः । इतरथा ह्यनिर्देशः । इतरथा हि निर्देशो न भवति । हितयोगे चतुर्थी भवति सा प्राप्नोति । स तर्हि चतुर्थीनिर्देशः कर्त्तव्यः ? न कर्त्तव्यः । एवं वक्ष्यामि-'हितं भक्षास्तदस्मै' 'दीयते नियुक्तम्'तदस्मा इति' [2]इत्युक्तम् ।

तथ्यमिदं हरदत्तमिश्रो[3]ऽपि स्वीकुरुते । [4]जयादित्य-[5]भट्टोजिदीक्षित-[6]वासुदेव-दीक्षित-[7]ज्ञानेन्द्रभिक्षु-[8]जिनेन्द्रबुद्धयस्तु 'तस्ये'त्यधिकारषष्ठ्या हितयोगाच्चतुर्थ्या विपरिणामं स्वीकुर्वन्त्यत्र निर्देशे । तस्मात् केवलं पुरुषोत्तमदेवो ज्ञापकतामस्य निर्देशस्य भट्टिप्रयोग-साधुत्वाय स्वीकुरुते ।

## 'ह्रदे'ति निर्देशः

[9]कन्थापलदनगरग्रामह्रदोत्तरपदा'दिति सूत्रे 'ह्रदे'ति निर्देशः [10]'निमित्तकार्यं न तन्निमित्तस्ये'ति परिभाषाया [11]ज्ञापकः । यतोऽस्या अभावेऽत्र हकारोत्तररेफस्य

---

1. पद्यांशोऽयं भट्टिकाव्यस्य समुद्धृतः पु. दे. ज्ञा. समु. षोडशे ठक्पादे पृ. 78 ।
2. व्या. म. भा. 4/4/1/65 ।
3. अनेन हि–'अपर आह–'हितं भक्षास्तदस्मै'इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्'इति तदस्मा एवे'ति इत्युक्तम्–प. म. 4/4/65 ।
4. अनेन हि–
'ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीत्युक्तम्–का. 4/4/65 ।
5. अनेन हि–
'हितं भक्षाः । अपूपभक्षणं हितमस्मै आपूपिकः 'इत्युक्तम्–वै. सि. कौ. ठगधिकारप्र. पृ. 683 ।
6. अनेन हि–
'हितं भक्षाः । 'अस्ये'ति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै' इत्यस्यापकर्षो वे'त्युक्तम्-वा. मनो. ठगधिकारे पृ. 684
7. अनेन हि–
'हितं भक्षाः । 'अस्ये'ति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै' इत्यस्यापकर्षो वेत्याशयेनाह–'अपूपभक्षणं हितमस्मा इति', इत्युक्तम्–त. बो. ठगधिकारप्र. पृ. 684 ।
8. अनेन हि–
'ननु हितयोगे चतुर्थ्या भवितव्यम्, 'हितयोगे चतुर्थी भवति' इत्युपसंख्यानात् 'तस्मैहितमिति निर्देशात् ? सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति । सामर्थ्यं पुनस्तदेवोपसंख्यानम् । लिङ्गं च–हितार्था क्रिया तद्धितवृत्तावन्तर्भवति, तेन प्रयुज्यत इति 'इत्युक्तम्–न्या. 4/4/65 ।
9. अष्टा. 4/2/142 ।
10. पु. दे. ल. प. वृ. प. 94, पृ. 151 ।
11. तथाहि–
'ज्ञापकं चात्र 'ग्रामह्रदोत्तरपदात्' (4/2/142) इति..... 'अचोरहाभ्यां द्वे' (8/4/46) इति द्विर्वचनाकरण'मित्याह पु. दे. ल. प. वृ. प. 94, पृ. 151 ।

[1]'अचोरहाभ्यां द्वे' इति द्वित्वस्य दुर्वारतया तदकृत्वा ह्रदेति निर्देशोऽनुपपन्नः । ज्ञापितायां चास्यामनया द्वित्वस्याप्राप्त्या निर्देशोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'मद्रह्रदः' 'भद्रह्रदः' इत्यादौ हकारपरकस्य रेफस्य यर्त्वेऽपि 'अचो रहाभ्यां द्वे'इति वैकल्पिकस्यापि द्वित्वस्याभावः । साक्षाच्छ्रुतेन निमित्तभावेन कार्यित्वस्य बाधाद् 'मद्रह्रदः' इत्यादौ रेफस्य द्वित्वाप्राप्त्या फलाभावान्नैषा परिभाषा [2]भाष्यसम्मतेति [3]नान्यः कश्चिदिमां मनुते । पुरुषोत्तमदेवोक्तमप्यस्य निर्देशस्य ज्ञापकत्वं न युक्तम् । यतो 'हलो यमां[4] यमि लोपः' इति रेफलोपेन 'सर्वत्र [5]शाकल्यस्ये'ति द्वित्वप्रतिषेधेन च परिभाषामिमां विनापि निर्देशः समुपपद्यते ।

## (ख) ज्ञापका अर्थ-निर्देशाः

'परौ भुवोऽवज्ञाने'[6] 'मृषस्तितिक्षायाम्'[7] 'सेधतेर्गतौ'[8]इत्येतेषु सूत्रेषु 'कुर्द खुर्द गुर्द [9]क्रीडायामेवेति' भीमसेनकृतार्थनिर्देशे च क्रमशः 'अवज्ञाने' 'तितिक्षा- याम्'– 'गतौ,'तितिक्षायामेव' इत्यर्थनिर्देशाः "अनेकार्था अपि धातवः" इति वचनस्य [10]ज्ञापकाः । तथाहि–

---

1. अष्टा. 8/4/46 ।
2. तत्रहि–
   'नैमौ रहौ कार्यिणौ द्विर्वचनस्य । किं तर्हि ? । निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा– ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति । नेदानीं तौ भुञ्जाते"–इत्युक्तम्–व्या. म. भा. 1/1/2–हयवरट् 5/
3. पुरुषोत्तमदेवव्यतिरिक्त इत्यर्थः ।
4. अष्टा. 8/4/64 ।
5. अष्टा. 8/4/51 ।
6. अष्टा. 3/3/55 ।
7. अष्टा. 1/2/20 ।
8. अष्टा. 8/3/113 ।
9. धा. पा. भ्वा. 21, 22, 23, 24 ।
10. तथाहि–
    (क) 'परिभाव्येति=तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् प्राचामुक्तीस्तिरस्कृत्येत्यर्थः, मुनित्रयोक्तीर्विचार्येत्यर्थो वा, 'परिभावस्तिरस्क्रिये'ति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकं, धातूनामनेकार्थकत्वात् । अतएव-'परौ भुवोऽवज्ञाने'इति सङ्गच्छते । इत्याह– भ. ना. ल. श. शे. संज्ञा प्र. पृ. ४ ।
    (ख) सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गोभवतीत्यादावुत्पद्यत इत्याद्यर्थात् ....... इत्यादिग्रन्थे 'अनेकार्था अपि धातवः'–इति सूचयति-भ. दी. वै. सि. कौ. भ्वा. प्र. पृ. 33 ।
    (ग) इदमेव तितिक्षाग्रहणं ज्ञापकम्–'अनेकार्था धातव'इति । अन्यथा मृषस्तितिक्षायामेव पठ्यते, इति तदपार्थकं स्यात्' इत्याह– ह. मि. पदम. 1/2/20 ।

[1]'परा'विति सूत्रस्य परीत्युपपदे अवहेलनवृत्तेर्भूधातोर्वा घञ्स्यादित्यर्थः। 'परीभावः' 'परिभवः' इत्युदाहरणम्। नहि भूधातुरवज्ञानेऽर्थे पठितः, किन्तु 'भू सत्ताया'[2]मिति सत्तार्थे एवे'त्यवज्ञाने'इत्यर्थनिर्देशोऽनुपपन्नः सन् 'अनेकार्था अपि धातवः' इति वचनं ज्ञापयति। सति चास्मिन् वचने भुवोऽवज्ञानार्थस्यापि सम्भवादवज्ञानाऽर्थवृत्तेर्भुवो वा घञ्प्रत्ययोत्पादाय तदन्यार्थे तदनुत्पादाय च 'अवज्ञान'इत्यर्थ निर्देशः समुपपद्यते।

इत्थं 'मृषस्तितिक्षाया'[3]मिति सूत्रे 'तितिक्षाया'मित्यर्थनिर्देशोऽपि 'अनेकार्था अपि धातव' इति वचनं ज्ञापयति। यतो 'मृष'धातुस्तितिक्षायामेव [4]पठितः–इत्यन्यार्थकस्य तस्याभावेन 'तितिक्षाया'मित्यर्थ निर्देशोऽनुपपन्नः। सति चास्मिन् वचने [5]'अपमृषितं वाक्यमाहे'त्यत्र सेटो निष्ठायाः कित्त्वप्रतिषेधाप्रवृत्तये 'तितिक्षाया'मित्यर्थनिर्देशः समुपपद्यते।

अथ 'मृषु [6]सेचने' मृषू सहने[7] चे'ति पाठदर्शनात्तत्र सेचनार्थकमृषतेर्व्यवच्छेदाय 'तितिक्षाया'मित्यर्थनिर्देशस्याऽऽवश्यकतया नायमर्थनिर्देशो ज्ञापक इति शङ्कनीयम्, यतस्तस्योदित्तया [8]'ऊदितो वे'ति क्त्वाप्रत्यये परतो विभाषया इडागमो विहित इति तस्मान्निष्ठाप्रत्ययस्य [9]'यस्य विभाषे'ति इणूनिषेधात् सेट्कनिष्ठात्वाभावात् तत्र [10]'मृष' इति कित्त्वप्रतिषेधस्य स्वतोऽप्रवृत्त्या, न सेचनार्थक 'मृष्' धातु'स्तिति-

(घ) "अपमृष्टमिति=अपरामृष्टमित्यर्थः, अनेकार्थकत्वाद्धातूनाम्। अनेकार्थत्वन्तु तितिक्षाग्रहणाद् विज्ञायते। असति हि तत्र मृषस्तितिक्षायामेव पठ्यत इति तत्र कुर्यात्, व्यवच्छेद्याभावात्"–इत्याह जि. बु. न्या. 1/2/20।

(ङ) 'मृषस्तितिक्षायामित्यत्र सूत्रे (1/2/20) अर्थनिर्देशो ज्ञापयति–'अनेकार्था हि धातव' इति। तेन कृञः स्थापनार्थत्वे घृतं पात्रे कुर्विति सिद्ध्यती'त्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62।

(च) 'सेधतेर्गतौ'इति सूत्रे गतावित्येतदपि षिधगत्यामित्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेत्याह ज्ञा. भि. त. बो. भ्वा. प्र. पृ. 33।

(छ) सत्ताद्यर्थनिर्देशश्चोपलक्षणमिति=एतच्च सत्ताद्यर्थ-निर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र 'कुर्द खुर्द गुर्द क्रीडायामेवे'त्येवकारो ज्ञापयतः'इत्याह–ज्ञा.भि. त. वो. भ्वा. प्र. पृ. 33।

1. अष्टा. 3/3/55।
2. धा. पा. भ्वा. 1।
3. अष्टा. 1/2/20।
4. मृषतितिक्षायाम्' धा. पा. दि. 1164, चुरा. 1850।
5. 'अपरामृष्ट'मित्यर्थः इत्याह जि. बु. न्या. 1/2/20।
6. धा. पा. भ्वा. 707।
7. धा. पा. भ्वा. 707।
8. अष्टा. 7/2/56।
9. अष्टा. 7/2/15।
10. अष्टा. 1/2/20।

क्षे'त्यर्थनिर्देशस्य व्यवच्छेद्यं भवितुमर्हति । मृषेर्धातोः तितिक्षायामर्थे निष्ठा सेण् न किद्भवती'ति सूत्रार्थः, 'मर्षितः 'मर्षितवान्' इति तदुदाहरणम्, 'अपमृषितं वाक्यमाहे'ति तत्प्रत्युदाहरणं च हि प्रसिद्धचरम् ।

इत्थमेव [1]'सेधतेर्गता'विति सूत्रे 'गता'वित्यर्थनिर्देशः 'अनेकार्था अपि धातव'इति वचनं ज्ञापयति । यतः [2]'षिध गत्या'मिति पाठात् सेधतेर्गतिभिन्नार्थकस्याभावेन तद्व्यवच्छेद्यालाभाद् 'गता'वित्यर्थनिर्देशोऽनुपपन्नः । सति चास्मिन् वचने 'शिष्यमकार्यात् प्रतिषेधयति' 'विप्रतिषेधः'–इत्यादौ 'उपसर्गात्[3] सुनोती'ति प्राप्तस्य षत्वस्य प्रतिषेधाभावाय 'गता' वित्यर्थनिर्देशः समुपपद्यते । प्रकृतसूत्रस्य हि 'गतौ वर्तमानस्य सेधतेः सकारस्य मूर्द्धन्याऽऽदेशो न [4]भवती'त्यर्थः, 'अभिसेधयति गाः' 'परिसेधयति गाः' 'गङ्गां विसेधति'इत्याद्युदाहरणम्, 'शिष्यमकार्यात् प्रतिषेधयती'ति प्रत्युदाहरणं च प्रसिद्धचरम् ।

वस्तुतस्तु 'सेधतेर्गता'विति सूत्रे 'गता'वित्यर्थनिर्देशस्य ज्ञापकत्वं न युक्तम् । यतोऽसौ 'षिधू शास्त्रे [5]माङ्गल्ये चे'ति शास्त्रं (शासनं) माङ्गल्यार्थकस्य षिधूधातोर्गतिभिन्नार्थकत्वेन तत्रोपसर्गयोगे–[6]'उपसर्गात् सुनोती'ति प्राप्तस्य षत्वस्य निषेधाभावाय 'गता'वित्यर्थनिर्देशो ज्ञाप्यैतद्वचनं विनापि चरितार्थम् । अथात्र 'उपसर्गात् सुनोती'त्यत्र 'सेध' इत्यकारानुबन्धोच्चारणात् 'षिधू'इत्यूकारानुबद्धस्य [7]'तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभाषया–ग्रहणाभावात् सोपसर्गात् 'षिधू' धातोः षत्वमेव न प्राप्नोति तत्र तन्निषेधाभावाय 'गता'वित्यर्थनिर्देशो नावश्यक इति युक्तमेवास्यार्थनिर्देशस्य प्रकृतवचनज्ञापकत्वमिति कथनमपि न स्थाने । यतः 'उपसर्गात् सुनोति'ति सूत्रे 'सेध'इत्यकारानुबन्धानुबद्धोच्चारणं न कृतं, किन्तु शपानिर्देशः 'सेधे'ति । स च

---

1. अष्टा. 8/3/111 ।
2. धा. पा. भ्वा. 47 ।
3. उपसर्गात् सुनीति सुवति स्यति स्तौति स्तोभति स्थासेनय सेध सिच सञ्ज स्वञ्जाम्–अष्टा. 8/3/65 ।
4. का. 8/3/111 ।
5. धा. पा: भ्वा. 48 ।
6. अष्टा. 8/3/65 ।
7. (क) व्याडि प. पा. 54, पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 38, पृ. 128 ।
   (ग) सी. दे. बृ. प. वृ प. 52, पृ. 220 ।
   (घ) भ. ना. प. शे. प. 83, पृ. 307 ।
   (ङ) नी. दी. प. वृ. 70, पृ. 307 ।
   (च) ह. भा. प. भास्क. प. 54, पृ. 346 ।
   (छ) शेषा. प. भास्क. प. 70, पृ. 438 ।

शपा निर्देशः 'षिधु [1]संशुद्धौ' इत्यस्य निवृत्त्यर्थो यङ्लुक्निवृत्त्यर्थश्चेति [2]जिनेन्द्रबुद्धि-[3]हरदत्तमिश्र-[4]ज्ञानेन्द्रभिक्षु-[5]वासुदेवदीक्षिताः स्पष्टमाहुः । भट्टनागेशेन च 'सत्ताद्यर्थनिर्देशश्चोपलक्षण'मिति भट्टोजिदीक्षितस्य वैयाकरणसिद्धान्तकौमुदीग्रन्थं प्रमापयितुम् 'अनेकार्था अपि धातवो भवन्ती'ति भाष्यमत्र मानमित्युक्तं, 'सेधतेर्गता'विति सूत्रे 'गतौ'इत्युपादानात्'षिध गत्या'मित्यर्थनिर्देशोऽपाणिनीय इति बोध्यमिति चोक्तम्[6] । एवं भीमसेनकृतार्थनिर्देशे 'क्रीडायामेवे'त्येतद्घटक एवकारश्च धातूनामनेकार्थत्वं सूचयति । यत एतद्वचनाभावे तत्र एवेत्यनुपपन्नम् ।

ज्ञापिते वचनेऽस्मिन् 'अपि'पदप्रवेशो [7]भाष्य-प्रामाण्यात् कृतः । अपि पदं हि 'प्रयोगानुसारेणैव धातूनामनेकार्थत्व'मित्यवबोधाय सार्थकम् । पुरुषोत्तमदेवस्त्वत्र 'अपि'-पदस्थाने 'हि'-पदं [8]प्रायुङ्क्त । तन्न युक्तम् । उक्तयुक्तेः ।

अस्य वचनस्य फलं तु वृद्ध्यर्थे [9]'चीयते' इति चिञः, विचारार्थे 'परि-भाव्ये'ति[10] भुवः, स्थापनार्थे 'घृतं पात्रे कुरु[11]' इति कृञः प्रयोगस्य च साधुत्वोप-पत्तिः । अस्य वचनस्याभावे[12] हि नैतेषां प्रयोगाणां साधुत्वमुपपद्येत । अतएव 'अनादरः परिभवः परीभावस्तिरस्क्रिये'ति कोशोऽपि सङ्गच्छते । न चात्र कोशाद्यस्य तिरस्कारार्थकत्वं भवतेर्न तस्य विचारार्थकत्वं, यस्य च भावयते-विचारार्थकत्वं न तस्य कोशात्तिरस्कारार्थकत्वं, परिपूर्वकाद् भवतेर्ण्यन्तादेव हि तिरस्कार-प्रतीतिर्भवति नान्यस्मादित्यपि शङ्कनीयम्[13] । यतः परिभूय, परिभवतीत्यादितोऽपि नूनं तिरस्कारोऽर्थः प्रतीयते ।

---

1. धा. पा. दिवा. 1192 ।
2. न्या. 8/3/65 ।
3. पदम. 8/3/65 ।
4. त. बो. भ्वा. प्र. पृ. 56 ।
5. वा. मनो. भ्वा. प्र. पृ. 56 ।
6. ल. श. शे. भ्वा. प्र. पृ. 33 ।
7. "बह्वर्था अपि धातवो भवन्ती'ति । तद्यथा 'वपिः प्रकिरणे दृष्टः, छेदने चापि वर्तते'केशश्मश्रु- वपती'ति । इडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणेचापिवर्तते-'अग्निर्वा इतोवृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ती'ति .........इत्याह-पत. 1/3/1/1 ।
8. 'ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62 ।
9. 'चीयते वालिशस्यापि सत्क्षेत्रपतिता कृषिः' । इतिप्रायुङ्क्त महाकविर्विशाखदत्तो मुद्रारा. ।
10. 'मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च' । इति प्रायुङ्क्त-भ. दी. वै. सि. कौ. संज्ञाप्र. पृ. ।
11. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62 ।
12. अम. को. 1/7/22 ।
13. वै. सि. कौ. भ्वा. प्र. पृ. 33, 34 ।

न चैतद्वचनस्वीकारे प्रभवत्यादौ तत्तदर्थप्रतीतिसाधनाय तत्तदुपसर्गप्रयोग-वैयर्थ्यमति वाच्यम्, तत्र तत्र प्रयुज्यमानानां प्राद्युपसर्गाणामर्थ-विशेषद्योतकत्वेन सार्थक्यात् । तदुक्तम्–'उपसर्गास्त्वर्थ-विशेषस्ये द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्तप्रतीते-रिति ।

**'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।**
**प्रहाराहारसंहारविहारपरिहारवत्[1]"** ॥ **इति ।**

अथ कथमुपसर्गाणां द्योतकत्वम् ? इति चेद्, इत्थम् । 'अनुभूयते सुख'मित्यत्र योऽनुभवोऽर्थः–प्रतीयते, स कस्यार्थः ? न तावदनोः, अनुगच्छती'त्यादावपि तत्प्रतीत्यापत्तेः । किन्तु 'भू'धातोरेवासावर्थः । अतएवात्र कर्मणि लकारः सिद्ध्यति । अन्यथा 'भू'धातोः सकर्मकत्वाभावात् स न सिद्ध्येत् । सकर्मकत्वं हि 'फल-व्यधिकरणव्यापारवाचकत्वम्[2] । अतएवोक्तम्–"एधवृद्धौ । अकर्मकः । 'लज्जा-सत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः' । इत्यभियुक्तोते"[3]रिति । अकर्मकत्वं हि 'फलसमानाधिकरण-व्यापारवाचकत्वम्[4] । तस्माद् द्योतकत्वेमेवोपसर्गाणाम् । अत्रोपसर्गेत्युपलक्षणं, निपातमात्रस्य द्योतकत्वात् ।

कथं निपातमात्रस्य द्योतकत्वम् ? इति चेत्, इत्थमं । 'साक्षात् क्रियते गुरु'रित्यत्र साक्षात्काररूपफलस्य धात्वर्थत्वेन सकर्मकत्वात् कर्मणि लकारदर्शनं 'साक्षा'दिति निपातस्य द्योतकत्वं साधयति । तस्य वाचकत्वे हि साक्षात्कारस्य 'कृ'-धात्वर्थत्वाभावेनात्र कर्मणि लकारो न दृश्यते ।

नाप्यत्र 'अनुभू'-'साक्षात्कृ'इत्यनयोरुपसर्ग-निपातान्यतरविशिष्टयोरेवार्थावनुभव-साक्षात्काराविति वक्तुं शक्यते । यतस्तयोर्भ्वादिगणे पाठो नास्ति । तत्र पाठाभावे च

---

1. हरिकारिका-उद्धृता वै. सि. कौ. भ्वा. प्र. पृ. 33, 34 ।
अत्र-प्रहारः=कशाद्याघातः, आहारः=भक्षणम्, संहारः-वधः, विहारः=क्रीडा, परिहारः= परित्यागः ॥
'स्यादाभाषणमालापः प्रलपोऽनर्थकं वचः ।
अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ।
सुप्रलापः सुवचनमपलापस्तु निह्नवः ॥ इति च । अम. को. 1/6/15-17 ।
2. परम. ल. म. कारकविचारे पृ. 180 ।
3. ल. श. शे. भ्वा. प्र. पृ. 33-34 ।
4. परम ल. मं. कारकविचारे पृ. 180 ।

तयोर्धातुत्वमेव न सिद्ध्येत् । 'भूवादयो [1]धातवः' इत्यनेन हि भ्वादिगणपठितानां क्रियावाचिनामेवाऽऽचार्यो धातुसंज्ञामाह ।

अत्र तार्किकाः—'साक्षात्प्रत्यक्षतुल्ययो'रिति कोशात्, नमःपदेन 'देवाय नमः'[2] इत्यादौ नमस्काररूपार्थस्य, दानावसरे 'गवे नमः' इत्यादौ पूजारूपार्थस्य च प्रसिद्धेः, उपसर्गाणां द्योतकत्वं, तदितरनिपातानां वाचकत्व'मिति [3]वदन्ति । नैषा तार्कि-कोक्तिर्युक्ता, यतो वैषम्ये बीजं नास्ति । यदि च पूर्वोक्तः कोशः, पूर्वोक्ते प्रसिद्धी च निपातानां वाचकत्वे बीजानीति तार्किकैरुच्येत, तर्ह्यपि 'साक्षात्क्रियते गुरु'रित्यत्र नामार्थधात्वर्थयो र्भेदसम्बन्धेन साक्षादन्वयस्याव्युत्पन्नतया अनुकूलत्वसम्बन्धेन निपात-वाच्यसाक्षात्कारस्य 'कृ'धात्वर्थव्यापारेऽन्वयो दुर्लभः । यद्यपि पूर्वोक्तव्युत्पत्ति-घटकनाम्नि निपातेतरत्वं निवेश्य 'निपातेतरनामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयोऽ-व्युत्पन्नः 'इतिन्यायस्वरूपं स्वीकुर्वद्भिस्तार्किकैर्निपातधात्वर्थयोर्भेदसम्बन्धेनान्वयो न्यायाविरुद्धः साधयितुं शक्यते, तथापि निपातार्थ-साक्षात्काररूपफलाऽऽश्रयत्वेन गुरोः कर्मत्वं दुर्लभम् । यतः स्वजन्यत्व-स्ववाचकधातुवाच्यत्वैतदुभयसम्बन्धेन प्रकृत-धात्वर्थ-व्यापार-विशिष्टफलवत्वप्रकारिकेच्छाविषयस्यैव 'कर्तुरीप्सिततमं[4] कर्मे'ति कर्मत्वं 'हरिं भजती'त्यत्र हरौ दरीदृश्यते, न तु 'वृक्षाद्गच्छति खगः' इत्यत्र वृक्षे कर्मत्वं जातुचिदपि दृग्गोचरतामञ्चति ।

अयमाशयः—स्व- (भजनानुकूलव्यापार)जन्यत्व, स्व- (भजनानुकूलव्यापार)-वाचकधातु- (भज्) वाच्यत्वसम्बन्धाभ्यां प्रकृत- (भज्) धात्वर्थव्यापार-(भजनानुकूल-व्यापार) विशिष्टफलवत्त्वप्रकारिकेच्छायाः (हरिर्मद्वृत्तिभजनानुकूलव्यापारजन्यभज-नाऽऽश्रयो भवत्वित्याकारिकायाः) विषयत्वं यथा हरौ विद्यते, न तथा वृक्षे । यतः खगवृत्तेः मद्वृत्तिसंयोगानुकूल-व्यापार-जन्यविभागाऽऽश्रयो वृक्षो भवत्वित्याकारिकाया इच्छाया विषयत्वस्य वृक्षे सत्त्वेऽपि विभागस्य प्रकृत-(गम्) धात्ववाच्यतया विभागरूपं फलं स्ववाचकधातुवाच्यत्वसम्बन्धेन प्रकृतधात्वर्थव्यापारविशिष्टं नभवति । इत्थं विभागरूपफले स्वजन्यत्वसम्बन्धेन प्रकृतधात्वर्थव्यापारविशिष्टत्वस्य सत्त्वेऽपि स्ववाचकधातु(गम्)वाच्यत्वसम्बन्धेन व्यापारविशिष्टत्वं नास्तीति निरुक्तोभयसम्बन्धेन प्रकृत- (गम्)धात्वर्थव्यापारविशिष्टफलवत्त्वप्रकारिकेच्छाविषयत्वं वृक्षे नं विद्यते । तस्माद् यथा 'वृक्षाद् गच्छति खगः' इत्यत्र वृक्षस्य न भवति कर्मत्वं तथैव 'साक्षात् क्रियते गुरुः'—इत्यत्र गुरोः निपातार्थसाक्षात्काररूपफलवत्त्वप्रकारिकेच्छाविषयत्वेऽपि प्रकृत- (कृ)धात्वर्थव्यापारविशिष्टफलवत्त्वप्रकारिकेच्छाविषयत्वाभावात् निपातानां

1. अष्टा. 1/3/1 ।
2. अम. को. 3/3/244 ।
3. मतमिदं भट्टनागेशेन समुपन्यस्य निराकृतं—परम ल. म. निपातार्थविचारे पृ. 115 ।
4. अष्टा. 1/4/49 ।

वाचकत्वे कर्मत्वं न भवेत् । नहि साक्षात्कारस्य निपातार्थत्वे गुरौ स्ववाचकधातु-(कृ) वाच्यत्वसम्बन्धेन प्रकृतधात्वर्थव्यापारविशिष्टत्वं तार्किकैरुपपादयितुं शक्यम् ।

उपसर्ग-निपातयोर्द्योतकत्वं भर्तृहरि[1]-कैयट[2]-भट्टोजिदीक्षित[3]-कौण्डभट्ट[4]-भट्ट-नागेश-[5] प्रमुखैः पाणिनीयव्याकरणाचार्यैः स्वस्वग्रन्थेषु चारु निरूपितमेवेति नेह वितन्यते ।

उपसर्गनिपातयोर्द्योतकत्वं पूर्वमीमांसावार्तिककारोऽपि[6] मुक्तकण्ठं स्वीकरोति । यतस्तेनोक्तम्–

'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ।।
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते[7] ।। इति ।

---

1. 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराऽऽहारसंहारविहारपरिहारवत् ।।" इयं भर्तृहरिकारिका भट्टोजिदीक्षितेन समुद्धृता वै. सि. कौ. भ्वा. प्र. पृ. 34 ।
अत्र-उपसर्गपदं निपातोपलक्षणं, धातुपदं पदान्तरस्येति व्याचख्यौ कौण्डभट्टः वै. भू. सा. निपातार्थ प्र. पृ. 387 । यथोपसर्गसमभिव्याहाराद्धात्वर्थोऽन्यः प्रतीयते, तद्वन्निपातसमभि-व्याहारबला'च्चन्द्र इव मुख'मित्यत्र पदान्तरस्य चन्द्रस्य चन्द्रसदृशरूपोऽर्थः प्रतीयते'इति तदाशयः ।
2. निपातानां द्योतकत्वं वाक्यपदीये निर्णीत'मित्याह कै. प्रदी. 1/1/1, पृ. 3 ।
3. तथाहि–
(क) 'अथ शब्दानुशासनमिति=अथ शब्दः प्रारम्भस्य द्योतको, न तु वाचको निपातत्वादुपसर्गवत् । न च तेऽपि वाचका एवेति वाच्यम्, उपास्यते गुरुरनुभूयते सुखमित्यादौ धातोः सकर्मकक्रियापरत्वं विना कर्मणि लकारायोगेन वाचकत्वे स्थिते उपसर्गाणां द्योतकत्वस्यैव युक्तत्वात् । ननूक्तयुक्त्यास्तूपसर्गाणां द्योतकता, निपातान्तरं तु वाचकमेवेति चेन्न, 'साक्षात् क्रियते' 'अलङ्क्रियते' 'ऊरीक्रियते' इत्यादौ कर्मणि लकारेण कर्मीभूतस्य गुर्वादेरभिधानसिद्धये धात्वर्थं प्रति कर्मत्वस्य वाच्यत्वात् । उपसर्गत्वापेक्षया निपातत्वस्याधिक-देश-वृत्तितया तदवच्छेदेनैव द्योतकताकल्पनाच्च, सामान्ये प्रमाणां पक्षपातात्.... इत्याह भ. दी. श. कौ. 1/1/1।
(ख) 'द्योतकाः प्रादयो येन निपाताश्चादयस्तथा । उपास्येते हरिहरौ लकारो दृश्यते यथा ।।" इति चासावाह वै. भू. का. 41, वै. भू. सा. निपातार्थनिर्णय प्र. ।
4. 'किं च प्रादीनां वाचकत्वे भूयान् प्रकर्षः, कीदृशो निश्चय इति वद् 'भूयान् प्र' 'कीदृशो नि'रित्यपि स्यात् । अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव द्योतकता तेषा'मित्याह कौ. भ. वै. भू. सा. निपातार्थनिर्णयप्र. ।
5. 'प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्यान्यार्थं नीयमानदध्यादिवन्मङ्गलमपीत्युभयार्थमथ-शब्दः प्रयुज्यते इति फलित'मित्याह भ. ना. उद्यो. 1/1/1 ।
6. श्लोकवार्तिकप्रणेता कुमारिलभट्ट इत्यर्थः ।
7. मी. द. सू. 1/3/10/35, इमे भट्टकारिके कौण्डभट्टेन समुद्धृते वै. भू. सा. निपातार्थनिर्णय-प्र. । अत्रायं विचारः –

इत्थं पूर्वोक्तसूत्रस्थाभ्याम् 'अवज्ञाने' - 'तितिक्षायाम्' इत्यर्थनिर्देशाभ्यां 'क्रीडाया-मेवे'ति धात्वर्थनिर्देशघटकैवकारनिवेशेन च ज्ञापितम् 'अनेकार्था अपि धातव' इति भाष्योक्तं वचनं प्रमाणप्रयोजनाभ्यां समुपपन्नम् ।



इमे च कारिके इत्थं व्याचख्यौ शङ्करशास्त्री-'चतुर्विधे'इत्यस्य 'नामाख्यातोपसर्गनिपातात्मके' इत्यर्थः । 'पदे' इत्यस्य 'सुबन्ततिङन्तरूपे'इत्यर्थः । द्विविधस्य 'नामाख्यातभेदेन द्विः प्रकारकस्य' अर्थनिर्णयः क्रियते । नामाख्यातयोरर्थनिर्णये हेतुमाह-संशयोत्पत्ते'रिति । नामार्थो जातिर्वा व्यक्तिर्वा ? धात्वर्थो व्यापारमात्रं वा, फलमात्रं वा, फलानुकूलव्यापारो वेति संशयोत्पत्तेर्निरूपणस्यावश्यकत्वादित्याशयः । 'नोपसर्गनिपातयो'रित्यस्य'उपसर्गनिपातयोरर्थ-निरूपणं न क्रियते'इत्यर्थः । तयोरर्थानिरूपणे हेतुमाह–'तयोरिति'–तयोरुपसर्गनिपातयोः, अर्थप्रतिपादने शक्तिलक्षणान्यतरवृत्त्यार्थबोधकत्वं नास्तीत्यर्थः । शक्तिलक्षणान्यतरव्यापाराभावं वदता तयोर्द्योतकत्वेनार्थबोधकत्वं सूचितमित्याशयेनाह-यदर्थद्योतकाविति । 'तौ'–उपसर्गनिपा-तौ । यदर्थेति यन्नामाख्यातान्यतरविशेषार्थविषयकवृत्तिग्रहजनकौ 'स' नामाख्यातात्मकः शब्दो वाचको विचार्यते, इत्यर्थ, इति । वै. भू. सा. शाङ्करीव्याख्यायां निपातार्थ- निर्णयप्र. पृ. 386-387 ।

# चतुर्थोऽध्यायः

## (क) ज्ञापको नुमनुषक्तधातुपाठः

भगवान् पाणिनिर्धातु - पाठं[1] व्यरचयत्[2] । तत्र केचन नुमनुंषक्ता धातवः पठिताः । तत्रेरितानां केषांचन नुमनुषक्तानां धातूनां पाठः स्वसार्थक्याय परिभाषा-व्यतिरिक्तं किमपि वचनं ज्ञापयती'ति 'ज्ञापको नुमनुषक्तधातुपाठ' इत्यसावुच्यते । तस्य ज्ञापकत्वमत्र निरूप्यते –

धातु पाठे - 'उ बुन्दिर्[3] निशामने' 'स्कन्दिर्[4] गतिशोषणयोः ' – इत्येवं नुमनुषक्तानां धातूनां पाठः 'इरितामिदित्कार्यं ने'ति वचनस्य ज्ञापकः[5] । यतोऽस्य वचनस्याऽभावे धातुपाठे नुमनुषक्तानामेषां पाठो व्यर्थः । इदित्त्वादेवैषां हि नुम्[6] सुलभः । न च 'इर उपसंख्यान'मिति[7] वार्तिकेन 'रुधिर्[8]'प्रभृतीनां धातूनामिर इत्संज्ञा वार्तिककृता 'अरुन्धत्'[9] - इत्यादौ 'इरितो वे' त्यङ्ः[10] सिद्धये प्रोक्तेति इरित्त्वमेषां न तु इदित्त्वमिति नात्र नुम् सुलभ इति नुमनुषक्तानामेषां पाठो न व्यर्थ इति शङ्क्यम् । यतो भाष्यकारेण अकारस्य [11]'उपदेशेऽजनुनासिक इत्' - इत्यनेन

---

1. (क) 'भूवादयो धातवः' - अष्टा. 1/3/1 ।
   (ख) 'क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमिति कौ. भ. वै. भू. सा. धा. प्र. पृ. 96 ।
2. "इति पाणिनिमुनिविरचितो धातुपाठः "-इति धा. पाठे अन्तिमा पुष्पिका हि दरीदृश्यते ।
3. मत्पुस्तकस्य धातुपाठे नास्य पाठो दृश्यते ।
4. धा. पा. भ्वा. 979 ।
5. तथाहि –
   (क) "अथवाऽऽचार्थप्रवृत्तिर्ज्ञापयति - 'नैवं जातीयकानामिदिद्विधिर्भवती'ति यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति - 'उवुरिन्दर् निशामने' स्कन्दिर्गतिशोषणयोः "अथवाचार्य प्रवृत्तिर्ज्ञापयति 'इर्शब्दस्येत्संज्ञाभवती'ति यदयमिदितो वेत्याह" - इत्याह पत. व्या. 1. भा. 1/3/7 ।
   (ख) " चुटू (1/3/7) । उन्दिर् निशामने' 'स्कन्दिर्गतिशोषणयोः' इत्यादीनां केषांचित् इरितां नुमनुषातानां पाठो ज्ञापयति नैवंजातीयकानामिदिद्विधिर्भवतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 147 ।
6. 'इदितोनुम्धातोः' - अष्टा. 7/1/158 ।
7. वा. व्या. म. भा. 1/3/1/7 ।
8. 'रुधिर् आवरणे' धा. पा. रुधा. 1439 ।
9. 'रुचे र्लुङि प्रथमपुरुषैकवचने रूपम् ।
10. अष्टा. 3/1/57 ।
11. अष्टा. 1/3/2 ।

रेफस्य च [1]'हलन्त्य'मित्यनेनैवेत्संज्ञासिद्धिं परिलक्ष्य 'अवयवयोः प्रत्येकमित्संज्ञयैव सिद्धौ 'इर्' इति समुदायस्येत्संज्ञार्थमारब्धस्य 'इर उपसंख्यान'मिति वार्तिकस्य प्रत्याख्यानं[2] कृतम् । ज्ञापिते चास्मिन् वचनेऽनेन इदित्त्वान्नुमोऽ[3]त्राऽप्राप्त्या तत्र न-कारश्रवणार्थमेषां धातुपाठे नुमनुषक्तपाठः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [4]'भेत्ते'त्यादौ [5]नुमापत्तेरभावः । अस्य वचनस्याऽसत्त्वे हि [6]भिदेरपीदित्त्वान्नुमापत्तिर्दुर्वारा स्यात् । अथ भाष्यसम्मतमिदं ज्ञापकत्वं न तु वार्तिकसम्मतम्, इति चेद्, ओमिति ब्रूमः । 'यथोत्तरं मुनीनां [7]प्रामाण्य'मित्युक्तेः नुमनुषक्तधातुपाठस्थ - ज्ञापकत्वमत्रार्थे हि युक्तम् । कैयटस्तु[8] ज्ञापकान्तरेणाऽ-प्यर्थमिमं साधितवान् ।

## (ख) 'ज्ञापक'-परिगणनम्'

## '[9]एतिस्तुशास्वृदृजुषः क्यप्'

परिगणनमिदं 'न धातुमात्रात्[10] क्यब् भवती'ति वचनस्य ज्ञापकम् ।[11] यतोऽस्य वचनस्याभावे व्यर्थमिदम् । तथाहि - यदि धातुमात्रात् क्यप् स्यात् तर्हि 'एतिस्तु' - इत्यादिभ्योऽपि, [12]'हनस्त चे'त्यनेनैव क्यपः सुलभतया परिगणनमिदं

---

1. अष्टा. 1/3/3 ।
2. व्या. म. भा. 1/3/1/7 ।
3. 'इदितो नुम्धातोः' अष्टा. 7/1/58 ।
4. 'भिदिर् विदारणे' धा. पा. रुधा. 1440, इति भिद्धातोर्लुटि प्रथमपुरुषैकवचने, तृचि वा रूपम् ।
5. 'इदितो नुम्धातोः' अष्टा. 7/1/58 ।
6. 'भिदिर् विदारणे' धा. पा. रुधा. 1440 ।
7. "यथोत्तरं हि मुनित्रयस्य प्रामाण्य"मित्याह कै. प्रदी. 1/1/6/28 । "यथोत्तरमिति । उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं चेदं 'धिन्विकृण्व्यो'रिति सूत्रे भाष्ये" इति चाह भ. ना. उद्यो. 1/1/6/28 ।
8. "अनेन हि - 'न दृश'इति वसादेशनिषेधेनाऽपीरितामिदित्कार्याऽभावो ज्ञायते । अन्यथा दृशेरिदित्त्वान्नुमि सति इगुपधत्वाभावात् प्राप्तिरेव क्सस्य नास्तीति किं तन्निषेधेन" - इत्युक्तम् प्रदी. 1/3/1/7 ।
9. अष्टा. 3/1/109 ।
10. 'सर्वस्माद्धातो'रित्यर्थः ।
11. तथाहि –
    (क) "यद्येवं 'हनस्त च' - धातोः क्यब्भवती'ति धातुमात्रात् क्यप् प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति - 'न धातुमात्रात् क्यब्भवती'ति यदयमेतिस्तुशास्वृदृजुषः क्यबिति परिगणनं करोती"त्याह पत. व्या. म. भा. 3/1/1/1 पृ. 9 ।
    (ख) "प्रत्ययः (सू. 3/1/1) । 'एतिस्तुशास्वृदृजुषः - क्यप्' - इति परिगणनं ज्ञापयति न धातुमात्रात् क्यबिती"-त्याह एन्. एस्. रामा. ज्ञा. सं. परि. - 1/3 पृ. 158 ।
12. अष्टा. 3/1/108 ।

व्यर्थम् । न च 'हनस्त चे'त्यनेन 'हन्'[1]धातोरेव क्यप् विहित इति न धातुमात्रात् क्यप्राप्नोतीति शङ्क्यम् । यतो 'हनस्त चे'ति सूत्रे 'हनः' इति षष्ठ्याः तकार-रूपविकारेणान्वितत्वात् चकारेण [2]पूर्वसूत्रात् अनुकृष्यमाणस्य क्यपः प्रति संबन्ध-निर्देशात् क्यब्विधानानुपपत्तिमाशङ्क्य, तत्र 'धातोः'[3] इति पञ्चम्यन्तं पदमनुवर्तते, अतः हनस्तकारो भवति, धातोः क्यब् भवतीति सूत्रार्थो भगवता स्वीकृतः[4] । ज्ञापिते चास्मिन् वचने 'एतिस्तु' इत्यादिभ्य एव क्यब् भवतु माभूद्भूप्रभृतिभ्यो धातुभ्य इत्येतदर्थं परिगणनमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु भवितुं योग्य इत्यर्थे 'भूयः' 'इत्याद्यनिष्टप्रयोगाणामापत्तेः परिहारः । अस्याऽसत्त्वे हि भाष्यसम्मतसूत्रार्थे [5]'हनस्त चे'ति क्यपोऽत्र दुर्वारतया 'भूयः' इत्याद्यनिष्टापत्तिरपरिहार्या स्यात् ।

## (ग) ज्ञापिका भाष्योक्तयः

व्याकरण - महाभाष्ये[6] भगवतः श्रीपतञ्जलेः काश्चिदीदृशा उक्तयः समुप-लभ्यन्ते, या आत्मनः समुपपत्तये किंचन परिभाषारूपं, तदंशान्, परिभाषाव्यतिरिक्तं किंचन वचनं वा ज्ञापयन्ति । ता एवोक्तयो ज्ञापिका भाष्योक्तयः । कासाञ्चन तासां ज्ञापकत्वमिह यथाक्रमं निरूप्यते । तत्र–

### अज्ग्रहणस्यैतत्प्रयोजनम्, इह माभूत् 'जेघ्रीयते' 'देध्मीयते' इति भाष्योक्तिः

'द्विर्वचनेऽची'ति[7] सूत्रे भाष्ये भगवतः 'अज्ग्रहणस्यैतत्प्रयोजनम् – इह माभूत् 'जेघ्रीयते' 'देध्मीयते' [8]इत्युक्तिः 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' इत्यस्याः सम्पूर्णायाः परिभाषाया [9]ज्ञापिका । यतो 'द्विर्वचनेऽची'ति सूत्रे अज्ग्रहणाभावे द्वित्वनिमित्तो 'यङ्' प्रत्ययस्तन्निमित्तकोऽजादेशः 'ईघ्राध्मो[10]'रिति विहित ईकारः, तस्य निषेधे प्रथमं घ्राशब्दस्य द्वित्वे कृते अभ्यासे एकारश्रवणं न

---

1. 'हन हिंसागत्योः' धा. पा. अदा. 1012 ।
2. 'वदः सुपि क्यप्च' अष्टा. 3/1/106 ।
3. अष्टा. 3/1/91 ।
4. व्या. म. भा. 3/1/1/1 पृ. ।
5. अष्टा. 3/1/108 ।
6. "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
   स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"
   इति लिङ्गादिसंग्रहटीकायां भरतः - श. क. दु. भागः - 3 पृ. 509 ।
7. अष्टा. 1/1/59 ।
8. व्या. म. भा. 1/1/8 ।
9. 'द्विर्वचनेऽचि'इत्यत्र भाष्ये ध्वनितैषा' इत्याह - भ. ना. प. शे. प. 11, पृ. 50 ।
10. अष्टा. 7/4/31 ।

स्यात्, कृते तु अज्ग्रहणे द्वित्वनिमित्तस्य यङोऽच्त्वाभावद् 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तावीत्वे कृते सति द्वित्वे 'जेघ्रीयते' 'देध्मीयते' इति सिद्ध्यतीति भाष्याशयः । 'कार्यमनुभवन्नि'त्यस्याः परिभाषाया अभावे हि 'जेघ्रीयते' 'देध्मीयते'इत्यत्र 'सन्यङो'रित्यस्य षष्ठ्यन्तत्वाद् उद्देश्यदल-प्रविष्टषष्ठ्यन्त-पदप्रयोज्य-विषयता-रूपद्वित्वकार्यिताया यङ्यपि सत्त्वेन "कार्यी निमित्ततया नाश्रीयते' इति द्वित्व-निमित्तत्वाभावेऽज्ग्रहणाभावेऽपि दोषाभावेन 'अज्' ग्रहणस्य फलदानपरा 'इह माभूत् - 'जेघ्रीयते' 'देध्मीयते'इति भाष्योक्तिर्नोपपद्यते । न च 'कार्यी निमित्ततया नाश्रीयते' इत्यंशमात्रेऽपि मानाभावः शङ्क्यः, यतः 'स्थण्डिलाच्छयितरि व्रते'[1] इतिसूत्रे 'शयितरी'ति निर्देश एव तत्र मानम् । ज्ञापिताया अस्याः सत्त्वे तु यङस्तत्र द्वित्वकार्यित्वेऽपि कार्यानुभवकर्तृत्वाभावेन 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' इत्यस्याऽप्रवृत्त्या ईत्वनिषेधाऽऽपत्तिर्दुर्वारेति भाष्योक्तिरियमुपपद्यते । अत्र 'वृक्षः प्रचलन् सहावयवैः प्रचलती'ति न्यायेन 'घ्राय्' इत्यस्य द्वित्वादवयवद्वारा यङोऽपि कार्यानुभवकर्तृत्वमिति शङ्का तु न कार्या । यतः 'स्वरान्तरे व्यञ्जनान्युत्तरस्ये'ति न्यायेनात्र 'घ्रा'शब्दस्यैव द्वित्वं भवति । नापि चात्र [2]'द्विर्वचनेऽची'ति सूत्रे 'प्रत्यय इति[3] वक्ष्यामी' ति भाष्याद् 'द्विर्वचनेऽची'ति सूत्रस्य प्रत्ययघटकाच्पर्याप्तनिमित्तताकाऽऽदेशो नेत्येवार्थः स्वीकरणीयः, तथा सति 'जेघ्रीयते' 'देध्मीयते'इत्यत्र 'दिर्वचनेऽची'त्यस्य प्राप्तिरेव नास्ति । नहि 'घ्रा' 'ध्मा'-घटकावाकारौ प्रत्ययौ, इति परिभाषाया अस्या अभावेऽपि द्वित्वात्पूर्वं घ्राध्माघटकाऽऽकारयोः 'ईघ्राध्मो[4]'रितीत्वस्य सुलभतया नेयं भाष्योक्तिरेतत्परिभाषा-"ज्ञापिके"ति शङ्का कार्या । यतोऽज्ग्रहणस्य 'जेघ्रीयते' 'देध्मीयते' इति प्रत्युदाहरणदानोत्तरं 'प्रत्यय इति वक्ष्यामी'त्यस्य भाष्ये निरूपणेन प्रत्युदाहरणकाले च 'प्रत्यय'इत्यस्याज्ञानेन तादृशप्रत्युदाहरणदानपरं भाष्यं कार्यमनुभवन्निति परिभाषासत्त्वे एव समुपपन्नं भवति ।

अपि चात्र 'प्रत्यय'इत्यंशोऽप्येतत्परिभाषामूलकमेव विद्यते । यतोऽस्याः सत्त्वे तादृशः प्रत्यय एव सम्भवति । अतः 'प्रत्यय इति वक्ष्यामी'ति यदुक्तं भाष्ये तदपि परिभाषामूलकमेवेति मन्ये । तस्मादज्ग्रहणप्रत्युदाहरणपरेयं भाष्योक्तिरेतत्परिभाषा-ज्ञापिकेति निश्चिनुमः । ज्ञापिताया अस्या असाधारणं फलं तु 'उर्णुनविषती'त्यादि प्रयोगाणां सिद्धिः । यतोऽत्र 'द्विर्वचनेऽची'ति सूत्रबलेन 'नु' शब्दस्य द्वित्वं

---

1. अष्टा. 4/2/15 ।
2. अष्टा. 1/1/59 ।
3. व्या. म. भा. 1/1/8/59 ।
4. अष्टा. 7/4/31 ।

परिभाषामिमां विना न सिद्धयेत् । अस्या अभावे हि [1]'सन्यङो'रित्यस्य षष्ट्यन्तत्वात् सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाऽभावाद् 'द्विर्वचनेऽची'त्यस्य प्राप्तिरेव नास्ति । सत्यां चाऽस्यां परिभाषायां 'द्वित्वनिमित्तघटकेऽचि परे द्वित्व-निमित्तघटकोऽजादेशो न स्याद् द्वित्वे कर्त्तव्ये'इति सूत्रार्थात् प्रकृते द्वित्वनिमित्त-घटकस्य 'इस्'शब्दस्य कार्यित्वेऽपि कार्याऽनुभवकर्तृत्वाभावेन निषेधविषयत्वं सूपपद्यते ।

### "अर्द्ध एकार अर्द्ध ओकारो वा नास्ति यदि हि तौस्या तां तावेवोपदिशे"दिति भाष्योक्तिः[2]

इयं भाष्योक्तिः [3]'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इति परिभाषाया ज्ञापिका[4] । यतोऽस्या अभावे नेयमुपपद्यते । ज्ञापितायां चास्यां 'यदि तौ स्यातां तावेवोपदिशे'दित्युक्तिरुपपद्यते । ज्ञापिताया अस्याःफलं तु पाणिनि-सूत्राणां भाष्यकृत्कृतानां प्रत्याख्यानानामौचित्यसिद्धिः । अन्यथा नैषां सिद्ध्येदौचित्यम् । 'ङमो [5]ङस्वादचि ङमुण् नित्य'मिति सूत्रेऽचीत्यस्य स्थानेऽच इत्यनुक्तेरौचित्यसिद्धिरप्यस्याः फलम् । एवमन्यान्यपि फलान्यूह्यानि ।

### ऌकारस्य लपरत्वं वक्ष्यामीति[6] भाष्योक्ति :

भाष्योक्तिरियं 'लण्[7]सूत्रेऽकार इ'दिति वचनस्य ज्ञापिका[8] । तथाहि ——— 'तुल्यास्य-प्रयत्नं[9] सवर्णम्' इति सूत्रे भाष्ये[10] "ऋऌवर्णयोः सावर्ण्य-विधिः" इति सवर्णसंज्ञा-वार्तिकं स्वीकुर्वता तत्रभवता भगवता 'यदि तर्हि अकार-ग्रहणेन ऌकारग्रहणं सन्निहितं भवति – 'उरण्[11] रपरः' ऌकारस्य रपरत्वं प्राप्नोति'

---

1. अष्टा. 6/1/9 ।
2. व्या. म. भा. 1/1/2 मा. सू. 3, 4 ।
3. भ. ना. प. शे. प. 134, पृ. 366 ।
4. तथाहि –
   " 'ए ओङ्' 'ऐ औच्' सूत्रयोर्ध्वनितैषा भाष्ये"
   – इत्याह भ. ना. प. शे. . 134, पृ. 366 ।
5. अष्टा. 8/3/32 ।
6. म. भा. 1/1/4/9 ।
7. मा. सू. 6 ।
8. लणूसूत्रेऽकारश्चेति भट्टोजिदीक्षितः ।
   वै. सि. कौ. सं. प्र. (पृ. 4) ।
9. अष्टा. 1/1/9 ।
10. म. भा. 1/2/4/9 ।
11. अष्टा. 1/1/51 ।

इत्याशङ्क्य 'लृकारस्य लपरत्वं वक्ष्यामी'त्युक्तम्[1] । अत्र हि 'तवल्कारः' इत्यादौ तव + लृकार इत्यवस्थायाम् 'आद्गुणः' इति अकारलृकारयोर्गुणैकाऽऽदेशेऽकारे तस्य रपरत्वं माभूदित्येतदर्थं या 'लृकारस्य लपरत्वं वक्ष्यामी'ति भाष्योक्तिः सा 'लण्' सूत्रेऽकार इदिति वचनं विना नोपपद्यते । अत इयं भाष्योक्तिरुक्तवचनं ज्ञापयति । सति तु वचने 'र' प्रत्याहारस्य सिद्ध्या 'उरण् रपरः' इत्यत्र 'र'शब्देन रेफलकारोभयस्योपस्थापनात् 'कृष्णर्द्धि'रित्यत्रान्तरतम्याद् अरः, 'तवल्कार' इत्यत्रान्तरतम्यादलश्च सुलभतया सवर्णसंज्ञा-वचनाभ्युपगमः श्रेयानिति स्वीकुर्वतो भगवतः 'लपरत्वं वक्ष्यामी'त्युक्तिः समुपपन्ना भवति । तवल्कार इत्यादौ लपरत्व-सिद्धिश्चास्य वचनस्य फलम् ।

न च 'लृकारस्य लपरत्वं वक्ष्यमिति भाष्यस्य 'लृकारस्याण्-लपर' इति वचनं करिष्यामीत्यर्थः, अतो नेयं भाष्योक्तिरुक्तवचनज्ञापिकेति शङ्कनीयम् । यतः सम्पूर्णभाष्ये क्वापि तादृश-वचनं नोपलंभ्यते । अतएव 'लपरत्वं वक्ष्यामी'ति भाष्यं व्याचक्षाणः कैयटः "लपरत्वमिति । व्याख्यास्यामीत्यर्थः । रपर इत्यत्र 'र' इति लणिति लकाराकारेण प्रत्याहार आश्रीयते । अत्राऽऽन्तरतम्यादृकारस्याण् रपरः, लृकारस्य लपरः — इत्याह[2] ।

लण्घटकस्य अकारस्य अनुनासिकत्वं वामन-जयादित्यौ जिनेन्द्र-बुद्धिः हरदत्तो भट्टोजिदीक्षितश्च मन्वते । यतः, "लकारोत्तरस्त्वनुनासिकः प्रतिज्ञायते, तेन 'उरण् रपरः' इत्यत्र प्रत्याहार-ग्रहणाल्लपरत्वमपि भवती[3]"त्याह जयादित्यः, "ऋकारलृकारयोः सवर्णसंज्ञोपसंख्यानादृकारो गृह्यमाणो लृकारमपि गृह्णाति, ततः 'उरण् रपरः' इति यथा ऋकारस्याण् शिष्यमाणो रपरो भवति, एवं लृकारस्याऽपि भवेत्, लपरश्चेष्यते । तस्मादनुनासिकः प्रतिज्ञायते । तेना'दिरन्त्येन सहेता' इति 'उरण् रपरः' इत्यत्र 'र' इति प्रत्याहार-ग्रहणं भवति, रेफात्प्रभृत्यालणोऽकारात् । तस्मिंश्च सति ऋकारस्याण् रपरः भवति, लृकाररस्य च लपर इति । अतः 'तवल्कारः 'इत्याद्युपपन्नं भवती"[4]त्याह जिनेन्द्रबुद्धिः । "ऋकारलृकारयोः सवर्णसंज्ञाया उपसंख्यानाद् ऋकारः लृकारमपि गृह्णाति, ततश्च 'उरण् रपरः' इति लृकारस्याप्यण् रपरः स्याद्, लपरश्चेष्यते, तस्मादनुनासिकः प्रतिज्ञायते । तेन ऋकारस्याण् रपरः, लृकारस्य तु लपर इति तवल्कार इति सिद्धं भवती"[5]त्याह

1. अष्टा. 6/1/87 ।
2. प्रदी. 1/1/4/9 ।
3. का. लण् मा. सू. 6 ।
4. न्या. लण्. मा. सू. 6 ।
5 पदम. लण् मा. सू. 6 ।

हरदत्त मिश्रः । 'लण् सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः सञ्ज्ञे"[1]त्याह भट्टोजिदीक्षितः । 'लण्सूत्रे तिष्ठतीति लण्सूत्रस्थः, स चासाववर्णश्च लण्सूत्र-स्थावर्णः, तेन सहोच्चार्यमाणो रेफो 'र' इत्येवंरूपो रेफलकारयोः संज्ञेति तदर्थः ।

अथ लृकारस्य लपरत्वं वक्ष्यामीतिभाष्योक्ति 'र्लण्सूत्रेऽकार इदि'ति वचनस्य ज्ञापिकेति स्वाकीरेऽपि 'र' प्रत्याहारो गगनकुसुमायितः[2] । प्रत्याहार-शब्दस्य हि प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति व्युत्पत्त्या 'आदिरन्त्येन सहेते'तिसूत्रकृतासु अणादिसंज्ञासु योगरूढिः , योगमात्र-स्वीकारे तु 'अणुदि'[3]त्सूत्र-सिद्धासु 'अ' 'इ' 'उ'- इत्यादिसंज्ञास्वतिप्रसङ्गः स्यात् । तदुक्तं भट्टोजिदीक्षितेन – 'आदिरन्त्येने-त्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते'[4] इति । इत्थं लणोऽकारस्य पूर्वोक्तभाष्योक्तिज्ञापनेनेत्त्वेऽपि 'आदिरन्त्येन[5] सहेते'तिसूत्रस्थाभ्याम् आद्यन्त-शब्दाभ्यां रेफाऽकारयोर्ग्रहणं कर्तुं न शक्यते, इमौ हि न माहेश्वर-सूत्रयोराद्यन्तौ । सत्येवं कुतो 'र'प्रत्याहारसिद्धिः । तदसिद्धौ चोक्तज्ञापनेऽपि लृकारस्य 'लपरत्वं वक्ष्यामी'ति भाष्योक्तिरुन्मत्तप्रलपिततामेति" इति शङ्का तु न कार्या । यतः - 'आदिरन्त्येन सहेते'ति सूत्रे माहेश्वरसूत्रापेक्षं पाणिनि - सूत्रापेक्षं वा आदित्वम् अन्तत्वं च न विवक्षितं किन्तु माहेश्वरसूत्रसदृशस्य 'तत्तत्संज्ञाकोटि-प्रविष्टाभ्याम् आद्यन्तवर्णाभ्याम् आक्षिप्तस्य बुद्धिपरिकल्पितस्य तत्तत्-समुदायस्याऽऽदित्वमन्तत्वं च विवक्षितम् । अस्ति च प्रकृते आद्यन्ताभ्यां रेफाऽकाराभ्यामाक्षिप्तो बुद्धि-परिकल्पितो माहेश्वर-सूत्रानुसारी 'रट्ल' इति समुदायः' तस्य चाऽऽदयन्तत्वे रेफाऽकारयोः स्पष्टे इति सिद्धो 'र' प्रत्याहारः । "अत्राऽकारस्य 'रट्ल' इति समुदायान्त्यस्योपदेशत्व-विरहाद् इत्त्वं न स्यात्, भाष्योक्तिज्ञापनेन हि 'लण्'सूत्रा-ऽकारस्यैवेत्त्वं लभ्यते, तथा सति अन्त्येन इता सहोच्चार्यमाण आदी 'र'इति वक्तुं न शक्यते चेत्तर्हि पुना रप्रत्याहारो गगमकुसुमायित इत्यपि शङ्का नोचिता । यतः – 'आदिरन्त्येन सहेता' इति सूत्रे 'इता' इत्यस्य इत्सदृशेनेत्यर्थः पाणिनिसम्मतः । अस्ति च लणोऽकारसादृश्यं 'रट्ल' इति समुदायाऽन्त्यस्य अकारस्येति सर्वथा सिद्धो रप्रत्याहारः । न च 'आदिरन्त्येन सहेता'[6] इत्यत्र 'आदि'रित्यस्य आदिसदृश इत्यर्थः, 'इता' इत्यस्य इत्सदृशेनेत्यर्थः, सूत्रापेक्षमिह आदित्वमन्तत्वं न विविक्षितं, किन्तु आद्यन्तशब्दाऽऽक्षिप्तसमुदायापेक्षं तद् विवक्षितमिति सर्वमप्रामाणिकं 'र'

---

1. वै. सि. कौ. सं. ज्ञा. प्र. पृ. 6 ।
2. अष्टा. 1/1/71 ।
3. अष्टा. 1/1/67 ।
4. वै. सि. कौ. संज्ञा प्र. पृ. 7 ।
5. अष्टा. 1/1/71 ।
6. अष्टा. 1/1/71 ।

प्रत्याहाराभ्युपगमाऽऽग्रहंनिबन्धनं च । नहि पाणिनिसम्मतं तदिति वाच्यम्, यतोऽन्यथा 'इच्' 'उक्' 'इच्' मयित्यादि-प्रत्याहारा न सिद्ध्येयुः, नहि इकारादीनां सूत्राऽऽदित्वं सहस्रमुखोऽपि वक्तुं जातुचिदपि प्रभुः । अतः सर्वमिदं प्रामाणिकं पाणिनि - सम्मतं च । कथमन्यथा इगादिसंज्ञा आदाय संरचितानि - 'इको यणचि'[1] 'उगितश्च'[2] 'इजादेश्च गुरु- मतोऽनृच्छः'[3] 'मय उञो[4]वो वा'इत्यादीनि पाणिनेः सूत्राणि संगच्छेरन् । यदि तत्र पाणिनिसम्मतं तादृशं समुदायापेक्षमादित्वं स्वीकार्यं तर्हि तादृशसमुदायापेक्षमन्तत्वमपि नूनं स्वीकरणीयम् । यतो भगवान् 'र' प्रत्याहारघटितमपि 'उरण्[5] रपरः' इति सूत्रं रचयामास[6] ।

विरोधः, यतस्तेन – "एकस्मान् ङञणवटा, द्वाभ्यां ष-, स्त्रिभ्य एव कणमाःस्युः । ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः[7]" । इत्युक्तमि'ति तु न वक्तव्यम् । यतो भट्टोजिदीक्षितेन समाहितचरेयमाशङ्का । तथाहि – "चतुर्दश-सूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां 'र'प्रत्याहारस्य 'चयो द्वितीया' इति वार्तिकस्थ-चय्प्रत्याहारस्य चाऽऽधिक्येऽप्यदोष[8] "इति । वस्तुतस्तु वार्णसमाम्नायिकाः प्रत्याहाराश्चत्वारिं-शदित्येवात्र पाणिनीयः सिद्धान्तः स्थाने । तथ्यमिदं वासुदेव दीक्षितेन[9] स्पष्टीकृतं

---

1. अष्टा. 6/1/77 ।
2. अष्टा. 6/3/45 ।
3. अष्टा. 3/1/36 ।
4. अष्टा. 8/3/33 ।
5. अष्टा. 1/1/51 ।
6. प्रौ. मनो. संज्ञा. प्र. पृ. 29 ।
7. प्रक्रियाकौमुद्याः कारिकेयं शब्दरत्ने हरिदीक्षितेनोद्धृता - शब्दरत्ने संज्ञा प्र. पृ. 30. ।
8. प्रौ. मनो. संज्ञा प्र. पृ. 29 ।
9. अनेन हि "तत्र वर्णसमाम्नायसूत्रेषु णकारेण एकः प्रत्याहारः – अण् । ककारेण त्रयः- - अक्, इक्, उक् । ङकारेण एकः – एङ् । चकारेण चत्वारः - अच्, इच्, एच्, ऐच्, । टकारेण एकः - अट् । परेण णकारेण त्रयः - अण्, इण्, यण्, । मकारेण चत्वारः - अम्, - यम्, ञम्, ङम् । ञकारेण एकः - यञ् । षकारेण द्वौ -झष्, भष् । शकारेण षट्-अश्, हश्, वश्, झश्, जश्, बश् । वकारेण एकः - 'छव्' । यकारेण पञ्च - यय्, मय्, झय्, खय्, चय् । रेफेण पञ्च यर्, झर्, खर्, चर्, शर्, । लकारेण षट् - अल् - हल्,, वल्, रल्, झल्, शल् । अकारेण एको 'र' प्रत्याहारः इति वार्णसमाम्नायिकाः प्रत्याहाराश्चत्वारिंशत्, एतेषामेव शास्त्रे उपोयगात् । इङित्यादि प्रत्याहारास्तु प्रयोजनाभावान्न भवन्ति, शास्त्रे तद्व्यवहाराभावात् । अत्राऽस्मदीया संग्रहणकारिका - स्यादेको ङञणवटैः पेण द्वौ त्रय इह कणाभ्याम् । चत्वारश्च चमाभ्यां, पञ्च यराभ्यां, शलाभ्यां षट् ॥ "– - इत्युक्तम् । बाल मनो. संज्ञा. प्र. पृ. 7 ।

प्रसिद्धचरं चकास्तीति नात्र स्पष्टीकरणमपेक्षितमिति तदिहोपेक्ष्यते । अत्र भट्ट-नागेशस्तु 'लृकारस्य[1] लपरत्वं वक्ष्यामी'ति भाष्योक्तिः 'उरण्[2] रपरः' इति सूत्रे लकारग्रहणं कर्त्तव्यमि'ति विज्ञापयति । यतो लण्[3] सूत्राकारस्यानुनासिकत्वम-प्रामाणिकम् । अतो 'र' -प्रत्याहारो गगन-कुसुमायितः । यति लण्[4] सूत्रस्या-कारोऽनुनासिकः स्यात्तदा 'अतोल्रान्तस्ये'[5] ति सूत्रे पाणिनिर्लकारं नोच्चारयेत् 'र' प्रत्याहारेणैव व्यवहरेत् । यण्पदघटितसूत्रेषु लाघवाय प्रत्याहारनिर्देशमेव च कुर्यात् । अपि च अनुबन्धानामच्प्रत्याहारे पाठाभावाय भगवान् यत् 'आचारद-[6] प्रधान-त्वाल्लोपश्चवलवत्तरः' इति हेतुत्रय - मुक्तवान् तत्र 'लोपश्च वलवत्तरः' इति तृतीयो हेतुः पक्षतावच्छेदकापेक्षयाऽव्यापकतामियात् । नहि लणोऽकारस्य लोपः प्राप्नोति, यतस्तदानीमच्प्रत्याहारसिद्धिर्न जाता । 'उपेदेशेऽजि' ति सूत्रवाक्यार्थाभावे हि कथम् हल्संज्ञा लणोऽकारस्य स्यात् । इत्संज्ञाया अभावे च हल् प्रत्याहारे लणोऽकारस्य प्रवेशो दुर्वारः । प्रत्याहारेषु जातिपक्षो भाष्यसम्मतः । प्रकृते यदि 'अनुनासिकत्व-समानाधिकरण-जाति - निर्देशः स्वीक्रियेत तर्हि मामँस्त्रास्वेत्यत्रानुनासिकपक्षे 'मोऽनुस्वारः[7]' इति अनुस्वाराऽऽपत्तिः, यदि च ह्रस्वत्त्व- समानाधिकरणजाति-निर्देशः स्वीक्रियते, तदाऽपि 'सोस्ती'त्यादौ 'एतत्तदो[8]'रिति सुलोपाऽऽपत्ति र्दुर्वारा स्यात् । लणोऽकारस्योच्चारणर्थत्वस्वीकारे च न कश्चन दोष आपतति, भाष्यं चानुकूलं भवति । यतो भाष्यम् अच्प्रत्याहारेऽनुबन्धानां ग्रहणं कुतो न'? इत्येवाऽशङ्कते, न तु हल्प्रत्याहारेऽप्यनुबन्धानां ग्रहणं कुतो न ? इत्यप्याशङ्कते । यदि हि लणोऽकारस्यानुनासिकत्वं प्रामाणिकं स्यात्तदा हल्प्रत्याहारेऽपि तदकारस्य ग्रहणमपाकर्तुं नूनं हल् प्रत्याहारेऽनुबन्धः कुतो न गृह्यते । इति भाष्यमा-शङ्केत, नचाऽऽशङ्कत" इत्याद्याह[9] । मतमिदं भट्टनागेशस्य न युक्तम् । लण्-

---

1. व्या. म. भा. 1/1/4/9 ।
2. अष्टा. 1/1/51 ।
3. मा. सू. 6 ।
4. मा. सू. 6 ।
5. अष्टा. 7/2/2 ।
6. व्या. म. भा. 1/1/2/5 ।
7. अष्टा. 8/3/23 ।
8. अष्टा. 6/1/132 ।
9. तथाहि –
परे त्वस्यानुनासिकत्वे - 'अतोल्रे'ति सूत्रे पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव व्यवहरेत् । किंचानुबन्धानामच्प्रत्याहारे ग्रहणाभावे - 'आचारादप्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्योक्तस्य तृतीयहेतोरव्याकत्वापत्तिः । तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन, लणित्यकारेत्संज्ञालोपयोरभावेन, प्रत्याहारेषु जातिपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशो

सूत्राकारस्यानुनासिकत्वे भट्टनागेशोत्थापिता आपत्तयो न विद्वज्जनमनोग्राहितामवलम्बते । तथाहि – यदाह 'अतोल्रान्तस्ये'[1]ति सूत्रे पाणिनिर्लकारं नोच्चारयेत्, रप्रत्याहारेणैव व्यवहरेदिति । तन्न युक्तम् । यतो 'ल्रे'- त्यत्र 'रे'त्येव सिद्धे लकारोच्चारणं 'लण्'[2]- सूत्रास्थाऽकार - निष्पाद्यप्रत्याहारनिर्देशस्य क्वचिदनाश्रयणम'मिति ज्ञापनार्थमावश्यम् । ज्ञापनफलं तु शुल्कमाचष्टे शुल्कयतीति 'शुल्'[3]इत्यत्र 'रात्सस्ये'ति नियमाप्रवृत्त्या [4]'संयोगान्तस्ये'ति लोप-प्रवृत्तिः । तथा [5]'प्रफुल्तः' इत्यत्र [6]'आदितश्चे'ति इट्-प्रतिषेधाल्लकारात्परस्य निष्ठातस्य [7]'रदाभ्या'मिति नत्वाऽऽपत्तेरभावः । नत्वविधायकेऽस्मिन् सूत्रे प्रत्याहारस्य रस्य ग्रहणे हि नत्वाऽऽपत्तिरत्र दुर्वारा स्यात् ।

अत्र–'अतो [8]ल्रान्तस्ये'ति सूत्रे लकारोच्चारणेन र-प्रत्याहारोऽनित्यः, अतएव [9]'रषाभ्याम्' [10]'रदाभ्या'मित्यादौ न ल ग्रहणमिति कस्यचिदुक्ति र्न स्थाने । 'र-

---

मामाँस्त्रायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुवारा । सोस्ती'त्यादौ सुलोपापत्तिश्च । अतएव 'प्रत्याहारेऽनुबन्धानां कथमज् ग्रहणेषु ने' त्यनेन 'प्रत्याहारे = वर्णसमाम्नाये य एतेऽक्षु = अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते- तेषामज्ग्रहणेन ग्रहणं कस्मान्ने'त्यर्थकिनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे । भाष्ये च 'अ इ उ'णित्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं-प्रत्याहारेषु ग्रहणार्थत्वरूपम्, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामेव तथोपदेश इति प्राधान्यात् तेषामेव संज्ञित्वमिति भाष्ये स्पष्टम् । न च हशादिप्रत्याहारे 'ट'ग्रहणस्यापत्तिरिति वाच्यं, हकारादिषु पुनः पुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् तद्विषयप्रयोगाणामनभिधानाच्च । तस्मादस्यानुनासिकत्वमप्रामाणिकम्, 'उरण् रपरः' इत्यत्र 'ल' - ग्रहणं कर्त्तव्यमेव - ऋॡवर्णयोः सावर्ण्यवदित्याहु :" ।

ल. श. शे. संज्ञा प्र. पृ. 24 - 35 ।

1. अष्टा. 7/2/2 ।
2. म. सू. 6 ।
3. शुल्कशब्दात् 'तत्करोति तदाचष्टे' ग. सू. चुरा.वै. सि. कौ. पृ. 239 इति णिचि इष्ठवद्भावेन टिलोपेऽप्यन्तात् 'क्विप्च' - अष्टा. 3/2/76, इति क्विपि क्किपः सर्वापहारे णिलोपे 'संयोगान्तस्य लोपः' - अष्टा. 8/2/23, इति ककारस्य लोपे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. अष्टा. 8/2/23 ।
5. प्र पूर्वकात् 'ञिफला विसरणे' धा. पा. भ्वा. 516, इति फल्धातोः 'निष्ठा'–अष्टा. 3/2/102, इतिक्त-प्रत्यये सोपसर्गत्वात् 'अनुपसर्गात् फुल्ल क्षीवकृशोल्लाघाः'–अष्टा. 8/2/55 इति तस्य लत्वाभावे 'आदितश्च'–अष्टा. 7/2/16. इति इण्निपेधे 'ति च'–अष्टा. 7/4/89, इति फकारोत्तराकारस्य उत्वे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. अष्टा. 7/2/16 ।
7. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः'–अष्टा. 8/2/42 ।
8. अष्टा. 7/2/2 ।
9. 'रषाभ्यां नो णः समान पदे–अष्टा. 8/4/1 ।
10. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः'–अष्टा. 8/2/42 ।

प्रत्याहारोऽनित्यः' इत्युक्तिरेव हि नोपपद्यते । यतो 'रप्रत्याहारोऽनित्यः'–इत्यस्य (1) र-पदमनित्यम्, (2) र-पदार्थोऽनित्यः, (3) रनिष्ठा रेफलकारोभय-निरूपिता शक्ति-रनित्या, (4) र-निष्ठा या रेफलकारोभयनिरूपिता शक्तिस्तज् ज्ञानमनित्यम्, (5) तादृश-शक्तिज्ञानाधीनोपस्थितिरनित्या, (6) सर्वत्र र-पदं 'र-लै'तदुभयतात्पर्येण नोच्चरितं वेति षड्विधोऽप्यर्थो न वक्तुं शक्यः । यतो न प्रथम-द्वितीय-तृतीया अर्था अत्र युक्ताः । शाब्दिकानां राद्धान्ते शब्द-तदर्थ-तदुभयसम्बन्धाऽऽत्मकशक्तयो हि नित्याः[1] । नापि चतुर्थ-पञ्चमावर्थौ युक्तौ । यतस्तादृश-शक्तिज्ञान-तदधीन-पदार्थोपस्थित्योरपि क्षणिकत्वेन[2] तदनित्यत्वप्रतिपादनं न कमप्युपयोगमाधत्ते । षष्ठोऽप्यर्थो न युक्तः । यतः 'क्वोभयतात्पर्येणोच्चरितं रपदं क्व ने'त्यस्य व्याख्यानत एव निर्णेयत्वेन "उरण् [3]रपर'–इत्यत्र 'अतोर्लान्तस्ये'त्यत्र[4] च रेफ पदं रेफलका-रोभयतात्पर्येणोच्चरितम्, अन्यत्र ने"ति व्याख्यातुं शक्यतया पुनरपि लकारो-च्चारणवैयर्थ्यं तदवस्थम् ।

यदपि "किञ्चास्येत्संज्ञाकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन य-प्रत्याहारेणैव व्यवहरे" दित्युक्तं भट्टनागेशेन, तदपि न युक्तम् । यत'स्तत्र तत्र य–प्रत्याहारेणैव-व्यवहरे'दिति वदताऽमुना 'लण्'–सूत्रस्थाऽकार-निष्पन्न-य-प्रत्याहारस्य क्वाचित्कत्वमवश्यं स्वीकरणीयम् । अन्यथा '[5]महाशूद्री'त्यत्र 'अयोपधा'दिति[6] प्रति-षेधस्य प्राप्त्या [7]'जाते' रिति विहितङीषोऽभावाऽऽपत्तिः, [8]'ङेर्यः'–इत्यनेन यकारा-ऽऽदिचतुष्टयाऽऽदेर्घटितानामनिष्टरूपाणां चाऽऽपत्तिश्च स्याताम् ।

---

1. नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
   सूत्राणामनुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥"
   वाक्य प. ।
2. "क्षणिकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् ।
   योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वात्........."
   न्याय सि. मु. प्रत्य. ख. पृ. 133 ।
3. अष्टा. 1/1/51 ।
4. अष्टा. 7/2/2 ।
5. 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा'
   अम. को. 2/6/13 ।
6. 'जातेरस्त्रीविषयादयोपधात्'–
   –अष्टा. 4/1/63 ।
7. 'जातेरस्त्रीविषयादयोपधात्'–
   –अष्टा. 4/1/63 ।
8. अष्टा. 7/1/9 ।

'पर्यायशब्दानां लाघव-गौरवचर्चा नाद्रियते'[1]–इति च यण्–इत्यस्यस्थाने 'य'-इति प्रयोगेऽपि लाघवमकिंचित्करं ब्रूते । य–यणौ हि पर्यायशब्दौ । तस्मादजनुबन्धकप्रत्याहारस्य क्वाचित्कत्वं स्वीकृत्य [2]'रात्सस्य' [3]'योऽची'त्यादौ न प्रत्याहारग्रहणमिति वक्तुं शक्यते चेत्, लण्-सूत्रस्थलकारोत्तराकारस्यानुनासिकत्वं नूनं स्वीकार्यम् ।

लणोऽकारस्यानुनासिकत्वे–'लोपश्च बलवत्तर इति भाष्योक्त-तृतीय- हेतोरव्यापकत्वापत्ति'रित्यपि भट्टोक्ति र्न युक्ता । यतः साध्यापेक्षया हेतोरव्यापकत्वमिष्टमेव, का आपत्तिः ? अतएव 'धूमवान् वह्ने'रित्यादौ नानुमितिः ।

यदि चात्र भट्टनागेशानुयायी ब्रूयात् 'पक्षतावच्छेदकावच्छेदेन अनुमितित्वावच्छिन्नं प्रति पक्षतावच्छेदकव्यापकत्वं हेतोरपेक्षित'मिति नियमः, तथा चात्र अनुबन्धत्वावच्छेदेन साध्यतया हेतोः पक्षतावच्छेदकापेक्षयाव्यापकत्वाऽऽपत्तिरिति तदाशयः, इयमेवाऽऽपत्तिस्तार्किकैर्भागासिद्धिरित्युच्यते, अनुबन्धत्वसमानाधिकरणतत्तदनुबन्धव्यक्तित्वावच्छेदेन अनुमितौ गौरवाल्लाघवाच्चतुर्दशसूत्रघटकानुबन्धत्वावच्छेदेन अनुमितेराश्रयणीयतया 'लण्'–सूत्राकारस्य अनुनासिकत्वे तस्य इत्संज्ञायोग्यत्वाऽऽत्मकानुबन्धत्वरूपपक्षतावच्छेदकाऽऽक्रान्तत्वेऽपि हेतोस्तत्राभावेन पक्षतावच्छेकावच्छिन्ने हेतोरभावाद् भागासिद्धिः स्पष्टा । तथा च प्रयोगः–अनुबन्धा बोध्यत्वाभाववन्तः [4]लोपशास्त्रीयोद्देश्यतावच्छेदकाऽऽक्रान्तत्वात्, यन्नैवं तन्नैवं, यथा–[5]'अइउण्'–घटकोऽकारः, नेमे तथा, तस्माद् बोध्यत्वाभावावन्तः' । अच्प्रत्याहारसाधनदशायां हि हल्प्रत्याहारो न निष्पन्न इति अच्पदार्थनिष्पत्त्यभावेन 'उपदेशेऽजनुनासिक इत्'[6] इत्यस्य वाक्यार्थो न लब्धुं शक्य इति लणोऽकारे इत्त्वासम्भवाद् [7]लोपशास्त्रीयोद्देश्यतावच्छेदकत्वं नास्ति ।

इदमपि भट्टाऽऽशयवर्णनं न युक्तम् । यतः चतुर्दशसूत्रीघटकानुबन्धत्वावच्छेदेन अनुमिति-स्वीकारे सति [8]'अइउण्'–सूत्र घटके णकारे [9]'हलन्त्य'मिति सूत्र-प्रवृत्तये हल्प्रत्याहारजन्यबोधविषयत्वस्यैव स्वीकणीयतया व्यभिचारः । हेतोर्लोपशास्त्रीयो-

---

1. प. शे. प. 125, पृ. 359 ।
2. अष्टा. 8/2/24 ।
3. अष्टा. 7/2/89 ।
4. 'तस्यलोपः'–अष्टा. 1/3/1 ।
5. मा. सू. 1 ।
6. अष्टा. 1/3/2 ।
7. 'तस्य लोपः'–
   –अष्टा. 1/3/9 ।
8. मा. सू. 1 ।
9. अष्टा. 1/3/3 ।

द्देश्यतावच्छेदकाऽऽक्रान्तत्वस्य तत्र णकारे सत्त्वेऽपि हि साध्यो बोध्यत्वाभावस्तत्र नास्ति । हेतोस्तत्रास्वीकारे तु णकारस्य अण्-प्रत्याहारे ग्रहणाऽऽपत्तिरेव दोषो वज्रलेपायते ।

यदि पुनर्नागेशानुयायी "स्व-घटित-समुदायावच्छिन्न-बोध्यतानिरूपित-बोधकता-वत् प्रत्याहारजन्य-बोध-विषयत्वाभाव एव साध्यः, स्वम्=अनुबन्धः, अवच्छेदकता च घटकत्वसम्बन्धावच्छिन्ना, अवच्छिन्नत्वं च घटकत्वरूपम्, अइउण्'-घटकणकारे स्वं= णकारः, तद्धटितः समुदायः='अइउण्'–इत्याकारकः अकारादिः णान्तः समुदायः, तद्घटकाः अकारादयः, तन्निष्ठबोध्यतानिरूपिता या बोधकता, तद्वान् प्रत्याहारः= अणादि-प्रत्याहारः, तज्जन्यबोधविषत्वाभावस्य साध्यस्य सत्त्वान्न व्यभिचारः, हल्प्रत्याहारे च स्वघटित-समुदायावच्छिन्न-बोध्यता-निरूपित-बोधकतावत्त्वाभावेन हल्-प्रत्याहार-जन्यबोधविषयत्वस्य तत्र पक्षे सत्त्वेऽपि न दोषः "इति ब्रूयात्, तदापि लणोऽकारे स्वघटित-समुदायावच्छिन्नबोध्यतानिरूपित-बोधकतावद्धल्-प्रत्याहारजन्य-बोधविषयत्वस्य सत्त्वेन व्यभिचारो वज्रलेप एवास्ति ।

अपि च 'य एते [1]प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवती'ति भाष्याद् अज्बोधकसूत्रस्थानुबन्धत्वं पक्षतावच्छेदकमत्रानुमितौ स्वीकार्यं न तु केवलानुबन्धत्वमिति लणोऽकारे पक्षतावच्छेदकमेव नास्तीति नाव्याप-कत्वाऽऽपत्तिरुक्तहेतोः ।

किंचात्रानुमितौ न इत्संज्ञा-योग्यत्वरूपमनुबन्धत्वं पक्षतावच्छेदकं स्वीक्रियते, किन्तु इत्संज्ञावत्त्वरूपमनुबन्धत्वमेव, तथा सति तदानीं लणोऽकारे इत्-संज्ञावत्त्वा-ऽऽत्मकानुबन्धत्वरूपपक्षतावच्छेदकत्वं नास्तीति नाव्यापकत्वं हेतोः ।

अथवा इत्संज्ञायोग्यत्वं पक्षतावच्छेदकं यद्यत्रानुमितौ स्वीक्रियते, तर्हि हेतुत्वमपि 'तस्य लोप[2]'–इति शास्त्रीयोद्देश्यतावच्छेदकाऽऽक्रान्तियोग्यत्वे स्वीकार्यमति नात्रानु-मितौ तृतीयहेतोरव्यापकत्वाऽऽपत्तिः ।

अपि च भट्टनागेशः तदनुयायिनश्च प्रष्टव्याः 'ननु भोः किं विधेय-विषये उच्चा-रणार्थानामित्संज्ञालोपाभ्यामेवापहारः, इति स्वीक्रियते न वा' ? यदि न स्वीक्रियते, इत्युच्येत तर्हि 'दिव[3] औत्'–इति सूत्रस्थलघुशब्देन्दुशेखरग्रन्थासङ्गतिः । यतस्तत्र 'विधेयविषये-उच्चारणार्थानामप्यनुनासिकत्वेनेसंज्ञा'–इत्युक्तम्[4] । यदि स्वीक्रियते इत्युच्येत, तर्हि 'हयवरे'त्यादिसकलाकारेष्वपि पूर्वोक्ततृतीयहेतोः पक्षतावच्छेदका-पेक्षयाव्यापकत्वाऽऽपत्तिर्लणोऽकारस्योच्चारणार्थत्वाभ्युपगमेऽपि दुर्वारा ।

---

1. व्या. म. भा. 1/1/2 हयवरट्-5 ।
2. अष्टा. 1/3/9 ।
3. अष्टा. 7/1/84 ।
4. ल. श. शे. हलन्त पुंलिङ्ग प्र. पृ. 380 ।

हकारादिषु प्रतिवर्णमकारोच्चारणसामर्थ्याद् अजादिप्रत्याहाराणां स्वाद्यवर्णसजातीय-मध्य-वर्ण-बोधकत्वं स्वीकृत्यानुबन्धानां प्रत्याहारेषु ग्रहणाभावो वाच्यः, साजात्यं चात्र बोधकत्वेनाऽऽचार्यतात्पर्यविषयत्वेनैव ग्राह्यम्, तथासति [1]'हयवर'डित्यादि-घटकाकारवल्लण्-घटकाकारबोधकत्वेनाऽऽचार्यतात्पर्यविषयत्वस्याभावान्न [2]'मामाँस्त्रायस्वे'त्यत्रानुनासिकपक्षे अनुस्वारा[3]ऽऽपत्तिः, नापि च 'सोऽस्ती'-त्यादौ सुलोपा-[4]ऽऽपत्तिरिति भट्टनागेशेन तदनुयायिभिश्चापि अकामेनापि स्वीकार्यम् । अन्यथा लणोऽकारस्योच्चारणार्थत्वं स्वीकुर्वताममीषां सिद्धान्तेऽपि तत्र अनुस्वार-सुलोपयोरापत्ती दुर्वारे स्याताम् ।

इत्थम् 'उरण् रपरः' इत्यत्र लकारानुच्चारणलाघवाद् र-प्रत्याहार-स्वीकार एव युक्तः । नापि च [5]'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु (ग्रहणं)ने'ति भाष्यमपि-रप्रत्याहाराऽभ्युपगमे प्रतिकूलम् । यतस्तद्भाष्येण आचार्यशैल्या च हल्-प्रत्याहारस्थानामचां बोध्यत्वमेव नास्तीति वक्तुं शक्यम् । अतो लण्-सूत्राकारस्यानुनासिकत्वमप्रामाणिक'मिति भट्टनागेश-सिद्धान्तो न युक्तः ।

इत्थं 'लृकारस्य लपरत्वं-वक्ष्यामी'ति भाष्योक्तिः 'लण्-सूत्रेऽकार इ'दिति वचनस्य ज्ञापिकेति निश्चीयते ।

## 'कार्तिक्याः प्रभृती'ति भाष्योक्तिः

'कार्तिक्याः [6]प्रभृत्याग्रहायणीमासे' इत्येतद्भाष्य-घटक-'कार्तिक्याः प्रभृती'त्युक्तिः 'प्रभृत्यर्थयोगे पञ्चमी भवती'ति वचनस्य ज्ञापिका[7] । यतोऽन्यादियोगाभावात् 'कार्तिक्याः' इतीह पञ्चमी विभक्तिरेतद्वचनाभावेऽनुपपन्ना । तदाह वासुदेवदीक्षितः- "अपादाने [8]पञ्चमी'ति सूत्रे-भाष्ये 'यतश्च'कालनिर्माणमि'ति वार्तिकं पठित्वा 'कार्तिक्या आग्रहायणीमासे'इत्युदाहृत्य 'इदं न वक्तव्य'मिति तद्वार्तिकप्रत्याख्यानमुपक्षिप्य 'इदमत्र प्रयोक्तव्यं सन्नप्रयुज्यते, कार्तिक्याः प्रभृत्याग्रहायणीमासे'इत्युक्तम् । प्रभृतिशब्दाभावेऽपि तदर्थसत्तया पञ्चमीसिद्धेति भाष्यार्थ" इति । इत्थं 'कार्तिक्याः

---

1. मा. सू. 5 ।
2. 'हे आन् ! मां त्रायस्वे'त्यर्थः । अनितेः क्विन्तस्य आनिति-रूपम् ।
3. 'मोऽनुस्वारः'-अष्टा. 8/3/23 ।
4. 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि'-अष्टा. 6/1/132 ।
5. व्या. म. भा. 1/1/2 हयवरट्-5 ।
6. व्या. म. भा. 2/3/2/28 ।
7. तथाहि-
   "अपादाने पञ्चमी'ति सूत्रे 'कार्तिक्याः प्रभृती'ति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी"त्याह भ. दी. पञ्चमीकारक प्र. पृ. 339 वै. सि. कौ. ।
8. अष्टा. 2/3/28 ।

प्रभृत्याग्रहायणीमासे' इत्यत्र 'कार्तिक्याः प्रभृती'त्युक्तिः 'प्रभृत्यर्थ-योगे पञ्चमी-भवती'ति वचनं ज्ञापयतीति निश्चिनुमः । अनया भाष्योक्त्यैतद्वचनसत्ताया अनुमाने हि 'यतश्चकाल-निर्माण' मिति वार्तिकस्याऽऽवश्यकतया तत्प्रत्याख्यानं न सङ्गच्छेत ।

"इयं भाष्योक्तिः 'प्रभृतिशब्दयोगे पञ्चमी'त्येव–ज्ञापयति न तु तदर्थयोगे पञ्चमी"ति तु न शङ्कनीयम्, यतः 'कार्तिक्याः प्रभृती'ति भाष्यं व्याचक्षाणः कैयटः–'तत [1]आरभ्येत्यर्थः' इत्याह । तत्र हि 'ततः' इति पञ्चम्यास्तसिः ।

कैयट[2]–सम्मतं 'प्रभृत्यर्थयोगे पञ्चमीभवती'ति ज्ञापितवचनस्वरूपं भट्टनागेशे[3]-नापि स्वीकृतम् ।

ज्ञापितस्यास्य वचनस्य फलं तु 'भवात् प्रभृति आरभ्य वा सेव्यो[4]हरि'रित्यादौ भवशब्दात् पञ्चम्याः सिद्धिः । एतद्वचनाभावे हि अन्यादिशब्दयोगाभावाद् भवात्-पञ्चमी न सिद्ध्येत् । व्याचख्यौ चेदं वासुदेवदीक्षितः[5]–तथाहि–"आरभ्ये'त्यस्यावधिं परिगृह्येत्यर्थः । प्रभृतीत्यव्ययमप्येतदर्थकमेव । भवमवधिं परिगृह्य हरिः सेव्य इत्य-र्थः । उत्पत्तिक्षणाऽऽत्मकपूर्वावधिकोत्तरकाले सर्वदा आमरणं हरिः सेव्य इति यावत् । आरभ्येति क्रियापेक्षया कर्मत्वविवक्षायां द्वितीयैव, 'उपपदविभक्तेः कारक-विभक्तिर्बलीयसी'त्युक्तेः । यथा–सूर्योदयमारभ्य आस्तमयाज्जपतीत्यादौ । शेषत्व-विवक्षायां तु षष्ठीं बाधित्वा भवशब्दात् पञ्चमी । प्रभृतिशब्दयोगे तु आरभ्येत्यर्थे कदापि न द्वितीया, प्रभृतिशब्दार्थस्यावधिं परिगृह्येत्यस्यावध्यादिघटितत्वेन क्रियात्वा-भावा"दिति ।

---

1. वा. मनो. पपञ्चमीकारक प्र. पृ. 339.
2. प्रदी. 2/3/2/28 ।
3. तेन हि 'प्रभृतियोगे पञ्चमी'ति वैयाकरणसिद्धान्तकौमुद्या भट्टोजिदीक्षित-ग्रन्थं व्याचक्षाणेन "प्रभृतियोग इति । प्रभृत्यर्थयोग-इत्यर्थः । 'अपादाने पञ्चमी'ति सूत्रे 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी, कार्तिक्या अग्राहयणीमासे'–इतिवार्तिकप्रत्याख्यानाय 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते–कार्तिक्याः प्रभृत्याग्रहायणीमासे' इति भाष्येण 'प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी'त्यर्थकिन 'प्रभृत्यर्थयोगे पञ्चमी'ति वचनसत्त्वस्य भगवता वोधितत्वात् । अन्यथा प्रभृति-पदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिभावः । एवञ्च तदर्थकारभ्यशब्दयोगेऽपि पञ्चमी । यथा–अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको, मेरुपृष्टा-दारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः-इति पातञ्जलभाष्यप्रयोगे । 'प्रभृती'-त्यस्य चावधिमादायेत्यर्थः । 'आरभ्ये'त्यस्यैतदर्थकतापि । अवधौ पञ्चम्यन्तार्थस्याभेदेना-न्वयः । तद्विशेषणत्वेऽपि न द्वितीया, 'प्रभृत्यर्थयोगे पञ्चमी'ति भाष्यकृद्वोधितवचनात् । 'आरभ्ये'त्यस्य गृहीत्वेत्यर्थेन 'अवीचिमारभ्ये'त्यादौ द्वितीये"त्युक्तम्–ल. श. शे. पञ्चमी-कारक प्र. पृ. 739 ।
4. पञ्चमीकारक प्र. वै. सि. कौ. पृ. 339 ।
5. पञ्चमीकारक प्र. बा. मनो. पृ. 339 ।

## सहयुक्तेऽप्रधानवचनमनर्थकम्[1] । किं कारणम् ? उपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वादि'ति भाष्योक्तिः

इयं भाष्योक्तिः 'प्रथमापि कारकविभक्ति'रिति–वचनस्य [2]ज्ञापिका । यतोऽस्याभावे नेयं भाष्योक्तिरुपपद्यते । तथाहि–[3]'सहयुक्तेऽप्रधाने'इति–सूत्रेऽप्रधानग्रहणाभावे पुत्रेण सहागतः पितेत्यादौ पितृशब्दादपि तृतीयाऽऽपत्तिमाशङ्क्य, 'उपपदविभक्ते'रिति न्यायेन[4] प्रथमया तृतीयाया बाधकत्वोक्तिरियं भगवतः अस्य वचनस्याभावेऽनुपपन्ना । नहि क्रियान्वयित्वं कारकत्वं प्रथमायाम् एतद्वचनं विना सम्भवति । यतः प्रथमार्थस्य प्रत्ययार्थेन सहान्वयेन क्रियान्वयित्वं कारकत्वं प्रथमायां नास्ति । वस्तुतस्तु भाष्योक्तिरियं–'क्रियाजनकार्थकविभक्तित्वं कारकविभक्तित्व'-मित्यर्थस्यैव ज्ञापिका । 'क्रियान्वयित्वं कारकत्व'मिति स्वीकारे हि 'यस्य च भावेन[5] भावलक्षण'मिति सप्तम्यां अपि क्रियान्वयित्वेन कारकत्वमापद्येत । ज्ञापितस्यास्य वचनस्य फलं तु 'अभिहिते कारके प्रथमे'ति[6] वार्तिकोपपत्तिः । अस्यासत्त्वे हि प्रथमायाः क्रियाजनकत्वाभावेन वार्तिकमिदं नोपपद्येत ।

## (घ) ज्ञापका योगविभागाः

पाणिनीयेऽस्मिन् व्याकरणे भगवतः पाणिनेः–सूत्रमेव 'योग' इत्युच्यते, 'तदुक्तम्'अयं [7]योगः शक्यमकर्तुम्'इति । यत्र द्वयोर्योगयोरेकयोगत्वे इष्टसिद्धिर्न भवति तत्र योगविभागः सार्थकः । यत्र च द्वयोरेकयोगत्वेऽपीष्टसिद्धिस्तत्र योगविभागो ज्ञापको भवतीति त एव ज्ञापका योगविभागा इत्युच्यन्ते । अतो ये योगविभागाः किञ्चन परिभाषारूपं तद्व्यतिरिक्तं वचनं वा ज्ञापयन्त एवाऽऽत्मनः सार्थकतां लभन्ते ते यथाक्रममत्र निरूप्यन्ते । तत्र–

---

1. व्या. म. भा. 2/3/2/19 ।
2. "कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वम् । तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति 'सहयुक्ते' इत्यादि सूत्रेषु-भाष्ये ध्वनित"मित्याह भ. ना. प. शे. प. 103, पृ. 334-335 ।
3. अष्टा. 2/3/19 ।
4. 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'इति परिभाषयेत्यर्थः ।
5. अष्टा. 2/3/37 ।
6. वा. विजयायां प. 103, पृ. 335 ।
7. व्या. म. भा. 1/1/4/6 ।

## [1]'आदितश्च' [2]'विभाषाभावादिकर्मणो'रितियोगविभागः

अयं योगविभागः "यदुपाधेर्विभाषा तदुपाधेरेव 'यस्य विभाषेति' इट्प्रतिषेध" इति वचनस्य [3]ज्ञापकः । यतोऽस्य वचनस्याभावे योगविभागोऽयं व्यर्थः । 'आदितश्च, विभाषा भावादिकर्मणोः' इत्येकयोगेऽपि हि भावादिकर्मणोर्विभाषायां विहितायां ततोऽन्यत्र कर्त्रादौ' [4]'यस्य विभाषे'तीट्प्रतिषेधः सुलभः । ज्ञापिते चाऽस्मिन्वचने भावादिकर्मणोर्विकल्पविधानात् कर्तृकर्मणोः [5]'यस्य विभाषे'ति प्रतिषेधो न प्राप्नोतीति भवादिकर्मणोरपि विकल्पप्रतिषेधयोरसंभवात् प्रतिषेधो न स्यादिति भावे आदिकर्मणि च विकल्पेनेड्विधानाय चं क्रमशः मिन्नः [1]मिन्नवानित्यादौ[2] कर्मणि कर्त्तरि च इटः

---

1. अष्टा. 7/2/16, आकारेतो धातो र्निष्ठाया इण्नेति सूत्रार्थः ।
2. अष्टा. 7/2/17 भावे आदिकर्मणि च आदितो निष्ठायामिड्वेति सूत्रार्थः ।
3. तथाहि–
   (क) "किमर्थो योग विभागो न 'आदितो विभाषा भावादिकर्मणोरि'त्येवोच्येत । केनेदानीं कर्त्तरि प्रतिषेधो भविष्यति ? । 'यस्य विभाषे'त्यनेन । एवंतर्हि सिद्धे सति यद्योगविभागं करोति तज्ज्ञापत्याचार्यः–'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध, इति । किमेतस्य ज्ञापने-प्रयोजनम् ? । 'यस्य विभाषाऽ विदेरित्युक्तं तत्र वक्तव्यं– भवती"त्याह पत. व्या. म. भा. 7/2/1/16-17 ।
   (ख) "योगविभागकरणं किमर्थम् 'आदितश्च विभाषा भावादि-कर्मणोः' इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्याम् 'यस्यविभाषा' इति प्रतिषेधो भविष्यति ? ज्ञापनार्थमेतज् ज्ञापयति–'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध्र इतिं । तेन विभाषागमहन-विदविशाम्' इत्यत्र विदेर्लभार्थस्य विभाषेतिज्ञानार्थस्य प्रतिषेधो न भवति, विदितः, विदितवान् "इत्याह वाम. का. 7/2/16 ।
   (ग) आदितश्च (7/2/16) विभाषा भावादिकर्मणोरिति (7/2/17) एकयोगे मिदादेरिड्-विकल्पिते 'यस्यविभाषे'ति (7/2/15) कर्त्तरि नित्यमिणूनिषेधसिद्धौ आदितश्चेति कर्त्तरि इड्निषेधार्थो योगविभाग एवं ज्ञापयति– यदुपाधेर्विभाषा तदुपाधेरेव यस्य विभाषेति इड्निषेध इति । तेन विभाषागमहनविदविशामित्यत्र (7/2/68) शब्दपरविप्रतिषेधेन विशिना साहचर्यात् लाभार्थस्य शविकरणस्य विदेर्विभाषा, तस्यैवेटः प्रतिषेधः । लुग्- विकरणस्य तु विदित इत भवति । यद्येवम् उदितो वेति (7/2/56) भावार्थे क्त्वि विभाषा उक्ता इति भाव एव निष्ठाया-इड् निषेधः प्राप्नोति वृत्तमिति । न कर्तृकर्मणोः । नैतत् । तेन निर्वृत्तम् (4/2/68) इति निर्देशेनास्य ज्ञापकस्य व्यभिचरितत्वा"दित्याह पु. दे. ज्ञा. समु. षड्विंशे सिचिपादे पृ. 89-90 ।
   (घ) विभाषा भावादि (सू. 7/2/17) । योगविभागो ज्ञापकः यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1/7 पृ. 187 ।
4. अष्टा. 7/2/15 । यस्य क्वचित् विभाषा इडुक्तः ततो निष्ठया–इण् न स्यादिति सूत्रार्थः ।
5. अष्टा. 7/2/15 ।
6. 'ञिमिदा स्नेहने' धा. पा. भ्वा. 743, दिवा. 1244 इति वा मिद्धातोः कर्मणि क्तः ।
7. 'ञिमिदा स्नेहने' धा. पा. भ्वा. 743, दिवा. 1244 इति वा मिद्धातोः कर्त्तरि क्तः ।

प्रतिषेधार्थम् [1]'आदितश्चे'ति विभाषा भावादिकर्मणोरिति [2]च पृथग् योगः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य-वचनस्य फलं तु 'यस्य विभाषे'ति लाभार्थकस्यैव विदेः प्रतिषेधः, न ज्ञानार्थकस्य विदेरिति, यतो [3]'विभाषा गमहनविदविशामित्यत्र लाभार्थोपाधिकस्य तौदादिकस्य विदेर्विभाषा[4] इड्विहितः, नतु [5]ज्ञानार्थोपाधिकस्य-विदः–[6]विशिना तौदादिकेन साहचर्यात् । तेन ज्ञानार्थकस्य विदेर्निष्ठायामिटि [7]विदितमिति प्रयोगस्य साधुत्वं सिद्ध्यति । अस्य वचनस्यासत्त्वेहि'यस्य विभाषे-[8]तीटः प्रतिषेधस्य दुर्वारतया नास्य साधुत्वं सिद्ध्येत् । अथात्र यदि यदुपाधेर्विभाषा तदुपाधेर्निर्षेध इति वचनं स्वीक्रियते तर्हि [9]'जृव्रश्च्योः क्त्व' [10]'उदितो वा' इति क्त्वाप्रत्यये भावविषये विभाषिते 'यस्य [11]विभाषे'ति भाव-विषय एव प्रतिषेधः स्यान्नतु कर्तृ कर्मणोरिति तु न शङ्कनीयम् । आश्रीयमाणो हि धर्मो भेदको भवति । न च क्त्वाप्रत्यये निष्ठायां वा भिन्नमभिधेयं निमित्तत्वेनाश्रितम् । अतो 'वृत्त'मितिभाव इव कतृकर्मणोरपीट् प्रतिषेधोऽनेन[12] भवति । तेन च 'तेन [13]निर्वृत्तम्' 'निवृत्तेऽक्षधूतादिभ्यः'[14] इत्यादि निर्देशा उपपद्यन्ते ।

## 'चुटू[15]' 'षः [16]प्रत्ययस्य' इति योगविभागः

अयं योगविभागः 'चुटू'–इतीत्संज्ञाविधिरनित्यः' इति वचनस्य [17]ज्ञापकः । यतोऽस्य वचनस्याभावे' 'चुटुषाः प्रत्ययस्ये'त्येकयोगेनैवेष्टसिद्धौ योगविभागोऽयं

---

1. अष्टा. 7/2/16 ।
2. अष्टा. 7/2/17 ।
3. अष्टा. 7/2/68 ।
4. 'विद्लृलाभे' धा. पा. तुदा. 1525 ।
5. 'विद्ज्ञाने' धा. पा. अदा. 1140 ।
6. 'विशप्रवेशने' धा. पा. तुदा. 1517 ।
7. 'विदितं ननु कन्दुक ते हृदयं प्रमदाधरसङ्गमलुब्धमनाः ।
   वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि ।।"
   इति–महाकवि कालिदासस्य मुक्तकम् ।
8. अष्टा. 7/2/15 ।
9. अष्टा. 7/2/55 ।
10. अष्टा. 7/2/56 ।
11. अष्टा. 7/2/15 ।
12. 'यस्य विभाषा'—अष्टा. 7/2/15 इत्यनेनेत्यर्थः ।
13. अष्टा. 4/2/68 ।
14. अष्टा. 4/4/19 ।
15. अष्टा. 1/3/7 ।
16. अष्टा. 1/3/6 ।
17. तथाहि–

व्यर्थः । ज्ञापितेऽचास्मिन् वचने 'षः [1]प्रत्ययस्ये'त्यस्याप्यनित्यत्वं मा भूदित्येतदर्थं पृथग् योगोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [2]'केशचुञ्चुः' [3]केशचणः 'इत्यादौ'तेन वित्तश्चुञ्चुप्चणपौ'[4] इति विहितयोश्चुञ्चुप्चणपोश्च चकारस्य, [5]'अवकुटारः' [6]अवकटः 'इत्यत्र 'अवात्कुटारच्चेति[7] विहितयोः कुटारच्-कटचोः ककारस्य-'नासिकायानतम् [8]'अवटीट'मित्यत्र'नते नासिकायाः[9] संज्ञायां टीट-ञ्नाटज्भ्रटचः 'इतिविहितस्य टीटचश्चकारस्य चाऽनेनेत्त्वाभावः । अस्य वचनस्याभावे हि क्रमशोऽत्र प्रत्ययाद्यानां चकार-ककार-टकाराणामनेन[10]इत्संज्ञाऽऽपत्तिदुर्वारा स्यात् । भगवता भाष्यकारेण तु चुञ्चुण्णपोश्चकारस्येत्संज्ञापरित्राणार्थं नेदं ज्ञापकमत्रार्थे समुपन्यस्तं, किन्तु "एवं तर्हि 'चकारादी चुञ्चुप्चणपौ', किं यकारो न श्रूयते, लुप्तनिर्दिष्टो [11]यकार इत्युक्तम् । इदं चोपलक्षणं कुटारच्कटच्टीटचामित्यवधेयम् । भाष्योक्तं तथ्यमिदं भट्टोजिदीक्षितोऽपि [12]मनुते । उपायस्योपायान्तरादूषकत्वाद् ज्ञापकत्वमप्यस्य योगविभागस्यास्मिन् वचने युक्तमिति मन्ये । कस्यचनार्थस्य हि भाष्यानुक्तत्वं न प्रामाण्ये बाधकं किन्तु भाष्यविरुद्धत्वमेव ।

---

(क) "पृथग् योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम् । 'तेन-वित्तश्चुञ्चुप्चणपौ' केशचुञ्चुः केशचणः । 'अवात् कुटारच्च' । 'नतेः नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः'– अवटीटः "इत्याह जया. का. 1/3/7 ।

(ख) "चुटू (1/3/7) इत्यस्य पृथगारम्भादनित्यत्वेन केशचणादिसिद्धिः" इत्याह पु. दे. ज्ञा. समु. तृतीये इतो भूपादे पृ. 63 ।

(ग) "चुटुषाः प्रत्ययस्येतिवक्तव्ये पृथग्योगकरणात् 'चुटू'–इत्येतदनित्यमिति समाधानान्तरमप्यांहुः" इत्याह ज्ञा. भि. त. बो. पाञ्चमिक प्र. पृ. 729 ।

1. अष्टा. 1/3/6 ।
2. केशाच्चुञ्चुप् प्रत्ययः ।
3. केशाच्चणप् प्रत्ययः ।
4. अष्टा. 5/2/26 ।
5. आवात् कुटारच्प्रत्ययः ।
6. अवात् कटच् प्रत्ययः ।
7. अष्टा. 5/2/30 ।
8. अवात् टीटच् प्रत्ययः ।
9. अष्टा. 5/2/31 ।
10. 'चुटू'–अष्टा. 1/3/7 इत्यनेनेत्यर्थः ।
11. व्या. म. भा. 1/3/1/7 ।
12. अनेन हि–'यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चस्य नेत्संज्ञेत्युक्तम् वै. सि. कौ. पाञ्चमिक प्र. पृ. 729–'प्रत्ययाऽऽदित्वाभावादिति शेषः ।

## 'पूर्वादिनिः[1] 'सपूर्वाच्चे'ति[2] योगविभागः

'पूर्वादिनि'रिति पृथग्योगकरणं 'व्यपदेशिवद्भावोऽ[3]प्रातिपदिकेने'ति परिभाषाया [4]ज्ञापकम् । यतो यदि 'व्यपदेशिवदेकस्मि'न्निति[5] परिभाषया प्रातिपदिकेन व्यपदेशिवद्भावःस्यात्तर्हि 'पूर्वात्सपूर्वादिनिः 'इत्येकयोगकरणेऽपि पूर्वशब्दस्य व्यपदेशिवद्भावेन सपूर्वत्वेन 'पूर्वी'तिरूपस्य, स्वतः सपूर्वत्वेन 'कृतपूर्वी'ति रूपस्य च सिद्धौ व्यर्थमिदम् ।

---

1. अष्टा. 5/2/86 ।
2. अष्टा. 5/2/87 ।
3. (क) पु. दे. ल. प. वृ. प. 79, पृ. 147 ।
   (ख) सी. दे. बृ. प. वृ. प. 56, पृ. 222 ।
   (ग) नी. दी. प. वृ. प. 72, पृ. 307 ।
   (घ) ह. भा. प. भास्क. प. 58, पृ. 348 ।
   (ङ) भ. ना. प. शे. प. 33, पृ. 155 ।
   (च) शेषा. प. भास्क. प. 32, पृ. 409 ।
4. तथाहि–
   (क) "आचार्यप्रवृत्ति र्ज्ञापयति–'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति, यदयं 'पूर्वादिनिः' 'सपूर्वाच्चे'त्याह । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य प्रयोजनम् । किम् ? । सपूर्वात्-पूर्वादिनिं वक्ष्यामीति । यत्तर्हि योगविभागं करोति । इतरथा हि 'पूर्वात् सपूर्वादिनि'रित्येव ब्रूया"दित्याह–पत. व्या. म. भा. 1/1/9/71 ।
   (ख) यदि 'व्यपदेशिवद्भावोऽप्रातिपदिकेन'इत्येषा परिभाषा न स्यात्तदा 'सपूर्वात् पूर्वादिनिः' इत्येकयोगं कुर्यात्, किंयोगविभागेन ? एकयोगे हि सति केवलादपि व्यपदेशिवद्भावेन प्रत्ययो भविष्यति । तदेवमेकयोगेन सिद्धे यत्–'पूर्वादिनिः' इतिपृथग् योगं करोति, तज् ज्ञापयति अस्तीयं-परिभाषा 'व्यपदेशिवद्भावोऽप्रातिपदिकेन'इती"त्याह जि. बु. न्या. 5/2/87 ।
   (ग) "यदि'व्यपदेशिवद्भावोऽप्रातिपदिकेन'इत्येषा परिभाषा न स्यात् 'पूर्वादिनिः सपूर्वात्' इत्येकमेव योगं कुर्यात्, व्यपदेशिवद्भावात् केवलादपि भविष्यति, किं योगद्वयकरणेन ? अत्र चकारः कर्तव्यो न भवति ....." इत्याह ह. मि. पदम. 5/2/87 ।
   (घ) "अत्रैव 'पूर्वात्सपूर्वादिनि'रित्येकयोगे कर्तव्ये योगविभागो 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्य ज्ञापको बोध्यः"–इत्याह भ. ना. उद्यो. 5/1/1/20 ।
   "पूर्वात् सपूर्वादिनि'रित्येकयोग एव कर्तव्ये पृथग्योगकरणस्या ज्ञापकम्....."इतिचाह भ. ना. प. शे. प. 33, पृ. 155-156 ।
   (ङ) "पूर्वादिनिः' 'सपूर्वाच्च' (5/2/86, 87) इतियोगविभागकरणमस्याज्ञापक"मित्याह नी. दी. प. वृ. प. 72, पृ. 307 ।
   (च) "अस्यां च ज्ञापकम्–'पूर्वादिनिः (5/2/86) इति पृथग् योगकरणम् ....."इत्याह शेषा. प. भास्क. प. 32 पृ. 409 ।
   (छ ) "पूर्वादिनिः (सू. 5/2/86) 'सपूर्वाच्च' (सू. 5/2/87) इति योगविभागोऽव्यवदेशिवद्भावोऽप्रातिपादिकेनेत्यस्याः ज्ञापकः" इत्याह श्रीना. ज्ञा. सं. 1/1 पृ. 36 ।
5. (क) भ. ना. प. शे. प. 31, पृ. 148 ।
   (ख) शेषा. प. भास्क. प. 30, पृ. 407 ।

न च [1]'इष्टादिभ्यश्च' इत्युत्तरसूत्रे 'सपूर्वात्'इत्यस्याऽनुवृत्तये तत्सार्थकम्, अन्यथा 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः-सह वा [2]निवृत्ति'रित्युक्तेस्तत्र तदनुवृत्तिर्न स्यादिति शङ्क्यम् । यतोऽस्य पृथग्योगकरणस्य ज्ञापकतापरभाष्यबलेन तत्र तदनुवृत्तिरेव नेष्टा । तत्र तदनुवृत्तेरिष्टत्वेऽपि [3]'क्वचिदेकदेशोऽप्यनुवर्तते'इति परिभाषया तदुनुवृत्तिश्च सुलभा । ज्ञापितायां चास्यां पूर्वशब्दस्य व्यपदेशिवद्भावेन सपूर्वत्वासम्भवात् 'पूर्वी'त्येतदर्थं पृथग् योगकरणमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु केवलसूत्रशब्दात् [4]'क्रतूक्थादिसूत्रान्ताट्ठक्'इति ठकोऽभावः । अस्या अभावे हि 'संग्रहसूत्रमधीते सांग्रहसूत्रिकः' इत्यत्रेव 'सूत्रमधीते सौत्रः' इत्यत्राऽपि ठक्-प्रत्ययो दुर्वारः स्यात् ।

[5]जयादित्य-[6]पुरुषोत्तमदेव-[7]सीरदेव-[8]हरिभास्करैस्तु 'पूर्वादिनिः'इति सूत्रान्तरं कृतं 'सपूर्वाच्चे'ति सूत्रं 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' 'व्यपदेशिवद्भा-

---

1. अष्टा. 5/2/88 ।
2. (क) पु. दे. ल. प. वृ. प. 24, पृ. 122 ।
   (ख) सी. दे. बृ. प. प. 14, पृ. 175 ।
   (ग) नी. दी. प. वृ. प. 19, पृ. 296 ।
   (घ) ह. भा. प. भास्क. प. 14, पृ. 327, 'संनियोग शिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' ।
   (ङ) भ. ना. प. शे. प. 18, पृ. 111 ।
   (च) शेषा. प. भास्क. प. 17, पृ. 401 ।
3. (क) एकयोग निर्दिष्टानामप्येकदेशानुवर्तनम् 'व्याडिः प. सू. प. 23, पृ. 12 ।
   (ख) पु. दे. ल. प. वृ. प. 25, पृ. 122 ।
   (ग) सी. दे. बृ. प. वृ. प. 8, पृ. 170 ।
   (घ) नी. दी. प. वृ. प. 10, पृ. 215 ।
   (ङ) ह. भा. प. भास्क. प. 8, पृ. 321 ।
   (च) 'एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्त्तते', भ. ना. प. शे. प. 19, पृ. 112 ।
   (छ) 'एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते'–शेषा. प. भास्क. प. 18, पृ. 402 ।
4. अष्टा. 4/2/60 ।
5. अनेन हि–"योगद्वयेन चानेन–'पूर्वादिनिः' 'सपूर्वाच्च'इति परिभाषाद्वयं ज्ञाप्यते–'व्यपदेशिवद्भावोऽप्रातिपदिकेन'–'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"त्युक्तम् का. 5/2/87 ।
6. अनेन हि–"ज्ञापिते चैते परिभाषे 'येन विधिः.' (1/1/72) इति सूत्रे भाष्यकृता 'पूर्वादिनिः' (5/2/86) इत्यनन्तरं सूत्रं 'सपूर्वाच्च' (5/2/87) इत्यनेन योगेन । यदुक्तम् । किमर्थं सपूर्वादिनिर्विधीयते । पूर्वशब्देन प्रातिपदिकेन विशेषिते तदन्तविधिना सपूर्वाद् भविष्यति । केवलाच्च व्यपदेशिवद्भावेनेति–नार्थोऽनेन । एवं तर्ह्येतज् ज्ञापयति–एते स्तः परिभाषे ग्रहणवतेत्यादी"इतीत्युक्तम् ल. प. वृ. प. 78, 79, पृ. 147 ।
7. अनेन हि–"ज्ञापिते एते परिभाषे'येनविधिः.' (1/1/72) इति सूत्रे भाष्यकृता 'पूर्वादिनिः' (5/2/87) इत्यस्यानन्तरं 'सपूर्वाच्च' (5/2/87) इत्यनेन । तदुक्तम् । किमर्थं सपूर्वादिनिर्विधीयते । पूर्वशब्देन प्रातिपदिके विशेषिते तदन्तविधिना सपूर्वादपि भविष्यति केवलाच्च व्यपदेशिवद्भावेनेति नार्थोऽनेन । तत्कृतं ज्ञापनार्थम् । एतच्च ज्ञापयति । एते परिभाषे ग्रहणवतेत्यादिके स्त इतीत्युक्तम् बृ. प. वृ. प. 55, 56 पृ. 222 ।
8. अनेन हि–"अत्र पूर्वत्र च ज्ञापकम्–'पूर्वादिनिः' (5/2/86) इत्यस्यानन्तरं 'सपूर्वाच्च' (5/2/87) इति सूत्रकरणम् । अन्यथा हि पूर्वशब्देन प्रातिपदिके विशेषिते सति

वोऽप्रातिपदिकेने'ति परिभाषाद्वयस्य-ज्ञापकमित्युक्तम् । पृथग् योगकरणमुक्तपरिभाषाज्ञापकमित्यत्रैव तदुक्तीनामपि तात्पर्यमिति मन्ये । परिभाषा चेयं प्रत्ययविधिविषयैव, ज्ञापकभूमेस्तथात्वात् ।

## '[1]वामि' 'ङिति ह्रस्वश्चे'ति[2] योगविभागः

पृथग्योगकरणमिदं 'संनिपात[3]लक्षणो-विधिरनिमित्तं तद्विघातस्ये'ति परिभाषाया ज्ञापकम्[4] । यतोऽस्या अभावे 'वामिह्रस्वश्चे'त्येकयोगेनैवेष्टसिद्धौ पृथग्योगकरणमिदं व्यर्थम् । ज्ञापितयां चास्यां 'श्रीणामित्यत्र अजादित्वसम्बन्धं निमित्तीकृत्य प्रवृत्ता नदीसंज्ञा अजादित्वविघातकस्य [5]नुटोऽनया निमित्तं न स्यादिति 'वामी'ति पृथग्योगकरणं सार्थकं स्वांशे भवति । अतोऽस्य पृथग् योगकरणस्य

---

तदन्तविधिना पूर्वाद् व्यपदेशिवद्भावेन केवलात् सिद्ध एवेनिरिति तद् व्यर्थं स्या'दित्युक्तम् प. भास्क. प. 58, पृ. 348 ।

1. अष्टा. 1/4/5 ।
2. अष्टा. 1/4/6 ।
3. (क) व्याडिः प. सू. प. 10, पृ. 7 ।
   (ख) पु. दे. ल. प. वृ. प. 10, पृ. 117 ।
   (ग) सी. दे. बृ. प. वृ. प. 64, पृ. 229 ।
   (घ) नी. दी. प. वृ. प. 75, पृ. 308 ।
   (ङ) ह. भा. प. भास्क. प. 66, पृ. 350 ।
   (च) भ. ना. प. शे. प. 86, पृ. 310 ।
   (छ) शेषा. प. भास्क. प. 73, पृ. 439 ।
4. तथाहि–
   (क) "अत्र च ज्ञापकम्– 'वामि ह्रस्वश्च' सूत्रमकृत्वा' वामि' (1/4/5) 'ङिति ह्रस्वश्च' (1/4/6) इतिसूत्रद्वयकरण"मित्याह नी. दी. प. वृ. प. 75 पृ. 308
   (ख) अत्र च ज्ञापकम्– 'वामि' (1/4/5) 'ङिति ह्रस्वश्च' (1/4/6) इति पृथग्योगकरणम् । यदीयं न स्यात् तदा 'वामि ह्रस्वश्च' इत्येव वक्तव्यं स्या"दित्याह शेषा. प. भास्क. प. 73 पृ. 439.
   (ग) "अस्यां ज्ञापकम् 'वामि ह्रस्वश्चे'ति न्यासेनैव 'श्रियां' 'श्रीणा'मित्यादौ नदीत्वसिद्धयान्यत्राजादौ नदीत्वेऽपि दोषाभावात् 'ङितिह्रस्वश्च' 'वामी'ति योगद्वयकरणम् । ज्ञापितायां तु 'श्रीणा'मित्यादावजाद्यव्यवहितत्वसंनिपातेन जातं नदीत्वं नुड्द्वाराजादित्वविघातकं स्यात् । नुटि यदागमन्यायेनाजादित्वं तु न, वर्णग्रहणे तस्या अप्रवृत्तेः । वामीति पृथग्योकरणे तु न तद्विघातो यदागमन्यायेन नुडादावाम्त्वस्य सत्त्वात् । मतिश्चोमा चेति द्वन्द्वे मतिशब्दस्य नदीत्वापत्त्या घित्वाभावेन पूर्वनिपातापत्तिस्तु न अजादौ प्रत्यय इत्यर्थकरणात् 'ङितिह्रस्वश्चे'ति यथास्थितन्यासेऽपि मतिश्च चित्रश्चेति द्वन्द्वे नदीत्वाभावाय प्रत्यय इत्यर्थस्यावश्यकत्वा'दित्याह म. म. जय. मि. प. शे. विजयायां प. 86 पृ. 318.
5. 'ह्रस्वनद्यापोनुट्' –
   अष्टा. 7/1/54

सन्निपातपरिभाषा-ज्ञापकत्वखण्डनपरौ परिभाषेन्दुशेखरस्य [1]विजया-भूतितिलक[2]-ग्रन्थौ चिन्त्यौ ।

ज्ञापितायाः अस्याः 'ययोर्द्वयोः सम्बन्धं निमित्तीकृत्य यो विधिःप्रवृत्तः स तयोः सम्बन्धं न विहन्तीत्यर्थः[3] । फलं तु "अतिजरैरित्यत्र अकारान्ताङ्गसम्बन्ध-निमित्तकस्य ऐसो[4] जरसादेशस्यानिमित्तत्वेन[5] जरसादेशाभावः, 'गव्यिते'[6]त्यत्र यकारादिप्रत्ययसम्बन्धं निमित्तीकृत्य [7]प्रवृत्तस्यावादेशस्य तद्विघाकतस्य [8]'यस्यहल्' इति यलोपस्यानिमित्ततया यलोपाभावश्च । अस्या अभावे हि जरसादेश-यलोपावत्र क्रमशो दुर्वारौ स्याताम् ।

---

1. अत्राहि–
'वस्तुतो नेदं ज्ञापकं' वामिह्रस्वश्चे'ति न्यासेनैव सिद्धे ज्ञापितायामपि योगद्वयकरणस्य चारतिार्थ्याभावा"दित्युक्तं म. म. जय. मि. प. 86 पृ. 318.
2. अत्र हि– "यत्तु 'वामिह्रस्वश्चे'ति न्यासेनैव 'श्रियां' 'श्रीणा'मितीष्टरूपसिद्धौ 'वामि' ङितिह्रस्वश्चे'ति योगद्वयकरणमस्यां ज्ञापकम् । ज्ञापिते तु श्रीणामित्यत्राजादित्वमुपजीव्य जायमानेन नदीत्वेन नुड्द्वाराजादित्वविघातेनानया नुडप्राप्त्या "वामी"त्यस्यावश्यकत्वम् । तत्सत्त्वे तु नुड्विशिष्टे आम्त्वेन संनिपातविघाताभावः स्पष्ट एव । न च मतिश्चोमा चेति द्वन्द्वे सिद्धान्तेऽच्परत्वेन मतिशब्दस्य नदीत्वेन घित्वाभावात् पूर्वानिपातानापत्त्येदृशन्यासस्य वक्तुमशक्यत्वमिति वाच्यम्, मतिश्च चित्रश्चेति द्वन्द्वे सिद्धान्ते ङित्परत्वेऽपि नदीत्वाभावार्थं प्रत्ययापेक्षस्याऽऽवश्यकत्वेनोक्तदोषासम्भवादिति प्राहुः । तन्न, "वामिह्रस्वश्चे'ति न्यासेन सिद्धे सिद्धान्तेऽप्युक्तयोगवैयर्थ्येन तस्योक्तार्थज्ञाकत्वासम्भवात्, "ङिति ह्रस्वश्चे"त्यत्र नित्यस्त्रीत्व-सम्बन्धो "वामी"त्यत्र च "अतिश्रिया" मतिश्रीणां ब्रह्मणाना'मिति सिद्ध्यर्थं तदसम्बन्ध इति भाष्यसम्मतसिद्धान्तस्यासिद्ध्या तथाविधैकयोगस्य कर्तुमशक्यत्वाच्चेत्युक्तं म. म. तात्या-शास्त्रीतिप्रसिद्धेन राकृष्ण शास्त्रिणा प. शे. भूतितिलके प. 81 पृ. 288.
3. "जरामतिक्रान्तोऽतिजरस्तैः" इत्यर्थः । अत्र "प्रादयो गताद्यर्थे द्वितीयया (का. 2/2/18 वा.) इतिसमासे "प्रथमानिर्दिष्टं समास उपसर्जनम्' अष्टा. 1/2/43 इत्युपसर्जनत्वेन अतिशब्दस्य प्राक्प्रयोगे जराशब्दस्य "एकविभक्तिचापूर्वनिपाते" अष्टा. 1/2/48 इति ह्रस्वत्वे समासप्रातिपदिकात् भिसि तस्य ऐसादेशे वृद्धौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
4. 'अतोभिस ऐस्'– अष्टा. 7/1/13
5. 'जराया जरसन्यतरस्याम्' अष्टा. 7/2/101
6. 'सुप आत्मनः क्यच्'– अष्टा. 3/1/8
इति क्यजन्त गव्यधातोर्लुटि प्रथमपुरुषैकवचने रूपमिदम् ।
7. 'वान्तो यि प्रत्यये'–
अष्टा. 6/1/79
8. अष्टा. 6/4/49

## 'संबोधने च'[1] 'सामन्त्रित'[2]मिति योगविभागः

अयं योगविभागः 'न कर्माऽऽधिक्ये प्रथमा भवती'ति वचनस्य [3]ज्ञापकः । यतोऽस्य वचनस्याभावे योगविभागोऽयं व्यर्थः । तथाहि– सम्बोधनाऽऽधिक्येऽपि हे राम इत्यादौ प्रथमां विधातुमारब्धोऽयं पृथग् योगो व्यर्थः । सम्बोधनाऽऽधिक्येऽपि हि हे राम इत्यादौ [4]'प्रातिपदिकार्थेति सूत्रेणैव प्रथमासिद्धिरस्य वचनस्याभावे सुलभा । न च 'सम्बोधने[5] चे'ति पृथग् योगः' [6]सामन्त्रितमित्युत्तरसूत्रार्थमावश्यकः, नायं योगो हि सम्बोधने प्रथमाविधायकः, किन्तु आमन्त्रितसंज्ञार्थमनुवादक इति शङ्क्यम् । यतोऽस्यानुवादकत्वे' सम्बोधने आमन्त्रित'मित्येक एव योगः क्रियेत न पृथग् योगः । ज्ञापिते चास्मिन् वचने प्रथमयोगेन संबोधनार्थे प्रथमाविधानं, द्वितीयेन च आमन्त्रितसंज्ञा विधानमित्यवश्यस्वीकार्यं तथा सति सम्बोधनाऽऽधिक्ये हे राम इत्यादौ प्रथमां विधातुमयं पृथग्योगः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'कटं करोती'त्यादौ कर्माद्याधिक्ये प्रथमाया अभावः ।

अथात्र प्रातिपादिकार्थेति[7] सूत्रे मात्रग्रहणात् 'कटं' करोती'त्यादौ प्रथमाया अभावोऽन्यथासिद्ध इति यद्युच्येत तर्हि प्रत्ययनियमपक्षेऽपि[8] मात्रग्रहणाकरण-

---

1. अष्टा. 2/3/47
2. अष्टा. 2/3/48
3. तथाहि–
   (क) "अथ मात्रग्रहणं किमर्थम्? एतन्मात्र एव प्रथमा यथा स्यात् कर्मादिविशिष्टे माभूदिति कटं करोति । नैतदस्ति प्रयोजनम् । कर्मादिषु द्वितीयाद्या विभक्तयस्ताः कर्मादिविशिष्टे बाधिका भविष्यन्ति । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति– 'न कर्मादि-विशिष्टे प्रथमा भवंती'ति यदयं सम्बोधने प्रथमां शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम्? सामन्त्रितमिति वक्ष्यामी'ति । यत्तर्हि योगविभागं करोति । इतरथा हि सम्बोधने आमन्त्रितमित्येव ब्रूया'दित्याह पत. व्या. म. भा. 2/3/3/46.
   (ख) 'मात्रग्रहणमपि न कर्तव्यम् । कर्माद्याधिक्ये कस्मान्न भवति? ज्ञापकात्, यदयं 'सम्बोधने च' इत्याह । यदि ह्याधिक्येऽपि स्यात् तदनर्थकं स्यात् । उत्तरार्थे हि 'सम्बोधने सामन्त्रितम्' इत्येव वक्तव्यं, किं योगविभागेने'त्याह ह. मि. पदम. 2/3/46
   (ग) "प्रातिपदिकार्थलिङ्ग.....' (सू. 2/3/46) 'सम्बोधने आमन्त्रिम्' इत्येकयोगमकृत्वा 'सम्बोधने च' 'सामन्त्रितम्' इति योगविभागकरणं ज्ञापयति न कर्मादिविशिष्टे प्रथमा भवतीती"त्याह एन. एस. रामा. ज्ञा. सं. परि. 1/2 पृ. 156.
4. 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' अष्टा. 2/3/46
5. अष्टा. 2/3/47
6. अष्टा. 2/3/48
7. अष्टा. 2/3/48
8. कर्मण्येव द्वितीयेत्यादिरूपः प्रत्ययनियमः ।

लाघवमेवास्य वचनस्य फलमित्यवेहि । तदुक्तम्[1]– 'अर्धमात्रा लाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणा' इति ।

## (ङ) ज्ञापकानि वार्तिकानि

भगवता कात्यायनेन यानि वार्तिकानि[2] विरचितानि तानि तेषां शिष्टप्रयुक्तानां शब्दानां साधुत्वं विदधाति येषां साधुत्वं भगवतः पाणिनेः सूत्रैर्न जायते । 'शकन्धुः' 'कुलटा' 'सीमन्तः' कर्कन्धुः' पतञ्जलिः 'मनीषा' इत्यादीनां शब्दानां हि साधुत्वं 'शकन्ध्वादिषु[3] पररूपं वाच्यमिति' वार्तिकं विना नोपपद्यते । यद्यप्यधुना स्वतन्त्रो वार्तिक-ग्रन्थो नोपलभ्यते तथापि व्याकरणमहाभाष्ये वार्तिकान्युपलभ्यन्ते । महाभाष्यादेव वार्तिकानि शब्दतोऽर्थतो वा गृहीत्वा वामन-जयादित्याभ्यां काशिकायां, भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां तदन्यैश्च पाणिनिसूत्र-वृत्तिकारैः स्व-स्व-ग्रन्थे निबद्धानि । वार्तिकानि च यानि भगवता पतञ्जलिना प्रत्याख्यातानि व्याकरणमहाभाष्ये, न तानि पाणिनिसूत्राणि व्याचक्षाणैराचार्यैः स्व-स्व-ग्रन्थे गृहीतानि । किन्तु प्रत्याख्यातान्यपि सूत्राणि तै र्गृहीतानीति नाश्चर्यकरं, यतो वार्तिकानि सूत्राणां लक्ष्यसाधने सहायकानि तान्येव सन्ति यान्यप्रत्यख्यातानि सन्ति । प्रत्याख्यातान्यपि सूत्राणि लक्षणैकचक्षुष्काणामस्माकं सौलभ्येन साधुत्व-ज्ञापने प्रभवन्तीति मन्ये तानि संगृहीतानि व्याख्याकारैः प्रायः सर्वैः । पुरुषोत्तमदेवस्तु बौद्ध इति वैदिकशब्दसाधुत्वप्रतिपादकानि सूत्राण्यगृहीत्वा तेन लौकिकशब्द साधुत्वप्रतिपादकान्येव सूत्राणि व्याख्येयत्वेन गृहीतानि । अस्तु । तत्र, येषां वार्तिकानामभावेऽपि तत्साध्यशब्दानामनुशासनं संभवति, तानि स्वसार्थक्यायकिञ्चन परिभाषारूपं तद्व्यतिरिक्तं किमपि वचनं वा ज्ञापयन्तीति तानि ज्ञापकानि वार्तिकानीत्युच्यन्ते । तान्येवात्र यथाक्रमं निरूप्यन्ते । तत्र –

### 'ण्यन्तानां भादीनामुसंख्यानं कर्तव्यम्'

[4]'न भा भू -पू-कमि गमि प्यायीवेपा'मिति[5] सूत्रस्थं वार्तिकमिदं "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति[6] परिभाषाऽनित्ये'ति[7] वचनस्य ज्ञापकम् । प्रभापन-'[8]

---

1. ब. ना. प. शे. प. 134, पृ. 366.
2. 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः' इत्यभियुक्ताः ।
3. वै. सि. कौ. स्वरसन्धि प्र. पृ. 49
4. वा. का. 8/4/34
5. अष्टा. 8/4/34
6. (क) प्रकृतिग्रहणे णिजन्तस्यापि ग्रहणम्' व्याडिः प. सू. प. 70 पृ. 31
   (ख) पु. दे. ल. प. वृ. प. 73 पृ. 144

मित्यादौ णत्वाभावायाऽऽरब्धमिदमस्य वचनस्याभावे हि व्यर्थम्, यतः प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति परिभाषया [1]सूत्रेणैवात्र णत्वाभावः सुलभः । ज्ञापिते चास्मिन् वचनेऽत्र तस्याप्रवृत्त्या सूत्रेण णत्वाभावो न सिद्ध्यतीति वार्तिकमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [2]'अर्हः, इत्यत्र ण्यन्तस्यार्हते-र्ग्रहणाभावः । अस्यासत्त्वे हि तस्यात्र ग्रहणं दुर्वारं स्यात् । वचनमिदं फलाभावात् [3]अन्ये न [4]मन्वते, यत इयं परिभाषा कुत्वमात्रविषयेति भाष्यकृतः [5]सिद्धान्तः ।

## 'तपसः परस्मैपदं च'

[6]'कर्मणो रोमन्थ तपोभ्या'मिति सूत्रस्थं 'तपसः[7] परस्मैपदं चे'ति वार्तिकं सनाद्यन्तानामुपदेशोऽस्ती'ति वचनस्य ज्ञापकम्[8] । यतः 'तपश्चरति तपस्यती'त्यत्र

---

(ग) 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं भवति' सी. दे. बृ. प. वृ. प. 90, पृ. 228.
(घ) प्रकृतिग्रहणे ण्यधिकस्य ग्रहणम्' नी. दी. प. वृ. प. 85 पृ. 302.
(ङ) ह. भा. प. भास्क. प. 93, पृ. 360
(च) भ. ना. प. शे. प. 92, पृ. 326
(छ) 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं कुत्वविषये भवति' शेषा. प. भास्क. प. 79, पृ. 444

7. 'तथाहि– 'अव्यापिका चेयम् । नभादि (8/4/34) सूत्रे ण्यन्तानां भादीनामुपसंख्यानमिति वचनात् । तेनार्ह 3/2/12 इत्यत्र ण्यन्तस्यार्हते र्ग्रहणं न भवतीति रक्षितेनोक्त'मित्याह सी. दे. बृ. प. वृ. प. 90 पृ 2841

8. प्रपूर्वकात् 'भादीप्तौ' धा. पा. अदा. 1051 इति भाधातोः 'हेतुमति च' अष्टा. 3/1/26 इतिणिचि तदन्तात् 'कृत्यल्युटो बहुलम्' अष्टा. 3/3/113 इति ल्युटि योरनाऽऽदेशे रूपम् ।

1. 'नभाभू.' अष्टा. 8/4/34
2. अष्टा. 32/12:
3. हरिभास्कर-भट्टनागेशादयः ।
4. तथाहि– "यत्तु 'न भाभूपू- कमि. (8/4/34) इत्यत्र ण्यन्तानां च भादीनामुपसंख्यानादनित्येयं तेनाण्यन्ताद् हन्तेः 'आङोयमहनः' (1/3/28) इति नात्मनेपदमिति कश्चित् तन्न, एतत्परिभाषायाः कुत्वमात्रविषयत्वस्याकर उक्तत्वादन्यत्रातिप्रसङ्गशङ्काया एवानुदयादित्याह ह भा. प. भास्क. प. 93, पृ. 360-361
"इयं च कुत्वविषयैवेति चाह भ. ना. प. शे. प. 92 पृ. 326 "तथाच– वार्तिकम्– 'हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् । ज्ञापकं तु चङीऽन्यत्र ण्यन्तेऽपि कुत्वाभावस्य' इती त्याह शेषा. प. भास्क. प. 79, पृ. 445
5. तथाहि–"एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र कुत्वं सिद्धं भवती'त्याह पत. व्या. म. भा. 7/3/2/56
6. अष्टा. 3/1/15
7. वा. का. 3/1/15
8. कर्मणो रोमन्थ तपोभ्यामिति (3/1/15) क्यङ्विधौ परस्मैपदं चेत्युक्तम् । तत्रोपदेशे ङित्त्वाभावादेव परस्मैपदविधौ परस्मैपदवचनं ज्ञापयति सनाद्यन्तानामुपदेशोऽस्तीति । तेन यङ् णिङ् क्यजन्तादात्मनेपदसिद्धि'रित्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 691

क्यङन्तस्य 'सनाद्यन्ता धातवः'[1] इतिधातुत्वेऽप्युपदेशे ङित्त्वाभावाद् 'अनुदात्तङित आत्मनेपद'[2]मित्याऽऽत्मनेपदस्याप्राप्त्या 'शेषात्कर्तरि परस्मैपद'[3]मित्यनेनैव परस्मैपदस्य सिद्धतया परस्मैपदार्थमारब्धमिदं वार्तिकमनुपपन्नम् । ज्ञापिते चास्मिन् वचने क्यङन्तस्याप्युपदेशतया ङित्त्वप्रयुक्तस्याऽऽत्मनेपदस्य बाधनद्वारा परस्मैपद-विधानार्थमिदं वार्तिकमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु यङ्-णिङ्-क्यङन्ता-दात्मनेपदसिद्धिः । एतद्वचनाभावे हि 'बोभूयते' 'कामयते' 'श्येनायते' इत्यादौ यङ्-णिङ्-क्यङन्तेभ्यो बोभूय-कामय-श्येनायेत्येतेभ्यो नाऽऽत्मनेपदं सिद्ध्येत् । यतो नैते भवन्त्युपदेशे ङितोऽन्यथा[4] ।

वस्तुतस्तु वार्तिकमिदं नास्य वचनस्य ज्ञापकम् । यत'स्तपस्ये'त्यस्य 'सनाद्यन्ता धातव'[5] इति धातुसंज्ञायां सत्यां ततः कर्तरि लकारे '[6]भावकर्मणो'- रित्यात्मनेपद-निवृत्त्यर्थं वार्तिकमिदमेतद्वचनं विनापि सुतरामुपपद्यते । अतः 'पुच्छभाण्डचीव-राण्णिङ्[7] 'इति सूत्रे णिङो ङित्करणम् एतद्वचनज्ञापकम् । अन्यथा हि णिङन्तस्य 'सनाद्यन्ताधातव'[8] इति धातुत्वेऽप्युपदेशे ङित्त्वाभावाद् 'अनुदात्तङित[9] आनमे-पद'मित्यस्याप्राप्त्या नित्याऽऽत्मनेपदार्थं कृतं णिङोङित्करणमनुपपन्नम् । ज्ञापिते च सनाद्यन्तानामुपदेशोऽस्तीति वचने णिङन्तस्याप्युपदेशतया ङित्त्वप्रयुक्तमात्मनेपदं सिद्ध्यति । तथ्यमिदं पुरुषोत्तमदेवोऽपि स्वीकरोत्यन्यत्र [10]।

## 'बहिषष्टिलोपश्च'[11]

वार्तिकमिदम् 'अव्ययानां भमात्रे टिलोपोऽनित्यः' इति वचनस्य ज्ञापकः[12] । यतो बहिषः प्रागदीव्यतीयेष्वर्थेषु 'यञ्प्रत्ययमात्रस्यानेन विधाने 'बहिस्य'

---

1. अष्टा. 3/1/32
2. अष्टा. 1/3/12
3. अष्टा. 1/3/7
4. पृ. 69
5. अष्टा. 3/1/32
6. अष्टा. 1/3/13
7. अष्टा. 3/1/20
8. अष्टा. 3/1/32
9. अष्टा. 1/3/12
10. दुर्घटवृत्तौ अनेन हि "स चायुक्तः **भावकर्मणोरि**त्यात्मनेपद-निवृत्त्यर्थत्वात् । ततश्च पुच्छभाण्डचीवराण्णिङ् (1/1/20) इति ज्ञापकमित्युक्तम् ।
11. व्या. म. भा. अष्टा. 4/1/3/85
का 4/1/85 'बहिषष्टिलोपो यच्चे'त्याह वार्तिकस्वरूपम् भ. दी. वै. सि. कौ. अपत्याधिकार प्र. पृ. 572.
12. तथाहि–

इत्यवस्थायाम् 'अव्ययानां भमात्रे[1] टिलोपः' इति टेः 'इस्' इत्यस्य लोपे [2]'तद्धितेष्वचामादे' रित्याद्यचो वृद्धौ स्वादिकार्ये 'बाह्यः' इति प्रयोगस्य सिद्धतया टिलोपवचनमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने कदाचिद् अव्ययानां भमात्रे टिलोपस्याप्रवृत्तौ 'बाह्य' इति न सिद्धयेदतष्टिलोपवचनमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्य चास्य वचनस्य फलं तु 'आराद्भव [3]आरातीयः' इत्यादि प्रयोगेषु टिलोपाभावस्य सिद्धिः ।

## 'मस्जेरन्त्यात्पूर्वं [4]नुममिच्छन्त्यनुषङ्ग-संयोगादिलोपार्थम्'

वार्तिकमिदम् 'समुदायस्य संयोगसंज्ञे'ति[5] वचनस्य ज्ञापकम्[6] । यतो यदि द्वयोर्द्वयोरपि संयोगसंज्ञा स्यात्तदा मग्नः मग्नवान् इत्यादौ [7]मस्जेःक्ताऽऽदिप्रत्ययेषु कृतेषु' मस्ज् त 'इत्याद्यवस्थायां [8]'मिदचोऽन्तयात्परः 'इति परिभाषया

---

(क) "बहिष इति'– टिलोपवचनमव्यायानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थः, तेनारातीय इत्येवमादि सिद्धं भवती'त्याह कै. प्रदी. 4/1/3/85

(ख) "टिलोपवचनमव्ययानां भमात्रे टिलोपस्यानित्यत्वज्ञापनार्थम् 'आरातीयः'' इत्याह जयादित्यः का. 4/1/85

(ग) "बहिषष्टिलोपश्चेति (4/1/85वा) ज्ञापयति । अव्ययानां भमात्रे टिलोपोऽनित्यः । तेनारातीय इत्यादिसिद्धिरित्याह पु. दे. ज्ञा. समु. चतुर्दशे रक्तपादे पृ. 78.

(घ) "अव्ययानां भमात्रे टिलोपः । अनित्योऽयं, बहिषष्टिलोपविधानात् । तेनेह न आरातीयः । शाश्वतीयः "इत्याह भ. दी. वै. सि. कौ. शैषिक प्र. पृ. 639

(ङ) 'अव्ययानां भमात्रे टिलोप' इत्यस्यानित्यत्वज्ञापनार्थमिह टिलोपविधानम् । तेन आराद्भव आरातीय इत्यादि सिद्ध्यती'त्याह वा. दी. बा. मनो. अपत्याधिकार प्र. पृ. 572.

"बहिष इति टिलोपवचनम् 'अव्ययानां भमात्रे' इत्यस्यानित्यत्वं ज्ञापयितुम् । तेन 'आरातीय' इति सिद्ध"मित्याह ज्ञा. भि. त. बो. अपत्याधिकार प्र. पृ. 772.

1. वा. वै. सि. कौ. शैषिक प्र. पृ. 639
2. अष्टा. 7/2/117
3. 'आरादुभयं प्राप्नोति 'आरातीयः 'इत्याह पत. व्या. म. भा. 4/2/2/104 वृद्धात्तु छो भवति आरातीयः 'इत्युक्तं काशिकायाम् (4/2/104) आरातीयः इति अत्र टिलोपो न भवति, बहिषष्टिलोपश्च' इत्यत्रानित्यत्वस्य ज्ञापितत्वादित्याह जि. बु. न्या. 4/2/104 'आरातीय इति' बहिषष्टिलोपश्च इत्यस्यानित्यत्वज्ञापनादत्र टिलोपाभाव इत्याह ह. मि. पदम. 4/2/104
4. का. 1/1/47
5. 'हलोऽनन्तराः संयोगः' अष्टा. 1/1/7
6. तथाहि– "मस्जेरन्त्यात्पूर्वं नुममिच्छान्ति अनुषङ्गलोपार्थमिति (वार्त्तिक 1/1/47) वाक्यं ज्ञापकं समुदायस्यैषा संयोगसंज्ञेति । यदि च द्वयोर्द्वयोरपि संयोगसंज्ञा स्यात् आदावपि नुमिकृते स्कोरिति (8/2/29) सलोपे ततोऽनुषङ्गलोपे सिद्धं मग्न इति रक्षितः, तेनेन्द्रिद्रीयिषतीत्यत्र 'नन्द्रा' इति (6/1/13) दकारस्य द्वित्वनिषेधो न भवती"त्याह पु. दे. ज्ञा. समु. प्रथमपादे पृ. 58.
7. धा. पा. 'टुमस्जोशुद्धौ' – तुदा. 14/6.
8. अष्टा. 1/1/47

[1]'मस्जिनशोर्झली'ति मकारोत्तराकारान्तावयवत्वेनापि नुमि कृते' मन्स्ज् त' इत्यावस्थायां 'स् जूत इति संयोगाऽऽदिसकारस्य 'स्कोः [2]संयोगाद्योरन्तेचे' ति लोपे ततः [3]'अनिदितां हल उपधायाः क्ङिती'[4]त्यनुषङ्गलोपे निष्ठातकारस्य [5]'आदितश्चे'-ति नत्वे तस्यासिद्धत्वात् 'चोः[6] कु'रितिकुत्वे स्वादिकार्येषु कृतेषु सिद्धमिष्टं रूपमेतद्वार्तिकं विनापि । ज्ञापिते चास्मिन् वचने वार्तिकस्य चास्याभावे तत्र 'मनूस् ज्' इत्येतत्त्रितयसमुदायस्यैव 'संयोगसंज्ञा[7]'भवेत् तथा सति 'स्कोः संयोगाद्योः[8]' इति सकारस्य, [9]'अनिदिताम्' इति नकारस्य च लोपो न प्राप्नोति, यथाक्रम-मनादित्वादनुपधत्वाच्च । अत्र मस्जेरन्त्याज्जकारात् पूर्वो जकारसकारयोर्मध्ये नुम्संपादनाय वार्तिकमिदं स्वांशे चरितार्थं भवति । एतद्वार्तिकसत्त्वे हि तत्र 'म स् न् ज्' इत्यवस्थायां संयोगाऽऽदिलोपानुषङ्गलोपौ सुतरां जायेते । तथा सति 'मग्नः' मग्नवान्' इत्यादिकमिष्टरूपं सिद्ध्यति । नान्यथा हीदं रूपं सिद्ध्येत् । ज्ञापितस्य चास्य वचनस्य फलं तु 'इन्द्रिद्रीयिषती'त्यत्र 'नन्द्राः[10] संयोगादयः 'इति दकारस्य द्वित्वनिषेधाभावः.। एतद्वचनाभावे हि द्वयोर्द्वयोरपि संयोगसंज्ञायां दकारस्य द्वित्व-निषेधोऽत्र दुर्वारः स्यात् ।

**'सूचि सूत्रिमूत्र्यट्यर्त्यतीनां[11] ग्रहणं यङ्विधावनेकाज्हलाद्यर्थम्'**

**[12]'सूचि सूत्रिमूत्र्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः'इति वा**

'धातोरेकाचो हलादेः[13] क्रियासमभिव्याहारे यङि'ति सूत्रस्थं वार्तिकमिदम् 'आर्धधातुक इति विषय सप्तमी'ति वचनस्य [14]ज्ञापकम् । यतोऽत्र विषयसप्तम्यां

---

1. अष्टा. 7/1/60
2. अष्टा. 8/2/29
3. अष्टा. 6/4/24
4. 'मकारस्योपधायाः अनुषङ्ग इति पूर्वाचार्यैः संज्ञा कृतेतिन्यायः 1/1/47
5. अष्टा. 8/2/45
6. अष्टा. 8/2/30
7. 'हलोऽनन्तराः संयोगः'– अष्टा. 1/1/7
8. अष्टा. 8/2/29
9. अष्टा. 6/4/24
10. अष्टा. 6/1/3
11. वार्तिकस्वरूपमिदं दृश्यते व्या. म. भा. 3/1/2/22 का 3/1/22
12. वार्तिकस्वरूपमिदं दृश्यते वै. सि. कौ. यङ् प्रक्रियायाम् पृ. 269
13. अष्टा. 3/1/22
14. तथाहि– "यङ्विधौ सूचिसूत्रिमूत्रीणामुपसंख्यानम् (3/1/22)ज्ञापयति– 'आर्धधातुक इति-परसप्तमी' विषयसप्तम्यां हि णिलोपे कृते धातोरेकाच्त्वात् सूचि प्रभृते र्यङ् सिद्धः स्यात् । तेन चोरयतेर्न यङ् भवतीति द्विसूत्र्यामुक्त"मित्याह– पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 70

सत्यां सूचिसूत्रिमूत्रीणां णेः [1]'णेरनिटी'त्यनेन लोपे यङः प्रागेव कृते सति धातोरेकाच्त्वेन [2]सूत्रेणैव यङ् 'सोसूत्र्यते' 'मोमूत्र्यते' इत्यादौ सुलभ इतीदं वार्तिकं-व्यर्थम् । ज्ञापिते चास्मिन् वचने [3]'णेरनिटी'त्यत्र '[4]आर्धधातुक' इत्यधिकाराद् यङः प्राग् णिलोपाप्राप्तौ ण्यन्तस्यैकाच्त्वाभावाद् यङोऽप्राप्तौ च सत्यां तेभ्यो यङः सिद्ध्यर्थं वार्तिकमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु चोरयते [5]र्यङोऽभावः ।

## 'रुत्वविधावह्नो [6]रूपरात्रिरथन्तरेषूपसंख्यानम्'

वार्तिकमिदं 'नानन्त्यस्य रुर्भवती'ति वचनस्य [7]ज्ञापकम् । यतोऽस्य वचनस्याभावे रुत्वविधायकमिदं व्यर्थम् । तथाहि– वार्तिकमिदं रूपरात्रिरथन्तरेषु परतः अहन्‌शब्दस्य '[8]रोऽसुपी'ति रत्वापवादं' रुत्वं विधत्ते । तेन 'अहोरूपम्' 'गतमहोरात्रिरेषा' 'अहोरथन्तरम्' इत्यादि प्रयोगाः सिद्ध्यन्ति । यदि रुत्वं नानेन विदध्यात्तर्हि 'रोऽसुपी'ति रत्वे'[9] हशिचे'ति[10] उत्वं न सिद्ध्येत् । उत्वं हि हशि अप्लुतादतः परस्यरोर्विधत्ते न तु रेफस्य । सत्येवम् 'अहोरूपम्' इत्यादौ 'अहन्+रूपम्' इत्यादिस्थितिषु 'अह्नो नलोपप्रतिषेधः'[11] इति वार्तिक-[12]प्रत्याख्यानपक्षे नकारस्य 'नलोपः प्रतिपदिकान्तस्य'[13] इत्यनेन लोपे सति अन्त्यस्याकारस्यैव रुत्वं विधेयं, तथा सति रोः अतः परत्वाभावाद् [14]उत्वासंभवेन उत्वफलकं रुत्वविधानमिदं व्यर्थम् । सति चास्मिन् वचने अनवकाशेन रुत्वेन नलोपबाधाद् अन्त्यस्य नकारस्य रुत्वे अहोरूपमित्यादि सिद्ध्यतीति वार्तिकमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलन्तु अहोभ्यामित्यादौ

---

1. अष्टा. 6/4/51
2. 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' अष्टा. 3/1/22 .
3. अष्टा 6/4/51
4. अष्टा. 6/4/46
5. 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' अष्टा. 3/1/22
6. वा. व्या. म. भा. 8/2/2/68
7. तथाहि– 'यत्तर्हि रूपरात्रिरथन्तरेषूपसंख्यानं करोति, तज् ज्ञापयत्याचार्यो 'नानन्त्यस्य-रुर्भवती'ति । कथं कृत्वा ज्ञापकम्? नह्यस्ति विशेषो रूपरात्रिरथन्तरेष्वनन्त्यस्य रौ वा रेफे वा" इत्याह पत. व्या. म. भा. 8/2/1/7
8. अष्टा. 8/2/69
9. अष्टा. 8/2/69
10. अष्टा. 6/1/114
11. वा. व्या. म. 8/2/1/7
12. वार्तिकमिदं प्रत्याख्यातम् व्या. म. भा. 8/2/7
13. अष्टा. 8/2/7
14. 'हशि च' अष्टा. 6/1/114

नलोपप्रतिषेधवार्तिक[1]प्रत्याख्यानपक्षे नलोपाभावः । नलोपे हि रुत्वासम्भवेन रूपमिदं न सिद्ध्येत् ।

## 'श्चुत्व धुटि [2]सिद्धं वाच्यम्'

वार्तिकमिदं [3]'पूर्वत्रासिद्ध'मित्यधिकारः' इतिवचनस्य ज्ञापकम्[4] । यतः 'पूर्वत्रासिद्ध'मितिसूत्रस्य स्वतन्त्रविधित्वे 'सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धे'त्येवार्थः स्यात्, यत इदं सूत्रं भगवत्पाणिनिप्रणीताया विश्वविश्रुताया अष्टाध्याय्या अष्टमाध्याये द्वितीयपादस्याऽऽदिममिति' इतः प्राक्तनं कृत्स्नं सूत्रजालं 'सपादसप्ताध्यायी'ति, उपरितनं तु कृत्स्नं सूत्रजालं 'त्रिपादी'ति च व्यवह्रियते । तत्रास्य स्वतन्त्रविधित्वे 'इतः पूर्वस्मिन् शास्त्रे प्रवर्तमाने उपरितनं शास्त्रमसिद्धमित्यर्थ एव लभ्यत इति सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धे'ति सूत्रार्थः पर्यवसितः । तथा सति 'षट्श्चोतन्ति' '[5]अट्श्चोतति' [6]रट्श्चोततीत्यादौ 'स्तोः [7]श्चुना श्चु'रिति-श्चुत्वस्य [8]'पूर्वत्रासिद्ध'मित्यनेनासिद्धत्वाप्राप्त्या सकाराभावात् 'डःसि धु'[9]- डिति धुटोऽप्राप्त्यात्र धुडभावायाऽऽरब्धमिदं वार्तिकं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'त्रिपाद्यामपि पूर्वं शास्त्रं प्रति परं शास्त्रमसिद्ध'मित्यपि सूत्रार्थो लभ्यते, तथा सति 'षट्श्चोतन्ती'त्यादौ [10]'पूर्वत्रासिद्ध'मित्यनेन [11]'स्तोःश्चुना श्चु'रिति श्चुत्वस्या-सिद्धत्वात् सकारस्य प्राप्तं धुडागमं[12] वारयितुं वार्तिकमिदं स्वांशे चरितार्थं भवति ।

न च 'श्च्युतिर् क्षरणे'[13] इत्ययं धातुः शकाराऽऽदिरेव पठित इति तस्य सकाराऽऽदित्वं स्वीकृत्य सकारस्य च श्चुत्वं प्रकल्प्य धुटि तदसिद्धत्ववारणा-याऽऽरम्भोऽस्य वार्तिकस्य, तत्सार्थक्याय चैतद्वचनज्ञापकत्वकल्पनं सर्वमेतद-सङ्गतमेवेति शङ्कनीयम्, यतोऽयं धातुः सकाराऽऽदिरेव पठ्यते, सकारस्य च

---

1. 'अह्नो नलोपप्रतिषेधः' वा. व्या. म. भा. 8/2/7
2. वा. का. 8/2/3
3. अष्टा. 8/2/1
4. तथाहि– "अधिकारत्वादेव 'श्चुत्वं धुटिसिद्धं वाच्य'मित्यादिचरितार्थमिति ग्रन्थेन वार्तिक-स्यास्य ज्ञापकत्वं सूचयति भ. ना. ल. श. शे. संज्ञा प्र. पृ. 107.
5. 'अटतीत्यट्'क्विबन्तोऽयम्' ।
6. 'रटतीति रट्' क्विबन्तोऽयम् ।
7. अष्टा. 8/4/40
8. अष्टा. 8/2/1
9. अष्टा. 8/3/29
10. अष्टा. 8/2/1
11. डः सि धुट्' अष्टा. 8/3/29
12. 'स्तोःश्चुना श्चुः अष्टा. 8/4/40
13. धा. पा. भ्वा. 41

श्चुत्वेन शकाराऽऽदिरयं व्यवह्रियते । न चास्य सकाराऽऽदित्वे फलाभावः, नह्यस्य सकारस्य क्वचन श्रवणं भवतीति शङ्कनीयम्, यतो 'मधुगि 'दितिरूपसिद्धिरेवास्य सकाराऽऽदित्वे फलं विद्योतते । तथाहि– 'मधुश्चोतती'ति मधुच्युत् [1]क्विबन्तः, मधुच्युतमाचष्ट इति विग्रहे 'तत्करोति तदाचष्टे[2] इति णिचि कृते "प्रातिपदिकाद्धात्वर्थे[3] बहुलमिष्ठवच्चे"ति इष्ठवत्त्वेन टिलोपे "मधुश्चिच्य' इति स्थिते ण्यन्तात्पुनरपि क्विपि 'णेरनिटी'ति णिलोपे श्चुत्वस्यासिद्धत्वात्[4] 'स्कोःसंयोगाद्योरन्तेचे'ति[5] सकारस्य संयोगाऽऽद्यस्य लोपे [6]"संयोगान्तस्य लोपः इति यलोपे 'चोः[7] कुरिति कुत्वे 'मधुगि'त्येतदिष्टं रूपं सिद्ध्यति । नहि धातोरस्य शकाराऽऽदित्वे 'मधु"गित्येतदिष्टं रूपं सिद्ध्येत् । यतोऽत्र 'मधुश्च्य'इति स्थिते पूर्वं यकारस्य "संयोगान्तस्य[8] लोपः "इति संयोगान्तलोपः स्यात् ततः शकारस्य "व्रश्चादि"[9]सूत्रेण षत्वे सति "झलां जशोऽन्ते"[10] इतिषकारस्य डकारे 'मधु"जित्यनिष्टरूपापत्तिर्दुर्वारा । इत्थं वार्तिकमिदमावश्यकं स्वसार्थक्याय ज्ञापकं च तद् वचनस्येति निश्चप्रचम् ।

ज्ञापितस्यास्य वचनस्य फलं तु किमु + उक्तम्, = किम्वुक्तमित्यत्र मकारस्य 'मोऽनुस्वारः[11]' इति अनुस्वाराभावः । एतद्वचनाभावे हि 'मय[12] - उञो वो वे'ति त्रैपादिकं परं वत्वशास्त्रं नासिद्धं स्यात् 'मोऽनुस्वार'[13] इति पूर्वं त्रैपादिकमनुस्वारशास्त्रं प्रतीत्यत्रानुस्वाराऽऽपत्तिर्दुर्वारा स्यात् । सति चास्मिन् वचने 'अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ्यते' व्युत्पत्त्या कर्मणि यञि निष्पन्नस्याधिकारशब्दस्य

---

1. 'क्विप्' अष्टा. 3/2/76
2. ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 239
3. ग. सू. वै. सि. कौ. चुरा. प्र. प. 238
4. अष्टा. 6/4/51
5. अष्टा. 8/2/29
6. अष्टा. 8/3/23
7. अष्टा. 8/2/30
8. अष्टा. 8/2/23
9. "व्रश्चभ्रस्ज सृज मृज यज राजभ्राजच्छशां षः" अष्टा. 8/2/23
10. "व्रश्चभ्रस्ज सृज मृज यज राजभ्राजच्छशांषः"– अष्टा. 8/2/36
11 अष्टा. 8/3/23 ।
12 अष्टा. 8/3/33 ।
13 अष्टा. 8/3/23 ।

महिम्ना 'पूर्वत्रासिद्ध'[1] मिति सूत्रमुपरितनसूत्रेष्वनुवृत्त्यर्थमेव, नतु स्वतन्त्रविधिरिति पर्यवसितम् । तथा सति [2]'मय उञो वोवा'इति सूत्रे 'पूर्वत्रासिद्ध'[3]मित्यनुवर्तते । ततश्च 'मयः परस्य उञो वो वा स्यात्, इदं च शास्त्रं पूर्वत्रासिद्धमित्येकवाक्यं सम्पद्यते । तत्र च अनुवृत्तपूर्वशब्देन इतः प्राक्तनं त्रिपादीस्थं सपादसप्ताध्यायीस्थं च कृत्स्नं सूत्रजालं विवक्षितमिति 'मोऽनुस्वार'[4] इति त्रैपादिकं शास्त्रं प्रति 'मय[5] उञो वो वा' - इति शास्त्रासिद्धत्वं सिद्ध्यतीति 'किम्वुक्त'मित्यत्रानुस्वाराभावोऽस्य वचनस्य फलम् । 'गोधुङ्मान्' - इत्यत्र [6]घत्व-[7]अशत्वानुनासिकेषु[8] परत्वात्कृतेषु झषन्तत्वाभावाद्भष्भावो[9] न स्यादिति [10]भष्भावसिद्धिरस्य वचनस्य फलम्, 'गोधुङ्मानित्यत्र 'झयः'[11] इति वत्त्वाऽऽपत्तेरभावो वेति मनुते [12]भट्टनागेशः ।

## (च) ज्ञापका वार्तिकांशाः

ये वार्तिकघटकाः शब्दाः किञ्चन परिभाषारूपं तद्व्यतिरिक्तं वचनं वा ज्ञापयन्त एवात्मनः सार्थकतां लभन्ते, ते ज्ञापका वार्तिकांशा इत्युच्यन्ते । ते चात्र यथाक्रमं निरूप्यन्ते । तत्र –

### 'अमहत्पूर्वे'ति प्रतिषेधवाचकः शब्दः

'शूद्रा[13]चामहत्पूर्वा जाति'रिति वार्तिके 'अमहत्पूर्वे'ति प्रतिषेधवाचकः शब्दः 'स्त्रीप्रत्ययप्रकरणे तदन्तविधिर्भवती'ति वचनस्य ज्ञापकः[14] । यत एतद्वचना-

---

1. अष्टा. 8/2/1 ।
2. अष्टा. 8/2/33 ।
3. अष्टा. 8/2/1 ।
4. अष्टा. 8/3/23 ।
5. अष्टा. 8/2/33 ।
6. 'दादेर्धातोर्घः - अष्टा. 8/2/32 ।
7. 'झलांजशोऽन्ते' - अष्टा. 8/2/39 ।
8. 'यरोऽनुनासिकेऽनुनासिको वा' - अष्टा. 8/4/45 ।
9. 'एकाचो वशो भष् झषन्तस्य स्ध्वोः' - अष्टा. 8/2/37 ।
10. 'एकाचो. - अष्टा. 8/2/37 ।
11. अष्टा. 8/2/10 ।
12. अनेन हि - "अधिकारत्वे फलमाह - त्रिपाद्यामपीति । अन्यथा 'गोधुङ्मा'नित्यत्र घत्व जशत्वानुनासिकेषु भष्भावानापत्तिरितिभावः । वस्तुतो घत्वे कृते 'झय' वत्वापत्तिर्दोष "-इत्युक्तम् -ल. शे. शे. संज्ञा प्र. पृ. 105-106 ।
13. वा. का. 4/1/4 ।
भाष्यकारेण तु 'शूद्रा चामहत्पूर्वा' इत्येकं, 'जातिः'इत्यपरं वार्तिकमिति स्वीकृतम् - व्या.म. भा. 4/1/11/4 ।

भावेऽमहत्पूर्वेति प्रतिषेधवाचकः शब्दो व्यर्थः । तथाहि - 'शूद्र शब्दाट्टाप्स्यात्तदन्तेन जातिश्चेद् वाच्या,'महत्पूर्वः शूद्रशब्दष्टापं न लभते जातिश्चेद् वाच्ये'ति वार्तिकार्थः । तत्रामहत्पूर्वेति प्रतिषेधो 'महाशूद्री'त्यत्र महाशूद्रशब्दाट्टापः प्रतिषेधाय कृतः, महाशूद्रशब्दो हि 'आभीरजाति' - वाचकः । एतद् वचनाभावे चासौ व्यर्थः । यतः 'समासप्रत्ययविधौ [1]प्रतिषेधः' इति तदन्तविधिनिषेधान् महत्पूर्वकशूद्र - शब्दाट्टापः प्राप्तिरेव नास्ति । इत्थं व्यर्थः सन्नयं प्रतिषेधवाचकः शब्दो वचनमिदं ज्ञापयति । ज्ञापिते चास्मिन् वचने शूद्रशब्दान्तान् महाशूद्रशब्दाट्टापोऽभावाय स्वांशे प्रतिषेधोऽयं चरितार्थतामेति । महाशूद्री'त्यत्र च टापः प्रतिषेधे सति 'जातेरस्त्रीविषयाद-योपधा'दिति जातिलक्षणङीषेव भवति ।

अथात्र "पञ्चाजी 'त्यादौ टाब्वारणाय 'स्त्रिया'[2]मित्यस्य गृह्यमाणविशेषणत्व-मवश्यं स्वीकार्यम्, तथा सति 'महाशूद्री'त्यत्र शूद्रशब्दार्थ - समवेतस्य स्त्रीत्वस्या-भावान् महाशूद्रनिरूपितशक्तेः समुदायनिष्ठतया तद् घंटकशूद्रमात्रस्याऽऽनर्थ-क्याच्च 'अर्थवद्ग्रहणेनानर्थकस्य [3]ग्रहण' - मिति परिभाषया टापोऽप्राप्त्या ज्ञापितेऽप्येतस्मिन् वचने प्रतिषेधस्यास्य स्वांशे चारितार्थ्यं नास्तीति ज्ञापकत्वमस्या-सङ्गत"मि तु नाऽऽशङ्कनीयम् । यतो 'महत्पूर्वे'ति प्रतिषेधस्य तदन्तविधिज्ञापकत्वं प्रतिपादयतो भाष्यस्य प्रामाण्येन शूद्र - शब्दार्थगतस्त्रीत्वमारोप्यते महाशूद्रे, तथा सति 'महाशूद्री'त्यत्र शूद्रशब्दार्थ - गतस्त्रीत्वस्य सत्त्वेन टापोऽभावाय वार्तिकेऽस्मिन्

---

भाष्याभ्युगपतं चेदं तथ्यं जिनेन्द्रबुद्धि - भट्टनागेशाभ्यामपि स्वीकृतम् । यतोऽमूभ्यां क्रमशः "महत्पूर्वस्य प्रतिषेध इति । अमहत्पूर्वेत्यस्यार्थमाचष्टे । अत्रापि जातिरिति सम्बध्यते, जातिवचनस्य प्रतिषेधो यथास्या"दित्युक्तम् न्या. 4/1/4 ।

'अमहत्पूर्वे'त्यत्रापि जातिरिति सम्बध्यते । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वज्ञातिमात्र-विवक्षया महच्छब्देन 'मृगक्षीर' 'कुक्कुटाण्ड'वत्समस्से ततः स्त्रीत्वविवक्षायां 'महती शूद्रेत्यर्थे 'महाशूद्रे' ति - टाबेवे'त्युक्तम् - ल. श. शे. स्त्रीप्रत्यय प्र. पृ. 526 ।

14. तथाहि –

(क) "एवं तर्हि ज्ञापयत्याचार्यः - 'भवतीह तदन्तविधि'रिति । किमेतस्य ज्ञापने प्रयो-जनम् ? भवती, अतिभवती । महती,,अतिमहती । अत्र तदन्तविधिः सिद्धो भवती"त्याह – पत. व्या. 1. भा. 4/1/1/4 ।

(ख) "एतदेव ज्ञापकं भवति – 'अस्मिन् प्रकरणे तदन्तविधिः, इति । तेनातिधीवरी, अतिपीवरी, अतिभवती, अतिमहती, इति भवती'त्याह - जया. का. 4/1/4 ।

1. 'समासप्रत्ययविधौ तदन्तप्रतिषेधो वक्तव्यः' इत्याह वार्तिक - स्वरूपं जया. - का. 1/1/72 । भाष्ये तु 'समास प्रत्ययविधौ च प्रतिषेधः' इति पाठो दरीदृश्यते, - -व्या. म. भा. 1/1/9/79 ।
   भट्टोजिदीक्षितस्तु 'समासप्रत्ययविधौ प्रतिषेधः' इत्येव वार्तिकस्वरूपं मनुते, - संज्ञा प्र. पृ. 20 वै. सि. कौ. ।
2. अष्टा. 4/1/3 ।
3. प. शे. प. 15, पृ. 98

अमहत्पूर्वे' ति शब्दः स्वांशे चारितार्थो भवति । अनुलोमसङ्कराणां[1] मातृजातिवृत्तित्वं हि [2]स्मृतिसिद्धम् । अतएव कृष्णद्वैपायनादिभिः कृतः क्षत्रियासूत्पादितानां पाण्डवादीनां क्षत्रियत्वव्यवहारः समुपपद्यते । सत्येवमत्र कैयटोक्तिः, तदुपजीव्ये च जिनेन्द्रबुद्धेः हरदत्त मिश्रस्य चोक्ती न युक्ताः, 'अमहत्पूर्वे'ति प्रतिषेधस्य तदन्तविधि-ज्ञापकतापरं भाष्यं हि तत्तदुक्तिभिः स्फुटं विरुद्धम् । यतोऽत्र 'एवं तु सत्यमहत्पूर्वेति प्रतिषेधो न वक्तव्यः, नहि 'महाशूद्री'त्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रसङ्गा[3]भावः' इत्याह कैयटः, 'इह' आमहत्पूर्वे'ति व्यर्थं महाशूद्रशब्दो हि समुदित एवाभीरजातौ वर्तते । तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टापः [4]प्रसक्त्य-भावा'दित्याह जिनेन्द्रबुद्धिः, 'एवं चामहत्पूर्वेति प्रतिषेधः शक्योऽकर्तुम्, नहि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्व[5]'मिति चाऽऽह हरदत्त मिश्रः ।

अतएव–'अमहत्पूर्वे'ति प्रतिषेधस्य स्त्रीप्रत्ययप्रकरणे तदन्तविधिज्ञापकत्वं भट्ट्-नागेशेन 'अत्र केचि[6]'दित्यादिग्रन्थेनोद्योते 'तदन्तविधिज्ञापकता [7]नासङ्गते'-त्यन्तेन ग्रन्थेन च लघुशब्देन्दुशेखरे स्वीकृतम् ।

---

1. 'उत्तमवर्णादधमवर्णायामुत्पन्नानामित्यर्थः ।
2. 'ब्राह्मणक्षत्रिवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रिय-वैश्यशूद्रा भवान्ती ति' शङ्खस्मृतिवचनं भट्टनागेशेन समुद्धृतम्–
   ल. शे. शें. स्त्रीप्रत्यय प्र. पृ. 529 ।
   उद्योते च 4/1/1/4 ।
3. प्रदी. 4/1/1/4 ।
4. न्या. 4/1/4 ।
5. पदम. 4/1/4 ।
6. 'अत्र केचित्–'अनुलोमसङ्कराणामपि मातृजातिवृत्तेः स्मृतिषूक्तत्वेन मातृजातीयत्वात्तत्रापि शूद्रत्वमस्ति । अतएव शङ्ख-स्मृतौ-ब्राह्मण-क्षत्रिय-वैश्यैः-क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रिय-वैश्य-शूद्रा एवेत्युक्तम् । 'शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इतिस्मृतिरपि तेषां शूद्रत्वा-रोपमूलिकैव । अन्यथास्य मूलान्तरकल्पने गौरवं स्यात् । स्मृतौ–अपध्वंसः–शूद्राविवाह उच्यते । अतः शूद्रशब्दार्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्रसङ्ग इति 'आमहत्पूर्वे'-त्यावश्यकम् । जातिप्रत्ययश्च शूद्रशब्देन समास एव, न तु शूद्राशब्देन समासे, इति न प्रागुक्त दोषः । उक्तरीत्या जातिरिति चावश्यकमेवेति भाष्यतात्पर्यम् । अतएव भाष्यकृता नेदं प्रत्याख्यातमित्याहुः ।
   उद्यो. 4/1/1/4 ।
7. "महाशूद्री'ति । 'आभीरी तु महाशूद्री'त्यमरः । ब्राह्मणादुग्रकन्यायाम्–'आभीरः' । नृपा-च्छूद्रायामुत्पन्ना 'उग्र'जातिकन्या । अत्रानुलोमसङ्कराणां मातृजातिवृत्तित्त्वात्तत्र तां जाति-मारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति–शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति । तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तदन्तात् 'ग्रहणवतेति निषेधादिति तदन्तविधि-ज्ञापकता नासङ्गता"ल. श. शे. स्त्रीप्रत्यय प्र. पृ. 229 ।

ज्ञापितस्यास्य वचनस्य फलं तु 'अतिधीवरी' 'अतिपीवरी'त्यादौ क्रमशो दधातेः, पिबतेश्च 'आतो मनिन् [1]क्वनिब् वनिपश्चे'ति क्वनिपि '[2]घुमास्थागापाजहातिसां हली'तीत्वे च कृते 'धीवानमतिक्रान्ता, 'पीवानमतिक्रान्ते'ति विग्रहे-प्रादयः[3]' इति समासे वन्नतान्तात् 'अतिधीवन्' शब्दात् 'अतिपीवन्शब्दाच्च 'वनोर[4]-चे'ति ङीबूराऽऽदेशयोः सिद्धिः, 'अतिभवती' 'अतिमहती'त्यादौ भवन्तमतिक्रान्ता महान्तमतिक्रान्ते'त्यर्थकाद् 'अत्यादयः' इति समस्तात् उगिदन्तान्तात् अतिभवच्छब्दात्, अतिमहच्छब्दाच्च 'उगितश्चे[5]'ति ङीपः सिद्धिश्च । एतद्वचनाभावे हि नैतेषु प्रयोगेषु तत्सिद्धिः सम्भवति । यतो 'ग्रहणवता प्रातिपदिकेन तदन्तविधि[6] र्नास्ती'ति तदन्तविधि-प्रतिषेधो दुर्वारः ।

अयं च ज्ञापकः श्रीनागेशेनापि [7]ज्ञापकसंग्रहे संगृहीतः ।

## घटीशब्दः

'अच्प्रकरणे [8]शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यान'मिति वार्तिके 'घटी' शब्दः '[9]प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मित्यनित्य''मिति वचनस्य [10]ज्ञापकः । यतोऽस्य वचनस्याभावेऽनया परिभाषयात्र वार्तिके घटग्रहणे-

---

1. अष्टा. 3/2/14 ।
2. अष्टा. 6/4/66 ।
3. 'प्रादयो गतार्थे द्वितीयया' वा.–का. 2/2/18 ।
4. अष्टा. 4/1/7 ।
5. अष्टा. 4/1/6 ।
6. प. शे. प. 32, पृ. 153 ।
7. तत्र हि 'अजाद्य. (सू. 4/1/4) । शूद्रा. चामहत्पूर्वा (वा) इति ज्ञापयति इह तदन्तविधि'रित्यु- क्तम्, पृ. 76 ।
8. वा. का. 3/2/9 ।
9. (क) व्याडिः प. सू. पृ, 25, पृ. 13 ।
   (ख) पु. दे. ल. प. वृ. प. 26, पृ. 123 ।
   (ग) सी. दे. बृ. प. वृ. प. 28, पृ. 193 ।
   (घ) नी. दी. प. वृ. प. 38, पृ. 300 ।
   (ङ) ह. भा. प. भास्क. प. 28, पृ. 334 ।
   (च) भ. ना. प. शे. प. 72, पृ. 288 ।
   (छ) शेषा. प. भास्क. प. 61, पृ. 432 ।
10. तथाहि–
   (क) "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्''इति घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थ''मित्याह जि. बु. न्या. 3/2/9 ।
   (ख) "लिङ्गविशिष्टपरिभाषयैव घटग्रहणेन घटीग्रहणेऽपि सिद्धे घटीग्रहणम् परिभाषाया अनित्यत्वज्ञापनार्थ'–मित्याह ह. मि. पदम. 3/2/9 ।

नैव घटीग्रहणस्यापि सुलभतया 'घटीग्रह' इत्येतदर्थमुपात्तो घटीशब्दो व्यर्थः। ज्ञापितया अस्याः फलं तु 'महतीप्रियः' इत्यत्र 'आन्महतः[1] समानाधिकरण-जातीययोः' इति आत्वस्य, 'द्विषतीतापः' इत्यत्र 'द्विषत्परयोस्तापेः'[2] इति खच्प्रत्ययस्य, 'मद्रराज्ञी'त्यत्र' 'राजाहःसखिभ्यष्टच्'[3]–इति टच्प्रत्ययस्य चाभावः। अस्य वचनस्याभावे हि लिङ्गविशिष्टपरिभाषयात्र आत्वं खच्-टच्-प्रत्ययौ च दुर्वाराः स्युः।

## भुव ईटि स्थानिवत्त्वप्रतिषेधः

'[4]आहि भुवोरीटि प्रतिषेधः' इतिवार्तिकेन यद् अस्तिस्थानिकस्य भुवः स्थानिवद्भावनिमित्तमिवेटः प्राप्तिं रोद्धुम् अस्तेरभूदित्यत्र 'अस्तिसिचोऽ[5]पृक्ते' इतीटि कर्तव्ये स्थानिवत्त्वप्रतिषेधो वार्तिककारेण कृतोऽसौ 'न प्रत्ययलक्षणेन सिच ईड-

---

(ग) "घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थ"मित्याह ज्ञा. भि. त. बो. पूर्वकृदन्त प्र. पृ. 407।

(घ) "तच्चानित्यत्वं ग्रहेरजूविधौ घटघटीग्रहणाभ्यां (3/2/9 वा.) ज्ञापित"मित्याह पु. दे. ल. प. वृ. प. 26, पृ. 123।

(ङ) "अनित्या चेयम्। तच्चानित्यत्वं 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटी.' (3/2/9)– वा.। इत्यत्र घटीग्रहणेन ज्ञापित"मित्याह सी. दे. बृ. प. वृ. प. 28, पृ. 194।

(च) 'इयं च' शक्तिलाङ्गला.' (3/2/9 वा) इति वार्तिके घटघटीग्रहणादनित्ये'त्याह नी. दी. प. वृ. प. 38, पृ. 300।

(छ) 'केचित्तु मद्रराज्ञीत्यादौ' राजाहः सखिभ्यष्टच्' (5/4/91) इत्यादीनामप्रवृत्तये 'शक्तिलाङ्गल.' (3/2/9 वा) इत्यादौ घटशब्दात् पृथग् घटीशब्दोपादानेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनस्यावश्यकत्वात्तेनैव इमामपि (विभक्तौ लिङ्गविशिष्टाग्रहणम्। संगृह्णन्तीत्याह ह. भा. प. भास्क. प. 29, पृ. 334-335।

(ज) "घटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैवैषा (विभक्तौ लिङ्गविशिष्टाग्रहणम्) इत्यन्ये"इत्याह भ. ना. प. शे. प. 73, पृ. 293।

(झ) "अनित्या चेयम्। तेन मद्राणां राज्ञीत्यादौ 'राजाहःसखिभ्यष्टच्' (5/4/91) इत्यादिना टजादयो न। अनित्यत्वज्ञापकं तु–'शक्तिलाङ्गल.' (3/2/9 वा.।) इत्यजविधायके वार्तिके घटग्रहणात् पृथक्घटीग्रहणात्। 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' (शे. प. 72) इत्यादिकं तु अनित्यत्वप्रपञ्चः' इत्याह शेषा. प. भास्क. प. 61, पृ. 432।

1. अष्टा. 6/3/46।
2. अष्टा. 3/2/39।
3. अष्टा. 5/4/91।
4. व्या. म. भा. 1/1/8/55।
   का. 1/3/96।
   पुरुषोत्तमदेवस्तु 'आहिभुवोरीटि स्थानिवद्भावप्रतिषेधः'इति वार्तिकस्वरूपमाह भा. वृ. 7/3/96।
5. अष्टा. 7/3/96।

स्ती'इति वचनस्य [1]ज्ञापकः । यतोऽस्तेरभूदित्यत्र स्थानिवत्त्वप्रतिषेधेनानेनास्त्याश्रयस्येटोऽभावेऽपि प्रत्ययलक्षणेन सिजाश्रयस्यटो दुर्वारतया प्रतिषेधोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचने सिजाश्रयस्येटो वचनेनानेनाभावे सिद्धेऽस्त्याश्रयस्येटोऽभावाय प्रतिषेधोऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'अस्तेरभूत्, भवतेरभूत्, अगात्, अस्थात्, अपात्' इत्यादौ प्रत्ययलक्षणेन सिजाश्रयस्य ईटोऽभावः ।

वस्तुतस्तु भुव इटि स्थानिवत्त्वप्रतिषेधस्योक्तवचन-ज्ञापकत्वमिदं न युक्तम् । यतोऽत्र भाष्यविरोधो भवति । भाष्ये हि—'भवतेश्चापि न वक्तव्यः । 'अस्तिसिचोऽपृक्ते'इति द्विसकारको निर्देशः । अस्तेः सकारान्ता'दिति ब्रुवन् भगवान् स्थानिवत्त्वप्रतिषेधवचनमिदं [2]प्रत्याचख्यौ । उक्तवचनज्ञापनायास्य प्रतिषेधस्याऽऽवश्यकत्वे तु भाष्योक्तप्रत्याख्यानासङ्गतिः स्यात् । न चैतद्वचनप्रत्याख्यानात्पूर्वमस्यवचनस्योक्तवचनज्ञापकत्वं युक्त'मिति वक्तव्यम् । यतो भुवः स्थानिवत्त्वप्रतिषेधज्ञापितवचन-प्रयोजनान्यन्यथासिद्धानि । 'अस्तिसिचोऽ[3]पृक्ते' इत्यस्य हि 'विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यादित्यर्थः[4] । तथासति 'अगा'दित्यादौ सिचो लुप्ततया विद्यमानत्वाभावादीटः प्राप्तिरेव नास्ति । नापि चास्य सूत्रस्यायमर्थो दुर्लभ इति शङ्कनीयम् । यतोऽत्र सूत्रे 'अस्तिसिच'सित्येकं पदम् । 'सिच्' च 'अस्' चेति समाहारद्वन्द्वे कृते 'सिचस्' शब्दस्य विद्यमानार्थकस्य विभक्त्यन्त-प्रतिरूपक-लुप्त-विभक्तिकशब्दस्य विद्यमानार्थक-विभक्त्यन्त-प्रतिरूपक-लुप्त-विभक्तिकेन 'अस्ती'त्यव्ययेन सह कर्मधारये कृते हि पदमिदं निष्पद्यते । इत आगतायाः पञ्चम्याश्चात्र 'सुपां सुलु'गिति सौत्रो लुक् । सिच् शब्दस्य सौत्रं भत्वमिति 'चोः कु'रिति कुत्वाभावः । 'उतोवृद्धिर्लुकि हली'ति सूत्रादनुवृत्तस्य हलित्यस्य षष्ठ्या विपरिणामः । इत्थमयं सूत्रार्थः सुलभः । तस्माद् ज्ञापकसमुच्चये[5] पुरुषोत्तमदेवेनोक्तं, हरदत्तेन [6]पदमञ्जर्यां चोक्तं'भुव ईटि स्थानिवत्त्वप्रतिषेधस्य

---

1 'यदयमाचार्यः आहिभुवो रीटि प्रतिषेध इति (7/3/96 वा.) स्थानिवद्भावनिमित्तामेव प्राप्तिं निषिध्य अस्तिस्थानिकस्य भुव ईडभावमिच्छति तत् ज्ञापयति 'न प्रत्ययलक्षणेन सिच ईडस्ती'ति । अतः सामान्यज्ञापकादभ्यगादित्यादावपि सिचः प्रत्ययलक्षणेन ईडागमो न भवती'-त्याह पु. दे.-ज्ञा. समु. प्रथमपादे पृ. 59 ।

हरदत्तमिश्रोऽपि प्रतिषेधस्यास्य ज्ञापकतामसूसुचत् । यतस्तेन 'अत्र स्थानिवद्भाव-प्रतिषेधादस्त्याश्रयस्तावदिण्न भवति । सिजाश्रयोऽपि न भवति, स्थानिवद्भावप्रतिषेधसामर्थ्या'दित्युक्तम् प. म. 7/3/9 ।

2. व्या. म. भा. 1/1/8/55 ।
3. अष्टा. 7/3/96 ।
4. वै. सि. कौ. भ्वा. प्र. पृ. 30 ।
5. पृ. 59 ।
6. 7/3/96 ।

ज्ञापकत्वं न युक्तमिति निश्चीयते । 'अस्ती'ति सूत्रार्थेऽपि पुरुषोत्तमदेवस्य प्रमादः स्फुटं लक्ष्यते । यतस्तेन 'अपृक्तस्य आभ्यामीट् [1]स्या'दित्युक्तम् । पुरुषोत्तमदेवेन कृते ह्येतत्सूत्रार्थे 'ऐधिधि'इत्यत्र सिचः परस्य इटोऽपृक्तस्य ईडागमो दुर्वारः । एतदुपजीव्यानां [2]वामन-[3]जिनेन्द्रबुद्धि-हरदत्त- [4]मिश्राणामप्येतत्सूत्रार्थकरणे प्रमादः संलक्ष्यते । यतो नैते प्राचीनव्याकरण-व्याख्यातारः 'ऐधिषि'इत्यत्र ईडागमाभावोपायं निर्दिष्टवन्तः ।



1. भा. वृ. 7/3/96 ।
2. 'अन्तरङ्गात्परस्य सिजन्ताच्च परस्यापृक्तसार्वधातुकस्य ईडागमो भवती'त्याह वाम. का. 7/3/96 ।
3. 'सुब्व्यत्ययेन षष्ठ्यर्थे सप्तमी, तेनापृक्तस्यैवेट्' इत्याह जि. बु. न्या. 7/3/96 ।
4. 'अपृक्ते'इति षष्ठ्यर्थे सप्तमी, तेनापृक्तस्यैवायमागमः' इत्याह ह. मि. प. म. 7/3/96 ।

# अथ द्वितीयो भागः

# पञ्चमोऽध्यायः

## ज्ञापकानि सूत्राणि

यानि पाणिनि - [1]सूत्राणि किञ्चन परिभाषा - रूपं तद्व्यतिरिक्तं वा वचनं ज्ञापयन्त एवात्मनः सार्थकतां लभन्ते, तानि [2]'ज्ञापकानि सूत्राणि'इत्युच्यन्ते । तेषामिह यथाक्रमं निरूपणं क्रियते । तत्र –

### 'अअ[3]'

सूत्रमिदं 'प्रक्रियादशायामकारो विवृत उपदिष्टः' इति वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – विवृतमकारमुद्दिश्य संवृतोऽकारोऽनेन सूत्रेण विधीयते, अस्य वचनस्याभावे हि विवृताकारस्याभावात् तमुद्दिश्य संवृताकारविधानमिदं व्यर्थम् । शिक्षायां हि 'ह्रस्वस्यावर्णस्य संवृत'-

---

1. (क) "अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" ॥
–इत्यभियुक्ताः ।
(ख) "त्रीणि सूत्र - सहस्राणि तथा नव शतानि च ।
षण्णवतिश्च सूत्राणां पाणिनिः कृतवान् स्वयम्" ॥
–इत्यभियुक्ताः ।
2. "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयतिस्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनिरयता सूत्रेण" - इति ग्रन्थेन हि केषांचन सूत्राणां तदंशानां च ज्ञापकत्वं सूचयति - पत. व्या. म. भा. 1/1/3/1 ।
3. अष्टा. 8/4/68 ।
4. तथाहि–
(क) "विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते । कथं ज्ञायते ? । यदयं 'अअ' –इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ती"ति ग्रन्थेनस्य सूत्रस्यैतद्वचन-ज्ञापकत्वं सूचयति पत. व्या. म. भा. 1/1/2 विवृतोपदेशाधि. ।
(ख) " 'अअ' इति (8/4/68) शास्त्रान्ते संवृतप्रत्यापत्तिवचनं ज्ञापयति – 'व्याकरण-प्रक्रियायामकारस्य विवृतोपदेश आकार ग्रहणार्थ'इतीत्याह पु. दे. ज्ञा. समु. द्वात्रिंशे रेफपादे पृ. 100
(ग) ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथाहि - अ अ इति (8/4/68) विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृत्वमस्त्येव । तथाच सूत्रम् – पूर्वत्रासिद्धम् 8/2/1" - इत्याह भा. दी. वै. सि. कौ. संज्ञा प्र. पृ. 11 ।
(घ) "अ इ उण् । अकारो विवृत उपदिष्टः प्रक्रियादशायां चेत्यत्र 'अ अ ' (सू. 8/4/68) इति प्रत्यापत्तिवचनं ज्ञापक"मित्याह श्रीना. ज्ञा. सं. । पृ. 11 ।

मित्युक्तम्[1] । ज्ञापिते चास्मिन् वचने शिक्षावचनसिद्धं स्वाभाविकं संवृतत्वं प्रच्याव्य वर्णसमाम्नाये विवृतत्वेनोपदिष्टस्य अवर्णस्य संवृतोऽवर्णो भवत्वित्येतदर्थं प्रकृतिप्रत्यापत्तिवचनमिदं स्वांशे चरितार्थं भवति ।

न च' [2]अतिखट्वः' - इत्यादौ [3]'गोस्त्रियोरुपसर्जनस्ये'ति विधीयमान आकारस्य ह्रस्वः स्थानिनः आकारस्य विवृतत्वात् तदान्तर्याद् विवृतो भवेत् इति स संवृत एव यथा स्यादित्येवमर्थंसूत्रमिदं चरितार्थमिति शङ्क्यम् । यतो यदि लोके वेदे वा कुत्रापि विवृतोऽकारो भवेत् तदा आकारस्य स्थाने जायमानो ह्रस्वः[4] स्थानत आन्तर्याद् विवृतो भवेत्, नहि विवृतोऽकारः कुत्राप्यस्ति, किन्तु संवृत एवास्ति, तथा च संवृत एव अकारो भविष्यतीति सूत्रमिदं न ह्रस्वस्य संवृतत्वाय चरितार्थम् । ज्ञापितस्यास्य वचनस्य फलन्तु 'दण्डाढक'मित्यादौ 'दण्ड + आढकम्' - इत्याद्यवस्थायां सवर्णदीर्घैकादेशस्य[5] सिद्धिः । अस्य वचनस्यासत्त्वे हि ह्रस्वा - वर्णस्य संवृतमिति संवृत - विवृतप्रयत्नयोः अकाराकारयोः [6]सावर्ण्याभावात् 'अकः सवर्णेदीर्घः' – इति सवर्णदीर्घैकाऽऽदेशो न स्यात् । न चाकारस्य [7]सवर्णदीर्घ- विधिवैयर्थ्यं शङ्कनीयम् । यतो 'दण्डाग्र'मित्यत्र द्वयोरकारयोः संवृतत्वेन तत्रासौ विधिश्चरितार्थः । न च 'अभेदका इह शास्त्रे गुणाः' [8]इत्युक्तेः एतस्य वचनस्याभावेऽपि दण्डाढकमित्यत्र सवर्णदीर्घैकादेशः[9] सुलभ इति शङ्क्यम् । यतः प्रयत्नभेदे अकाराकारयोः [10]सावर्ण्यं दुर्घटम् । न च ज्ञापितेऽप्यस्मिन् वचने 'अ अ' - इत्यनेन ह्रस्वाकारस्य संवृतत्वविधानाद् दण्डाढकमित्यत्र दीर्घैका[11] -देशोऽसंभवः, प्रयत्नभेदाद्धि अकाराकारयोः सवर्ण-संज्ञा[12] दुर्लभेति शङ्क्यम् । यतोऽस्य प्रत्यापत्तिवचनस्य

---

1. "विवृतकरणाः स्वराः तेभ्य ए-ओ विवृततरौ, ताभ्यामै औ, ताभ्यामप्यकारः । संवृतोऽकारः" - इति हि शिक्षावाक्यम् ।
2. खट्वामतिक्रान्त इत्यर्थे 'कुगति प्रादयः' अष्टा. 2/2/18 - 'प्रादयो गताद्यर्थे द्वितीयया' वा. का. 2/2/18 इति समासे सुपोलुकि अतेः प्राक् प्रयोगे 'गोस्त्रियोरुपसर्जनस्य - अष्टा. 1/2/48 इति खट्वोत्तरस्याकारस्य ह्रस्वत्वे स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. अष्टा. 1/2/48 ।
4. 'गोस्त्रियोरुपसर्जनस्य' - अष्टा. 1/2/48 ।
5. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
6. 'तुल्यास्य प्रयत्नं सवर्णम्' - अष्टा. 1/1/9 ।
7. अष्टा. 6/1/101 ।
8. भगवता हि – "अभेदाका गुणा'इत्येव न्याय्यम् । कुत एतत् ? यदयम् – 'अस्थिदधि-सक्थ्यक्ष्णामनङुदात्तः' इत्युदात्तग्रहणं करोति, तज् ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदका गुणाः स्युरुदात्तमेवोच्चारये"दित्युक्तम् - व्या. म. भा. 1/1/3/1 ।
9. 'अकः सवर्णे दीर्घः' – अष्टा. 6/1/101 ।
10. 'तुल्यास्यप्रयत्नं सवर्णम्'- अष्टा. 1/1/9 ।
11. 'अकः सवर्णे.' – अष्टा. 6/1/101 ।
12. 'तुल्यास्य.' - अष्टा. 1/1/9 ।

सम्पूर्णाष्टाध्यीं प्रति [1]'पूर्वत्रासिद्ध'मित्यनेनासिद्धतया अकाराऽऽ- कारयोर्विवृतप्रयत्न कण्ठस्थान-साम्येन प्रक्रियादशायां [2]सावर्ण्यं सुलभम् ।

## '[3]अडभ्यास-व्यवायेऽपि'

सूत्रमिदं 'क्वचित् पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेणेत्यपि पक्षोऽस्ती'ति वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – [5]अटा [6]अभ्यासेन च व्यवधानेऽपि संपर्यादिभ्यः परस्मात् कात् पूर्वः सुडित्यर्थकमिदं [7]'समस्करोत्' [8]'समस्कार्षीत्' [9]'सञ्चस्कार' [10]'परिचस्कार' - इत्यादौ क्रमशः अटः अभ्यासस्य च व्यवधानेऽपि सुटः सिद्धयर्थमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । यतः 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेने'ति पक्षे धातूपसर्गकार्यस्यान्तरङ्गतयात्र प्रयोगेषु साधनयोग - सापेक्षलकारात् प्रागेव[11]

---

1. अष्टा. 8/2/1 ।
2. 'तुल्यास्य प्रयत्नं सवर्णम् – अष्टा. 1/1/9 ।
3. अष्टा. 6/1/136 । नेदं सूत्रं, किन्तु वार्तिकमिति भाष्यानुसारिणी भट्टोजिदीक्षित - भट्टनागेश - वासुदेवदीक्षिता मन्यन्ते, - द्र. वै. सि. कौ., ल. श. शे., बा. मनो. तनादि प्र. पृ. 215 ।
4. तथाहि–
   (क) "किमर्थं पुनरिदमुच्यते, 'पूर्वं धातुरुपसर्गेण युज्यते' इति तत्र 'धातुरुपसर्गयोः कार्यमन्तरङ्गम्' इति पूर्वं सुट् क्रियते, पश्चादडभ्यासौ ? 'अभक्तश्च सुट्' - इत्युक्तम्, ततः सकारादुत्तरावडभ्यासावनिष्टे देशे स्याताम् । एतस्मिंस्तु सत्यत एव वचनात्कृतयोरभ्यासयोस्तद् व्यवायेऽपि सुट् कात्पूर्वः क्रियत इति सिद्धमिष्टं भवतीति ग्रन्थेन ज्ञापकत्वमस्मिन् वचनेऽस्य सूचयति - वाम. का. 6/1/136 ।
   (ख) "सुड्विधावडभ्यासव्यवायेऽपीति (6/1/136) वचनं ज्ञापकम् – 'क्वचित् पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यपि पक्षोऽस्ती'ति पूर्वमुपसर्गयोगे हि धातूपसर्ग-कार्यत्वात् अन्तरङ्गः सुट् प्रागेव प्रवर्तते इति किमडभ्यास इति वचनेनेति । तेन नत्वं माभवत् दुःप्राप्यमिति च सिद्धयति, साधनसम्बन्धात् अनन्तरमुपसर्गसंबन्धात् । अन्यथा माङि लुङ् (3/3/175) माभूदिति, खलि दुःप्रापमिति स्या"दित्याह पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे पृ. 83 ।
5. 'लुङ् - लङ् - लृङ्क्ष्वडुदात्तः' - अष्टा. 6/4/71 ।
6. 'पूर्वोऽभ्यासः' - अष्टा. 6/1/4 ।
7. सम्पूर्वकात् 'डुकृञ् करणे' धा. पा. तना. 1473, इति कृधातोः लङि अटि तिपि सुटि रूपमिदम् ।
8. सम्पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473 इति कृधातोर्लुङि अटि तिपि च्लौ तस्य सिचि 'सिचिवृद्धिः परस्मैपदेषु' - अष्टा. 7/2/1, इति वृद्धौ 'इतश्च' - अष्टा. 3/4/100, इतीकारलोपे 'अस्तिसिचोऽपृक्ते' - अष्टा. 7/3/96 इति ईटि सुटि च रूपमिदम् ।
9. संपूर्वकात् प्रागुक्तकृधातोर्लिटि तिपि णलि द्वित्वादिषु कृतेषु सुटि रूपमिदम् ।
10. परिपूर्वकात् प्रागुक्तकृधातोर्लिटि तिपि णलि द्वित्वादिषु कृतेषु सुटि रूपमिदम् ।
11. 'असिद्धं बहिरङ्गमन्तरङ्गे'- इति परिभाषयेतिशेषः ।

सुडस्य[1] सूत्रस्याभावेऽपि सुलभः । ज्ञापिते चास्मिन् वचनेऽत्र प्रयोगेषु पूर्वं धातोः साधन-योगे क्रमशो लङि[2] लुङि[3] अटि[4] कृते सति, लिटि च [5]द्वित्वादिषु कृतेषु [6]पश्चादुपसर्गयोगे क्रमशोऽटा[7]ऽभ्यासेन च[8] व्यवधानात् '[9]तस्मादित्युत्तरस्ये'ति परिभाषया 'सम्पर्युपेभ्यः [10]करोतौ भूषणे' - इति सुटोऽप्राप्त्या सुडविधानाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'नत्वं मा[11]भवत्' 'दुःप्राप्य'मिति[12] प्रयोगयोः साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि पूर्वमत्रोपसर्गयोगे क्रमशो '[13]माङि लु'ङिति लुङः [14]खलश्च दुर्वारतया 'नत्वं माभूत्' 'दुःप्राप'मित्यनयोरेवासाधुत्वं स्यात्, 'माभवत्' 'दुःप्राप्य'मित्यनयोः साधुत्वं न सिद्ध्येत् । अत्र वचने'ऽपि'पदोपादनम्'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेने'ति पक्षस्यापि सत्तासूचनार्थम् । अपिपदानुपादाने हि 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति, पक्ष एव स्वीकार्यः स्यात्तथा सति '[15]अनुभूयते सुखं देवदत्ते'नेत्यादौ कर्मणि लकारो न सिद्ध्येत् । भवतिर्हि अकर्मकः । उपसर्गेण पूर्वं धातौ सम्बध्यमाने हि नात्र कर्मणि लकारासिद्धिः । यतोऽकर्मका अपि धातवः सोपसर्गाः [16]सकर्मका भवन्ति ।

---

1. 'सम्पर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/137 ।
2. 'अनद्यतने लङ्' - अष्टा. 3/2/111 ।
3. 'लुङ्' - अष्टा. 3/2/110 ।
4. 'लुङ् - लङ् - लृङ्क्ष्वडुदात्तः' - अष्टा. 6/4/71 ।
5. 'लिटि धातोरनभ्यासस्य' - अष्टा. 6/1/8, 'पूर्वोऽभ्यासः' - अष्टा. 6/1/4, इत्यादिष्वित्यर्थः ।
6. क्रमशः 'संपर्योर्योगे' - इत्यर्थः ।
7. 'लुङ् - लङ् - लृङ्क्ष्वडुदात्तः'- अष्टा. 6/4/71 ।
8. 'पूर्वोऽभ्यासः' - अष्टा. 6/1/4 ।
9. अष्टा. 1/1/67 ।
10. अष्टा. 6/1/137 ।
11. 'माङ् पूर्वकात् 'भूसत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोर्लङि अटि तिपि शपि गुणेऽवादेशे 'इतश्च' -अष्टा. 3/4/100, इतीकारलोपे रूपमिदम् ।
12. दुःप्रपूर्वकात् 'आप्लृ व्याप्तौ' धा. पा. स्वा. 1261, इति आपधातोः 'ऋहलोर्ण्यत्' - अष्टा 3/1/124, इति ण्यति रूपमिदम् ।
13. अष्टा. 3/3/175 ।
14. 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' - अष्टा. 3/3/126 ।
15. अनुपूर्वकात् 'भूसत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोः कर्मणि लटि ते यकि रूपमिदम् ।
16. फलव्यधिकरणव्यापारवाचकत्वात्' 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते, .... इत्युक्तेरिति शेषः ।

वस्तुतस्तु पुरुषोत्तमदेवोक्तं सूत्रस्यास्य ज्ञापकत्वं न युक्तम्, भाष्यविरोधात् । तत्रहि - 'अन्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडिति 'अडभ्यासव्यवायेऽपीति, न कार्यमिति तन्नप्रत्याख्यातम्[1] । लावस्थायाम'डिति पक्षे तु 'संपरिभ्यां परत्वयोग्यस्य करोतेः [2]सुडित्यर्थात् सर्वतः पूर्वं सुडिति न कश्चन दोषमस्तीति तदाशयः । 'नत्वं माभवत्' इति प्रयोगस्य साधुत्वं तु पुरुषोत्तमदेवोक्तमस्य वचनस्याभावेऽपि सुलभम् । यतोऽत्र माशब्दस्य योगोऽस्ति न माङः । माशब्दयोगे हि लङः साधुत्वं 'विषं [3]भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इति प्रयोगादवसीयते । माङोऽत्र प्रयोगे हि 'मा[4]भुक्थाः' इत्येव प्रयोगेण भाव्यंलुङि [5]श्नमोरभावात् । दुःप्राप्यमित्यस्यापि पुरुषोत्तमदेवोक्तस्य प्रयोगस्य 'कृत्यलुटो[6]बहुल'मित्युक्तेः कथंचित् साधुत्वं वक्तुं शक्यम् । अतः पुरुषोत्तमदेवोक्तमिदं ज्ञापकं सूत्रकारसम्मतमित्थं वक्तुमशक्यम् । ज्ञापितस्यास्य वचनस्यानन्यथासिद्धं किमपि फलं नास्तीति ज्ञापकत्वमेवास्य दुर्लभम् ।

वस्तुतस्तु 'नत्वं मा[7]भवत्' 'विषं भुङ्क्ष्व मा चास्य गृहे [8]भुङ्थाः' इति प्रयोगयोः साधुत्वमेव गगनकुसुमायितम् । यतोऽत्र लङि[9] विवक्षितविध्यादि - रूपार्थ-बोधोऽसंभवः । [10]लुङस्तु [11]सर्वलकारापवादतया विवक्षितार्थबोधोऽत्र सुलभ इति

---

1. व्या. म. भा. 6/1/5/135 ।
2. 'संपरिभ्यां करोतौ भूषणे' - अष्टा. 6/1/137 इति वै. सि. कौ. स्थित - सूत्रस्येति- शेषः । काशिकायां तु 'सम्पर्युपेभ्यः करोतौ भूषणे' - इति सूत्रपाठो दरीदृश्यते ।
3. काव्य प्र. 5, पृ. 228 ।
4. माङ्पूर्वकात् 'भुज पालनाऽभ्यवहारयोः' धा. पा. रुधा. 1455, इति भुज्धातोर्लुङि 'भुजोऽनवने' - अष्टा. 1/3/66, इति आत्मनेपदे थासि च्लौ तस्य सिजादेशे 'झलोझलि' - अष्टा. 8/2/26, इति सिचः सकारलोपे जकारस्य कुत्वे थासः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
5. 'रुधादिभ्यः श्नम्' - अष्टा. 3/1/78 ।
6. अष्टा. 3/3/113 ।
7. 'अयं प्रयोगः पुरुषोत्तमदेवेन कृतः, द्र. ज्ञा. समु. एकविंशे एकाच् - पादे पृ. 83 ।
8. 'अयं प्रयोगः परमतखण्डनावसरे मम्मटाचार्येण कृतः, द्र.काव्य प्र. 5, पृ. 288 ।
9. 'अनद्यतने लङ्' - अष्टा.. 3/2/111 ।
10. 'माङ्लुङ्' - अष्टा.3/3/175 ।
11. (क) 'माङ्लुङ्' - 3/3/175 । सर्वलकारापवादः' - इत्याह भ. दी. वै. सि. कौ. भ्वा. प्र. पृ. 29 ।
    (ख) 'माङ्लुङ् 3/3/175 । सर्वलकारापवादः' - इत्याह व. भ. ल. सि. कौ. भ्वा. प्र. पृ. 155 । माङ्प्रयोगे सर्वलकाराणां स्थाने लुङेव भवतीति भट्टोजिदीक्षित - वरदराजभट्टाचार्यग्रन्थयोरर्थः । 'मा वद' 'मा वदे'दित्यादौ तु नायं माङ्, किन्तु निषेधार्थो 'मा' शब्द इति तदाशयः ।
    (ग) 'मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव, न तु माङित्याहु'रित्याह प्रकृतभट्टोजिदीक्षित-वैयाकरणसिद्धान्तकौमुदीग्रन्थं व्याचक्षणो ज्ञा. भि. त. बो. भ्वा. प्र. पृ. 29 ।

'नत्वं माभूत्' 'विषं भुङ्क्ष्व मा चास्य गृहे भुक्थाः 'इतीमावेव प्रयोगौ साधुत्वमाधत्तः । लुङि [1]श्नमोऽसंभवात् काव्यप्रकाशकृतः काव्यप्रकाश-ग्रन्थ-सम्पादकस्य वात्र 'माचास्य गृहे भुङ्थाः' इति प्रयोगः प्रमादिक एवेति प्रतिभाति । अत एव भट्टनागेशेन - 'भुक्तवन्तं प्रति मा भुक्थाः' - इति वाक्यस्येवे'ति [2]प्रयुक्तम् । अत्र 'माभुङ्थाः' इत्यपपाठः । लुङि श्नमोऽभावात् ।

## '[3]अदिप्रभृतिभ्यः शपः'

सूत्रमिदम् " '[4]अतोलोप' - इत्यनेन शपोऽकारलोपो न भवती"ति वचनस्य [5]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – [6]'अत्ती'त्यादौ[7] शपोलुगर्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । अस्यवचनस्यासत्त्वेहि तत्र 'अतोलोप'[8] - इत्यनेनैवाकारलोपे अत्ती'त्यादिप्रयोगाणां सिद्धिः सुलभा । ज्ञापिते चास्मिन् वचनेऽत्तीत्यादावतोलोपाप्रवृत्त्यर्थभिया[9] शपो लुगर्थमिदं स्वांशे चारितार्थं

---

(घ) "माङिलुङ् । माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः । ननु लुङीत्युदाहृतसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह - सर्वलकारापवाद इति । मास्त्वित्यादौ तु 'मा' इत्यव्ययान्तरं प्रतिषेधार्थकमित्याहुः ....... मास्त्वित्यत्र तु अस्त्विति विभक्तिप्रतिरूपकमव्ययमित्यन्ये"-इत्याह वा. दी. बा. मनो. भ्वा. प्र. पृ. 29 ।

(ङ) "माङिलुंङ् । 'मास्तु' इत्यादौ तु निषेधार्थे मा शब्दो न माङिति न दोष इति केचित्, तन्न, 'आङ्माङोश्चे'ति सूत्रस्थेन माङो विशिष्टस्य ग्रहणं किमर्थम् ? । प्रतिषेधार्थक - सम्प्रत्ययार्थम् । प्रमाच्छत्रमित्यादौ मा भू'दिति भाष्येण तदभावबोधनादिति परे" - इत्याह भ. ना. ल. श. शे. भ्वा. प्र. पृ. 29-30 ।

1. 'रुधादिभ्यः श्नम्'. - अष्टा. 3/1/78 ।
2. ल. श. शे. संज्ञा प्र. पृ. 49 ।
3. अष्टा. 2/4/72 ।
4. अष्टा. 6/4/48 ।
5. तथाहि–
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति - 'नानेन शबकारस्य लोपो भवती'ति, यदयमदिप्रभृतिभ्यः शपो लुकं शास्ती"त्याह पत. व्या. म. भा. 6/4/2/46 ।
   (ख) "आर्धधातुके (सू. 6/4/46) नानेन शपोऽकारस्य लोपो भवतीत्यत्र अदिप्रभृतिभ्यः शपो लुग्विधानं ज्ञापक"मित्याह एन. एस. राम. ज्ञा. सं. पर. 1, पृ. 184 ।
6. 'अदभक्षणे' धा.पा.अदा. 1011, इति अद्धातोर्लटि तिपि शपि तस्य 'अदिप्रभृतिभ्यः अष्टा. 2/4/72, इतिलुकि दस्य चर्त्वेन तकारे रूपमिदम् ।
7. 'कर्तरि शप्' - अष्टा. 3/1/68
8. अष्टा. 6/4/48 ।
9. 'अतोलोपः' - अष्टा. 6/4/48 ।

भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[1]चिकीर्षती'त्यादिप्रयोगाणां सिद्धिः । अस्य वचनस्यासत्त्वे हि [2]सन् शपोरकारयो[3]र्लोपे नैषां प्रयोगाणां सिद्धिः स्यात् ।

वस्तुतस्तु नेदं सूत्रमस्य वचनस्य ज्ञापकम् । यतो 'वित्तः'[4] 'मृष्टः'[5] - इत्यादौ क्रमशो गुण-[6]वृद्ध्यादि[7]कार्याभावाय चरितार्थमिदम् । अस्य सूत्रस्याभावेऽत्र शपोऽकारस्य लोपे हि [8]प्रत्ययलक्षणेन [9]गुणवृद्ध्यादि-[10]कार्याणामापत्तिर्दुवारा स्यात् । न चात्र भाष्यविरोधः शङ्कनीयः। यतो भाष्यकृतैव ज्ञापकमिदं निराकृत्यात्र वचने ज्ञापकान्तरमुपन्यस्तम्[11] । तथ्यमिदमन्यैरपि [12]स्वीकृतम् ।

## 'अधिपरी [13]अनर्थकौ'

---

1. 'डु कृञ्करणे' धा.पा.तंना. 1473, इत कृधातोः सनि तदन्ताल्लटि लिपि शपि पररूपे रूपमिदम् ।
2. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/7 ।
3. 'कर्त्तरि शप्' - अष्टा. 3/1/68 ।
4. 'विदज्ञाने' धा.पा. अदा. 1064, इति विद्धातोर्लटि तसि'विदोलटो वा' - अष्टा. 3/4/85, इत्यस्याभावपक्षे शपि तस्यादादिधातोः परत्वाल्लुकि तसो ङित्त्वाद् गुणाभावे दकारस्य चर्त्वे सकारस्य रुत्वे विसर्गे कृते रूपमिदम् ।
5. ''मृजूशुद्धौ' धा.पा.अदा. 1066, इतिमृजूधातो र्लटि तसि शपि तस्य लुकि ङित्तवाद् लघूपधगुणस्य 'मृजेर्वृद्धिः'- अष्टा. 7/2/114, इति वृद्धेश्चाभावे 'व्रश्च.' -अष्टा. 8/2/36, इति जकारस्य षत्वे ष्टुत्वे सकारस्य रुत्वे विसर्गे च रूपमिदम् ।
6. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
7. 'मृजेर्वृद्धिः'- अष्टा. 7/2/114
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
9. 'पुगन्त.' -,अष्टा. 7/3/86 ।
10. 'मृजेर्वृद्धिः' - अष्टा. 7/2/114 ।
11. तथाहि - "नैतदस्ति ज्ञापकम् । कार्यार्थमेतत् स्यात्, वित्तः मृष्टः इति । यत्तर्ह्याकारान्तेभ्यो लुकं शास्ति । याति_वाति" - इत्याह पत. व्या.म.भा. 6/4/2/46 ।
12. तथाहि –
    (क) "अदिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतन्न ज्ञापकं शपो लोपाभावस्ये"त्याह वाम. का. 6/4/4{ ।
    (ख) "असति प्रयोजने ज्ञापकं भवति । अस्ति चादिप्रभृतिभ्यः शपो लुग्वचनस्य प्रयोजनम् । किं तत् ? वित्त इत्यत्र गुणो माभूत् । यदि वित्त इत्यत्र लोपः स्यात् प्रत्ययलक्षणेन 'पुगन्तलधूपधस्य' इति गुणः स्यात् । मृष्ट इत्यत्र 'मृजेर्वृद्धिः 'लुकि सति न.भवति, 'नलुमताङ्गस्य' - इति प्रत्ययलक्षणप्रतिषेधात् । तस्माददिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलक्षणप्रतिषेधार्थं स्यादिति न ज्ञापकं शपो लोपाभावस्य" - इत्याह जि. बु. न्या. 6/4/46 ।
    (ग) "अकारान्तेभ्यो लुग्विधानं वा ज्ञापकम्' यदि शपोऽतोलोपः स्यात्तदा 'या वा' प्रभृतय आकारान्ता धातवो भूवादिष्वेव पठ्येरन्, न त्वदादिषु, लुग्लोपयोस्तत्र विशेषाभावादिति भाव" - इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. पृ. 184 - 185 ।
13. अष्टा. 1/4/93 ।

सूत्रमिदम् 'अनर्थकानामप्यर्थवत् कार्याणि भवन्ती'ति वचनस्य [1]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि - अधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञार्थमारब्धमिदमस्य वचनस्याभावे व्यर्थम् । [2]कुतोऽध्यागच्छति, कुतः [3]पर्यागच्छतीत्यत्राऽधिपर्योः '[4]गतिर्गता'विति निघाताभावाय तयोर्गत्युपसर्गसंज्ञाबाधनार्थमिदं चरितार्थमिति तु न वक्तुं शक्यते । यतः क्रियायोगे एव [5]गतिसंज्ञा, [6]उपसर्जनसंज्ञा च विधीयते । अनर्थकयोश्च क्रियान्वितार्थकत्वरूपः क्रिययोगो नास्तीति नानयोस्ते संज्ञे प्राप्नुतः । न च 'कुतः पर्यागम्यत' इत्यत्र किम्शब्दात्

---

1. तथाहि –
   (क) "अथवा आचार्यप्रवृत्तिर्ज्ञापयति - 'अनर्थकानामप्येतेषां भवत्यर्थवत्कृत'मिति । यदयम् 'अधिपरी अनर्थका'वित्यनर्थकयोर्गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ती"त्याह पत. व्या.मा.भा. 1/2/2/45 ।
   "किमर्थमधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञोच्यते । कर्मप्रवचनीयसंज्ञा यथा स्याद् गत्युपसर्गसंज्ञे माभूतामिति । नैतदस्ति प्रयोजनं, यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसंज्ञौ भवतः । अनर्थकौ चेमौ । इदं तर्हि प्रयोजनम् - पञ्चमी यथा स्यात्' पञ्चम्यपाङ्परिभिरिति, कुतः पर्यागम्यत इति । सिद्धात्र 'पञ्चम्यपादाने' इत्येव । आतश्चापादान एव, यत्राधिशब्देन योगे पञ्चमी न विधीयते तत्रापि श्रूयते - 'कुतोऽध्यागम्यते' इति । एवं तर्हि सिद्धे सति यदनर्थकयोर्गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तज् ज्ञापयत्याचार्योऽनर्थकानामप्येषां भवत्यर्थवत्कृत'मिति । किमेतस्य ज्ञापने प्रयोजनम् ? । निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं, तन्न वक्तव्यं भवती"ति चाऽऽह पत. व्या.म.भा. 1/4/4/93 ।
   (ख) इह कुतोऽध्यापकः, कुतः पर्यानयतीति अनर्थकयोरधिपर्योः क्रियायोगाभावादेव गत्युपसर्गसंज्ञानिवृत्तौ सिद्धायां तन्निवृत्तये अधिपरी अनर्थकाविति (1/4/93) कर्मप्रवचनीयसंज्ञाविधानं ज्ञापयति - 'अनर्थकानामप्यर्थवत्कार्याणि भवन्ति' इति । तेन प्रलम्बते इत्यादौ पदत्वसिद्धये निपातस्यानर्थकस्य प्रातिपदिकत्वं वक्तव्यमिति (1/2/45 वा), न वक्तव्यं च भवतीति भाष्य"मित्याह पु.दे. ज्ञा. समु. चतुर्थे कारकपादे पृ. 65 ।
   (ग) "अधिपरी अनर्थकौ (सं. 1/4/93) । एतज् ज्ञापयति अनर्थकानामपि निपातानामर्थवत्कृतमिति । इदं हि गत्युपसर्गसंज्ञावाधेन कर्मप्रवचनीयसंज्ञार्थ"मित्याह श्रीना.ज्ञा. सं. 1, पृ. 49 ।
2. किंशब्दत्तु 'पञ्चम्यास्तसिल्' - अष्टा. 5/3/7 इति तसिलि 'कुतिहोः' - अष्टा. 7/2/104 इति किमः कुभावे कुत इतिरूपम्, अधिपूर्वात् 'गम्लृगतौ' धा.पा.भ्वा. 7/3/77 इति मकारस्य छकारे 'छेच' - अष्टा. 6/1/73 इति तुगागमे तकारस्य श्चुत्वेन चकारे 'अध्यागच्छती' ति रूपम् ।
3. कुत इति पूर्ववत् परि आङ्पूर्वकाद् गमेर्लटि प्रथमपुरुषैकवचने पर्यागच्छतीति च पूर्ववत् सिद्ध्यति ।
4. अष्टा. 8/1/70 ।
5. 'गतिश्च' - अष्टा. 1/4/60 ।
6. 'उपसर्गाः क्रियायोगे' - अष्टा. 1/4/59 ।

[1]'पञ्चम्यपाङ्परिभि'रिति पञ्चमी सिद्ध्यर्थं सूत्रमिदं चरितार्थमिति शङ्क्यम् । यतोऽत्र 'अपादाने पञ्चमी'[2]त्यनेनैव पञ्चमी सुलभा । ज्ञापिते चास्मिन् वचने ये अर्थवतः क्रियायोगनिमित्तके गत्युपसर्गसंज्ञे भवतस्ते अनर्थकयोरधिपर्योरपि भवेतामिति तद्बाधनार्थं तयोः कर्मप्रवचनीयसंज्ञाविधायकमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'निपातस्यानर्थकस्यापि[3] प्रातिपदिकसंज्ञा कर्त्तव्ये'ति वार्तिकानारम्भलक्षणं लाघवम् । यतः 'खञ्जति[4] निखञ्जति[5],' 'लम्बते[6], प्रलम्बते'[7] - इत्यादौ 'पदस्य'[8] 'पदात्'[9] तिङ्ङतिङः[10] 'इति सिद्धये निप्रयोः प्रातिपदिकत्वार्थं वार्तिकमिदमारब्धम्, न हि अनर्थकयोरनयोः सूत्रेण[11] प्रातिपदिकसंज्ञा प्राप्नोति, असति च प्रातिपदिकत्वे आभ्यां [12]स्वाद्युत्पत्तेरभावात् '[13]सुप्तिङन्तं पद'मिति पदत्वं न सिद्ध्येत्, सति चास्मिन् वचनेऽनेनैवानर्थकानामपि प्रातिपदिकत्वे पदत्वं[14] सुलभमिति तत्र पदत्वसम्पादनद्वारा [15]निघातसिद्धये नैतद् वार्तिकमारम्भणीयं भवति ।

वस्तुतस्तु सूत्रमिदम् 'उक्तार्थानामपि प्रयोगः' इति वचनस्य ज्ञापकम्[16] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । अधिपरी ह्यत्र धातूक्तमेवार्थमभिधत्त इति

---

1. अष्टा. 2/3/10 ।
2. अष्टा. 2/3/28 ॥
3. वा.व्या. म.भा. 1/2/2/45 ।
4. 'खजि-गति वैकल्ययोः' धा.पा.भ्वा. 233, इति खजूधातोर्लटि तिपि शपि 'इदितो नुम्धातोः' - अष्टा. 7/1/88, इति नुमि नकारस्य 'नश्चापदान्तस्य झलि' -अष्टा. 8/4/24, इत्यनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' - अष्टा. 8/4/58, इति परसवर्णे च कृते रूपमिदम् ।
5. निपूर्वकात् खञ्जतेर्लटिप्रथमपुरुषैकवचने 'खञ्जति' इतिवत् रूपमिदं सिद्ध्यति ।
6. 'लविशब्दे' धा.पा,भ्वा. 377, 'लबि अवस्रंसने च' धा.पा.भ्वा. 379, इति वा लब्धातोः 'इदितो नुम् धातोः' -अष्टा. 7/1/58, इति नुमि लटि तिपि शपि अनुस्वारे परसवर्णे टित एत्वे च कृते रूपमिदम् ।
7. प्रपूर्वकाद् लम्बते र्लटि तिपि 'लम्बते' इतिवत् प्रलम्बते' इतिवद् रूपमिदं सिद्ध्यति ।
8. अष्टा. 8/1/16 ।
9. अष्टा. 8/1/17 ।
10. अष्टा. 8/1/28 ।
11. 'अर्थवददातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
12. 'ङ्याप्प्रातिपदिकात्' - अष्टा. 4/1/1, 'स्वौजसमौट्छष्टाभ्यांभिस्- ङेभ्याम्भ्यस् ङसिभ्यांभ्यस् - ङसोसाम् ङ्योस्सुप्' - अष्टा. 4/1/2, इत्यनेनेति शेषः ।
13. अष्टा. 1/4/14 ।
14. 'सुप् तिङन्तं पदम्' - अष्टा. 1/4/14 ।
15. 'तिङ्ङतिङः' - अष्टा. 8/1/28 °
16. तथाहि –
(क) "अत्वा नेमावनर्थकौ । किं तर्ह्यनर्थकावित्युच्यते । अनर्थान्तरवाचिनावनर्थकौ । धातुनोक्तां क्रियामाहतुः । तदविशिष्टं भवति । यथा शङ्खेपयः । यद्येवं

धातुनैव तदर्थावगतेस्तत्प्रयोगस्यैवाभावात्तयोः कर्मप्रवचनीयसंज्ञाविधानमिदं नावश्यकम् । ज्ञापिते चास्मिन् वचनेऽनर्थकयोरपि अधिपर्योः प्रयोगसम्भवात्तत्र [1]तयोर्गत्युपसर्गसंज्ञाबाधनार्थमिदं कर्मप्रवचीनयसंज्ञा-विधानं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु द्वौ ब्रह्मणावानये'त्यादिलौकिकप्रयोगाणामुपपत्तिः । अन्यथा द्विवचनेनैव द्वित्वेऽवगते तदवगमायात्र द्वाविति प्रयोगो नोपपद्येत ।

'अनर्थकानामप्यर्थवत्कार्याणि भवन्ती'ति वचनज्ञापकत्वं तु नास्य युक्तम् । यतः अधिपरी अपि नानर्थकौ । 'सर्वेऽप्युपसर्गा धात्वर्थद्योतकाः[2] 'इति हि शाब्दिकानां सिद्धान्तः । तत्र धात्वर्थक्रियागतविशेषद्योकत्वमन्येषामुपसर्गाणाम्, अधिपरी तु धातुवाच्यां क्रियां द्योतयतः, न तु क्रियागतं विशेषमिति[3] सूत्रे अनर्थकावित्युक्तम् । इत्थं 'क्रियाद्योतकत्वमेव क्रियायोगः' । स चाधिपर्योरपि सुलभ इति तयोर्गतिसंज्ञामुपसर्गसंज्ञां च प्रबाध्य कर्मप्रवचनीयत्वसिद्धये सूत्रमिदं चरितार्थम् । नहि चरितार्थं कस्यचन ज्ञापकं भवति । यतोऽन्यथानुपपत्तिलक्षणं ज्ञापकमिति शाब्दिकानां राद्धान्तश्चिराच्चारु चकास्ति ।

## '[4]अन उपधालोपिनोऽन्यतरस्याम्'

सूत्रमिदं 'वर्त्स्यत् प्रवृत्त्येह[5] कार्याणि क्रियन्ते 'इति परिभाषाया ज्ञापकम्[6] । यतोऽस्या अभावे ङीपः [7]प्रागुपधालोपस्याप्राप्त्या सूत्रमिदमनुपपन्नम् । ज्ञापितायां

---

धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति 'उक्तार्थानामप्रयोगः 'इति । उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा - अपूपौद्वावानय, ब्राह्मणौ द्वावानये''ति ग्रन्थेन ज्ञापकत्वमस्यात्र सूचितवान् पत.व्या. म. भा. 1/4/4/93 ।

(ख) ''यद्वा अर्थान्तराभावादनर्थकौ धातुनोक्तां क्रियामाहतुः । उक्तार्थानामपि प्रयोग इत्यर्थज्ञापक''मित्याह श्रीना. ज्ञा. सं. 1, पृ. 49 ।

1. 'गतिश्च' - अष्टा. 1/4/60, 'उपसर्गाः क्रियायोगे' - अष्टा. 1/4/59 ।
2. तथाहि –
   (क) ''द्योतकाः प्रादयो येन निपाताश्चादयस्तथा । उपास्येते हारिहरौ लकारो दृश्यते यथा'' ॥ -इत्याह भ.दी.भू.का. 42 ।
   (ख) ''उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते ।
   प्रहाराहारसंहारविहारपरिहारवत् ॥''
   इति वृद्धोक्ता कारिका वै. भू. सा. निपातार्थनिर्णय प्र. उद्धृता कौ. भ. ।
   (ग) ''चतुर्विधे पदे चात्र द्विविधस्यार्थ निर्णयः ।
   क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
   तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
   यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥''
3. 'अधिपरी अनर्थकौ' - अष्टा. 1/4/93 ।
4. अष्टा. 7/1/28 ।
5. (क) 'वर्त्स्यत्प्रवृत्त्या इह शास्त्रे कार्यं भवती'ति व्याडिः प.सू. प. 15, पृ. 9 ।

चास्यां 'सुसाम्नी' इत्यादौ ङीपि सति भाविनमुपधालोपिनं प्रागेवाश्रित्य ततश्च ङीब्विधानायेदं समुपपद्यते । ज्ञापिताया अस्याः फलं तु 'शीयते'[1] इत्यादौ भाविना शित्त्वेन 'शदेः[2] शितः' इत्यात्मनेपद-सिद्धिः । अस्या अभावे हि नैतत् सिद्ध्येत् ।

## '[3]अनुपसर्जनात्'

अधिकारसूत्रमिदं 'स्त्रीप्रत्ययेषु तदन्तविधिर्भवती'ति वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि - '[5]बहुकुरुचरा मधुरा' इत्यादौ बहुकुरुचरशब्दान् ङीपः[6], 'बहुकुक्कुटा[7] मधुरा' -इत्यादौ बहुकुक्कुटशब्दान् ङीष[8]श्चाभावाय सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । न बहुकुरुचरशब्दष्टिदन्तो[9] न वा बहुकुक्कुटशब्दो जातिवाचकः, किन्तु कुरुचर - कुक्कुट - शब्दावेव टिदन्त-

---

(ग) सी. दे.वृ.प.बृ.प. 84, पृ. 243 ।
(घ) नी.दी.प,वृ.प. 140, पृ. 316 ।
(ङ) ह.भा.प.भास्क.प. 87, पृ. 359 ।

6. तथाहि –
(क) "'अथवा' अन उपधालोपिनोऽन्यतरस्याम्' (4/1/28) इति भविष्यदुपधालोपिनो ङीव् विधानं ज्ञापकम् । अन्यथा सति ङीप्युपधालोपः, सत्युपधालोपे च ङीबित्यसंङ्गतिः स्या"दित्याह सी.दे.बृ.प. वृ.प. 84, पृ. 243 ।
(ख) "'यद्वा' अन उपधालोपिनः 0' (4/1/28) इत्यत्र भविष्यदुपधालोपिनो ङीब्विधानम्" इत्याह ह.भा.प.भास्क.प. 87, पृ. 359 ।

7. 'अल्लोपोऽनः' - अष्टा. 6/4/134 ।

1. 'शद्लृ शातने' धा.पा.तुदा. 1429 इति शद्धातोर्लटि 'शदेःशितः' अष्टा. 1/3/60 इत्यात्मनेपदे ते 'तुदादिभ्यः शः' - अष्टा. 3/1/77 इति श विकरणे 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' - अष्टा. 7/3/78 इति शदः शीयादेशे च कृते रूपमिदम् ।
2. अष्टा. 1/3/60 ।
3. अष्टा. 4/1/14 ।
4. तथाहि –
(क) "एवं तर्हि ज्ञापयत्याचार्यः - पूर्वत्र तदन्तविधिप्रतिषेधो न भवतीति" –इति ग्रन्थेन ज्ञापकत्वमस्यात्र वचने सूचयति पतः व्या. मा.भा. 4/1/1/14 ।
(ख) "अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयती"त्याह भ.दी. वै.सि.कौ. स्त्रीप्रत्ययप्र. पृ. 267 ।
(ग) "अनुपसर्जनात् (सू. 4/1/14) । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयती"त्याह एन्.एस्. रामा. ज्ञा. सं. परि. 2 पृ. 213 ।
5. कुरुषु चरतीत्यधिकरणे उपपदे 'चरेष्टः' -अष्टा. 3/2/16 इति टप्रत्यये उपपदसमासे कुरुचरशब्दस्य सिद्धिः । ततः बहवः कुरुचरा यस्यामिति बहुव्रीहौ रूपमिदं सिद्ध्यति । बहुव्रीहिर्ह्यन्यपदार्थप्रधान इति टितष्टप्रत्ययस्योपसर्जनत्वात् 'टिड्ढ.'- अष्टा. 4/1/15, इति ङीपोऽप्राप्तौ टाबिह भवति ।
6. 'टिड्ढाणञ् - द्वयसज् - दघ्नञ् - मात्रच् -तयप् - ठक्-ठञ् - कञ् क्वरपः' - अष्टा. 4/1/15 ।
7. बहवः कुक्कुटा यस्यामिति बहुव्रीहौ पूर्ववज्जातिशब्दस्य कुक्कुटस्योपसर्जनत्वात् 'जातेरस्त्री. '-अष्टा. 4/1/63, इति ङीषोऽप्राप्तौ टापि रूपमिदं सिद्ध्यति ।
8. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63 ।
9. टिदन्ततदादिरित्यर्थः ।

-जातिवाचकाविति तत्र क्रमशो [1]ङीब्ङीषोः[2] प्राप्तिरेव नास्तीति तत्प्रतिषेधार्थमारब्धं हीदं व्यर्थम् । न चास्य वचनस्याभावेऽपि नद इवाचरति नदा स्त्रीत्यादिषु आचार[3]-[4]क्विबन्तप्रकृतिककर्तृक्विबन्तेषु ङीबादिनिवृत्तयेऽस्य सूत्रस्यावश्यकत्वान्नेदमुक्तवचन-ज्ञापकमिति शङ्क्यम् । यतोऽस्याधिकारसूत्रस्य स्त्रीप्रत्ययविधिषु तदन्तविधि-ज्ञापनार्थतापरभाष्यप्रामाण्येन स्त्रियामाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधा-नमुन्नीयते ।

अथात्र "अकारान्तादाचारक्विबन्तात् कर्त्तरि क्विपि सर्वत्राकारस्य लोपेनैव[5] भाव्यम्, इगाद्यन्तात् क्विपि तु [6]तुको, विचि तु [7]गुणस्यैव प्राप्त्या स्त्रीप्रत्ययविधौ च प्रायोऽत इत्यस्य सम्बन्धात् तत्रादन्तत्वाभावेनैव [8]टाबादेरप्राप्त्यानभिधानाश्रयणमिदम-संगत"मित्यपि न शङ्कनीयम् । यतो [9]गौरादिगणे श्वश्रूशब्दस्यानडुच्छस्य च पाठेन तत्राऽऽचारक्विबन्तात्, कर्त्तरि क्विपि अनड्वानिवाचरति - अनडोहति - अनुडुह् इत्यादौ फलभेदः स्पष्ट इति तदनभिधानाश्रयणं युक्तम् । न चैवमपि क्यजन्तात् कर्त्तरि क्विप्यपि सूत्रस्यास्य चारितार्थ्येन सामर्थ्यस्योपक्षीणतयैतद्वचनज्ञापकत्वासंभवः शङ्क्यः, तस्याप्यनभिधाने ज्ञापकतापरभाष्यतात्पर्यमुन्नीयते । न च पञ्च स्त्री-गोव्यक्तयो धनं यस्य स पञ्चगवधन इत्यत्र [10]द्विगु-[11]तत्पुरुषगर्भ[12]बहुव्रीहौ [13]ट-जन्तस्त्रीवाचक-'पञ्चगव'शब्दान् ङीपो[14]ऽभावाय सूत्रमिदमावश्यकमिति शङ्क्यम् । यतः तत्र 'पञ्चगवे'त्यस्य [15]प्रातिपदिकत्वमेव दुर्लभम् । धनशब्दसमभिव्याहारापेक्षयैव

---

1. 'टिड्ढ.' - अष्टा. 4/1/15 ।
2. 'जातेरस्त्री.' - अष्टा. 4/1/63 ।
3. 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' वा. वै. सि.कौ.नामधातुप्र. पृ. 295 ।
4. 'क्विप्च' - अष्टा. 3/2/76 ।
5. 'अतोलोपः ' - अष्टा. 6/4/48 ।
6. 'ह्रस्वस्य पिति कृतितुक्' - अष्टा. 6/1/71 ।
7. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84 ।
8. 'अजाद्यतष्टाप्' - अष्टा. 4/1/4 ।
9. 'षिद्गौरादिभ्यश्च' - अष्टा. 4/1/41 ।
10. 'संख्यापूर्वोद्विगुः' - अष्टा. 2/1/52 ।
11. 'द्विगुश्च' - अष्टा. 2/1/23 ।
12. 'अनेकमन्यपदार्थे' - अष्टा. 2/2/24 ।
13. 'गोरतद्धितलुकि' - अष्टा. 5/4/92 ।
14. 'टिड्ढ' - अष्टा. 4/1/15 ।
15. 'कृत्तद्धित.' - अष्टा. 1/2/46 ।

तस्यार्थबोधकत्वेन 'एतत्संज्ञाफल - भूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थ-बोधकत्वस्यार्थवत्त्वमेव[1] हि नास्तीति [2]ङीपः प्राप्तिरेव नास्ति ।

न च 'आपिशलिना प्रोक्तमधीते' आपिशला[3] ब्राह्मणी'त्यत्र [4]ङीपोऽभावाय सूत्रमिति शङ्क्यम् । यतोऽत्र प्रोक्ताण्[5] न स्त्रियां वर्तते । नापि चात्राध्येत्रण-मादाय[6] ङीबभावाय सूत्रमिदं चरितार्थमिति शङ्कनीयम् । यतोऽसौ लुप्तः[7] । न चात्र प्रत्ययलक्षणेन[8] सूत्रसार्थक्यं वक्तुं शक्यम् । यतः 'अण्योऽकार इति व्याख्याने ङीपो वर्णाश्रयत्वेन प्रत्ययलक्षणं न सम्भवति[9] । नाप्यध्येत्रर्थ[10]गतस्त्रीत्वमादाय [11]प्रोक्ताण- न्ततया च प्राप्तस्य ङीपोऽभावायास्य सूत्रस्य सार्थक्यं शङ्कनीयम् । यतः [12]'स्त्रिया'मित्यस्य गृह्यमाणविशेषणत्वस्वीकारे [13]ङीपोऽत्र प्राप्तिरेव नास्ति । नहि प्रोक्ताण् अध्येतृस्त्रीत्वे वर्तते । इत्थमिदं सूत्रं स्त्रीप्रत्यये तदन्तविधिज्ञापनं विना व्यर्थमेव । न च '[14]ग्रहणवते'ति निषेधः स्वरूपेणोच्चारिते प्रातिपदिक एव नान्यत्र, टितस्त्वतथात्वादुक्तनिषेधाप्रवृत्तौ[15] सूत्रेणेवात्र[16] तदन्तविधिः सुलभ इत्यपि शङ्कनीयम् । यतोऽत्र ग्रहणपदेन उपादानमात्रं गृह्यते न तु स्वरूपेणोपादनमेव[17] ।

---

1. "अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम् - 'एतत्संज्ञाफलभूतविभक्तीतर- समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्व"मित्याह भ. ना. अजन्तपुलिङ्गप्र. पृ. 3- 4 ।
2. टिड्ढ.' - अष्टा. 4/1/15 ।
3. अत्र हि 'इञश्च' - अष्टा. 4/2/112, इत्यण्, ततोऽध्येत्र्यां 'तदधीते.' - अष्टा. 4/2/59, इत्यण्, तस्य 'प्रोक्ताल्लुक्' - अष्टा. 4/2/64 इति लुग् भवति ।
4. टिड्ढाणञ्.' - अष्टा. 4/1/15 ।
5. 'इञश्च' - अष्टा. 4/2/112, इति विहित इत्यर्थः ।
6. 'तदधीते.' - अष्टा. 4/2/59, इति विहितमित्यर्थः ।
7. 'प्रोक्ताल्लुक्' - अष्टा. 4/2/64 ।
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
9. 'वर्णाश्रयेनास्ति प्रत्ययलक्षणम्' - प. शे. प. 22, पृ. 118 ।
10. 'तदधीते.' - अष्टा. 4/2/59 ।
11. 'इञश्च' - अष्टा. 4/2/112 ।
12. अष्टा. 4/1/3 ।
13. 'टिड्ढाणञ्. - अष्टा. 4/1/15 ।
14. 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' प. शे. प. 32, पृ. 153, "इयं च 'समासप्रत्ययविधौ प्रतिषेधः' उगिद्वर्णग्रहणवर्ज-'मिति वार्त्तिकस्थप्रत्ययांशानुवादः" - इत्याह भ. ना. प. शे. पृ. 153 - 154 ।
15. प्रत्ययविधित्वप्रयुक्ततदन्तविधिनिषेधाप्रवृत्तावित्यर्थः ।
16. 'येनविधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
17. तथाहि –
    (क) "ग्रणणवतेति । ग्रहणम् - उपादानमात्रं, न तु प्रातिपदिकस्य स्वरूपेणोच्चारणम्" - इत्याह कै. प्रदी. 4/1/1/6 ।
    (ख) 'ग्रहणं चोपादानमात्रम्, न तु स्वरूपेणोच्चारणमेव" - इत्याह ह. मि. पदम. 4/1/14 ।

कथमन्यथा '[1]ऋष्यन्धकवृष्णिकुरुभ्यश्च' '[2]वृद्धाच्छः' - इत्यादौ तदन्तविधेरभावः सिद्ध्येत् । इदमत्रावधेयम् - [3]'टिड्ढे'ति सूत्रे टित् प्रातिपदिकं गृह्यते, न तु तदन्तं प्रातिपदिकं, यतोऽत्र '[4]समासप्रत्ययविधौ प्रतिषेधः - इति तदन्तविधिं प्रत्ययविधौ प्रतिषेधति, तथासति 'बहुकुरुचरे'त्यस्य टित्त्वाभावादेव ङीपः प्राप्तिर्नास्ति किञ्चिद्धि साक्षात् टिद् भवति यथा - 'नदट्', - चोरडिति, किञ्चिच्चावयवद्वारेण, यत्र च टित्त्वमकिञ्चित्करं तत्र समुदायार्थं हि तद् विज्ञायते, स चावयवः क्वचिद् धातुः - [5]स्तनन्धयी'ति, क्वचित् [6]कृल्ल्युटादिः, क्वचित् तद्धितष्ट्युट्युलादिः,[7] तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थं तस्य टित्त्वमिति कुरुचरशब्द एव टित् न बहुकुरुचरशब्द इति, एवं बहुकुक्कुटा मधुरेत्यादौ कुक्कुटशब्द एव जातिवाचको, न तु बहुकुक्कुटशब्दः, कथं चैवं सति तत्र प्रतिषेधार्थं सूत्रमिदमारब्धम् ? अथवा 'समासप्रत्ययविधौ प्रतिषेध इति प्रतिषेधो यदि सूत्रप्राप्तस्यैव तदन्तविधेर्नतु 'प्रत्ययग्रहणे' ति परिभाषालभ्यस्य तर्हि टिदन्ततदादेरित्यर्थलाभेऽपि कुरुचर इत्यस्य टिदन्ततदादित्वेऽपि बहुकुरुचरेत्यस्य तदभावात्ततो ङीपः प्राप्तिरेव नास्तीति ज्ञापकमिदमात्मनः सार्थक्याय 'स्त्रीप्रत्यये द्वितीयतदन्तविधिर्भवती'ति वचनस्य । ज्ञापितैतद्वचनं विना हि न द्वितीयतदन्तविधिः सम्भवति, प्रत्यविधौ तत्प्रतिषेधादिति । ज्ञापिते चास्मिन् वचने टिदन्ततदाद्यन्तप्रातिपदिकान्ङीबिति[8] जात्यन्तात् प्रातिपदिकान्ङीषित्यर्थलाभाद्[9] बहुकुरुचरशब्दाद् बहुकुक्कुटशब्दाच्च क्रमशो ङीब्ङीषोः प्राप्तिर्भवतीति तत्प्रतिषेधार्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[10]कौम्भकारेयः' इत्यस्यैव साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि

---

1. अष्टा. 4/1/114 ।
2. अष्टा. 4/2/114 ।
3. 'टिड्ढाणञ् - द्वयसज् - दघ्नञ् - मात्रच् - तयप् - ठक् - ठञ् - कञ् - क्वरपः' - अष्टा. 4/1/15 ।
4. वा. वै. सि. कौ. संज्ञाप्र. पृ. 20 ।
5. 'धेट् पाने' धा. पा. भ्वा. 920, इतिधेधातोः 'नासिकास्तनयोर्ध्माधेटोः' - अष्टा. 3/2/29. इति खश्प्रत्यये 'अरुर्द्विषदजन्तस्यमुम्' - अष्टा. 6/3/67 इति मुमि टित्त्वान् ङीपि रूपम् । अत्र टितोऽवयवे चरितार्थतया समुदायान्ङीब् भवति । 'धया-कन्या', 'गां धयतीति गोधा' - इत्यादौ तु क्रमशः 'पाघ्राध्माधेट्.' - अष्टा. 3/1/37 इति शप्रत्यये 'आतोऽनुपसर्गे कः' - अष्टा. 3/2/3, इति टाबेव । तदाहुर्वर्धमान-क्षीरस्वामि-हरदत्तादयः, इति बा. मनो. पूर्वकृदन्तप्र. पृ. 412 ।
6. 'कृत्यल्युटो बहुलम्' - अष्टा. 3/3/113 ।
7. 'सायं - चिरं - प्राह्णे - प्रगेऽव्ययेभ्यष्ट्यु - ट्युलौ तुट् च' - अष्टा. 4/3/23 ।
8. 'टिड्ढ.' - अष्टा. 4/1/15, इति सूत्रस्येतिशेषः ।
9. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63 इति सूत्रस्येति शेषः ।
10. 'कुम्भकारीशब्दात्' 'टिड्ढ.' - अष्टा. 4/1/15, इत्यणन्तविहितङीबन्तात् 'स्त्रीभ्यो ढक्' - अष्टा. 4/1/120, इति ढकि 'आयनेयी.' - अष्टा. 7/1/2, इति ढकः एयादेशादेशे रूपम् ।

कुम्भेन[1]समासे [2]ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यर्थेऽपत्ययोगस्य वक्तुमशक्यतया कदाचित्ततोऽपि[3]ढकि कुम्भशब्दोकारस्य [4]वृद्ध्यप्राप्तौ 'कुम्भकारेयः' इत्यस्यापि साधुत्वमापद्येत । जयादित्यस्तु नास्य सूत्रस्योक्तवचनज्ञापकत्वं मनुते । असौ हि 'शूद्रा चामहत्पूर्वा जाति'रित्यत्र महत्पूर्वेत्यनेन ज्ञापितमेतद्वचनमित्याह[5] । हरदत्तमिश्रस्तु 'यद्वा' - इत्यादिग्रन्थेन ज्ञापकत्वमस्यास्मिन् वचने मनुते[6] ।

वस्तुतस्तु 'सूत्रमिदं' येन विना यदनुपपन्नं[7] तत्सर्वं ज्ञापयती'त्युभियुक्तोक्तेः, 'स्त्रीप्रत्यये तदन्तविधिर्भवति' 'स्त्रियामित्यस्य तदन्तविशेषणत्वम्' 'अनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वम्' इति त्रयाणां वचनानां ज्ञापकम् । यत एषामभावे नास्य स्वांशे चारितार्थ्यं सम्भवति । तथाहि - ज्ञापितेऽपि स्त्रीप्रत्यये तदन्तविधौ स्त्रियामित्यस्य गृह्यमाणविशेषणत्वे कुरुचरेत्यस्य स्त्रीत्वाभावेनैव 'बहुकुरुचरे'त्यादौ [8]ङीपोऽभावः सुलभः, 'अनुपसर्जना'दित्यस्य तदन्तविशेषणत्वे 'बहुकुरुचरे'त्यस्यानुपसर्जनतया ङीबापत्तिश्च दुर्वारा । ज्ञापितयोरनयोस्तु तदन्तस्यात्र स्त्रीत्वं,

---

1. 'उपपदमतिङ्'- अष्टा. 2/2/19.
2. 'टिड्ढ.' - अष्टा. 4/1/15 ।
3. 'स्त्रीभ्यो ढक्' - अष्टा. 4/1/120 ।
4. 'किति च' - अष्टा. 7/2/118 ।
5. तथाहि–"कथं पुनरुपसर्जनात् प्रत्ययप्रसङ्गः ? तदन्तविधिना ज्ञापितं चैतद् - अस्त्यत्र प्रकरणे तदन्तविधिरिति । तथा च प्रधानेन तदन्तविधिर्भवति - कुम्भकारी । नगरकारी । न च 'अण्' इति कृद्ग्रहणम्, तद्धितोऽप्यणस्ति" - का. 4/1/14 ।
6. तथाहि –"यद्वा - कुम्भेनैकार्थीभूतस्य कारस्य स्त्रीत्वेनायोगात् स्त्रीप्रत्यय एव न भविष्यति, असति पुनरुत्तरत्र तदन्तविधौ स्त्रीप्रत्ययस्यात्राप्रसङ्गः ? किं कारणम् ? यदणन्तं, न तस्य निष्कृष्य स्त्रीत्वेन योगः, यस्य च स्त्रीत्वेन योगो, न तदणन्तम्, अत उत्तरत्राप्यवश्यं प्रधानेन तदन्तविधिरभ्युपगन्तव्यः, तत्र यथाप्रधानेन भवति तथोपसर्जनेनापि स्यादिति प्रतिषेधोऽयमारभ्यते । तथा च पूर्वत्रोपसर्जनेनापि तदन्तविधिर्भवति, 'न षट्स्वस्रादिभ्यः' - प्रियपञ्चा द्रौपदीति, अतिक्रान्ता भवन्तमतिभवतीति । स्यादेतत् - पूर्वत्रोपात्तं तदन्तं वा 'स्त्रियाम्' - इत्यनेन विशेष्यते 'टिड्ढाणञ्' इत्यादिषूपात्तमेव टिदादिकम्' तेन ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वान्न भविष्यति, कुम्भकारीत्यत्र त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि भविष्यति, नार्थ एतेनेति ? तन्न, त्वदुक्तस्य विषयविभागस्य दुर्ज्ञानत्वात्, अतो विषयविभागज्ञापनार्थमिदमारभ्यते । नन्वारब्धेऽप्यस्मिन् नैष विषयविभागः शक्य आस्थातुम्, पञ्चाजीत्यत्राजानामस्त्रीत्वेन तदन्तस्य स्त्रियां वृत्तेः 'अजाद्यतष्टाप्' इति टाप् प्रसङ्गात् । अतो विशेषणविशेष्यभावं प्रति कामचारात् 'अजाद्यतष्टाप्' इत्यत्र 'टिड्ढाणञ्' इत्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, 'वनो र च' इत्यादावुपात्तं तदन्तस्य चेति नार्थ एतेन ? एवं तर्हि तदन्तविधिज्ञापनार्थमिदमारभ्यते । अमहत्पूर्वेत्येतत्तु शक्यमकर्तुम्, नहि महाशूद्रेत्यत्र समुदाये जातिवचने शूद्रशब्दः स्त्रियां वर्त्तते" पदम. 4/1/14 । तथा "एवं चामहत्पूर्वेतिप्रतिषेधः शक्योऽकर्तुम्, नहि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वम् । तदन्तविधिस्तु 'अनुपसर्जनात्' - इत्यत्र ज्ञापयिष्यते इति प्रागेवाहासौ पदम. 4/1/4 ।
7. 'टिड्ढाणञ्' - अष्टा. 4/1/15 ।
8. 'टिड्ढाणञ्' - इष्टा. 4/1/15 ।

गृह्यमाणस्य चोपसर्जनत्वञ्चास्तीति नान्यथा ङीबभावः सिद्ध्यति, नापि च ङीबापत्ति-र्भवतीति स्वांशे सूत्रमिदं चरितार्थं भवति । तत्र द्वितीयस्य वचनस्य फलमतिधीव-रीत्यादौ [1]ङीबूरोः सिद्धिः । तृतीयस्य च 'बहुकुरुचरे'त्यत्र टिदन्तस्य 'बहुकुरुचरे'त्य-स्यानुपसर्जनत्वेऽपि कुरुचरेत्यस्योपसर्जनतया [2]ङीबभावः, प्रथमस्य च फलं पूर्वोक्तमेव 'कौम्भकारेयः' - इत्यस्यैव साधुत्वम् । न चात्र कारशब्दस्य व्यपदेशिवद्भावेनाण्ण-न्तान्तत्वात् ततोऽपि कदाचिन् ङीपि 'कुम्भकारेयः' इत्यस्य साधुत्वं दुर्वारमिति-शङ्क्यम् । यतः सूत्रमिदं चतुर्थस्यापि 'असहाये व्यपदेशिवद्भावप्रवृत्ति''रितिवचनस्य ज्ञापकम् । न चात्र समुदायान् ङीपि कृतेऽपि 'स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि 'कुम्भकारेयः' - इत्यस्य साधुत्वं दुर्निवारमिति शङ्क्यम् । यत'स्तदादिनियमाभावेनाधिकस्य कार्यं' बोध्यते, न तु न्यूनस्ये'ति पञ्चमस्यापि वचनस्येदं सूत्रं ज्ञापकम् । यतः '[3]प्रत्ययग्रहणे' इति नियमेनाधिकस्यैव व्यावृत्तिर्भवति, न न्यूनस्य । अन्यथा अस्य युवापत्यमित्यर्थे अशब्दादिञि[4] 'यस्येतिचेति[5]' लोपे '[6]यञिञोश्चे'ति फकोऽनापत्तिः स्यात् । एवञ्च तन्निषेधेन तेन तद्व्यावर्त्यस्यैव संग्रहो न त्वतद्व्यावृत्तस्य न्यूनस्येति स्थाने । अतएव 'स्वस्य च रूपस्ये'त्युक्तिरपि[7] संगच्छते । इत्थं सूत्रमिदं पूर्वोक्तानां पञ्चानामपि वचनानां ज्ञापकमिति निश्चीयते ।

## 'अनुर्लक्षणे'[8]

सूत्रमिदं 'हेतुभूतेलक्षणेऽनोः कर्मप्रवचनीयत्वलब्धया द्वितीयया हेतौ तृतीया बाध्यते' - इति वचनस्य ज्ञापकम्[9] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् ।

---

1. 'वनो र च' - अष्टा. 4/1/7 ।
2. 'टिड्ढाणञ्' - अष्टा. 4/1/15 ।
3. 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' - प. शे. प. 24, पृ. 124 ।
4. 'अत इञ्' - अष्टा. 4/1/95 ।
5. अष्टा. 16/4/148 ।
6. अष्टा. 4/1/101 ।
7. "विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य" - भ. दी. वै. सि. कौ. संज्ञाप्र. पृ. 20 ।
8. अष्टा. 1/4/84 ।
9. तथाहि –
 (क) "किमर्थमिदमुच्यते, यावता 'लक्षणेत्थम्भूताख्यान'इति सिद्धैवानोः कर्मप्रवचनीय-संज्ञा ? हेत्वर्थं वचनम्, हेतुतृतीयां बाधित्वा द्वितीयैव यथस्या"दित्याह जया. का. 1/4/84 ।
 (ख) "परापि हेतौ (इति) तृतीयाऽनेन बाध्यते, 'लक्षणेत्थंभूते'त्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्या"दित्याह भ. दी. वै. सि. कौ. द्वितीयाकारकप्र. पृ. 317-318।
 (ग) "कर्मप्रवचनीययुक्ते (सू. 2/3/8), परापि हेतौ तृतीया अनेन बाध्यते । 'लक्षणेत्थं भूत' (सू. 1/4/90) इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्या"दित्याह एन्. एस. रामा. ज्ञा. सं. परि. 2 पृ. 207 ।

तथाहि – 'वृक्षमनुविद्‌योतते विद्‌यु'दित्यत्र 'वृक्ष'मिति [1]द्वितीयार्थमनोः कर्मप्रवचनीयसंज्ञाविधानाय सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । यतस्तत्रानोः कर्मप्रवचनीयसंज्ञा [2]'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः 'इति सूत्रेणैव सुलभा । न च 'पर्जन्यो जपमनु प्रावर्ष'दित्यत्र 'जप'मिति [3]द्वितीयार्थमनोः कर्मप्रवचनीयसंज्ञां विधातुं सूत्रमिदं चरितार्थमिति शङ्क्यम् । यतो हेतुत्वविवक्षायां 'वृक्षमनु विद्योतते विद्यु'दित्यत्र '[4]अनुर्लक्षणें' इतिसावकाशम्, हेतौ [5]तृतीया तु 'धनेन कुल'मित्यादौ सावकाशा, 'पर्जन्यो जपमनु प्रावर्ष'दित्यत्र तु तदुभयमपि[6] प्रसक्तमिति तत्र परत्वाद्धेतु- [7]तृतीयैव स्यादस्य वचनस्याभावे, तथा सति 'जप'-मिति द्वितीयार्थमप्यनोः कर्मप्रचनीयसंज्ञाविधानमिदं न चरितार्थम् । ज्ञापिते चास्मिन् वचने 'पर्जन्यो जपमनु प्रावर्ष'दित्यत्र 'जप'मिति [8]द्वितीयार्थमनुशब्दस्य कर्म-प्रवचनीयसंज्ञां विधातुं सूत्रमिदं स्वांशे चरितार्थीभवति । ज्ञापितस्यास्य वचनस्य फलं तु जपस्य हेतुत्वविवक्षायामपि 'पर्जन्यो जपमनु प्रावर्ष'दित्यत्र जपात् तृतीयाया[9] आपत्तेरभावः ।

## '[10]अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'

सूत्रमिदम् '[11]उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति परिभाषाया [12]ज्ञापकम् ।

---

1. 'कर्मप्रवचनीययुक्ते द्वितीया' - अष्टा. 2/3/8 ।
2. अष्टा. 1/4/90 ।
3. 'कर्मप्रवचनीययुक्ते द्वितीया' - अष्टा. 2/3/8 ।
4. अष्टा. 1/4/84 ।
5. 'हेतौ' - अष्टा. 2/3/23 ।
6. 'कर्मप्रवचनीययुक्ते द्वितीया' - अष्टा. 2/3/8, 'हेतौ' - अष्टा. 2/3/23, इति द्वितीया तृतीया चेत्यर्थः ।
7. 'हेतौ' - अष्टा. 2/3/23 ।
8. 'कर्मप्रवच.' - अष्टा. 2/3/8 ।
9. 'हेतौ' - अष्टा. 2/3/23 ।
10. अष्टा. 1/2/45 ।
11. (क) पु. दे. ल. प. वृ. प. 70, पृ. 143 ।
    (ख) सी. दे. बृ. प. वृ. प. 15, पृ. 177 ।
    (ग) नी. दी. प. वृ. प. 20, पृ. 297 ।
    (घ) ह. भा. प. भास्क. प. 15 पृ. 328 ।
    (ङ) भ. ना. प. शै. प. 23, पृ. 123 ।
    (च) शेषा. प. भास्क. प. 22, पृ. 404 ।
12. तथाहि – "अयं चार्थोऽर्थवत् (1/2/45) इति सूत्रप्रणयनादस्तीत्याहु"रित्याह सी. दे. बृ. प. वृ. प. 15, पृ. 177 ।

यतोऽस्या अभावे सर्वेषामुणादीनां[1] धातुजतया[2] कारुः[3] 'इत्यादौ कृदन्तत्वात् 'कृत्तद्धित - समासाश्चे'ति प्रातिपदिकसंज्ञासिद्धौ[4] सूत्रमिदं व्यर्थम् । ज्ञापितायां चास्यां 'कारु'प्रभृतीनामुणाद्यन्तानां कृदन्तत्वाभावात् 'कृत्तद्धिते'ति सूत्रेण प्रातिपदिकसंज्ञाया अप्राप्त्या तेषां प्रातिपदिकसंज्ञासिद्धये सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः 'उणाद्यन्तानि प्रकृति - प्रत्यय - विभाग - प्रयोज्य - पाणिनि - सूत्रप्रवृत्त्यनर्हाणीत्यर्थः । फलं तु [5]जिव्रिरित्यत्र धातुत्वाभावात् 'र्वोरुपधाया[6] दीर्घ इकः 'इति दीर्घाभावः । अन्यथा बकारान्तो धातुरिति इको दीर्घापत्तिरत्र दुर्वारा स्यात् ।

वस्तुतस्तु नेदं सूत्रमस्या ज्ञापकम् । यतोऽ[7]व्ययशब्दानामनुकरणशब्दानां[8] च प्रातिपदिकत्वसिद्ध्यर्थमिदम् अस्या अभावेऽपि चरितार्थम् । किं च [9]समासग्रहणस्य नियमार्थत्वोपपत्तयेऽपीदमावश्यकमिति नास्य ज्ञापकत्वं युक्तमिति मन्ये । अतोऽस्या ज्ञापकान्तरमत्र प्रबन्धेऽन्यत्र[10] निरूपितम् ।

### [11]'अर्थे' 'क्ते च[12]'

इमे सूत्रे "[13]चतुर्थी तदर्थे" इति पूर्वपदप्रकृतिस्वरः प्रकृतिविकृतिभाव एवभवती'ति वचनस्य [14]ज्ञापके । यतोऽस्य वचनस्याभावे व्यर्थमिमे । तथाहि -

---

1. 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' - उणादि सू. 1/1, इत्यादिविहितानामुणादितदन्तानामित्यर्थः ।
2. 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोक' मित्याह वार्तिककारः ।
3. 'डुकृञ् करणे' धा. पा. तना. 1472 इति कृधातोः 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' उणादि सू. 1/1 इत्युण्प्रत्यये 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावाकारे रपरत्वे स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
4. अष्टा. 1/2/46 ।
5. जृष् वयोहानौ' धा. पा. दिवा. 1130 इति जृ धातोः 'जीर्यतेः क्रिन् रश्च वः' उणादि सू. 5/726 इति क्रिन्प्रत्यये 'ॠत इद्धातोः' अष्टा. 7/1/10 इति इत्वे रपरत्वे रेफस्य वत्वे स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
6. अष्टा. 8/2/76 ।
7. 'सदृशं त्रिषु लिङ्गेषुं सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' इत्यार्थवणश्रुतिः, वै. सि. कौ. अव्ययप्र. पृ. 250 समुद्धृता ।
8. 'क्षियो दीर्घात्' - अष्टा. 8/2/463 इत्यादौ क्षिप्रभृतीनामित्यर्थः ।
9. कृत्तद्धितसमासाश्च - अष्टा. 1/2/46 इति सूत्रस्थस्येत्यर्थः ।
10. 'ज्ञापकाः सूत्रांशाः' इति प्रघट्टके ।
11. अष्टा. 6/2/44 ।
12. अष्टा. 6/2/45 ।
13. अष्टा. 6/2/43 ।
14. तथाहि –

[1]'देवार्थम्' इत्यादौ, 'गोहितम्[2]' – इत्यादौ च क्रमशः चतुर्थ्यन्तस्य देवादिशब्दस्य अर्थे परे, क्तान्ते परे च पूर्वपदस्य चतुर्थ्यन्तस्य पूर्वपदस्वरं विधातुमिमे आरब्धे । ते चास्य वचनस्याभावे व्यर्थे । यतोऽस्य वचस्याभावे प्रकृतिविकृतिभावविरहस्थलेऽपि 'चतुर्थी तदर्थे' त्यस्य सूत्रस्य प्रवृत्तिदुर्वारेति तेनैव सूत्रेण 'देवार्थम्' - इत्यादौ 'गोहितम्' - इत्यादौ च पूर्वपदप्रकृतिस्वरः सिद्धः । ज्ञापिते चास्मिन् वचने 'देवार्थम्' - इत्यादौ 'गोहितम्' - इत्यादौ च प्रकृतिविकारभावात् 'चतुर्थी [3]तदर्थे'-इत्यनेन पूर्वपदप्रकृतिस्वरो न प्राप्नोतीति तत्र तत्सिद्ध्यर्थं सूत्रद्वयमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु अश्वघासादीनां षष्ठीसमासत्वेनापि स्वरादिकस्य सिद्धिः । अतएव 'विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यान[4]'-मिति वार्तिकं नारम्भणीयं भवती'त्युपपादितं[5] भगवता ।

## [6]'अर्हः'

सूत्रमिदम् 'अन्तरङ्गोऽप्यच्प्रत्ययः कर्मण्यणा बाध्यते' - इतिवचनस्य [7]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । इदं हि सूत्रं [8]'पूजार्हा'

---

(क) "आचार्य प्रवृत्ति र्ज्ञापयति - 'विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति, न चतुर्थीमात्र'-मिति, यदयं 'चतुर्थीतदर्थे' 'अर्थे' 'कृतेचे'त्यर्थग्रहणं क्तग्रहणं च करोति । कथं कृत्वाज्ञापकम् ? यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थग्रहणेन क्तग्रहणेन चार्थस्तथा जातीयकानां प्रकृतिस्वरत्वम् । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रन्ततोऽर्थग्रहणं क्तग्रहणं चार्थवद् भवती"त्याह पत. व्या. म. भा. 2/1/2/36 ।

(ख) "केचित् पुनराहुः ज्ञापकार्थमिदम्, एतदनेन ज्ञाप्यते - पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति । अश्वघासः श्वश्रूश्वसुरमित्यत्र सत्यपि तादर्थ्ये न भवति"इत्याह वाम. का. 6/2/44 ।

(ग) "चतुर्थी तदर्थार्थ... (सू. 2/1/36) । 'चतुर्थी तदर्थे' (सू. 6/2/43) इति पूर्वपदप्रकृतिस्वरः प्रकृतिविकृतिभाव एव, 'अर्थे' (सू. 6/2/44) 'क्तेच' (सू. 6/2/45) - इत्यर्थग्रहणाच्च ज्ञापकात्"-इत्याह श्रीना. ज्ञा. सं. 2/ पृ. 54 ।

1. देवः पचाद्यजन्तः, देवायेदमिति विग्रहः, तादर्थ्ये चतुर्थी, 'चतुर्थी-तदर्थार्थवलिहित-सुखरक्षितैः' - अष्टा. 2/1/36, इति समासः ।
2. अष्टा. 6/2/43 ।
3. अष्टा. 6/2/43 ।
4. वा. व्या. म. भा. 2/1/2/36 ।
5. व्या. म. भा. 2/1/2/36 ।
6. अष्टा. 3/2/12 ।
7. तथाहि – "कर्मण्यणिति सूत्रे (3/2/1) कर्मणीत्युपपदेनाभिधेय निर्देश इति । पचादिषु कर्तृप्रत्ययान्तस्य श्वपचभूधरादिशब्दपाठात् कर्मण्यण् बाधनार्थत्वात् । अतएवान्तरङ्गोऽप्यच्प्रत्ययः कर्मण्यणा बाध्यते । अर्ह इति (3/2/12) अजर्थं सूत्रारम्भात् ज्ञापकात् । तेनौदनपाचः दण्डधारः सूत्रधारः इत्यादावच् न भवती"त्याह पु. दे. ज्ञा. समु. दशमे कर्मणिपादे पृ. 73 ।
8. पूजामर्हतीत्यर्थः ।

'[1]गन्धार्हा' '[2]मालार्हा' - इत्यादौ '[3]कर्मण्य'णिति विहितस्य अणप्रत्ययस्य अपवादमचूप्रत्ययं विधातुमारब्धम् । यतोऽत्राणि सति [4]ङीबापद्येत, [5]टाप् च न सिद्ध्येत् । अस्य वचनस्याभावे हि 'पचादेराकृतिगणत्वेन 'पूजार्हा' - इत्यादौ पचादित्वादेवाचः[6] सुलभतया सूत्रमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचनेऽनेन–'पूजार्हा' - इत्यादौ पचाद्यचः[7] कर्मण्यणा[8]बाधादचूप्रत्ययो न सिद्ध्यतीत्यजर्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'ओदनपाच[9]:' 'दण्डधारः[10]' 'सूत्रधारः'[11] - इत्यादौ [12]पचेर्धरतेश्च[13] अचोऽ[14]भावः । अस्य वचनस्यासत्त्वे हि अजापत्तिरत्र दुर्वारा स्यात्[15] ।

## '[16]अव्ययादाप्सुपः'

सूत्रमिदम् 'अव्ययेभ्यः सुबुत्पत्तिरस्ती'ति वचनस्य ज्ञापकम्[17] । यतः [18]प्रत्ययनियमेन निःसंख्येभ्योऽव्ययेभ्यः सुपो व्यावर्त्त्यन्ते इति अव्ययेभ्यः

---

1. गन्धमर्हतीत्यर्थः ।
2. मालामर्हतीत्यर्थः ।
3. अष्टा. 3/2/1 ।
4. 'टिड्ढ.' - अष्टा. 4/1/15 ।
5. 'अजाद्यतष्टाप्' - अष्टा. 4/1/4 2
6. 'नन्दिग्रहि - पचादिभ्यो ल्युणिन्यचः ' - अष्टा. 3/1/134 ।
7. 'नन्दि - ग्रहि - पचादिभ्यो ल्युणिन्यचः' - अष्टा. 3/1/134 ।
8 'कर्मण्यण्' - अष्टा. 3/2/1 ।
9. ओदनं पचतीत्यर्थे पचेः 'कर्मण्यण्' - अष्टा. 3/2/1, इत्यणि रूपमिदम् ।
10. 'दण्डं ध्रियते' - इत्यर्थे - धरतेः कर्मण्यणिरूपम् ।
11. 'सूत्रंध्रियते' - इत्यर्थे - धरतेः कर्मण्यणिरूपम् ।
12. 'डुपचषपाके' धा. पा. भ्वा. 996 ।
13. 'धृङ् अवस्थाने' धाः पा. दिवा. 1413 ।
14. 'नन्दि - ग्रहि - पचादिभ्यो ल्युणिन्यचः' - अष्टा. 3/1/134 ।
15. 'नन्दि - ग्रहि - पचादिभ्यो ल्युणिन्यचः' - अष्टा. 3/1/134 ।
16. अष्टा. 2/4/82 ।
17. तथाहि –
    (क) "अथवाचार्यप्रवृत्तिर्ज्ञापयति - 'उत्पद्यन्तेऽव्ययेभ्यः स्वादय' इति, यदय'मव्ययादाप्सुपः' इत्यव्ययाल्लुकं शास्ती"त्याह पत. व्या. म. भा. 1/4/2/21 ।
    (ख) "ननु स्वादिविधानसूत्रे संख्याकर्मादयः स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यतेतिवक्ष्यति । तत् कुतः स्वादीनां सामान्यविहितत्वम् ? नहि 'बहुषु बहुवचनम्' 'कर्मणि द्वितीया' इत्यादिना शास्त्रान्तरेण-स्वौजसादेः सूत्रस्यैकवाक्यतायां स्वादीनां सामान्यविहितमुपपद्यते । एवं तर्हि ज्ञापकेन अव्ययेभ्यः सामान्येन स्वाद्युत्पत्ते र्ज्ञापितत्वात् सामान्यविहिता इत्युक्तमित्यदोषः, किं पुनस्तज् ज्ञापकम् ? 'अव्ययादाप् सुपः' इत्यव्ययादुत्पन्नानां सुपां लुग्वचनम्, नह्यनुत्पन्नानां लुगुपपद्यते' - इत्याह जि. बु. न्या. 1/4/21 ।

सुपामनुत्पत्त्या तेभ्यस्तेषां लुग्विधानार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचनेऽव्ययेभ्योऽपि सुप उत्पत्त्या तल्लुगर्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वनचस्य फलं तु 'उच्चैस्' - 'नीचैस्' - इत्यादीनामव्ययानां [1]पदसंज्ञा - सिद्धिः । पदत्वाभावे हि 'उच्चैः पठती'त्यादौ [2]लत्वादि न सिद्ध्येत् । [3]जयादित्यग्रन्थस्याप्यत्रैव तात्पर्यमिति तद्ग्रन्थं व्याचक्षाणो जिनेन्द्रबुद्धिराह[4] । हरदत्तमिश्रस्तु [5]भाष्योक्तं पक्षान्तरमाश्रित्यार्थनियम - प्रत्ययनियमेति नियमद्वयेऽपि ज्ञापकं विनैव अव्ययेभ्यः स्वाद्युत्पत्तिं [6]स्वीकरोतीति नासावस्य ज्ञापकत्वमस्मिन्-वचने मनुते । अस्य सूत्रस्य ज्ञापकत्वं [7]भाष्यसम्मतमिति तदपि युक्तमेवेति मन्ये ।

## '[8]अश्वाघस्यात्'

सूत्रमिदं [9]"नच्छन्दस्यपुत्रस्ये'त्यनेन दीर्घस्यापि प्रतिषेधो भवती"ति वचनस्य ज्ञापकम्[10] । यतोऽस्य वचनस्याभावे सूत्रमिदमनन्तरस्य[11] ईत्वस्यैव[12] प्रतिषेधकं

---

(ग) "यथाऽव्ययेभ्य उत्पत्तौ' अव्ययादाप्सुपः' इति गमक"मित्याह ह. दी. श. र. अजन्तपुंलिङ्गप्र. पृ. 197 ।

(घ) "तत्रार्थे 'अव्ययादाप् सुपः' (सू. 2/4/82) इति ज्ञापकाद्वा अव्ययेभ्यः सुपः" - इत्याह श्रीना. ज्ञा. सं. 1/ पृ. 48 ।

18. 'एकस्मिन्नेवैकवचनं' 'द्वयोरेव द्विवचनं' 'बहुष्वेव बहुवचन'मित्याकारकेणेत्यर्थः ।
1. 'सुप्तिङन्तं पदम्' - अष्टा. 1/4/14 ।
2. 'ससजुषोरुः' - अष्टा. 8/2/66 ।
3. "यत्र च संख्या सम्भवति, तत्रायमुपदेशः । अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव' का. 1/4/21, इत्यस्येत्यर्थः ।
4. "ननु स्वादि ...... लुगुपपद्यते"न्या. 1/4/21 ।
5. व्या. म. भा. 1/4/2/21 ।
6. तथाहि –

"भाष्ये तु पञ्चकपक्षाङ्गीकारेण नियमपक्षः स्थापितः । तत्र ह्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति स्वार्थेऽपि जसादिबहुवचनं बहुत्वेऽपि सिद्धम्, तस्यापि स्वार्थत्वात् तत्राप्यर्थनियमाद् - बहुषु बहुवचनमेव, द्व्येकयोर्द्विवचनैकवचने एवेति । एवं 'कर्मणि द्वितीया' इत्यादावपि कर्मणि द्वितीयैवेत्येवमादिकोऽर्थनियमो वेदितव्यः । एवं हि प्रत्ययानामनियतत्वादव्ययेभ्यो निःसंख्येभ्यो निष्कारकेभ्यश्च स्वादयः सिद्ध्यन्ति । अथवा, प्रत्ययनियमः - बहुष्वेव बहुवचनं, द्व्येकयोरेव द्विवचनैकवचने । तुल्यजातीयस्य च नियमेन व्यावृत्तिः - बहुष्वेव बहुवचनं न द्व्येकयोः, एकस्मिन्नेवैकवचनं न संख्यान्तरे, द्वयोरेव द्विवचनं न संख्यान्तर इति । 'कर्माणि द्वितीया' इत्यादावप्येवम् - कर्मण्येव द्वितीया, न कारकान्तर इति । एवमपि ह्यव्ययेभ्यः स्वादयः सिद्ध्यन्ति ' - इत्याहासौ पदम. 1/4/21 ।

7. व्या. म. भा. 1/4/2/21 ।
8. अष्टा. 7/4/37 ।
9. अष्टा. 7/4/35 ।
10. तथाहि–

स्यान्न तु व्यवहितस्य दीर्घस्य[1], तथा सति '[2]अश्वायन्तो मघवन्' 'मात्वा वृका अ - घायवो विदन्'[3] - इत्यत्राश्वाघशब्दयोः छन्दसि विषये [4]क्यचि आत्वार्थमारब्धमिदं व्यर्थम् । तत्र हि [5]'अकृत्सार्वधातुकयोदीर्घः' - इत्यनेनैव दीर्घः सुलभः । ज्ञापिते चास्मिन् वचने व्यवहितस्यापि [6]दीर्घस्यानेन प्रतिषेधे सति तत्राकारादेशार्थमिदं स्वाशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[7]मित्रयुः' - इत्यादौ [8]दीर्घस्याभावसिद्धिः । अस्य वचनस्यासत्त्वे हि [9]दीर्घापत्तिरत्र दुर्वारा स्यात् । भाष्यकारस्त्ववधारणार्थं सूत्रमिद'मिति [10]मनुते ।

---

(क) "एतदेवात्त्ववचनं ज्ञापकम् - 'न च्छन्दस्यपुत्रस्य' इति दीर्घप्रतिषेधो भवतीती"त्याह वाम. का. 7/4/37 ।

(ख) "यदि 'न च्छन्दसि' इत्यनन्तरस्यैवेत्वस्यायं प्रतिषेधः, तदाऽऽद्वचनमनर्थकं स्यात्, 'अकृत्सार्वधातुकयोः' इत्यनेनैव सिद्धत्वात्, कृतञ्च, तस्मादेतज् ज्ञापयति - दीर्घस्याप्ययं प्रतिषेधो भवतीती"त्याह जि. बु. न्या. 7/4/37 ।

(ग) एवं मन्यते - यदयम् 'अश्वाघस्यात्' इत्यात्वं शास्ति, तज्ज्ञापयति - दीर्घस्याप्ययं प्रतिषेध इति, अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यादिति"इत्याह ह. मि. पदम. 7/4/35 ।

(घ) "न च्छन्दसी'ति निषेधो नेत्त्वमात्रस्य, किंतु दीर्घस्यापीत्यत्रेदमेव सूत्रं ज्ञापक"मित्याह भ. दी. वै. सि. कौ. वैदिकप्र. - अष्टामाध्याये पृ. 612 ।

11. 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति परिभाषयेति शेषः । प. शे. प. 62, पृ. 277 ।
12. 'क्यचि च' - अष्टा. 7/4/33 ।
1. 'अकृत्सार्वधातुकयोदीर्घः' - अष्टा. 7/4/25 ।
2. अश्वमिच्छतीत्यर्थे सुबन्तात् अश्वशब्दात् क्यचि तदन्ताल्लटि लटः शत्रादेशे 'अश्वाघस्यात्' - अष्टा. 7/4/37, इत्याकारादेशे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. अघमिच्छन्तीत्यर्थे अघशब्दात् सुबन्तात्, 'छन्दसि परेच्छायामिति वक्तव्यम्' वा. का. 3/1/8, इति क्यचि 'क्याच्छन्दसि' - अष्टा. 3/2/170, इति उप्रत्यये कृदन्तप्रातिपदिकत्वेन जसि रूपम् ।
4. 'छन्दसि परेच्छायामिति वक्तव्यम्' वा. का. 3/1/8 ।
5. अष्टा. 7/4/25 ।
6. अष्टा. 7/4/25 ।
7. 'मित्रमिच्छतीत्यर्थे सुबन्तात् मित्रशब्दात्' सुप आत्मनः क्यच्' - अष्टा. 3/1/8, इति क्यचि 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32, इति धातुसंज्ञायां 'सुपोधातुप्रातिपदिकयोः' - अष्टा. 2/4/71, इति सुपो लुकि 'क्याच्छन्दसि' - अष्टा. 3/2/170, इति उप्रत्यये कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
8. 'अकृत्सार्वधातुकयोदीर्घः' - अष्टा. 7/4/25 ।
9. 'अकृत्सार्वधातुकयोदीर्घः ' - अष्टा. 7/4/25 ।
10. असौ हि - "अश्वाघस्याद्वचनमवधारणार्थं' भविष्यति - 'अश्वाघयोरेवच्छन्दसि दीर्घो भवति नान्यस्ये'ती" त्याह व्या. म. भा. 7/4/35 ।

## [1]'आनेमुक्'

सूत्रमिदं [2]'यदागमेति परिभाषाऽनित्ये'ति वचनस्य [3]ज्ञापकम् । यतोऽस्य वचनस्याभावे [4]'पचमानः'इत्यादौ [5]अकारस्यानेन मुकि कृतेऽपि मुकोऽकारग्रहणेन यदागमपरिभाषया ग्रहणात् [6]सवर्णदीर्घैकादेशस्य दुर्वारतया सूत्रमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने यदागमपरिभाषाया अनित्यतयात्राप्रवृत्तौ मकारव्यवधानाद्दीर्घैकादेशस्याप्राप्त्या 'पचमानः' [7]'यजमानः' इत्यादिप्रयोगसिद्ध्यर्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वंचनस्य फलं तु [8]'दिदीये'—इत्यत्र यणोऽभावस्य [9]'जहारे'—त्यत्र 'आत औ णलः[10]' इति णलः औकारादेशाभावस्य च सिद्धिः । अस्य वचनस्याभावे हि [11]युडागमविशिष्टे ये शब्दे अजादित्वंस्य आर् शब्दे आदन्तत्वस्य च यदागमेति परिभाषया सत्त्वेन क्रमशो [12]यण् औकारादेशश्च दुर्वारौ स्याताम् । सति चास्मिन् वचने तस्या अत्राप्रवृत्तौ येशब्दे अजादित्वस्य आर्शब्दे आदन्तत्वस्य चासम्भवान् नात्र यण्णौकारादेशौ भवतः ।

न चैतद्वचनाभावेऽपि यणोऽप्राप्तियोग्येऽचारितार्थ्येन, कृते तस्मिन् चारितार्थ्येन च [13]तक्रन्यायेन युटो बाधकत्वात् सर्वेषामित्यत्र नुडभाव इवात्र यणोऽभावः सुलभ इति शङ्क्यम् । यतो दीङ्धातो[14]र्घञर्थे के 'दिय' इत्यादौ

---

1. अष्टा. 7/2/82
2. 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषाया नानाकारास्तस्या ज्ञापकनिरूपणावसरेषु टिप्पण्यां निर्दिष्टाः ।
3. तथाहि—"'आनेमुक्' इति मुग्विधानसामर्थ्यादेषाऽनित्या । अन्यथा पचमान इत्यादावकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्ण-दीर्घे कृते तद्वैयर्थ्यं स्पष्टमेवे"त्याह भ. ना. प. शे. प. 12, पृ. 67-69 ।
4. पचेर्लट् तस्य शानच् ।
5. "आने परतोऽङ्गस्यातो मुगागमो भवतीति" का. 7/2/82 ।
6. 'अकः सवर्णे दीर्घः'—अष्टा. 6/1/101 ।
7. 'यजेर्लङ् तस्य शानच् ।
8. 'दीङ्क्षये' धा. पा. दिवा. 1134 इति दीधातोर्लिटि लस्य तादेशे द्वित्वेऽभ्यासह्रस्वत्वे तकारस्यैशादेशे 'दीङोयुडचि ङिति'—अष्टा. 6/4/63 इति युटि रूपमिदम् ।
9. हृ प्रसह्यकरणे धा. पा. जुहो. 1097, इति हृधातोर्लिटि लस्य तिवादेशे तिपो णलि द्वित्वे 'उरत्'—अष्टा. 7/4/66, इति ऋकारस्य अकारे रपंरत्वे हलादिशेषे 'कुहोश्चुः'—अष्टा. 7/4/62 इति चुत्वेनाभ्यासहकारस्य जकारे'अचोञ्णिति'अष्टा. 7/3/115 वृद्धौ रपरत्वे सिद्ध्यति रूपम् ।
10. अष्टा. 7/1/34 ।
11. 'दीङोयुडचिक्ङिति'—अष्टा. 6/4/63 ।
12. 'एरनेकाचोऽसंयोगपूर्वस्य'—अष्टा. 6/4/82-इति विहितः ।
13. 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय'इति न्यायस्वरूपम् ।
14. 'घञर्थे कविधानम्' वा. वै. सि. कौ. उत्तरकृदन्तप्र. पृ. 557 ।

यणोऽप्राप्तियोग्ये युट् चरितार्थः । नापि च 'वुग्युटावुवङ्यणोः[1] सिद्धौ वक्तव्यौ' इति वार्तिकारम्भसामर्थ्याद् यणोऽभावः सुलभ इति शङ्क्यम् । यतः शास्त्रबाधापेक्षया यदागमपरिभाषाऽनित्यत्वज्ञापनमेवोचितम् । न च [2]सन्निपातपरिभाषया णलव्यवहित-पूर्वत्वं निमित्तीकृत्य जायमाना[3]वृद्धिर्णल्[4]-विनाशिका न स्यादतोऽस्य वचनस्याभावे-ऽपि जहारेत्यत्रौकारादेशापत्तेरभावः सुलभ इति वक्तव्यम् । यतः सन्निपातपरिभाषा 'आत औ णलः' इत्येतद्विषये न प्रवर्तते । अन्यथा [5]'ममा'वित्यादावेज्विषय-कत्वनिमित्तकमात्वं[6] निमित्तीकृत्या'ऽऽत औ णलः[7]' इति णल औकारादेशो न भवेत् ।

नीलकण्ठदीक्षित[8]स्तु 'आनेमुक्'इति मुग्विधानं 'यदागमपरिभाषा वर्णग्रहणे न प्रवर्तते'इति वचनस्य ज्ञापकमिति मनुते ।

मतमिदं भट्टनागेशपादाय न रोचते । यतोऽसौ "वर्णग्रहणेऽपीयं परिभाषा प्रवर्तते । अतएव 'आने मुक्' इति सूत्रे भगवता अङ्गान्त्यस्याकारस्य मुगित्यर्थे पचमानः इत्यत्र [9]'तास्यनुदात्तेत्' इति स्वरो न स्यादित्याशङ्क्य अदुपदेशभक्तस्तद्-ग्रहणेन ग्रहीष्यते[10] इति समाहितम् । [11]'ङमो ह्रस्वात्'इति सूत्रे च ह्रस्वात्परस्य पदान्तस्य ङमोऽचि परे ङमुडिति पक्षे 'कुर्वन्नास्ते'इत्यत्र पूर्वनकारस्य णत्वमाशङ्क्य' पदान्तभक्तोऽसौ नकारः पदान्तग्रहणेन ग्रहीष्यते[12] इति समाहितम् । किं च गुणादे रपरत्वे रेफविशिष्टे गुणत्वादि एष्टव्यम्, अन्यथा[13] ऋकारस्य गुणवृद्धी अरारावेति नियमो न स्यात् । अतएव च[14] 'रदाभ्याम्' इति सूत्रे भगवता 'गुणो भवति वृद्धि-र्भवति, रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिवर्तते' इत्युक्त"मिति ग्रन्थेन स्वसिद्धान्तं न्यरूपयत्[15] ।

---

1. वा. वै. सि. कौ. तिङन्ते दिवादिप्र. पृ. 187 ।
2. 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य-भ. ना. प. शे. प. 86, पृ. 310 ।
3. 'अचोञ्णिति'—अष्टा. 7/2/115 ।
4. 'परस्मैपदानां णलतुसुस्थलथुसुणल्वमाः'—अष्टा. 3/4/82 ।
5. 'डुमिञ् प्रक्षेपणे' धा. पा. स्वा. 1251 अस्माल्लिटि तिपि णलि रूपम् ।
6. मीनाति मिनोतिदीङांल्पपि च'—अष्टा. 6/1/50 ।
7. अष्टा. 7/134
8. अनेन हि—"इयं च वर्णग्रहणे न प्रवर्तते, आने मुको विधानात् इत्युक्तम् प. वृ. प. 4, पृ. 293 ।
9. 'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः'—अष्टा. 6/1/186 ।
10. व्या. म. भा. 7/2/2/82 पृ. 152 ।
11. 'ङमो ह्रस्वादचि ङमुण्नित्यम्'—अष्टा. 8/3/32 ।
12. व्या. म. भा. 8/3/1/32 पृ. 167 ।
13. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः'—अष्टा. 8/2/42 ।
14. व्या. म. भा. 8/2/2/42, पृ. 118 ।
15. प. शे. प. 12, पृ. 70-73 ।

शेषाद्रिसुधीस्तु भट्टनागेशपादस्य [1]'आने मुक्' इति मुग्विधानसामर्थ्यादेषाऽनित्ये'ति 'वर्णग्रहणेऽपीयं [2]प्रवर्तते' इति च'सिद्धान्तौ न मनुते । यतोऽमुना"आने मुक् (7/2/82) इति मुग्विधानात् सवर्णदीर्घबाधनमनन्तरेणानुपपद्यमानादियमनित्येत्यप्ययुक्तम् । न ह्यत्र [3]सवर्णदीर्घः प्राप्नोति, किन्तु 'आतो ङितः (7/2/81) इति इयादेशः । यद्यपि सवर्णदीर्घत्वं प्राप्नुयात्, तथापि नाप्राप्ते तस्मिन्नारभ्यमाणो मुक् अपवादत्वेन सवर्णदीर्घं बाधते, नह्यपवादेनोत्सर्गे बाध्यमाने कस्यचिदनित्यत्वं ज्ञापयितुं शक्य"मित्युक्तम्[4] । "अत्र ब्रूमः—यदि वर्णविषये इयं परिभाषा प्रवर्तते, तर्हि 'अय-गतौ[5]'इत्यस्माद्धातोः [6]क्विपि वलि[7]लोपे'ह्रस्वस्य पिति [8]कृति तुक्, इति तुकि 'अ'-दिति रूपं माधवादिसम्मतम् । तत औकारे अतावित्यत्र '[9]वृद्धिरेचि' इति वृद्धिप्रसङ्गः, अत इत्यत्र [10]'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घस्य 'अत'मित्यत्र [11]'अमि पूर्वः 'इति पूर्वरूपस्य, अता इत्यत्र [12]इनादेशस्य, 'अद्भ्या'मित्यत्र 'सुपिच'[13]इति दीर्घस्येत्येवमादेरनिष्टसहस्रस्य प्रसक्तिः । न चैतत्सर्वमनित्यत्वेनैव परिहर्तव्यम् । यतः प्रयोजनानां भूयस्त्वे तदनुसारेण स्वल्पदोषेषु अनित्यत्वेन प्रतिविधानं कर्तव्यम् । अतएव [14]'कृन्मेजन्तः' इति सूत्रे दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम्' इति [15]भाष्ये संनिपातपरिभाषायाः प्रयोजनभूयस्त्वाभिप्रायेणोक्तम् । इह तु प्रयोजनत्रयं त्वदुक्तम् । दोषास्तु बहवः । कथं प्रयोजनत्रयानुसारेण परिभाषाया वर्णविषये प्रवृत्तिं स्वीकृत्य बहुषु दोषेष्वनित्यत्वेन प्रतिविधानं युज्यते । अपि च [16]'पचमानः' इत्यत्र लसार्वधातुकानुदात्तप्रवृत्तिर्न

---

1. प. शे. प. 'यदागमाः'–12 पृ. 67 ।
2. प. शे. प. 'यदागमाः.' 12 पृ. 70-73 ।
3. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
4. प. भास्क. प. 'यदागमाः.' 11 पृ. 392 ।
5. धा. पा. भ्वा. 474 ।
6. 'क्विप् च'–अष्टा. 3/2/76 ।
7. 'लोपो व्योर्वलि'–अष्टा. 6/1/76 ।
8. अष्टा. 6/1/1 ।
9. अष्टा. 6/1/88 ।
10. अष्टा. 6/1/71 ।
11. अष्टा. 6/1/107 ।
12. 'टाङसिङसामिनात्स्याः' अष्टा. 7/1/12 ।
13. अष्टा. 7/3/102 ।
14. अष्टा. 1/1/39 ।
15. व्या. म. भा. 1/1/38, पृ. 356 ।
16. 'डु पचष् पाके' धा. पा. भ्वा. 996, इति पचेर्लट् तस्य शानच् ।

प्रयोजनम् [1]'तास्यनुदात्तेत्. 'इति सूत्रे अदुपदेशादित्युपदेशग्रहणसामर्थ्यात् शप् - प्रवृत्तिकाले अतः परत्वमाश्रित्य सम्प्रति मुका व्यवधानेऽपि स्वरप्रवृत्तिसंभवात् । अतएव [2]'पचावः' [3]'पचामः' इत्यादौ दीर्घे[4]कृतेऽपि स्वरप्रवृत्तिः । न च प्रथमं स्वरप्रवृत्तौ पश्चाद्दीर्घोऽस्त्विति वाच्यम् । परत्वाद् वार्णादाङ्गं[5] बलीयः' इतिन्यायाच्च प्रथमं दीर्घप्रवृत्तेः । अन्यथा 'पचमान' इत्यत्रापि प्रथमं स्वरः पश्चान् मुगिति सुलभत्वात् । 'आनेमुक्' (7/2/82) इति सूत्रस्थभाष्यमपि मदुक्ताभिप्रायेणैव कैयटेन [6]व्याख्यातम् । तत्र हि मुकि कृते अध्यर्धमात्रत्वाददिति तपरकरणेन तत्कालस्यैव ग्रहणात् कथं स्वरप्रवृत्तिरित्याशङ्क्य उपदेशग्रहणेन स्वरप्रवृत्तिं साधितवान् कैयटः । 'पचावः' 'पचामः' - इत्यादौ उपदेशग्रहणादेव स्वरः प्रवर्तत इति चाह । दृश्यते च 'वाससी इव विवसानौ ये चरावः' 'मरुतो यद्धवो दिवः सुम्नायन्तो हवामहे[7]' इत्यादौ दीर्घे कृतेऽपि लसार्वधातुकानुदात्तत्वम् । यदि च वर्णग्रहणेऽप्येतत्परिभाषाप्रवृत्तिरिष्टा स्यात्, तर्हि अवर्णत्वजातेरिव तत्कालत्वस्याप्यनयैव परिभाषया लाभात् कैयटोक्ते शङ्कासमाधाने असंगते स्याताम् । अतएव च तपरकरणात् 'आतो ङितः[8]' - इत्येतदत्र न प्रवर्तत इति चाह कैयटः । को ह्युपदेशग्रहण - तदभावावन्तरेण स्वरेयादेशयोर्विशेषः ? येन स्वरस्य प्रवृत्तिरियादेशस्य तु न प्रवृत्तिरिति व्यवस्था युक्ता स्यात् । अरो गुणत्वमारो - वृद्धित्वं च वदतस्तव तत्कालत्वमप्यनया परिभाषया लभ्यत एत । तपरे हि गुणवृद्धिसंज्ञे । उपदेशग्रहणेन पचावः पचाम इत्यादौ स्वरप्रवृत्तिं केवलतपरकरणादियादेशस्य चाप्रवृत्तिं वदन् कैयटो वर्णग्रहणेष्वस्याः परिभाषाया अप्रवृत्तिमभिप्रागात् । यद्यप्येवमकारान्तस्याङ्गस्य मुगिति पक्षेऽपि स्वप्रवृत्तेः सूपपादतया अङ्गान्त्यस्याकारस्य मुगिति पक्षसमर्थनं भाष्ये व्यर्थमिति प्राप्तम्, तथापि वर्णग्रहणेष्वियं परिभाषा न

---

1. अष्टा. 6/1/186 ।
2. डुपचष् पाके धा. पा. भ्वा. 996, इतिपचेर्लट् तस्य वसादेशः ।
3. पचेर्लट् तस्य मसादेशः ।
4. 'अतो दीर्घो यञि' - अष्टा. 6/3/101 ।
5. (क) व्याडिः प. पा. प. 39, पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 74, पृ. 144 ।
   (ग) सी. दे. वृ. प. वृ. प. 66, पृ. 231 ।
   (घ) नी. दी. प. वृ. प. 60, पृ. 305 ।
   (ङ) ह. भा. प. भास्क. प. 68, पृ. 351 ।
   (च) भ. ना. प. शे. प. 56, पृ. 238 ।
   (छ) शेषा. प. भास्क. प. 47, पृ. 425 ।
6. प्रदी. 7/2/2/82 ।
7. ऋग्वेदः 8/7/11 ।
8. अष्टा. 7/2/81 ।

प्रवर्तत इति स्पष्टं वक्तुं शक्यत्वेऽपि शिष्यव्युत्पादनाय विचित्रगतिर्भाष्यकारोऽनया प्राणाल्या वर्णग्रहणेष्वस्याः प्रसक्तिं सम्पाद्य निषिषेध । एवं हि वर्ण-ग्रहणेष्वस्याः परिभाषायाः प्रसक्तिं संपादयितुमङ्गान्त्यस्याकारस्य मुगिति पक्षसमर्थनं भाष्ये कृतमिति न किंचिदनुपपन्नम् । एवं च वर्णग्रहणेष्वस्याः परिभाषाया अप्रवृत्तिपरोऽयं भाष्यकैयटग्रन्थः कथमिति तत्प्रवृत्तिपरतया योजित इति न विद्मः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्[1] 'इति परिभाषयापि पचमान इत्यत्र अनुदात्तप्रवृत्तिः सुसाध्या । यद्यपि अग्निचित्वानित्यादौ [2]'ह्रस्वनुड्भ्याम्.' इति मतुप उदात्तत्वापत्त्या इमं पाठं दूषयित्वा 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्[3] 'इति भाष्ये पठितम्, तथापि वर्णविषये उक्तपरिभाषा - प्रवृत्तौ एनया परिभाषया मतुबुदात्तत्वापत्तिर्दुवारा, ह्रस्वभक्तस्य तुकस्तद्ग्रहणेन ग्रहणात् । अथेयमनित्येति मतम्, 'स्वरविधौ.' इति पाठेऽपि तस्या अनित्यत्वान्नेह प्रवृतिरिति सुवचम् । तस्मान्न पचमान इत्यादौ स्वरप्रवृत्तिरस्याः परिभाषाया वर्णविषयत्वे प्रयोजनमिति युक्तम् । नापि ङमुट्सूत्रस्थभाष्योपपत्तिस्तत्प्रयोजनमिति युक्तम् । आगमरहितस्य कार्यं सागमे एतत्परिभाषालभ्यम् । न त्वागमेऽपि आगमिधर्मः । 'भूयासं' 'भूयास्व' भूयास्मेत्यादौ यासुटि[4]ङित्त्वातिदेशापत्त्या पदसंज्ञायां रुत्वादिप्रसङ्गात् । ततश्च नकारद्वयसमुदायस्य पदान्तत्वलाभेऽपि पूर्वनकारस्य पदान्तत्वालाभेन उपपत्त्यभावेनोक्तभाष्यस्यैकदे-श्युक्तित्वात् । अतएव 'तस्मिन्निति [5]निर्दिष्टे पूर्वस्ये'ति सूत्रे ङमो ङमुडागमे सति कुर्वन्नास्त इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारोऽन्तो न द्वाविति [6]'पदान्तस्य' इति णत्वप्रतिषेधो नास्तीति वदता कैयटेन तस्यैकदेश्युक्तित्वं ध्वनितम् । अतएव 'शितुक्'[7]इति पूर्वसूत्रे 'तुगयं नियोगतः पूवान्त एषितव्यः, 'कुर्वञ्छेते' इत्यत्र छत्वं यथा स्यात्' इत्युक्त्वा णत्वं तु न भवति, स्तोः श्चुनेति योगं विभज्य स्तोः श्चुना योगे णत्वं नेति व्याख्यानात् [8]'इत्युक्तं भाष्ये । यदि च आगमे आगमिधर्म एतत्परिभाषातिदेश्यः स्यात्, तर्हि नकारस्य स्वतः पदान्तत्वात् 'पदान्तस्य'[9]इति णत्वनिषेधसिद्धेः स्तोः श्चुनेति योगविभागो भाष्यकृतोऽसङ्गतः स्यात् । यदि त्वागमविशिष्टे आगमिधर्मो बोध्यते, तदा न् न् इत्यस्य पदान्तत्वेऽपि

1. प. शे. प. 80, पृ. 304 ।
2. अष्टा. 6/1/176 ।
3. प. शे. प. 81, पृ. 305 ।
4. 'यासुट् परस्मैपदेषूदात्तो ङिच्च' अष्टा. 3/4/103 ।
5. अष्टा. 1/1/66 ।
6. अष्टा. 8/4/37 ।
7. अष्टा. 8/3/31 ।
8. अष्टा. 8/4/40 ।
9. अष्टा. 8/4/37 ।

नकारस्यापदान्तत्वाद् भाष्योक्तो योगविभागो युज्यते । न चैवं कुर्वन्नास्त इत्यत्र णत्वापत्तिः । ङमो ङमुडिति पक्षस्य तत्र स्थितत्वान् ङमः परस्याच एव ङमुडिति सिद्धान्तात् तत्र पूर्वनकारस्य पदान्तत्वेन उत्तरनकारस्य पदान्तरस्थत्वेन तेन व्यवधाने च णत्वाप्रसङ्गात् ।

'अरारौ गुणवृद्धी'इति तृतीयमपि प्रयोजनं न युक्तम् । न च ॠवर्णस्य गुणवृद्धी अरारांवेवेति नियमो न स्यादिति वाच्यम् । [1]'स्थानेऽन्तरतमः' इति सूत्रे 'अथवा अनान्तर्यमेव एतयोरान्तर्यम्' इति [2]भाष्येण 'संयोगो वा नष्टाश्वदग्धरथवत्[3]' इति वार्तिक-तद्भाष्याभ्यां चास्य दोषस्य परिहृतत्वात् । 'इदं च ऋवर्णसामान्याभिप्रायम्' इति तत्र कैयटेन व्याख्याततत्वाच्च । ऋवर्णविशेषचिन्तापक्षे तु 'उरण्[4]रपरः' इति सूत्रे यः उः स्थाने स रपरः इति चेद् गुणवृद्ध्योरवर्णाप्रतिपत्तिरिति इममेव दोषं परिचोद्य 'सिद्धं तु प्रसङ्गे रपरत्वात्[5]'इति वार्तिकेन उः स्थाने अण् प्रसज्यमान एव रपरो भवतीति भाष्येण च प्रवृत्तिकाल एव रपरत्वविधानेन स्थानसाम्यमुपपाद्य समाहितम् । न च गुणानवयवभूतेन रेफेण कथं गुणस्य स्थानसाम्यमिति वाच्यम्, तदनवयवभूतेनापि तत्प्रसङ्ग एव नित्यसंनिहितेन रेफेण् गुणवृद्ध्योः स्थानसाम्यमाश्रीयत इति द्वितीयस्थाने ग्रहणानुवृत्तिसामर्थ्येन सुवचनत्वात् तस्य प्रयोजनान्तराभावात् ।

यदि च रेफस्यावयवत्वमिष्यते, तर्हि [6]'इकोगुणवृद्धी' इति सूत्रस्थभाष्यं 'गुणे कृते रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति' इति, 'उरण्[7] रपरः 'इति सूत्रे पूर्वान्तत्वपक्षे 'गीर्यते स्वयमेव, पूर्यते स्वयमेव, 'अचः [8]कर्तृयकि' इत्येष स्वरो न [9]प्राप्नोति 'इत्याशङ्क्य 'नैष दोषः', उपदेश इति वर्तते' इति [10]भाष्यम्; [11]'स्यसिच्' इति सूत्रे उपदेशवचनमृकारगुणबलीयस्त्वात्'[12] इति वार्तिकम् करिष्यते, परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वाच्चिण्वद्भावो न प्राप्नोति । उपदेशग्रहणाद्

1. अष्टा. 1/1/50 ।
2. वा. 15 व्या. म. भा. 1/1/50 ।
3. वा. 16 व्या. म. भा. 1/1/50 ।
4. अष्टा. 1/1/51 ।
5. वा. 3 व्या. म. भा. 1/1/50 ।
6. अष्टा. 1/1/3 ।
7. अष्टा. 1/1/51 ।
8. अष्टा. 6/1/195 ।
9. वा. 10 व्या. म. भा. 1/1/51 ।
10 वा. 10 व्या. म. भा. 1/1/51 ।
11 अष्टा. 6/4/62 ।
12 वा. 1 व्या. म. भा. 6/4/62 ।

भविष्यति 'इति भाष्यं च, 'ऋतो भारद्वाजस्य'[1] इति सूत्रे 'ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात् प्रतिषेधस्य'[2] इति वार्तिकम्, गुणे कृते रपरत्वे चानजन्तत्वात् प्रतिषेधो न प्राप्नोति 'इति भाष्यं च, 'गुणे कृत इति जहर्थेत्यादौ न ह्ययमजन्तो नाप्युपदेशे अत्वान्'इति तत्रत्य कैयटश्च विरुद्ध्येत ।

यत्तु 'थलि च [3]सेटि' इति सूत्रे भाष्यं 'शशरिथेत्यादौ गुणस्यैषोऽकारः । कथम् । गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोभिनिवर्तते' इति तद्गुणो भवतीति विध्युपादानात् गुणशब्देन 'उरण्[4]रपरः' सूत्रसध्रीचीनेन–

**"प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् ।**
**अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ।।"**

इति न्यायेन अरित्यस्य गुणशब्देन विधानाद् गुणशब्दस्य विधीयमानस्यारित्यस्यावयवोऽकार इत्येव परम् । यच्च तत्र कैयटेन अरित्ययं गुण इत्युक्तं तदपि गुणपदस्य गुणशब्देन विधीयत इत्यर्थपरतया योज्यम् । न च पूर्वोक्त - भाष्यादिकमनित्यत्वेन प्रवृत्तमिति वाच्यम् । इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निर्विषयत्वापातात् । तस्मादस्याः परिभाषाया वर्णविषयत्वं निर्मूलं निष्फलं[5] चे'ति चोक्तम् ।

इत्थं भट्टनागेश - नीलकण्ठदीक्षित - शेषाद्रिग्रन्थपरिशीलनेन 'आनेमुक्' इति मुग्विधानं न ज्ञापकं 'यदागमपरिभाषाऽनित्यत्वस्य'नापि च तस्या वर्ण ग्रहणेऽप्रवृत्तेः । यतः पचमान इत्यादौ 'आतोङितः[6] 'इति श्यादेशबाधकसवर्णदीर्घबाधनार्थमु पपन्नमिदं मुग्विधानम् । नापि तदनित्यत्वज्ञापने वर्णग्रहणे तदप्रवृत्तिज्ञापने वा किमपि फलम् ।

## 'आह[7]स्थः'

सूत्रमिदं 'नाहेरीड्भवती'ति वचनस्य [8]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदमनुपपन्नम् । तथाहि - 'आत्थ'[9] - इत्यत्र झलादौ परे आहो हकारस्य

1. अष्टा. 7/2/63 ।
2. वा. 1 व्या. म. भा. 7/2/63 ।
3. अष्टा. 6/4/121 ।
4. अष्टा. 1/1/51 ।
5. प. भास्क. प. 11, पृ. 388-392 ।
6. अष्टा. 7/2/81 ।
7. अष्टा. 8/2/35 ।
8. तथाहि –
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति - नाहेरीड् भवतीति । यदयम् 'आहस्थः' इति झलादिप्रकरणे थत्वं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ।

थकाराऽऽदेशं विधातुमिदमारब्धम् । तच्चास्य वचनस्याभावेऽनुपपन्नम् । 'आत्थ' इत्यत्रहि स्थानिवद्भावेन[1] ब्रुत्वमाहः आश्रित्य ततः परस्य थल ईटो[2]दुर्वारतया थलो झलादित्वं दुर्लभम् । न च सूत्रेणानेन भूतपूर्वो यो झलादिस्तस्मिन् परे थकारोविधीयत इति थलः कृतेऽपि ईडागमे भूतपूर्वझलादित्वेन थकाराऽऽदेशः प्राप्नोतीति नेदमनुपपन्नमतो नज्ञापकमिति शङ्क्यम् ।यतो यदि भूतपूर्वगतिरिहाश्रीयेत तर्हिणलादीनां पञ्चानामपि ये स्थानिनस्तिबादयस्ते सर्वे झलादयइति भूतपूर्वझलादिषु पञ्चस्वपि परेषु 'आह' - इत्यादावपि पकारादेशापत्तिः स्यात् । नचेष्टापत्तिः, यतस्तथात्वे आहादेश इत्यनुक्त्वा 'ब्रुवः पञ्चानामादित आधोब्रुवः 'इत्येव सूत्रं कुर्यात् 'आहस्थः' इति पृथक् सूत्रं न कुर्यात् । कृतं हि पृथक् सूत्रम् । अतो भूर्वगतिरिह नाश्रीयत इति विज्ञायते । तथा सति पञ्चानां मध्ये थल् एकएव झलादिः, तस्यापि यदीडागमो भवेत्तर्हि तस्य झलादित्वं भग्नमिति सूत्रमिदमनुपपन्नमेव ज्ञापिते चास्मिन्वचने 'आत्थः' इत्यत्र [3]ईड् न भवतीतिझलादौ परे हस्य थत्वाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'आहे- [4]रीट्प्रतिषेधा-करणजन्यं लाघवम् ।

## 'इग्यणः [5]सम्प्रसारणम्'

सूत्रमिदम् 'इतरेतराश्रयाण्यपि[6]कार्याणि भवन्ती'ति परिभाषाया [7]ज्ञापकम् । यतोऽस्या अभावे नेदमुपपद्यते । अत्र हि सम्प्रसारणेन यणः स्थाने इको भाव्यन्त,

---

किम् ? । भूतपूर्वगतिर्यथा - आधिमेवायमुच्चारयेत् - ब्रुवः पञ्चानामादित आहो ब्रूवः 'इती"त्याह पत. व्या. म. भा. 1/1/8/55 ।

(ख) " 'आत्थ'इत्यत्र स्थानिवद्भावात् प्राप्तोऽयं झलीति थत्वविधानान्न भवती'त्याह भ. दी. वै. सि. कौ. अदादिप्र. पृ. 160 ।

(ग) "अथादेशे कर्तव्ये 'आहस्थः' (सू. 8/2/35) इति वचनाज् ज्ञापकात् नाहेरीट्" - इत्याह श्रीना. ज्ञा. सं. 1, पृ. 29 ।

9 'ब्रूञ् व्यक्तायां वाचि' धा. पा. अदा. 1044, इति ब्रूधातोर्लटि सिपि' 'ब्रुवः पञ्चानामदित आहो ब्रुवः' अष्टा 3/4/84, इति सिपस्थलादेशो ब्रुवश्चादेशो आह् + थ इत्यवस्थायाम् 'आहस्थः' - अष्टा. 8/2/35, इति हकारस्य थकारादेशे 'खरि च' - अष्टा. 8/4/55, इति प्रथमथकारस्य चर्त्वेन तकारे रूपमिदम् ।

1 'स्थानिवदादेशोऽनल्विधौ' - अष्टा. 1/1/56 ।

2 'ब्रुव ईट्' - अष्टा. 7/3/13 ।

3 'ब्रुव ईट्' - अष्टा. 7/3/13 ।

4 'आहिभुवोरीट् प्रतिषेधः' वा. व्या. म. भा. 1/1/8/55 ।

5 अष्टा. 1/1/45 ।

6 (क) व्याडिः प. सू. प. 24, पृ. 12 ।
(ख) पु. दे. ल. प. वृ. प. 96, पृ. 152 ।
(ग) सी. दे. बृ. प. वृ. प. 3, पृ. 166 ।

यणः स्थानिनां च इकां सम्प्रसारणसंज्ञेति इतरेतराश्रयत्वम् । इतरेतराश्रयाणि च कार्याणि विरोधान्न [1]प्रवर्तन्ते । इत्थमनुपपन्नमिमिमां ज्ञापयति । ज्ञापितायां चास्यां सूत्रेऽस्मिन् इतरेतराश्रयापि संज्ञा सुलभेति सूत्रमिदमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'वसोः [2]सम्प्रसारणमि'त्यादि सूत्रे 'विदुषः' इत्यादौ वस्वादीनां सम्प्रसारण - सिद्धिः । अस्या अभावे हि तत्र संप्रसारणज्ञानमन्योन्याश्रयतया न स्यात्तथा सति तेषु प्रयोगेषु सम्प्रसारण - सिद्धिर्न भवेत् । अस्यामपिशब्दः क्वचिदर्थे । तेन क्वचिल्लोके यथा वन-सिंहयोः परस्पराश्रयापि रक्षा प्रवर्तते तथा क्वचिच्छास्त्रेऽपि भवतीतरेतराश्रया संज्ञेति परिभाषार्थः । अतएव च'ऐतिकायनः' 'औपगवः' इत्यादौ वृद्धिसंज्ञाभावितयोः - ऐकारौकारयोः वृद्धिसंज्ञा[3] सिद्ध्यति ।

भगवान् [4]पतञ्जलिस्तु भाविसंज्ञाविज्ञानादियं न्यायमूलिकेति सूचयति । अथवा सर्वाणि चेतरेतराश्रयाणि एकत्वेन परिहरति 'सिद्धन्तु नित्यशब्दत्वादिति[5] ।

## [6]'उञः'

सूत्रमिदं 'न [7]वर्णग्रहणेषु'इति परिभाषाया [8]ज्ञापकम् । यतोऽस्या अभावे

---

(घ) 'इतरेतराश्रयाणि च कार्याणि प्रकल्पन्ते ।
नी. दी. प. वृ. प. 3, पृ. 293 ।
(ङ) इतरेतराश्रयाणि कार्याणि शास्त्रे प्रकल्पन्ते । -
ह. भा. प. भास्क. प. 3, पृ. 319 ।

7 तथाहि –
(क) "ज्ञापकं चात्र 'इग्यणः सम्प्रसारणम्' (1/1/45) इती'त्याह पु. दे. ल. प. वृ. प. 96, पृ. 152 ।
(ख) "ज्ञापकं चात्र 'इग्यणः. (1/1/45) ... इतीत्याह सी. दे. बृ. प. वृ. प. 3, पृ. 166 ।
(ग) "ज्ञापकं चात्र 'इग्यणः. इतीत्याह ह. भा. प. भास्क. प. 3, पृ. 319 ।

1 तथाहि –
"इतरेतराश्रयाणि कार्याणि न प्रकल्पन्ते । तद्यथा नौ र्नावि वद्धा नेतरत्राणाय भवतीत्युक्तम् व्य. म. भा. 1/1/3/1 ।

2 अष्टा. 6/4/131 ।

3 'वृद्धिरादैच्' - अष्टा. 1/1/1 ।

4 अनेन हि - 'भाविसंज्ञा विज्ञानाद्वा' । एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते । तद्यथा - कश्चित् कंचित् तन्तुवायमाह - 'अस्य सूत्रस्य शाकटकं वयेति । स पश्यति 'यदि शाटको न वातव्योऽथ वावातव्यो न शाटकः , शाटको वातव्यश्च विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाभिप्रेता स मन्ये वातव्यो - यस्मिन्नुते शाटक इत्येतद् भवती'ति । एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यतीत्युक्तम् व्या. म.भा. 1/1/7/44 ।

5 व्या. म. भा. 1/1/7/44 ।

6 अष्टा. 1/1/17 ।

7 (क) व्याडिः प. सू. प. 2, पृ. 2 ।
(ख) पु. दे. ल. प. वृ. प. 2, पृ. 113 ।
(ग) सी. दे. बृ. प. वृ. प. 10, पृ. 172 ।

सूत्रमिदं व्यर्थम् । तथाहि 'उ + इति' इत्यत्र प्राप्तस्य[1]यणोऽभावायोकारस्य प्रगह्यसंज्ञार्थमिदमारब्धम् । यद्यर्थवद्ग्रहणेनानर्थकस्य ग्रहण'मिति[2] वर्णग्रहणेऽपि प्रवर्तेत तदात्रानयैव यणादेशो न प्राप्नोतीति तदभावाय प्रगृह्यसंज्ञाविधायकमिदं व्यर्थम् । ज्ञापितायां चास्यामनया 'इकोय[3]णचि'इत्यत्र वर्णग्रहणेऽर्थवद्ग्रहणे नानर्थकस्य ग्रहणमित्यस्या अप्रवृत्त्या 'उ + इति' इत्यत्रानर्थकोकारस्य यणो दुर्वारतया तदभावाय प्रगृह्यसंज्ञाविधायकमिदं स्वांशे चरितार्थं भवति । वर्णा अकारादयः तद्ग्रहणेऽर्थवत्परिभाषा नास्तीति हि ज्ञापितया अस्या अर्थः । ज्ञापितया अस्याः फलन्तु [4]'इकोयणची''त्यादिसूत्रै[5]र्निरर्थकानामपीगादीनां[6] निरर्थकेष्वजादौ परे [7]'भवत्यत्र' 'भवत्वि'[8]तीत्यादौ यणादीनां सिद्धिः । अस्या अभावे तु [9]'कुमार्या'वित्यादौ ङीबादि[10]-सम्बन्धिनामेव सार्थकानामिगादीनां सार्थकेष्व- जादौ परे यणादयो भवेयुर्न पुन 'र्भवत्यत्रे'त्यादावित्यत्रैव शोधप्रबन्धे 'ज्ञापका निर्देशाः' इति प्रघट्टके चारु निरूपितमिति नेह वितन्यते ।

---

(घ) नी. दी. प. वृ. प. 12, पृ. 295 ।
(ङ) ह. भा. प. भास्क. प. 10, पृ. 326 ।

8 तथाहि –
"ज्ञापकं चात्र 'उञः' (1/1/16) इति सूत्रम् । यद्यर्थवत्परिभाषा वर्णग्रहणेऽपि स्यात्तदा 'उ इती'त्यत्रेतिशब्देकारेनर्थकेऽर्थवत्परिभाषयैव यणादेशाप्रसङ्गः सिद्ध इत्युञ इति प्रगृह्यसंज्ञा न कृता स्यात् । कृता चातो ज्ञापक"मित्याह सी. दे. बृ. प. वृ. प. 10, पृ. 173 ।

1 'इको यणचि' - अष्टा. 6/1/77 ।
2 (क) व्याडिः प. सु. प. 1, पृ. 1 ।
(ख) पु. दे. ल. प. वृ. प. 1, पृ. 112 ।
(ग) सी. दे. बृ. प. प. वृ. प. 9, पृ. 170 ।
(घ) नी. दी. प. वृ. प. 11, पृ. 295 ।
(ङ) ह. भा. प. भास्क. प. 9, पृ. 323 ।
(च) भ. ना. प. शे. प. 15, पृ. 98 ।
(छ) शेषा. प. भास्क. प. 14, पृ. 397 ।
3 अष्टा. 6/1/77 ।
4 अष्टा. 6/1/77 ।
5 आदिपदेन 'अस्य च्वौ'–अष्टा. 7/4/32 इत्यादिसूत्राणि ग्राह्याणि ।
6 आदिपदेन 'अस्य च्वौ'–अष्टा. 7/4/32 इत्यादिषु अकारादयो ग्राह्याः ।
7 'भवति+अत्रे'तिच्छेदः ।
8 'भवतु+इती'तिच्छेदः ।
9 कुमारीशब्दस्य प्रथमाया द्वितीयायाश्च द्विवचने रूपमिदम् ।
10 'वयसि प्रथमे'–अष्टा. 4/1/20 ।

[1]भट्टनागेश-[2]शेषाद्रिसुधीभ्यां तु अर्थवद्ग्रहणे नानर्थकस्येति परिभाषाया विशिष्टस्वरूपोपादानविषयत्वं प्रतिपाद्यानावश्यकतया 'न वर्ण ग्रहणेषु' इतीयं परिभाषा न स्वीकृता ।

## [3]'उदः स्थास्तम्भोः पूर्वस्य'

सूत्रमिदं "सिच एव 'झलो[4]झली'ति सकारलोपो नान्यस्ये"ति वचनस्य [5]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि–[6]'उत्थानम्' [7]'उत्तम्भन'–मित्यादौ सकारस्य पूर्वसवर्णार्थमारब्धमिदम् । तच्चास्य वचनस्याभावे व्यर्थम् । 'उत्थान'मित्यादीनां सिद्धिर्हि [8]'झलोझली'ति सकारलोपेनैव सुलभा । ज्ञापिते चास्मिन् वचने सिचः सकाराभावादुत्थान'मित्यादीनां सिद्धिः'सकारलोपेन[9] न भवेदिति तत्र पूर्वसवर्णसम्पादनाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'तत्स्थः', 'सोमसुत् स्तोता' 'दृषत्स्थान'मित्यादौ–'झलो[10]झली'ति सकारलोपापत्तेरभावः । अस्य वचनस्यासत्त्वे हि झलः, परस्य धातोः सकारस्यापि लोपापत्तिरत्र दुर्वारा स्यात् । "ज्ञापकं चेदं प्रकरणापेक्षम् । ते च [11]'धिचे'-त्यनेनापि सिच एव लोपः । अतएव 'धिकारे सिचो लोपश्चकाद्धीति [12]प्रयोजनमि'ति भगवदुक्तिः संगच्छते ।

---

1 अनेन हि एषा विशिष्टरूपोपादानविषयेति वृद्धाः इत्युक्तम्–प. शे. प. 15, पृ. 99 ।
2 अनेन हि–'अर्थवतो ग्रहणे संभवति अनर्थकस्य ग्रहणं न भवतीत्यर्थः । इदं च विशिष्टरूपोपादानविषय"मित्युक्तम् शेषा. प. भास्क. प. 14, पृ. 397 ।
3 अष्टा. 8/4/61 ।
4 अष्टा. 8/2/26 ।
5 तथाहि–
"झलोझली'ति (8/2/26) सकारलोपात् 'उत्थाने'त्यादेः सिद्धौ 'उदः स्थास्तम्भो'रिति (8/4/61)-पूर्वसवर्णविधानं ज्ञापकम् । 'सिच एव झलोझलीतिसकारलोपो नान्यस्य । प्रकरणापेक्षं च ज्ञापकममिति । 'धिचे'ति (8/2/25) अनेनापि सिच एव लोपे चकाद्धीति सिद्ध्यति । तत इदमुपन्यस्तं–'(द्विसकारे)धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम्'–इत्याह पु. दे. ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे पृ. 100 ।
6 उद् + स्थान'मितिच्छेदः ।
7 उद् + स्तम्भन'मितिच्छेदः ।
8 अष्टा. 8/2/26 ।
9 'झलोझलि'–अष्टा. 8/2/26 ।
10 अष्टा. 8/2/26 ।
11 अष्टा. 8/2/25 ।
12 "धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति ॥ 1 ॥
सर्वत्रैवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥ 2 ॥

वस्तुतस्तु पुरुषोत्तमदेवोक्तमस्य[1]प्रकरणापेक्षज्ञापकत्वं न युक्तम् । यतो "चकाधी'-त्येव भवितव्य[2]'मित्युक्तं भगवता । हरदत्त मिश्र–भट्टोजिदीक्षितज्ञानेन्द्रभिक्षुभिस्तु ज्ञापितस्यास्य वचनस्य फलमन्यथा सिद्धं मत्वा ज्ञापकत्वमस्य सूत्रस्यास्मिन् वचने न युक्तमिति सूचितम्[3] । वामनस्तु वचनमिदं [4]मनुते । उपायस्योपायान्तरादूषकत्वादस्य सूत्रोस्योक्तवचन-ज्ञापकत्वमपि युक्तमेवेति मन्ये ।

## 'उभौसाभ्यासस्य'[5]

सूत्रमिदं "[6]पूर्वत्रासिद्धीयमद्वित्वे इत्यनित्यमिति" वचनस्य [7]ज्ञापकम् । यतोऽस्य वचनस्याभावे "[8]पूर्वात्रासिद्धीयमद्वित्वे" इति परिभाषया 'पूर्वत्रासिद्ध'मित्यस्या-

---

घसिभस्यो र्न सिद्ध्येत्तु तस्मात् सिजूग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ 3 ॥
–व्या. म. भा. 8/2/1/25 ।

1 ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे पृ. 100 ।

2 व्या. म. भा. 8/2/1/25 ।

3 तथाहि–

(क) "यदि वा 'पदस्य'इति वर्तते, तत्र प्रत्यासत्तेः 'झलोझलि'सस्येति निर्दिष्टानां त्रयाणामप्येकसम्बन्धत्वे विधिरयमिति सोमसुत् स्तोतेत्यादौ न भविष्यति । समासेऽपि न भवति–सोमसुत्स्थितिरिति । किं कारणम् ? सकारथकराभ्यां यत् पदमारब्धंतत्प्रति तकारस्यावयवत्वाभावात्"–इत्याह ह. मि. पदम. 8/2/26 ।

(ख) "झलोझलि 8/2/26 । झलः परस्य सस्य लोपः स्याज्झलिः"–इत्याह भ. दी. वै. सि. कौ. भ्वा. प्र. पृ. 59 ।

(ग) "पदस्येत्यधिकारात् प्रत्यासत्तेर्झलोझलि सस्येतिनिर्दिष्टानां त्रयाणामेकपदसंबन्धित्वे लोपोऽयम् । तेन सोमसुत्–स्थानमित्यत्र न भवती"त्याह ज्ञा. भि. त. बो. भ्वा. प्र. पृ. 59 ।

4 अनेन हि–"अयमपि सिच एव लोपः, तेनेह न भवति–सोमसुत् स्तोता । दृषत्स्थानमिती"–त्युक्तम् का. 8/2/26 ।

5. अष्टा. 8/4/21 ।

6. (क) व्या. म. भा. 8/1/1/1 ।
(ख) पु. दे. ल. प. वृ. प. 110, पृ. 157 ।
(ग) सी. दे. बृ. प. वृ. प. 97, पृ. 253 ।
(घ) नी. दी. प. वृ. प. 126, पृ. 314 ।
(ङ) पूर्वत्रासिद्धीयमद्विर्वचने - ह. भा. प. भास्क. प. 99, पृ. 364 ।
(च) भ. ना. प. शे. प. 127, पृ. 360 ।
(छ) शेषा. प. भास्क. प. 106, पृ. 460 ।

7. तथाहि–

(क) उभावित्यस्मिन्नसति साभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचन-सामर्थ्याच्च पूर्वत्रा-सिद्धीयमद्विर्वचन इत्यनाश्रीयमाणेऽकृतणत्वस्य द्विर्वचने कृतेऽनन्तरस्य पूर्वेण णत्वस्य सिद्धत्वाद् व्यवहितार्थमिदं णत्वं स्यात् । अनन्तरस्य तु 'तुक्रकौण्डिन्य'न्यायेन न स्यादित्युभावित्युच्यते' इति ग्रन्थेन कैयटोऽस्य सूत्रस्यैतद्वचनज्ञापकत्वमसूसुचत् –प्रदी. 8/4/1/21 ।

प्रवृत्त्या परत्वात् [1]णत्वे कृते कृतणत्वस्य द्वित्वे[2] 'प्राणिणिषती[3]'- त्यादीनां सिद्ध्या व्यर्थमिदम् । ज्ञापिते चास्मिन् वचने तस्याः परिभाषाया अत्राप्रवृत्त्या [4]'पूर्वत्रासिद्ध'-मित्यनेन णत्वस्यासिद्धत्वात् प्राग् द्वित्वे प्रथमेन नकारेण व्यवाये द्वितीयस्य नकारस्य [5]'अनितेः' इति णत्वं न प्राप्नोतीत्युभयोर्नकारयोर्णत्वसम्पादनार्थं सूत्रमिदं स्वांशे चरितार्थं भवति ।

---

(ख) "पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतस्मिन् सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम् ? एतत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते । तेन औजढ़दिति सिद्धं भवतीति" ग्रन्थेन ज्ञापकत्वमस्यासूसुचद् जया. का. 8/4/21 ।

(ग) अनित्यत्वं च 'उभौ साभ्यासस्य' इति वचनाद् विज्ञायते, अन्यथा अनितेः, इति णत्वे कृते तस्य सिद्धत्वात् सहणकारेण द्विवचने सति सिद्धं स्यात् - प्राणिणिषतीत्याह ह. मि. पदम. 8/2/1 ।

(घ) "अनित्यं चैतद्वचनम् 'उभौ साभ्यासस्य' (8/4/21) इति सूत्रकरणात् । नित्येह्यस्मिन् 'अनितेः' (8/4/19) इति णत्वं कृत्वा कृतणत्वस्य द्विर्वचने सिद्धं प्राणिणिषतीति किम् 'उभौसाभ्यासस्य' (8/4/21) इत्यनेने"त्याह पु. दे. ल. प. वृ. प. 110, पृ. 157 ।

(ङ) अनित्या चेयम् । 'उभौ साभ्यासस्य' (8/4/21) इति वचनात् तेन प्राणिनायेति सिद्ध्यती"त्याह सी. दे. बृ. प. वृ. प. 97, पृ. 254 ।

(च) "इयं च 'उभौ साभ्यासस्र' (8/4/21) इति लिङ्गादनित्ये"त्याह. नी. दी. प. वृ. प. 126, पृ. 314 ।

(छ) "उभौ साभ्यासस्य' (8/4/21) इति सूत्रगत-साभ्यासग्रहण-मूलकप्रकृतपरिभाषाऽ-नित्यत्वज्ञापनाद्वे"ति ग्रन्थेन हरिभास्करोऽप्यस्य ज्ञापकत्वमाह शेषा. प. भास्क. प. 99, पृ. 364 ।

(ज) "वचनसामर्थ्याच्चेति । अनेन तदनित्यत्वस्यापि ज्ञापनादितिभावः "इति ग्रन्थेन ज्ञापकत्वमस्याह भ. ना. उद्यो. 8/4/1/21 ।

(झ) "अनित्या चेयम् । 'उभौ साभ्यासस्य' (8/4/21) इति लिङ्गात् । तेन 'औजिड'दिति सिद्ध्यती"त्याह शेषा. प. भास्क. प. 106, पृ. 460 ।

8. अष्टा. 8/2/1 ।

1. 'अनितेः' - अष्टा. 8/4/19 ।

2. 'सन्यङोः' - अष्टा. 6/1/9 ।

3. प्रपूर्वकात् 'श्वसप्राणने' 1069 'अन च' 1070 अदा. 'इति अन्धातोः सनि इटि 'अजादेर्द्वितीयस्य' - अष्टा. 6/1/2' 'सन्यङोः' - अष्टा. 6/1/9 इति निशब्दस्य द्वित्वे 'उभौ साभ्यासस्य' - अष्टा. 8/4/21 इति द्वयोर्नकारयोर्णत्वे सन्नन्तात् लटि प्रथमपुरुषैकवचने रूपम् ।

4. अष्टा. 8/2/1 ।

5. अष्टा. 8/4/19 ।

ज्ञापितस्यास्य वचनस्य फलं तु [1]औजढत्' इत्यत्र, [2]औजिढत् इत्यत्र च ढत्वादीनामसिद्धत्वात् 'हृत' शब्द - 'हृति' शब्दयोः [3]'प्रणिनाये'त्यत्र नीशब्दस्य च द्वित्वसिद्धिः[4] । अस्य वचनस्याभावे हि द्वित्वात् पूर्वं ढत्वादिषु कृतेषु 'हृत' 'हृति' 'इति' शब्दयोः, द्वित्वात् पूर्वं णत्वे 'नी' शब्दस्य च द्वित्वं न सिद्धयेत् ।

पुरुषोत्तमदेवो ज्ञापकसमुच्चये तु सूत्रमिदं 'कृत एव द्विर्वचने णत्वं भवती'ति वचनस्य ज्ञापकम् । यतः [5]'प्राणिणिषती'ति रूपसिद्ध्यर्थमिदमारब्धम् । तच्च रूपम् [6]'अनिते'रिति कृतणत्वस्यैव [7]द्वित्वेन हि सिद्धम् । न च द्वित्वे [8]णत्वस्यासिद्धत्वं[9] शङ्क्यम्' । यतो भगवता 'पूर्वत्रासिद्धीयमद्विर्वचन' इति [10]वचनमुक्तम् । ज्ञापिते चास्मिन् वचने कृतणत्वस्यैव द्विर्वचनं कर्तुमशक्यमिति 'प्राणिणिषती'तिरूपसिद्ध्यर्थं' सूत्रमिदं स्वांशे चरतार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [11]'प्रणुनावे'त्यत्राभ्यासस्यैव [12]णत्व-सिद्धिः । अस्य वचनस्यासत्त्वे हि कृतणत्वस्यैव द्वित्वेऽनभ्यासेऽपि णकारश्रवणापत्तिरत्र दुर्वारा स्यादिति मनुते[13] ।

---

1. "औजढ़दिति' । वहेर्निष्ठायामूढस्तमाख्यदितिणिच् तदन्ताल्लुङ्, 'चङि' इति द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्वढलोपादीनामसिद्धत्वाण्णौ च यष्टिलोपः, तस्य स्थानिवद्भावाद् 'हृत' इत्येतद् द्विरुच्यते । 'अनग् लोपे' इति प्रतिषेधात् सन्वदित्त्वं नास्ति तेन औजढदिति भवतीत्याह जया. का. 8/2/1 । "वह् प्रापणे' – इत्येतस्मिन्निष्ठा, सम्प्रसारणम्, 'होढ' इति 'ढत्वम् 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इतिष्टुत्वम्; 'ढो ढे लोपः' इति ढलोपः, 'द्रलोपे पूर्वस्य दीर्घो णः' इति दीर्घः, ऊढ इति स्थिते तमाचष्ट इति णिच् 'णाविष्टवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः, तदन्ताल्लुङ्, 'णिश्रि' इत्यादिना चङ् । अत्र ढत्व-ष्टुत्वादीनामसिद्धत्वाद् योऽसौ णौ टिलोपस्तस्य 'णौ कृते स्थानिवद्भवती'ति स्थानिवद्भावात् 'चङि' इति 'अजादेर्द्वितीयस्य' इति हृत इत्येतस्य द्विर्वचनम् 'कुहोश्चुः' इति चुत्वम् - महाप्राणस्य हकारस्य स्थाने महाप्राण एव झकारः, 'अभ्यासे चर्च' इति झकारस्य स्थाने जकारः, 'आडजादीनाम्'इत्याट्, 'आटश्च'इति वृद्धि"रित्याह जि. बु. न्या. 8/2/1 ।
2. "औजिढत् इत्येतत्तु क्तिन्नन्तस्य ऊढि शब्दस्य भवतीत्याह जया. का. 8/2/1 ।
3. प्रपूर्वकात् नीधातोर्लिटि प्रथमपुरुषैकवचने रूपम् ।
4. क्रमशः 'चङि' - अष्टा. 6/1/11 । 'लिटिधातोरनभ्यासस्य' - अष्टा. 6/1/8 ।
5. प्रपूर्वकात् 'अन प्राणने' धा. पा. अदा. 1070, इति अन्धातोः सनन्ताल्लटि तिपिरूपम् ।
6. अष्टा. 8/4/19 ।
7. 'सन्यङोः' - अष्टा. 6/1/9 ।
8. 'अनितेः' - अष्टा. 8/4/9 ।
9. 'पूर्वत्रासिद्धम्' - अष्टा. 8/2/1 ।
10. व्या. म. भा. 6/1/1/9 ।
11. 'प्रपूर्वकात्' णुस्तुतौ' धा. पा. अदा. 1035, इति नुधातो र्लिटि तिपि णलि द्वित्वादिषु च कृतेषु रूपमिदम् ।
12. 'उपसर्गादसमासेऽपि णोपदेशस्य' - अष्टा. 8/4/14 ।
13. तथाहि - "अनितेरिति (8/4/14) कृतणत्वस्यैव द्विरुक्तौ प्राणिणिषतीति सिद्धे 'उभौ साभ्यासस्ये'ति (8/4/21) वचनं ज्ञापकम् । 'कृत एव द्विर्वचने णत्वं भवती'ति । न च द्विरुक्तौ णत्वस्यासिद्धत्वमस्ति । पूर्वत्रासिद्धीयमद्विर्वचन इत्युक्तेः (महाभाष्यम् 6/1/9) । तेन नौतेर्लिटि प्रणुनावेति 'उपसर्गादसमासेऽपि (8/4/14) णत्वमभ्यासस्यैव भवतीति" - इत्याह पु. दे. ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे पृ. 100 ।

वस्तुतस्तु सूत्रस्यास्य पूर्वोक्तं "पूर्वत्रासिद्धमद्वित्वे' - इत्यनित्यमिति वचन-ज्ञापकत्वमेव युक्तं पूर्वोक्तबहुलक्ष्यसिद्ध्यनुरोधात्, पुरुषोत्तमदेवेनापि लघुपरिभाषा-वृत्ता[1]- वुक्तत्वाच्चेति मन्ये ।

## "[2]उर्ऋत्"

सूत्रमिदम् [3]'अकृतव्यूहाः पाणिनीयाः' - इति परिभाषाया [4]ज्ञापकम् । यतोऽस्या अभावे [5]'अचीकृतत्' [6]'अचिकर्त्तत्' [7]'अवीवृतत्' [8]'अववर्तत्' [9]अमीमृजत्'

---

1. प. 110, पृ. 157 ।
2. अष्टा. 7/4/7 ।
3. (क) व्याडिः प. सू. प. 65, पृ. 29 ।
   (ख) अकृतव्यूहाः पाणिनीयाः प्रवर्तितमपि शास्त्रं व्यावर्तयन्ति प. दे. ल. प. वृ. प. 104, पृ. 155 ।
   (ग) अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति - सी. दे. बृ. प. वृ. प. 49, पृ. 216 ।
   (घ) नी. दी. प. वृ. पृ. 61, पृ. 305 ।
   (ङ) ह. भा. प. भास्क. प. 51, पृ. 345 ।
   (च) भ. ना. प. शे. प. 57, पृ. 250 ।
   (छ) शेषा. प. भास्क. प. 48, पृ. 425 ।
4. तथाहि–
   "व्यूहो नाम रचना । यथाप्राप्तस्य साधनम् । स्थापना व्यूहो लक्षणा रचना पाणिनीयानामाचार्याणामकृतवद् भवति । कार्यं दृष्ट्वा यत् कृतं तत् सर्वं निवर्तते । कथं ज्ञायते । यदयम् 'उर्ऋत्' (7/4/7) इत्यत्र उर्ऋदिति ब्रवीति । कथं कृत्वा ज्ञापकम् । अत्र हि वृत् इत्येवमादीनां णौ चङ्परे तदेव भवतीत्युच्यते । तेषां चावश्यमृकारस्य णौ पुगन्तलघूपधगुणवृद्ध्युपधैत्वैर्भवितव्यम् । तेषु कृतेषु नायं ऋद् भवति । युक्तं हि तावद् वक्तुम् 'इडरारामृतः' इति 'तद्यतः उर्ऋत्' इत्याह तज्ज्ञापयति – गुणवृद्ध्युपधैत्वानि कार्यं दृष्ट्वा निवर्तन्ते, तत ऋदेवासौ भवती"त्याह व्याडिः प. सू. प. 65, पृ. 29 ।
5. 'कृत संशब्दने' धा. पा. चुरा. 1654' इति कृत् धातोर्णिचि लुङि प्रथमपुरुषैकवचने 'उर्ऋत्' अष्टा. 7/4/7 इति ऋवर्णस्य ऋकारादेशपक्षे रूपम् । यतोऽत्र उपधाया ऋत्त्वे कृदित्यस्य द्वित्वे - उरदत्वे लघुपरतया सन्वत्त्वादित्वे दीर्घो लघोः 'अष्टा. 7/4/94, इति दीर्घः ।
6. 'कृत संशब्दने' धा. पा. चुरा 1654' इति कृत् धातोर्णिचि लुङि प्रथमपुरुषैकवचने ऋकारादेशाभावपक्षे' उपधायाश्च' - अष्टा. 7/1/101 इति ऋत इत्त्वे 'उरण्रपरः अष्टा. 1/1/51 इति रपरत्वे 'उपधायां च' - अष्टा. 8/2/78 इति दीर्घे कीर्दित्यस्य द्वित्वे हलादिशेष अभ्यास - ह्रस्वत्वे चुत्वे च कृते रूपमिदं सिद्ध्यति ।
7. 'कृत संशब्दने' धा. पा. चुरा. 1654' इति कृत् धातोर्णिचि लुङि प्रथमपुरुषैकवचने 'उर्ऋत्' अष्टा. 7/4/7 इति ऋवर्णस्य ऋकारादेशपक्षे रूपम् । यतोऽत्र उपधाया ऋत्त्वे कृदित्यस्य द्वित्वे - उरदत्वे लघुपरतया सन्वत्तवादित्वे दीर्घो लघोः 'अष्टा. 7/4/94, इति दीर्घः ।
8. 'वृतु वतर्ने' धा. पा. भ्वा. 758' इति वृत् धातोर्णिचि लुङि प्रथमपुरुषैकवचने 'उर्ऋत्' - अष्टा. 7/4/7 इत्यस्याभावपक्षे 'पुगन्तलघूपधस्य च' अष्टा. 7/3/86' इति लघूपधगुणे' उरण् रपरः' - अष्टा. 1/1/51, रपरत्वे रूपमिदम् ।
9. 'मृजू शुद्धौ' धा. पा. अदा. 1066' इति मृज् धातोर्णिचि प्रथम-पुरुषैक-वचने 'उर्ऋत्' - अष्टा. 7/4/7' इति ऋकारस्य ऋकारादेश-पक्षे रूपमिदम् ।

[1]'अममार्जत्' - इत्यादौ विकल्पेन णौ चङ्युपधाया ऋवर्णस्य स्थाने ऋकारादेशार्थमारब्धमिदं व्यर्थम् । तथाहि – अन्तरङ्गत्वात् प्रयोगेष्वेतेषु इर्[2] अर्[3] आर्[4] – भिरेव भवितव्यम्, इरादयो हि आदेशा णिच्मात्राश्रयत्वेन अन्तरङ्गाः, ऋकारस्तु आदेशः चङ्परं णिचमाश्रित्य भवतीति बहिरङ्गः । कृतेषु च इराद्यादेशेषु ऋकारादेशस्य प्राप्तिरेव नास्तीति सूत्रमिदं व्यर्थम् । ज्ञापित यामस्यान्त्वनया कृता अपि इराद्यादेशाः प्रयोगेष्वेतेषु निवर्तन्त इति ऋकारस्योपलम्भात् सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु 'प्रियं ग्रामणिकुलं यस्य प्रियग्रामणिकः' इति 'शेषाद्[5] विभाषेति, कपि कृतेऽनया ह्रस्वत्वस्य निवृत्तौ पश्चाद् 'ह्रस्वो नपुंसके[6] प्रातिपदिकस्ये'ति ह्रस्वत्वसिद्धिः । अस्या अभावे हि नास्य सिद्धिः स्यात् । न चात्र 'केऽणः[7]' इति ह्रस्वत्वं सुलम् । यतो 'न [8]कपी'ति तत्प्रतिषेधो दुर्वारः । न च 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ह्रस्वत्वस्यापि' न कपीति[9] प्रतिषेधस्य दुर्वारतया परिभाषाया अस्याः सत्त्वेऽसत्त्वे चात्र न कश्चन विशेषो भवतीति शङ्क्यम् । यतो 'न[10]कपी'ति ह्रस्वत्व - प्रतिषेधः 'केऽण[11]' इति प्राप्तस्यैव, न तु 'ह्रस्वोनपुंसके [12]प्रातिपदिकस्ये'त्यस्यापीति वक्तुं शक्यम् ।

वस्तुतस्तु 'पूर्वपरनित्या-[13]न्तरङ्गापवादानामुत्तरोत्तरं बलीयः 'इति परिभाषया 'अचीकृत'दित्यादौ इराद्यादेशान् अपवादत्वेन प्रबाध्य ऋकारस्य ऋकारं वा विधातुं

---

1. 'मृजु शौचालङ्कारयोः' धा. पा. चुरा. 1849, इति मृज् धातोर्णिचि प्रथमपुरुषैकवचने 'उर्ऋत्' अष्टा. 7/2/114, इति ऋकारस्य ऋकारादेशाभावपक्षे 'मृजेवृद्धिः' - अष्टा. 7/2/114, इति ऋकारस्य वृद्धौ 'उरण् रपरः' - अष्टा. 1/1/51 इति रपरत्वे रूपमिदम् ।
2. 'अचीकृत'दित्यादौ 'उपधायाश्च' - अष्टा. 7/1/101, इति ऋतइत्त्वे 'उरण् रपरः' - अष्टा. 1/1/51, इति रपरत्वेनेत्यर्थः ।
3. 'अचीकृत'दित्यादौ चङिणिलोपे प्रत्ययलक्षणेन णिचमाश्रित्य लघूपधगुणो रपरत्वेनेत्यर्थः ।
4. 'अमीमृज'दित्यादौ 'मृजेर्वृद्धिः' - अष्टा. 7/2/114, इति ऋकारस्य वृद्धावाकारे रपत्वेनेत्यर्थः ।
5. अष्टा. 5/4/154 ।
6. अष्टा. 1/2/47 ।
7. अष्टा. 7/4/13 ।
8. अष्टा. 7/4/14 ।
9. अष्टा. 7/4/14 ।
10. अष्टा. 7/4/14 ।
11. अष्टा. 7/4/13 ।
12. अष्टा. 1/2/47 ।
13. (क) पु. दे. प. पा. प. 39, पृ. 12 अ ।
(ख) भ. ना. प. शे. प. 39, पृ. 170 ।
(ग) 'परिनित्यान्तरङ्गापवादानामुत्तरोत्तरं' बलीयः' – शेषा. प. भास्क. प. 38, पृ. 413 ।

सूत्रमिदं चरितार्थमिति 'उर्ऋत्[1]'इति सूत्रस्य 'अकृतव्यूहाः पाणिनीयाः' इत्येतत्-परिभाषाज्ञापकत्वं न युक्तम् । तथ्यमिदं [2]जयादित्य - [3]जिनेन्द्रबुद्धि - [4]हरदत्तमिश्रा अपि स्वीकुर्वन्ति । तस्मादस्या ज्ञापकान्तरमत्रैव[5] प्रबन्धेऽन्यत्र[6] द्रष्टव्यम् ।

## 'एकः [7]पूर्वपरयोः'

सूत्रमिदं " [8]'तस्मिन्निति' [9]'तस्मा'दिति च सूत्रयोः षष्ठीप्रकल्पकत्वपक्षे सप्तमीपञ्चम्योर्न युगपत्प्रकल्पते"इति वचनस्य [10]ज्ञापकम् । यतः सूत्रमिदं 'रमेशः[11]' - इत्यादौ '[12]आद्गुणः' - इत्यादिसूत्रैर्गुणादीनामादेशानां पूर्वपरयोरुभयोः स्थाने सम्पादनायारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । तथाहि – [13]'तस्मिन्निति' [14]'तस्मा'दिति च सूत्रयोः षष्ठीप्रकल्पकत्वपक्षे [15]'आद्गुणः' – इत्यादावुभयोः 'अचि[16]' – 'आ[17]'दित्यनयोः षष्ठीप्रकल्पनं स्यात्, तथा सति

---

1. अष्टा. 7/4/7 ।
2. अनेन हि - "इरराराामपवादः' इति 'वचनसामर्थ्याद् अन्तरङ्गा अपि इररारो वोध्यन्ते' इति चोक्तम् का. 7/4/7 ।
3. अनेन हि - "यद्यन्तरङ्गत्वादिरराः स्युः वचनस्य तदा वैयर्थ्यं स्यात्, अनवकाशत्वात् । तस्मादन्तरङ्गा अपि ते बाध्यन्ते" इत्युक्तम् - न्या. 7/4/7 ।
4. अनेन हि – 'यद्यन्तरङ्गत्वादिरराः स्युः, व्यर्थमेवेदं वचनं स्यात्"इत्युक्तम् पदम. 7/4/7 ।
5. 'गोरतद्धितलुकि' - अष्टा. 5/4/92, इत्यत्र 'अतद्धित' ग्रहणम्, 'समर्थानां प्रथमाद्वा' - अष्टा. 4/1/82 इत्यत्र समर्थग्रहणं वा ।
6. 'ज्ञापकाः सूत्रांशाः' इत्येतस्मिन् प्रघट्के ।
7. अष्टा. 6/1/84 ।
8. 'तस्मिन्निति निर्दिष्टे पूर्वस्य' - अष्टा. 1/1/66 ।
9. 'तस्मादित्युत्तरस्य' - अष्टा. 1/1/67 ।
10. तथाहि –
    (क) "आचार्यप्रवृत्तिर्ज्ञापयति – 'नोभे युगपत्प्रकल्पिके भवतः' इति, यदय'मेकः पूर्वपरयो'रिति पूर्वपरग्रहणं करोती" त्याह पत. व्या. म. भा. 1/1/9/65 ।
    (ख) "तस्मिन्निति (सू. 1/1/66), अनयोः सूत्रयोः षष्ठीप्रकल्पकत्वपक्षे सप्तमीपञ्चम्योर्न युगपत् प्रकल्पता, 'एकः पूर्वपरयोः' (सू. 6/1/84) इति ज्ञापका"दित्याह श्रीना. ज्ञा. सं. 1, पृ. 34 ।
11. 'रमा + ईशः' - इतिच्छेदः ।
12. अष्टा. 6/1/87 ।
13. 'तस्मिन्निति निर्दिष्टे पूर्वस्य' –
    –अष्टा. 1/1/66 ।
14. 'तस्मादित्युत्तरस्य' – अष्टा. 1/1/67 ।
15. अष्टा. 6/1/87 ।
16. 'इको यणचि' - अष्टा. 6/1/77, इत्यतोऽनुवृत्तम् ।
17. सूत्रे एव श्रुतम् ।

'अचि अवर्णस्य 'अवर्णात्परस्याचश्च गुणः, - इत्यादि व्याख्यानेनैव 'रमेशः' - इत्यादौ गुणा[1]ऽऽद्यादेशाः सुलभाः । ज्ञापिते चास्मिन् वचने 'आद्[2]गुणः' इत्यादौ उभयत आश्रयणे पञ्चमी निर्देशस्य परत्वेन [3]बलीयस्त्वात् पञ्चम्या एव षष्ठीप्रकल्पनं भवेदिति 'रमेशः' – इत्यादौ परस्य गुणादयः स्युरिति पूर्वपरयोर्गुणाद्यादेशसिद्ध्यर्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलंतु '[4]कर्ता' - इत्यादौ 'तास्यादिभ्यः परस्य लसार्वधातुकस्यैवानुदात्तत्वस्य[5] तत्पक्षे[6]ऽपि सिद्धिः । अस्य वचनस्यासत्त्वे हि 'कर्ता' – इत्यादौ [7]तत्पक्षे पूर्वपरयोर्द्वयोरनुदात्तत्वापत्तिः[8] स्यात् । यतस्तत्र[9]तत्पक्षे तासादिभ्य इति पञ्चमी लसार्वधातुके इति सप्तम्याः षष्ठीं[10]प्रकल्पयेत्, तथा लसार्वधातुके इत्येषा सप्तमी तासादिभ्य इति पञ्चम्याः षष्ठीं [11]प्रकल्पयेत्, तथा सत्युभयोः कार्यमनुदात्तत्वं[12] प्राप्नोति ।

## 'एच इग्[13] ह्रस्वादेशे'

सूत्रमिदं 'वर्णैकदेशावर्णग्रहणेन [14]गृह्यन्ते' इति परिभाषाया [15]ज्ञापकम् । यतोऽस्या अभावे व्यर्थमिदम् । ज्ञापितायां चास्यां परिभाषायाम् [16]एकारैकारयो-

---

1. 'आद्गुणः' - अष्टा. 6/1/87 ।
2. अष्टा. 6/1/87 ।
3. 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' प. शे. प. 39 पृ. 170 ।
4. 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोर्लुटि तासि लुटस्तिपि ते वा कृते डाऽऽदिकृतेषु रूपमिदम् ।
5. 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकेऽनुदात्तम्' – अष्टा. 6/1/186, इति विहितस्येतिशेषः ।
6. 'तस्मिन्निति.' 'तस्मादि.' - इत्यनयोः षष्ठीप्रकल्पकत्वपक्षेऽपीत्यर्थः ।
7. 'तस्मिन्.' - अष्टा. 1/1/66, 'तस्मा.' - अष्टा. 1/1/67 इत्यनयोः षष्ठीप्रकल्पकत्वपक्षे इत्यर्थः ।
8. 'तास्यनुदात्तेन्.' - अष्टा. 6/1/186, इत्यनेनेतिशेषः ।
9. 'तस्यनुदात्तेन्. - अष्टा. 6/1/186 ।
10. 'तस्मादित्युत्तरस्य' - अष्टा. 1/1/67, इति परिभाषयेति शेषः ।
11. 'तस्मिन्निति निर्दिष्टे पूर्वस्य' – अष्टा. 1/1/66, इति परिभाषेति शेषः ।
12. 'तास्यनुदात्तेन्.' - अष्टा. 6/1/186, इत्यनेनेति शेषः ।
13. अष्टा. 1/1/48 ।
14. व्याडिः प. सू. प. 26, पृ. 14 ।
15. तथाहि–
"वर्णानामेकदेशा वर्णग्रहणेन गृह्यन्ते । कथं ज्ञायते । 'एच इग् ह्रस्वादेशे' (1/1/48) इति योगमारभते । कथं कृत्वा ज्ञापकम् । अयं योगो नारब्धव्यः । एच इग् ह्रस्वादेशेषु इकारोकारौ भविष्यतः । एचः सस्थानत्वात् इकारोकारौ एच उत्तरभूयस्त्वाद् भविष्यतः । इकारोकारौ भविष्यतः । एचः सस्थानत्वात् इकारोकारौ एच उत्तरभूयस्त्वाद् भविष्यतः ।
उत्तरपूर्वमित्येकदेशशब्दावेतौ । एवं सति इकारोकारावेचः शव्दौ भवतः । यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तत एषु प्रत्याहार उपपन्नो भवति । प्रयोजनमपि चास्य योगस्योच्यते । इमावचौ समाहारवर्णौ मात्रावर्णस्य मात्रा इवर्णोवर्णयोस्तद् ह्रस्वशासनेषु एचोरिवर्णोवर्णं, मा कदाचिदवर्णं भूदित्येवमर्थं सूत्रारम्भः । यदि चैषा परिभाषास्ति तत एतत् प्रयोजनमुपपन्नं भवती"त्याह व्याडिः प. सू. प. 26, पृ. 14 ।
16. 'ए ऐ कण्ठ्यतालव्यौ' इति शिक्षाकारः ।

ह्रस्वो विधीयमानः कदाचिदकारः, कदाचिदिकारः, [1]ओकारौकारयोरपि कदाचिदकारः, कदाचिदुकारश्च प्राप्नोति, तत्र इकारोकारावेव यथायोगं यथा स्याताम् कदाचिदप्यकारो माभूदित्येतदर्थमिदं स्वांशे चरितार्थं भवति । अतएव [2]'अतिरि' [3]'अतिनु' इत्यत्र क्रमशः इकारोकारौ 'उपगु[4]' इत्यत्र उकारः ह्रस्वो भवति न अकारोऽपि । ज्ञापिताया अस्याः फलं तु [5]'आनृधु' रित्यत्र ऋवर्णस्य रेफमादाय [6]'द्विहल' इति नुटः सिद्धिः[7] । अस्या अभावे हि नानेनात्र नुट् सिद्ध्येत् । जिनेन्द्रबुद्धि[8] - हरदत्तमिश्रौ[9] तु द्विहल्ग्रहणसामर्थ्यादिह नुड् भवतीति मन्वाते । तस्मादस्याः फलं मृग्यम् ।

---

1. ओ औ कण्ठ्योष्ठ्यौ' इति शिक्षाकाराः ।
2. 'रायमतिक्रान्तं' ब्राह्मणकुलम्' इति विग्रहे 'कुगतिप्रादयः' - अष्टा. 2/2/18, इति सूत्रस्थेन 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' वा. का. 2/2/18 इति समासे 'परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः' – अष्टा. 2/4/26 इति पुंलिङ्गे प्राप्ते 'द्विगु प्राप्तापन्नालं पूर्वगति-समासेषु प्रतिषेधः' वा. का. 2/4/26 इति प्रतिषेधे नपुंसकस्य ब्राह्मणकुलस्याभिधेयत्वादभिधेय-वल्लिङ्गवचनानि भवन्तीति नपुंसकलिङ्गं भवतीति निर्णये 'ह्रस्वो नपुंसके प्रातिपदिकस्य' - अष्टा. 9/2/47 इति ह्रस्वे कण्ठतालव्यस्यैकारस्य तालव्ये इकारे कृते स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
3. 'नावमतिक्रान्तं ब्राह्मणकुलमिति' विग्रहे 'अतिरि'वत् समासादिषु कृतेषु नपुंसकत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' - अष्टा. 1/2/47 इति कण्ठ्योष्ठ्यौकारस्यौष्ठ्ये उकारे ह्रस्वे कृते रूपमिदं सिद्ध्यति ।
4. गोः समीपमिति-विग्रहे 'अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु' - अष्टा. 2/1/6 इति सामीप्येऽ-व्ययीभावे कृते 'गोस्त्रियोरुपसर्जनस्य' - अष्टा. 1/2/48 - इति कण्ठ्योष्ठ्यौकारस्य उकारे ह्रस्वे कृते रूपमिदं सिद्ध्यति ।
5. 'ऋधु वृद्धौ' धा. पा. स्वा. 1272, इति ऋधधातोर्लिटि प्रथम - पुरुषैकवचने रूपम् ।
6. 'तस्मान्नुड् द्विहलः' - अष्टा. 7/4/71 ।
7. तथाहि – "ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते । तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति - आनृधतुः, आनृधुः "इत्याह वाम. का. 7/4/71 ।
8. अनेन हि – "अत्र 'तस्मान्नुट्'इत्येवं वक्तव्यम् । न चैवं सत्याटतुः, आटुरित्यादौ नुट्प्रसङ्गो भवति, अश्नोतेरित्यस्य नियमार्थत्वाद् - 'अद्विहलो यदि भवति नुट् तदाश्नोतेरेव नान्य-स्ये'ति । अश्नातिनिवृत्त्यर्थं तदेतन्नाशङ्कनीयम्, यद्येतावत् प्रयोजनं स्यात् 'नाश्नः' इत्येवं ब्रूयात् । तस्मान्नियम एवास्य प्रयोजनम् । तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यतो द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम् - द्विहल्समानाकृतेरपि स्यात् । यस्याप्येको हल् मुख्योऽवयवो द्वितीयस्त्वमुख्यस्तच्छायानुकारित्वादुपचारेण हल्व्यपदेशार्हः, तस्यापि यथा स्यादित्येवमर्थम् । एतच्च कथं लभ्यते ? यद्यत्र द्विहल इत्येवं श्रुतिस्तच्छायानुकारिण्यपि ऋकारावयवे रेफे वर्तते, नान्यथा । तस्माद् द्विहल्ग्रहणसामर्थ्यादत्र हल्ग्रहणेन ऋकारैकदेशो रेफो गृह्यते, अन्यथा द्विहल्ग्रहणमनर्थकं स्या"दित्युक्तम् न्या. 7/4/71 ।
9. अनेन हि- "अत्र द्विहल्ग्रहणं न कर्तव्यम्, 'तस्मान्नुट्'इत्येवास्तु, एवमुच्यमाने आटतुः, आटुरित्यत्रापि प्राप्नोति ? 'अश्नोतेश्च' इत्येतन्नियमार्थं भविष्यति - अद्विहलो यदि भवति अश्नोतेरेवेति अश्नाति निवृत्त्यर्थं नाश्न इत्येवं वाच्यं स्यात्, तदेवमन्तरेणापि द्विहल्ग्रहणे सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतदेव प्रयोजनम् - द्विहल्कायानुकारिणोऽपि यथास्या"दित्युक्तम् पदम. 7/4/71 ।

## '[1]ऐऔच्'

सूत्रमिदम् 'एदैतोः ओदौतोश्च सावर्ण्यं नास्ती'ति वचनस्य [2]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । एतत्सूत्रंविनापि कण्ठतालुस्थान[3] - विवृत[4] - प्रयत्नसाम्येन एकारैकायोः, कण्ठोष्ठस्थान[5] - विवृत - प्रयत्न[6] - साम्येन च ओकारौकारयोश्च मिथः [7]सावर्ण्यात् एकारेण ऐकारस्य ओकारेण औकारस्य च ग्रहणं[8] हि सुलभम् । दृश्यते हि स्थान - प्रयत्न[9] साम्येन अकारादिभि - दीर्घप्लुतानामपि ग्रहणम् । अन्यथा [10]'शालीभवती'त्यादौ [11]'अस्यच्वा'वितीत्वं, सुध्युपास्य[12] 'इत्यादावीकारस्य यण् [13]च न सिद्ध्येत् । न चैतत्सूत्राभावे 'अच्, इच्, एच्, – इत्यादिप्रत्याहाराः[14] कथं सिद्ध्येयुरिति शङ्क्यम् । यतोऽमी प्रत्याहारा ङकारेणैव निर्वाह्याः । न च 'एचोऽयवायावः'[15] इत्यत्र यथासंख्यार्थं[16] सूत्रमिदं

---

1. मा. सू. 4 ।
2. तथाहि –
   (क) "एदैतोरोदौश्च न मिथः सावर्ण्यम् । ऐऔजिति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीय"मित्याह भ. दी. वै. सि. कौ. संज्ञा प्र. पृ. 15 ।
   (ख) एओङ्, ऐऔच् । ग्लावम्, ग्लावः । औतोऽम्शसोः' (सू. 6/1/93) इतीह न प्रवर्तते, ऐऔच् इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापना"दित्याह एन. एस. रामा. ज्ञा. सं. परि. 2, पृ. 202 ।
3. 'एदैतोः कण्ठतालु' वै. सि. कौ. संज्ञा प्र. पृ. 10 ।
4. 'विवृतमूष्मणां स्वराणां च' वै. सि. कौ. संज्ञा प्र. पृ. 11 ।
5. 'ओदौतोः कण्ठोष्ठम्' - वै. सि. कौ. संज्ञा प्र. पृ. 10 ।
6. 'विवृतमूष्मणां स्वराणां च' - वै. सि. कौ. संज्ञा प्र. पृ. 11 ।
7. 'तुल्यास्यप्रयत्नं सवर्णम्' - अष्टा. 1/1/9 ।
8. 'अणुदित्सवर्णस्या चाप्रत्ययः' - अष्टा. 1/1/69 ।
9. कण्ठादिस्थानविवृतप्रयत्नसाम्येनेत्यर्थः ।
10. अशाला शाला संपद्यमाना भवतीत्यर्थे शालाशब्दात् 'कृभ्वस्तियोगे संपद्यकर्त्तरि' - अष्टा. 5/4/z0, 'अभूततद्भाव इति वक्तव्यम्' वा. वै. सि. कौ. स्वार्थिक प्र.पृ. 794, इति च्विप्रत्यये तस्य सर्वापहारे 'अस्य च्वौ' अष्टा. 7/4/32 इति द्वितीयाऽऽकारस्य ईत्त्वे ईकारान्तस्याव्ययत्वात् ततः सुपो लुकि रूपमिदम् ।
11. अष्टा. 7/4/32 ।
12. सुधिया उपास्य इत्यर्थः ।
13. 'इको यणचि' - अष्टा. .6/1/77 ।
14. -'अचः परस्मिन् पूर्वविधौ' - अष्टा. 1/1/53, 'इच एकाचोऽम् प्रत्ययवच्च' - अष्टा 6/3/69 'एचोऽयवायावः' - अष्टा. 6/1/78, इत्यादौ क्रमशो व्यवहृता इत्यर्थः ।
15. अष्टा. 6/78 ।
16. 'यथासङ्ख्यमनुदेशः समानाम्'-अष्टा. 1/3/10 ।

चरितार्थमति कथं ज्ञापकमितिशङ्क्यम् । यतः [1]'स्थानेऽन्तरतमः' इति सूत्रेणैव तत्र निर्वाहः सुलभः । ज्ञापिते चास्मिन् वचने एदोद्भ्यामैदौतोर्ग्रहणं न संभवतीति सूत्रमिदं स्वंशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'ग्लावम्'[2] 'ग्लावः'[3] -इत्यादौ [4]'औतोऽम्शसो'रित्यनेन औकाराकारयोः आकारैकादेशाभावः, एकारेण सह वर्तते इति सैः, तत्सबोधने हे सैरित्यत्र 'एङ् ह्रस्वात्[5] सम्बुद्धे'रित्यनेन [6]संबुद्धिलोपाभावश्च । अस्य वचनस्यासत्त्वे हि ओदौतोः कण्ठोष्ठरूपस्थानसाम्यात् विवृतप्रयत्नसाम्याच्च सवर्णसंज्ञायां[7] सवर्णग्रहणेन[8] ओकारेण औकारस्यापि ग्रहणात् क्रमशोऽत्र औकाराकारयोः आकार एकादेशः[9] सम्बुद्धिलोपश्च[10] दुर्वारौ स्याताम् । वस्तुतस्तु [11]सूत्रमिदं नास्य वचनस्य ज्ञापकम् । यतोऽस्य सूत्रस्याभावे [12]'वृद्धिरादैच्' 'न य्वाभ्यां [13]पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्'[14] 'प्लुतावैच इदुतौ, इत्यादौ एङ्ग्रहणापत्तिः स्यादिति तत्र एदोतोरपि ग्रहणं माभूदित्येतदर्थकैच् प्रत्याहारस्यावश्यकतया तत्सिद्ध्यर्थं सूत्रमिदं चरितार्थम् । तस्मादस्य वचनस्य [15]'वृद्धिरादै'जित्यादौ क्वचिदैज्ग्रहणम्, [16]'अदेङ्गुणः' इत्यादौ क्वचिदेङ्ग्रहणं, चेति प्रत्याहारद्वयग्रहणं ज्ञापकम् । [17]तयोर्मिथः सावर्ण्ये हि सर्वत्र एङ्ग्रहणमेव ऐज्ग्रहणमेव वा कुर्यात् । यतोऽन्यतरग्रहणेनापि वचनस्यैतस्याभावे चतुर्णां ग्रहणं सम्भवति । तथा 'प्लुतावैच[18] इदुतौ' 'एचोऽप्रगृह्यस्ये'[19]त्यत्र प्रत्याहारद्वयग्रहणं

---

1. अष्टा 1/1/50 ।
2. ग्लौशब्दस्य अमि विभक्तौ रूपमिदम् ।
3. ग्लौशब्दस्य शसि विभक्तौ रूपमिदम् ।
4. अष्टा. 6/1/93 ।
5. अष्टा 6/1/69 ।
6. 'एकवचनं सम्बुद्धिः' - अष्टा. 2/3/49 ।
7. 'तुल्यास्यप्रयत्नं सवर्णम्' - अष्टा. 1/1/9 ।
8. 'अणुदित्सवर्णस्य चाप्रत्ययः' - अष्टा. 1/1/69 ।
9. 'औतोऽम्शसोः' - अष्टा. 6/1/93 ।
10. 'एङ्ह्रस्वात् सम्बुद्धेः' - अष्टा. 6/1/69 ।
11. 'ऐऔच्' - मा.सू. 4 ।
12. अष्टा. 1/1/1 ।
13. अष्टा. 7/3/3 ।
14. अष्टा. 8/2/106 ।
15. अष्टा. 1/1/1 ।
16. अष्टा. 1/1/2 ।
17. एदैतोः, ओदौतोश्चेत्यर्थः ।
18. अष्टा. 8/2/106 ।
19. 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' - अष्टा. 8/2/107 ।

वचनस्यास्य ज्ञापकम् । अस्य वचनस्याभावे हि प्रत्याहारद्वयग्रहणमत्र व्यर्थम् । तथ्यमिदं भट्टनागेशः समुपन्यस्तवान्[1] ।

## '[2]कारनाम्नि च प्राचां हलादौ'

अप्राप्तविभाषेदमिति पक्षे सूत्रमिदं 'भवत्यत्र[3]समासः' इति वचनस्य ज्ञापकम्[4] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि– 'कूपेशाणम्[5]', 'दृषदिमाषकः' '[6]हलेद्विपदिके'[7]इत्यादौ कारनाम्नि[8] सप्तम्या अलुगर्थमिदमारब्धम् । तच्चास्य वचनस्याभावेऽप्राप्तविभाषेदमिति पक्षे व्यर्थम् । तत्पक्षे हि संज्ञात्वस्यानवगमात् 'कूपेशाण'मित्यादौ – [9]'संज्ञाया'मिति विहितस्य समासस्याप्राप्त्या लुकोऽप्राप्तेः[10] - सप्तम्यास्तत्रालुग्विधयाकमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'कूपेशाण'मित्यादौ सप्तमीतत्पुषसमासस्य सुलभतया प्रातिपदिकत्वात्[11] प्राप्तस्य लुकोऽभावाय[12] सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्यवचनस्यान्यत्र फलं दृग्गोचरतां नाञ्चतीति मन्येन्यत्र ज्ञापितस्य वचनस्य फल-सद्भावो न सार्वत्रिक

---

1. तथाहि–"अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूलकस्य गुणवृद्धिसंज्ञाविधौ प्रत्याहारद्वयग्रहण-वैयर्थ्यस्य, 'प्लुताव्रैच' 'एचो प्रगृह्यस्ये'त्यत्र तद्ग्रहणवैयर्थ्यस्य च संग्रहो बोध्यः "इति । ल. श. शे. संज्ञा.प्र. पृ. 130 - 132 ।
2. अष्टा. 6/3/10 ।
3. 'प्राचां कारे हलादिनोत्तरपदेनासंज्ञानामपि भवति समास 'इति वचनार्थः ।
4. तथाहि–
   (क) एतदेव ज्ञापयति 'भवत्यत्र समासः' इति, यदयं कारनाम्नि सप्तम्याम् अलुकं शास्तीत्याह पत. व्या. म. भा. 6-3-1-10.
   (ख) 'कथं पुनरसंज्ञायां सप्तमीसमासः? एतदेव ज्ञापकं स्यात्– 'प्राचां कारे हलादिनोत्तरपदेनासंज्ञायामपि भवति समास इति' इत्याह ह. मि. पदम. 6-3-1-10.
   (ग) 'कारनाम्नि च' एतदेवालुग्वचनं ज्ञापयति – भवत्यत्र समास इति' इत्याह एन. एस. रामा. ज्ञा. सं. परि. 1, पृ. -183 ।
5. इदं प्राग्देशनाम कूपकरस्य ।
6. इदं प्राग्देशनाम दृषत्करस्य ।
7. इदं प्राग्देशनाम हलकरस्य ।
8. (क) "वणिग्भिः कर्षकैः पशुपालैश्च राज्ञो देयो भागो रक्षा निन्धनः = कारः, तस्य नाम कारनामे"त्याह जि. बु. न्या. 6/3/10 ।
   (ख) "वणिग्भिः पशुपालै. कर्षकैश्च कल्पितो राजग्राह्यो भागः = करः, कर एव कारः, प्रज्ञादित्वादण्" - इत्याह ह. मि. पदम. 6/3/10 ।
   (ग) "वणिक् - पशुपाल - कर्षकिभ्यो राजग्राह्यो भागः करः, स एव कारः" - इत्याह भ. ना. ल. श.शे. अलुक्समास-प्र. पृ. 546 ।
   (घ) "राजग्राह्यो भागः करः, स एव कारः, तद्विशेषवाचक इत्यर्थः" - इत्याह वा. दी. बा. मनो. अलुक् समास प्र. पृ. 546 ।
9. अष्टा. 2/1/44 ।
10. 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71 ।
11. 'कृत्तद्धितसमासाश्च' - अष्टा. 1/2/46 ।
12. 'सुपो धातु.' - अष्टा. 2/4/71 ।

इति । प्राप्तविभाषेदमिति पक्षे सूत्रमिदं 'कूपेशाण'मित्यादौ '[1]संज्ञाया'मिति समास्य सुलभतया सार्थकमिति न ज्ञापकम् ।

## '[2]किमिदम्भ्यां वो घः'

सूत्रमिदं 'किमिदम्भ्यां वतुप्प्रत्ययो भवती'ति वचनस्य ज्ञापकम्[3] । यतः [4]यत्तदेतेभ्यः परिमामाणे वतु'बित्यनेन यत्तदेतच्छब्देभ्य एव वतुप् विधीयत इति किमिदम्भ्यां वतुपो दुर्लभतया वतुपो वकारस्य 'कियान्'[5] '[6]इया'नित्यत्र घत्वविधानार्थमारब्धमिदमनुपपन्नम् । ज्ञापिते चास्मिन् वचने ताभ्यां वतुपः सम्भवात् तस्य वकारस्य घत्वार्थमिदमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'कियान्' 'इया'नित्यनयोः प्रयोगयोः साधुत्व-सिद्धिः ।

भट्टोजिदीक्षितस्तु सूत्रेऽस्मिन् 'तदस्येति'[7] 'परिमाणे[8] वतु'बिति चानुवर्त्त्य वतुब्विधानं चानेन स्वीकृत्य ज्ञापकत्वमस्य सूत्रस्य न मनुते[9] ।

---

1. अष्टा. 2/1/44 ।
2. अष्टा. 5/2/40 ।
3. तथाहि –
   (क) "एतदेव ज्ञापयत्याचार्यो- 'भवति किमिदंभ्यां वतु'विति, यदयं किमिदंभ्यामुत्तरस्य वतुपो वो घत्वं शास्ती"त्याह पत. व्या. म. भा. 5/2/1/40 ।
   (ख) एतदेव चादेशविधानं ज्ञापकम् - किमिदभ्यां वतुप्प्रत्ययो भवतीति"त्याह जया. का. 5/2/40 ।
   (ग) "आदेशविधानान्यथानुपपत्त्या प्रत्ययोऽनुमीयते' - इत्याह ह. मि. पदम. 5/2/40 ।
   (घ) "किमिदंभ्याम् (सू. 5/2/40) । एतदेव ज्ञापयति किमिदंभ्यां वतुविती'त्याह श्रीना. ज्ञा. सं. 5, पृ. 91 ।
4. अष्टा. 5/2/39 ।
5. किमूशब्दात् ज्ञापकाद् वतुपि 'किमिदं भ्यां वो घः' -अष्टा. 5/2/40, इति वस्य घत्वे घस्य 'आयनेयी. '-अष्टा. 7/1/2, इति इयादेशे 'इदंकिमोरीशूकी' - अष्टा. 6/3/90 इति किमः 'की' - इत्यादेशे 'यस्येति च' - अष्टा. इतीकारलोपे तद्धितान्तप्रातिपदिकत्वेन सौ 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70, इति नुमि 'सर्वनामस्थाने चासंबुद्धौ' - अष्टा. 6/4/8, इति नान्तस्योपधाया दीर्घे 'हल्ङ्याब्' - अष्टा. 6/1/68, इति इत्यस्य लोपे संयोगान्तलोपे च कृते रूपमिदम्
6. इदमूशब्दाद् ज्ञापकाद् वतुपि 'किमिदभ्यां वो घः' - अष्टा. 5/2/40, इति वस्य घत्वे घस्य 'आयनेयी' - अष्टा. 7/1/2, इति इयादेशे 'इदं किमोरीशूकी '-अष्टा. 6/3/90, इति इदम ईशादेशे 'यस्येति च'- अष्टा. 6/4/148, इति ईकारलोपे तद्धितान्तप्रातिपदिकत्वेन सौ 'उगिदचां.' - अष्टा. 7/1/70, इतिनुमि 'सर्वनामस्थाने.' -अष्टा. 6/4/8, इति नान्तस्योपधाया दीर्घे 'हल्ङ्याब्.' अष्टा. 6/1/68 इति सकारलोपे तकारस्य संयोगान्तलोपे च कृते रूपमिदम् ।
7. 'तदस्य सञ्जातं तारकादिभ्य इतच्' – अष्टा. 5/2/36 । इत्यतः इति शेषः ।
8. 'यत्तदेतेभ्यः परिमाणे वतुप्' – अष्टा. 5/2/39 इत्यत इति शेषः ।
9. अनेन हि –
   "आभ्यां वतुप् स्याद् वस्य च घ. 'इत्यर्थोऽस्य सूत्रस्योक्तः, भ. दी. वै. सि. कौ. पाञ्चमिक प्र. ग्रन्थमिमं च व्याचक्षाणो 'वकारस्य घविधानसामर्थ्याद् वतुपमनुवर्त्त्य सोऽप्यत्र - विधीयत इति भावः' –इत्याह ज्ञा. भि. त. बो. पाञ्चमिकप्र. पृ. 733 ।

## '[1]किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'

सूत्रमिदम् 'अतन्त्रं[2]तरनिर्देशः' इति परिभाषाया ज्ञापकम् । यतोऽस्या अभावे द्रव्यस्य प्रकर्षो न भवतीति क्रियागुणस्थः[3] प्रकर्षो द्रव्ये उपचर्यद्रव्यप्रकर्षो वाच्यः तद्भिन्ने अर्थात् यत्र क्रियाया गुणस्य[4] च प्रकर्षो द्रव्ये नोपचर्यते तत्र किमेकारान्तात्तिङ्न्तादव्ययेभ्यश्च यो विहितो घः[5] स किमेत्तिङव्ययघस्तदन्तात्प्रादिकादामुप्रत्ययविधानायारब्धमिदं व्यर्थम् । तरप्तमपौ हि 'अतिशायने[6] तमबिष्ठनौ' 'तिङश्च'[7] 'द्विवचनविभज्योपपदे तरबीयसुनौ[8]' इत्येतैः सूत्रैर्यथायर्थं विधीयते, इति यः सर्वत्र गुणस्य क्रियाया वा प्रकर्षे विधीयमानतया न क्वाप्यात्मनः सत्तामद्रव्यप्रकर्षे साधयितुं क्षमोऽस्तीति सूत्रमिदमनर्थकम् । ज्ञापितायां चास्यां स्वार्थे घस्य विधानलाभाद् द्रव्यप्रकर्षे तत्सत्तायाः सुलभतया किंतराम्'[9] 'किंतमाम्' 'पूर्वाह्णेतराम्' 'पूर्वाह्णेतमाम्' 'पचतितमाम् उच्चैस्तराम्'[10] उच्चैतमाम् इत्यत्र स्वांशे सूत्रमिदं चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु 'उच्चैरेव उच्चैस्तराम्'[11] 'श्रेष्ठ एव श्रेष्ठतमः' इत्यादि प्रयोगाणां सिद्धिः । अस्या अभावे हि स्वार्थे तरप्तम्पोऽविधानादमीषां सिद्धिर्न स्यात् ।

---

1. अष्टा. 5/2/40 ।
2. अष्टा. 5/4/11 ।
3. व्याडिः प. सू. प. 66 पृ. 29।
4. तथाहि – "अप्रधानस्तरनिर्देशो यस्मिन्नर्थे उच्यते तमर्थं ब्रवीति । यस्मात् प्रातिपदिकाद् विधीयते तस्यैवार्थे विधीयते । कथं ज्ञायते । यदयं 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याह । कथं कृत्वा ज्ञापकम् । अत्र घादुत्तर आमुर्विधीयते द्रव्यप्रकर्षादन्यत्र । तच्च न संभवति । अयं हि घसंज्ञः तरप् तमप् च । अद्रव्यप्रकर्ष इत्युच्यमाने कः प्रसङ्गः यदुत द्रव्यपकर्षे स्याताम् । एतदाचार्यः पश्यति । इमे तरबादयः स्वार्थे विधीयन्ते । प्रातिपदिकार्थे ते परतन्त्रा भवन्ति । अद्रव्यप्रकर्षे घादामुर्भवति । किमेतस्या ज्ञापने प्रयोजनम् । उच्चैरेव उच्चैस्तराम् । श्रेष्ठ एव श्रेष्ठतम इति सिद्धं भवती"त्याह व्याडिः प. सू. प. 66 पृ. 29 ।
5. 'तरप् तमपौ घः" अष्टा. 1/1/22 ।
6. अष्टा. 5/3/55 ।
7. अष्टा. 5/3/56 ।
8. अष्टा. 5/3/57 ।
9. "इदं च किमिदं च किम्' इदमनयोरतिशयेन किम् इति तरप् प्रत्ययः यत्र स्वरूपेण ज्ञातस्य वस्तुनो विशेषाकारा बहवो जिज्ञासितास्तत्र किं शब्दार्थं प्रश्नप्रकृष्ट इव भवति, तदाश्रयः प्रत्ययः' इत्याह ह. मि. पदम. 5/4/11 ।
10. "घकालतनेषु' इति सप्तम्या अलुक् । तत्रासत्त्वभूतस्य विभक्त्यर्थस्य प्रकर्षः, न कालस्येति नात्र द्रव्यप्रकर्षः "इत्याह ह. मि. पदम. अष्टा. 5/4/11 ।
11. "अत्राप्युच्चैःशब्दस्याधिकरणप्रधानत्वान्नायं द्रव्यप्रकर्षः "-इत्याह ह. मि. पदम. अष्टा. 5/4/11 ।

## '[1]घकाल-तनेषुकालनाम्नः

सूत्रमिदं 'सुबन्तात् तद्धितोत्पत्ति'रिति वचनस्य ज्ञापकम्[2] । यतोऽस्य वचनस्याभावे सूत्रमिदमनुपपन्नम् । तथाहि – पूर्वाह्णेतरे'[3] 'पूर्वाह्णतरे'[4], 'पूर्वाह्णेतमे'[5] 'पूर्वाह्णतमे'[6], 'पूवाह्णेकाले'[7] 'पूर्वाह्णकाले'[8], 'पूर्वाह्णेतने'[9] 'पूर्वाह्णतने'[10] – इत्यादौ घसंज्ञके[11] प्रत्यये, कालशब्दे[12]तन[13]प्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषयाऽलुगर्थं सूत्रमिदमारब्धम् । तच्चास्य वचन-

---

1. अष्टा. 6/3/17 ।
2. तथाहि –
   (क) "आचार्यप्रवृत्तिज्ञार्पयति - 'भवत्यत्र सप्तमी'ति, यदयं 'घकालतनेषु कालनाम्न' इति सप्तम्या अलुकं शास्ति । .... ....'एवं तर्हि न ब्रूमः 'अलुग्वचनं ज्ञापकं भवत्यत्र सप्तमी'ति । किं तर्हि ? । 'भवति सुबन्तादुत्पत्ति'रिति" इत्याह पत. व्या. म. भा. 4/3/1/24 ।
   (ख) "विभाषा पूर्वाह्ण..." (सू. अष्टा. 4/3/24 ) 'घकालतनेषु' ( सू. ) इत्यलुग्वचनं ज्ञापयति सुबन्तात्तद्धितोत्पत्तिः इती"त्याह श्रीना. ज्ञा. सं. 4 । पृ. 85 ।
3. अह्नः पूर्वमिति विग्रहे 'पूर्वापर.' -अष्टा. इत्येकदेशिसमासे 'राजाहः सखिभ्यष्टच्' - अष्टा. 5/4/91 इतिटचि समासान्ते कृते 'अह्नोऽह्न एतेभ्यः' - अष्टा. 05/4/88 हत्यह्नाऽऽदेशे 'अह्नोऽदन्तात्' – अष्टा. 8/4/7 इति णत्वे पूर्वाह्णशब्दो निष्पद्यते - ततः 'अस्मिंश्च पूर्वाह्णे अस्मिंश्च पूर्वाह्णे, अस्मिंस्त्वनयोरतिशयेन पूर्वाह्णे' - इत्यर्थे सप्तम्यन्तात् पूर्वाह्णशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' - अष्टा. 5/3/57 इति तरप्प्रत्ययो 'घकालतनेषु कालनाम्नः' - अष्टा. 6/3/17, इतिलुकि 'पूर्वाह्णतरः'- इति सप्तम्या वा अलुकि तद्धितान्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. सप्तम्या अलुगभावपक्षे तस्याः 'सुपोधातु.' - अष्टा. इतिलुकि 'पूर्वाह्णतरः' इति पूर्ववद्रूपम् ।
5. अत्रापि पूर्ववन्निष्पन्नः पूर्वाह्णशब्दः, ततः एषु अतिशयेन पूर्वाह्णे' इत्यर्थे 'अतिशायने तमबिष्ठनौ - अष्टा. 5/3/35, इति तमप्प्रत्यये 'घकाल.' - अष्टा. 6/3/17, इति सप्तम्या वा अलुकि तद्धितान्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. सप्तम्या अलुगभावपक्षे तस्याः 'सुपोधातु.' अष्टा. 2/4/71, इति लुकि रूपमिदम् ।
7. पूर्वाह्णे चास्मिन् काले इत्यर्थे 'विशेषणं विशेष्येण बहुलम्' - अष्टा. इति समासे 'कृत्तद्धितसमासाश्च - अष्टा. 01/2/46 इति प्रातिपदिकतयात्र 'सुपोधातु.' - अष्टा. 2/4/71, इति प्राप्तस्य सप्तम्यालुकः 'घकाल.' - अष्टा. 6/3/17 इत्यलुकि रूपमिदम् ।
8. 'घकाल.' - अष्टा. 6/3/17, इत्यलुगभावपक्षे रूपमिदम् ।
9. पूर्वाह्णेतर इत्यत्रार्थे' इत्यस्मात् 'विभाषा पूर्वाह्णापराह्णाभ्याम् अष्टा. 4/3/24, इति ट्यौ ट्युलि वा पर्यायेण कृते तुडागमे च कृते योः 'युवोरनाकौ' - अष्टा. 7/1/1, इत्यनादेशे तद्धितान्तप्रातिपदिकतया सप्तम्याः प्राप्तस्य लुकः 'घकालतनेषु. - अष्टा. 6/8/17, इत्यलुकि रूपमिदम् ।
10. 'घकालतनेषु.' - अष्टा. 6/3/17, इत्यलुगभावपक्षे 'सुपो धातु'- अष्टा. 2/4/71, इति सप्तम्यलुकि रूपमिदम् ।
11. 'तरप्तमपौ घः' - अष्टा. 1/1/22 ।
12. 'विशेषणं विशष्येण बहुलम्-' अष्टा. 2/1/57 इति समस्ते इति शेषः ।
13. 'तन'इति ट्युट्युलोरादेशस्य सतुट्कस्यात्र हि ग्रहणम् ।

स्याभावेऽनुपपन्नम् । प्रातिपादिकात् तद्धितोत्पत्तौ हि सप्तम्या एवैतेषु प्रयोगेष्वभावेन तस्या लुकोऽलुको वा प्रसक्तिरेव नास्ति । ज्ञापिते चास्मिन् वचने तेषु परतस्तत्र सप्तमीलाभात्तल्लुगर्थमिदं सूत्रमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'पूर्वाह्णापरह्णाभ्यां[1] सुबन्तवचनं सप्तमीश्रवणार्थ'मिति वार्तिकानारम्भजन्यं लाघवम् ।

अत्रेदमवधेयम् - विशेषण - विशेष्ययोः प्रातिपदिकयोरेव समासे[2] हि कालशब्दे परतः सप्तम्या अभावादिहोपात्तः 'घ-काल-तनेषु 'इत्येतद् घटकः 'काले' ति शब्दः 'विशेषणादिसमासोऽपि तत्तद्विभक्त्यन्तानामेवे'ति वचनस्य ज्ञापकः[3] । अन्यथा 'सुबन्तात्तद्धितोत्पत्ति'रिति वचने ज्ञापितेऽपि नायमुपपद्येत । इत्थं नेदं सम्पूर्णं सूत्रं 'सुबन्तात्तद्धितोत्पत्ति'रिति वचनस्य ज्ञापकं किन्त्वत्रसूत्रे 'घकालतनेषु' इत्येतद्घटकौ घ-तनेतिशब्दावेवेति ।

### 'चौ'[4]

सूत्रमिदं 'न चौ प्रत्यङ्गं भवतीति' वचनस्य ज्ञापकम्[5] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – सूत्रमिदं 'प्राचः'[6] 'प्रतीचः[7] ' इत्याद्यर्थमारब्धम् ।

---

1. वा. व्या. म. भा. 4/3/1/24 ।
2. 'विशेषणं विषेष्येणबहुलम्' - अष्टा. 2/1/57।
3. तथाहि – "पूर्वाह्णे काले इति । अतएव विशेषणादिसमासोऽपि तत्तद्विभक्त्यन्तामेवे'ति ग्रन्थेन ज्ञापकत्वमस्यात्र सूचयति - वा. दी. बा. मनो. अलुक्समासप्र. पृ. 457 ।
4. अष्टा. 6/3/138 । 'लुप्ताकारनकारेऽञ्चतौ पूर्वस्याणो दीर्घः स्या'दिति सूत्रार्थः ।
5. तथाहि –
   (क) "एतदेव ज्ञापयत्याचार्यो चौ प्रत्यङ्गं' भवती'ति यदयं चौ दीर्घत्वं शास्ति । (प्रत्यङ्गंनाम वर्णाश्रयो विधिर्यणादेशोऽकः सवर्णे दीर्घत्वं वा)" - इत्याह पत. व्या. म. भा. 6/3/3/138 ।
   (ख) " 'अन्तरङ्गोऽपि हि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्तते" - इत्याह वाम. का. 6/3/138 ।
   (ग) "चौ' (सू. 6/3/138) । एतदेव ज्ञापयति 'न चौ प्रत्यङ्गं भवती"तीत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 184 ।
6. प्राञ्चतीत्यर्थे प्रपूर्वकात् 'अञ्चुगतिपूजनयोः 'धा. पा. भ्वा. 188, इति गत्यर्थकान्नोपधादञ्चुधातोः 'ऋत्विग् - दधृक् - स्रग् - दिगुष्णिगञ्चु - युजि - क्रुञ्चां च' - अष्टा. 3/2/59, इति क्विन्प्रत्यये क्विन इकारस्योच्चारणार्थतया निवृत्तौ ककारस्य 'लशक्वतद्धिते'- अष्टा. 1/3/8, इतीत्वे, नकारस्य च 'हलन्त्यम्' -अष्टा. 1/3/3, इतीत्त्वे तयोः 'तस्यलोपः' - अष्टा. 1/3/9, इतिलोपेन निवृत्तौ वकारस्य 'वेरपृक्तस्य'- अष्टा 6/1/93, इतिलोपेन निवृत्तौ 'प्र - अन्च'इति स्थिते 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. इतिनकारस्य लोपे प्र - अच्'इत्यास्मात् कृदन्तप्रातिपदिकाच्छसि विभक्तावनुबन्धलोपे 'प्र+अच्+अस्' - इत्यवस्थायाम् अचोभसंज्ञकतया तस्याकारस्य 'अचः' - अष्टा. 6/4/138, इत्यनेन लोपे प्रघटकाकारस्य 'चौ' - अष्टा. 6/3/138, इत्यनेन दीर्घेसकारस्यरुत्वे रेफस्य विसर्गे च कृते रूपमिदम् ।
7. प्रत्यञ्चतीत्यर्थे प्रतिपूर्वकात् अञ्चतेर्गत्यर्थात् पूर्ववत् श्चिनि तस्य सर्वापहार नलोपयोः कृतयोः प्रत्ययलक्षणेन कृदन्त्वात् प्रातिपदिकत्वे शसिविभक्तौ प्रति + अच् + अस्' इत्यवस्थायाम् 'अचः' - अष्टा. 6/4/138, इत्यचोऽकारलोपे 'चौ' - अष्टा. 6/3/138, इत्यनेन प्रतिपटकस्येकारस्य दीर्घे सकारस्य रुत्वे रेफस्य विसर्गे च कृते रूपमिदम् ।

तच्चास्य वचनस्याभावे व्यर्थम् । 'प्राच 'इत्यत्र नलोपे प्र[1] + अच् + अस्' – इत्यवस्थायामन्तरङ्गत्वात्[2] सवर्णदीर्घैकादेशे[3] कृते 'चा'विति[4] सूत्राभावेऽपि हि रूपं सिद्ध्यति, 'प्रतीचः' -इत्यत्रापि नलोपे[5] कृते प्रति + अच् + अस् 'इत्यवस्थायाम् - 'अचः'[6] इत्यल्लोपात्प्रागेवान्तरङ्गत्वाद्यणि[7] कृते लुप्ताकारनकाराञ्चतेः परत्वाभावेन [8] 'चा'विति दीर्घ एव हि न प्राप्नोति । ज्ञापिते चास्मिन् वचनेऽत्रानेन दीर्घैकादेश - यणोरभावे दीर्घार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु दधीचः'[9] – इत्यादिप्रयोगाणां साधुत्व - सिद्धिः । अस्य वचनस्यासत्त्वे हि यणोऽत्रा[10]-ल्लोपात्[11] प्रागेव प्रवृत्तेर्दुर्वारतया नैतेषां साधुत्वं सिद्ध्येत् ।

भट्टोजिदीक्षिस्तु नास्य सूत्रस्यैतज्ववचनज्ञापकत्वं मनुते । यतोऽसौ ते " 'अच' - इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते, 'अकृतव्यूहा'[12] - इति परिभाषया" इति ग्रन्थेन[13] सार्थक्यमस्य सूत्रस्य प्रतिपादयति ।

अत्र भट्टोजिदीक्षितस्य मतमिदं न युक्तम् । यतोऽकृतव्यूहाः - इति परिभाषा भाष्यानुक्ततयाऽनन्यथासिद्धफलशून्यतया च नाङ्गीकार्येति पाणिनीयव्याकरण-समीक्षकाणां चरमो राद्धान्तः परिभाषेन्दुशेखरेऽस्या[14] व्याख्यानावसरे भट्टनागेशे-नापि प्रतिपादितः ।

कश्चित्तु[15] "'चा'विति[16] निर्देशोऽकारलोपानन्तरमेतत्सूत्रं प्रवर्तते' -इतिवचनस्य ज्ञापकः । यतोऽस्य वचनस्याभावेऽञ्चु[17]धातोरुकारान्तस्य

1. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24 ।
2. 'असिद्धं बहिरङ्गमन्तरङ्गे'इति परिभाषयेति शेषः ।
3. 'अकः सवर्णे दीर्घः ' -अष्टा. 6/1/10 ।
4. अष्टा. 6/3/138 ।
5. 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24 ।
6. अष्टा. 6/4/138 ।
7. 'इको यणचि' - अष्टा. 6/1/77 ।
8. अष्टा. 6/3/138 ।
9. दध्यञ्चतीत्यर्थे दधिपूर्वकादञ्चतेः पूर्ववत् क्विनि तदन्ताच्छसि विभक्तौ 'प्रतीचः' - इतिवदिदं रूपम् ।
10. 'इको यणचि' - अष्टा. 6/1/77 ।
11. 'अचः' - अष्टा. 6/4/138 ।
12. 'अकृतव्यूहाः पाणिनीयाः' - हति परिभाषास्वरूपम् ।
13. वै. सि. कौ. हलन्तपुंलिङ्गप्र. पृ. 216 ।
14: पृ. 256 - 260 ।
15. एन्. एस्. रामा. ।
16. अष्टा. 6/3/138 ।
17. अञ्चु गतिपूजनयोः' धा. पा. भ्वा. 188 ।

[1]लुप्तनकाराकारस्य[2] सप्तम्यन्तनिर्देशोऽयमनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽत्र दीर्घैकाऽऽदेश-[3]यणादीना-[4]मकारलोपानन्तरं प्रवृत्तियोग्यत्वमेव नास्तीति भाष्योक्तमस्य सूत्रस्योक्तवचनज्ञापकत्वं चिन्त्यमिति मनुते[5] । नास्य मतस्य किमपि क्षोदक्षमं तत्त्वं पश्यामीति भाष्योक्तसिद्धान्त एवात्र युक्त इति मन्ये ।

## जातिकाल-सुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः'[6]

सूत्रमिदं 'बहुव्रीहौ जातिकालसुखादिभ्यः परमेव निष्ठान्तस्य प्रयोगः' – इति वचनस्य ज्ञापकम्[7] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – 'सारङ्गजग्धः'[8] [9]'मासजातः' 'सुखयातः'[10] –इत्यादौ जातिवाचिन आच्छादनवर्जितात्, कालवाचिनः सुखादिभ्यश्च परस्य कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहिसमासे क्तान्तस्यान्तोदात्तत्वं विधातुं सूत्रमिदमारब्धम् । तच्चास्य वचनस्याऽभावे व्यर्थम् । यतो 'निष्ठे'ति[11] सूत्रेणैषु प्रयोगेषु 'कृतकृत्यः[12] इत्यादिवत्

---

1. अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24 ।
2. 'अच' - अष्टा. 6/4/138 ।
3. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
4. 'इको यणचि' - अष्टा. 6/1/77 । ।
5. तथाहि – "वस्तुतस्तु 'चौ' इति निर्देशेन अकारलोपानन्तरमेतत् सूत्रं प्रवर्तत इत्यवगमात् एकादेशयणादीनामकारलोपानन्तरं प्रवृत्तियोग्यत्वविरहाच्चिन्त्यमिदम्" इत्याह एन्. एस. रामा. ज्ञा. सं. परि., पृ. 184 ।
6. अष्टा. 6/2/170 ।
7. तथाहि –
   (क) "उत्तरपदस्यान्तोदात्तत्ववचनं ज्ञापकं 'ह्यभावस्य' । यदयं जातिसुखादिभ्यः परस्य निष्ठाया उत्तरपदस्यान्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः - परात्र निष्ठा भवतीती"त्याह पत. व्या. म. भा. 2/2/2/36 ।
   (ख) "एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवति अस्मादेव ज्ञापका"दित्याह वाम. का. 6/2/170 ।
   (ग) "अस्माज्ज्ञापकाद् निष्ठान्तस्य परनिपातः" इत्याह भ. दी. वै. सि. समासस्वर प्र. पृ. 691 ।
   (घ) "निष्ठा (सू. 2/2/36) । जातिकालसुखादिभ्यः परस्याः निष्ठाया अन्तोदात्तत्वविधानात् ज्ञापकात् परात्र निष्ठा भवतीती"त्याह श्रीना. ज्ञा. सं. पृ. 155 ।
   (ङ) "ननूक्तोदाहरणेषु प्रत्युदाहरणेषु ''निष्ठा' इति निष्ठान्तस्य पूर्वनिपातः प्राप्नोति । तत्राह - ' अस्माज् ज्ञापकादिति । इदमेव मनसि विभाव्योक्तं 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या'इती"त्याह ज. मौ. सुबो. समासस्वरप्र. पृ. 691 ।
8. सारङ्गः = पक्षिविशेषः स जग्धो भक्षितो येनेति विग्रहे बहुव्रीहिः ।
9. 'मासो जातो यस्येति विग्रहे बहुव्रीहिः ।
10. 'सुखं यातं यस्येति विग्रहे बहुव्रीहिः ।
11. अष्टा. 2/2/36 ।
12. कृतं कृत्यं येनेति विग्रहेऽत्र बहुव्रीहौ 'निष्ठा' - अष्टा. 2/2/36, इति कृतस्य पूर्वनिपातः ।

निष्ठान्तस्य[1] पूर्वनिपातो दुर्वार इति जात्यादिभ्यः परं क्तान्तं दुर्लभम् । ज्ञापिते चास्मिन् वचने जात्यादिभ्यः परस्य क्तान्तस्य सुलभतया तत्रान्तोदात्तत्वविधानाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'सारङ्गजग्धी'[2]-प्रभृतीनां प्रयोगाणां साधुत्व-सिद्धिः । अस्य वचनस्यासत्त्वे हि 'निष्ठे'त्यनेन निष्ठान्तस्य प्राक् प्रयोगो दुर्वारः स्यादिति नैतेषां साधुत्वं सिद्ध्येत् ।

जिनेन्द्रबुद्धिस्तु 'निष्ठायाः[3] 'पूर्वनिपाते जातिकालसुखादिभ्यः परवचन'मिति पूर्वोक्तज्ञापकसिद्धं वचनं व्याचक्षाणो नास्य सूत्रस्यात्र वचने ज्ञापकत्वं मनुते[4] । मतमिदं [5]भाष्यविरोधान्न ग्राह्यम् । यतोऽत्र व्याकरणे यथोत्तरं मुनीनां प्रामाण्य'-मितिराद्धान्तश्चिराच्चकास्ति ।

## 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्'[6]

सूत्रमिदं 'जातिः पदार्थः' इति वचनस्य ज्ञापकम्[7] । यतोऽस्य वचनस्याभावे सूत्रमिदमनुपपन्नम् । ज्ञापिते चास्मिन् वचने जातेः पदार्थतया सूत्रमिदमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु [8]'द्रव्यं गुणस्तथाकर्मे'त्यादौ जातेः शब्दार्थतया तस्या एकत्वादेकवचनस्य साधुत्व-सिद्धिः । सूत्रमिदम् - 'अभेदैकत्वमपि विभक्तीनामुत्पत्तौ निमित्त'मिति वचनस्यापि ज्ञापकम्[9] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । नहि द्रव्यधर्मेण संख्यैकत्वेन जातेः सम्बन्धः संभवति । ज्ञापिते चास्मिन् वचने अभेदैकत्वमादाय पाक्षिकं बहुवचनं विधातुं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु पचतोरूपं पचन्तिरूपमित्यत्राभेदैकत्वमादाय विभक्ति - सिद्धिः । अस्य वचनस्यासत्त्वे हि नात्र विभक्तिरुत्पद्येत् ।

---

1. 'क्तक्तवतू निष्ठा' - अष्टा. 1/1/26 ।
2. 'सारङ्गः पक्षिविशेषः स जग्धो भक्षितो ययेति विग्रहे बहुव्रीहौ रूपमिदम् ।
3. वा. का. 2/2/36 ।
4. अनेन हि – "जात्यादिभ्यो निष्ठान्तं परमुच्यते, तेन तद्व्याख्यानं कर्त्तव्यम् । तत्रेदं व्याख्यानम् - सारङ्गजग्धी - मासजाता - सुखजातादयः शब्दाः आहितादेराकृतिगणत्वात् तदन्तःपातिनः, तेन जातिकालसुखादिभ्यो निष्ठान्तं परं भवतीती"त्युक्तम् न्या . 2/2/36।
5. व्या. म. भा. 2/2/2/36 ।
6. अष्टा. 1/2/58 ।
7. तथाहि – "तत्र जातिपक्षाश्रयणे 'जात्याख्यायामेकस्मिन्.' (1/2/58) इति सूत्रं लिङ्ग"-मित्याह पु. दे. ल. प. वृ. प. पृ. 139 ।
8. "द्रव्यं गुणस्तथाकर्म सामान्यं सविशेषकम् । समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः ॥" – । कारिकावली करि. 1 ।
9. "अभेदैकत्वमपि विभक्तीनामुत्पत्तिनिमित्तमिति । अत्र जात्याख्या यामेकस्मिन्निति (1/2/58) जात्येकत्वे पाक्षिकं वहुवचनं विधानं ज्ञापकम् । द्रव्यधर्मेण हि संख्यैकत्वे हि जातेरयोगादिति ङ्याप्सूत्रे (4/1/1/) रक्षितः । तथा च पचतोरूपं पचन्तिरूपमित्यभेदैकत्वे संख्या व्युत्पत्त्यर्थमारोपिता दृश्यते" इत्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62 ।

## 'ढकि लोपः'[1]

सूत्रमिदं 'भवति पितृष्वसुर्ढक्' - इति वचनस्य ज्ञापकम्[2] । यतोऽस्य वचस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – 'पैतृष्वसेयः[3] 'इत्यत्र अकारस्य ढकि परे लोपार्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । नहि पितृष्वसृशब्दादपत्ये केनापि सूत्रेण ढक्प्रत्ययः प्राप्नोतीति[4] ढकोऽभावात् पितृष्वसुरन्त्य-लोपार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने पितृष्वसृशब्दाद्ढकः सुलभतया स्वांशे सूत्रमिदं चरितार्थं भवति । ज्ञापितस्यास्य वचनस्यान्यत्र फलं नास्तीति 'पैतृष्वसेयः' इत्यस्य साधुत्वमेव फलं बोध्यम् ।

भट्टनागेशस्तु ज्ञापकमिदं शुभ्रादिषु[5] मातृष्वसृशब्दस्य पाठं ज्ञापयति, अथवा 'स्त्रीभ्यः[6]' - इत्यर्थग्रहण'मित्येव वचनं ज्ञापयतीति भाष्याशयं मनुते[7] ।

## 'तत्प्रत्यनुपूर्वमीपलोमकूलम्'[8]

सूत्रमिदं 'साध्यस्वभावापि क्रिया प्रार्थनाध्यवसानादिभिः क्रियां प्रति साधनत्वेना-श्रीयते' इति वचनस्य ज्ञापकम्[9] । यतोऽस्य वचनस्याभावे क्रिया विशेषणकर्म-

---

1. तथाहि –
   (क) "केन विहिते पितृष्वसुर्ढकि लोप इत्युच्यते? एतदेव ज्ञापयति - भवति पितृष्वसुर्ढगिति - यदयं ढकि लोपं शास्ती"त्याह प. व्या. म. भा. 4/1/4/133 ।
   (ख) कथं पुनरिह ढक् प्रत्ययः? एतदेव ज्ञापकं ढकोऽभावस्ये"त्याह जया. का. 4/1/133 ।
   (ग) यदेतत् पितृष्वसृशब्दं प्रति ढको निमित्तत्वेनाश्रयणम्, एतदेव पितृष्वसृशब्दात् तस्याभावं ज्ञापयति । नह्यसतो निमित्तभावा उपपद्यते" – इत्याह जि. बु. न्या. 4/1/133 ।
   (घ) "अतएव ज्ञापकाड् ढक्" - इत्याह भ. दी. वै. सि. कौ. अपत्याधिकारप्र. पृ. 598 ।
   (ङ) "ढकि लोपः' (सू. 4/1/133) । एतदेव ज्ञापयति पितृष्वसुर्ढक् इती"त्याह एन्. एस. रामा. ज्ञा. सं. प. 1, पृ. 165 ।
2. पितृष्वसुरपत्यं पुमानित्यर्थे ज्ञापितवचनाड्ढकि 'ढकि लोपः' - अष्टा. 4/1/133, इत्यन्त्यस्य अकारस्य लोपे ढस्य एयादेशे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. स्त्रीप्रत्यान्तत्वाभावात्, शुभ्रादिषु पाठाभावाच्च क्रमशः 'स्त्रीभ्यो ढक्'- अष्टा. 4/1/120, - 'शुभ्रादिभ्यश्च' - अष्टा. 4/1/1/123, इत्यनयोः प्राप्तिरत्र नास्तीति भावः । ।
4. अष्टा. 1/2/58 ।
5. 'शुभ्रादिभ्यश्च' - अष्टा. 4/1/123, इति सूत्रोक्तशुभ्रादिगणे' इत्यर्थः ।
6. 'स्त्रीभ्यो ढक्' - अष्टा. 4/1/120, ।
7. अनेन हि – "भाष्ये - एतदेवेति । शुभ्रादिषु तत्पाठः कल्पनीय इति भावः । 'ऋष्यन्धके'ति सूत्रोक्तमतान्तररीत्या 'स्त्रीभ्य' इति वा । अनेन ज्ञापकेन 'स्त्रीभ्य' इत्यर्थग्रहणमित्येव ज्ञाप्यत इति बोध्य" मित्युक्तम् - उद्‌यो. 4/1/4/133,।
8. अष्टा. 4/4/28, ।
9. तथाहि – "एवं तर्हि 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' (4/4/28) इति क्रियाविशेषणकर्म-द्वितीयान्ताट्ठग्विधानं ज्ञापयति साध्यस्वभावापि क्रिया प्रार्थनाध्यवसानादिभिः क्रियां प्रति साध्यत्वेनाश्रीयते'-इतीत्याह पु. दे. ल. प. वृ. प. 59 पृ. 138 ।

द्वितीयान्ताड्ढग्विधायकमिदमनुपपन्नम् । 'प्रतीपं[1] वर्तते प्रातीपिकः इत्याद्यर्थमारब्धं हीदं सूत्रं वचनमेतद् विना कथमुपपद्येत? क्रियानिमित्तस्य कर्मत्वं वक्तुमशक्यम् । यतो निमित्तं सिद्धस्वभावं, क्रिया च साध्यस्वभावेति कथं कर्म स्यात् । ज्ञापिते चास्मिन् वचने सिद्धस्वभावाया अपि क्रियायाः साधनत्वेनाश्रयितुं शक्यतया कर्मत्वमुपपद्यत इति सूत्रमिदमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'मृदु पचति' 'शोभनं पचती'त्यादौ साध्यक्रिया विशेषणानां मृद्वादीनां कर्मत्वसिद्धिः । अन्यथा सिद्धस्वभावस्य साध्यस्वभावायाः क्रियाया विशेषणत्वासम्भवेन कर्मत्वमत्र न सिद्ध्येत् । साध्यस्वभावाया अपि क्रियायाः साधनत्वेनाश्रयणे हि तत्र मृद्वादीनां विशेषणत्वं सम्भवति ।

## '[2]तरप्तमपौ घः'

सूत्रमिदं' 'प्रकर्षार्थमन्तरेण क्वचित्स्वार्थेऽपि तरबस्ती'ति वचनस्य ज्ञापकम्[3] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तरप्तमब्विधावेव[4] [5]'तौ स'दितिवत् 'तौ

---

" 'साध्यस्वभावोऽपि धात्वर्थः प्रार्थनाध्यवसानाभ्यां कर्म भवती'ति - अस्यार्थक्रियाविशेषण-कर्म द्वितीयान्तात् ठग्विधानार्थं तत्प्रत्यन्ववपूर्वमित्यादिसूत्रं (4/4/28) ज्ञापकम् । प्रार्थनं-चेच्छैवेति 'धातोः कर्मण' इत्यादिसूत्रे (3/1/7) साध्योऽपि धात्वर्थः कर्मतया निर्दिष्टः" - इति चाह पु. दे. ज्ञा. समु. षोडशे ठकूपादे पृ. 78 ।

1. प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः 'ऋक्पूरब्धूःपथामानक्षे' - अष्टा. 5/4/74, इत्यकारः समासान्तः ततः द्व्यन्तरुपसर्गेभ्योऽप ईत्' - अष्टा. 6/3/96 इतीत्वे रूपमिदम् ।
2. अष्टा. 1/1/22।
3. तथाहि –
   (क) "आतिशायनिकप्रत्ययप्रकरण एव 'तादी घः' 'पितौ घः' इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं - 'स्वार्थेऽपि तरबस्ती' - ति सूच नार्थम् । तेन अल्पा' 'चूतरमिति सिद्धं भवतीत्याहु"रित्याह कै. प्रदी. 1/1/5/21 ।
   (ख) तरप्तमब्विधावेव तौ सदितिवत् (3/2/127) तौ घः, तादी घः, पितौ घः, पिद्घः इति वा वक्तव्ये प्रकरणापकर्षेण तरप्तमपौ घः' (1/1/22) इति करणं ज्ञापयति - 'प्रकर्षार्थमन्तरेण क्वचित् स्वार्थेऽपि तरबस्तीति । तेनाल्पाचूतरम् (2/2/34), लोपश्च वलवत्तरः (महाभाष्यम्) इति सिद्ध्यति इति घसंज्ञासूत्रे कैयटः '- इत्याह पु. दे. ज्ञा. समु. प्रथमेपादे पृ. 57 ।
   (ग) "आतिशायनिकप्रकरण एव तादी घः, पितौ घति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणमन्योऽपि तरबस्तीति सूचनार्थम्, तेन, 'अल्पाचूतरम्' 'लोपश्च वलवत्तरः' इत्यादौ स्वार्थे तरप् सिद्धो भवती"त्याह ह. मि. पदम. 1/1/22 ।
   (घ) "अस्मिन्नेवातिशायनिकप्रकरणे' तादी घः' 'पितौ घः' इति वा वतव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तेन 'अल्पाचूतरं' 'लोपश्च वलवत्तरः' इत्यादि सिद्धम् । अल्पाजेव ह्यल्पाचूतरम् । तत्त्वत्र द्वयोरेकस्याति-

घः' 'तादी घः' 'पितौ घः' पिद्घः' – इत्यन्यतमलघुन्यासकरणेनैव हि तरप्तमपोःसंज्ञा सुलभा । ज्ञापिते चास्मिन् वचने स्वार्थिकस्य तरपो घसंज्ञा, प्रकरणापकर्षेण 'तरप्तमपौ घः[1] 'इति न्यासं विना न सिद्ध्यतीति स्वार्थिक – तरपो घसंज्ञार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अल्पाच्तरम्'[2] - इति पाणिनेः 'लोपश्चबलवत्तरः'[3] -इति पतञ्जलेः प्रयोगयोः साधुत्व-सिद्धिः । अस्य वचनस्यासत्त्वे हि नैतयोः साधुत्वं सिद्ध्येत् । नह्यत्र तरप् द्वयोरेकस्यातिशयविवक्षायां सम्भवति । यतः सा विवक्षा नेहास्ति । 'अल्पाच्तर-'[4] मित्यत्र द्वयोरेकस्यातिशयविवक्षायां तरबभ्युपगमे हि 'शिवकेशवौ'[5] - इत्यादि-सिद्धावपि [6]'शङ्खदुन्दुभिवीणाः' - इत्यादि न सिद्ध्येत् । अतोऽत्र अल्पाजेव अल्पाच्तरमिति स्वार्थिकस्तरबिति स्वीक्रियते ।

---

शयविवक्षायां तरप् । अन्यथा 'शिवकेशवौ' इत्यादि - सिद्धावपि 'शङ्खदुन्दुभिवीणाः 'इत्यादि न सिद्ध्येदित्याहुः" – इत्याह ज्ञा. भि. त. बो. प्राग्घितीय प्र. पृ. 763 - 764 ।

(ङ) "आतिशायनिकप्रत्ययप्रकरणान्ते, 'पितौ घः' 'तादी घः' इति वा वक्तव्ये प्रकरणान्तरे पृथग्गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तस्य आतिशायनिक-प्रकरणबहिर्भूतस्य सत्त्वे तत्संग्रहणार्थं प्रकरणान्तरे सूत्रकरणस्यावश्यकत्वादित्याहुः । तेन 'अल्पाच्तरं' 'लोपश्च बलवत्तरः 'इत्यादिसिद्ध"मित्याह वासु. दी. वा. मनो. प्राग्घितीय प्र. पृ. 763 ।

(च) 'तरप्तमपौ घः (सू. 1/1/22) । आतिशायनिकप्रकरणे 'तादी घः 'पितौ घः इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तेन 'अल्पाच्तरम्, नत्वत्र द्वयोरेकस्यातिशयविवक्षायां तर"बित्याह एन्. एस्. रामा. ज्ञा. सं. परि., 2, पृ. 202 ।

4. 'अतिशायने तमबिष्ठनौ' - अष्टा. 5/3/55, 'तिङश्च' - अष्टा. 5/3/56, 'द्विवचनविभज्योपपदे तरबीयसुनौ' -अष्टा. 5/3/57 - इति प्रकरणे इत्यर्थः ।
5. अष्टा. 3/2/127 ।

1. अष्टा. 1/1/22 ।
2. अष्टा. 2/2/34 ।
3. व्या. म. भा. 1/1/2 हयवरट् - मा. सू. ।
4. अष्टा. 2/2/34 ।
5. शिवश्च केशवश्चेत्यर्थे 'चार्थे द्वन्द्वः' - अष्टा. 2/2/29, इति द्वन्द्वसमासे शिवस्य 'अल्पाच्तरम्' - अष्टा. 2/2/34, इति प्राक्प्रयोगः ।
6. शङ्खश्च दुन्दुभिश्च वीणाचेत्यर्थे 'चार्थे द्वन्द्वः 'अष्टा. 2/2/29, इति द्वन्द्वसमासे 'अल्पाच्तरम्' - अष्टा. 2/2/34, इति शङ्खस्य प्राक्प्रयोगः ।

## [1]'तोः षि'

ष्टुत्वप्रतिषेधसूत्रमिदं [2]'ष्टुनाष्टुरित्यत्र निमित्त-कार्यिणोर्यथासंख्यमनुदेशोने'[3]ति वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावेऽत्र निमित्तकार्यिणोर्यथासंख्यमनुदेशो दुर्वार इति [5]'सन्‌षष्ठ'इत्यत्र ष्टुत्वं न प्राप्नोतीति ष्टुत्वप्रतिषेधार्थमारब्धव्यमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने सन्‌षष्ठ इत्यत्र षकारयोगेऽपि नकारस्य ष्टुत्वं प्राप्नोतीति तत्प्रतिषेधाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'रामष्टीकते' 'पेष्टे'त्यादिप्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि षकारयोगे तकारस्यात्र ष्टुत्वाप्राप्त्या नैतेषां साधुत्वं सिद्ध्येत् ।

## 'त्रेस्त्रयः'[6]

सूत्रमिदम् [7]'अबाधकान्यपि निपातनानि भवन्ती'ति परिभाषाया

---

1. अष्टा. 8/4/43 ।
2. अष्टा. 8/4/41 ।
3. 'यथासङ्ख्यमनुदेशः समानाम्' - अष्टा. 1/3/10
4. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति - नेह संख्यातानुदेशो भवतीति - यदयं 'तोः षी'ति प्रतिषेधं शास्ती"त्याह पत. व्या. म. भा. 8/441 ।
   (ख) अत्रापि संख्यातानुदेशाभावस्य 'तोः षि' इति प्रतिषेधो ज्ञापकः । यद्यत्रापि निमित्तं प्रतिसंख्यातानुदेशः स्यात्, षकारेण सन्निपाते तवर्गस्य ष्टुत्वमेव न प्राप्नोतीति । 'तोः षि' इति प्रतिषेधं न कुर्यात्; कृतश्चासौ, अतः स एव लिङ्गमिह संख्यातानुदेशा-भावस्ये"त्याह जि. बु. न्या. 8/4/41 ।
   (ग) "ष्टुनाष्टु'रित्यत्र' (8/4/41) 'स्तोः श्चुना श्चु' रित्यत्र (8/4/40) योगे यथासंख्यं न भवति 'तोः षि' 'शा'दिति (8/4/43 - 44) निषेधात् ज्ञापका"दित्याह पु. दे. ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे पृ. 100 ।
   (घ) 'अत्रापि 'तोःषि' इति प्रतिषेधान्निमित्ति-निमित्तयोः संख्यातानुदेशो न भवती"त्याह ह. मि. पदम. 8/4/41 ।
   (ङ) "इहापि कार्यिनिमित्तयोर्यथासंख्यं न । 'तोः षि' (पा. सू. 8/4/43) इति ज्ञापका"दित्याह भ. दी. प्रौ. मनो. हल्‌संधि-प्र. पृ. 148 ।
   (च) 'इहापि कार्यिनिमित्तयोर्यथासंख्यं न, 'तोः षी'ति ज्ञापका"दित्याह ज्ञा. भि. त. बो. हल्‌सन्धि प्र. पृ. 64 ।
   (छ) "एवमुत्तरसूत्रेऽपि - 'तोः षी'ति ज्ञापकान्न त"दित्याह भ. ना. (स्तोः श्चुनाश्चुः - 8/4/40) ल. श. शे. हल्‌सन्धि प्र. पृ. 351 ।
   (ज) ष्टुना ष्टुः (सू. 8/4/41) 'तोःषि' (सू. 8/4/43) इति प्रतिषेधो ज्ञापयति 'नेह संख्यातानुदेशो भवती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 201 ।
5. 'तोः षि' - अष्टा. 8/4/43 इति ष्टुत्वप्रतिषेधे रूपमिदम् ।
6. अष्टा. 7/1/53 ।
7. (क) पु. दे. ल. प. वृ. प. 99, पृ. 153 ।
   (ख) सी. दे. बृ. प. वृ. प. 76, पृ. 239 ।
   (ग) नी. भ. प. वृ. प. 110, पृ. 313 ।
   (घ) ह. भा. प. भास्क. प. 78, पृ. 355 ।

[1]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् ।

तथाहि लोके[2] त्रिशब्दादामि 'त्रीणा'मित्यनिष्टप्रयोगनिवृत्तये त्रयाणामित्यस्य साधुत्वाय च सूत्रमिदमारब्धम् । तच्चास्या अभावे व्यर्थम् । यतो 'निजां [3]त्रयाणां गुणः श्लौ'इत्यत्र 'त्रयाणा'मित्यस्य निपातनादेव त्रीणामित्यस्य लोकेऽसाधुत्वं 'त्रयाणा'मित्यस्य साधुत्वं चैतत्सूत्राभावेऽपि सिद्धम् । बाधकान्येव निपातनानि भवन्तीति हि भगवतोक्तम्[4] । ज्ञापितायां चास्यां लोके कदाचिदपि त्रीणामित्यस्य साधुत्वं माभूद् 'त्रयाणा'मित्यस्यैव साधुत्वं भवत्वित्येतदर्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु [5]'पुरातनः 'इत्यादि प्रयोगाणां साधुत्व-सिद्धिः अत्रहि [6]'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति निपातनस्यानयाऽबाधकत्वात् 'सायञ्चि-रम्प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च'[7] इति तुडागमः सिद्ध्यति । अस्या अभावे

1. तथाहि–
   (क) "ननु च 'निजां त्रयाणां गुणः श्लौ' इति निपातनादेव सिद्धम्, तत् किमर्थमिदमारभ्यते ? एवं सिद्धे सतीदमारभ्यमाणमेतज् ज्ञापयति - 'अबाधकान्यपि निपातनानि भवन्ति' इति, तेन पुरातनमिति सिद्धं भवति, अन्यथा 'पुराणप्रोक्तेषु' इति निपातनेन बाधितत्वान्न सिद्ध्यती"त्याह जि. बु. न्या. 7/1/53 ।
   (ख) "ज्ञापकं चात्र वृत्तिकारदर्शनग्रहाविष्टा दर्शयन्ति त्रयाणामित्यस्य सिद्धये 'त्रेस्त्रयः' (7/1/53) इति सूत्रम् । यदि बाधकान्येव निपातनानि भवन्ति तदा त्रीणामिति प्राप्ते तद्बाधकरूपेण 'निजां त्रयाणां गुणः श्लौ' (7/4/75) इत्यत्र त्रयाणामिति निपातनेनैव सिद्धिः स्यात् । यदा त्वबाधकन्यपि निपातनानि भवन्ति तदा त्रीणामिति प्रसक्त-स्याप्रयोगाय 'त्रेस्त्रयः' (7/1/53) इति सूत्रमर्थवद्भवती"त्याह पु. दे. ल. प. वृ. प. 99, पृ. 153 ।
   (ग) "ज्ञापकं चात्र त्रयाणामिति सिद्धये 'त्रेस्त्रयः' (7/1/53) इति सूत्रम् । यदि हि बाधकान्येव निपातनानि स्युस्तदा' निजां त्रयाणाम्.' (7/4/75) इति सिद्धं स्यात् । यदात्वबाधकान्यपि निपातनानि भवन्ति तदा त्रीणामिति प्रयोगनिवृत्त्यर्थं 'त्रेस्त्रयः' (7/1/53) इति सूत्रमर्थवद् भवती"त्याह सी. दे. बृ. प. वृ. प. 764, पृ. 239 ।
   (घ) "ज्ञापकमत्र 'त्रेस्त्रयः' (7/1/53) इति सूत्रम् । यदि हि बाधकान्येव निपातनानि भवेयुस्तर्हि 'निजां त्रयाणां (7/4/75) इति निपातनादेव त्रयाणामिति सिद्ध्यतीति किं तेन । उक्तं च कातन्त्रविस्तरेऽपि - 'पुराणः शेषे वा पुराणः पुरातनः 'इती"त्याह ह. भा. प. भास्क. प. 78, पृ. 355 ।
2. वेदे तु 'त्रीणा'मित्यपि प्रयोगो भवत्येव साधुः । यतः 'सर्वे विधयश्छन्दसि विकल्प्यन्ते । तदुक्तं जयादित्येन - 'त्रीणामित्यपि छन्दसीष्यते-'त्रीणामपि समुद्राणा'मितीति, का. 7/1/53 ।
3. अष्टा. 7/4/75 ।
4. व्या. म. भा. 1/1/6/26 ।
5. पुरा भवमित्यर्थेऽव्ययात् पुराशब्दात् 'सायञ्चिरम्प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च - अष्टा. 4/3/23 - इत्यनेन ट्यौ ट्युलि वा प्रत्यये कृते तुडागमे पुरात् यु' इत्यवस्थायां 'युवोरनाकौ' - अष्टा. 7/1/1. इति योरनादेशे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् सिद्ध्यति ।
6. अष्टा. 4/3/105 ।
7. अष्टा. 4/3/23 ।

हि 'बाधकान्येव निपातनी'त्यनया[1] परिभाषया निपातनस्य नित्यं बाधकत्वेन [2]'पुराण'इति तुडभावनिपातनात्तुडिह न सिद्ध्येत् । तथा सति 'दधतः [3]पुरातन-मुनेर्मुनिताम्' इति भारवेः [4]'पुरातनीर्नदीः' इति च माघस्य प्रयोगौ नोपपद्येताम् ।

अत्र च 'पुरातनमुनेर्मुनिता'मिति 'पुरातनीर्नदी'रिति च प्रमादपाठावेतौ गतानुगतिकतया कवयः प्रयुञ्जते, न तेषां लक्षणे [5]चक्षु'रिति भागवृत्तिग्रन्थो[6] न युक्तः यतः पुराण-पुरातनयोः साधुत्वं कैयट[7] - वामनाभ्यां[8] स्वीकृतम् । हरि - भास्करेणपि[9] तदनेकधा निरूपितम् । अत्र – 'अन्येत्वाहुः, नेयं परिभाषा, नापि भाष्यकारस्य वचनम्' । 'बाधकान्येव निपातनानि'इति सर्वादीनी'ति सूत्रे भाष्ये स्थितमिति सीरदेवेनोद्धृतं[10] केषांचन[11]मतमपि न स्थाने । यतस्ते प्रष्टव्याः किमिदं परिभाषात्वम् ? परिभाषापदव्यवहार्यत्वं तत्त्वमिति चेत् 'अबाधकान्यपि निपातनानी'- त्यत्रापि तदक्षुण्णम् । तथा च भाष्यकारानुक्तत्वेऽपि न क्षति''रिति हरिभास्करेणोक्तं[12] न युक्तमिति [13]भट्टनागेशो मनुते । यतः पुरातनशब्दस्य लोके साधुत्वार्थं वृत्तिकृतोक्तम् 'अबाधकान्यपि निपातनानी'ति भष्यविरुद्धम् । 'सर्वादीनि

---

1. (क) नी. दी. प. वृ. प. 109, पृ. 312 ।
   (ख) भ. ना. प. शे. प. 199, पृ. 355 ।
   (ग) शेषा. प. भास्क. प. 102, पृ. 457, 'बाधकानि निपातनानि' इति स्वरूपमाह ।
2. 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' - अष्टा. 4/3/105, 'पुराण' इति निपातनात्तुडभाव इति चाह वाम. का. 4/3/105 ।
3. किराता. 6/19 ।
4. शिशु. 12/60 ।
5. अयं भागवृत्तिग्रन्थः सीरदेवेनोद्धृतः बृ. प. वृ. प. 76, पृ. 239 ।
6. 1/1/26 ।
7. अनेन हि – 'पुराणशब्देन पुरातनशब्दस्य वाधः प्राप्तः पृषोदरादित्वान्न भवती'त्युक्तम् प्रदी. 1/1/6/26 पृ. 322 ।
8. अनेन हि - 'पुराण इति तुडभावः । न वात्यन्तबाधैव, तेन पुरातन इत्यपि भवती'त्युक्तम् का. 4/3/105 ।
9. अनेन हि - 'केचित्तु पुरा अतनमस्यास्तीति पुरातनः । पुरातनीत्यत्र तु अतनमस्या अस्तीति अतना । सैव अतनी ताः पुरातनीरिति व्याचक्षते । अन्ये तु 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (4/3/24) इत्यत्र 'विभाषे'ति योगं विभज्य योगविभागस्य इष्टसिद्ध्यर्थतया पुराशब्दाद्युप्रत्ययस्य तुटो विकल्पेन विधानात् पुरातनेति साधयन्ति । पृषोदरादित्वात् (6/3/109) पुरातनः इति कैयटोऽपि साधुत्वं मन्यते''इत्युक्तम्, प. भा. स्क. प. 73, पृ. 355 - 356 ।
10. बृ. प. वृ. प. 76, पृ. 239 ।
11. भागवृत्ति - पुरुषोत्तमदेवयोरात्मनश्च ।
12. द्रष्टव्यम् - प. भास्क. प. 78, पृ. 356 ।
13. अनेन हि बाधकान्येव निपातनानि । तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् । पुराणप्रोक्तेष्विति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् । पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये । 'अबाधकान्यपि निपातनानी'ति भाष्यविरुद्धमित्युक्तम् - प. शे. प. 119, पृ. 355 ।

सर्वनामानी'ति सूत्रे भाष्ये हि 'बाधकानि निपातनानी'त्यभ्युपगमे 'अपरस्पराः क्रियासातत्ये'इति निपातनात् समो मस्य लोपेन सततशब्दस्य लोके साधुत्वेऽपि सन्ततशब्दस्य लोकेऽसाधुत्वापत्तिरित्युक्त्वा 'समो वा-हिततयो'रिति यत्नान्तरस्वीकारेण समाधानं कृतम् । 'अबाधकानी'त्यस्य सत्त्वे तु तेनैव सन्तत शब्दस्यापि साधुत्वसिद्धौ समोवेति वचनारम्भेण समाधानमसंगतं स्यादिति भाष्यविरोधः स्पष्ट एवेति भट्टनागेशस्याशयः । न च 'श्रावणी'ति प्रयोगस्यासाधुत्वापत्तिर्निपातनस्याबाधकत्वे हि साधुत्वमस्य संभवति । [1]'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः 'इत्यनेन हि टाबन्त एव श्रवणाशब्दः पौर्णमास्यां निपातित इति शङ्क्यम् । यतः श्रावणीत्यस्यापि पृषोदरादिगणे[2] पाठं स्वीकृत्य 'पृषोदरादीनि[3] यथोपदिष्टमित्यनेन साधुत्वं सुलभम् ।

शेषाद्रिरपि[4] भट्टनागेशसिद्धान्तं स्वीचकार ।

इत्थमियं ज्ञापकसिद्धाप्यनन्यथासिद्ध-फल-शून्यत्वेन नाङ्गीकार्येति निश्चीयते ।

## [5]'देवब्रह्मणोरनुदात्तः'

सूत्रमिदं [6]''नवसूत्रात्मकं काण्डमुदात्तादनुदात्तस्य स्वरितः इत्यतः पर''मिति वचनस्य [7]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – देवा ब्रह्माण आगच्छत' - इत्यत्र 'देवाः' 'ब्रह्माणः' 'इत्यनयोः [8]'आमन्त्रितस्य चे'ति सूत्रेण

---

1. अष्टा. 4/2/23 ।
2. 'पृषोदर, पृषोत्थान, बलाहक, जीमूत, श्मशान, उलूखल, पिशाच, वृसी, मयूर,'- इति पृषोदरादिराकृतिगणः ग. पा. 6/2/90 ।
3. अष्टा. 6/2/90 ।
4. अनेन हि – ''अबाधकान्यपि निपातनानि (पुरु. परिवृत्ति परि. [illegible]) इति तु भाष्यविरुद्ध''मित्युक्तम् प. भास्क. प. 102, पृ. 458 ।
5. अष्टा. 1/2/38 ।
6. 'तस्यादित उदात्तमर्धह्रस्वम्' - 'एकश्रुति दूरात्सम्बुद्धौ' - 'यज्ञकर्मण्यजपन्यूङ्खसामसु' -'उच्चैस्तरां वा वषट्कारः' विभाषाछन्दसि' - 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' - 'देव-ब्रह्मणोरनुदात्तः' 'स्वरितात्संहितायामनुदात्तानाम्' - 'उदात्त-स्वरितपरस्य सन्नतरः' - अष्टा. 1/2/32, 33, 34, 35, 36, 37, 38, 39, 4॰
7. तथाहि–
   (क) ''देवब्राह्मणयोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । यद्येतज् ज्ञापयते, स्वरितोदात्तात्परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति । न ब्रूमो देवब्राह्मणयोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । किं तर्हि ? परमेतत्सूत्रमिती''त्याह पत. व्या. म. भा. 1/2/1/32 ।
   (ख) ''तस्यादितः (सू. 1/2/32) स्वरितस्येत्यादि देवब्रह्मणोरनुदात्तवचनं ज्ञापकम् इदं काण्डम् 'उदात्तादनुदात्तस्य स्वरित' (सू. 8/4/66) इत्यतः परमिती''त्याह श्रीना. ज्ञा. सं. 1, पृ. 37 ।
8. अष्टा. 6/1/198 ।

आदिरुदात्तो भवति, ततः [1]शेषनिघाते, तस्य [2]'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितो भवति, तस्य च स्वरितस्यानुदात्तादेशं विधातुमारब्धमिदं सूत्रम् । अस्य वचनस्याभावे हि तत्र [3]'देवब्रह्मणोरनुदात्तः' इत्यनुदात्ते कर्तव्ये [4]'उदात्तादनुदात्तस्य स्वरितः'-इति स्वरितस्यासिद्ध-[5]त्वादनुदात्त एव वर्ततें, इति पुनरनुदात्तविधायकमिदं व्यर्थम् । ज्ञापितें चास्मिन् वचने नवसूत्रात्मककाण्डान्तर्गतेन [6]'देवब्रह्मणो.' इति सूत्रेण परेण पूर्वस्य 'उदात्तादनुदात्तस्य'[7]इति स्वरितस्यासिद्धत्वं न भवतीति सर्वानुदात्तत्वं विधातुं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'इमं मे गङ्गे-यमुने सरस्वति शतुद्रु' - इत्यत्र [8]स्वरितात् मेशब्दात् परेषां गङ्गे-प्रभृतीनामामन्त्रितत्वादनुदात्तानां 'स्वरितात् [9]संहितायामनुदात्तानाम्' - इत्यनेन एकश्रुतेः सिद्धिः । अस्य वचनस्यासत्त्वे हि गङ्गेप्रभृतीनां 'स्वरितात्[10] संहितायामनुदात्तानाम्' इत्यनेन एकश्रुतौ कर्तव्यायाम् [11]'उदात्तादनुदात्तस्य स्वरितः'- इति विहितो मे शब्दस्य स्वरितोऽसिद्ध[12]: स्यात्तथा सति स्वरितात्परत्वं गङ्गेप्रभृतीनां नास्तीति नैकश्रुतिः सिद्ध्येत् ।

### [13]'द्वन्द्वे च'

सूत्रमिदं 'सर्वाद्यन्तस्यापि सर्वनामसंज्ञा[14] भवती' ति वचनस्य [15]ज्ञापकम् ।

---

1. 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158 ।
2. अष्टा. 8/4/66 ।
3. अष्टा. 1/2/36 ।
4. अष्टा. 8/4/66 ।
5. 'पूर्वत्रासिद्धम्' - अष्टा. 8/2/1 ।
6. अष्टा. 1/2/38 ।
7. अष्टा. 8/4/66 ।
8. 'उदात्तादनुदात्तस्य स्वरितः' - अष्टा. 8/4/66, इति विहितादित्यर्थः ।
9. अष्टा. 1/2/39 ।
10. अष्टा. 1/2/39 ।
11. अष्टा. 8/4/66 ।
12. 'पूर्वत्रासिद्धम्' - अष्टा. 8/2/1 ।
13. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
14. अष्टा. 1/1/31 ।
15. तथाहि –
    (क) "सोऽयं प्रतिषेधो ज्ञापयति - 'अस्ति सर्वनामसंज्ञायां तदन्तविधिः' - इतीत्याह ह. मि. पदम. 1/1/31 ।
    (ख) 'तदन्तस्यापीयं मंज्ञा । 'द्वन्द्वेचे'तिज्ञापकात् । तेन' परमसर्वत्रे'तित्रल्, 'परमभवका'-नित्यत्राऽकच्च सिद्धयती"त्याह. भ. दी. वै. सि. कौ. अजन्त पुंलिङ्ग प्र. पृ. 106 ।
    (ग) "सर्वादीनि (सू. '1/1/27) तदन्तस्यापीयं संज्ञा 'द्वन्द्वे च' (1/1/31) इति ज्ञापका"दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 203 ।

यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि - [1]'वर्णाश्रमेतराणा'मित्यादौ [2]सुड-भावाय 'वर्णाश्रमेतरे'त्यादिद्वन्द्वस्य सर्वनामसंज्ञानिषेधार्थमारब्धमिदमस्य वचनस्याभावे व्यर्थम् । न हि वर्णाश्रमेतरे'- ति द्वन्द्वस्य सर्वनामसंज्ञा[3] प्राप्नोति, यतोऽसौ न सर्वादिगणे पठितः । ज्ञापिते चास्मिन् वचने सर्वाद्यन्तस्य द्वन्द्वस्यापि [4]सर्वनामसंज्ञा प्राप्नोतीति तत्प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [5]'परमसर्वत्र' [6]'परम सर्वतः' [7]'परमभवका'नित्यत्र क्रमशः [8]त्रल् - [9]तसिल् - [10]अकचां सिद्धिः । अस्य वचनस्यासत्त्वे हि परमसर्व-परमभवतोः सर्वनाम-त्वाभावेन नैते प्रत्ययाः सिद्ध्येयुः । न चास्य वचनस्याभावेपि त्रलादिविधायक[11] - सूत्रेषु [12]'प्रातिपदिका'दित्यनुवृत्तेः सर्वनाम्नस्तद्विशेषणत्वे [13]'तदन्तविधेः 'सुलभतया तत्र त्रलादिप्रत्ययाः सुलभा इति शङ्क्यम् । यतः 'समास - [14]प्रत्ययविधौ प्रतिषेधः' - इतितदन्तविधिप्रतिषेधात्र त्रलादिविधिषु तदन्तविधिः सम्भवति । न च [15]'परमसर्वस्मै'-इत्यादिषु 'सर्वनाम्नः[16] स्मै'-इत्या[17]दिसूत्रैः [18]स्मयाद्यादेश-

---

1. 'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' इति याज्ञवल्यस्मृतौ प्रयुक्तस्य वर्णाश्रमेतराणामित्यस्य वर्णाश्च आश्रमाश्च इतरे चे'त्यर्थे 'चार्थे द्वन्द्वः' - अष्टा. 2/2/29 इति द्वन्द्वेन साधुत्वम् ।
2. 'आमि सर्वनाम्नः सुट्' - अष्टा. 7/1/52 ।
3. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
4. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
5. 'परमश्चासौ सर्वः' इत्यर्थे विशेषणं विशेष्येणबहुलम्' - अष्टा. 2/1/57, इति कर्मधारयतत्पुरुषसमासे समासप्रातिपदिकत्वाद् विभक्तेर्लुकि परमसर्वशब्दान् ङौ 'सप्तम्यास्त्रल्' - अष्टा. 5/3/10, इति त्रलि रूपम् ।
6. कृतकर्मधारयतत्पुरुषसमासात् परमसर्वशब्दान् ङसि 'पञ्चम्यास्तसिल्' अष्टा. 5/3/7, इति तसिल्प्रत्यये रूपम् ।
7. कृतकर्मधारयतत्पुरुषसमासात् परमभवत्शब्दात् 'अव्ययसर्वनाम्नामकचूप्राक्टेः' - अष्टा. 5/3/71, इत्यकचि रूपम् ।
8. 'सप्तम्यास्त्रल्'' - अष्टा. 4/3/10 ।
9. 'पञ्चम्यास्तसिल्' - अष्टा. 5/3/7 ।
10. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71 ।
11. अष्टा. 5/3/10, 5/3/7, 5/3/71 ।
12. 'ङ्याप् प्रातिपदिकात्' - अष्टा. 4/1/1, इत्यत इतिशेषः ।
13. 'येन विधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
14. वा. वै. सि. कौ. संज्ञाप्र. पृ. 20 ।
15. परमसर्वशब्दस्य पुंसि चतुर्थ्येकवचने रूपम् ।
16. अष्टा. 7/1/14 ।
17. अत्रादिपदेन 'ङसिङ्योः स्मात् - स्मिनौ' - अष्टा. 7/1/15, 'आमि सर्वनाम्नः सुट् - अष्टा. 7/1/52, इति ग्राह्यम् । परसमसर्वस्मात्, परमसर्वस्मिन् परमसर्वेषामित्यादौ हि स्माद्यादेशा दृश्यन्ते ।
18. अत्रादिपदेन स्मात् -स्मिन् - सुटो ग्राह्याः ।

सिद्धिरप्यस्य वचनस्य फलमिति शङ्क्यम् । यतोऽस्य वचनस्याभावेऽपि 'सर्वनाम्नः[1] स्मै' - इत्यादिसर्वनामकार्याणामङ्गाधिकारस्थतया[2] पदा-[3]ङ्गाधिकारे तस्य च तदन्त-स्यचे'ति परिभाषयैव तत्र त्रलादिप्रत्ययानां सिद्धिः सुलभा । नापि च 'परमसर्वकः' इत्यत्राकच्[4]सिद्धिरप्यस्य वचनस्य फलं वक्तुं शक्यम् । यतः [5]कप्रत्ययेनापि 'परमसर्वकः' इत्यस्य रूपस्य सिद्धिः सुलभा । न चास्य वचनस्याभ्युपगमे 'वर्णाश्रमेतराणा'मित्यत्र वर्णाश्रमेतरशब्दस्य समुदायस्य द्वन्द्वतया सर्वनामत्वनिषेधेऽपि[6] तदवयवस्य इतर- शब्दस्य [7]सर्वनामतया तदन्तात्परस्यामः [8]सुडापत्तिः शङ्क्या । यतः 'अवर्णान्ता- दङ्गात् परस्य सर्वनाम्नो विहितस्यामः सु'डिति सुड्विधायक- सूत्र[9]स्यार्थः [10]स्वीकृतः तथा सति प्रकृते वर्णाश्रमशब्दात् समुदायादाम् विहितः, न च स समुदायः सर्वनामसंज्ञकः, [11]'द्वन्द्वे चे'ति सर्वनामसंज्ञायाः प्रतिषेधात्, इतरशब्दस्तु [12]सर्वनामसंज्ञकः, न ततो विहित आम् इति नात्र सुटः[13] प्राप्तिः ।

## 'द्विगो[14]र्लुगनपत्ये'

सूत्रमिदं 'समासेनोक्तेऽपि तद्धितार्थे तद्धितो भवतीति वचनस्य [15]ज्ञापकम् । यतोऽस्य वचनस्याभावे व्यर्थमिदम् । तथाहि – [16]'पञ्चकपाल' - इत्यादौ

---

1. अष्टा. 7/1/14 ।
2. 'अङ्गस्य' - अष्टा: 6/4/1 ।
3. प. शे. प. 30, पृ. 147 ।
4. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71 ।
5. 'प्रागिवात् कः' - अष्टा. 5/3/70 ।
6. 'द्वन्द्वे च' - अष्टा. 1/1/31 ।
7. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
8. 'आमि सर्वनाम्नः सुट्' - अष्टा. 7/1/52 ।
9. 'आमि सर्वनाम्नः सुट्' - अष्टा. 7/1/52 ।
10. "समुदायस्यायं निषेधो नत्ववयवानाम् ।न चैवं तदन्तविधिना सुट् प्रसङ्गः, 'सर्वनाम्नो विहित-स्याऽऽमः सु'डितिव्याख्यातत्वा" दित्युक्तम् भ. दी. वै. सि. कौ. अजन्तपुंलिङ्गप्र. पृ. 115
11. अष्टा. 1/1/31 ।
12. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
13. 'आमिसर्वनाम्नः सुट्' - अष्टा. 7/1/52 ।
14. अष्टा. 4/1/88 ।
15. तथाहि –
    (क) " 'द्विगोर्वालुग्वचनं ज्ञापकं तद्धितोत्पत्तेः' । अथवा यदयं 'द्विगोर्लुगनपत्ये' इति द्विगोरुत्तरस्य तद्धितस्यलुकं शास्ति तज्ज्ञापयत्याचार्यः - 'उत्पद्यते द्विगोस्तद्धितः' इती"त्याह पत. व्या. म. भा. 2/1/3/51 ।
    (ख) "तद्धितार्थो. (2/1/51) समासेनोक्तेऽपि तद्धितार्थे तद्धितोभवति । 'द्विवगोर्लुग-नपत्ये' (सू. 4/1/88) इति द्विवगोरुतरतद्धितस्यलुगविधानात् ज्ञापका"दित्याह श्रीना. ज्ञा. सं. 2, पृ. 56 ।
16. पञ्चसुकपालेषु संस्कृतः पुरोडाश इत्यत्र 'संस्कृतः पुरोडाशः' - इत्यर्थे 'संस्कृतंभक्षाः' - अष्टा. 4/2/16, इति अणोविधानात् अणः अर्थे पञ्चन् सु कपाल सु' - इत्यनयोः

द्विगु[1]समासादुत्तरस्य अनपत्यार्थकस्य [2]तद्धितस्य लुगर्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । तद्धितार्थे द्विगुसमासोऽत्र विहितइति समासेनोक्तेऽर्थे तद्धितस्य अणादेः 'उक्तार्थानामप्रयोगः' इति न्यायेन अनुत्पत्त्या तल्लुग्वचनं हि व्यर्थम् । ज्ञापिते चास्मिन् वचने समासेनोक्तेऽप्यर्थे तद्धितस्याणादेरुत्पत्तिर्भवतीति जातस्य तद्धित- स्य लुगर्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्य वचनस्य फलं तु 'पञ्च[3]नापितिः 'इत्यादिप्रयोगाणां साधुत्वसिद्धिः । अस्यवचनस्यासत्त्वे हि 'उक्तार्थानामप्रयोगः 'इतिन्यायात् समासेनोक्तेऽर्थे तद्धितस्यानुत्पत्त्या नैतेषां साधुत्वं सिद्ध्येत् ।

### '[4]द्वितीयायां च'

सूत्रमिदम्" 'ङे [5]प्रथमयो'रित्यत्र प्रथमयोर्विभक्त्योरेव ग्रहणं न तु प्रत्यययो"रिति वचनस्य [6]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् ।

---

'तद्धितार्थोत्तरपदसमाहारे च' - अष्टा. 2/1/51, इति ततः 'संस्कृतं भक्षाः' - अष्टा. 4/2/16, इत्यणि तस्य 'द्विगोर्लुगपत्ये' - अष्टा. 4/1/88, इतिलुकि रूपमिदम् ।

1. 'संख्यापूर्वो द्विगुः' - अष्टा. 2/1/52 ।
2. अणादीनामित्यर्थः ।
3. पञ्चानां नापितानामपत्यमित्यर्थे 'तद्धितार्थ.' - अष्टा. 2/1/51, इति समासे 'अत इञ्' - अष्टा. 4/1/95, इति इञि रूपमिदम् ।
4. अष्टा. 7/2/87 ।
5. 'ङे प्रथमयोरम्' - अष्टा. 7/1/28 ।
6. तथाहि–
   (क) "यत्तर्हि 'युष्मदस्मदोरनादेशे' 'द्वितीयां चे'त्याह तज् ज्ञापयत्याचार्यो विभक्त्योर्ग्रहण'मिती'त्याह पत. व्या. म. भा. 7/1/1/28 ।
   (ख) "अथ विभक्त्योरिदं ग्रहणं न प्रत्यययोः - इति कुतोऽयं निश्चयः ? लिङ्गात् । तत् पुनर्लिङ्गम् - 'द्वितीयायां च' इत्यात्वविधानम् । तद्ध्यादेशार्थमुच्यते,अनादेशे हि 'युष्मदस्मदोरनादेशे' इत्यनेनैव सिद्धत्वात् । यदि न विभक्त्योरिदं ग्रहणम्, न च प्रत्यययोः, एवमस्यादेशार्थतोपपद्यते, नान्यथा । ननु च 'योऽचि' - इति यत्वबाधनार्थम् 'द्वितीयायाञ्च' इत्याद्वचनं स्यात् ? नैतदस्ति; तदर्थे द्विवचने यकारमेव विशेषणं विदध्याद् - 'योऽच्यद्वितीयायाम्' इति, 'योऽच्यनंचि' इति वा ब्रूयात् । अतो द्वितीयायामत्वविधानं ज्ञापकमेवैतद् विभक्तिग्रहणस्ये"त्याह जि. बु. न्या. 7/1/28 ।
   (ग) "कथं पुनर्ज्ञायते - विभक्त्योर्ग्रहणमिति ? 'द्वितीयायां च' इत्यात्वविधानात् । तद्ध्यादेशार्थमुच्यते, अनादेशे 'युष्मदस्नादेशे' इत्यनेनैव सिद्धत्वात् । यदि चात्र विभक्त्यो र्ग्रहणं स्यात्; एवमस्यादेशार्थतोपपद्यते । ननु च 'योऽचि' इति यत्वबाधनार्थं तत्स्यात्, यद्येतावत् प्रयोजनं स्यात्, मदोरयत्वमेवायं विशिष्य ब्रूयात्-योऽव्यापीति । आबिति प्रत्याहारः 'अनाप्यकः 'इतिवत् । यतस्तु द्वितीयायामात्वं शास्ति, ततो ज्ञायते - विभक्त्योरिह ग्रहणमितीत्याह ह. मि. पदम. 7/1/28 ।
   (घ) "ङे प्रथमयोः (सू. 7/1/28) अत्र विभक्त्योर्ग्रहणे युष्मदस्मदोरनादेशे' 'द्वितीयायां च इति ज्ञापक"मित्याह श्रीना. ज्ञा. सं. 7, पृ. 117 ।

तथाहि – यतोऽस्य वचनस्याभावे 'ङे' [1]प्रथमयोर'मिति सूत्रस्य प्रथमयोः प्रत्यययोः 'सु औ'-इत्यनयोः अमादेशः स्यादित्यर्थः स्यात्तथा सति द्वितीयांविभक्तेरमादेशा-भावात् 'त्वां' 'मा'मित्यादौ युष्मदस्मद्भ्यामनादेशरूपाया एव द्वितीयाविभक्तेः सत्त्वेन तस्यां परतः 'युष्मदस्मदोरनादेशे' इत्यनेनैवाऽऽकारादेशः सुलभ इतीदं सूत्रं तथांऽऽकाराऽऽदेशार्थमारब्धं व्यर्थम् । न च 'त्वां' 'मा'मित्यादौ 'योऽची'ति यत्व-बाधनार्थमावश्यकमिति शङ्क्यम् । यतस्तावन् मात्रप्रयोजनं यदि सूत्रस्यास्य स्यात्तदा 'योऽच्यद्वितीयायाम्' 'योऽच्यनचि' इति 'योऽच्यापी'ति वा सूत्रं कृतं भवेत् । न च तथा सूत्रं कृतमिति ज्ञापकमेवेदम् । ज्ञापिते चास्मिन् वचने द्वितीयाविभक्तेरपि तेनामादेशविधानलाभाद् युष्मदस्मद्भ्यां परा 'अम्' इति आदेशरूपैव विभक्ति-र्भविष्यतीति तस्यामनादेश इति प्रतिषेधे प्राप्ते 'त्वां' 'मा'मित्यादावाकाराऽऽदेश-विधानाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'ङे' प्रथमयोर'मितिसूत्रे 'प्रथमयोर्विभक्त्योः प्रथमयोः प्रत्यययो र्वा ग्रहण'मिति संदेहनिवृत्तिः । संदेहबीजं चात्र स्त्रीलिङ्गे पुंलिङ्गे च प्रथमयोरिति रूपस्य साम्यम् । स्त्रीलिङ्गनिर्देशे हि विभक्त्योर्ग्रहणं, पुलिंङ्ग-निर्देशे च प्रत्यययोः ।

## '[2]दीर्घात्'

सूत्रमिदं 'न दीर्घे ह्रस्वाश्रयो[3] विधिर्भवती'ति वचनस्य ज्ञापकम् । यतोऽस्य वचनस्याभावे 'वर्णैकदेशा वर्णग्रहणेन [4]गृह्यन्ते' - इति पक्षे व्यर्थमिदम् । तथाहि – [5]'चेच्छिद्यते'-इत्यादौ तुगागमसिद्ध्यर्थमारब्धमिदम् । तच्चास्य वचनस्याभावे [6]तत्पक्षे व्यर्थम् । अत्र हि एकारैकदेशस्य इकारस्य ह्रस्वग्रहणेन ग्रहणात् [7]'छेचे'त्यनेनैव तुगागमः सुलभः । ज्ञापिते चास्मिन् वचनेऽत्र 'छेचे'-[8]त्यनेन तुकोऽप्राप्त्या तत्-

1. अष्टा. 7/1/28 ।
2. अष्टा. 6/1/75।
3. तथाहि –
   (क) "आचार्यप्रवृत्ति र्ज्ञापयति - 'न दीर्घे ह्रस्वाश्रयो विधिर्भवती'ति यदयं दीर्घाच्छे तुकं शास्ती"त्याह पत. व्या. म. भा. 1/1/2 मा. सू. 3, 4 ।
   (ख) 'दीर्घाच्छे तुग्विधानात् ज्ञापकात् न दीर्घे ह्रस्वाश्रयो विधिर्भवतीती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 134 ।
4. व्या. म. भा. 1/1/2 मा. सू. 3, 4 । 'वर्णैकदेशाः = ऋकारे रेफः, एकारे च ऐकारे चाकारेकारौ, ओकारे च औकारे च अकारोकारौ, दीर्घेष्वाकारादिषु ह्रस्वा अकारादयः, ऋकारादिवर्णग्रहणेन गृह्यन्त इत्यर्थः ।
5. 'चे + छिद्यते' - इतिच्छेदः ।
6. ऋकारादिवर्णानामवयवा रेफादयः ऋकारादिग्रहणेन गृह्यन्त इति पक्ष इत्यर्थः ।
7. अष्टा. 6/1/73 ।
8. अष्टा. 6/1/73 ।

सिद्ध्यर्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [1]तत्पक्षे [2]'आलूये'त्यादौ [3]तुगापत्तेरभावः । अस्य वचनस्यासत्त्वे हि ईकारैकदेशस्य इकारस्य ह्रस्वग्रहणेन ग्रहणं तत्पक्षे दुर्वारमिति 'ह्रस्वस्य पिति [4]कृति तु'गितितुगापत्तिरत्र दुर्वारा स्यात् ।

## [5]'धातु-सम्बन्धे प्रत्ययाः'

सूत्रमिदं 'वाक्यसंस्कारकं चेदं व्याकरण'मिति वचनस्य [6]ज्ञापकम् । इदं हि 'अग्निष्टोमयाज्यस्य [7]पुत्रोभविते'त्यत्र 'भविते'ति पदान्तरसद्भावाद् भूतकाल - विहितणिनन्तस्य[8] अग्निष्टोमयाजिशब्दस्य या भविष्यदर्थता प्रतीयते तस्याः साधुत्वायारब्धम् । अस्य साधुत्वं नैतद्वचनं विना सम्भवतीति वचनस्यैतस्याभावे व्यर्थमिदम् । वाक्यस्थस्यैव 'अग्निष्टोमयाजी'त्यस्य संस्काराभ्युपगमे हि भविष्यदर्थस्य साधुतात्र संभवति । केवलाद्धि 'अग्निष्टोमयाजि' - शब्दाद् भूतकाल एव प्रतीयते । यतो 'भविते'ति पदसम्बन्धात् प्रतीयमानोऽत्र भविष्यदर्थो वाक्यार्थ एव । तदुक्तम् –

"सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम्[9]" ।। इति ।

---

1. 'वर्णैकदेशानां वर्णग्रहणेन ग्रहणं भवतीति पक्षे ।
2. आङ्पूर्वकात् 'लूञ्छेदने' धा. पा. 1484, इति लूधातोः क्त्वाप्रत्यये समासे कृत्वो ल्यपि रूपम् ।
3. 'ह्रस्वस्य पिति कृति तुक्' - अष्टा. 6/1/71 ।
4. अष्टा. 6/1/71 ।
5. अष्टा. 3/4/1 ।
6. तथाहि – "तथा च वाक्यसंस्कारकं चेदं व्याकरणमाचार्यस्याभिमतमिति धातुसम्बन्धे प्रत्यया इति (3/4/1) इति सूत्रकरणात् । तथाहि अग्निष्टोमयाज्यस्य पुत्रो भवितेति भूतविहितणिनन्तस्याग्निष्टोयाजिशब्दस्य पदान्तरसत्त्वात् प्रतीयमाना भविष्यदर्थता साध्वी यथा स्यादित्येवमर्थम् । एतच्च तदा युक्तं यदि वाक्यस्थमेवाग्निष्टोमयाजीतिसंस्क्रियते । पदसंस्कारपक्षे तु किमनेन । यतोऽग्निष्टोमयाजिशब्दात् भूतकाल एव प्रतीयते । पदव्युत्पत्तौ हि पदार्थो निमित्तम् । पदान्तरात्तु भवितेत्यस्मात् कालविपर्यये प्रतीयमानेपि प्रागुत्पन्ना पदव्युत्पत्ति र्न निवर्तते । कालभेदश्चासौ प्रतीयमानो न पदार्थः । किं तर्हि वाक्यार्थ एव । यदुक्तम् -
   'सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
   वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ।।' - इति" - इत्याह
   पु. दे. ज्ञा. समु. सप्तमे अनभिहितपादे पृ. 68 ।
7. 'सोऽस्य पुत्रो भविता योऽग्निष्टोमेन यष्टा' इत्यर्थः ।
8. 'करणे यजः' - अष्टा. 3/2/85 ।
9. अभियुक्तवचनमिदं समुपन्यस्तवान् पु. दे. ज्ञा. समु. सप्तमे अनभिहितपादे पृ. 68 ।

ज्ञापिते चास्मिन् वचने तत्र वाक्यसंस्कारकाले प्रतीयमानस्य भविष्यदर्थस्य साधुत्वाय सूत्रमिदं चरितार्थं भवति । '[1]वसन् ददर्श'त्यादीनां साधुत्वोपपत्तिश्चास्य वचनस्य फलं वक्तुं शक्यम् ।

अन्ये तु 'युष्मद्युपपदे [2]समानाधिकरणे स्थानिन्यपि मध्यमः 'इत्यारम्भो वाक्यसंस्कारकं व्याकरण'मिति वचनस्य ज्ञापकः । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थमिति मन्यन्ते । मतमिदं पुरुषोत्तमदेवेनैव समुपन्यस्तम्[3] । यद्यपि – अत्र भट्टनागेशः - "भाष्यकृतस्तु 'भविष्यत्कृत्यमासीत्' 'जनिष्यमाणः पुत्र आसी'दित्यत्र भाव्यादिशब्देऽनेन प्रत्यये आसीच्छब्दपर्यायतया युगपत्प्रयोगानुपपत्तिः, यदि 'यदियन्तंकालं भावित्वादिना व्यवहृतं तदासीदित्यन्वयस्तर्हि ज्योतिष्टोमयाजीत्येवं व्यवहरिष्यमाणो भवितेत्येवमत्रापि बोधसम्भवाद् गोमानासीदित्यत्रापि गोमानित्येवं व्यवहृत आसीदिति बोधसम्भवाद् गोमद्रूपस्यातीतत्वाद्वा भूते प्रत्ययेऽर्थाद्ग-वामप्यतीतत्वप्रत्ययसम्भवात् सूत्रं व्यर्थम् । 'वसन् ददर्श'त्यादौ च दर्शनकालिक-वासस्य वर्तमानत्वं बुद्धिस्थीकृत्य प्रत्ययः । तत्फलं च तत्समानकालत्वप्रत्ययो दर्शने, शतृस्थले क्रिययोः समानकालत्वप्रतीतेः । 'ननु चोत्पततैव वचनदोषञ्चोदिताः स्म' इति सरूपसूत्रस्थभाष्यप्रयोगस्याप्येवमेवोपपत्तिरित्याहुः" - इत्याह[4] । एवञ्च नास्य सूत्रस्य ज्ञापकत्वमस्मिन् वचने भाष्यसम्मतमिति प्रतिभाति, तथापि ज्ञानेन्द्रभिक्षुः यदस्य सूत्रस्य वैयर्थ्यमाशङ्क्य तन्निरासपुरस्सरं सूत्रस्याऽऽरम्भं [5]स्वीकरोति, तस्मा-दस्यसार्थक्याय पुरुषोत्तमदेवोक्तं वचनज्ञापकत्वमपि स्थानेऽस्य सूत्रस्येति मन्ये ।

---

1. "तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययः । वसन्ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमर्थः - इत्याह भ. दी. वै. सि. कौ. लकारार्थप्र. पृ. 375 ।
   वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ शिशु. व. 1/1
2. अष्टा. 1/4/105 ।
3. तथाहि –
   "इहान्ये युष्मद्युपपद (1/4/105) इत्यारम्भात् वाक्यसंस्कारकं व्याकरणम् ..... इत्याहुः" –ज्ञा. समु. सप्तमे अनभिहितपादे पृ. 68 ।
4. ल. श. शे. लकारार्थप्र. पृ. 375- 376 ।
5. " 'तथाहि – भाविकृत्यमासी'दित्यत्र सूत्ररीत्या 'भावि'शब्दस्य भूतकालत्वे स्वीकृते सत्यतीतं भवनमित्यर्थादासीच्छब्दस्याप्येककर्तृकमतीतं भवनमित्यर्थाद् भाव्यासीच्छब्दयोर्युगपत् प्रयोगो न स्यात्, भाविशब्दार्थस्य आसीच्छब्देनैव लाभात् । ततश्चैतावन्तं कालं भावितया व्यवहृतं तदिदानीमासीदित्यर्थोऽत्रावश्यं स्वीकर्तव्यः । स्वीकृते तु 'गोमानासी'दित्यत्रापि गोमानिति व्यवहारविषय आसीदित्यर्थोऽस्तु । 'वसन् ददर्श'त्यादौ भूते लक्षणया यथायथं लडादिः स्वीकर्तव्यः । 'सोमयाजी'त्यत्र तु भूत-एव णिनिप्रत्यये जातेऽपि भवितेति लुडन्तसमभिव्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्याध्याहारेण णिनेर्भविष्यदर्थे लक्षणया वा प्रयोगो भवेदिति किमनेन सूत्रेणेति चेत् । अत्राहुः - अध्याहारलक्षणाप्रयुक्तक्लेशं विनैव प्रायशो निर्वाहार्थः सूत्रारम्भः । नहि 'भाविकृत्यमासी'दित्यादौ क्वचिदध्याहारादिकमगत्या भवतीति सर्वत्र तत् स्वीकर्तुमुचितमिती"त्याह ज्ञा. भि. त. वो. लकारार्थप्र. पृ. 376 ।

## 'न कर्मव्यतिहारे'[1]

सूत्रमिदं 'कृद्ग्रहणे [2]गतिकारकपूर्वस्यापि ग्रहण'मिति परिभाषाया [3]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् । तथाहि–'[4]व्यावक्रोशी' '[5]व्यावलेखी' [6]व्यावहासी वर्तते'–इत्यादौ 'णचः [7]स्त्रियामञ्'इति स्वार्थेऽञ् प्रत्यये '[8]नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्'इति वृद्धिप्रतिषेध–प्रतिषेधाय ऐजागमप्रतिषेधार्थं च सूत्रमिदमारब्धम् । अस्या अभावे तु व्यावक्रोशादीनां णजन्ततदादित्वाभावेन [9]अञोऽप्राप्त्या

---

1. अष्टा. 7/3/6 ।
2. (क) व्याडिः प. सू. प. 93, पृ. 38 ।
   (ख) पु. दे. ल. प. वृ. प. 46, पृ. 132 ।
   (ग) सी. दे. बृ. पा. वृ. प. 62, पृ. 228 ।
   (घ) नी. दी. प. वृ. प. 35, पृ. 229 ।
   (ङ) ह. भा. प. भास्क. प. 64, पृ. 349 ।
   (च) भ. ना. प. शे. प. 29, पृ. 144 ।
   (छ) शेषा. प. भास्क. प. 28, पृ. 406 ।
3. तथाहि–"कृदन्तस्य शब्दस्य ग्रहणे गतिपूर्वस्य कारकपूर्वस्य च ग्रहणं भवति । कथं गम्यते इयं परिभाषास्तीति । यदयं 'व्यावक्रोशी'त्यत्र 'कर्मव्यतिहारे' (3/3/43, 7/3/6) इत्याह । कथं कृत्वा एतज् ज्ञापकं भवति । एतत् खलु सूत्रं न वक्तव्यम् । ननु चानुपदिश्यमानेस्मिन् य्वौ स्यातां 'न य्वाभ्यां पदान्ताभ्यां पूर्वौतु ताभ्यामैच्' (7/3/3) इति न दोषः । अङ्गाधिकारादिह यस्मात् प्रत्ययविधिस्तदादिप्रत्ययो गृह्यते । तत्र धात्वादिरेवाङ्गम् । व्याङो नैवाङ्गसंज्ञा । तस्मात् कर्मव्यतिहार इति न वक्तव्यम् । यद्विहितं तत्पश्यति । अस्तीयं परिभाषेति–'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्'इति । किमेतस्या ज्ञापने प्रयोजनम् । प्रयायिणे प्रयापिणः माषवापाणि व्रीहिवापाणी'ति 'प्रातिपदिकान्तनुम्विभक्तिषु च' (8/4/11) इति णत्वं सिद्धं भवती"त्याह व्याडिः प. सू. प. 93, पृ. 38 ।
4. व्यवपूर्वकात् 'क्रुश आह्वाने रोदने च' धा. पा. भ्वा. 856 इति क्रुश् धातोः 'कर्मव्यतिहारे णच् स्त्रियाम्'–अष्टा. 3/3/43 इति णच्प्रत्यये तदन्तात् 'णचः स्त्रियामञ्'–अष्टा. 5/4/14 इति स्वार्थेऽञि कृते टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः' –अष्टा. 4/1/15 इति ङीपि 'यस्येति च'–अष्टा. 6/4/148 इति अकारलोपे 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्'–अष्टा. 3/3/3 इति वृद्धिप्रतिषेधैजागमयोः प्राप्तयोः 'न कर्मव्यतिहारे'–अष्टा. 7/3/6, इति तत्प्रतिषेधे 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117 इति आद्यचो वृद्धौ स्वादिकार्येषु च कृतेषु रूपमिदं सिद्ध्यति ।
5. व्यवपूर्वकात् 'लिख अक्षरविन्यासे' धा. पा. तुदा. 1366 इति लिखधातोः 'कर्मव्यतिहारे.'–अष्टा. 3/3/43 इति णचि तदन्तात् 'णचः.'–अष्टा. 5/4/14 इति स्वार्थेऽञि 'टिड्ढाणञ्.'–अष्टा. 4/1/15 इति ङीपि 'यस्येति.'–अष्टा. 6/4/148 इत्यकारलोपे 'न कर्म.'–अष्टा. 7/3/6 इत्यैजागमप्रतिषेधे **'तद्धितेष्व.'**–अष्टा. 7/2/177, इति आद्यचो वृद्धौ स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
6. व्यवपूर्वकात् 'हसे हसने' धा. पा. भ्वा. 721 इति हसधातोः उपर्युक्तसूत्रैः णचि अञि अकारलोपे ऐजागमप्रतिषेधे आदिवृद्धौ स्वादिकार्येषु च कृतेषु रूपमिदं सिद्ध्यति ।
7. अष्टा. 5/4/14 ।
8. अष्टा. 3/3/3 ।
9. 'णचः स्त्रियामञ्'–अष्टा. 5/4/14 ।

'[1]तद्धितेष्वचामादे'रि वृद्धिरेव न प्राप्नोतीति सूत्रमिदं व्यर्थम् । ज्ञापितायामस्यामनया व्यावक्रोशादिभ्योऽञः प्राप्तिर्भवतीति तत्र वृद्धिप्रतिषेधप्रतिषेधाय ऐजागम-प्रतिषेधार्थं च स्वांशे सूत्रमिदं चरितार्थं भवति । यद्यप्यस्य सूत्रस्य परिभाषाया अस्या गत्यंश-मात्रस्यैव ज्ञापकत्वं युक्तम्, तथापि स्थालीपुलाकन्यायेन सम्पूर्णाया अस्या ज्ञापकत्व-मस्येति मन्ये । ज्ञापिताया अस्याः फलं तु [2]'प्रयायिणे'इत्यादौ '[3]प्रातिपदिकान्तनुम्-विभक्तिषु चे'ति प्रातिपदिकान्तनकारस्य णत्व-सिद्धिः । अस्या अभावे हि 'यायिन्' इत्यस्यैवात्र कृदन्ततदादितया 'प्रयायिन्'इत्यस्य कृदन्ततदादित्वाभावेनाप्रातिपदिक[4]-त्वात् तदन्तनकारस्यानेन णत्वं न सिद्ध्येत् । अत्र हि याधातोरेव 'बहुलमा-भीक्ष्ण्ये'इति णिनिः कृद्विधीयते । अस्याः सत्त्वे तु गतिपूर्वस्य 'प्रयायिन्' इत्यस्यापि कृदन्ततदादित्वेन ग्रहणात् प्रातिपदिकान्ततदादितयात्र नकारस्य णत्वं सिद्ध्यति ।

## 'न क्त्वा[5]सेट्'

सूत्रमिदं 'तद्भक्तस्तद्ग्रहणेन [6]गृह्यते'इति परिभाषाया [7]ज्ञापकम् । यत इदं 'देवित्वा'–इत्यादौ '[8]पुगन्तलघूपधस्यचेति'क्रियमाणस्य गुणस्य [9]'क्ङितिचे'ति

---

1. अष्टा. 7/2/117 ।
2. प्रपूर्वकात् 'या प्रापणे' धा. पा. अदा. 1049 इति याधातोः 'वहुलमाभीक्ष्ण्ये'–अष्टा. 3/2/81 इति णिनिप्रत्यये 'आतो युक् चिण्कृतोः 'अष्टा. 7/3/33 इति युडागमे कृदन्तत्वात् ङेविभक्तौ 'प्रातिपदिकान्तनुम्विभक्तिषु च'–अष्टा. 8/4/11 इति प्रातिपदिकान्तनकारस्य णत्वे रूपमिदं सिद्ध्यति ।
3. अष्टा. 8/4/11 ।
4. अष्टा. 3/2/81 ।
5. अष्टा. 1/2/18 ।
6. (क) व्याडि–प. सू. प. 17, पृ. 10 ।
   (ख) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–पु. दे. ल. प. वृ. प. 18, पृ. 120 ।
   (ग) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–सी. दे. वृ. प. वृ. प. 4, पृ. 166 ।
   (घ) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–नी. दी. प. वृ. प. 4, पृ. 293 ।
   (ङ) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–ह. भा. प. भास्क. प. 4, पृ. 319 ।
   (च) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–भ. ना. प. शे. प. 12, पृ. 63 ।
   (छ) 'तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'–शेषा. प. भास्क. प. 11, पृ. 387 ।
7. तथाहि–
   (क) "यो यस्य भक्तः स तद्ग्रहणेन गृहीतो भवति । कथं ज्ञायते । यदयं 'नक्त्वा सेट्' (1/2/18) इति कित्त्वप्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । अत्र हि व्यवधानादेव किति प्रतिषेधो न भविष्यति । तस्मान्नार्थः प्रतिषेधेन । पश्यत्याचार्यः अयमिडागमः परं कितं भक्तः किद्ग्रहणेन गृह्यते इति । तस्माद् वचनम्"इत्याह व्याडिः प. सू. प. 17 पृ. 10 ।
   (ख) "अवयवस्यावयविग्रहणेन ग्रहणमिति यद्यपि न्यायसिद्ध एवायमर्थस्तथाप्यत्र 'न क्त्वा सेट्' (1/2/18) इति कित्त्वप्रतिषेधं ज्ञापकमाहुः । यदि हि इट् क्वाग्रहणेन गृह्यते तदा इटाव्यवधानाभावादेव'क्ङिति च' (1/1/5) इति गुणप्रतिषेधो नास्तीति किं प्रतिषेधेने"–त्याह पु. दे. ल. प. वृ. प. 18 पृ. 120 ।
8. अष्टा. 7/3/86 ।
9. अष्टा. 1/1/5 ।

प्रतिषेधाभावायारब्धमस्या अभावे व्यर्थम् । देवित्वेत्यादौ हि इटाव्यवधानात् स्वतः 'क्ङिति चे'ति किति प्रतिषेधो न प्राप्नोतीति कित्त्वप्रतिषेधसूत्रमिदं व्यर्थम् । ज्ञापितायां चास्यां तत्र इटः क्त्वाग्रहणेन ग्रहणाद् व्यवधानाभावेन किति प्राप्तस्य गुणप्रतिषेधस्याभावाय कित्त्व-प्रतिषेध-सूत्रमिदं स्वांशे चरितार्थं भवति ।ज्ञापिताया अस्याः फलन्तु सर्वेषामित्यादिप्रयोगेषु 'आमि सर्वनाम्नः[1] सुट्' इति सुटः सुब्ग्रहणेन ग्रहणाद् [2]'बहुवचने-झल्ये'दित्येत्वस्य सिद्धिः । अस्या अभावे हि सुटा व्यवधानादत्रैत्वं न सिद्ध्येत् ।

## 'नञो [3]गुणप्रतिषेधे संपाद्यार्हहितालमर्थास्तद्धिताः'

इदं सूत्रं 'सर्व एव तद्धिताः सापेक्षाद् भवन्ती'ति वचनस्य [4]ज्ञापकम् । यतोऽदः सूत्रम् [5]'अकार्णवेष्टकिकम्' 'अच्छैदिकः[6]' '[7]अवत्सीयः' '[8]असान्तापिकः'–इत्यादौ गम्यमानगुणप्रतिषेधे वर्तमानान्नञः परे विद्यमानानां संपाद्यार्हहितालमर्थकतद्धितान्तानां क्रमशः कर्णवेष्टकिकाच्छेदिकवत्सीय-सान्तापिकशब्दानामन्तोदात्तत्वं विधातुमारब्धम् । नैतदुपपद्यते । यतो 'न कर्णवेष्टकाभ्यां सम्पादि'इत्यादि विग्रहे नञर्थप्रतिषेधापेक्षणात् निरपेक्षत्वलक्षणसामर्थ्याभावेन तत्तदर्थेषु समर्थाधिकारीयतद्धितप्रत्ययानुत्पतौ 'अकार्ण-

---

1. अष्टा. 7/1/52 ।
2. अष्टा. 3/3/103 ।
3. अष्टा. 6/2/155, 'सम्पादि, अर्ह, हित, अलम्-इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्तमानात् पराण्यन्तोदात्तानि भवन्तीति'ति सूत्रस्यार्थमाह वाम. का. 6/2/155 । सम्पाद्यर्थतद्धितान्ता नञो गुणप्रतिषेधे वर्तमानात्परेऽन्तोदान्ताः "इत्याह भ. दी. समासस्वरप्र. पृ. 687 । यस्मिन् वाक्यार्थे तद्धित उत्पद्यते स तद्धितस्य प्रवृत्तिनिमित्तं विधीयते, यथोक्तम् 'उपकारि लिङ्गमङ्गम्, साध्योऽनुपकारकस्त्वङ्गी'इति । अङ्गी गुण इति पर्यायावेतौ'गुणस्य प्रतिषेधो गुणप्रतिषेधः । एतच्च नञो विशेषणम्, गुणप्रतिषेधे चेन्नञ् वर्तत इत्यर्थः, इत्याहात्र जि. बु. न्या. 6/2/155 ।
4. (क) "आचार्यप्रवृत्तिर्ज्ञापयति–'सर्व एव तद्धिताः सापेक्षाद्भवन्तीति–यदयं नञो गुणप्रतिषेधे सम्पाद्यार्हहितालमर्थास्तद्धिता इत्याहे"त्युक्तं भगवता व्या. म. भा. 5/1/2/121 ।
   (ख) "वत्सेभ्यो न हित इत्यादौ प्रतिषेधापेक्षणात्तद्धितानुत्पत्तौ नञः परस्य संपद्याद्यर्थतद्धितान्तस्यान्तोदात्तविधानमनुपपन्नम् । तत्क्रियमाणं सामान्येन सर्वस्तद्धितो नञर्थपेक्षाद्भवती'ति ज्ञापयती"त्याह कैयटः प्रदी. 5/1/2/121 ।
   (ग) न नञ् पूर्वात्तत्पुरुषात् (सू. 5/1/121) 'नञो गुणप्रतिषेधे संपाद्यार्हहितालमर्थास्तद्धिताः' (सू. 6/2/155) इति ज्ञापकात् सर्व एते तद्धिताः सापेक्षाद्भवन्ती'त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 169 ।
5. "न कर्णवेष्टाभ्यां संपादि अकार्णवेष्टकिकं मुखम् । कर्णालङ्काराभ्यामवश्यं न शोभत इत्यर्थः । 'सम्पादिनि'अष्टा. 5/1/99 इति ठञ् ।
6. न छेदं नित्यमर्हति अच्छैदिकः 'छेदादिभ्यो नित्यम्'–अष्टा. 5/1/64 इति ठक् ।
7. न वत्सेभ्यो हितः 'अवत्सीयः 'तस्मै हितम्'–अष्टा. 5/1/5 इति छः ।
8. न सन्तापाय प्रभवति 'असान्तापिकः' । 'तस्मै प्रभवति सन्तापादिभ्यः'–अष्टा. 5/1/104 इति ठक् ।

वेष्टिकमित्यादिप्रयोगाणामसम्भवात् क्व सम्पाद्याद्यर्थतद्धितप्रत्ययान्तानामन्तोदात्तत्वमिदं सूत्रं विद्ध्यात् । ज्ञापिते चास्मिन् वचने 'अकार्णवेष्टिकमि'त्यादौ नञर्थप्रतिषेध-सापेक्षेभ्योऽपि कर्णवेष्टकादिभ्यः संपाद्याद्यर्थेषु तत्तत्तद्धितप्रत्ययानां सुलभत्वात्तदन्ते-ष्वन्तोदात्तत्वविधायकमिदं सूपपद्यते । ज्ञापितस्यास्य वचनस्य फलं तु 'न नञ्-पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः[1]' इति सूत्राकरणजन्यं लाघवम् । तथाहि अधिकारसूत्रमिदम् 'अपतित्वम्' 'अपतिता' 'अपटुत्वम्' 'अपटुता' 'अरम-णीयत्वम्' 'अरमणीयता'इत्यादिप्रयोगाणां सिद्ध्यर्थमारभ्यते । 'नञ् पूर्वादित्युत्तरस्य [2]प्रतिषेध' इति भाष्यात् 'त्वतल्विधेरूर्ध्वं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युः– चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस-एतान् वर्जयित्वे'ति सूत्रार्थः । अपतित्व-मित्यादिषु 'अपति' शब्दात् [3]'पत्यन्तपुरोहितादिभ्यो यक्' इति यक् अपटुशब्दात् 'इगन्ताच्च [4]लघुपूर्वात्'इति यत्, अरमणीयशब्दात् 'योपधाद् [5]गुरूपोत्तमाद् वुञ्' इति वुञ् च प्राप्नोति, तेषामनेन सूत्रेण प्रतिषेधे 'तस्य [6]भावस्त्वतला'विति त्वत-ल्प्रत्ययौ 'न पतिरपतिः' 'न पटुरपटुः' 'न रमणीयमरमणीय'मिति नञ्तत्पुरुषेभ्यः 'अपति' 'अपटु' 'अरमणीय' इत्येतेभ्यः सुतरां जायेते, इति सिद्ध्यन्त्यमी प्रयोगाः । ज्ञापिते चास्मिन् वचने 'न पतिः अपतिः, तस्य भावः अपतित्व'मित्यादौ नञ्तत्पुरुष-स्य सापेक्षत्वाभावेन त्वतल्भ्यामूर्द्ध्वं विहितानां क्रमशो यक्–यत्–वुञ्–प्रत्यायानाम् अप्राप्त्या तन्निषेधार्थं सूत्रमिदं नावश्यकं भवति । यतोऽत्र बाधकतद्धितानां यग्-यद्-वुञामसंभवतया त्वतल्भ्याम्–अपतित्व'मित्यादीनामिष्टप्रयोगाणां संसिद्धिः, 'न नञ्पूर्वात्'इति सूत्रं विनापि सुलभा ।

भट्टनागेशस्तु नास्य वचनस्य 'नञो गुण प्रतिषेध'इति सूत्रं ज्ञापकं, किन्तु गुणप्रतिषेधग्रहणं [7]ज्ञापक'मिति मनुते । इदमत्रावधेयम्–यदिदं भट्टनागेशसम्मतं

---

1. अष्टा. 5/1/121 ।
2. व्या. म. भा. 5/1/2/121 ।
3. अष्टा. 5/1/128 ।
4. अष्टा. 5/1/131 ।
5. अष्टा. 5/1/132 ।
6. अष्टा. 5/1/119 ।
7. 'यतोऽनेन''वत्सेभ्यो न हित इति । अत्र नञमनपेक्ष्य तद्धितं कृत्वा नञ्तत्पुरुषे उत्तरपदार्थ-सदृशोऽन्यः प्रतीयते, न तु हितत्वादिगुणप्रतिषेध इति न सूत्रोदाहरणासम्भवः । यद्यार्थी तत्प्रतीतिरस्तीत्युच्यते तदा ज्ञापकत्वासम्भवः । पूर्वं नञ्समासे तद्धितान्तोत्तरपदाभाव इति हितार्थे नञर्थप्रकृत्यर्थयोर्युगपदन्वयं विवक्ष्य पूर्वं तद्धितं कृत्वा पश्चादवयवद्वारकसामर्थ्या-श्रयेण तद्धितान्ते नञ् समासे उदाहरणं वाच्यम्, तत्र हितार्थस्य सापेक्षत्वाद्वृत्त्यप्राप्तौ ज्ञापकत्वमित्यर्थः । 'वत्सार्थे उभयविवक्षे'ति तुन युक्तं, गुणप्रतिषेधस्याप्रतीतेरिति भावः, इति ग्रन्थेन कैयटस्याभिप्रायमुपवर्ण्य, पुनः ''इदं न युक्तम्, एवं हि प्रत्ययार्थस्य सापेक्षत्वं, न प्रकृत्यर्थस्येति सापेक्षाद् भवन्तीति ज्ञाप्यार्थासङ्गतिः । किञ्च हितार्थस्य प्रधानस्य प्रतिषेध-सापेक्षत्वेऽप्यप्रधानस्य वत्सस्य न सापेक्षतेति कुतस्तद्धितानुत्पत्तिरिति । 'भवति च प्रधानस्य

गुणप्रतिषेधग्रहणं ज्ञापकं ज्ञापकसंग्रहे संगृहीतं नास्ति तन्मन्ये यज् ज्ञापकसंग्रहः केनाप्यन्येन नागेशेन रचित इति ।

## 'न[1]तिसृचतसृ'

[2]'नामी'ति दीर्घप्रतिषेधसूत्रमिदं 'संनिपातलक्षणो विधिरनिमितं तद्वि[3]घातस्ये'ति परिभाषाया [4]ज्ञापकम् । यतोऽस्या अभावे 'तिसृणां' 'चतसृणा'-मित्यत्र क्रमशः त्रिचतुर्भ्यां स्त्रियाम् आमि विभक्तौ 'त्रिचतुरोः[5] स्त्रियां तिसृचतसृ'इत्यनेन त्रिचतुरोः

---

सापेक्षस्यापि सामास'इत्यस्योपमितमिति सूत्रे न्यायसिद्धतायाः कैयटेन उक्तत्वेन वृत्त्यन्तरेऽपि प्राप्तेः, न्यायाप्राप्तौ मानाभावात् । अतएव 'पिपठिषति भोक्तुम्'इत्यादौ सन्सिद्धिः, 'भोक्तु'-मित्यस्य पठनकर्मकिच्छायामन्वयात् । 'गुणप्रतिषेधग्रहणं ज्ञापकमिति तु वक्तुं युक्तं, तस्य हि 'अगार्दभरक्षिकं' इतिप्रत्युदाहरणम् । गर्दभरक्षार्हणकर्तृभिन्न इत्यर्थः । आर्थिकगुणप्रतिषेध-सत्त्वात्प्रत्युदाहरणत्वासङ्गतिरेव, अन्यथा 'अवत्सीय' इत्यत्रापि हिताद्यर्थे नञर्थवत्सयोर्युग-पदन्वयविवक्षायामपि हितस्य धर्मित्वेन तत्र नञर्थाऽत्यन्ताऽभावाऽन्वये हिताऽभावः प्रतीयते, न गुणप्रतिषेधः । भेदार्थकत्वं तु न वाच्यवृत्त्या, अपि त्वार्थ्येवेति तस्याप्युदाहरणत्वं न स्यात् 'वत्सहितत्वाभाववा'नित्यर्थस्तु न प्रवृत्तिनिमित्तस्यान्यत्र विशेषणतायास्तदाश्रयस्यान्यत्र विशेष्य-तायाश्चदृष्टचरत्वादत्यन्तमव्युत्पन्नत्वाच्च । सूत्रन्तु गुणप्रतिषेधगम्य इत्येवं सुयोजमिति न तद्बलादीदृशव्युत्पत्त्यन्तरकल्पनावकाशः । तस्माद् गर्दभरथेन युगपदुभयविवक्षायां परत्वात्त-द्धितोत्तरं समासे प्रत्युदाहरणत्वं वाच्यम्, तदा हि 'गर्दभरथभिन्नार्हणकर्त्ते'त्यर्थ इति गुणप्रतिषेधाभावः । तत्र परत्वात्पूर्वं तद्धिते कृतेऽवयवद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेनैव समासः, न तु तदवयवेन अस्मादेव प्रतिषेधाज्ज्ञापकात् । अन्यथा तद्धितान्तस्योत्तरपदत्वा-भावाद्विध्यप्राप्तौ निषेधवैयर्थ्यं स्पष्टमेवेति''दिगित्युक्तम्–उद्यो. 5/1/2/121 ।

1. अष्टा. 6/4/4 ।
2. अष्टा..6/4/3 ।
3. (क) व्याडिः प. सृ. प. 10, पृ. 7 ।
   (ख) पु. दे. ल. प. वृ. प. 10, पृ. 117 ।
   (ग) सी. दे. बृ. प. वृ. प. 64, पृ. 229 ।
   (घ) नी. दी. प. वृ. प. 75, पृ. 308 ।
   (ङ) ह. भा. प. भास्क. प. 66, पृ. 350 ।
   (च) भ. ना. प. शे. प. 86, पृ. 310 ।
   (छ) शेषा. प. भास्क. प. 73, पृ. 439 ।
4. तथाहि–
   (क) ''ज्ञापकं चात्र 'न तिसृचतसृ' (6/4/4) इति नामि दीर्घप्रतिषेधवचनम् । तद्धि सत्यामस्यां परिभाषायां विभक्तिनिमित्तयोः 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (7/2/99) इति ऋकारान्तयोर्विभक्तिव्यवधानकारिणं ङीपं प्रत्यनिमित्तत्वाद्दीर्घाप्राप्तौ प्रतिषेधवचन-मुपपद्यते । अपरथा तु ङीपाव्यवधानात् 'नामि' (6/4/3) इति दीर्घाप्राप्तौ ङीपश्च दीर्घादीर्घाभ्यामविशेषात् तत्प्रतिषेधवचनमनर्थकं स्या''दित्याह पु. दे. ल. प. वृ. प. 10, पृ. 117 ।
   (ख) ''ज्ञापकस्याः 'न तिसृचतसृ' (6/4/4) इति दीर्घप्रतिषेधवचनम् । तद्धि सत्यामस्यां विभक्तिनिमित्तयोः 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (7/2/99) इति अकारान्तयोर्व्यवधान-कारिणं ङीपं प्रत्यनिमित्तत्वाद्दीर्घप्राप्तौ प्रतिषेधवचनमुपपद्यते । अन्यथा तु ङीपा व्यवहि-तत्वात् 'नामि' (6/4/3) दीर्घत्वाप्राप्तेः प्रतिषेधवचनमनर्थकं स्यात् । ङीपश्च दीर्घादीर्घाभ्यामविशेषा''दित्याह सी. दे. बृ. प. वृ. प. 64, पृ. 229 ।
5. अष्टा. 7/2/99 ।

क्रमशः 'तिसृचतसृ'इत्यादेशे 'तिसृ+आम्'चतसृ+आम्' इत्यवस्थायां ङीपो[1] दुर्वारतया तद्व्यवधानात् अकारान्तस्याङ्गस्य नामी'ति दीर्घस्य प्राप्तिरेव नास्ति, ङीपश्च दीर्घादीर्घाभ्यां कश्चन विशेषो न संभवतीति दीर्घप्रतिषेधवचनमिदं व्यर्थम् । ज्ञापितायां चास्यां विभक्तिनिमित्तयोः अकारान्तयोः तिसृचतस्रोरादेशयोः स्व-स्वनिमित्तविभक्ति-व्यवधानकारितया सन्निपातविघातकं ङीपं प्रत्यनिमित्तत्वाद् ङीपोऽभावे व्यवधानाभावात् [2]'नामी'ति दीर्घप्रसक्तेः सुलभतया तत्प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति ।

ज्ञापिताया अस्याः फलं तु 'शतानी'त्यादौ विभक्तिसंनिपातेन 'नपुंसकस्य झलचः[3]' इति नुमि कृते सति नुमो विभक्तिलुकं प्रत्यनिमित्तत्वात्–'ष्णान्ताः[4] षट्'इति षट्संज्ञाया अभावः । सत्यां हि षट्संज्ञायां 'षड्भ्यो[5]लुक्'इति लुक् आपद्येत ।

न चात्र विभक्तिसापेक्षनुमो[6] बहिरङ्गत्वेन 'असिद्धं बहिरङ्गमन्तरङ्गे'[7] इति परिभाषयाऽसिद्धत्वादस्या अभावेऽपि षट्संज्ञा न स्यादिति शङ्क्यम् । संज्ञाया विधिनिमित्तकत्वेन षट्त्वस्यापि लुङ्निमित्तविभक्तिनिमित्तकत्वेनोभयोः साम्यात् । नापि 'उपदेशे नान्तस्य षटसंज्ञेति सूत्रार्थेन षट्त्वाभावोऽत्र सन्निपातपरिभाषां विनापि सुलभ इति वक्तुं शक्यम् । यतः प्रातिपदिकस्योपदेशाभावेन तादृशार्थः षट्संज्ञा-सूत्रस्यासम्भवः । नुम्-निमित्तविभक्ति-विनाश-सम्भावनया 'अकृतव्यूहाः[8] पाणिनीयाः'

1. 'अन्नेभ्योङीप्'–अष्टा. 4/1/5 ।
2. अष्टा. 6/4/3 ।
3. अष्टा. 7/1/72 ।
4. अष्टा. 1/1/24 ।
5. अष्टा. 7/1/22 ।
6. 'नपुंसकस्य झलचः'–अष्टा. 7/1/72 ।
7. (क) व्याडिः प. सू. प. 36, 79 पृ. 18, 33 ।
(ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
(ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
(घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
(ङ) ह. भा. प. भास्क. प. 71; पृ. 353 ।
(च) भ. ना. प. शे. प. 51, पृ. 184 ।
(छ) शेपा. प. भास्क. प. 42, पृ. 417 ।
8. (क) व्याडिः प. सू. प. 65, पृ. 29 ।
(ख) 'अकृतव्यूहाः पाणिनीयाः प्रवर्तितमपि शास्त्रं व्यावर्तयन्ति पु. दे. ल. प. वृ. प. 104, पृ. 155 ।
(ग) 'अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति सी. वृ. प. वृ. प.
(घ) नी. प. वृ. प. 61, पृ. 305 ।
(ङ) ह. प. भास्क प. 51, पृ. 345 ।
(च) म. ना. प. शे. प. 57; पृ. 250 ।
(छ) शेपा. प. भास्क. प. 48, पृ. 425 ।

इति परिभाषयात्र नुम् न स्यादित्यपि न शङ्कनीयम् । यतः सा न स्वीक्रियते । तस्याः स्वीकारेऽपि लुको बहिरङ्गत्वाभावेन बहिरङ्गेणान्तरङ्गनिमित्तविनाशसंभावनाया असत्त्वात्, तस्या नुम्प्रवृत्त्यभावसम्भवेनाप्रयोज्यत्वाभावाच्च तत्प्रवृत्तिरत्रासंभवा ।

हरिभास्करस्तु "न तिसृचतसृ'[1]इति दीर्घप्रतिषेधवचनस्य संनिपातपरिभाषाया ज्ञापकत्वं न युक्तम् । यतः 'सन्निपात'—परिभाषाया अभावेऽपि तिसृचतसृभ्यां स्वस्रादिपाठात् 'न षट् [2]स्वस्रादिभ्यः' इति निषेधेनैव ङीपो[3]ऽप्रवृत्त्या तद्व्यवधानाभावेन 'तिसृणां' 'चतसृणा'मित्यत्र 'तिसृ+आम्' 'चतसृ+आम्' इत्यवस्थयो 'र्नामी' ति दीर्घ-प्राप्तेर्दुर्वारतया तत्प्रतिषेधार्थं दीर्घप्रतिषेधवचनमिदं स्वत एवोपपन्नमिति[4] मनुते ।

**म. म. जयदेवमिश्रस्तु** 'स्वस्रादिषु' 'तिसृचतसृ'—पाठस्यानार्षत्वा'न्न[5]षडि'ति निषेधस्याप्राप्त्या [6]ङीपो दुर्वारतया तद्व्यवधानेन [7]'नामी'ति दीर्घाप्राप्तेस्तत्प्रतिषेधार्थ-मारब्धं 'न तिसृ चतसृ'[8] इति सूत्रं व्यर्थं सदस्या ज्ञापकमिति [9]मनुते ।

**म. म. तात्या शास्त्रीति** प्रसिद्धो रामकृष्णस्तु '[10]न तिसृचतसृ'इति सूत्रस्यैनत्परि-भाषा ज्ञापकत्वं चारु निरूप्य यद्यपि तन् निरस्तवान् तथापि 'परे तु' इत्यादिग्रन्थेन ज्ञापकत्वमस्य स्वीचकार[11] । अतोऽस्य सूत्रस्य संनिपात—परिभाषाज्ञापकत्वं निर्वि-वादं मन्ये ।

---

1. अष्टा. 6/4/4 ।
2. अष्टा. 4/1/10 ।
3. 'ऋन्नेभ्यो ङीप्'—अष्टा. 4/1/5 ।
4. अनेन हि—"सीरदेवस्तु ज्ञापकमप्याह—'न तिसृचतसृ' (6/4/4) इति दीर्घप्रतिषेधवचनम् । तद्धि सत्यामस्यां विभक्त्यानन्तर्यनिमित्तयोस्तिसृचतसृ इत्यनयोर्ङीपं प्रत्यनिमित्तत्वाद्दीर्घाऽ-प्राप्त्या उपपद्यत इति । तन्न । तिसृचतसृभ्यां स्वस्रादिपाठात् 'न षट्स्वस्रादिभ्यः' (4/1/10) इति ङीब्निषेधेनैव ङीपोऽप्रवृत्त्या 'न तिसृचतसृ' इत्यस्योपपत्तेः । प्रत्युत स्वस्रादौ तिसृचतस्रोः पाठादनित्येय"मित्युक्तम् प. भास्क. प. 66, पृ. 351 ।
5. 'न षट्स्वस्रादिभ्यः'—अष्टा. 4/1/10 ।
6. 'ऋन्नेभ्यो ङीप्'—अष्टा. 4/1/5 ।
7. अष्टा. 6/4/3 ।
8. अष्टा. 6/4/4 ।
9. अनेन हि—"न तिसृचतसृ'इति सूत्रमस्या ज्ञापकमिति सम्यक् । परिभाषाया अभावे 'तिसृना'मिति स्थिते ङीपि 'न तिसृ चतसृ' इति सूत्रं व्यर्थं सदस्या ज्ञापकम् । ज्ञापितायान्तु विभक्त्यव्यवहितपूर्वत्व-सन्निपातेन जातस्य तिस्रादेशस्य तद्विधातकङीपं प्रत्यनिमित्तत्वान् न ङीविति दीर्घवारणाय सूत्रं सार्थकम् । स्वस्रादिषु तिसृचतसृपाठस्यानर्थत्वान् 'न ष'डिति निषेधेन न सिद्धिः । तदुक्तं कृन्मेजन्त इति सूत्रे भाष्ये—"आचार्यप्रवृत्तिर्ज्ञापयति—'न तिसृच-सृशब्दान् ङीप् भवतीति यदयं 'न तिसृचतसृ'इति 'नामी'ति दीर्घप्रतिषेधं शास्तीत्युक्तम् प. शे. विजया. प. 86, पृ. 318-319 ।
10. अष्टा. 6/4/4 ।
11. अनेन हि—"केचित्तु—'न तिसृचतस्रि'ति सूत्रं ज्ञापकम् । अन्यथा 'तिसृणा'मित्यत्र तत्परिभाषा-या अभावे 'तिसृ+नाम्' इत्यवस्थायामन्तरङ्गत्वान् ङीपि तद्वैयर्थ्यापत्तिः । एतत्सत्त्वे तु

[1]हरिभास्कर-[2]भट्टनागेशौ संनिपातपरिभाषां न्यायमूलिकां मन्वाते । तत्रभवता भाष्यकृता चेयं वचनरूपेण [3]पठिता ।

सन्निपातलक्षणशास्त्रत्वं च ज्ञापिताया अस्या लिङ्गम् । इयं त्रिपाद्यां न प्रवर्तते । यतोऽसौ 'न तिसृचतसृ'[4] इति शास्त्रदेशीयत्वेन सपादसप्ताध्यायी स्थेति त्रिपाद्यां तादृशशास्त्रत्वप्रकारकज्ञानं न संभवति । [5]'मय उञो वो वे'ति त्रिपाद्यां वकारविधानं चास्यास्त्रिपाद्यामप्रवृत्तौ मानम् । यतोऽस्य वकारस्य त्रिपाद्यां विधानं 'किम्वुक्त'मित्यत्र वत्वस्यासिद्धत्वेन 'मोऽनुस्वार'[6] इत्यनुस्वाराभावाय कृतम् । त्रिपाद्यामस्याः प्रवृत्तौ त्वनयैवानुस्वारवारणे 'इको यणची'[7]त्युत्तरं 'मय उञो वो वे'ति पाठेन यणोऽनुवृत्त्या चेष्टसिद्धाविदं व्यर्थम् । संनिपातपरिभाषायास्त्रिपाद्यामप्रवृत्तौ फलं तु 'नर्तिष्यती'त्यत्र इटः[8] सकारनिमित्तत्वेऽपि 'आदेश-[9]प्रत्यययोः' इति षत्वस्य, 'धुक्षीष्ट'इत्यत्र [10]थत्वस्य दादित्वनिमित्तकत्वेऽपि भष्भावस्य[11], 'जग्धम्' इत्यत्र [12]जग्धाऽऽदेशस्य तकार-

---

प्रकृति-प्रत्यय-सन्निपात-प्रयोज्यतिस्रादेशस्य ङीपं प्रत्यनिमित्तत्वेन तदप्रवृत्त्या सूत्रसार्थक्यं स्पष्टमेव । न च 'न ष'डिति निषेधः शङ्क्यः, स्वस्रादिगणे तिसृचतसृपाठस्यानार्षत्वेन तेन तन्निषेधायोगात् । अतएव 'कृन्मेजन्त'इति सूत्रे भाष्ये 'तिस्रश्चतस्र' इत्यत्र ङीपमाशङ्क्य आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे ङीब् भवतीति । 'यदयं न तिसृचतस्रिति नामि दीर्घत्वप्रतिषेधं शास्ती' त्युक्तमिति । तन्न युक्तम्, 'तिस्रोऽतिक्रान्तानामतितिस्रिणा'मित्यत्र ङीपि' लिङ्गविशिष्ट'परिभाषया ङीबन्ते उपसर्जनत्वात् 'गोस्त्रियो'रिति ह्रस्वे 'नामी'ति दीर्घे च प्राप्ते न्यूनसमुदायापेक्षत्वेनान्तरङ्गत्वात् पूर्वं ह्रस्वे कृते प्राप्तदीर्घवारणायोक्तसूत्रस्याऽऽवश्यकत्वेन ज्ञापकत्वासम्भवात् । परे तु 'अतितिस्रा इति स्थिते 'नामी'त्यस्यापि प्रतिपदोक्तत्वरूपान्तरङ्गत्वेन नित्यत्वेन चोभयोः समत्वात् परत्वाद्दीर्घोत्तरं ह्रस्वे 'लक्ष्ये लक्षण'–न्यायेन पुनर्दीर्घप्राप्त्योक्तसूत्रस्य वैयर्थ्येन ज्ञापकत्वं सुस्थमिति प्राहुः' इत्युक्तम् प. शे. भू. ति. प. 86, पृ. 287-288 ।

1. अनेन हि "अत्र मूलं प्रसिद्धो लौकिकन्यायः' इत्युक्तम् प. भास्क. प. 66, पृ. 351, 'उपजीव्यविरोधोऽनुचितः पितुरुत्पन्नः पुत्रः पितरं न हन्यादित्युक्ते'रिति तदाशयः ।
2. अनेन हि–'उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा' इत्युक्तम् प. शे. प. 86, पृ. 311 ।
3. "संनिपातलक्षणो विधिरनिमितं तद्विघातस्येत्येषा परिभाषा कर्तव्या" व्या. म. भा. 1/1/6/39 ।
4. अष्टा. 6/4/4 ।
5. अष्टा. 8/3/33 ।
6. अष्टा. 8/3/23 ।
7. अष्टा. 6/1/77 ।
8. 'सेऽसिचिकृतचृतछृदतृदनृतः'–अष्टा. 7/2/57 ।
9. 'आदेशप्रत्यययोः'–अष्टा. 8/3/59 ।
10. 'दादेर्धातोर्घः'–अष्टा. 8/2/32 ।
11. 'एकाचो बशो भष् झषन्तस्य स्ध्वोः'–अष्टा. 8/2/37 ।
12. 'अदो जग्धिर्ल्यप्तिकिति'–अष्टा. 2/4/36 ।

निमित्तत्वेऽपि [1]धत्वस्य 'द्रक्ष्यती'त्यत्र 'षढोः कः[2] सी'ति कत्वस्य सरकारनिमित्तत्वेऽपि [3]षत्वस्य 'सञ्च्छम्भु'रित्यत्र तुकः[4] शकारनिमित्तकत्वेऽपि 'शश्छोऽ[5]ऽटी'तिच्छत्वस्य च सिद्धिः । अन्यथा नैतेषु षत्वादीनि सिद्ध्येयुः । [6]वामनस्तु 'तिसृणां' 'चतसृणा'मित्यत्र 'त्रि+आम्' 'चतुर्+आम्' इत्यवस्थयोः 'त्रि चतुरोः [7]स्त्रियां तिसृ-चतसृ'इत्यनेन 'तिसृ चतसृ'इत्यादेशयोः क्रमशः कृतयोः 'तिसृ+आम्' 'चतसृ + आम्'–इत्यवस्थयोः उभयं प्राप्नोति '[8]नुडागमः' 'अचि र[9]सऋतः' इति रेफादेशश्च तत्र [10]परत्वाद् रेफादेशे सति अनजन्तमङ्गं भवति, 'नामी'[11]ति दीर्घस्तु 'अच[12]श्चे'ति परिभाषोपस्थित्या नूनमजन्तस्य भवतीति दीर्घप्राप्त्या तत्प्रतिषेध[13]वचनमिदं व्यर्थं सत् 'अचिर ऋ त' इत्यस्मात्पूर्वविप्रतिषेधेन नुडागमो भवती'ति वचनस्य ज्ञापकम् । ज्ञापिते चास्मिन् वचने रादेशं प्रबाध्यानेन'नुटि कृते भवत्यङ्गमजन्तमिति 'नामी'ति दीर्घप्राप्तेः सुलभतया तत्प्रतिषेधार्थं कृतमिदं वचनं स्वांशे चरितार्थं भवतीति मनुते । युक्तं चेदं वामनोक्तं ज्ञापकत्वम् । अन्यथा 'सन्निपातपरिभाषा-ज्ञापनानन्तरमप्यस्य वचनस्य स्वांशे चारितार्थ्योपपादनं दुर्घटं स्यादिति मन्ये ।

### [14] 'न बहुव्रीहौ'

सूत्रमिदं [15]'ग्रहणवतेति-निषिद्धोऽपि तदन्तविधिः सर्वनामसंज्ञायामङ्गीक्रियते'[16]

---

1 'झषस्तथोर्धोऽधः'–अष्टा. 8/2/40 ।
2 अष्टा. 8/2/41 ।
3 'आदेशप्रत्यययोः'–अष्टा. 8/3/59 ।
4 'शितुक्'–अष्टा. 8/3/39 ।
5 अष्टा. 8/4/63 ।
6 अनेन हि–"इदमेव 'नामी'ति दीर्घप्रतिषेधवचनं ज्ञापकम्–'अचिरऋतः' इत्येतस्मात् पूर्वविप्रतिषेधेननुडागमो भवतीत्युक्तम् का. 6/4/4 ।
7 अष्टा. 7/2/99 ।
8 'ह्रस्वनद्यापो नुट्'–अष्टा. 7/1/54 ।
9 अष्टा. 7/2/100 ।
10 'विप्रतिषेधे परं कार्यम्'–अष्टा. 1/4/2 ।
11 अष्टा. 6/4/3 ।
12 अष्टा. 1/2/28 ।
13 'न तिसृचतसृ'–अष्टा. 6/4/4 ।
14. अष्टा. 1/1/29
15. ग्रहणवता प्रातिपादिकेन तदन्तविधिर्नास्ति' प. शे. प. 32, पृ. 153.
16. 'सर्वादीनि सर्वनामानि' अष्टा. 1/1/27

इति वचनस्य ज्ञापकम्[1] । यतोऽस्य वचनस्याभावे [2]'प्रियविश्वाये'त्यादौ सर्वनामसंज्ञायाः प्राप्तिरेव नास्तीति तत्र सर्वनामत्वप्रतिषेधार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'प्रियविश्वाये'त्यादौ सर्वनामसंज्ञा[3] प्राप्तोतीति तत्प्रतिषेधार्थमिदं सूत्रं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [4]'परमसर्वस्मै' इत्यादौ सर्वाद्यन्तस्यापि सर्वनामसंज्ञायाः सिद्धिः । अस्य वचनस्यासत्त्वे हि सर्वनामसंज्ञात्र सर्वाद्यन्तस्य न सिद्ध्येत् । तथा सति ङेप्रभृतीनां [5]स्मायाद्यादेशा न भवेयुः[6] । न चास्य वचनस्याभ्युपगमे [7]'अतिसर्वाय' [8]'भूतपूर्वाय' [9]इत्यादावुपसर्जन-

---

1. तथाहि–
   (क) "सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमादिति । कथं पुनरेतदवगतम्-अवगतस्तदन्तविधिरिति? अतएव प्रतिषेधात्, अन्यथा हि निष्फलः प्रतिषेधः स्यात् । तदन्तविध्युपगमे हि परमसर्वस्मै, उत्तमसर्वस्मै इत्यत्रापि संज्ञा यथा स्या"दित्याह जि. बु. न्या. 1/1/29
   (ख) "प्रियविश्वायेत्यादौ सर्वनामसंज्ञानिषेधार्थमारभ्यामाणं न बहुव्रीहाविति (1/1/29) वचनं 'ग्रहणवतेति निषिद्धोऽपि तदन्तविधिः सर्वनामसंज्ञायामङ्गीक्रियत' इत्यस्यार्थस्य ज्ञापकमुक्तं न्यासकृता । तेन 'परमसर्वस्मै' इत्यादिसिद्ध्यती"त्याह पु. दे. ज्ञा. समु. प्रथमे पादे पृ. 57
   (ग) "कथं ज्ञायतेऽभ्युपगतस्तदन्तविधिरिति? अतएव प्रतिषेधा"दित्याह ह. मि. पदम. 1/1/29
2. प्रियं विश्वं यस्येत्यर्थे बहुव्रीहौ 'सर्वनामसंख्योपसंज्ञोनम्' वा. वै. सि. कौ. बहुव्रीहिसमास प्र. पृ. 514 इति विश्व शब्दस्य पूर्वनिपाते प्राप्ते 'वा प्रियस्य' वा. वै. सि. कौ. बहुव्रीहिसमास प्र. पृ. 514 इति प्रियशब्दस्य पूर्वनिपाते सति प्रियविश्वशब्दात् समासप्रातिपदिकात् ततो ङेविभक्तौ .'न बहुव्रीहौ' अष्टा. 1/1/29, इति सर्वनामसंज्ञायाः चिकीर्षिते एव बहुव्रीहौ प्रतिषेधे 'ङेर्यः' अष्टा. 7/1/9 इति ङेर्याऽऽदेशे 'सुपि च' अष्टा. 7/3/102, इति दीर्घे रूपम् ।
3. 'सर्वादीनि सर्वनामानि' अष्टा. 1/1/27
4. 'परमश्चासौ सर्वः' इति कर्मधारयतत्पुरुषसमासे समासप्रातिपदिकत्वेन ङेविभक्तौ सर्वाद्यन्तस्यापि सर्वनामत्वेन 'सर्वनाम्नः स्मै अष्टा. 7/1/14 इति ङेः स्मायादेशे रूपमिदम् ।
5. 'सवनाम्नः स्मै' अष्टा. 1/1/27
6. आदिपदेन 'ङसिङ्योः स्मात्स्मिनौ' अष्टा. 'आमि सर्वनाम्नः सुट्म अष्टा. 7/1/52 इति स्मात्स्मिन्सुटः परमसर्वस्मात्, परमसर्वस्मिन्, परमसर्वेषामित्यादौ ग्राह्याः ।
7. सर्वमतिक्रान्त इत्यर्थे 'कुगतिप्रादयः' अष्टा. 2/2/18, इति सूत्रस्थेन 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकेन समासे अतिसर्वशब्दात् चतुर्थ्येकवचने रामशब्दवद्रूपमिदम् ।
8. 'पूर्वं भूतो भूतपूर्वः इत्यर्थे 'सुपे'ति योगविभागात् समासे 'भूतपूर्वे चरट्' अष्टा. 5/3/53 इति निर्देशाद् भूतशब्दस्य पूर्वनिपाते समस्ताच्चतुर्थ्येकवचने रामशब्दवद्रूपमिदम् ।
9. 'एकविभक्ति चापूर्वनिपाते' अष्टा. 1/2/44 इति सर्वपूर्वशब्दयोरत्रोपसर्जनत्वं वोध्यम् ।

सर्वाद्यन्तस्यापि सर्वनामसंज्ञाया[1] आपत्तिरिति शङ्क्यम् । यतो भगवतात्र सर्वनामत्वाभावः [2]प्रतिपादितः ।

### [3]'न मु ने'

सूत्रमिदं 'कार्यकालं [4]संज्ञापरिभाष'मिति परिभाषाया [5]ज्ञापकम् । यतोऽस्या अभावे [6]'अमुने'त्यत्र 'अमुआ' इत्यवस्थायां [7]नाभावे कर्तव्ये [8]मुभावस्य [9]'पूर्वत्रासिद्ध' मित्यनेन प्राप्तस्यासिद्धत्वस्यानेन सूत्रेण[10] निषेधेऽपि घिसंज्ञां[11] प्रति

---

1. सर्वादीनि सर्वनामानि अष्टा– 1/1/27.
2. तथाहि– "महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत्? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम् अन्वर्थसंज्ञा यथा विज्ञायेत 'सर्वादीनि सर्वनामसंज्ञानि भवन्ति, सर्वेषां नामानीति चातः सर्वनामानि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते" इत्युक्तम् व्या. म. भा. 1/1/6/26
3. अष्टा. 8/2/3
4. (क) व्याडिः प. सू. प. 50, पृ. 24
   (ख) पु. दे. ल. प. वृ. प. 106, पृ. 155
   (ग) सी. दे. बृ. प. वृ. प. 117, पृ.1267
   (घ) नी. दी. प. 118, पृ. 314
   (ङ) ह. भा. प. भास्क. प. 119, पृ. 370
   (च) भ. ना. प. शे. प. 3, पृ. 10
   (छ) शेषा. प. भास्क. प. 3 पृ. 378
5. तथाहि– 'कथं पुनर्ज्ञायते अस्त्येषा परिभाषेति । यदयं 'नमुने' (8/2/3) इत्याह । कथं कृत्वा ज्ञापकम् । अत्र हि अदश्शब्दादुतरस्य टा इत्येतस्य आङोनाऽस्त्रियाम्' (7/3/120) इति क्रियमाणे नादेशे घिलक्षणो मुभावः सिद्धः । तत्र 'नमुने' (8/2/3) इत्यनेन मुभावस्य नाभावे क्रियमाणे 'पूर्वत्रासिद्धम्' (8/2/1) इति प्राप्ते सिद्धत्वमुच्यते । स तु नाभावः क्रियमाणेऽप्यस्मिन् सूत्रे न प्राप्नोति । कथम् । यद्यप्ययं मुभावो नाभावसूत्रं प्रतिसिद्धः घिसंज्ञां' तु प्रत्यसिद्धः । तत्र मुभाव एव नास्ति । कुतो घि संज्ञा घिसंज्ञाभावात्कुतो नाभावः । तस्मात् 'नमुने' (8/2/3) इत्यत्र घिसंज्ञायां चेति वक्तव्यम् । न चोच्यते । तज् ज्ञापयत्याचार्यः । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । 'अदसोसेर्दादुदोमः (8/2/80) इति उपस्थितमिदं भवति । 'शेषोघ्यसखि' (1/4/7) इति च मुत्वात्परा भवति । तस्मात् सिद्धायां सत्यां घिसंज्ञायां मुत्वं सिद्धमेवेति । नाभावे त्वसिद्धे ततोस्य नाभावस्य सिद्धत्वमनेन क्रियते । नैषा सूत्रारम्भाज् ज्ञापिता परिभाषा भवति इत्याह व्याडिः प. सू. प. 50 पृ. 24.
6. 'अदश्शब्दस्य तृतीयैकवचनेऽदस्त्यदाद्यत्वे 'अदसोऽसेर्दादुदो मः' अष्टा. 7/3/199 इत्यतः 'से' इत्यनुवर्तमाने 'आङो नाऽस्त्रियाम्' अष्टा. 7/3/120 इति आङो नाभावे च कृते रूपमिदं सिद्ध्यति ।
7. 'आङो नाऽस्त्रियाम्' अष्टा. 7/3/120
8. 'अदसोऽसेर्दादुदो मः' अष्टा. 8/2/80
9. अष्टा. 8/2/1
10. ''नमुने' अष्टा. 8/2/3 इत्यनेनेत्यर्थः
11. 'शेषो घ्यसखि' अष्टा. 1/4/7

मुभावस्य[1] 'पूर्वत्रासिद्ध'[2]मित्यसिद्धत्वाद्[3] घित्वाभावेन [4]नाभावस्याप्राप्त्या तत्र कर्तव्ये मुत्वासिद्धत्वनिषेधकमिदमनुपपन्नम्[5] । ज्ञापितयां चास्यां [6]घिसंज्ञाया [7]'अदसोऽसेर्दादुदो मः' इत्यत्रोपस्थित्या [8]'पूर्वत्रासिद्ध'मित्यनेन मुत्वं प्रति घित्वस्यासिद्धत्वाप्राप्त्या 'अमुने'त्यत्र 'अमु+आ'इत्यवस्थायां [9]नाभावस्य प्राप्तिर्भवतीति नाभावे कर्तव्ये मुभावस्यासिद्धत्वं यत् [10]'पूर्वत्रासिद्ध'मित्यनेन प्राप्नोति तत्प्रतिषेधार्थमिदं सूत्रमुपपद्यते । यत्र कार्यं तत्र [11]संज्ञापरिभाषमुपतिष्ठते' इति ज्ञापिताया अस्या अर्थः । अस्याः फलन्तु 'अमी ईशाः' इत्यत्र 'अदसोमा'दिति[12] प्रगृह्यसंज्ञासिद्धिः । अस्या अभावे तु प्रगृह्यसंज्ञां प्रति '[13]एत ईद् बहुवचने' इति मींत्वस्यासिद्धत्वान्नेह प्रगृह्यसंज्ञा सिद्ध्येत् ।

### [14]'न यासयोः'

सूत्रमिदं [15]'गर्भवद् टाबादयो भवन्ती'ति परिभाषाया [16]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् । तथाहि– 'यका' 'सके'त्यादावित्वप्रतिषेधार्थमिदमारब्धम् ।

---

1. 'अदसोऽसेर्दादुदो मः' अष्टा. 8/2/80
2. अष्टा. 8/2/1
3. 'शेषोंध्यसखि' अष्टा. 1/4/7
4. 'आङो नाऽस्त्रियाम्' 7/3/120
5. 'न मु ने' अष्टा. 8/2/3
6. 'शेषोघ्यसखि' अष्टा. 1/4/7
7. अष्टा. 8/2/80
8. अष्टा. 8/2/1
9. 'आङो नाऽस्त्रियाम्' अष्टा. 7/3/20
10. अष्टा. 8/2/1
11. यथा– 'सिचि वृद्धिः परस्मैपदेषु' अष्टा. 7/2/1 इत्यत्र उपस्थितमिदं भवति 'वृद्धिरादैच्' अष्टा. 1/1/1 इति । तथा 'राज्ञः क च' अष्टा. 4/2/140 इत्यत्र उपस्थितमिदं भवति 'अलोन्त्यस्य' अष्टा. 1/1/52
12. अष्टा. 1/1/12
13. अष्टा. 8/2/81
14. अष्टा. 7/3/45
15. (क) पु. दे. ल. प. वृ. प. अष्टा. 116, पृ. 159
    (ख) सी. दे. बृ. प. वृ. प. 88, पृ. 247
    (ग) नी. दी. प. वृ. प. 139, पृ. 316
    (घ) ह. भा. प. भास्क. प. 91, पृ. 360
16. तथाहि–
    (क) 'ज्ञापकं चास्यार्थस्य' न यासयोः' (7/3/45) इति इत्वप्रतिषेधवचनम् । यदि गर्भवत् टाप् न स्यात् तदा त्यदाद्यत्वादौ कृते सुपः परेण स्यात् । यका सकेत्यत्र 'प्रत्ययस्थात्' (7/3/44) इति इत्वप्राप्तिरेव नास्ति सुपः परत्वादायः । तत्किं निषेधेन । तन्निषेधवचनमस्यार्थस्य ज्ञापकमिती''त्याह पु. दे. ल. प. वृ. प. 116, पृ. 159

तच्च अस्या अभावे व्यर्थम् । यतः 'सुबन्तात्तद्धितोत्पत्ति'रिति [1]सिद्धान्तादत्र 'यदस्' 'तदस्' इत्यवस्थायाम् [2]अकचि तद्धितान्तप्रातिपदिकतया सुपो [3]लुकि पुनः सौ [4]त्यदाद्यत्वपररूपयोः[5] कृतयोः [6]प्रत्ययलक्षणेन सुपः परत्वादापः [7]'प्रत्यस्थात् कात्पूर्वस्यात इदाप्यमुपः' इतीत्वस्य प्राप्तिरेव नास्ति । ज्ञापितायां चास्यामनया प्रातिपदिकस्वाद्योर्मध्ये टाब्[8] भवतीति [9]'त्यदादीनामः' इत्यत्वात् प्रागेव 'तकद्+स्' 'यकद्+स्' इत्यवस्थायां टापि [10]सवर्णदीर्घादेशे 'तकाद्स्' 'यकाद्+स्' इत्यवस्थायां [11]त्यदाद्यत्वे पररूपे च[12] कृते आपः परः सुब् नास्तीति प्राप्तस्य 'प्रत्ययस्थात् [13] कात् पूर्वस्यात इदाप्यसुपः' इतीत्वस्य प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः 'यथा मध्येगर्भस्तथा स्त्रीप्रत्ययाः प्रातिपदिकस्वाद्योर्मध्ये भवन्ती'त्यर्थः । यतोऽस्यामादिपदेन ङीब् गृह्यते । फलं तु 'अर्वत्या'वित्यादौ स्त्रियाम्' अवर्न्+औ' इत्यवस्थायाम्'[14] 'अर्वणस्त्रसावनञः' इति त्रादेशे कृते [15]'उगितश्चे'ति ङीपः सिद्धिः । अस्या असत्त्वे हि नात्र ङीप् सिद्ध्येत् ।

---

(ख) "ज्ञापकं चात्र 'न यासयोः' (7/3/45) इतीत्वप्रतिषेधार्थं वचनम् । यदि गर्भवट्टाबादयो न स्युस्तदा विभक्तौ त्यदाद्यत्वे कृते गर्भवट्टापोऽभावात् यका सकेति न स्यात् । एवं च 'प्रत्ययस्थात्.' (7/4/44) इतीत्वप्राप्तेरभावात् 'न यासयोः' इत्यनर्थकं स्या"- दित्याह सी. दे. बृ. प. वृ. प. 88, पृ. 247

(ग) "ज्ञापकमत्र 'न यासयोः' (7/3/45) इति इत्वनिषेधार्थं वचनम् । तद्धि अस्यां सत्यां यका सका इत्यादावनया परिभाषया 'प्रत्ययस्थात्.' (7/3/44) इत्यादिना इत्वप्राप्तौ सार्थकमितीत्याह ह. भा. प. भास्क. प. 91, पृ. 360.

1. अयं च सिद्धान्तः पातञ्जलमहाभाष्यसम्मतः । तत्र हि "एवं तर्हि न ब्रूमः । 'अलुग्वचनं ज्ञापकं भवत्यत्र सप्तमीति । किं तर्हि? 'भवति सुबन्तादुत्पत्ति'रित्युक्तम् व्या. म. भा. 4/3/1/24 नागेशेनापि 'घकालतनेषु' (सू. 6/3/17) इत्यलुग्वचनं ज्ञापयति 'सुबन्तात्तद्धितोत्पत्तिः' इती"त्युक्तम् ज्ञा. सं. 4/3/85 पृ. 85
2. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' अष्टा. 5/3/71
3. 'सुपो धातुप्रातिपादिकयोः' अष्टा. 2/4/71
4. 'त्यदादीनामः' अष्टा. 7/2/102
5. 'अतो गुणे' अष्टा. 6/1/67
6. 'प्रत्ययलोपे प्रत्ययलक्षणम्' अष्टा. 1/1/62
7. अष्टा. 7/3/44
8. 'अजाद्यतष्टाप्' अष्टा. 4/1/4
9. अष्टा. 7/2/102
10. 'अकः सवर्णे दीर्घः' अष्टा. 6/1/101
11. 'त्यदादीनामः' अष्टा. 7/2/102
12. 'अतो गुणे' अष्टा. 6/1/67
13. अष्टा. 7/4/44
14. अष्टा. 6/4/27
15. अष्टा. 4/1/6

## [1]'न लुमताङ्गस्य'

सूत्रमिदं 'लुगादीनामपि लोपत्वमस्ती'ति वचनस्य [2]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदमनुपपन्नम् । [3]'गर्गाः' [4]'मृष्टः' [5]'जुहुतः' इत्यादौ [6]यञ्शपादि[7] प्रत्ययलक्षण[8]गुणवृद्ध्यभावाय[9] सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावेऽनुपपन्नम् । तथाहि लुको लोपत्वाभावाद्धि यञ्शपोर्लुकोः [10]प्रत्यलक्षणमेव न प्राप्नोतीति तत्प्रतिषेधकमिदमनुपपन्नम् । ज्ञापिते चास्मिन्वचने लुगादीनामपि लोपत्वात् 'गर्गाः' इत्यादौ प्राप्तस्य प्रत्ययलक्षणस्य प्रतिषेधार्थमिदं सूत्रमुपपन्नं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'पञ्च' 'सप्त' इत्यादौ 'षड्भ्यो [11]लु'गिति जश्शसोर्लुकि पञ्चन् सप्तन् इत्यादेः [12]पदत्वसिद्धिः । पदत्वाभावे हि [13]नलोपोऽत्र न स्यात् । अस्य वचनस्यासत्त्वे हि लुको लोपत्वाभावेन [14]प्रत्ययलक्षणाभावात् [15]पदत्वाभावेन नलोपोऽत्र[16] न सिद्ध्येत् ।

---

1. अष्टा. 1/1/63
2. तथाहि–
   (क) "अथवा यद्वयं 'न लुमताङ्गस्येति" (प्रत्ययलक्षण) प्रतिषेधं शास्ति तज् ज्ञापयत्याचार्यो भवति लुकि प्रत्ययलक्षणमिती'त्याह पत. व्या. म. भा. 1/1/9/61
   (ख) "प्रत्ययलोपे' (सू. 1/1/62) 'न लुमताङ्गस्य' (सू. 1/1/63) इति निषेधात् ज्ञापकात् लुगादीनामपि लोपत्व"मित्याह श्रीना. ज्ञा. सं. भा. 1, पृ. 33
3. अत्र 'गर्गादिभ्यो यञ्' अष्टा. भा. 4/1/105, इति यञो 'यञञोश्च' अष्टा. 2/4/64 इति बहुत्वे लुकि, 'न लुमताङ्गस्य' अष्टा. 1/1/63, इति प्रत्ययलक्षणप्रतिषेधात् 'तद्धितेष्वचामादेः' अष्टा. भा. 7/2/117 इति वृद्धिर्न भवति । अतस्तद्धितान्तनिबन्धनप्रातिपदिकसंज्ञायां जसि रूपमिदं सिद्ध्यति ।
4. 'मृजू शुद्धौ धा. पा. अदा. 1066 इति मृज्धातोर्लटि तसि शपि अदादित्वात् शपो लुकि व्रश्चादिसूत्रेण षत्वे 'न लुमते'ति प्रत्ययलक्षणप्रतिषेधात् 'मृजेर्वृद्धिः' अष्टा. 7/2/114, इति वृद्ध्यभावे सकारस्य रुत्वे विसर्गे च रूपमिदम् ।
5. 'हु दानादनयोः' धा. पा. जुहो. 1083, इति हुधातोर्लटि तसि शपि 'जुहोत्यादिभ्यः श्लुः' अष्टा. 2/4/75 इतिशपः श्लौ 'श्लौ' अष्टा. 6/1/10, द्वित्वेऽभ्यासकार्ये 'नलुमते'ति प्रत्यलक्षणप्रतिषेधात् सार्वधातुकलक्षणगुणस्याभावे सकारस्य रुत्वे विसर्गे च रूपमिदम् ।
6. 'गर्गादिभ्यो यञ्' अष्टा. 4/1/105
7. 'कर्त्तरि शप्' अष्टा. 3/1/68
8. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84
9. 'तद्धितेष्वचामादेः' अष्टा. 7/2/117 'मृजेर्वृद्धिः' अष्टा. 7/2/114
10. 'प्रत्ययलोपे प्रत्ययलक्षणम्' अष्टा. 1/1/62
11. अष्टा. 7/1/22
12. 'सुप्तिङन्तं पदम्' अष्टा. 1/1/14
13. 'नलोपः प्रातिपदिकान्तस्य' अष्टा. 8/2/7
14. 'प्रत्ययलोपे'. अष्टा. 1/1/62
15. 'सुप्.' अष्टा. 1/1/14
16. 'नलोपः प्राति.'अष्टा. 8/2/7

## [1]'न ल्यपि'

सूत्रमिदं 'सामान्यातिदेशे [2]विशेषानतिदेश' इतिपरिभाषाऽनित्ये'ति वचनस्य [3]ज्ञापकम् । यतोऽस्य वचनस्याभावे 'प्रदाय' 'प्रमाय' 'प्रस्थाय' 'प्रगाय' 'प्रपाय' 'प्रहाय' [4]अवसाये' त्यत्रत्र ल्यपि क्त्वावृत्तिकित्वस्य [5]'स्थानिव'दित्यनेनातिदिश्य 'घुमास्थागा-पाजहातिसां[6] हली'ति प्राप्तस्य ईत्वस्य प्रतिषेधार्थमारब्धमिदं व्यर्थम् । कित्त्वस्य क्त्वो विशेषधर्मतया 'लोके ब्राह्मणवदस्मिन् क्षत्रिये प्रवर्तितव्यमित्युक्ते ब्राह्मणकार्यं वन्दना-दिकमतिदिश्यते, न तु माठरादिविशेषसम्बद्धं परिवेषणादिक'मिति लोकसिद्धया सामान्यातिदेशे विशेषानतिदेश' इति परिभाषया ल्यप्यतिदेशो ह्यसंभवः । ज्ञापिते चास्मिन् वचने ल्यपि कित्त्वातिदेशस्यानेन सुलभतया तत्रेत्त्वप्रतिषेधार्थमिदं सूत्रं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [7]'अग्रही'दित्यत्र [8]'ग्रहोऽलिटि

---

1. अष्टा. 6/4/69
2. (क) व्याडिः प. सू. प. 91, पृ. 37
   (ख) पु. दे. ल. प. वृ. प. 64, पृ. 140
   (ग) सी. दे. बृ. प. वृ. प. 106, पृ. 261
   (घ) नी. दी. प. वृ. प. 97, पृ. 311
   (ङ) ह. भा. प. भास्क. प. 108, पृ. 367
   (च)भ. ना. प. शे. प. 110, पृ. 344
   (छ)शेषा. प. भास्क. प. 93, पृ. 454
3. तथाहि–
   (क) 'न ल्यपि' 6/4/67, इति लिङ्गादनित्येयमित्याहु''रित्याह नी. दी. प. वृ. प. 97, पृ. 311
   (ख) ''इयमनित्या 'न ल्यपी'ति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपी''त्याह भ. ना. प. शे. प. 110, पृ. 344
4. प्रपूर्वकेभ्यो दा धेट् मा स्था गा. पा हा धातुभ्योऽवपूर्वकात् 'षोऽन्तकर्मणीति सा-धातोश्च 'समानकर्तृकयोः पूर्वकाले' अष्टा. 3/4/21 इति क्त्वाप्रत्यये समासे क्त्वश्च 'समासे नञ्पूर्वे क्त्वो ल्यप्' अष्टा. 7/1/37 इति ल्यपि कृते निष्पन्नेषु ।
5. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56
6. अष्टा. 6/4/66
7. 'ग्रह उपादाने' धा. पा. क्या. 1534, 'ग्रहधातो लुंङि तिपि 'इतश्च' अष्टा. 3/4/100 इति इकारलोपे च्लौ सिचि अनुबन्धलोपे' 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' अष्टा. 6/4/71 इत्यडागमे अग्रहसत्' इत्यवस्थायाम् 'आर्धधातुकस्येड्वलादेः' अष्टा. 7/2/35 इति सस्य इटि तकारस्य च 'अस्तिसिचोऽपृक्ते' अष्टा. 7/3/96 इति ईटि इटो 'ग्रहोऽलिटिदीर्घः' अष्टा. 7/2/37 इति दीर्घे तस्य स्थानिवद्भावेनेट्त्वे' 'इट ईटि' अष्टा. 8/2/28 इति सकारलोपे 'सिज् लोपएकादेशे सिद्धोवाच्यः' इति वार्तिकेन सिज्लोपस्यासिद्धत्वाभावात् 'अकः सवर्णे दीर्घः' अष्टा. 6/1/101, इति सवर्णदीर्घे रूपमिदं सिद्ध्यति' ।
8. अष्टा. 7/2/37

दीर्घः 'इति दीर्घे स्थानिगतं विशेषधर्ममिट्त्वमतिदिश्य [1]'इट ईटीति सिचो लोप-सिद्धिः । अस्य वचनस्याभावे हि तया परिभाषया प्रतिषेधाद् विशेषधर्मस्यातिदेशासंभवेन सिचो लोपोऽत्र न सिद्ध्येत् ।

म. म. रामकृष्मशास्त्रि म. म. जयदेवमिश्रौ तु ज्ञाप्यैतद् वचनं विनापि 'प्रदाये'त्यादौ ल्यपि कित्त्वस्य तत्क्त्वात्वव्यापकतयाऽतिदेशसौलभ्यात्, 'न ल्यपी'तिसूत्रं चरितार्थमिति नैतदुक्तवचनज्ञापकमिति [2]मन्वाते । अतो नैतत्सूत्र-मुक्तवचनज्ञापकमिति निश्चप्रचम् ।

पुरुषोत्तमदेवस्तु [3]"न ल्यपी'ति निषेधसूत्रं 'ल्यबाश्रये विधौ अनल्विधाविति न प्रतिषेधः प्रवर्तते' इति वचनस्य ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि– 'प्रदाये'त्यादौ[4] 'घुमास्थे'ति[5] प्राप्तस्य ईत्वस्य प्रतिषेधार्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । यत ईत्वविधौ[6] क्ङितीत्युक्तं ल्यपश्च[7] कित्त्वं स्थानिनः क्त्वः[8] ककारमलमाश्रित्य स्थानिवद्भावेन[9] लभ्यं, तच्चानल्विधा' विति[10]

---

1. अष्टा. 8/2/28
2. तथाहि
   (क) 'परे तु सामान्यतः स्थानिवृत्तिधर्मातिदेशस्वीकारे 'ता'वित्यत्र त्यदाद्यकारस्यापि जराशब्दत्वातिदेशाप्रत्त्या जरसादेशापत्तिः, अतः संग्राहकवाक्यस्यावृत्त्या तल्ल्यबादेशस्त-त्क्त्वावद्भवतीत्यस्यावश्यकत्वेन 'प्रदाये'त्यत्र कित्त्वस्य तत्क्त्वात्वव्यापकतयातिदेश-सम्भवेन 'न ल्यपी'त्यस्य चारितार्थ्येनोपतार्थं ज्ञापकत्वासम्भव इत्याहुरित्याह म. म. रा. कृ. शा. परिभाषेन्दुशेखरभूततिलके प. 110, पृ. 317
   (ख) "वस्तुतस्तु स्थानिवत्सूत्रस्य संग्राहकवाक्यत्वम् अतिदेशवाक्यन्तु विशेषरूपेणैव वक्तव्यमन्यथा अन्यातिदेशोऽन्यवत् स्यात् । तथा च येन रूपेण सूत्रेण स्थान्यादेशभावो वोध्यते तेन रूपेण प्रतियोग्यनुयोगिबोधकवाक्यं कल्पनीयमिति शब्दरत्नोक्तं न युक्तं, मानाभावात् । किन्तु 'अयमादेशस्तत्स्थानिव'दित्येव कल्प्यम् । ततश्च 'प्रधाये'त्यत्र तत्क्त्वात्वव्यापकमेव कित्त्वमिति 'न ल्यपी'ति सार्थकमेवेति न ज्ञापकमनित्यत्वे नापि फलमिति बोध्य'मित्याह म. म. ज. मि. परिभाषेन्दुशेखरविजयायाम् प. 110, पृ. 345
3. अष्टा. 6/4/69
4. प्रपूर्वकात् 'डुदाञ्दाने' धा. पा. जुहो. 1091, इति दाधातोः 'समानकर्तृकयोः पूर्वकाले' अष्टा. 3/4/21 इतिक्त्वाप्रत्यये समासे क्त्वश्च 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' अष्टा. 7/1/37, इति ल्यपि कृते रूप मिदम् ।
5. 'घुमास्थागापाजहातिसां हलि' अष्टा. 6/4/66
6. 'धुमास्था गापाजहातिसांहलि' अष्टा. 6/4/66
7. 'समासेऽनञ् पूर्वे क्त्वोल्यप्' अष्टा. 7/1/37
8. 'समानकर्तृकयोः पूर्वकाले' अष्टा. 3/4/21
9. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56
10. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56

निषेधाल्लब्धुमशक्यम् । अतो यथा 'प्रदीव्येत्यादौ[1] कृत्वःस्थाने[2] जातस्य [3]ल्यपो यकारस्येट्त्यलिविधौ कर्तव्येऽनल्विधा'[4] -वितिनिषेधेन स्थानिवद्भावाभावाद् वलादित्वाभावेन इण्[5] न भवति, तथा 'प्रदाये'त्यादावपि हि [6]ईत्वस्य अल्विधित्वाद'-नल्विधा'[7]वितिस्थानिवत्त्वनिषेधाल्ल्यपो यकारे कित्त्वाभावेन ईत्वं न भवेदिति तत्र ईत्वनिषेधार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'प्रदाये'त्यादावनल्विधा-[8]वितिनिषेधाप्रवृत्त्या स्थानिवद्भावेन यकारे स्थानिक्त्वागतं कित्त्वमादाय [9]'घुमास्थे'ति ईत्वं प्राप्नोतीति तत्प्रतिषेधाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [10]'प्रकृत्य' [11]'प्रहृत्ये'त्यादौ [12]ल्यपः कित्वात् [13]'क्ङितिचे'ति निषेधेन [14]गुणस्याभावः । अस्य वचनस्यासत्त्वे हि 'प्रकृत्ये'त्यादौ [15]'अनल्विधौ' इति निषेधेन ल्यपः[16] कित्त्वाभावाद् [17]गुणनिषेधापत्त्या [18]गुणापत्तिर्दुवारा स्यात्' इति मनुते[19] । इत्थमिदं सूत्रं पूर्वोक्तं वचनद्वयं ज्ञापयतीति निश्चीयते ।

---

1. प्रपूर्वकात् 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' धा. पा. दि. वा. 1107, इति दिवधातोः 'समान.' अष्टा. 3/4/21 इति क्त्वाप्रत्यये क्त्वश्च 'समासेऽनञ्' अष्टा. 7/1/37 इति ल्यपि रूपमिदम् ।
2. 'समानकर्तृकयोः पूर्वकाले' अष्टा. 3/4/21
3. 'समासेऽनञ् पूर्वेक्त्वोल्यप्' अष्टा. 7/1/37
4. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56
5. 'आर्धधातुकस्येड्वलादेः' अष्टा. 7/2/35
6. 'घुमास्थागापाजहातिसां हलि' अष्टा. 6/4/66
7. 'स्थानिवदादेशोऽनल्विधौ अष्टा. 1/1/56
8. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56
9. 'घुमास्थागापाजहातिसां हलि' अष्टा. 6/4/66
10. प्रपूर्वकात्' डुकृञ् करणे' धा. पा. तना. 1473, इति कृधातोः क्त्वाप्रत्यये समासे क्त्वो ल्यपि रूपमिदम् ।
11. प्रपूर्वकात् 'हृञ् हरणे' धा. पा. भ्वा. 899, इति हृधातोः कृत्वाप्रत्यये समासे क्त्वो ल्यपि रूपमिदम् ।
12. 'समासेऽनञ्पूर्वेक्त्वोल्यप्' अष्टा. 7/1/37
13. अष्टा. 1/1/5
14. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84
15. 'स्थानिवदादेशोऽनल्विधौ' अष्टा. 1/1/56
16. 'समासेऽनञ्पूर्वे क्त्वोल्यप्' अष्टा. 7/1/37
17. 'क्ङिति च' अष्टा. 1/1/5
18. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84
19. अनेन हि– "न ल्यपीति (6/4/69) घुमास्थागादिना ईत्वं निषिध्यते । तत्र तु क्ङितीत्युक्तम् ल्यपश्च कित्त्वं स्थानिनः ककारमाश्रित्य । तत्राल्विधित्वादीत्वस्यानल्विधाविति (1/1/56) स्थानिवत्त्वनिषेधात् ल्यपीत्वं न । यथा प्रदीव्य इति स्थानिवद्भावाभावल्ल्यपो वलादित्वादिण् न भवति । तर्हीदमेव न ल्यपीति (ज्ञापकम्) 'ल्यबाश्रये विधौ अनल्विधाविति न प्रतिषेधः प्रवर्तते' इति । तेन प्रकृत्य प्रहृत्येति ल्यपः कित्त्वाद् गुणो न भवती"त्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 87

## न सम्प्रसारणे [1]सम्प्रसारणम्

सूत्रमिदं 'परस्य यणः पूर्वं संप्रारणं न पूर्वस्ये' ति वचनस्य [2]ज्ञापकम् । यतोऽस्य वचनस्याभावे निषेधसूत्रमिदं व्यर्थम् । तच्चास्य वचनस्याभावे व्यर्थम् । तथाहि– [3]'विद्धः' [4]'यून' इत्यादौ क्रमशो यकारवकारयोः [5]प्राक्सम्प्रसारणे कृते पश्चाद्वकारयकारयोरपि [6]संप्रसारणं प्राप्नोतीति वकार-यकारयोः संप्रसारणनिषेधाय 'सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न भवती'त्यर्थकं सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । तत्र हि क्रमशः पूर्वयोर्वकारयकारयोः [7]प्राक्सम्प्रसारणे कृते सम्प्रसारणपरकत्वाभावादस्य [8]निषेधस्य प्राप्तिरेव नास्ति । ज्ञापिते चास्मिन् वचने तत्र परस्य यणः प्राक्सम्प्रसारणं भवतीति तस्मिन् परे पूर्वस्य यणःसंप्रसारणाभावाय निषेधसूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'विद्धः' 'यूनः' इत्यादि प्रयोगाणां साधुत्वसिद्धिः । अस्य-वचनस्यासत्त्वे हि प्राक्पूर्वस्य [9]सम्प्रसारणापत्तेर्दुर्वारतया नैतेषां साधुत्वं सिद्ध्येत् । अथात्र [10]'अलोऽन्त्यस्ये'ति परिभाषयाऽन्त्यस्यैव संप्रसारणं सुलभमिति नेदं सूत्र-

---

1. अष्टा. 6/1/37
2. तथाहि–
   (क) "एतदेव ज्ञापयति 'परस्य भविष्यति न पूर्वस्ये'ति, यदयं 'न सम्प्रसारणे'इति प्रतिषेधंशास्ति" इत्याह पत. व्या. म. भा. 6/1/37
   (ख) "एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात् प्रथमं परस्य यणः क्रियते । पूर्वस्य च प्रसक्तं प्रतिषिध्यते' इत्याह वाम. का. 6/1/37
   (ग) "अतएव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारण"मित्याह भ. दी. वै. सि. कौ. हलन्तपुंलिङ्ग प्र. पृ. 191
   (घ) "न सम्प्रसारणे, (सू. 6/1/37) अयमेव निषेधो ज्ञापयति (पूर्वस्य) न (परस्य) पूर्वस्येती त्याह श्रीना. ज्ञा. सं. 6, पृ. 97
3. 'व्यध ताडने' धा. पा. दि वा. 1181, इति व्यधधातोः क्तप्रत्यये 'ग्राहिज्या.' अष्टा. 6/1/16 इति यकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' अष्टा. 6/1/108, इति पूर्वरूपे वकारस्य 'न सम्प्रसारणे.' अष्टा. 6/1/37 इति सम्प्रसारणनिषेधे तकारस्य धकारे धकारस्य जश्त्वे च कृते रूपमिदम् ।
4. युवन् शब्दात् शसि 'युवन् अस्' इति स्थिते वकारस्य 'श्वयुवमघोनामतद्धिते' अष्टा. 6/4/133, इति सम्प्रसारणे उकारे' युउन् अस्' इति स्थिते 'संप्रसारणाच्च'. अष्टा. 6/1/108 इति पूर्वस्य यकारस्य 'न सम्प्रसारणे.' अष्टा. 6/1/37 इति सम्प्रसारणनिषेधे सवर्णदीर्घैकादेशे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
5. क्रमशः 'ग्रहिज्या.' अष्टा. 6/1/16 'श्वयुव.' अष्टा. 6/4/133, इत्येताभ्यामितिशेषः ।
6. क्रमशः 'ग्रहिज्या.' अष्टा. 6/1/16 'श्वयुव.' अष्टा. 6/4/133, इत्येताभ्यामितिशेषः ।
7. क्रमशः 'ग्रहिज्या.' अष्टा. 6/1/16, 'श्वयुव.' अष्टा. 6/4/133, इत्येताभ्यामितिशेषः ।
8. 'नसम्प्रसारणे सम्प्रसारणम्' अष्टा. 6/1/37
9. क्रमशः 'ग्रहिज्या.' अष्टा. 6/1/16, 'श्वयुव.' अष्टा. 6/4/133, इत्येताभ्यामितिशेषः ।
10. अष्टा. 1/1/52

मारम्भणीयमिति कुतोऽस्य ज्ञापकत्वमिति शङ्क्यम् । यतो [1]वचिस्वपि यजादीनामन्त्यस्य यणोऽसंभवान्न सम्प्रसारणे विधेयेऽलोन्त्यपरिभाषोपस्थितिर्वक्तुं शक्या । नापि च 'अन्त्यविकारेऽन्त्य[2]सदेशस्ये'ति परिभाषया 'अन्त्यसदेशो यो यण् तस्यैव कार्यं भविष्यति नेतरस्येति सूत्रस्यास्यानारम्भणीयतया ज्ञापकत्वं गगमकुसुमायितमित्यपि शङ्क्यम् । यतो भगवता 'तस्याः [3]परिभाषाया न सन्ति प्रयोजनानी'त्युक्त्या 'अन्त्यसदेश'-परिभाषाया असत्ता सूचिता । तस्मादारम्भणीयमेतत्सूत्रं ज्ञापितैतद्वचनं विना व्यर्थमिति ज्ञापकत्वमस्य युक्तमिति निश्चीयते ।

## '[4]नाव्ययीभावादतोऽम्त्वपञ्चम्याः'

सूत्रमिदं 'भवत्यव्ययीभावात् परस्य सुपो लुक्'–इतिवचनस्य ज्ञापकः[5] । यतोऽस्यवचनस्याभावेऽ[6]व्ययीभावस्याव्ययत्वाभावेन सुब्लुकः प्राप्तिरेव नास्तीत्यदन्तादव्ययीभावात् सुपो लुगभावायारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचनेऽदन्तादव्ययीभावात् '[7]उपराज'मित्यादौ लुकः प्राप्तिर्भवतीति तत्प्रतिषेधाय सोरमादेशाय च

---

1. 'वचिस्वपियजादीनां किति' अष्टा. 6/1/15
2. (क) व्याडिः प. सू. प. 52, पृ. 24 ।
   (ख) पु. दे. ल. प. वृ. प. 107, पृ. 156 ।
   (ग) सी. दे. बृ. प. वृ. प. 112, पृ. 264 ।
   (घ) नी. दी. प. वृ. प. 94, पृ. 310 ।
   (ङ) ह. भा. प. भास्क. प. 114, पृ. 369 ।
   (च) भ. ना. प. शे. प. 104, पृ. 337 ।
   (छ) शेषा. प. भास्क. प. 89, पृ. 451 ।
3. व्या. म. भा. 6/1/2/37 ।
4. अष्टा. 2/4/83 ।
5. तथाहि–
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति–'भवत्यव्ययीभावाल्लुगिति यदयं–'नाव्ययीभावादतः' इति प्रतिषेधं शास्ती"त्याह पत. व्या. म. भा. 1/1/6/40 ।
   (ख) "अव्ययीभावश्च (सू. 1/1/41) 'नाव्ययीभावात्' (सू. 2/4/83) इति प्रतिषेधात् ज्ञापकात् भवत्यव्ययीभावाल्लुक्"–इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1. पृ. 138 ।
6. 'अव्ययीभावः'–अष्टा. 2/1/5 ।
7. राज्ञः समीपमिति विग्रहे 'अव्ययं विभक्तिसमीप.'–अष्टा. 2/1/6. इत्यव्ययीभावसमासे 'अनश्च'–अष्टा. 5/4/108. इतिटचि 'नस्तद्धिते'–अष्टा. 6/4/144. इति टिलोपे समास- प्रातिपदिकात्सौ 'अव्ययीभावश्च'–अष्टा. 1/1/41. इत्यव्ययत्वेन'अव्ययादाप्सुपः'–अष्टा. 2/2/82. इति प्राप्तस्य सोर्लुको 'नाव्ययीभावादतोऽम्.'–अष्टा. 2/4/83. प्रतिषेधेऽमि च कृते पूर्वरूपे रूपमिदम् ।

सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य प्रयोजनं तु '[1]अव्ययीभावश्चे'ति सूत्राकरणजन्यं लाघवम् । 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते [2]वैयाकरणाः' ।

### [3]'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्'

सूत्रमिदं 'ताच्छीलिकेषु[4] च वासरूपविधिर्नास्ती'ति परिभाषाया–[5]ज्ञापकम् । यतोऽस्य असत्त्वे'ऽसूयोवुञि'ति सूत्रस्यावश्यकत्वेऽपि निन्दादि-व्याभाषान्तेभ्यो वुञ्-विधायकमिदं व्यर्थम् । तथाहि 'निन्दकः'[6] 'हिंसकः'[7]–

---

1. अष्टा. 1/1/41 ।
2. प. शे. प. 134, पृ. 336 ।
3. अष्टा. 3/2/146 ।
4. (क) व्याडिः प. सू. प. 27, पृ. 14 ।
   (ख) पु. दे. ल. प. वृ. प. 28, पृ. 124 ।
   (ग) सी. दे. बृ. प. वृ. प. 43, पृ. 211 ।
   (घ) नी. दी. प. वृ. प. 53, पृ. 303 ।
   (ङ) ह. भा. प. भास्क. प. 45, पृ. 342 ।
   (च) भ. ना. प. शे. प. 68, पृ. 285 ।
   (छ) 'ताच्छीलिका अपवादा अताच्छीलिकानुत्सर्गांस्ताच्छीलिकांश्च नित्यं बाधन्ते'–शेषा. प. भास्क. प. 57, पृ. 430 ।
5. तथाहि –
   (क) "निन्दहिंसादिभ्यो वुञ्वचनं क्रियते ज्ञापनार्थम् । किं ज्ञाप्यम् ? । एतज् ज्ञापयत्याचार्यः - 'तच्छीलादिषु वाऽसरूपन्यायेनान्येभ्यो ण्वुल् न भवतीति । तृजादिप्रतिषेधार्थं चैके । अथवैके मन्यन्ते - एतज् ज्ञापयत्याचार्यः 'ताच्छीलिकेषु सर्व एव तृजादयो वासरूपेण न भवन्ती"त्युक्त्या ज्ञापकत्वमस्यामस्य सूचयति पत. व्या. म. भा. 3/2/2/146 ।
   (ख) "ण्वुलैव सिद्धे वुञ्विधानं ज्ञानार्थम् - ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्ती"त्याह जया. का. 3/2/146 ।
   (ग) "यदि तच्छीलादिषु वाऽसरूपविधिना तृजादयोऽपि स्युः निन्दादिभ्यो वुञ् न विदध्यात्, विहितश्चासौ अतएव वुञ्विधानं ज्ञापयति - तच्छीलादिषु वाऽसरूप--विधिर्नास्तीति । तेनालंकारकः, निराकर्त्तेत्यादीनां तच्छीलादिषु साधुत्वं न भवती"त्याह जि. बु. न्या. 3/2/146 ।
   (घ) "ज्ञापके चात्र तृज्वाधनार्थं निन्दहिंस' (3/2/146) इतिवुञ्विधानम् । यदि वाऽसरूपेण भिन्नजातीयास्तृजादयस्ताच्छीलिकेषु भवेयुः तृण्वुल्भ्यां निन्दिता निन्दक इति रूपद्वयेन अवश्यं भाव्यमिति किं वुञ् - विधानेन, तदेतज् ज्ञापयति ताच्छीलिकेषु भिन्नजातीयाः प्रत्ययास्तृजादयो वाऽसरूपेण न भवन्ती" त्याह पु. दे. ल. प. वृ. प. 23, पृ. 124 ।
   (ङ) "ज्ञापके चात्र तृज्वाधनार्थं निन्दहिंसादि (3/2/146) सूत्रे - वुञो विधानम् । यदि हि वाऽसरूपविधिना ण्वुलादयस्ताच्छीलिकेषु भवेयुः तदा 'ण्वुलतृचौ' (3/1/133) इति ण्वुलि कृते निन्दको हिंसक इत्यादयः सिद्धाः । किं वुञो विधानेन । तत्कृतं

[1]'क्लेशकः; [2]'खादकः; [3]'विनाशकः', [4]'परिक्षेपकः', [5]'परिराटकः', [6]परिवादकः', '[7]व्याभाषकः', - इत्येषां प्रयोगाणां सिद्ध्यर्थं 'क्लिशेरुपतापार्थस्य

---

ज्ञापयति ताच्छीलिकेषु वाऽसरूप-(3/1/94) विधिना तृजादयो न भवन्तीति । तदेवं ताच्छीलिकानामताच्छीलिकैर्वाऽसरूप- (3/1/94) विधिर्नास्तीति ज्ञापित"मित्याह सी. दे. वृ. प. वृ. प. 43, पृ. 211 ।

(च) "ण्वुला सिद्धे वुञ्वचनं ज्ञापकं - तच्छीलादिषु वाऽसरूपन्यायेन तृजादयो नेती"त्याह भ. दी. वै. सि. कौ. पूर्व कृदन्त प्र. पृ. 450 ।

(छ) "अत्र च ज्ञापकं 'निन्दहिंसादिसूत्रेण वुञ्विधानम् । अन्यथा ण्वुलैव सिद्धे किं तेनेत्यन्यत्र विस्तरः "इत्याह नी. दी. प. वृ. प. 53, पृ. 303 ।

(ज) "ताच्छीलिकेषु'इति विषयसप्तमी । तेन ताच्छीलिकानामताच्छीलिकैस्ताच्छीलिकैश्च वाऽसरूपविधिर्न । तत्राद्यं यथा 'अलंकृञ्.' (3/2/136) इति सूत्रेणेष्णुचि अलंकरिष्णुरिति भवति । न तु वासरूपन्यायेन अलंकारकः इति । 'निन्दहिंस. (3/2/146) इत्यादिसूत्रेण वुञो विधानाज् ज्ञापकात् । अन्यथा वाऽसरूपविधिना ण्वुलि निन्दक इत्यादि सिद्धौ वुञ्-विधानमनर्थकं स्या"दित्याह ह. भा. प. भास्क. प. 45, पृ. 342 ।

(झ) "ण्वुलि सिद्धे'निन्दहिंसादि' सूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकम् । तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् । ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छी - लिकैश्च वाऽसरूपविधिर्नेति बोध्य"मित्याह भ. ना. प. शे. प. 68, पृ. 285 ।

(ञ) "ताच्छीलिका अपवादा अताच्छीलिकानुत्सर्गांस्ताच्छीलिकांश्च नित्यं बाधन्ते । तत्र प्रथमस्योदाहरणम् - तच्छीलेऽर्थे अलंकृञ इष्णुजेव भवति (3/2/136) अलंकरिष्णुः, न तु ण्वुल्तृचौ (3/2/133) । ज्ञापकं च निन्दहिंसादिसूत्रे (3/2/146) निन्दहिंसादिग्रहणम्. । तेन हि सूत्रेण ताच्छीलिके वुञ्प्रत्ययो विधीयते निन्दकः इत्यादिसिद्धये । यदि वाऽसरूपविधिः (3/2/194) स्यात् ण्वुला निन्दक इत्यादि सिद्धम् । नहि स्वरे विशेषः । ञिल्लित्स्वरयोरिह विशेषाभावात् । ज्ञापिते तु वाऽसरूपविध्यभावे 'तृन्' (3/2/135) इति तृना बाधो माभूदिति निन्दादिग्रहणमर्थवत्" इत्याह शेषा. प. भास्क. प. 57, पृ. 430 ।

(ट) "निन्दहिंस.' (सू. 3/2/146) । निन्दादिभ्यो वुञ्वचनात् ज्ञापकात् ताच्छीलिकेषु सर्व एव तृजादयो वाऽसरूपेण न भवन्ती"त्याह श्रीना. ज्ञा. सं. 3, पृ. 69 ।

6. 'णिदि कुत्सायाम्' धा. पा. भ्वा. 66, इति णिदेरिदित्त्वात् 'इदितो नुम्धातोः' - अष्टा. 7/1/58 इति नुमि नकारस्य 'नश्चापदान्तस्य झलि'- अष्टा. 8/3/24 - इत्यनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' - अष्टा. 8/4/58 इति परसवर्णे धातोर्णकारस्य 'णो नः' अष्टा. 6/1/65 इति नकारे सति निन्दधातोः ताच्छीलादिषु कर्तृषु (तृन्' - अष्टा. 3/2/135, इति 'तृन्' प्रत्यये प्राप्ते तं प्रबाध्य 'निन्द.' - अष्टा. 3/2/146 इत्यादि सूत्रेण वुञ्प्रत्यये 'युवोरनाकौ' - अष्टा. 7/1/1, इतिवोरकादेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

7. 'तृहहिसि हिंसायाम्' धा. पा. रुधा. 1456, इति हिंसेरिदित्त्वात् 'इदितोनुम् धातोः' अष्टा. 7/1/58, इति नुमि नकारस्य' नश्चापदान्तस्य झलि' - अष्टा. 8/3/24 इत्यनुस्वारे कृते निष्पन्नात् हिंस् धातोः तच्छीलादिषु कर्तृषु 'तृन्' - अष्टा. 3/2/135, इति तृन्प्रत्यये प्राप्ते तं प्रबाध्य 'निन्दहिंस.' - अष्टा. 3/2/146 इत्यादि - सूत्रेण वुञ्प्रत्यये 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकादेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

1. 'क्लिश उपतापे' धा. पा. दिवा. 1161, इति क्लिश् धातोः 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149, इति युचि प्राप्ते तं प्रबाध्य 'निन्दहिंसक्लिश.' अष्टा. 3/2/146, इति वुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकादेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु

भाषतेश्च [1]अनुदात्तेतश्च हलादे'रिति युचि प्राप्ते, शेषेभ्यो धातुभ्यश्च 'तृन्[2]' इति तृनि प्राप्ते वुञ्विधायकमिदमारब्धम् । तच्चास्या असत्त्वे व्यर्थम् । यतो

---

रूपमिदं सिद्ध्यति । तथा 'क्लिशू विबाधने' धा. पा. क्र्या. 1523, इति क्लिशूधातोस्तु तच्छीलादिषु कर्तृषु 'तृन्' - अष्टा. 3/2/135, इति तृनिं प्राप्ते वुञि क्लेशक इति ।

2. 'खादृ भक्षणे' धा. पा. भ्वा. 49, इति खाद्धातोः तच्छीलादिषु कर्तृषु 'तृन्' अष्टा. 3/2/135, इति तृन्प्रत्यये प्राप्ते तं प्रबाध्य 'निन्दहिंसक्लिश.' - अष्टा. 3/2/146, इति सूत्रेण वुञ्प्रत्यये 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकादेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

3. विपूर्वकात् 'णश अशर्दने' धा. पा. दिवा. 1194 इतिणश् धातोर्णकारस्य 'णोनः' - अष्टा. 6/1/65 इतिनकारे णिचि 'विनाशि' इत्यस्य 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32, इति धातुत्वे ततः तच्छीलादिषु कर्तृषु 'तृन्' - अष्टा. 3/2/135, तृन्प्रत्यये प्राप्ते तं प्रबाध्य 'निन्दहिंसक्लिशखाद.' - अष्टा. 3/2/146, इति सूत्रेण वुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकाऽऽदेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

4. परिपूर्वकात् 'क्षिपप्रेरणे' धा. पा. दिवा. 1121, तुदा. 1286, चुरा. 1942, इति वा क्षिपधातोः तच्छीलादिषु कर्तृषु 'तृन्' अष्टा. 3/2/135, इति तृनि प्राप्ते तं प्रबाध्य 'निन्दहिंसक्लिशखादविनाशपरिक्षिप.'. अष्टा. 3/2/146, इति सूत्रेण वुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकाऽऽदेशे धातोरिकारस्य 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86, इति गुणे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

5. परिपूर्वकात् हेतुमण्यन्तात् 'अत उपधायाः' - अष्टा. 7/2/116, इति कृतोपधावृद्धेः 'रट परिभाषणे' धा. पा. भ्वा. 297, इति राटि धातोः तच्छीलादिषु कर्तृषु 'तृन्' अष्टा. 3/2/135, इति तृनि प्राप्ते तं प्रबाध्य 'निन्दहिंस क्लिशखाद विनाशपरिक्षिपरिरट. अष्टा. 3/2/146, इति सूत्रेण वुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकादेशे 'णेरनिटि' - अष्टा. 6/4/51, इति णिलोपे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

6. परिपूर्वकात् हेतुमण्यन्ताद् 'अत उपधायाः' - अष्टा. 6/2/116, इति कृतोपधावृद्धेः 'वद व्यक्तायां वाचि' धा. पा. भ्वा. 1009, इति वादिधातोः 'तृन्' - अष्टा. 3/2/135, इति तृनि प्राप्ते तं प्रबाध्य 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट. - अष्टा. 3/2/146, इति वुञि 'युवोरनाकौ' - अंष्टा. 7/1/1, इति वोरकादेशे 'णेरनिटि' - अष्टा. 6/4/51, इति णिलोपे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

7. व्याङ्पूर्वकात् 'भाष व्यक्तायां वाचि' धा. पा. भ्वा. 612, इतिभाष् धातोः 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149, इति युचि प्राप्ते, तं प्रबाध्य 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाष.' अष्टा. 3/2/146 इत्यादिसूत्रेण - वुञि 'युवोरनाकौ - अष्टा. 7/1/1, इति वोरकादेशे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

1. अष्टा. 3/2/149 ।

2. अष्टा. 3/2/135

[1]वाऽसरूपविधिनैव ण्वुलि निन्दकादयः सिद्धाः, तदेव हि रूपम्; स एव स्वरः, इहैकत्र स्वरविशेषोऽस्ति असूयक इति, अत्र वुञि सति ञित्त्वादादेरुदात्तत्वं[2] भवति, ण्वुलि तु सति '[3]लिती'ति प्रत्ययात् पूर्वस्य स्यात्, तस्मादसूयतेरेवैकस्माद् वुञ् - विधानमावश्यकं, नेतरेभ्यो निन्दादिभ्य इति । 'नैकमुदाहरणं योगारम्भं [4]प्रयोजयती'-त्युक्तेः सूत्रमिदमावश्यकम् । ज्ञापितायां चास्यां तच्छीलादिषु ण्वुल्प्रत्ययो निन्दादिभ्यो युच् - तृन्भ्यां बाधान्न स्यादिति तेभ्यो वुञ्विधानाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापकं चेदं सामान्यापेक्षं न तु विशेषापेक्षमिति हरदत्तमिश्रोऽपि मनुते । यतोऽमुना "न केवलं ण्वुल्विषयमेव ज्ञापकम्; किं तार्हि ? प्रत्ययमात्रविषयक"मित्युक्तम्[5] । ज्ञापिताया अस्याः फलं तु 'भास्वरः' इत्यस्यैव [6]साधुत्वं 'भासनः' [7]इत्यस्य साधुत्वाभावः, तथा 'अलंकरिष्णुः [8]इत्यस्यैव साधुत्वम्, 'अलंकारकः' [9]निराकर्ते-त्यादीनां तच्छीलादिषु साधुत्वाऽभाव इत्यादि शोधप्रबन्धेऽत्राऽन्यत्र[10] प्रतिपादिति-मिति नेह वितन्यते ।

---

1. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 ।
2. 'ञ्नित्यादिर्नित्यम् - अष्टा. 6/1/197
3. अष्टा. 6/1/193
4. पदम. 6/4/3 व्याकरणमहाभाष्ये तु 'नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयतीत्युक्तम् 6/4/3 ।
5. पदम. 3/2/146 ।
6. 'भासृदीप्तौ' धा. पा. भ्वा. 624, भास्धातोः 'स्थेशभासपिस्कसोवरच्' - अष्टा. 3/2/175, इति वरच्प्रत्यये कृते निष्पन्नस्यैवेत्यर्थः ।
7. 'भासृदीप्तौ धा. पा. भ्वा. 624, इतिभास्धातोः - 'वाऽसरूपोऽस्त्रियाम् - अष्टा. 7/1/94, इति परिभाषा 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149, इति युचि निष्पन्नस्येत्यर्थः ।
8. अलंपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1472, इति कृधातोः 'अलंकृञ्निराकृञ्प्रजनोत्प-चोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' - अष्टा. 3/2/136, इति इष्णुच् प्रत्ययान्त-स्यैवेत्यर्थः ।
9. अलंपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. , इति कृधातोः 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 इति बलेन 'ण्वुल्तृचौ' - अष्टा. 3/1/133, इति ण्वुलि निरापूर्वकात् कृधातोः तृनि वा निष्पन्नानामित्यर्थः ।
10. 'जुचङ्क्रम्य.' - अष्टा. 3/2/150, इत्यादिसूत्रस्य - पच्छब्दज्ञापकत्वनिरूपणावसरे 'इत्यर्थः ।

## '[1]नेटि'

सूत्रमिदं '[2]यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' - इति परिभाषाया ज्ञापकम्[3] । यत इदम् '[4]अदेवीत्' असेवीत्'[5] - 'अकोषीत्'[6] 'अमोषीत्'[7]–इत्यादौ इडादौ सिचि हलन्तलक्षणाया वृद्धेः प्रतिषेधार्थमारब्धमस्या अभावे व्यर्थम् । नहि 'अदेवी'दित्यादौ [8]'वदव्रजहलन्तस्याचः'–इति हलन्तानामचां सिचि परस्मैपदे परतो विहिता वृद्धिः प्राप्नोति [9]इटा व्यवधानात् । अत इदमात्मनः सार्थक्याय परिभाषामिमां ज्ञापयति । ज्ञापितायां चास्याम् 'अदेवी'दित्यादौ इटः आगमतया सिचो ग्रहणेन ग्रहणं सुलभमिति तद्व्यवधानाभावात् प्राप्ताया हलन्तलक्षणाया वृद्धेः प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति ।

अस्य सूत्रस्य ज्ञापकत्वोपपादनपरः 'अन्यथा इड्वति सिचि 'सिचि वृद्धिः परस्मैपदेषु' (7/2/1) इत्यस्य प्राप्तेरभावात् किं तन्निषेधार्थेन 'नेटि' (7/2/4) इति

---

1. अष्टा. 7/2/4 ।
2. (क) 'तद्भक्तस्तद्ग्रहणेन गृह्यते' - व्याडिः प. सू. प. 17, पृ. 10 ।
   (ख) 'आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' - पु. दे. ल. प. वृ. प. 18, पृ. 120 ।
   (ग) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' सी. दे. बृ. प. वृ. प. 4, पृ. 166 ।
   (घ) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' - नी. दी. प. वृ. प. 4, पृ. 293 ।
   (ङ) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' ह. भा. प. भास्क. प. 4, पृ. 319 ।
   (च) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' - शेषा. प. भास्क. प. 11, पृ. 387 ।
   (छ) 'तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' - शेषा. प. भास्क. प. 11, पृ. 319 ।
3. तथाहि –
   (क) "'नेटि' (7/2/4) इति निषेधोऽपि ज्ञापकः । अन्यथा इड्वति सिचि 'सिचि वृद्धिः परस्मैपदेषु' (7/2/1) इत्यस्य प्राप्तेरभावात् किं तन्निषेधार्थेन 'नेटि' इति सूत्रेण इति स्पष्टमाकरे"इत्याह ह. भा. प. भास्क. प. 4, पृ. 293 ।
   (ख) "परिभाषाया ज्ञापकम्....'नेटि' (7/2/4) इति वृद्धिनिषेध इत्यन्ये"इत्याह ह. भा. प. भास्क. प. 4, पृ. 320 ।
   (ग) "अतएव'नेटि, णेरनिटि' इत्यादिचरितार्थ"मित्युक्त्या ज्ञापकत्वमप्यस्य सूचयति भ. ना. प. शे. प. 12, पृ. 63 ।
4. 'दिवु क्रीडादौ' धा. पा. दिवा. 1107, इति दिवेर्लुङि तिपि रूपमिदम् ।
5. षिवु तन्तुसन्ताने धा. पा. दिवा. 1108 इति सिवेर्लुङितिपि रूपमिदम् ।
6. 'कुष निष्कर्षे' धा. पा. क्र्या 1599, इति कुषेर्लुङि तिपि रूपमिदम् ।
7. 'मुष स्तेये' धा. पा. क्या. 1531 मुषेर्लुङि तिपि रूपमिदम् ।
8. अष्टा. 7/2/3 ।
9. 'आर्धधातुकस्येड्वलादेः'–अष्टा. 7/2/35, इति विहितेनेत्यर्थः ।

सूत्रेणे"ति नीलकण्ठदीक्षितग्रन्थस्तु[1] न युक्तः । यतो 'नेटी'ति सूत्रम्–'[2]अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति परिभाषया हलन्तलक्षणां वृद्धिं प्रतिषेधति, नतु 'सिचि वृद्धिः परस्मैपदेषु'इति सूत्रविहितां वृद्धिमपि । अन्यथा [3]'अलावी'दित्यादावपि 'नेटी'ति वृद्धिप्रतिषेधस्य दुर्वारतयाऽत्र [4]वृद्धेरसाधुत्वापत्तिः स्यादितिमन्ये ।

ज्ञापिताया अस्याः फलन्तु 'सर्वेषा'मित्यादिप्रयोगेषु 'आमि सर्वनाम्नः[5] सुट्' इति सुडागमस्य सुब्ग्रहणेन ग्रहणात् 'बहुवचने [6]झल्येत्'इत्येत्वस्य सिद्धिः । अस्या अभावे हि सुड्विशिष्टस्यामः सुब्ग्रहणेन ग्रहणासंभावाज्झलादित्वाभावादत्रैत्वं न सिद्ध्येत् । अन्यान्यप्यस्याः प्रयोजनानि'......अधराणी'ति निर्देशस्य ज्ञापकत्वनिरूपणावसरे निरूपितानी'ति नेह वितन्यते ।

## 'नेन्द्रस्य[7] परस्य'

उत्तरपदवृद्धिप्रतिषेधसूत्रमिदं '[8]पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो ने'ति परिभाषाया [9]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् । तथाहि–

---

1. नीलकण्ठदीक्षितविरचित परिभाषावृत्तौ प. 4 पृ. 293 ।
2. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
3. 'लूञ् छेदने' धा. पा. क्र्या. 1484'इति लुनातेर्लुङि तिपि रूपमिदम् ।
4. 'सिचिवृद्धिः परस्मैपदेषु'–अष्टा. 7/2/1' इति विहिताया इत्यर्थः ।
5. अष्टा. 7/1/52 ।
6. अष्टा. 7/3/103 ।
7. अष्टा. 7/2/22 ।
8. (क) व्याडिः प. पा. प. 51, पृ. 40 ।
   (ख) भ. ना. प. शे. प, 54, पृ. 236 ।
   (ग) शेषा. प. भास्क. प. 45, पृ. 424 ।
9. तथाहि–
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति–'पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेशः 'इति, यदयं 'नेन्द्रस्य परस्ये'ति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? । इन्द्रे द्वावचौ । तत्रैको 'यस्येतिचे'ति लोपेनापह्रियते अपर एकादेशेन, ततोऽनच्क इन्द्रः सम्पन्नः, तत्र कः प्रसङ्गो वृद्धेः ? । पश्यति त्वाचार्यः 'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति, नैकादेश इति, ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ती'त्याह पत. व्या. म. भा. 1/4/1/2 तथा व्या. म. भा. 6/1/4/85 ।

'सौमेन्द्र'[1] –इत्यादौ 'देवता[2]द्वन्द्वे चे'ति सूत्रेण पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने प्राप्त्याया वृद्धेः परस्येन्द्रशब्दस्य वृद्धिप्रतिषेधार्थमिदमारब्धम् । तच्चास्या अभावे व्यर्थम् । यतोऽत्रेन्द्रशब्दे द्वावचौ तत्र तद्धिते एकस्य [3]'यस्येति' चे'ति लोपेऽपरस्य च पूर्वेण सहैकादेशे च कृतेऽनच्क इन्द्रशब्दो भवतीत्यत्र वृद्धेः प्राप्तिरेव नास्ति । ज्ञापितायां चास्यामनया बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेश इति सोमेन्द्र इत्यादौ उत्तरपदेन्द्रपदे इकारस्य वृद्धिः प्राप्नोत्येकादेशात् प्रागिति तस्याः प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः

---

(ख) इदं प्रतिषेधवचनं ज्ञापकम्–'बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति, पश्चादेकादेश इति । तेन पूर्वेषुकामशम इत्यादिसिद्धं भवती'त्याह वाम. का. 7/3/22 ।

(ग) "सौमेन्द्रश्चरुरित्यत्र अग्निमारुतवत् 'देवताद्वन्द्वे चे'ति (7/3/21) उभयपदवृद्धिः प्राप्ता नेन्द्रस्य परस्येति (7/3/22) प्रतिषिध्यते । तत्रोक्तम् । इन्द्रे द्वावचौ । तत्रैको यस्येति (6/4/148) लोपेनापहृतोऽपर एकादेशेनेति अनच्क इन्द्रशब्दः । कस्तत्र वृद्ध(वृद्धि) प्रसङ्गः । अत इदमेव वृद्धिनिषेधवचनं ज्ञापयति प्राक् पूर्वोत्तरयोस्तावत् कार्यं भवति पश्चादेकादेश इति । तेन उत्तमैकवचने अपचइ इहेतिस्थिते" सवर्णदीर्घादेशात् प्राक् 'अदेङ्गुणः' (1/1/12) अपचे इहेति भवति । तथा प्रत्यय इति प्रतिशब्देकारेण सह धातोः सवर्णदीर्घात् प्राक् उत्तरपदकार्यं भवति गुणः । तत्र च कृते निमित्ताभावादेकादेशो न भवती"त्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे 92 ।

(घ) "अत्र च 'नेन्द्रस्य'इति निषेध एव ज्ञापक इत्याह भ. ना. प. शे. प. 54. पृ. 236।

(ङ) "अत्र च ज्ञापकम्–'नेन्द्रस्य परस्य' (7/3/22) इत्युत्तरपदवृद्धिप्रतिषेधः । यदि ह्युत्तरपदादिवृद्धेः प्रागेकादेशः स्यात्, तदा उत्तरपदेन्द्रपदे इकारस्य एकादेशेनापहृतत्वात् द्वितीयस्य 'यस्येति' (6/4/140) इति लोपेनापहृतत्वादनच्क इन्द्रशब्दो भवतीति–व्यर्थः स्या"दित्याह शेषा. प. भास्क. प. 45. पृ. 425 ।

(च) "इन्द्रे द्वावचौ । तत्रैको यस्येति लोपेनापह्रियते । अपर एकादेशेन । ततोऽनच्क इन्द्रः सम्पन्नः । तत्र वृद्धेः प्रसङ्गाभावान्निषेधो व्यर्थः सन् ज्ञापकः पूर्वोत्तर–पदयोस्तावत्कार्यं भवति । नैकादेशोऽन्तरङ्ग इती"त्याह श्रीना. ज्ञा. सं. 1. पृ. 46।

1. सोमश्च इन्द्रश्चेत्यर्थे देवताद्वन्द्वे कृते 'देवताद्वन्द्वे च'–अष्टा. 6/3/26. इति पूर्वपदस्यानङादेशे सति तौ देवते अस्येत्यर्थे 'सास्य देवता'–अष्टा. 4/2/26, इत्यणि 'सोमाइन्द्र अ'इत्यवस्थायां 'देवताद्वन्द्वे च'–अष्टा. 7/3/21, इत्युभयपदस्थस्याचो वृद्धिः प्राप्नोति तत्रोत्तरपदस्याद्यचो 'नेन्द्रस्य परस्य'–अष्टा. 7/3/22 इति वृद्धिप्रतिषेधे केवलस्य पूर्वपदस्यैवाद्याचोवृद्धौ पश्चाद 'आद्गुणः' इति गुणैकादेशे यस्येति च–अष्टा. 6/4/148 तद्धितप्रत्ययाव्यवहिताकारस्य लोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
2. अष्टा. 7/3/21 ।
3. अष्टा. 6/4/148 ।

फलन्तु "[1]पूर्वेषुकामशमः' इत्यत्र [2]'दिशोऽमद्राणा'मित्यनेन 'प्राचां [3]ग्रामनगराणा'मित्यनेन वा उत्तरपदादिवृद्धि-सिद्धिः । अस्या असत्त्वे हि 'उभयत आश्रयणे [4]नान्तादिवत्' इति परिभाषया निषेधेन दिग्वाचकशब्दात् परतो देशवाचकशब्दाभावात् ग्रामवाचकशब्दाभावाद् वाऽत्रोत्तरपदादिवृद्धिर्न सिद्ध्येत् ।

## 'पतिः [5]समास एव'

सूत्रमिदम् 'अहमनित्य'मिति वचनस्य [6]ज्ञापकम् । यतोऽस्य वचनस्याभावे पृथङ्नियमसूत्रमिदं व्यर्थम् । 'शेषोघ्यसखिपती'इति न्यासेनापि केवलयोः सखिपत्योः घिसंज्ञाप्रतिषेधः सुलभः, [7]'प्रजापतिने'त्यादौ घिसंज्ञा च सुलभेति केवलस्य पतिशब्दस्य घित्वाभावाय प्रजापतिनेत्यादौ घित्वाय चारब्धमिदं पृथङ्नियमसूत्रं व्यर्थम् । ज्ञापिते चास्मिन् वचने प्रजापतिनेत्यादौ समासे कदाचिदपि घित्वाभावो माभूदित्येतदर्थं नियमसूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'क्लीबे च पतिते[8]पतौ'–इत्यत्र पतिशब्दस्य घिसंज्ञासिद्धिः[9] । अस्य वचनस्यासत्त्वे हि असमासे पतिशब्दस्य घित्वासम्भवात् [10]'पता'वित्यस्य साधुत्वं न सिद्ध्येत् ।

---

1. पूर्वश्चासाविषुकामशमी चेति विग्रहे'दिक्संख्ये संज्ञायाम्'–अष्टा. 271/50. इति समासे कृते ततो भवार्थे'दिक्पूर्वपदादसंज्ञायां ञः' अष्टा. 4/2/107. इति ञप्रत्यये 'प्राचां ग्रामनगराणाम्' –अष्टा. 7/3/14, इति पूर्वशब्दोत्तरस्य इषुकामशब्दस्याद्यचो वृद्धौ 'यस्येति च, अष्टा. 6/4/148. इत्यकारलोपे वृद्धिरेचि–अष्टा. 6/1/88 इति वृद्ध्येकादेशे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
2. अष्टा. 7/3/13 ।
3. अष्टा. 7/3/14 ।
4. (क) व्याडिः प. सू. प. 44, पृ. 22 ।
   (ख) पु. दे. ल. प. वृ. प. 51, पृ. 135 ।
   (ग) सी. दे. बृ. प. वृ. प. 60, पृ. 226 ।
   (घ) नी. दी. प. वृ. प. 120, पृ. 314 ।
   (ङ) ह. भा. प. भास्क. प. 62, पृ. 349 ।
5. अष्टा. 1/4/8 ।
6. तथाहि–
   "'शेषोघ्यसखिपती'इत्यादिनिर्देशे केवलयोः सखिपत्योर्घिसंज्ञानिषेधो भविष्यतीति । तथा चातिसखेरागच्छतीति न्यासे उदाहृतम् । तथा प्रजापतिनेत्याद्यपि भविष्यतीत्येवं सिद्धौ पृथक् 'पतिः समास एव'इति (1/4/6) नियमप्रणयनमस्यानित्यत्वसूचनार्थम् । तेन 'क्लीबे च पतिते पतौ' इति सिद्ध्यतीति इन्दुमित्रः",–इत्याह पु. दे. ज्ञा. समु. चतुर्थे कारकपादे पृ. 64 ।
7. षष्ठीतत्पुरुषः ।
8. 'नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
   पञ्चापत्स्वपि नारीणां पतिरन्यो विधीयते" ॥
   इति पराशर-स्मृतिः ।
9. 'शेषोघ्यसखि'–अष्टा. 1/4/7 ।
10. पतिशब्दान्ङौ 'अच्चघेः'–अष्टा. 7/3/119. इति घेरकारस्याकारादेशे ङेरौतादेशे च कृते रूपमिदम् ।

वस्तुतस्तु ज्ञापितस्यास्य वचनस्य फलमन्यथासिद्धमिति नेदं नियमसूत्रमुक्त-वचनस्य ज्ञापकम् । कथमन्यथासिद्धमिति चेदित्त्थम्–'क्लीबे च पतिते पतौ'–इति प्रयोगे अपताविति च्छेदः [1]पूर्वरूपेण च नात्राकारो दृश्यते । [2]अनुदराकन्येतिवत् ईषदर्थेऽत्र नञः समासः[3], ईषत्पतिरपतिरिति । तथा चात्र समासे अपताविति पतेर्घिसंज्ञा सुलभेतिनेदं फलं वचनस्य । तस्मान्नेदं सूत्रं ज्ञापकमुक्तवचनस्य, किन्तु [4]"पत्ये शेते"इत्यादौ पतिशब्दस्य घित्वाभावाय [5]घिसंज्ञाया नियामाकमेव । तत्रापति-रितिच्छेदानभ्युपगमे हि विधवा-विवाहः समर्थितो भवति, स च शास्त्रव्यवहाराभ्यां न घटते । वाग्दान-फलदानतिलकादिकर्मभिः ईषत्पतित्वं भजतः पत्युरदर्शने-मरणे संन्यासग्रहणे क्लीबत्वनिर्णये धर्मपरित्यागे च सति नारीणां पत्यन्तरग्रहणमार्षवचन-मिदमनुशंसति, न तु अग्निसाक्षिकविवाहानन्तरमपि चापत्सु पत्यन्तरग्रहणमितिमन्ये । अपि च "शेषो[6]घ्यसखिपती" इति न्यासे समुदास्य पतिरूपत्वाभावेन [7]बहुच्पूर्वक-स्यापि पतिशब्दस्य घिसंज्ञा[8] आपद्येत । ततश्च [9]"सुसखिने"त्यादिवद् बहुपतिने-त्यादि प्रसज्येत, इंष्यते च बहुपत्येद्यादि ।

न चास्य वचनस्यास्वीकारे 'सीतायाः [10]पतये नमः' इति प्रयोगे पतिशब्दस्य कथं घिसंज्ञा, न ह्यत्र समस्तः पतिशब्द इतिशङ्कनीयम् । यतः 'पतिरिवाख्यातः

---

1. 'एङः पदान्तादति'–अष्टा. 6/1/109 ।
2. अल्पोदरेत्यर्थः ।
3. 'नञ्'–अष्टा. 2/2/6 ।
4. "पतिः समास एव"–अष्टा. 1/4/8, इति नियमेन पतिशब्दस्यात्र घित्वाभावान् ङेविभक्तौ यणि रूपमिदम् ।
5. "शेषोघ्यसखि"–अष्टा. 1/4/7 ।
6. "शेषोघ्यसखि"–अष्टा. 1/4/7 इत्यस्य स्थाने इति शेषः ।
7. "विभाषा सुपो वहुच्पुरस्तात्तु"–अष्टा. 5/3/68 ।
8. "शेषोघ्यसखि"–अष्टा. 1/4/7 ।
9. सुसखिशब्दस्य पुंसि टाविभक्तौ घित्वात् "अङो नास्त्रियाम्" अष्टा. 7/3/120 इति आङो नादेशे रूपमिदम् ।
10. "रामाय रामभद्राय रामचन्द्राय वेधसे ।
    रघुनाथाय नाथाय सीतायाः पतये नमः" ॥ –वा. रामायणम् ।

पतिरित्यर्थे 'तत्करोति [1]तदाचष्टे'इतिणिचि [2]टिलोपे '[3]अच इः' इति औणादिक इप्रत्यये [4]'णेर निटी'ति णिलोपे च निष्पन्नोऽत्र पतिशब्दः 'पतिः समास[5]एव' इत्यत्र न गृह्यते लाक्षणिकत्वात्[6] । 'कृष्णसखिरर्जुनः'[7] इति व्यासप्रयोगस्य,'सखिना[8]वानरेन्द्रेण'– इति वाल्मीकिप्रयोगस्य साधुत्वमनयैव रीत्योपपादनीयम् । इत्थम्–पराशरस्मृतौ 'पता'- विति प्रयोग आर्ष इति [9]हरदत्तमिश्रमतमयुक्तमित्यपि बोध्यम् ।

## 'प्रजने[10]वीयतेः'

सूत्रमिदं 'न सर्वे धातवोऽनेकार्थाः' 'अनेकार्थोपि धातुर्न सर्वार्थः' इति वचनयो र्ज्ञापकम्[11] । यतोऽनयोर्वचनयोरभावे'पुरोवातोगाः प्रवापयति,' 'पुरोवातोगाः प्रवाययति'इत्यादौ प्रजनार्थकवी-धातो[12]र्विकल्पेनाऽऽत्वविधायकमिदं व्यर्थम् । वा [13]गतिगन्धनयोरित्यस्य नानार्थकत्वेन प्रजनार्थकवृत्तित्वे[14]णौ पुकि[15] प्रवापयती-

---

1. ग. सू. वै. सि. कौ. चुरा. पृ. 239 ।
2. इष्ठवद्भावादितिशेषः.।
3. उणा. सू. 578 ।
4. अष्टा. 6/4/51 ।
5. अष्टा. 1/4/8 ।
6. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'मितिपरिभाषयेत्यर्थः ।
7. महाभारतम् ।
8. वा. रामायणम् ।
9. अनेन हि–"अथ कथम्–"
   "नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
   पञ्चापत्सु च नारीणां पतिरन्यो विधीयते" ॥
   इति छन्दोवदृषयः कुर्वन्ती"त्युक्तम्–पदम. 1/4/8 ।
10. अष्टा. 6/1/55 ।
11. तथाहि–
    "प्रजने वीयतेरिति (6/1/55) प्रजनार्थवीधातोर्विकल्पेनाऽऽत्वविधानं ज्ञापयति 'न सर्वे धातवोऽनेकार्थाः । 'अनेकार्थोऽपि धातुर्न सर्वार्थः' । अन्यथा हि वा गति–गन्धनयोरित्यस्य नानार्थत्वात् प्रजनार्थवृत्तित्वे णौ पुकि प्रवापयतीति वीधातोः णौ वृद्धौ प्रवाययतीतिसिद्धे विकल्पेनाऽऽत्वविधानमनर्थकं स्यात् । एतेन स्वमनीषिकया धातूनां नानार्थत्वं न कल्पनीयमित्युक्तं भवती"त्याह. पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे पृ. 821 ।
12. 'वी गतिप्रजनकान्त्यसनखादनेषु' धा. पा. अदा. 1048 ।
13. धा. पा. अदा. 1050 ।
14. 'हेतुमति च'–अष्टा. 3/1/26 ।
15. 'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ'–अष्टा. 7/3/36 ।

त्यस्य, वी[1]धातोः णौ[2] [3]वृद्धौ 'प्रवाययती'त्यस्य सिद्धिर्हि सूत्रस्यास्याभावेऽपि सुलभा । ज्ञापितयोश्चानयोर्वचनयो[4]र्वाधातोः प्रजनार्थवृत्तित्वासंभावात् 'पुरोवातोगाः प्रवा पयतीत्यादि प्रयोगद्वयसिद्धये प्रजनार्थकवीधातो[5]र्विकल्पेनाऽऽत्वविधायकमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु सर्वेषां धातूनां स्वमनीषिकया नानार्थत्वकल्पनाया अभावः । अतएवास्य सूत्रस्यानावश्यकत्वं वदतो [6]जिनेन्द्र बुद्धि[7]हरदत्तमिश्रयोर्मते न युक्ते,–इति मन्ये ।

## '[8]प्रत्ययोत्तरपदयोश्च'

सूत्रमिदम् 'अन्तरङ्गानपि विधीन्[9] बहिरङ्गो लुग् बाधते' इति परिभाषाया ज्ञापकम्[10] । यत इदं 'तवायं - त्वदीयः' – 'ममायं मदीयः[11] 'अतिशयेन त्वं

---

1. 'वी गतिप्रजनकान्त्यसनखादनेषु' धा. पा. अदा. 1048 ।
2. 'हेतुमति च'–अष्टा. 3/1/26 ।
3. 'अचोञ्णिति'–अष्टा. 7/2/115 ।
4. 'वा गतिगन्धनयोः'–धाः पा. अदा. 1050 ।
5. 'वी गतिप्रजनकान्त्यसनखादनेषु'धा. पा. अदा. 1048 ।
6. अनेन हि–"यदि 'वा गति-गन्धनयोः'–इत्ययं धातुः प्रजने वर्तते' ततः शक्यतेऽपि योगोऽवक्तुम्, वातेर्हि–वापयतीति भविष्यति, वीयतेस्तु–वाययतीति"–इत्युक्तम् न्या. 6/1/55 ।
7. अनेन हि–"यदि वातिः प्रजनेऽपि वर्तते, तदा योगोऽयं शक्यतेऽकर्तुम् । कथम् ? वातेः प्रवापयति, वीयतेः–प्रवाययती'त्युक्तम् पदम. 6/1/55 ।
8. अष्टा. 7/2/98 ।
9. (क) व्याडिः प.पा.प. 128, पृ. 42 ।
   (ख) पु. दे. ल. प. वृ. प. 68, पृ. 141 ।
   (ग) सी. दे. बृ. प. वृ. प. 85, पृ. 245 ।
   (ध) नी. दी. प. वृ.प. 63, पृ. 306 ।
   (ङ) ह.भा.प.भास्क.प. 88, पृ. 359 ।
   (च) भ. ना.प.शे.प. 53, पृ. 224 ।
   (ङ) शेषा. प. भास्क.प. 44, पृ. 423 ।
10. तथाहि
   (क) "किमर्थमिदमुच्यते न त्वमावेकवचन इत्येव सिद्धम् ? । न सिद्ध्यति । किं कारणम्? एकवचनाभावात् । एकवचन इत्युच्यते, न चात्रैकवचनं पश्यामः । प्रत्ययलक्षणेन । 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधः । एवं तार्हि इदमिह संप्रधार्य-लुक् क्रियतामादेशो वेति, किमत्र कर्तव्यम् ? परत्वादादेशौ, नित्यो लुक् । कृतयोरप्यादेशयोः प्राप्नोत्यकृतयोरपि । अन्तरङ्गावादेशौ । एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज् ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बाधित्वा बाहिरङ्गो लुग् भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । गोमान् प्रियो यस्य गोमत्प्रियः यवमत्प्रियः । गोमानिवाचरति गोमत्यते यवमत्यते । अन्तरङ्गानपि नुमादीन् बहिरङ्गो लुग् बाधत इती"त्याह पत.व्या.पा.भा. 7/2/2/98 ।
   (ख) "ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः ? नैवं शक्यम्, लुका तस्या भवितव्यम् । बहिरङ्गो लुक्, अन्तरङ्गावादेशौ, प्रथमं तौ भाविष्यतः ?

त्वत्तरः' 'अतिशयेनाहं मत्तरः'[1] 'त्वामिच्छति त्वद्यति' 'मामिच्छति [2]मद्यति' 'त्वामिवाचरति त्वद्यते' 'मामिवाचरति मद्यते'[3]-इत्यत्र प्रत्यये 'तव पुत्रः त्वत्पुत्रः', 'ममपुत्रो मत्पुत्रः' 'त्वं नाथोऽस्य त्वन्नाथः' 'अहं नाथोऽस्य [4]मन्नाथः' - इत्यादावुत्तरपदे च युष्मदस्मदोर्मपर्यन्तयोः 'त्वमे'त्यादेशार्थमारब्धं व्यर्थम् । अस्या अभावे हि समासोत्तरकालभाविनो लुको बहिरङ्गतया ततः प्रागेव विभक्तिमात्राश्रयतयान्तरङ्गौ 'त्वामावेकवचने'[5]-'इत्यनेनैव त्वमाऽऽदेशावेषु प्रयोगेषु मपर्यन्तयोर्युष्मदस्यदोः 'असिद्धं बहिरङ्गमन्तरङ्गे'[6] इति परिभाषाबलेन सिद्धौ ।

---

एतदेव तर्ह्यादिशवचनं ज्ञापकम् "अन्तरङ्गानपि विधीन् बहिरङ्गोऽपि लुग् बाधते' इति । तेन गोमान् प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादिर्लुका बाध्यते । एवं च सति 'त्वाहौ सौ' इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति । त्वं प्रधानमेषां त्वत्प्रधानाः, मत्प्रधानाः । यूयं पुत्रा अस्य युष्मत्पुत्रः अस्मत्पुत्रः । तुभ्यं हितं त्वद्धितम् मद्धितम् । तव पुत्रस्त्वत्पुत्रः, मत्पुत्रः, "इत्याह वाम. का. 7/2/98 ।

(ग) "प्रत्ययोत्तरपदयोश्च' इत्यत्र भाष्ये ज्ञापितोऽयमर्थः .................. इत्याह पु.दे.ल.प.वृ.प.68, पृ. 141 ।

(घ) "इयं परिभाषा प्रत्ययोत्तरपदयोश्च (7/2/98) भाष्यकारेण ज्ञापिता ......... इत्याह सी.दे.बृ.प.वृ.प.85, पृ. 245

(ङ) "ज्ञापकमत्र 'प्रत्ययोत्तरपदयोश्च' (7/2/98) इति सूत्रम् । तद्धि अन्या परिभाष्या 'त्वदीयो, मदीयः, त्वत्पुत्रः, मत्पुत्रः' इत्यादौ 'त्वमावेकवचने' (7/2/97) इति न प्राप्नोतीत्येवमर्थम् । अन्यथा समासोत्तरकालभाविनं बहिरङ्गलुकं बाधित्वा तेनैव त्वमयोः सिद्धौ किं प्रत्यत्यादिसूत्रेणेति वदन्ती' त्याह ह.भा.प.भास्क.प. 88, पृ. 359।

(च) "अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन 'त्वमावेकवचने 'इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापक– "मित्याह भ. ना.प. शे. प. 53 पृ. 223 ।

11. अनयोः प्रयोगयोः 'त्यदादीनि च" - अष्टा. 1/1/74' इति वृद्धसंज्ञकत्वाद् 'वृद्धाच्छः'- अष्टा. 4/2/114 'इतिच्छप्रत्ययः, 'आयनेयीनीयियः फढखच्छघां प्रत्ययदीनाम्' -अष्टा. 7/1/2 इतीयादेशः ।

1. अनयोः प्रयोगयोः 'द्विवचनविभाज्योपपदे तरबीयसुनौ' अष्टा.5/3/7, इति तरप् ।
2. अनयोः प्रयोगयोः 'सुप आत्मनः क्यच्' - अष्टा. 3/1/8 इति क्यच् ।
3. अनयोः प्रयोगयोः कर्तुः क्यङ् सलोपश्च' अष्टा. 3/1/11' इतिक्यङ् ।
4. एषु चतुर्षु 'षष्ठी' - अष्टा. 2/2/8' इति षष्ठीतत्पुरुषसमासः ।
5. अष्टा. 7/2/97 ।
6. (क) व्याडिः प. सू. प. 36, 79 पृ. 18, 33 ।
   (ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।

न च' निमित्ताभावे नैमित्तिकस्याप्यपायः'[1] इति परिभाषयात्र त्वमौ निवर्त्स्यतः, त्वमाऽऽदेशानन्तरं हि प्रत्ययस्थलेषु क्वचन तद्धितान्ततया, क्वचन सनाद्यन्ततया [2]प्रातिपदिकत्व[3]धातुत्वयोरनिवार्यतया, उत्तरपदस्थलेषु च समासे कृते समासत्वात् [4]प्रातिपदिकत्वस्यानिवार्यतया' सुपो धातुप्रातिपदिकयोः[5] 'इति सुब्लुको दुर्वारत्वेन त्वमादेशनिमित्तापायोऽवश्यं भावीति तत्र त्वमादेशयोःसम्पादनाय सूत्रस्यास्यावश्यकतया वैयर्थ्याभावेन कुतोऽस्या ज्ञापकत्वमस्य सूत्रस्येति शङ्कनीयम् ।

यतो बहिरङ्गस्य लुकोऽसिद्धतया विभक्तिं पश्यतः सूत्रस्य त्वमादेशनिमित्तापाय एव नास्ति । इत्थं सर्वथा व्यर्थमिदं सूत्रमात्मनः सार्थक्याय परिभाषामिमां ज्ञापयति । ज्ञापितयां चास्यामनया तेषु प्रयोगेषु त्वमौ बाधित्वा लुकि कृते विभक्त्यभावात् '[6]त्वमावेकवचने' इत्यनेन त्वमौ न प्राप्नुत इति तत्र त्वमादेशाय स्वांशे सूत्रमिदं चरितार्थं भवति । वस्तुतस्तु '[7]प्रत्ययोत्तरपदयोश्चे'ति सूत्रे '[8]मपर्यन्तस्य' इत्यस्यानुवृत्तिरेव 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषाया [9]ज्ञापिकेत्यन्यत्र निरूपितम् ।

---

(घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
(ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।
(च) भ. ना. प. शे. प. 51, पृ. 184 ।
(छ) शेषा. प. भास्क. प. 42, पृ. 417 ।

1. (क) व्याडिः पृ. सू. प. 40, पृ. 19 ।
(ख) निमित्तापाये नैमित्तिकस्याप्यपायः - पु. दे. ल. प. वृ. प. 113, पृ. 158 ।
(ग) सी. दे. बृ. प. वृ. प. 99 पृ. 256 ।
(घ) नी. दी. प. वृ. प. 64, पृ. 306 ।
(ङ) ह. भा. प. भास्क. प. 101 पृ. 365 ।
2. 'कृतद्धितसमासाश्च' - अष्टा. 1/2/46 ।
3. 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32 ।
4. 'कृतद्धितसमासाश्च' - अष्टा. 1/2/46 ।
5. अष्टा. 2/4/71 ।
6. अष्टा. 7/2/97 ।
7. अष्टा. 7/2/98 ।
8. अष्टा. 7/2/91 ।
9. 'ज्ञापिका अनुवृत्तयः' - इत्येतस्मिन् प्रघट्टके - इत्यर्थः ।

## 'प्रत्ययलोपे [1]प्रत्ययलक्षणम्'

सूत्रमिदं '[2]सर्वविधिभ्यो लोपविधिर्बलवा'निति परिभाषाया[3]ज्ञापकम् । यतोऽस्या अभावे 'राजा'दधि' वारीत्यादौ [4]लोप - [5]लुग्भ्यां प्रागेव [6]पदसंज्ञां कृत्वा पश्चात् सोर्लोपलुकौ स्यातामिति तत्र पदत्वसिद्धये कृतमिदं व्यर्थम् । ज्ञापितायां चास्यां पदसंज्ञायाः प्राग् लोपलुकोर्दुर्वारतया, तयोः कृतयोस्तत्र पदसंज्ञासम्पादनाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलं तु 'ते सन्ती'त्यादावयाद्यादेशात्[7]-पूर्वमस्तेरल्लोप[8] - सिद्धिः । कृते च तस्मिन्ननजादित्वादयाद्यादेशापर्त्तिन भवति । अस्या अभावे तु अल्लोपात्प्रागेवायाद्यादेशापत्तिर्दुवारा स्यात् ।

---

1. अष्टा. 1/1/62 ।
2. (क) व्याडिः प. सू. प. 57, पृ. 26 ।
   (ख) पु. दे. ल. प. वृ. प. 91, पृ. 150 ।
   (ग) सी. दे. बृ. प. वृ. प. 111, पृ. 264 ।
   (घ) नी. दी. प. वृ. प. 137, पृ. 316 ।
   (ङ) ह. भा. प. भास्क. प. 113, पृ. 369 ।
   (च) सर्वविधिभ्यो लोपविधिरियङ्विधिश्च बलवान्' - भ. ना. प. शे. प. 100, पृ. 330 ।
3. तथाहि–
   (क) "इह शास्त्रे सर्वविधिभ्यो लोपविधिर्बलवान् भवति । कथं ज्ञायते । यदयं 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इत्याह । कथं कृत्वा ज्ञापकम् । एतत्सूत्रं नारब्धव्यम् । कथम् । प्रत्ययाश्रयाणि कार्याणि भविष्यन्ति । सर्वाणि कृत्वा पश्चात् प्रत्ययलोपं करिष्यामि । पश्यत्याचार्यः । लोप एव तावद् भवति । तस्मिन् कृते तदाश्रयाणि न प्राप्नुवन्ति । तस्मात् 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इती"त्याह व्याडिः प. सू. प . 57, पृ. 26 ।
   (ख) "ज्ञापकं चास्याः सत्त्वे प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इति सूत्रम् । यदिहायं नाभविष्यत्तदा प्रागेव प्रत्ययकार्यं कृत्वा पश्चात् लोपादिष्टसिद्धौ सूत्रमिदमनर्थकं स्यादिती"त्याह पु. दे. ल. प. वृ. प. 91, पृ. 151 ।
   (ग) "ज्ञापकं चास्यां: 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इति सूत्रम् । यदीदं न स्यात्तदा लोपात् प्रागेव प्रत्ययकार्यं कृत्वा पश्चात् प्रत्ययलोपादिष्टसिद्धौ सूत्रमिदमनर्थकं स्यादिती"त्याह सी. दे. बृ. प. वृ. 111, पृ. 264 ।
4. 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' - अष्टा. 6/1/68 ।
5. 'स्वमोर्नपुंसकात्' - अष्टा. 7/1/23 ।
6. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14 ।
7. 'एचोऽयवायावः' - अष्टा. 6/1/78, 'कानि सन्ती'त्यत्र 'इकोय णचि' अष्टा. 6/1/77, इति यण् आदिपदेन गृह्यते ।
8. 'श्नसोरल्लोपः' - अष्टा. 6/4/111 ।

वस्तुतस्तु नेदं सूत्रमस्या ज्ञापकम् । यतो 'जगत्[1]' इत्यत्रान्तरङ्गत्वात् क्विपो[2]लोपे 'गमः क्वौ'[3] इत्यनुनासिकलोपे कृते 'ह्रस्वस्य पिति कृति[4]तुक्' इति तुकः सम्पादनाय 'प्रत्ययलोपे प्रत्ययलक्षण'मिति[5] सूत्रं चरितार्थम् । नाप्यस्याः किमप्यनन्यथा सिद्धं फलम् । 'ते सन्ती'त्यादौ हि परत्वान्नित्यत्वाच्चास्तेरलोपोऽ[6-7]याद्यादेशात्प्रागेव परिभाषामिमां[8] विनापि सुलभः । अतएव नेयं भाष्ये क्वापि व्यवक्षत । इत्थं सूत्रमिदं नास्या ज्ञापकम् । नापि चास्याः क्विपि फलमिति निश्चप्रचम् । तस्मादस्य न ज्ञापकत्वम् । एतज्ज्ञापिताया अस्याः फलं चान्यथासिद्धं, नेयं भाष्य सम्मता चेति [9]पुरुषोत्तमदेव - [10]सीरदेव - नीलकण्ठदीक्षित[11] - [12]हरिभास्कर - [13]भट्टनागेशा मन्वते ।

---

1. 'गच्छतीति जगत्' गमेः क्विप्च' - अष्टा. 3/2/76, इतिक्विप् ।
2. 'क्विपि इकार उच्चारणार्थः ककारपकारयोः क्रमशः 'लशक्वतद्धिते' - अष्टा. 1/3/8, 'हलन्त्यम्' - अष्टा. 1/3/3 इतीत्वे'तस्य लोपः' इति लोपः, वकारस्य च 'वेरपृक्तस्य' -अष्टा. 6/1/67, इति लोपः ।
3. अष्टा. 6/4/40 ।
4. अष्टा. 6/1/71 ।
5. अष्टा. 1/1/62 ।
6. 'श्नसोरल्लोपः' - अष्टा. 6/4/111 ।
7. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।
8. 'सर्वविधिभ्यो लोपविधिर्वलवान् ।
9. अनेन हि – "भाष्ये त्वियं परिभाषा नोपगता प्रयोजनाभावात् । यथोक्तोदाहरणस्य प्रकारान्तरेण साधितत्वाद् वार्णादाङ्गं बलीय इती"त्युक्तम् - ल. प. वृ. प. 91 पृ. 151 ।
10. अनेन हि – "भाष्येत्वियं नोपगता प्रयोजनाभावा"दित्युक्तम् - वृ. प. वृ. प. 111, पृ. 264 ।
11. अनेन हि – "इयं भाष्याव्यवहृता निर्मूला च । आशीरित्यादौ क्विवादेरन्तरङ्गत्वाल्लोप इत्त्वार्थं 'प्रत्ययलोपे. (1/1/62) इत्यस्य चारितार्थ्यान्निष्फला चे"त्युक्तम् - प. वृ. प. 137, पृ. 316 ।
12. अनेन हि – "तेन कानि सन्ति इत्यत्र यणः प्रागल्लोपः इति सीरदेवस्तन्न । परिभाषां विनापि परत्वान्नित्यत्वाच्च यणः प्रागल्लोपस्य प्रवृत्तेः । न चान्तरङ्गत्वात् पूर्वं यण् आशङ्क्यः । अकृतव्यूहपरिभाषाविरोधात् । यदप्याह 'प्रत्ययलक्षणसूत्रम् (1/1/62) अत्र ज्ञापकमिति तदपि न । 'जगत्' इत्यत्रान्तरङ्गत्वात् क्विपोलोपे 'गमःक्वौ' (6/4/40) इत्यननुनासिक लोपात्' ह्रस्वस्य पिति' (6/1/71) इति तुगर्थतया प्रत्ययलक्षणसूत्रस्योपक्षीणत्वात्" - इत्युक्तम् प. भास्क. प. 113, पृ. 369 ।
13. अनेन हि – "आतिदेशिकमनित्यम्' (प. 99)' सर्वविधिभ्यो लोपविधिरियङ्विधिश्च वलवान्; (प. 100) इत्यादि भाष्यानुक्तं वोध्य" मित्युक्तम् प. शे. प. 100' पृ. 330 ।

## '[1]प्रवाहणस्य ढे'

सूत्रमिदं '[2]पर्जन्यवल्लक्षणप्रवृत्ति'रिति परिभाषाया [3]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् । अनेन हि 'प्रवाहणस्यापत्यं [4]प्रवाहणेयः' इत्यत्र प्रवाहणस्य ढे परतउत्तरपदस्याचामादेरचो नित्यं पूर्वपदस्य च वा वृद्धिर्विधीयते, तत्र पूर्वपदस्य [5]'कितिचे'ति नित्यं प्राप्ताया वृद्धेर्विकल्पेन विधानं यद्यपि युक्तं, तथापि वाहन-शब्दस्यादेरचः स्वतः वृद्धित्वेन पुनर्विधानं व्यर्थतामेति । ज्ञापितायां चास्यां

---

1. अष्टा. 7/3/28 ।
2. (क) व्याडिः प. सू. प. 64, पृ. 28 ।
   (ख) पु. दे. ल. प. वृ. प. 86, पृ. 149 ।
   (ग) 'पर्जन्यवदिह लक्षणप्रवृत्तिः' - सी. दे. बृ. प. वृ. प. 87, पृ. 247 ।
   (घ) नी. दी. प. वृ. प. 111, पृ. 313 ।
   (ङ) ह. भा. प. भास्क. प. 90, पृ. 360 ।
   (च) भ. ना. प. शे. प. 120, पृ. 355 ।
   (छ) शेषा. प. भास्क. प. 103, पृ. 458 ।
3. तथाहि–
   (क) इह शास्त्रे पर्जन्यवल्लक्षणं दृष्टम् । तद्यथा । पर्जन्यो यावदूनं पूर्णं चाभिवर्षति, नापूर्णमभिवर्षति । एवं लक्षणमपि भवति । दीर्घस्य दीर्घत्वं भवति चिकीर्षति बुभूषति । कथं ज्ञायते । यदयं 'प्रवाहणस्य ढे' (7/3/28) इति वृद्धस्यापि वाहनशब्दस्य पुनर्वृद्धिं (वृद्धिप्रतिषेधं) शास्ति । पश्यत्याचार्यः । यत्रापि वृद्धिरस्ति तत्रापि वृद्धिर्भवति । पर्जन्यवल्लक्षणप्रवृत्ते"रित्याह व्याडिः प. सू. प. 64, पृ. 28 ।
   (ख) "ज्ञापकमत्र 'प्रवाहणस्य ढे' (7/3/28) इत्यनेन प्रवाहणस्यापत्यं प्रवाहणेयः इति शुभ्रादित्वाडढ्कि उभयपदवृद्धिविधानम् । तत्र च पूर्वपदस्य प्रशब्दस्य विभाषोत्तरपदस्य तु वाहणशब्दस्यापि नित्यं वृद्धिः । न च प्रवाहणेयीभार्यः इति 'वृद्धिनिमित्तस्य च तद्धितस्य.' (6/3/38) इति पुंवद्भावप्रतिषेधार्थमिदं वृद्धिविधानं स्यात् । 'जातेश्च' (6/3/41) इत्यनेनैव प्रतिषेधस्य सिद्धत्वात् । 'गोत्रं च चरणैः सह' (महाभाष्य 4/1/63) इति जातित्वमत्र । तस्माज् ज्ञापकमेव वृद्धिविधानमिति"इत्याह पु. दे. ल. प. वृ. प. 86, पृ. 149 ।
   (ग) "ज्ञापकं चात्र 'प्रवाहणस्य ढे' (7/3/28) इत्यनेन प्रवाहणस्यापत्यं प्रवाहणेयः इति शुभ्रादित्वाड्ढकि उत्तरपदवृद्धिविधानम्" इत्याह सी. दे. बृ. प. वृ. प. 87, पृ. 247 ।
   (घ) "ज्ञापकमप्यत्र 'प्रवाहणस्य ढे' (7/3/28) इत्यनेन प्रवाहणेयः इत्यत्र उत्तरपदस्य वाहणस्यादेराकारस्य वृद्धिविधानम् ...... इत्याह ह. भा. प. भास्क. प. 90, पृ. 360 ।
4. वहेः प्रपूर्वकाण्णिच् - प्रवाहयतीति प्रवाहणः । णिजन्तात् 'कृत्यल्युटो बहुलम्' - अष्टा. 3/3/113' इति कर्तरि ल्युट् प्रादिसमासः 'णेर्विभाषा' - अष्टा. 8/4/30 इति णत्वम् । ततोऽपत्यार्थे 'शुभ्रादिभ्यश्च' - अष्टा. 4/1/123 इति ढक् प्रत्ययोऽत्र भवति ।
5. अष्टा. 7/2/118 ।

वृद्धेरपि वृद्धिविधानमत्र स्वांशे चरितार्थं भवति । न च प्रवाहणेयीभार्य इत्यत्र [1]'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'इत्यनेन पुंवद्भावप्रतिषेधार्थमिदं वृद्धिविधानमस्याः परिभाषाया अभावेऽपि चरितार्थमिति नास्या ज्ञापकमिदमिति शङ्क्यम् । यतस्तत्र [2]'जातेश्चे'त्यनेनैव पुंवद्भावप्रतिषेधः सुलभः । न च तत्र जातिवाचकत्वाभावः शङ्क्यः, 'गोत्रं च चरणैः सह'[3] इत्यनेन जातेरतिदेशो हि तत्र सुलभः । ज्ञापिताया अस्याः फलं तु [4]'खट्वाढक'मित्यत्र दीर्घस्यापि 'अकः [5]सवर्णे दीर्घः' इति दीर्घस्य सिद्धिः । अस्या अभावे हि नात्र दीर्घस्यापि दीर्घः सिद्ध्येत् । अपि च 'ऊखतु'रिति[6] प्रयोगसिद्धिरस्याः फलम् । अस्याः सत्त्वे हि उखधातो[7]र्लिटि द्वित्वे[8] [9]ह्रस्वत्वे [10]हलादिशेषे [11]सवर्णदीर्घत्वे अभ्यासग्रहणेन ग्रहणात् [12]पुनर्ह्रस्वो न भवति ।

अस्या असत्त्वे तु अह्रस्व एव [13]ह्रस्वशास्त्रेण प्रवर्तितव्यमिति ह्रस्वदशायां ह्रस्वशास्त्राप्रवृत्तौ कृते दीर्घे ह्रस्वशास्त्रप्रवृत्तौ नायं प्रयोगः सिद्ध्येत् । न चास्याः सत्त्वेऽपि पुनः ह्रस्वशास्त्रप्रवृत्तौ बाधकाभावेन प्रयोगासिद्धिर्दुर्वारैवेति शङ्क्यम् । यतो 'लक्ष्ये [14]लक्षणं सकृदेव प्रवर्तते' इति परिभाषा पुनः ह्रस्वप्रवृत्तिं रुणद्धि ।

---

1. अष्टा. 6/2/39 ।
2. अष्टा. 6/2/41 ।
3. "आकृतिग्रहणा जाति र्लिङ्गानाञ्च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ॥"
व्या. म. भा. 4/1/2/63, गोत्रपदेनात्रापत्यात्मकस्य लौकिकस्य ग्रहणं न तु 'अपत्यं पौत्रप्रभृति गोत्रम् - अष्टा. 4/1/162 इति पारिभाषिकगोत्रस्य ग्रहणम्, चरणशब्देन च शाखाध्यायिनो गृह्यन्ते, तथा सति 'गोत्रं च चरणैः सहे'त्यस्य अपत्यप्रत्ययान्तः शाखाध्येतृवाचकश्च शब्दो जातिकार्यं लभत इत्यर्थः ।
4. खट्वा + आढक' इतिच्छेदः ।
5. अष्टा. 6/1/101 ।
6. 'उख् धातोर्लिटि प्रथमपुरुषद्विवचने रूपमिदम् ।
7. 'परोक्षे लिट्' - अष्टा. 3/2/125 ।
8. 'लिटि धातोरनभ्यासस्य' - अष्टा. 6/1/8 ।
9. 'ह्रस्वः' - अष्टा. 7/4/59 ।
10. 'हलादिःशेषः' - अष्टा. 7/4/60 ।
11. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
12. 'ह्रस्वः' - अष्टा. 7/4/59 ।
13. 'ह्रस्वः' - अष्टा. 7/4/59 ।
14. (क) 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः 'नी. दी. प. वृ. प. 112, पृ. 313 ।
(ख) भ. ना. प. शे. प. 121, पृ. 355 ।

न च लक्ष्ये लक्षणं सकृदेव प्रवर्तते 'इत्यस्याः परिभाषायास्तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तत इत्यर्थोऽवश्यं स्वीकार्यः, अन्यथा यून[1] इत्यत्र वकारस्य [2]सम्प्रसारणे कृते यकारस्य [3]सम्प्रसारणमनया न प्राप्नुयात् । तथा सति 'न सम्प्रसारणे-सम्प्रसारण'मिति निषेधो नोपपद्यते, इत्थमूखतुरित्यत्र प्राक् ह्रस्वप्रवृत्तावपि पुनर्दीर्घे लक्ष्यभेदात् ह्रस्वशास्त्रप्रवृत्तेर्दुवारतया नास्य प्रयोगस्य सिद्धिरस्याः फलमिति वाच्यम् । यतो जातिपक्षे तदभ्यासावयवाच्त्वजात्यवच्छिन्ने साधुत्वपरिच्छेदकतया शास्त्रस्य सकृत्प्रवृत्त्या चारितार्थ्येन पुनः प्रवृत्तौ बीजं नास्ति । पुनः प्रवृत्तिस्वीकारे च 'बभूवे'त्यत्र ह्रस्वशास्त्रस्यासकृत्प्रवृत्तिसंभवेन 'यथा तप्तेभ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेर'न्निति [4]भाष्योक्तरीत्या अप्रवृत्तनित्यविध्यविषयत्वलक्षणसाधुत्वपरिच्छेदो न सिद्ध्येत् । यदा तु व्यक्तिपक्षः, तदा व्यक्तिभेदेन शास्त्रभेदात् पुनरपि तच्छास्त्रं प्रवर्तत एव । एतौ च जातिव्यक्तिपक्षौ लक्ष्यवशादिह व्याकरणे व्यवस्थिताविति व्यक्तिपक्षमाश्रित्य ऊखतुरित्यत्र न पुनर्ह्रस्वशास्त्रप्रवृत्तिरापाद्या ।

भाष्ये तु 'पर्जन्यवल्लक्षणप्रवृत्ति'रित्यस्य न्यायसिद्धत्वमुक्तम्[5] । न्यायसिद्धस्यापि वस्तुनो ज्ञापकसिद्धत्वप्रतिपादनं 'स्थूणाखनन'न्यायेन न विरुद्धमतोऽस्या ज्ञापकत्वस्योपादानं स्थाने । [6]जिनेन्द्रबुद्धि – [7]पुरुषोत्तमदेव – [8]हरदत्त –

---

1. युवन् शब्दस्य शसि ङसो ङसि च रूपम् ।
2. 'श्वयुवमघोनामतद्धिते' – अष्टा. 6/4/133 ।
3. अष्टा. 6/1/37 ।
4. व्या. म. भा. 1/1/7/49 ।
5. तथाहि तत्र 'कृतकरि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षती'त्युक्तम् व्या. म. भा. 1/2/1/9 ।
6. अनेन हि "किमर्थं पुनरुत्तरपदस्य वृद्धिर्विधीयते, यावता वृद्धिमदेवैतत् ? यद्यप्येवम्, तथापि वृद्धिर्विधातव्या, तद्धितस्य वृद्धिनिमित्तत्वाद्, 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात् । यदि ह्युत्तरपदवृद्धिर्न विधीयते, ततो यस्मिन् पक्षे पूर्वपदे वृद्धिर्न विधीयते तस्मिन् पक्षे प्रवाहणेयी भार्या अस्येति प्रवाहणेयीभार्य इत्यत्र पुंवद्भावप्रतिषेधो न स्यात्, वृद्धेरनिमित्तत्वात्तद्धितस्य । यथा वैयाकरणभार्य इत्यत्र । ननु चासत्यपि वृद्धिनिमित्तत्वे तद्धितस्य 'जातेश्च'इति पुवद्भावप्रतिषेधो भविष्यति, अस्ति ह्यत्रापि 'गोत्रञ्च चरणैः सहेति' जातित्वम् ? एवं तर्हि एतज् ज्ञापयति - अनित्योऽयं प्रतिषेध इति । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे तद्धिते' इत्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवती"त्युक्तम् न्या. 7/2/28 ।
7. अनेन हि – "प्रवाहणस्य (च) ढे (7/3/28) इत्यनेन चोत्तरपदवृद्धिः विधीयते शुभ्रादिढको वृद्धिनिमित्तत्वसंपादनाय प्रवाहणेयीभार्य - इत्यत्र 'वृद्धिनिमित्तस्य च' तद्धितस्यारक्तविकार' इति (6/3/39) पुंवन्निषेधो यथा स्यात् । गोत्रं च चरणैः सहेति जातित्वाच्च प्रवाहणेयशब्दस्य जातेश्चेति (6/3/41) पुंवन्निषेधः सिद्ध एव, इदमुत्तरपदवृद्धिविधानं 'जातेश्चेत्यस्यानित्यत्वं' ज्ञापयति । तेन हस्तिनीनां समूहो हास्तिकमिति पुंवद्भावः सिद्ध्यती'त्युक्तम् ज्ञा. समु. सप्तविंशे देविकापादे पृ. 92 ।
8. अनेन हि – "ननु वृद्धिमदेवात्र स्वत एवोत्तरपदम्, कस्मै प्रयोजनाय पुनर्वृद्धिर्विधीयते ? उच्यते, यदा पूर्वपदे वृद्धिर्न भवति तदा यद्युत्तरपदेऽपि वृद्धिर्न स्यात्, 'वृद्धिनिमित्तस्य' इति

[1]भट्टनागेशास्तु 'प्रवाहणस्य ढे'इति उत्तरपदवृद्धिविधानं [2]'जातेश्चे'ति पुंवद्भाव-निषेधोऽनित्यः' इति वचनस्य ज्ञापकं, तेन हस्तिनीनां समूहो [3]'हास्तिक' - मित्यत्र 'भस्याढे तद्धते'[4] इत्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधों न भवतीति मन्वते ।

न च ज्ञापितस्यास्य वचनस्य फलाभावः 'हास्तिक'मित्यत्र हि '[5]ठक्छसोश्चे' - त्यनेनैव पुंवद्भावः सुलभ इत्यपि शङ्क्यः । यतस्तत्र छसा साहचार्यद् '[6]भवतष्ठक्छसौ'इत्यनेनैव विहितस्य ठको ग्रहणं भवति, न सर्वस्य । इत्थमीषामपि मतानि सम्यगिति मन्ये ।

## '[7]प्रशस्यस्यश्रः'

सूत्रमिदम् 'अगुणवचनेभ्योऽप्यजादी [8]प्रत्ययौ भवतः' इति वचनस्य [9]ज्ञापकम् । यतोऽत्र 'अजादी [10]गुणवचनादेवे'ति सूत्राद'जादी'इत्यनुवर्त्यानुवृत्तस्य सप्तम्यन्ततया

---

पुंवद्भावप्रतिषेधो न स्यात् - प्रवाहणेयीभार्य इति । माभूदेवम् 'जातेश्च'इत्येवं भविष्यति, 'गोत्रं च चरणैः सह'इति जातित्वम् ? एवं तर्ह्येतज् ज्ञापयति - अनित्योऽयं प्रतिषेध इति । तेन हस्तिनींनां समूहो हास्तिकमित्यत्र 'भस्याढे' इति वा' ठक्छसोश्च' इति वा प्राप्तस्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवती"त्युक्तम् पदम. 7/3/28 ।

1. अनेन हि – "उत्तरपदस्य वृद्धिमत्त्वेऽपि तद्विधानं पूर्वपदस्य वृद्ध्यभावेऽपि 'वृद्धि-निमितत्तस्ये'ति पुंवत्त्वप्रतिषेधार्थम् । 'जातेश्चे'ति निषेधस्त्वस्मादेव ज्ञापकादनित्य इति बोध्य"मित्युक्तम् ।
2. अष्टा. 6/3/41 ।
3. हस्तिनीनां समूह इति विग्रहे 'अचित्त - हस्ति - धेनोष्ठक्' अष्टा. 4/2/47 इति ठकि 'इसुसुक्तान्तात्क' - अष्टा. 7/3/51 इति ठस्य काऽऽदेशे 'भस्याढे तद्धिते पुंवद्भावो वक्तव्यः' वा. का. 6/3/35. इति पुंवद्भावे प्रातिपदिककार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
4. भस्याढे तद्धिते पुंवद्भावो वक्तव्यः' - वा. का. 6/3/35 ।
5. 'ठक्छसोश्च पुंवद्भावो वक्तव्यः' - वा. का. 6/3/35 ।
6. अष्टा. 4/2/115 ।
7. अष्टा. 5/3/60 ।
8. इष्ठन्नीयसुनावित्यर्थः ।
9. तथाहि -
   (क) "इदमप्यत्रायुक्तं वर्तते । किमत्रायुक्तम् ? । अजादी गुणवचनादेवेत्युक्त्वा गुणवचनानामप्यजाद्योरादेशा उच्यन्ते । नैषदोषः । एतदेव ज्ञापयति 'भवत एतेभ्योऽगुणवचनेभ्योऽप्यजादी' इति यदयमजाद्योः परत आदेशंशास्ती"त्याह पत. व्या. म. भा. 5/3/1/60 पृ. 460 ।
   (ख) "ननु च प्रशस्यशब्दस्यागुणवचनत्वादजादी न संभवतः ? एवं तर्हि आदेशविधानसामर्थ्यात् तदविषयो नियमो न प्रवर्तते - आजादी गुणवचनादेवेती"ति ग्रन्थेन ज्ञापकत्वमस्मिन् सूचयति - जया. का. 5/3/60 ।
   (ग) "प्रशस्यस्य श्रः (सू. 5/3/60) । अजाद्योरेतदादेशविधानं ज्ञापयत्येतेभ्यो-गुणवचनेभ्योऽप्यजादी इती"त्याह श्रीना. ज्ञा. सं. 5, पृ. 95 ।
10. अप्टा. 5/3/58 ।

विपरिणामं कृत्वा अजाद्योः प्रत्ययोः परतोऽनेन प्रशस्यशब्दस्य 'श्रेष्ठः[1]' 'श्रेयान्'[2] इत्यादौ श्राऽऽदेशो विधीयते । प्रशस्यशब्दस्य गुणवाचकत्वं नास्तीति 'अजादी गुण[3]-वचनादेवे'ति सूत्रविहिताविष्ठन्नीयसुनौ प्रशस्यशब्दाद् दुर्लभावितीदं सूत्रं व्यर्थम् । ज्ञापिते चास्मिन्वचन श्रेष्ठः श्रेयानित्यादौ श्रादेशविधानार्थं स्वांशे चरितार्थमिदं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'ज्येष्ठः[4]' इत्यादौ '[5]ज्य चे'त्यादि[6]-सूत्रै[7]र्ज्याद्यादेश - सिद्धिः । अस्यासत्त्वे हि [8]प्रशस्यादिशब्दानामगुणवचनानां [9]ज्याद्यादेशास्तैः सूत्रैर्न सिद्ध्येयुः । यतोऽस्य वचनस्याभावे प्रशस्यादिशब्देभ्यः [10]इष्ठन्नादिप्रत्यया एव दुर्लभाः । ज्ञापकमिदमुपलक्षणं स्वोत्तरसूत्राणाम्[11] । यतस्तान्यपि भवन्त्यत्र ज्ञापकानि । ज्ञापकत्वमेषामूह्यम् ।

---

1. अयमेषामतिशयेन प्रशस्य इत्यर्थे प्रशस्यशब्दात् 'अतिशायने तमविष्ठनौ' अष्टा. 5/3/55, इति इष्ठन् प्रत्यये 'प्रशस्यस्य श्रः' - अष्टा. 5/3/60 इति श्राऽऽदेशे 'प्रकृत्यैकाच्' - अष्टा. 6/4/163 इति प्रकृतिभावाच्छ्रशब्दस्य टिलोप - यस्येति - लोपयोरभावे स्वादिकार्येषु कृतेषु रूपमिदम् ।
2. उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्य इत्यर्थे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' - अष्टा. 5/3/57 इति ईयसुन् प्रत्यये पूर्ववत् श्राऽऽदेशे 'प्रकृत्यैकाच्' - अष्टा. 6/4/163, इति प्रकृतिभावाच्छ्रशब्दस्य टिलोप-यस्येतिलोपयोरभावे स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. अष्टा. 5/3/58 ।
4. साधुत्वमस्य पूर्ववत् ।
5. अष्टा. 5/3/61 ।
6. आदिशब्देन 'वृद्धस्य च' - अष्टा. 5/3/62, 'अन्तिकबाढयोर्नेदसाधौ' - अष्टा. 5/3/63, 'युवाल्पयोः कनन्यतरस्याम्' - अष्टा. 5/3/64, 'विन्मतोर्लुक्' - अष्टा. 5/3/65, इतीमानि सूत्राणि ग्राह्याणि ।
7. आदिपदेन नेद - साध - कन् - 'इत्यादेशा विनो मतुपश्च लुक् च ग्राह्याः ।
8. आदिपदेन वृद्धान्तिकयुवाल्पादिशब्दा ग्राह्याः ।
9. आदिपदेन नेदादयो ग्राह्याः ।
10. आदिपदेन ईयसुन्नादयो ग्रहीतव्याः ।
11. 'ज्य च' - अष्टा. 5/3/61, इत्यारभ्य 'विन्मतोर्लुक्' । - अष्टा. 5/3/65, इत्यन्तानामित्यर्थः ।

## 'बिल्वादिभ्योऽण्'[1]

सूत्रमिदं 'स्वरविधौ [2]व्यञ्जनमविद्यमानव'दिति परिभाषाया [3]ज्ञापकम् । यतोऽस्या अभावे सूत्रमिदं व्यर्थम् । तथाहि – बिल्वस्यावयवो विकारो वा बैल्व[4] इत्यादौ 'अनुदात्तादेश्च'[5] इत्यञो बाधनार्थमारब्धमिदं व्यर्थम् । अनुदात्तत्व-स्याज्धर्मत्वाद्[6] बिल्वादीनां शब्दानामादावज्नास्तीत्यनुदात्ताऽऽदित्त्वाभावादञोऽ-प्राप्त्यास्य वैयर्थ्यं स्पष्टम् । ज्ञापितायां चास्यां व्यञ्जनस्याविद्यमानत्वाद् बिल्वादीना-

---

1. अष्टा. 4/3/136 ।
2. (क) व्याडिः प. सू. प. 33, पृ. 17 ।
   (ख) पु. दे. ल. प. वृ. प. 32, पृ. 126 ।
   (ग) सी. दे. बृ. प. वृ. प. 53, पृ. 220 ।
   (घ) नी. दी. प. वृ. प. 67, पृ. 306 ।
   (ङ) ह. भा. प. भास्क. प. 55, पृ. 346 ।
   (च) भ. ना. प. शे. प. 80, पृ. 304 ।
   (छ) 'वृत्तिकारस्तु'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति शेषा. प. भास्क. प. 68, पृ. 437 ।
3. तथाहि –
   (क) "ज्ञापकं चात्र अनुदात्तादेरञ्बाधनार्थं 'बिल्वादिभ्योऽण्' (4/3/136) इति वचनम् । यदि हि व्यञ्जनमविद्यमानवन्न स्यात् तदा न बिल्वादयोऽनुदात्तादय इति तद्व्यर्थं स्यात् । अनुदात्तादेरज्धर्मत्वाद् बिल्वादीनां तु हलादित्वादिति । कृतं तु ज्ञापकमुक्तार्थस्ये"– त्याह पु. दे. ल. प. वृ. प. 32, पृ. 126 ।
   (ख) "ज्ञापकं चात्र 'अनुदात्तादेश्च' (4/3/140) इत्यञो बाधनार्थं 'विल्वादिभ्योऽण्' (4/3/136) इति वचनम् । यदि - व्यञ्जनं विद्यमानं स्यात्तदा विल्वादयोऽनुदात्तादयो न भवेयुः । अनुदात्तस्याज्धर्मत्वादिति प्राप्तिरेव नास्ति । मयटो बाधनार्थं तु न वाच्यम् । मयड्बाधनार्थे ह्यस्मिन् 'बिल्वादिभ्योऽण्' (4/3/136) इत्यण्ग्रहणमनर्थकं स्यात् । यथाप्राप्ताभ्यनुज्ञाने 'अनुदात्तादेश्च' (4/3/140) इत्यण्माभूदिति । अञश्च हलादित्वादप्राप्तिरित्युक्तम्" इत्याह सी. दे. बृ. प. व. प. 53, पृ. 220 ।
   (ग) "ज्ञापकमत्र 'अनुदात्तादेश्च' (4/3/140) इत्यञो वाधनार्थं 'बिल्वादिभ्योऽण्' (4/3/136) इति वचनम् । यदि व्यञ्जनं विद्यमानं भवेत् तर्हि विल्वादी-नामनुदात्तत्वाभावादञ् न स्यादेवेति किं तेने"त्याह ह. भा. प. भास्क. प. 55, पृ. 346 ।
4. विल्वशब्दो विल्वतिष्योर्वान्तः स्वरितः इत्यन्तः स्वरितः उदात्तो वा पदम. 4/3/136' तस्मात् 'स्वरविधौ व्यञ्जनमविद्यमानवदिति, परिभाषावलेन अनुदात्तादित्वात् 'अनुदात्तादेश्च' - अष्टा. 4/3/140 - इत्यञ् प्राप्तस्तं प्रबाध्य 'विल्वादिभ्योऽण्' - अष्टा. 4/3/136 इत्यणि 'यस्येति च' - अष्टा. 6/4/148 इत्यकारलोपे'तद्धितेष्वचामादेः' - अष्टा. 7/2/117, इत्याद्यचो वृद्धौ तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
5. अष्टा. 4/3/140 ।
6. 'नीचैरनुदात्तः 1/2/30 ।

मनुदात्तादित्वेन प्राप्तस्याञो बाधनार्थमिदं स्वांशे चरितार्थं भवति । न च बिल्वादि - गणे[1] काण्डपाटलीशब्दावपि पठिताविति ताभ्यां 'नित्यं वृद्धशरादिभ्यः'[2] इति प्राप्तस्य मयटो बाधनार्थं सूत्रमिदं चरितार्थमतो नास्य ज्ञापकत्वमस्या इति शङ्क्यम् । यतो मयड्बाधनार्थेऽस्मिन्[3] योगेऽण्ग्रहणं व्यर्थं स्यात् । तथाहि - अण्ग्रहणं चात्र काण्ड - पाटली - शब्दाभ्यां प्राप्तं मयटं प्रबाध्य [4]'अनुदात्तादेश्च'इति प्राप्तस्याञो बाधनार्थं कृतं, तच्चास्या अभावे व्यर्थम् । यतोऽमू शब्दौ हलादी स्त इत्यनुदात्तादित्वाभावादञः प्राप्तिरेव नास्ति । तस्मादण्ग्रहणमस्या ज्ञापकमित्यत्र नास्ति काचन विप्रतिपत्तिरिति मन्ये ।

ज्ञापिताया अस्याः फलं तु 'कर्तव्य[5]'मित्यादौ तव्यप्रत्ययादेस्तकाराकारस्य [6]'आद्युदात्तश्चे'त्युदात्तत्व-सिद्धिः । अस्या अभावे हि तव्यप्रत्ययादेस्तकाराकारस्याऽऽदित्वाभावादुदात्तत्वं न सिद्ध्येत् ।

## 'भ्रातृपुत्रौ [7]स्वसृदुहितृभ्याम्'

सूत्रमिदं 'यत्रोर्ध्वं प्रकृतेस्तल्लक्षणो विशेषस्तत्र वृद्धोयूनेत्याद्येकशेषः'[8] इति वचनस्य ज्ञापकम्[9] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि - 'भ्राता च स्वसा च भ्रतरौ' 'पुत्रश्च दुहिता च पुत्रौ' इत्यत्र भ्रातृ - पुत्रयोरेकशेषार्थ-

---

1. 'बिल्वाव्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका । कर्पासी । पाटली । कर्कन्धू । कुटीर, इति बिल्वादिः ग. पा. 4/3/136
2. अष्टा. 4/3/144 ।
3. 'बिल्वादिभ्योऽण् - अष्टा. 4/3/136 ।
4. अष्टा. 4/3/140 ।
5. 'डुकृञ् करणे' धा. पा. तना. 1472 इति कृधातोः 'तव्यत्तव्यानीयरः' - अष्टा. 3/2/96 इति तव्यप्रत्यये कृते रूपमिदं सिद्ध्यति ।
6. अष्टा. 3/1/3
7. अष्टा. 1/2/68 ।
8. 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' – अष्टा. 1/2/65 ।
9. तथाहि –
   (क) "एवं तर्हि सिद्धे सति यदिमं योगं शास्ति तज्ज्ञापयत्वार्यो 'यत्रोर्ध्वं प्रकृतेः स्यात् तल्लक्षण एव विशेषः तत्रैकशेषो भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? हंसश्च वरटा च कच्छपश्च डुलिश्च, अश्वश्च रोहिच्चेति, अत्रैकशेषो न भवति" – इत्यह पत. व्या. म. भा. 1/2/3/68 ।
   (ख) "भ्रातृपुत्रौ स्वसृ. (सू. 1/2/68) । 'पुमान् स्त्रिया' (1/2/67) इत्येव सिद्धे इदं सूत्रं 'यत्रोर्ध्वं प्रकृतेस्तल्लक्षणो विशेषस्तत्र वृद्धो यूनेत्याद्येकशेष इत्यर्थस्य ज्ञापक"मित्याह श्री. ना. ज्ञा. सं. 1, पृ. 41 ।

मिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । तत्र तयोरेकशेषो हि [1]'पुमान् स्त्रिया' - इत्यनेनैव सिद्धः । ज्ञापिते चास्मिन्वचने यत्र प्रकृतेरूर्ध्वमेव स्त्रीपुंलक्षणो विशेषोऽस्ति न तु प्रकृतौ तत्रैव 'पुमान् स्त्रिये'ति प्रवर्तते, यथा 'हंसश्च हंसीच'इत्यत्र हंस इति प्रकृतिरेकैवोभयत्र, ततः परमेव भेदोऽस्तीति 'पुमान् स्त्रिये' त्येकशेषे 'हंसौ' इति भवति, 'भ्राता च स्वसा च' पुत्रश्च दुहिता चेत्यत्र तु प्रकृतावेव भेदोऽस्तीति 'पुमान् स्त्रिये'त्येकशेषो न प्राक् प्राप्नोतीति तत्रैकशेषार्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'हंसश्च वरटा चे'त्यादौ 'पुमा[2]न्स्त्रिये'त्यनेनैकशेषाभावः । अस्य वचनस्यासत्त्वे हि समानायामाकृतौ शब्दभेदाऽऽत्मकस्य तल्लक्षणविशेषस्य सद्भावादत्रैकशेषापत्तिर्दुर्वारा[3]स्यात् ।

## [4]'यङोऽचि च'

सूत्रमिदं 'पचादिराकृतिगणः' इति वचनस्य [5]ज्ञापकम् । यतोऽनेन यङन्तादच्प्रत्यये परे यङो लुग् विधीयते, यङन्तस्य च पचादिगणे पाठाभावत् ततोऽच् प्रत्ययस्य दुर्लभतयाऽच्प्रत्यये परे यङो लुग्विधायकमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'लोलुव' इत्यादौ सूत्रमिदं चरितार्थं भवति । 'लोलुवः' इति हिं पुनः पुनः, अतिशयेन वा लुनातीति विग्रहे लूञ्[6] धातोः 'धातोरेकाचो हलादेः [7]क्रिया-समभिहारे यङ्'इति यङि 'सन्यङोः[8]' इति द्वित्वे 'गुणो [9]यङ्लुकोः' - इति गुणे

---

1. अष्टा. 1/2/67 ।
2. अष्टा. 1/2/67 ।
3. 'पुमान् स्त्रिया' - अष्टा. 1/2/67 ।
4. अष्टा. 2/4/74 ।
5. तथाहि–
   (क) 'पचादिराकृतिगणः इति । ........... तथा यङ्न्तानां 'यङोऽचि च'इति यङोऽस्मिन्नचि लुगुक्तः' इति ग्रन्थेन ज्ञापकमिदसूसुचद् ह. मि. पदम. 3/1/134 ।
   (ख) पचादिराकृतिगणः । ........... अचूप्रत्यये परे यङ्लुग्विधानाच्चेतिं भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 400 ।
   (ग) पचादिराकृतगणः । ................. अच्प्रत्यये परे यङ्लुग्विधानाच्चेति एन्. एस. रामा. ज्ञा. सं. परि. 2, पृ. 210 ।
6. धा. पा. लूञ् छेदने' क्र्या. 1484 ।
7. अष्टा. 3/1/22 ।
8. अष्टा. 6/1/9 ।
9. अष्टा. 7/4/82 ।

लोल्य'इति स्थिते पचाद्याचि[1] यङो[2]लुकि '[3]न धातुलोप आर्धधातुके' इति गुणप्रतिषेधे [4]अचिश्नुधातु' - इत्युवङि कृदन्तत्वेन [5]प्रातिपदिकत्वे स्वादिकार्येषु च कृतेषु सिद्ध्यति । ज्ञापितस्यास्य वचनस्य फलं तु 'चक्रधरः' इत्यादिप्रयोगाणां सिद्धिरित्यन्यत्र प्रबन्धे 'ज्ञापका निर्देशाः' इति प्रघट्टके चारु प्रतिपादितम् ।

## [6]'युवाखलतिपलितवलिनजरतीभिः'

समानाधिकरणाधिकारे युवजरत्योः समासविधायकमिदं सूत्रं 'प्रातिपदिक[7]-ग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति परिभाषाया [8]ज्ञापकम् । यतोऽस्या अभावे तयोः सामानाधिकरण्यानुपपत्तेः समासो न घटते । ज्ञापितायां चास्यां युवतिजरत्योः समासविधानायेदमुपपद्यते । न च सत्यामपि परिभाषायां युवतिजरत्योर्भिन्नार्थ-

1. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' - अष्टा. 3/1/134 ।
2. 'यङोऽचि च' - अष्टा. 2/4/74 ।
3. अष्टा. 1/1/4 ।
4. 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' - अष्टा. 6/4/77 ।
5. 'कृत्तद्धितसमासाश्च' - अष्टा. 1/2/46 ।
6. अष्टा. 2/1/67 ।
7. (क) व्याडि. पः सू. प. 25, पृ. 13 ।
   (ख) प. दे. ल. प. वृ. प. 26, पृ. 123 ।
   (ग) सी. दे. बृ. प. वृ. प. 28, पृ. 193 ।
   (घ) नी. दी. प. वृ. प. 38, पृ. 300 ।
   (ङ) ह. भा. प. भास्क. प. 28, पृ. 334 ।
   (च) भ. ना. प. शें. प. 72, पृ. 288 ।
   (छ) शेषा. प. भास्क. प. 61, पृ. 432 ।
8. तथाहि –
   (क) "भाष्यकारेण तु सौकर्याद् 'युवाखलति.' (2/1/67) इत्यत्र युवशव्दस्य स्वरूपस्य जरतीशब्देन सामानाधिकारण्यान्यथानुपपत्त्या ज्ञापिते"त्याह पु. दे. ल. प. वृ. प. 26, पृ. 123 ।
   (ख) "ज्ञापकं चास्या भाष्यकारेण 'युवाखलतिपलितवलिनजरतीभिः' (2/1/67) इत्यत्र समानाधिकरणाधिकारे युवजरत्योः समासविधावुक्तम् । अन्यथा यद्येषा न स्यात्तदानयोः सामानाधिकरण्यानुपपत्तेः समासोऽघटमानः स्या"दित्याह सी. दे. बृ. प. वृ. प. 28, पृ. 194 ।
   (ग) "ज्ञापकमत्र युवाखलतिसूत्रे युवजरत्योः समासविधानम् । एतत्परिभाषाऽभावे हि तत्र सामानाधिकरण्याधिकारात् समासानुपपत्तिरित्याकरः" इत्याह ह. भा. प. भास्क. प. 28, पृ. 334 ।
   (घ) "युवाखलति (सू. 2/1/67) इदं ज्ञापयति प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण"मित्याह श्रीना. ज्ञा. सं. 2, पृ. 58 ।

त्वादनुपपन्न एव समासो युवतिर्हि द्वितीयवयाः, जरती तु वृद्धोच्यत इति शङ्क्यम् । यतो युवतिर्जरतीवच्चाञ्चल्यविरहात् जरती च युवतिरिव चाञ्चल्यादिति युवतिजरत्योः सामानाधिकरण्यमस्ति । नापि चैवं 'युवा जरतीव उच्छूनस्तनत्वात् श्मश्रुशून्यत्वाच्च, तथा युवेव जरती प्रागल्भ्यादिति युवजरत्योः समानाधिकरण्यमस्या अभावे ऽप्युपपन्नं तत्कथमिदं ज्ञापकमस्या इत्यपि शङ्क्यम् । यतो युवा जरतीवेति यूनो जरत्या सह समासे कृते तथोपचरितं सामानाधिकरण्यं स्वभावान्न प्रतीयते ।

न चेदमन्यथानुपपत्त्या 'लिङ्गविशिष्टग्रहणे प्रातिपदिकस्यापि ग्रहणमित्येव कुतो न ज्ञापयतीत्यपि शङ्कनीयम् । यतस्तादृशविपरीतार्थज्ञापने 'कुमारः श्रमणादिभिः' इत्यत्र श्रमणादीनां स्त्रीलिङ्गानां निर्देशोऽनर्थकः स्यात् । इयं च परिभाषा कात्यायनेनापूर्ववचनरूपेण पठिता[1] । ज्ञापिताया अस्याः फलम् - 'अयस्कुम्भी'त्यत्र 'अतः [2]कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'ति सत्वस्य, 'स्वश्रू'रित्यत्र [3]स्वौज'सिति सोश्च सिद्धिः । अस्याभावेऽत्र नानयोः सिद्धी स्याताम् । अत्रापि पदं केवलस्यापि ग्रहणार्थमुपात्तम् ।

## 'रिक्ते[4]विभाषा'

सूत्रमिदं 'पर्यायेणानेके स्वरा न भवन्ती'ति वचनस्य ज्ञापकम्[5] । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – 'रिक्तः, 'रिक्तः[6] - इत्यत्र सूत्रेणानेन विकल्पेन आद्युदात्तो विधीयते, पक्षे प्रत्ययस्वरेणान्तोदात्तत्वं[7] भवति, अस्य वचनस्याभावे पर्यायेण तत्तत्स्वरः स्यादिति कदाचिद् धातुस्वरेण[8] आद्युदात्तत्वं

1. 'ङ्याब्ग्रहणमनर्थकं - प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्, 'प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगर्थम्' व्या. म. भा. 4/1/1/1 इतीमे वार्तिके ।
2. अष्टा. 8/3/46 ।
3. 'ङ्याप्प्रातिपदिकात्' - अष्टा. 4/1/1, 'स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याभ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्' - अष्टा. 4/1/2 ।
4. 'अष्टा. 6/1/208 ।
5. तथाहि –
   (क) "यदयं 'रिक्ते विभाषे'ति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यो न पर्यायो भवती'ती"त्याह पत. व्या. म. भा.। 6/1/6/158 ।
   (ख) " 'रिक्ते विभाषा' (सू. 6/1/208) इति सिद्धे पर्याये पर्यायविधानं ज्ञापकम् अन्यत्र न पर्यायो भवतीती"त्याह. एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 177 ।
6. 'रिचिर् विरेचने धा. पा. स्वा. 1442, इति रिच् धातोः कर्मणि क्तप्रत्यये रूपद्वयमिदम्
7. 'आद्युदात्तश्च' - 'अष्टा. 3/1/3 ।
8. 'धातोः' - 6/1/162 ।

कदाचित् [1]प्रत्ययस्वरेणान्तोदात्तत्वमित्येवं पर्यायेण स्वरद्वयस्य सुलभतया विकल्पविधान–फलसिद्धिरस्य सूत्रस्याभावेऽपि हि सुलभा । ज्ञापिते चास्मिन् वचने सूत्रमिदं विकल्प-विधानाय स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्यान्यत्र फलं मृग्यम् ।

## '[2]वतोरिड् वा'

सूत्रमिदं 'वत्वन्तस्य संख्याकार्यं भवती'ति वचनस्य ज्ञापकम्[3] । यतोऽस्य वचनस्याभावे सति च बहुगणेतिसूत्रप्रत्याख्याने[4] सूत्रमिदं व्यर्थम् । तथाहि –'तावतिकः'[5], 'तावत्कः'[6] - इत्यादौ वत्वन्तात् पदस्य कनः इडागमं विधातुं सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावेऽनुपपन्नम् । वत्वन्तस्य संख्याशब्देना ग्रहणे हि ततः 'संख्याया[7] अतिशदन्तायाः कन्'इति कनोऽप्राप्त्या वत्वन्तात् परस्य कन इड्विधानमिदं नोपपद्यते । ज्ञापिते चास्मिन् वचने वत्वन्तस्यापि संख्यात्वेन ततः कनः[8] सुलभतया 'तावतिकः' - इत्यादौ इडर्थमिदमुपपन्नं भवति । ज्ञापितस्यास्य वचनस्य फलं तु वत्वन्ते संख्यासंज्ञाया[9] अकरणजन्यं लाघवम् । यतः - अर्धमात्रालाघवेन[10] पुत्रोत्सवं मन्यन्ते वैयाकरणाः' ।

---

1. 'आद्युदात्तश्च' अष्टा. 3/1/3 ।
2. अष्टा. 5/1/23 ।
3. तथाहि –
   (क) " 'बह्वादीनामग्रहणम्' । बह्वादीनां ग्रहणं शक्यमकर्तुम् । केनेदानीं संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति । ज्ञापकात् सिद्धम् । ज्ञापकात् सिद्धमेतत् । किं ज्ञापकम्? । यदयं 'वतोरिड्वे'ति संख्यायां विहितस्य कनो वत्वन्तादिटं शास्ती"- त्याह. पत. 1/1/5/221
   (ख) "बहुगण-(सू. 1/1/23) । 'वतोरिड्वा' 5/1/23) इत्यादिज्ञापकात्, बहुगणादीनां संख्याकार्यं भवती"त्याह श्रीना. ज्ञा. सं. 1 पृ. 137 ।
4. 'बहुगणवतुडतिसंख्या' - अष्टा. 1/1/23 ।
5. तत्परिमाणमस्येत्यर्थे तच्छब्दात् 'यत्तदेतेभ्यः परिमाणे वतुप्' - अष्टा. 5/2/39 इति वतुप्प्रत्यये 'तत् + वत्' - इत्यवस्थायाम् 'आ सर्वनाम्नः' - अष्टा. 6/3/9/ इति तकारस्य आत्वे' संख्याया अतिशदन्तायाः कन्' - अष्टा. 5/1/22, इति वत्वन्तस्य संख्यात्वेन ततः कनि 'वतोरिड्वा' - अष्टा. 5/1/23, इति कन इडागमे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. 'वतोरिड्वा' - अष्टा. 5/1/23, इति इडभावपक्षे 'तावतिकः' इतिवद्रूपमिदम् ।
7. अष्टा. 5/1/22 ।
8. संख्याया अतिशदन्तायाः कन्' - अष्टा. 5/1/22 ।
9. 'बहुगणवतुडतिसंख्या' - अष्टा. 1/1/23 ।
10. भ. ना. प. शे. प. 134, पृ. 366 ।

## '[1]वतोरिथुक्'

सूत्रमिदं 'वन्त्वन्तस्य संख्याकार्यं भवती'ति वचनस्य ज्ञापकम्[2] । यतोऽस्य वचनस्याभावे, 'बहुगणे'ति सूत्रप्रत्याख्याने च[3] सति सूत्रमिदमनुपपन्नम् । तथाहि – 'यावतिथः'[4] - इत्यादौ वतोर्डति परे इथुगागमं विधातुमारब्धमिदम् । तच्चास्य वचनस्याभावेऽनुपपन्नम् । वत्वन्तस्य संख्याग्रहणेनाग्रहणे [5]तस्माड्डटोऽ प्राप्त्या वतोर्डटि परे विधीयमान इथुडागमो हि नोपपद्यते । ज्ञापिते चास्मिन् वचने वत्वन्तस्य संख्याग्रहणेन ग्रहणाड्डटः[6] प्राप्त्या 'यावतिथः' - इत्यादौ इथुगागमार्थं सूत्रमिदमुपपन्नं भवति । ज्ञापितस्यास्य वचनस्य फलं तु संख्या संज्ञाया[7] अकरणजन्यं लाघवम् । यतः 'अर्धमात्रालाघवेन[8] पुत्रोत्सवं मन्यन्ते वैयाकरणाः' ।

## 'वा क्यषः'[9]

सूत्रमिदम् 'इह शास्त्रे [10]व्यवस्थितविभाषा भवति' - इति परिभाषाया ज्ञापकम्[11] । यतः 'पटपटायति' 'पटपटायते' इत्यत्र विभाषात्मने-पदार्थमारब्धमिदं

---

1. अष्टा. 5/2/53 ।
2. तथाहि –
   (क) "वतोरेव ज्ञापकं स्यात् । नेत्याह । योगापेक्षं ज्ञापक"मिति ग्रन्थेन ज्ञापकत्वमत्र वचनेऽस्य सूचयति पत. व्या. म. भा. 1/1/5/22 ।
   (ख) "वतोरिड्वा' (सू. 5/1/23 ) इत्यादिज्ञापनकाले बहुगणादीनां संख्याकार्यं भवती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 137 ।
3. 'वहुगणवतुडतिसंख्या' - अष्टा. 1/1/23।
4. यावतां पूरण इत्यर्थे 'यत्तदेतेभ्यः परिमाणे वतुप्' - अष्टा. 5/2/39 इति वतुपि 'आ सर्वनाम्नः' - अष्टा. 6/3/91 इत्यात्वे च कृते निष्पन्नाद् यावच्छब्दात् 'तस्य पूरणे डट्' - अष्टा. 5/2/48 इति डटि 'वतोरिथुक्' - अष्टा. 5/2/53, इति इथुगागमेऽनुबन्धलोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. 'तस्य पूरणे डट्' - अष्टा. 5/2/48 ।
6. 'तस्य पूरणे डट्' - अष्टा. 5/2/48 ।
7. वहुगणवतुडतिसंख्या - अष्टा. 1/1/23 ।
8. भ. ना. प. शे. प. 134 पृ. 366 ।
9. अष्टा. 1/3/90 ।
10. व्याडिः प. सू. प. 32 पृ. 16 ।
11. तथाहि –
    (क) 'इह शास्त्रे व्यवस्थितविभाषा भवति' । कथं ज्ञायते । यदयं 'वा क्यषः (1/3/90) इति ब्रवीतीत्याह व्याडिः प. सू. प. 32, पृ. 16 ।
    (ख) "लोहितादिडाज्भ्यः क्यप्विधौ (3/1/13) योगविभागेन चकारेण वा क्यङनुवर्त्यक्यष् - क्यङ्भ्यां लोहितायति लोहितायते इत्यादौ आत्मनेपद- परस्मैपौसिद्धौ । परस्मैपदात्मनेपदविधौ 'वा क्यष' इति वचनं ज्ञापयति - व्यवस्थितविभाषयापीह कार्याणि क्रियन्त इति । न च वाच्यम्, असति 'वा क्यष' इत्यस्मिन् क्यङ्पक्षे

व्यर्थम् । तत्र हि विभाषात्मनेपदमन्यथासिद्धम् । तथाहि – अनुकरणे 'पटत्' इत्यस्य 'नित्यवीप्सयो'[1]रिति द्विर्वचने 'पटत् पटत्' इत्यवस्थायाम् 'अव्यक्तानुकरणाद्[2] द्व्यजवरार्धादनितौ डाच्'इति डाचि 'नित्यमाम्रेडिते डाचि'[3] इति पूर्वपररूपे तकारस्य पकारे 'पटपटा'इति स्थिते वा क्यचि[4] पट-पटायधातोर्लटि 'शेषात्कर्त्तरि[5] परस्मैपद'मिति परस्मैपदे तिपि 'पटपटायति' इति, क्यचोऽभावे क्यङि 'अनुदात्तङित[6] आत्मनेपद'मिति आत्मनेपदे ते 'पटपटायते' इति सिद्ध्यतः । क्यङ्[7] चात्र विभागेन सुलभः । तथाहि - 'कर्तुः क्यङ् सलोपश्च' - '[8]भृशादिभ्योभुव्यच्व्वेर्लोपश्च हलः' क्यङित्येव । ततो 'लोहिता दिडाज्भ्यः'[9] इत्येवेति । ज्ञापितायां चास्यां लोहितादिषु[10] नीलादीनामात्मनेपदमेव भवति लोहितस्योभयमिति व्यवस्थितविभाषार्थं स्वांशे चरितार्थमिदं भवति । स्वीकृतायां चास्यां 'लोहितादिडाज्भ्यः क्यष्वचने भृशादिष्वितराणि' इति वार्तिकद्वयमपि[11] नारब्धव्यं भवति ।

ज्ञापिताया अस्याः फलं तु –

**'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।**
**मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥'**

---

लोहनीयत - इत्यत्र 'क्यङ्मानिनोश्चेति' (6/3/36) पुंवद्भावः प्राप्नोति । यतो 'न कोपधाया' (6/3/37) इत्यत्र न इतियोगविभागेन पुंवद्भावनिषेधो भविष्यतीति । तस्माद् 'वा क्यष' इति व्यवस्थितत्वात् विभाषायाः लोहितडाज्भ्य एवात्मनेपदविकल्पः सिद्ध्यतीति । नीलादिभ्यस्तु लोहितादि- परिपठितेभ्योऽपि नित्यमात्मनेपदं भवति । तेन 'लोहितडाज्भ्यः क्यष् वचनं भृशादिष्वितराणीति' (3/1/13 वा) न वक्तव्यं भवतीति" त्याह पु. दे. ज्ञा. समु. तृतीये भूपादे पृ. 63 ।

1. अष्टा. 8/1/4 ।
2. अष्टा. 5/4/57 ।
3. अष्टा. 6/1/100 ।
4. 'सुप आत्मनः क्यच्' - अष्टा. 3/1/8 ।
5. अष्टा. 1/3/78 ।
6. अष्टा. 1/3/12 ।
7. अष्टा. 3/1/11 ।
8. अष्टा. 1/3/12 ।
9. अष्टा. 3/1/13 ।
10. 'लोहित चरित नील फेन भद्र हरित दास मन्दे'ति लोहितादिराकृतगणः ग. पा. 3/1/ ।
11. व्या. म. भा. 3/12/13 वा. 1/2/

इत्याह[1] । अस्यायमाशयः - देवत्रात[2] इति । 'नुदाविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्'[3] इत्यत्रान्यतरस्यां ग्रहणेन नाम्नि नत्वमेव, नाम्नोऽन्यत्रोभयम् - त्रातः त्राणः इति । गलः[4] इति । गॄ इत्येतस्याचि गुणे रपरत्वे च कृते 'अचि विभाषा'[5] इति लत्वे क्रियमाणे स्वाङ्गे गल एव भवति स्वाङ्गादन्यत्र गरः । ग्राह इति । 'विभाषा ग्रहः'[6] इति णप्रत्ययो भवति । ग्राहश्चेज्जलचर एव भवति, जलचरादन्यत्र अजेव भवति पचादित्वात्,[7] ग्रहः । इतियोगे च[8] सद्विधिः–वर्षतीति धावति, हन्तीति, पलायते अन्यत्र शतृशानचौ कदाचिद् भवतः । '[9]नन्वोर्विभाषे'त्यनुवर्तमाने 'लट्ः शतृ - शानचावप्रथमासमानाधिकरणे'[10] इत्यनेन व्यवस्थितविषयौ, इति शब्दयोगे शतृशानचौ न भवतः । गवाक्ष[11] इति । वातायनेऽर्थेऽत्र[12] 'अवङ् स्फोटायनस्ये'[13]त्यवङ् नित्यं भवति, अन्यत्र विभाषा । संशितव्रत[14] इति । 'शाच्छोरन्यतरस्याम्' इत्यनेनेत्त्वं क्रियमाणमत्र नित्यं भवति । अतोऽन्यत्र विभाषा - संशितव्रतः संशातव्रत इति ।

---

1. श्लोक वा. व्या. म. भा. 7/4/41 ।
2. "त्रैङ्पालने' धा. पा. भ्वा. 965 इति त्रैधातोः 'आदेच उपदेशेऽशिति - अष्टा. 6/1/45 इत्यात्वे'निष्ठा.' - अष्टा. 3/2/102 इति क्तप्रत्ययः 'देवेन त्रात' इत्यर्थे 'कर्तृकरणे कृताबहुलम्' - अष्टा. 2/1/32 इति समासः ।
3. अष्टा. 8/2/56 ।
4. 'गॄ निगरणे' धा. पा. तुदा. 1411 इति गिरतेः पचादित्वात् 'नन्दिग्रहि पचादिभ्यो ल्युणिन्यचः' - अष्टा. 3/1/134 ।
5. अष्टा. 3/1/143 ।
6. अष्टा. 3/1/141
7. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ' - अष्टा. 3/1/134 ।
8. 'तौ सत्' - अष्टा. 3/2/127 ।
9. अष्टा. 3/2/120।
10. अष्टा. 3/2/124।
11. 'गवां किरणानामक्षोऽत्रे'ति विग्रहे 'अक्ष्णोऽदर्शनात्' - अष्टा. 5/4/75, इति समासान्तोऽच्प्रत्ययः पुंस्त्वं लोकात् ।
12. 'वातायनं गवाक्षोऽथ' अ. को. 2/2/9 ।
13. संपूर्वकात् 'शो तनूकरणे' धा. पा. दिवा. 1145 'इति शोधातोः 'आदेच उपदेशेऽशिति' - अष्टा. 6/1/45 इति कृताऽऽत्वात् 'निष्ठां' अष्टा. 3/2/102 इति क्तप्रत्यये कृते सति 'शाच्छो.' - अष्टा. 7/4/41 इतीत्वे रूपमिदं सिद्ध्यति ।
14. अष्टा. 7/4/41 ।

## 'विभाषा'[1]

समासविकल्पाय तन्मध्ये आरब्धमिदमधिकारसूत्रम् 'इतः प्राचीनानां समासानां नित्यत्यत्व'मिति वचनस्य ज्ञापकम्[2] । यतोऽस्य वचनस्याभावे समासमध्येऽस्यारम्भो व्यर्थः । तथाहि – यदि हि इतः प्राचीनानामपि समासानां नित्यत्व मिष्टं स्यात्तर्हि 'प्राक्कडारात्[3]समासः' इत्यत ऊर्ध्वं' 'सहसुपा'[4]इत्यतः प्रागेवास्याधिकारसूत्रस्यारम्भः कृतो भवेत् । न च तथेदमारब्धम् । किन्तु कानिचित् समासविधायकसूत्राण्यादौ विधाय पश्चाद् बहुसमासविधायकसूत्राणि विधास्यन् मध्ये सूत्र मिदमारब्धमस्य वचनस्याभावे व्यंर्थम् । ज्ञापिते चास्मिन् वचने इतः प्राचीनानां नित्यत्वं माभूदित्येतदर्थं समासमध्ये आरब्धमिदमधिकारसूत्रं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अधिहरि' - इत्यादौ 'अव्ययं[5] विभक्ती'-त्यादिसूत्रै[6] - र्विधीयमानसमासस्य नित्यत्व - सिद्धिः । अस्य वचनस्यासत्त्वे हि नास्य नित्यत्वं सिद्ध्येत् । यद्यपि प्राचीनानां समासानां विकल्पे प्रमाणं नास्तीति तेषां नित्यत्व मेतद् वचनं विनापि सिद्धम्, तथापि सिद्धस्यैवार्थस्य लिङ्गेनानेन दृढीकरणं भवति । न चास्य वचनस्याभ्युपगमे 'सहसुपे'[7]त्यस्यापि नित्यसमासत्वापत्तिः, न चेष्टापत्तिः, भूतपूर्व इत्यादौ पूर्वं भूत इति विग्रहप्रदर्शनासङ्गतेरिति शङ्क्यम् ।यतः'अव्ययं विभक्ती'त्यादिसमासविधानं 'सहसुपे'ति समासस्य वैकल्पिकत्वं ज्ञापयति ।यदि 'सह सुपे'ति सूत्रेण सुबन्तस्य सुबन्तेन सह विधीयमानः

---

1. अष्टा. 2/1/11 ।
2. तथाहि –
   (क) "एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । 'सुप् सुपे'ति तु न नित्यसमासः । 'अव्यय'मित्यादिसमासविधानाज् ज्ञापका"दित्याह भ. दी. वै. सि. कौ. अव्ययीभाव प्र. पृ. अष्टा. 410 - 411 ।
   (ख) "विभाषा (सू. 2/1/211) । एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । 'सहसुपा' (सू. 2/1/4) इति तु न नित्यसमासः । 'अव्ययम्' (सू. 2/1/6) इत्यादिसमासविधानाज् ज्ञापका"दित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2. पृ. 203 - 204 ।
3. अष्टा. 2/1/3 ।
4. अष्टा. 2/1/4 ।
5. 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशव्दप्रादुर्भावपश्चाद् यथानुपूर्व्ययौगपद्यसादृश्य- संपत्तिसाकल्यान्तवचनेषु' अष्टा. 42/1/6 ।
6. 'यथासादृश्ये' - अष्टा. 2/1/7, 'यावदवधारणे' - अष्टा. 'सुप् प्रतिना मात्रार्थे' - अष्टा. 2/1/9, 'अक्षशलाका संख्याः परिणा' - अष्टा. इति सूत्रैरित्यर्थः ।
7. अष्टा. 2/1/4 ।

समासो नित्यः स्यात्तर्हि 'विभाषा'[1] - इत्यतः प्राचीनैः 'अव्ययं विभक्ती'[2]त्यादि[3]-सूत्रैर्विधीयमानानां नित्यत्वेनाभिमतानां समासानामपि तेनैव[4] सूत्रेण सिद्धे 'अव्ययं विभक्ती'त्यादि[5]समासविधानं हि व्यर्थम् । न च 'अधिहरि' - इत्यादौ 'सहसुपे'[6]ति समासं स्वीकृत्य 'अव्ययं विभक्ती'त्याद्यव्ययीभाव- समासविधान - वैयर्थ्योपपादनं न युक्तं, यतस्तथा सति अव्ययानां समासशास्त्रे प्रथमानिर्दिष्टत्वाभावेनोप-[7]सर्जनत्वाभावात् [8]पूर्वनिपातनियमो न स्यादिति शङ्क्यम् । यतः 'प्रथमानिर्दिष्टं[9] समास उपसर्जन'मिति सूत्रे 'समासे' - इत्यस्य 'समासत्वव्याप्याव्ययीभावादि-विधायकशास्त्रे' इत्यर्थाभ्युपगमेनाव्ययादीनामुपसर्जनत्वसिद्धिः सुलभा । न चैकार्थीभाव[10] एव समासविकल्पविधानाय चारितार्थ्यमस्य शङ्क्यम् । यत एकार्थीभावे एव समाससंज्ञादिविकल्पो नेष्टः । अत एव समासनिषेधसूत्राणि[11], 'नित्यं क्रीडे[12]'त्यत्र नित्यग्रहणं च सार्थकानि भवन्ति ।

ज्ञापकमिदमुपलक्षणमस्य वचनस्य । यतः [13]'प्राक्कडारात्समासः 'इति सूत्रे 'सुप् सुपे'[14]ति समासविषये 'विस्पष्टं पटु विंस्पष्टपटु'रिति विग्रहप्रदर्शनपरं [15]भाष्यमप्यस्य वचनस्य ज्ञापकम् । अन्यथा विग्रहप्रदर्शनपरं भाष्यमिदमसङ्गतं स्यात् ।

---

1. अष्टा. 2/1/11 ।
2. अष्टा. 2/1/6 ।
3. अष्टा. 2/1/7; 2/1/8, 2/1/9, 2/1/10 इत्यादिपदग्राह्याणि ।
4. 'सह सुपा' - अष्टा. 2/1/4 । इत्यनेनैवेत्यर्थः ।
5. अष्टा. 2/1/4 ।
6. अष्टा. 2/1/6 ।
7. 'प्रथमानिर्दिष्टं समास उपसर्जनम्' - अष्टा. 1/2/43 ।
8. 'उपसर्जनंपूर्वम्' - अष्टा. 2/2/30 ।
9. अष्टा. 1/2/43 ।
10. 'विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वमेकार्थीभावः, 'संसृष्टार्थं समर्थ' मितिभाष्योक्ते''-रिति भ. ना. ल. श. शे. अव्ययीभाव प्र. पृ. 782 - 783 ।
11. न निर्धारणे' - अष्टा. 2/2/10 इत्यादीनीत्यर्थः ।
12. 'नित्यं क्रीडाजीविकयोः' - अष्टा. 2/2/17 ।
13. अष्टा. 2/1/3 ।
14. 'सह सुपा' - अष्टा. 2/1/4 इति योगविभक्त-'सुपे' ति समासविषये' - इत्यर्थः ।
15. व्या. म. भा. 2/1/2/3 ।

यद्यपि लक्ष्यैकचक्षुष्काणां[1] कृते सूत्रमिदं प्रत्याख्यातं[2] भाष्ये तथापि लक्षणैक-चक्षुष्काणां[3] कृते सूत्रमिदमावश्यंकमतोऽस्य समासमध्ये आरम्भ उक्तवचनस्य ज्ञापक इति निश्चीयते ।

## 'वृद्धिरादै'जित्यादि-सकलसंज्ञासूत्राणि

[4]'वृद्धिरादै'जित्यादिसमस्तसंज्ञासूत्राणि 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य-सम्प्रत्ययः[5] 'इति परिभाषाया ज्ञापकानि[6] । यतोऽस्या अभावे तत्तत्संज्ञासूत्राणि व्यर्थानि । ज्ञापितायां चास्यां शास्त्रेऽस्मिन् शास्त्रप्रसिद्धानां तत्तदर्थानामेव तत्तत्संज्ञाभिर्बोध इति बोधनाय तत्तत्संज्ञासूत्राणि स्वांशे चरितार्थानि भवन्ति । ज्ञापिताया अस्याः कृत्रिमाकृत्रिमयोः शास्त्रप्रसिद्धलोकप्रसिद्धयोरर्थयोः कृत्रिमे शास्त्र-प्रसिद्धेऽर्थे कार्यं भवतीत्यर्थः । फलं तु 'अङ्गस्येत्यधिकारे[7] "यस्मात् प्रत्यय[8]-विधिस्तदादिप्रत्ययेऽङ्ग"मिति शास्त्र प्रसिद्धस्यैवाङ्गस्य ग्रहणम्' न तु लोक-प्रसिद्धानामवयवानामिति । न चात्र संज्ञाप्रणयनस्य तस्मिन्नर्थे लोकप्रसिद्ध-शक्तिग्राहकतया लोकप्रसिद्धार्थनिवर्तने सामर्थ्याभावः शङ्क्यः । यतः शास्त्रप्रयुक्त-

---

1. शब्दश्रवणमात्रेण तत्साधुत्वनिर्णयनिपुणानां पाणिन्यादीनामित्यर्थः ।
2. तथाहि –
   'वा वचनानर्थक्यं च स्वभावसिद्धत्वात्' । वा वचनमनर्थकम् । किं कारणम्? । 'स्वभावसिद्धत्वात्' । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्चेति । स्वभावतश्चैतद्भवति - वाक्यं च समासश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये समासे प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुमन्यदतः संज्ञायाः ? न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थो वावचनेन" । व्या. म. भा. 2/1/1/1 ।
3. पाणिनि - सूत्रमनुसृत्यैव शब्दसाधुत्वनिर्णयसमर्थानामस्माकमित्यर्थः ।
4. अष्टा. 1/1/1 ।
5. (क) 'कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययः' व्याडिः प. सू. प. 6 पृ. 5 ।
   (ख) पु. दे. ल. प. वृ. प. 7 पृ. 115 ।
   (ग) सी. दे. वृ. प. वृ प. 101, पृ. 257 ।
   (घ) नी. दी. प. वृ. प. 88 पृ. 310 ।
   (ङ) ह. भा. प. भास्क प. 103 पृ. 366 ।
   (च) भ. ना. प. शे. प. 9, पृ. 39 ।
   (छ) शेषा. प. भास्क. प. 9, पृ. 384 ।
6. तथाहि –
   "अस्याश्च परिभाषायास्तत्तत्संज्ञाकरणमेवमूल"मित्याह शेषाद्रिः प. भास्क. प. 9. पृ. 384 ।
7. अष्टा. 6/4/1 ।
8. अष्टा. 1/4/13 ।

शब्दस्यार्थजिज्ञासायामिदं परशास्त्रप्रसिद्धार्थस्यैव झटित्युपस्थितिकतया तेनैव नैराकाङ्क्ष्येण लोकप्रसिद्धस्यार्थस्यार्थान्निवृत्तेर्नियमे पर्यवसानं लक्षणप्रतिपदोक्तयोर्झटित्युपस्थितिकं प्रतिपदोक्तनियमवद् भवति । अतएव" अर्थात् प्रकरणाद् वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । आतश्चार्थात् प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्यं पांसुलपादमप्रकरणज्ञमागतं ब्रवीतु - गोपालकमानय, कटजमानयेति । उभयगतिस्तस्य भवति । साधीयो वा यष्टिहस्तं गमिष्यति" इति ग्रन्थेन कृत्रिममात्रग्रहणं दूषयित्वा, पुनः कृत्रिमस्यैव ग्रहणमित्यर्थस्य साधनाय "यथैव तर्ह्यर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिममयोः कृत्रिमे कार्यसम्प्रत्ययो भवति, एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृते"ति[1] हेतुरुक्तो भगवता ।

## 'शतसहस्रान्ताच्च[2] निष्कात्'

सूत्रमिदं "गुणेनेति[3] षष्ठीसमासनिषेधो लोकप्रसिद्धेन शुक्लादिना न तु वैशेषिकप्रसिद्धैर्गुणैः संख्यापरिमाणबुद्धिसुखादिभिरपी"ति वचनस्य ज्ञापकम्[4] । यतोऽस्याभावे सूत्रमिदमनुपपन्नम् । तथाहि – "नैष्कशतिकः'[5] 'नैष्कसहस्रिकः'[6] इत्यत्र निष्कशत - निष्कसहस्रशब्दाभ्यां ठक्प्रत्ययविधानार्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । गुणेन षष्ठी - समासनिषेधान्[7] निष्कशतादिशब्दयोरभावेन ततः ठग्विधानमिदं ह्यनुपपन्नम् । ज्ञापिते चास्मिन् वचने निष्कस्य लोकप्रसिद्धगुणत्वाभावेन षष्ठीसमासानिषेधाप्रवृत्त्या[8] कृतषष्ठीसमासाभ्यां निष्कशतनिष्कसहस्रशब्दाभ्यां ठगर्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं

---

1. व्या. म. भा. 1/1/5/22 ।
2. अष्टा. 5/2/119 ।
3. 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' - अष्टा. 2/2/11 ।
4. तथाहि - "शतसहस्रान्ताच्च निष्कादिति (5/2/119) निष्कशतादेः समासात् ठञ् (ठक्) विधानज्ञापकात् गुणेनेति (2/2/11) षष्ठीसमासनिषेधो लोकप्रसिद्धेन शुक्लादिना, न तु वैशेषिकसिद्धैर्गुणैः संख्यापरिमाणवुद्धिसुखादिभिरपि । तेन तद्वद्धिः तत्सुखमित्यादिसिद्ध्यती"त्याह पु. दे. ज्ञा. समु. अष्टाविंशे धान्यपादे ।
5. निष्कशतमस्यास्तीत्यर्थे निष्कशतशव्दात् कृतषष्ठीसमासात् 'शत.' - अष्टा. 5/2/119. इति ठञि 'ठस्येकः' - अष्टा. 7/3/50, इति इकादेशे 'यस्येतिच' - अष्टा. 6/4/148. इत्यकारलोपे तद्धितान्तत्वात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. निष्कसहस्रमस्यास्तीत्यर्थे नैष्कशतिकवदिदं रूपं सिद्ध्यति ।
7. 'पूरणगुण.' - अष्टा. 2/2/11 ।
8. 'पूरणगुण.' - अष्टा. 2/2/11 ।

तु 'तद्बुद्धिः'[1] 'तत्सुख'[2]मित्यादीनां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि 'बलाकायाः शौक्ल्यम्' काकस्य कार्ष्ण्य'मित्यादाविव षष्ठी[3]समासनिषेधस्यात्र दुर्वारतया नैतेषां साधुत्वं सिद्ध्येत् । जिनेन्द्रबुद्धि[4] - हरदत्तमिश्राभ्यां[5] तु' 'संख्यायाः समासो भवती'ति वचनस्य ज्ञापकमिदं सूत्र''मिति स्वीक्रियते । नैतद्युक्तम् । तद्बुद्धिरित्यादेरसाधुत्वप्रसङ्गात् ।

वस्तुतस्तु 'संज्ञाप्रमाणत्वादुत्तरपदार्थ-प्राधान्यादिति प्रयोगदर्शनादनित्यो गुणेन निषेध इति वचनं, करणपाटवं' 'बुद्धिमान्द्यं' 'यत्नगौरव'मित्यादिप्रयोगाणां सिद्धये नूनं स्वीकार्यमिति तन्निषेधस्याऽनित्यतया सूत्रमिदमुपपन्नमिति नास्योक्त-वचनयोरन्यतरस्याऽपि ज्ञापकत्वं युक्तम् । 'गोविंशतिः' 'तद्बुद्धिः' तत्सुखमित्यादेस्त-न्निषेधाऽनित्यत्वेनैव हि साधुत्वमपि सुलभमिति मन्ये ।

## 'शमामष्टानां[6] दीर्घः श्यनि'

सूत्रमिदं 'येन नाव्यवधानं तेन व्यवहितेऽपि[7] वचनप्रमामान्या'दिति परिभाषाया ज्ञापकम्[8] । यतोऽस्या अभावे 'शाम्यती'[9]त्यादौ

---

1. तस्य बुद्धिरिति विग्रहे 'षष्ठी' - अष्टा. 2/2/8, इति षष्ठीतत्पुरुषसमासे रूपमिदम् ।
2. तस्य सुखमितिविग्रहे 'षष्ठी' - अष्टा.2/2/8, इति षष्ठी-तत्पुरुष समासे रूपमिदम् ।
3. 'पूरणगुण.' - अष्टा. 2/2/11
4. अनेन हि –"अथ कथं गोविंशतिरिति षष्ठीसमासः, यावता संख्याया गुणत्वात् प्रतिषेधेन भवितव्यम्? नैष दोषः, यदयं 'शतसहस्रांन्ताच्च निष्कात्' इत्याह, तज् ज्ञापयति संख्यायाः समासो भवति । नहि तेन विना शतसहस्रान्तता निष्कस्य प्रातिपदिकस्य सम्भवती"त्युक्तम् - न्या. 2/211 ।
5. अनेन हि – " 'शतसहस्रान्ताच्च निष्कात्' 'क्रोशशत-योजनशतयोरुपसंख्यानम्' 'खारीशतमपि न ददाति' - इत्यादिमुनित्रयप्रयोगाद् - गोविंशतिरित्यादौ संख्यायाः समासो न निषिध्यते" - इत्युक्तम् पदम. 2/2/11 ।
6. अष्टा. 7/3/74 ।
7. व्याडिः प. सू. प. 38, पृ. 19 ।
8. तथाहि – "येन वर्णेन वा संयोगेन वानन्तरेण व्यवधानमुच्यमानस्य विधेः प्राप्तिरस्ति तेन व्यवहितेपि वचनप्रमाण्यादेव विधिर्भवति । तद्यथा 'शमामष्टानां दीर्घः श्यनि' (7/3/74) इति । अनेन शाम्यतीत्यत्र दीर्घो न प्राप्नोति । किं कारणम् । योऽत्र दीर्घभावो सोऽन्येन हला व्यवहितः । न च शमादीनामष्टानामपि कश्चिदजन्तोस्ति यदर्थं वचनं स्यात् । उच्यते चेदं दीर्घत्वम् । तत्र वचनप्रामाण्यादनन्त्यस्यापि दीर्घो भवति । कथम् । नह्यन्तरेण व्यवधानमत्र दीर्घभावी अजस्ति । एवमियं परिभाषा ज्ञापिता विज्ञेयेत्याह व्याडिः प. सू. प. 39 पृ. 19 ।
9. 'शमु उपशमे' धा. पा. दिवा. 1201, इति शम्धातोर्लटि प्रथमपुरुषैकवचने रूपम् । अत्रादिपदेन' ताम्यति' 'दाम्यति' 'श्राम्यति' 'क्षाम्यति' 'क्लाम्यति'· 'माद्यती'ति ग्राह्याणि ।

श्यनि[1] शमादीनामष्टानां[2] दीर्घार्थमारब्धमिदं व्यर्थम् । नह्यन्तरेण व्यवधानमत्र दीर्घभावी अजस्ति । ज्ञापितायां चास्यां तत्र व्यवधानेऽपि दीर्घसम्पादनार्थमिदं स्वांशे चरितार्थं भवति । ज्ञापिताया अस्याः फलन्तु 'अधिजिगांसते'[3] इत्यत्र मकारव्यवधानेऽपि गकारोत्तराकारस्य 'अज्झन[4]गमां सनी'ति दीर्घस्य, धातुव्यवायेऽभ्यासस्य दीर्घाभावस्य[5] च सिद्धिः । अस्या अभावे हि धातोरचो दीर्घः अभ्यासाचो दीर्घाभावाश्च न सिद्ध्येताम् ।

[6]'शाच्छासाह्वाव्यावेपां युक्'

सूत्रमिदम् 'अकारान्तधातुग्रहणे [7]लक्षणप्रतिपदोक्तपरिभाषा[8] नाश्रीयते' इति वचनस्य ज्ञापकम्[9] । यतोऽस्य वचनस्याभावे सूत्रमिदमनुपपन्नम् । तथाहि – 'शो तनूकरणे'[10] छो छेदकने'[11] 'षोऽन्तकर्मणि'[12], 'ह्वेञ्[13] स्वर्धायां शब्दे च', 'व्येञ्

---

1. 'दिवादिभ्यः श्यन्' - अष्टा. 3/1/69 ।
2. "शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', 'श्रमु तपसि खेदे च', 'क्षमु सहने,' 'भ्रमु अनवस्थाने' 'क्लमु ग्लानौ' 'मदी हर्षे' - इत्येतेऽष्टौ शमादयः" न्या. 7/3/74 ।
"शमुस्तमुः श्रमदमू भ्रमुक्षमुमदक्लमः ।
शमादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः" ।। पदम. 7/3/74 ।
3. अधिपूर्वकात् 'इङ्अध्ययने' धा. पा. अदा. 1046, इति इधातोः सनि लटि प्रथमपुरुषैकवचने रूपम् । अत्र 'इङश्च'-अष्टा. 2/4/48 इति इङो गमिरादेशः 'पूर्ववत् सनः' अष्टा. 1/2/62 इत्यात्मनेपदं च भवति ।
4. अष्टा. 6/4/16 ।
5. 'दीर्घो लघोः' - अष्टा. 7/4/94 ।
6. अष्टा. 7/3/37 ।
7. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' - भ. ना. प. शे प. 114, पृ. 341
8. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्' - व्याडि प. सू. प. 3 पृ. 3 ।
   (ख) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य'- पु. दे. ल. प. वृ. प. 3, पृ. 113 ।
   (ग) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य' - सी. दे. वृ. प. वृ. प. 39, पृ. 208 ।
   (घ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' - नी. दी. प. वृ. 102 पृ. 311 ।
   (ङ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवग्रहणं न तु लाक्षणिकस्य' - ह. भा. प. भास्कः प. 41, पृ. 341 ।
   (च) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् । शेषा. प. भास्क. प. 97 पृ. 455 ।
9. तथाहि –
   (क) '"शाच्छासाह्वाव्यावेपां ग्रहणं पुकः प्राप्तिमाख्यातुम् । किमेतस्याख्याने प्रयोजनम् । एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीत्युपदिश्यते । तेनाभ्याययति जापयति -इत्येवमादिसिद्धं भवती"ति ग्रन्थेन ज्ञापकत्वमत्र वचनेऽस्य सूचयति वाम. का. 7/3/37 ।
   (ख) "शाच्छासा-प्रभृतीनाम् (7/3/37) आदन्तलक्षणयुग्विधानम् । तत् ज्ञापयति । 'आकारान्तधातुग्रहणे लक्षणप्रतिपदोक्तपरिभषा नाश्रीयत इति । आतश्चोपसर्गे कः

संवरणे'[1], 'वेञ्[2]तन्तुसन्ताने', 'पा पाने',[3] पै ओवै[4] शोषणे' - इत्येतेषां धातूनामाकारान्तत्वात् णौ युकि[5] प्राप्तयुको विधानाय सूत्रमिदमारब्धम् । तच्चास्य वचनस्याभावेऽनुपपन्नम् । 'निशाययति;;[6] 'अवच्छाययति',[7] 'अवसाययति',[8] 'ह्वाययति',[9] – 'संव्याययति',[10] 'वाययति',[11] [12]'पाययती'त्यादौ हि

---

(3/1/136) आतो लोपः (5/4/64) इत्यादिकं कार्यं "शाप्रभृतेरपि भवती"त्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 93 ।

(ग) "इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्राप्तिं ध्वनयितुम् । तत्प्रयोजनं त्वस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः । तेनाध्यापयति क्रापयतीत्यादिसिद्ध" - मित्याह ज्ञा. भि. त. बो. ण्यन्तप्र. पृ. 250 ।

10. धा. पा. दिवा. 1145 ।
11. धा. पा. दिवा. 1146 ।
12. धा. पा. दिवा. 1147 ।
13. धा. पा. दिवा. 1008 ।
1. धा. पा. दिबा. 1007 ।
2. धा. पा. दिवा. 1006 ।
3. धा. पा. दिवा. 925 ।
4. धा. पा. दिवा. 921 ।
5. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ - अष्टा. 7/3/36 ।
6. निपूर्वकात् 'शो तनूकरणे' धा. पा. दिवा. 1145, इति शोधातोर्णौ आत्वे पुकि प्राप्ते तं प्रबाध्य 'शाच्छा.' - अष्टा. 7/3/37 इति युगागमे लटि तिपि शपि गुणेऽयादेशे रूपम् ।
7. अवपूर्वकात् 'छो छेदने' धा. पा. दिवा. 1146, इति छोधातोर्णौ आत्वे पुकि प्राप्ते तं प्रबाध्य 'शाच्छा.' अष्टा. 7/3/37, इति युगागमे लटि तिपि शपि गुणेऽयादेशे रूपम् ।
8. अवपूर्वकात् 'षोऽन्तकर्माणि' धा. पा. दिवा. 1147, इति सोधातोर्णौ आत्वे पुकि प्राप्ते तं प्रबाध्य 'शाच्छासा.' - अष्टा 7/3/37, इति युगागमे लटि तिपि शपि गुणेऽयादेशे रूपम् ।
9. 'ह्वेञ् स्पर्धायां शब्दे च' धा. पा. भ्वा. 1008, इति ह्वेधातोर्णौ आत्वे पुकि प्राप्ते तं प्रवाध्य 'शाच्छासाह्वा.' - अष्टा. 7/3/37, इति युगागमे लटि तिपि शपि गुणेऽयादेशे रूपम् ।
10. संपूर्वकात् 'व्येञ् संवरणे' धा. पा. भ्वा. 1007, इति व्येधातोर्णौ आत्वे पुकि प्राप्ते तं प्रबाध्य शाच्छासाह्वा व्या.' - अष्टा. 7/3/37 इति युगागमे लटि तिपि शपि गुणेऽयादेशेरूपम् ।
11. 'वेञ् तन्तुसंताने' धा. पा. भ्वा. 1006, इति वेधातोर्णौ आत्वे पुकि प्राप्ते तं प्रवाध्य 'शाच्छा.' - अष्टा.. 7/3/37, इति युगागमे लटि तपि शपि गुणेऽदेशे रूपम् ।
12. 'पा पाने' धा. पा. भ्वा. 925, इति पाधातोः कृतात्वात् 'पै ओवै शोपणे' धा. पा. भ्वा. 920, 921 वा पाधातोर्णौ पुकि प्राप्ते तं प्रवाध्य 'शाच्छा.' - अष्टा. 7/3/37, इति युगागमे लटि तिपि गुणेऽयादेशे रूपम् ।

'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'मिति परिभाषया कृताऽऽत्वेभ्यः[1] 'शा' - प्रभृतिभ्यो न युकः प्राप्तिरस्ति नापि चानेन[2] युक् संभवति । ज्ञापिते चास्मिन् वचनेऽत्र 'लक्षप्रतिपदोक्त' - परिभाषाया अनाश्रयणात् कृत्वेभ्यः शाप्रभृतिभ्यः पुग्-[3] - युकौ प्राप्नुत इति सूत्रमिदमेभ्यो धातुभ्यः प्राप्तं पुकं प्रबाध्य युग्विधानाय स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अध्यापयति'[4], –– 'क्रापयति',[5] 'जापयती'[6]त्यादौ पुकः,[7] 'सुग्लः'[8] - इत्यादौ च –– [9]'आतश्चोपसर्गे' इति 'क' प्रत्ययस्य आतो लोपस्य[10] च सिद्धिः । अस्य वचनस्यासत्त्वे हि 'लक्षणप्रतिपदोक्त'-परिभाषाया अत्र प्रवृत्ते दुर्वारतया क्रमशः [11]पुगागमः, कप्रत्ययः[12], आतो लोपश्च[13] न सिद्ध्येयुः ।

---

1. 'आदेच उपदेशेऽशिति' - अष्टा. 6/1/45 ।
2. 'शाच्छासाह्वाव्यावेपां युक्' - अष्टा. 7/3/37 ।
3. 'अर्ति ह्री वूलीरीक्नूयीक्ष्माय्यातां पुङ्णौ'- अष्टा. 7/3/36 ।
4. 'अधिपूर्वकात्' इङ्अध्ययने' धा. पा. अदा. 1046, इति इधातोः 'हेतुमतिच' - अष्टा. 3/1/36, इति णिचि वृद्धौ 'क्रीङ्जीनांणौ'- अष्टा. 6/1/48, इत्यैकारस्याऽऽत्वे पुकि लटि तिपिशपि गुणेऽयादेशे अधेरिकारस्य यणि च कृते रूपमिदम् ।
5. 'डुक्रीञ्द्रव्यविनिमये' धा. पा. क्र्या. 1474, इति क्रीधातोः 'हेतुमति च' - अष्टा. 3/1/26, इति णिचि वृद्धौ ऐकारस्य 'क्रीङ्जीनां णौ' - अष्टा. 6/1/48, इत्वात्वे पुकि लटि तिपि शपि गुणेऽयादेशे रूपमिदम् ।
6. 'जि जये' धा. पा. भ्वा. 561, इति जिधातोः 'हेतुमति च'-अष्टा 3/1/26, इतिणिचि वृद्धौ ऐकारस्य 'क्रीङ्जीनां णौ' - अष्टा. 6/1/48, इत्वात्वे पुकि लटि तिपि शपि गुणेऽयादेशे रूपमिदम् .
7. 'अर्तिह्री.' - अष्टा. 7/3/36 ।
8. सुपूर्वकात् 'ग्लैम्लै हर्षक्षये' धा. पा. भ्वा. 903, 904, इतिग्लैधातोः ऐकारस्य 'आदेच उपदेशेऽशिति' - अष्टा. 6/1/45, इत्वात्वे 'सुग्ला' - इत्येतस्मात् 'आतश्चोपसर्गे' - अष्टा. 3/1/136, इति कप्रत्यये 'आतो लोप'इटि च' - अष्टा. 6/4/64, इत्याकारलोपे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
9. अष्टा. 3/1/136 ।
10. 'आतोलोप इटि च' - अष्टा. 6/4/64 ।
11. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' - अष्टा. 7/3/36 ।
12. 'आतश्चोपसर्गे' - अष्टा. 3/1/136 ।
13. 'आतो लोप इटि च' - अष्टा. 6/4/64 ।

## '[1]शात्'

श्चुत्वप्रतिषेधसूत्रमिदं 'स्तोः [2]श्चुना श्चु'रित्यत्र निमित्तकार्यिणो[3]र्यथासंख्यमनुदेशो ने'ति वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावेऽत्र निमित्तकार्यिणोर्यथासंख्यमनुदेशस्य दुर्वारतया 'प्रश्नः' 'विश्नः' - इत्यादौ शकारयोगे नकारस्य श्चुत्वं न प्राप्नोतीति श्चुत्वप्रतिषेधार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'विश्नः' 'प्रश्नः' इत्यादौ शकारयोगेऽपि नकारस्य श्चुत्वं प्राप्नोतीति तत्प्रतिषेधार्थमिदं सूत्रं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'रामश्चिनोती'त्यादि प्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि चकारयोगे सकारस्यात्र श्चुत्वाप्राप्त्या नैतेषां साधुत्वं सिद्ध्येत् ।

## 'शेषे[5]लोपः'

सूत्रमिदं " '[6]त्यदादीनाम' इत्यत्र द्विपर्यन्तास्त्यदादयः, ततः परे युष्मदादयः" इति वचनस्य ज्ञापकम्[7] । यतः 'शेषे लोप'ष्टिलोप इति[8] पक्षेऽस्य वचनस्याभावे

---

1. अष्टा. 8/4/44 ।
2. अष्टा. 8/4/40 ।
3. 'यथासङ्ख्यमनुदेशः समानाम्' - अष्टा. 1/3/30 ।
4. तथाहि–
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति - 'संख्यातानुदेशो ने'ति यदयं शात् प्रतिषधं शास्ती"त्याह पत. व्या. म. भा. 8/4/1/40 ।
   (ख) "शात्"इति प्रतिषेधो ज्ञापकः - संख्यातानुदेशाभावस्ये"त्याह वामनः का. 8/4/40 ।
   (ग) "प्रातिपूर्विका हि प्रतिषेधा भवन्ति । यदि निमित्तं प्रति यथासंख्यं स्यात् एवं सति शात्परस्य तवर्गस्य श्चुत्वप्राप्तिरेव नास्तीति 'शात्' इति प्रतिषेधं न कुर्यात्, कृतश्चासौ, अतः स ज्ञापयति - संख्यातानुदेशो न भवतीती"त्याह जि. बु न्या. 8/4/40 ।
   (घ) " 'ष्टुना ष्टु'रित्यत्र (8/4/41) 'स्तोःश्चुना श्चु'रित्यत्र (8/4/40) योगे यथासंख्यं न भवति - 'तोः षि' 'शा'दिति (8/4/43 - 44) निषेधाज् ज्ञापका"दित्याह पु. दे. ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे - पृ. 100 ।
   (ङ) "अत्र स्थान्यादेशयोर्यथासंख्यं, निमित्तकार्यिणोस्तु न । 'शात्' (पा. सू. 8/4/44) इति ज्ञापका"दित्याह भ. दी. प्रौ. मनो. हलसन्धिप्र. पृ. 146-147 ।
   (च) अत्र स्थान्यादेशयोर्यथासंख्यम् । निमित्तकार्यिणोस्तुन 'शा'दिति ज्ञापका"दित्याह ज्ञा. भि. त. बो. हल्सन्धि प्र. पृ. 62 ।
   (छ) "शात् परस्य स्तोः श्चुत्वनिषेधकात् 'शा'दिति लिङ्गादेव निमित्तकायिणोर्यथा संख्यं ने"त्याह भ. ना. ल. श. शे. हल्सन्धि प्र. पृ. 351 ।
5. अष्टा. 7/2/90 ।
6. अष्टा. 7/2/102 ।
7. तथाहि –

सूत्रमिदं व्यर्थम् । 'यूयं[1]' 'वय[2]'मित्यादीनां हि युष्मदस्मदोस्त्यदाद्यत्वेनैव हि[3] सिद्धिः सुलभा । ज्ञापिते चास्मिन् वचने युष्मदस्मदोस्'[4]त्यदादीना'मित्यत्वाप्राप्त्या 'यूयं' 'वय'मित्यादौ मपर्यन्तस्य क्रमशो यूयवयाऽऽदेशयोः[5] कृतयोः शेषस्य अदो लोपार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[6]भवा'नित्यादीनां प्रयोगाणां सिद्धिः । अस्य वचनस्यासत्त्वे हि 'भवत्सि'तिस्थिते तकारस्य '[7]त्यदादीनामः' इति अत्वे कृते 'अतो[8]गुणे' - इति पररूपे भवतोरुदित्त्वात्

---

(क) " 'त्यदादीनां द्विपर्यन्तानामकारवचनम्' । त्यदादीनां द्विपर्यन्तानामत्वं वक्तव्यम् । किं प्रयोजनम् ? । युष्मदस्मदन्तानां भवदन्तानां वा माभूदिति । तत्तर्हि वक्तव्यम् ? । न वक्तव्यम् । "त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः । शेषेलोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति" यदयं त्यदादीनामत्वेन सिद्धे युष्मदस्मदोः शेषेलोपं शास्ति, तज्ज्ञापयत्याचार्यः 'प्राक्ततोऽत्वं भवतीति, न सर्वेषामिती"त्याह पत. व्या. म. भा. 7/2/2/102 ।

(ख) किमर्थं पुनर्लोप इत्युच्यते, यावतात्यदाद्यत्वेनैव सिद्धम् ? न सिद्ध्यति, अत्यदादित्वात् । त्यदादित्वं हि 'द्विपर्यन्तास्त्यदादयः' इति । तत्र चैतदेव शेषलोपवचनं ज्ञापकम् । तेन भवच्छव्दस्य त्यदाद्यत्वं न भवति - भवानिती" त्याह. जि. बु. न्या. 7/2/90 ।

(ग) "युष्मदस्मदोरित्यस्य त्यदाद्यत्वेनैव यूयं वयमित्यादेः सिद्धौ शेषेलोपवचनं (7/2/90) ज्ञापयति - 'त्यदादीनाम, (7/2/102) इत्यत्र द्विपर्यन्तांस्त्यदादयः ततः परे युष्मदस्मदादयः' । तेन भवच्छब्दस्य त्यदाद्यत्वं न भवति भवानिति शेषेलोपसूत्रे न्यासः" - इत्याह पु. दे. ज्ञा. समु. षड्विंशे सिचिपादे पृ. 91 ।

8. तथाहि – "केचित्तु शेषेलोपं टिलोपमिच्छन्ति । कथम् ? वक्ष्यमाणादेशापेक्षः शेषः, 'तेषामादेशा मपर्यन्तस्य विधीयन्ते, तेन मपर्यन्ताद्योऽन्यः स शेष इति, तत्रायं लोप इति टिलोपो भवती'त्याह वाम. का. 7/2/90 ।

1. युष्मच्छव्दाज्जसि जसः 'ङेः प्रथमयोरम्' - अष्टा. 7/2/28 इति अमादेशे 'यूयवयौ जसि' - अष्टा. 7/2/93, इतिमर्पन्तस्य युष्मदो 'यूय' - इत्यादेशे 'यूय अद्अम्' - इतिस्थिते पररूपे 'शेषेलेपः' अष्टा. 7/2/90 इति मपर्यन्ताच्छेषस्य अदो लोपे रूपमिदम् ।
2. अस्मच्छव्दाज्जसि 'ङेप्रथमयोरम्' - अष्टा. 7/2/28, इति जसोऽमादेशे 'यूयवयौजसि' - अष्टा. 7/2/93, इति मपर्यन्तस्य अस्मदो 'वय'इत्यादेशे 'वय अद्अम्' - इतिस्थिते पररूपे 'शेषेलोपः' - अष्टा. 7/2/90, इति मपर्यन्ताच्छेषस्य अदो लोपे रूपमिदम् ।
3. 'त्यदादीनामः' -अष्टा. 7/2/102 ।
4. अष्टा. 7/2/102 ।
5. 'यूयवयौजसि' - अष्टा. 7/2/93 ।
6. 'भवतु' - इति सर्वादिगणपठिताद् भवच्छव्दात् सावनुवन्धलोपे भवत्सिति स्थिते 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70, इति नुमि हल्ङ्यादिलोपे तकारस्य 'संयोगन्तस्यलोपः' - अष्टा. 8/2/23, इतिलोपे 'अत्वसन्तस्य चाधातोः' - अष्टा. 6/4/14, इति दीर्घेरूपमिदम् ।
7. अष्टा. 7/2/102 ।
8. अष्टा. 6/1/67 ।

[1]'उदीचा'मितिनुमि '[2]सर्वनामस्थाने चासम्बुद्धा'विति दीर्घे [3]सुलोपे' 'भवा' इत्यनिष्टं[4]रूपमापद्येत, तथा औजसि च क्रमशः 'भवत् औ' 'भवत् अस्' इति स्थितयोः पूर्ववत्तकारस्य [5]अत्वे [6]पररूपे नुमि[7] दीर्घे[8]च 'भवानौ' 'भवानः' इति रूपे आपद्येताम् । 'शेषेलोपोऽन्त्यलोपः' इति [9]पक्षेऽपि ज्ञापकत्वं सूत्रस्योक्तवचने' - इत्यपि पुरुषोत्तमदेवो[10]न्यरूपयत् । इत्थमन्त्यलोप-टिलोपेत्युभयपक्षेऽस्य सूत्रस्योक्त - वचन - ज्ञापकत्वं निश्चप्रचमिति मन्ये ।

---

1. 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70 ।
2. अष्टा. 6/4/8 ।
3. 'हल्ङ्याब्भ्यो दीर्घात् सु-ति-स्यपृक्तं हल्' अष्टा. 6/1/68 ।
4. 'हल्ङ्याब्भ्योदीर्घात् सु-ति-स्यपृक्तं हल्' अष्टा. 6/1/68 ।
5. 'त्यदादीनामः' - अष्टा. 7/2/102 ।
6. 'अतोगुणे' - अष्टा. 6/1/67 ।
7. 'उगिदचां सर्वनामस्थानेऽधातोः' अष्टा. 7/1/70 ।
8. 'सर्वनामस्थाने चासम्बुद्धौ' - अष्टा. 6/4/8 ।
9. तथाहि - "शेषविभक्तौ युष्मदस्मदोर्लोपो भवति ।
   कश्च शेषः ? यत्राकारो यकारश्च न विहितः ।
   'पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
   यान्या द्ववचनान्यत्र तेषु लोपो विधीयते' ॥
   त्वम्, अहम् । यूयम्; वयम् । तुभ्यम्, मह्यम् । युष्मभ्यम्, अस्मभ्यम् । त्वत्, मत् । युष्मत्, अस्मत् । तव, मम । युष्माकम्, अस्माकम् । शेषग्रहणं विस्पष्टार्थम् । शेषेलोपे कृते स्त्रियां टाप्कस्मान्न भवति - त्वं ब्राह्मणी, अहं ब्राह्मणी ? 'सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्य' । 'अलिङ्गे वा युष्पदस्मदी'इती"त्याह वाम. का. 7/2/90 ।
10. तथाहि– "ननु चोपसर्जनेऽवयवयुष्मदस्मदी समस्येते तत्रातितदौ अतितदः इतिवत् त्यदात्यत्वं नास्तीति तदर्थं शेषलोपवचनं सार्थकम् । अतियूयमतिवयमिति तत्कथं ज्ञापकम् । तदुक्तं भाष्ये "अपि चोपसमस्तार्थमत्वाभावात् कृतं भवेद्" इति । किंच त्यदाद्यत्वेन कदा सिद्धिः । यदाशेषेलोपोऽन्त्यलोपः तदा । तथा त्वं ब्राह्मणी तत्र ब्राह्मण्या इत्यदावजाद्यतष्टापि (4/1/4) प्राप्ते दोष इति शैषेलोप इत्युपगतः । अतएव युष्मभ्यमस्मभ्यमित्यत्र भ्यमादेशं भ्यसो व्याचक्षते । तदुक्तं लोपष्टाबभावार्थः कर्तव्यः । अतस्त्य दाद्यत्वेनासिद्धौ कथमिदं ज्ञापकमिति । एवं तर्हि यदा व्यक्तिपक्ष उपसर्जनादन्यत्र यूयंवयमित्याद्यर्थता शेषेलोप-वचनस्य । अलिङ्गे युष्मदस्मदी इति वचनात् टाबभावे शेषेलोप इति अन्त्यलोपपक्षः ततस्त्यदाद्यत्वेन सिद्धौ ज्ञापयति" ज्ञा. समु. षड्विंशे सिचि पादे पृ. ९१ ।

## '[1]श्वादेरिञि'

सूत्रमिदम् 'अन्यत्र च श्वन्ग्रहणे तदादिविधि[2]र्भवती'ति वचनस्य [3]ज्ञापकम् । यतोऽस्य वचनस्याभावे व्यर्थमिदम् । तथाहि - श्वभस्त्रस्यापत्यं '[4]श्वाभस्त्रिः' - इत्यादौ '[5]द्वारादिगणपठितानां शब्दानामादेरचो वृद्धिर्न भवति, किंतु य्वाभ्यां पूर्वमैजागमो भवती''त्यर्थकेन '[6]द्वारादीनां चे'ति सूत्रेण विहितस्यैचो निषेधायाऽऽरब्धमिदं सूत्रम् । तच्चास्य वचनस्याभावे व्यर्थम् । यतो द्वारादिगणे श्वन्शब्दः पठित इति तदवयवाद् वकारात् पूर्वमिति तत्प्राप्तिरेव नास्तीति तत्प्रतिषेधार्थमारब्धमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने श्वभस्त्रशब्दस्यापि श्वन्शब्देन ग्रहणात् 'श्वाभस्त्रि'रित्यत्र '[7]द्वारादीनां चे'त्यनेनैजागमस्य प्राप्तिर्भवतीति तत्र तत्प्रतिषेधार्थमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु

---

1. अष्टा. 7/3/8 ।
2. 'श्वन्ग्रहणेन श्वन्शब्दाद्यवयवकस्य शब्दस्यापि ग्रहणं भवती'ति वचनार्थः ।
3. (क) " 'प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे तदादिग्रहणस्य, शौवहानाद्यर्थम्' । प्रतिषेधे श्वादिग्रहणं क्रियते ज्ञापनार्थम् । किं ज्ञाप्यम् ? । एतज् ज्ञापयत्याचार्यः - 'अन्यत्र च श्वन्ग्रहणे तदादिविधिर्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । 'शौवहानाद्यर्थम् । शौवहानं नाम नगरं शौवादंष्ट्रो मणिरिती''त्याह पत. व्या. म. भा. 7/3/1/8 ।
   (ख) "श्वन् शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापक''मित्याह वाम. का. 7/3/6 ।
   (ग) "तदादिविधौ चेदमेव ज्ञापक" मित्याह भ. दी. वै. सि. कौ. ठगधिकार प्र. पृ. 677 ।
   (घ) "द्वारादिगणे श्वन् शब्दः पठ्यते, न तु श्वभस्त्र श्वदंष्ट्रेत्यादिस्तथाच 'श्वादेरिती'ति निषेधसूत्रमेव व्यर्थं सद् द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः । फलं तु द्वारपालस्यायं 'दौवारपाल' इत्यादावैजागमस्य प्रवृत्ति''रित्याह ज्ञा. भि. त. वो. ठगधिकार प्र. पृ. 677 ।
   (ङ) "श्वादेरिञिति (सू. 7/3/8) । प्रतिषेधे श्वादिग्रहणं ज्ञापकम् अन्यत्र श्वन्ग्रहणे तदादिग्रहणस्य । शौवहानं नाम नगरम्, शौवादंष्ट्रोमणिरित्यं''मित्याह श्री ना. ज्ञा. सं. 7, पृ. 120 ।
4. श्वेव भस्त्रा यस्येति वहुव्रीहौ उपसर्जनह्रस्वत्वे कृते समासप्रातिपदिकत्वेन सौ श्वाभस्त्रः । ततः - श्वभस्त्रस्यापत्यमित्यर्थे श्वभस्त्रशब्दात् 'अतइञ्' - अष्टा. 4/1/95, इति इञि द्वारादीनां च.- अष्टा. 7/3/8, इति प्राप्तस्यैजागमस्य 'श्वादेरिञि' - अष्टा. 7/3/8, इति निषेधे स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. "द्वार, स्वर, स्वग्राम, स्वाध्याय, व्यल्कश, स्वस्ति, स्वर् (स्फ्यकृत) स्यकृत्, स्वादु, श्वस्, श्वन् श्व – " इति द्वारादिः ग. पा. 7/3/4 ।
6. अष्टा. 7/3/4 ।
7. अष्टा. 7/3/4 ।

'[1]शौवहानम्' '[2]शौवाद्रंष्ट्रः' - इत्यादौ वृद्धिनिषेधैजागमयोः सिद्धिः । अस्य वचनस्यासत्त्वे हि श्वन्शब्देन श्वन्शब्दाद्यवयकस्य श्वहानशब्दस्य श्वादंष्ट्राशब्दस्य च ग्रहीतुमशक्यतया 'द्वारादीनां[3]चे'ति सूत्रेण वृद्धिनिषेधैजगमौ न सिद्ध्येताम् । नहि श्वहान - श्वादष्ट्रा[4]शब्दयोः श्वन्शब्दत्वं वक्तुं शक्यम्, किन्तु तदादित्वमेवास्ति ।

## '[5]षत्वतुकोरसिद्धः'

सूत्रमिदं '[6]नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति परिभाषाया [7]ज्ञापकम् । यतः 'कोऽसिचत्[8]' इत्यत्र षत्वाभावय '[9]अधीत्ये'त्यत्र तुक् सिद्धये चारब्धमिदं

---

1. जिहतेऽस्मिन्नित्यर्थे 'ओहाङ्गतौ' धा. पा. जुहो. 1089 इति हाधातोरधिकरणे ल्युटि योरनाऽऽदेशे स्वादिकार्येषु कृतेषु हानमितिरूपम् । ततः श्वहानमस्मिन्नित्यर्थे 'तदस्मिन्नस्तीति देशेतन्नाम्नि' - अष्टा. 4/2/67, इत्यणि 'द्वारादीनांच' - अष्टा. 7/3/4, इति वृद्धिनिषेधै-जागमयोः कृतयोः 'यस्येतिच' - अष्टा. 6/4/148, इति नकारोत्तराकारस्य लोपे तद्धितान्तत्वात्' स्वादिकार्येषु च कृतेषु रूपमिदम् ।
2. शुनो दष्ट्रा श्वादंष्ट्रा, 'शुनोदन्तदंष्ट्राकर्णकुन्दवराङ्गपुच्छपदेषु' - वा. का. 6/3/137, इति-दीर्घः । ततः 'तत्रभवः' - अष्टा. 4/3/53, इत्यणि 'द्वारादीनां च' अष्टा. 7/3/4, इति वृद्धिनिषेधैजागमयोः कृतयोः 'यस्येति च' - अष्टा. 6/4/148, इत्याकारलोपे तद्धितान्तत्वात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. अष्टा. 7/3/4 ।
4. 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117, इतिप्राप्तेति शेषः ।
5. अष्टा. 6/1/86 ।
6. (क) 'नाजानन्तर्येबहिष्ट्व प्रक्लृप्तिः' व्याडिः प. सू. प. 80, पृ. 33 ।
   (ख) 'नाजानन्तर्यवहिरङ्गप्रक्लृप्तिः' पु. दे. ल. प. वृ. प. 42, पृ. 130 ।
   (ग) सी. दे. वृ. प. वृ. प. 70, पृ. 234 ।
   (घ) नी. दी. प. वृ. प. 59, पृ. 304 ।
   (ङ) ह. भा. प. भास्क. प. 72, पृ. 353 ।
   (च) भ. ना. प. शे. प. 52, पृ. 218 ।
   (छ) शेषा. प. भास्क. प. 43, पृ. 422 ।
7. तथाहि–
   (क) "ननु च बहिरङ्ग एकादेशो द्विपदाश्रयत्वात्, अन्तरङ्गावेव षत्वतुकौ एकपदाश्रयत्वात् तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे'इत्यनया परिभाषयैवास्यासिद्धत्वं भविष्यतीति निरर्थकमिदं वचनम् ? एवं तर्हि सैव परिभाषात्र प्रकरणे षत्वतुको र्नियम्यते । तेनाक्षद्यूरित्यत्र वहिरङ्गलक्षणोऽप्यूडादेशोऽन्तरङ्गयणादेशे कर्तव्ये नासिद्धो भवती"-त्युक्त्या सम्पूर्णसूत्रस्यास्यैततपरिभाषाज्ञापकत्वमसूसुचत् जि. बु. न्या. 6/1/86 ।
   (ख) अत्र च ज्ञापकम् - 'षत्वतुकोरसिद्धः' (6/1/86) इति सूत्रम् । तद्धि कोऽसिचत् अधीत्येत्यादौ षत्वं माभूत्, तुक्च यथा स्यादित्येवमर्थम् । एकादेशस्य पदद्वयापेक्षत्वेन वहिरङ्गतया एकपदापेक्षत्वेनान्तरङ्गे षत्वे तुकि च कर्तव्ये अन्तरङ्गपरिभाप-यैवासिद्धत्वासिद्धौ अनर्थकं तदुक्तार्थं ज्ञापयतीत्याह शेषा. प. भास्क. प. 43, पृ. 422 ।
8. 'षिच क्षरणे' धा. पा. तुदा. 1435, इति 'सिच्' धातोर्लुङि तिपि च्लौ । 'लिपि सिचि ह्वश्च' - अष्टा. 3/1/53 इति च्लेरङि किंशब्दात्परस्य सोः सकारस्य रुत्वे' अतोरोरप्लुतादप्लुते'

परिभाषाया अस्या अभावे व्यर्थम् । तत्र हि एकादेशयोः पदद्वयापेक्षत्वेन बहिरङ्गतया एकपदापेक्षत्वेनान्तरङ्गे षत्वे तुकि च कर्तव्येऽन्तरङ्गपरिभाषयैवासिद्धत्वं सुलभम् । ज्ञापितायां चास्यां 'कोऽसिच'दित्यत्र पदद्वयापेक्षत्वेन बहिरङ्गस्य 'एङः[1] पदान्तादति' इति पूर्वरूपैकादेशस्य, 'अधीत्ये'त्यत्र पदद्वयापेक्षत्वेन बहिरङ्गस्य 'अकः[2] सवर्णे, दीर्घ' इति दीर्घैकाऽऽदेशस्य च एकपदाश्रयत्वेनान्तरङ्गे क्रमशः 'आदेश- [3]प्रत्ययो'-रिति षत्वे, 'ह्रस्वस्य पिति [4]कृति तुक्' इति तुकि च कर्तव्येऽनयान्तरङ्ग-परिभाषाया[5] अप्रवृत्तौ पूर्वस्य दीर्घैकाऽऽदेशशास्त्रयोरसिद्धत्वाय सूत्रमिदं स्वांशे चरितार्थं भवति । तयोरसिद्धत्वाभावे हि 'कोऽसिच'दित्यत्र सिचः सकारस्य पदादित्वात् [6]सात्पदाद्यो'रिति षत्वप्रतिषेधस्य दुर्वारतया 'आदेश प्रत्ययो'रिति[7] षत्वम्, 'अधीत्ये'त्यत्र च ह्रस्वाभावेन 'ह्रस्वस्य पिति कृति तुक्'[8] इति तुक् च न सिद्ध्येताम् ।

पुरुषोत्तमदेव - नीलकण्ठदीक्षितौ षत्वे एकादेशशास्त्रासिद्धत्ववचनम् अस्यां परिभाषायां ज्ञापकमित्युपपादयन्तावपि सम्पूर्णसूत्रस्यैव ज्ञापकत्वं मन्वाते । यतोऽमीभ्यां सूत्रमेव ज्ञापकत्वेनोपन्यस्तम् ।[9]

---

अष्टा. 6/1/113 इति रेफस्योत्वे 'आद्गुणः' - अष्टा. 6/1/87, इति गुणैकाऽऽदेशे 'एङः पदान्तादति' - अष्टा. 6/1/109, इति पूर्वरूपैकादेशे च कृते रूपमिदं सिद्ध्यति' ।

9. अधिपूर्वकात् 'इङ् अध्ययने' धा. पा. अदा. 1046, इति इङ्धातोः 'समानकर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21, इति क्त्वाप्रत्यये समासे 'समासेऽनञ् पूर्वे क्त्वोल्यप्' - अष्टा. 7/3/37, इति क्त्वोल्यपि दीर्घैकाऽऽदेशे 'षत्वतुकोरसिद्धः' - अष्टा. 6/1/86, इति तदसिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्' -अष्टा. 6/1/71, इति तुकि रूपमिदं सिद्ध्यति ।

1. अष्टा. 6/1/109 ।
2. अष्टा. 6/1/101 ।
3. अष्टा. 8/3/59 ।
4. अष्टा. 6/1/71 ।
5. 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ।
6. अष्टा. 8/3/111 ।
7. अष्टा. 8/3/59 ।
8. अष्टा. 6/1/71 ।
9. तथाहि –
   (क) ज्ञापकं चात्र 'षत्वतुकोरसिद्धः' (6/1/86) इत्येकादेशस्यासिद्धत्ववचनम् । यदि ह्यजानन्तर्येऽपि बहिरङ्गासिद्धत्वं स्यात्तदा कोऽस्य योऽस्येत्यादौ इणः सस्य षत्वेऽन्तरङ्गकर्तव्ये पदद्वयाऽऽश्रयस्य 'एङः मदान्तादति' (6/1109) इति एकादेशस्य 'असिद्धं वहिरङ्गमन्तरङ्गे' इत्येवासिद्धत्वादसिद्धवचनमिदमनर्थकं स्या" दित्युक्तं पु. दे. ल.प.वृ. प. 'नाजानन्तर्ये बहिरङ्गप्रकॢप्तिः' 42, पृ. 130 ।

व्याडि-सीरदेव -हरिभास्कर- भट्टनागेशैस्तु तुकि असिद्धत्ववचनमेवात्र ज्ञापकमिति [1]स्वीकृतम् । भट्टनागेशेन च षत्वग्रहणमत्र सूत्रे नास्या ज्ञापकमित्युपपादितं[2]च ।

अमीषां [3]'षत्वतुकोरसिद्ध' इत्यत्र[4] तुकि एकादेशशास्त्रस्यासिद्धत्ववचनमेव 'नाजानन्तर्ये.' इति परिभाषाया ज्ञापकं न तु षत्वे[5] एकादेशशास्त्रासिद्धत्ववचनम्,

---

(ख) "अत्र च ज्ञापकं षत्वतुकोरसिद्धः (6/1/86) इति सूत्रम् । तद्धि कोऽसिचत् कोऽस्य इत्यादौ षत्वनिवारणार्थं क्रियते । यदि चासिद्धपरिभाषा प्रवर्तेत बहिरङ्गत्वेनैकादेशस्यासिद्धतया षत्वाप्राप्तेः किं सूत्रेण । तत् क्रियमाणं 'नाजानन्तर्ये' इति परिभाषां ज्ञापयती'त्युक्तं' नी.दी.प.वृ.प. 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः 59, पृ. 304 ।

1. तथाहि –

(क) "अचामानन्त्यलक्षणे कर्तव्ये वहिरङ्गपरिभाषा नावतरति । कथं ज्ञायते । यदयं 'षत्वतुकोरसिद्धः' (6/1/86) इति तुग्विधिं प्रति एकादेशस्यासिद्धत्वं शास्ति ....... इत्याह व्याडिः प.सू.प. 80, पृ. 33 ।

(ख) "ज्ञापकं चात्र 'षत्वतुकोरसिद्धः' (6/1/86) इतितुक्येकादेशस्यासिद्धवचनम् । यद्यचोरान्तर्येऽपि वहिरङ्गस्यासिद्धत्वं स्यात्तदाधीत्येत्यादावन्तरङ्गे तुकि कर्तव्ये पदद्वयाश्रितस्य सवर्णदीर्घस्यासिद्धत्वं बहिरङ्गमन्तरङ्ग इत्यत एवासिद्धत्वादसिद्ध-वचनमनर्थकं स्यात्" इत्याह सी. दे. बृ. प. वृ.प. 70, पृ. 235 ।

(ग) "ज्ञापकमत्र 'षत्वतुकोरसिद्ध' (6/1/86) इति तुकि एकादेशस्यासिद्धत्वम् । यदि हि अचोरान्तर्येऽपि बहिरङ्गपरिभाषा प्रवर्तेत तदा अधीत्येत्यादौ सवर्णदीर्घस्य बहिरङ्गस्यासिद्धत्वमस्त्येवेति किं तेन .........." इत्याह ह. भा.प.भास्क.प. 72, पृ. 354 ।

(घ) "अत्र 'षत्वतुको'रिति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्ः अन्यथाऽधीत्यप्रेत्येत्यादौ समासोत्तरं ल्यपूप्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाल् ल्यवुत्पत्तिपर्य्यन्तमप्यसंहिताया-अवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्वन्धिववर्णद्वयाश्रयापेक्षैकादेशस्य बहिरङ्गतया असिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेवे"त्याह भ. ना.प. शे.प. 52, पृ. 218-219 ।

2. तथाहि –"यत्तु षत्वग्रहणमपि ज्ञापकम् । अन्यथा 'कोऽसिच'दित्यादौ पद्वययसम्वन्धि-वर्णद्वयापेक्षत्वेन वहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न । इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन उभयोः समत्वात् । एकादेशस्य परादिवत्त्वेना'सिच'दित्यस्य पदत्वेन सस्य पदाऽऽदित्वाभावान्न 'सात्पदाद्योः' इत्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि वहिरङ्गपरिभाषाः अप्रवृत्तेः पूर्वमुपपादितत्वाच्चे" ति । प.शे.प. 52, पृ. 219 - 220 ।

3. अष्टा. 6/1/86 ।

4. 'ह्रस्वस्यपितिकृति तुक्' - अष्टा. 6-1-71.

5. 'इणः षः' - अष्टा. 8/3/39 ।

अर्थात् तुग्ग्रहणमेवात्र सूत्रे ज्ञापकमुक्तपरिभाषया न तु षत्वग्रहणमपीतिसिद्धान्तो न युक्तः । यतोऽमी 'कोऽसिच'दित्यादौ एकादेशस्य [1]पूर्वान्तवत्त्वे षत्वस्यापि पदद्वयाऽऽश्रितत्वाद् बहिरङ्गत्वं मन्यन्ते । नैतद्युक्तम् । यतः एकादेशस्य पूर्वान्तत्वेन ग्रहणे तुकोऽपि पदद्वयाऽऽश्रितत्वेन बहिरङ्गत्वादन्तरङ्गत्वाभावेन तुग्ग्रहणस्यापि ज्ञापकत्वं नोपपद्येत । यदि च '[2]अन्तादिवच्चे'त्यतिदेशस्य कार्यार्थतया परत्वेन परादित्वमाश्रित्य तुग्ग्रहणस्य ज्ञापकत्वं समर्थ्यते, षत्वेऽप्येवं वक्तुं शक्यते । अपि च षत्वे पूर्वान्तत्वाऽऽश्रयणे '[3]सात्पदाद्यो'रिति निषेधेन 'कोऽसिच'दित्यादौ षत्वाभावोऽपि सिद्ध इत्यनर्थकमिदं सूत्रं स्यात् । सूत्रेऽस्मिन्तुग्ग्रहणस्य ज्ञापकत्वमुपपादयतः षत्वग्रहणस्य ज्ञापकत्वं निराकुर्वतश्च भट्टनागेशस्य त्रिपाद्यां कार्यकालपक्षेऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येषा परिभाषा न प्रवर्तत इति सिद्धान्तोऽपि वार्तिक-सूत्रनिर्देश-भाष्य-सिद्धान्तविरुद्धोऽश्रद्धेय एवेति शेषाद्रिसुधिया चारुप्रतिपादितम्[4] । अतस्त्रिपाद्यां तत्परिभाषाया अप्रवृत्त्या न तया 'कोऽसिच'- दित्यादौ षत्वे पूर्वस्थस्यासिद्धत्वं सम्भवतीति तत्रैकाऽऽदेशस्यासिद्धत्वसम्पादनद्वाराऽकारव्यवधानात् षत्वाभावायात्र सूत्रे षत्वग्रहणमावश्यकमतस्तुग्ग्रहणमेवास्या ज्ञापकमिति नागेशसिद्धान्तः सर्वथाऽसंगत एव ।

इत्थमिदं सम्पूर्णं सूत्रमेवैतत्परिभाषाज्ञापकमितियुक्तं मन्ये । 'उत्तरकालप्रवृत्तिके यत्राच आन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्तते' इति ज्ञापिताया अस्या

---

1. 'अन्तादिवच्च' - अष्टा. 6/1/85, 'इत्यनेनेति शेषः ।
2. 'अन्तादिवच्च' - अष्टा. 6/185 ।
3. अष्टा. 8/3/111 ।
4. तथाहि – 'इयं परिभाषा कार्यकालपक्षेऽपि त्रिपाद्यां न प्रवर्तत इति नव्योक्तिस्त्वयुक्ता । दध्यत्रेत्यादौ त्रिपादीस्थेऽन्तरङ्गे संयोगान्तलोपे भाष्य-वार्तिकयोरस्याः परिभाषायाः संचारितत्वात् 'खरवसानयोः' (8/3/15) इति सूत्रे वार्तिककृता संचारितत्वाच्च तत्र प्रवृत्तौ बाधकाभावाच्च । यद्यपि विसर्जनीयसूत्रे भाष्ये 'अयुक्तोऽयं परिहारः । न वा बहिरङ्गलक्षत्वात् 'इत्युपक्रम्य' य थ । ह्यन्तरङ्गपरिभाषया पूर्वस्यासिद्धत्वमुच्यते एवं 'पूर्वत्रासिद्धम्' (8/2/1) इति परिभाषया परस्यान्तरङ्गस्याप्यसिद्धत्वस्य वस्तुं शक्यत्वात्' इति हेतुरुक्तः, तथापि 'चोद्यान्तरमेतद्भाष्यम्' इति कैयटेनोक्तत्वात् वचनेनैव तत्र समाधाने गौरवात् 'इत्युत्तरस्य' 'कर्णीष्वनव्ययस्य' इत्यादिनिर्देशात् आनुमानिक्ययाप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्यापि 'पूर्वत्रासिद्धम्' इत्यस्य बाध इति ज्ञापनसम्भवात् कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपिरिभाषा-प्रवृत्ति र्युक्तैव । वस्तुतस्तु तस्मादित्युत्तरस्य' (1/1/67) 'कर्णीष्वनव्ययस्य' (8/3/46) इत्यादिनिर्देशा एव इमां परिभाषां त्रिपाद्यामस्याः प्रवृत्तिं च ज्ञापयन्तीति न किञ्चिदनुपपन्नम्" इति - प. भास्क. प. 42, पृ. 422 ।

अर्थः । तेन '[1]पचावेद'मित्यत्र बहिरङ्गस्य गुणैकाऽऽदेशस्यासिद्धत्वप्रतिषेधो नानया भवतीति एकारस्य 'एते'[2] इति ऐत्वाऽऽपत्तिर्न भवति । यत उत्तरकालप्रवृत्तिके 'एत ऐ' इत्यत्राच आनन्तर्यं नाश्रीयते ।

वस्तुतस्तु सूत्रमिदं 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इत्यस्याः परिभाषाया न ज्ञापकं, किन्तु 'असिद्धं बहिरङ्गमन्तरङ्ग इत्यनित्य'मिति वचनस्यैव ज्ञापकम् । तथ्यमिदं हरिभास्कर - भट्टनागेश-शेषाद्रिभिश्चारु निरूपितम्[3] । ज्ञापिताया अस्याः परिभाषायाः, ज्ञापितस्यास्य वचनस्य वा फलम् - 'बहवः[4] 'इत्यादाववादेशस्य, 'यूनः[5] 'मघोनः'[6] इत्यादौ क्रमशः सवर्णदीर्घगुणैकाऽऽदेशयोः, 'अक्षद्यूः'[7] इत्यत्र यणश्च सिद्धिः । अस्याः परिभाषाया अस्य वचनस्य वा अभावे क्रमशोऽत्र 'शेषोघ्यसखी'[8] ति घिसंज्ञापेक्षस्य '[9]घेर्ङिती' ति गुणस्य बहिरङ्गतयाऽसिद्धत्वाद् 'एचोऽयवायावः'[10]इत्यवादेशः, '[11]यचिभ'मिति भसंज्ञासापेक्षस्य

---

1. 'पचाव + इदम्' इत्यवस्थायाम् 'आद्गुणः' - अष्टा. 6/1/87, इति गुणैकाऽऽदेशे रूपमिदं सिद्ध्यति । तत्र 'पचाव'इति 'डुपचष् पाके' धा.पा.भ्वा. 996, पच्धातोर्लिटि उत्तमपुरुषद्विवचने रूपम् ।
2. अष्टा. 3/4/93 ।
3. तथाहि -
   (क) "विवरणकारास्तु' षत्वतुकोरसिद्ध इत्यत्र 'नाजानन्तर्ये' इति न ज्ञाप्यते किन्तु बहिरङ्ग-परिभाषाया अनित्यत्वमित्याहुः "इत्याह ह.भा.प.भास्क.प. 72, पृ. 354 ।
   (ख) "एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यबोधनस्यैव न्याय्यत्वात् ........... इत्याह भ.ना. प. शे. प. 52, पृ. 222 ।
   (ग) "वस्तुतस्तु उक्तज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते" इत्याह शेषा. प. भास्क.प. 43, पृ. 423 ।
4. 'बहुशब्दाज्जसि 'शेषोघ्यसखिं' - अष्टा. 1/4/7 इति घिसंज्ञायां 'घेर्ङिति' -अष्टा. 7/3/11 इति गुणे 'एचोऽयवायावः' - अष्टा. 6/178 इत्यवादेशे रूपमिदं सिद्ध्यति' ।
5. 'युवन्' शब्दात् शसि 'श्वयुवमघोनामतद्धिते' - अष्टा. 6/4/133, इति सम्प्रसारणे 'सम्प्रसारणाच्च'-अष्टा. 6/1/108 इति पूर्वरूपे सवर्णदीर्घैकाऽऽदेशे च कृते रूपमिदं सिद्ध्यंति ।
6. 'मघवन्' शब्दात् शसि 'श्वयुव.' - अष्टा. 6/4/133 इति सम्प्रसारणे पूर्वरूपे गुणैकादेशे च कृते रूपमिदं सिद्धयति ।
7. 'अक्षैर्दीव्यती'ति विग्रहे 'क्विप्च' - अष्टा. 3/2/76 इति क्विपि धातोर्वकारस्य 'च्छ्वोः शूडनुनासिके च' - अष्टा. 6/4/19 इत्यूठि यणि स्वादिकार्येषु च कृतेषु रूपमिदं सिद्ध्यति ।
8. अष्टा. 1/4/7
9. अष्टा. 7/3/111 ।
10. अष्टा. 6/1/78 ।
11. अष्टा. 1/4/18 ।

[1]'श्वयुवमघोनामतादिधते' इति संप्रसारणस्य बहिरङ्गस्यासिद्धत्वाद् 'अकः सवर्णे[2] दीर्घः' 'आद्[3]गुणः' इति सवर्णदीर्घगुणैकाऽऽदेशयोः, 'च्छ्वोः'[4] इत्यूठो बहिरङ्ग-स्यासिद्धत्वाद्' 'इकोय[5]णची' ति यणश्च न सिद्ध्येयुः। सत्यां चास्यां सति चास्मिन् वा बहिरङ्गस्य तस्य तस्यासिद्धत्वाभावेन अन्तरङ्गा अपीमे सिद्ध्यन्ति।

## 'संख्यायाः [6]संवत्सरसंख्यस्य च'

सूत्रमिदं 'कालः संख्या च न परिमाण'मिति वचनस्य सामान्यापेक्षं ज्ञापकम्[7]। यतोऽस्य वचनस्याभावे व्यर्थमिदम्। तथाहि – 'द्वौ संवत्सरावधीष्टो भृतो भूतो

---

1. अष्टा. 6/4/133।
2. अष्टा. 6/1/110।
3. अष्टा. 6/1/87।
4. अष्टा. 6/4/9।
5. अष्टा. 6/1/77।
6. अष्टा. 7/3/15।
7. तथाहि –
   (क) "कालः संख्या च न परिमाणमिति। नहि ताभ्यामारोहतः परिणाहतश्च मीयते। ज्ञापकाच्च न तयोः परिमाणत्वमवसीयते। यदयं 'परिमाणान्तस्यासंज्ञाशाणायोः - इति सिद्धायामुत्तरपदवृद्धौ' संख्यायाः संवत्सरसंख्यस्य च' इति संवत्सरग्रहणं करोति, तज्-ज्ञापयति - कालः संख्या च न परिमाणं भवती' त्याह जि. बु.न्या. 4/1/22।
   (ख) "द्विसांवत्सरिकः त्रिसाप्ततिकः इत्याद्यर्थं संख्यस्य च चेति (7/3/15) उत्तरपदवृद्धिविधानं ज्ञापयति कालः संख्या च न परिमाणमिति, अन्यथा हि परिमाणान्तस्यासंज्ञाशाणयोः (7/3/17) इत्येवात्र द्विनैष्किकवत् वृद्धिः सिद्धा स्यात्। ज्ञापकेन द्विवर्षा द्विशता इत्यपरिमाणबिस्तेति (4/1/22) कालसंख्ययोः पर्युदासाभावे ङीप्प्रतिषेधः सिद्ध्यती"त्याह पु.दे.ज्ञा.समु.सप्तविंशे देविकापादे पृ. 91 - 92।
   (ग) "केचिदाहुः-संख्याग्रहणमपि ज्ञापकार्थमेव, परिमाणग्रहणेन संख्यापि न गृह्यत इति। तथा च 'अपरिमाणबिस्ताचित' -इत्यत्र वृत्तावुक्तम् - 'कालः संख्या च परिमाणं न भवति। द्विववर्षा, त्रिवर्षा, द्विशता, त्रिशता,' इतीत्याह ह.मि.पदम. 7/3/15।
   (घ) "संख्यायास, (सू. 7/3/15)। परिमाणान्तस्यासंज्ञेति सिद्धे संवत्सरग्रहणं ज्ञापयति परिमाणग्रहणेन कालग्रहणं नेति। तेन द्विववर्षेत्यादौ 'अपरिमाण' - इति पर्युदासो ने"त्याह श्रीना. ज्ञा. मं. 7, पृ. 122।

भावी वा द्विसाम्वत्सरिकः'[1] 'द्वे षष्ठे अधीष्टो भृतो भूतो भावी वा [2]द्विषष्टिकः' इत्यादौ संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने ञिति णिति किति च तद्धिते परतो वृद्ध्यर्थमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । यतो [3]द्विनैष्किकवदत्रापि [4]'परिमाणान्तस्यासंज्ञाशाणयो'रित्यनेनैव वृद्धिः सुलभा । अत्र हि सूत्रे परिच्छेदहेतुमात्रं परिमाणशब्देन गृह्यते, न तु प्रस्थादिवदारोह-परिणाहपरिच्छेदहेतुः । अन्यथा हि शाणप्रतिषेधोऽनर्थकोऽत्र स्यात् । नहि शाणः परिमाणमारोहपरिणाहपरिच्छेदहेतुः । ज्ञापिते चास्मिन् वचने कालस्य, संख्यायाश्च परिमाणग्रहणेन ग्रहणं न भवतीत्यत्र 'वृद्ध्यर्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [5]'द्विवर्षा' [6]'द्विशते'त्यादौ 'अपरिमाणबिस्ता-चितकम्बल्येभ्यो न तद्धितलुकि'[7] इत्यनेन कालसंख्ययोः परिमाणपर्युदासाभावान्-ङीप्रतिषेधस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि कालसंख्ययोः परिमाणपर्युदासेन ङीप्प्रतिषेधोऽत्र न सिद्ध्येत् ।

---

1. तद्धितार्थे समासे 'प्राग्वतेष्ठञ्' - अष्टा. 5/1/18, "कालात्' - अष्टा. 5/1/78, 'तमधीष्टो भृतो भूतो' - अष्टा. 5/1/78, इति ठञ्प्रत्यये ठकारस्य 'ठस्येकः' - अष्टा. 7/3/50. इति इकाऽऽदेशे 'यस्येति च' - अष्टा. 7/1/11, इत्यकारलोपे 'संख्यायाः संवत्सरसंख्यस्य च' अष्टा. 7/3/15, इत्युत्तरपदस्यादेरस्य वृद्धौ तद्धिधतान्तप्रातिपादिकत्वेन स्वादिकार्येषु कृतेषु द्विसांवत्सरिक इति रूपं सिद्धयति ।
2. द्विसांवत्सरिक इतिवदिदं रूपं सिद्धयति ।
3. द्वाभ्यां निष्काभ्यां क्रीतम् - इत्यर्थे 'असमासे निष्कादिभ्यः '-अष्टा. 5/1/20, इति टकि ठकारस्येकादेशे 'परिमाणान्त. '-अष्टा. 7/3/17, इत्युत्तरपदस्यादेरचो वृद्धौ स्वादि- कार्येषु कृतेषु द्विनैष्किकमिति रूपं सिद्धयति ।
4. अष्टा. 7/3/17 ।
5. 'द्वे वर्षे भूतेत्यर्थे' 'तमधीष्टो भूतो भावी' - अष्टा. 5/1/78, इति सूत्रेण विहितस्य टकः' 'वर्षाल्लुक्च' - अष्टा. 5/1/88, इति पाक्षिके लुकि, चित्तवत्त्वे तु प्रत्ययार्थस्य विवक्षिते 'चित्तवति नित्यम्' - अष्टा. 4/1/21, इति प्राप्तस्य ङीपः 'अपरिमाणविस्ताचितकम्वल्येभ्यो न तद्धितलुकि' - अष्टा. 4/1/22, इति प्रतिषेधे टापि रूपमिदं सिद्धयति ।
6. द्वाभ्यां शताभ्यां क्रीतेत्यर्थे' पणपादमाषशताद्यत्' - अष्टा. 5/1/34, इति नित्ये यति प्राप्ते 'शाणाद्वा' - अष्टा. 5/1/35, इत्यत्र **स्थितात्** 'शताच्चेति वक्तव्य'मिति वार्तिकात्पक्षे 'संख्याया अतिशदन्तायाः कन्' अष्टा. 5/1/22, इति कनि कनः 'अध्यर्ध पूर्वात्.' - अष्टा. 5/1/28, इति लुकि द्विशतशब्दात् 'द्विगोः' - अष्टा. 4/1/21, इति प्राप्तस्य ङीपः 'अपरिमाणविस्ताचित.' - अष्टा. 4/1/22, इति प्रतिषेधे टापि रूपमिदं सिद्धयति ।
7. अष्टा. 4/1/22 ।

[1]वामन-[2]भट्टोजिदीक्षित-[3]भट्टनागेशास्तु सूत्रेऽस्मिन् संवत्सरग्रहणमेव 'कालो न परिमाण'मित्येतदेव वचनं ज्ञापयतीति मन्यन्ते । 'संख्या बाह्या तु सर्वतः'—इत्यभियुक्तोक्तेः कालस्य परिमाणग्रहणेन ग्रहणं न भवतीति तदाशयः । जयादित्यस्तु 'कालः संख्या च न परिमाण'मिति [4]मनुते । अत्र वामन-जयादित्य-जिनेन्द्रबुद्धि-पुरुषोत्तमदेव-हरदत्तमिश्र-भट्टोजिदीक्षित-भट्टनागेशमतेषु वामन-भट्टोजिदीक्षित-भट्टनागेश-मतं [5]पतञ्जलिसिद्धान्तानुसारितया युक्तं प्रतिभाति । यतः पाणिनीयेऽस्मिन् व्याकरणे 'यथोत्तरं मुनीनां [6]प्रामाण्य' मिति राद्धान्तो जयति ।

---

1. अनेन हि—" 'परिमाणान्तस्य'इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः, त्रैमासिकः-इत्युत्तरपदवृद्धिर्नभवति । द्विवर्षा त्रिवर्षा माणविकेति 'अपरिमाणविस्ताचित'इति पर्युदासो न भवती'त्युक्तम् का. 7/3/15 ।
2. अनेन हि—"(सङ्ख्यायाः) परिमाणान्तस्ये'त्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्विसमिक इत्युत्तरपदवृद्धिर्ने"त्युक्तम् वै. सि. कौ. ठञधिकार प्र. पृ. 712 ।
3. 'अनेन हि—"संवत्सरग्रहणमिति । संख्यायास्तु न परिमाणग्रहणेन असति गमके ग्रहणं, 'संख्या बाह्या तु सर्वतः'इत्युक्तेरिति भावः"—इत्युक्तम् ल. श. शे. ठञधिकारप्र. पृ. 712 ।
4. असौ हि—"सर्वतो मानम्=परिमाणम् । ..... कालः संख्या च न परिमाणम् । द्विवर्षा ॥ त्रिवर्षा । द्वाभ्यां शताभ्यां क्रीतासद्विशता । त्रिशता ।"—इत्याह का. 4/1/22 ।
5. अनेन हि—"'संवत्सरग्रहणमनर्थकं परिमाणान्तस्येतिकृतत्वात्' । संवत्सरग्रहणमनर्थकम् । किं कारणम् ? । परिमाणान्तस्येति कृतत्वात् । 'परिमाणान्तस्यासंज्ञाशाणयो'रित्येव सिद्धम् । "ज्ञापकं तु 'कालपरिमाणां वृद्धिप्रतिषेधस्य' । (एवं तर्हि ज्ञापयत्याचार्यः 'कालपरिमाणानां)वृद्धिर्नभवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । द्वैरात्रिकः, त्रैरात्रिकः अत्रवृद्धिर्नभवति । नैतदस्ति प्रयोजनम्; नास्त्यत्र विशेषः सत्यांवोत्तरपदवृद्धावसत्यां वा । इदं तर्हि-द्वैसमिकः त्रैसमिकः । इदं चापि प्रयोजनं—द्वैरात्रिकः, त्रैरात्रिकः । ननुचोक्तंनास्त्यत्रविशेषः सत्यांवोत्तर- पदवृद्धावसत्यांवे'ति ? । अयमस्तिविशेषः यद्यत्रोत्तरपदवृद्धिः स्यादचामादेर्वृद्धिर्नस्यात् । अपरआह । 'ज्ञापकं तु कालपरिमाणानां परिमाणाग्रहणस्य' । एवं तर्हि ज्ञापयत्याचार्यः—'कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् । 'अपरिमाणविस्ताचितकम्वल्येभ्यो न तद्धिलुकि'—द्विवर्षा त्रिवर्षा । परिमाणपर्युदासेन पर्युदासो न भवती" त्युक्तम् व्या. म. भा. 7/3/1/15 ।
   "अपरआहेति—'पूर्वं विशेषविषयं ज्ञापकमाश्रितम् । इदानीं तु सामान्यविषयमिति भेदः" इत्याह च कै. प्रदी. 7/3/1/15 ।
6. (क) "गोनर्दीय आह—अकच्स्वरौतु कर्तव्यौ प्रत्यङ्गमुक्तसंशयौ । त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिती"ति भाष्यं व्याचक्षाणः' सूत्रप्रत्याख्यानमेतत् 'यथोत्तरं हि मुनित्रयस्य प्रामाण्य'मित्याह कै. प्रदी. 1/1/6/28 ।
   (ख) "भाष्यकारस्तु 'त्वकत्पितृको' 'मकत्पितृक' इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम्"—इत्याह भ. दी. वै. सि. कौ. अन्तपुंल्लिङ्गप्र. पृ. 113 ।
   (ग) "धिन्विकृण्व्योर च'इति सूत्रे किमर्थमत्वं विधीयते वलोप एवास्त्वित्याशङ्क्यात्वेऽल्लोपे तस्य स्थानिवत्त्वेन गुणाभावाय तत् । न च वलोपेऽपि "न धातु—"इति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्यानपक्षे गुणप्राप्तेरित्युक्तम् भाष्यकृता । अनेन

## '[1]संज्ञायामुपमानम्'

सूत्रमिदम् 'अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवती'ति 'क्वचिदिह स्वरविधौ प्रत्ययलोपलक्षणं न भवती'ति वा वचनस्य [2]ज्ञापकम् । यतोऽनयोरन्यतरस्य वचन-

---

सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसंमतलक्ष्यमेव कथंचित् सूत्रमतेऽपि साध्यं न तु विपरीतं सम्भवे । अन्यथा सूत्रमप्रमाणमेवेति च, प्रत्याख्यानं सूत्रसंमतमिति च ध्वनितम् । सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत् सूत्रकारवचः खण्डनप्रवृत्तभाष्यवार्तिकस्तदंशे सूत्रसंमतमिति च ध्वनितम् । सूत्रकृत्खण्डित-प्राचीनऋषिवाक्यानामप्रामाण्यवत् सूत्रकारवचः खण्डनप्रवृत्तभाष्यवार्तिकवचनैस्तदंशे सूत्रकारवचसोऽप्यप्रामाण्यकल्पनैवोचिते"ति ग्रन्थेन 'यथोत्तरं मुनीनां प्रामाण्य'मित्युक्तिं समर्थयति ह. दी. श. र. अजन्तपुँल्लिङ्गप्र. पृ. 272 ।

(घ) "यथोत्तरमिति । उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं चेदं 'धिन्विकृण्व्यो'-रिति सूत्रे भाष्ये । एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रवलमित्यपास्त"मित्याह भ. ना. उद्यो. 1/1/6/28 ।

1. अष्टा. 6/1/204 ।
2. तथाहि-

(क) "किमर्थमिदमुच्यते", न 'ञ्नित्यादिर्नित्यमित्येव'सिद्धम् ? । ञ्नितीत्युच्यते,न चात्र ञ्नितं पश्यामः ।प्रत्ययलक्षणेनं । 'नलुमता तस्मिन्नि'ति प्रत्ययलक्षणप्रतिषेधः । अङ्गाधिकारोक्तस्य स प्रतिषेधो 'न लुमताङ्गस्ये'ति । अत उत्तरं पठति-'उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्यय-लक्षणप्रतिषेधस्य । उपमानस्याद्युदात्तवचनं ज्ञापकार्थं क्रियते । किं ज्ञाप्यम् ? । एतज्ज्ञापयत्याचार्योऽनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । गर्गाःवत्साः विदा उर्वाः । उष्ट्रग्रीवा वामरज्जुः । ञ्नितीत्याद्युदात्तत्वं न भवती"त्याह पत. व्या. म. भा. 6/1/6/204 ।

(ख) "यद्येवं किमर्थमिदमुच्यते, प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम् ? एतदेव ज्ञापयति-'क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवती"त्याह वाम. का. 6/1/204 ।

(ग) "यदि हि क्वचित् स्वरविधौ प्रत्ययलक्षणं स्यात्, कर्तव्यमेवेदं वचनं (न) स्यात् । प्रत्ययलक्षणेन सिद्धत्वात्; कृतं च । तस्मादेतज् ज्ञापयति-प्रत्ययलक्षणमिह स्वरविधौ न भवतीति । क्वचिदग्रहणं क्वचित्तु भवतीति प्रदर्शनार्थम्, तथाहि-'सर्वस्य सुपि'इत्यत्रोक्तम्-प्रत्ययलक्षणेनाप्ययं स्वर इष्यत इती"-त्याह जि. बु. न्या. 6/1/204 ।

(घ) "बध्रिका-खरकुटीत्यादीनामुपमेयस्य संज्ञाभूतानामुपमानशब्दानां संज्ञायामुपमानम् (6/1/204) इत्यनेन सूत्रेणाद्युदात्तविधानं ज्ञापकं क्वचिदिह स्वरविधौ प्रत्ययलोपलक्षणं न भवतीति । अन्यथा हि लुप्तस्य कनः-प्रत्ययलोपलक्षणादिनात्राद्युदात्तत्वं सिद्धं स्यात् । तेन गर्गा इति यञि लुप्ते ञ्नित्यादिर्नित्यमिति (6/1/197) न प्रवर्तते इति संज्ञायामुपमानमित्यत्रैव वृत्ति"रित्याह पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे-पृ. 84 ।

(ङ) "संज्ञायामुपमानम् (सू. 6/1/204) उपमानस्याद्युदात्तवचनं ज्ञापकम् 'अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्ये"-त्याह श्रीना. ज्ञा. सं. 6, पृ. 106 ।

स्याभावे सूत्रमिदं व्यर्थम् । तथाहि–'चञ्चा' प्रभृतीनामुपमेयसंज्ञाभूतानामुपमानशब्दानामाद्युदात्तत्वस्वरसिद्ध्यर्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । चञ्चाप्रभृतिशब्दे हि चञ्चेव चञ्चेत्याद्यर्थे [1]'संज्ञाया'मिति विहितस्य कनः [2]'लुम्मनुष्ये' इत्यनेन लुप्तस्यापि [3]प्रत्ययलक्षणमाश्रित्य '[4]ञ्नित्यादि र्नित्य'–मिति सूत्रेणैवाऽऽद्युदात्तत्वं सुलभम् । न चात्र 'न लुमताङ्गस्ये'ति[5] प्रत्ययलक्षण–प्रतिषेधः शङ्क्यः । यतोऽत्राऽऽद्युदात्तत्वस्याङ्गाधिकारीय-[6]त्वाभावेन '[7]नलुमते'ति निषेधो न प्रवर्तते । ज्ञापिते चास्मिन् वचने '[8]ञ्नित्यादिर्नित्य'मितिस्वरस्येत्संज्ञानिमित्तकतया तस्मिन् कर्तव्ये [9]प्रत्ययलक्षणाभावात् 'चञ्चा'–प्रभृतीनां ञ्निदन्तत्वं दुर्लभमित्याद्युदात्तत्व-[10]स्वराप्राप्तौ तत्राऽऽद्युदात्तस्वरचरसिध्यर्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य फलं तु 'गर्गा'–इत्यादौ गर्गस्य गोत्रापत्यानीत्यर्थे [11]'गर्गादिभ्यो य'ञिति सूत्रविहितस्य यञः [12]'यञञोश्चे'त्यनेन लुकि तस्य [13]प्रत्ययलक्षणमाश्रित्य [14]'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वाभावः । अस्य वचनस्यासत्त्वे हि अनुबन्धलक्षणेऽपि स्वरे प्रत्ययलक्षणस्य[15]दुर्वारतयाऽत्राऽऽद्युदात्तत्वा[16]ऽऽपत्तिर्दुवारा स्यात् ।

## 'सनाद्यन्ता [17]धातवः'

सूत्रमिदं 'सनाद्यन्तानामुपदेशपाठो नास्ती'ति वचनस्य [18]ज्ञापकम् । यतः 'स्यसिचसीयुट्[19] तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् चे'ति सूत्रे

1. अष्टा. 5/3/97 ।
2. अष्टा. 5/3/98 ।
3. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
4. अष्टा. 6/1/197 ।
5. अष्टा. 1/1/63 ।
6. 'अङ्गस्य'–अष्टा. 6/4/1 ।
7. 'न लुमताङ्गस्य'–अष्टा. 1/1/63 ।
8. अष्टा. 6/1/197 ।
9. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
10. ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197 ।
11. अष्टा. 1/1/105 ।
12. अष्टा. 2/4/64 ।
13. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
14. अष्टा. 6/1/197 ।
15. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
16. 'ञ्नित्यादिर्नित्यम्'–अष्टा. 6/1/197 ।
17. अष्टा. 3/1/32 ।
18. 'तथा स्यसिच्सीयुट्सूत्रे (6/4/62) णिजन्तस्योपदेशेऽजन्तत्वेन गमिष्यते गामिष्यते इत्युदाहृतत्वात् सनाद्यन्तानामुपदेशपाठोऽङ्गीकृतः क्रियावाचकत्वं चास्तीति–पाठार्थाभ्यां भूवादयो धातव (1/3/1) इत्यनेनैव धातुत्वसिद्धौ सनाद्यन्ता धातव इत्यारम्भात् ज्ञापकात् सनाद्यन्ताना-

णिजन्तस्योपदेशोऽजन्तत्वेन 'शामिष्यते' 'शमिष्यते'इत्युदाहरणं दर्शयद्‍भ्यां [1]वामन-[2]भट्टोजिदीक्षिताभ्यां सनाद्यन्तानामुपदेशपाठः स्वीकृतः, क्रियावाचित्वं चास्तीति पाठार्थाभ्यां सनाद्यन्तानां धतुत्वं [3]'भूवादयो धातव'इत्येव सिद्धमितीदं व्यर्थम् । ज्ञापितेचास्मिन् वचने सनाद्यन्तानां धातुत्वाय 'सनाद्यन्ता धातव[4]' इति सूत्रं सार्थकं भवति । ज्ञापितस्य चास्य वचनस्य फलं तु 'ञिकारीयती'ति क्यजन्ते 'आदिर्ञिटुडवः'[5] इत्यस्याप्रवृत्तिः ।

इदमत्रावधेयम्–'[6]पुच्छभाण्डचीवराण्णिङि'ति ङित्करणात् 'सनाद्यन्ता[7] धातव' इत्यारम्भाच्चात्र पाणिनीयव्याकरणे सनाद्यन्तानामुपदेशोऽनुपदेशश्चेति लक्ष्यानुरोधाद् व्यवहरन्त्याचार्या इति । यन्मते[8] 'उपदेशशब्दस्याद्योच्चारणमर्थोऽसौ सनाद्यन्तानामुपदेशो नास्तीति मन्यते, यतः सनाद्यन्तानामाद्यमुच्चारणं नास्ति । [9]यन्मते' उपदेशपदस्य शास्त्रमर्थोऽसौ 'सनाद्यन्तानामुपदेशोऽस्ती'ति मन्यते । यतस्तन्मते धातोरपि शास्त्रतया सनाद्यन्तानां च धातुत्वेनोपदेशोऽस्ति । शास्त्रं हि शासनकरणम् । तत्त्वं च प्रयोगशासनकरणीभूतेषु धातु-प्रातिपदिक-निपाताऽऽगमाऽऽदेशेषु निष्प्रत्यूहं विद्यते ।

अत्र–"सनाद्यन्ता[10] धातवः'–इति सनः सकारादारभ्य आत्मनेपदार्थं कमे[11]र्णिङो ङकारेण 'संङ् धातु'रिति न कृतं 'समुदायानुबन्धानामवयवानुबन्धता नास्तीति ज्ञापनार्थम् । तेन महिङो ङित्त्वस्य प्रत्याहारार्थत्वात् '[12]सस्रंसिमहे'इत्यत्रा-

---

मुपदेशपाठो नास्तीत्यनुमीयते । तथा चादिर्ञिटुडव (1/3/5) इत्यत्र च उपदेश एव ञकारीयतीति क्यजन्तस्य प्रत्युदाहृतत्वा"दित्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 69 ।

19. अष्टा. 6/4/62 ।

1. द्र. का. 6/4/62 ।
2. द्र. वै. सि. कौ. भावकर्मार्थप्रकरणे पृ. 349 ।
3. अष्टा. 1/3/1 ।
4. अष्टा. 3/1/32 ।
5. अष्टा. 1/3/5 ।
6. अष्टा. 3/1/20 ।
7. अष्टा. 3/1/32 ।
8. कैयटस्य तदनुयायिनः भट्टोजिदीक्षितस्य च मते'इत्यर्थः । यतः कैयटः–'येषां तु स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः' इत्याह प्रदी. 6/1/1/45 । भट्टोजिदीक्षितोऽपि 'उपदेश आद्योच्चारण'मित्याह वै. सि. कौ. संज्ञाप्र. पृ. 6 ।
9. भट्टनागेशमते'इत्यर्थः । यतोऽसौ 'शास्त्रपदेन प्रयोग-शासनकरणीभूता धातु-प्रातिपदिक-निपाता-गमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते'इत्याह ल. श. शे. संज्ञा प्र. पृ. 71 ।
10. अष्टा. 3/1/32 ।
11. 'कमेर्णिङ्'–अष्टा. 3/1/30 ।
12. 'स्रंसु ....... अवस्रंसने' धा. पा. 754. इति स्वरितेतः संस्रधातोर्लिटि महिङि रूपम् ।

निदितामिति[1]- अनुनासिकलोपो न भवति, [2]करवामहे इति च गुणः सिद्ध्यति । अथवा अवयवावयवेन कमेर्णिङो ङकारेण 'सङ्धातु'रिति न कृतमेव ज्ञापयितुं 'नावश्यमवयवावयवः समुदायावयवो भवती'ति । तेन चिच्छिदु[3]रित्यादौ ह्रस्वावयवस्य [4]तुकोऽभ्यासानवयवत्वात् हलादिः शेषो न भवती तिङ्[5]चेति सूत्रे वृत्तिः । नावश्यमिति, वचनात् क्वचिदवयवावयवो'ऽपि समुदायावयवः । तेन सार्वधातुकावयवस्यापि रुटः[6] सार्वधातुकग्रहणेन ग्रहणात् [7]'शेरते'इति 'शीङः [8]सार्वधातुके 'गुणः' सिद्ध्यति इति**न्यासः** । तथा [9]यङो ङकारो धातोरवयव इति [10]'पापठ्यते'- इत्यात्मनेपदं भवती'त्यप्याह[11] पुरुषोत्तमदेवः । पुरुषोत्तमदेवोक्तमस्य सूत्रस्य ज्ञापकत्वोपपादनमपि युक्तमिति मन्ये ।

श्रीनागेशस्तु 'सूत्रमिदं[12] क्यजाद्यन्ताः क्रियावचनाः' इति वचनस्य ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि इदं हि सूत्रं [13]धातोरित्यकृत्य विहितानां [14]तव्यदादीनां सिद्ध्यर्थमारब्धम् । कर्मादिरूपसाधने हि तव्यदादयो विधीयन्ते । साधनं च क्रियायाः । अस्य वचनस्याभावे हि [15]क्यजन्तस्य क्रियावाचकत्वं न स्यात्, तथासति तद्वाच्यक्रियाया अभावात् क्रियासाधने विधीयमानाः तव्यदाद्रयः क्यजन्तेभ्यो न भवेयुरिति तव्यदादिफलकं धातुसंज्ञाविधायकं सूत्रमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने क्यजन्तेभ्यस्तव्यदादिसिद्धये सूत्रमिदं स्वांशे चरितार्थं भवति ।

---

1. 'अनिदितां हलउपधायाः क्ङिति'–अष्टा. 6/4/24 ।
2. 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोर्लटि महिङि रूपम् ।
3. 'छिदिर् द्वैधीकरणे' धा. पा. रुधा. 1441, इति छिद्धातोर्लिटि झौ रूपम् ।
4. 'छेच'–अष्टा. 6/1/73 ।
5. अष्टा. 6/1/73 ।
6. 'शीङो रुट्'–अष्टा. 7/1/6 ।
7. 'शीङ् स्वप्ने' धा. पा. अदा. 1032, इति शीधातोर्लटि झौ 'शीङोरुट्'–अष्टा. 7/1/6, इति झोऽदादेशे रुटि 'शीङः सार्वधातुकेगुणः'–अष्टा. 7/4/21, इति गुणे टितष्टेरेत्वे रूपम् ।
8. अष्टा. 7/4/21 ।
9. 'धातोरेकाचोहलादेः क्रियासमभिहारेयङ्'–अष्टा. 3/1/22 ।
10. 'पठव्यक्तायां वाचि' धा. पा. भ्वा. 330, इति पठ्धातोर्यङि तदन्ताल्लटि ते रूपम् ।
11. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 70-71 ।
12. 'सनाद्यन्ता धातवः'–अष्टा. 3/1/32 ।
13. अष्टा. 3/1/91 ।
14. 'तव्यत्तव्यानीयरः'–अष्टा. 3/2/96 ।
15. 'सुपआत्मनः क्यच्'–अष्टा. 3/1/8, इति विहितक्यजन्त -'पुत्रीय' इत्यादेरित्यर्थः ।

ज्ञापितस्यास्य वचनस्यफलं तु 'क्यजादिषु प्रत्यया[1]र्थनिर्देशः'–इतिवार्तिकानारम्भजन्यं लाघवम्"इति भाष्य[2]सिद्धान्तं [3]मनुते ।

## [4]'सपूर्वाच्च'

सूत्रमिदं 'ग्रहणवता प्रातिपदिकेन [5]तदन्तविधिर्नास्ती'ति परिभाषाया [6]ज्ञापकम् । यतो यदि गृह्यमाणेन प्रातिपदिकेन [7]तदन्तविधिः स्यात्तर्हि 'पूर्वादिनिः[8] 'इति

---

1. वा. व्या. म. भा. 3/1/2/19 ।
2. तथाहि–"आचार्यप्रवृत्ति र्ज्ञापयति–'क्रियावचनाः क्यजादय'इति यदयं 'सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति । कथं कृत्वा ज्ञापकम् ? । धातुसंज्ञावचन एतत्प्रयोजनं 'धातो'रिति तव्यदा- दीनामुत्पत्तिर्यथा स्यात् । यदि चात्र क्रियावचनता न स्याद् धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । किं कारणम् ? । साधने तव्यदादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाया अभावात् साधनाभावः । साधनाभावात् सत्यामपि धातु- संज्ञाया तव्यदादयो न स्युः । पश्यत्याचार्यः–'क्रियावचनाः क्यजादयः' इति ततः 'सनाद्यन्ता- धातवः' इति धातु संज्ञां शास्ती"त्याह पत. व्या. म. भा. 3/1/2/19 ।
3. अनेन हि–"'नमोवरिवः' (सू. 3/1/19) क्यजन्ताः क्रियावचनाः । 'सनाद्यन्ताः' (सू. 3/1/32) इतिधातुसंज्ञाविधानात् ज्ञापकात्........" इत्युक्तम् ज्ञा. सं. 3, पृ. 61 ।
4. अष्टा. 5/2/87 ।
5. (क) ग्रहणवता प्रातिपदिकेन न तदन्तविधिः, व्याडि: प. पा. प. 89, पृ. 41 ।
   (ख) पु. दे. ल. प. वृ. प. 78, पृ. 147 ।
   (ग) सी. दे. वृ. प. वृ. प. 55, पृ. 222 ।
   (घ) नी. दी. प. वृ. प. 71, पृ. 307 ।
   (ङ) ह. भा. प. भास्क. प. 57, पृ. 348 ।
   (च) भ. ना. प. शे. प. 32, पृ. 153 ।
   (छ) शेषा. प. भास्क. प. 31, पृ. 409 ।
6. तथाहि–
   (क) "योगद्वयेन चानेन–'पूर्वादिनिः' 'सपूर्वाच्च'इति परिभाषाद्वयं ज्ञाप्यते व्यपदेशिवद्भावोऽप्रातिपदिकेन' 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"त्याह जया. का. 5/2/87
   (ख) "यदि वा 'ग्रहणवता'इत्यादिका परिभाषा न स्यात् 'सपूर्वाच्च' इतीमं योगं न कुर्यात् । 'पूर्वादिनिः' इत्यनेनैवहि 'कृतपूर्वी'त्यादावपि भविष्यति तदन्तविधिना । तदेवं पूर्वयोगेनैव पूर्वशब्दान्तादपि सिद्धे प्रत्यये यत् 'सपूर्वाच्च'इतीमं योगं करोति, तज् ज्ञापयति–अस्तीयं परिभाषा' ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न भवतीती"त्याह जि. बु. न्या. 5/2/87 ।
   (ग) 'यदि च' ग्रहणवता प्रातिपादिकेन इत्येषा परिभाषा न स्यात् । 'पूर्वादिनिः' इत्येतावदेव ब्रूयात्, तदन्तविधिना सपूर्वादपि भविष्यतीति किं द्वितीययोगेने"त्याह ह. मि.-पदम. 5/2/87 ।
   (घ) "ज्ञापिते चैते परिभाषे'येन विधिः.' (1/1/72) इति सूत्रे भाष्यकृता 'पूर्वादिनिः' (5/2/86) इत्यनन्तरं 'सपूर्वाच्च' (5/2/87) इत्यनेन योगेन ...... "इत्याह पु. दे. ल. प वृ. प. 78, 79, पृ. 147 ।

गृह्यमाणेन पूर्वशब्देन अधिकृतप्रातिपदिकविशेषणेन तदन्तविधौ पूर्वशब्दान्तादपि इनेः सिद्धौ सूत्रमिदं व्यर्थम् । ज्ञापितायां चास्याम् अत्र सूत्रे पूर्वशब्दस्य गृह्यमाणतयाऽनया तदन्तविधेः प्रतिषेधात् 'कृतपूर्वी'त्यादौ 'पूर्वादिनि'रित्यनेनाप्राप्तस्य इनेः सिद्धये सूत्रमिदं स्वांशे चरितार्थं भवति ज्ञापिताया अस्याः फलं तु गर्गादिभ्यो[1]यञ्' 'नडादिभ्यः[2] फक्'इति यञः फकश्च क्रमशः परमगर्गशब्दात् सूत्रनडशब्दाच्चाभावौ । अस्या अभावे हि तदन्तविधेरत्र दुर्वारतया गर्गान्तनडान्ताभ्यां परमगर्ग-सूत्रनड-शब्दाभ्यां क्रमशो यञ् फकावापद्येताम् ।

ज्ञापकभूमेः प्रत्यय-विषयत्वाद् इयं परिभाषा प्रत्ययविधिविषयैव । अतएव 'परम महान्'इत्यादावात्वं सिद्ध्यति । अन्यथा 'आन्महतः [3]समानाधिकरणजातीय- योः' इत्यत्र महच्छब्देन तदन्तविधेरसंभवात् तत्राऽऽत्वं न सिद्ध्येत् ।

वस्तुतस्तु 'समासप्रत्यय[4]विधौ प्रतिषेधः'–इति वार्तिकस्थप्रत्ययग्रहणेन गतार्थेयम् । यत एतद् घटकप्रत्ययग्रहणलब्धार्थमेवासावनुवदति ।

---

(ङ) "ज्ञापिते एते परिभाषे'येन विधिः (1/1/72) इति सूत्रे भाष्यकृता 'पूर्वादिनिः' (5/2/86) इत्यस्यानन्तरं 'सपूर्वाच्च' (5/2/87) इत्यनेन ........ इत्याह सी. दे. बृ. प. वृ. प. 55, 56, पृ. 222 ।

(च) "अस्याश्च ज्ञापकं 'पूर्वादिनिः' (5/2/86) इत्येव सिद्धे 'सपूर्वाच्च (5/2/87) इति सूत्रम् "इत्याह नी. दी. प. वृ. प. 71. पृ. 307 ।

(छ) "अत्र पूर्वत्र च ज्ञापकं 'पूर्वादिनिः' (5/2/86) इत्यस्यानन्तरं 'सपूर्वाच्च' (5/2/87) इति सूत्रकरणम् .... इत्याह–ह. भा. प. भास्क. प. 58, पृ. 348 ।

(ज) "अत्र च ज्ञापकं 'सपूर्वाच्चे'ति सूत्रम् । अन्यथा 'पूर्वादिनिः' इत्यत्र तदन्तविधिनैव सिद्धे किं तेने"त्याह भ. ना. प. शे. प. 32. पृ. 154-155 ।

(झ) "अस्याश्च ज्ञापकम्–'सपूर्वाच्च' (5/2/87) इति सूत्रम्–...... इत्याह शेषा. प. भास्क. प. 31, पृ. 409 ।

7. 'येनविधिस्तदन्तस्य'–अष्टा. 1/1/72 ।
8. अष्टा. 5/2/86 ।
1. अष्टा. 4/1/105 ।
2. अष्टा. 4/1/99 ।
3. अष्टा. 6/3/46 ।
4. (क) व्या. म. भा. 1/1/9/71 वा.
(ख) 'समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः' का. 1/1/72 वा ।

## 'समः [1]सुटि'

सूत्रमिदं 'लक्ष्ये लक्षणं [2]सकृदेव प्रवर्तते'–इति परिभाषाया–[3]ज्ञापकम् । यतः [4]संस्कर्ते'त्यादि–त्रिसकारकस्यापि रूपस्य सिद्ध्यर्थमिदमारब्धम् । तच्चास्या अभावे व्यर्थम् । अस्या अभावे हि 'समो वा लोपमेके'इति[5] लोपेनैकसकारकं, द्वित्वेन[6] द्विसकारकं पुनर्द्वित्वेन[7] त्रिसकारकं रूपमेतत्सूत्रं विनापि सुलभम् । ज्ञापितायां चास्यामनया पुनर्द्वित्वाप्रवृत्त्यात्र[8] त्रिसकारकं रूपं न सिद्ध्यतीति त्रिसकारकरूपसिद्ध्यर्थं सूत्रमिदं सार्थकं भवति । ज्ञापिताया अस्याः फलन्तु 'ऊखतु[9]'रित्यादौ पुनर्ह्रस्वा-

---

1. अष्टा. 8/3/5 ।
2. (क) 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' नी. दी. प. वृ. प. 122. पृ. 313 ।
   (ख) 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' भ. ना. प. शे. प. 121. पृ. 355 ।
3. तथाहि–"न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम् । 'समो वा लोपमेक' इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ 'समः सुटि' इति सूत्रस्यैव मानत्वा"दित्याह भ. ना. प. शे. प. 121. पृ. 356 ।
4. सम्पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473. इति कृधातोः 'ण्वुल्तृचौ'–अष्टा. 3/1/133. इति तृचि 'संपरिभ्यां करोतौ भूषणे'–अष्टा. 6/1/137 इति 'समवाये च'–अष्टा. 6/1/138 इति वासुटि सम्+स्कर्ता इत्यवस्थायां समो मकारस्य 'अलोन्त्यस्य'–अष्टा. 1/1/52. इति वलेन 'समः सुटि' अष्टा. 8/3/5. इति रुत्वे 'सर्+स्कर्ता' इति स्थिते 'अत्रानुनासिकः पूर्वस्य तु वा'–अष्टा. 8/3/2 इति रोः पूर्वस्य सकाराकारस्य वैकल्पिकेऽनुनासिकत्वे 'सँर्+स्कर्ता इति स्थिते रेफस्य 'खरवसानयोर्विसर्जनीयः'–अष्टा. 8/3/15 इति विसर्गे कृते 'विसर्जनीयस्य सः'–अष्टा. 8/3/34 इति विसर्गापवादे 'वाशरि'अष्टा. 8/3/36. इति पाक्षिकविसर्गे प्राप्ते 'संपुंकानां सो वक्तव्यः' (वा. वै. सि. कौ. हल्सन्धिप्र. पृ. 71) इति विसर्गस्य सकारे कृते सँस्+स्कर्ता 'इत्यवस्थायाम्' अनुस्वारविसर्गजह्वामूलीमोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यानेन सकारस्य स्थानिवत्त्वाद्विसर्गत्वेनात्वात् 'अनचिच'–अष्टा. 8/4/47. इति द्वित्वे त्रिसकारकं रूपमिदं सिद्ध्यति ।
5. वा. व्या. म. भा. 8/3/5 ।
6. 'अनचि च'–अष्टा. 8/4/47 ।
7. 'अनचि च'–अष्टा. 8/4/47 ।
8. 'अनचि च'–अष्टा. 8/4/47 ।
9. 'उख् उखि ............ गत्यर्थाः धा. पा. भ्वा. 128. इति उख्धातोर्लिटि तसि तसोऽतुसादेशे अपित्त्वेन-कित्त्वाल्लधूपधगुणाभावे द्वित्वे हलादिशेषे पर्जन्यवल्लक्षणप्रवृत्त्याह्रस्वत्वविशिष्टसवर्णपरकत्वात् अभ्यासस्यासवर्णे'–अष्टा. 6/4/78 इति इयङोऽभावे सवर्णदीर्घैकाऽऽदेशो लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्तौ रूपमिदं सिद्ध्यति ।

भावः । अस्या असत्त्वे तु [1]उख्[2]धातोर्लिटि तस्य [3]अतुसि द्वित्वे[4] ह्रस्वत्वे[5] हलादिशेषे[6] सवर्णदीर्घत्वे[7] ऊख्+अतुस् इत्यवस्थायाम् ऊकारस्याऽभ्यास-[8]ग्रहणेन ग्रहणात् पुनर्ह्रस्वोदुर्वारः स्यात् । न च प्राग् ह्रस्वप्रवृत्तावपि पुनदीर्घे व्यक्तिभेदात् ह्रस्व-शास्त्रं कुतो न प्रवर्त्तेतेति शङ्क्यम् । यतो जातिपक्षे तदभ्या-साऽवयवत्वजात्यवच्छिन्ने साधुत्वाऽपरिच्छेदकतया शास्त्रस्य सकृत्प्रवृत्त्या चारितार्थ्येन पुनः प्रवृत्तौ बीजं नास्ति । प्रवृत्तस्य पुनर्लक्ष्यर्भेदात् प्रवृत्तिस्वीकारे च [9]'बभूवे'त्यत्र ह्रस्वशास्त्रस्याऽसकृत्प्रवृत्तिसंभवेन 'यथा तप्ते भाष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते एवमिमेवर्णा मुहुर्तमपि नावतिष्ठेरन्[10]' इति भाष्योक्तरीत्या अप्रवृत्त-नित्यविध्यविषयत्वलक्षण-साधुत्व-परिच्छेदो न सिद्ध्येत् । यदा तु व्यक्ति-पक्षः, तदा व्यक्तिभेदेन शास्त्रभेदात् पुनरपि तच्छास्त्रं प्रवर्तत एव । एतौ च जाति-व्यक्तिपक्षौ लक्ष्यवशाद् व्यवस्थिताविति न कापि क्षतिः ।

[11]शेषाद्रि सुधीस्तु भट्टनागेशेनोक्तं 'समः सुटी'ति–सूत्रस्य 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते'इति परिभाषाज्ञापकत्वं न मनुते । जातिव्यक्तीति पक्षौ लक्ष्यानुसारं स्वीकृत्यैव

---

1. उख् उखि ......... गत्यर्थाः' धा. पा. भ्वा. 128 ।
2. 'परोक्षे लिट्'–अष्टा. 3/2/125 ।
3. 'परस्मैपदानां णलतुसुस्थलथुसुणल्वमाः'–अष्टा. 3/4/82 ।
4. 'लिटि धातोरनभ्यासस्य'–अष्टा. 6/1/8 ।
5. 'ह्रस्वः'–7/4/59 ।
6. 'हलादिः शेषः'–अष्टा. 7/4/60 ।
7. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
8. 'पूर्वोऽभ्यासः'–अष्टा. 6/1/4 ।
9. भूसत्तायाम्' धा.पा. भ्वा. 1, इति भूधातोर्लिटि तिपि थलि मिपि च रूपमिदम् ।
10. व्या. म. भा. 1/1/7/49 ।
11. अनेन हि–"यत्तु"–लक्ष्ये लक्षणं सकृदेव प्रवर्तते'इत्यत्र 'समः सुटि' (8/3/5) इति सूत्रारम्भो मानम्, एतदभावेऽपि लक्षणस्य पुनः प्रवृत्तौ' 'समो वा लोपमेके' (1/1/27 वा । महाभाष्य) इति भाष्योक्तलोपेन एकस्य सकारस्य 'अनचि च' (8/4/47) इति द्वित्वेन द्विसकारस्य, पुनर्द्वित्वप्रवृत्त्या त्रिसकारस्य सिद्धौ तद्वैयर्थ्यात् 'सम्प्रसारणाच्च' (6/1/108) इति सूत्रे भाष्ये स्पष्टमुक्तत्वाच्च" (परि. शे. परि. 111) इति नव्योक्तं तन्न, भाष्यकृद्वचनेन सूत्रवैयर्थ्यं संपाद्य ज्ञापकत्ववर्णनस्यायुक्तत्वात् । स एवायं सकार इति प्रत्यभिज्ञानेन तत्र व्यक्तिभेदाभावेन पुनर्द्वित्वशास्त्रप्रवृत्त्ययोगेन त्रिसकाररूपसिद्धये तदावश्यकत्वाच्च । न चादेशः स्थानिसकारादन्य इति वाच्यम्, एवं सति द्वित्वशास्त्रप्रवृत्तेरविरामप्रसङ्गात् । वैरूप्यविशिष्टव्यक्तेरेव व्यक्तयन्तरपदार्थत्वौचित्यात् । 'संप्रसारणाच्च' (6/1/108) इति सूत्रे भाष्ये' सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति चोदयित्वा, 'शकहृर्थ'मित्यत्र सम्प्रसारणपूर्वरूपं न भवतीति तस्य प्रयोजनमप्युक्त्वा, 'कार्यकृतत्वाद्वा सिद्धम्'इति प्रतिज्ञाय, सकृत्शास्त्रं कृतमिति कृत्वा पुनर्नभविष्यतीत्युपपाद्य, 'विषम उपन्यासः' इत्यादिना 'तस्मादपरिहारः 'इत्यन्तेन सकृत् कार्यस्य कृतत्वादिति समाधानं दूषितम् । कैयटेनापि -

अचतुरित्यादौ पुनर्ह्रस्वाप्रवृत्तिः सुलभेति तदाशयः । तस्मात् 'लक्ष्ये लक्षण'मिति परिभाषा जातिपक्षाभ्युपगममूलेति शेषाद्रिसुधीमतमपि युक्तमिति मन्ये ।

नीलकण्ठदीक्षितेन तु ज्ञापकान्तरमस्या उक्तं तदपि समीचीनमिति 'ज्ञापका निर्देशाः[1]' इति प्रघट्टकेऽत्रैव प्रबन्धे निरूपितम् । यत उपायो नोपायान्तरस्य दूषको भवति ।

## 'सरूपाणामेकशेष[2]एकविभक्तौ'

:

सूत्रमिदं 'व्यक्तिः पदार्थः' इति वचनस्य [3]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । ज्ञापिते चास्मिन् वचने 'घटघटौ' 'घटघटघटाः 'इत्यांद्यनिष्ट-प्रयोगवारणाय सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [4]'द्रव्याणि'इत्यादिप्रयोगाणां साधुत्व-सिद्धः । अन्यथा 'जातिः पदार्थः' 'इति पक्षे नात्रैकशेषः सम्भवति एकेनैव द्रव्यशब्देन बहूनां बोधो हि सुलभः इत्यनेकद्रव्यशब्दः-प्रयोगः नैव प्राप्नोतीतिबहुवचनस्यात्र साधुत्वं न भवेत् ।

---

'शास्त्रस्यास्मिन् विषये प्रवृत्तत्वात् पुनः प्रवृत्त्यभावः' इति परिहाराभिप्रायमुक्त्वा, 'फलभेदे पुनः शास्त्रं प्रवर्तत एव'इति दूषणग्रन्थस्याभिप्राय उक्तः । 'सिचि वृद्धिः.' (7/2/1) इति सूत्रस्थं भाष्यं तु जातिपक्षाश्रयेण नेयम् । 'सहिवहोरोदवर्णस्य' (6/3/112) इति सूत्रे वर्णग्रहणसामर्थ्यादप्ययमर्थः साधयितुं शक्यते । तद्धि प्रागेव वृद्धिप्रवृत्त्यर्थम् । यदि आत्त्वे कृते 'सम्प्रसारणाच्च' (6/1/108) इति सूत्रभाष्योक्तरीत्या व्यक्तिभेदात् पुनर्वृद्धिः प्रवर्तेत, तर्हि प्राक् प्रवृत्तेः प्रयोजनाभावात् व्यर्थं तत् स्यात् । यदि व्यक्तिभेदेऽपि नियमेन सकृदेव शास्त्रप्रवृत्तिः स्यात्, तर्हि 'न संप्रसारणे संप्रसारणम्' (6/1/108) इति सूत्रम् 'ष्यङः संप्रसारणम्.' - (6/1/13) इति सूत्रस्थभाष्यम्, 'संप्रसारणाच्च' (6/1/108) इति सूत्रस्थभाष्यम्, चिणो लुक्' (6/4/104) इति सूत्रस्थभाष्यम्, 'शदेः शितः' (1/3/60) इति सूत्रे 'अस्तु शब्दान्तरस्याकृत आडिति कृत्वा पुनरा भविष्यति' इति भाष्यं च विरुद्ध्येत । तस्मादत्र नव्योक्तो लक्षणस्य सकृत्प्रवृत्तिनियमोऽयुक्त इती''त्युक्तम् - प. भास्क. प. 103, पृ. 458 ।

1. 'इरयोरे' (6/4/76) इति द्विवचनानिर्देशोऽस्या ज्ञापक इति स्पष्टम् 'एकः पूर्वपरयोः' (6/1/84) इति सूत्रे भाष्ये' प. वृ. प. 112, पृ. 313 ।
2. अष्टा. 1/2/64 ।
3. तथाहि - ''जातिपक्षाश्रयणे च' सरूपाणामेकशेष.' (1/2/64) इति'' इत्याह पु. दे. ल. प. वृ. प. 62, पृ. 139 ।
4. ''क्षित्यप्तेजो मरुद्व्योमकालदिग्देहिनो मनः । द्रव्याणि . . . . . . . . . ।।'' कारिकाव. कारि. 3 ।

## '[1]सहनञ्विद्यमानपूर्वाच्च'

सूत्रमिदम् "अन्तोदात्ता'दित्यस्य[2] 'स्वाङ्गाच्चे[3]'ति - वचनस्य [4]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि - 'सकेशा'[5] - [6]'अकेशा' '[7]विद्यमाननासिका' - इत्यत्र सहेत्यादित्रिकपूर्वात् स्वाङ्गात् [8]ङीषो निषेधार्थमिदमारब्धम् । तच्चास्य वचनस्याभावे व्यर्थम् । सहादिपूर्वस्य बहुव्रीहेः पूर्वपदप्रकृतिस्वरे[9] [10]शेषनिघातेनास्वाङ्गस्यनास्त्यन्तोदात्तत्वमिति '[11]स्वाङ्गाच्चोपसर्जनात्' इत्यनेन ङीषः प्राप्तिः सुलभेति तत्प्रतिषेधार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[12]स्वाङ्गाच्चोपसर्जनादसंयोगोपधा'दित्यत्र 'उपसर्जना'दित्यस्याकरणजन्यं लाघवम् । [13]बहुव्रीहेरित्येतन्मात्रानुवृत्त्यैव हि उपसर्जनादित्यस्यात्र लाभः सुलभः ।

## '[14]स्त्रियामवन्तिकुन्तिकुरुभ्यश्च'

सूत्रमिदम् "[15]अतश्चे"त्यत्र तदन्तविधिर्नास्ती'ति वचनस्य

---

1. अष्टा. 4/1/57 ।
2. 'वहुव्रीहेश्चान्तोदात्तात्' - अष्टा. 4/1/52 इत्यत इतिशेषः ।
3. 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' - अष्टा. 4/1/54 ।
4. तथाहि –
   (क) "यदयं 'सहनञ्विद्यमानपूर्वाच्चे'ति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽनन्तोदात्तादपि भवतीती"त्याह पत. व्या. म. भा. 4/1/2/54 ।
   (ख) "स्वाङ्गाच्चोपसर्जनात् (सू. 4/1/54) 'सहनञ्विद्यमानपूर्वाच्च' (सू. 4/1/57) इति प्रतिषेधाज्ज्ञापकात् अनन्तोदात्तादपि भवतीती" त्याह एन. एस. रामा. ज्ञा. सं. परि. 1, पृ. 164 ।
5. सह केशैर्वर्तत इत्यर्थे 'तेन सहेति तुल्ययोगे' - अष्टा. 2/2/27 इति समासे 'वोपसर्जनस्य' - अष्टा. 6/3/42 इति सहस्य सभावे रूपम् ।
6. अविद्यमानाः केशा अस्य इत्यर्थे 'नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदलोपश्चे'तिविद्यमानशब्दलोपे रूपम् ।
7. विद्यमाना नासिका यस्या इत्यर्थेऽत्र बहुव्रीहिः ।
8. 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' - अष्टा. 4/1/54, नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' - अष्टा. 4/1/55, इत्याभ्यां प्राप्तस्येत्यर्थः ।
9. 'वहुव्रीहौ प्रकृत्या पूर्वपदम्' - अष्टा. 6/2/1 ।
10. 'अनुदात्तं पदमेकवर्जम्' - अष्टा. 6/1/158 ।
11. अष्टा. 4/1/54 ।
12. अष्टा. 4/1/54 ।
13. 'वहुव्रीहेश्चान्तोदात्तात्' - अष्टा. 4/1/52, इत्यत इतिशेषः ।
14. अष्टा. 4/1/174 ।
15. अष्टा. 4/1/177 ।

[1]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । तथाहि – '[2]अवन्ती' '[3]कुन्ती' '[4]कुरूः' – इत्यादौ [5]तद्राजस्य लुगर्थमारब्धमिदमस्य वचनस्याभावे व्यर्थम् । यतोऽत्र [6]तदन्तविधौ '[7]आतश्चे'त्यनेनैव[8]तत्र तुल्लुक् सुलभः ।

---

1. तथाहि –
   (क) "यदयमवन्त्यादिभ्यो लुकं शास्ति तज् ज्ञापयत्याचार्यो 'नात्र तदन्तविधिर्भवतीती"त्याह पत. व्या. म. भा. 4/1/4/177 ।
   (ख) "अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति - आम्बंष्ठ्या । सौवीर्या ।" - इत्याह ज्या. का. 4/1/177 ।
   (ग) "यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात्, अनेनैव सिद्धत्वात् । तदन्तविधावसत्यकारग्रहणमात्रेण न सिद्ध्यतीत्यवन्त्यादिभ्यो लुग्-वचनमर्थवद्-भवतीती"त्याह जि. बु. न्या. 4/1/177 ।
   (घ) "यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्याद्, अनेनैव सिद्धत्वात् । तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणे न सिद्ध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थव-द्भवती"त्याह ह. मि. पदम. 4/1/177 ।
   (ङ) "तद्राजस्याकारस्य स्त्रियां लुक् स्या"दिति ग्रन्थेन ज्ञापकत्वमस्यास्मिन् वचने सूचयति भ. दी. वै. सि. कौ. अपत्याधिकार प्र. 609 ।
   (च) "अतश्च ।, इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्तदत्वादनेनैव लुकि सिद्धे अवन्ति-कुन्ति-कुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्तीति सूत्रस्य वैयर्थ्यापत्तेः । न चेष्टापत्तिः, कौसल्येति रूपासिद्धि-प्रसङ्गा"दित्याह ज्ञा. भि. त. बो. अपत्याधिकारप्र. पृ. 609 ।
2. अवन्त्रिशब्दो देशे राजनि च विद्यत इति तस्माद् 'अवन्तेरपत्यं स्त्री राज्ञी वे'ति विग्रहे 'वृद्धेत्कोसलाजादाञ् ञ्यङ्' -अष्टा. 4/1/171, इत्यनेन 'जनपदशब्दात् क्षत्रियादञ्' - अष्टा. 4/1/68, इति विहिमञमपवादत्वात् प्रबाध्य ञ्यङ्प्रत्यये तस्य 'स्त्रियामवन्ति.' - अष्टा. 4/1/176, इति लुकि 'इतो मनुष्य जातेः' - अष्टा. 4/1/35, इति ङीषि रूपमिदम् ।
3. कुन्तिशब्दो देशे राजनि च विद्यत इति तस्माद् 'कुन्तेरपत्यं स्त्री राज्ञी वे'ति विग्रहे 'वृद्धेत्.' अष्टा. 4/1/171, इत्यनेन 'जनपद.' - अष्टा. 4/1/68, इति विहितमञमपवादत्वात् प्रवाध्य ञ्यङ्प्रत्यये तस्य 'स्त्रियामवन्ति.' - अष्टा. 4/1/176, इति लुकि 'इतोमनुष्य. '-अष्टा. 4/1/35, इति ङीषि रूपंमिदम् ।
4. कुरुशब्दो देशे राजनि च विद्यत इति तस्मात् - 'कुरोरपत्यं स्त्री राज्ञी वे'ति विग्रहे 'कुरुनादिभ्यो ण्यः' - अष्टा. 4/1/172, इत्यनेन द्व्यञ्- मगधकलिङ्गसूरमसादण्' - अष्टा. 4/1/170, इति प्राप्तं द्व्यजूलक्षणमणं प्रावाध्य ण्यप्रत्यये तस्य 'स्त्रिया मवन्ति.' - अष्टा. 4/1/176, इतिलुकि 'ऊङुतः' - अष्टा. 4/1/66, इत्यूङि रूपमिदम् ।
5. 'ते तद्राजाः' - अष्टा. 4/1/174, इति तद्राजसंज्ञकस्येत्यर्थः ।
6. 'येन विधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
7. अष्टा. 4/1/177 ।
8. 'अवन्ती'इत्यादावित्यर्थः ।

[1]'शूरसेनी'त्यादावत्र इव ञ्यङ्[2] - [3]ण्योरपि तद्राराजप्रत्यययोर्हिअकारान्तत्वं सर्वथाक्षुण्णम् । ज्ञापिते चास्मिन्वचने 'अवन्ती' - इत्यादौ तद्राजप्रत्ययानामकारूपत्वाभावाद् -[4]'अतश्चे'ति लुकोऽप्राप्त्या तत्र तेषां लुगर्थमिदं सूत्रं स्वांशेचरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [5]'कौशल्ये'तिरूपस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि [6]ञ्यङोऽप्यत्राकारान्तत्वाद् '[7]अतश्चे'ति लुको दुर्वारतया नेदं रूपं सिद्ध्येत् ।

## [8]'स्वादिष्वसर्वनामस्थाने'

[9]राजतराऽऽदौ [10]नलोपार्थं पदसंज्ञाविधायकमिद सूत्रं 'समर्थाधिकारेऽपि न सुबन्तात्प्रत्ययः' - इति वचनस्या[11]ज्ञापकम् । यतोऽस्य वचनस्याभावे सूत्रमिदं व्यर्थम् । राजतराऽऽदौ सुबन्तात् प्रत्ययोत्पत्तौ हि [12]प्रत्ययलक्षणेन पदत्वादेव[13] नलोपः एतत्सूत्रं विनापि सुलभः । ज्ञापिते चास्मिन् वचने प्रातिपदिकादेव तरबादिर्भवतीति प्रत्ययलक्षणेन पदत्वं राजन्शब्दस्य न सिद्ध्यनीति तत्र नलोपार्थं' पदसंज्ञाविधानमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फल- मन्यत्र नोपलभ्यते, राजभ्यामित्यादौ नलोपार्थं पदसंज्ञाविधानं चेदं चरितार्थमिति नास्य ज्ञापकत्वं युक्तम् ।

---

1. शूरसेनशब्दो देशे राजनि च विद्यत इति तस्मात् 'शूरसेनस्यापत्यं स्त्री राज्ञी वे'ति विग्रहे 'जनपद.' - अष्टा. 4/1/168, इति ञ्यञ्-प्रत्यये तस्य 'अतश्च' 4/1/177. इति लुकि 'जातेरस्त्री.' - अष्टा. 4/1/163, इति ङीषि रूपम् ।
2. 'वृद्धेत्कोसलादाञ् ञ्यङ्' - अष्टा. 4/1/171 ।
3. 'कुरुनादिभ्यो ण्यः' - अष्टा. 4/1/172 ।
4. अष्टा. 4/1/177 ।
5. कोशलस्यापत्यं स्त्री'त्यर्थे' वृद्धेत्.' - अष्टा. 4/1/171, इतिञ्यङि प्रत्यये तदन्ताद्- 'अजाद्यतष्टाप्' - अष्टा. 4/1/4. इति टापि रूपमिदम् ।
6. 'वृद्धेत्कोशलाजांदाञ् ञ्यङ्' - अष्टा. 4/1/171 ।
7. अष्टा. 4/1/177 ।
8. अष्टा. 1/4/17 ।
9. राजन्शव्दात् 'द्विवचनविभज्योपपदे तरवीयसुनौ' - अष्टा. 5/3/57. इति तरप्-प्रत्यये रूपम् ।
10. 'नलोपः प्रातिपदिकान्तस्य' - अष्टा. 8/2/7 ।
11. तथाहि - "स्वादिष्वसर्वनामस्थाने इति (1/4/17) राजनर्रादिपु नलोपार्थं संज्ञाविधानं ज्ञापयति - 'समर्थाधिकारेऽपि न सुवन्तात्प्रत्यय' इतीत्याह पु. दे. चतुर्थे कारकपादे पृ. 64 ।
12. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
13. 'सुप्तिङन्तंपदम्' - अष्टा. 1/4/14 ।

## [1]'हलः'

सूत्रमिदं "[2]संप्रसारणाच्चे'ति भवत्पूर्वरूपं दीर्घाऽऽत्मकं ने"ति वचनस्य ज्ञापकम्[3] । यतोऽस्य वचनस्याभावे व्यर्थमिदम् । पूर्वरूपेणैव हि द्विमात्रं 'जीनः[4]' इत्यादौ सुलभम् । ज्ञापिते चास्मिन् वचने पूर्वरूपेण द्विमात्रस्याप्राप्त्या 'जीनः' - इत्यादौ दीघार्थं सूत्रमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[5]विद्ध'मित्रस्य पूर्वरूपेण[6]द्विमात्राऽऽदेशाभावः । अस्य वचनस्यासत्त्वे हि द्विमात्रं संप्रसारणाच्चे[7]ति पूर्वरूपमत्र दुर्वारं स्यात् ।

## 'ह-शश्वतोर्लङ् च'[8]

सूत्रमिदं 'लादेशेषु[9] वासरूपविधिर्नास्ती'ति परिभाषाया ज्ञापकम्[10] । यतोऽस्या अभावे व्यर्थमिदम् । 'इति हाकरोत्' 'इति ह चकार' 'शश्वदकरोत्' 'शश्वच्चकार'

---

1. अष्टा. 6/4/2 ।
2. अष्टा. 6/1/108 ।
3. तथाहि –
   (क) "अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति - 'नानेन संप्रसारणस्य दीर्घो भवती'ति, यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ती" त्याह पत. व्या. म. भा. 1/1/2 मा. सू. 3.4 ।
   (ख) "नानेन संप्रसारणस्य दीर्घो भवती'त्यत्र 'हलः' (सू. 6/4/2) इति सूत्रं ज्ञापक"मित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 133 ।
4. 'ज्या वयोहानौ' धा. पा. क्र्या. 1500, इति ज्याधातोः क्तप्रत्यये 'ज्यात' इति स्थिते 'संयोगादेरातोधातोर्यण्वतः' - अष्टा. 8/2/43, इति निष्ठानत्वस्यासिद्धत्वात्ततः प्रागेव 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' - अष्टा. 6/1/16, इति सम्प्रसारणे 'संप्रसारणाच्च' - अष्टा. 6/1/108, इति पूर्वरूपे 'हलः' - अष्टा. 6/4/2, इति दीर्घे च कृते आतः परत्वाभावात् 'संयोगादेरातो.' - अष्टा. 8/2/43 इति नत्वाप्राप्तौ 'ल्वादिभ्यः' - अष्टा. 8/2/44, इति निष्ठातस्य नत्वे कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषुकृतेषु रूपमिदम् ।
5. 'व्यध ताडने' धा. पा. दिवा. 1181, इति व्यध्धातोः क्तप्रत्यये 'ग्रहिज्यावयिव्यधि.' अष्टा. 6/1/16, इति सम्प्रसारणे 'सम्प्रसारणाच्च' - अष्टा. 6/1/108, इति पूर्वरूपे, 'तदन्ताङ्गस्ये'त्युक्तेः 'हलः' - अष्टा. 6/4/2, इति दीर्घाभावे धत्वे जश्त्वे कृदन्तत्वात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. 'संप्रसारणाच्च' - अष्टा. 6/1/108 ।
7. अष्टा. 6/1/108 ।
8. अष्टा. 3/2/116 ।
9. (क) ना. प. शे. प. 70, पृ. 286 ।
   (ख) शेपा. प. भास्क. प. 59, पृ. 431 ।
10. तथाहि –
   (क) "अत्र च 'हशश्वतोर्लङ् च' इति लङ्विधानं ज्ञापकम् । अन्यथा 'परोक्षे' इति लिटा लङः समावेशोऽसारूप्यात् सिद्ध इति किं लङ्विधानेने"त्याह भट्टनागेशः प. शे. प. 70, पृ. 286 ।

इत्यादौ [1]भूतानद्यतने[2] परोक्षेऽर्थे[3]नित्यं [4]लिटि प्राप्ते ह्यशश्वतोरुपपदयोर्लङ्लिटौ विधातुं हि सूत्रमिदमारब्धम् । तच्च व्यर्थम् । यतो '[5]वाऽसरूपोऽस्त्रिया'मित्यनेनैव तेषु प्रयोगेषु तौ सिद्धौ । लिट्प्रत्ययो हि लङोऽपवादः, आदेशकृतवैरूप्यवत्तया सरूपश्चेति उत्सर्गस्य लङो बाधको वा स्यादिति सुतरां लङ्प्रत्ययोऽपि सुलभः । ज्ञापितायां चास्यां तत्र वाऽसरूपविधेरभावेन लिटा लङो नित्यं बाधाल्लङोऽपि सिद्धये सूत्रमिदं स्वांशे चरितार्थं भवति । आदेशकृतवैरूप्यवत्सु लकारेषु 'वाऽसरूपोऽस्त्रिया'मिति[6] विधिर्नास्तीति परिभाषार्थः । अस्याः फलं तु 'ह्योऽपच'दिति [7]लङ्विषये लुङोऽभावः[8] । अस्या अभावे हि वासरूपविधिनात्र लुङ्ङपि दुर्वारः स्यात् ।

वस्तुतस्तु ज्ञापकमिदं न युक्तम् । यतः आदेशवैरूप्यस्य-स्थानिन्याश्रयणे किमपि मानं नास्ति । तत्र मानाभावे च लङ्विधानमर्थवदेव नानर्थकमिति कुतः स्यादिदं ज्ञापकम् । नह्यादेशवैरूप्यस्य स्थानिन्यारोपं विना लिड्लिङोर्वैरूप्यमुपपादयितुं शक्यते । न चानुबन्धकृतं वैरूप्यमिति वाच्यम्, यतो 'नानुबन्धकृतमसारूप्य'मित्यनया परिभाषया तत्प्रतिषिद्धम् । नापि ज्ञापिताया अस्याः किमपि फलम् । न च 'ह्योऽपच'दित्यत्र लङ्विषये लुङोऽभावोऽस्याः फलम् । नहि लुङ् लङ्विषये प्राप्नोति । भूतसामान्यं हि लुङ्विषयः, अनद्यतनाऽऽत्मको भूतविशेषश्च लङ्विषयः ।

---

(ख) 'अत्र च 'ह्यशश्वतोर्लङ् च' (3/2/116) इति लङ्विधानं ज्ञापकम् । अन्यथा परोक्षे लिटा लङः समावेशात् किं लङ्विधानेन । तेन ह्योऽपचदिति लङ्विषये लुङ् न भवतीत्याहुः 'इत्याह शेषाद्रिः प. भास्क. प. 59, पृ. 431 ।

(ग) "ह्यशश्वतोर्लङ् च' (सू. 3/2/116) इति ज्ञापकात् लादेशेषु वाऽसरूपविधिर्नास्ति "इतीत्याह श्रीना. ज्ञा. सं. 3/ । पृ. 65 ।

1. "भूतत्वं - वर्तमानध्वंसप्रतियोगिसमयवृत्तित्व'मित्याह भट्टनागेशः ल. श. शे. भ्वा. प्र. पृ. 12 ।
2. 'अतीतरात्रेरन्त्ययामेनाऽऽगामिन्याः पूर्वयामेन च सहितः कालः - अद्यतनः । तद्भिन्नः अनद्यतन" इत्याह भट्टनागेशः ल. श. शे. भ्वा. प्र. पृ. 12 ।
3. "परोक्षत्वं तु वर्षशतवृत्तत्वमित्येके । वर्षसहस्रवृत्तत्वमित्यपरे । द्व्यहवृत्तत्वं, त्र्यहवृत्तत्वं चेत्यन्ये । कुड्य-कटाद्यन्तरितत्वमितीतरे । एते पक्षा भाष्ये स्थिताः । तत्र प्रयोक्तुरिन्द्रियागोचरत्वमित्येव सर्वसम्मतमित्यलम्" इत्याह वासुदेवदीक्षितः बा. मनो. भ्वा. प्र. पृ. 12 ।
4. 'परोक्षे लिट्' - अष्टा. 3/2/155 ।
5. अष्टा. 3/1/94 ।
6. अष्टा. 3/1/94 ।
7. 'अनद्यतने लङ्' - अष्टा. 3/2/111 ।
8. 'लुङ्' - अष्टा. 3/2/110 ।

# षष्ठोऽध्यायः

## ज्ञापकाः सूत्रांशाः

भगवत्पाणिनिसूत्र-घटका ये शब्दाः किञ्चन परिभाषारूपं तद्व्यतिरिक्तं वा वचनं ज्ञापयन्त एवाऽऽत्मनः सार्थकतां लभन्ते, ते ज्ञापकाः सूत्रांशा इत्युच्यन्ते । तेषामेवात्र यथाक्रमं ज्ञापकत्वं निरूप्यते । तत्र–

### (क) [1]स्वरादि शब्दाः
### 'अके'तिशब्दः

'अकेनोर्भविष्यदाधमर्ण्ययो'रिति[2] सूत्रे 'अके'तिशब्दः [3]'क्वचिदपवाद-विषयेप्युत्सर्गोऽभिनिविशते' - इति परिभाषाया ज्ञापकः[4] । यतोऽस्या अभावे

---

1. अचः स्वराः ।
2. अष्टा. 2/3/70 ।
3. (क) पु. दे. ल. प. वृ. प. 115, पृ. 159 ।
   (ख) सी. दे. बृ. प. वृ. प. 33, पृ. 200 ।
   (ग) नी. दी. प. वृ. प. 44, पृ. 301 ।
   (घ) ह. भा. प. भास्क. प. 33, पृ. 337 ।
   (ङ) भ. ना. प. शे. प. 59, पृ. 273 ।
4. तथाहि–
   (क) "ज्ञापकं चात्र कटं कारको व्रजतीति द्वितीयार्थम् 'अकेनोर्भविष्यदाधमर्ण्ययोः' (2/3/70) इति षष्ठीनिषेधवचनम् । तद्धि भविष्यति 'अण् कर्मणि च' (3/3/12) इति अपवादविषये ण्वुलि सति उपपद्यते नान्यथा" इत्याह - पु. दे. ल. प. वृ. प. 115, पृ. 159 ।
   (ख) "ज्ञापकं चात्र कटं कारको व्रजतीत्यत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' (2/3/70) इति भविष्यदकप्रयोगे कर्मणि षष्ठी निषेधविधानम् । तद्धि यदि 'अण्कर्मणि' (3/3/12) इत्यपवादविषये 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3/3/10) इत्युत्सर्गः प्रवर्तते तदोपपद्यते । नान्यथा" इत्याह सी. दे. बृ. प. वृ. प. 33, पृ. 200 ।
   (ग) "ज्ञापकमत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' (2/3/70) इतिभविष्यदकप्रयोगे 'कटं कारको व्रजति' इत्यादौ षष्ठीनिषेधविधानम् । तच्च 'अण्कर्मणि च' (3/3/12) इत्यपवादविषये 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' (3/3/10) इत्युत्सर्गप्रवृत्तावेव सार्थकम् । अन्यथा वाऽसरूपविधेरभावाद् व्यर्थं'स्या"दित्याह ह. भा. प. भास्क. प. 33, पृ. 337- 338 ।

'कटं[1]कारको व्रजती'त्यादौ द्वितीयार्थं 'षष्ठीनिषेधवचनेऽस्मिन्नुपात्तः 'अके'ति शब्दो व्यर्थः । 'अण्[2] कर्मणि चे'त्यपवादविषये '[3]तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मित्युत्सर्गविधेरप्रवृत्तौ भविष्यत्यक एव हि दुलर्भः । न च [4]वाऽसरूपविधिना 'अण्कर्मणि चे' त्यपवादविषये ण्वुलः सुलभतया तत्राऽको योगे षष्ठीनिषेधायासौ चरितार्थ इति शङ्क्यम् । यतः क्रियार्थायां क्रियायामुपपदे वासरूपविधि' र्न भवति । न चात्र प्रमाणाभावः शङ्क्यः । यतो 'ण्वुल्[5]तृचौ 'इतिण्वुलि सिद्धे पुनः '[6]लृट्शेषे चे'ति विषये '[7]तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति ण्वुलो विधानमेवात्र प्रमाणम् । अन्यथा वाऽसरूपविधिनैव लृड्विषये ण्वुलः सिद्धत्वात् तन्न कुर्यात् । ज्ञापितायां चास्यां परिभाषायाम् 'अण्[8]कर्मणि चे'त्यपवादविषयेऽपि' तुमुन् ण्वुलौ [9]क्रियायां क्रियार्थाया'मित्युत्सर्गविधिः प्रवर्तत इति भविष्यत्यकः सुलभतया सूत्रेऽस्मिन्न शब्दः 'कटं कारको व्रजती'त्यादौ द्वितीयार्थं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु '[10]काञ्चनी वासयष्टिः' इत्यत्र 'नित्यं वृद्धशरादिभ्यः[11] 'इति मयटो विषये '[12]अनुदात्तादेश्च' इति अञ्, 'प्रदीयतां दाशरथाय मैथिली'इत्यत्र 'अत[13]इञ्'

---

1. 'डुकृञ् करणे' धा. पा. तना. 1472, इति कृधातोः 'अण्कर्मणि च' - अष्टा. 3/3/12 इत्यपवादविषये 'क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते'इतिपरिभाषाया 'तुमुन्ण्वुलौ क्रियायां **क्रियार्थायाम्**' - अष्टा. 3/3/10; इति - ण्वुलि'युवोरनाकौ' - अष्टा. 7/1/1 इति **वोरकाऽऽदेशे** विभक्तिकार्ये च कृते रूपमिदं सिद्ध्यति ।
2. **अष्टा. 3/3/12** ।
3. **अष्टा. 3/3/10** ।
4. 'वासरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 ।
5. अष्टा. 3/1/133 ।
6. अष्टा. 2/3/13 ।
7. अष्टा. 3/3/10 ।
8. अष्टा. 3/3/12 ।
9. अष्टा. 3/3/10 ।
10. काञ्चनस्य विकार इत्यर्थे 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' अष्टा. 1/1/73, इति वृद्धसंज्ञकात् काञ्चनशब्दात् 'नित्यं वृद्धशरादिभ्यः 'अष्टा. 4/3/144)- इति मयटो विषये 'क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते' इति परिभाषया अनुदात्तादेश्च' - अष्टा. 4/3/140 इत्यञ्प्रत्यये' अञन्तात् 'टिड्.'- अष्टा. 4/1/15, इति ङीपि 'यस्येति च' अष्टा. 6/4/148 इत्यकारलोपे रूपमिदम् ।
11. अष्टा. 4/3/144 ।
12. अष्टा. 4/3/140 ।
13. दशरथस्यापत्यमित्यर्थे दशरथशब्दात् 'अत इञ्' - अष्टा. 4/1/95 इति इञो विषये 'क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते' इतिपरिभाषया 'प्रागुदीव्यतोऽण्' - अष्टा. 4/1/83 इत्यणि 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117, इति आद्यचो वृद्धौ 'यस्येति च' - अष्टा. 6/4/148 इत्यकारलोपे दाशरथशब्दांच्चतुर्थ्येकवचने रूपमिदम् ।

इत्यञो विषये '[1]प्रागदीव्यतोऽण्'इत्यणश्च सिद्धिः । अस्या अभावेऽपवादविषयेऽप्युत्सर्गप्रवृत्तेरसंभवादत्रौत्सर्गौ मयडणौ न सिद्ध्येताम् । '[2]श्रीशः' इत्यादौ[3]यणापत्तिवारणाय[4]परिभाषायामस्यां 'क्वचि'दित्यस्य प्रवेशः[5] । तदप्रवेशे हि यणापत्तिरत्र दुर्वारा स्यात् ।

## 'अकित'इति शब्दः

'[6]दीर्घोऽकितः' इति सूत्रेऽकित इति शब्दः 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ती'ति[7] परिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽत्र –

---

1. अष्टा. 4/1/95 ।
2. अष्टा. 4/1/83 ।
3. श्री + ईशः इति स्थितौ 'अकः सवर्णे दीर्घः '-अष्टा. 6/1/101, इति सवर्णदीर्घैकादेशे रूपमिदम् ।
4. श्री + ईशः इति स्थितौ 'अकः सवर्णे दीर्घः '-अष्टा. 6/1/101, इति सवर्णदीर्घैकादेशे रूपमिदम् ।
5. 'इको यणचि' - अष्टा. 6/1/77 ।
6. अष्टा. 7/4/83 ।
7. (क) 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इति - सी. दे. बृ. प. वृ. प. 96, पृ. 253 ।
   (ख) नी. दी. प. वृ. प. 52, पृ. 302 ।
   (ग) भ. ना. प. शे. प. 67, पृ. 282 ।
   (घ) शेषा. प. भास्क. प. 56, पृ. 429 ।
8. तथाहि –
   (क) "एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा - 'अभ्यासविकारेषु बाधका न बाधन्त इती"त्याह पत. व्या. म. भा. 7/4/83 ।
   (ख) "एवं तर्हि 'अकितः' इत्यनेनैतज् ज्ञाप्यते 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इतीत्याह वाम. का. 7/4/8 ।
   (ग) " 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इत्येतां परिभाषां ज्ञापयितुम् 'अकितः' इत्येतदुच्यत इती"त्याह जि. बु. न्या. 7/4/83 ।
   (घ) ज्ञापकं चात्र 'दीर्घोऽकितः' (7/4/83) इत्यत्राकिद्ग्रहणम् । तद्धि जंजभ्यत इत्यादौ दीर्घो मा भूदित्येवमर्थं क्रियते । यदि चाभ्यासविकारेष्वपि बाध्यबाधकभावः स्यात्तदानुगागमे कृतेऽनजन्तत्वादेव दीर्घो न भविष्यति किमकिद्ग्रहणेन । तत्कृतमुक्तार्थस्य ज्ञापकमितीती'त्याह सी. दे. बृ. प. वृ. प. 96, पृ. 253 ।
   (ङ) "अत्र च ज्ञापकं "दीर्घोऽकितः' (7/4/83) इत्यकिद्ग्रहणम् । अन्यथा जञ्जभ्यते जञ्जभ्यते इत्यत्र 'जपजभ.' (7/4/86) इति नुकि कृतेऽनजन्तत्वाद् दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति भाष्ये (महाभाष्य 7/4/83) स्पष्टमित्याह नी. दी. प. वृ. प. 52, पृ. 302- 303 ।

'जञ्जभ्यते[1]' '[2]यंयमीती'त्यादावभ्यासस्य दीर्घनिवृत्त्यर्थमनुपात्तोऽकित इत्ययं शब्दो व्यर्थः । अत्र हि दीर्घं प्रबाध्य नाप्राप्ते दीर्घे आरभ्यमाणे[3]नुकि कृतेऽनजन्तत्वाद्दीर्घाभावोऽसत्यप्यस्मिञ्शब्दे सुलभः । ज्ञापितायां चास्यां नुकापवादत्वाद्दीर्घबाधेन संभवतीति नुकः प्रागजन्तादभ्यासस्य दीर्घो दुर्वार इति तन्निवृत्तयेऽयं शब्दः स्वांशे चरितार्थो भवति । न चात्र 'जंजभ्ये'त्याद्यवस्थायामभ्यासस्याकित एव सत्त्वेन समुपात्तेऽप्यकित इति शब्दे दीर्घो दुर्वार एवेति ज्ञापितायामप्यस्यां नास्य शब्दस्य स्वांशे चारितार्थ्यमिति शङ्क्यम् । यतो यद्यत्र दीर्घो न स्यात्तदा नुकि कृतेऽकित इति निषेधः स्यादिति संभावनायाः सत्त्वेन '[4]उपसञ्जनिष्यमाण' न्यायेन पूर्वं दीर्घस्य प्राप्तिरेव न भवति, अकृद्ग्रहणाभावे तु बाधकसंभावनापि नास्तीति दीर्घस्य दुर्वारतया तदभावाय 'अकित' इति शब्दस्य स्वांशे चरितार्थ्यमक्षुण्णम् । ज्ञापिताया अस्या 'अत्र[5]लोपोऽभ्यासस्ये'- त्यारभ्य विधीयमानकार्येषु बाध्यबाधकभावो नास्तीत्यर्थः । फलं तु '[6]अजीगण'- दित्यादिप्रयोगाणां साधुत्वसिद्धिः । अन्यथात्र हलादिशेषात् प्रागनवकाशत्वात् 'ई च[7]गणः' इति अकारस्येत्वे ह्रस्वे च कृतेऽ[8]गूलोपित्वाद्दीर्घाभावे[9] 'अजिगण'-

---

(च) "दीर्घोऽकितः' इत्यत्राकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा' जञ्जभ्यते'इत्यत्र नुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवे"त्याह भ. ना. प. शे. प. 67, पृ. 282-283 ।

(छ) " 'दीर्घोऽकितः' (7/4/83) इति सूत्रे अकिद्ग्रहणमस्याः परिभाषाया ज्ञापकम् । तद्धि जञ्जभ्यत इतिदीर्घनिवृत्तये क्रियते । नाप्राप्ते दीर्घे आरभ्यमाणेन नुका अपवादत्वाद्दीर्घे सिद्धे अनर्थकं सदस्याज्ञापक"मित्याह शेषा. प. भास्क. प. 56, पृ. 429 ।

(ज) "गुणो यङ् (सू. 7/4/82) 'दीर्घोऽकितः' (सू. 7/4/83) इत्यकिद्ग्रहणं ज्ञापयति 'अभ्यासविकारेषु बाधका न बाधन्त हती"त्याह श्रीना. ज्ञा. सं. 7, पृ. 128 ।

1. 'यम उपरमे' धा. पा. भ्वा. 984, इति यम्धातोर्यङि लटि प्रथमपुरुषैकवचने प्रथमपुरुषैकवचने रूपम् ।
2. 'यम उपरमे' धा. पा. भ्वा. 984, इति यम्धातोर्यङ्लुकि प्रथमपुरुषैकवचने रूपम् ।
3. 'नुगतोऽनुनासिकान्तस्य' - अष्टा. 7/4/85 ।
4. (क) 'उपजनिष्यमाणनिमित्तोप्यपवाद उपजातनिमित्तमप्युपसर्गं - बाधते' - नी. दी. प. वृ. प. 66, पृ. 306 ।
   (ख) 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति' भ. ना. प. शे. प. 65, पृ. 278 ।
5. अष्टा. 7/4/58 ।
6. 'गण संख्याने' धा. पा.चुरा. 1844, इति गणधातोश्चुरादिण्यन्ताल्लुङि प्रथमपुरुषैकवचने रूपम् ।
7. अष्टा. 7/4/97 ।
8. 'अतोलोपः' - अष्टा. 6/4/48 इत्यकारलोपे नागूलोपित्वात् 'सन्वल्लघुनि चङ्परेऽनगूलोपे' - अष्टा. 7/4/93, इति सनूवद्भावाभावादित्यर्थः ।
9. 'दीर्घो लघोः' - अष्टा. 7/4/94 ।

दित्यस्यैव साधुत्वमापद्येत, अजीगण'दित्यस्य साधुत्वमिष्टं न सिद्ध्येत् । अतएव '[1]अचीकर'दित्यत्र दीर्घेणः परत्वात्[2]सन्वद्भावस्य न बाधः, किन्तु प्रथमं सन्वद्भावे कृते [3]पश्चाद्दीर्घः सिद्ध्यति, तथा '[4]मीमांसत' इत्यत्र [5]इत्वस्य बहिरङ्गस्य अन्तरङ्गेणापि [6]दीर्घेण बाधो न भवति । अस्या असत्त्वे तु क्रमशोऽत्र दीर्घेण, परत्वात् [7]सन्वद्भावस्य अन्तरङ्गेण दीर्घेण[8] बहिरङ्गस्य [9]इत्वस्य च बाधो दुर्वारः स्यात् । [10]व्याडिस्तु '[11]दीर्घोऽकितः' इत्यत्र 'अकितः' इति प्रतिषेधवाचकः शब्दः 'असति संभवे [12]बाधनं भवती'ति परिषाया ज्ञापक इति मनुते ।

---

1. 'कॄञ्हिंसायाम्' धा. पा. क्र्या. 1485, इति कॄधातोर्ण्यन्ताल्लुङि प्रथमपुरुषैकवचने रूपम् ।
2. 'सन्वल्लघुनि चङ्परेऽनग्लोपे' - अष्टा. 7/4/93 ।
3. 'दीर्घोलघोः' - अष्टा. 7/4/94 ।
4. 'मान पूजायाम्' धा. पा. भ्वा. 972, इति मानेर्जिज्ञायाम् 'मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' - अष्टा. 3/1/6, इति सनन्ताल्लृटि प्रथमपुरुषैकवचने रूपम् ।
5. 'सन्यतः' - अष्टा. 7/4/79, इति विहितस्येत्यर्थः ।
6. 'मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' - अष्टा. 3/1/6, इति विहितेनेप्यर्थः ।
7. 'सन्वल्लघुनि.' - अष्टा. 7/4/93 ।
8. 'मान्वध.' - अष्टा. 3/1/6, ।
9. 'सन्यतः' - अष्टा. 7/4/79
10. अनेन हि - 'यत्र नास्ति संभवस्तत्र बाधनं भवति । वृक्षेभ्यः प्लक्षेभ्यः इत्यत्र यञि दीर्घत्वं (7/3/101) प्राप्नोति, झलि एत्वं (7/4/103), तत्र नास्त्युभयोरेकस्मिन्संभवोदीर्घत्वमेत्वेन बाध्यते । कथं पुन र्ज्ञायते संभवेऽसति बाधनं भवति । यदयं 'दीर्घोऽकितः' (7/4/83) इति अकित इति प्रत्तषेधं शास्ति । कंथं कृत्वा ज्ञापकम् । इह जङ्गम्यते इत्यत्रास्ति संभवो यदुभयं स्यात् । नुक् च दीर्घत्वं च । अभ्यासस्य नुगागमः अचो दीर्घत्वं चेति पश्यत्याचार्यः संभवे सति बाधनं नास्ति । तस्मादकित इति प्रतिषेधादर्थादापन्नं संभवे सति बाधनं न भवति असंभवे बाधनं भवतीति । किमेतस्या ज्ञापने प्रयोजनम् । कार्यमित्यत्र अचो यदिति यन्न भवति । न ह्यस्ति संभवो यदुक्तं ण्यद्यतौ स्यातामिती"त्युक्तम् प. सू. प. 21, पृ. 11-12 ।
11. अष्टा. 7/4/83 ।
12. (क) 'असति संभवे बाधनं भवति' - व्याडिः प. सू. प. 21 पृ. 11 ।
    (ख) 'असति संभवे बाधनं भवति । अस्ति च संभवो यदुभयं स्यात् ।' पु. दे. ल. प. वृ. प. 21, 22, पृ. 121 ।
    (ग) 'असति संभवे बाधनं भवति । अस्ति च संभंवो यदुभयं स्यात् ।' सी. दे. बृ. प. वृ. प. 35, पृ. 204 ।
    (घ) 'असति संभवे बाधनं भवति' - नी. दी. प. वृ. प. 45, पृ. 301 ।
    (ङ) 'असति संभवे बाधनं भवति' - ह. भा. प. भास्क. प. 36, पृ. 339 ।

## 'अको'रिति शब्दः

'[1]नेदमदसोरको'रिति सूत्रे 'अको'रितिशब्दः '[2]तदेकदेशभूतस्तद्ग्रहणेन - गृह्यते' इति परिभाषायां [3]ज्ञापकः । यतोऽस्या अभावेऽत्रासौ व्यर्थः तथाहि - '[4]एभिः' '[5]अमीभि'रित्यत्र भिस ऐस्[6]निषेधायाऽऽरब्धेऽस्मिन् सूत्रेऽकोरिति शब्दः '[7]इमकैः' '[8]अमुकै'रित्यत्र भिस [9]ऐसादेशप्रतिषेधो माभूदित्येतदर्थमुपात्तो व्यर्थोऽ-स्याअभावे । नहि 'इमकै'रित्यादौ '[10]नेदमदसो'रितिप्रतिषेधः प्राप्नोति रूपभेदात्। ज्ञापितायां चास्यामिमकामुकयोरपि इदमदसोर्ग्रहणेन ग्रहणात् तत्र भिस ऐसादेशप्रति-षेधाभावार्थमयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु

---

1. अष्टा. 7/1/11 ।
2. व्याडिः प. सू. प. 62, पृ. 28 ।
3. तथाहि–
   (क) "इह यद्यस्यैकदेशभूतं तत्तस्य ग्रहणेन गृह्यते । तद्यथा देवदत्ता गङ्गा यमुनेति, देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते तथा अनेका नद्योगङ्गां यमुनां चानुप्रविष्टा गङ्गायमुनाग्रहणेन गृह्यन्ते एवं तावल्लोके शास्त्रेऽपि ज्ञापकम् । यदयं 'नेदमदसोरकोः' (7/1/11) इति प्रतिषेधं शास्ति । इदमदसोः कार्यमुच्यमानं कः प्रसङ्गः यत् सककारयोः स्यात् । नार्थः प्रतिषेधेन । पश्यत्याचार्यः, तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति ततः प्रतिषेधं शास्ति । किमेतस्या ज्ञापने. प्रयोजनम् । उच्चकैः, 'नीचकैरिति सककारयोरव्ययसंज्ञा सिद्धा भवती"त्याह व्याडिः प. सू. प. 62, पृ. 28 ।
   (ख) एवं तर्ह्याचार्यप्रवृत्ति र्ज्ञापयति- 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति । यदयं 'नदेमदसोरको'रिति सककारयोरिदमदसोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इदमदसोः कार्यनुच्यमानं कः प्रसङ्गो यत् सककारयोः स्यात् । पश्यत्याचार्यः - 'तदेकदेशस्तदग्रहणेन गृह्यते'इति । ततः सककारयोः प्रतिपेधं - शास्ती"त्याह पत. व्या. म. भा. 1/1/9 ।
4. इदम्शब्दस्य तृतीयावहुवचने रूपम् ।
5. अदस्शब्दस्य तृतीयाबहुवचने रूपम् ।
6. 'अतो भिस ऐस्' - अष्टा. 7/1/13 ।
7. इदम्शब्दात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' - अष्टा. 5/3/71 । इत्यकचि तृतीयाबहुवचनें रूपम् ।
8. अदस्शब्दात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' - अष्टा. 5/3/71 इत्यकचि तृतीया- वहुवचने रूपम् ।
9. 'अतो भिस ऐस्' - अष्टा. 7/1/13 ।
10. अष्टा. 7/1/11 ।

'[1]उच्चकैः' '[2]नीचकै'रिति - सककारयोरव्ययसंज्ञायाः[3] सिद्धिः । अस्या असत्त्वे हि सककारयोरनयोः [4]स्वरादिगणे पाठाभावेन '[5]स्वरादिनिपातमव्यय'मित्यव्ययसंज्ञा न सिद्ध्येत् ।

## 'अकोरिति शब्दः

'[6]नेदमदसोरको'रिति सूत्रे 'अको'रिति शब्दः '[7]तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषाया ज्ञापक[8]ः । यतोऽस्या अभावेऽत्रासौ व्यर्थः । तथाहि – '[9]इमकैः'

---

1. 'उच्चैस्' इत्यव्ययात्' 'अव्ययसर्वनाम्नामकच् प्राक् टेः' - अष्टा. 5/3/7 । इत्यकचि रूपम् ।
2. 'नीचैस्' इत्यव्ययात् 'अव्यय.' - अष्टा. 5/3/71, इत्यकचि रूपम् ।
3. 'स्वरादिनिपातमव्ययम्' - अष्टा. 1/2/37 ।
4. स्वरादिगणोऽत्रैव प्रबन्धे ज्ञापका गणेषु शब्दपाठाः' इत्यत्र द्रष्टव्यः ।
5. अष्टा. 1/2/37 ।
6. अष्टा. 7/1/11 ।
7. (क) व्याडिः प.सू. प. 118, पृ. 11 ।
   (ख) पु. दे. ल. प. वृ. प. 19, पृ. 120 ।
   (ग) सी.दे. बृ. प. वृ. प. 75, पृ. 239 ।
   (घ) नी. दी. प. बृ. प. 81, पृ. 309 ।
   (ङ) ह. भा. प. भास्क. प. 77, पृ. 355 ।
   (च) भ. ना. प. शे. प. 90, पृ. 324 ।
   (छ) शेषा. प. भास्क. प. 77, पृ. 444 ।
8. तथाहि –
   (क) "यस्य मध्ये पतितस्तस्य ग्रहणेन गृह्यते । कथं ज्ञायते । यदयं 'नेदमदसोरकोः' (7/1/11) इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । क इदमदसो र्ग्रहणेन गृह्यते । तस्मात् प्रतिषेधो वक्तव्यः । किमेतस्या ज्ञापने प्रयोजनम् । भिनत्ति छिनत्ति । श्नम् धातुमध्यपतितो धातुग्रहणेन गृह्यते । 'धातोः' (6/1/162) अन्त उदात्तो भवतीति सिद्धं, भिनत्ति छिनत्ति मध्योदात्तं भवती"त्याह व्याडिः प.सू. प. 18, पृ. 11 ।
   (ख) "अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकम् - 'तन्मध्यपतितस्तद् ग्रहणेन गृह्यते' इती"त्याह वाम. का. 7/1/11 ।
   (ग) "तन्मध्यपतितस्य तद्व्यपदेशोऽयं छत्रिणो यान्तीतिलौकिकव्यवहारसिद्ध एव । ज्ञापकमप्यत्र 'नेदमदसोरकोः' (7/1/11) इत्यकोरिति पदम् । येन विधिः (1/1/72) इति सूत्रे भाष्य उक्तम् । इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यच्छब्दान्तरयोरिमकामुकयोः स्यादिति किमकोरितिप्रतिषेधेन । तज्ज्ञापयति अस्तीयं परिभाषेति । ननु यद्यकोरित्यस्य ज्ञापका उक्ता भाष्यकारेण, तत्कथं 'नेदमदसोरको': (7/1/11) इत्यत्रेदमदसोः कादेवेति नियमेन सिद्धिं व्याख्याय निषेधद्वयं प्रत्याख्यातवान् । सत्यम् । एवं तु मन्यते स भवान् माभूदिदमकोरिति ज्ञापकम् । एतत्तदोरित्यत्र (6/1/162) त्वकोरिति पदं ज्ञापकं भवती"त्याह पु. दे. ल. प. वृ. प. 19, पृ. 120-121 ।
   (घ) "ज्ञापकं चात्र 'नेदमदसोरकोः' (7/1/11) इत्यत्राकोरितिपदम् । 'यद्येषा न स्यात्तदेदमदसोः प्रतिषेध उच्यमानोऽकचि कृते इमकैरित्यत्र शब्दान्तरत्वादेव न स्यात् किमकोरितिप्रतिषेधेन' इति 'येन विधि.' (1/1/72) सूत्रे भाष्यकृतोक्तम् । यद्येवं कथं

'[1]अमुकै'रित्यत्र '[2]नेदमदसो'रिति भिस[3]ऐसादेशाप्रतिषेधवारणायोपात्तोऽयं शब्दोऽस्या अभावे साकचूकंस्य शब्दान्तरत्वेन स्वतः प्रतिषेधाप्राप्त्या व्यर्थः । ज्ञापितायां चास्यामनया साकचूकस्यापि 'इमकैः' 'अमुकै'रित्यत्र प्रतिषेधः प्राप्नोतीति तत्प्रतिषेधाभावायात्र सूत्रेऽकोरितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु '[4]सर्वकैः, [5]उच्चकैः [6]भिनत्तीत्यादौ क्रमशः [7]सर्वनामाव्यय[8]धातु[9]-ग्रहणैर्ग्रहणात्शीभाव[10] - [11]सुब्लुगन्तोदात्त[12]-त्वानां सिद्धिः । अस्या असत्त्वे हि साकचूकस्य सश्नमूकस्य सर्वनामाव्ययधातुग्रहणैर्ग्रहणं न स्यादिति नैतानि सिद्ध्येयुः ।

---

तर्हि स एव भगवान् 'नदेमदसोरकोः' (7/1/11) इत्यत्रेदमदसोः कादिति नियमं कृत्वा निषेधं प्रत्याख्यातवान् । उच्यते । अस्यायमभिप्रायः । माभूदिदमकोरिति ज्ञापकम् । 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' (6/1/132) इत्यत्र यदकोरिति पदं यद्भविष्यती"त्याह. सी. दे. बृ. प. वृ. प. 75, पृ. 239 ।

(ङ) "ज्ञापकमत्र 'नेदमदसोरकोः' (7/1/11) इत्यत्र अकोरिति पदम् । यद्वा एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' (6/1/132) इत्यत्र अकोरिति" - इत्याह. ह. भा. प. भास्क. प. 77, पृ.355 ।

(च) " 'नेदमदसोरको'रिति सूत्रेऽकोरिति निषेधोऽस्या ज्ञापकः" -इत्याह भ. ना. प. शे. प. 90, पृ. 325 ।

(छ) "ज्ञापकम् - 'नेदमदसोरकोः' (7/1/11) इत्यत्र 'अकोः' इति प्रतिषेधः । स हि इमकैः अमुकैरित्यत्र 'नेदमदसोः' इति प्रतिषेधवारणाय । साकचूकस्य शब्दान्तरत्वे तद्वैयर्थ्यं स्पष्टमेवे"त्याह शेषा. प. भास्क. प. 77, पृ. 444 ।

9. इदमूशब्दात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः ' अष्टा. 5/3/71, इत्यकचि रूपम् ।
1. असद्शब्दात्'अव्यय.' -अष्टा. 5/3/71, इत्यकचि रूपम् ।
2. अष्टा. 7/1/11 ।
3. 'अतो भिस ऐस्' - अष्टा. 7/1/13 ।
4. सर्वशब्दात् 'अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71, इत्यकचि जसि 'जसः शी'- अष्टा. 7/1/17 इति श्यादेशे 'आद्गुणः' - अष्टा. 6/1/87 इतिगुणैकाऽऽदेशे रूपम् ।
5. उच्चैः शब्दात् 'अव्यय.' - अष्टा. 5/3/71 इत्यकचि रूपम् ।
6. 'भिदिर् विदारणे' धा. पा. रुधा. 1532 इति भिद्दातोर्लटि तिपि 'रुधादिभ्यःश्नम्' - अष्टा. 3/1/78 इति श्नमि रूपम् ।
7. 'सर्वादीनि सर्वनामानि' - अष्टा. 1/1/27 ।
8. 'स्वरादिनिपातमव्ययम्' - अष्टा. 1/2/37 ।
9. 'भूवादयो धातवः' - अष्टा. 1/3/1 ।
10. 'जसः शी' - अष्टा. 7/1/17 ।
11. 'अव्ययादापूसुपः' - अष्टा. 2/2/82 ।
12. 'धातोः' - अष्टा. 6/1/162 ।

अयं च ज्ञापकोऽस्यां सूत्रकारसम्मतः न तु भाष्यसम्मतः । यतो भाष्यकृता 'इदमदसोः[1] का'दितिन्यासं कृत्वा 'अतोर्भिसऐस्'[2] इत्यनेनैव सिद्धे इदमदसोर्भिसऐस् स्याच्चेत् कादेवेति नियममाश्रित्याकोरिति प्रत्याख्यातम्[3] । अतः 'एषकोरुद्रः 'इत्यत्र' सुलोपाभावायोपात्तः 'एतत्तदोः [4]सुलोपोऽकोरनञ्समासे हली'ति सूत्रस्थोऽको'रितिशब्द'स्तनूमध्यपतितः - इति परिभाषाया ज्ञापकः । यतः साकच्कस्य शब्दान्तरत्वेनास्या अभावे स्वतः सुलोपो न प्राप्नोतीति साकच्के सुलोपवाराणायोपात्तोऽत्रायं शब्दो व्यर्थः । ज्ञापितायां चास्यां साकच्कात् हलि एषको'रुद्रः' इत्यादौ सुलोपाभावाय शब्दोऽयमत्र स्वांशे चरितार्थो भवतीति निश्चीयते ।

## 'अ'गिति शब्दः

'[5]नाग्लोपिशास्वृदिता'मित्यत्र 'अ'गितिशब्दः 'वृद्धेर्लोपोबलीया'नितिवचनस्य [6]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रासौ व्यर्थः । तथाहि –'मालामाख्यत् [7]अममाल'दित्यादौ 'अग्लोपिनामङ्गानां शासे ॠदितां च णौ चङ्युपधाया ह्रस्वो न भवती'त्यर्थकेऽस्मिन् सूत्रे 'अ'गिति प्रत्याहारशब्दः, अको लोपोऽग्लोपः, स

---

1. अष्टा. 7/1/11 ।
2. अष्टा. 7/1/13 ।
3. 'एषक सु रुद्र' इत्यवस्थायामितिशेषः ।
4. अष्टा. 6/1/132 ।
5. अष्टा. 7/4/2 ।
6. तथाहि–
   (क) "एवं तर्ह्याचार्यप्रवृत्ति र्ज्ञापयति - 'वृद्धेर्लोपो बलीया'निति, - यदयमग्लोपिनां नेति निषेधं शास्ति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? यत्र वृद्धावपि कृतायामगेव लुप्यते - अत्यराजत् । यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा ह्यलोपिनां नेति ब्रूया"दित्याह पत. व्या. म. भा. 7/4/1/2 ।
   (ख) "नाग्लोपि (सू. 7/4/2) इति सूत्रे अगितिप्रत्याहारग्रहणात् ज्ञापकात् वृद्धेर्लोपो बलीयान् । तस्माण्णेर्णिच्युपसंख्यानं कार्य"मित्याह श्रीना. ज्ञा. सं. 7, पृ. 124 ।
7. 'तत्करोति तदाचष्टे' - ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 239, इति णिचि 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' - ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 238, इतीष्ठवद्भावात् 'तुरिष्ठेमेयः सु' - अष्टा. 6/4/154, 'टेः' - अष्टा. 6/4/155, इति टिलोपे 'मालि' - इत्यस्य 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32, इति धातुत्वे ततो लुङि अडागमे तिपि च्लौ च्लेश्चङि द्वित्वेऽभ्यासकार्ये 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4/1, इति प्राप्तस्योपधाह्रस्वस्याऽग्लोपित्वात् 'नाग्लोपि.' - अष्टा. 7/4/2, इत्यनेन निषेधे 'णेरनिटि' - अष्टा. 6/4/51; इति णिलोपे 'इतश्च' - अष्टा. 3/4/100, इति तेरिकारलोपे रूपमिदम् ।

एषामस्तीति तान्यग्लोपीन्यङ्गानि तेषां '[1]णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वप्रतिषेधार्थमुपात्तः । स चास्य वचनस्याभावे व्यर्थः । 'नालोपिना'मित्युक्तावपि 'अममाल'दित्यादौ [2]आकाररूपटे[3]र्लोपादलोपित्वमस्तीति [4]ह्रस्वस्य [5]प्रतिषेधो हि सुलभः । न च 'चाटुमाख्यत् - [6]अचचाटत्'- इत्यादौ उकारलोपयुक्ताङ्गस्यापि[7] उपधाह्रस्व[8]- प्रतिषेधार्थ'म'गिति प्रत्याहारशब्दश्चरितार्थ-इति शङ्क्यम् । यतोऽत्र [9]णिचं निमित्तीकृत्य उकारस्य [10]वृद्धौ कृतायाम् अनन्तरं [11]टिलोपे औकारलोपित्वमेवास्तिं, नाग्लोपित्वमस्तीति सूत्रेऽस्मिन् 'अ'गिति प्रत्याहारशब्दोपादानेऽपीष्टासिद्ध्या वैयर्थ्यमस्य शब्दस्य तदवस्थमेवास्ति । ज्ञापिते चास्मिन् वचने 'चाटुमाख्यत् अचचाट'दित्यादौ [12]वृद्धेः प्रागेव [13]टिलोपे प्राप्तस्योपधाह्रस्वस्य[14]प्रतिषेधार्थमत्र सूत्रे शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं न केवलम् 'अचचाट'-दित्यादिप्रयोगाणां सिद्धिः, किन्तु 'उपधाह्रस्वे णेर्णिच्युपसंख्यानम्[15]' इति वार्तिकस्य सङ्गतिरपि । तथाहि - 'णिजन्ताण्णिचि ततो लुङि चङि च उपधाह्रस्वत्वं भवती'त्यर्थकं वार्तिकमिदं 'वादितवन्तं प्रयोजितवानवीवदद्[16]वीणां देवदत्तेने'- त्यत्रोपधाह्रस्वार्थं[17] भगवता [18]स्वीकृतम् । यतोऽत्र वदेर्णिजन्ताद् 'वादि' इंत्यस्मात् णिचि लुङि चङि अडागमे

1. अष्टा. 7/4/1 ।
2. अचोऽन्यादि टि' - अष्टा. 1/1/64 ।
3. 'तुरिष्ठेमेयः सु' - अष्टा. 6/4/154, 'टेः' - अष्टा. 6/4/155 ।
4. 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4/1 ।
5. 'नाग्लोपि.' - अष्टा. 7/4/2 - इतिस्थाने 'नालोपि.' - इत्युक्तन्यासादितिशेषः ।
6. चाटुशब्दात् 'तत्करोति तदाचष्टे' - ग.सू. वै. सि.कौ. चुरा. प्र. पृ. 239, इति णिचि इष्ठवद्भावाट्टिलोपे ण्यन्ताल्लुङि तिपि अडागमे च्लौ च्लेश्चङि द्वित्वेऽभ्यासकार्ये उपधाह्रस्वप्रतिषेधे णेर्लोपे तेरिकारलोपे 'अममाल'दितिवद्रूपम् ।
7. 'तुरिष्ठेमेयः सु' - अष्टा. 6/4/154 - 'टेः'- अष्टा. 6/4/155 ।
8. 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4 ।
9. 'तत्करोति तदाचष्टे' - ग.सू. वै. सि.कौ. चुरा. प्र. पृ. 239, इति विहितमित्यर्थः ।
10. 'अचोऽञ्णिति' - अष्टा. 7/2/115 ।
11. 'टेः' - अष्टा. 6/4/155 ।
12. 'अचोऽञ्णिति' - अष्टा. 7/2/115 ।
13. 'टेः' - अष्टा. 6/4/155 ।
14. 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4/1 ।
15. व्या.म. भा. 7/4/1/1 ।
16. 'वद व्यक्तायां वाचि' धा. पा. भ्वा. 1009 इति वद्धातोर्ण्यन्ताण्णिचि तदन्ताल्- लुङि तिपि रूपम् ।
17. 'णौ चङ्युपधाया ह्रस्वः - अष्टा. 7/4/1 इत्येनाऽप्राप्तमितिशेषः ।
18. व्या. म. भा. 7/4/1/1 ।

'अवाद् इ इ अत्' इत्यवस्थायां प्रथमस्य णिचो द्वितीयेन णिचा व्यवधानाच्चङ्परकत्वं नास्तीति सूत्रेण[1] ह्रस्वत्वं न प्राप्नोति । अथात्र द्वितीयस्य णिचः '[2]णेरनिटी'ति लोपे कृते व्यधानाभावात् [3]सूत्रेणैव तत् सुलम्, नापि णिलोपस्य स्थानिवद्भावाद्[4] व्यवधानं शङ्क्यम्, चङ्परनिर्ह्रासे क्विलुगुपधा त्वचङ्परनिर्ह्रास[5]कुत्वेषूपसंख्यानम्' - इत्यनेन स्थानिवत्त्वप्रतिषेधादिति चेत्सत्यम्; यतोऽस्य वचनस्याभावेऽत्र [6]लोपापेक्षया परत्वात् णिचो [7]वृद्धौ ऐकारे कृते तस्य[8]लोपेऽपि नैकारोऽगिति तल्लोपवदङ्गं नागूलोपि भवतीति '[9]नागूलोपी'ति निषेधाप्रवृत्त्या 'णौ[10]चङि'तिसूत्रेणैव ह्रस्वत्वं सुलभमिति वार्तिकस्यासङ्गतिर्दुवारा । ज्ञापिते चास्मिन् वचने [11]वृद्धेः प्रागेव 'अवीवद'दित्यादौ [12]णिलोपे - अगूलोपि त्वान्निषेधे प्राप्ते तद्बाधनाय वार्तिकमिदं सङ्गतं भवतीति तत्सङ्गतिरस्य वचनस्य फलमिति निश्चीयते ।

पुरुषोत्तमदेवस्तु "[13]सन्वल्लघुनि चंङ्परेऽनग्लोपे' - इत्यत्र 'अनगूलोप' - इति निषेधे'गि'तिप्रत्याहारशब्दोऽस्य वचनस्य ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र 'अल्लोपे'इत्येवं ब्रूयात् । ज्ञापकोऽयं भाष्यकारसम्मतः । ज्ञापकसिद्धस्यास्य वचनस्य फलं 'पटुमाख्यत् [14]अपपटत्' 'हरिमाख्यत् [15]अजहर'दित्यत्र अकृतायामेव[16]वृद्धौ

---

1. 'णौ चङ्युपधा.' - अष्टा. 7/4/1 ।
2. अष्टा. 6/4/51 ।
3. 'णौ चङ्युपधा.' - अष्टा. 7/4/1 ।
4. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
5. वा. व्या. म. भा. 1/1/8/57 ।
6. 'णेरनिटि' - अष्टा. 6/4/51 ।
7. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
8. 'अचः परस्मिन्नपरविधा'विति न्यासेन वृद्धेः स्थानिवद्भावात् 'णेरनिटि' - अष्टा. 6/4/51 ।
9. 'नागलोपि शास्वृदिताम्' - अष्टा. 7/4/2 ।
10. 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4/1 ।
11. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
12. 'णेरनिटि' - अष्टा. 6/4/51 ।
13. अष्टा. 7/3/93 ।
14. 'तत्करोति तदचष्टे' ग. सू. वै. सि. कौ. चुरा. प्र.पृ. 239, इति ण्यन्तात् पटुशव्दाल्लुङितिपिरूपम् ।
15. 'तत्करोतितदाचष्टे' ग. सू. वै.सि. कौ. चुरा. प्र. पृ. 239, इतिण्यन्तात् हरिशब्दात् लुङि तिपि रूपम् ।
16. 'अचोञ्णिति' - अष्टा. 7/2/115 ।

[1]टिलोपेऽग्लोप इति सन्वद्भावोऽभ्यासस्य न प्राप्नोतीति 'सन्यतः' - इतीत्वस्याभावसिद्धिः । ज्ञापकमिदं न वार्तिककार-सम्मतम्। वार्तिककारमते 'पटुमाख्यत् अपीपटत्' 'हरिमाख्यत् अजहर'दित्येवेष्ट''मिति [2]मनुते । अत्र भाष्योक्तं काशिकाकार-समर्थितं च 'नाग्लोपी'ति सूत्रस्थस्य 'अ'गितिशब्दस्य, भाष्यसूचितं पुरुषोत्तमदेवोक्तं च 'सन्व'दितिसूत्रस्य 'अनग्लोपे' - इत्येतद्घटकस्य 'अ'गितिशब्दस्य ज्ञापकत्वं युक्तमिति मन्ये । वार्तिककारमतं त्वत्र न युक्तम् । 'यथोत्तरं मुनीनां प्रामाण्य'मित्युक्तेः[3] ।

## 'अघे'ति शब्दः

'[4]अश्वाघस्या'दित्यत्र 'अघे'तिशब्दः' अघशब्दाच्छन्दसि परेच्छायां क्य'जिति-वचनस्य [5]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि –

---

1. 'टेः' - अष्टा. 6/4/155 ।
2. तथाहि – "सन्वल्लघुनीत्यत्र (7/3/93) अनग्लोप इतिनिषेधेऽगिति प्रत्याहार-ग्रहणं ज्ञापकं 'वृद्धेर्लोपो बलीया'निति । तेनाकृतायामेव वृद्धौ टिलोपेऽग्लोप इति पटुमाख्यत् हरिमाख्यत् अपपटत् अजहरदित्यत्र अभ्यासस्यासन्वद्भावादित्त्वं न भवति । यदि त्वत्र शब्दान्तरप्राप्त्या टिलोपस्यानित्यत्वम् उभयोरनित्ययोः परत्वाद् वृद्धिः स्यात् तदा ऐकार -औकारयोर्लोपो नाग्लोप इति अचकथदित्यादौ अकारलोप एव केवलमग्लोपोदाहरण स्यात् यतोऽत्र वृद्धावप्यगेव लुप्यत इति प्रत्याहारग्रहणमनर्थकं स्यात् । अल्लोप इत्येवं ब्रूयात् । लोपशब्दश्चात्रादर्शनमात्रवृत्तिरिति दृषदमाख्यत् अददृषदित्यत्रानग्लोपेऽपि अकारादर्शना-दग्लोप इति शक्यते वक्तुम् । एतच्च णौसूत्रे (7/4/1) भाष्ये सूचितम् । यद्येवं स्वामिनमाख्यत् असस्वामदित्यादौ वृद्धिप्रसङ्गाभावादग्लोपे सन्वद्भावनिषेधार्थं प्रत्याहारग्रहणं स्यात् 'कथं ज्ञापकमाह । उच्यते । स्वामिन्प्रभृतेर्णिजेव न भवति अनभिधानादिति ज्ञापकवादिनो भाष्यकारस्याभिप्रायः । वार्तिककारस्य तु ज्ञापकमिदम-संमतमिति लक्ष्यते । स ह्याह (3/1/21 वा) हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् अचकलत् अजहलत् । ज्ञापकपक्षे हि वृद्धेः प्रागिकार लोपोऽग्लोपइत्येव सन्वद्भावनिषेधः सिद्ध हति किमत्वनिपातनेन । (वार्तिककार - ) मते परत्वाद् वृद्धौ सत्यां सन्ध्यक्षर-लोपोऽनग्लोप एवेत्यभ्यासस्य सन्वद्भावादिटो दीर्घोलघोरिति 7/4/94) पटुमाख्यत् अपीपटत् 'हरिमाख्यत् अजीहरदित्येवेत्याह पु. दे. ज्ञा.समु. अष्टाविंशे णौपादे पृ. 94 ।
3. 'न बहुव्रीहौ' - अष्टा. 1/1/29 इति सूत्रस्य कैयटदीक्षितादिग्रन्थेष्वितिशेषः ।
4. अष्टा. 7/4/37 ।
5. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यघशब्दाच्छन्दसि परेच्छायां 'क्य'जिति, यदयम् - 'अश्वाघस्या'दिति क्यचि प्रकृते ईत्वबाधनार्थमाकारं शास्ती''त्याह पत. व्या. म. भा. 3/1/2/8 ।
   (ख) " 'सुप आत्मनः क्यच्' (सू. 3/1/8) । 'अश्वाघस्यात्' (सू. 7/4/37) इति क्यचि ईत्वबाधनार्थाकारविधानात् ज्ञापकात् अघशब्दाच्छन्दसि परेच्छायां क्यजिती''त्याह श्रीना. ज्ञा. सं. 3, पृ. 61 ।

'अश्व' 'अघ' - इत्येतयोः '[1]क्यचि परतश्छन्दसि विषये आकाराऽऽदेशोभवती'त्यर्थकेऽस्मिन्सूत्रेऽघे' ति शब्दः 'मा त्वा वृका [2]अघायवो विदन्' - इत्यत्र अघशब्देघकारोत्तरस्याकारस्य क्यचिं [3]ईत्वापवादमात्त्वं विधातुमुपात्तः । स चास्य वचनस्याभावे व्यर्थः । वृका हि नाऽऽत्मसम्बन्धि अघमिच्छन्ति किन्तु परस्याघमित्यघशब्दस्यात्र एषितृवृकसम्बध्यघबोधकत्वाभावेन 'आत्मसम्बन्ध्यर्थबोधकं यत् सुबन्तं ततः इच्छायामर्थे क्यच् प्रत्ययो भवती'त्यर्थकेन 'सुप [4]आत्मनः क्य'जित्येन ततः क्यच् एव दुर्लभ इत्यसौ व्यर्थः । ज्ञापिते चास्मिन्वचने 'परस्याघमिच्छन्ती'त्यर्थेऽपि छन्दस्यघशब्दात् क्यच्सुलभ इत्यसौ शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु परेच्छायामपि छन्दसि क्यचः सिद्धिः ।

वामनभट्टोजिदीक्षितौ तु क्रमशः 'छन्दसि परेच्छायामिति[5] वक्तव्यम्' 'छन्दसि परेच्छायां क्यज् वक्तव्यः (क्यच उपसंख्यानम्) 'इतिवार्तिकं स्वीकृत्य [6]सूत्रमिदं" '[7]न च्छन्दस्यपुत्रस्ये'त्यनेन न केवलमीत्त्वस्य[8] किन्तु [9]दीर्घस्यापि प्रतिषेधो भवती'ति वचनस्य [10]ज्ञापकम् । यतोऽस्य वचस्याभावे '[11]अश्वायन्तः' '[12]अघायवः' इत्यनयोः '[13]अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेन क्यचि दीर्घेणैव साधुत्वं सुलभम् । ज्ञापिते चास्मिन् वचने तयोः प्रयोगयोर्दीर्घस्य[14] [15]प्रतिषेधार्थं सूत्रमिदं स्वांशे

---

1. 'सुप आत्मनः क्यच्' - अष्टा. 3/1/8 ।
2. अघशब्दात् 'छन्दसि परेच्छायामिति वक्तव्यम् वा. का. 3/1/8 इतिक्यचि 'क्यचि च' - अष्टा. 7/4/33, इति प्राप्तस्य ईत्वस्य अपवादे 'अश्वाघस्यात्' - अष्टा. 7/4/37, इत्याकारे 'क्याच्छन्दसि' - अष्टा. 3/2/170, इत्युप्रत्यये 'अतोलोपः' अष्टा. 6/4/48 इत्यतो लोपे विभक्तिकार्ये च कृते रूपमिदम् ।
3. 'क्यचि च' - अष्टा. 7/4/33 ।
4. अष्टा. 3/1/8 ।
5. वा. का. 3/3/8 ।
6. वा. वै. सि. कौ. वैदिक प्र. 3, पृ. 492 ।
7. 'अश्वाघस्यात्' - अष्टा. 7/4/37 ।
8. अष्टा. 7/4/35 ।
9. 'क्यचि च' - अष्टा. 7/4/34 ।
10. 'अकृत्सार्वधातुकयोर्दीर्घः' - अष्टा. 7/4/25 ।
11. 'अश्वमात्मन इच्छतीत्यर्थे 'सुपआत्मनः क्यच्' -अष्टा. 3/1/8, इति क्यचि 'अश्वाघ.' - अष्टा. 7/4/37, इत्यात्वे क्यजन्ताद् अश्वाघधातोर्लटि लटः शत्रादेशे कृदन्ताज्जसि 'उगिदचां सर्वनामस्थानेऽधातोः '-अष्टा. 7/1/70, इतिनुमि रूपम् ।
12. अस्य सिद्धिः प्रागुक्ता ।
13. अष्टा. 7/4/25 ।
14. 'अकृत्सार्व.' - अष्टा. 7/4/25 ।
15. 'नच्छन्दस्यपुत्रस्य' - अष्टा. 7/4/35 ।

चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [1]'मित्रयुः ' - इत्यादीनां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि मित्रोत्तराकारस्य क्यचि [2]ईत्वप्रतिषेधेऽपि[3] दीर्घस्य[4] दुर्वारतया नैषां साधुत्वं सिद्ध्ये"दिति[5]मन्वाते । ज्ञापकमिदं जिनेन्द्रबुद्धि - हरदत्तमिश्राभ्यामप्युपपादितम्[6] ।

## 'अङ्के'ति शब्दः'

'गोत्रादङ्कव'दिति[7] सूत्रेऽङ्के'तिशब्दः [8]'सामान्यातिदेशे विशेषानतिदेशः' - इतिपरिभाषाया ज्ञापकः[9] । यतोऽस्या अभावे विशेषसामान्ययोरतिदेशायात्र

---

1. मित्रमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' - अष्टा. 3/1/8, इति क्यचि 'क्यचि च' - अष्टा. 7/4/34, इति ईत्वस्य 'अकृत्सार्व.' -अष्टा. 7/4/25, इतिदीर्घस्यात्र प्राप्तस्य 'नच्छन्दस्यपुत्रस्य' - अष्टा. 7/4/35, इति निषेधे 'मित्रये'ति क्यजन्ताद्धातोः' क्याच्छन्दसि' - अष्टा. 3/2/170, इत्युप्रत्यये 'अतोलोपः' - अष्टा. 6/4/48, इति क्यचो ऽकारलोपे विभक्तिकार्ये कृते च रूपमिदम् ।
2. 'क्यचि च' - अष्टा. 7/4/34 ।
3. 'नच्छन्दस्यपुत्रस्य' - अष्टा. 7/4/25 ।
4. तथाहि -
   (क) "एतदेवात्ववचनं ज्ञापकम् - 'नच्छन्दस्यपुत्रस्य' इतिदीर्घप्रतिषेधो भवतीती"त्याह वाम. का. 7/4/37 ।
   (ख) "नच्छन्दसी'ति निषेधो नेत्त्वमात्रस्य, किंतु दीर्घस्यापीत्यत्रेदमेव सूत्रं ज्ञापकम्" -इत्याह भ. दी. वै. सि. कौ. वैदिक प्र. 7, पृ. 612 ।
5. तथाहि -
   (क) "यदि 'नच्छन्दसि' इत्यनन्तरस्यैवेत्यस्यायं प्रतिषेधः, तदाऽऽद्वचनमनर्थकं स्यात्, 'अकृत्सार्वधातुकयोः' इत्यनेनैव सिद्धत्वात्, कृतञ्च, तस्मादेतज् ज्ञापयति - 'दीर्घस्याप्ययं प्रतिषेधो भवतीती" त्याह जि. बु. न्या. 7/4/37 ।
   (ख) "एवं मन्यते - यदयम्' अश्वाघस्यात्' इत्यात्वं शास्ति, तज्ज्ञापयति दीर्घस्याप्ययं प्रतिषेध- इति, अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यादिती"त्याह ह. मि. पदम. 7/4/35 ।
6. अ
7. अष्टा. 4/3/80 ।
8. (क) व्याडिः प. सू. प. 91, पृ. 37 ।
   (ख) पु. दे. ल. प. वृ. प. 64, पृ. 140 ।
   (ग) सी. दे. बृ. प. वृ. प. 106; पृ. 261 ।
   (घ) नी. दी. प. व. प. 97, पृ. 311 ।
   (ङ) ह. भा. प. भास्क. प. 108, पृ. 367 ।
   (च) भ. ना. प. शे. प. 110, पृ. 344 ।
   (छ) शेषा. प. भास्क. प. 97, पृ. 331 ।
9. तथाहि – "सामान्यातिदेशे विशेषानतिदेशः' । कथं ज्ञायते । यदयं 'गोत्रादङ्कवत्' (4/3/80) इत्याह । कथं कृत्वा ज्ञापकम् । गोत्रान्तस्येदं वदिति वक्तव्यम् । तेन तस्येदमिति यो विहितः स भविष्यति । कश्च तस्येदमिति विहितः । अङ्कवदेव । एवं सिद्धे सति यदयं 'गोत्रादङ्कवत्' (4/3/80) इत्याह तज्ज्ञापयति अस्तीयं परिभाषा । तेन 'तस्येदम्' (4/3/120) इतिसामान्यं तच्छब्देन गृह्यते । षष्ठ्यन्तं तत्रैव स्यात् । तस्मादङ्कवचनमिती" त्याह व्याडिः प. सू. प. 91, पृ. 37 ।

गृहीतोऽङ्कशब्दो व्यर्थः । 'गोत्रान्तस्येदं भवती'त्युच्यमानेऽपि हि सामान्यविशेषयोरतिदेशः सुलभः । ज्ञापितायां चास्यां विशेषस्याप्यतिदेशायाङ्के'तिशब्दः स्वांशे चरितार्थो भवति । [1]वुञ्सामान्यः विशेषस्त्वण्[2] । यतोऽणूविधौ कृतमङ्गग्रहणम् । न चात्राङ्कग्रहणात्सामान्यस्यातिदेशो न स्यादितिशङ्क्यम् । यतो यथा 'काकेभ्यो दधि रक्ष्यता'मित्यत्र काकग्रहणमुपघातकसामान्योपलक्षणं तथेहाङ्कग्रहणं 'तस्येद'मित्यस्योपलक्षणम् । तेन यथा 'तस्येदं'[3] गोत्रात्प्रत्ययो भवति तथा 'तत आगत[4] 'इत्यत्रापीति सूत्रार्थो लभ्यते । तत्र वुञ उदाहरणम् - 'औवगवानामङ्क औपगवकः[5] 'इत्यादि, अणस्तु 'वैदम्'[6] [7]'गार्ग्यम्' [8]दाक्षमिति । ज्ञापिताया अस्याः फलं तु 'गाङ्कुटादिभ्यो[9]ऽञ्णिन्' ङित्' - इत्यत्र [10]'आशंसायां भूतवच्चे'त्यत्र च क्रमशो ङिद्विशेषस्य 'अनद्यतने लङ्'[11] 'परोक्षे लिट्'[12] - इतिभूतविशेषसम्बद्धयोर्लङ्लुटोश्चातिदेशाभावः । अस्या अभावे हि 'कुटिते'[13] -

---

1. 'गोत्रचरणाद्वुञ्' - अष्टा. 4/3/126 ।
2. 'सङ्घाङ्कलक्षणेष्वञ् यञिञामण्' - अष्टा. 4/3/127 ।
3. अष्टा. 4/3/120 ।
4. अष्टा. 4/3/74 ।
5. 'उपगुशब्दात्' 'गोत्रचरणाद्वुञ्' - अष्टा. 4/3/126, इति वुञि आद्यचो वृद्धौ वोरकादेशे तद्धितान्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. विद शब्दात् 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' - 4/1/104, इत्यञि तदन्तात्संङ्घाङ्कञ्लक्षणेष्वञ्यञिञामण्' - अष्टा. 4/3/127, इत्यणि रूपमिदम् ।
7. 'गर्गशब्दात् 'गर्गादिभ्यो यञ्' - अष्टा. 4/1/105, इति यञि तदन्तात् 'सङ्घाङ्कलक्षणेष्वञ् यञिञामण्' - अष्टा. 4/3/127 इत्यणि रूपमिदम् ।
8. दक्षशब्दात् 'अत इञ्' - अष्टा. 4/1/95, इतीञि तदन्तात् 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' - अष्टा. 4/3/127 इत्यणि रूपम् ।
9. अष्टा. 1/2/1 'गाङादेशात् कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्यु'रितिसूत्रार्थः ।
10. अष्टा. 3/3/132, 'भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसाया'मितिसूत्रार्थः ।
11. अष्टा. 3/2/111 ।
12. अष्टा. 3/2/116 ।
13. 'कुट कौटिल्ये' धा. पा. तुदा. 1367, इतिकुट्धातोर्लुटि तिपि तासिप्रत्यये इडागमे तेर्डादेशे डाभावस्य कप्रत्ययावधिषु स्वादिष्वनन्तर्भूतत्वेन तस्मिन्परे 'यचिमम्' - अष्टा. 1/4/18, इतिभत्वाभावेऽपि डित्त्वसामर्थ्यात् 'टेः' - अष्टा. 6/4/143, इति टिलोपे 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/83, इति प्राप्तस्य - गुणस्य गाङ्कुटादिभ्योऽञ्णिन् ङित्' - अष्टा. 1/2/1, इतिङित्त्वातिदेशात् 'क्ङिति च' - 1/1/5, इतिनिषेधे रूपमिदम् ।

त्यादौ यथानेन[1] 'क्ङिति चे'ति - गुणप्रतिषेधाऽऽदिकं सामान्यमतिदिश्यते, तथा ङिद्विशेषस्य[2]यङादेर्यत्कार्यं द्विर्वचना[3]ऽऽदिकं तदप्यतिदिश्येत, एवम् 'उपाध्यायश्चेदा[4]-गमत्, [5]आगतः, [6]आगच्छति, [7]आगमिष्यति, एते व्याकरणमध्यगीष्महि,[8] एते व्याकरणमधीतवन्तः,[9] अधीमहे,[10] 'अध्येष्यामहे'[11] – [12]इत्यादौ - विकल्पेन भूतवद्भावातिदेशेन[13] यथा भूतसामान्यसम्बद्धो लुङ्[14] अतिदिश्यते तथैवभूतविशेषसम्बद्धौ [15]लङ्लिटाव-[16]प्यतिदिश्येताम् । पुरुषोत्तमदेव - सीरदेव - नीलकण्ठदीक्षित-हरिभास्कर - भट्टनागेश - शेषाद्रीणां मध्ये शेषाद्रिस्तुपरिभाषायामस्यां 'शब्दोपात्तसामान्यस्य स्वसम्बन्धिकार्योपस्थापकत्वात् झटित्युपस्थित

---

1. 'गाङ्कुटादि.' - अष्टा. 1/2/1, इत्यनेनेत्यर्थः ।
2. 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' - अष्टा. 3/1/22, इत्यादिसूत्रविहितयङादेरित्यर्थः ।
3. 'सन्यङोः'. - अष्टा. 6/1/9 ।
4. आङ्पूर्वकाद् गमेर्भविष्यत्काले 'आशंसायां भूतवच्च' - अष्टा. 3/3/132, इतिभूतवद्भावादाशंसायां लुङि तिपि रूपम् ।
5. 'आङ्पूर्वकाद्गमेर्भविष्यति काले 'आशंसायां भूतवच्च' - अष्टा. 3/3/132, इतिभूतवद्भावादाशंसायां क्तप्रत्यये रूपम् ।
6. 'आङ्पूर्वकाद्गमेर्भविष्यति काले 'आशंसा.' - अष्टा. 3/3/132, इति वर्तमानवद्भावादाशंसायां लटि तिपि रूपम् ।
7. आङ्पूर्वकाद्गमेर्भविष्यति काले 'आशंसा.' अष्टा. 3/3/132, इति भूतवद्वर्तमानवद्भावयोरभावपक्षे लृटि तिपि रूपम् ।
8. नित्यम् अधिपूर्वकादिङ्धातोर्भविष्यति काले 'आशंसा.' अष्टा. 3/3/132, इतिभूतवद्भावादाशंसायांलुङि महिङि 'विभाषा लुङ्लृङोः' - अष्टा. 2/4/50, इतीङो गाङादेशे च्लौ सिचि 'गाङ्कुटादिभ्योऽञ्णिन् ङित्' - अष्टा. 2/1, इतिसिचो ङित्त्वाद् 'घुमास्थागापाजहातिसां हलि' - अष्टा. 6/4/66, इतीत्वे रूपम् ।
9. नित्यमधिपूर्वकादिङ्धातोर्भविष्यतिकाले 'आशंसा.' अष्टा. 3/3/132, इति भूतवद्भावादाशंसायां क्तवतुप्रत्यये जसि रूपम् ।
10. नित्यमधिपूर्वकादिङ्धातोर्भविष्यति काले 'आशंसा.' अष्टा. 3/3/132, इति वर्तमानवद्भावादाशंसायां लटि महिङि अदादित्वाच्छपो लुकि रूपम् ।
11. नित्यमधिपूर्वकादिङ्धातोर्भविष्यति काले 'आशंसा.' अष्टा. 3/3/132, इतिभूतवद्वर्तमानवद्भावयोरभावपक्षे लृटि महिङि रूपम् ।
12. अदिपदेन 'देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा, धान्यमवाप्स्म्, वपामो, वप्स्यामो वा' -इत्यादि ग्राह्यम् ।
13. 'आसंसायां भूतवच्च' - अष्टा. 3/3/132 ।
14. अष्टा. 3/3/175 ।
15. 'अनद्यतने लङ्' - अष्टा. 3/2/111 ।
16. 'परोक्षे लिट्' अष्टा. 3/2/125 ।

सामान्यकार्येणैव नैराकाङ्क्ष्यमेव बीजं [1]मतुते, पुरुषोत्तमदेव- - सीरदेव - नीलकण्ठदीक्षित - हरिभास्कर - भट्टनागेशास्तु 'लौकिकन्यायो मूलमित्यामनन्ति,[2] केवलं व्याडिरे- वास्यां ज्ञापकमाह[3] ।

न चास्याःस्वीकारे 'व्योतेने [4]किरणावलीमुदयनः' - इत्यत्र कथं [5]'व्यातेने' इत्यस्य साधुत्वं, नह्याशंसायामत्र [6]लिट्सम्भवतीति शङ्क्यम् । यतोऽत्र 'वितस्तरे' इत्यर्थके 'व्यातेने' इत्यत्र लिटो लाक्षणिकं प्रयोगं स्वीकृत्य साधुत्वमुपपन्नं भवति । अत्र हि लिट्तङो भूतत्वानद्यतनत्वपरोक्षत्वेषु [7]लक्षणा ग्रन्थेऽतिसुकरत्वशीघ्रनिष्पाद्यत्वाऽऽदि-प्रत्ययनप्रयोजनाय स्वीक्रियते । ततप्रत्यायनफलं तु अध्येतॄणां पदार्थतत्त्वनिश्चय-फलकैतद्ग्रन्थं[8] ज्ञातुं सोत्कण्ठानामाह्लादः ।

## 'अङ्ग'शब्दः

[9]'इणः षीध्वंलुङ्लिटां धोऽङ्गा'दिति सूत्रेऽङ्गशब्दः [10]'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इतिपरिभाषाऽनित्येति वचनस्य ज्ञापकः[11] । यतः 'परिवेविषीध्व'–[12]मित्यत्र

---

1. प. भा. प. 93, पृ. 454 ।
2. तथाहि –
   (क) "लोकसिद्ध एवायमर्थः । तथाहि लोके 'ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यम्' इतिब्राह्मणत्वसामान्यकार्यमेव पादवन्दनादिकमतिदिश्यते । न तु माठरादिप्रयुक्तं तत्र भक्षणाऽऽदि विशेषकार्यम्" इत्याह पु. दे. ल. प. वृ. प. 64, पृ. 140 ।
   (ख) 'लोकसिद्ध एवायमर्थः । लोके 'ब्राह्मणवदस्मिन् क्षत्रिये प्रवर्तितव्य'- मित्युक्ते ब्राह्मणसामान्यकार्यं वन्दनाऽऽदिकमतिदिश्यते । न तु माठराऽऽदिविशेषसम्बद्धं परिवेषणादिक"मित्याह सी. दे. बृ. प. वृ. प. 106, पृ. 262 ।
   (ग) "सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावाद् न्यायमूलिकेय"-मित्याह नी. दी. प. वृ. प. 97, पृ. 331 ।
   (घ) "लोकेऽपि 'ब्राह्मणवत् क्षत्रिये वर्तितव्यम्' इत्युक्ते ब्राह्मणसामान्यकार्यमतिदिश्यते" इत्याह ह. भा. प. भास्क. प. 108, पृ. 367 ।
   (ङ) "सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीज" मित्याह भ. ना. प. शे. प. 110, पृ. 344 ।
3. प. सू. प. 91, पृ. 37 ।
4. न्यायकिरणावल्याः प्रारम्भिकपुष्पिकांऽशोऽयम् ।
5. व्याङ्पूर्वकात् 'तनु विस्तारे' धा. पा. तना. 1454, इतितन्धातोर्लिटि ते रूपमिदम् ।
6. 'आशंसायां भूतवच्च' - अष्टा. 3/3/132' **परोक्षे लिट्** - अष्टा. 3/2/116 ।
7. 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
8. अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया " काव्य प्र. 2/9 'किरणावलीग्रन्थ'मित्यर्थः ।
9. अष्टा. 8/3/78 ।
10. (क) पु. दे. ल. प. वृ. प. 5, पृ. 114 ।
    (ख) सी. दे. बृ. प. वृ. प. प. 100, पृ. 256 ।

ढत्वव्यावृत्तये सूत्रेऽस्मिन्नुपात्तोऽङ्गशब्दोऽस्य वचनस्याभावे व्यर्थः । गौणत्वादेवात्राप्रसिद्धस्य षीध्वमो धकारस्य ढत्वाभावो हि सुलभः । न च मुख्यस्य षीध्वमोऽप्रसिद्धिः शङ्क्या ।यतः 'च्योषीढ्वम्'[2] इत्यादौ मुख्यः षीध्वंप्रसिद्धः । ज्ञापिते–चास्मिन् गौणमुख्यन्यायस्यात्राप्रवृत्त्या ढत्वं दुर्वारं स्यादिति तद्व्यावृत्तयेऽङ्गशब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु शीतकोऽलसः' 'उष्णको दक्षः'–इत्यत्र गौणार्थकाभ्यामपि शीतोष्णशब्दाभ्यां 'शीतोष्णाभ्यां कारिणि'[3] इति कनः सिद्धिः । अस्य वचनस्यासत्त्वे हि नात्र कन् सिद्ध्येत् । भट्टनागेशस्तु सूत्रेऽस्मिन्नङ्गशब्दोऽर्थवत्-परिभाषाऽनित्येति वचनस्य ज्ञापकस्तन्मूलिका च 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थ-

---

(ग) नी. दी. प. वृ. प. 14, पृ. 295 ।
(घ) ह. भा. प. भास्क. प. 102, पृ. 365 ।
(ङ) भ. ना. प. शे. प. 16, पृ. 101 ।
(च) शेषा. प. भास्क. 15, पृ. 398 ।

11. तथाहि–"इयमनित्या । 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' (8/3/78) इत्यत्राङ्गग्रहणात् । तद्धि 'परिवेविषीध्व'मित्यत्र मूर्धन्यादेशनिवृत्तये क्रियते । यदि चेयं परिभाषा स्यात् तदा गौणत्वादेव तत्रादेशस्याप्रवृत्तिसिद्धौ किं तद्व्यावृत्त्यर्थकाङ्गग्रहणेन । तत्क्रियमाणं परिभाषाया अनित्यतां ज्ञापयती"त्याह नी. दी. प. वृ. प. 14, पृ. 295-296 ।

12. परिपूर्वकाद् 'विष्लृ व्याप्तौ' धा. पा. जुहो. 1095, इति विष्धातोः 'विधिनिमन्त्रामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्'–अष्टा. 3/3/161, इति लिङि मध्यमपुरुषबहुवचने 'लिङः सीयुट्'–अष्टा. 3/4/102, इति सीयुडागमे 'कर्त्तरि शप्'–अष्टा. 3/1/68, इति शपि तस्य 'जुहोत्यादिभ्यः श्लुः'–अष्टा. 2/4/75, इति श्लौ 'श्लौ'–अष्टा. 6/1/10, इति द्वित्वे 'पूर्वोऽभ्यासः'–अष्टा. 6/1/4, इत्यभ्याससंज्ञायां 'हलादिः शेषः' अष्टा. 7/4/60 इति हलादिशेषे 'निजां त्रयाणां गुणः श्लौ'–अष्टा. 7/4/75 इत्यभ्यासस्य गुणे'लिङः सलोपोऽनन्त्यस्य' अष्टा. 7/2/79, इतिसीयुटस्सकारस्य लोपे यकारस्य च 'लोपो व्योर्वलि'–अष्टा. 6/1/66, इति लोपे रूपमिदम् ।

1. "अङ्गादिति'किम् ? । परिवेविषीध्वम्" इत्याह वाम. का. 8/3/78 । "अत्र धातुषकारस्य ईध्वंशब्दस्य च यः समुदायस्तदात्मकः षीध्वं शब्दोऽस्ति, न त्वसाविणन्तादङ्गादुत्तरः । तथाहि– वेविषित्यस्याङ्गसंज्ञा, न तु वेवीत्येतन्मात्रस्य षकारात्पूर्वभागस्ये"ति चाऽऽह जि. बु. न्या. 8/3/78 । "अत्र धातुधकारस्य, ईध्वंशब्दस्य च यः समुदायस्तदात्मकः षीध्वंशब्दोऽस्ति, न त्वसावङ्गादुत्तरः । षकारान्तं ह्यत्राङ्गम्, न तु वेवीत्येतावत्"इतिचाऽऽह ह. मि. पदम. 8/3/78 ।

2. 'च्युङ्गतौ' धा. पा. भ्वा. 955, इति च्युधातोः 'आशिषि लिङ्लोटौ'–अष्टा. 3/3/173 इत्याशिषि लिङि 'लिङः सीयुट्'–अष्टा. 3/4/102, इति सीयुटि ध्वमि 'एकाच उपदेशेऽनुदात्तात्'–अष्टा. 7/2/10 इतीण्निषेधे धातोरुकारस्य गुणे 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्'–अष्टा. 8/3/78 इतिधकारस्य ढकारे च कृते रूपमिदम् ।

3. अष्टा. 5/2/72 ।

केन च तदन्तविधिं प्रयोजयन्ती'ति[1] परिभाषेत्यन्येषां मतमिति[2] मनुते । 'विभाषेटः[3]' इत्यत्रानर्थकस्यैव षीध्वमःसम्भवादत्रापि तस्यैव ग्रहणमितिभ्रमवारणायाङ्गादिति परे[4]" इति स्वमतं चाऽऽहासौ । यतोऽस्य मते 'अनिनस्मन्नि'ति परिभाषा वाचनिकी भाष्योक्ता[5], न ज्ञापकसापेक्षप्रमाणा । अङ्गशब्दस्य गौणमुख्यन्यायानित्यत्वज्ञापकत्वमिति वदतः नीलकण्ठदीक्षितस्य मते तु [6]तदनित्यत्वमूला 'अनिनस्मन्नि'ति परिभाषा । अतोऽङ्गशब्दस्यैतद्वचनज्ञापकत्वमपि युक्तं प्रतिभाति ।

## 'अच'इतिशब्दः

[7]'अचो य'दिति सूत्रेऽच इतिशब्दः 'सांप्रतिकाभावे[8]भूतपूर्वगति'रितिपरिभाषाया [9]ज्ञापकः। यतोऽस्या अभावेऽत्र सूत्रे 'अच'इतिशब्दो व्यर्थः । हलन्तधातुभ्य'ऋहलो-

---

1. (क) व्याडिः प. पा. प. 129, पृ. 43 ।
   (ख) पु. दे. ल. प. वृ. प. 77, पृ. 146 ।
   (ग) सी. दे. बृ. प. वृ. प. 65, पृ. 260 ।
   (घ) नी. दी. प. वृ. प. 15, पृ. 296 ।
   (ङ) ह. भा. प. भास्क. प. 67, पृ. 351 ।
   (च) भ. ना. प. शे. प. 17, पृ. 109 ।
   (छ) शेषा. प. भास्क. प. 16, पृ. 401 ।
2. तथाहि–'अन्ये तु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणा'दिणः षीध्व'मित्यत्राङ्गग्रहणादर्थवत्परिषाऽनित्या तन्मूलकमिदमित्याहुः "प. शे. प. 17, पृ. 110 । मतमिदं हरिभास्करस्य।यतोऽसौ "अत्र मूलम् इणः षीध्वंलुङ्लिटां' (8/3/78) इत्यादिसूत्रगताङ्गग्रहणज्ञापितमर्थवत्परिभाषाया अनित्यत्वम् । अन्यथा हि परिवेविषीध्वमित्यत्र षीध्वंशब्दस्यानर्थकत्वादेव न ग्रहणमिति किमङ्गग्रहेणेने"त्याह प. भास्क. प. 67, पृ. 351 ।
3. अष्टा. 8/3/79 ।
4. प. शे. प. 17, पृ. 110 ।
5. 'अनिनस्मनूग्रहणान्यर्थवता चानर्थकेन'इत्युक्तं हि भाष्यकृता–व्या. म. भा. 1/1/9/71 ।
6. 'गौणमुख्यन्यायानित्यत्वमूले'त्यर्थः ।
7. अष्टा. 3/1/97 ।
8. (क) पु. दे. ल. प. वृ. प. 15, पृ. 119 ।
   (ख) सी. दे. बृ. प. वृ. प. 37, पृ. 207 ।
   (ग) नी. दी. प. वृ. प. 55, पृ. 303 ।
   (घ) ह. भा. पे. भास्क. प. 39, पृ. 340 ।
   (ङ) भ. ना. प. शे. प. 77, पृ. 392 ।
   च) शेषा. प. भास्क. प. 65, पृ. 435 ।
9. तथाहि–
   (क) "अजूग्रहणं किम्,यावता हलन्ताण्ण्यतं वक्ष्यति ? अजन्तभूतपूर्वादपि यथा स्यात्–दित्स्यं, धित्स्यम्"–इत्याह जया. का. 3/1/97 ।
   (ख) "ज्ञापकं चात्र भूतपूर्वगत्याश्रयणे 'अचोयत्' (3/1/97) इत्यज्ग्रहणम् । तद्धि हलन्तात्ण्यतं वक्ष्यतीति पारिशेष्यादजन्तादेव ण्यति लब्धे दित्स्यं धित्स्यम्

[1]ण्यं'दिति ण्यत्प्रत्ययस्य विधानात् परिशेषादजन्तेभ्यो धातुभ्य एव यत्प्रत्ययोऽत्राच– इति- शब्दस्याभावेऽपि हि सुलभः । ज्ञापितायां चास्यां भूतपूर्वाजन्तेभ्योऽपि यत्प्रत्ययविधानार्थमयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्या 'वर्तमानाभावे भूतपूर्वस्याश्रयणं भवती, त्यर्थः । फलं तु 'दित्स्यं' 'धित्स्य'मित्यादौ यति 'यतोऽनावः'[2] इत्याद्युदात्तत्वसिद्धिः । तथाहि–[3]दाञो [4]धाञश्च [5]सनि [6]द्वित्वे [7]'सनिमीमाघुरभलभशक-

---

इत्यत्रार्धधातुक इति विषयसप्तम्यामतो लोपे कृतेऽजन्तभूतपूर्वस्यापि यथा स्यादित्येवमर्थं क्रियते । एतदर्थता कथं स्याद्यदि भूतपूर्वगतिरिह न स्यादिती"त्याह पु. दे. ल. प. वृ. प. 15 पृ. 119 ।

(ग) "ज्ञापकं चात्र 'अचोयत्' (3/1/97) इत्यज्ग्रहणम् । तद्धि-हलन्तात् 'ऋहलोर्ण्यत्' (3/1/124) इति ण्यतं वक्ष्यतीति पारिशेष्यादजन्तादेव यति सिद्धे धित्स्यं दित्स्य-मित्यत्रार्द्धधातुक इतिविषयसप्तम्यामतो लोपे कृतेऽजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थं क्रियते । एतदर्थता च तदा यथेह भूतपूर्वगतिः स्यात्"इत्याह-सी. दे. बृ. प. वृ. प. 37, पृ. 207 ।

(घ) "वस्तुतस्तु 'अचोयत्' (3/1/97) इतिसूत्रस्थाज्ग्रहणमस्या ज्ञापकम् । अन्यथा 'ऋहलोर्ण्यत्' (3/1/124) इति हलन्तेभ्यो ण्यत् प्रत्ययस्य विधानादन्तरेणाप्यज्ग्रहणं परिशेषादजन्तादेव यत्प्रत्ययो भविष्यतीति किमज्ग्रहणेन । तत् क्रियमाणं भूतपूर्वाजन्तस्यापि यत्प्रत्यय विधानार्थं संपद्यते । तेन धाञो दाञश्च सति द्वित्वे 'सनिमीमाघु.' (7/4/54) इति इसि अभ्यासस्य 'अत्र लोपोऽभ्यासस्य' (7/4/58) इति लोपे 'सः स्यार्धधातुके' (7/4/49) इति तत्वेऽनुत्पन्नार्धधातुके अतो लोपे हलन्तत्वात् प्राप्तं ण्यतं बाधित्वा भूतपूर्वाजन्तत्वमादाय 'अचो यत्' (3/1/97) इति यत्प्रत्यये 'यतोऽनावः' (6/1/123) इत्याद्युदात्तत्वसिद्धिरिती"त्याह नी. दी. प. वृ. प. 55, पृ. 303 ।

(ङ) "इयं परिभाषा 'अचोयत्' (3/1/97) इति अज्ग्रहणादवीसयते । असत्यां ह्यस्याम् 'ऋहलोर्ण्यत्' (3/1/124) इति हलन्तेभ्यो ण्यतो विधानात् परिशेषादजन्तेभ्य एव यता भाव्यमिति अज्ग्रहणं व्यर्थं स्यात् । सत्यां तु 'दित्स्यं'धित्स्य'मित्यादावतो लोपे कृतेऽपि यत्प्रत्ययं प्रवर्तयितुमावश्यकमिति केच्चित्"इत्याह. ह. भा. प. भास्क. प. 39, पृ. 340 ।

1. अष्टा. 3/1/124 ।
2. अष्टा. 6/1/213 ।
3. 'डुदाञ् दाने' धा. पा. जुहो. 1091 ।
4. 'डुधाञ् धारणपोषणयोः' धा. पा. जुहो. 1092 ।
5. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा'–अष्टा. 3/1/7 ।
6. 'सन्यङोः'–अष्टा. 6/1/9 ।
7. अष्टा. 7/4/54 ।

पतपदामच इस्'इति इसि [1]'अत्र लोपोऽभ्यासस्ये'त्यभ्यासस्य लोपे [2]'सः स्यादर्धधातुके'इति सकारस्य तकारे अनुत्पन्नार्धधातुकेऽपि तद्विषये 'अतो[3]लोपः' इति सनोऽकारस्य लोपे हलन्तत्वात् [4]'ऋहलोर्ण्यत्'इति प्राप्तं ण्यतं बाधित्वानया परिभाषया भूतपूर्वाजन्तत्वमादाय 'अचो यत्[5]'इति-यत्प्रत्यये 'यतोऽनावः[6]' इत्याद्युदात्तत्वं सिद्ध्यति । तथा वृक्षैरित्यत्र [7]परत्वादेत्वे कृतेऽप्यैसः[8] सिद्धिरस्याः फलम् । तदुक्तम्–

"एत्वं भिसिपरत्वाच्चेदत ऐस्त्वं भविष्यति ।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति"[9] ॥ इति ।

अस्यां सांप्रतिकाभाव इति पदोपादानस्य प्रयोजनं 'हेगौरित्यत्र भूतपूर्वैङन्तत्वाद् [10]'एङ्ह्रस्वात्सम्बुद्धे'रिति सकारलोपाभावः । यतो 'हे वटो'रित्यत्र साम्प्रतिक एङन्तत्वे सकारलोपविधानं चरितार्थम् ।

वस्तुतस्तु [11]'अचो य'दितिसूत्रेऽच इत्ययं शब्दो [12]नावश्यक इति नायं ज्ञापकोऽस्याः

---

1. अष्टा. 7/4/58 ।
2. अष्टा. 7/4/49 ।
3. अष्टा. 6/4/48 ।
4. अष्टा. 3/1/124 ।
5. अष्टा. 3/1/97 ।
6. अष्टा. 6/1/213 ।
7. 'बहुवचने झल्येत्'–अष्टा. 7/1/103 ।
8. अतो भिस ऐस्'–अष्टा. 7/1/13 ।
9. व्या. म. भा. 7/1/1/9 ।
10. अष्टा. 6/1/69 ।
11. अष्टा. 3/1/97 ।
12. तथाहि–'अचोय'दिति सूत्रव्याख्यानावसरे "अज्ग्रहणं शक्यमकर्तु'मित्युक्तं भट्टोजिदीक्षितेन वै. सि. कौ. कृदन्ते कृत्यप्र. पृ. 385 ।
ग्रन्थमिमं व्याचक्षाणो ज्ञानेन्द्रभिक्षुश्च "अत्र केचिदज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमपेक्षितम् । तेन दित्स्यंधित्स्यमित्यत्र यति कृते 'यतोऽनावः'इत्याद्युदात्तत्वं सिद्ध्यति, ण्यति कृते तु 'तित्स्वरितम्' इति प्रसज्येत । न च दित्स्यं धित्स्यमित्यत्र 'ऋहलोः'इतिण्यतः प्रसक्तिरेव नास्तीति वाच्यम्, आर्द्धधातुकविवक्षायामेव अतोलोपे कृते हलन्तत्वेन तत्संभवादित्याहुस्तदापाततः । आर्द्धधातुके विवक्षिते यद्यतोलोपः स्यात् तदा हीदं संभवेत् । लोपस्तु आर्द्धधातुके पर एवोचितः । अन्यथा परनिमित्तकत्वाभावेन स्थानिवत्वाभावे 'गणयती'त्यादावुपधावृद्धिप्रसङ्गादितिभावः "इत्याह त. बो. कृदन्ते कृत्यप्र. पृ. 385 ।
".... पाक्षिकञ्चैतत्प्रयोजनं वेदितव्यम् । क्व तस्मिन् पक्षे ? यदार्धधातुके विषयभावेन विवक्षिते 'अतोलोपः'विधीयते । यदार्धधातुकः, तदा नेदं प्रयोजनम् । विस्पष्टार्थं त्वज्ग्रहणं वेदितव्य"मिति चाऽऽह जिनेन्द्रबुद्धिः न्या. 3/1/97 ।

परिभाषायाः । [1]ब्राह्मणश्रमणन्यायेन [2]लोकसिद्धयाऽनया ते ते प्रयोगा उपपादनीयाः ।

## 'अच'ङीति शब्दः

[3]'हेरच'ङीतिसूत्रे'ऽच'ङितिप्रतिषेधवाचकः शब्दः [4]'प्रकृतिग्रहणे ण्यधकस्यापि ग्रहण'मिति परिभाषाया [5]ज्ञापकः । यतोऽस्या अभावेऽत्रासौ व्यर्थः । तथाहि–

---

1. "व्यङ्ग्यस्यालङ्कार्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्यते"इत्याह विश्वनाथः सा. द. 4 पृ. 319 ।
2. "न्यायसिद्धेयमित्येके"–इत्याह नीलकण्ठदीक्षितः प. वृ. प. 55, पृ. 303 ।
3. अष्टा. 7/3/56 ।
4. (क) "प्रकृतिग्रहणे णिजन्तस्यापि ग्रहणम्" व्याडिः प. सू. प. 70, पृ. 31 ।
   (ख) पु. दे. ल. प. वृ. प. 73, पृ. 144 ।
   (ग) "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं भवति" सी. दे. बृ. प. वृ. प. 90, पृ. 284 ।
   (घ) "प्रकृतिग्रहणे ण्यधिकस्य ग्रहणम्" नी. दी. प. पृ. प. 85, पृ. 309 ।
   (ङ) ह. भा. प. भास्क. प. 93, पृ. 360 ।
   (च) भ. ना. प. शे. प. 92, पृ. 326 ।
   (छ)"प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं कुत्वविषये भवति"–शेषा. प.भास्क. प.79, पृ.444 ।
5. तथाहि–
   (क) "'प्रकृति ग्रहणे णिजन्तस्यापि ग्रहणम्' । कथं ज्ञायते । यदयं 'हेरचङि' (7/3/56) इत्याह । कथं कृत्वा ज्ञापकम् ।अत्र हेःकुत्वं विधीयमानं तत्र कः प्रसङ्गो यण्णौ चङ्परे स्यात् । पश्यति त्वाचार्यः प्रकृतिग्रहणे णिजन्तस्यापि ग्रहणं भवतीति तस्मात्प्रतिषेधं करोतीति अचङीति । किमेतस्या ज्ञापने प्रयोजनम् । सुनोतेः षत्वमुच्यमानं णिजन्तस्यापि भवति अभिषावयतीति"त्याह व्याडिः प. सू. प. 71, पृ. 31 ।
   (ख) "एवं तर्हि ज्ञापयत्याचार्यो'ऽन्यत्र ण्यधिकस्य कुत्वं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । प्रजिघाययिषती'त्यत्र कुत्वं सिद्धं भवती'त्याह पत. व्या. म. भा. 7/3/2/56 ।
   (ग) "अचङीति शक्यमकर्तुम् । कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति विज्ञायमाने प्राप्तिरेव नास्ति ? तत्क्रियते ज्ञापकार्थम् । एतज् ज्ञाप्यते–'हेरचि' इति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धं भवती"त्याह वाम. का. 7/3/56 ।
   (घ) "'हेरचङि'इत्यनेन चङोऽन्यत्र सनादौ ण्यधिकस्यापि हिनोतेः कुत्वं भवतीत्येषोऽर्थो ज्ञाप्यते"–इत्याह जि. बु. न्या. 7/3/56 ।
   (ङ) "ज्ञापकं चात्र 'हेरचङि' (7/3/56) इतिप्रतिषेधवचनम् । तथाहि केवलाद् हिनोतेश्चङ् नास्ति । तत्र यदि प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् इति परिभाषा न स्यात् तदा- अभ्यासनिमित्ते प्रत्यये हिनोतेरङ्गस्य कुत्वमुच्यमानं कः प्रसङ्गो ण्यधिकस्य चङि स्यात् यदर्थमचङीति प्रतिषेधः क्रियते"–इत्याह पु. दे. ल. प. वृ. प. 73, पृ. 144 ।
   (च) "ज्ञापकं चात्र 'हेरचङि' (7/3/56) इति प्रतिषेधः । यदि प्रकृतिग्रहणे ण्यधिकस्य ग्रहणं न स्यात् तदा केवलस्य हिनोतेरङ्गस्याभ्यास-निमित्तप्रत्यये कुत्वमुच्यमानं, कः प्रसङ्गो ण्यधिके स्यात् यदर्थमचङीति प्रतिषेधः क्रियत इती"त्याह सी. दे. वृ. प. वृ. प. 90, पृ. 284 ।
   (छ) "अचङीति किम् ? । अजीहयत् । इह ण्यन्तस्य धात्वन्तरत्वात् केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात् कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः

[1]'जिघाये'त्यादौ कुत्वार्थम् 'अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्नतु चङी'त्यर्थकेऽस्मिन्सूत्रे [2]'अजीहय'दित्यत्र हकारस्य कुत्ववारणायोपात्तोऽयं शब्दः । स चास्याः परिभाषाया अभावे व्यर्थः । 'अजीहय'दित्यत्र हि णौ हिनोतिरङ्गं[3], चङि [4]अभ्यास इति अङ्गत्वाऽभ्यासत्वयोः समाननिमित्तकत्वाऽभावात् कुत्वस्य प्राप्तिरेव नाऽस्ति । ज्ञापितायां चाऽस्यां परिभाषायाम् अङ्गत्वस्य णिच् निमित्तम्, अभ्यासस्य चङ् निमित्तमिति

---

सञ्ज्ञापयति ण्यधिकस्यापि कुत्वं भवतीति । तेन जिघापयिषतीत्यादिसिद्ध"मित्याह ज्ञा. भि. त. बो. स्वादि प्र. पृ. 200 ।

(ज) "केवलधातुग्रहणे णिजन्तस्यापि ग्रहणमित्यर्थः । 'हेरचङि' (7/3/56) इति सूत्रे अचङि इति प्रतिषेधेन अस्या ज्ञापनात् कुत्वमात्रविषयेयमिति भाष्ये स्पष्ट"मित्याह नी. दी. प. वृ. प. 85, पृ. 309 ।

(झ) "ज्ञापकं चात्र 'हेरचङी'त्यत्र 'अचङि' इतिपदम् । यदीयं न स्यात् तदा ण्यधिके प्रसङ्ग एव नास्तीति किं तेन"-इत्याह ह. भा. प. भास्क. प. 93, पृ. 360 ।

(ञ) "अचङीति प्रतिषेध एवास्या ज्ञापकः । इयं च कुत्वविषयैव । 'हेरचङीति, सूत्रे भाष्ये स्पष्टेय"मित्याह भ. ना. प. शे. प. 92, पृ. 326 ।

(ट) "'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं कुत्वविषये भवति" तेन प्रजिघाययिषतीति ण्यन्तात् सनि कुत्वसिद्धिः, 'अचङि' इतिप्रतिषेधात् । तथाच वार्तिकम् 'हेश्चङि,' प्रतिषेधानर्थक्यमङ्गान्यत्वात् ,। ज्ञापकं तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वाभावस्य'इती"त्याह शेषा. प. भास्क. प. 79, पृ.. 444-445 ।

(ठ) "'हेरचङि' (सू. 7/3/56) । अचङीति प्रतिषेधो ज्ञापयति अन्यत्र ण्यधिकस्य कुत्वं भवतीति । तेन प्रजिधाययिषतीती"त्याह श्रीना. ज्ञा. सं. 7, पृ. 124 ।

1. 'हिगतौ वृद्धौ च' धा. पा. स्वा. 1258, इति हिधातोर्लिटि प्रथमपुरुषैकवचने द्वित्वादिकार्येषु कृतेषु 'हेरङि'–अष्टा. 7/3/56, इत्यनेनाभ्यासात् परस्य हकारस्य कुत्वे रूपमिदम् ।
2. हेतुमण्ण्यन्तात् 'हिगतौ वृद्धौ च' धा. पा. स्वा. 1258, इति हिधातोर्लुङि तिपि अडागमे च्लौ 'णि-श्रि-द्रु-स्रुभ्यः कर्त्तरि चङ्'–अष्टा. 3/1/84 इत्यनेन च्लेश्चङि 'अहि इ अत्' इत्यवस्थायां 'णेरनिटि' अष्टा. 6/4/51 'चङि'–अष्टा. 6/1/11, इति हि शब्दस्य द्वित्वेऽभ्याससंज्ञायां हलादिशेषे-दीर्घोलघोः'–अष्टा. 7/4/94 इति हिशब्दस्य दीर्घे 'कुहोश्चुः'–अष्टा. 7/4/62, इति हकारस्य चुत्वे अजीहि अत् इत्यवस्थायाम् 'अचोञ्णिति-अष्टा. 7/2/115, इति इकारस्य वृद्ध्यादेशे 'णौ चङ्युपधायाह्रस्वः'–अष्टा. 7/4/1, इत्युपधाया ह्रस्वे अचङीति प्रतिषेधात् 'हेरचङि'–अष्टा. 7/3/45, इति हकारस्य कुत्वाभावे रूपमिदम् ।
3. 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'–अष्टा. 1/4/13 ।
4. 'पूर्वोऽभ्यासः'–अष्टा. 6/1/4 ।

निमित्तभेदेऽपि–'अजीहय'दित्यत्र कुत्वं प्राप्नोतो ति तद्वाराणाय 'अचङी'त्ययं शब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु प्रजिघाययिषतीत्यत्र[1] ण्यन्ताद्धिनोतेः सनि [2]कुत्वसद्धिः । अस्या असत्त्वे हि ण्यन्तस्य हिनोतेः प्रकृत्यन्तरत्वेन ततः सनि कुत्वमत्र न सिद्ध्येत् । तथा [3]'अभिषावयती'त्यत्र णिजन्तस्याऽपि सुनोतेः [4]षत्व-सिद्धिरस्याः फलम् । अस्या असत्त्वे हिं [5]'उपसर्गात्सुनोती'त्युच्यमानं षत्वमत्र न सिद्ध्येत् । परिभाषा चेयं [6]कुत्वमात्रविषया । यतोः भाष्ये"हेश्चङिप्रतिषेधानर्थक्यम् अङ्गान्यत्वात् । ज्ञापकन्तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वाभावस्ये" त्युक्तम्[7] । अस्याः कुत्वमात्रविषयत्वे फलं तु [8]'शाययती' त्यादौ[9] शापोलुगभावः[10] । अन्यत्रापि शपो लुगापत्तिर्दुवारा स्यात् ।

## 'अची'ति शब्दः

'इकोऽचि [11]विभक्ता'विति सूत्रे 'अची'तिशब्दः 'प्रत्ययलक्षणनिषेधोऽत्र[12]

---

1. प्रपूर्वकात् 'हि गतौ वृद्धौ च' धा. पा. स्वा. 1258, इति 'हि' धातोः 'हेतुमति च'–अष्टा. 3/1/26, इति णिचि तदन्तात् 'धातोः कर्मणः-समानकर्तृकादिच्छायां वा'–अष्टा. 3/1/7, इति सनि इडागमे 'सन्यङोः' अष्टा. 6/1/9, इति द्वित्वेऽभ्यासकार्येषु कृतेषु 'हेरचङि'–अष्टा. 7/3/56, इति कुत्वे णिचः इकारस्य गुणेऽयादेशे सकारस्य षत्वे लटि तिपि शपि पररूपे च कृते रूपमिदम् ।
2. 'हेरचङि'–अष्टा. 7/3/56 ।
3. अभिपूर्वकात् 'षुञ्अभिषवे'धा. पा. स्वा. 1248, इति सुधातोर्णिचि उकारस्य वृद्धौ आवादेशे लटि तिपि शपि इकारस्य गुणेऽयादेशे 'उपसर्गात्सुनोति.'–अष्टा. 8/3/65, इति सुनोतेः सकारस्य 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहण'मिति परिभाषया धत्वे रूपमिदम् ।
4. 'उपसर्गात् सुनोति सुवतिस्यतिस्तौति स्तोभति स्था सेनयसेधसिच सञ्जस्वञ्जाम्'–अष्टा. 8/3/65 ।
5. 'उपसर्गात् सुनोति सुवति स्यतिस्तौति स्तोभति स्था सेनयसेधसिच सञ्ज-स्वञ्जाम्'–अष्टा. 8/3/65 ।
6. 'हेरचङि'–अष्टा. 7/3/56 ।
7. व्या. म. भा. 7/3/2/56 ।
8. 'शीङ् स्वप्ने'धा. पा. अदा. 1032, इति शीधातोः 'हेतुमति च'–अष्टा. 3/1/26, इतिणिचि'अचोऽ ञ्णिति'–अष्टा. 7/2/115, इति इकारस्य वृद्धावैकारे आयादेशे लटि तिपि शपि इकारस्य गुणेऽयादेशे च कृते रूपमिदम् ।
9. 'कर्त्तरि शप्'–अष्टा. 3/1/68 ।
10. 'अदिप्रभृतिभ्यः शपः'–अष्टा. 2/4/72 ।
11. अष्टा. 7/1/73 ।
12. 'इगन्ते नपुंसके सम्बुद्धिविषये प्रत्ययलक्षणप्रतिषेधो न भवती'ति वचनार्थः ।

नास्ती' तिवचनस्य [1]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रासौ व्यर्थः । तथाहि 'इगन्तस्य नपुंसकस्याङ्गस्याजादौ विभक्तौनुमागमो भवती'त्यर्थकेऽस्मिन्सूत्रे 'अची'तिशब्दः त्रपुशब्दात् सम्बोधने प्रथमैकवचने 'हेत्रपो'इत्यत्र नुमोऽभावायोपात्तः । स चास्य वचनस्याभावे व्यर्थः । सत्यपि हि नुमि 'हे त्रपुन्सु'–इत्यवस्थायां 'स्वमोर्नपुंसका'[2]दि ति सोर्लुकि कृते 'नलोपः [3]प्रातिपदिकान्तस्ये'ति नलोपे सतीष्टस्य रूपस्य सिद्धिः सुलभा । न च 'त्रपुभ्या'मित्यादौ व्यञ्जनादिविभक्तौ नुमोऽभावायासौ चरितार्थ इतिशङ्क्यम् । यतोऽत्र कृतेऽपि नुमागमे 'नलोपः प्रातिपदिकान्तस्ये'त्यनेन[4]नलोपे कृते नास्ति कश्चन रूपभेदः । न च 'हे त्रपो'–इत्यत्र नुमागमे 'नलोपः प्रातिपदिकान्तस्ये'ति[5]प्राप्तस्य नलोपस्य 'न ङिसम्बुद्ध्योरि'रिति[6] प्रतिषेधात् प्राप्ताया अनिष्टरूपाऽऽपत्तेर्वारणायात्रासौ शब्दश्चरितार्थ इत्यपि

---

1. तथाहि–
(क) "एवं तर्हि सिद्धे सति यदजग्रहणं करोति तज्ज्ञापयत्याचार्यो 'भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति । किमेतस्य ज्ञापने प्रयोजनम् ? । हेत्रपु हेत्रपो । अत्र गुणः सिद्धो भवती" त्याह पत. व्या. म. भा. 7/1/2/73 ।
(ख) "अचीति किम् ? उत्तरार्थम् । यद्येवं तत्रैव कर्तव्यम् ? इह तु करणस्य एतत्प्रयोजनम्– हे त्रपो इत्यत्र नुम्माभूदिति, 'नङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः स्यात् । ननु च 'न लुमताङ्गस्य'इति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति ? एतदेवाज्ग्रहणं ज्ञापकम्–प्रत्ययलक्षणप्रतिषेधोऽत्र न भवतीति । तथा च सम्बुद्धिगुणः क्रियते"– इत्याह वाम. का. 7/1/73 ।
(ग) "यदि ह्यत्र प्रत्ययलोपलक्षणप्रतिषेधः स्यात्, अज्ग्रहणमनर्थकं स्यात्, कृतञ्च, तस्मादेतदेवाज्ग्रहणं ज्ञापयति–प्रत्ययलोपलक्षणप्रतिषेधोऽत्रेगन्ते नपुंसके सम्बुद्धिविषये नास्तीति"–इत्याह जि. बु. न्या. 7/1/73 ।
(घ) "इकोऽचि विभक्तावित्यत्र (7/1/73) अचीति किमर्थम् । हलि नुम्माभूत् त्रपुभ्यामिति । नैतत् । नकारलोपो भविष्यति । तर्हि इगन्तात् क्लीबात् संबुद्धौ हलि नुम्माभूत् यतोऽत्र न ङिसम्बुद्ध्योरिति (8/2/8) प्रतिषेधोऽस्ति । न(नु) च 'न लुमतेति' (1/1/63) प्रत्ययलक्षणप्रतिषेधात् विभक्तिरेव नास्ति इति । एवं तर्हि-इदमेवाचीति ज्ञापकम् । प्रत्ययलक्षणनिषेधोऽत्र नास्तीति । तेन प्रत्ययलोपलक्षणात् हेवारे हे त्रपो इति संबुद्धि- गुणो भवती"त्याह पु. दे. ज्ञा. समु. पञ्चविंशे युवपादे पृ. 89 ।
(ङ) "इकोऽचि (सू. 7/1/73) अज्ग्रहणं ज्ञापयति भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 186 ।
2. अष्टा. 7/1/23 ।
3. अष्टा. 8/2/7 ।
4. अष्टा. 8/2/7 ।
5. अष्टा. 8/2/7 ।
6. अष्टा. 8/2/8 ।

शङ्कनीयम् । यतोऽत्र सोर्लुकि [1]'नलुमन्ताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधाद् विभक्तेरभावादेव नुमोऽभावः सुलभः । ज्ञापिते चास्मिन्वचने 'हेत्रपो' इत्यादौ [2]प्रत्ययलक्षणेन प्राप्तस्य नुमो वारणायात्रासौ शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'हेत्रपो'–इत्यत्र सम्बुद्धेर्लोपेऽपि[3] प्रत्यय-[4]लक्षणेन-सम्बुद्धिपरकत्वात्[5]'ह्रस्वस्य गुणः' इतिगुणस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि प्रत्यय-लक्षण-प्रतिषेधस्यात्र[6]दुर्वारतया संबुद्धिपरकत्वाभावात् [7]'ह्रस्वस्य गुणः' इति गुणो न सिद्ध्येत् ।

## 'अची'तिशब्द

[8]'द्विर्वचनेऽची'तिसूत्रे 'अची'तिशब्दः 'स्थानिनि सति यद्रूपं तदादेशेऽपि भवती'-त्यर्थकस्य 'स्थानिवत्त्वातिदेशोऽत्र रूपातिदेशः' इति वचनस्य [9]ज्ञापकः । यतोऽस्य

---

1. अष्टा. 1/1/63 ।
2. अष्टा. 1/1/62 ।
3. 'स्वमोर्नपुंसकात्'–अष्टा. 7/1/23 ।
4. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
5. 'अष्टा. 7/3/108 ।
6. 'नलुमताङ्गस्य'–अष्टा. 1/1/63 ।
7. अष्टा. 7/3/108 ।
8. अष्टा. 1/1/59, 'द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव कर्तव्ये'–इति सूत्रार्थः ।
9. तथाहि–
   (क) "यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो-रूपं स्थानिवद्भवतीति । कथं कृत्वाज्ञापकम् ? । अज्ग्रहणस्यैतत्प्रयोजनम्–इहमाभूत् जेघ्रीयते देध्मीयते इति । यदि च रूपं स्थानिवद्भवति ततोऽज्ग्रहणमर्थवद्भवति । अथ हि कार्यं, नार्थोऽज्ग्रहणेन । भवत्येवात्र द्विर्वचन"मित्याह पत. व्या. म. भा. 1/1/8/58 ।
   (ख) "रूपातिदेशश्चायं नियतकालः, तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते"–इति ग्रन्थेनात्र वचने ज्ञापकत्वमस्य सूचयति जया. का. 1/1/59 ।
   (ग) "कुतः पुनरेष निश्चयः-रूपातिदेशश्चायमिति ? अज्ग्रहणात् । तस्य ह्येतत् प्रयोजनम्–जेघ्रीयते देध्मीयत इत्यत्र माभूदिति । यदि चायं द्विर्वचने कार्यातिदेशः स्यान्न रूपातिदेशः, अज्ग्रहणमनर्थकं स्यात् । भवत्वत्र स्थानिवद्भावः, एवमपि भवितव्यम्उभयत्रापि साच्कत्वात्, ततश्च कथमेतत् प्रत्युदाहरणम् ? तदेतदज्ग्रहणंकथमर्थवद्भवति ? यद्येषरूपातिदेशः, रूपेऽस्यातिदिश्यमाने यद्यज्ग्रहणं न क्रियते तदिहापि रूपातिदेशे सति घ्रा इति ध्मा इति च द्विर्वचनं स्यात्, तथाऽनिष्टमभ्यांसरूपं प्रसज्येत । तस्मादज्ग्रहणाद्रूपातिदेशोऽयमिति निश्चीयते । यद्येवं भेदनिबन्धनो वर्तिर्न प्राप्नोति, स्थान्येव हि पुनरात्मीयं रूपं प्रापित इति कुतो भेदः ? आतिदेशिकानातिदेशिकत्वेन रूपभेदस्य विवक्षितत्वाददोषः"– इत्याह जि. बु. न्या. 1/1/59 ।

वचनस्याभावेऽत्रासौ शब्दो व्यर्थः। तथाहि–सूत्रेऽस्मिन् 'अची'तिशब्दः [1]'जेघ्रीयते'–इत्यादौ [2]स्थानिवत्त्वाभावसम्पादनद्वारा 'घ्री'–इत्यस्य द्वित्वार्थमुपात्तः। स चास्य वचनस्याभावे व्यर्थः। यतो [3]घ्राधातोर्यङि [4]तदन्ताल्लटि ते धातोराकारस्य [5]ईत्वे कार्यातिदेशे 'घ्री'इत्यस्य द्वित्वरूपकार्यमेवाऽनेनातिदिश्येतेति आकाररूपातिदेशाभावात् स्थानिवत्त्वेऽपि 'घ्री'–इत्यस्य च [6]द्वित्वं सूत्रेऽस्मिन् 'अची'तिशब्दाभावेऽपि सुलभम्। ज्ञापिते चास्मिन् वचने 'जेघ्रीयते'–इत्यादौ यङो द्वित्वनिमित्तत्वात् तस्मिन् परे आकाराऽऽदेशस्य ईकारस्य स्थानिवद्भावेन रूपातिदेशे 'घ्रा'–इत्यस्य द्वित्वे 'जघ्रायते'इत्याद्यनिष्टरूपाऽऽपत्तिः स्यादिति तद्वारणाय शब्दोऽयमत्र स्वांशे चरितार्थो भवति। यतोऽत्र [7]यङो[8]द्वित्वनिमित्तस्याप्यच्त्वं नास्तीति तस्मिन्परत ईकारस्य स्थानिवत्त्वेन आकाररूपातिदेशोऽत्राऽचीतिशब्दोपादाने सति न भवतीति 'घ्री' शब्दस्य द्वित्वेनेष्टं रूपं सिद्ध्यति। ज्ञापकसिद्धवचनस्यास्य फलं तु [9]'चक्रतु'रितिरूपसिद्धिः। यतोऽत्र 'कृ अतुः'–इत्यवस्थायां [10]यणादेशे कृतेऽपि तस्य स्थानिरूपातिदेशात् 'कृ'इति अकारविशिष्टस्य [11]द्वित्वे रूपमिदं सिद्ध्यति। अस्य वचनस्यासत्त्वे हि कार्यातिदेश एवात्र स्यादिति 'कृ'–इत्यस्य रूपस्यानतिदेशान्नास्य द्वित्वं स्यात् किन्तु यण्विशिष्टरूपस्यैव स्यादिति नेदं रूपं सिद्ध्येत्।

---

(घ) कथं पुनरवगम्यते रूपातिदेशोऽयमिति ? अज्ग्रहणात्। तद्धि जेघ्रीयत इत्यत्र 'ईघ्राध्मोः' इति हलादौ विहितस्येत्वस्य स्थानिवत्त्वं माभूदित्येवमर्थं क्रियते। यदि च रूपं स्थानिवत्, ततोऽसत्यज्ग्रहणे घ्राय् (घ्रीय) घ्राय्' ध्माय् (ध्मीय) ध्माय्'इतिद्विर्वचनं स्यादिति तन्निवृत्तयेऽज्ग्रहणमर्थवद्भवती''त्याह ह. मि. पदम. 1/1/59।

(ङ) '' 'द्विर्वचनेऽचि' (सू. 1/1/59) अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य। जेघ्रीयत इति हि तत् प्रत्युदाहरण''मित्याह श्रीना. ज्ञा. सं. 1, पृ. 31।

1. 'घ्रा गन्धोपादाने'धा. पा. भ्वा. 926, इति घ्राधातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'–अष्टा. 3/1/22, इतियङ्प्रत्यये 'ईघ्राध्मोः'–अष्टा. 7/4/31, इत्यनेन धातोराकारस्य ईकारे 'घ्री'–इत्यस्य 'सन्यङोः'अष्टा. 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे चुत्वे जश्त्वे 'गुणोयङ्लुकोः'–अष्टा. 7/4/82, इत्यभ्यासस्य गुणे टितष्टेरेत्वे च कृते रूपमिदम्।
2. 'आदेशः स्थानिवत्स्यादित्यर्थकिन'द्विर्वचने'–इत्यनेनेतिशेषः।
3. 'घ्रा गन्धोपादाने' धा. पा. भ्वा. 926।
4. 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'–अष्टा. 3/1/22।
5. 'ई घ्राध्मोः'–अष्टा. 7/4/31।
6. 'सन्यङोः'–अष्टा. 6/1/91।
7. 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'–अष्टा. 3/1/12।
8. 'सन्यङोः'–अष्टा. 6/1/9।
9. 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोर्लिटि परस्मैपदे प्रथमपुरुषद्विवचने रूपम्।
10. 'इको यणचि'–अष्टा. 6/1/77।
11. 'लिटि धातोरनभ्यासस्य'–अष्टा. 6/1/8।

भट्टोजिदीक्षितस्तु 'आदेशनिषेधपक्षोऽपि सूत्रेऽस्मिन् भाष्यारूढः[1], आदेशमङ्गी-कृत्य पुनः स्थानिरूपाऽऽश्रयणापेक्षया '[2]प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति-न्यायान्निषेधपरतया व्याख्यानमेव लघु च भवतीति विभाव्य 'आदेशनिषेधपक्षमेव स्वीकृत्य सूत्रस्यास्य 'द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये' इत्यर्थमाह[3] । 'अजादेशः स्थानिवत्स्या'दिति भाष्य-वृत्ति-सम्मतरूपातिदेशपक्षे, निषेधपक्षे चात्र फलं तुल्यम् ।

## 'अच्वा'विति शब्दः

[4]'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' - इति सूत्रे 'अच्वा'वितिशब्दः 'भवति च बहुव्रीहौ [5]तद्गुणसंविज्ञानमिती'ति परिभाषाया [6]ज्ञापकः । यतोऽस्या अभावेऽत्र 'अच्वा'वितिशब्दो व्यर्थः । च्विरर्थो येषां

1. व्या. म. भा. 1/1/8/58 ।
2. अयं न्यायः प्रौ. मनो. प. प्र. पृ. 64, आह भ. दी. ।
3. वै. सि. कौ. भ्वा. प्र. पृ. 37 ।
4. अष्टा. 3/2/56 ।
5. (क) व्याडिः प. सू. प. 8, पृ. 6 ।
   (ख) 'बहुव्रीहौ तद्गुणसंविज्ञानमपि'- पु. दे. ल. प. वृ. प. 6, पृ. 115 ।
   (ग) 'बहुव्रीहौ तद्गुणसंविज्ञानमपि' - सी. दे. बृ. प. वृ. प. 42, पृ. 210।
   (घ) 'भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि' - नी. दी. प. वृ. प. 56, पृ. 304 ।
   (ङ) 'बहुव्रीहौ तद्गुणसंविज्ञानमपि' - ह. भा. प. भास्क. प. 44, पृ. 342 ।
   (च) 'बहुव्रीहौ तद्गुणसंविज्ञानमपि' भ. ना. प. शे. प. 78, पृ. 302 ।
   (छ) 'बहुव्रीहौ तद्गुणसंविज्ञानमपि' - शेषा. प. भास्क. प. 66, पृ. 435 ।
6. तथाहि–
   (क) "भवति च बहुव्रीहौ तद्गुणसंविज्ञानमिति' । कथम् । यद्यय माख्यादिषु 'च्व्यर्थेषु' (3/2/56) इत्युक्त्वा अच्वाविति प्रतिषेधं करोति । कथम् । च्विरर्थः येषामुपपदानां तानि च्व्यर्थानि । तेषु च्व्यर्थेषु । अन्यपदार्थत्वाद् बहुव्रीहिः । च्विरर्थो येषां तेषूपपदेषु भविष्यति नैव च्विः प्राप्नोति, नार्थः प्रतिषेधेन । एतत् पश्यति अस्तीयं परिभाषा च्व्यर्थेषु च्वावपि प्रसज्येत । तस्मात् प्रतिषेधः । किमेतस्या ज्ञापने प्रयोजनम् । 'सर्वादीनिसर्वनामानि' (1/1/27) इत्यत्र सर्वनामसंज्ञा, 'भूवादयोधावः' (1/3/1) इति च धातुसंज्ञा भवति । बहुव्रीहौ तद्गुणसंविज्ञानात् । सर्वशब्दस्य सर्वनामसंज्ञायां च णत्वं प्राप्तं निपातनान्न भवती"त्याह व्याडिः प. सू. प. 8, पृ. 6 ।

तेषूपपदेषु भविष्यति नैव हि आढ्यीकुर्वन्त्यनेनेत्यत्र च्वौ प्राप्नोति । ज्ञापितायां चास्यामनवा च्व्यर्थेषु च्वावपि प्राप्नोतीति तत्र ख्युनः प्रतिषेधार्थमयंशब्दः स्वांशे चरितार्थोभवति । ज्ञापिताया अस्याः फलं सर्वशब्दस्य 'सर्वादीनि[1]सर्वनामानीति सर्वनामसंज्ञायाः 'भू'धातोः '[2]भूवादयो धातवः' इतिधातुसंज्ञायाश्च सिद्धिः । अस्याः सत्त्वेहि 'यत्र संयोग - समवायान्यतरसम्बन्धेन वर्तिपदार्थोऽन्यपदार्थविशेषणम्, तत्र तद्गुणसंविज्ञानम् । अन्यत्र अतद्गुणसंविज्ञानं भवति । ज्ञापकोऽयं न भाष्यसम्मतः । [3]यतस्तत्रोत्तरार्थमच्वाविति[4] प्रतिषेध इत्युक्तम् ।

## 'अढे'इति शब्दः

[5]'भस्याऽढे, तद्धित'इति वार्तिकेऽढेति प्रतिषेधवाचकः शब्दः 'संनियोगशिष्टानामन्यतरापाये उभयोरप्यपाय, इति [6]परिभाषाऽनित्ये'तिवचनस्य[7]ज्ञापकः ।

---

(ख) "तद्गुणग्रहणे चात्र 'आढ्यसुभगस्थूल.' (3/2/56) इतिसूत्रे च्व्यर्थेष्वित्युक्तत्वादच्वाविति ज्ञापकम् । यदि ह्यतद्गुण एव बहुव्रीहिः स्यात्तदा च्विरर्थो येषामिति उपलक्षणत्वादेव च्व्यन्तस्य न भविष्यति । किमच्वावित्यनेन । कृतं च ततो ज्ञापयति" - इत्याह पु. दे. ल. प. वृ. प. 6, पृ. 115 ।

(ग) "ज्ञापकं चात्र आढ्यादि (3/2/56) सूत्रे च्व्यर्थेष्वित्युक्त्वाऽच्वाविति निषेधवचन"मित्याह सी. दे. बृ. प. वृ. प. 42, पृ. 210 ।

(घ) "गुणो विशेषणंलम्बकर्णादि । स गुणो यत्रास्ति स तद्गुणः विशेषणविशिष्टः संविज्ञानं भवति । यथा लोके 'लम्बकर्णमानय' इत्यत्र । 'आढ्यादि (3/2/56) सूत्रे 'च्व्यर्थेषु' - इत्युक्त्वा 'अच्वौ' इतिवचनाज्ज्ञापका"दित्याह ह. भा. प. भास्क. प. 44, पृ. 342 ।

1. अष्टा. 6/1/27 ।
2. अष्टा. 1/3/1 ।
3. व्या. म. भा. 3/2/1/56 पृ. 224 ।
4. 'कर्त्तरि भुवः खिष्णुच् - खुकञौ' - अष्टा. 3/2/57 ।
5. वा. व्या. म. भा. 6/3/2/35 वा. 'भस्याढे तद्धिते पुंवद्भावो वक्तव्यः' का. 6/3/35 । वा. वै. सि. कौ. - बहुव्रीहिसमास प्र. पृ. 490 ।
6. (क) व्याडिः प. सू. प. 41, पृ. 20 ।
   (ख) पु. दे. ल. प. वृ. प. 65, पृ. 140 ।
   (ग) सी. दे. बृ. प. वृ. प. 72, पृ. 236 ।
   (घ) नी. दी. प. वृ. प. 77, पृ. 308 ।
   (ङ) ह. भा. प. भास्क. प. 74, पृ. 354 ।
   (च) भ. ना. प. शे. प. 87, पृ. 319 ।
   (छ) शेषा. प. भास्क. प. 74, पृ. 442 ।
7. तथाहि–
   (क) "क्वचित्त्वेषा परिभाषा नाश्रीयते । यथा'श्यैनेय'इत्यादौ यस्येतिलोपेन निवृत्तेऽपीकारे तत्सन्नियुक्तो नकारो न निवर्तते । तथा च 'स्त्रियाः पुंवदित्यत्रोक्तम् - 'एतभार्य'

यतोऽस्या अभावेऽत्र 'अढे'इति प्रतिषेधवाचकः शब्दो व्यर्थः । तथाहि - अत्र वार्तिकेऽढे इतिशब्दः 'श्यैनेयः[1]' - इत्यादौ पुंवद्भावप्रतिषेधायोपात्तः । अस्य वचनस्याभावे हि – [2]'संनियोगशिष्ट' - परिभाषयात्र '[3]यस्येतिचे'ति सूत्रेण ङीप इकारलोपे तत्संनियोगशिष्टस्य नकारस्यापि निवृत्तौ पुंवद्भावे 'कृतेऽकृते च'श्यैतेयः' इत्याद्येव रूपं स्यात् । तथा सति पुंवद्भावप्रतिषेधेऽपि रूपे विशेषाभावात् पुंवद्भाव-प्रतिषेधायोपात्तोऽयं शब्दो व्यर्थः । ज्ञापिते चाऽस्मिन् वचनेऽत्र पुंवद्भावप्रतिषेधे कृतेऽनेन वचनेन 'यस्येतिचेति लोपे कृतेऽपि तत्संनियोगशिष्टस्यापि नकारस्याऽनिवृत्तौ' श्यैतेयः 'इत्यनिष्टरूपमापद्येतेति 'श्यैनेयः' इत्यादीष्टप्रयोग-सिद्धयेऽसौ शब्दोऽत्र स्वांशे चरितार्थो भवति ।

---

इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययमात्रस्य निवृत्तिः क्रियतेऽर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्ये- तेति"ग्रन्थेन कैयटोऽस्यैतद्वचनस्य ज्ञापकत्वं सूचयति- प्रदी. 6/4/4/153 ।

(ख) "अनित्यत्वं चास्याः 'भस्याढे तद्धिते' (6/3/35 वा.) इति 'अढे'पुंवद्भाव- निषेधेन ज्ञापितम् । अत्र हि 'अढे' इति किं श्यैनेयो रौहिणेयः' इति प्रत्युदाहृतम् । यदि चेयं नित्या स्यात्तदा 'यस्येति च (6/4/148) इतिलोपे कृते नकारोपि निवृत्तः, इति - श्यैतेयो रौहितेय इति स्यात् । ततः पुंवद्भावरूपेणाविशेषादढ इति - निर्देशोऽनर्थकः स्यादिती"त्याह पु. दे. ल. प. वृ. प. 65, पृ. 140 ।

(ग) "अनित्या चेयम् । तच्चानित्यत्वं 'भस्याढे तद्धिते' इत्यढ इति पुंवद्भावप्रतिषेधेन ज्ञापितम् । तत्र ह्यढ इति किमित्युक्त्वा श्यैनेयो रौहिणेयः इति प्रत्युदाहृतम् । यदिचेयं नित्या स्यात्तदा 'यस्येतिच' (6/4/148) इतिलोपे कृते संनियोगपरिभाषया नकारस्यापि निवृत्तिः स्यात् । ततश्च पुंवद्भावेऽविशेषादढे इति प्रतिषेधोऽनर्थकः स्या"दित्याह सी. दे. बृ. प. वृ. प. 72, पृ. 237 ।

(घ) "अनित्या चेयं 'भास्याढे.' (6/3/35 वा. 11) इत्यत्र 'अढे-'इतिप्रषेधात् । यदि च कृतेऽप्येतस्मिन् 'रौहिणेय इत्यादौ' यस्येतिच' (6/4/148) इतिलोपे कृतेऽनया परिभाषया ङीप्संनियोगशिष्टो नकारो निवर्तेत तर्हि स व्यर्थः स्या"दित्याह ह. भा. प. भास्क. प. 74, पृ. 354 ।

1. श्येतशब्दात् स्त्रीत्वे 'वर्णादनुदात्तात्तोपधात्तो नः' - अष्टा. 4/1/39, इतिङीपि तकारस्य च नकाराऽऽदेशे कृते निष्पन्नात् श्येनशब्दादपत्यार्थे 'स्त्रीभ्यो ढक्' - अष्टा. 4/1/120, इतिढकि 'कितिच' - अष्टा. 7/2/118, इत्याद्यचो वृद्धौ ढस्य 'आयनेयीनीयियः फढ - ख - छ - घां प्रत्यापादीनाम्' - अष्टा. 7/2/2, इति एयादेशे 'भस्याढेतद्धिते' - वा. व्या. म. भा. 6/3/2/35, इतिपुंवद्भावाभावे 'यस्येतिच' - अष्टा. 6/4/148 इतीकारलोपे 'संनियोग' - शिष्टपरिभाषाया अनित्यत्वेनेहाप्रवृत्त्या नकारस्य निवृत्त्यभावे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
2. 'सन्नियोगशिष्टानामन्यतरापाये उपयोरप्यपायः' -प. शे. प. 87, पृ. 319 ।
3. अष्टा. 6/4/148 ।

न चात्र प्रयोगेषु 'यस्येतिचे'तीकारलोपे सति 'अचः पर[1]स्मिन्पूर्वविधा'वित्यनेन, 'प्रत्ययलोपे [2]प्रत्ययलक्षण'मित्यनेन, 'असिद्धं [3]बहिरङ्गमन्तरङ्गे'इति परिभाषया वाङीप्सन्नियोगोऽस्त्येवेति 'संनियोगशिष्ट-' न्यायो न प्रवर्तेत, तथा सति नकारंनिवृत्तेरभावात् पुंवद्भावप्रतिषेधाभावे श्यैनेय इत्येव रूपं सिद्ध्यतीति । ज्ञापितेऽप्यस्मिन् वचने नास्य स्वांशे चारितार्थ्यं, रूपे विशेषाभावादिति शङ्क्यम् । यतः स्थानिद्भावाऽऽदिना कार्यं क्रियते, न तु लुप्तवर्णसन्निधानम् । तथा सति ईकारलोपे तत्संनिधानस्या- भावादत्र प्रयोगेषु संनियोगशिष्टन्यायप्रवृत्तेर्दुर्वारतया नकारनिवृत्तौ श्यैतेयः' इत्याद्यापद्येतेति श्यैनेयः इत्यादीष्टप्रयोगसिद्ध्येऽसौ शब्दः पुंवद्भावप्रतिषेधाय स्वांशे चरितार्थो भवति । अस्य वचनस्याभावे हि पुंवद्भावे कृतेऽकृते च 'संनियोग - शिष्ट - 'न्यायेनात्र प्रयोगेषु नकारनिवृत्तौ श्यैतेय इत्याद्येव प्रयोगाः स्युरतोऽस्य शब्दस्य वैयर्थ्यं दुर्निवारं स्यात् । न चैवमत्रास्य वचनस्याभावेऽपि संनियोगशिष्ट - 'परिभाषाया अनुपस्थानं शङ्क्यम् । यतो ज्ञापकप्रामाण्यात् 'सन्नियोगशिष्ट' - परिभाषाया अपायमात्रे प्रवृत्तिः स्वीक्रियते, न तु अन्यतरस्यासन्निधाने । अन्यथा 'बैल्वकाः' इत्यादौ छस्य लुक्यपि कृते कुको निवृत्तिर्न प्राप्नोति प्रत्ययलक्षणादिना तस्य विद्यमा:नत्वादिति'बिल्व- कादिभ्यश्छस्य[4]लुगि'ति सूत्रस्थछग्रहणस्य 'संनियोगशिष्ट' - परिभाषाज्ञापकत्वमपि नोपपद्येत ।

ज्ञापितस्यास्य वचनस्य फलं तु 'श्रौत्र[5]'मित्यत्र श्रोत्रभावस्यानिवृत्तिः । अस्य वचनस्याभावे हि श्रौत्रमित्यत्र 'श्रोत्रियस्य[6]घलोपश्च वाच्यः' इति घे निवृत्ते तत्संनियोगशिष्टः श्रोत्रभावोऽपि निवर्तेत । न चात्र 'अचः [7]परस्मन् पूर्वविधौ'इति स्थानिवद्भावो घकारस्य संभवति । अनजादेशत्वात् [8]प्रत्ययलक्षणेन सन्निधानमाश्रित्य एतद्वचनं विनाप्यत्र श्रोत्रभावसमर्थनमपि कर्तुमशक्यम्। यतस्तथा सति 'धर्मिग्राहकमान-विरोधोऽत्र वज्रलेपः स्यात् । बैल्वकमित्यत्रापि हि छस्य लुकि प्रत्ययलक्षणेन

---

1. अष्टा. 1/1/57 ।
2. अष्टा. 1/1/61 ।
3. ना. प. शे. प. 51, पृ. 184 ।
4. अष्टा. 6/4/153 ।
5. 'वेदाध्येता श्रोत्रियः । 'श्रोत्रियंश्छन्दोऽधीते' - अष्टा. 5/2/84, इति वेदपर्यायाच्छन्दःशब्दाद् द्वितीयान्तादधीत इत्यर्थे घन्प्रत्ययः प्रकृतेः श्रोत्राऽऽदेशश्च निपातितः । ततः श्रोत्रियस्य भावः "श्रौत्रम्"इत्यर्थे 'हायनान्तयुवादिभ्योऽण्' - अष्टा. 5/1/130, इति सूत्रस्थेन 'श्रोत्रियस्य यलोपश्च वाच्यः' इति वार्तिकेन श्रोत्रियशब्दादणि इकारादुत्तरस्य यकाराकारसंघातस्य तस्य च लोपे 'यस्येति च' अष्टा. 6/4/148 इति इकारलोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषुरूपमिदम् ।
6. वा. का. 5/1/130 ।
7. अष्टा. 1/1/57 ।
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/61 ।

तत्सन्निधानं वक्तुं शक्यमिति 'बिल्वकादिभ्यश्छस्य लुगि'ति[1] सूत्रस्थच्छग्रहणस्य ज्ञापकत्वं नोपपद्येत । नाप्यत्र 'न लुमताङ्गस्ये'ति[2] प्रत्ययलक्षणप्रतिषेधः शङ्क्यः । यतोऽङ्गकार्ये तत्प्रतिषेधः प्रवर्तते । न चात्र छसन्निधानमङ्गकार्यं किन्त्वनङ्गकार्यमेव । तस्मात् श्रोत्रमित्यत्र श्रोत्रभावस्यानिवृत्तिरेतद्वचनफलमिति [3]निश्चप्रचम् ।

अत्र "टिलोपेनैव संनियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भाववचनं संनियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन श्यैनेय इत्यादिसिद्धं भवती[4]"ति कैयटेनोक्तम् । तन्न युक्तमिति भट्ट[5]नागेशो मनुते । यतः इडविडमाचष्टे [6]ऐडबिडयतीत्यादौ पुंवद्भाववचनं सार्थकम् । पुंवद्भावाभावे हि स्त्रीत्वप्रयुक्ताञो लुको निवृत्तिर्न स्यात् । तथा सति ऐडविडयतीति रूपमिष्टं न सिद्ध्येत् । तस्मादत्र वचने 'अढेति' शब्द एव ज्ञापक इति मन्यते ।

('ज्ञापका वार्तिकांशा' इति प्रघट्टके स्थापनीयस्याप्यस्य ज्ञापकस्य स्थापनमत्र प्रमाद- प्रसूतमित्यनवधान कृपया क्षन्तव्यम्) ।

## 'अणि'ति शब्दः

'अणुदित्सवर्णस्य[7] चाप्रत्ययः' इति सूत्रेऽणि'तिशब्दः 'अभेदका[8]गुणाः' इति - परिभाषाऽनित्येति वचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याभावे

---

1. अष्टा. 6/4/153 ।
2. अष्टा. 1/1/63 ।
3. "श्रोत्रियस्य घन्लोपश्चे'ति घे निवृत्तेऽपि श्रोत्रभावो न निवर्तत इति तत्राऽनित्या परिभाषेति प्रतिविधेय"मित्युक्तं हि कैयटेन प्रदी. 6/4/4/153, पृ. 961, तथा "श्रोत्रियस्येत्यादि त्वनित्यफलमेवे"त्युक्तं हि भट्टनागेशेन तत्रैव उद्यो. 1 ।
4. प्रदी. 6/4/4/155 ।
5. अनेन हि - 'यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम् । अन्यथैतयतीत्यादौ टिलोपेन ङीपि निवृत्ते संनियोगशिष्टपरिभाषया तस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यमेवेति 'टे'रितिसूत्रे कैयटः - तन्न । इडबिडमाचष्टे ऐडबिडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात् । ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः" इत्युक्तम् प. शे. प. 87, पृ. 321 - 322 ।
6. इडबिडोऽपत्यं स्त्रीत्यर्थे इडविड्शब्दात् 'जनपदशब्दात् क्षत्रियादञ्' - अष्टा. 4/1/168, इति 'तेतद्राजाः' - अष्टा. 4/1/174, इति तद्राजसंज्ञके अञि प्रत्यये कृते तस्य 'अतश्च' - अष्टा. 4/1/177, इति स्त्रियां लुकि इडबिट् तामाचष्टे इत्यर्थे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति. ग. सू. वै. सि. कौ. चुरादि प्र. पृ. 238 इति णिचि इष्ठवद्भावप्रयुक्तपुंवद्भावे स्त्रीत्वप्रत्युक्तस्य अञो लुको निवृत्तौ 'ऐडबिडि' इति ण्यन्तस्य 'सनाद्यन्ताधातवः' - अष्टा. 3/1/32, इति धातुत्वे लटि तिपि शपि गुणायादेशेषु कृतेषु रूपमिदम् ।
7. अष्टा. 1/1/69 ।
8. (क) 'अभेदका इह शास्त्रे गुणाः' - पु. दे. ल. प. वृ. प. 57, पृ. 138 ।
   (ख) 'अभेदका इह शास्त्रे गुणाः' - सी. दे. बृ. प. वृ. प. 80, पृ. 241 ।

गुणानामभेदकतयाऽकृतेऽप्यण्ग्रहणेऽत्र तद्बोध्यानां समेषां सवर्णानां बोधः स्यादित्यण्शब्दो व्यर्थः । ज्ञापिते चास्मिन्वचने गुणानां भेदकत्वस्यापि सम्भवात् सर्वेषामण्बोध्यानां सवर्णानां ग्रहणाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अनुदात्तादेरञ्'[1] 'अनुदात्तादेश्च'[2] इत्यत्र गुणस्य भेदकतयाऽननुदात्तादेरञाद्यभाव-सिद्धिः ।

## 'अणि'ति शब्दः

'अणो [3]प्रगृह्यस्यानुनासिकः' - इत्यत्र 'अ'णितिशब्दः 'अणोऽप्रगृह्येत्यत्राण्पूर्वेणैवेति, वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याभावे '[5]दधि' - इत्यादावनुनासिकार्थमारब्धेऽस्मिन्सूत्रे शब्दोऽयं व्यर्थः । परेण णकारेणात्र हि यद्यण्गृह्येत तर्हिअच इत्येव ब्रूयात् । न च हयवरलानामपि अनुनासिकविधानार्थमत्र 'अ'णितिशब्दश्चरितार्थ इति शङ्क्यम् । यतो 'नञिवयुक्त[6]' - न्यायेनात्र प्रगृह्यभिन्नस्य प्रगृह्यसदृशस्य चाप्रगृह्यपदेन ग्रहणात् अच एव प्रगृह्यसंज्ञासद्भावात् प्रगृह्यभिन्नः अन्त्येन तत्सदृशः अजेवाप्रगृह्यशब्देन ग्रहीतुं शक्येतेति अच इति वक्तव्ये अण इत्युक्तिर्व्यर्थैव । ज्ञापिते चास्मिन्वचने 'अ इ उ' - इत्येतेषामेवात्र ग्रहणं भवतु नान्येषामित्येतदर्थमत्र शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'कर्तृ' 'हर्तृ' इत्यादौ ऋकारस्यानुनासकित्वाभावः[7] । अस्य वचनस्यासत्त्वे हि अकारस्याप्यण्पदेन ग्रहणसम्भवादत्रानुनासिकत्वा[8]ऽऽपत्तिर्दुर्वारा स्यात् ।

---

(ग) नी. दी. प. वृ. प. 107, पृ. 312 ।
(घ) 'अभेदका इह गुणाः' - ह. भा. प. भास्क. प. 83, पृ. 357 ।
(ङ) भ. ना. प. शे. प. 118, पृ. 352 ।
(च) 'अभेदका इह शास्त्रे गुणाः' - शेषा. प. भास्क. प. 101, पृ. 456 ।

9. तथाहि – " 'अणुदित्.' (1/1/69) सूत्रे अण्ग्रहणादनित्येयमिति ध्येय" मित्याह नी. दी. प. वृ. प. 107, पृ. 312 ।
1. अष्टा. 4/2/44 ।
2. अष्टा. 4/3/140 ।
3. अष्टा. 8/4/57 ।
4. तथाहि–
   (क) "एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण, यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात्, 'अचोऽप्रगृह्यस्यानुनासिकः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात्, अच एव हि प्रगृह्या भवन्ति" इत्याह पत. व्या. म. भा. 1/2/2 । लण् 6 ।
   (ख) 'अणोऽप्रगृह्यस्येत्यत्रापि अच इति **वक्तव्ये अण्ग्रहणात्** पूर्वेणैवे"त्याह श्रीना. ज्ञा. सं. 1, पृ. 10 ।
5. 'स्वमोर्नपुंसकात्' - अष्टा. 7/1/23, इतिस्वमोर्लुकि रूपम् ।
6. 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' भ. ना. प. शे. प. 75, पृ. 296 ।
7. 'अणोऽप्रगृह्यस्यानुनासिकः' - अष्टा. 8/4/57 ।
8. 'अणोऽप्रगृह्यस्यानुनासिकः' - अष्टा. 8/4/57 ।

## 'अ'णितिशब्दः

[1]'उरण्रपरः' - इत्यत्र 'अ'णितिशब्दः' 'उरण्' इत्यत्र परेण णकारेण प्रत्याहारः" इति वचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रासौ शब्दो व्यर्थः । ऋकारस्थाने हयवरलानामसम्भवात् 'अच एव ऋकारस्थानिकत्वसम्भवादत्र 'उरज्'- इति वक्तव्ये 'उरण्' - इत्युक्तिर्हि व्यर्था । न च 'अच्' 'अण्' - इत्यनयोः समानमात्रिकतया लाघवगौरवचर्चा नास्तीति शङ्क्यम् । यतः अण्पदेन अजुपस्थापिताक्षराधिकाक्षराणामप्युपस्थितिरित्युपस्थितिकृतगौरवमण्पदोच्चारणेऽक्षुण्णम् । ज्ञापिते चास्मिन् वचने ऋकाराऽऽदीनामत्र ग्रहणव्यावृत्त्यर्थम'णितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'मातॄणा' मित्यत्र ऋकारस्थाने भवतो दीर्घस्य[3]रपरत्वाभावः[4] । अस्य वचस्यासत्त्वे ह्यत्र ऋकारस्याप्यण्पदेन ग्रहीतुंशक्यतया तत्स्थाने जातस्य[5]दीर्घस्य [6]रपत्वाऽऽपत्तिस्तत्र दुर्वारा स्यात् ।

## 'अ'णिति शब्दः

[7]'केऽणः' - इत्यत्र 'अ'णितिशब्दः 'केऽण इत्यत्राण्पूर्वैणेवे'ति वचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याभावे 'ज्ञका[9]' [10]'कुमारिके'त्यादौ क्रमशः आकारस्य

---

1. अष्टा. 1/1/51 ।
2. तथाहि –
   (क) "एवं तर्हि - सामर्थ्यात्पूर्वेण, न परेण । यदि परेण स्यादण्ग्रहणनर्थकं स्यात् 'उरज्रपरः' इत्येव ब्रूयात्' - इत्याह पत. 1/1/2 । लण् 6 ।
   (ख) " 'उरज्रपर' इतिवक्तव्ये अण्ग्रहणात्पूर्वेणैवे"त्याह श्री. ना. ज्ञा. सं. 1, पृ. 10 ।
3. 'नामि' - अष्टा. 6/4/3, इति विहितस्येति शेषः ।
4. 'उरण्रपरः' - अष्टा. 1/1/51 ।
5. 'नामि' - अष्टा. 6/4/3 ।
6. 'उरण्रपरः' - अष्टा. 1/1/51 ।
7. अष्टा. 7/4/13 ।
8. तथाहि –
   (क) "एवं तर्हि सामर्थ्यात् पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् 'केऽचः' इत्येवब्रूयात् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति 'ह्रस्वो दीर्घःलुप्त इतीत्याह पत. व्या. म. भा. 1/1/2 लण् 6 ।
   (ख) "अतएव 'केऽण' (सू. 7/4/13) इत्यत्राण् पूर्वेणैवे"त्याह श्रीना. ज्ञा. सं. 1, पृ. 9।
9. 'जानातीति ज्ञा' इत्यर्थे 'ज्ञा अवबोधने' धा. पा. क्र्या. 1508, इति ज्ञाधातोः 'इगुपधज्ञाप्रीकिरः कः' - अष्टा. 3/1/135, इति कप्रत्यये आतोलोपे - तदन्ताट्टापि ज्ञा'- इति । ततः 'अज्ञाता ज्ञे'-त्यर्थे 'प्रागिवात् कः' - अष्टा. 5/3/70 'अज्ञाते' - अष्टा. 5/3/73, इति कप्रत्यये तदन्ताट्टापि पूर्वस्य आकारस्य ह्रस्वत्वे रूपम् ।
10. 'अज्ञाता कुमारी' इत्यर्थे कुमारीशब्दात् 'प्रागिवात् कः' - अष्टा. 5/3/70 'अज्ञाते' - अष्टा. - अष्टा. 5/3/73 इति कप्रत्यये तदन्ताट्टापि ईकारस्य 'केऽणः' अष्टा. 7/4/13, इति ह्रस्वे कृते रूपमिदम् ।

ईकारस्य च ह्रस्वार्थमत्रोपात्तोऽसौ व्यर्थः । [1]'अच'इति षष्ठ्यन्त-[1]पदोपस्थित्यातत्र तयोर्हि दीर्घः सुलभः । ज्ञापिते चास्मिन् वचने अण्पदेन 'अ इ उ' - इत्येतेषां त्रयाणामेव ग्रहणं भवतु नान्येषामित्येतदर्थमत्र सूत्रेऽसौ स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'गोका[2]' 'नौका[3]' - इत्यादौ क्रमशः ओकारस्य औकारस्य च [4]ह्रस्वाभावः । अस्य वचनस्यासत्त्वे तु अण्पदेन ओकारौकारयोरपि ग्रहणसम्भवादत्रापि तयोः [5]'केऽणः' इति ह्रस्वाऽऽपत्तिर्दुवारा स्यात् ।

## 'अ'णितिशब्दः

'ढ्रलोपे[6] पूर्वस्य दीर्घोऽणः' - इत्यत्र 'अ'णितिशब्दः 'ढ्रलोप, इत्यत्र पूर्वेण[7]णकारेणाण्प्रत्याहारो न[8]परेणे'ति वचनस्य[9]ज्ञापकः । यतोऽस्य वचनस्याभावे 'लीढ'मित्यादौ दीर्घार्थमत्रोपात्तोऽसौ शब्दो व्यर्थः । तथाहि – परेण[10]णकारेणात्राणो ग्रहणे '[11]अचश्च' इति परिभाषा सूत्रेण अचः इत्युपस्थित्यैव 'अ इ उ ऋ लृ ए ऐ ओऔ' इत्येतेषां वर्णानां दीर्घो हि सुलभः । नहि 'य् व् र् ल्' इत्येतेषां दीर्घस्य

---

1. 'अचश्च' - अष्टा. 1/2/28, इत्यनेनेतिशेषः ।
2. गोशब्दात् 'प्रागिवात् कः' - अष्टा. 5/3/70, 'अज्ञाते' - अष्टा. 5/3/73 इति कप्रत्यये टापि रूपम् ।
3. नौशब्दात् 'प्रागिवात् कः '-अष्टा. 5/3/70, 'अज्ञाते'-अष्टा. 5/3/73, इति कप्रत्यये टापि रूपम् ।
4. 'केऽणः' - अष्टा. 7/4/13 ।
5. अष्टा. 6/3/111 ।
6. 'अइउण्' - मा. सू. 1, इतिसूत्रस्थेनेत्यर्थः ।
7. 'लण्' - मा. सू. 6, इतिसूत्रस्थेनेत्यर्थः ।
8. तथाहि -
   (क) "एव तर्हि सामर्थ्यात् पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणनर्थकं स्यात्, 'ढ्रलोपे पूर्वस्य दीर्घोऽचः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् - अचो ह्येतद्भवति' 'ह्रस्वः दीर्घः' प्लुतइतीती"त्याह पत. व्या. म. भा. 1/1/2 लण् 6 ।
   (ख) "लण् (6) 'ढ्रलोप'इत्यत्र पूर्वेणाण्ग्रहणं न परेण । 'अचश्च' (सू. 1/2/28) इत्युपस्थित्यैव सिद्धे अण् ग्रहणा"दित्याह श्रीना. ज्ञा. सं. 1, पृ. 8 ।
9. 'लिह आस्वादने' धा. पा. अदा. 1016, इति लिह्धातोः क्तप्रत्यये 'होढ' - अष्टा. 8/2/31, इति हकारस्य ढकारे 'झषस्तथोर्धोऽधः' - अष्टा. 8/2/40, इति तकारस्य धकारे 'ष्टुनाष्टुः' - अष्टा. 8/2/41, इति धकारस्य ढकारे 'ढोढे लोपः' - अष्टा. 8/3/13, इति प्रथमढकारस्य लोपे 'ढ्रलोपे.' - अष्टा. 6/3/111, इतिधातोरिकारस्य दीर्घे कृदन्तत्वात् सौ तस्यामि पूर्वरूपे च कृते रूपमिदम् ।
10. 'लण्' - मा. सू. 6, इतिसूत्रस्थणकारेणेत्यर्थः ।
11. अष्टा. 1/2/28 ।

योग्यता विद्यते । ज्ञापिते चास्मिन्वचने 'अ इ उ' - इत्येतेषा त्रयाणामेव वर्णानां ग्रहणमत्र भवतु, 'ए ओ ऐ औ' इत्येतेषां ग्रहणं माभूदित्येतदर्थं सूत्रेऽस्मिन् शब्दोऽयं स्वांशे चरितार्थो भवति नहि । नहि अच'इति [1]पदोपस्थितौ त्रयाणामेव ग्रहणं सिद्ध्येत् । ज्ञापितस्यास्य वचनस्य फलं तु 'आतृढः[2]' - इत्यादौ दीर्घाभावः[3] । अस्य वचनस्यासत्त्वे हि 'ढ्रलोपे[4]दीर्घोऽणः' - इति दीर्घापत्तिरत्र दुर्वारा स्यात् । परेण णकारेणाण्ग्रहणे हि तत्र ऋकारस्यापि पाठो दुर्वारः ।

## अतद्धितेतिशब्दः

[5]'गोरतद्धितलुकी'त्यत्र 'अतद्धिते'तिशब्दः 'अकृतव्यूहाः [6]पाणिनीयाः प्रवर्तितमपि शास्त्रं व्यावर्तयन्ती'ति परिभाषाया [7]ज्ञापकः । यतोऽस्या अभावेऽत्रासौ व्यर्थः ।

---

1. 'अचश्च' - अष्टा. 1/2/28, इत्यनेनेति शेषः ।
2. 'आङ्पूर्वकात्' तृहू हिंसायाम्' धा. पा. तुदा. 1349, इति तृहधातोः क्तप्रत्यये 'होढः' - अष्टा. 8/2/31 इति हकारस्य ढकारे"झषस्तथोर्धोऽधः' - अष्टा. 8/2/40, इति तकारस्य धकारे 'ष्टुनाष्टुः' - अष्टा. 8/4/41, इतिधकारस्य ढकारे 'ढोढेलेपः' - अष्टा. 8/3/13, इति प्रथमढकारस्य लोपे कृदन्तत्वात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' - अष्टा. 6/3/111 ।
4. अष्टा. 6/3/111 ।
5. अष्टा. 5/4/92 ।
6. (क) 'अकृतव्यूहाः पाणिनीयाः' - व्याडिः प. सू. प. 65, पृ. 29 ।
   (ख) पु. दे. ल. प. वृ. प. 104, पृ. 155 ।
   (ग) 'अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति' - सी. दे. बृ. प. वृ. प. 49, पृ. 216 ।
   (घ) अकृतव्यूहाः पाणिनीयाः' – नी. दी. प. वृ. प. 61, पृ. 305
   (ङ) 'अकृतव्यूहाः पाणिनीयाः - ह. भा. प. भास्क. प. 51. पृ. 345 ।
   (च) 'अकृतव्यूहाः पाणिनीयाः' - भ. ना. प. शे. प. 57, पृ. 250 ।
   (छ) 'अकृतव्यूहाः पाणिनीयाः' - शेषा. प. भास्क. प. 48, पृ. 425 ।
7. तथाहि–
   (क) लिङ्गं चास्याः 'गोरतद्धितलुकि' (5/4/92) इति अतद्धितग्रहणम् । तद्धि सुब्लुकि निषेधो माभूदित्येवमर्थं क्रियते राजगवीयतीति । अत्र च पूर्वमेव निष्पन्नष्टच् । उत्तरकालं क्यचि कृते सुब्लुकि यदा वृत्तोऽपि टच् निवर्तते तदैतदर्थमर्थवद्भवतीति । नहि प्रवृत्तं वचनशतेनापि निवर्तते इति न्यायस्यापवादः लक्ष्यस्थित्या क्वचिदेवाश्रीयते । अन्यथा ह्यानुपूर्व्या सिद्धत्वमिति वचनमिदमनर्थकं स्यादित्याहु:'' इत्याह पु. दे. ल. प. वृ. प. 104 पृ. 155 ।

तथाहि - राजगवमिच्छति [1]राजगवीयतीत्यत्र सुब्लुकि[2] प्रतिषेधाभावाय सूत्रेऽस्मिन् 'अतद्धितशब्द उपात्तः स चास्याः परिभाषाया अभावे व्यर्थः। यतोऽत्र पूर्ववृत्तष्टच्, तत्प्रतिषेधो नानेन 'अलुकी'त्यनेन कर्तुं शक्यः। ज्ञापितायां चास्यां प्रवर्तितस्यापि टचोऽनया सुब्लुकि सत्यपि निवृत्तिसम्भवात् तन्निवृत्त्यभावायात्र तद्धितशब्दः स्वांशे चरितार्थो भवति। नह्यत्र तद्धितस्य लुक् किन्तु सुपो लुक्। अन्यथा 'राजगवीयती'-त्यत्र टचः प्रतिषेधो दुर्वारः स्यात्। ज्ञापिताया अस्याः फलं तु 'पपुषः[3] पश्ये'त्यत्र [4]'आर्धधातुकस्येड्वलादे'रिति बलादिलक्षणस्येटोऽभावः। अत्र हि यद्यपि पपिवस्शब्दाच् शस् विहितः, तथापि 'अकृतव्यूहाः' इति वचनात् 'पपावस्शस्'इति स्थिते संप्रसारणबलीयस्त्वात् प्राक्संप्रसारणे ततो बलादित्वाभावादिण् न भवति।

## [5]'अति'ङिति शब्दः

'उपपदमतिङ्' इति सूत्रे 'अति'ङितिशब्दः [6]'गतिकारकोपपदानां कृद्भिः सह

---

(ख) ज्ञापकं चात्र .................. 'गोरतद्धितलुकि' (5/4/92) इत्यत्रातद्धितग्रहणं केचिदाहुः। तद्धि सुब्लुकि माभूदित्येवमर्थं क्रियते राजगवीयतीति। अत्र च प्रागेव निष्पन्नष्टच्। तदुत्तरकालं क्यचि सुब्लकि यदा प्रवृत्तोऽपि टच् निवर्तते तदाभवती"-त्याह सी. दे. बृ. प. 49, पृ. 217।

(ग) "अस्याश्च ज्ञापकं 'गोरतद्धितलुकि' (5/4/92) इतिसूत्रस्थातद्धितग्रहणम्। तद्धि राजगवीयतीत्यादौ सुपो लुकः सत्त्वेन टच्निषेधो माभूदिति क्रियते। अन्यथा-न्तरङ्गत्वात् टच्सिद्धौ किं तेनेत्याह नी. दी. प. वृ. प. 61, पृ. 305।

1. 'राज्ञो गौः इति विग्रहे 'षष्ठी' - अष्टा. 2/2/37' इति समासे - सुब्लुकि 'गोरतद्धितलुकि' - अष्टा. 5/4/92 इति टचि राजगवः, तमिच्छतीति विग्रहे 'राजगव'मिति सुबन्तात् 'सुप आत्मनः क्यच्' - अष्टा. 3/1/8, इति क्यच् ततः 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71, इतिसुपो लुकि 'क्यचि च' - अष्टा. 7/4/33 इतीत्त्वे 'राजगवीये'त्यस्मात् 'सनाद्यन्ता धातवः' - इति धातुत्ववतो लटि प्रथमपुरुषैकवचने रूपमिदम्।
2. 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71।
3. पा धातोः 'परोक्षे लिट्' - अष्टा. 3/2/125 इति लिटि 'क्वसुश्च' - अष्टा. 3/2/107 इति लिटः क्वसुरादेशे द्वित्वेऽभ्यासकार्येषु कृतेषु वलादिलक्षणे इटि पपाइवस् 'इत्यवस्थायाम् आतो लोप इटि च' - अष्टा.. 6/4/64 इतिधातोराकारलोपे कृदन्तत्वेन प्रातिपदिकतया पपिवस्शब्दाच्च शसि 'वसोः संप्रसारण्' - अष्टा. 6/4/131 इति संप्रसारणेन विङ्क्ष्यती वकारस्य निमित्तत्वेनाऽऽश्रित्य कृतस्य वलादिलक्षणेटोऽकृतव्यूहपरिभाषाया अभावे संप्रसारणादिकार्येषु कृतेषु रूपमिदम्।
4. अष्टा. 7/2/35।
5. अष्टा. 2/2/19।
6. (क) पु. दे. ल. प. वृ. प. 47, पृ. 132।
   (ख) सी. दे. बृ. प. वृ. प. 32, पृ. 197।
   (ग) नी. दी. प. वृ. प. 42, पृ. 300।
   (घ) ह. भा. प. भास्क. प. 32, पृ. 336।

समासवचनं प्राक् सुबुत्पत्ते'रिति परिभाषाया ज्ञापकः[1] । यतोऽस्या अभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि - सूत्रेऽस्मिन् 'अति'ङितिशब्दः 'मा भवान्भूत्' - इत्यत्र

---

(ङ) भ. ना. प. शे. प. 76, पृ. 298 ।
(च) शेषा. प. भास्क. प. 64, पृ. 433 ।

1. तथाहि –
(क) "ननु च 'सुप्सुपा'इति वर्तते तत्र कुतस्तिङन्तेन सहसमासप्रसङ्गः ? एतज्ज्ञापयति - एतयोर्योगयोः सुपसुपेति न सम्बद्ध्यते । इति । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' - इत्येतदुपपन्नं भवति । अश्वक्रीती । धनक्रीती–" -इत्याह जया. का. 2/2/19 ।
(ख) "ज्ञापिता चेयं परिभाषा सूत्रकारेण 'उपपदमतिङ्' (2/2/19) इत्यनेन । तदुक्तम् - सुप्सुपेत्यधिकारात् तिङन्तेन समासस्य प्रसङ्ग एव नास्ति इति किमतिङ्ग्रहणेने"त्याह पु. दे. ल. प. वृ. प. 47, पृ. 133 ।
(ग) "ज्ञापिता चेयं परिभाषा भाष्यकारेण 'उपपदमतिङ्' (2/2/19) इत्यतिङ्ग्रहणेन । तदुक्तम् - 'सुप्सुपा' (2/1/2/4) इत्यधिकारात्तिङन्तेन समाससंभव एव नास्ति किमतिङ्ग्रहणेन । कृतं च तज्ज्ञापयत्येतयोर्योगयोः 'सुप्सुपा'इति नाभिसम्बध्यते । तेन 'गतिकारकोप पदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' इत्युपपन्नं भवती"त्याह सी. दे. बृ. प. वृ. प. 32; पृ. 199 ।
(घ) "अतिङ्ग्रहणं ज्ञापयति - 'सुपेत्येतन्नेहानुवर्त्तते' इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपेति च निवृत्तम् । तथाच-गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरितिसिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी ।" - इत्याह भ. दी. वै. सि. कौ. तत्पुरुष प्र. पृ. 462-463 ।
(ङ) "इयं च 'उपपदमतिङ्' (2/2/19) इत्यतिङ्ग्रहणेन 'कर्तृकरणे कृता बहुलम्' (2/1/32) इति बहुलग्रहणेन च सिद्धा । तेन व्याघ्री अश्वक्रीती इत्यादिसिद्धि"रित्याह नी. दी. प. वृ. प. 42, पृ. 300 ।
(च) "इयं परिभाषा भाष्यकारैः 'उपपदमतिङ्' (2/1/19) इतिसूत्रीयातिङ्ग्रहणेन ज्ञापिता । तथाहि -अतिङ्ग्रहणं मा भवान्भूत् इत्यादौ समासवारणार्थम् । तत्र च सुपेत्यधिकारात् तिङन्तेन समासस्याप्रसङ्ग एवेति व्यर्थं सदतिङ्ग्रहणं कुगतिप्रादयः उपपदमतिङ् इतियोगयोः सुपेत्यस्य निवृत्तिं ज्ञापयति । कुगतीत्यत्रापि गतिग्रहणं पृथक्-कृत्य अतिङ्ग्रहणं तत्रापकृष्यते । तथा चेयं परिभाषोपपन्ना । यद्यपि कारकविषये ज्ञापकं नास्ति 'कर्तृकरणे कृता बहुलम्' (2/3/32) इति कृद्ग्रहणं तु काष्ठैः पचतितराम् इत्यादौ तद्धितेन समासवारणार्थं, तथापि उक्तज्ञापकस्य सामान्यापेक्षत्वात् श्तिपाशपेतिवदेकदेशानुमत्या संपूर्णाप्याश्रीयते" इत्याह ह. भाः प. भास्क. प. 32, पृ. 337 ।
(छ) " 'उपपद'मिति सूत्रेऽतिङ्ग्रहणेन कुगतीत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्ध्येय"मित्याह भ. ना. प. शे. प. 76, पृ. 298-299 ।
(ज) "तत्र च प्रमाणम् - 'उपपदमतिङ्' (2/2/19) इतिसूत्रे अतिङ्ग्रहणम् । तद्धि मा भूदित्यत्र माङस्तिङन्तेन समासाभावाय । नच तत्र समासः संभवति । सुपेत्यधिकारेण सुबन्तेन समासविधानात् । ततश्च तद् व्यर्थं सत् सुपेत्यस्यासंबन्धं ज्ञापयति ।

[1]'माङ्लु'ङिति सप्तमीनिर्देशात् [2]'तत्रोपपदं सप्तमीस्थ'मिति माङ उपपदतया तेन साकं'भू'दिति तिङन्तस्य समासाभावायोपात्तः । सति हि समासे व्यवहितप्रयोगो न स्यात् । स चास्याः परिभाषाया अभावे व्यर्थः । यतोऽत्र सूत्रे [3]'सुबामन्त्रिते पराङ्गवत्स्वरे'इति सूत्रात् सुबिति, 'सह[4]सुपे'ति सूत्रात्सुपेति चानुवर्तते, तथा च सुबन्तमुपपदं सुबन्तेन सह समस्यते' इतिसूत्रार्थः सम्पद्यते । सत्येवं 'भू'दिति तिङन्तस्यासुबन्तत्वात्समासाभावः स्वतः सिद्धः । अतोऽत्रा'ति'ङितिशब्दः 'सुपे'त्यस्यात्राननुवृत्तिं ज्ञापयन् एकदेशानुमत्या[5]परिभाषामिमां ज्ञापयति । ज्ञापितायां चास्यां सुपेत्यस्याननुवृत्तौ 'भू'दिति तिङन्तस्यापि माङा सह समासः प्राप्नोतीति तद्व्यावृत्तयेऽतिङितिशब्दः स्वांशे चरितार्थो भवति । 'अति'ङितिशब्दः सूत्रेऽस्मिन् पूर्वसूत्रे च 'सुप्सुपे'त्यनयोरननुवृत्तिं ज्ञापयन् परिभाषामिमां ज्ञापयति । अथवा 'अतिङ्ग्रहणेन 'उपपदस्य कृदंन्तेन सुबुत्पत्तेः प्राक् समास' इत्येव ज्ञाप्यते । अथवा 'कुगतिप्रादयः'[6] - इत्यत्र कुप्रादय इति गतिरिति च योगं विभज्य 'गतीतियोगे उत्तरसूत्रात् 'अतिङ् 'इत्यस्यापकर्षः स्वीक्रियते, तथाच प्रथमयोगस्य 'कुप्रादयः सुबन्तेन समस्यन्ते' इत्यर्थः, द्वितीययोगस्य च गतिरतिङन्तेन समर्थेन समस्यत इत्यर्थः सम्पद्यते । तथासति 'गतेः कृद्भिः समासवचनं प्राक्सुबुत्पत्तेरिति लब्धं भवति,

---

पूर्वसूत्रेऽपि (2/2/18) कुप्रादय इति योगं विभज्य गत्यंशे अतिङित्यस्यापकर्षेण व्याख्यानात् गत्युपपदयोः कृद्भिः सह समाससिद्धिः । कारकांशे तु 'कर्तृकरणे.' (2/3/32) इतिसूत्रे कृद्ग्रहणम् । तद्धि न तिङन्तेन समासवारणाय । तथाहि कतृकरणमिति कारकं क्रिया - निरूपितम् । क्रियावाची च धातुः । ततश्च द्वये प्रत्ययाः - तिङश्च कृतश्च । तत्र तिङन्तेन समासः सुपेत्यस्यानुवृत्त्यैव वारित इति कृदन्तेनैव सिद्धे अतिरिच्यमानं कृद्ग्रहणं कृदवस्थायामेव सुबुत्पत्तेः प्राक् समासविधानाये"त्याह शेषा प. भास्क. प. 64, पृ. 434 ।

(झ) "उपपदम् (सू. 2/2/19) । अतिङिति प्रतिषेधो ज्ञापयति 'अनयोर्योगयो'र्निवृत्तं 'सुप्सुपा' (सू. 2/1/4) इति । तेन गतिकारकोपपदानामिति सिद्ध"मित्याह श्रीना. शा. सं. 2, पृ. 58 ।

1. अष्टा. 3/3/175 ।
2. अष्टा. 3/1/92 ।
3. अष्टा. 2/1/2 ।
4. अष्टा. 2/1/4 ।
5. 'स्थालीपुलाकन्यायेने'त्यर्थः ।
6. अष्टा. 2/2/18 ।

'कारकस्य कृद्भिः समासवचनं प्राक्सुबुत्पत्ते'रिति तु 'कर्तृकरणे कृता[1]बहुल'मिति सूत्रस्थकृदग्रहणाज् ज्ञाप्यते । यतः तिङन्तेन समासवारणाय कृतं कृद्ग्रहणं व्यर्थम् । 'सुपे'त्यस्यानुवृत्त्यैव हि तिङन्तेन समासाभावः सुलभः । इत्थमत्र कृद्ग्रहणं 'सुपे'त्यस्याननुवृत्तिंज्ञापयन् तिङन्तेन साकं समासवारणाय स्वांशे चरितार्थो भवति । इत्थमत्र [2]'उपपदमति'ङितिसूत्रस्थः अतिङितिशब्दः एकदेशानुमत्या सम्पूर्णामिमां ज्ञापयति, अथवा 'अतिङ्शब्दः परिभाषाया अस्याः उपपदेत्यंशस्य 'गति[3]'रितियोगः, गत्यंशस्य, 'कर्तृकरणे[4]कृते'ति कृच्छब्दः कारकांशस्य ज्ञापकः (बोधकः) इति निष्कर्षो लभ्यते । ज्ञापिताया बोधिताया वा अस्याः 'सुप्सुपे[5]'त्यधिकारेऽपि 'कुगतिप्रादयः'[6] 'कर्तृकरणे कृता बहुलम्'[7] 'उपपदमतिङ्' इति च गतीनां कारकाणामुपपदानां च योऽयं समासः सः सुबुत्पत्तेः प्रागेव वदितव्य इत्यर्थः । जिनेन्द्रबुद्धिस्त्वस्या अर्थद्वयमाह[8] । फलं' 'व्याघ्री' 'अश्वक्रीती' 'कच्छपी' - इत्यादिप्रयोगाणां साधुत्व-सिद्धिः । अस्याअभावे हि नैतेषां सिद्धिः स्यात् । तथाहि -व्याजिघ्रतीत्यर्थे व्याङ्पूर्वकाद् 'घ्रा' -धातोः '[9]आत श्चोपसर्गे' इति कप्रत्यये 'आतो[10] लोप इटि चे'त्याकारलोपे आङो घ्राशब्देन, 'आघ्र'शब्देन वेश्च क्रमशः सुबुत्पत्तेः प्राग्गति समासे[11], अथवा सुबुत्पत्तेः प्राक् आङो घ्राशब्देन उपपदसमासे[12], वेस्तु आघ्रशब्देन [13]गति समासे सन्धिकार्ये कृते च व्याघ्रशब्दस्य जातिवाचकत्वात् ङीषि'[14] व्याघ्री' इति सिद्ध्यति । अस्या अभावे हि आङा घ्रशब्दस्य समासे सुबन्तत्वमपेक्ष्येत, तथा सति स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्,

---

1. अष्टा. 2/1/32 ।
2. अष्टा. 2/2/19 ।
3. अष्टा. 2/2/18 ।
4. अष्टा. 2/1/32 ।
5. अष्टा. 2/1/2, 4 ।
6. अष्टा. 2/2/18 ।
7. अष्टा. 2/1/32 ।
8. अत्रहि द्वे दर्शने– गतिकारोपपदात् कृद्भिरेव समासो भवति, स च प्राक्सुबुत्पत्तेरित्येकं दर्शनम्, गतिकारकोपपदानामविशेषेण समासो भवति, कृद्भिस्तु प्राक्सुबुत्पत्तेरिति द्वितीय''मित्याह हि. जि.बु.न्या. 6/2/139 । तभी द्वितीयेऽर्थे पचतितरामित्यत्रापि समासो भवतीति न्यासग्रन्थाऽऽशयः ।
9. अष्टा. 3/1/136 ।
10. अष्टा. 6/4/64 ।
11. 'कुगतिप्रादयः' - अष्टा. 2/2/18 ।
12. 'कुगतिप्रादयः' - अष्टा 2/2/19 ।
13. 'कुगतिप्रादयः' - 2/2/18 ।
14. 'जातेरस्त्रीविषयादयोपधात्' - अष्टा. 4/1/63 ।

सुबुत्पत्तये 'लिङ्गसंख्याकारकं क्रमेणापेक्ष्यमिति प्रथमं लिङ्गयोगे सति अदन्तत्वाट्टाप् स्यात्, न तु ङीष्, नहि पशब्दमात्रस्य स्त्रीजातिकत्वमस्ति, ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्यादन्तत्वाभावाज्जातिलक्षणङीषोऽप्राप्त्या 'व्याघ्री'त्यस्य साधुत्वं गगनकुसुमायितं स्यात् । सुबुत्पत्तेः प्राक् गत्युपपदयोः समासे तु व्याघ्रशब्दस्य जातिवाचकत्वाददन्तत्वाच्च जातिलक्षणे ङीषि साधुत्वं सिद्ध्यति । तथा 'अश्वेन क्रीते'त्यर्थे 'कर्तृकरणे कृता[1]बहुल' मिति समासे अश्वक्रीतशब्दात् [2]'क्रीतात् करणपूर्वा'दिति ङीषि 'अश्वक्रीती'तिरूपं सिद्ध्यति । अस्या असत्त्वे हि समासस्य सुबन्तत्वापेक्षायां प्रथमंलिङ्गोपस्थितावदन्तत्वाट्टाप्यदन्तत्वाभावात् ङीषोऽप्राप्त्या नास्य साधुत्वं सिद्ध्येत् । इत्त्थम् 'कच्छेन पिबतीत्यर्थे [3]'सुपीति' योगविभागात् कप्रत्यये तदन्तेन पशब्देन [4]'उपपदमतिङ् 'इति समासे कच्छपशब्दस्य जातिवाचकत्वात् ङीषि कच्छपीति सिद्ध्यति । अस्या असत्त्वे हि समासस्य सुबन्तत्वापेक्षायां प्रथमं लिङ्गयोगे 'प'- शब्दस्य जातिवाचकत्वाभात् ङीषोऽप्राप्त्या टापि सुबुत्पत्तौ कृतायां समासे टाबन्तस्यादन्तत्वाभावाज्जातिलक्षणङीष् न प्राप्नोतीति नास्य साधुत्वं सिद्ध्येत् ।

इदमत्रावधेयम्—पुरुषोत्तमदेवः [5]'उपपदमतिङ्' इति सूत्रे 'सुपूसुपे'त्यधिकारात्[6] तिङन्तेन समासप्रसंग एव नास्तीत्य'तिङ्' इतिशब्दः [7]'नैतयो र्योगयोः 'सुपूसुपे' ति सम्बध्यते' इतिवचनं ज्ञापयति । ज्ञापितेनानेन वचनेन 'गतिकारकोपपदानामिति परिभाषोपपन्ना भवति । ज्ञाप्ये चास्मिन् वचने 'सुपूसुपे ति' न सम्बध्यते 'इत्यस्य' मिलितं न सम्बध्यते इत्यत्र तात्पर्यम् । यतः पूर्वपदस्य सुबन्तत्वमेवेष्टम् । ज्ञापकमप्येतन्नैकान्तिकम् । तथा च कात्यायनेनातिङ्ग्रहणस्य प्रयोजनमेव दर्शितम् । अतिङिति क्रियोपपदनिषेधोपलक्षणम् । क्रियोपपदस्य माभूत् । 'कारकगतिः' 'कारकव्रज्या' इति 'तुमुन्ण्वुलौ [8]क्रियायां क्रियार्थाया'मिति कर्त्तरि ण्वुलि षष्ठीसमासे[9] चात्र उपपदस्य पूर्वनिपाते व्रज्याकारक इत्यनिष्टं स्यात् ।'[10]ण्वुल्तृचौ' इति

1. अष्टा. 2/1/32 ।
2. अष्टा. 4/1/50 ।
3. 'सुपि स्थः' - अष्टा. 3/2/4 ।
4. अष्टा. 2/2/19 ।
5. अष्टा. 2/2/19 ।
6. अष्टा. 2/1/2, 4 ।
7. 'उपपदमतिङ्' - अष्टा. 2/2/19 । 'कुगतिप्रादयः' - अष्टा. 2/2/18, इत्यनयोरित्यर्थः ।
8. अष्टा. 3/4/10 ।
9. 'षष्ठी' - अष्टा. 2/2/37 ।
10. अष्टा. 3/1/1233 ।

च ण्वुलन्तस्य भवत्येव, षष्ठीसमासः[1] कारकवर्ज्या इति । तस्मात् [2]'पुंयोगादाख्यायामित्यत्र कात्यायनेनोपगमादस्त्येषा परिभाषेति मनुते' । सीरदेवस्तु परिभाषाया अस्या उपपत्तिं पुरुषोत्तमदेवोक्तामेव मनुते । नीलकण्ठदीक्षितस्तु [3]'उपपदमतिङ्' इत्यतिङ्ग्रहणात् 'कर्तृकरणे कृता[4]बहुल'मिति बहुलग्रहणाच्च सिद्ध्यतीति मनुते । हरिभास्करस्तु [5]'उपपदमतिङ्' इत्यतिङ्ग्रहणादेकदेशानुमत्या परिभाषेयं संपूर्णा ज्ञाप्यते । यतः कारकविषये ज्ञापकं नास्ति । न च 'कर्तृकरणे कृता[6]बहुल'मिति कृद्ग्रहणमस्याः कारकांशज्ञापकम् । यतः कृद्ग्रहणं तत्र 'काष्ठैः' पचतितरा'मित्यादौ तद्धितेन समासाभावाय चरितार्थम् । यद्वा 'कर्तृकरणे कृता बहुल'मिति[7] बहुलग्रहणं 'कारकसमासः प्राक्सुबुत्पत्ते'रित्यर्थस्य संग्राहकम् । बहूनर्थाल्ँलातीतिव्युत्पत्तेरिति मनुते । भट्टनागेशोऽपि 'अति'ङित्यस्य [8]'कुगतिप्रादयः इत्यत्राप्यपकर्षणाद् एकदेशानुमत्या कारकांशोऽपि लभ्यत एतस्या इति मनुते । शेषाद्रिस्तु 'अस्याः कारकांशे 'कर्तृकरणे.[9]' इतिकृद्ग्रहणं ज्ञापकमविशेषं मनुते । यतोऽत्र कृद्ग्रहणं तिङन्तेन समासाभावाय कृतं व्यर्थं सदेतदंशज्ञापकम् । तिङन्तेन समासाभावो हि 'सुपे'त्यस्यानुवृत्त्यैव वारितो भवति । एषु विभिन्नेषु ज्ञापकनिर्णयेषु शेषाद्रिसुधीकृतो निर्णयः श्रेयानिति मन्ये ।

ज्ञापिता चेयं परिभाषा [10]प्रायिकी । यतोऽस्याः प्रायिकत्वं 'सोऽपदादा[11]'दित्यत्र 'भास्करान्ते'त्यत्र संत्वनिपातनात् - [12]'अम्बाम्ब.-'इतिसूत्रे गवादिग्रहणात् 'कर्तृकरणे

---

1. 'षष्ठी' - अष्टा. 2/2/37 ।
2. अष्टा. 4/1/48 ।
3. अष्टा. 4/1/48 ।
4. अष्टा. 2/2/19 ।
5. अष्टा. 2/1/32 ।
6. अष्टा. 2/1/32 ।
7. अष्टा. 2/1/32 ।
8. अष्टा. 2/2/18 ।
9. अष्टा. 2/1/32 ।
10. तथाहि –
    (क) "गतिकारकोपपदानामित्यस्य प्रायिकत्वं - 'सोऽपदादौ' (8/3/38) इत्यत्र प्रत्ययलक्षण-प्रतिषेधाप्रवर्तनं च भास्करान्तेत्यत्र सत्वनिपातनादवसितम् । तथाहि गतिकारकोपपदानामितिकृत्वा यदि सुपः प्राक्समासः तदा भास्कर इत्यत्र उत्तरपदत्वाभावादेव 'सोऽपदादौ' (8/3/38) इति सत्वं सिद्धम् । अथास्याः पारिभाषायाः प्रायिकत्वाद्-भास्कर इत्यत्र सुबन्तयोरेव समासस्तथापि' उत्तरपदत्वे चापदादिविधौ' (1/1/63 वा. 6) इति प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावात् 'सोऽपदादौ' (8/3/38) इतिसत्त्वं सिद्धं स्यात् । तत्कृतमुक्तार्थस्य ज्ञापक"मित्याह सी. दे. बृ.प. वृ.प. 32, पृ.199 ।

[1]कृताबहुल'मित्यत्र बहुलग्रहणाच्च लभ्यते । अस्याः प्रायिकत्वे फलं तु 'सा हि तस्य धनक्रीता'-इति वाक्ये 'धनक्रीते'त्यस्य साधुत्वसिद्धिः । अन्यथा 'धनक्रीती' -इत्यस्यैव साधुत्वं सिद्ध्येन्नतु 'धनक्रीता' इत्यस्यापि । सुबुत्तेः प्राक् कारकस्य कृद्भिः समास्यानित्यत्वे हि 'क्रीतात्[2] करणपूर्वात्' इति ङीष् दुर्वारोऽत्र भवेत् ।

अन्ये तु 'अजादिगणे'[3] - धनक्रीतशब्दस्य पाठस्वीकारेण ततः 'अजाद्यतष्टाप्'[4] -इति टापः सुलभतया 'धक्रीते'त्यस्य साधुत्वमन्यथैवोपपन्नमित्यस्याः प्रायिकत्वं नावश्यकम् । नापि 'अम्बाम्ब[5]' इतिसूत्रे गोभूम्यादिग्रहणमस्याः प्रायिकत्वे मानम् । यतस्तत्र तत् 'पूर्वपदान्तेणः परस्य सूत्रसम्बन्धिसस्य षत्वं स्याच्चेद् गोभूम्यादिभ्य एवे'ति नियमार्थम् । अतो 'हृदिस्थ' - इत्यादौ षत्वाभावः[6] सिद्ध्यति । किंच

---

(ख) 'अम्बाम्ब.' (8/3/97) इति सूत्रे गवादिग्रहणादनित्येयम् । अन्यथा 'गोष्ठः' इत्यादौ 'सुपि स्थः (3/2/4) इतिकप्रत्यये 'गतिकारकोपपदानाम्.' इति सुबुत्पत्तेः पूर्वं समासे 'सात्पदाद्योः' (8/3/111) इति निषेधाप्राप्त्या आदेशप्रत्यययोः' (8/3/59) इत्येवा-सिद्धे तदुपादानवैयर्थ्यात् । 'अम्बाम्ब.' (8/3/97) इत्यत्रहि लक्षणप्रतिपदोक्तपरिभाषया 'सुपिस्थः' (3/2/4) इतिकप्रत्ययान्त एवानुक्रियते इति सिद्धान्तः । इदं च पदस्यादिः पदादिरितिव्याख्यानापेक्षोबोध्य" मित्याह नी.दी.प. 42, पृ. 301 ।

(ग.) "यद्वा 'कर्तृकरणे कृता बहुलम्' (2/3/32) इति बहुलग्रहणं 'कारकसमासःप्राक्सुबु-त्पत्तेः' इत्यर्थस्य संग्राहकम् । बहूनर्थान् लातीति व्युत्पत्तेः । अतएव क्वचित्सुबुत्पत्ते-रनन्तरमपि समासः । तेन धनक्रीतेति सिद्ध"मित्याह ह.भा.प.भास्क.प. 32, पृ. 337 ।

(घ) "अस्या अनित्यत्वात् क्वचित् सुबुत्पत्त्यनन्तरमपि समासो यथा 'साह तस्य धन-क्रतेती"त्याह भ.ना.प.शे.प. 76, पृ. 299 । (ङ) "कारकांशे 'कर्तृकरणे. - (2/3/32) इतिसूत्रे कृद्ग्रहणेन ज्ञाप्यमानेयं बहुलग्रहणात् क्वचिन्न भवति । तेन 'सा हि तस्य धनक्रीता' इति सिद्ध्यति । एतदर्थमजादावयं पाठ्य इति व्यर्थ"मित्याह ह.भा.प.भास्क.प. 64, पृ. 435 ।

11. अष्टा. 8/3/38 ।
12. 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः' - अष्टा. 8/34/97 ।

1. अष्टा. 2/1/32 ।
2. अष्टा. 4/1/50 ।
3. अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा पूर्वापिहाणा (पूर्वापहाणा) अपरापहाणा । 'संभस्त्राजिनशणपिण्डेभ्यः फलात्' । 'सदच्काण्डप्रान्त-शतैकेभ्यः पुष्पात्' । 'शूद्रा चामहत्पूर्वा जातिः' । क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । 'मध्यमा पुंयोगेऽपि, । 'मूलान्नञः' । दंष्ट्रा । एतेऽजादयः ग. पा. 4/1/4 ।
4. अष्टा. 4/1/4 ।
5. अष्टा. 8/3/97 ।
6. 'आदेशप्रत्यययोः' - अष्टा. 8/3/59 ।

दधिसेचावित्यादौ सुबुत्पत्तेः पूर्वं समासे षत्वाभावाय सात्पदाद्यो[1]'रित्यत्र पदादादिः पदादिरिति पञ्चमीसमासस्याऽऽवश्यकत्वेन गोष्ठ इत्यादावपि षत्वनिषेधाऽऽपत्त्या षत्वार्थं गोभूम्यादिग्रहणं तत्र चरितार्थमिति नास्याः प्रायिकत्वे ज्ञापकमिति मन्यते । मतमिदं भट्टनागेशेन परिभाषेन्दुशेखरे निरूपितम्[2] ।

## 'अतिशदन्ताया' इति शब्दः

'संख्याया[3] अतिशदन्तायाः क'न्निति सूत्रेऽतिशदन्ताया इतिशब्दः '[4]उभयगतिरिह भवती'ति पारिभाषाया ज्ञापकः[5] । यतोऽस्या अभावेऽत्र 'कृत्रिमाकृत्रिमयोः कृत्रिमे[6]कार्यसम्प्रत्ययः 'इति परिभाषया संख्याशब्देन कृत्रिमायाः '[7]बहुगणवतुडतिसंख्ये'ति सूत्रकृत-संख्यासंज्ञा-संज्ञिन एव ग्रहणात् संख्याशब्देन त्यन्तशदन्तानां सप्ततिचत्वारिंशत् प्रभृतीनां[8] च बहुगणवतुडत्यन्यतमत्वाऽऽभावेन ग्रहीतुमशक्यतया

---

1. अष्टा. 8/3/11 ।
2. तथाहि - "अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाट्टाबित्याहुः" प. 76, पृ. 399 ।
3. अष्टा. 5/1/22 ।
4. (क) 'कृत्रिमाकृत्रिमयोरुभयगतिर्भवति' – व्या. प. सू. प. 7, पृ. 6 ।
   (ख) 'उभयगतिरिह भवति' - भ. ना. प. शे. प. 10, पृ. 39 ।
5. तथाहि –
   (क) "संख्याया अतिशदन्तायाः कन्' (5/1/22) इतिप्रतिषेधं करोति । नहि कृत्रिमा संख्या शदन्ता संभवती"त्याह पु. दे. ल. प. वृ. प. 7, पृ. 116 ।
   (ख) " 'सङ्ख्याया अतिशदन्ताया' इतिनिषेधोऽस्या ज्ञापकः । नहि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ती"त्याह भ. ना. प. शे. प. 10, पृ. 39-40 ।
6. (क) 'कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययः' - व्याडिः प. सू. प. 6, पृ. 5 ।
   (ख) 'पु. दे. ल. प. वृं. प. 7, पृ. 115 ।
   (ग) 'सी. दे. बृ. प- वृ, प. 101, पृ. 257 ।
   (घ) नी. दी. प. वृ प. 88, पृ. 310 ।
   (ङ) ह. भा. प. भास्क. प. 103, पृ. 366 ।
   (च) भ. ना. प. शे. प. 9, पृ. 39 ।
   (छ) शेषा. प. भास्क. प. 9,, पृ. 348 ।
7. अष्टा. 1/1/23 ।
8. 'सप्तत्या क्रीत इत्यर्थे 'तेन क्रीतम्' - अष्टा. 5/1/37, इतिठञि रूपमिदम् ।

'साप्ततिकः'[1] 'चात्वारिंशत्कः '-इत्यादौ कनोऽभावायोपात्तः 'अतिशदन्ताया 'इत्ययं शब्दो व्यर्थः । नहि सप्तति - चत्वारिंशत्प्रभृतिशब्दाः कृत्रिमाः[2] ।

अथात्र परस्परविरोधि वाक्यद्वयमिदं न प्रमाणं, यतो यदि कृत्रिमग्रहणं कथमुभयगतिः, अथ उभयगतिः कथं कृत्रिमग्रहणमिति शङ्क्यम् । यतो यथा 'न हिंस्यात् सर्वा भूतानि' 'यज्ञार्थं पशवः सृष्टाः 'इतिवाक्यद्वयमाम्नायवचनात् परस्परविरोधि प्रमाणं तथाऽऽचार्यवचनप्रामाण्यादुभयमिदं प्रमाणमेव । ज्ञापिताया अस्याः फलन्तु पाणिनीयेऽस्मिन् तन्त्रे 'संख्यायाअतिशतदन्ताया'[3]इत्यादौ कृत्रिमा-[4]कृत्रिम[5]-योरुभयोः 'कर्मणि द्वितीये'[6]त्यत्र कृत्रिमस्यैव कर्मणः[7] 'कर्त्तरिकर्मव्यतीहारे'[8] [9]इत्यत्राकृत्रिमस्यैव कर्मणः, '[10]कर्तृकरणयोस्तृतीये'त्यत्र [11]कृत्रिमस्यैव करणस्य, शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे'[12]इत्यत्राकृत्रिमस्यैव[13] करणस्य, 'सप्तम्यधिकरणे चे'[14]त्यत्र [15]कृत्रिमस्यैवाधिकरणस्य, [16]विप्रतिषिद्धंचानधिकरणवाची'त्यत्राकृत्रिमस्या-[17]धिकरणस्य च ग्रहणसिद्धिः[18] । अस्या असत्त्वे तु सर्वत्र कृत्रिमस्यैव ग्रहणं 'कृत्रिमाकृत्रमयो'रितिपरिभाषया नूनमापद्येत । अतो लक्ष्यानुसारिव्याख्यानेन कृत्रिमाकृत्रिमयोरुभयोरन्यतरस्य च ग्रहणमनया बोध्यते । युक्तं चैतन्मतम्, । यतः

---

1. चत्वारिंशता क्रीत इत्यर्थे 'तेनक्रीतम्' - अष्टा. 5/1/37 'इसुसुक्तान्तात्कः' -अष्टा. 7/3/51, इति ठञः कादेशे रूपमिदम् ।
2. 'बहुगणवतुडति संख्या' - अष्टा. 1/1/23 इति परिभाषिता इत्यर्थः ।
3. अष्टा. 5/1/22 ।
4. 'बहुगणवतुडति संख्या' - अष्टा. 1/1/23, इति परिभाषिताया इत्यर्थः ।
5. लौकिकीनां पञ्चन् - प्रभृतीनामित्यर्थः ।
6. अष्टा. 2/3/2 ।
7. 'कर्तुरीप्सिततमं कर्म' - अष्टा. 1/4/49, इति 'तथायुक्तंचानीप्सितम्' अष्टा. 1/4/50 इति, 'अकथितं च' - अष्टा. 1/4/51 इत्यादिपरिभाषितस्यैवेत्यर्थः ।
8. अष्टा. 1/3/14 ।
9. अपरिभाषितस्य क्रियारूपस्येत्यर्थः ।
10. अष्टा. 2/3/18 ।
11. 'साधकतमं करणम्' - अष्टा. 1/4/42 इति परिभाषितस्यैवेत्यर्थः ।
12. अष्टा. 3/1/17 ।
13. क्रियारूपस्येत्यर्थः ।
14. अष्टा. 2/3/36 ।
15. 'आधारोऽधिकरणम्' - अष्टा. 1/4/45, इति परिभाषितस्यैवेत्यर्थः ।
16. अष्टा. 2/4/13 ।
17. लौकिकस्य द्रव्यस्यैवेत्यर्थ ।
18. तथाहि - 'अनित्याचेयम् । 'संख्याया अतिशदन्तायाः कन्' (5/1/22) इति शदन्तपर्युदासा''दित्याह नी. दी. प. वृ. प. 88 पृ. 310 ।

परिभाषाया[1] वचनस्य[2]वा ज्ञापनेऽपि द्विदशशब्दात्तिप्रत्यये द्विदशशब्दस्य विंशादेशेन, शतिप्रत्यये विन्नादेशेन च विंशतिशब्दस्य साधनादर्थवतस्तेः सत्त्वासत्त्वाभ्यां प्रसक्तस्य फलभेदस्य वाराणायार्थवद्ग्रहणपरिभाषायाः प्रकृतेऽनुपस्थित्या कृत्रिमस्यैव ग्रहणेऽपि कतीत्येतद्व्यावृत्त्यर्थं त्यन्तस्य पर्युदासः प्रतिषेधो वाऽऽवश्यकइतिनास्याः परिभाषाया वचनस्य वा ज्ञापकत्वं सम्भवति । तस्मादत्र सूत्रे शदन्तस्य पर्युदासः प्रतिषेधो वा परिभाषाया वचनस्य वा ज्ञापकः, न तु त्यन्तस्यापि पर्युदासः प्रतिषेधो वेति निश्चप्रचम् ।

## 'अत' इतिशब्दः

'अतो हलादेर्लघो'[3]रित्यत्र 'अत' इतिशब्दः 'न सिच्यन्तरङ्गं भवती' ति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि --- 'अखादीत्'[5] 'अखदी'-[6]दित्यादौ हलादे र्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिं विकल्पेन विधातुमारब्धेऽस्मिन्सूत्रे 'अकोषी'दित्यादौ' अ कुष् ई त्' इत्याद्यवस्थायां हलादेर्लघोरकारस्य वृद्धिवारणाऽर्थमुपात्तोऽयं शब्दः । स चाऽस्य वचनस्याभावे व्यर्थः । यतः 'अकोष''दित्यादौ सिचूपरस्मैपदोभयसापेक्ष-

---

1. 'उभयगतिरिह भवति' ।
2. 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इतिपरिभाषाऽनित्या' ।
3. अष्टा 7/2/7 ।
4. तथाहि –
   (क) "एवं तर्ह्याचार्यप्रवृत्ति ज्ञार्पयति ' सिच्यन्तरङ्गं भवति' इति । यदयम् 'अतोहलादेर्लघो'रित्यकारग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? । अकारग्रहणस्यैतत् प्रयोजनम् - इह माभूत्अकोषीत् अमोषीत् । यदि सिच्यन्तरङ्गं स्यादकारग्रहणमनर्थकं स्यात्, गुणे कृतेऽलघुत्वाद् वृद्धिर्न भविष्यति । पश्यत्याचार्यो 'न सिच्यन्तरङ्गं भवती'ति । तेनाऽकारग्रहणं करोति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? । यत्र गुणः प्रतिषिद्ध्यते तदर्थमेतत् स्यात् - न्यकुटीत् न्यपुटीत् । यच्च करोत्यकारग्रहणं 'लघो' - रिति कृतेऽपी''त्याह प. व्या. म. भा: 1/1/3/3 ।
   (ख) "इकोगुण (1/1/3) 'अतोहलादेः' (सू 7/2/7) इत्यत्राकारग्रहण .........ज्ञापकं न सिच्यन्तरङ्गं भवती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 13 ।
5. 'खद स्थैर्ये हिंसायां च, चाद्भक्षणे' धा. पा. भ्वा. 50, इतिखद् धातोर्लुङिअडागमे तिपि च्लौ च्लेः सिचि इडागमे ईडागमे च कृते 'अतोहलादेर्लघोः' - अष्टा. 7/2/7, इति धातोरकारस्य वृद्धौ 'इट ईटि' - अष्टा. 8/2/28 इतिसिचो लोपे 'इतश्च' - अष्टा. 3/4/100, इति तेरिकारलोपे रूपमिदम् ।
6. 'अतोहलादेर्लघोः' - अष्टा. 7/2/7, इति वृद्ध्यभावपक्षे 'अखादी'- दितिवद्रूपमिदम् ।

वृद्ध्यपेक्षया[1] अन्तरङ्गत्वाद् लघूपधगुणे[2] कृते ओकारस्य [3]लघुत्वाऽभावादेव वृद्ध्यभावः सुलभः । ज्ञापिते चाऽस्मिन् वचने 'अकोषी'दित्यादौ अन्तरङ्ग [4]गुणाप्रवृत्त्या परत्वादुकारस्य वृद्धि[5]र्भवेदिति तद्वारणाय शब्दोऽयं स्वांशे चरितार्थो भवति ।

वस्तुतस्तु 'अकोषी'दित्यादौ 'येन नाप्राप्ति'[6] - न्यायेनाऽन्तरङ्गस्य गुणस्य[7] सिचि वृद्ध्य[8]बाधात् प्राप्ताया वृद्धेर्वारणाय शब्दोऽयं चरितार्थ इति नास्यैतद् वचनज्ञापकत्वं युक्तम् । ज्ञापकतापरं भाष्यं त्वेकदेश्युक्तिः[9] । अतएव वामन-जिनेन्द्र-बुद्धी शब्दस्याऽस्य प्रयोजनं निरूपयतः[10] ।

## 'अधातो'रितिशब्दः

'उगिदचां सर्वनामस्थाने[11] धातो'रित्यत्र 'अधातो'रितिशब्दः 'अधातुभूतपूर्व-स्याप्यधातुत्व'मिति वचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्याऽभावेऽत्राऽसौ शब्दो

---

1. 'अतो हलादेर्लघोः' - अष्टा. 7/2/7 ।
2. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
3. 'ह्रस्वं लघु' - अष्टा. 1/4/10 ।
4. 'पुगन्त.' - अष्टा. 7/3/86 ।
5. 'अतो हलादेर्लघोः' अष्टा. 7/2/7 ।
6. 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' - प. शे. प. 58, पृ. 261 ।
7. 'पुगन्त.' -अष्टा. 7/3/86, इति लघूपधगुणस्येत्यर्थः ।
8. 'अतो हलादेर्लघोः' - अष्टा. 7/2/7 ।
9. व्या. म. भा. 1/1/3/3 ।
10. तथाहि -
    (क) 'न्यकुटीत्, न्यपुटीत् - इत्यत्र 'अतः' इत्येतस्मिन्नसति स्थानिनिर्देशार्थम् 'अचः' इत्येतदनुवर्त्तयितव्यम् । तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति 'क्ङिति च' इति प्रतिषेधो नस्यात्''इत्याह वाम. का. 7/2/7 ।
    (ख) ''यदि 'अतः 'इति नोच्येत, ततोऽवश्यम् 'वदव्रजहलन्त्यस्याचः:' इत्यनुवर्तयितव्यम्, अन्यथा ह्यनिर्दिष्टस्थानिकत्वादिक एव लघोर्विकल्पेन वृद्धिः स्यात् - अदेवीदित्यादौ, अकोषीदित्यादौ त्वकारस्य न स्यात् । अज्ग्रहणानुवृत्तौ तु अस्यामज्लक्षणेयं वृद्धिः स्यात्, नेग्लक्षणा, निर्दिष्टस्थानिकत्वात् । यत्र हि स्थानी न निर्दिश्यते स इग्लक्षणाया वृद्धेर्विधेयः, नतु यत्र स्थानी निर्दिश्यते सोऽपि, ततश्च' 'क्ङिति च' इति प्रतिषेधो न स्यात्, तत्र 'इक 'इत्यधिकारात् । तस्मान् न्यकुटीत्, न्यपुटीदित्यत्र विकल्पेन वृद्धि र्माभूदित्येवमर्थमत इति वक्तव्यम्'' इत्याह जि. बु. न्या 7/2/7 ।
11. अष्टा. 7/1/70 ।
12. 'उगिदचां सर्वनामस्थाने धातोः (7/1/70)इत्यत्राञ्चतिग्रहणान्नियमार्थमर्थादधातोरेव नुमि लब्धे अधातुग्रहणं सूचयति - ' अधातुभूतपूर्वस्याऽपि यथा स्यात् । तेन गोमत्यतेः क्विप् गोमानिती''त्याह पु. दे. ज्ञा. समु. पञ्चविंशे युवपादे पृ. 88 ।

व्यर्थः । 'अञ्चतेरेव धातोरन्यस्य माभू' दिति नियमार्थत्वादिहाञ्चतिग्रहणस्य 'उखास्रत्'[1] 'पर्णध्वत्'[2] - इत्यादौ हि नुमोऽ[3]भावोऽत्राऽधातोरितिशब्दाऽभावेऽपि सुलभः । ज्ञापिते चाऽस्मिन् अधातुभूतपूर्वस्याऽपि नुमर्थमयं शब्दः स्वांशे चरितार्थो भवति । तेन 'गोमन्तमिच्छति 'गोमत्यति'[4] , गोमत्यतेरप्रत्यये[5] 'गोमान्'[6] - इत्यत्र नुम् सिद्ध्यति । अस्य वचनस्याऽसत्त्वे हि [7]गोमच्छब्दस्यांऽत्र धातुत्वादञ्चति-ग्रहणस्यानियमार्थत्वेन नुमत्र न सिद्ध्येत् ।

## 'अधातो'रितिशब्दः

'अत्वसन्तस्य[8]चाधातो'रित्यत्र 'अधातो'रितिशब्दः 'क्विबन्ता धतुत्वं न जहती' -तिवचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –

---

1. 'उखायां स्रंसते' - इत्यर्थे 'स्रंसु-स्रंसने' धा. पा. भ्वा. 754, इति स्रंसधातोः 'क्विप्‌च' - अष्टा. 3/2/76, इति क्विप्प्रत्यये 'अनिदितां हल उपधायाः क्ङिति'-अष्टा. 6/4/24, इतिनलोपे कृदन्तात्सौ - हल्ङ्यादिलोपे 'वसुस्रंसुध्वंस्वनडुहांदः' - अष्टा. 8/2/72 इति धातुसकारस्य दकारे, दकारस्य च' वाऽवसाने' - अष्टा. 8/4/56, इतिचर्त्वेन तकारे रूपमिदम् ।
2. पर्णान्ध्वंसते इत्यर्थे 'ध्वंसु-अवस्रंसने' धा. पा. भ्वा. 755, इतिध्वंस् धातोः 'क्विप्च'. अष्टा. 3/2/76, इतिक्विप् प्रत्यये' अनदितां' - अष्टा. 6/4/24, इतिनलोपे कृदन्तात् सौ हल्ङ्यादिलोपे 'वसुस्रंसुध्वंस्व.'- अष्टा. 8/2/72, इतिधातुसकारस्य दकारे दकारस्य च 'वाऽवसाने'-अष्टा. 8/4/56, इतिचर्त्वेन तकारे रूपमिदम् ।
3. 'उगिदचां.' - अष्टा. 7/1/70 ।
4. गोमच्छब्दात् 'सुपआत्मनःक्यच्' - अष्टा. 3/1/8, इति क्यचि तदन्ताल्लटि तिपि शपि रूपमिदम् ।
5. अश्रावी प्रत्ययोऽप्रत्ययः स चेह क्विप् ।
6. क्यजन्तात् गोमत्येतिधातोः 'क्प्चि' - अष्टा. 3/2/76, इति क्विप्प्रत्यये तस्य सर्वापहारे 'अतोलोपः' - अष्टा. 6/4/48 इति क्यचोऽकारस्य 'क्यस्यविभाषा'-अष्टा. 6/4/50, इतियकारस्य च लोपे कृदन्तत्वात् सौ' उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70 इतिनुमि 'अत्वसन्तस्यचाऽधातोः' अष्टा. 6/4/14, इत्यसन्तस्योपधाया दीर्घे हल्ङ्यादिलोपे संयोगान्तलोपे च कृते रूपमिदम् ।
7. 'क्विवन्ता धातुत्वं न जहती'तिवचनादितिशेषः ।
8. अष्टा. 6/4/14 ।
9. तथाहि - "अत्वसन्तस्येति (6/4/14) सौ उपधादीर्घविधाने अधातुग्रहणं पिण्डं ग्रसते इति पिण्डग्रइति क्विबन्तस्य द्रीर्घो माभूदित्येवमर्थम् । ततश्चैतदेवं ज्ञापयति 'क्विवन्ता धातुत्वं न जहती'ति । तेन नियौ नियः लुवौलुव इति - प्रकृतेर्धातुत्वादियङुवङौ भवतः "इत्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे - पृ. 86 ।

'भवान्'[1] सुपयाः[2] - इत्यादौ दीर्घार्थमारब्धे अतु, अस् इत्येवमन्तस्य[3] अधातोरुपधायाः सावसम्बुद्धौ परतो दीर्घो भवती'त्यर्थकेऽस्मिन्सूत्रे पिण्डग्र[4] इति क्विबन्तस्य दीर्घवारणायोपात्तोऽयंशब्दोऽस्य वचनस्याऽभावे व्यर्थः । क्विबन्तस्य धातुत्वाऽभावेनोपात्तेऽप्यस्मिन्शब्देऽत्र दीर्घो हि दुर्वारः ।ज्ञापिते चाऽस्मिन् वचने क्विबन्तस्याऽपि धातुत्वात् 'पिण्डग्रः' इत्यत्राऽसन्तस्योपधाया दीर्घो माभूदित्येतदर्थं शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'नियौ'[5] नियः[6] 'लुवौ'[7] 'लुवः,[8] - इत्यादौ प्रकृतेर्धातुत्वादियङुवङोःसिद्धिः[9] । अस्य वचनस्याऽसत्त्वे हि क्विबन्तानां नी - लू - प्रभृतीनां धातुत्वाऽभावादत्र तयोः सिद्धिर्न स्यात् ।

---

1. भातीत्यर्थे 'भा दीप्तौ' धा. पा. अदा. 1051, इति भाधातोः 'भातेर्डवतुः' उणादि सू. 63, इति डवतुप्रत्यये उकारोऽत्र इत् उकार उच्चारणार्थः, इति डित्त्वादभस्याऽपि टेर्लोपे 'भवत्' इतिशब्दो निष्पद्यते । ततः कृदन्तत्वात्सौ 'अत्त्वसन्तस्य चाधातोः' अष्टा. 6/4/14, इत्युपधादीर्घे 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70, इति नुमागमे हल्ङ्यादिलोपे संयोगान्तलोपे च कृते रूपमिदम् ।
2. सुपयस्शब्दात् सौ 'अत्वसन्तस्य' अष्टा. 6/4/14, इत्युपधादीर्घे असुनोऽत्र उगित्त्वाद् 'उगिदचाम्,' - अष्टा. 7/1/70, इति नुमागमे हल्ङ्यादिलोपे संयोगान्तलोपे सकारस्य रुत्वे विसर्गे च रूपमिदम् ।
3. 'अर्थवद्ग्रहणे नानर्थकस्य' प. शे. प. 15, पृ. 98, इत्यस्या अपवादभूतया 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति प. शे. प. 17, पृ. 109, इत्यनया अनर्थकादप्यसोरिह तदन्तविधिर्भवतीति प्रकृतार्थ - लाभो भवति ।
4. 'पिण्डं ग्रसते' इत्यर्थे पिण्डमिति कर्मोपपदात् 'ग्रसु अदने' धा. पा. भ्वा. 630, इति - ग्रस्धातोः 'अन्येभ्योऽपि दृश्यन्ते' - अष्टा. 3/2/75, 'क्विप्च' - अष्टा. 3/2/76, इति क्विपि उपपदसमासे पिण्डग्रस्तृकृदन्तशब्दात्सौ सकारस्यात्त्वे च रूपमिदम् ।
5. नयतीत्यर्थे णीञ् प्रापणे' धा. पा. भ्वा. 901, इति नीधातोः 'क्विप्च' - अष्टा. 3/2/76, इतिक्विपि क्विपः सर्वापहारलोपे कृदन्तादौ विभक्तौ 'अचि श्नुधातुभ्रुवांय्वोरियङुवङौ' - अष्टा. 6/4/77, इति इयङि रूपमिदम् ।
6. क्विबन्तात् 'णीञ् प्रापणे' धा. पा. भ्वा. 901, इतिनीधातोः कृदन्तत्वाज्जसि 'अचिश्नु.' - अष्टा. 6/4/77, इतिइयङ् रूपमिदम् ।
7. क्विबन्तात् 'लूञ्छेदने' धा. पा. क्र्या. 1484, इतिलूधातोः कृदन्तत्वादौ विभक्तौ 'अचिश्नु' अष्टा. 6/4/77, इतिउवङि रूपमिदम् ।
8. क्विबन्तात् 'लूञ्छेदने' धा. पा. क्र्या. 1484, इतिलूधातोः कृदन्तत्वाज्जसि 'अचिश्चनु.' - अष्टा. 6/4/77, इतिउवङि रूपमिदम् ।
9. 'अचिश्नुधातुभ्रुवांय्वोरियङुवङौ' - अष्टा. 6/4/77 ।

## 'अधी'तिशब्दः

'[1]अधीगर्थदयेशांकर्मणी'त्यत्राऽधी'तिशब्दः 'इक्[2] धातुरपि नित्यमधिपूर्वः' इतिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावे 'इगर्थे'त्येतावतैव स्मरणार्थक-धातुलाभादत्र 'अधी'तिशब्दो व्यर्थः । ज्ञापितेचाऽस्मिन् वचने नित्यमधिपूर्वकत्वादि-कोऽधिशब्दोपादानमत्र सार्थकतामेति । ज्ञापितस्याऽस्य वचनस्य फलं तु स्मरतीत्यर्थे एतीतिप्रयोगाऽऽपत्तिपरिहारः । अस्यांऽभावे हि तदापत्तिर्दुवारा । अत्र वचनेऽपि प्रवेश इङोऽपि नित्यमधिपूर्वक एव प्रयोग[4] इतिबोधयितुम् । अतएव भगवता "क्रियाविशेषक उपसर्गः । पचतीति क्रिया तां प्रविशिनष्टि । यद्यपि

---

1. अष्टा. 2/3/52, "अधीगर्थाः = स्मरणार्थाः 'दय दानगतिरक्षणेषु' 'ईश ऐश्वर्ये' - एतेषां कर्मणि कारके शेषत्वेन विविक्षिते षष्ठी विभक्तिर्भवति । मातुः स्मरति । ...........इति का. 2/3/52 ।
2. धा. पा. 'इक् स्मरणे' अदा. 1047 ।
3. तथाहि –
   (क) "अध्ययनार्थानामित्युच्यमाने सन्देहः स्यात् - कोऽयं धातुरिति । अधिपूर्वस्योच्चारणे-नाधिपूर्वस्यैवास्य प्रयोग इति दर्शयती"त्याह जि. बु. न्या. 2/3/52 ।
   (ख) "अधिपूर्वस्यैवोच्चारणमेवमेवायं प्रयोक्तव्य इति ज्ञापनार्थ"मित्याह ह. मि. पदम. 2/3/52 ।
   (ग) "अयमप्यधिपूर्वः । 'अधीगर्थदयेशा'मितिलिङ्गात् । अन्यथा हीगर्थेत्येव ब्रूया" दित्याह भ. दी. वै. सि. कौ. तिङन्ते अदा. प्र. पृ. 165 ।
   (घ) "अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इतिज्ञापनार्थम् । अन्यथा 'स्मृत्यर्थदयेशाम्' - इत्येव ब्रूयात्, इगर्थेति वा । इङंशेनेदं ज्ञापकमितिचेत्तर्हि तदंशे 'णेरध्ययने वृत्तम्' - इत्यत्राधिशब्दो ज्ञापकमस्तु" इत्याह ज्ञा. भि. तत्त्वबो. तिङन्ते अदा. प्र. पृ. 344 - 345 ।
   (ङ) "अयमपीति । इङ् धातुवदयमपि धातुर्नित्यमधिपूर्वक इत्यर्थः । ननु धातुपाठे इङमधिकृत्य 'नित्यमधिपूर्व इति वचनात्, भूवादिसूत्रभाष्याच्च इङो नित्यमधिपूर्वकत्वं युक्तम्, अस्य तु तथात्वे किं प्रमाणमित्यत आह - अधीगर्थेति । तत्रहि अधीगर्थेत्यनेन स्मरणार्थकधातुर्विवक्षितः । इग्धातोरधिपूर्वकत्वाऽभावेऽपि स्मरणार्थकत्वे इगर्थेत्येतावतैव स्मरणार्थधातुलाभात्तत्र अधीति व्यर्थं स्यात् । अत इग्धातुरयं नित्यमधिपूर्वक एव स्मरणार्थक इति विज्ञायत इत्यर्थः' इत्याह वा. दी. बालमनो. तिङन्ते अदा. प्र. पृ. 165 ।
   (च) "अधीगर्थ (सू. 2/3/52)" अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इतिज्ञापनार्थम्" इत्याह एस्. एन्. रामानुजताताचार्यः ज्ञा. सं. परि. 2 पृ. 210 ।
4. (क) तदंशे 'णेरध्ययने वृत्त' मित्यत्राधिशब्दो ज्ञापकमस्ति इत्याह हि ज्ञानेन्द्र भिक्षुः तत्त्वबो. तिङन्ते अदा. प्र. पृ, 345 ।
   (ख) "इङः अध्युपसर्गाव्यभिचारे ज्ञापकं तु 'णेरध्ययने वृत्तम्' (सू. 7/2/26) इत्यत्र अधिशब्दोच्चारणमिती"त्याह- हि एस्. एन्. रामा. ज्ञा. सं. परि. विवृतौ पृ. 210 ।

तावदत्रैतच्छक्यते वक्तुं - यत्र धातुरुपसर्गं व्यभिचरति । यत्र न खलु तं व्यभिचरति, तत्र कथम् - अध्येति, अधीते इति"? इत्युक्तम्[1] ।

## 'अध्व'न्नितिशब्द

[2]'स्पिगपूतवीणऽञ्जोऽध्वकुक्षिसीरनाम-नाम चे'त्यत्राध्वन्नि'तिशब्दः 'समासान्तो विधिरनित्यः[3] 'इति परिभाषाया ज्ञापकः[4] । यतोऽस्या अभावेऽत्रासौ व्यर्थः । तथाहि – सूत्रेऽस्मिन् 'अध्व'न्नितिशब्दः 'अपाध्वा[5]'इत्यत्र यदा समासान्तो[6] न

---

1. व्या. म. भा. 1/3/1/1 पृ. 163 ।
2. अष्टा. 6/2/187 ।
3. (क) 'समासान्तविधिरनित्यः' -व्याडिः प. सू. प. 75, पृ, 32 ।
   (ख) पु. दे. ल. पं. वृ. प. 82, पृ 148 ।
   (ग) सी. दे. बृ प. वृ प. 63, पृ. 228 ।
   (घ) 'समासान्तविधिरनित्यः' नी. दी. प. वृ प. 74, पृ. 307 ।
   (ङ) 'समासान्तविधिरनित्यः' - ह. भा. प. भास्क. प. 65, पृ. 350 ।
   (च) 'समासान्तविधिरनित्यः' - भ. ना. प. शे. प. 85, पृ. 309 ।
   (छ) 'समासान्तविधिरनित्यः' - शेषा. प. भास्क. प. 72 पृ. 438 ।
4. तथाहि–
   (क) " 'उपसर्गादध्वनः' इति यदा समासान्तो नास्ति, तदाऽनेनान्तोदात्तत्वं भवति । तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम् । 'अनित्यश्च समासान्तः' इत्येतदेव ज्ञापकम्" इत्याह वाम. का. 6/2/187 ।
   (ख) 'यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कृतं स्यात्, अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्, कृतं च, तस्मादेतदेव ज्ञापयति-समासान्तविधिरनित्य इति । तेन 'तत्रोपासितलोकभर्त्तरि' इत्यादयः प्रयोगा उपपन्ना भवन्ती"त्याह जि. बु. न्या. 6/2/187 ।
   (ग) "यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कर्तव्यं स्याद्, अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तत्वस्य सिद्धत्वात्; कृतं तु ज्ञापयति - समासान्तविधिरिनित्य इतीत्याह ह. मि. पद. 6/2/187 ।
   (घ) "ज्ञापकं चास्याः 'स्फिगपूतवीणऽञ्जोऽध्वकुक्षिसीरनामनाम च' (6/2/187) इत्यात्राध्वग्रहणम् । तद्धि 'अपाच्च' (3/2/186) इत्यतोऽपादित्यनुवृत्तावपादुत्तरस्याध्वनोऽन्तोदात्तत्वं यथा स्यादिति क्रियते । यदि च नित्यः समासान्तः स्यात्तदा 'उपसर्गादध्वनः' (5/4/85) इति समासान्तेऽचि कृते चित्त्वादेवान्तोदात्तत्वं सिद्धमिति तत्राध्वग्रहणं न कुर्यात् । कृतं चातो ज्ञापयत्यस्तीयं परिभाषेती"त्याह सी. दे. बृ. प. वृ, प. 63, पृ. 228 ।
5. 'अद भक्षणे' धा. पा. अदा. 1011, इति अद्धातोः 'शीङ्कृशिरहिजिक्षिसृधृभ्यः क्वनिश-उणा. सू. इत्यधिकृत्य अदेर्घ च' -उणा. सू. इति क्वनि - प्रत्यये दकारस्य धकारे च कृते अपेत्यनेन अध्वनः 'कुगतिप्रादयः '-अष्टा. 2/2/18, इति प्रादिसमासे समास-प्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपदिम् ।
6. 'उपसर्गादध्वनः' - अष्टां. 5/4/85 इत्यच् ।

भवति तदाऽन्तोदात्तत्वादेवोपात्तः । अस्या असत्त्वे हि 'अचूप्रत्यन्ववपूर्वात्साम-लोम्नः[1] 'इत्यतोऽजूग्रहणेऽनुवर्त्तमाने 'उपसर्गादध्वनः[2] 'इत्यचि समासान्ते कृतेऽत्र [3]चित्त्वादेवान्तोदात्तत्वं सुलभमित्यसौ व्यर्थः । ज्ञापितायां चास्यामत्र[4] समासान्तस्याऽनित्यतया तदभावेऽध्वनोऽपादुत्तरस्याऽन्तोदात्तत्वाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु '[5]धृतधनुषमह्नाये'त्यत्र '[6]धनुषश्चे'त्यङोऽभावः । अस्या असत्त्वे हि अङः समासान्तस्याऽऽपत्तिरत्र दुर्वारा स्यात् ।

## 'अनन्तर'इति शब्दः

'गतिरनन्तरः'[7] इति सूत्रे 'अनन्तर' इति शब्दः 'कृद्ग्रहणे गतिकारकपूर्वस्यापि[8] ग्रहण'मिति परिभाषाया ज्ञापकः[9] । यतोऽस्या अभावे सूत्रेऽस्मिन्' 'अनन्तर' - इति

---

1. अष्टा. 5/4/75 ।
2. अष्टा. 5/4/85 ।
3. 'चितः' - अष्टा. 6/1/163 ।
4. 'उपसर्गादध्वनः' - अष्टा. 5/4/85 इति विहितस्येत्यर्थः ।
5. 'स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्' - शि. म. स्तो. श्लो. 23 ।
6. अष्टा. 5/4/132 ।
7. अष्टा. 6/2/49 ।
8. (क) व्याडिः प. सू. प. 93 पृ. 38 ।
   (ख) पु. दे. ल. प. वृ, प. 46, पृ. 132 ।
   (ग) सी. दे. बृ. प. वृ. प. 62, पृ. 228 ।
   (घ) नी. दी. प. वृ. प. 35, पृ. 299 ।
   (ङ) ह. भा. प. भास्क. प. 64, पृ. 349 ।
   (च) भ. ना. प. शे. प. 29, पृ. 144 ।
   (छ) शेषा. प. भास्क. प. 28, पृ. 406 ।
9. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति तज्ज्ञापयत्याचार्यो - भवत्येषा परिभाषा कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति किमेतस्या ज्ञापने प्रयोजनम्? अवतप्ते नकुलस्थितं त एतत् । उदके विशीर्णं त एतत् । सगतिकेन सनकुलेन स समासः सिद्धो भवती"त्याह. प. व्या. म. भा. 6/2/1/49 ।
   (ख) यावता प्रत्ययग्रहणपरिभाषया हृतशब्दः क्तान्तः, नोद्धृतशब्दः । एवं तर्ह्येतज्ज्ञापयति - "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति"त्याह. ह. मि. पदम. 6/2/49 ।
   (ग) "ज्ञापकं चास्याः 'गतिरनन्तरः' (6/2/49) इत्यनन्तरग्रहणम् । तेन हि कृदन्तेन क्तान्ते उत्तरपदे पूर्वपदस्यानन्तरस्य गतिस्वरो विधीयते । उद्धृतम् अवधृतम् इति । नतु व्यवहितस्य अभ्युद्धृतमिति । तत्र यदीयं कृद्ग्रहणपरिभाषा नाभवष्यित्तदा प्रत्ययग्रहणपरिभाषयैव अप्रत्युद्धृतमिति व्यवहितशब्दसंघाते क्तान्ते प्राप्तिरेव नास्तीति तन्निवृत्त्यर्थमनन्तरग्रहणं नाकरिष्यत । तत् कृतमस्यार्थस्य ज्ञापकमिति लिङ्गमात्रं

च । अस्याः सूत्रकारोपगमादेव साधुत्वम् । यतः कारकपूर्वस्यापि ग्रहणे न ज्ञापकं तस्मात् कात्यायन-पठितत्वादेवैषा प्रमाणमितीत्याह पु. दे. ल. प. वृ. प. 46, पृ. 132 ।

(ध) ज्ञापकं चास्या गतिरन्तर इत्यनन्तरग्रहणम् । तेन क्तान्त उत्तरपदे पूर्वस्यानन्तरस्य गतिस्वरो विधीयते । उद्भूतमवधूतमिति । नहि व्यवहितस्याभ्युद्धृतमिति । तत्र यदीयं परिभाषा न भवेत् - तदा प्रत्ययग्रहण-परिभाषयैवोद्धूतशब्दे (अभ्युद्धृतशब्दे) संघाते सक्तान्ते प्राप्तिरेव नास्तीति किमेतन्निवृत्त्यर्थेनानन्तरग्रहणेन । तत् कृतं ज्ञापयत्यस्तीयं परिभाषेति । लिङ्गमात्रं चेदम् । कात्यायन-भाष्यकाराभ्युपगमादेव सिद्धेयम् । अन्यथा कारकपूर्वग्रहणस्य ग्रहणे किं ज्ञापकं स्या"दित्याह सी. दे. बृ. प. वृ. प. 62, पृ. 228 ।

(ङ) 'गतिरनन्तरः' (6/3/49) इतिसूत्रे अनन्तरग्रहणमस्या ज्ञापकम् । तद्धि 'अभ्युद्धृतम्' इत्यादौ व्यवहितनिरासाय अन्यथाव्यवहिते प्राप्तेरेवाभावादनन्तरग्रहणं व्यर्थं स्यादिति 'गतिरनन्तरः' (6/2/49) इति सूत्रे भाष्ये स्थित"मित्याह नी. दी. प. वृ. प. 35, पृ. 299 ।

(च) 'परिभाषाया ज्ञापकं' गतिरनन्तरः' (6/2/49) इत्यनन्तर - ग्रहणमिति भाष्यकारः । तथाहि गतिरनन्तरः इत्यनेन क्तान्ते व्यवहितस्य गतेः प्रकृतिस्वरो विधीयते पुरोहितमिति । न तु अभ्युद्धृतमिति व्यवहितस्य । अत्र यदीयं परिभाषा न स्यात् तदा प्रत्यय ग्रहणपरिभाषया व्यवहितस्य न स्यादवेत्यन्तरग्रहणं व्यर्थं स्यादिती"- त्याह. ह. भा. प. भास्क. प. 64, पृ. 350 ।

(छ) 'अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तरः' इति सूत्रेऽनन्तरग्रहणं ज्ञापकम् । तद्ध्यभ्युद्धृतमित्यादावभावातिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाऽप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् । नचाभ्युद्धृतमित्यादौ परत्वाद्गतिर्गतावित्यनेनाभेर्निघात एवेति वाच्यम् । पादादित्वेन पदात् परत्वाभावेन च तदप्राप्तेः । अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्गत्याक्षिप्तधातु-निरूपितमेवाऽनन्तर्यं गृह्यते इति न दोषः । न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्यादः पूर्वपदत्वाभावेऽपि स्वारार्थं तदिति वाच्यम् ।

'कारकाद्दत्ते'तिसूत्रे कारकादिति योगं विभज्य तत्र गतिग्रहणमनुवर्त्त्य कारकादेव परं गति-पूर्वपदं क्तान्तमनुदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वासिद्धेः । तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेवे'त्याह– भ. ना. प. शे. प. 29, पृ. 144 - 146 ।

(ज) अस्याश्च परिभाषाया ज्ञापकम् -'गतिरनन्तरः' इति सूत्रे अनन्तरग्रहणम्, तद्धि अभ्युद्धृतमित्यत्र अभेः प्रकृतिस्वरवारणाय । यदीयं परिभाषा न स्यात्, तदा उद्धृतशब्दस्य प्रत्ययग्रहणपरिभाषया तदादिनियमेन क्तान्तत्वाभावेन क्तान्तोत्तरपद-परत्वाभावेन प्रकृतिस्वराप्राप्तौ व्यर्थं स्या"दित्याह शेषा. प. भास्क. प. 28, पृ. 407 ।

(झ) "गतिरनन्तरः' (सू. 6/2/49) इत्यनन्तरग्रहणं कृद्ग्रहणे गतिकारकपूर्वस्यापीत्यस्याः ज्ञापक" मित्याह श्रीना. ज्ञा. सं. । पृ. 46 ।

शब्दो व्यर्थः । तथाहि - अभ्युद्धृतमित्यादावभ्यादौ प्रकृतिस्वरवारणायात्र अनन्तर-शब्द उपात्तः । अस्या अभावे तु 'अभ्युद्धृतं'[1] 'समुद्धृतः'[2] 'समुदाहृतः'[3] इत्यादौ उद्धृतादिशब्दस्य '[4]प्रत्ययग्रहण'परिभाषया तदादिनियमेन क्तान्तान्तत्वाभावेन क्तान्तोत्तरपदत्वाभावेन अभिसमुदां पूर्वपदप्रकृतिस्वरस्य प्राप्तिरेव नास्तीति[5] तत्र पूर्वपदप्रकृति - स्वरवारणायोपात्तोऽयमनन्तर इति शब्दो व्यर्थः । व्यर्थश्चासौ स्थालीपुलाकन्यायेन सम्पूर्णामिमां ज्ञापयति । ज्ञापितायां चास्यां 'कृद्ग्रहण' - परिभाषायामुद्धृतादिशब्दानामप्यनया क्तान्तत्वात् क्तान्तोत्तरपदत्वाच्चात्र अभिसमुदां प्राप्तस्य प्रकृतिस्वरस्य वारणाय सूत्रेऽस्मिन्ननन्तर इति शब्दः स्वांशे चरितार्थो भवति । न च ज्ञापितायामप्यस्यां नासौ स्वांशे चरितार्थो यतोऽनया क्तान्तत्वेन उद्धृतोदाहृतयोर्ग्रहणादत्रान्तरा एव अभिसमुदो गतिसंज्ञका इति शङ्कनीयम् । यतो 'गतिरनन्तरः 'इति सूत्रेऽनन्तरग्रहणसामर्थ्याज् ज्ञापिताऽपि कृदग्रहणपरिभाषा इह नाश्रीयते । अन्यथा व्यावर्त्याभावेन अनन्तरशब्दोऽपार्थक एव स्यात् । न चात्र सूत्रे तस्या अप्रवृत्तयेऽनन्तरशब्दस्यावश्यकतया कथं तस्य परिभाषाया ज्ञापकत्वमित्यपि शङ्कनीयम् । यतो यावता विना न चारितार्थ्यं तावज्ज्ञापयती'ति न्यायः प्रसिद्धः[6] । स च न्यायोऽत्र कृद्ग्रहणपरिभाषाया अप्रवृत्तिज्ञापकत्वेऽपि हेतुः । अथवात्र सूत्रेऽनन्तरग्रहणसामर्थ्याद् गत्याक्षिप्तधातुनरूपमेवान्तर्यं गृह्यते । तथा सति तत्र क्रमशः अभिसमुदां धातुनिरूपितमानन्तर्यं नास्तीति तत्र पूर्वपदप्रकृतिस्वरवारणाय स्वांशेऽनन्तरशब्दस्य चारितार्थ्यमव्याहतम् ।

न च ज्ञापितायामप्यस्यामत्र अभिसमुदां [7]'गतिर्गता'वितिनिघातो भविष्यति, सति च तस्मिन् उदात्त-स्वरिताधिकारादेव पूर्वपदप्रकृतिस्वरस्याप्रसङ्ग इति व्यवहितनिवृत्त्यर्थमनन्तरग्रहणमिह नावश्यकं भवतीति शङ्कनीयम् । यतोऽत्राभि-समुदां पादादिस्थत्वेन पदात् परत्वाभावेन च 'गतिर्गता'विति निघातस्य प्राप्तिरेव

---

1. अभ्युत्पूर्वकात्' हृञ् हरणे - धा. पा. भ्वा. 924, इति हृधातोः 'निष्ठा' अष्टा. 3/2/102 इति क्तः ।
2. समुत्पूर्वकात् "हृञ् हरणे" धा. पा. भ्वा. 924, इति हृधातोः 'निष्ठा' - अष्टा. 3/2/102 इतिक्तः ।
3. समुदाङ्पूर्वकात् "हृञ्हरणे" धा. पा. भ्वा. 924 हृधातोः "निष्ठा' - अष्टा. 3/2/102 इतिक्तः ।
4. प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति ।
5. तथाहि - 'क्ते' 'कर्मणि'इति वर्तते । कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति । प्रकृतः । प्रहृतः । इति का. 6/2/49 ।
6. म.म. जयदेव मिश्रेण परिभाषेन्दुशेखर - विजयायामुद्धृतः प. 29, पृ. 145 ।
7. अष्टा. 8/1/70 ।

नास्ति । अपादादिस्थस्य पदात्परस्य च गतिसंज्ञकस्य गतौ परेऽनेन हि निघातो विधीयते[1] ।

न चाभ्युद्धृतमित्यादावभिना समासेऽपि[2] उद्धृतरूपसमासीय-पूर्वपदत्वमुदोऽक्षतमेवेति कथमपूर्वपदत्वं तस्येति वाच्यम् । उद्धृतरूपसमासीय-पूर्व-पदत्वमादाय प्रवृत्तं गतिरनन्तर इति सूत्रं तत्समासीय-थाथादिस्वरस्य प्रत्यासत्त्या बाधकं स्यान्न त्वभ्युद्धृतेति समासीयस्य बहिरङ्गत्वादिति विशिष्टसमासीय-थाथादिस्वर- बाधनार्थं तत्समासेऽपि गतिरनन्तर इति सूत्रं तत्समासापूर्वपदत्वाच्च न प्राप्नोति । उक्तरीत्याऽनन्तरग्रहण - सामर्थ्यादनन्तरमात्रस्य भवतीत्यर्थबोधनद्वारा अपूर्वपदत्वेऽपि स्वरार्थमस्तु न परिभाषाज्ञापक इति शङ्क्यम् । यतः 'कारकाद्दत्त-' श्रुतयोरेवाशिषी'ति सूत्रे कारकादिति योगो विभज्यते, तत्र च गति-ग्रहणमनुवर्तते तथा सति तेन कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमः[3] क्रियते, सति चास्मिन् नियमे [4]थाथादिस्वरूपप्राप्तिरेव नास्तीति कृत्स्वरेणोद[5] उदात्तत्वं सुलभम् । अतो नोदः पूर्वपदत्वाभावेऽपि स्वरार्थम् अनन्तर इतिशब्दश्चरितार्थ इति युक्तमस्य कृद्ग्रहणपरिभाषाज्ञापकत्वम् ।

न च परिभाषाया अस्या ज्ञापनात् प्राग् उद्धृतस्य कृदन्त-तदादित्वाभावेन [6]कृत्स्वराप्राप्त्या नोद उदात्तत्वं कृत्स्वरेण सुलभमित्याशङ्कनीयम् । यतोऽत्रानन्तर इतिशब्दस्य ज्ञापकतापरभाष्यप्रामाण्येन कृत्स्वरविधायके तदन्तविधिद्वयं[7] स्वीक्रियते इत्युद्धृते कृदन्ततदाद्यन्तत्वस्याक्षुण्णतया कृत्स्वरेणोद उदात्तत्वं सुलभम् । इत्थं व्यवहितनिवृत्त्यर्थोऽत्र सूत्रे गृहीतोऽनन्तर इति शब्दः कृद्ग्रहणपरिभाषां विना नात्मनः सार्थकतां लभते, इति तां ज्ञपयन्नात्मनः सार्थकतां लभमानोऽसौ नूनं ज्ञापकतामाधत्ते ।

ज्ञापिताया अस्याः फलन्तु 'उदके विशीर्णम्'[8] 'अवतप्ते नकुलस्थित'-'मित्यादौ[9] गतिपूर्वपदस्य विशीर्णशब्दस्य कारकपूर्वपदस्य[10] च नकुलस्थितशब्दस्य

---

1. तथाहि-'आपादपरिसमाप्तेरपादादावित्यधिकार' इत्याह हरदत्तमिश्रः पदम. 6/2/49 ।
2. कुगतिप्रादयः - अष्टा. 2/2/18 ।
3. अष्टा. 6/2/148 ।
4. 'थाऽथघञ्क्ताजवित्रकाणाम्' - अष्टा. 6/2/144 ।
5. 'गतिकारकोपपदात् कृत्' - अष्टा. 6/2/139 ।
6. 'गतिकारकोपपदात् कृत्' - अष्टा. 6/2/139 ।
7. 'गतिकारकोपपदात् कृत्' - अष्टा. 6/2/139 ।
8. 'विपूर्वकात् शॄ हिंसायाम्' धा. पा. क्र्या. 1438, इति शॄधातोः 'निष्ठा' - अष्टा. 3/2/102, इतिक्तप्रत्यये ॠत इद्धातोः' -अष्टा. 7/1/100 इति ॠकारस्य इत्त्वे 'उरण्रपरः' - अष्टा. 1/1/51 इति रपरत्वे 'हलि च' - अष्टा. 8/2/77 इतीकारस्य दीर्घे 'श्र्युकः किति' अष्टा. इतीण्निषेधे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' - अष्टा. 8/2/82 इति निष्ठा-

क्तान्तत्वेन 'क्षेपे' इति सप्तमीतत्पुरुषसमासस्य 'तत्पुरुषे कृति बहुलम्'[1] इति सप्तम्या अलुकश्च सिद्धिः । अस्या अभावेऽत्र विशीर्णनकुलस्थितशब्दयोः क्तान्तत्वाभावात् सप्तमीतत्पुरुषसमासालुकौ न सिद्ध्येताम् । तथा 'सांराविण- मित्यत्र[2]सगतेः 'अणिनुणः'[3] इति इनुणन्तादणः सिद्धिरप्यस्याः फलम् । अस्या अभावे तु इनुणन्तत्वाभावादिहाण् नानेन सिद्ध्येत् ।

परिभाषायामस्याम् .अपिपदोपादानेन 'क्वचन प्रत्ययग्रहणपरिभाषाया अपि प्रवृत्तिर्विज्ञायते, । तेन यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद् - विशिष्टस्यैव ग्रहणं, यत्र च गतिकारकासमभिव्याहृतं कृदन्तं तत्र केवलस्याऽपि कृदन्तस्य ग्रहणमिति प्रकृतपरिभाषार्थः सम्पद्यते । अपि शब्दोपादानप्रयोज्यै-तत्परिभाषार्थलाभ-फलं तु साङ्कूटिनमित्यस्यैव[4] साधुत्वं, न तु सांकौटिन-मित्यस्यापि । अन्यथाऽत्र केवलकूटिनृशब्दस्यापि इनुणन्ततयां[5] ततोऽणि[6] सङ्कौटि-नमित्यस्यापि साधुत्वमापद्येते' ति भट्टश्रीनागेशो मनुते[7] ।

---

तस्य नत्वे 'रषाभ्यां नो णः समानपदे' - अष्टा. 8/4/1 इति नस्य णत्वे स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्य ।

9. गतिनिवृत्तौ धा. पा. भ्वा. 928, इति स्थाधातोः 'निष्ठा' - अष्टा. 3/2/102, इति क्त-प्रत्यये'द्यतिस्यतिमास्थामित्ति किति' - अष्टा. 7/4/40, इति आकारस्य इत्वे स्वादिकार्येषु कृतेषु रूपमिदं - सिद्ध्यति ।

10. अष्टा. 2/1/47 ।

1. अष्टा. 6/3/14 ।

2. संपूर्वकात् 'रु शब्दे' धा. पा. अदा. 1034 इति रुधातोः 'अभिविधौ भावे इनुण्' -अष्टा. 3/3/44 इति इनुणप्रत्यये 'अचोञ्णिति' -अष्टा. 7/2/115, इति धातोरुकारस्य वृद्धौ 'संराविन्'-इतीनुणन्तात् 'अणिनुणः'- अष्टा. 5/4/15 इत्यणि 'इनण्यनपत्ये' अष्टा. 6/4/164 इति प्रकृतिभावेन नस्तद्धिते - अष्टा. 6/4/144 इति टिलोपाभावे तद्धितेष्वचामादेः अष्टा. 7/2/117 इत्यादि वृद्धौ स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

3. अष्टा. 5/4/15 ।

4. संपूर्वकात 'कूट परितापे, परिदाह इत्यन्ये धा. पा. चु. 1891 इति कूटधातोः 'अभिविधौ भावे हनुण्' -अष्टा. 3/3/44, इति इनुणप्रत्यये तदन्ताद् गतिविशिष्टात् कृद्ग्रहणपरिभाषया 'अणिनुणः' – अष्टा. 5/4/15 इति अणि 'संकूटिन् अ' इत्यवस्थायाम्" "इनण्यनपत्ये'-अष्टा. 6/4/164 इतिप्रकृतिभावेन 'नस्तद्धिते' -अष्टा. 6/4/144 इति टिलोपाभावे 'तद्धितेष्वचामादेः' - अष्टा. 7/2/177, इति आद्यचो वृद्धौ तद्धिन्तत्वाप्रातिकत्वेन स्वादिकार्येषु रूपमिदं सिद्ध्यति ।

5. 'अभिविधौ भावे इनुण्' - अष्टा. 3/3/44 ।

6. 'अणिनुणः' अष्टा. 5/4/15 ।

7. प.शे. प. 29 पृ. 146 - 147 ।

श्रीनीलकण्ठ दीक्षितस्तु[1] 'परिभाषायामस्याम् 'अपिशब्देन प्रत्यय-ग्रहण-परिभाषालभ्यार्थः समुच्चीयते' इति मनुते ।

अनयोर्मतयोः श्रीनीलकण्ठदीक्षितमतमेव युक्तं प्रतिभाति । यतो नेयमपि शब्दस्य मर्यादा । ब्राह्मणमानय शूद्रमप्यानयेत्युक्तौ हि ब्राह्मणसत्त्वेऽपि शूद्रस्यानयनं प्रतीयते, न तु तदसत्त्व एव । इत्थं 'तदसमभिव्याहार' इति भट्टश्रीनागेशोक्तिरसङ्गता । साङ्कूटिनिमित्यत्र केवलादेवाणः[2] साधुत्वं तु लक्ष्यानुरोधात् क्वचनास्या अप्रवृत्तिस्वीकारादेवोपपद्यते । क्वचनास्या अप्रवृत्तिस्वीकारो लक्ष्यानुरोधेनावाश्यक एव । अन्यथा 'प्रज्ञासुकरः कटः' इत्यत्र खलि[3] 'खित्यनव्ययस्य'[4] इति ह्रस्व, 'अरुर्द्विषदजन्तस्य मुम्[5] 'इति मुम् चापद्येत, नह्यत्र गतिकारकासमभिव्याहृतं कृदन्तमस्ति येन नागेशमते केवलस्यापि ग्रहणमुपपाद्येत । अथवा 'साङ्कूटिन'मित्यत्र विशिष्टादेवाणः प्रवृत्तौ बीजं प्रत्ययग्रहणपरिभाषाया अप्रवृत्तिः । तस्यास्तत्राऽप्रवृत्तौ बीजं तु यथोद्देशपक्षे परत्वात्[6] 'कृद्ग्रहण'परिभाषया' प्रत्ययग्रहण-परिभाषाया बाधः । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषा हि अङ्गसंज्ञासूत्रे[7] ज्ञापितेति पूर्वा, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति परिभाषा तु 'गतिरनन्तरः'[8] इत्यत्र ज्ञापितेति परा । 'गतिरनन्तर' इति सूत्रेऽनन्तर इति शब्द-ज्ञापितेयं परिभाषा [9]कृद्विशेषग्रहणे [10]कृत्सामान्य-ग्रहणे च प्रवर्तते, न तु [11]कृदकृद्ग्रहणे' इत्यवधेयम् । अन्यथा कौम्भकारेयसिद्धिरिति अनुपसर्जनादित्यधिकारज्ञापितद्वितीयतदन्तविधेर्भाष्यकारोक्तं[12] फलं नोपपद्येत ।

---

1. प. वृ. प. 35 पृ. 299 ।
2. 'अणिनुणः' - अष्टा. 5/4/15 ।
3. 'कर्तृकर्मणोश्च भूकृञोः' - अष्टा. 3/3/127
4. अष्टा. 6/3/66 ।
5. अष्टा. 6/3/37 ।
6. 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः 'इति परिभाषयेत्यर्थः ।
7. 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' - अष्टा. 1/4/13 ।
8. अष्टा. 6/2/49 ।
9. 'क्षेपे' - अष्टा. 2/1/47. ।
10. 'कर्तृकरणेकृता बहुलम्' - अष्टा. 2/1/32 इत्यादौ ।
11. 'टिड्ढाणञ् - द्वयसज् - दघ्नञ् - मात्रच् - तयप् - ठक् - ठञ् - कञ् क्वरपः' - अष्टा. 4/1/15 इत्यादौ ।
12. व्या. म. भा. 4/1/14, पृ. 51 ।

## 'अनव्ययस्ये'ति शब्दः

[1]'खित्यनव्ययस्ये'त्यत्राऽनव्ययस्ये'तिशब्दः 'भवत्यत्र सूत्रे तदन्तग्रहण'मिति वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –'दोषामन्यमहः'[3] 'दिवामन्या रात्रिः'[4] - इत्यादौ 'दोषा'-दिवा'-प्रभृतीनामव्ययानां ह्रस्वप्रतिषेधायाऽत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावेऽत्र व्यर्थः । नह्यव्ययात्परः खित्[5] प्रत्ययः सम्भवति । धातोरेव हि स विहितः । नचाऽत्र तदन्तविधिरेतद्वचनं[6] विना सम्भवति । यतः 'उत्तरपदाधिकारे[7] प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति तत्प्रतिषेधो ज्ञापितः[8] । ज्ञापिते चाऽस्मिनुवचने 'दोषामन्यमहः' - इत्यादौ खिदन्ते उत्तरपदेऽव्ययस्य दोषाप्रभृतेः ह्रस्ववारणाय शब्दोऽयं स्वांशे

---

1. अष्टा. 6/3/66 ।
2. तथाहि –
   (क) "अथवैतज्ज्ञापयत्याचार्यः 'खित्यनन्तरस्य न भवती'ति यदयमनव्ययस्येतिप्रतिषेधं शास्ति । नहि खित्यनन्तरमव्ययमस्ती"त्याह पत. व्या. म. भा. 6/3/3/50 ।
   (ख) " 'अनव्ययस्य' इत्येतदेव ज्ञापकमिह खिदन्त-ग्रहणस्ये'त्याह वाम. का. 6/3/66 ।
   (ग) "यद्यत्र खित्प्रत्ययमात्रं गृह्येत, न तदन्तम्, ततोऽनव्ययस्येति प्रतिषेधोऽपार्थकः स्यात् । नह्यव्ययात् परः खित्प्रत्ययः सम्भवति, धातोरेव तस्य विधानात् । ततश्चाऽनर्थकत्वादनव्ययस्येत्येतन्नोक्तं स्यात्, उक्तञ्च - तस्मादेतदेवैतज्ज्ञापयति- खिदन्तस्यात्र ग्रहणमिती"त्याह जि. बु. न्या. 6/3/66 ।
   (घ) "धातोरेव खितो विधान्नाव्ययात्परः खित् प्रत्ययः सम्भवति । तस्मादव्ययप्रतिषेधादत्र तदन्तग्रहणमित्यर्थः "इत्याह ह. मि. पदम. 06/3/66
   (ङ) " 'खित्यनव्ययस्य' इत्यत्राऽनव्ययस्योक्तेः खिदन्तग्रहण"मित्याह श्रीना. ज्ञा. सं. 6 पृ. 108 ।
3. 'दोषा आत्मानं मन्यते' (इत्यर्थे 'दोषा' इत्युपपदात् 'मन ज्ञाने' धा. पा. दिवा. 1176, इति मन् धातोः 'आत्ममाने खश्च' -अष्टा. 3/2/83, खश्प्रत्यये 'अरुर्द्विषदजन्तस्य मुम्' - अष्टा. 6/3/67 । मुमोऽव्ययत्वादभावे 'दिवादिभ्यः श्यन्' - अष्टा. 3/1/69, विकरणे कृदन्तात् सौ तस्याऽमिपूर्वरूपे च कृते रूपदिम् ।
4. 'दिवा आत्म नं मन्यते' इत्यर्थे 'दिवा' इत्युपपदात् 'मन ज्ञाने' धा. पा. 1176, । इतिमन्धातोः 'आत्ममाने राज्य' अष्टा. 3/2/83, इतिखश्प्रत्ययेऽजन्तत्वेऽपि दिवाशब्दस्याऽव्ययत्वादभावे श्यन् विकरणे दिवादित्वा कृते सति टापि सवर्णदीर्घैकाऽऽदेशे रूपमिदम् ।
5. खकारेत्संज्ञाक खशादिप्रत्यय इत्यर्थः ।
6. 'येनविधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
7. 'उत्तरपदाधिकारे प्रत्यय-ग्रहणे न तदन्तग्रहणम्' - प. शे. प. 16, पृ. 132 ।
8. 'हृदयस्य हृल्लेखयण्लासेषु' - अष्टा. 6/3/50 इत्यत्र लेखग्रहणादितिशेषः ।

चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'शुनिन्धय'[1] इत्यादौ खिदन्ते परे ह्रस्वसिद्धिः[2] । अस्य वचनस्याऽसत्त्वे हि खिदन्त इत्यर्थाऽलाभेन[3] ह्रस्वत्वमत्र न सिद्ध्येत ।

## 'अनादेश'इति शब्दः

'युष्मदस्मदोरनादेशे'[4] इत्यत्र 'अनादेश'इतिशब्दः 'आदेशः स्थानिव'-दितिवचनस्य [5]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽयं शब्दोऽत्र व्यर्थः । तथाहि– [6]युष्माभिः [7]'अस्माभिः' [8]'युष्मासु' [9]'अस्मासु' इत्यादौ युष्मदस्मदोर्दकारस्याऽऽ-काराऽऽदेशार्थमारब्धे 'युष्मदस्मदित्येतयोरनादेशा विभक्तौ परत आकाराऽऽदेशो भवती'त्यर्थकेऽस्मिन्सूत्रे [10]'युष्मत्' [11]'अस्मत्' इत्यादौ [12]आदेशा विभक्तौ परत आकाराऽऽदेशप्रतिषेधार्थमुपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः ।

---

1. शुनीं धयतीति विग्रहे शुनीशब्दे उपपदे 'धेट्पाने' - धा. पा. इति धे धातोः 'वाशुनी-तिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्' वा. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 411, इति खश् प्रत्यये शपि अयादेशे पररूपे 'शुनधय' इत्यवस्थायां खित्यनव्ययस्य' - अष्टा. 6/3/66, इति ह्रस्वत्वे 'अरुर्द्विषदजन्तस्य मुम्' अष्टा. 6/3/67, इतिमुमागमेऽनुस्वारे कृदन्तात्सौ रूपम् ।
2. 'खित्यनव्ययस्य' - अष्टा. 6/3/66 ।
3. 'खित्यनव्यस्य' 6/3/66, इतिसूत्रस्येतिशेषः ।
4. अष्टा. 7/2/86,
5. तथाहि–
   (क) "एवं तर्ह्याचार्यप्रवृत्ति र्ज्ञापयति स्थानिवदादेशो भवतीति, यदयं 'युष्मदस्मदोरनादेशे' इत्यादेशप्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम्? युष्मदस्मदो-र्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गोयदादेशे (ऽपि) स्यात् । पश्यत्याचार्यः 'स्थानिवदादेशो भवती'ति, अत आदेशे प्रतिषेधं शास्ती"त्याह पत. व्या. म. भा. 1/1/8/55.
   (ख) "स्थानिवदादेशो.. (सू. 1/1/56) 'युष्मदस्मदोरनादेशे (सू. 7/2/86) इत्यादेशे प्रतिषेधात् ज्ञापकात् स्थानिवदादेशोभवतीती"त्याह एन. एस. रामा. ज्ञा. सं. परि. 1, पृ. 140
6. युष्मच्छब्दाद्भिसि 'युष्मदस्मदोरनादेशे' अष्टा. 7/2/86 इति दकारस्यात्वे सवर्णदीर्घैकादेशे भिसः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
7. अस्मच्छब्दाद्भिसि 'युष्माभिः' इतिवदिदं रूपम् ।
8. 'युष्मच्छब्दात्सुपि 'युष्म.' अष्टा. 7/2/86 इतिदकारस्याऽऽत्वे सवर्णदीर्घैकादेशे रूपमिदम् ।
9. अस्मच्छब्दात् सुपि 'युष्मासु' इतिवदिदं रूपम् ।
10. युष्मच्छब्दाद्भ्यसि 'पञ्चम्याअत्' अष्टा. 7/1/31, इतिभ्यसो'ऽत्' इत्यादेशे 'शेषेलोपः' अष्टा. 7/2/90 इत्यन्तलोपे कृते 'अतोगुणे' अष्टा. 6/1/67 इति पररूपे रूपमिदम् ।
11. अस्मच्छब्दाद्भ्यसि 'युष्मत्' इतिवदिदं रूपम् ।
12. 'पञ्चम्याअत्' अष्टा. 7/1/31

विभक्त्यादेशस्य विभक्तित्वमेव नाऽस्तीति तस्मिन्परत आत्वस्य प्राप्तिरेव हि नास्ति । ज्ञापिते चाऽस्मिन्वचने 'युष्मत्' 'अस्मत्' इत्यादौ विभक्त्यादेशस्य स्थानिवद्भावेन विभक्तित्वमादाय तस्मिन् परतः प्राप्तस्याऽऽत्वस्य निषेधाय 'अनादेश' इतिशब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [1]'स्थानिवदादेशोऽनल्विधा'वितिसूत्रस्याऽकरणजन्यं[2]लाघवम् । ज्ञापतेनाऽनेन वचनेनैव हि सर्वत्र स्थानिवद्भावः सुलभः । अत एवोक्तम् 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते [3]वैयाकरणाः इति ।

## 'अनाध्यान' इतिशब्दः

'णेरणौ यत्कर्म [4]णौ चेत् स कर्तानाध्याने' इत्यत्र 'अनाध्यान' इतिशब्दः 'भवत्येवंजातीयकानामात्मनेपद'[5]मिति वचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । [7]'पश्यन्ति भृत्या राजानम्' [8]'दर्शयते राजास्वयमेवेत्यादावकर्त्रभिप्राये [9]क्रियाफलेऽप्यात्मनेपदसिद्ध्यर्थमारब्धे 'ण्यन्तादात्मनेपदं' भवति अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येत अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यादनाध्याने'

---

1. अष्टा. 1/1/56
2. तथाहि– "इदं तर्हि प्रयोजनम् 'अनलविधाविति प्रतिषेधं वक्ष्यामीति । इह माभूत् द्यौः, पन्थाः स इति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति 'अल्विधौ स्थानिवद्भावो न भवती'ति, यदयम् 'अदो जग्धिल्यप्तिकिती'ति 'तिकिती'त्येव सिद्धे ल्यब्ग्रहणं करोति । तस्मान्नार्थोऽनेन योगेन" इत्याह पत. व्या. म. भा. 1/1/8/55
3. प. शे. प. 134, पृ. 336
4. अष्टा. 1/3/67
5. 'येषामण्यन्तानां यत्कर्म तेषांण्यन्तानां यदा स कर्ता तदा कर्तृस्थभावक्रियत्वेऽप्यात्मनेपदं भवती' ति वचनाऽर्थः ।
6. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यदनाध्यान इतिप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवत्येवंजातीयकानामात्मनेपद'मिति । किमेतस्य ज्ञापने प्रयोजनम्? पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा । अत्रात्मनेपदं सिद्धं भवती"त्याह पत. व्या. म. भा. 1/3/2/67
   (ख) 'णेरणौ' (सू. 1/3/67) । अनाध्यान इति प्रतिषेधो ज्ञापयति भवत्येवंजातीयकानामात्मनेपदमिती"त्याह एन. एस. रामा. ज्ञा. सं. परि. 1, पृ. 148
7. 'दृशिर्प्रेक्षणे' धा. पा. भ्वा. 988,. इति दृशधातोः कर्त्तरिलटि प्रथमपुरुषवहुवचने शपि 'पाघ्रा ध्मा स्था म्ना दाण् दृश्यर्ति सर्ति शदसदां पिब जिघ्र धम तिष्ठ मन यच्छ पश्यर्च्छ धौ शीयसीदाः इति दृशः पश्याऽदेशो रूपमिदम् ।
8. ण्यन्तात् 'दृशिर्प्रेक्षणे' धा. पा. भ्वा. 988, इति कर्मकर्त्तरि लटि ते रूपमिदम् ।
9. 'तङानावात्मनेपदम्' अष्टा. 1/4/100

इत्यर्थकेऽस्मिन् सूत्रे [1]'स्मरति वनगुल्मं कोकिलः' [2]'स्मरयति वनगुल्मः' इत्यत्र ण्यन्तात् आध्यानार्थकात् स्मृधातोरात्मनेपदाऽऽभावायोपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । [3]कर्मस्थभाव[4]क्रियाणामेव [5]कर्मवद्भावविषयत्वेन आध्यानार्थानां [6]कर्तृस्थक्रियत्वेन कर्मवद्भावाऽविषयत्वात् 'स्मरति वनगुल्मं कोकिलः' 'स्मरयति वनगुल्म' इत्यत्र ह्यात्मनेपदस्य प्राप्तिरेव नाऽस्ति । ज्ञापिते चाऽस्मिन् वचने 'स्मरयतिं वनगुल्मः 'इत्यत्राऽप्यात्मनेपदं प्राप्नोतीति तदभावायाऽत्र शब्दोऽयं स्वांशेचरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'पश्यन्ति भृत्या राजानम्' 'दर्शयते भृत्यान् राजे'त्यत्रात्मनेपदसिद्धिः । अस्य वचनस्याऽसत्त्वे हि कर्तृस्थक्रियत्वेन [7]कर्मवद्भावा- ऽविषयत्वादत्राऽऽत्मनेपदं न सिद्ध्येत् ।

## 'अनाव' इति शब्दः

[8]'यतोऽनावः 'इतिसूत्रे 'अनाव'इतिशब्दः [9]'स्वरविधौ व्यञ्जनमविद्यमानव'-दितिपरिभाषाया [10]ज्ञापकः । यतोऽत्र सूत्रेऽसौ [11]'नाव्य'मित्यत्राद्युदात्तत्वा-

---

1. स्मृ आध्याने' धा. पा. भ्वा. 807, इति स्मृधातोर्लटि तिपि शपि गुणे रपरत्वे रूपम् ।
2. 'स्मृआध्याने' धा. पा. भ्वा. 807, इतिस्मृधातोर्णिचि तदन्ताल्लटि तिपि शपि गुणेऽयादेशे रूपमिदम् ।
3. 'अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः' इत्याह ज्ञा. भि. त. बो. आत्मनेपद प्र. पृ. 330
4. 'सपरिस्पन्दनसाधनसाध्या क्रिया'– इत्याह ज्ञा. भि. त. बो. आत्मनेपद प्र. पृ. 330
5. 'कर्मवत् कर्मणा तुल्यक्रियः' अष्टा. 3/1/87
6. कर्तृस्था क्रिया येषां ते कर्तृस्थक्रिया धातवः, तस्य भावः कर्तृस्थक्रियत्वं तेनेत्यर्थः ।
7. 'कर्मवत्कर्मणा तुल्यक्रियः' अष्टा. 3/1/87 इत्यनेन हि कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां कर्तुरेव कर्मवद्भावो भवति, न तु कर्तृस्थभावकानां कर्तृस्थक्रियाणां धातूनामपि कर्तुः ।
8. अष्टा. 6/1/213
9. (क) व्याडिः प. सू. प. 33, पृ. 17
   (ख) पु. दे. ल. प. वृ. प. 32, पृ. 126
   (ग) सी. दे. बृ. प. वृ. प. 53, पृ. 220
   (घ) नी. दी. प. वृ. प. 57, पृ. 306
   (ङ) ह. भा. प. भास्क. प. 55, पृ. 346
   (च) भ. ना. प. शे. प. 80, पृ. 304
   (छ) 'वृत्तिकारस्तु 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति शेषा. प. भास्क. प. 68, पृ. 437
10. तथाहि–
    (क) "स्वरे क्रियमाणे यद् व्यवधायिव्यञ्जनं तदविद्यमानवद्भवति । कथं ज्ञायते । यदयं 'यतोऽनाव' (6/1/213) इति अनाव इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । नाव्यमित्यत्र 'यतोऽनावः' इतिप्रतिषेधः । यद्येवमर्थं नार्थोऽनेन । कथम् । अच उदात्तानुदात्तस्वरिता उच्यन्ते । स चात्रादौ न भवति । तस्मादत्राद्यभावादेवोदात्तत्वं न भविष्यति नार्थः प्रतिषेधेन । एवं सिद्धे सति यत् प्रतिषेधं शास्ति तज्ज्ञापयति– स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति । किमेतस्या ज्ञापने प्रयोजनम् । गार्ग्यो

भावायोपात्तः । स चाऽस्या अभावे व्यर्थः, 'नाव्य'मित्यत्र हि आकारो नादिः किन्तु नकार एव । ज्ञापितायां चाऽस्यां नकारस्याऽनयाऽविद्यमानत्वातिदेशादाकार एवादाविति 'नाव्य'मित्यत्राऽऽकारस्याद्युदात्तत्वाभावाय 'अनाव' इत्ययं शब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलन्तु '[1]गार्ग्यः' इत्यादौ यञोऽकारस्य [2]आद्युदात्तश्चे'त्याद्युदात्तत्वसिद्धिः । अस्या अभावे हि यञोऽकारस्याऽत्राऽदावविद्यमानतयाऽऽद्युदात्तत्वं न सिद्ध्येत् ।

## 'अनिटी'ति प्रतिषेधः

[3]णेरनिटि' इत्यत्र 'अनिटी'ति प्रतिषेधः 'आगमास्तदगुणीभूतास्तद्ग्रहणेन [4]गृह्यन्ते' इतिपरिभाषाया ज्ञापकः[5] । यतोऽस्या अभावे [6]'कारयिता' [7]'हारयिता'

---

वात्स्य इत्यत्राकारो नादिस्तस्याप्युदात्तत्वं सिद्धं भवती"त्याह व्याडिः प. सू. प. 33, पृ. 17

(ख) "आचार्यप्रवृत्तिर्ज्ञापयति– 'भवत्येषा परिभाषे'ति, यदयं 'यतोऽनाव' इति नावः प्रतिषेधं शास्ती'त्याह पत. व्या. म. भा. 6/1/6/223.

(ग) "अत्र च ज्ञापकम्– 'यतोऽनावः' (6/1/213) इत्याद्युदात्तविधौ नौप्रतिषेधः । स हि नाव्यमित्यत्राद्युदात्तत्वाभावाय क्रियते । यदि नकारस्य विद्यमानत्वमेव स्यात्, तर्हि नौप्रतिषेधोऽनर्थकः स्या"दित्याह शेषा. प. भास्क. प. 68, पृ. 437

(घ) "यतोऽनावः' (सू. 6/1/213) इत्यत्रानाव इतिप्रतिषेधो ज्ञापकः 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दिती"ति श्रीना. ज्ञा. सं. 6, पृ-. 107

11. नावा तार्यमित्यस्मिन्नर्थे 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु' अष्टा. 4/4/91, इति नौशब्दात्तार्येर्थे यत्प्रत्यये 'वान्तो यि प्रत्यये'–अष्टा. 6/1/79 इत्योकारस्याऽऽवादेशे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।

1. गर्गस्य गोत्रापत्यमित्यर्थे 'गर्गादिभ्यो यञ्' अष्टा. 4/1/105, इति यञ्प्रत्यये 'यस्येति च' अष्टा. 6/4/148 इत्यकारलोपे 'तद्धितेष्वचामादेः' अष्टा. 7/2/117, इत्याद्यचो वृद्धौ तद्धितान्तप्रतिपदिकत्वेन स्वादिकार्येषुकृतेषु रूपमिदम् ।

2. अष्टा. 3/1/3

3. अष्टा. 6/4/51

4. (क) 'तद्भक्तस्तद् ग्रहणेन गृह्यते' व्याडिः प. सू. प. 17, पृ. 10
(ख) 'आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' पु. दे. ल. प. वृ. प. 18, पृ. 120
(ग) सी. दे. बृ. प. वृ. प. 4, पृ. 166
(घ) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' नी. दी. प. वृ. प. 4,पृ. 293
(ङ) 'आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' ह. भा. प. भास्क. प. 4 पृ. 319
(च) 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' भ. ना. प. शे. प. 12,पृ. 63
(छ) 'तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' शेषा. प. भास्क. प. 11, पृ. 387

5. तथाहि–

(क) "आद्यन्तौ टकितौ" (1/1/46) इत्यत्राद्यन्तशब्दयोरवयववचनत्वात्टित्कितोरागमयोराद्यन्तावयवत्वमतिदिष्टम् । 'मिदचोऽन्त्यात्परः' (1/1/47) इत्यत्रापि अन्तग्रहणानुवृत्त्या मितोऽप्यन्तावयवत्वम् । अवयवाश्चावयविग्रहणेन गृह्यन्ते इत्युक्तम् । अतः सिद्धेयं परिभाषा आगमास्तदगुणीभूता इति । सुखप्रतिपत्त्यर्थं ज्ञापकमपि केचिदाहुः ।

[1]'कारयितव्यम्' [2]'हारयितव्यम्' इत्यादौ [3]इटा व्यवहितत्वादेवाऽनेन णिलोपो न प्राप्नोतीति तत्र णिलोपाभावायाऽत्र सूत्रे 'अनिटी'ति प्रतिषेधो व्यर्थः । ज्ञापितायां चाऽस्यां तेषु प्रयोगेषु [4]तास्-तव्योर्ग्रहणेन[5] इटोऽपि ग्रहणादव्यवधानाऽभावेन 'णिलोपस्य दुर्वारतया तदभावायात्राऽसौ प्रतिषेधः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं 'कुण्डे'[6]त्यत्र नुमो धातुग्रहणेन ग्रहणाद् [7]'गुरोश्च हलः 'इति अकारप्रत्ययस्य, सर्वेषा'मित्यत्र सुटः[8] सुब्ग्रहणेन ग्रहणाज् [9]झलादौ सुपि एत्वस्य च सिद्धिः ।

## 'अनुत्तरपदस्थस्ये'ति शब्दः

'नित्यं समासेऽनुत्तरपदस्थस्ये'त्यत्र[10] 'अनुत्तरपदस्थस्ये'तिशब्दः 'इसुसोर्विषये [11]प्रत्ययग्रहणपरिभाषा न प्रवर्तते' इतिवचनस्य [12]ज्ञापकः । यतोऽस्य वचनास्याऽ-

'णेरनिटि' (6/4/51) इत्यत्रानिटीतिप्रतिषेधः । यद्यागमिग्रहणेनागमो न गृह्येत तदा कारयितव्यमित्यादौ इटा व्यवहितत्वादेव णिलोपो न प्राप्नोतीति किमनिटीत्यनेनेति ज्ञापकम् । तेन सर्वेषामित्यत्र सुटः सुब्ग्रहणेन ग्रहणाज्झलादौ सुपि एत्वं सिद्ध्यती'त्याह सी. दे. बृ. प. वृ. प. 4, पृ. 166

(ख) "परिभाषायां ज्ञापकं 'णेरनिटि' इत्यत्रानिड्ग्रहणमिति केचित्' इत्याह ह. भा. प. भास्क. प. 4, पृ. 320

(ग) "अतएव 'नेटि' 'णेरनिटि' इत्यादि चरितार्थ"मित्युक्त्या ज्ञापकत्वमस्य सूचयति भ. ना. प. शे. प. 12, पृ. 63

6. 'ण्यन्तात् कृञो लुटि तिप् ।
7. 'ण्यन्तात् हृञो लुटि तिप् ।
1. 'ण्यन्तात् कृञस्तव्यः ।
2. 'ण्यन्तात् हृञस्तव्यः ।
3. 'आर्धधातुकस्येड्वलादेः' अष्टा. 7/2/35 इतिविहितेनेत्यर्थः ।
4. 'स्यतासीलृलुटोः'– अष्टा. 3/1/33, इतिविहित इत्यर्थः ।
5. 'तव्यत्तव्यानीयरः'– 'अष्टा. 3/2/96 इतिविहित इत्यर्थः ।
6. 'इदितो नुम्धातोः'– अष्टा. 7/1/85 इतिविहितस्येत्यर्थः ।
7. अष्टा. 3/3/103
8. 'आमि सर्वनाम्नः सुट्'– अष्टा. 7/1/52
9. 'बहुवचने झल्येत्'– अष्टा. 7/1/103
10. अष्टा. 8/3/45
11. 'प्रत्ययग्रहणे यस्मात स विहितस्तदादेस्तदन्तस्य ग्रहणम्' प. शे. प. 24,पृ. 124
12. तथाहि–

भावेऽत्राऽयं शब्दो व्यर्थः । तथाहि– 'परमसर्पिःकुण्डिका' इत्यादौ विसर्गस्य षत्ववारणायाऽत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । [1]सूत्रेऽस्मिन् 'इसुसोः [2]सामर्थ्ये' इत्यतः इसुसोरनुवर्तनात्तत्र प्रत्ययग्रहणपरिभाषोपस्थितौ 'परमसर्पिः कुण्डिका' इत्यत्र परमसर्पिःशब्दस्य इसन्ततदादित्वाऽभावेनैव हि षत्वाऽभावः सुलभः । ज्ञापिते चाऽस्मिन् वचने इसुसोर्विषये प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या 'परमसर्पिः कुण्डिका' इत्यत्र परमसर्पिःशब्दस्थविसर्गस्याऽपि षत्वं प्राप्नोतीति तद्वारणाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'परमसर्पिः करोती'ति वाक्येऽपि विकल्पेन षत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि इसुसोर्विषयेऽपि प्रत्ययग्रहणपरिभाषायाः प्रवृत्तिर्दुर्वारेति' परमसर्पिः इत्यस्य इसन्ततदादित्वाऽभावात् [3]'इसुसोः सामर्थे' इत्यनेन विसर्गस्य विकल्पेन षत्वं न सिद्ध्येत् । न चाऽस्य वचनस्य स्वीकारे 'परमसर्पिः कुण्डिका' इत्यत्र विसर्गस्य 'इसुसोः [4]सामर्थ्ये' इत्यनेन षत्त्वाऽऽपत्तिरितिशङ्क्यम् । यतः [5]पूर्वसूत्रे सामर्थ्यपदेन [6]व्यपेक्षालक्षणमेव सामर्थ्यं गृह्यते । 'परमसर्पिः कुण्डिका' इत्यादेर्हि समासत्वेन [7]एकार्थीभावलक्षणस्य सामर्थ्यस्य सत्त्वेऽपि व्यपेक्षालक्षणं सामर्थ्यं नाऽस्ति ।

---

(क) "यदयमनुत्तरपदस्थस्येतिप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवति वाक्ये विभाषेती"-तीत्याह पत. व्या. म. भा. 8/3/1/45 अत्र भवति वाक्ये विभाषेती"त्यत्र इसुसोर्विषये प्रत्ययग्रहणपरिपरिभाषाया अप्रवृत्तिद्वारेतिशेषः ।

(ख) "एतदेव 'अनुत्तरपदस्थस्य' इतिवचने ज्ञापकम् । इसुसोः 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेः' इत्ययं नियमो न भवति । तेन वाक्येऽपि परमसर्पिष्करोति, परमसर्पिः करोति 'इसुसोः सामर्थ्ये' इत्येतद्भवति । व्यपेक्षा च तत्र सामर्थ्यमाश्रितमितिसमासे न भवती"त्याह वाम. का. 8/3/45

(ग) "नित्यं समासे (सू. 8/3/45) अनुत्तरपदस्थस्ये"तिप्रतिषेधो ज्ञापकः, भवति वाक्ये विभाषेती'तीत्याह एन. एस. रामा ज्ञा. सं. परि. 1, पृ. 198

1. नित्यं समासेऽनुत्तरपदस्थस्य'– अष्टा. 8/3/45
2. अष्टा. 8/3/44
3. अष्टा. 8/3/44
4. अष्टा. 8/3/44
5. 'इसुसोः सामर्थ्ये'– अष्टा. 8/3/44
6. "विशिष्टा अपेक्षा व्यपेक्षा । पदानामाकाङ्क्षायोग्यतासंनिधिवशाद्यः परस्परान्वयः सा व्यपेक्षा" इत्याह वा. दी. बालमनो. विसर्गसन्धि प्र. पृ. 79
7. विशेष्य-विशेषणभावावगाहिपरिस्थितिजनकस्येत्यर्थः ।

## 'अनुदात्तेनूङि'दितिशब्दौ

'[1]तास्यनुदात्तेनूङिद्दुपदेशाल्लसार्वधातुकमनुदात्त'मित्यत्र 'अनुदात्तेनूङि'दितिशब्दो 'न लुक्श्लुविकरणेभ्योऽनुदात्तत्वं भवती'तिवचनस्य [2]ज्ञापकौ । इमौ हि शब्दावस्य वचनस्याऽभावे व्यर्थौ । तथाहि [3]'आस्ते' [4]'शेते' इत्यादौ लसार्वधातुकस्याऽनुदात्तत्वसिद्ध्यर्थमत्र सूत्रे शब्दाविमावुपात्तौ । तौ चाऽस्य वचनस्याऽभावे व्यर्थौ । 'अनेका अनुबन्धा' इति[5]पक्षे [6]शपोऽप्यदुपदेशत्वात्ततः परस्य लसार्वधाकस्य 'आस्ते' 'शेते' इत्यादौ हि अनुदात्तत्वसिद्धिरनयोः शब्दयोरभावेऽपि सुलभा । ज्ञापिते चाऽस्मिन्वचनेऽदुपेदशाच्छपः परत्वमादायाऽनुदात्तत्वं तत्र न प्राप्नोतीति 'आस्ते' 'शेते' इत्यादौ लसार्वधातुकस्याऽनुदात्तत्वसिद्ध्यर्थमत्र सूत्रे शब्दाविमौस्वांशे चरितार्थीभवतः । ज्ञापितस्याऽस्य वचनस्य फलं तु [7]'अत्तः' [8]'जुहुतः', इत्यादौ लसार्वधातुकस्याऽनुदात्तत्वाऽभावः । अस्य वचनस्याऽसत्त्वे हि 'अनुबन्धा अनेकान्ताः' इति [9]पक्षे शपोऽप्यदुपदेशत्वात्ततः परस्य लसार्वधातुकस्याऽनुदात्तत्वाऽऽपत्तिरत्र दुर्वारा स्यात् ।

---

1. अष्टा. 6/1/186
2. तथाहि–
   (क) "अथवा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न लुक्श्लुविकरणेभ्योऽनुदात्तत्वं भवती'ति । नैतदस्ति ज्ञापकम् । श्नमर्थमेतत्स्यात् । विन्दाते खिन्दाते । यत्तर्हि ङिद् ग्रहणं करोति । नहि श्नम् विकरणो ङिदस्ती"त्याह पत. व्या. मा. भा. 6/1/6/86
   (ख) "तास्यनुदात्तेत् (सू. 6/1/186) अनुदात्तङिद्ग्रहणं ज्ञापकं न लुक्श्लुविकरणेभ्योऽनुदात्तोभवतीती"त्याह एन. एस. रामा. ज्ञा. सं.परि. 1, पृ. 180
3. 'आस उपवेशने' धा. पा. अदा. 1021, इति आस धातोर्लटि ते शपि तस्यादादित्वाल्लुकि टितष्टेरेत्वे रूपमिदम् ।
4. 'शीङ् स्वप्ने' धा. पा. अदा. 1032, इति शीधातोर्लटि ते शपि तस्यादादित्वाल्लुकि 'शीङः सार्वधातुके गुणः' अष्टा. 7/4/21, इतिधातोरीकारस्य गुणे रूपमिदम् ।
5. तथाहि– "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति"इत्याह पत. व्या. म. भा. 3/1/68
6. कर्त्तरिशप्' अष्टा. 3/1/68
7. 'अद भक्षणे' धा. पा. अदा. 1011, इतिअद्धातोर्लटितेसिशपि 'अदिप्रभृतिभ्यः शपः'– अष्टा. 2ÿ/4/72, इतिशपोलुकि दकारस्य चर्त्वेन तकारे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
8. 'हु दानादनयोः'– धा. पा. जुहो. 1083, इति हुधातोर्लटि तसि शपि 'जुहोत्यादिभ्यः श्लुः'– अष्टा. 2/4/75, इतिशपः श्लौ 'श्लौ' अष्टा. 6/1/10, इतिद्वित्वेऽभ्यासकार्येषु कृतेषु सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
9. 'तास्यनुदात्तेनूङिदुपदेशाल्लसार्वधातुकमनुदात्तम्' अष्टा. 6/1/186

## 'अनृच्छ' इतिशब्दः

[1]'इजादेश्च गुरुमतोऽनृच्छः' – इत्यत्र 'अनृच्छः 'इतिशब्दः 'लिटि आम्‌विधावागमनिमित्ताऽपि गुरुमत्ता समाश्रीयते' इति वचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्र [3]'आनर्च्छ' इत्यादौ ऋच्छतेराम्प्रतिषेधार्थमुपात्तोऽयं शब्दोव्यर्थः । आगमनिमित्ताया गुरुमत्ताया अनाश्रयणे हि [4]नित्यं गुरुमत्त्वाऽभावात् न ऋच्छतेराम् प्राप्तोतीति कस्य प्रतिषेधार्थमयं शब्दः सार्थकः स्यात् । ज्ञापिते चाऽस्मिन् वचने नित्यं गुरुमत्त्वाऽभावेऽपि 'आनर्च्छे'त्यादावाम् प्राप्नोतीति तस्य प्रतिषेधार्थमयंशब्दः स्वांशे चरितार्थो भवति । न चाऽत्र'ऋच्छत्यृता'मिति[5] ऋच्छेरनन्तरे लिटि गुणवचनं

---

1. अष्टा. 3/1/36
2. तथाहि–
   (क) "यदयमनृच्छ इतिप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यस्तुङ्निमित्ता यस्य गुरुमत्ता भवति तस्मादामितीत्याह पत. व्या. म. भा. 3/1/3/36
   (ख) "अथवा गुरुमत इति नित्ययोगे मतुप्, तेन नित्यं यस्य गुरुणा सह योगस्ततो भवितव्यम्, नचेषेरुपषेश्च नित्यं गुरुणा सह योगः । यद्येवं 'उच्छी निवासे' उच्छाञ्चकारेत्यत्र तुकि कृते न प्राप्नोति? नैष दोषः, ऋच्छिप्रतिषेधो हि ज्ञापयति आगमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीती'त्याह जि. बु. न्या. 3/1/36
   (ग) "इजादेश्चेति (3/1/36) 'लिटि आम्‌निमित्ताऽपि गुरुमत्ता समाश्रीयते 'अनृच्छ इतिप्रतिषेधात् ज्ञापकात् । तेन इन्दाञ्चकार इति सिद्ध्यती"त्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे, पृ. 71
   (घ) "अथवा 'गुरुमतः' इतिनित्ययोगे मतुप् नित्यं यस्य गुरुणाभिसंबंधः । यद्येकम्, 'उच्छी निवासे' व्युच्छाञ्चकार, 'उछउञ्छे' उच्छाञ्चकार आगमनिमित्ता चास्य गुरुमत्ता, तस्मादाम् न प्राप्नोति? ज्ञापकात् सिद्धम्, यदयमनृच्छ इत्याह, तज्ज्ञापयति भवत्येवञ्जातीयके आमिति । स तर्हि ज्ञापकार्थमृच्छिप्रतिषेधो वक्तव्यो भवति । ननु चामूनिवृत्त्यर्थ एवासौ कर्तव्यः, नार्थ आम् निवृत्त्यर्थेन? ज्ञापकात् सिद्धम्, यदयम्, 'ऋच्छत्यृताम्' इति लिटि परतो गुणं शास्ति, तज्ज्ञापयति– नास्मादाम् भवतीती"त्याह ह. मि. पदम. 3/1/36
3. 'ऋच्छगतीन्द्रियप्रलयमूर्त्तिभावेषु' धा. पा. तुदा. 1297, इति ऋच्छधातोः 'छेच' अष्टा. 6/1/73, इति तुकि ऋच्छतेर्लिटितिपिणलि 'ऋच्छत्यृताम्' अष्टा. 7/4/11, इतिगुणे द्विर्वचने हलादिशेषे 'आत आदेः' अष्टा. 7/4/70, इतिदीर्घे 'तस्मान्नुड्‌द्विहलः' अष्टा. 7/4/71, इतिनुटि रूपमिदम् ।
4. गुरुशब्दात् 'तदस्यास्त्यस्मिन्निितिमतुप्'– अष्टा. 5/2/94 इति नित्ययोगे मतुपिं गुरुमच्छब्दोऽत्र हि निष्पन्नः । उक्तं च भगवता–
'भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुपादयः ।।" इति–
व्या. म. भा. 5/2/2/94
5. अष्टा. 7/4/11

ज्ञापकम्' न ऋच्छेराम् भवति, सति हि तस्मिनूलिट इति आनन्तर्यं विहन्येतेति ज्ञापितेऽप्यस्मिनूवचने 'आनर्च्छे'त्यादावामोप्राप्त्या तत्प्रतिषेधार्थमुपात्तस्याऽ स्यस्वांशे चारितार्थ्यं नास्तीति शङ्क्यम् । यतः [1]सूत्रमिदं 'व्यवधानेऽपि गुणो भवती'ति वचन ज्ञापनेनाऽपि सार्थकमिति न 'ऋच्छेराम् न भवती'ति वचनस्य ज्ञापकम् । ज्ञापितस्याऽस्य वचनस्य फलं तु 'इन्दाञ्चकार'[2] इत्यत्राऽमः सिद्धिः । अस्य-वचनस्याऽसत्त्वे हि नित्यं गुरुणासह योगो नास्तीति गुरुमत्त्वाऽभावादत्रामूनसिद्ध्येत् । 'गुरुमतः 'इत्यत्र हि नित्ययोगे [3]भवति ।

## 'अनेक'मितिशब्दः

'[4]अनेकमन्यपदार्थे' इत्यत्र 'अनेक'मितिशब्दः 'मण्डूप्लुताऽधिकारोऽस्ती'ति वचनस्य [5]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्र बहूनामपि [6]सुबन्तानां बहुव्रीहिसमासार्थ-मुपात्तो'ऽनेक'मितिशब्दोऽनुपपन्नः । [7]'उपपदमति'ङित्यत्र विच्छिन्न स्याऽपि

---

1. 'ऋच्छत्यृताम्' अष्टा. 7/4/11
2. इदि परमैश्वर्ये' धा. पा. भ्वा. 63, इति इद्धातो 'इदितो नुम्धातोः अष्टा. 7/1/58, इतिनुमि लिटि 'इजादेश्च गुरुमतोऽनृच्छः'– अष्टा. 3/1/36 इत्यामि 'इन्द् आम् लिट्' इत्यवस्थायाम् 'आमः'– अष्टा. 2/4/81, इतिलिटोलुकि 'कृञ्चानुप्रयुज्यते लिटि'– अष्टा. 3/1/40, इतिलिट्परककृञनुप्रयोगे लिटस्तिपि णलि कृञो द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' अष्टा. 7/4/66, इत्यभ्यास ऋवर्णस्याऽकारे रपरत्वे च कृते 'हलादिः शेषः' अष्टा. 7/4/60 इति रेफस्य लोपे 'कुहोश्चुः' अष्टा. 7/4/62 इतिककारस्य च चकारे 'इन्दाम् चकृअ' इत्यवस्थायाम् 'अचोञ्णिति' अष्टा. 7/2/115, इति ऋकारस्यवृद्धावाकारे रपरत्वे मकारस्याऽनुस्वारे परसवर्णे च कृते रूपमिदम् ।
3. 'तदस्यास्त्यस्मिन्निितिमतुप्'– अष्टा. 5/2/94, इत्यनेन
   'भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ।
   सम्बन्धेऽस्ति विवक्षाया भवन्ति मतुबादयः' इत्युक्तेर्नित्ययोगे गुरुशब्दान्मतुप् ।
4. अष्टा. 2/2/24
5. तथाहि– "इह 'मण्डूकप्लुताधिकारत्वे' उपपदमतिङित्यत्र विच्छिन्नस्यापिअविवक्षि–तैकत्वसंख्यस्य सुबधिकारस्य मण्डूकगत्या अनुवृत्तिमाश्रित्य अनेकमन्यपदार्थे (2/2/24) इत्यत्र क्रियमाणमनेकग्रहणं ज्ञापक"मित्याह पु. दे. ज्ञा. समु. षष्ठे अपरपादे पृ. 67
6. तथाहि– "अनेक ग्रहणं किम्? बहूनामपि यथा स्यात्
   'ससूक्ष्मजटकेशेन सुगजाजिनवाससा ।
   समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्ध्यति' ॥
   इत्याह जया. का. 2/2/24 अत्रहि– "सुष्ठु सूक्ष्मा जटाः केशा यस्येति चतुर्णां बहुव्रीहौ 'ङ्यापोः संज्ञाछन्दसोबर्हुलम्' इतिबहुलवचनाद्ह्रस्वत्वम्, यद्वा सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाकेशा यस्येति पुनर्बहुव्रीहि"रित्याह ह. मि. न्या. 2/2/24
7. अष्टा. 2/2/19

अविवक्षितैकत्वसंख्यस्य [1]सुबधिकारस्य मण्डूकप्लुत्याऽनुवृत्तिमाश्रित्यैव हि सूत्रेऽस्मिन् 'अनेक'मित्ययं शब्दउपात्तः । ज्ञापिते चास्मिन्नूवचने मण्डूकगत्या सुबधिकारस्याऽत्र सुलभतया शब्दोऽयं स्वांशे चरितार्थो भवति ।

वस्तुतस्तु पुरुषोत्तमदेवोक्तमत्र[2]सूत्रेऽनेकशब्दस्योक्तवचनज्ञापकत्वं न युक्तम् । यतोऽत्राऽनेकमितिशब्दो बहूनां पदानां बहुव्रीहिसमाससिद्ध्यर्थं नावश्यकम् । बहूनां पदानां हि समासोऽयं 'तद्धितार्थोत्तरपदसमाहात्तर[3] चेति उत्तरपदे द्विगुविधानाज्ज्ञापकादेव सिद्धः । तथाहि– 'तद्धितार्थोत्तरपदसमाहारे चेत्यनेन उत्तरपदे परतः संख्यावाचकशब्दस्य समानाधिकरणेन सुबन्तेन सह समासो विधीयते, तेन पञ्च गावो धनं यस्येति विग्रहे त्रयाणां पदानां बहुव्रीहिसमासे धनशब्दे परे तदवयवयोः पञ्चगोशब्दयोर्द्विगुसमासो[4] भवति । बहूनां पदानां बहुव्रीहिसमासाऽभावे हि त्रयाणां पदानामत्र बहुव्रीहिसमासो न स्यादितिधनशब्दस्योत्तरपदत्वं न स्यात् ।उत्तरपदशब्दो हि समासचरमाऽवयवे रूढः । तथा सति उत्तरपदे परतो द्विगुसमासविधानमिदं व्यर्थं सत् 'बहूनां पदानां बहुव्रीहिसमासो भवती'ति वचनस्य [5]ज्ञापकं भवति । ज्ञापिते चाऽस्मिन् वचने बहूनां पदानां बहुव्रीहिसमासस्य सुलभतया उत्तरपदे परतो द्विगुसमासविधानमिदं स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य फलं तु [6]'अनेकमन्यपदार्थे' इत्यत्र अनेकमित्यनुक्तिजन्यं लाघवम् । [7]'सुसूक्ष्मजटकेशेन' इत्यादौ अनेकपदानां [8]बहुव्रीहिसमासो हि ज्ञापकसिद्धेनैतेन [9]वचनेनैव सुलभः । [10]'चित्रगु'रित्यादौ प्रथमानिर्दिष्टत्वेनाऽनेकस्य[11]सुप उपसर्जनार्थमनेकमिति शब्दश्चरितार्थ इत्यपि न शङ्क्यम् । यत [12]'एकविभक्ति चाऽपूर्वनिपाते' इत्यनेनैवात्रोपसर्जनसंज्ञा सुलभा ।

---

1. 'सुपा'– अष्टा. 2/1/4 सह सुपेत्यत्र विभक्तोऽयं योगः ।
2. 'अनेकमन्यपदार्थे' अष्टा. 2/2/24
3. अष्टा. 2/1/51
4. संख्यापूर्वोद्विगुः– अष्टा. 22/1/52
5. तथाहि–
   (क) "आचार्यप्रवृत्ति र्ज्ञापयति 'बहूनामपि समासो भवती'ति यदयमुत्तरपदे द्विगुं शास्ती"त्याह पत. व्या. म. भा. 2/2/2/24
   (ख) "अनेकमन्यपदार्थे' (सू. 2/2/24) उत्तरपदे द्विगुविधानं ज्ञापयति बहूनामपि- समासो भवतीती"त्याह एन. एस. रामा. ज्ञा. सं. परि– 1, पृ. 156
6. अष्टा. 2/2/24
7. अत्र समासपद्धतिः प्रागेव टिप्पण्यां निर्दिष्टा ।
8. अन्यपदार्थे इतिन्यासेऽपीतिशेषः ।
9. 'बहूनां बहुव्रीहिसमासो भवती'त्याकारकेणेतिशेषः ।
10. चित्रागावोयस्येत्यर्थः ।
11. 'प्रथमानिर्दिष्टं समास उपसर्जनम्'– अष्टा. 1/2/43
12. अष्टा. 1/2/44

## अन्तमितिशब्दः

[1]'सुप्तिङन्तं पद'मितिसूत्रेऽन्त'मितिशब्दः [2]'संज्ञाविधौ तदन्तविधिर्नास्ती'ति [3]'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ती'ति 'संज्ञाविधौ [4]प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति वा परिभाषाया ज्ञापकः[5] । यतोऽस्या अभावेऽत्र विनाप्यन्तमिति-

---

1. अष्टा. 1/4/14
2. व्याडिः प. सू. प. 71 पृ. 31
3. (क) पु. दे. ल. प. वृ. प. 81, पृ. 148
   (ख) सी. दे. बृ. प. वृः 27, पृ. 192
4. (क) नी. दी. प. वृ. प. 34, पृ. 299
   (ख) ह. भा. प. भास्क. प. 27, पृ. 333.
   (ग) भ. ना. प. शे. प. 28, पृ. 141
   (घ) शेषा. प. भास्क. प. 27, पृ. 406.
5. तथाहि–
   (क) "यत्र संज्ञा विधीयते तत्र तदन्तविधिर्नास्ति । कथं ज्ञायते । यदयं 'सुप्तिङन्तं पदम्' (1/4/14) इत्यत्र अन्तग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अन्तग्रहणं न कर्तव्यम् । केनेदानीं सुप्तिङन्तं पदसंज्ञ भविष्यति । तदन्तविधिना । सुप्तिङ्भ्यामियंसंज्ञा प्रारब्धा सुप्तिङन्तस्य भविष्यति । एतत्पश्यत्याचार्यः संज्ञाविधौ तदन्तविधिर्नास्तीति । किमेतस्यां ज्ञापने प्रयोजनम् । तरप्तमपौ घः (1/1/22) इतितरबित्येतस्य या संज्ञा तदन्तविधिना तदन्तस्य न भवति गौरितराशब्दस्य । किंच स्यात् . कुमारी गौरितरेत्यस्य 'घरूपकल्प.' (6/3/43) इत्यनेन ह्रस्वत्वं स्या"दित्याह व्याडिः प. सू. प. 71, पृ. 31.
   (ख) ".....एतज्ज्ञापयत्याचार्योऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न भवतीती"त्याह प. व्या. म. भा. 1/4/2/14
   (ग) "पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधार्थ"मित्याह जया\ का. 1/4/14
   (घ) ज्ञापक चास्यार्थस्य 'सुपतिङन्तं पदम्' (1/4/14) इत्यत्रान्तग्रहणम् । अन्यथा हि. सुप्तिङोः प्रत्ययत्वादेव' प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य (परि. 44) इत्यनेनैव तदन्तत्वे लब्धे अन्तग्रहणमिदमनर्थकं स्यादिती'त्याह पु. दे. ल. प. वृ. प. 81, पृ. 148
   "सुप्तिङन्तं पदमित्यत्र (1/4/14) येनविधिरित्यनेन (1/1/72) प्रत्ययग्रहणपरिभाषया (परिभाषा 44) वा तदन्तत्वे लब्धेऽपि अन्तग्रहणं ज्ञापकम् । "अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे नावश्यं तदन्तविधिर्भवतीति । तेन गौरीब्राह्मणितरेत्यन्तग्रहणम् । अव्ययसंज्ञायां च तद्धितश्चेति (1/1/38) तद्धितान्तग्रहणम् । कृत्तद्धितसूत्रे (1/2/46) त्वर्थग्रहणानुवृत्त्यापि सिद्धि"रिति चाह पु. दे. ज्ञा. समु. चतुर्थे कारकपादे पृ. 64
   (ङ) "ज्ञापकं त्वस्याः सुप्तिङन्तंपदमित्यत्रान्तग्रहणम् । सुप्तिङोः प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषयैव तदन्तत्वसिद्धे अन्तग्रहणमिहानर्थकं स्या"दित्याह सी. दे. बृ. प. वृ. प. 27, पृ. 192

शब्दं– [1]'येनविधिस्तदन्तस्ये'त्यनेन 'प्रत्ययग्रहणे [2]यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषया वा सुप्तिङन्त'मिति, सुबन्ततिङन्ततदादीति वाऽर्थलाभः सुलभ इत्यसौ व्यर्थः । ज्ञापितायां चाऽस्यामनया तदन्तविधेः प्रतिषेधात्सुबन्तेत्याद्यर्थ-लाभायाऽत्र शब्दोसौ स्वांशे चरितार्थो भवति । नचाऽनेन सुप्तिङोः पदसंज्ञायामपि [3]पदप्रदेशेषु प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं सुलभमिति ज्ञापितायामप्यस्यां नायं शब्दः स्वांशे चरितार्थ इतिशङ्क्यम् । यतः पदसंज्ञायाः [4]'स्वादिष्विति' विषये प्रकृति-निष्ठतया पदग्रहणस्यात्र प्रत्यमात्रग्रहणत्वं नास्तीति तया परिभाषया तदन्तग्रहणं न सुलभम् । प्रत्ययमात्रग्रहणे हि 'प्रत्ययग्रहणपरिभाषा प्रवर्तते, न प्रत्ययाऽप्रत्यय

---

(च) "एतच्च'सुप्तिङन्तं. (1/4/14) इत्यन्तग्रहणेन ज्ञाप्यत इतिसुप्तिङन्तमितिसूत्रे भाष्ये स्पष्ट"मित्याह नी. दी. प. वृ. प. 34, पृ. 299

(छ) "परिभाषायां ज्ञापकं तु सुप्तिङन्तंपदमित्यन्तग्रहण"मित्याह ह. भा. प. भास्क. प. 27, पृ. 333

(ज) "सुप्तिङन्त' मित्यन्तग्रहणमस्या ज्ञापक"मित्याह भ. ना. प. शे. प. 28, पृ. 143

(झ) "अत्र च ज्ञापकम्– 'सुप्तिङन्तं पदम्' (1/4/14) इत्यत्रान्तग्रहणम् । यदि प्रत्यय-ग्रहणपरिभाषया संज्ञाविधौ स्यात्तदा विनैवान्तग्रहणं सुप्तिङन्तयोः पदसंज्ञासिद्धेस्तदनर्थकं स्या"दित्याह शेषा. प. भास्क. प. 27, पृ. 406

(ञ) 'सुप्तिङन्तं पदम् । अत्रान्तग्रहणम् 'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापनार्थम् । तेन 'ईदूदेद्द्विवचनं प्रगृह्य'मिति न द्विवचनान्तस्य प्रगृह्य-त्वम् । अन्यथा कुमार्योरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्या"दित्याह ज्ञा. भि. त. बो. संज्ञा प्र. पृ. 21

(ट) "सुप्तिङन्तम् (सू. 1/4/14) इत्यन्तग्रहणं 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न' इत्यस्या ज्ञापक"मित्याह श्रीना. ज्ञा. सं. 1, पृ. 46.

1. अष्टा. 1/1/72
2. (क) पु. दे. ल. प. वृ. प. 44, पृ. 131
   (ख) सी. दे. बृ. प. वृ. प. 25, पृ. 189
   (ग) नी. दी. प. वृ. प. 31, पृ. 298
   (घ) ह. भा. प. भास्क. प. 25, पृ. 332
   (ङ) भ. ना. प. शे. प. 24, पृ. 124
   (च) शेषा. प. भास्क. प. 23, पृ. 405
3. 'नलोपः प्रातिपदिकान्तस्य'– अष्टा. 8/2/7, इत्यादावित्यर्थः ।
4. 'स्वादिष्ववसर्वनामस्थाने'– अष्टा. 1/4/17.

ग्रहणे । अन्यथा [1]'निर्यवमती'त्यादौ [2]'उगितश्चे'तिङीप् न सिद्ध्येत् । उगित्पदं चात्र सूत्रे 'भवतु' रूपप्रातिपदिकस्यापि बोधकमिति तत्र प्रत्ययमात्रग्रहणत्वं नास्तीति 'प्रत्यग्रहण'- परिभाषाया अप्रवृत्त्यात्र हि ङीपः सिद्धिः । ज्ञापिताया अस्याः फलं तु [3]'कुमारी- गौरितरे'त्यत्र [4]'घरूपे'ति [5]नद्याःकुमारीशब्दस्य ह्रस्वत्वाऽभावः । अस्या असत्त्वे हि [6]'तरप्तमपौ घः' इत्यनेन टाबन्तस्याऽपि घसंज्ञा दुर्वारा स्यात्तथा सति नद्या अत्र [7]पुंवत्कर्मधारये'तिपुंवद्भावं बाधित्वा 'घरूपे'ति ह्रस्वत्वापत्तिर्दुर्वारा स्यात् । केवलयोः तरप्तमपोर्घसंज्ञयां [8]गौरितरेत्यत्र [9]'तसिलादिष्वि'तिपुंवद्भावं बाधित्वा'घरूपे'ति ह्रस्वसिद्धिश्चाऽस्य फलम् । तथा [10]क्तक्तवतूनिष्ठे' ति क्तक्तवत्वोरेव निष्ठासंज्ञेति परिभाषाया अस्याः फलम् । अस्या असत्त्वे हि क्तक्तवत्वन्तयोरसौ दुर्वारा स्यात् । तथा सति [11]'दृषत्तीर्णे'त्यत्र दृषदो दकारात् परस्य धातुतकारस्यापि [12]'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नत्वाऽऽपत्तिः स्यात् । एवम् [13]'ईदूदेद् द्विवचनंप्रगृह्य'मित्यत्र द्विवचनान्तस्य प्रगृह्यत्वाऽभावोऽप्यस्याः फलम् । अस्या असत्त्वे हि द्विवचनाऽन्तत्वस्यापि प्रगृह्यत्वं दुर्वारमिति 'कुमार्योरगारं कुमार्यगारमित्यत्र प्रत्ययलक्षणेन[14] द्विवचनाऽन्तस्य [15]प्रकृतिभावाऽऽपत्तिर्दुवारा स्यात् । इत्थं [16]'सनाद्यन्ता धातवः' इत्यत्रान्तग्रहस्य चरितार्थ याप्यस्याः फलमूह्यम् ।

---

1. यवोऽस्यास्तीति विग्रहे 'तदस्यास्त्यस्मिन्निर्तिमतुप्'– अष्टा. 5/2/94, इतिमतुपि यवमन्तमतिक्रान्तेत्यर्थे 'निरादयः क्रान्तद्यर्थे पञ्चम्या'– वा. का. 2.2.18, इतिसमासे 'उगितश्च' अष्टा. 4/1/6, इतिङीपि रूपम् ।
2. अष्टा. 4/1/6
3. गौरीशब्दात्' द्विवचनविभज्योपपदे तरबीयसुनौ'– अष्टा. 5/3/57 इतिरप् ।
4. 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचोह्रस्वः'– अष्टा. 6/3/43
5. 'यूस्त्राख्यौ नदी'– अष्टा. 1/4/3
6. अष्टा. 1/1/22
7. 'पुंवत्कमधारयजातीयदेशीयेषु'– अष्टा. 6/3/42
8. 'द्विवचनविभिज्योपपदे तरबीयसुनौ– अष्टा. 5/3/57
9. 'तसिलादिष्वाकृत्वसुचः' अष्टा. 6/3/35
10. अष्टा. 1/1/26
11. 'तृप्लवनतरणयोः'– धा. पा. भ्वा. 969, इति तृधातोः 'निष्ठा'– अष्टा. 3/2/102 इतिक्ते टापि रूपम् ।
12. अष्टा. 8/2/42
13. अष्टा. 1/1/11
14. 'प्रत्ययलोपे प्रत्ययलक्षण्'– अष्टा. 1/1/62
15. 'प्लुत-प्रगृह्या अचि नित्यम्'– अष्टा. 6/1/125
16. अष्टा. 3/1/32

अथास्याः स्वीकारे [1]'कृत्तद्धितसमासाश्चे'त्यत्राऽन्तग्रहणस्य कर्तव्यत्वाऽऽपत्तिः, यतोऽनया प्रतिषेधात्कृत्तद्धिताभ्यां तदन्तविधिर्न स्यात् तथा सति केवलयोः कृत्तद्धितयोः प्रातिपदिकसंज्ञा स्यात् न तदन्तयोः । सत्येवं भिद् छिदिति [2]क्विबन्तस्य' [3]औपगव इत्यादावणन्ततदादेश्च सा न स्यात्, तस्या अभावे च [4]भिदादीनामपदत्वात् प्रयोगो न स्यात्, औपगव इत्यादौ षष्ठ्याः प्रातिपदिकेऽनन्तर्गतत्वाल्लुक्च[5] न स्यादिति शङ्कनीयम् । यतस्तत्र संज्ञाविधावपि कृत्तद्धिताभ्यां तदन्तग्रहणम् [6]'अर्थवत्'–सूत्रादर्थवद्ग्रहणाऽनुवृत्तेः प्रशंसायां [7]मतुपा प्रयोगप्रत्यासन्नैकार्थीभावरूपार्थवत्त्वस्य स्वीकारादेव सुलभम् । नहि केवलयोः कृत्तद्धितयोरेकार्थीभावरूपार्थवत्त्वं सम्भवति । तदुक्तं भगवता "यदप्युच्यते 'कृत्तद्धितसमासाश्चे'त्यन्तग्रहणं कर्तव्यमिति, न कर्तव्यम् । अर्थवदिति वर्तते, कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वे'ति[8] । किं चात्र [9]'युजेरसमासे' इतिनुम्विधानात् कृदंशे,' घकालतनेषु[10] कालनाम्नः' इत्यलुग्विधानात् तद्धितांशे च तदन्तविधिः सत्यामप्यस्यां सुलभः । अन्यथा 'युङ्[11]'-इत्यादौ कृदन्तस्य युजेरप्रातिपदिकत्वेन सर्वनामस्थानपरत्वाभावादिदं नुम्विधानम्, 'पूर्वाह्णेतरे पूर्वाह्णतरे'इत्यादौ तरबन्तस्याप्रातिपदिकत्वात् तद्घटकविभक्तेर्विभाषाऽलुग्विधानञ्चेदमनुपपन्ने स्याताम् ।

---

1. अष्टा. 1/2/46
2. 'भिदिर्विदारणे' धा. पा. रुधा. 1440, 'छिदिर्द्वैधीकरणे' धा. पा. रुधा. 1441, इतिभिच्छिदिभ्यां 'क्विप्च'– अष्टा. इतिक्विपि तदन्तस्येत्यर्थः ।
3. 'उपगोरपत्यमित्यर्थे षष्ठ्यन्तात् उपगुशब्दात् 'तस्यापत्यम्'– अष्टा. 4/1/92, इत्यधिकार अणप्रत्ययः ।
4. 'अपदं न प्रयुञ्जीते'त्यभियुक्ताः ।
5. 'सुपोधातुप्रातिपदिकयोः'–अष्टा. 2/4/71 ।
6. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'–अष्टा. 1/2/46 ।
7. व्या. म. भा. 1/4/2/14 ।
8. "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥" व्या. म. भा. 5/2/2/94 ।
9. अष्टा. 7/1/71 ।
10. अष्टा. 6/3/17 ।
11. 'युज समाधौ' धा. पा. दिवा. 1177, इतियुज्धातोः 'ऋत्विग्दधृक्स्रग्-दिगुष्णिगञ्चु-युजि-क्रुञ्चां च'–अष्टा. 3/2/59, इति-क्विनि तस्य सर्वाऽपहारेऽपि 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62, इतिकृदन्तप्रातिपदिकात् सौ 'युजेरसमासे' अष्टा. 7/1/71 इतिनुमि सोः सकारस्य 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'–अष्टा. 6/1/68, इतिलोपेजकारस्य 'संयोगान्तस्य लोपः'–अष्टा. 8/2/23, इति लोपे नकारस्य 'क्विन्प्रत्ययस्य कुः'–अष्टा. 8/2/82 कुत्वेन ङकारे च कृते रूपमिदम् ।

न चास्याः स्वीकारे [1]'समाससंज्ञायाम्' [2]'सामन्त्रित'मित्यत्र च सुपस्तदन्तविध्यभावः शङ्क्यः । यतस्तत्र क्रमशः सामर्थपरिभाषया महासंज्ञाकरणेन च तदन्तविधिः सुलभः ।

## 'अन्ते'तिशब्दः

[3]'सेनान्तलक्षणकारिभ्यश्चे'ति सूत्रे 'अन्ते'तिशब्दः [4]'प्रातिपदिकविधौ तदन्तविधिर्नास्ती'तिपरिभाषाया [5]ज्ञापकः । यतोऽस्या अभावेऽसौ व्यर्थः । तथाहि– 'हारिषेण्यः[6]' इत्यादौ हरिसेन शब्दादपत्येऽर्थे ण्यप्रत्यय विधानायात्र सूत्रे सेनान्तेतिपदमुपात्तम् । तत्रान्तेतिशब्दो व्यर्थोऽस्याभावे, यतोऽत्र सेनालक्षण इत्याद्युक्तावपि 'येन विधिस्तदन्तस्ये'ति[7] तदन्तविधौ सेनान्तेभ्योऽपि हरिसेनादिशब्देभ्यो ण्यप्रत्ययः सुलभः । ज्ञापितायां चाऽस्यामनया सेनेति प्रातिपदिकादत्र तदन्तविधिप्रतिषेधात् सेनान्तेभ्यो ण्यप्रत्ययविधानाय सूत्रेऽस्मिन् 'अन्ते'तिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलन्तु 'सूत्रनडस्यापत्यं [8]सौत्रनाडि'रित्यत्र [9]'नडादिभ्यः' इतिफकोऽभावः । अस्या असंत्त्वे हि नडाप्रातिपदिकादपि तदन्तविधेर्दुर्वारतयाऽनडन्तात् सूत्रनडशब्दादपत्येऽर्थे फगापत्तिर्दुर्वारा स्यात् ।

---

1. 'प्राक्कडारात्समासः'–अष्टा. 2/1/3, 'सहसुपा'–अष्टा. 2/1/4, 'अव्ययीभावः'–अष्टा. 2/1/5, इत्यधिकारे 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु'–अष्टा. 2/1/6 इत्यादिसूत्रविहितसमाससंज्ञास्वित्यर्थः ।
2. अष्टा. 2/3/48 ।
3. अष्टा. 4/1/152 ।
4. व्याडिः प. सू. प. 69, पृ. 30 ।
5. तथाहि–"यत्र प्रातिपदिकं गृहीत्वा कार्यमुच्यते तत्र तदन्तविधिर्न भवति । कथं ज्ञायते । यदयं 'सेनान्तलक्षणकारिभ्यश्च' (4/1/152) इत्यत्रअन्तग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अत्रान्तग्रहणं न कर्तव्यम् । सेनालक्षण इत्येव सिद्धम् । 'येन विधिस्तदन्तस्य' (1/1/72) इतिवचनात् । हारिषेण्यः, वारिषेण्यः । तदन्तविधिना सेनान्तादपि भविष्यति । तदत्र यदन्तग्रहणं करोति जज्ज्ञापयति अस्तीयं परिभाषेति । किमेतस्या ज्ञापने प्रयोजनम् । सूत्रनडस्यापत्यंसौत्रनाडिः । तदन्तविधिना (च्फञ्) फक् न भवती"त्याह व्याडिः प. सू. प. 69, पृ. 30 ।
6. हरिषेणो नाम कश्चित् 'एतिसंज्ञायामगात्'–अष्टा. 8/3/99 इतिषत्वम् । तस्याऽसिद्धत्वात्सेनान्तत्वात् 'हरिषेणस्यापत्य'मित्यर्थे 'सेनान्तलक्षणकारिभ्यश्च'–अष्टा. 4/1/152, इतिण्यप्रत्यये आद्यचो वृद्धौ रूपम् ।
7. अष्टा. 1/1/72 ।
8. 'अत इञ्'–अष्टा. 4/1/95, इति इञ्प्रत्यये आद्यचो वृद्धौ रूपम् ।
9. अष्टा. 4/1/99 ।

## 'अन्त्यस्ये'तिशब्दः

[1]'नाम्रेडितस्यान्त्यस्य तु वेति'सूत्रे 'अन्त्यस्ये'तिशब्दः[2]'नानर्थकेऽलोन्त्यविधि-रनभ्यासविकारे' इति परिभाषाया 'नानर्थकेऽलोन्त्यविधि'रित्यंशस्य [3]ज्ञापकः। यतोऽस्यामस्यांशस्याऽभावेऽत्र सूत्रे 'अन्त्यस्ये'ति शब्दो व्यर्थः। 'नाम्रेडितस्य तु वे'-त्येतन्मात्रोक्तावप्य-[4]लोऽन्त्यस्ये'त्यनेनैव हि 'पटत्पटेति'पटत्पटदितिरूपे सिद्ध्यतः। ज्ञापिते चास्या अस्यांशेऽनर्थकतयाऽत्रालोऽन्त्यस्येत्यस्याऽप्रवृत्त्याऽन्त्यस्य वैकल्पिकपर-रूप सिद्ध्यर्थमत्र सूत्रेऽन्त्यस्येति शब्दः स्वांशे चरितार्थो भवति। ज्ञापितस्यैतस्याअस्यां-शस्य फलं तु 'पटत् + इति पटिती'त्यादौ [5]'अव्यक्तानुकरणस्यात इता'विति विहिते पररूपेऽ'लोन्त्यस्ये'–त्यस्याऽप्रवृत्तिः। अस्याम् अस्यांशस्याऽसत्त्वे हि पटितीत्यादौ-तकारस्यैव पररूपं स्यान्न तु अच्छब्दस्य। **म. म. जयदेव मिश्रस्तु** [6]'नाम्रेडितस्यान्त्यस्य तु वे'ति सूत्रमेवास्या अस्यांशस्य ज्ञापक[7]"मित्याह। **नीलकण्ठदीक्षितस्तु** 'इदोयपुंसी'ति सूत्रस्थमिद्ग्रहणमस्याअस्यांशे [8]ज्ञापकमिति मनुते। अस्यामनभ्या-

---

1. अष्टा. 6/1/99।
2. (क) व्याडिः प. पा. प. 62, पृ. 40।
   (ख) 'नानर्थकि लोन्त्यविधिः' पु. दे. ल. प. वृ. प. 93, पृ. 151।
   (ग) 'नानर्थकि ऽलोन्त्यविधिः'–सी. दे. वृ. प. वृ. प. 113, पृ. 265।
   (घ) 'नानर्थकि ऽलोन्त्यविधिरनभ्यासविकारे'–नी. दी. प. वृ. पृ. 95, पृ. 310।
   (ङ) 'नानर्थकि ऽलोन्त्यविधिरनभ्यासविकारे'–ह. भा. प. भास्क. प. 115, पृ. 369।
   (च) 'नानर्थकि ऽलोन्त्यविधिरनभ्यासविकारे'–भ. ना. प. शेष. प. 105, पृ. 340।
   (छ) 'नानर्थकि ऽलोन्त्यविधिरनभ्यासविकारे'–शेषा. प. भास्क. प. 90, पृ. 453।
3. तथाहि–'अत्र ज्ञापकं च पूर्वोक्तमन्त्यग्रहण'मित्याह तात्येतिप्रसिद्धो म. म. रामकृष्णः शास्त्री प. शे. भूतितिलके प. 105, पृ. 314।
4. अष्टा. 1/1/52।
5. अष्टा. 6/1/98।
6. अष्टा. 6/1/99।
7. तथाहि–"अत्र ज्ञापकमाम्रेडितस्य वे ति न्यासेनैव सिद्धौ नाम्रेडितस्यान्त्यस्यतुवेति सूत्रमेव बोध्यम्" प. शे. विजयायाम् प. 105, पृ. 340।
8. तथाहि–"अस्या ज्ञापकम्–'इदोऽयपुंसि' (7/2/111) इतिसूत्रस्थमिद्ग्रहणम्। अन्यथा 'इदमो मः' –(7/2/108) 'दश्च' (7/2/109) 'यः सौ' (7/2/110) 'अयपुंसि' (7/2/111) इत्येव वदेत्" प. वृ. प. 95, पृ. 310-311।

सविकार इत्यंशस्य [1]ज्ञापकोऽत्र प्रबन्धेऽन्यत्र[2] निरूपितः । [3]भाष्ये च परिभाषेयं प्रत्याख्याता । प्रत्याख्यानं चास्याः पुरुषोत्तमदेव-सीरदेव-हरिभास्करैः सम्यक् प्रतिपादितम्[4] ।

## 'अन्यतरस्या'मितिशब्दः

'द्वितीय-तृतीय-[5]चतुर्थ-तुर्याण्यन्यतरस्या'मिति सूत्रे 'अन्यतस्या'मितिशब्दः 'यत्रोत्सर्गाऽपवादयोर्विभाषा तत्राऽपवादेन विषये मुक्ते नोत्सर्गः प्रवर्त्तत'इति वचनस्य ज्ञापकः[6] । यतोऽस्याऽभावेऽत्रायं शब्दो व्यर्थः । तथाहि–'द्वितीयभिक्षा'इत्यादौ

---

1. 'आर्तिपिपर्त्योश्च'–अष्टा. 7/4/77, इति निर्देशः ।
2. 'ज्ञापका निर्देशाः' इति प्रघट्टके ।
3. व्या. म. भा. 1/1/9/64 ।
4. तथाहि–इयमपि भाष्ये नोपगता, एतत्प्रयोजनानां प्रकारान्तरेण सिद्धत्वात् । तथा ह्यस्याः प्रयोजनम्–'अव्यक्तानुकरणस्यात इतौ' (6/1/98) इति–अच्छब्दस्य पररूपे, तथा 'हलिलोपः' (7/2/113) इद्रूपस्य लोपे, 'घ्वसोरेद्धावभ्यासलोपश्च' (6/4/119) इत्यभ्यासलोपे, 'अत्र लोपोभ्यासस्य' (7/4/58) इति अभ्यासलोपे च अलोऽन्त्यविधानं माभूदिति । अत्र च यथाक्रमं 'नाम्रेडितस्यान्त्यस्य तु वा' (6/1/99) इति ज्ञापकामत् अनादेशे कृतेऽन्त्यलोपात् द्विशकार निर्देशेनाऽभ्यासलोपस्य सिद्धत्वादत्र ग्रहणसामर्थ्याच्च सर्वादेशविधानं भविष्यतीति किमनया ....." ल. प. वृ. प. 93, पृ. 151 । तथा बृ. प. वृ. प. 113, पृ. 265 ।
   "अव्यक्तानुकरणस्येत्यत्र अच्छब्दस्य संपूर्णस्य पररूपसिद्धिस्तु नास्याः प्रयोजनम् । 'नाम्रेडितस्यान्त्यस्य तु वा' (6/1/99) इति ज्ञापकेनैव तत्सिद्धेः । नापि 'हलिलोपः' (7/2/113) इति इद्रूपलोपेन आभ्यामितिरूपसिद्धिः अनादेशे कृते तस्य लोपविज्ञानात् । घ्वसोरेद्धावभ्यासलोपश्च' (6/4/119) इत्यत्रापि हि द्विशकारनिर्देशान्न दोषः । अत्रग्रहणस्य सर्वादेशार्थत्वाच्च 'अत्र लोपोभ्यासस्य' (7/4/58) इत्यत्र"–प. भास्क. प. 115, पृ. 369-370 ।
5. अष्टा. 2/2/3 ।
6. तथाहि–
   (क) "एवं तर्हि ज्ञापयत्याचार्यो-'यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्ते उत्सर्गो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? ...... 'अर्द्धपिप्पली' 'अर्द्धकोशातकी' । एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति । 'उन्मत्तगङ्गं' 'लोहितगङ्गम् । अव्ययीभावेन मुक्ते बहुव्रीहिर्न भवति । दाक्षिः प्लाक्षिः । इञा मुक्तेऽण् न भवति'–इत्याह पत. 2/2/1/3 ।
   (ख) "द्वितीय-तृतीय-चतुर्थेत्यत्र (2/2/3) अन्यतरस्यां ग्रहणं भिक्षाद्वितीयादिषु षष्ठीसमासार्थं कृतम् । तत्रोक्तं महाविभाषाधिकारेऽयमेकदेशिसमासोऽवयवषष्ठीसमासोऽपि तावुभौ वचनात् भविष्यतः । एवं तर्हि इदं ज्ञापयति–'यत्रोत्सर्गापवादयोर्विभाषा तत्रापवादेन मुक्ते नोत्सर्गः प्रवर्त्तत'इति । तेनार्द्धपिप्पलीत्येकदेशिसमासेन मुक्ते षष्ठीसमासो नास्ति । उन्मत्त गङ्गमित्यव्ययीभावेन मुक्ते बहुव्रीहिर्न भवति । दाक्षिरित्यत्रेञा मुक्ते अण् न भवति । वस् नस् विष- (योऽपि)येऽपि वांनावौ न भवतः"–इत्याह पु. दे. ज्ञा. समु. षष्ठे अपरपादे पृ. 65-66 ।

विकल्पेन समासाऽर्थमारब्धे 'द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाऽधिकरणेन सहाऽन्यतरं समस्यन्ते, तत्पुरुषश्च समासो भवती'त्यर्थकेऽस्मिन् सूत्रे 'भिक्षाद्वितीय'मित्यादीनां प्रयोगाणां षष्ठीसमासेन साधुत्वार्थमयं शब्द उपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । महाविभाषा[1]ऽधिकारेणैव हि 'द्वितीयभिक्षा'इत्यादौ [2]एकदेशिसमासः 'भिक्षाद्वितीय'-मित्यादौ षष्ठीसमासश्च[3] सुलभः । ज्ञापिते चाऽस्मिन् वचने [4]अपवादेन मुक्ते विषये उत्सर्गः [5]षष्ठीसमासो न प्राप्नोतीति 'भिक्षाद्वितीय'मित्यादौ [6]षष्ठीसमासाऽर्थमत्राऽन्यतरस्यामितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'अर्द्धपिप्पली'त्यत्रैकदेशि- समासेन[7]मुक्ते षष्ठीसमासाऽभावः[8], 'उन्मत्तगङ्ग'मित्यत्राऽव्ययीभावेन[9] मुक्ते बहुव्रीहेरभावः[10], 'दाक्षि'रित्यत्र [11]इञा मुक्ते अणो[12]ऽभावः, वस् नस् विषये[13]-ऽपि 'वां नौ' इत्यादेशयोरभावश्च[14] । अस्य वनचस्याऽसत्त्वे हि क्रमशोऽत्र षष्ठीसमास[15]-बहुव्रीहि[16]समासाऽण्-[17]प्रत्यय-वांनावा-[18]देशानामापत्तयो दुवाराः स्युः । अत्र सूत्रे 'अन्यतरस्या'मितिशब्दस्य ज्ञापकतापरभाष्य[19]मेक देश्युक्तिरिति भट्टनागेशो

---

(ग) "द्वितीयतृतीय – (सू. 2/2/3) महाविभाषायां प्रकृतायामन्यतरस्यां ग्रहणं ज्ञापकं यतोत्सर्गापवादं महाविभाषया विकल्प्यते । तत्रापवादेन मुक्त उत्सर्गो न भवतीति"त्याह श्रीना. ज्ञा. सं. 2, पृ. 58 ।

1. 'विभाषा'–अष्टा. 2/1/11 ।
2. 'द्वितीय तृतीय चतुर्थ तुर्याण्यन्यतरस्याम्'–अष्टा. 2/2/3, इतिविहित इत्यर्थः ।
3. 'षष्ठी'–अष्टा. 2/2/37, इति विहित इत्यर्थः ।
4. 'द्वितीय तृतीय.'–अष्टा. 2/2/3 ।
5. 'षष्ठी'–अष्टा. 2/2/37 ।
6. 'षष्ठी'–अष्टा. 2/2/37, इत्यनेनेतिशेषः ।
7. 'अर्धं नपुंसकम्'–अष्टा. 2/2/2 ।
8. 'षष्ठी'–अष्टा. 2/2/37 ।
9. 'अन्यपदार्थे च संज्ञायाम्'–अष्टा. 1/2/21 ।
10. 'अनेकमन्यपदार्थे'–अष्टा. 2/2/24 ।
11. 'अत इञ्'–अष्टा. 4/1/95 ।
12. 'तस्यापत्यम्'–अष्टा. 6/1/92 ।
13. बहुवचनस्य वस्नसौ'–अष्टा. 8/1/21 ।
14. 'युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयोर्वांनावौ'–अष्टा. 8/1/20 ।
15. 'षष्ठी'–2/2/37 ।
16. 'अनेकमन्यपदार्थे'–अष्टा. 2/2/24 ।
17. 'तस्यापत्यम्'–अष्टा. 6/1/92 ।
18. 'युष्मदस्मदोः षष्ठी–चतुर्थी-द्वितीयास्थयोर्वांनावौ'–अष्टा. 8/1/20 ।
19. व्या. म. भा. 2/2/1/3 ।

मनुते[1] । [2]श्रीनागेशस्तु नास्यैकदेशयुक्तित्वमाहेति स्फुटं भट्टनागेश- श्रीनागेशयोराचार्ययोर्मिथः पार्थक्यमित्यवधेयम् । अतोऽस्य वचनस्य [3]ज्ञापकान्तरमत्राऽन्यत्र[4] निरूपितम्[5] ।

## 'अन्यतरस्या'मितिशब्दः

[6]'ह्रक्रोरन्यतस्या'मितिसूत्रे 'अन्यतरस्या'मितिशब्दः 'प्रयोज्यकर्तुः कर्मसंज्ञायां कर्तृसंज्ञा न भवती'ति वचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्याऽभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि – 'ह्रक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्या'दित्यर्थकेऽस्मिन् सूत्रे 'हारयति-कारयति वा भृत्यं भृत्येन वा' - इत्यादौ प्रयोज्यकर्तुर्भृत्यप्रभृतेर्विकल्पेन कर्मसंज्ञार्थमयं शब्द उपात्तः । अस्य वचनस्याऽसत्त्वे हि प्रयोज्यकर्तुः संज्ञाद्वयं स्यात्तथा सति ह्रक्रोरपि गत्यादिभिः[8] सह पाठेनाऽपि भृत्यस्य कर्मसंज्ञायाः सुलभतया शब्दोऽसौ व्यर्थः । ज्ञापितेऽस्मिन्वचने ह्रक्रोरपि गत्यादिभिः सह पाठेऽपि कर्मसंज्ञायां सत्यां कर्तृसंज्ञा न स्यादिति तयोः कर्मसंज्ञाया विवक्षार्थमत्र शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'गमयति देवदत्तं ग्रामं यज्ञदत्तः'[9]–

---

1. तथाहि – "इदं तर्हि प्रयोजनमर्द्धपिप्पलीत्यादि । 'परवल्लिङ्ग'मितिसूत्रस्थभाष्येणेदं निरूप्यते । तत्रहि - 'एकदेशिसमासो नारप्स्यते । कथमर्द्धपिप्पलीति ? । समानाधिकरणो भविष्यति - अर्धं चासौ पिप्पली चेति । न चैकदेशिसमासारम्भे षष्ठीसमासस्य तेन बाधो भवति, अन्यथा षष्ठीसमासोऽपि प्राप्नोति । इष्यते षष्ठीसमासोऽपि 'अपूपार्द्धं मया भक्षितं' 'लब्धं मया ग्रामार्द्ध'मिति । एवं विप्यत्यर्द्धमित्यपिभवितव्य'मित्युक्तम्, तस्माद्यथाश्रुतसूत्रमते एकदेश्युक्तिरियम्" - इत्याह भ. ना. उद्यो. 2/2/1/3 ।
2. ज्ञापकसंग्रहरचयितेतिशेषः ।
3. 'पारेमध्येष्ठ्या वा' - अष्टा. 2/1/18, 'पीलाया वा' - अष्टा. 4/1/118, इत्यनयोः सूत्रयोर्वाग्रहणमित्यर्थः ।
4. शोधप्रबन्धेऽस्मिन्नित्यर्थः ।
5. 'ज्ञापकाः सूत्रांशाः' - इत्येतस्मिनप्रघट्टके (ख) ज्ञापका व्यञ्जनादिशब्दाः' इत्येतस्मिन्प्रकरणे ।
6. अष्टा. 1/4/53 ।
7. तथाहि–
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति–'न कर्मसंज्ञायां कर्तृसंज्ञा भवती'ति, यदयं 'ह्रक्रोरन्यतरस्या'मित्यन्यतरस्याङ्ग्रहणं करोती"त्याह पत. व्या. म. भा. 1/4/1/1
   (ख) "आकडारादेका संज्ञा (सू. 1/4/1) । 'ह्रक्रोरन्यतरस्याम्' इत्यन्यतरस्यांग्रहणं ज्ञापकं, न कर्मसंज्ञायां कर्तृसंज्ञा भवतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1. पृ. 149
8. 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ'–अष्टा. 1/4/52, इत्यत्रेतिशेषः । कैयटेन हि–"यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं प्राप्स्यत्तत्रैव सूत्रे ह्रक्रावकरिष्येतां नाऽकरिष्यतान्यतस्यांग्रहणमित्यर्थः" इत्युक्तम् प्रदी. 1/4/1/1 ।
9. ह्रक्रोः प्रयोज्यकर्त्रोरित्यर्थः ।

इत्यादौ देवदत्तस्य कर्मसंज्ञायां[1] कृतायां तस्य कर्तृसंज्ञाया[2] अभावः । सत्यां ह्यत्र कर्तृसंज्ञायां देवदत्तशब्दात् [3]तृतीयाया आपत्तिर्दुवारा स्यात् । अस्य वचनस्याऽसत्त्वे हि 'गमयति देवदत्तं ग्रामं यज्ञदत्तः'–इत्यादौ [4]'गतिबुद्धी'ति सूत्रेणाऽण्यन्ताऽवस्थायां कतुर्देवदत्तस्य ण्यन्ताऽवस्थायां कर्मसंज्ञा विहितेति णिजर्थव्यापारजन्यफलाऽऽश्रयत्वात् कर्मत्वमिव णिच्प्रकृतिधात्वर्थव्यापाराऽऽश्रयत्वात् कर्तृत्वमपि देवदत्तेऽक्षुण्णमिति देवदत्ते संज्ञाद्वयसमावेशात् संज्ञाद्वयप्रयुक्ते विभक्ती[5] आपद्येताम् ।

## 'अपरे'तिशब्दः

[6]'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञाया'मिति सूत्रे 'अपरे'तिशब्दः-'अर्थवद्ग्रहणे [7]नानर्थकस्य ग्रहण'मिति परिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽपरशब्देनाऽपरशब्दघटक परशब्दस्यापि ग्रहणात् 'अपरे' 'अपराः'–इत्यादौ विभाषा-सर्वनामसंज्ञा परशब्दस्य सुलभेत्यत्र सूत्रेऽपरशब्दो व्यर्थः । ज्ञापितायां चाऽस्यामनयाऽपरशब्दघटक परशब्दस्याऽनर्थकतया पर-शब्देन ग्रहीतुमशक्यतयाऽपरशब्दस्य सर्वनामसंज्ञार्थमपरशब्दोऽत्र स्वांशे चरितार्थो भवति ।

---

1. 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ'–अष्टा. 1/4/52 ।
2. 'स्वतन्त्रः कर्ता'–अष्टा. 1/4/54 ।
3. 'कर्तृकरणयोस्तृतीया'–अष्टा. 2/3/18 ।
4. अष्टा. 1/4/52 ।
5. 'द्वितीया-तृतीये'–त्यर्थः ।
6. अष्टा. 1/1/34 ।
7. (क) व्याडिः प. सू. प. 1, पृ. 1 ।
   (ख) पु. दे. ल. प. वृ. प. 1, पृ. 112 ।
   (ग) सी. दे. बृ. प. वृ. प. 9, पृ. 170 ।
   (घ) नी. दी. प. वृ. प. 11, पृ. 295 ।
   (ङ) ह. भा. प. भास्क. प. 9, पृ. 323 ।
   (च) भ. ना. प. शे. प. 15, पृ. 98 ।
   (छ) शेषा. प. भास्क. प. 14, पृ. 397 ।
8. तथाहि–"परिभाषायां ज्ञापकं 'पूर्वपरावरदक्षिण.' (1/1/34) इतिसूत्रे परशब्दात् पृथगपरग्रहणमिति प्रतीमः"इत्याह ह. भा. प. भास्क. प. 9, पृ. 325 ।

ज्ञापिताया अस्याः फलं तु [1]'प्रोंढवान्' इत्यत्र 'प्रादूहोढोढ्येषैष्येषु'[2]इति-वृद्ध्यैकादेशस्य [3]'पटुजातीयाय'इत्यादौ 'विभाषाप्रकरणे तीयस्य[4]ङित्सूपसंख्यान'-मितिसर्वनामतायाश्चाभावः । अस्या असत्त्वे हि वृद्ध्यैकादेशः सर्वनामसंज्ञा चाऽत्रा-ऽऽपद्येताम् ।

## 'अपृक्ते'इतिशब्दः

'गुणोऽ [5]पृक्ते' इति सूत्रे 'अपृक्ते' इति शब्दः 'यस्मिन् विधिस्तदादावल्ग्रहणे'[6] –इति परिभाषाया ज्ञापकः[7] । यतोऽसौ 'और्णोत्'इत्यत्र [8]'उणोतेर्विभाषा'इति वृद्धि-

---

1. प्रपूर्वकाद् 'वह प्रापणे' धा. पा. भ्वा. 1004 'इति वह्धातोः'निष्ठा'–अष्टा. 3/2/102 इति कर्तरि क्तवतुप्रत्यये कृते प्र+ऊढवत् इत्यवस्थायामित्यर्थः ।
2. वा. वै. सि. कौ. अच्सन्धि प्र. पृ. 45 ।
3. 'पटुप्रकारः'–'इत्यर्थे पटुशब्दात्'प्रकारवचनेजातीयर्'–अष्टा. 5/3/69, इतिजातीयर् प्रत्यये तद्धितान्तप्रातिपदिकत्वेन चतुर्थ्या एकवचने 'ङेर्यः'–अष्टा. 7/1/9, इति यादेशे 'सुपि च'–अष्टा. 7/3/102 इति दीर्घेच कृते रूपमिदं सिद्ध्यति ।
4. वा. वै. सि. कौ. अजन्तपुंलिङ्ग प्र. पृ. 116 ।
5. अष्टा. 7/3/91
6. (क) व्याडिः–प. पा. प. 127, पृ. 42 ।
   (ख) पु. दे. ल. प. वृ. प. 75, पृ. 145 ।
   (ग) सी. दे. बृ. प. वृ. प. 12, पृ. 174 ।
   (घ) नी. दी. प. वृ. प. 17, पृ. 296 ।
   (ङ) ह. भा. प. भास्क. प. 12, पृ. 326 ।
   (च) भ. ना. प. शे. प. 34, पृ. 156 ।
   (छ) शेषा. प. भास्क. प. 33, पृ. 409 ।
7. तथाहि–
   (क) "'हलि' इति वर्तमाने यदपृक्तग्रहणं क्रियते, तेनैव ज्ञाप्यते भवत्येषा परिभाषा 'यस्मिन् विधिस्तदादावल्ग्रहणे'इत्याह वाम. का. 7/3/91 ।
   (ख) "अपृक्तग्रहणं ह्येवमर्थं क्रियते-हलीत्यनुवृत्तेस्तदादौ मा भूदिति । यदि चेयं परिभाषा न स्यात्, अपृक्तग्रहणमनर्थकत्वान्न कुर्यात् । हल्युच्यमानो गुणः, कः प्रसङ्गो यस्तदादावपि स्यात् ? नैव प्राप्नोति, तस्याहलात्मकत्वात् । कृतञ्चेदमपृक्तग्रहणम्, अतस्तेनास्तीयं परिभाषेति ज्ञाप्यते" इत्याह जि. बु. न्या. 7/3/91 ।
   (ग) "अपृक्तंग्रहणं ह्येवमर्थं क्रियते-हलादौ मा भूदिति, यदि चेयं परिभाषा न स्याद्, अपृक्त-ग्रहणं नं कुर्यात्, **कृतं तु, ज्ञापयत्येषा** परिभाषेति"इत्याह ह. मि. पदम. 7/3/91 ।
   (घ) "गुणोऽपृक्ते' (7/3/91) **इत्यत्र तु वामनेनापृक्तग्रहणात्** परिभाषेयमिति व्याख्यातम् । यदुक्तम् 'उतोवृद्धिर्लुकिहलि' (7/3/86) इत्यतो हलीत्यनुवर्तते एवं किमपृक्तग्रहणेन । एवं तर्हि ज्ञापयति भवत्येषा 'यस्मिन् विधि.' इत्यादि । ततश्च हलीत्यनुवृत्तौ हलादौ स्यात् । अपृक्तग्रहणाद् वर्णमात्रे भवति प्रौर्णोत् इती'त्याह पु. दे. ल. प. वृ. प. 75, पृ. 145 ।

विकल्पबाधनायाऽत्र सूत्रे प्रविष्टो व्यर्थोऽस्या अभावे । वृद्धिविकल्पो हि-हलन्तपित्-सार्वधातुकेऽपि चरितार्थ इति तस्य हलि 'और्णोत्'–इत्यत्र गुणेन बाधः संभवतीति हलीत्यनुवर्त्तनेनैवेष्टसिद्धौ पुनर'पृक्ते'–इत्यस्य वैकल्पिक-वृद्धि-बाधनार्थं कृतस्याऽस्मिन् सूत्रे प्रयोजनाभावाद् वैयर्थ्यं स्फुटम् । ज्ञापितायां चाऽस्यां हलादावेव वृद्धिविकल्पेनापि भाव्यताम् अमूविषये चारितार्थ्यादुभयोर्वृद्धिविकल्प-गुणयोरेक-विषयत्वप्राप्तौ मुख्यहलादौ वृद्धिविकल्पः व्यवदेशिवद्भावेन, हलादावपृक्ते तु नित्यं गुणो भवत्वित्येतदर्थम् 'अपृक्ते' इति स्वांशे चरितार्थतामेति । न चास्याः स्वीकारे क्ङिति [1]संप्रसारणं कृङादावेव स्यात् गृहीतो गृहीतिरिति, यगादौ तु न स्याद् 'गृह्यते'–इतीति शङ्क्यम् । यतो न वर्णग्रहणं क्ङितीति किन्तु क्ङावितौ यस्येति बहुव्रीहिणा वर्णसमुदायस्य ग्रहणम् । इयं हि वर्णमात्रग्रहण एव प्रवर्ततेऽल्ग्रहण इत्युक्तेः ।

यदप्यत्र "इदं त्वत्र वक्तुम्–तदन्तविधिनिवृत्त्यर्थमपृक्तग्रहणं कस्मान्न भवतीति, तदन्तविधिरेव भवति । तदेतदपृक्तग्रहणं कथं तदादिविधेर्ज्ञापकमिति चिन्त्यम्"-इत्युक्तं[2] हरदत्त मिश्रेण, तदपि न युक्तम, यतः सिद्धान्ते मिपि गुणेनेष्टः । यतः परिभाषाया अभावे तदन्तविधौ मिपि वृद्धेः सार्थक्यतया वृद्धिगुणयोरेकविषयत्व-प्राप्तौ परिभाषाज्ञापनद्वारा मुख्यहलादौ वृद्धिविकल्पः, व्यवदेशिवद्भावेन हलादावपृक्ते नित्यं गुणो भवतीति विषयव्यवस्थार्थमपृक्तग्रहणं चरितार्थमिति मन्ये । अस्याः परिभाषायाः फलं 'भूसुधियोरिति' ज्ञापकनिर्देशनिरूपणावसरेऽत्रैव प्रबन्धे चारु निरूपितमिति नेह तत्प्रतन्यते । पतञ्जलिस्त्वेनां[3] वचनरूपेण पठति ।

---

(ङ) "वामनेन तु 'गुणोऽपृक्ते' (7/3/91) इत्यत्रापृक्तग्रहणादियं वर्णिता । तदुक्तम् । उतोवृद्धिर्लुकि हलीत्यनुवर्तमाने हलादौ गुणे प्राप्तेऽपृक्तग्रहणं हल्मात्र एव यथा स्याद्धलादौ माभूदित्येवमर्थं क्रियमाणं ज्ञापयत्यस्तीयं परिभाषा यस्मिन् विधिरित्यादि । तेन हलीत्यनुवृत्तौ हलादौ स्यात् । अपृक्तग्रहणे तु वर्णमात्र एव भवति प्रौर्णोदिती'त्याह सी. दे. बृ. प. वृ. प. 12, पृ. 174 ।

(च) "ज्ञापकं चात्र-गुणोऽपृक्ते' (7/3/91) इत्यपृक्तग्रहणम्....." इत्याह शेषा. प. भास्क. प. 33, पृ. 4/10 ।

8. अष्टा. 7/3/90 ।

1. 'ग्रहि ज्यावयि व्यधि वष्टि विचति वृश्चति पृच्छति भृज्जतीनां ङिति च'–अष्टा. 6/1/16 । 'इति विहितमित्यर्थः ।

2. पदम. 7/3/99 ।

3. तथाहि–"यस्मिन् विधिस्तदादावल्ग्रहणे । अल्ग्रहणेषु यस्मिन् विधिस्तदादाविति वक्तव्यम् । किं प्रयोजनम् ? 'अचिश्नु धातु भ्रुवां य्वोरियङुवङौ 'इहैव स्यात् । श्रियौ भ्रुवौ श्रियः भुवः इत्यत्र न स्या"दित्युक्तम्–व्या. म. भा. 1/1/9/7/ ।

## "अपृथिवीरुद्रपूषमन्थिष्वि"तिशब्दः"

[1]'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु'इति सूत्रे 'अपृथिवीरुद्रपूषमन्थिषु' इतिशब्दः [2]'स्वरविधौव्यञ्जनमविद्यमानव'दितिपरिभाषाया ज्ञापकः[3] । यतोऽस्या अभावे पृथिव्यादीनां व्यञ्जनादित्वेनाऽनुदात्तादित्वाभावाद् [4]'द्यावा-पृथिव्यौ' 'सौमा-[5]रुद्रौ' [6]'इन्द्रापूषणौ' [7]'शुक्रामन्थिनौ–इत्यादौ युगपत् प्रकृतिस्वरनिषेधस्याऽप्राप्त्या तन्निषेधायोपात्तोऽयं शब्दो व्यर्थः । ज्ञापितायां चास्यां व्यञ्जनादीनामपि पृथिवी-प्रभृतिशब्दानां चतुर्णां स्वरोद्देश्यकविधौ व्यञ्जनस्याऽविद्यमानत्वाद् अनुदात्तादि-त्वस्याऽक्षुण्णतया पर्युदस्यमान पृथिव्यादिसमर्पकत्वेनासौ स्वांशे चरितार्थो-भवति । अतः पृथिव्यादिषु उभे युगपत् स्वरे भवत एव । ज्ञापिताया अस्याः फलं 'कर्तव्यमित्यादौ व्यञ्जनादिप्रत्यस्याऽऽदेरचः '[8]आद्युदात्तश्चे'ति आद्युदात्तत्व-सिद्धिः ।

भाष्ये तु परिभाषेयं वचनरूपेण पठिता[9] ।

---

1. अष्टा. 6/2/142 ।
2. (क) व्याडिः प. सू. प. 33, पृ. 17 ।
   (ख) पु. दे. ल. प. वृ. प. 32, पृ. 126 ।
   (ग) सी. दे. बृ. प. वृ. प. 53, पृ. 220 ।
   (घ) नी. दी. प. वृ. प. 67, पृ. 306 ।
   (ङ) ह. भा. प. भास्क. प. 55, पृ. 346 ।
   (च) भ. ना. प. शे. प. 80, पृ. 304 ।
   (छ) "वृत्तिकारस्तु 'स्वरविधौ व्यञ्जनमविद्यमानवत्'इति शेषा. प. भास्क. प. 68, पृ. 437 ।
3. तथाहि–
   (क) "'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु'इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तत्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याह भ. ना. प. शे. प. 80, पृ. 304 ।
   (ख) "नोत्तरपदेऽनुदात्तादावपृथिवी' (सू. 6/2/142) इत्यादावपृथिवीत्यादिपर्युदोसौ-ज्ञापकः 'स्वर-विधौ व्यञ्जनमविद्यमानवत्'इती"त्याह श्रीना. ज्ञा. सं. 6, पृ. 107 ।
4. "द्यावाशब्द आद्युदात्तो निपातितः । पृथिवीशब्दो ङीषूप्रत्यान्तत्वादतन्तोदात्तः"इति का. 6/2/142 ।
5. " 'रोदेर्णिलुक् च' इति रुद्रशब्दो रक् प्रत्यन्तोऽन्तोदात्तः" का. 6/2/142 ।
6. " 'श्वन्नुक्षन् पूषन्' इति पूषाऽन्तोदात्तो निपातितः" इति का. 6/2/142 ।
7. "मन्थोऽस्यास्तीति मन्थी, इनन्तत्वादन्तोदात्तः"इति का. 6/2/142 ।
8. अष्टा. 3/1/3 ।
9. व्या. म. भा. 6/1/6/223 पृ. 727 ।

## 'अप्रत्यय'इतिशब्दः

[1]'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यत्र 'अप्रत्यय'इतिशब्दः 'भाव्यमानेन [2]सवर्णानां ग्रहणं ने'ति परिभाषाया [3]ज्ञापकः । यतोऽस्याः परिभाषाया अभावेऽत्राऽयं शब्दो व्यर्थः । न च [4]'सनाशंसभिक्ष उः'–इत्यादौ[5] प्रत्यये सवर्णग्रहणाऽभावाय चरितार्थोऽयमितिशङ्क्यम् । यतः प्रत्यये अनभिधानात् प्रत्यय इत्यन्वर्थसंज्ञाकरणाच्च सवर्णग्रहणाऽभावः सुलभः । नह्यप्रत्ययः क्वचन प्रयोगे दीर्घः श्रूयते, न च दीर्घप्लुतयोरर्थाऽभिधानमस्ति । इत्थं शब्दोऽयमत्र एकदेशानुमत्या परिभाषाया अस्या ज्ञापक इति भट्टनागेशोऽपि[6]मनुते ।

वस्तुस्तु ज्ञापितायामप्यस्यामप्रत्ययपदस्य स्वांशे चारितार्थ्यं नास्तीति शब्दस्याऽस्य परिभाषायामस्यां ज्ञापकत्वं न युक्तम् । न च भाष्यविरोधः शङ्क्यः । यतो भाष्ये 'ज्ञापयती'त्यस्य योगेन बोधयती'त्यर्थः । तथ्यमिदं कैयट-हरदत्त-शेषाद्रिभिरपि प्रतिपादितम्[7] । [8]जिनेन्द्रबुद्धिस्तु परिभाषामिमां न मनुते । यतोऽत्र कृतेनाऽनुक्त-

---

1. अष्टा. 1/1/69 ।
2. (क) पु. दे. प. पा. प. 20, पृ. 12 अ ।
   (ख) भ. नां. प. शे. प. 20, पृ. 113 ।
   (ग) शेषा. प. भास्क. प. 19, पृ. 402 ।
3. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यदप्रत्ययं इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो भवत्येषा-परिभाषा 'भाव्यमानेन सवर्णानां ग्रहणं ने"तीत्याह पत. व्या. म. भा. 1/1/9/68 ।
   (ख) "अणुदित्सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात् सूत्रेण प्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः । अतएव 'अणुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वा'एवं तर्हि यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयति आचार्यो भवत्येषापरिभाषा भाव्यमानेन सवर्णानां ग्रहणं ने'ती"त्याह भ. ना. प. शे. प. 20 पृ. 113-114
4. अष्टा. 3/2/168 ।
5. आदिपदेन 'अ सांप्रतिके'–अष्टा. 4/3/9, इतिग्राह्यम् ।
6. अनेन हि–"वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयती'ति भाष्याक्षराऽर्थः"–इत्युक्तम्-उद्यो. 1/1/9/68 ।
7. तथाहि–
   (क) "प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमितिभावः"–इत्याह कै. प्रदी. 1/1/9/68 ।
   (ख) "अत्यल्पमिदमुच्यते–'अप्रत्यय'इति, 'अप्रत्ययादेशटित्किनुमित इतिवक्तव्यम् । प्रत्यये प्रत्युदाहृतम् (सनाशंसभिक्षउः' 'अ सांप्रतिके'इत्यत्र हि दीर्घः प्राप्नोति), तत्र आदेशे 'इदम इश्'इतः, इह विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा त्रिमात्रिक आदेशः प्राप्नोति । टिति–'आर्द्धधातुकत्वाद्वलादेः'–पठितेति दीर्घोऽपि स्यात् । 'ग्रहोऽलिटि दीर्घः' इत्येतत्तु ग्रहेर्दीर्घ एव, न ह्रस्व इति नियमार्थं स्यात् । किति–

प्रतिषेधार्थेन चकारेण येषां प्रत्ययभिन्नानामादेशादीनां ग्राहकत्वं नेष्टं तेषां सवर्णानां ग्राहकत्वाऽभावः सुलभः ।

## 'अप्रत्यय'इतिशब्दः

'अर्थवदधातुरप्रत्ययः[1] प्रातिपदिकम्'–इत्यत्र 'अप्रत्यय' इतिप्रत्ययान्तप्रतिषेधकः-

---

'भुवोवुग्लुङ्लिटोः' बभूव, अनुनासिकोऽपि स्यात् । मिति–'अम्सम्बुद्धौ'हे अनड्वन्, एवं तर्ह्यप्रत्यय इति नेह संज्ञा ग्रहणम्, किंतर्हि ? अन्वर्थग्रहणम्–प्रतीयते विधीयत इति प्रत्ययः, भाव्यमानः सवर्णान्न गृह्णातीत्यर्थः । इशादयोऽपि भाव्यन्ते । संज्ञा-प्रत्ययस्य तु नावश्यकः प्रतिषेधः । येनार्थं प्रतियन्ति स प्रत्ययः, नहि दीर्घप्लुतयोरर्थाभि धानमस्ति । 'कुहोश्चुः'इत्यादौ भाव्यमानस्याप्युदित्त्वादप्रत्यय इति निषेधाभावः । तथा च पठ्यते–'भाव्यमानोऽण् सवर्णान्न गृह्णाति'' –इत्याह ह. मि. पदम. 1/1/69 ।

(ग) '' 'अणुदित्'सूत्रे ( 1/1/69) अप्रत्ययपदस्यायंमर्थः । तत्र हि प्रत्यय इति न कृत्रिमस्य ग्रहणम्, आनर्थक्यात् । प्रतियन्ति येन–अर्थं स प्रत्यय इति महासंज्ञाकरणेन लभ्यते, न च प्रत्ययसवर्णेनार्थप्रत्ययो भवति । तदुक्तं भाष्ये–'प्रत्यये भूयान् परिहारः– अनभिधानात् प्रत्ययः सवर्णान् न ग्रहीष्यति, (महाभाष्य 1/1/69) इत्यादि । किंतु प्रतीयते विधीयते इति प्रत्यय इति विधीयमानस्य । तच्चाण एव विशेषणम् । न तु उदितोऽपि । 'चोः कुः' (8/2/30) इत्यादौ विधीयमाने उदित्-करणवैयर्थ्यापत्तेः । एवं सति अविधीयमानोऽण् सवर्णस्य ग्राहक इत्यर्थः सम्पद्यते''इत्याह शेषा. प. भास्क. प. 19, पृ. 402 ।

8. अनेन हि–''ननु चाल्पमिदमुच्यते–'अप्रत्ययः'इति,–अप्रत्ययादेश-टित्किन्मित इति वक्तव्यम् । प्रत्यये प्रत्युदाहृतम् । (संनाशंसभिक्ष उः'–'अ सांप्रतिके'–इत्यत्र दीर्घाभावः) आदेशे–'इदम इश्'–अस्मात्=इतः, 'पञ्चम्यास्तसिल्'इति तसिल् । अस्मिन्=इह, 'इदमो हः' । अत्र हि सवर्णग्रहणे सति यद्यत्कृते त्यदाद्यत्व-इश्भावस्तदान्तरतम्यात् त्रिमात्र इकारः प्राप्नोति, अथ कृतेऽर्द्धचतुर्थमात्रः । यदि 'अतोगुणे'पररूपत्वेऽकृते तदापि । अथ कृते ततोऽर्द्धतृतीयमात्रः । अथवा–अर्द्धचतुर्थमात्रोऽर्द्धतृतीयमात्रश्च नास्ति, ततो द्विमात्रस्त्रि-मात्रश्च स्यात् । टित्–'आर्द्धधातुकस्येड्वलादेः' लविता, सवर्णग्रहणे सति दीर्घोऽपि स्यात् । कित्–'भुवो लुङ्लिटोः', बभूव, अत्र सानुनासिकोऽपि स्यात् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । मित्–'चतुरनडुहोरामुदात्तः' 'असुसम्बुद्धौ', अनड्वन्–अत्र दीर्घोऽपि स्यात् । तदा तर्ह्येवं वक्तव्यम् । न वक्तव्यम् । चकारोऽत्र क्रियते, सोऽनुक्त-प्रतिषेधसमुच्चयार्थो भविष्यति । तेन येषामादेशादीनां ग्राहकत्वं नेष्यते ते सवर्णानां ग्रहका न भविष्यन्ती''त्युक्तम् न्या. 1/1/69 ।

1. अष्टा. 1/2/45 ।

शब्दः भवति'प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकत्व'मितिवचनस्य [1]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । '[2]काण्डे' '[3]त्रपुणी' - इत्यादौ हि 'कृत्तद्धितान्तस्यैव प्रातिपदिकसंज्ञा, नान्यप्रत्ययान्तस्ये'ति कृत्तद्धितग्रहणस्य[4] [5]नियमार्थत्वेन प्रातिपदिकत्वाऽभावोऽत्राप्रत्यय इतिशब्दाऽभावेऽपि सुलभः । ज्ञापिते चाऽस्मिन् वचनेऽनेन 'काण्डे' - इत्यादौ प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा प्राप्नोतीति तदभावायाऽत्रायं शब्दः स्वांशे चरितार्थो भवति । न च 'काण्डे' - इत्यादौ पूर्वमेव प्रकृतेः प्रातिपदिकसंज्ञा प्रवृत्ता, विभक्त्या च सहैकादेशे कृतेऽ-[6]न्तवद्भावादस्त्येव प्रातिपदिकत्वमिति सत्यप्यप्रत्ययग्रहणेन [7]ह्रस्वत्वं दुर्वारमिति शङ्क्यम् । यतोऽप्रत्ययग्रहणसामर्थ्यादत्रान्तवद्भावो न [8]भवति । ज्ञापितस्याऽस्य

---

1. तथाहि –
   (क) "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति - भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति । यदयम् - 'अप्रत्यय' इतिप्रतिषेधं शास्ति । स च तदन्तप्रतिषेधः" - इत्याह पत. व्या. म. भा. 1/2/2/45 ।
   (ख) "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति - भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति, यदयमप्रत्ययात् प्रत्ययान्तस्य प्रतिषेधं शास्ती"त्याह जि. बु. न्या. 1/2/46 ।
   (ग) "अर्थवत् सूत्रे (1/2/45) कृत्तद्धितग्रहणस्य नियमार्थत्वेन काण्डे त्रपुणो इत्यादेर्व्यावृत्तौ सिद्धायामप्रत्यय इति प्रत्ययान्तस्य प्रातिपदिकसंज्ञाप्रतिषेधं ज्ञापयति - 'भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकत्व'मिति । तेन बहुपटव उच्चकैरितिपदत्वसिद्धिः । अन्यथा कृत्तद्धितसूत्रे (1/2/46) अर्थवत्समुदायस्य यदि प्रातिपदिकत्वं तदा समासस्यैवेति नियमेनात्र व्युदासः स्या"दित्याहपु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62 ।
2. काण्डशब्दादौ विभक्तौ 'नपुंसकाच्च' - अष्टा. 7/1/11, इति औकारविभक्तेः श्यादेशे 'यचिभम्' - अष्टा. 1/4/18, इतिकाण्डशब्दस्य भसंज्ञायाम् 'यस्येति च' अष्टा. 6/4/48 इत्यलोपे प्राप्ते 'औङः श्यां प्रतिषेधो वाच्यः 'वा. वै. सि. कौ. अजन्तनपुंसकलिंग प्र. पृ. 165, इतितत्प्रतिषेधे अकारेकारंयोर्गुणेकादेशे च कृते रूपमिदम् ।
3. त्रपुशब्दादौ विभक्तौ' नपुंसकाच्च' - अष्टा. 7/1/11, इति औविभक्तेः श्यादेशे 'इकोऽचि विभक्तौ' - अष्टा. 7/1/73 इति नुमि नकारणस्य णत्वे कृते रूपमिदम् ।
4. 'कृत्तद्धितसमासाश्च' 1/2/46, इतिसूत्रे इतिशेषः ।
5. "कृत्तद्धितग्रहणं नियमार्थं भविष्यति - 'कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भविष्यति, नान्यस्य प्रत्ययान्तस्येती"त्याह हि पत. व्या. म. भा. 1/2/2/45 ।
6. 'अन्तादिवच्च' – अष्टा. 6/1/85 ।
7. 'ह्रस्वो नपुंसके प्रातिपदिकस्य' - अष्टा. 1/2/47 ।
8. "नचान्तवद्भावेन काण्डे, कुड्ये, - इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च 'ह्रस्वोनपुंसके' इति ह्रस्वत्वं सोरुत्पत्तिश्च स्यादिति वाच्यम् । कार्यकालपक्षेणेष्टसिद्धेः । यथोद्देशपक्षेऽपि विभक्त्यादेशो नान्तवत्, सप्तम्यधिकरणे चेति निर्देशा"दित्येव समाधानान्तरमप्याहाऽत्र भ. दी. प्रौ. मनो. अजन्त-पुंलिङ्ग प्र. पृ. 206 ।

वचनस्य फलं तु '[1]बहुपटवः' '[2]उच्चकै'रित्यादौ पदत्वसिद्धिः । अस्य वचनस्याऽसत्त्वेहि प्रातिपदिकत्वाभावेनाऽत्र विभक्त्यनुत्पत्त्या पदत्वं न सिद्ध्येत् ।

भट्टोजिदीक्षितस्तु प्रत्यय - प्रत्ययान्तयोरत्र पर्युदासः क्रमशः 'हरिषु' 'करोषि' - इत्यत्र सुप्सिपोः, विभक्तिविशिष्टयो 'र्हरिषु' 'करोषि' इतिसमुदाययोर्वा प्रातिपदिकसंज्ञाव्यावृत्तये चरितार्थ इतिप्रतिपादयन्नास्य शब्दस्योक्तवचनज्ञापकत्वं [3]मनुते । बहुपटवः' 'उच्चकै'रित्यादौ पदत्वं तु '[4]अर्थव'दित्यनेनैव प्रातिपदिकत्वात् सुलभमिति तदाशयः । उपायस्योपायान्तरादूषकत्वादस्य शब्दस्याऽत्र वचने ज्ञापकत्वमपि युक्तमिति मन्ये ।

## 'अर्थ' इतिशब्दः

'अनेकमन्यपदार्थे'[5] इत्यत्र 'अर्थ' इति शब्दो 'विभक्त्यर्थः आश्रयसहित एव समासेन बुध्यते' - इति वचनस्य [6]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । 'अनेकमन्यपदे' इत्युक्तेऽपि पदे वाच्ये समासाऽसंभवाद् समासवचनबलात् पदार्थे समास इति हि लभ्यत एव । ज्ञापिते चाऽस्मिन् वचने आश्रयसहितविभक्त्यर्थे समाससिद्ध्यर्थमत्राऽयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु बहुव्रीहिसमासेन विभक्त्यर्थोऽभिधीयते - [7]इतिपक्षे चित्रगुरित्यत्र चित्रगुशब्देन चित्रगोः सम्बन्धः तद्वतो द्रव्यस्याप्यभिधानसिद्धिः ।

---

1. ईषदूनः पटुरित्यर्थे सुबन्ताद् बहुशब्दात् 'विभाषा सुपो बहुच्पुरस्तात्तु' - अष्टा. 5/3/68, इति बहुच् प्रत्यये तदन्ताज्जसि विभक्तौ रूपम् ।
2. 'उच्चैस्' इत्यव्ययात्' अव्ययसर्वनाम्नामकच् प्राक्टेः' - अष्टा. 5/3/71 इति अकच्प्रत्यये रूपमिदम् ।
3. तथाहि - 'अप्रत्ययः किम् ? हरिषु, करोषि । अत्र सुप्सिपोर्माभूत् । अप्रत्ययान्तः किम् ? तत्रैव विभक्तिविशिष्टयोर्माभू''दित्याह भ. दी. प्रौ. मनो. अजन्त पुंलिङ्ग प्र. पृ.205, 206 ।
4. अ
5. अष्टा. 2/2/24 ।
6. तथाहि–
   (क) "इहाऽनेकमन्यपदे इतीयता सिद्धम् । कथं पुनः पदानात्मवृत्तिः स्यात् । शब्दो ह्येष, शब्दे ह्यसंभवादर्थे कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत् प्रयोजनं - कृत्स्नःपदार्थो ययाऽभिधीयते सद्रव्यः सलिङ्गः ससंङ्ख्यश्चेती"त्याह पत. व्या. म. भा. 2/2/2/24 ।
   (ख) "अनेकमन्यपदार्थे (सू. 2/2/24) । अर्थग्रहणसामर्थ्यात् पदार्थः कृत्स्नः सद्रव्यः सलिङ्गः ससंख्यश्च गृह्यते"इत्याह श्रीना. ज्ञा. सं. 2, पृ. 58 ।
7. पक्षोऽयं भगवता समुपन्यस्तः - व्या. म. भा. 2/2/2/24 ।

## 'अर्थ' इतिशब्दः

'ईदूतौ च [1]सप्तम्यर्थे' - अर्थे'इतिशब्दः 'प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवती'ति वचनस्य[2]ज्ञापकः । यतोऽस्य वचनस्याभावे ऽत्रायं शब्दो व्यर्थः । तथाहि - 'सोमो गौरी अधिश्रितः' - इत्यादौ सप्तम्या[3]लुप्तत्वेऽपि तदर्थसद्भावात् प्रगृह्यसंज्ञार्थमत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । अस्य वचनस्याऽभावेऽत्राऽर्थे'- इतिशब्दाऽभावेऽपि हि सप्तमीरूपयोरीदूतोरसंभवेन वचनबलात् 'सप्तमीसहचरितमीदूदन्तं प्रगृह्य'मित्यर्थोऽस्य सूत्रस्य लब्धुं शक्य इति 'सोमो गौरी अधिश्रितः' इत्यादौ सप्तम्या[4]लुप्तत्वेऽपि प्रत्ययलक्षणेन सप्तमीसहचरितत्वमस्तीति प्रगृह्यसंज्ञायाः सिद्धिः सुलभा । ज्ञापिते चाऽस्मिन् वचने तत्र प्रगृह्यसंज्ञायां प्रत्ययलक्षणं न भवतीति लुप्तायां सप्तम्यां प्रत्ययलक्षणेन सप्तमीसहचरितत्वमपि न सम्भवतीति 'सोमो गौरी अधिश्रित' इत्यादौ प्रत्ययलक्षणेनाऽपि अप्राप्तायाः प्रगृह्यसंज्ञायाः सिद्ध्यर्थमत्र शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु '[5]वाप्यश्वः' - इत्यादौ [6]प्रगृह्यसंज्ञाया अभावस्य सिद्धिः ।

---

1. अष्टा. 1/1/19 ।
2. तथाहि–
   (क) "एवं तर्हि ज्ञापयत्याचार्यो 'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवती' ति । किमेतस्य ज्ञापने प्रयोजनम् ? कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवती"त्याह पत. व्या. म. भा. 1/1/18 । अत्रैव -
   "इदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।
   पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥
   वचनाद् यत्र दीर्घत्वं तत्रापि सरसो यदि ।
   ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्" - इति चाह ।
   (ख) "इह प्रगृह्यप्रकरणे प्रत्यलोपलक्षणेन प्रगृह्यसंज्ञा न भवतीति । यदि हि स्यादर्थग्रहणमनर्थकं स्यात् । एतावद् वक्तव्यम् । 'इदूतौ च सप्तमी' इति । सप्तम्या लुकि कृते प्रत्ययलक्षणेन सप्तमीसहचरितौ यावीदूतौ सप्तम्यां परतो वा यावीदूतौ तयोः प्रगृह्यसंज्ञा भवत्येवेति नार्थोऽर्थग्रहणेन । अर्थग्रहणाद् विज्ञायते - 'प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति' इती"त्याह जि. बु. न्या. 1/1/19 ।
   (ग) "इह प्रगृह्यप्रकरणे प्रत्ययलक्षणं न भवतीति, यदि स्यात् पूर्वोक्तन्यायेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेराश्रयणात् लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन सप्तम्यन्तमितिसंज्ञा भविष्यति, किमर्थग्रहणेन ?" - इत्याह ह. मि. पदम. 1/1/19 ।
   (घ) "ईदूतौ च.. (सू. 1/1/19) न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीत्यत्रार्थग्रहणं ज्ञापक"मित्याह एन. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 137 ।
3. 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' - अष्टा. 11/39 । 'छन्दसि विषये सुपां स्थाने सुलुक्पूर्वसवर्ण आ आत् शेया डाड्या याच् आल् - इत्येते आदेशा भवन्ती'तिसूत्राऽर्थः ।
4. 'सुपां सुलुक्.' - अष्टा. 1/1/39 ।
5. 'वाप्यामश्व इति विग्रहे 'संज्ञायाम्' - अष्टा. 2/1/44, इति नित्यं तत्पुरुषसमासे यणि रूपमिदम् । वापी निष्ठाऽधिकरणतानिरूपिताऽऽधेयतावानश्व इत्यर्थः ।
6. 'ईदूतौ च सप्तम्यर्थे' - अष्टा. 1/1/19 ।

अस्य वचनस्याऽसत्त्वे हि [1]प्रत्ययलक्षणेनाऽत्र प्रगृह्यसंज्ञाया[2] आपत्तिर्दुवारा स्यात् । अथार्थग्रहणे क्रियमाणेऽपि कुतोऽत्र[3] न भवति प्रगृह्यसंज्ञा[4] ? अस्ति ह्यत्राऽपि सप्तम्यर्थ इतिशङ्क्यम् । यंतोऽत्राऽर्थग्रहणसामर्थ्यादसंसृष्टः[5] सप्तम्यर्थोऽत्राऽजहत्स्वार्थायां[6] वृत्तौ गृह्यते । [7]जहत्स्वार्थायां च वृत्तौ वाक्यावस्थायामुपसर्जनीभूतो योऽर्थः, तं शब्दो जहातीति सप्तम्यर्थो नास्त्येव ।

## 'अर्थ' इति शब्दः

'चार्थे द्वन्द्वः[8]' इत्यत्र अर्थ इतिशब्दः 'चेनैव प्रकाशितो योऽर्थस्तत्र द्वन्द्वो भवती'तिवचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । 'चे

---

1. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
2. 'ईदूतौ च.' - अष्टा. 1/1/19 ।
3. 'वाप्यश्वः' - इत्यत्रेत्यर्थः ।
4. 'ईदूतौ च सप्तम्यर्थे' -अष्टा. 1/1/19 ।
5. तथाहि –
   (क) "अर्थग्रहणं किम् । वृत्तावर्थान्तरोपसंक्रान्ते माभूत् । वाप्यामश्वो वाप्यश्वः" - इत्याह भ. दी. वै. सि. कौ. अच्संधि- प्र. पृ. 61- 62 ।
   (ख) " 'वाप्यश्वः' - इत्यत्र यो वापीशब्दः स तु वाप्यधिकरणद्रव्ये उपसंक्रान्तः । 'सोमो गौरी'इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः, न तु तदधिकरणकद्रव्ये उपसंक्रान्तः' वृत्त्यभावादिति भेदः" - इत्याह ज्ञा. भि. त. बो. अच्सन्धि प्र. पृ. 62 ।
6. न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था वृत्तिः ।
7. जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था वृत्तिः ।
8. अष्टा. 2/2/29 ।
9. तथाहि –
   (क) "इह 'चे द्वन्द्व' इतीयता सिद्धम् । कथं पुनश्चेनात्मवृत्तिः स्यात् । शब्दो ह्येषः ? शब्दे कार्यासम्भवादर्थे कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनम् - एवं यथाविज्ञायेत - चेन कृतोऽर्थश्चार्थ इती"त्याह पत. व्या. म. भा. 2/2/2/19 ।
   (ख) "तत्र चेन कृतोऽर्थ इत्यवधारणमर्थग्रहणसामर्थ्यादाश्रीयते - चेनैव यः प्रकाशितोऽर्थस्तद्द्वन्द्व" - इत्याह कै. प्रदी. 2/2/2/29 ।
   (ग) "चार्थे द्वन्द्वः (सू. 2/2/29) । अर्थग्रहणात् चेन कृतोऽर्थश्चार्थ इति विज्ञायते" - इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. । पृ. 154 ।

द्वन्द्व' - इत्येतावतैव चशब्दे कार्याऽसंभवाद् अर्थे कार्यं भवतीति हि विज्ञास्यते । ज्ञापिते चाऽस्मिन् वचने चव्यतिरिक्तेन प्रकाशितेऽर्थे द्वन्द्वाऽभावाऽर्थमत्राऽयं शब्दः स्वांशे चरितार्थो भवति । यतोऽर्थग्रहणादिहाऽवधारणमाश्रीयते । ज्ञापित-स्याऽस्य वचनस्य फलं तु -

"अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराया इव दुर्मदः ॥"

इत्यत्र गामश्वमित्यादौ [1]द्वन्द्वाऽऽपत्तेरभावः । अत्र हि अहरहः शब्देनैव साहित्यमवगम्यते न तु चेन । अस्य वचनस्याऽसत्त्वे हि गवादीनामत्र परस्पर-साहित्येन नयनक्रियायामन्वयात् 'गामश्वं-पुरुषंपशुम्' - इति वाक्येऽपि परस्पर-साहित्याऽऽत्मकेतरेतरयोगरूपचार्थे पदानां वृत्ते-[2]र्द्वन्द्वाऽऽपत्तिर्दुवारा स्यात् ।[3]

## 'अर्ध'-मिति शब्दः

'अर्धं [4]नपुंसक'मित्यत्र 'अर्धमितिशब्दः '[5]अव्यक्तगुणसंदेहे नपुंसकलिङ्गं प्रयुज्यते'- इतिपरिभाषाया[6]ज्ञापकः । यतोऽस्या अभावेऽत्राऽसौ शब्दो व्यर्थः । अत्र हि 'अर्ध'मिति - नपुंसकादेव 'नपुंसक'मितिलब्धुं शक्यम् । ज्ञापितायां चाऽस्यामनया पुंलिङ्गेऽप्यर्धशब्दस्य 'ग्रामार्ध' इत्यादौ षष्ठीसमासं[7] प्रबाध्य समासो ऽयमापद्येतेति तद्वाराणायायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'अस्या गर्भे किं जात'मितिप्रश्ने 'किं जात'मित्यत्र नपुंसकत्वस्य साधुत्वसिद्धिः । अस्या असत्त्वे हि नाऽस्य साधुत्वं सिद्ध्येत् । यतो द्वयमेव जायते प्रायेण स्त्री पुमान्वा, अथ चोच्यते किं जातमिति ।

---

1. अष्टा. 2.2.29 ।
2. 'चार्थे द्वन्द्वः' - अष्टा. 2/2/29 ।
3. 'चार्थे द्वन्द्वः' - अष्टा. 2/2/29 ।
4. अष्टा. 2/2/2 ।
5. (क) व्याडिः प. सू. प. 87, पृ. 36 ।
   (ख) अव्यक्त-गुणसंदेहे नपुंसकलिङ्गं प्रयोजयेत्'
   पु. दे. ल. प. वृ. प. 60, पृ. 139 ।
6. तथाहि – " 'अव्यक्तगुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते' । कथं ज्ञायते । यदयमर्धं नपुंसकम् (2/2/2) इति नपुंसकग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अत्रहि 'अर्धमितिनपुंसकादेव नपुंसकं सिद्धम् । तज्ज्ञापयति अव्यक्ते गुणसन्देहे स्त्रीनपुंसकेष्वपि नपुंसकत्वं नपुंसकलिङ्गं प्रयुज्यते । तेन पुंलिङ्गेऽ पि स्यात् समासः । तस्मान्नपुंसकग्रहणम् । किमेतस्या ज्ञापने प्रयोजनम् । 'किंजात'मिति निर्देशः सिद्धो भवति । द्वयं चैव हि जायते प्रायेण स्त्री पुमान्वा । अथ चोच्यते किंजातमिती"त्याह व्याडिः प.सू. प. 87, पृ. 36 ।
7. 'षष्ठी' - अष्टा. 2/2/8 ।

## 'अलमितिचे'दितिशब्दः

'[1]संभावनेऽलमितिचेत्सिद्धाप्रयोगे' - इत्यत्र 'अलमितिचे'दितिशब्दः - 'संभावनेऽपि नालमर्थ्यं गम्यते' - इतिवचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽयं शब्दो व्यर्थः । तथाहि 'अपि पर्वतं शिरसा [3]भिन्द्या'दित्यादौ लिङ्प्रत्ययविधानायाऽऽरब्धे 'संभावनार्थे लिङ् स्याच्चेत् संभावनमलमर्थे, अलमितिसिद्धाऽप्रयोगे सती'त्यर्थकेऽस्मिन्सूत्रे 'विदेशस्थायी देवदत्तः प्रायेण गमिष्यति ग्राम'मित्यादौ लिङोऽभावायोपात्तः । स चाऽस्य वचनस्याऽभावेऽनुपपन्नः । यदि हि संभावने नियमेनाऽलमर्थो गम्येत तदा व्यभिचाराभावात् 'अलमितिचे'दिति विशेषणवाचकः शब्दोऽत्र नोपपद्येत । संभवव्यभिचाराभ्यां हि स्याद् विशेषणमर्थवत् । ज्ञापिते चाऽस्मिन्वचने व्यभिचारसंभवादत्राऽयं शब्दः समुपपद्यते । 'विदेशस्थायी देवदत्तः प्रायेण गमिष्यति[4] ग्राम'मित्यत्र लिङोऽभावाय चाऽयं स्वांशे चरितार्थोभवति । यतोऽत्र प्रायशब्दात् प्रतीयमानं सम्भावनमस्ति किन्त्वलमर्थो नास्तीतिभविष्यत्कालविवक्षायां लृडेवाऽत्र भवति । न चाऽस्य वचनस्य स्वीकारे आशंसासंभावनयोरविशेषात् आशंसायां ये विधीयन्ते ते संभावनेऽपि भवेयुः, ये च संभावने विधीयन्ते ते आशंसायामपि भवेयुर्यतस्तयोरर्थयोरविशेषादालमर्थ्याऽनालमर्थ्यकृतविशेषो वक्तुमशक्य इति शङ्क्यम् । यतः 'इदं मे भूया'दित्याकारकेच्छाविशेषः आशंसा, एकतरकोटिकाऽनिश्चितज्ञानविशेषः संभावनमितिस्वीकृत्य तयोर्भेदोऽभ्युपेयते, इति आशंसा-संभावनयोर्विहिताः संभवनाऽऽशंसयोरपि न प्राप्नुवन्ति ।

---

1. अष्टा. 3/3/154 ।
2. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति - संभावने- (ऽप्य)नालमर्थ्यं गम्यत'इति यदयं 'संभावनेऽलमित्याह"-इत्याह पत. व्या. म. भा. 3/3/2/132 ।
   (ख) "आशंसायां भूतवच्च (3/3/132) इति ज्ञापकात् संभावनेऽपि नालमर्थ्यं गम्यते"-इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 161
3. 'भिदिर्विदारणे' धा. पा. रुधा. 1440, इतिभिद्धातोः 'संभावनेऽलमिति चेत्सिद्धाप्रयोगे' - अष्टा. 3/3/154, इतिभविष्यति काले लिङि तिपि यासुडागमे' 'रुधादिभ्यः श्नम्' - अष्टा. 3/1/78, इतिश्नमि'श्नसोरल्लोपः' - अष्टा. 6/4/111, इति श्नमोऽल्लोपे रूपमिदम् ।
4. 'गम्लृगतौ' धा. पा. भ्वा. 982, इतिगम्धातोः संभावनेऽपि भविष्यत्काले लृटि तिपि स्यप्रत्यये इडागमे प्रत्ययावयवसकारस्य षत्वे रूपम् ।

## 'अवर्णस्ये'तिशब्दः

'[1]सहिवहोरोदवर्णस्ये'त्यत्र 'अवर्णस्ये'तिशब्दः '[2]संप्रसारणं संप्रसारणाश्रयं च कार्यं बलव'दितिपरिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः ।

---

1. अष्टा. 6/3/112 ।
2. (क) पु. दे. ल. प. वृ. प. 103, पृ. 154 ।
   (ख) 'संप्रसारणं संप्रसारणाश्रयं च कार्यं बलीयो भवति' - सी. दे. बृ. प. वृ. प. 59, पृ. 225 ।
   (ग) नी. दी. प. वृ. प. 133, पृ. 315 ।
   (घ) 'संप्रसारणं सम्प्रसारणाश्रयं च कार्यं बलीयो भवति' - ह. भा. प.भास्क. प. 61, पृ. 349 ।
   (ङ) भ. ना. प. शे. प. 129, पृ. 361 ।
   (च) शेषा. प्र. भास्क. प. 108, पृ. 46 ।
3. तथाहि –
   (क) "ननु च सम्प्रसारणादिभ्यः परत्वादीप्त्वेन भवितव्यम्, तथा च भाष्ये - 'उभयोर्नित्ययोः परत्वादीप्त्वेन भवितव्यम्, ओत्वे कृते सम्प्रसारणम्, सम्प्रसारणे कृते सम्प्रसारणपर- पूर्वत्वम्, कृतकार्यत्वात् पुनरीत्त्वं न भविष्यति' इति । तस्माद्भवितव्यमेवौत्त्वेन, तस्मिन् सति पश्चात् सम्प्रसारणादिभिः । नचैवं किञ्चिदनिष्टमापद्यत इति नार्थो वर्णग्रहणेन । एवंतर्ह्यवर्णग्रहणं कुर्वन्नेतज्ज्ञापयति - क्वचित्सम्प्रसारणं तदाश्रयं च कार्यं बलीयोभवतीति । तेन यदुक्तम् - 'सम्प्रसारणं संप्रसारणाश्रयञ्च कार्यं बलीयोभवति' इति तदुपपन्नं भवती" त्याह जि. बु. न्या. 6/3/112 ।
   (ख) "ज्ञापकं चात्र 'सहिवहोरोदवर्णस्य' (6/1/112) इति अवर्णग्रहणं न्यासकृतोक्तं, सम्प्रसारणपूर्वरूपत्वे कृते ऊढ इत्युकारस्य माभूदित्येवमर्थम् । एतच्चाप्रयोजनं, संप्रसारणात् प्रागेव परत्वात् 'नमुने' (8/2/3) इतियोगविभागेन सिद्धेषु ऊढ इत्यादौ ढत्वधत्व-ष्टुत्वढलोपेषु ततः संप्रसारणपूर्वरूपत्वाभ्यां परत्वादोत्वे कृते संप्रसारणं पूर्वरूपत्वं च विधास्याम इति न किञ्चिदनिष्टं नाम । तदेतदवर्णग्रहणं संप्रसारण-तदाश्रयपूर्वरूपत्वयोर्बलीयस्त्वस्य ज्ञापकमिती"त्याह पु. दे. ल. प. वृ. प. 103, पृ. 154 ।
   (ग) "न्यासकारेण पुनरियं 'सहिवहोरोदवर्णस्य' (6/3/112) इत्यत्रावर्णग्रहणेन ज्ञापिता । तस्यैतत् प्रयोजनमूढः ऊढवानित्यत्र संप्रसारणे पूर्वरूपत्वे चोकारस्यौत्वं माभूदिति । एतच्चाप्रयोजनम् । ढत्व- धत्वष्टुत्वढलोपेषु संप्रसारणपूर्वरूपत्वाभ्यां परत्वादकारस्यौत्वे कृते संप्रसारणपूर्वरूपत्वं च करिष्यामः इति न किञ्चिदनिष्टमापद्यते । तदेवमवर्णग्रहणमस्या ज्ञापकमिती" त्याह सी. दे. वृ. प. वृ. प. 59 पृ. 225 ।
   (घ) "न्यासे तु 'सहिवहोरोदवर्णस्य' (6/3/112) इतिसूत्रगतावर्णग्रहणं ज्ञापकमुक्तम् । तद्धि ऊढवान् इत्यत्र संप्रसारणपूर्वरूपयोः कृतयोरोत्वं माभूदित्येवमर्थम् । तत्र यदीयं न स्यात् तदा व्यावर्त्याभावात्तद् व्यर्थं स्या"दित्याह ह. भा. प. भास्क. प. 61, पृ. 349 ।

तथाहि-'[1]सोढा' '[2]वोढा' - इत्यादौ धातोरवर्णस्य ओत्वार्थमारब्धे' सहिवहोरवर्णस्य ओत्स्याड् ढलोपे सती'त्यर्थकेऽस्मिन्सूत्रेऽयं शब्दः 'ऊढ[3]:' '[4]ऊढवान्' - इत्यादावुकारस्य ओत्ववारणार्थमुपात्तः । स चाऽस्याः परिभाषाया अभावेऽत्र व्यर्थः । यतोऽत्र संप्रसारणपूर्वरूपाभ्यां प्रागेव [5]ढत्वधत्व[6]ष्टुत्व[7]ढलोपेषु[8] कृतेषु 'वढ' 'वढवत्' - इत्यवस्थयोरेव अकारस्य ओत्वे ततः [9]संप्रसारणपूर्वरूपयोः[10] कृतयोरेतच्छब्दाऽभावेऽपि न किञ्चिदनिष्टं प्राप्नोति । ज्ञापितायां चास्यामनयात्र पूर्वं सम्प्रसारणे तदाश्रये पूर्वरूपे च कृतेऽस्य शब्दस्याभावे उकारस्याप्योत्वं प्राप्नोतीति तद्वारणाय-शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु'[11]शुशावयिषति'

---

1. "षह मर्षणे" धा. पा. भ्वा. 852, इति सह धातोर्लुटि लस्य ते शपोऽपवादे तास्- प्रत्यये तशब्दस्य डादेशे तासष्टिलोपे 'सह्ता' इतिस्थिते 'होढः' - अष्टा. 8/2/31, इति हकारस्य ढत्वे 'झषस्तथोर्धोऽधः' - अष्टा. 8/2/40, इति धकारस्य ष्टुत्वेन ढकारे 'सढ्ढा'-इत्यवस्थायां 'ढोढेलोपः' - अष्टा. 8/3/13 इतिपूर्वढकारस्य लोपे 'सहिवहोरोदवर्णस्य' - अष्टा. 6/3/112, इतिसकारोत्तराऽकारस्यौत्वे च कृते रूपमिदम् ।
2. 'वह प्रापणे' धा. पा. भ्वां. 1004, इति वह धातोर्लुटि लस्य तिपि तस्य डादेशे शपोऽपवादे तास्प्रत्यये' वह् ता' - इतिस्थितौ 'होढः "-अष्टा. 8/2/31, इति हकारस्य ढकारे 'झषस्तथोऽर्धोऽधः' - अष्टा. 8/2/40, इतितकारस्य धकारे धस्य ष्टुत्वेन ढकारे 'ढोढेलोपः' - अष्टा. 8/3/13, इतिपूर्वढकारस्य लोपे 'सहिवहोरोदवर्णस्य' - अष्टा. 6/3/112, इति वकारोत्तराऽकारस्य ओकारे रूपमिदम् ।
3. 'वह प्रापणे' धा. पा. भ्वा. 1004, इति वह्धातो र्निष्ठा-क्तप्रत्यये 'वचिस्वपियजादीनां किति' - अष्टा. 6/1/15, इत्यनेन - 'यजिर्वपिर्वहिश्चैव वसि - वेञ् - व्येञ् इत्यपि । ह्वयतिः श्वयतिश्चेति यजाद्याः स्युरिमे नव 11' इत्युक्ते र्यजादित्वाद्वस्य संप्रसारणे उकारे 'संप्रसारणाच्च' - अष्टा. 6/1/108, इतिपूर्वरूपैकादेशे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' - अष्टा. 6/3/111, इत्युकारस्य दीर्घे कृदन्तात्स्वादिकार्येषु-कृतेषु रूपमिदम् ।
4. 'वह प्रापणे' धा. पा. भ्वा. 1004, इति वह् धातोर्निष्ठा - क्तवतुप्रत्यये 'उढः' इतिवत् संप्रसारणपूर्वरूपैकादेशढत्व - धत्व- ष्टुत्व - ढलोप- दीर्घेषु कृतेषु कृदन्तात्सौ उगित्वान्नुमि उपधादीर्घे हल्ङ्यादि लोपे संयोगान्तलोपे च कृते रूपमिदम् ।
5. 'हो ढः ' - अष्टा. 8/3/31 ।
6. 'झषस्तर्थोर्धोऽधः' - अष्टा. 8/2/30 ।
7. 'ष्टुनाष्टुः ' - अष्टा. 8/2/41 ।
8. 'ढोढे लोपः ' - अष्टा. 8/3/13 ।
9. 'वचिस्वपियजादीनां किति' - अष्टा. 6/1/15 ।
10. 'संप्रासरणाच्च' - अष्टा. 6/1/108 ।
11. 'टुओश्वि गतिवृद्ध्योः' धा. पा. भ्वा. 1010, इतिश्विधातोर्णिचितदन्तात्सनि 'संप्रसारणंतदाश्रयं च कार्यं बलवदितिपरिभाषया 'अचोऽञ्णिति' - अष्टा. 7/2/115, इति वृद्धिम् 'एचोऽयवायावः' - अष्टा. 6/1/78, इत्यायादेशं च बाधित्वा 'णौचसंश्चङोः' - अष्टा. 6/1/31, इति वकारस्य संप्रसारणे- 'संप्रसारणाच्च' - अष्टा. 6/1/108, इतिपूर्वरूपे च कृते णौ परतः उकारस्य वृद्धौ आवादेशे च कृतेऽपि 'णौ कृतं स्थानिवद्भवती'ति

'[1]अशूशवत्' '[2]जुहावयिष्यति' '[3]जुहूषति' –'[4]जुहुवतुः '[5]विव्यथे' - इत्यादि प्रयोगाणां सिद्धिः । अस्या असत्त्वे हि 'शुशावयिषति' 'अशूशव'दित्यत्र 'णौ च [6]संश्चङोः' - इति विहितं संप्रसारणमन्तरङ्गत्वाद् - [7]वृद्ध्यायादेशौ[8] बाधेताम्, 'जुहावयिषती'त्यत्र

---

वचनेन स्थानिवद्भावे कृते 'सन्यङोः' - अष्टा. 6/1/9, इतिशुशब्दस्य द्वित्वेऽभ्यासकार्येषु कृतेषु सनः इडागमे द्वितीय-शुशब्दघटकोकारस्य वृद्ध्यावादेशयोः कृतयो र्णेरिकारस्य गुणे यादेशे च कृते सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

1. 'टुओ श्वि गतिवृद्ध्योः' - धा. पा. भ्वा. 1010, इतिश्विधातोर्णिचि तदन्ताल्लुङि अडागमे तिपि च्लौ 'णि - श्रि - द्रु - स्रु - भ्यःकर्त्तरि चङ् अष्टा. 3/1/48, इति च्लेश्चङि अन्तरङ्गत्वात् पूर्वंप्राप्तौ वृद्ध्यायादेशौ 'संप्रसारणं तदाश्रयं च कार्यं बलव'दितिपरिभाषया 'णौ च संश्चङोः' अष्टा. 6/1/31, इति वकारस्य सम्प्रसारणे पूर्वरूपे च कृते शुशब्दस्य द्वित्वे भ्यासकार्येषु कृतेषु वृद्धौ आवादेशे च कृते 'णौ चङ्युपधाया ह्रस्वः' - अष्टा. 7/4/1, इत्युपधाह्रस्वत्वे णेर्लोपे 'दीर्घोलघोः' -अष्टा. 7/4/94, इति अभ्यासोकारस्य दीर्घे 'इतश्च' - अष्टा. 3/4/100, इतीकारलोपे च कृते रूपमिदम् ।
2. 'ह्वेञ् स्पर्धायां शब्दे च' धा. पा. भ्वा. 1008, इति ह्वेञ्धातोर्णिचि तदन्तात् सनि पूर्ववद्बलीयस्त्वाद् वृद्ध्यादेः प्राक् 'ह्वः सम्प्रसारणम्' - अष्टा. 6/1/32, इतिसम्प्रसारणे पूर्वरूपे च कृते हुशब्दस्य 'सन्यङोः' - अष्टा. 6/1/9 इति द्वित्वेऽभ्यासत्वे 'कुहोः श्चुः' - अष्टा. 7/4/62, इतिचुत्वेन हकारस्य झकारे 'अभ्यासेचर्च' - अष्टा. 8/4/54, इति जश्त्वेन झकारस्य जकारे सनः 'वृद्धिर्णितिपरतः उकारस्य वृद्ध्यावादेशयोः कृतयोः णेरिकारस्य गुणेऽयादेशे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
3. 'ह्वेञ् स्पर्धायां शब्दे च' धा. पा. भ्वा. 1008, इति ह्वेधातोः सनि 'ह्वः सम्प्रसारणम्' - अष्टा. 6/1/32, इति संप्रसारणे पूर्वरूपत्वे च कृते'सन्यङोः' - अष्टा. 6/1/9, इतिद्वित्वेऽभ्यासकार्ये कृते 'कुहोः श्चुः' - अष्टा. 7/4/62, इति हकारस्य स्थाने जातस्य ढकारस्य 'अभ्यासे चर्च' - अष्टा. 8/4/54 इतिजश्त्वेन जकारे लटि तिपि शपि पररूपे 'अज्झनगमांसनि' - अष्टा. 6/4/16, इतिद्वितीयस्योकारस्य दीर्घे रूपमिदम् ।
4. 'ह्वेञ् स्पर्धायां शब्दे च ' धा. पा. भ्वा. 1008, इति ह्वेधातोर्लिटितसि अतुसादेशे संप्रसारणस्य तदाश्रयकार्यस्य च बलीयस्त्वेनद्वित्वात्प्रागेव 'अभ्यस्तस्य च' - अष्टा. 6/1/33, इतिवकारस्य सम्प्रसारणे पूर्वरूपे च कृते पश्चाद् द्वित्वेऽभ्यासकार्येषु कृतेषु द्वितीयस्योकारस्य उवङादेशेरूपमिदम् ।
5. 'व्यथ भयचलनयोः' धा. पा. भ्वा. 764, इतिव्यथ धातोर्लिटि ते तस्य' लिटस्तझयोरेशिरेच्' - अष्टा. 3/4/81, इति एशादेशे द्वित्वे भ्यासत्वे 'व्यथ्-व्यथ् ए'-इत्यवस्थायां पूर्ववत् संप्रसारणस्य बलीयस्त्वात् हलादिशेषात् प्रागेव 'व्यथोलिटि' - अष्टा. 7/4/68, इतियकारस्य इकारेसम्प्रसारणे कृते पूर्वरूपे च कृते पश्चाद् 'हलादिः शेषः' - अष्टा. 7/4/60, इतिथकारस्य लोपे रूपमिदम् । वकारस्य तु नात्र सम्प्रसारणम् 'न सम्प्रसारणे - सम्प्रसारणम्' - अष्टा. 6/1/37, इतिनिषेधात् ।
6. अष्टा. 6/1/31 ।
7. 'अचोऽञ्णिति' - अष्टा. 7/2/115 ।
8. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।

'ह्वः [1]संप्रसारण' - विहितं संप्रसारणं-युक्[2]बाधेत, 'जुहूषती'- त्यत्र [3]संप्रसारणं द्विर्व[4]चनं बाधेत, 'जुहुवतु'रित्यत्र संप्रसारणम्[5] 'आतोलोप [6]इटि चे'त्याकारलोपो बाधेत, 'विव्यथे' - इत्यत्र च संप्रसा[7]रणं [8]हलादिशेषो - बाधेत, तथा सति नैते प्रयोगाः सिद्ध्येयुः । सत्यां त्वस्यामेषु प्रयोगेषु संप्रसारणपूर्वरूपे - क्रमशो वृद्ध्यायादेश - युग् - द्विर्वचनाऽऽलोप - हलादिशेषान् प्रबाध्य पूर्वं प्रवर्तते, इति भवत्येषां सिद्धिः । **भट्टनागेश**स्तु सूत्रेऽस्मिन्नयं शब्दो भगवता प्रत्याख्यात इति नाऽस्य ज्ञापकत्वमस्यामितिसूचयति[9], व्यर्था चेयं परिभाषा यतो 'लिट्यभ्यासस्यो-भयेषा'- मित्यत्रोभयेषां ग्रहणस्य 'उभयेषां सम्प्रसारणमेव यथा स्या'दित्यर्थकत्वेन सम्प्रसारणतदाश्रयकार्ययोर्बलीयस्त्वं सिद्धमिति चाऽऽह[10] । नीलकण्ठदीक्षित -शेषाद्रि-भ्यामप्यस्याः परिभाषायाअनावश्यकत्वं स्वीकृतम्[11] । यथोत्तरं मुनीनां प्रामाण्य'मिति सिद्धान्तादत्र जिनेन्द्रबुद्ध्युयुक्तं[12] पुरुषोत्तमदेव - सीरदेव-हरिभास्करैरनूदितं[13]चास्य शब्दस्याऽस्यां परिभाषायां ज्ञापकत्वं न युक्तमिति मन्ये । हरिभास्करो[14]–

---

1. अष्टा. 6/1/32 ।
2. 'साच्छासाह्वाव्यावेपां युक्' - अष्टा. 7/3/37 ।
3. 'ह्वः सम्प्रसारणम्' - अष्टा. 6/1/32 ।
4. 'सन्यङोः' -अष्टा. 6/1/9 ।
5. 'अभ्यस्तस्य च' - अष्टा. 6/1/33, इतिविहितमित्यर्थः ।
6. अष्टा. 6/4/64 ।
7. 'व्यथोलिटि' - अष्टा. 7/4/68 ।
8. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
9. तथाहि – "अत्र क्तप्रत्ययं विना तद्विषयज्ञानाऽभावाद् ऊढइत्यादौ तत्र कृते सम्प्रसारणौ-त्वयोः प्राप्तौ परत्वादोत्वे सम्प्रासारणे पूर्वरूपत्वे च कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरोत्त्वाऽप्रवृत्त्या वर्णस्येति प्रत्याख्यात"मित्याह भ. ना. ल. श. शे. भ्वादि प्र. पृ. 117 ।
10. तथाहि – "वस्तुतो 'लिट्यभ्यासस्य' इति सूत्र उभयेषां ग्रहणस्योभयेषां संप्रसारणमेव यथा-स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति 'लिट्यभ्यासस्ये' तिसूत्रे भाष्ये स्पष्टम्" प. शे. प. 129, पृ. 361 ।
11. तथाहि –
    (क) "निर्मूलेयं 'लिट्यभ्यासस्य.' (6/1/17) इत्युभयेषां ग्रहणवैयर्थ्यापातेन भाष्ये प्रत्याख्याता" -इत्याह नी. दी. प. वृ. प. 133, पृ. 315 ।
    (ख) "इदं चोभयेषांग्रहणस्य (6/1/17) प्रयोजनं 'लिट्यभ्यासस्योभयेषाम्' (6/1/17) इतिसूत्रे भाष्येस्पष्ट"मित्याह शेषा. प. भास्क. प..108, पृ. 461 ।
12. न्या. 6/3/112 ।
13. क्रमशः ल. प. वृ. प. 103, पृ. 154, बृ. प. वृ. प. 59, पृ. 255 । प. भास्क. प. 61, पृ. 349 ।
14. इयं च परिभाषा 'लिट्यभ्यासस्योभयेषाम्' (6/1/17) इत्यत्र उभयेषांग्रहणेन भाष्येज्ञापिता । उभयेषामित्यनेन हि वव्रश्च इत्यादौ हलादिशेष इतिनिवर्त्यते" प. भास्क. प. 61, पृ. 349 - इतिग्रन्थेनेति शेषः ।

क्तमस्या [1]ज्ञापकान्तरमत्रैव[2]निरूपितम् ।

## 'असंख्यादे'रितिशब्दः

[3]'षष्टयादेश्चासंख्यादे'रित्यत्र 'असंख्यादे'रितिशब्दः 'इह = तमट् प्रकरणे, तदन्तविधिर्भवती'ति वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि - [5]'षष्टितमः' - इत्यादौ षष्टिप्रभृतेः संख्यावाचकशब्दात्परस्य डटस्तमडागमं नित्यं विधातुमारब्धेऽस्मिन् सूत्रे 'एकषष्टः[6]' [7]'एकषष्टितमः' - इत्यादौ नित्यं तमडागमं वारयितुं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादत्र[8]सूत्रे षष्टिशब्देन षष्टिशब्दान्तस्य एकषष्टिशब्दस्य ग्रहीतुमशक्यतयाऽस्यशब्दस्याभावेऽप्येतत्सूत्राऽप्रवृत्ति र्ह्यत्र सुलभा । ज्ञापिते चाऽस्मिन्वचनेऽत्र तदन्तविधिर्दुवारेति षष्ट्यादिशब्देन षष्ट्यादिशब्दान्तस्य एकषष्ट्यादिशब्दस्याऽपि ग्रहणं दुर्वारमिति 'एकषष्टः' 'एकषष्टि- तमः' इत्यादौ नित्यं तमडागमं वारयितुमत्राऽयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [9]'एकविंशतितमः' इत्यादिप्रयोगाणामपि साधुत्वसिद्धिः । अस्य

---

1. 'लिट्यभ्यासस्योभयेषाम्' - अष्टा. 6/1/17, इतिसूत्रस्थः उभयेषामिति शब्द इत्यर्थः ।
2. षष्ठाध्याये ।
3. अष्टा. 5/2/58 ।
4. तथाहि –
   (क) "एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति । किमेतस्य - ज्ञापने प्रयोजनम् ?। एकविंशतितमः, एतत्सिद्धं भवती"त्याह पत. व्या. म. भा. 5/2/1/58 ।
   (ख) "षष्ट्यादेश्चासं... (सू. 5/2/58), असंख्यादित्येतत् ज्ञापयति (भवति) हि (भवतीह) तदन्तविधिरिति । तेनैकविंशतितमः सिद्धः" - इत्याह श्रीना. ज्ञा. सं. 5, पृ. 92 ।
5. षष्टेः पूरण इत्यर्थे षष्टिशब्दात् 'तस्य पूरणे उट्' - अष्टा. 5/2/48, इतिडट्प्रत्यये' षष्ट्या-. देश्चासंख्यादेः' - अष्टा. 5/2/58, इति डटो नित्यं तमडागमे तद्धितान्तात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. एकषष्टेः पूरण इत्यर्थे एकषष्टिशब्दात् 'तस्य पूरणे डट्' - अष्टा. 5/2/48, इतिडट्प्रत्यये 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' - अष्टा. 5/2/56, इति डटस्तमडागमाभावपक्षे 'टेः' - अष्टा. 6/4/143, इतिटेरिकारस्य लोपे तद्धितान्तात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
7. एकषष्टेः पूरण इत्यर्थे एकषष्टिशब्दात् 'तस्य पूरणे डट्' - अष्टा. 5/2/48, इतिडट्प्रत्यये 'विशंत्यादिभ्यस्तमडन्यतरस्याम्' - अष्टा. 5/2/56, इतिडटस्तमडागमे तद्धितान्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
8. 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' प. शे. प. 32, पृ. 153, इति परिभाषये- तिशेषः ।
9. एकविंशतेः पूरण इत्यर्थे एकविंशतिशब्दात् 'तस्यपूरणेडट्' - अष्टा. 5/2/48, इतिडट्प्रत्यये 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' - अष्टा. 5/2/56, इति डटस्तमडागमे तद्धितान्तात्स्वादिकार्येषु कृतेषु रूपमिदम् ।

वचनस्याऽसत्त्वे हि विंशत्यादिभ्य-[1]स्तमडन्यतरस्या'मितिसूत्रे [2]'ग्रहणवतेति' परिभाषया तदन्तविधिप्रतिषेधात् विंशत्यादिशब्देन एकविंशत्यादिशब्दाऽन्तस्य एकविंशत्यादिशब्दस्य ग्रहीतुमशक्यतया विकल्पेन तमटोऽप्राप्त्या नैतेषां साधुत्वं सिद्ध्येत् । सति चाऽस्मिन्वचने एकविंशतिप्रभृतिशब्दानामपि तत्र[3]ग्रहणं भवतीति विकल्पेन तमटोऽत्र प्राप्तिर्भवतीति भवति साधुत्वमेषां प्रयोगाणाम् ।

## 'असमास'इतिशब्दः

[4]'युजेरसमासे' - इत्यत्र 'असमास'इतिशब्दः 'अङ्गाधिकारे तस्य[5]तदुत्तरपदस्य चे'ति परिभाषाया ज्ञापकः[6]। यतः अस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–

---

1. अष्टा. 5/2/56 ।
2. 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' प.-शे. प. 32, पृ. 153,
3. 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' - अष्टा. 5/2/56, इत्यत्रेत्यर्थः ।
4. अष्टा. 7/7/71 ।
5. (क) 'पदाङ्गाधिकारे तस्य ग्रहणं भवति तदुत्तरस्य च' - व्याडिः प. पा. प. 125 पृ. 42 ।
   (ख) पु. दे. ल. प. वृ. प. 85, पृ. 149 ।
   (ग) सी. दे, बृ. प. वृ. प. 77, पृ. 240 ।
   (घ) 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' नी. दी. प. वृ. प. 36, पृ. 108 ।
   पृ. 299. 312 ।
   (ङ) ह. भा. प. भास्क. प. 79, पृ. 356 ।
   (च) 'पदाङ्गाधिकारे तस्य तदन्तस्य च' - भ. ना. प. शे. प. 30, पृ. 147 ।
   (छ) 'पंदाङ्गाधिकारे तस्य च तदन्तस्य च' शेषा. प. भास्क. प. 29, पृ. 407 ।
6. तथाहि –
   "कथं युजेर्नुम्युच्यमाने समासेऽपि स्यात् ? तदन्तविधिना । कथमत्र दतन्तविधिः । एतदेव ज्ञापकम् - अस्तीह तदन्तविधिरिति । उक्तञ्च - 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इतिवचना"दित्याह जि. बु. न्या. 7/1/71 ।
   (ख) 'एतदेवासमासवचनं ज्ञापकम् - 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणं भवति ' इती"त्याह ह. मि. पदम. 7/1/71 ।
   (ग) "ज्ञापकं चात्र 'युजेरसमासे' (7/1/71) इत्यत्र असमासग्रहणम् । तद्धि अश्वयुक् इत्यत्र नुम् माभूदित्येवमर्थम् । यदि चाङ्गाधिकारे तस्य तदुत्तरपदस्यग्रहणंनाभविष्यत्तदा युजेर्नुमोऽश्वयुगित्यत्र कः प्रसङ्गो यन्निषेधार्थमसमासग्रहणं स्या"दित्याह पु. ल. प. वृ. प. 85, पृ. 149 ।
   (घ) "ज्ञापकं चात्र 'युजेरसमासे' (7/1/71) इत्यत्रासमासग्रहणम् । तद्ध्यश्वयुगित्यत्र नुम्मा भूदित्येवमर्थं क्रियते । यदि चाङ्गाधिकारे तदुत्तरपदस्यापि कार्यं न भवति तदा युजेर्नुमि अश्वयुजि कः प्रसङ्गो यन्निषेधार्थमसमासग्रहणं स्यादिती"त्याह सी. दे. बृ. प. वृ. प. 77, पृ. 240 ।

'युङ्[1]' - इत्यादौ नुमर्थमारब्धे 'युजेरसमासे [2]सर्वनामस्थाने परतो नुमागमो भवती'-त्यर्थकेऽस्मिन्सूत्रे [3]'अश्वयुक्' - इत्यादौ नुमो वारणायाऽयं शब्द उपात्तः, स चाऽस्या अभावेऽनुपपन्नः । 'अश्वयु'गित्यादौ समासे ह्यस्या अभावे नुमः प्राप्तिरेव नास्तीत्यस्य शब्दस्याऽभावेऽपि नुमोऽभावः सुलभः । ज्ञापितायां चास्याम् 'अश्वयु'-गित्यादौ नुमः प्राप्तिर्भवतीति तत्र तदभावायाऽयं शब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'प्रियास्थ्ना'[4] 'प्रियदध्ना'[5] - इत्यादौ 'अस्थिदधि - सक्थ्यक्ष्णामनङुदात्तः'[6] - इत्यनङः सिद्धिः । अस्या असत्त्वे हि 'ग्रहणवता प्रातिपदिकेनतदन्तविधिर्नास्ती[7] 'त्यनयाऽत्र तदन्त-[8]विधिप्रतिषेधान्नैतेषु प्रयोगेषु नुम् सिद्ध्येत् । सत्यां त्वस्यां 'ग्रहणवते'त्यस्याअपवादतयाऽनया[9]नुमत्र सिद्ध्यति ।

---

(ङ) "ज्ञापकमत्र 'युजेरसमासे' (7/1/71) इत्यत्रासमासग्रहणम् । तद्धि अनया परिभाषया 'अश्वयुक्' इत्यत्र प्राप्तस्य नुमो निवृत्त्यर्थमिति सीरदेवः" इत्याह ह. भा. प. भास्क. प. 79, पृ. 356 ।

1. 'युनक्ती'त्यर्थे 'युजिर् योगे' धा. पा. रुधा. 1445, इति युज्धातोः 'ऋत्विग्दधृक् - स्रग् - दिगुष्णिगञ्चु - युजि - क्रुञ्चां च' - अष्टा. 3/2/59, इतिनिपातनात्क्विन् प्रत्यये क्विनः 'कृदतिङ्' - अष्टा. 3/2/59, इतिकृत्त्वे ककारनकारयोः क्रमशः 'लशक्वतद्धिते' - अष्टा. 1/3/8, 'हलन्त्यम्' - अष्टा. 1/3/3, इतीत्संज्ञायां 'तस्यलोपः' अष्टा. 1/3/9, इतिलोपे वकारादिकारोऽत्रोच्चारणार्थ इति वकारस्य 'वेरपृक्तस्य' - अष्टा. 6/1/67, इतिलोपे कृदन्तात्सौ तस्य 'सुडनपुंसकस्य' - अष्टा. 1/1/43, इति सर्वनामस्थानसंज्ञायां 'युजेरसमासे' - अष्टा. 7/1/71, इतिनुमि हल्ङ्यादिलोपे जकारस्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्यस्य कुः' - अष्टा. 8/2/62, इतिकुत्वेन स्थानतआन्तर्यान्ङकारे कृते रूपमिदम् ।
2. 'सुडनपुंसकस्य' - अष्टा. 1/1/43 ।
3. 'अश्वं युनक्ती'त्यर्थे अश्वमितिकर्मोपपदात् 'युजिर् योगे' - धा. पा. रुधा. 1445, इति-युज्धातोः 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपिक्विप्' - अष्टा. 3/2/61, इतिक्विपि क्विपः 'कृदतिङ्' अष्टा. 3/1/93, इतिकृत्त्वे सर्वापहरे च जाते उपपदसमासे समासत्वात्सौ समासे नुम्निषेधान्नुमोऽभावे हल्ङ्यादिलोपे जकारस्य 'चोःकुः' - अष्टा. 8/2/30, इति कुत्वेन गकारे 'वाऽवसाने' - अष्टा. 8/4/56, इतिगकारस्य चर्त्त्वेन ककारे रूपमिदम् ।
4. प्रियमस्थि यस्येत्यर्थे कृतबहुव्रीहेः प्रियास्थिशब्दाट्टाविभक्तौ' अस्थि -दधि सक्थ्यक्ष्णा-मनङुदात्तः' - अष्टा. 7/1/75, इत्यनङि 'अल्लोपोऽनः' - अष्टा. 6/4/134, इत्यनोऽकारलोपे रूपमिदम् ।
5. प्रियं दधि यस्येत्यर्थे कृतबहुव्रीहेः प्रियदधिशब्दाट्टाविभक्तौ' 'अस्थिदधि.' - अष्टा. 7/1/75, इत्यनङि 'अल्लोपोऽनः' - अष्टा. 6/4/134, इत्यनोऽकारलोपे रूपमिदम् ।
6. अष्टा. 7/1/75 ।
7. प. शे. प. 32, पृ. 153 ।
8. 'अस्थिदधि. - अष्टा. 7/1/75, इत्यत्रेत्यर्थः ।
9. 'अस्थिदधि. - अष्टा. 7/1/75, इत्यनेनेतिशेषः ।

'परिभाषेयं न स्वीकार्ये'ति हरिभास्करो मनुते[1] । [2]अन्येऽपि परिभाषान्त[3]-रमेवाहुर्नैनाम् ।

## 'असवर्ण'इतिशब्दः

[4]'अभ्यासस्यासवर्णे' इत्यत्र 'असवर्ण'इतिशब्दो 'वार्णादाङ्गं बलीयः[5] 'इतिपरिभाषाया ज्ञापकः[6] । यतोऽस्या अभावेऽत्र सूत्रे शब्दोऽयं व्यर्थः । तथाहि –

---

1. तथाहि - "परंतु सौत्रतदन्तविधिनैव सकलेष्टसिद्धौ मास्त्वियं परिभाषा । न च ग्रहणवतेत्यस्यायं- विषयः । तस्य समासप्रत्ययविधौ. इत्यनेन सह समानविषयत्वादितिप्रपेदिरे " - इत्याह ह. भा. प. भास्क. प. 79, पृ. 356 ।
2. नीलकण्ठदीक्षित - भट्टनागेश - शेषाद्रय इत्यर्थः ।
3. 'पदाङ्गाधिकारे तस्य तदन्तस्य चे'ति विषषः ।
4. अष्टा. 6/4/78,
5. (क) व्याडिः प. सू. पा. प. 39, पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 74, पृ. 144 ।
   (ग) सी. दे. बृ. प. वृ. प. 66, पृ. 231 ।
   (घ) नी. दी. प. वृ. प. 60, पृ. 305 ।
   (ङ) ह. भा. प. भास्क. प. 68, पृ. 351 ।
   (च) भ. ना. प. शे. प. 56, पृ. 238 ।
   (छ) शेषा. प. भास्क. प. 74, पृ. 425 ।
6. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति - 'वार्णादाङ्गं बलीयो भवती'ति-यदयमभ्यासस्यासवर्णं इत्यसवर्ण- ग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? नह्यन्तरेण गुणवद्धी असवर्णपरेऽभ्यासो भवती' त्याह पत. व्या. म. भा. 6/1/1/12 ।
   (ख) "ज्ञापिता चेयं परिभाषा 'दाश्वान्.' (6/1/12) इत्यत्रसूत्रे भाष्यकृता । 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्रासवर्णग्रहणे सति वार्णादाङ्गस्य बलीयस्त्वे इयाय उवोखे'-त्यादौ वृद्धिगुणयोरसवर्णपरोऽभ्यासः संभवतीति असवर्णग्रहणमर्थवद्भवतीति । अन्यथाहि - गुणवृद्ध्योर्बहिरङ्गत्वात् प्रागेव न भवितव्यमितो निर्विषयमसवर्णग्रहणं स्यात् । यदि चान्यार्थः स्यात् इष्ट यात् इत्यादौ तदार्तेरभ्यासस्यैवट्ब्रूयात् । नैकमुदाहरणं प्रति योगमारम्भयतीति । तदेतदुक्तमसवर्णग्रहणं वार्णादाङ्गं बलीय इत्यस्याः परिभाषाया लिङ्ग"-मित्याह पु. दे. ल. प. वृ. प. 74, पृ. 144 ।
   (ग) 'ज्ञापिता चेयं परिभाषा 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्रासवर्णग्रहणेन । तदेवमर्थं' क्रियते, ईषतुरीषुरूषतुरूषुरित्यत्र सवर्णेऽचीयङुवङौ मा भूतामिति । यदि च वार्णादाङ्गस्य बलीयस्त्वं न स्यात्तदान्तरङ्गत्वात्कृते सवर्णदीर्घत्वे इयङुवङोः प्राप्तिरेव नास्तीति किमसवर्णेनेति । तत्कृतं ज्ञापयत्यस्तीयं परिभाषेती'त्याह सी. दे. बृ. प. वृ. प. 66, पृ. 231 ।
   (घ) "इयं च परिभाषा'अभ्यासस्यासवर्णे' (6/4/78) इत्यसवर्णग्रहणेन ज्ञापितेति षष्ठेप्रथमाह्निकान्ते भाष्ये स्थितम् । तद्धि ईषतुः ऊषतुः इत्यादिवारणाय नोपयुज्यते ।

सूत्रेऽस्मिन् 'असवर्ण' इतिशब्दः 'ईषतुः'[1] 'ईषुः[2]' [3]'ऊषतुः' 'ऊषुः'[4] - इत्यादावसवर्णेऽचि परतः इयङुवङोर्व्यावृत्त्यर्थमुपात्तः । स चास्या अभावे व्यर्थः । 'इ + इष् अतुस् + उस्' 'उ+उष् + अतुस्' 'उ + उष् + उस्' - इत्यवस्थासु हि सवर्णदीर्घोन्तरङ्गत्वादियङुवङौ प्रबाध्य प्रागेव प्रवर्त्ततेत्यत्राऽचः परत्वाऽभावेन तयोः प्राप्तिरेव नास्ति । इयङुवङौ ह्यभ्याससम्बन्धिनिमित्तकत्वाद् बहिरङ्गौ । न चात्रेयङुवङावपवादाविति शङ्क्यम् । यतो[5]येन नाप्राप्तिन्यायेनेयर्त्तीत्यादि[6]सकललक्ष्य-प्राप्तस्य यण एवापवादत्वं तयोरिति निर्णयः सुप्रसिद्धः । नाप्यत्र यणः[7] सकललक्ष्य प्राप्तत्वं नास्ति, यत [8]'इयर्त्ती'त्यादौ 'ऋ + ऋ + ति' - इत्यवस्थायां यणं तक्रन्यायेन[9]

---

अन्तरङ्गेण सवर्णदीर्घेणेयङुवङोर्बाधात् । अतश्च क्रियमाणमसवर्णग्रहणं परिभाषां ज्ञापयतीत्याह नी. दी. प. वृ. प. 60, पृ. 305 ।

(ङ) "परिभाषायां ज्ञापकम् 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्रासवर्णग्रहणम् । तद्धि ईषतुः इत्यादौ सवर्णेऽचिपरतः इयङुवङौ माभूतामित्येवमर्थं क्रियते । यदीयं न स्यात्तर्हि अन्तरङ्गत्वात्कृते सवर्णदीर्घे इयङुवङोः प्राप्तिरेव नास्तीति किम-सवर्णग्रहणेने"त्याह ह. भा. प. भास्क. प. 69, पृ. 352 ।

(च) "अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्यां ज्ञापकम् । तद्धीषतु-रित्यादावियङादिव्यावृत्त्यर्थम् । एतत्परिभाषाभावे त्वोषतुरित्यादावन्तरङ्गेण सवर्ण-दीर्घेण बाधात्तद्व्यर्थम् । इयङुवङौ ह्यभ्याससम्बन्धिनिमित्तकत्वाद्बहिरङ्गौ । न चेयङपवाद इति वाच्यम् । येन नाप्राप्तिन्यायेन इयर्तीत्यादिसकललक्ष्यप्राप्तयणपवाद-त्वस्यैव निर्णयादितिप्राञ्चः" - इत्याह भ. ना. प. शे. प. 56, पृ. 238–239 ।'

(छ) "अस्याश्च ज्ञापकम् - 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्र असवर्णग्रहणम् । तद्धि ईषतुरित्यत्र अन्तरङ्गत्वात्सवर्णदीर्घसिद्धेरनर्थकं स्या"दित्याह शेषा. प. भास्क. प. 47, पृ. 425 ।

(ज) "दाश्वान् साह्वान् (सू. 6/1/12) । 'अभ्यासस्यांसवर्णे' (6/4/78) इत्यसवर्णग्रहणं ज्ञापयति, वार्णादाङ्गं वलीय इति । नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवती"त्याह श्रीना. श. सं. 6, पृ. 97 ।

1. 'इष गतौ' धा.पा.दिवा. 1227, 'इषु इच्छायाम्' धा.पा.तुदा. 1351, 'इष आभीक्ष्ण्ये' धा.पा. क्र्या. 1525, इति इषधातुभ्यो लिटि प्रथमपुरुषद्विवचने रूपम् ।
2. 'ईषतुः' इतिरूपवत् इष्धातुभ्यो लिटिप्रथमपुरुषबहुवचने रूपम् ।
3. 'उष दाहे' धा. पा. भ्वा. 696, इति उषधातोर्लटि 'उषविदजागृभ्योऽन्यतरस्याम्' - अष्टा. 3/1/38 इत्यमोऽभावपक्षे प्रथमपुरुषद्विवचने रूपम् ।
4. ऊषुतरितिवत् उष्धातो र्लिटि आमोऽभावपक्षे प्रथमपुरुषबहुवचने रूपम् ।
5. 'येन नाप्राप्ते योविधिरारंभ्यते स तस्य बाधको भवतीतिपरिभाषयेत्यर्थः ।
6. 'ऋ गतौ' धा. पा. जुहो. 1098, इति ऋधातोर्लटि प्रथमपुरुषैकवचने रूपम् ।
7. 'इको यणचि' - अष्टा. 6/1/77 ।
8. 'ऋ गतौ' धा. पा. जुहो. 1098, इति ऋधातोर्लटि प्रथमपुरुषैकवचने रूपम् ।
9. 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'तिन्यायस्वरूपम् ।

बाधित्वा[1] 'अर्त्तिपिपर्त्योश्चे'तीत्वे 'इ + ऋ + ति' इति - स्थिते पुनर्यण:[2] प्राप्तिर्नास्तीति शङ्क्यम् । यतोऽत्र यणं[3] बाधित्वाऽपवादत्वाद्दीर्घ:[4] प्राप्तस्तं बाधित्वा प्रतिपदवधित्वादित्वं[5]प्राप्तं, दम्यभ्या संविकारेषु बाध्याः पूर्वं प्रवर्तन्त इतिन्यायेन[6]बाधित्वोत्सर्गभूतमुर[7]दत्वन्तत इत्वे[8] यण:[9] प्राप्तिर्निष्प्रत्यूहा विद्यते । न चात्राऽसवर्णग्रहणमीयतुरित्यादौ[10]'इ + इ + अतुस्'इत्यवस्थायां यण्[11] - दीर्घैका[12]-देशौ प्रतिपदविधित्वात्प्रबाध्य 'दीर्घइणः[13]किती'त्यभ्यासस्य दीर्घे उत्तरखण्डस्येणोयणि च कृतौ [14]स्थानिवद्भावेन प्राप्तस्येयङो निवृत्त्यर्थमावश्यकमित्यपि शङ्कनीयम् । यतस्त-क्रन्यायेनेयङं बाधित्वा जाते दीर्घे इयङोऽत्र प्राप्तिरेव नास्ति । ज्ञापितायां चाऽस्याम् '[15]इयाय' 'उवोख[16]' - इत्यादौ क्रमशो[17]वृद्धिगुणयो[18]राङ्गयोः कृतयोः 'इ + ऐ + अ' उ + ओख + अ' - इत्यवस्थयोरसवर्णपरोऽभ्यासः संभवतीति तत्रेयङुवङोः सम्पादनाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्या 'वर्णनिमित्तं वार्णम्, [19]अङ्गाधिकारे विहितमाङ्गम्, तत्तु वार्णाद्बलीय इत्यर्थः । फलं तु 'कारकः[20]' - इत्यत्रान्तरङ्गमपि यणं बाधित्वा 'अचोऽञ्णिती[21]'तिवृद्धेः सिद्धिः । अस्या असत्त्वे हि

---

1. अष्टा. 7/4/77 ।
2. 'इको यणचि' - अष्टा. 6/1/77 ।
3. 'इको यणचि' - अष्टा. 6/1/77 ।
4. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
5. 'अर्त्ति - पिपर्त्योश्च' - अष्टा. 7/4/77 ।
6. 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ती'तिपरिभाषयेत्यर्थः ।
7. 'उरत्' - अष्टा. 7/4/66 ।
8. 'अर्तिपिर्त्योश्च' - अष्टा. 7/4/77 ।
9. 'इकोय णचि' - अष्टा. 6/1/77 ।
10. 'इण्गतौ' धा. पा. अदा. 1045, इति इधातोर्लिटि प्रथमपुरुषद्विवचने रुपम् ।
11. 'इकोयणचि' - अष्टा. 6/1/77 ।
12. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
13. अष्टा. 7/4/69 ।
14. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
15. 'इण्गतौ' धा. पा. अदा. 1045, इति इ धातोर्लिटि प्रथमपुरुषैकवचने रूपम् ।
16. 'उख गत्यर्थः' धा. पा. भ्वा. 128, इति उख्धातोर्लिटि प्रथमपुरुषैकवचने रूपम् ।
17. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
18. 'पुगन्तलधूपधस्य च' - अष्टा. 7/3/86 ।
19. 'अङ्गस्य' - अष्टा. 6/4/1 ।
20. 'डुकृञ्करणे' धा. पा तना. 1472, इति कृधातोः 'ण्वुल्तृचौ' - अष्टा. 3/1/133, इतिण्वुलि रूपम् ।
21. अष्टा. 7/2/115 ।

वृद्धेः प्रागन्तरङ्गत्वाद्यणि[1]वृद्धिर्न सिद्ध्यति । तथा 'उखतु'रित्यत्र[2]द्वित्वे हलादिशेषे[3] च कृते अन्तरङ्गमपि वर्णाश्रयंसवर्ण[4]दीर्घं बाधित्वा आङ्गः[5] परश्च ह्रस्वः[6] [7]'पर्यन्तन्यायाद्भवतीतितदुत्तरंसवर्णदीर्घे[8]कृतेअन्तवद्भावेन[9] प्राप्तस्य ह्रस्व[10]-स्याभावोऽस्याः फलम् । एवं 'भवती[11]'त्यादौ यणादेशं[12] बाधित्वा [13]गुणस्या-सिद्धिरस्याः फलम् ।

भट्ट श्रीनागेशस्तु " [14]'अभ्यासस्यासवर्णे' इतिसम्पूर्णसूत्रमेव 'वर्णादाङ्गंबलीय-' इतिपरिभाषाया ज्ञापकम् । यतोस्याअभावे सूत्रमिदं व्यर्थम् । [15]नचेयाय 'उवोखे[16]' - त्यादौ सूत्रस्य चारितार्थ्यमितिशङ्क्यम् । यतोऽत्रापि पूर्वप्रवृत्त[17]वृद्धेः, पूर्वप्रवृत्त[18]गुणस्य च द्विर्वचनेऽची[19]'तिरूपातिदेशेनापहारे [20]द्वित्वेकृते पुनः प्राप्तौ वृद्धि[21]-गुणौ[22]बाधित्वाऽन्तरङ्गत्वात् [23]सवर्णदीर्घापत्तिर्दुर्वारा । नचेयर्ती[24]त्यादौ सूत्रस्य सार्थक्यमिति वक्तुंशक्यम् । तावन्मात्रप्रयोजनं हि - यद्यस्य सूत्रस्य स्यात्तदा

---

1. 'इकोयणचि' - अष्टा. 6/1/77 ।
2. 'अजादेर्द्वितीयस्य' - अष्टा. 6/1/2 ।
3. 'हलादिः शेषः' - अष्टा. 6/4/60 ।
4. 'अकः सवर्णेदीर्घः' - अष्टा. 6/1/101 ।
5. 'अङ्गस्य' - अष्टा. 6/4/1, इत्यधिकारपठितः ।
6. 'ह्रस्वः' - अष्टा. 7/4/59, इतिविहितः ।
7. 'पर्जन्यवल्लक्षणप्रवृत्ति' रितिपरिभाषयेत्यर्थः ।
8. 'अकः सवर्णेदीर्घः' - अष्टा. 6/1/101 ।
9. 'अन्तादिवच्च' - अष्टा. 6/1/85 ।
10. 'ह्रस्वः' - अष्टा. 7/4/59 ।
11. 'भूसत्तायाम्' धा. पा. भ्वा. 1, इतिभूधातोर्लटि प्रथमपुरुषैकवचने रूपम् ।
12. 'इकोयणचि' - अष्टा. 6/1/77 ।
13. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84 ।
14. अष्टा. 6/4/78 ।
15. 'इण्गतौ' धा. पा. अदा. 1045, इति इ धातोर्लिटि प्रथमपुरुषैकवचने रूपम् ।
16. 'उखगत्यर्थः' - धा. पा. भ्वा. 128, इतिउख्धातोर्लिटिप्रथमपुरुषैकवचने रूपम् ।
17. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
18. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
19. अष्टा. 1/1/59 ।
20. 'अजादेर्द्वितीयस्य' - अष्टा. 6/1/2 ।
21. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
22. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
23. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
24. 'ऋगतौ' धा. पा. जुहो. 1098, इति ऋधातोर्लटि प्रथमपुरुषैकवचने रूपम् ।

[1]'उरित्येव सूत्रं कुर्यात् । तत्र य्वोवरित्यनुवर्त्त्य[2] 'इणोयणिति'[3]साहचर्याद् व्याख्या-नाच्च ऋधातोरेव ग्रहणमितिस्वीकृत्य 'अर्त्तेरिवर्णस्येयङितिसूत्रार्थेनेयर्तीत्यस्य सिद्धिः सुलभा । न च ए, ऐ, ओ, औशब्देभ्य आचारक्विबन्तेभ्यो[4] लिटीयङ्सिद्ध्यर्थं[5] सूत्रमावश्यकमितिशङ्कनीयम् । यतोऽस्याः परिभाषाया [6]ज्ञापकतापरभाष्यप्रामाण्येना-मीभ्यश्शब्देभ्यआचारक्विपोऽनभिधानं लभ्यते । अन्यथाऽत्रेयङर्थमसवर्णग्रहणस्य चारितार्थ्यसंभवे तस्य ज्ञापकतोक्तिरस्यां परिभाषायां भगवतोऽसंगता स्यात्, नापि 'ओणृ[7]' धातोर्ण्वुलन्ता-[8]दिच्छायां क्यचि[9] तदन्तात्सनि[10] 'उवोणकीयिषती'- त्याद्यर्थं सूत्रमावश्यकमितिशङ्क्यम् । यतो नामधातावपि द्वितीयाच एव द्वित्वं[11]भवतीति 'उवोणकीयिषती'तिप्रयोग एव गगनकुसुमायितः । न च सम्पूर्णसूत्रस्याऽस्य ज्ञापक-त्वाऽभ्युपगमे 'यदय'मभ्यासस्यासवर्ण' इत्यसवर्णग्रहणं करोती'ति [12]भाष्यग्रन्थ - विरोधः शङ्क्यः । यतो 'नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीति तदुपपादक-[13]भाष्यग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता भाष्यसम्मता प्रतीयते । कथमन्यथा तत्रैवाग्रे 'नैतदस्ति ज्ञापकार्थमेतत्स्या'दिति[14] ग्रन्थेन भगवता सूत्रसार्थक्यमेव यद्दर्शितं तत्संगच्छेत । असवर्णग्रहणस्यैव ज्ञापकत्वं यदि भाष्यसम्मतं स्यात्तदा तद्व्यावर्त्त्यप्रदर्शनेन तत्सार्थक्यमेव भगवता दर्शितं भवेत् । न च [15]'अकृतव्यूहाः

---

1. 'अभ्यासस्यासवर्णे' अष्टा. 6/4/78, इत्यस्य स्थान इतिशेषः ।
2. 'अचिश्नु-धातु-भ्रुवां य्वोरियङुवङौ' - अष्टा. 6/4/77 इति सूत्रात् ।
3. अष्टा. 6/4/81 ।
4. 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' - वा. वै. सि. कौ. तिङन्ते नामधातु प्र. पृ. 295 ।
5. 'परोक्षेलिट्' - अष्टा. 3/2/125 ।
6. व्या.म.भा. 6/1/1/12 ।
7. 'ओणृ अपनयने' धा.पा.भ्वा. 454 ।
8. 'ण्वुल्तृचौ' - अष्टा. 3/1/133 ।
9. 'सुपआत्मनः क्यच्' - अष्टा. 3/1/8 ।
10. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/7 ।
11. 'अजादेर्द्वितीयस्य' - अष्टा. 6/1/2 ।
12. व्या.म.भा. 6/1/1/12, पृ. 584 ।
13. व्या.म.भा. 6/1/1/12 पृ. 548 ।
14. व्या.म.भा. 6/1/1/12 पृ. 548 ।
15. (क) व्याडिः प.सू.प. 65, पृ. 29 ।
(ख) पु.दे.ल.प.वृ.प. 104, पृ. 155 ।
(ग) सी.दे.बृ.प.वृ.प. 49, पृ. 216 ।
(घ) नी.दी.प.वृ.प. 61, पृ. 305 ।
(ङ) ह.भा.प.भास्क.प. 51, पृ. 345 ।
(च) भ.ना.प.शे.प. 57, पृ. 250 ।
(छ) शेषा.प.भास्क.प. 48, पृ. 428 ।

पाणिनीयाः' इतिपरिभाषया [1]'इयाये'त्यादौ सवर्णदीर्घा[2]ऽप्राप्तिः, यदि दीर्घो नस्यात्[3]तर्हिगुणः स्यादितिसम्भावना सिद्ध्यति । यत्र च 'आङ्गवार्णौ भिन्नस्थानिताकौ तत्र नेयं प्रवर्तत इति तत्रान्तरङ्गपरिभाषयैव व्यवस्था भवति । यथा [4]सिवेरौणादिके नप्रत्यये 'स्योन' इति । अत्र हि वकारस्य ऊठि[5] 'सि + ऊ + न' - इत्यवस्थायां लघूपधगुणात् [6]पूर्वं यण् भवति । व्याश्रयेऽपि - क्वचिदस्याः प्रवृत्तिन्यास-कृत्स्वीकरोति, तद्बीजं फलं चाऽत्र प्रबन्धेऽ [7]न्यत्र निरूपितम् । सर्वसम्मतमनित्यत्वं चास्या [8]अन्यत्रात्रैव निरूपितम् ।

पुरुषोत्तमदेवं - सीरदेव - हरिभास्करास्त्वत्र[9]सूत्रे – " 'असवर्णे' इति - शब्दः 'यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः[10]' इतिपरिभाषाया[11] अपिज्ञापकः। यतोऽस्याःपरिभाषाया अभावे 'वार्णादाङ्गं बलीयः' इतिपरिभाषाया ज्ञापनेऽपि नाऽसौ शब्दः 'उवोखे'त्यादौ स्वांशे चरितार्थो भवति । अस्याः परिभा-षाया अभावे हि तत्र गुणे[12] कृतेऽपि उवङि[13] कर्तव्ये गुणस्य स्थानिवद्भावो दुर्वार इति नाऽस्त्यसवर्णपरता। ज्ञापितायां चास्याम् 'उवोखे'त्यत्र उकारो नाऽनाऽऽदिष्टादचः पूर्वः, यतोऽत्रोकारस्य पूर्वं गुणे [14]'द्विर्वचेऽची'ति रूपातिदेशात्[15] पूर्वरूपेण 'उख्

---

1. 'इण्गतौ' धा.पा.अदा. 1045, इति इ धातोः लिटि प्रथमपुरुषैकवचने रूपम् ।
2. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
3. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
4. 'षिवु संशुद्धौ' धा. पा. दि. वा. 1192, इतितिसिव्धातोरित्यर्थः ।
5. 'च्छ्वोः शूडनुनासिके च' - अष्टा. 6/4/19 ।
6. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
7. ज्ञापका अनुबन्धाः इति प्रघट्टके यजयाचयतविच्छप्रच्छरक्षो नङ्' - अष्टा. 3/3/90 इत्यत्र नङो ङकारानुबन्धज्ञापकत्वनिरूपणावसरे ।
8. 'ज्ञापकाः सूत्रांशाः' - इति प्रघट्टके 'च्छ्वोः शूठ्.' - अष्टा. 6/4/19, इतिसतुक्कस्य छकारस्य ज्ञापकत्वनिरूपणावसरे ।
9. 'अभ्यासस्याऽसवर्णे' - अष्टा. 6/4/78 ।
10. 'अचः परस्मिन् पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
11. (क) पु. दे. ल. प. वृ. प. 34, पृ. 127 ।
    (ख) सी. दे. बृ प. वृ. प. 67, पृ. 232 ।
    (ग) नी. दी. प. वृ. प. 124, पृ. 314 ।
    (घ) ह. भा. प. भास्क. प. 69, पृ. 352 ।
12. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
13. 'अभ्यासस्याऽसवर्णे' - अष्टा. 6/4/78 ।
14. अष्टा. 1/1/59 ।
15. रूपातिदेशोऽयमित्यत्रैव शोधप्रबन्धेऽस्य सूत्रस्या'ची'तिशब्दस्य ज्ञापकत्वनिरूपणे द्रष्टव्यः ।

इत्यस्य [1]द्विरुक्तिर्भवतीति - गुणस्य स्थानिवद्भावाऽप्रसक्त्याऽसवर्णपरत्वमस्तीति शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः परिभाषायाः फलं तु 'पटयती'[2]त्यादौ [3]टिलोपस्यस्था निवद्भाव-सिद्धिः[4] । यतोऽत्र कृते टिलोपे[5] पटुशब्दोकारादनादिष्टादचः पूर्वः पटुशब्दाऽकारो भवतीति [6]तस्योपधावृद्धिं[7] प्रति टिलोपस्य स्थानिवद्भावः सुलभो भवति । अस्या असत्त्वे हि आदिष्टादचः पूर्वत्वं प्रयत्नशतेनाऽपि पटुशब्दोकारस्य वक्तुमशक्यमितिटिलोपस्य स्थानिवद्भावाऽप्राप्त्या उपधावृद्धिरत्र णौ परे दुर्वारा दुस्यात् । इत्थम् – [8]'वैयाकरणः' – सौवश्वः[9]' इत्यत्र ऐचो विधानं[10]प्रति य्वोः [11]स्थानिवद्भावाऽभावोऽप्यस्याः फलम् । यतोऽत्राऽचः पूर्वयोरैचोः सम्भव एव नास्ति य्वाभ्यां पूर्वयोस्तयोर्विधानात्[12] । [13]'अचःपरस्मिन्पूर्व-विधा'-वित्यत्र पूर्वशब्दस्य सम्बन्धिशब्दत्वात् अजपेक्षं पूर्वत्वमादेशाऽपेक्षं पूर्वत्वं निमित्ताऽपेक्षं वा पूर्वत्वं गृह्यते, त त्र य द ा लक्ष्याऽनुरोधादजपेक्षं पूर्वत्वमाश्रीयते

---

1. 'लिटि धातोरनभ्यासस्य' - अष्टा. 6/1/8 ।
2. 'पटुमाचष्टे'इत्यर्थे पटुशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' - ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 236, इति णिचि 'पटुइ'इत्यवस्थायां वृद्धिटिलोपयोरुभयोर्मध्ये परत्वादुकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावौकारे इष्ठवद्भावाट्टिलोपे 'सनाद्यन्ताधातवः' - अष्टा. 3/1/32, इति 'पटि' - इत्यस्य धातुसंज्ञायां ततो लटि तिपि शपि गुणेऽयादेशे च कृते रूपमिदम् ।
3. 'अचोऽन्त्यादि टि' - अष्टा. 1/1/64 ।
4. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
5. 'पटौ इ' इत्यवस्थायामिष्ठवद्भावादौकारस्य लोपे सतीत्यर्थः ।
6. 'अलोऽन्त्यात्पूर्व उपधा' - अष्टा. 1/1/65 ।
7. 'अत उपधायाः' - अष्टा. 7/2/116 ।
8. 'व्याकरणमधीते वेत्ति वा' इत्यर्थे व्याकरणशब्दात् 'तदधीतेतद्वेद' - अष्टा. 4/2/59, इत्यण् प्रत्यये 'यस्येतिच' - अष्टा. 6/4/148, इत्यकारलोपे अणोणित्त्वात्तन्निमित्तिकाया यकारा-ऽऽकारस्य पर्जन्यवल्लक्षणप्रवृत्त्या प्राप्तायाः 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117 इति वृद्धेः 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' - अष्टा. 7/3/3, इतिनिषेधे यकारात्प्रागैकाराऽऽगमे च कृते रूपमिदम् ।
9. 'स्वश्वस्यापत्य'मित्यर्थे स्वश्वशब्दात् 'अतइञ्' - अष्टा. 4/1/15, इतिप्राप्तमिञमपवा-दत्वात्प्रबाध्य 'शिवादिभ्योऽण्' - अष्टा. 4/1/112, इत्यण् प्रत्यये 'यस्येतिच' - अष्टा. 6/4/148, इत्यकारलोपे प्रथमवकारात्परस्य अकारस्य 'तद्धितेष्वचामादेः - अष्टा. 7/2/117, इति प्राप्ताया वृद्धेः 'नय्वाभ्याम्.' - अष्टा. 7/3/3, इतिनिषेधे प्रथम-वकारात्प्रागौकाराऽऽगमे च - कृते तद्धितान्तत्वात् सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
10. 'एचोऽयवायावः' - अष्टा. 6/1/78, इति ऐकारौकारयोरायावौ प्रतीत्यर्थः ।
11. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
12. 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' - अष्टा. 7/3/3 ।
13. अष्टा. 1/1/57 ।

तदाऽयंशब्दोऽस्यां ज्ञापकः । अतो '[1]धिन्वन्ती'त्यत्र[2]यणादेशे कृते आदिष्टादचः पूर्वस्य [3]क्तादेरिटो विधानं प्रति [4]अजादेशस्य [5]स्थानिवद्भावः सिद्ध्यतीति नाऽत्रेडापत्तिर्भवति । यतोऽत्र लक्ष्यानुरोधादादेशाऽऽपेक्षं पूर्वत्वं गृह्यते" इति [6]मन्वते । वस्तुतस्तु ज्ञापकीयवर्णनमिदं पुरुषोत्तमदेवस्य काकदन्तपरीक्षामनुकरोति । यतः "परनिमित्ताजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्य" इति अचः परिस्मन्निति [7]सूत्रार्थमाह[8] भट्टोजिदीक्षितः. । सति चास्मिन्नर्थे पटयतीत्यत्र स्थानिभूतादचः पूर्वत्वेन दृष्टत्वादकारस्य वृद्धौ[9]कर्तव्यायां [10]टिलोपस्य

---

1. 'धिवि......... प्रीणनार्थाः' - धा. पा. भ्वा. 593, इतिधिव्धातोरिदित्त्वात् 'इदितोनुम्धातोः' - अष्टा. 7/1/58, इति नुमि धिन्व् इत्यस्माज्झौ 'झोऽन्तः' - अष्टा. 7/1/3, इतिझेरन्तादेशे' 'धिन्वअन्ति' - इत्यवस्थायां शब्विषये 'धिन्विकृण्व्योर च' - अष्टा. 3/1/80, इति 'उ' - प्रत्यये वकारस्याऽकारे च कृते अकारस्य 'अतोलोपः' - अष्टा. 6/4/48, इतिलोपे उकारस्य यणि रूपमिदम् ।
2. 'इको यणचि' - अष्टा. 6/1/77 ।
3. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35 ।
4. उकाराऽऽदेशस्य वकारस्य यण इत्यर्थः ।
5. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
6. तथाहि–
   (क) "ज्ञापकं चात्रार्थे अभ्यासस्यावर्ण इति (6/4/78) असवर्णग्रहणं रक्षितोपवर्णित"मित्याह पु. दे. ल. प. वृ. प. 34 पृ. 127 । "उवोषे'त्यादौ गुणे कृते द्विर्वचनेऽचीति (1/1/59) असवर्णेऽच्युवङ्विधानं ज्ञापकं 'यो ह्यनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवदिति । यदि ह्यादिष्टादचः पूर्वस्य विधौ स्थानिवत्स्यात् - तर्ह्युवङि कर्तव्ये गुणस्य स्थानिवद्भावसवर्णपरता नोपपद्यते" इतिचाऽऽह. पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 87 ।
   (ख) "ज्ञापकं चाहुः' । 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्रासवर्णग्रहणम्......." इत्याह सी. दे. बृ. प. वृ. प. 67, पृ. 232 ।
   (ग) "ज्ञापकमप्याहुः । 'अभ्यासस्यासवर्णे' (6/4/78) इत्यत्रासवर्णग्रहणम् । यदि ह्यादिष्टादचः पूर्वस्य कार्ये स्थानिवत्त्वं स्यात्तदा इयेष उवोष इत्यत्र गुणस्य स्थानिवत्त्वेनासवर्णाच्परत्वासंभव एवेति तद्व्यर्थं स्यादिति । इयर्ति इत्यादौ संभवोस्तीति चेत् तर्हि उरभ्यासस्येति सूत्राकरणमेव ज्ञापकमस्तु ।" इत्याह ह. भा. प. भास्क. प. 69, पृ. 352 ।
7. अष्टा. 1/1/57 ।
8. वै. सि. कौ. अच्सन्धि प्र. पृ. 32 ।
9. औकारस्येत्यर्थः ।
10. 'अत उपधायाः' - अष्टा. 7/2/116 ।

[1]स्थानिवद्भावः, 'वैयाकरणः' इत्यादौ य्वोः ऐचोविधानं[2]- [3]प्रति स्थानिवद्भावाऽभावश्च सुलभः । नह्यत्र स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधिः[4] कर्तव्योऽस्ति । इत्थं ज्ञापितायाः किमपि फलं नास्ति। 'उवोषे'त्यादौ [5]गुणस्य स्थानिवद्भावोऽपि न प्राप्नोति । यतोऽत्र पुरुषोत्तमदेवरीत्या गुणे कृते 'द्विर्वचेऽची[6]'ति रूपातिदेशात् पूर्वरूपेण द्विरुक्तौ[7]गुणस्य[8]स्थानिवद्भावो न प्राप्नोति - न ह्यवङ्[9] स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कर्तव्यमस्ति । अतोऽ[10]स्यां ज्ञापकत्वमपि शब्दस्याऽस्य[11]युक्तं न प्रतिभाति ।

## 'अहरण'इतिशब्दः

'सप्तमी [12]हारिणौ धर्म्येऽहरणे' - इत्यत्र 'अहरण'इतिशब्दः 'न कृत्स्वरो हारिस्वरं बाधते अपितु हारिस्वर एव कृत्सवरं बाधत' इति वचनस्य [13]ज्ञापकः । यतोऽस्यवचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – [14]स्तूपेशाणः' [15]'याज्ञिकाश्वः' इत्यादौ पूर्वपदस्याद्युदात्तत्वायाऽऽरब्धे 'सप्तम्यन्तं' हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवती'त्यर्थकेऽस्मिन् सूत्रे

---

1. 'णिचि इष्ठवद्भावाल्लुप्तस्यौकारस्येत्यर्थः ।
2. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
3. 'एचोऽयवायावः' - अष्टा. 6/1/78, इति ऐकारौकारयोरायावादेशौ प्रति' - इत्यर्थः ।
4. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।
5. 'पुगन्तलघूपधस्य' - अष्टा. 7/3/86, इतिविहितस्य ओकारस्येत्यर्थः ।
6. अष्टा. 1/1/59 ।
7. 'लिटि धातोरनभ्यासस्य' - अष्टा. 6/1/8 ।
8. 'पुगन्त.' - अष्टा. 7/3/86, इति - विहितस्य ओकारस्येत्यर्थः ।
9. 'अभ्यासस्यासवर्णे' - अष्टा. 6/4/78, इतिविहित इत्यर्थः ।
10. 'यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः' - इतिपरिभाषायामित्यर्थः ।
11. 'असवर्णे' इत्यस्येत्यर्थः ।
12. अष्टा. 6/2/65 ।
13. तथाहि –
    (क) "यदयमहरण इतिप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो' न कृत्स्वरो हारिस्वरं बाधतं'इती"त्याह पत. व्या. म. भा. 6/2/1/52 ।
    (ख) "परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन - इत्येतदहरण इत्यनेन ज्ञाप्यते, तेन वाउवहार्यमिति हारिस्वरः सिद्धो भवती"त्याह वाम. का. 6/2/65 ।
    (ग) "अनिगन्तेऽञ्चतौ' (सू. 6/2/52) 'अहरणे' (सू. 6/2/65) इति प्रतिषेधात् ज्ञापकात् न कृत्स्वरो हारिस्वरं बाधत इती"-त्याह एन. एस. रामा. ज्ञा. सं. परि. 1, पृ. 181 ।
14. 'संज्ञायाम्' - अष्टा. 2/1/44, इति सप्तमीततपुरुषे' कारनाम्नि च प्रचां हलादौ' - अष्टा. 6/3/10, इतिसप्तम्याअलुकि रूपमिदम् ।
15. 'षष्ठी' - अष्टा. 2/2/37, इति षष्ठीततपुरुषे रूपमिदम् ।

'[1]बाडवहरण'मित्यत्र - पूर्वपदस्याद्युदात्तत्वाऽभावायोपात्तोऽयमस्य वचनस्याऽभावे व्यर्थः । यतः बडवाया - अयं [2]बाडवो बीजाश्वः, तस्य बीजनिषेका-[3]दुत्तरकालं शरीरपुष्ट्यर्थं यद्योग्याशनादिकं दीयते तद् 'हरण'मिति 'हार्य'मिति चोच्यते, देयं यः स्वीकरोति स च हारीत्युच्यते, तथा सति 'वाडवाय हरणं बाडवहरण'भित्यत्र बाडवशब्दस्य हारिवाचित्वात् तस्य[4]धर्म्यवाचिनि हरणशब्दपरे यद्यप्याद्युदात्तत्वं[5] प्राप्नोति, तथापि '[6]अनोभावकर्मवचनः' इत्यनेनोत्तरपदान्तोदात्तत्वेनाऽत्र परत्वाद् [7]हारिस्वरबाधाद् हारिस्वराऽप्रवृत्तिः सुलभा । न चाऽत्र 'गतिकारकोपपदात्[8] कृ'-दिति[9]परत्वात् कृत्स्वरे प्राप्ते हरणोत्तरपदेऽपवादतया 'अनोभाव कर्मवचनः[10]' इत्युत्तरपदान्तो- दात्तत्वं प्राप्नोति, तत्प्राप्त्यनन्तरं 'सप्तमी-[11]हारिणौ धर्म्येऽहरणे'इत्युक्तमिति 'अहरणे' इत्यनेन [12]हारिस्वरम् '[13]अनोभाव' - इतिस्वरो न बाधत' इति ज्ञापनसंभवेऽपि '[14]कृत्स्वरो [15]हारिस्वरं न बाधत' इति कथं ज्ञापयितुं शक्यमितिशङ्क्यम् । यतः [16]कृत्स्वरबाधकस्य '[17]अनोभावकर्मवचनः' -

---

1. 'वाडवाय हरण'मित्यर्थे 'चतुर्थी तदर्थार्थ - बलि - हित - सुख - रक्षितैः' - अष्टा. 2/1/36 इतिचतुर्थीसमासे रूपमिदम् ।
2. 'तस्येदम्' - अष्टा. 4/3/120, इत्याणि रूपमिदम् ।
3. गर्भाऽऽधानादित्यर्थः ।
4. धर्म्यशब्देनाऽत्राऽऽचारिनियतं देयं गृह्यते । धर्मो ह्यनुवृत्त आचारः, जनपदे ग्रामे चरणे कुले वाऽनुवृत्तः परम्परायात इति तदर्थः । धर्मादनपेत इत्यर्थे, 'धर्मपथ्यर्थन्यायादनपेते' - अष्टा. 4/4/92, इतिधर्मशब्दाद्यत्प्रत्यये, धर्मेण प्राप्यमित्यर्थे वा धर्मशब्दात् 'नौ-वयोधर्म विष मूल-सीतातुलाभ्यस्तार्यतुल्य प्राप्य वद्ध्यानाम्यसमसमितसम्मितेषु' - अष्टा. 4/4/91, इतियत्प्रत्यये 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलेपे च कृते - धर्म्यशब्दोऽयं सिद्ध्यति ।
5. 'सप्तमीहारिणौ धर्म्येऽहरणे' - अष्टा. 6/2/65, इत्यनेनेतिशेषः ।
6. अष्टा. 6/2/150 ।
7. 'सप्तमी हारिणौधर्म्ये हरणे' - अष्टा. 6/2/65 ।
8. अष्टा. 6/2/139, 'गतेः कारकादुपपदाच्च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवती'तिसूत्राऽर्थः ।
9. 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' प. शे. प. 39, पृ. 170, इतिपरिभाष-येत्यर्थः । 'विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2, इतिशास्त्रात्पूर्वस्य परं हि बाधकम्भवति ।
10. अष्टा. 6/2/150 ।
11. अष्टा. 6/2/65 ।
12. 'सप्तमीहारिणौ धर्म्येहरणे' - अष्टा. 6/2/65 ।
13. 'अनोभावकर्मवचनः' - अष्टा. 6/2/150 ।
14. 'गतिकारकोपपदात् कृत्' - अष्टा. 6/2/139 ।
15. 'सप्तमीहारिणौधर्म्येऽहरणे' - अष्टा. 6/2/65 ।
16. 'गतिकारकोपपदात्कृत्' - अष्टा. 6/2/139 ।
17. अष्टा. 6/2/150 ।

इतिस्वरस्य 'सप्तमी[1]हारिणौ'इति स्वरो बाधक इतिज्ञापिते तद्बाधक-बाधकस्य सुतरां तद्बाधकत्वं सिद्ध्यति । इत्थं सामान्यतः कृद्विषये येन केनापि परेण सूत्रेण प्राप्तस्य सर्वस्य स्वरस्य पूर्ववत्प्रतिषेधेन हारिस्वरो बाधक इति ज्ञापयत्ययं शब्द इतिनिश्चप्रचम् । ज्ञापिते चाऽस्मिन्वचने 'बाडवहरण'– मित्यत्र हरणशब्दे परेऽपि [2]हारिस्वरस्य प्राप्तौ तन्निवृत्त्यर्थमयं शब्दः स्वांशे चारितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [3]बाडवहार्यमित्यत्र हरणशब्दभिन्ने [4]हार्यशब्दे परे कृतस्वरं[5] बाधित्वा पूर्वपदाद्युदात्तत्वस्य [6]प्रकृतसूत्रेण सिद्धिः । अस्य वचनस्याऽसत्त्वे हि कृत्स्वरेण[7]बाधात्पूर्वपदाद्युदात्तत्वस्य[8]सिद्धिरत्र न स्यात् ।

## 'आ'इतिशब्दः 'आनि'इतिशब्दो वा

'[9]आनिलो'डितिसूत्रे 'आ' - इतिशब्दः '[10]अनित्यमागमशासन'मितिपरिभाषाया ज्ञापकः[11] । यतोऽस्या अभावेऽत्र 'आ' इति शब्दः, 'आनि' इति शब्दो वा व्यर्थः ।

---

1. 'सप्तमीहारिणौ धर्म्येऽहरणे' - अष्टा. 6/2/65 ।
2. 'सप्तमीहारिणौ धर्म्येऽहरणे' - अष्टा. 6/2/65 ।
3. 'हृ प्रसह्यकरणे' धा. पा. जुहो. 1097, इतिहृधातोः 'हृञ्हरणे' धा. पा. भ्वा. 899, इतिहृधातोर्वा 'ऋहलोर्ण्यत्' - अष्टा. 3/1/124, इतिण्यति वृद्धौ हार्यमितिरूपम् । बाडवस्य हार्यमिति षष्ठीतत्पुरुषोऽत्र भवति ।
4. 'ऋहलोर्ण्यत्' - अष्टा. 3/1/124, इतिहरतेर्ण्यति निष्पन्ने इत्यर्थः ।
5. 'गतिकारकोपपदात्कृत्' - अष्टा. 6/2/139 ।
6. 'सप्तमीहारिणौ धर्म्येहरणे' - अष्टा. 6/2/65 ।
7. 'गतिकारकोपपदात्कृत्' - अष्टा. 6/2/139 ।
8. 'सप्तमीहारिणौ धर्म्येऽहरणे' - अष्टा. 6/2/65, इत्यनेनेतिशेषः ।
9. अष्टा. 8/4/16 ।
10. (क) 'अनित्यमागमशासनम्' - व्याडिः प. सू. प. 76, पृ. 32 ।
    (ख) 'अनित्यमागमशासनम्' - पु. दे. ल. पू. वृ. प. 84, पृ. 149 ।
    (ग) 'अनित्यमागमशासनम्' - सी. दे. ब. प. वृ. प. 98, पृ. 254 ।
    (घ) 'आगमशास्त्रमनित्यम्' - नी. दी. प. वृ. प. 87, पृ. 310 ।
    (ङ) 'अनित्यमागमशासनम्' - ह. भा. प. भास्क. प. 100, पृ. 365 ।
    (च) 'आगमशास्त्रमनित्यम्' - भ. ना. प. शे. प. 95, 328 ।
    (छ) 'अनित्यमागमानुशासनम्' - शेषा. प. भास्क. प. 82, पृ. 445 ।
11. तथाहि–
    (क) "ज्ञापकं चात्र 'आनिलोट्' (8/4/16) इत्यत्रानीत्यागमसहितस्य नेर्ग्रहणं नित्ये ह्यागम-शासने आट उपादानमकृत्वा'निलोट्'इत्येवं कुर्या"दित्याह सी. दे. बृ. प. वृ. प. 98, पृ. 254 ।

'आड़ुत्तमस्य[1] पिच्चे'ति विहितस्य आटो नित्यतया हि 'नि'शब्द-मात्रोपादानेऽप्यानीत्यस्यैवाऽत्र लाभः सुलभः । ज्ञापितायां चाऽस्यां कदाचित् 'नि'शब्द-स्यापि लोडादेशस्य सम्भवाण्णत्वाऽऽपत्तिवारणायाऽत्र सूत्रे 'आ'इतिशब्दः, 'आनी'ति-शब्दो वा स्वांशे - चरितार्थौ भवतः । ज्ञापिताया अस्याः फलन्तु 'अपि शाकं [2]पचानस्य' 'सागरं[3]तर्तुमिच्छति' 'सागरं तर्तुकामस्य'[4] इत्यत्र [5]मुगिटोरभावः[6] । अस्या असत्त्वे हि मुगिटावत्र दुर्वारौ स्याताम् ।

कैयट[7] - जिनेन्द्रबुद्धी[8] तु [9]'घोर्लोपो लेटि वा' इतिसूत्रे वा शब्दोऽस्या ज्ञापक इति मन्वाते । यतोऽत्र सूत्रे तद्धि रत्नानि दाशुषे' 'सोमो ददद्गन्धर्वाय' 'यदग्निरग्नयेऽ - ददात्' इत्यादिवैदिकप्रयोगाणां साधुत्वाय [10]घुसंज्ञकानां लेटि परतो वा लोपं विधातुं वाशब्द उपात्तः । अस्या असत्वे ह्याडागमे [11]अडागमे वा सति नित्यं लोपेऽपि 'ददा'-दिति सिद्ध्यतीति, तत्र विकल्पेन लोपविधानाय वा शब्दोऽत्र व्यर्थः । ज्ञापितायां

---

(ख) " 'निलोट्' (8/4/16) इत्येव सिद्धे आनिग्रहणमत्र लिङ्ग" मित्याह नी. दी. प. वृ. प. 87, पृ. 310 ।

(ग) "ज्ञापकमत्र 'आनिलोट्' (8/4/16) इत्यत्र आकारग्रहणम् । अन्यथा 'निलोट्' इत्येवावक्ष्य"दित्याह ह. भा. प. भास्क. प. 100, पृ. 365 ।

(घ) "तथा 'निलो'डित्येव सिद्ध आनिग्रहणात्- 'आगमशास्त्रमनित्यम् (95) । तेन सागरं तर्तुकामस्येत्यादिसिद्ध" मित्याह भ. ना. प. शे. 95, पृ. 328 ।

1. अष्टा. 3/4/62 ।
2. 'डुपचष् पाके' धा. पा. भ्वा. 996, इतिपच्धातोर्लटि शानजादेशे तदन्तात्षष्ठ्येकवचने 'अनित्यमागमशासन'मितिपरिभाषया 'आनेमुक्' - अष्टा. 7/2/82 इतिमुकोऽभावे रूपम् ।
3. 'तॄ प्लवनतरणयोः' - धा. पा. भ्वा. 969, इतितॄधातोस्तुमुनि 'अनित्यमागमानुशासन'मिति-परिभाषया 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35 इति इडभावे रूपम् ।
4. अत्र तु 'तर्तुमिच्छती'त्यर्थो 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि' इतिमलोपे विशेषः ।
5. 'आनेमुक्' - अष्टा. 7/2/82 ।
6. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35 ।
7. अनेन हि - "केचित्त्वनित्यमागशासनमित्यस्य ज्ञापकं वाग्रहणं वर्णयन्ति । अनित्यत्वात्त-स्याऽऽट्यसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयती"त्युक्तम् - प्रदी. 7/3/2/70, पृ. 215 ।
8. अनेन हि – "अनित्यता पुनरागमशासनस्य 'घोर्लोपो लेटि वा'इत्यत्र वाग्रहणाल्लिङ्गाद् विज्ञायते । तद्धि ददद् ददादित्यत्र नित्यं घोर्लोपो माभूदित्येवमर्थं क्रियते । यदि च नित्यमागमशासनं स्याद्वाग्रहणमनर्थकं स्यात्, भवतु नित्यंलोपः, सत्यपि तस्मिन् 'लेटोऽडाटौ'-इत्यटि कृते ददद्ददादितिसिद्ध्यत्येव । अनित्यत्वे त्वागमशासनस्याडागमाभावान्न सिद्ध्यति । ततो वावचनमर्थवद्भवती"त्युक्तम् न्या. 7/1/1 ।
9. अष्टा. 7/3/70 ।
10. 'दाधाघ्वदाप्' - अष्टा. 1/1/20 ।
11. 'लोटोऽडाटौ' - अष्टा. 3/4/94 ।

चास्यामडाटोरनित्यतया[1] तदभावे 'ददा'दितीष्टं रूपं साधयितुमत्र वाशब्दः स्वांशे चरितार्थो भवति । [2]भट्टनागेशस्तु भाष्यविरोधाद् नेमां परिभाषां स्वीकरोति । यतोऽस्यां सत्यां[3]घोर्लोपो लेटि वा'इति सूत्रे वा ग्रहणप्रत्याख्यानं भाष्योक्तं[4] न युज्यते, अनया परिभाषयाडागमाप्रवृत्तौ दधातीति रूपाऽसिद्धिप्रसङ्गेन वाग्रहणमत्र सूत्रे नूनमावश्यकम् ।

वस्तुतस्तु भट्टनागेशस्याऽसौ सिद्धान्तो न युक्तः । यतः औत्सर्गिकप्रवृत्तिमादाय प्रत्याख्यानभाष्यमुपपद्यते ।

## 'आख्ये'ति शब्दः

[5]'पुंयोगादाख्याया'मित्यत्राऽऽख्येतिशब्दः 'तद्धितोत्पत्तिमन्तरेणैव यः पुंवाचकः शब्दः स्त्रियां वर्तते ततो ङी'षिति वचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'गणकी[7]' 'प्रष्ठी[8]' - इत्यादौ ङीष्प्रत्ययाऽर्थमारब्धे 'पुंसायोगः = पुंयोगः, पुंयोगाद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद् ङीष्प्रत्ययो भवती'त्यर्थकेऽस्मिन्सूत्रेऽयं शब्दः 'परिसृष्टा' प्रजाते'-त्यादौ ङीषोऽभावायोपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । नहि परिसृष्ट-प्रजातिशिब्दौ स्त्रियां वर्तेते, परिसर्गः' प्रजनः' 'प्रसवः' इत्येकार्था ह्येते शब्दा इति

---

1. 'लेटोऽडाटौ' - अष्टा. 3/4/94 ।
2. अनेन हि - "अस्यार्थस्य भाष्यकृताऽस्पृष्टत्वादिदमप्रामाणिकम् । जप्त्वेत्याद्यसाध्वेवेत्यन्ये"इत्युक्तम् - उद्यो. 7/3/2/70, पृ. 215 ।
3. अष्टा. 7/3/70 ।
4. तत्रहि - "वेति शक्यमवक्तुम् । कस्मान्न भवति तदग्निरग्नये ददात् ? । अस्त्वत्र लोपः, आटः श्रवणं भविष्यति । तेनोभयं सिद्ध्यति दधद्रत्नानि दाशुषे । दधाद्रत्नानि दाशुषे । -"इत्युक्तम् - व्या. म. भा. 7/3/70 ।
5. अष्टा. 4/1/48 ।
6. तथाहि–
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति 'नातस्तद्धितोत्पत्तिर्भवती'ति, यदयं 'पुंयोगादाख्याया'मितीकारं शास्ति । नैतदस्तिऽज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनं, 'येनीकारास्तद्धितास्तदर्थमेतत्स्यात् । यत्तर्ह्याख्याग्रहणं करोति, नहि तद्धितान्तमाख्या भवती"त्याह पत. व्या. म. भा. 4/1/2/48 ।
7. गणयतीत्यर्थे 'गणसंख्याने' धा. पा. चुरा. 1854, इति गणधातोश्चुरादित्वाण्णिचि तदन्तात् 'ण्वुल्तृचौ' अष्टा. 3/1/133, इति ण्वुलि वोः 'युनोरनाकौ 'अष्टा. 7/1/1, इति अकाऽऽदेशे णे र्लोपे च सति निष्पन्नगणकशब्दात् पुंयोगादाख्यायाम्' - अष्टा. 4/1/48, इति ङीषि रूपमिदम् ।
8. प्रतिष्ठत इत्यर्थे प्रपूर्वकात् 'ष्ठा गतिनिवृत्तौ धा. पा. भ्वा. 928, इति स्थाधातोः 'आतश्चोपसर्गे' अष्टा. 03/1/136, इति कप्रत्यये 'आतोलोप इटि च' अष्टा. 6/4/64, इत्याकारलोपे 'प्रष्ठोऽग्रगामिनि' अष्टा 8/3/92, इति निपातनात् सकारस्य षकारे च कृते निष्पन्नप्रष्ठशब्दात् पुंयोगादाख्यायाम् अष्टा. 4/1/48, इति ङीषि रूपमिदम् ।

स्त्रियामवर्तमानतयैव परिसृष्टप्रजातादिशब्देभ्यो ङीषोऽभावोऽस्य शब्दस्याऽभावेऽपि सुलभः । भगवता भाष्यकारेण तु [1]'पुंयोगादाख्याया'मितिसूत्रं व्यर्थं सत् 'प्रष्ठ-शब्दात्तद्धितोत्पत्तिर्न भवती'ति वचनस्य ज्ञापकम् । यतोऽस्य वचनस्याऽभावे सूत्रमिदं व्यर्थम् । प्रष्ठशब्दान्नियमेन तद्धितोत्पत्तौ हि 'तस्येद-[2]'मित्यणो दुर्वारतयाऽ-णन्तत्वात् [3]'टिड्ढाणञ्- द्वयसज् - दघ्नञ् - मात्रच् - तयप् - ठक् - ठञ् - कञ् - क्वरपः' इत्यनेन ङीपि 'प्रष्ठी'इत्यादि - रूपाणां सिद्धिः सुलभा । न ह्यणन्तान्ङीपि[4] [5]ङीषि वा रूपे विशेषः, नाऽपि स्वरे विशेषः, ङीष [6]उदात्तत्ववत् ङीपोऽपि 'अनुदात्तस्य च यत्रोदात्तलोपः[7]' इत्यनेनोदात्तत्वं सुलभमित्यभिधाय [8]भानवीयेत्यत्र टापं[9]बाधित्वा ङीष्विधानार्थं सूत्रमिदं चरितार्थमिति विभाव्य तत्सूत्रघटकाऽऽ-ख्याशब्दस्योक्तवचनज्ञापकत्वमुक्तम्[10] । ज्ञापिते चाऽस्मिन्वचने 'भानवीये'त्यत्र यः पुंवाचको भानुशब्दः स न स्त्रियां वर्तते, यश्च स्त्रियां वर्तते छप्रत्ययान्तः स न पुमाख्येति 'भानवीये'त्यत्र ङीषोऽभावाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'प्रष्ठी'त्यादौ [11]तद्धितोत्पत्तेः प्रागेव ङीषः[12] सिद्धिः । प्रष्ठशब्दो हि तद्धितं विनैव पुंगोयात्स्त्रीवाचकः ।

## 'आङि'तिशब्दः

'[13]ओमाङोश्चे'ति सूत्रे 'आ'ङितिशब्दः '[14]अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः'

---

1. अष्टा. 4/1/48 ।
2. अष्टा. 4/3/120 ।
3. अष्टा. 4/1/15 ।
4. 'टिड्ढाणञ्.' - अष्टा. 4/1/15 ।
5. 'पुंयोगादाख्यायाम्' - अष्टा. 4/1/48 ।
6. 'आद्युदात्तश्च' - अष्टा. 3/1/3 ।
7. अष्टा. 6/1/161 ।
8. भानोरियमित्यर्थे 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' - अष्टा. 1/1/73, इति वृद्धसंज्ञ-काद्भानुशब्दात् 'वृद्धाच्छः' - अष्टा. 4/2/114, इतिछ - प्रत्यये छकारस्य 'आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् - अष्टा. 7/1/2, इति ईयादेशे 'ओर्गुणः' - अष्टा. 6/4/146, इत्युकारस्य गुणेअवादेशे च कृते टापि रूपमिदम् ।
9. 'अजाद्यतष्टाप्' - अष्टा. 4/1/4 ।
10. व्या. म. भा. 4/1/2/48 ।
11. 'तस्येदम्' - अष्टा. 4/3/120, इत्यणुपपत्तेरित्यर्थः ।
12. 'पुंयोगादाख्यायाम् - अष्टा. 4/1/48 ।
13. अष्टा. 6/1/95 ।
14. (क) व्याडिः प. पा. प. 115, पृ. 42 ।
    (ख) पु. दे. ल. प. वृ. प. 43, पृ. 130 ।
    (ग) सी. दे. बृ. प. वृ. प. 22, पृ. 186 ।
    (घ) नी. दी. प. वृ. प. 27, पृ. 298 ।
    (ङ) ह. भा. प. भास्क. प. 22, पृ. 331 ।

इतिपरिभाषाया ज्ञापकः[1] यतोऽस्या अभावेऽत्राऽङितिशब्दो व्यर्थः । तथाहि सूत्रेऽस्मिन् आङितिशब्दः 'अद्योढा' - इत्यादौ अद्य – ओढा[2] इत्याद्यवस्थायां - वृद्धिं बाधित्वा[3] पररूपार्थमुपात्तः । स चाऽस्या अभावे व्यर्थः अद्य + 'आ +ऊढा'इत्यवस्थायां प्रागेवाङः पूर्वेण अद्यघटकोत्तराकारेण सह 'अकः[4] सवर्णेदीर्घः' इतिदीर्घैकादेशे कृते 'अद्या + ऊढा' इत्यवस्थायां परेण उकारेण सह 'आद्गुणः[5] इतिगुणैकादेशे कृते'अद्योढे'त्यस्य सिद्धिर्हि सुलभा । न च 'धातूपसर्गयोरन्तरङ्गं कार्यं[6] भवती, तिपरिभाषया सवर्णदीर्घैकादेशात्प्रागेव गुणैकादेशे कृते 'अद्य + ओढा' इत्यवस्थायां वृद्ध्यैकादेशबाधनायाङ्ग्रहणमावश्यकमितिशङ्क्यम् । यतोऽस्या अभावे धातूपसर्गयोः कार्यस्यान्तरङ्गत्वेऽपि तस्य बलीयस्त्वे प्रमाणभावादबहिरङ्गस्य दीर्घैकादेशस्यैवाऽत्र प्राक्प्रवृत्तौ 'अद्योढे'ति रूपस्यासिद्धिः सुलभैव । ज्ञापितायां चास्यां तत्र प्रयोगे दीर्घैकादेशस्य पदद्वयाऽपेक्षवर्णद्वयाऽपेक्षत्वेनबहिरङ्गतया चानया प्रबाध्यैकपदस्थवर्णद्वयापेक्षगुणैकादेशस्यान्तरङ्गत्वेन प्रवृत्तौ 'अद्य – ओढे'–'त्यवस्थायां वृद्यैकादेशबाधनार्थमाङितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'स्योन'इत्यादौ लघूपधगुणादिकं बाधित्वा यणादेः सिद्धिः । अन्यथात्र सिवेर्बाहुलकादौणादिके[7]प्रत्यये[8] सिव् न इत्यवस्थायां गुण[9]वलो-[10]पोठां[11] प्रसङ्गेऽपवादत्वादूठा वलिलोपस्य बाधेऽन्तरङ्गत्वाद् गुणस्य च बाधे सत्यूठि 'सिऊन'

---

1. तथाहि –
   (क) " 'आङ पररूपवचनं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य' । एतज्ज्ञापयत्याचार्योऽन्तरङ्गं बलीयो भवतीती"त्याह प.. व्या. म. भा. 6/1/5/108
   (ख) "अत्र च ज्ञापकम् - 'ओमाङोश्च' (6/1Ò/95) इत्याङ्ग्रहणम् । अन्यथा सवर्णदीर्घे गुणे च रूपसिद्धौ किं तेने"त्याह नीलकण्ठदीक्षितः प. वृ. प. 27, पृ. 298 ।
   (ग) "सम्प्रसारणाच्च (सू. 6/1/108 ।) । आङि पररूपज्ञापकमन्तरङ्गबलीयस्त्वस्य । अद्य आऊढा अद्योढा धातूपसर्ग– (योगः) (योः) कार्यं गुणोऽन्तरङ्गः । पूर्वमुपसर्गस्य धातुना योगः नाद्यशब्देन । अद्यशब्दस्य तु समुदायेन योगादिती"त्याह श्रीना. ज्ञा. सं. 6, पृ. 99 ।
2. 'आ + ऊढा' इतिस्थितौ गुणैकादेशे रूपम् ।
3. 'वृद्धिरेचि' - अष्टा. 6/1/88 ।
4. अष्टा. 6/1/101 ।
5. 'व्याडिः प. सू. प. 37,;पृ. 18 ।
6. 'षिवु तन्तुसन्ताने' धा. पा. दिवा 1108 ।
7. 'उणादयोबहुलम्' - अष्टा. 3/3/1 ।
8. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/83 ।
9. 'लोपो व्योर्वलि' - अष्टा. 6/1/66 ।
10. 'च्छ्वोः शूडनुनासिके च' - अष्टा. 6/4/19 ।
11. 'इको यणचि' - अष्टा. 6/1/77 ।

इत्यवस्थायां[1]यण्-गुणौ न[2]स्याताम् । सिद्धान्ते भगवान् भाष्यकारस्तु परिभाषामिमां न मनुते । यतोऽसौ सप्रयोजनामन्तरङ्गपरिभाषां व्याख्याय अनयैव सिद्ध इहापि स्योनः स्योनेति – असिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यतीति ग्रन्थेन 'असिद्धं बहिर्‌गमन्तरङ्ग' इत्यनया परिभाषयैवैनां गतार्थां प्रत्यपादयत् । अतो भट्टनागेश - शेषाद्रिभ्यां स्वग्रन्थेव्याख्येयत्वेनेयं न गृहीता । तस्मादसौ शब्दोऽन्तरङ्गपरिभाषाया एव ज्ञापक इतितयोराशय इति मन्ये । तत्रभवान् व्याडिस्तु' ओंमाङोश्चे'[3]ति सूत्रे 'आ'ङितिशब्दो 'धातूपसर्गयोरन्तरङ्ग[4] कार्यं भवती' तिपरिभाषाया [5]ज्ञापकमितिमनुते । किन्तु यथोत्तरं मुनीनां प्रमाण्य'[6] मिति- वचनाद् भाष्यकृत्कृतः सिद्धान्तः श्रेष्ठो-[7]ऽत्रेति नव्यवैयाकरणानां राद्धान्तः । अतएव धर्मिग्राहकमानेन[8] जातबहिरङ्गासिद्धत्वबोधकत्वमेव 'असिद्धंबहिरङ्-गमन्तरङ्गे'-इत्यस्याः परिभाषाया न समकालप्राप्तबहिरङ्गासिद्धत्वबोधभ्रमंनिराकर्तुं समकालप्राप्तबहिरङ्गासिद्धंत्वेऽत्रसूत्रे 'आङ्ग्रहणं मानत्वेन समुपन्यस्तवान्भट्टना-गेशः [9]।

---

1.ख 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84 ।
2. व्या. म. भा. 1/4/2 ।
3. अष्टा. 6/1/95 ।
4. व्याडिः प. सू. प. 3, पृ. 18 ।
5. तथाहि – "अत्राङि परतः पररूपवचनमनर्थकम् । अद्य आऊढः इत्येवं स्थितस्य 'अकः सवर्णे दीर्घत्वं (6/1/101) प्राप्नोति पश्चाद्गुणः । पूर्वं तावदेकादेशो भविष्यति । तस्मिन्गुणेन सिद्धम् । अद्योढः । एवं सिद्धे सति यदाह तज्ज्ञापयति - 'धातूपसर्गयो-रन्तरङ्गं कार्यं भवति । बहिरङ्ग एकादेशः । तस्मिन् कृतेऽपि तस्यासिद्धत्वात् ! पर आद्गुणः । स नित्यः । पश्चात्पुनर्वृद्धिः प्राप्नोति । तस्मादारम्भः एवमर्थम् । किमेतस्या ज्ञापने प्रयोजनम् । पट्व्या मृद्व्या इति परोस्या यणादेशस्तस्यासिद्धत्वात्पूर्वोयणादेशोन्तरङ्गो-भवती" त्याह व्याडिः प. 36 - 37, पृ. 18 ।
6. 'यथोत्तरं हि मुनित्रयस्य प्रामाण्य'मित्याह कैयटः प्रदी. 1/1/6/28, पृ. 336 तथा 'यथोत्तरं मुनीनां प्रामाण्य'मित्याह भ. दी. वै. सि. कौ. अजन्तपुलिङ्ग प्र. पृ. 113 ।
7. "यथोत्तरमिति । तथा चाद्यत्वे भाष्यकारोक्त्यैव व्यवस्थेतिभावः" इत्याह भ. दी. प्रौ. मनो. अजन्तपुंलिङ्ग प्र. पृ. 272 ।
"यथोत्तरमिति उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं 'चेदं' धिन्विकृण्व्योरिति सूत्रे भाष्ये"- इत्याह भ. ना. उद्यो. 1/1/6/28 ।
8. 'वाह ऊठ्' - अष्ठा. 6/4/132, इत्यूठ् शब्देनेत्यर्थः ।
9. तथाहि – "अतएव 'ओमाङ्शेच'इत्याङ्ग्रहणं चरितार्थम् । तद्धि खट्वा आऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनवोधक-प्रत्ययोत्पत्त्यनन्तरंपूर्वं धातोरुपसर्गयोगः पश्चात् खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्त-रङ्गत्वमिति' सम्प्रसारणाच्च' इतिसूत्रे भाष्ये स्पष्टमिति, प. शे. प. 51, 202 - 203 ।

## 'आचिख्यासाया'मिति शब्दः

[1]'उपज्ञोपक्रमं तदाद्याचिख्यासाया'मित्यत्र [2]'आचिख्यासाया'मितिशब्दः 'शब्दव्युत्पत्तौ इच्छा प्रधानं कारण'मितिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहिं - [4]'पाणिन्युपज्ञकं ग्रन्थः' 'नन्दोपक्रमं[5] द्रोणः' इत्यादावुपज्ञान्तस्योपक्रमान्तस्य च तत्पुरुषस्य नपुंसकत्वार्थमारब्धे 'उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः = प्राथम्यं चेदाख्यातुमिष्यते' इत्यर्थकेऽस्मिन्सूत्रेऽयं शब्दो व्यर्थ, 'तदाद्याख्याया-'मित्युक्तेऽपीष्टसिद्धिर्हि सुलभा । ज्ञापितेचाऽस्मिन् तदवगमायविवक्षाया - मेवास्य सूत्रस्य प्रवृत्तये च शब्दोयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु - 'नेह वस्तुनः सत्तैव प्रधानं कारणमपि तु विवक्षे'त्युक्तेरुपपत्तिः,[6] 'त्वदुपक्रमं[7] सौजन्य' - मित्यादौ उपक्रमान्तस्य तत्पुरुषस्य नपुंसकत्वसिद्धिश्च । विवक्षयैव हि शब्दाः प्रयुज्यन्ते न तु वस्तुस्थित्या ।

---

1. अष्टा. 2/4/21 ।
2. 'आख्यातुमिच्छा आचिख्यासा तस्यामिति शब्दार्थः ।
3. तथाहि–
   (क) "उपज्ञोपक्रमं तदाद्याख्यायामिति वाच्ये आचिख्यासायामिति (2/4/21) सनः प्रयोगेणाचार्यो ज्ञापयति - 'शब्दव्युत्पत्तौ इच्छा प्रधानं कारण'मिति तेन यदुच्यते 'नेह-वस्तुनः सत्तैव प्रधानं कारणमपि तु विवक्षे'ति तदुपपद्यते इतीन्दुमित्रः"-इत्याह पु. दे. ज्ञा. समु. अष्टमे द्विगुपादे पृ. 68 ।
   (ख) "आख्यातुमिच्छा आचिख्यासेतीच्छा सना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन 'त्वदुपक्रमं सौजन्य'मित्याद्यपि सिद्ध्यती"त्याह ज्ञा. भि. त. बो. तत्पुरुष प्र. पृ. 479 ।
   (ग) "इह सना शास्त्रे विवक्षैव नियामिका न तु वस्तुस्थितिरिति सूच्यते । तेन 'त्वदुपक्रमंसौजन्यव्यवहार' इत्यपि" इत्याह भ. ना. ल. श. शे. तत्पुरुष प्र. पृ. 68 ।
4. उपज्ञायत इत्यर्थे उपपूर्वकात् 'ज्ञा अवबोधने' धा. पा. क्र्या. 1508, इति ज्ञाधातोः 'आतश्चोपसर्गे' - अष्टा. 3/3/106, इतिकर्मण्यङ्प्रत्यये 'आतोलोप इटि च' -अष्टा. 6/4/64, इत्यातो लोपे टापि सर्वणदीर्घैकादेशे उपज्ञेतिशब्दो निष्पद्यते, ततः पाणिनेरुपज्ञेतिकर्तृषष्ठ्या षष्ठीतत्पुरुषे 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' -अष्टा. 2/4/21, इतिउपज्ञान्ततत्पुरुषस्य नपुंसकत्वे सोरमि पूर्वरूपे च कृते रूपमिदम् । पाणिनिसम्बन्ध्याद्यज्ञानाविषय इति रूपार्थः ।
5. नन्दस्योपक्रमित्यर्थे कर्तृषष्ठ्या षष्ठीतत्पुरुषसमासे उपक्रमान्तस्य तत्पुरुषस्य' उपज्ञोपक्रमं तदाद्याचिख्यासायाम्'-अष्टा. 2/4/21, इतिनपुंसकत्वे सौ तस्याऽमिपूर्वरूपे च कृते रूपमिदम् । नन्देनारभ्यमाण इत्यर्थः ।
6. न्या. 8/1/7 ।
7. तवोपक्रममित्यर्थे षष्ठीतत्पुरुषसमासः ।

## 'आ'दिति शब्दः

'ज्यादादीयसः'[1] इतिसूत्रे 'आ'दितिशब्दः [2]'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति-परिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्रासौ व्यर्थः । [4]बहोर्लोपो भू च

---

1. अष्टा. 6/4/160 ।
2. (क) 'अङ्गवृत्ते पुनर्वृत्तादविधिर्निष्ठिस्य' - व्याडिः प. सू. प. 34 पृ. 17 ।
   (ख) 'अङ्गवृत्ते पुनर्वृत्तादविधिर्निष्ठितस्य' - पु. दे. ल. प. वृ. प. 71, पृ. 143
   (ग) 'अङ्गवृत्ते पुनर्वृत्तादविधिर्निष्ठतस्य' - सी. दे. बृ. प. वृ. प. 91, पृ. 248 ।
   (घ) नी. दी. प. वृ. प. 86, पृ. 309 ।
   (ङ) ह. भा. प. भास्क. प. 80, पृ. 361 ।
   (च) भ. ना. प. शे. प. 93, पृ. 27 ।
   (छ) शेषा. पं. भास्क. प. 80, पृ. 445 ।
3. तथाहि –
   (क) "किमर्थं ज्यात्परस्येयस आत्वमुच्यते नलोपः प्रकृतः सोऽनुवर्तेत ?। का रूपसिद्धिः, ज्यायान् । अकृद्यकार इतिदीर्घत्वं भविष्यति । एवंतर्हि सिद्धेसति यज्ज्यात्परस्येयस आत्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा'ऽङ्गवृत्ते पुनर्वृत्तावविधि'रिति । किमेतस्य ज्ञापने प्रयोजनम् ? । पिबतेर्गुणप्रतिषेधश्चोदितः, स न कर्त्तव्यो भवति" - इत्याह पत. व्या. म. भा. 6/4/4/160 ।
   (ख)"इयं च परिभाषा भाष्ये 'ज्यादादीयसः (6/4/4/160) इत्यत्र ज्ञापिता । .................. ज्यात्परस्येयसः प्रत्ययस्यात्वं किमर्थमुच्यते न प्रकृतो लोपएव विधीयताम् तस्मिन्नपि कृते 'अकृत्सार्वधातुकयो.' (7/4/25) इत्यनेन सिद्ध्यत्येव ................. इत्याह सी. दे. बृ. प. वृ. प. 91, पृ. 248 - 249 ।
   (ग) "एषा च परिभाषा 'ज्यादादीयसः' (6/4/160) इतिसूत्रे भाष्ये ज्ञापिता । अन्यथा ज्यायानित्यत्रेयसुनः ईकारस्य 'बहोर्लोपः .' 6/4/158) इत्यतोलोपमनुवर्त्य लोपंविधाय 'अकृत्सार्वधातुकयोः.' इतिदीर्घेण च सिद्धे किमाद्विधानेने"तीत्याह नी. दी. प. वृ. प. 86 पृ. 309 - 310 ।
   (घ) "ज्ञापिता चेयं भाष्यकारेण 'ज्यादादीयसः' - (6/4/160) .................. ..................इति सूत्रयोः । तथाहि – आद्ये तावद् 'बहोर्लोपः. (6/4/158) इत्यतो लोपमनुवर्त्य ईकारलोपं विधाय 'अकृत्सार्व' (7/4/25) इतिदीर्घे कृते सिद्ध्यत्येव 'ज्यायान्' इतिरूपमितिव्यर्थं सदीकारादेशविधानं ज्ञापक"मित्याह ह. भा. प. भास्क. प. 94, पृ. 361 ।
   (ङ) "एषा च 'ज्यादादीयस' इत्याद्विधानेन ज्ञापिता । अन्यथेकारलोपेना'कृत्सार्व..' इतिदीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेवे-" त्याह भ. ना. प. शे. प. 93 पृ. 327 ।
   (च) "ज्ञापकम् - 'ज्यादादीयसः' (6/4/160) इतिसूत्रे आकारविधानम् । अन्यथा 'बहोर्लोप. (6/4/158) इत्यतो लोपग्रहणमनुवृत्य ज्यात् परस्य ईयसः 'आदेः परस्य'

बहो'रित्यतो 'लोपः' इतिपदमनुवृत्य ईयस ईकारस्य लोपेऽपि–'अकृत्सार्वधातुकयो दीर्घः'[1] इतिज्यशब्दोत्तराऽकारस्य दीर्घेणैव हि [2]'ज्याया'नितिरूपसिद्धिः सुलभा । ज्ञापितायां चाऽस्यामनया ईकारलोपे कृते दीर्घो न प्राप्नोतीति[3] 'ईयसः' ईकास्य 'आदेः[4] परस्ये'ति बलेन आकारादेशार्थं स्वांशेऽयं शब्दश्चरितार्थो भवति । अस्याः फलमन्यत्र[5] निरूपितमिति नेह प्रतन्यते ।फलमस्या अन्यथासिद्धममिति नैषा स्वीकृता भट्टनागेशेनेत्यपि निरूपितमन्यत्र[6] ।

## 'आत्मनेपदे'ष्वितिशब्दः

[7]'लिङ्सिचावात्मनेपदे'ष्वित्यत्र 'आत्मनेपदे'ष्वितिशब्दः 'अकितीति[8]प्रसज्य-प्रतिषेधे नञ्समासोयं किद्गन्धेऽपि प्रतिषेधार्थः' -इतिवचनस्य ज्ञापकः[9] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'भित्सीष्ट'[10] – 'अभित्त'[11] -

---

(1/1/54) इति ईकारलोपविधानेन 'अकृत्सार्वधातुकयोः'- इतिदीर्घेकृते ज्यायानितिरूपसिद्धेः किं तेने"त्याह शेषा. प. भास्क. प. 80 पृ. 445 ।

(छ) "ज्यादादीयसः' (6/4/160) लोपानुवृत्त्यैव सिद्धे आत्व - विधानं ज्ञापयति अङ्गवृत्तेपुनर्वृत्तावविधिरिति" - इत्याह श्री ना. ज्ञा. सा. 6/ पृ. 115 ।

4. अष्टा. 6/4/158।

1. अष्टा. 7/4/25 ।

2. अनयोरयम् अतिशयेन प्रशस्य इत्यर्थे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' - अष्टा. 5/3/57 इति ईयसुन्प्रत्यये 'ज्यच' अष्टा. 5/3/61 इति प्रशस्यशब्दस्य ज्याऽऽदेशे 'ज्य + ईयस्' इत्यवस्थायां 'ज्यादादीयसः' अष्टा. 6/4/160 इत्यनेन 'आदेः परस्य'- अष्टा. 1/1/54। इतिबलेन ईकारस्य आकाराऽऽदेशे सवर्णदीर्घे ताद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

3. 'अकृत्सार्वधातुकयोर्दीर्घः' - अष्टा. 7/4/25 ।

4. अष्टा. 1/1/54 ।

5. 'जा' -इतिशब्दस्य ज्ञापकत्वनिरूपणावसर इत्यर्थः ।

6. 'जा' इतिशब्दस्य ज्ञापकत्वनिरूपणावसरइत्यर्थः ।

7. अष्टा. 1/2/11 ।

8. 'सृजिदृशोर्झल्यमकिति' - अष्टा. 6/1/58, इत्यत्रेतिशेषः ।

9. तथाहि–

(क) "लिङ्सिचावात्मनेपदेष्वित्यत्र (1/2/11) आत्मनेपदग्रहणम् अस्राक्षीदद्राक्षीदिति सिचोकित्त्वे सृजिदृशोर्झल्यमकितीति (6/1/58) अम्यथास्यादित्येवमर्थं क्रियमाणं ज्ञापयति 'अकितीति प्रसज्यप्रतिषेधे नञ्समासोयं किद्गन्धेपि प्रतिषेधार्थ इति । पर्युदासे हि अद्राक्षीदित्यादौ सत्यपि कित्त्वातिदेशे स्वीयादकित्त्वात्सिचः किदकितः कितोऽन्यत्वात् अकितीत्यम् सिद्ध एवेति किमात्मनेपदेष्वित्यनेन । एवं सिसृक्षति दिदृक्षति इत्यत्र पूर्वविप्रतिषेधेन हलन्ताच्चेति (1/2/10) सनः कित्त्वेऽपि पर्युदासाश्रयोऽम् नऽभवती"त्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 61 ।

10. 'भिदिर् विदारणे' धा. पा. रुधा. 1440 इतिभिद्धातोः 'आशिषि लिङ्लोटौ' - अष्टा. 3/3173, इत्याशिषि लिङि स्वरितेत्त्वात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' - अष्टा.

इत्यादौ क्रमशो लिङवयवसीयुटः,[1] सिचश्च[2] कित्त्वाऽर्थमारब्धे 'इगन्तादिक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौभवतः' -इत्यर्थकेऽस्मिन् सूत्रे 'अस्राक्षीत्'[3]–'अद्राक्षीत्[4]' इत्यादौ सृजदृशोर्झल्यमकिती'[5]त्यमर्थं परस्मैपदे परे सिचः कित्त्वाभावायोपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । यतोऽत्राऽस्य शब्दस्याऽभावेऽपि वचनस्याऽस्याऽभावे पर्युदासे 'अद्राक्षी'दित्यादौ[6] सत्यप्यनेन कित्त्वाऽतिदेशे स्वीयादकित्त्वात् सिचः किदकितः कितोऽन्यत्वाद् अकितीत्यमागमः

---

1/3/72, इत्यात्मनेपदे ते 'लिङ्ः सीयुट्'- अष्टा. 3/4/102, इति सीयुटि 'सुट्तिथोः' - अष्टा. 3/4/107, इतिसुटि दकारस्य चर्त्वेन तकारे सुटः सकारस्य यदागमन्यायेन प्रत्ययावयवतया षत्वे लिङादेशतकारस्य ष्टुत्वे च कृते 'लिङ् सिचावात्मनेपदेषु' - अष्टा. 1/2/11, इतिसीयुटः कित्त्वेन 'क्ङिति च' - अष्टा. 1/1/5, इति - लघूपधगुणस्य निषेधे 'लिङाशिषि' -अष्टा. 3/4/116, इतिलिङादेशस्य तशब्दस्याऽर्धधातुकत्वत् सर्वधातुके विहितौ 'स्वादिभ्यः श्नम्' - अष्टा. 3/1/78, इतिश्नम्, 'लिङः सलोपोऽनन्त्यस्य' -अष्टा. 7/2/79, इति सलोपश्च न भवत इति रूपमिदम् सिद्ध्यति ।

11. 'भिदिर् विदारणे' धा. पा. रुधा. 1440, इतिभिद्धातोलुर्ङि स्वरितेत्त्वात् 'स्वरितञितः कर्त्रभिप्रायेक्रियाफले' - अष्टा. 1/3/72, इत्यात्मनेपदे ते 'च्लिलुङि' - अष्टा. 3/1/43, च्लिप्रत्यये, 'च्लेः सिच्' - अष्टा. 1/2/11, इति सिचः कित्त्वाऽतिदेशात् 'क्ङिति च' - अष्टा. 1/1/5, इतिलघूपधगुणस्य निषेधे 'झलोझलि' - अष्टा. 8/2/26, इतिसिचः सकारस्य लोपे धातुदकारस्य चर्त्वे च कृते रूपमिदम् ।

1. 'लिङ्ः सीयुट्' - अष्टा. 3/4/102 ।
2. 'च्लेः सिच्' - अष्टा. 3/1/44 ।
3. 'सृज विसर्गे' धा. पा. तुदा. 1415, इतिसृज्धातोर्लुङि अडागमे तिपि च्लौ च्लेः सिचि 'असृज्सति' - इत्यवस्थायां 'सृजिदृशोर्झल्यमकिति' - अष्टा. 6/1/58, इत्यमागमे ऋकारस्य यणि 'अस्तिसिचोऽपृक्ते' - अष्टा. 7/3/96, इति ईडागमे अकारस्य 'वदव्रजहलन्तस्याचः' अष्टा. 7/2/3, इतिहलन्तलक्षणवृद्धौ जकारस्य 'व्रश्चभ्रस्ज - सृज - मृज - यज - राज - भ्राज - च्छशां षः' - अष्टा. 8/2/36, षत्वे षकारस्य 'षढोः कः सि' -अष्टा.8/2/41, इतिकत्वे 'इतश्च' - अष्टा. 3/4/100, इतितेरिकारलोपे रूपमिदम् ।
4. 'दृशिर्प्रेक्षणे' धा. पा. भ्वा. 988, इतिदृश्धातोर्लुङि अडागमे तिपि च्लौ तस्य' इरितोवा' - अष्टा. 3/1/57, इत्यङभावपक्षे 'शल इगुपधादनिटः क्सः' - अष्टा. 3/1/45, इत्यनेन प्राप्तस्य क्साऽऽदेशस्य 'नदृशः' - अष्टा. 3/1/47, इतिनिषेधे 'च्लेः सिच्' - अष्टा. 3/1/44, इतिसिजादेशे-'अदृश्स्ति' इत्यवस्थायां 'सृजिदृशोर्झल्यमकिति' -अष्टा. 6/1/58, इत्यमागमे ऋकारस्य यणि 'अस्तिसिचोऽपृक्ते' - अष्टा. 7/3/96, इति ईडागमे अकारस्य हलन्तलक्षणवृद्धौशकारस्य' व्रश्च' -अष्टा. 8/2/36, 'वद - व्रज - हलन्तस्याचः' - अष्टा. 7/2/3, इति षत्वे षकारस्य 'षढोः कः सि' - अष्टा. 8/2/41, इतिककारे सिचः सकारस्य 'आदेश - प्रत्यययोः' - अष्टा. 8/3/59, इति षत्वे 'इतश्च' - अष्टा. 3/4/100, इतितेरिकारलोपे च कृते रूपमिदम् ।
5. अष्टा. 6/1/58 ।
6. 'लिङ् सिचा. - अष्टा. 1/2/11 ।

सुलभः । ज्ञापिते चाऽस्मिनूवचने किद्ग्न्धेऽपि परस्मैपदे परतः 'अद्राक्षी'-दित्यादावमागमाऽभावः[1] प्राप्नोतीति तत्राऽमागमसिद्धये[2]ऽकित्त्वार्थमयं शब्दः स्वांशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [3]सिसृक्षति'-दिदृक्षति'[4] इत्यत्र पूर्वविप्रतिषेधेन[5] [6]'हलन्ताच्चे'ति सनः कित्त्वेऽपि पर्युदासाऽऽश्रयस्याऽमागमस्याऽभावः[7] । अस्य वचनस्याऽसत्त्वे हि 'सृजिदृशोर्झल्यमकिती'ति[8] अमागमाऽऽपत्तिरत्र दुर्वारा स्यात् ।

## 'आदे'रिति शब्दः

'अनुदात्तेतश्च हलादे'[9]रित्यत्र 'आदे'रितिशब्दः 'आर्धधातुक'इति[10]परसप्तमीपक्षोऽप्यस्ती'तिवचनस्य ज्ञापकः[11] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दोव्यर्थः । तथाहि-'वर्त्तनः'[12] - इंत्यादौ युच्प्रत्यविधानायाऽऽरब्धे 'अनुदात्तेद् योधातुः हलादिरकर्मकः ततश्च युच्प्रत्ययो भवती'त्यर्थकेऽस्मिन् सूत्रे - 'जुगुप्सनः'[13]

---

1. 'सृजिदृशोर्झल्यमकिति' - अष्टा. 6/1/58 ।
2. 'सृजिदृशोर्झल्यमकिति' अष्टा. 6/1/58 ।
3. 'सृज विसर्गे' धा. पा. तुदा. 1415, इति सृज्धातोः सनि तदन्ताल्लटि तिपि रूपमिदम् ।
4. 'दृशिर्प्रेक्षणे' धा. पा. भ्वा. 988, इति दृश्धातोः सनि तदन्ताल्लटि तिपि रूपमिदम् ।
5. 'विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2, इत्यत्र परशब्दस्य इष्टवाचित्वादितिशेषः ।
6. अष्टा. 1/2/10 ।
7. 'सृजिदृशोर्झल्यमकिति' - अष्टा. 6/1/58 ।
8. अष्टा. 6/1/58 ।
9. अष्टा. 3/2/149 ।
10. 'आर्धधातुके' अष्टा. 2/4/35, 'आर्धधातुके' - अष्टा. 6/4/46 ।
11. तथाहि - "अनुदात्तेतश्च हलादेरित्यत्र (3/2/149) युज्विधौ आदिग्रहणं हलन्तधातुप्रतीतिर्माभूदित्येवमर्थम् । हलन्तधातुप्रतीतिश्चानुदात्तेतां हलन्तत्वाव्यमिचाराद्विशेषेण वैफल्यादेव न भविष्यति । जुगुप्सादिरजन्तः सम्भवतीतिचेत् । न । आर्धधातुक इतिविषयसप्तम्यां भविष्यतो युचः प्रागेवातोलोपात् जुगुप्सतेरपि हलन्ततेति । किमादिग्रहणेन । तत् ज्ञापयति 'आर्धधातुक इति परसप्तमीपक्षोऽप्यतीति । तदाहि युचः प्रागेवातोलोपाभावात् जुगुप्सादिनिरासार्थं हलन्तपरिकल्पना माभूदित्येवमर्थमादिग्रहणमर्थवत् इति नपदान्तसूत्रे (1/1/58) न्यासे (अनुन्यासे) उक्तमर्थवद्भवति । तेन गमयतीति गमक इत्यत्र णिलोपस्य परनिमित्तकत्वात् स्थानिवद्भावात् ण्वुलोऽत उपधावृद्धि र्न भवति । निराद्येति अदेर्ण्यन्तात् ल्यपि णिलोपस्य स्थानिवत्त्वेन वृद्धिर्भवतीती"त्याह पु. दे. ज्ञा. समु. दशमे कर्मणिपादे पृ. 74 ।
12. 'वृतु वर्तने' धा. पा. भ्वा. 758, इति वृत्धातोः 'अनुदात्तेतश्च हलादेः' अष्टा. 3/2/149, इतियुच्प्रत्यये योरनादेशो गुणे रपरत्वे विभक्तिकार्ये च कृते रूपमिदम् ।
13. 'गुप गोपने' धा. पा. भ्वा. 970, इतिगुप्धातोः 'गुप्तिज्किद्भ्यः सन्'-अष्टा. 3/1/5, इतिसन्प्रत्यये द्वित्वादिकार्येषु कृतेषु 'जुगुप्स' इत्यस्मात्सन्नन्तधातोः 'अनुदात्तेतश्च हलादेः' -

–'मीमांसनः'[1] -इत्यत्र युजर्थमयं शब्द उपात्तः । स चाऽस्य वचनस्याभावे व्यर्थः । न चाऽत्राऽऽदेरितिशब्दो हलन्तधातुप्रतीतिर्माभूदित्येतदर्थमितिशङ्क्यम् । यतोऽत्र[2] हलन्तधातुप्रतीतिरनुदात्तेतां हलन्तत्वाऽव्यभिचाराद्विशेषेण वैफल्यादेव न भविष्यति । नाऽपि जुगुप्सादिरजन्तः सम्भवतीति शङ्क्यम् । आर्द्धधातुक[3] इतिविषयसप्तम्यां हि भविष्यतो युचः[4] प्रागेवातोलो पात्[5] जुगुप्सतेरपि हलन्तता सुलभा । ज्ञापिते चाऽस्मिन्वचने युचः[6] प्रागेवातोलोपाप्राप्त्या[7] जुगुप्सादिनिरासार्थं हलन्तपरिकल्पना माभूदित्येवमर्थमत्राऽयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु गमयतीति गमक[8] इत्यत्र णिलोपस्य[9] परनिमित्तकत्वेन स्थानिवद्भावाद्[10] ण्वुलोऽत [11]उपधा वृद्धेरभावः, [12]निराद्ये'-त्यत्र अदेर्ण्यन्ताल्ल्यपि[13]

---

अष्टा. 3/2/149, इति युचूप्रत्यये योरनाऽऽदेशे 'अतोलेपः' - अष्टा. 6/4/48, इत्यलोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।

1. 'मान पूजायाम्' धा. पा. भ्वा. 972, इति मान्धातोः 'मान्वधदान्शान्भ्योदीर्घश्चाऽभ्यासस्य' - अष्टा. 3/1/6, इतिसन्प्रत्यये द्वित्वादिषु कृतेषु अनेनैव सूत्रेणाऽभ्यासस्य दीर्घे च कृते सन्नन्तान्मीमांसधातोः 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149, इतियुचूप्रत्यय योरनाऽऽदेशे 'अतोलेपः - अष्टा. 6/4/48, - इत्यतोलोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. 'अनुदात्तेतश्च हलादेः' अष्टा. 3/2/149 ।
3. अष्टा. 2/4/35, तथा 6/4/46 ।
4. 'अनुदात्तेतश्च हलादेः' अष्टा. 3/2/149, इतिविहितादित्यर्थः ।
5. 'अतोलोपः' - अष्टा. 6/4/48 ।
6. 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149 ।
7. 'अतोलोपः' - अष्टा. 6/4/48 ।
8. ण्यन्तात् 'गम्लृ गतौ' धा. पा. भ्वा. 982, इतिगम्धातोः 'ण्वुल् - तृचौ'- अष्टा. 3/1/33, इति ण्वुल्प्रत्यये योः' युवोरनाकौ' - अष्टा. 7/1/1, इतिअकाऽऽदेशे 'णेरनिटि' - अष्टा. 7/1/1, इतिअकाऽऽदेशे 'णेरनिटि' - अष्टा. 6/4/51, इतिणिलोपे तस्य स्थानिवद्भावाद् 'अतउपधायाः' - अष्टाः 7/2/116, इति वृद्ध्यभावे विभक्तिकार्ये कृते रूपमिदम् ।
9. 'णेरनिटि'' - अष्टा. 6/4/51 ।
10. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 इत्यनेनेतिशेषः ।
11. 'अत उपधायाः' - अष्टा. 7/2/116 ।
12. 'निर्पूर्वकात् 'अद्भक्षणे' धा. पा. अदा. 1011, इतिअद्धातोः - 'समान्कर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21, इतिक्त्वाप्रत्यये निर्शब्देन सह समासे 'समासेऽनञ्पूर्वेक्त्वोल्यप' - अष्टा. 7/3/37, इति क्त्वोल्यपि 'णेरनिटि' - अष्टा. 6/4/51, इतिणिलोपे तस्य 'अचः परस्मिन्पूर्वविधौ'- अष्टा. 1/1/57, इतिस्थानिवत्त्वात् 'अतउपधायाः' - अष्टा. 7/2/116, इतिउपधाया अतोवृद्धौ 'क्त्वातोसुन् - कसुनः' - अष्टा. 1/1/40, इत्यव्ययत्वात् कृदन्तादुत्पन्नाया विभक्तेर्लुकि रूपमिदम् ।
13. 'समासेऽनञ्पूर्वे क्त्वोल्यप्' - अष्टा. 7/3/37 ।

णिलोपस्य[1] स्थानिवत्त्वेन[2] वृद्धिसिद्धिश्च[3] । अस्य वचनस्याऽसत्त्वे हि णिलोपस्य [4]परनिमित्तकत्वाऽसंभवेन स्थानिवत्त्वाऽप्राप्त्या[5]क्रमशो [6]नात्रोपधावृद्ध्यभावो[7]-पधावृद्धी च सिद्ध्येताम् ।

जिनेन्द्रबुद्धिस्त्वत्र सूत्रे आदिग्रहणं विस्पष्टार्थमेवेति मनुते[8] । जयादित्य-वासुदेवदीक्षितौ चाऽत्राऽऽदिशब्दस्य प्रयोजनं 'जुगुप्सनः' मीमांसनः' -इत्यत्र युचः सिद्धिं मन्वाते[9] । ज्ञानेन्द्रभिक्षुश्च 'एधिता' 'जुगुप्सते' - इत्यत्र युचोऽभाव - सिद्धिरत्राऽस्य शब्दस्य प्रयोजनमाह[10] ।

---

1. 'णेरनिटि' - अष्टा. 6/4/51 ।
2. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
3. 'अत उपधायाः - अष्टा. 7/2/116 ।
4. णेरनिटि' - अष्टा. 6/4/51/116 ।
5. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
6. 'अत उपधायाः - अष्टा. 7/2/116 ।
7. 'अत उपधायाः' - अष्टा. 7/2/116 ।
8. तथाहि - "जुगुप्सनः, मीमांसनइति, 'गुप्तिज्किद्भ्यः सन्' 'मान्वध'- इत्यादिना सनिदीर्घेच रूपे भवतः । अत्र तदन्तौ समुदायावनुदात्तेतौ - अवयवेकृतं लिङ्गंसमुदायस्य विशेषकं भवतीति । तथा च यद्यादिग्रहणं न क्रियते तदा ताभ्यां न स्यात्, यस्मादसत्यादिग्रहणे हला तु तदन्तविधिर्विज्ञायते अनुदात्तेतो हलन्तादिति । न च जुगुप्स मीमांसशब्दौ हलन्तौ, किं तर्हि ? अजन्तौ । आदिग्रहणे सत्यहलन्तेभ्येऽपि भवतीत्यादिग्रहणं कर्तव्यम् । तच्च तदा कर्तव्यं यदातोलोप आर्धधातुके परतो भवतीत्ययं पक्षः, नतु यदार्धधातुके विषयभूत इत्येष पक्ष । तदाह्यार्धधातुकविवक्षायां प्रागेव प्रत्ययोत्पत्तेरलोपेकृते जुगुप्समीमांसशब्दावपि हलन्तौ भवतः, तत्रानुदात्तेतोऽजन्तस्याभावात्तदन्तविधौ विज्ञायमाने हलन्तग्रहणमनर्थकंस्यात्, व्यावर्त्याभावात् । तस्माद् हल्ग्रहणसामर्थ्यादादेर्विशेषणं विज्ञास्यत इत्यादि ग्रहणं न कर्तव्य-मेव । अत्रादिग्रहणं विस्पष्टार्थमेव व्याख्येय" मित्याह जि. बु. न्या. 3/2/149 ।
9. तथाहि –
   (क) "आदिग्रहणंकिम्? जुगुप्सनः । मीमांसनः ।" इत्याह जया. का. 3/2/149 ।
   (ख) "आदिग्रहणाऽभावे हलन्तादित्यर्थः स्यात्, ततश्च जुगुप्सनइति न स्यात्, सन्नन्तस्य हलन्तत्वाऽभावात् । अस्ति चाऽनुदात्तेत्त्वं सन्नन्तस्य, 'गुप'- इत्यनुदात्तेत्वस्य केवले प्रयोजनाऽभावे सन्नन्तार्थत्वा" दित्याह वा. दी. बा. मनो. पूर्वकृदन्त प्र. पृ. 450 ।
10. तथाहि – "ननु सर्वोऽप्यनुदात्तेद्धलन्त एवेतितदन्तविधिं बाधिवा सामर्थ्याद्धलादिरेव ग्रहीष्यते; तत् किमादिग्रहणेनेतिचेत् अत्राहुः आदिग्रहणाऽभावेहलन्तादित्यर्थः स्यात् । तथाहि सत्येधितेत्यादावतिप्रसंगः स्यात्, जुगुप्सत - इत्यादि च न सिद्ध्येत् । अस्ति चेहानुदात्तेत्त्वं, गुपादिष्वचरितार्थस्याऽनुबन्धस्यसमुदायविशेषकत्वादिति दि" गित्याह ज्ञा. भि. त. बो. पूर्वकृदन्त प्र. पृ. 450 ।

जयादित्य - जिनेन्द्रबुद्धि - भट्टोजिदीक्षित - ज्ञानेन्द्रभिक्षु - वासुदेवदीक्षितानां सिद्धान्तैः सह विरुद्धोऽपि पुरुषोत्तमदेवोक्तमत्रास्य शब्दस्य ज्ञापकत्वोपपादनं शोभनं प्रतिभाति ।

## आदे'रिति शब्दः

'[1]निवासचिति-शरीरोपसमाधानेन्वादेश्च क' इत्यत्र 'आदे'रितिशब्दः 'क्वचिदनेकालप्यादेशोऽन्त्यस्य भवती'तिवचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दोव्यर्थः । तथाहि - 'काशीनिकायः'[3]'आकायमग्निं[4] चिन्वीत' 'कायः'[5] गोमयनिकायः'[6] इत्यादौ [7]चिधातोरादेश्चकारस्य कादेशार्थमारब्धे "निवसन्त्यस्मिन्निति निवासः, चीयतेऽसौ चितिः, पाण्यादिसमुदायः = शरीरम्, राशीकरणम् = उपसमाधानम् - एतेष्वर्थेषु चिनोतेर्घञ्प्रत्ययो भवति, धातोरादेश्च ककार आदेशः" इत्यर्थकेऽस्मिन् सूत्रेऽयं शब्दो निकाय इत्यादौ काऽऽदेशस्याऽन्त्ययाऽऽदेशत्वनिरासार्थमुपात्तः[8] ।स चाऽस्य वचनस्याऽभावे व्यर्थः ।

---

1. अष्टा. 3/3/41 ।
2. तथाहि - "निवासचितिशरीरोपसमाधानेन्वादेश्च क, इत्यत्र (3/3/41) चिनोतेर्घञि निकायेत्यत्र ककारस्यादेशत्वनिरासार्थमादिग्रहणं 'क्वचिदलेकालप्यादेशोऽन्त्यस्य भवती'ति ज्ञापयति । तेन एचोऽयवायावः (6/1/78) इत्यादयः अन्त्यादेशाः सिद्ध्यन्ती"त्याह पु. दे. ज्ञा. समु. एकादशे बहुलपादे पृ. 75 ।
3. निचीयते मोक्षोऽत्रेति विग्रहे निपूर्वकात् 'चिञ्चयने' धा. पा. स्वा. 1252. इतिविधातोरधिकरणे निवासेऽर्थे 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' - अष्टा. 3/3/41, इतिघञ्प्रत्यये चकारस्य ककारे च 'अचोल्णिति' - अष्टा. 7/2/115, इतीकारस्य वृद्धावायादेशे विभिक्तिकार्ये च कृते रूपमिदम् । काशीमोक्षार्जकस्य निवास इतिरूपाऽर्थः ।
4. आचीयतइतिविग्रहे आङ्पूर्वकात् 'चिञ्चयने' धा. पा. स्वा. 1252, इति चिधातोः कर्मणि चितावर्थे 'निवासचिति'. - अष्टा. 3/3/41, इतिघञ्प्रत्यये चकारस्य च ककारे 'अचोञ्णिति' - अष्टा. 7/2/115, इतीकारस्य वृद्धावायादेशे - विभक्तिकार्ये च कृते रूपमिदम् ।
5. चीयतेऽस्मिन्नस्थ्यादिकमितिविग्रहे 'चिञ्चयने' धा. पा. स्वा. 1252, इतिघञ्प्रत्यये चकारस्य च ककारे 'अचोञ्णिति - अष्टा. वृद्धावायादेशे विभक्तिकार्ये च कृते रूपमिदम् ।
6. निचीयते राशीक्रियते इति विग्रहे 'चिञ्चयने' धा. पा. स्वा. 1252 इतिचिधातोर्भावे राशीकरण - समूहाऽपरपर्याये उपसमाधानेऽर्थे 'निवास.' - अष्टा. 3/3/41, इतिघञ्प्रत्यये चकारस्य च ककारः 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावायादेशे विभक्ति - कार्ये च कृते - रूपमिदम् ।
7. 'चिञ्चयने' धा. पा. स्वा. 1252 ।
8. 'अलोऽन्त्ययस्य' - अष्टा. 1/1/52 ।

यतोऽस्य वचनस्याभावे विनाप्येतच्छब्दं कादेशोऽनेकाल्वादन्त्यस्य[1] न[2] प्राप्नोतीत्यन्त्यादेशत्वनिरासार्थमुपात्तोऽयं व्यर्थः । ज्ञापिते चाऽस्मिन्वचनेऽन्त्यस्य चिनोतेरिकारस्य काऽऽदेशत्वनिरासार्थमयंशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलन्तु 'हरये'[3] -इत्यादावाया-[4]द्यादेशानामनेकालामप्यन्त्याऽऽदेशत्व[5] -सिद्धिः । अस्य वचनस्याऽसत्त्वे हि नाऽयादयोऽन्त्यादेशा भवेयुरनेकाल्त्वात् । ज्ञापकत्वमिदं पुरुषोत्तमदेवोक्तं न युक्तम् । यतोऽत्र कादेशोऽकारासवर्णाऽऽत्मको न तु अकारविशिष्टः 'क' इत्याऽऽत्मक इत्यनेकाल्त्वाभावादेव ककारस्याऽन्त्याऽऽदेशत्व-[6]निरासार्थमयं शब्दोऽस्य वचनस्याऽभावेऽपि चरितार्थः । अतएव जिनेन्द्रबुद्धिभट्टोजिदीक्षिताभ्यामत्राऽदेरित्यस्य शब्दस्य प्रयोजनं 'गोमयानां निकेचायः'[7] - इत्यत्र यङ्लुक्यादेरेव चकारस्य कादेश इति स्वीकृतम्[8] । 'आदे'रितिशब्दस्याऽत्राऽभावे हि 'अन्त्यविकारेऽन्त्यसदेशस्येतिपरिभाषया[9] द्वितीयचकारस्य कादेशापत्तिः[10] स्यात् ।

---

1. 'अनेकाल्शित्सर्वस्य' -अष्टा. 1/1/55, इत्यनेन बाधादितिशेषः ।
2. 'अलोऽन्त्यस्य' - अष्टा. 1/1/52, इत्यनेनेतिशेषः ।
3. 'हरे + ए' इतिच्छेदः ।
4. 'एचोऽयवायावः' अष्टा. 6/1/78 ।
5. 'अलोऽन्त्यस्य' - अष्टा. 1/1/52, इत्यनेनेतिशेषः ।
6. 'अलोऽन्त्यस्य' - अष्टा. 1/1/52, इत्यनेनेतिशेषः ।
7. निपूर्वकात्' चिञ्चयने' धा. पा. स्वा. 1252, इतिचिधातोर्यङ्लुगन्ताद् उपसमाधानेऽर्थे 'निवास.' - अष्टा. 3/3/41, इतिभावे घञ्प्रत्यये - प्रथमस्याऽभ्यासचकारस्य च ककारे वृद्धावायादेशे विभक्तिकार्ये च कृते रूपमिदम् ।
8. तथाहि –
   (क) "अथादिग्रहणं किम् ? अर्थस्य माभूत् । यद्येवम्; 'चः कः 'इति वक्तव्यम् ? एवंतर्हि यदा यङ्लुगन्तादुत्पद्यते तदा'अन्त्यविकारेऽन्त्यसदेशस्य' इति द्वितीयचकारस्य माभूदित्येवमर्थमादिग्रहण"मित्याह जि. बु. न्या. 3/3/41 ।
   (ख) " 'चः कः 'इति कर्त्तव्ये' 'आदे'रित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः, पुनः पुनाराशीकरणमित्यर्थः" - इत्याह भ. दी. वै. सि. कौ. उत्तर कृदन्त प्र. पृ. 554 ।
9. 'अन्त्यविकारेऽन्त्यसदेशस्य' प. शे. प. 104, पृ. 337 ।
10. 'निवासचितिशरीरोपधानेष्वादेश्च कः' -अष्टा. 3/3/41, इत्यत्र 'निवासचितिशररीरोपधानेषु चः कः' इत्युक्तावितिशेषः ।

## आदे'रिति शब्दः

[1]'संख्याव्ययादेर्ङी'बित्यत्र 'आदे'रितिशब्दः 'विधौ परिभाषोपतिष्ठते[2] नानुवाद इतिपरिभाषाऽनित्ये'तिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावे 'द्विविधोध्नी'-त्यत्र ङीबर्थमुपात्तोऽत्राऽयं शब्दो व्यर्थः । अनुवादे परिभाषाया अप्रवृत्तौ हि 'संख्याव्यया'दितिनिर्देशेऽपि [4]'तस्मादित्युत्तरस्येत्यस्याप्रवृत्त्या संख्याव्ययात्परो य ऊधःशब्दस्तदन्ताद्बहुव्रीहेर्ङीबिति सूत्रार्थे 'द्व्यूध्नी'त्यत्रेव 'द्विविधोध्नी-' त्यत्र व्यवहितस्थलेऽपि ङीपः सुलभतयाऽऽदेरितिशब्दोऽत्र व्यर्थः । ज्ञापितेचाऽ–स्मिन्वचने 'द्विविधोध्नी'त्यत्र व्यवहितस्थले ङीबर्थं स्वांशेऽयंशब्दश्चरिताऽर्थो भवति । यतः कृते आदिग्रहणे संख्याव्ययादेरितिबहुव्रीहिविशेषणम् । तेन संख्याव्ययादिरूधःशब्दान्तो यो बहुव्रीहिस्ततोङीबितिसूत्रार्थात् ''द्विविधोध्नी'त्यत्राऽपि' ङीप्सुलभो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'अचोरहाभ्यां[5] द्वे' इत्यत्र अचोऽव्यवहितपराभ्यां रेफहकाराभ्यामित्यर्थलाभः । तेन किं ह्वलयती'त्यादौ वकारादेरनेन द्वित्वाऽभावः सिद्ध्यति ।

## 'आ'बिति शब्दः

'[6]ङेराम्नद्याम्नीभ्यः' इत्यत्र 'आ'बितिशब्दः 'नापो नदीसंज्ञा भवती'ति -

---

1. अष्टा. 4/1/26 ।
2. (क) सी. दे. बृ प. वृ. प. 89, पृ. 248 ।
   (ख) नी. दी. प. वृ. प. 84, पृ. 309 ।
   (ग) ह. भा. प. भास्क. प. 92, पृ. 360 ।
   (घ) भ. ना. प. शे. प. 102, पृ. 332 ।
   (ङ) 'विधौ परिभाषा नानुवादे' शेषा. प. भास्क प. 87, पृ. 449 ।
3. तथाहि –
   (क) "अव्यापिका चेयं 'संख्याव्ययादेः' (4/1/26) इत्यादि - ग्रहणात् । अन्यथा 'संख्याव्ययाभ्या'मित्येवोच्येते"त्याह सी. दे. बृ. प. वृ. प. 89, पृ. 248 ।
   (ख) "अनित्या चेयम्, 'संख्याव्ययादेर्ङीप्' (4/1/26) इत्यत्रादिग्रहणा"दित्याह शेषा. प. भास्क. प. 87, पृ. 449 ।
4. अष्टा. 1/1/67 ।
5. अष्टा. 8/4/46 ।
6. अष्टा. 7/3/116 ।

वचनस्य ज्ञापकः[1] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । आबन्तस्याऽपि [2]नदीसंज्ञायां हि '[3]रमाया'मित्यादौ 'नदी'-इत्यनेनैव आबन्तस्याऽपि ग्रहणं सुलभम् । न च '[4]यूस्त्र्याख्यौ नदी' - इत्येनन नित्यस्त्रीलिङ्गयोरीदूदन्तयोर्नदीसंज्ञाविधानात्-कथमाबन्तस्य नदीसंज्ञा प्राप्नोतीति शङ्क्यम् । यतो भगवता नदीसंज्ञासूत्रे[5] यू इत्यस्याऽनुपादाने 'खट्वा' 'माला' इत्यादेर्नित्यस्त्रीलिङ्गस्य[6] [7]टाबन्तस्याऽपि नदी-संज्ञायां 'खट्वाबन्धुः'[8] 'मालाबन्धुः'[9] इत्यत्र 'नदी बन्धुनि'[10] इत्यनेन पूर्वपदान्तोदात्तस्वराऽऽपत्तिः स्यादिष्यते तु नित्स्वरेण[11] आद्युदात्तत्वाऽऽत्मकः पूर्वपद-प्रकृतिस्वरः, 'यू' -इत्यस्योपादाने तु 'खट्वा'शब्दस्य ईदूदन्तत्वाऽभावान्नदीसंज्ञाया[12] अप्राप्त्या न 'खट्वाबन्धु'रित्यादौ पूर्वपदान्तोदात्तस्वराऽऽपत्तिरिति 'यू' इत्यस्य नदीसंज्ञासूत्रघटकस्य प्रयोजनं स्वीकरणीयं, तत्तु प्रयोजनम् आबन्तस्य नदीसंज्ञाया ज्ञापकेन वारयितुं शक्यत्वाद्युक्तमिति निरूपितम् ।

---

1. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति -' नापो नदीसंज्ञा भवती'ति यदयं 'ङेराम्नद्याम्नीभ्यः' इति पृथगाब्ग्रहणं करोति" इत्याह पत. व्या. म. भा. /4/1/3 ।
   (ख) 'ङेराम् नद्याम्नीभ्यः' (सू. 7/3/116) इति पृथगाब्ग्रहणात् नापो नदीसंज्ञा भवतीती"त्याह एन्. एस. रामा. ज्ञा. सं. परि 1, पृ. 191 ।
2. 'यूस्त्र्याख्यौ नदी'-अष्टा.·1/4/3 ।
3. रमाशब्दान् ङौ ङेरामि 'याडापः' - अष्टा 7/3/113, इतियाडागमे रूपम् ।
4. अष्टा. 1/4/3 ।
5. 'यूस्त्र्याख्यौ नदी' - अष्टा. 1/4/3 ।
6. "प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वम् । ङ्यन्तकुमार्यादीनां क्वचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय 'प्रवृत्तिनिमित्तैक्ये' इति" - इत्याह भ. ना. ल. श. शे. अजन्तपुंलिङ्ग प्र. पृ 274-275 ।
   "यत् प्रवृत्तिनिमित्तं स्त्रीत्वस्यान्वयितावच्छदेकं तदेव प्रवृत्तिनिमित्तं स्त्रीत्वेतरलिङ्गस्यान्वयितावच्छेदकं भवति तद्रूपविशिष्टानभिधायकत्वमित्यर्थः । अर्थात्-स्त्रीत्वान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गान्वयितानवच्छेदकञ्च यत्प्रवृत्तिनिमित्तं तादृशप्रवृत्तिनिमित्तविशिष्टार्थाभिधायकत्वमिति फलति"-इतिभट्ट-नागेशग्रन्थार्थमाह विश्व. दण्डि. भ. अभिनवचन्द्रिकाया-अजन्त पुंलिङ् प्र. पृ. 275-276 ।
7. 'अजाद्यतष्टाप्'- अष्टा. 4/1/4 ।
8. खट्वा बन्धुर्यस्येति बहुव्रीहौ रूपमिदम् ।
9. मालाबन्धुर्यस्येति बहुव्रीहौ रूपमिदम् ।
10. अष्टा. 6/2/109 ।
11. 'खट काङ्क्षायाम्' धा. पा. भ्या. 309 इतिखट्धातोः 'अशुप्रुषिलटि कणि खाटि विशिभ्यः' उणा. सू. 149, इति क्वनि खट्वाशब्दस्य निष्पन्नतयेतिशेषः ।
12. 'यूस्त्र्याख्यौ नदी' - अष्टा. 1/4/3 ।

ज्ञापितेचाऽस्मिन्वचने'रमाया' मित्यादौ[1]ङेरामत्रसिद्धियर्थं सूत्रेऽस्मिन्नसौ शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'मात्रे'[2] मातुः'[3] - इत्यादौ ऋकारान्ते नदीत्ववारणाय नदीसंज्ञायां[4] 'यू'शब्दोपादानस्य सार्थक्यम् । ऋकारान्तस्य नदीत्वे हि 'मात्रे'-इत्यादौ ङिद्विभक्तेराडागमाऽभावः[5] ।

## 'आर'गितिशब्दः

'आरगुदीचा[6]'मित्यत्र 'आर'गितिशब्दः' अन्यतोऽप्यय[7]'मितिवचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –'गोधारः'[9] -इतिरूप-सिद्ध्यर्थमत्रसूत्रे प्रत्ययवाचक शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । गोधाशब्दस्याऽऽकारान्तत्वात् ततो रक्प्रत्ययविधानेऽपि' गोधार इतिरूपसिद्धिर्हि सुलभा । न चाऽऽख्यानण्यन्तास्वपि गोधाराशब्दस्येवाऽनाकारान्तसम्भवेनाऽस्य सूत्रस्यान्यतः प्रवृत्तौ न मानमितिशङ्क्यम् । यतो [10]ज्ञापकतापरभाष्यप्रामाण्ये-

---

1. 'ङेराम्नद्याम्नीभ्यः' - अष्टा. 7/3/116 ।
2. मातृशब्दानूङेविभक्तौ रूपम् ।
3. मातृशब्दान् ङसिङसो रूपम् ।
4. 'यूस्त्र्याख्यौ नदी' अष्टा. 1/4/3 ।
5. 'आण्नद्याः' - अष्टा. 7/3/112 ।
6. अष्टा. 4/1/130 ।
7. अनाकारान्तेभ्योऽपि शब्देभ्य आरगिष्यत इतिवचनार्थः ।
8. तथाहि–
   (क) " 'आरग्वचनमनर्थकं रका सिद्धत्वात्' । आरग्वचनार्थक्यम् । किं कारणम् ? । रका सिद्धत्वात् । गोधा आकारान्ता, रक्प्रत्ययः । एवं तर्हिसिद्धे सति यदारकं शास्ति तज् ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । मौण्डारो जाण्डारः पाण्डार इत्येतत् सिद्धं भवती"त्याह पत. व्या. म. भा. 4/1/4/130 ।
   (ख) "आरग्वचनमनर्थकम्, रकासिद्धत्वात् ? ज्ञापकस्त्वयम् - 'अन्येभ्योऽपि भवती'ति जाण्डारः पाण्डारः" - इत्याह जया. का. 4/1/130 ।
   (ग) "रका सिद्धे यदारग्वचनं तज्ज्ञापनार्थम् । तेनेवं ज्ञायते - अन्येभ्योऽप्ययं भवति, अन्यथा ह्यारग्वचनमनर्थकं स्यात्, रकि सिद्धेः । तेन जण्डस्यापत्यं जाण्डारः, पाण्डार इतिसिद्धं भवति, न ह्येतद्रका सिद्ध्यती"त्याह जि. बु. न्या. 4/1/130 ।
   (घ) "रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम् । जण्डस्यापत्यं जाण्डारः । पण्डस्यापत्यं पाण्डारः" - इत्याह भ. दी. वै. सि. कौ. अपत्याधिकार प्र. पृ. 597 ।
   (ङ) "आरगुदीचाम् (सू. 4/1/130) । रका सिद्धे आरग्वचनम् अन्यतोऽप्ययमिति ज्ञापयति"-इत्याह श्रीना. ज्ञा. सं. 4, पृ. 80 ।
9. गोधाया अपत्यमित्यर्थे गोधाशब्दात् 'आरगुदीचाम् '.-अष्टा. 4/1/130, इति आरकि 'यस्येतिच' - अष्टा. 6/4/148, इत्याकारलोपे तद्धितान्ताद् विभक्तिकार्येषु कृतेपु रूपमिदम् ।
10. व्या.म.भा. 4/1/4/130 ।

नाऽऽख्यान[1]ण्यन्तादस्मात् क्विपो[2]ऽनुत्पत्तिर्भवति, [3]गौणमुख्यन्यायेन च गौणाऽर्थस्य गोधाशब्दस्याऽत्र[4]ग्रहणं न भवति । ज्ञापिते चाऽस्मिन् वचने 'मौण्डारः[5]' '[6]जाण्डारः' '[7]पाण्डारः' इत्येषां सिद्ध्यर्थमत्राऽयं शब्दः स्वांशे चरितार्थो भवति । नहि रक्प्रत्ययविधाने सिद्धिरेषां प्रयोगाणां संभवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'मौण्डारः' -इत्यादि प्रयोगाणां सिद्धिः । यतोऽस्य वचनस्याऽभावे गोधाशब्दात् [8]'गोधायाढ्रक्' इत्यनेन ढ्रक् प्रत्ययं विधाय '[9]आरगुदीचा'मित्यनेन उदीचां मते आरक्प्रत्ययो विहित इति न मुण्डादिशब्देभ्य-आरक् प्राप्नोति। किन्तुगोधाशब्दादेव । अस्य वचनस्य सत्त्वे हि मुण्डादिशब्देभ्योऽनकारान्तेभ्योऽपि 'आरक्प्रत्ययो भवति ।

### 'आलु'जितिशब्दः

[10]'स्पृहि गृहि पतिदयिनिद्रातन्द्रा श्रद्धाभ्य आलु'जित्यत्र 'आलु'जिति प्रत्यय-शब्दः '[11]अन्येभ्योप्ययं भवती' तिवचनस्य [12]ज्ञापकः। यतोऽस्य वचनस्याऽभावेऽत्रायं व्यर्थः । तथाहि – '[13]स्पृहयालुः' '[14]गृहयालुः' '[15]पतयालुः' '[16]दयालुः'

---

1. तत्करोति तदाचष्टे' चुरा.ग.सू.वै.सि.कौ.चुरादि प्र. पृ. 239, इतिविहितण्यन्तादित्यर्थः ।
2. 'क्विप् च' - अष्टा. 3/2/76 ।
3. 'गौणमुख्ययो मुख्ये कार्यसम्प्रत्ययः' प.शे.प. 16, पृ. 101 ।
4. 'आरगुदीचाम्' - अष्टा. 4/1/130 ।
5. मुण्डस्याऽपत्यमित्यर्थे मुण्डशब्दात् 'अन्यतोऽप्यय'मिति वचनात्' 'आरगुदीचाम्' - अष्टा 4/1/130, इति आरक्प्रत्यये प्रकृतेः अकारलोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
6. जण्डस्याऽपत्यमित्यर्थे जण्डशब्दात् 'अन्यतोऽप्यय'मिति वचनात्' आरगुदीचाम्' - अष्टा. 4/1/130, इति आरक्प्रत्यये प्रकृतेः अकारलोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
7. पण्डो = नपुंसकः, क्षेत्रजातत्वाऽऽदिना तस्याऽपत्यमित्यर्थे पण्डशब्दात् 'अन्यतोऽप्यय'मिति वचनात् 'आरगुदीचाम्'-अष्टा. 4/1/130, इतिआरक्प्रत्यये प्रकृतेः अकारस्य लोपे-विभक्तिकार्येषु कृतेषु-रूपमिदम् ।
8. अष्टा. 4/1/129 ।
9. अष्टा. 4/1/130 ।
10. अष्टा. 3/2/158 ।
11. 'सूत्रानिर्दिष्टेभ्योऽपि धातुभ्यः आलुचभवती'तिवचनार्थः ।
12. 'तथाहि –
    (क) किमर्थमालुज् विधीयते न लुशेवोच्येत । का रूपसिद्धिः -स्पृहयालुः गृहयालुः दयालुः । शापि कृते 'अतोदीर्घोयञी'तिदीर्घो भविष्यति ! एवं तर्हि सिद्धे सति यदालुचं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । आलुचि च शीङ्ग्रहणं चोदयिष्यति तत्र कर्तव्यं भवति आलुचि शीङ्ग्रहणम्' । आलुचि शीङ्ग्रहणं कर्तव्यम् । शयालुः" - इत्याह पत. व्या. म. भा. 3/2/2/158 ।
    (ख) स्पृहि गृहि - (सू. 3/2/158 । लुशासिद्धे आलुर्ज्विधानं ज्ञापकम् अन्येभ्योऽप्ययं भवतीति" - इत्याह एन. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 160 ।
13. 'स्पृहीप्सायाम्' धा.पा.चुरा. 1872, इति स्पृह धातोः चुरादित्वाणिणचि तदन्तात् 'स्पृहि.' अष्टा 3/2/158, इत्यालुच्प्रत्यये 'अतोलोप'- अष्टा. 6/4/48, इतिधातोरकारलोपे 'णेरनिटि' -अष्टा. 6/4/51, इतिणिलोपस्याऽपवादेन 'अयामन्ताल्वाय्येत्न्विष्णुषु' - अष्टा.

'[1]निद्रालुः' [2]तन्द्रालुः [3]श्रद्धालुः' - इत्येतेषां प्रयोगाणां सिद्ध्यमारब्धे स्पृह[4]ईप्सायाम् - 'गृह[5] ग्रहणे' 'पत[6]गतौ' चुरादावदन्ताः पठ्यन्ते, 'दय[7]दानगतिरक्षणेषु' 'द्रा[8]कुत्सायां गतौ' निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते, [9]डुधाञ्ह्यत्पूर्व, इत्येतेभ्यस्तच्छीलादिषु कर्तृषु आलुच्प्रत्ययो भवती'त्यर्थकेऽस्मिन्सूत्रे गुरुप्रत्ययवाचक-शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः एतेभ्योधातुभ्यो 'लुश्' -इति लघुप्रत्ययेऽप्यनेन विहिते लुशः सार्वधातुकत्वात्[10]तस्मिन्परे [11]शपि कृते गुणेऽया-देशे[12] च[13] कृते 'स्पृहयालु' रित्याद्यवस्थासु 'अतोदीर्घोयञि'[14] - इतिदीर्घेणैव हि 'स्पृहयालुः '-इत्यादि प्रयोगाणां सिद्धिः सुलभा । ज्ञापिते चाऽस्मिन् वचने

---

6/4/55, इत्यनेन णेरयादेशे विभक्तिकार्येषु रूपमिदम् । लघूपधगुणस्तु नाऽत्र भवति, अल्लोपस्य स्थानिवत्त्वात् ।

14. 'गृह ग्रहणे' धा. पा. चुरा. 1900, इति गृहधातोः चुरादित्वाण्णिचि तदन्तात् 'स्पृहि.' -अष्टा. 3/2/158, इत्यालुच्प्रत्यये 'अतोलोपः'- अष्टा. 6/4/48, इतिधातोरतोलोपे 'णेरनिटि' - अष्टा. 6/4/51, इतिणिलोपस्याऽपवादेन 'अयामन्ताल्वाय्येत्न्विष्णुषु'-अष्टा. 6/4/55, इत्यनेन णेरयादेशे विभक्तिकार्येषु कृतेषु रूपमिदम् । अल्लोपस्य स्थानिवत्त्वान्नेह लघूपधगुणः ।

15. 'पत गतौ वा' धा.पा.चुरा. 1862, इतिपतधातोः चुरादित्वाण्णिचि तदन्तात् 'स्पृहि.' -अष्टा. 3/2/158, इत्यालुच् प्रत्यये' अतोलोपः' - अष्टा. 6/4/48, इतिधातोरतोलोपे 'णेरनिटि' - अष्टा. 6/4/51, इतिणिलोपस्याऽपवादेन 'अयामन्ताल्वाय्येत्न्विष्णुषु' -अष्टा. 6/4/55, इत्यनेन णेरयादेशे विभक्तिकार्येषु कृतेषु रूपमिदम् । अल्लोपस्य स्थानिवत्त्वान्नाऽत्रोप-धावृद्धिर्भवति ।

16. 'दय दानगतिरक्षणहिंसाऽऽदानेषु' धा.पा.भ्वा. 481, इतिदय्धातोः 'स्पृहि.' - अष्टा. 3/2/158, इत्यालुच् प्रत्यये' विभक्तिकार्येषु कृतेषु—रूपमिदम् ।

1. निपूर्वकात् 'द्रा कुत्सायां गतौ' धा. पा. 1058, इति द्राधातोः 'स्पृहि.' -अष्टा. 3/2/158, इत्यालुच्प्रत्यये विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. तच्छब्दपूर्वकात् 'द्रा कुत्सायां गतौ' धा.पा.अदा. 1054, इति द्राधातोः 'स्पृहि.'-अष्टा. 3/2/158, इत्यालुच् प्रत्यये तदो नान्तत्वे च निपातिते विभक्तिकार्येषु कृतेषु रूपमिदम् ।
3. 'श्र'दित्यव्ययं, तत्पूर्वात् 'डुधाञ्धारणपोषणयोः' धा.पा. जुहो. 1092, इतिधाधातोः 'स्पृहि.' -अष्टा. 3/2/158, इत्यालुच्प्रत्यये विभक्त्यादिकार्येषु कृतेषु रूपमिदम् ।
4. धा. पा. चुरा. 1872 ।
5. धा.पा. चुरा. 1900 ।
6. धा.पा. चुरा. 1862 ।
7. धा.पा. भ्वा. 481
8. धा. पा. अदा. 1054 ।
9. 'डुधाञ्धारणपोषणयोः' - धा.पा. जुहो. 1092 ।
10. 'तिङ्शित् सार्वधातुकम्' - अष्टा. 3/4/113 ।
11. 'कर्त्तरिशप्' - अष्टा. 3/1/68 ।
12. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84 ।
13. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।
14. अष्टा. 7/3/101 ।

सूत्राऽनिर्दिष्टेभ्योऽपि धातुभ्यः प्रत्ययः स्याप्तथा सति '[1]शयालु'-रित्यादिप्रयोगाणां सिद्ध्यर्थमत्राऽयं गुरुप्रत्ययशब्दः स्वांशे चरितार्थो भवति । यतोऽत्र शपो[2]लुको[3]-दुर्वारतयाऽतोदीर्घा[4]ऽभावाद् लघुलुश्प्रत्यविधानेन नैषां सिद्धिः सम्भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु सूत्रऽनिर्दिष्टधातुभ्यः शीङ्प्रभृतिभ्योऽप्या-लुच्प्रत्ययोत्पत्तिः । तेन[5] 'आलुविशिष्टग्रहण'मितिवार्तिकान्नवज्ञापितवचनेनाऽनेन 'कृपालुः' 'स्पर्द्धालुः' -इत्येतयोः साधुत्वेऽपि वार्तिकमिदं स्वीकुर्वतोः [6]जयादित्य-भट्टोजिदीक्षितयो[7]र्मते कथमनयोः साधुत्वमितिशङ्कनीयम् । यतोऽनयोरपि मते कृपां श्रद्धां व लातीति विग्रहे [8]मृगय्वादित्वात् लाधातोः कु[9]प्रत्यये [10]साधुत्वमनयोः सुलभम् ।

जिनेन्द्रबुद्धिस्तु '[11]आलुचि शीङो ग्रहणं कर्तव्यम्' - इति वार्तिकं व्याचक्षाणः '[12]पूर्वसूत्रादत्र[13]सूत्रे चकाराऽनुवृत्तिं स्वीकृत्य चकारस्यानुक्तसमुच्चयार्थकतया[14] अपि प्रकृतित्वेन गृह्यत इति मनुते[15] ।

---

1. 'शीङ्स्वप्ने' धा.पा.अदा. 1032, इतिधातोः 'अन्येभ्योऽप्यय' मिति वचनबलेन 'स्पृहि.' - अष्टा. 3/2/158, इत्यालुचि आर्धधातुकलक्षणे गुणेऽयादेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. 'कर्त्तरिशप्' अष्टा. 3/1/68 ।
3. 'आदिप्रभृतिभ्यः शपः' -अष्टा. 2/1/72 ।
4. 'अतोदीर्घोयञि' - अष्टा. 7/3/101 ।
5. व्या.म.भा. 5/2/2/158 ।
6. अनेन हि शब्दस्याऽस्यैतद्वचनज्ञापकत्वमनिर्दिश्य "आलुशीङो ग्रहणं कर्तव्यम्' शयालुः" -इत्युक्तम् - वा.वा. 3/2/158 ।
7. 'अनेन हि शब्दस्याऽस्य 'अन्येभ्योऽप्ययमिति वचनमेतछब्दज्ञापितमनिर्दिश्य "शीङो वाच्यः' शयालुः "-इत्युक्तम् वा.वै.सि.कौ. पूर्वकृतन्त प्र. पृ. 452 ।
8. 'मृगय्वादिराकृतिगणः । "आकृतिगणोऽयम्" - इत्याह भ.दी. वै.सि. कौ. उणा.प्र. पृ. 464 ।
9. 'मृगय्वादयश्च' उणा. सू. 37 ।
10. 'कृपालुः' 'स्पर्धालुः' -इत्यनयोरित्यर्थः ।
11. वा का. 3/2/158 ।
12. 'जिदृक्षि विश्रीण् वमाव्यथाभ्यमपरिभू प्रसूभ्यश्च' - अष्टा. 3/2/157, इतिसूत्रादित्यर्थः ।
13. 'स्पृहि गृहि पति दयि निद्रातन्द्रा श्रद्धाभ्य आलुच् - अष्टा. 3/2/158, इति सूत्रे इत्यर्थः ।
14. 'शीङ् स्वप्ने धा.पा,अदा. 1032 ।
15. तथाहि –
"आलुचीत्यादि शीङ् गृह्यते । येन तच् शीङ्ग्रहणं तत् पुनर्व्याख्यान'मित्येतदुक्तं भवति । तद्व्याव्यानं-कर्तव्यं येनालुचि विधातव्ये शीङोऽपि ग्रहणं भवति । तत्रेदं व्याख्यानम् पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चर्थः , तेन शीङ्पि प्रकृतित्वेन गृह्यत इती"त्याह जि.बु.न्या. 3/2/158 ।

ज्ञापकत्वमस्य शब्दस्य भाष्यकृत्सम्मतमिति 'यथोत्तरं मुनीनां[1]प्रमाण्य'मित्युक्ते र्युक्तं मन्ये ।

## 'इ'जितिशब्दः

'[2]नादिची'त्यत्र 'इ'जितिशब्दः 'न जश्शसोः पररूपं भवती'ति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – '[4]शिवोऽर्च्यः' - इत्यत्र 'शिव + उ – अर्च्य'इत्यवस्थायां 'रामा[5]'वित्यादौ 'राम + औ' इत्यवस्थायां च प्राप्तस्य [6]पूर्वसवर्णदीर्घस्य प्रतिषेधार्थमारब्धे 'अवर्णादिचि परे न पूर्वसवर्णदीर्घः स्या'दित्यर्थकेऽस्मिन् सूत्रे 'रामाः' - इत्यादौ 'राम + अस्' इत्यवस्थायां प्राप्तस्य

---

1. भ.दी.वै.सि.कौ. अजन्तपुंलिङ्ग प्र.पृ. 113 ।
2. अष्टा. 6/1/104 ।
3. तथाहि –
   (क) " 'इजूग्रहणं ज्ञापकं पररूपाऽभावस्य' । यदयं नादिचीचौतीज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो' न जश्शसोः पररूपं भवती'ति । कथं कृत्वा ज्ञापकम् ? । इज्ग्रहणस्यैतत्प्रयोजनम्, इह माभूत्, वृक्षाः प्लक्षाः । वृज्ञान् ल्पक्षान् । यदि च जश्शसोः पररूपं स्यादिज्ग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो न जश्शसोः पररूपं भवती'ति तत इज्ग्रहणं करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत् स्याद्दीर्घाज्जसि च । इचि चेति । यद्युत्तरार्थमेतत् स्यात्तत्रैवायमिज्ग्रहणं कुर्वीत । इहापि क्रियमाणं यद्युत्तरार्थं, न ज्ञापकं भवति । एवं तर्हि यद्युत्तरार्थमेतत्स्यात्रैवायमिज्ग्रहणं कुर्वीतनापि जस्ग्रहणम् (कुर्वीत) । एतावदयं ब्रूयात् 'दीर्घाच्छन्दसि पूर्वसवर्णोभवती'ति, तन्नियमार्थं भविष्यति - 'दीर्घाच्छन्दस्येव नान्यत्रे'ति । सोऽयमेवं लयो यसा न्यासेन सिद्धे यदिज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो' न जश्शसोः पररूपं भवती'ति" इत्याह पत. व्या. म. भा. 6/1/5/102 ।
   (ख) "प्रथमयोः (सू. 6/1/102) । 'नादिचि' (सू. 6/1/104) इति इज्ग्रहणं ज्ञापयति न जश्शसोः पररूपं भवतीती"त्याह एन्. एस. रामा. ज्ञा. सं. परि. 1, पृ. 175 ।
4. शिवर् + अर्च्य इति स्थिते 'अतोरोरप्लुतादप्लुते' - अष्टा. 6/1/113, इति रेफस्य उत्वे 'आद्गुणः' अष्टा. 6/1/187, इत्यनेन गुणैकाऽऽदेशे 'एङः पदान्तादति' - अष्टा. 6/1/109, इतिपूर्वरूपैकाऽऽदेशे च कृते रूपमिदं सिद्ध्यति । न चाऽत्रोत्वं परत्वाद् बाधित्वा 'भोभगो अघो अपूर्वस्य योऽशि' - अष्टा. 8/3/17, इति यत्वेन भाव्यमिति शङ्क्यम् । उत्वहि यत्वस्याऽपवादः । न चाऽत्र पूर्वत्रासिद्धम्' - अष्टा. 8/2/1, इत्यनेन यत्वस्याऽसिद्ध-त्वादुत्वानवधिमितिशङ्क्यम् । यतः कृतेऽपि उत्वे तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं दुर्निवारम् । यद्यपि 'भोभगो अघो' - इत्यंशे - उत्वं नापवादः, तथापि अपूर्वस्य - इत्यंशे उत्वमपवादः, प्राप्त एव अपूर्वस्य रोर्यत्वे 'अतोरोरप्लुदप्लुते' - अष्टा. 6/1/113, इत्यस्यारम्भात् । अत्र 'शिव + उ + अर्च्य' इत्यवस्थायां 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102, इति पूर्वसवर्णदीर्घस्तु न भवति, 'नादिचि' - अष्टा. 6/1/104, इत्यनेन तत्प्रतिषेधात् ।
5. रामशब्दादौ विभक्तौ 'वृद्धिरेचि'-अष्टा. 6/1/88, इति वृद्ध्यैकाऽऽदेशे रूपमिदम् । न चाऽत्र 'राम + औ' - इत्यवस्थायां 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102, इति-पूर्वसवर्णदीर्घः शङ्क्यः । 'नादिचि' - अष्टा. 6/1/104, इत्यनेन तत्प्रतिषेधात् ।
6. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।

पूर्वसवर्णदीर्घस्य[1] प्रतिषेधाऽभावायोपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । यतोऽत्र 'राम+ अस्' - इत्यवस्थायां[2]पूर्वसवर्णदीर्घं बाधित्वा [3]पररूपे कृते [4]पूर्वसवर्णदीर्घस्य प्राप्तिरेव नास्तीति तत्प्रतिषेधार्थमुपात्तोऽयं शब्दो व्यर्थः । ज्ञापिते चाऽस्मिन्वचने 'रामा' - इत्यादौ 'राम + अस्' इत्यवस्थायामनेन वचनेन [5]पररूपाऽभावे प्राप्तस्य पूर्वसवर्णदीर्घस्य[6]प्रतिषेधाभावाऽर्थमयं शब्दः स्वांशे चरितार्थो भवति । न च 'विश्वपौ[7]' 'गौर्यः[8]' - इत्यादौ [9]पूर्वसवर्णदीर्घाभावार्थमारब्धे 'दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः' इत्यर्थके 'दीर्घाज्जसि चे'तिसूत्रेऽनुवृत्त्यर्थमिजिति-शब्दश्चरितार्थ इति कथमस्योक्तवचन- ज्ञापकत्वमिति शङ्क्यम् । यतस्तदर्थत्वे '[10]दीर्घादिज्जसो'रित्येव सूत्रं कुर्यात्, न च तथा कृतमितीहोपात्तोऽयमिहार्थ[11] एवेति वक्तव्यम्, न चाऽस्य वचनस्याऽभावे [12]इहार्थत्वमस्य संभवतीत्यसौ शब्दो व्यर्थः सन् ज्ञापक एवोक्तवचनस्य । ज्ञापितस्याऽस्य वचनस्य फलं तु 'रामाः' इत्यादि प्रयोगाणां सिद्धिः । अस्य वचनस्याऽसत्त्वे हि [13]पररूपस्य '[14]आद्गुण-[15]यणादेश-वृद्धि[16]-[17]सवर्णदीर्घ-[18]पूर्वसवर्णदीर्घाणामपवादतया[19] पूर्वसवर्णदीर्घात् प्रागेव प्रवृत्तौ, कृते

---

1. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
2. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
3. 'अतो गुणे' - अष्टा. 6/1/67 ।
4. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
5. 'अतो गुणे' - अष्टा. 6/1/67 ।
6. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
7. 'विश्वं पाति = रक्षतीत्यर्थे क्विपि निष्पन्नाद् विश्वपाशब्दादौविभक्तौ 'वृद्धिरेचि' - अष्टा. 6/1/88, इति वृद्ध्येकाऽऽदेशेनौकारे रूपमिदम् । अत्र 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102, इति - पूर्वसवर्णदीर्घस्तु न भवति, 'दीर्घाज्जसि च' - अष्टा. 6/1/105, इत्यनेन निषेधात् ।
8. गौरीशब्दाज्जसि 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102, इतिप्राप्तस्य पूर्वसवर्णदीर्घस्य 'दीर्घाज्जसि च'- अष्टा. 6/1/105, इत्यनेन निषेधे 'इको यणचि'-अष्टा. 6/1/77, इतियणि रूपमिदम् ।
9. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
10. अष्टा. 6/1/105 ।
11. 'नादिचि' - अष्टा. 6/1/104, इत्येतदर्थत्वमित्यर्थः ।
12. 'नादिचि' - अष्टा. 6/1/104, इत्येतदर्थत्वमित्यर्थः ।
13. 'अतो गुणे' - अष्टा. 6/1/67 ।
14. 'आद्गुणः' - अष्टा. 6/1/87 ।
15. 'इको यणचि' - अष्टा. 6/1/77 ।
16. 'वृद्धिरेचि' - अष्टा. 6/1/88 ।
17. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
18. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
19. तथाहि– "आद्गुणयणादेशावुत्सर्गौ । तयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशाः । तेषां सर्वेषां पररूपमपवादः । तत्सर्वबाधक"मित्याह पत. व्या. म. भा. 6/1/5/102 ।

पररूपे 'राम+स्' इत्यवस्थायां पूर्वसवर्णदीर्घस्याऽप्राप्त्या तदभावे नैतेषां सिद्धिः स्यात् । सति त्वस्मिन् वचनेऽनेन [1]पररूपप्रतिषेधात् पूर्वसवर्णदीर्घस्य[2] सुलभतया सिद्धिरेषा भवति ।

## 'इडि'तिशब्दः

'[3]आर्धधातुकस्येड्वलादे'रितिसूत्रे 'इ'डितिशब्दः '[4]एकयोगनिर्दिष्टानां सह वा प्रवत्तिः, सह वा निवृत्तिः 'इतिपरिभाषाया ज्ञापकः[5] । यतोऽस्या अभावे सूत्रेऽस्मिन् 'इ'डितिशब्दो व्यर्थः । अस्या अभावे हि '[6]नेड्वशि कृती'त्योऽनुवृत्त्यैवेटो लाभोऽत्र सुलभः । ज्ञापितायां चाऽस्यां नकाररहितस्येटोऽनुवृत्तिस्ततो न सम्भवतीति -

---

1. 'अतोगुणे'-अष्टा. 6/1/67 ।
2. 'प्रथमयोः पूर्वसवर्णः' - अष्टा. 6/1/102 ।
3. अष्टा. 7/2/35 ।
4. (क) पु. दे. ल. प. वृ. प. 24, पृ. 122 ।
   (ख) सी. दे. बृ., प. वृ. प. 14, पृ. 175 ।
   (ग) नी. दी. प. वृ. प. 19, पृ. 296 ।
   (घ) 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' - ह. भा. प. भास्क. प. 14, पृ. 327 ।
   (ङ) भ. ना. प. शे. प. 18, पृ. 111 ।
5. तथाहि –
   (क) "इडिति वर्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्" - इतिग्रन्थेन ज्ञापकत्वमस्यैतस्याः सूचयति वाम. का. 7/2/35 ।
   (ख) "तद्धीड्ग्रहणं प्रतिषेधेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते । ननु च प्राप्तौ सत्यां प्रतिषेधः स्यात् नच वलादेरार्धधातुकस्य केनचिदिट्प्राप्नोति, अतः प्राप्त्यभावादेव विधिरयं विज्ञास्यते, न प्रतिषेधः ? नैतदस्ति, एतस्मादेव प्रतिषेधवचनाद् विधिरप्यनुमीयते । नूनमार्धधातुकस्येड्विधिरस्तीति येन वलादेः प्रतिषेधं शास्ति । पुनरिड्ग्रहणात् तु विधिरेष विज्ञास्यते"इतिग्रन्थेन ज्ञापकत्वमस्यैतस्याः सूचयति जि. बु. न्या. 7/2/35 ।
   (ग) "केन पुनः प्राप्तस्य प्रतिषेधः शङ्क्यते ? इदमेव वचनं कल्पकं स्यात्, अस्त्वार्धधातुकमात्रस्येट्, यतो वलादेः प्रतिषिध्यत इति । 'नेड् वशि कृति' इत्यादिकस्तु - प्रतिषेधो नियमार्थः स्या"दितिग्रन्थेन ज्ञापकत्वमस्यैतस्यां सूचयति ह. मि. पदम. 7/2/35 ।
   (घ) "नेड्वशि कृती'त्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसंबद्धस्येटो निवृत्त्यर्थ'-मितिग्रन्थेन ज्ञापकत्वमस्यैतस्यां सूचयति ज्ञा. भि. भ्वादि प्र. पृ. 18 त. बो. ।
   (ङ) "अत्र च ज्ञापकम् - 'नेड्वशिकृति' (7/2/8) इत्यत्रेड्इत्यनुवर्तमानेनापि सिद्धौ 'आर्धधातुस्येड्वलादेः (7/2/35) - इत्यत्र पुनरिड्ग्रहणम् । यदि चान्वितपदार्थक-पदैकदेशानुवृत्तिरिष्येत ततो व्यर्थमेवेड्ग्रहणं स्या"दित्याह नीलकण्ठ. दी. प. वृ. प. 19, पृ. 296 ।
6. अष्टा. 7/2/8 ।

सूत्रेऽस्मिन्निटो विधानार्थमिड् इतिशब्दः स्वांशे चरितार्थो भवति । न च प्राप्तौ सत्यां प्रतिषेधो भवति, वलादेरार्धधातुकस्य न केनचिदपीट्प्राप्नोतीति प्राप्त्यभावादिह नकारसहितस्येटोऽनुवृत्तावपि विधित्वमस्य सुलभमतोऽत्र सूत्रेऽस्या अभावेऽपीडिति-शब्दश्चरितार्थ इति शङ्क्यम् । यतोऽस्मादेव प्रतिषेधवचनान्नूमार्धधातुकस्ये-डवधिरधिरस्तीत्यनुमातुं शक्यत इति प्रतिषेधत्वमेवाऽस्याः स्यात् । इत्थमत्रेड् इतिशब्दोऽस्य विधित्व-सम्पादनाय परिभाषामिमां ज्ञापयति । ज्ञापिताया अस्याः फलं तु 'अतो [1]लान्तस्ये'त्यत्र' सिचिवृद्धिः[2] परस्मैपदेषु' इत्येतस्य सर्वस्य, 'भावे[3]'इत्यत्र 'सृ[4]स्थिरे'- इत्येतस्य सर्वस्य, '[5]उश्चे'त्यत्र लिङ्सिचावात्मनेपदेषु[6]'- इत्येतत्सर्वस्य चानुवृत्तिसिद्धिः । अस्या अनित्यत्वमत्रैव शोधप्रबन्धेऽन्यत्र[7]निरूपितमिति नेह प्रतन्यते ।

भट्टनागेशस्तु '[8]दीर्घाविवेवीटा'मिति सूत्रस्थभाष्यविरोधादिडि'तिशब्दोऽत्र न ज्ञापक इति[9]मनुते । यतस्तत्रेड्ग्रहणं भगवता प्रत्याख्यातम् । तच्च प्रत्याख्यानम् - " '[10]आर्धधातुकस्येड्वलादे'रित्यत्र 'इ'डित्यनुवर्तमाने[11]पुनरिड्ग्रहणस्य प्रयोजनम् - इह-इडेव यथा स्याद्यदन्यत् प्राप्नोति तन्माभू'दिति । किं चान्यत् प्राप्नोति ? । गुणः[12]" इत्युक्त्वा कृतम् । प्रत्याख्यानमिदिमिड्ग्रहणस्यैतत्परिभाषाज्ञापकत्वाभ्युपग-मे स्फुटं विरुद्धम् । भाष्यदृष्ट्या हि तत्रेड्ग्रहणम् '[13]अकणिष'मित्यादौ [14]गुणनिवृत्तये चरितार्थम् । [15]शेषाद्रिरपि तथ्यमिदं स्वीकरोति । युक्त चैतत् । सूत्रारम्भसामर्थ्येन नञो निवृत्तौ नात्रेडिति शब्दः स्वांशे चरितार्थः ।

---

1. अष्टा. 7/2/2 ।
2. अष्टा. 7/2/1 ।
3. अष्टा. 3/3/18 ।
4. अष्टा. 3/3/17 ।
5. अष्टा. 1/2/12 ।
6. अष्टा. 1/2/11 ।
7. 'हनः सिच्' - अष्टा. 1/2/14, इति सूत्रस्थस्य'सि'जितिशब्दस्य ज्ञापकत्वनिरूपणा-वसरे'इत्यर्थः ।
8. अष्टा. 1/1/6 ।
9. द्रष्टव्यः परिभाषेन्दुशेखरः प. 18, पृ. 111 ।
10. अष्टा. 7/2/35 ।
11. 'नेड्वशिकृति' - अष्टा. 7/2/8, इतिसूत्रादितिशेषः ।
12. व्या. म. भा. 1/1/4/6 पृ. 234 ।
13. " ..... 'कण........ शब्दार्थाः' धा. पा. भ्वा. 449, इति कणधातोर्लुङ उत्तमपुरुषैकवचने रूपम् ।
14. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86, इतिलघूपधगुणस्येत्यर्थः ।
15. अनेन हि-"आर्धधातुकस्येड्वलादेः' (7/2/35) इतिसूत्रे पुनरिड्ग्रहणं तु न ज्ञापकम्, तस्येटो गुणनिवृत्त्यर्थत्वात् । एतच्च 'दीधीवेवीटाम्' (7/1/6) इतिसूत्रे भाष्ये स्पष्ट"मित्युक्तम् ।

अत्र - "वस्तुतस्तु दीधीवेवीटामितिसूत्रस्थं भाष्यमेकदेश्युक्तिः । 'आर्धधातुकस्ये'ति सूत्रस्थेड्ग्रहणस्य 'नेड्वशी'ति सूत्रे भाष्ये [1]प्रत्यख्याना"दिति भट्टनागेशोक्तिः [2]शेषाद्रये न रोचते । तस्माद् 'आर्धधातुकस्येड्वलादे'रितिसूत्रस्थस्य इडितिशब्दस्यैतस्याऽज्ञापकत्वं नीलकण्ठदीक्षितोक्तं[3] वामन - जिनेन्द्रबुद्धि - हरदत्तमिश्र - ग्रन्थ[4] - सूचितं न युक्तमिति निश्चीयते । अतः परिभाषाया अस्या [5]ज्ञापकद्वयमत्रैव शोधप्रबन्धेऽन्यत्र[6] निरूपितम् ।

## 'इ'तीतिशब्दः

'[7]तस्मादियुत्तरस्ये'त्यत्र 'इ'तीतिशब्दः '[8]क्वचिदेकदेशोऽप्यनुवर्तते'- इतिपरि-

---

1 प. शे. प. 18, पृ. 111 ।

2 अनेन हि - "यत्तु 'आर्धधातुकस्येड्वलादेः (7/2/35) इतिसूत्रे इड्ग्रहणं 'नेड्वशि' (7/2/8) इत्यत्र भाष्ये प्रत्याख्यातमिति नव्योक्तम्, (परि. शे. परि. 17) तदप्ययुक्तम् । 'नेड्वशि' (7/2/8) इति सूत्रे यदि स्वल्पोऽप्येषोऽभिप्रायः द्विरिड्ग्रहणं न क्रियेतेति । पुरस्तादपि प्रतिषेधे सति तत्र करिष्यते । कथम् । इदमस्ति - 'नेड्वशि कृति' (7/2/8) इति । ततो वक्ष्यामि 'आर्धधातुकस्येड्वलादेः' - (7/2/35) इति । इड्ग्रहणमनुवर्तते । नेति निवृत्तम् । (महाभाष्य 7/2/8) इति वदन् भाष्यकार इड्विधानार्थं तत्रेड्ग्रहणं न कर्तव्यमित्याह, न तु विकारान्तरनिवत्त्यर्थमपि अन्यथा 'दीधीवेवीटाम्' (1/1/6) इति सूत्रस्थभाष्यविरोधात् । नचेदं भाष्यमेकत्रेड्ग्रहणेनैवोपपत्तौ इड्द्वयाङ्गीकारेण प्रवृत्तत्वाद्गौरवग्रस्तत्वादेकदेश्युक्तिरितियुक्तम् । तथा सति इटो गुणप्रसङ्गात् तदर्थं 'क्ङिति च' (1/1/5) इति सूत्रानन्तरम् 'इटश्च' इति सूत्रकरणे अतिगौरवापत्तेः । 'एकयोगनिर्दिष्टनाम् -' इति न्यायविरोधेन 'इडितिवर्तते । नेति निवृत्तम्' इति (महाभाष्य 7/2/8) भाष्यस्यैवैकदेश्युक्तिकल्पनौचित्यात् । 'क्वचिदेकदेशोऽप्यनुवर्तते' (परि. शे. परि. 18) इतिन्यायेन तत्समर्थनेऽपि विधेयसमर्पणार्थमिड्ग्रहणं न कर्तव्यमिति तदाशयो युक्तः, नतु विकारान्तरनिवृत्त्यर्थमपीड्ग्रहणं न कर्तव्यमिति, इति 'दीधीवेवीटाम्' (1/1/6) इति सूत्रस्थभाष्यविरोधादित्यवधेय"मित्युक्तम् प. भास्क. प. 17, पृ. 401-402 ।

3. प. भास्क. प. 19, पृ. 296 ।

4. का. न्या. पदम. 7/2/35 ।

5. 'हनः सिच्' - अष्टा. 1/2/14 इतिसूत्रे 'सि'जितिशब्दः, 'अदसोमात्' अष्टा. 1/1/12. इति सूत्रे 'मा'दिति शब्दश्चेत्येनद्द्वयमित्यर्थः ।

6. 'ज्ञापकाः सूत्रांशाः' - इति प्रघट्टक' - इत्यर्थः ।

7. अष्टा. 1/1/67 ।

8. (क) "एकयोगनिर्दिष्टानामप्येकदेशानुवर्तनम्" व्याडिः प. सू. प. 23, पृ. 12 ।
(ख) पु. दे. ल. प. वृ. प. 25, पृ. 122 ।
(ग) सी. दे. बृ. प. वृ. प. 1, पृ. 175 ।
(घ) नी. दी. प. वृ. प. 10, पृ. 295 ।
(ङ) ह. भा. प. भास्क. प. 8, पृ. 321 ।
(च) "एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते" भ. ना. प. शे. प. 19, पृ. 112 ।
(छ) "एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते"-शेषा. प. भास्क. प. 18, पृ. 402 ।

भाषाया ज्ञापकः[1] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । सहैव पदानामनुवृत्तौ हि [2]'तस्मिन्निति निर्दिष्टेपूर्वस्ये'त्यतो निर्दिष्टग्रहणवदितिकरणस्याऽप्यनुवृत्त्येवाऽत्र सूत्रेलाभः सुलभः । ज्ञापितायां चास्याऽमनया निर्दिष्टग्रहणमेव[3] केवलमनुवर्तते नेति-करणमिति तदर्थलभायाऽत्राऽयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'ब्रुवः [4]पञ्चानामादित आहो ब्रुवः' - इत्यत्र 'विदो[5]लटो वा' - इत्यतो 'विद' - इत्यस्यानुवृत्त्यभावः केवलस्य लट एवाऽनुवृत्तिसिद्धिः, '[6]अजाद्यतष्टाप्'-इत्यत्र

---

1. तथाहि–
   (क) "एकयोगनिर्दिष्टानामप्येकदेशः प्रवर्तते एकदेशश्च निवर्तते । कथं ज्ञायते । यदयं 'तस्मादित्युत्तरस्य' (1/1/67) इत्याह । कथं कृत्वा ज्ञापकम् । अत्र सूत्रे इतिकरणं न कर्तव्यम् । प्रवृत्तत्वात् । क्व प्रकृतत्वम् । 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (1/1/66) इति । अथवा तन्नानुवर्तते निर्दिष्टग्रहणमपि कर्तव्यं भवति । एवं सिद्धे सति यदितिकरणं करोति तज्ज्ञापयत्याचार्यः इतिकरणो नानुवर्तते निर्दिष्टग्रहणमनुवर्तत इति । एवं सति किं कृतं भवति । एकयोगनिर्दिष्टानामप्येकदेशानुवर्तनमित्येतज्ज्ञापितम्भवति । किमेतस्या ज्ञापने प्रयोजनम् । 'कृतेग्रन्थे' (4/3/116) इत्यधिकृत्य 'संज्ञायाम्' (4/3/117) इत्यत्र ग्रन्थ इति - निवृत्तम् । तथा 'संख्याव्ययादेर्ङीप्' (4/1/26), 'दामहायनान्ताच्च' (4/1/27) इत्यत्र संख्यादेरित्यनुवर्तते अव्ययादेरिति निवृत्त"-मित्याह व्याडिः प. सू. प. 23, पृ. 12 ।
   (ख) "ज्ञापकं चात्र 'तस्मिन्नितिनिर्दिष्टे पूर्वस्य (1/1/66) इति इतौ प्रकृते पुनरितिकरणं 'तस्मादित्युत्तरस्य' (1/1/67) इति । यदि हि सहैव पदानामनुवृत्तिर्भवति तदा निर्दिष्टग्रहणवदितिकरणोऽपि पूर्वसूत्रादेवानुवर्तिष्यत इति किमितिकरणेन । तत्कुर्वन्नाचार्यो ज्ञापयति । क्वचिदेकदेशोप्यनुवर्तत एव । निर्दिष्टग्रहणमेव केवल-मनुवर्तते नेतिकरण"मित्याह पु. दे. ल. प. वृ. प. 25, पृ. 122-123 ।
   (ग) "ज्ञापकं चात्र 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (1/1/66) इत्यत्र इतिशब्दे प्रकृते 'तस्मादित्युत्तरस्य' (1/1/67) इति पुनरिति-शब्दः । यदि हि सहैव पदानामनुवृत्तिः स्यात् तदा निर्दिष्टग्रहणवदितिशब्दोऽप्यनुवर्तिष्यते पूर्वसूत्रात् । तत्किमितिकरणेन् । तत्कुर्वन्नाचार्यो ज्ञापयति क्वचिदेकदेशोऽप्यनुवर्तत इति । एवं हि सति निर्दिष्टग्रहणमेव केवलमनुवर्तते नेतिकरणमिती"त्याह सी. दे. बृ. प. वृ. प. 8, पृ. 170 ।
   (घ) "परिभाषायां ज्ञापकं 'तस्मादित्युत्तरस्य' (1/1/67) इत्यत्र इतिशब्दोपादानम् । अन्यथा निर्दिष्टपदवदितिशब्दानुवृत्त्यैव सिद्धौ किं तेनेति केचित्" - इत्याह ह. भा. प. भास्क. प. 8, पृ. 322 ।
2. अष्टा. 1/1/66 ।
3. 'तस्मिन्निति निर्दिष्टे पूर्वस्य - अष्टा. 1/1/66, इतिसूत्रादितिशेषः ।
4. अष्टा. 3/4/88 ।
5. अष्टा. 3/4/83 ।
6. अष्टा. 4/1/4 ।

'ङ्याप्प्रातिपदिकात्'[1] - इत्यतो ङ्यापोरनुवृत्त्यभावः केवलस्य प्रातिपदिकादित्यस्यैवानुवृत्तिसिद्धिः, '[2]दामहायनान्ताच्च'-इत्यत्र '[3]संख्याव्ययादेर्ङीप्'-इत्यतोऽव्ययादे'रित्यस्याऽनुवृत्त्यभावः केवलस्य संख्याग्रहणस्याऽनुवृत्तिसिद्धिः, 'झोन्तः[4]'इत्यत्र '[5]आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीना'मित्यत आदिग्रहणाऽनुवृत्त्यभावः केवलस्य प्रत्ययग्रहणस्याऽनुवृत्तिसिद्धिः, 'येषां च विरोधः[6] शाश्वतिकः' इत्यत्र 'क्षुद्रजन्तवः[7]' इत्यतः 'क्षुद्रे'त्यस्याऽनुवृत्त्यभावः, केवलस्य जन्तुग्रहणस्यैवाऽनुवृत्तिसिद्धिश्च । अस्या असत्त्वे हि नैतेषु सूत्रेषु तत्सूत्रेभ्यः तस्य तस्याऽनुवृत्त्यभावास्तस्य तस्याऽनुवृत्तयश्च सिद्ध्येयुः । यतः 'एकयोगनिर्दिष्टानां सह[8]वा प्रवृत्तिः सह वा निवृत्तिः' - इत्युक्तम्[9] । नीलकण्ठदीक्षित - भट्टनोगेश - शेषाद्रिसुधयस्तु तावन्मात्रांशे स्वरितत्वप्रतिज्ञानात् 'स्वरितेनाधिकारः' - अष्टा. 1/3/11, इतिसूत्रलभ्या, 'क्वचिदेकदेशोऽप्यनुवर्तते'इतिसूत्रलभ्या च 'क्वचिदेकदेशोऽप्यनुवर्तते'इतिपरिभाषेति [10]मन्वते ।

## 'इन्धी'तिशब्दः

'[11]इन्धिभवतिभ्यां चे'त्यत्र 'इन्धी'तिशब्दः '[12]इजादे'रितिविहितस्याऽऽमोऽनित्य-

---

1. अष्टा. 4/1/1 ।
2. अष्टा. 4/1/27 ।
3. अष्टा. 4/1/26 ।
4. अष्टा. 7/1/3 ।
5. अष्टा. 7/1/2 ।
6. अष्टा. 2/4/9 ।
7. अष्टा. 2/4/8 ।
8. (क) पु. दे. ल. प. वृ. प. 24, पृ. 122 ।
   (ख) सी. दे. बृ. प. वृ. प. 14, पृ. 175 ।
   (ग) नी. दी. प. वृ. प. 19, पृ. 296 ।
   (घ) संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' - ह. भा. प. भास्क. प. 14, पृ. 327 ।
   (ङ) भ. ना. प. शे. प. 18, पृ. 111 ।
   (च) शेषा. प. भास्क. प. 17, पृ. 401 ।
9. पुरुषोत्तमदेव - सीरदेव - नीलकण्ठदीक्षित- हरिभास्कर-भट्टनागेश - शेषाद्रिभिरितिशेषः ।
10. तथाहि–
   (क) "यद्देशे स्वरितत्वप्रतिज्ञानमस्ति तावदेवानुवर्तते इत्यर्थः" - इत्याह नी. दी. प. वृ. प. 10, पृ. 295 ।
   (ख) "तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्" - इत्याह भ. ना. प. शे. प. 19, पृ. 112 ।
   (ग) "एकदेशे स्वरितत्वप्रतिज्ञानात्सिद्धमिदम्" - इत्याहशेषा. प. भास्क. प. 18, पृ. 402 ।
11. अष्टा. 1/2/6 ।
12. 'इजादेश्च गुरुमतोऽनृच्छः' - अष्टा. 3/1/36 ।

त्वमिति वचनस्य ज्ञापकः[1] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दोऽनुपपन्नः । तथाहि– 'इन्धि-भवति - इत्येताभ्यां परो लिट्प्रत्ययः किद्भवती'त्यर्थकेऽस्मिन्सूत्रे शब्दोऽयं [2]'समीधे दस्युहन्तमम्' 'पुत्र[3]ईधे अथर्वणः' इत्यादौ 'अनिदितांहल [4]उपधायाः क्ङिती'तिसूत्रेणाऽ[5]नुनासिकलोपार्थं लिटि कित्त्वमतिदेष्टुमुपात्तः । स चाऽस्य वचनस्याऽभावेऽनुपपन्नः । नित्ये [6]ह्यामि तेन व्यवधानादेवेन्धेः परो लिण् न सम्भवतीति ततः परस्य लिटः कित्त्वार्थमुपात्तोऽयमनुपपन्नः । ज्ञापिते चाऽस्मिन्वचने 'समीधे'–इत्यादौ कदाचिदामोऽभावे व्यवधानाऽभावे इन्धेः परो लिट् सम्भवतीति तस्याऽनुनासिकलोपार्थं ततः परे लिटि कित्त्वमतिदेष्टुमयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [7]'समीहे' [8]'आनृञ्जे'–इत्यादि प्रयोगाणां

---

1. तथाहि–
   (क) "अथ 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् कस्मान्न भवति ? मन्त्रविषयत्वादस्य, तत्र च 'अमन्त्रे' इत्यधिकारात् । एवं तर्हि मन्त्रश्छन्द एवेति 'छन्दस्युभयथा' इति- 'सार्वधातुकमपित्'इतिङित्त्वम्, अतएव ङित्त्वादनुनासिकलोपो भविष्यतीति ततुकिमर्थ- मिन्धेः परस्य लिटः कित्त्वं विधीयते ? ज्ञापनार्थम् । एतदनेन ज्ञाप्यते - अनित्योऽयमामिति । नित्ये ह्यामि तेन व्यवधानादेवेन्धेः परो लिण् न सम्भवतीति कित्त्वविधानं नोपपद्यते, तस्मादनित्योऽयमामिति । तेन भाषायामपि समीध इति प्रयोग उपपन्नो भवती"त्याह जि. बु. न्या. 1/2/6 ।
   (ख) "इन्धिभवति-सूत्रे (1/2/6) इन्धिग्रहणेन इजादेरिति (3/1/31) आमोऽनित्यत्वम्य ज्ञापनात् ईह चेष्टायाम् ऋजि-वृजी वर्जने समीहे आनृञ्जे इतिपारायणिकाः" - इत्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 61 ।
   (ग) "एवं तर्हि ज्ञापकार्थमिन्धिग्रहणम्, एतज्ज्ञापयति - 'इन्धेर्भाषायामप्यनित्यआम्' इति समीधे समीधाञ्चक्र इतिभाषायामपि भवती"त्याह ह मि. पदम. 1/2/6 ।
2. वेदवाक्यमिदम्'--का. 1/2/6 । सम्पूर्वकात् 'ञिइन्धीदीप्तौ' धा. पा. रुधा. 1449, इति इन्ध् धातोर्लिटि ते एजादेशे 'इन्धिभवतिभ्यां च'–अष्टा. 1/2/6, इति लिट· कित्त्वे 'अनिदितां हल उपधाया· क्ङिति'–अष्टा. 6/4/24, इति अनुनासिकस्य नकारस्य लोपे द्वित्वादि कार्येषु कृतेषु- सवर्णदीर्घैकाऽऽदेशे च कृते रूपमिदं 'समीधे'इति सिद्धयति ।
3. 'ञिइन्धी दीप्तौ' धा. पा. रुधा. 1449, इति इन्धधातो लिंटि ते एशादेशे 'इन्धिभवतिभ्यां च'–अष्टा. 1/2/6. इतिलिटः कित्त्वे 'अनिदितां हल उपधायाः क्ङिति'--अष्टा. 6/4/24. इतिअनुनासिकस्य नकारस्य लोपे द्वित्वादिकार्येषु कृतेषु सवर्णदीर्घैकाऽऽदेशे च कृते रूपमिदम् ।
4. अष्टा. 6/4/24 ।
5. नलोपार्थमित्यर्थः ।
6. 'इजादेश्च गुरुमतोऽनृच्छः'–अष्टा. 3/1/36
7. सम् पूर्वकात् 'ईह चेष्टायाम्' धा. पा. भ्वा. 632, इति ईहधातोर्लिटि ते एशादेशे द्वित्वादिषु कृतेषु सवर्णदीर्घैकाऽऽदेशे रूपमिदम् ।
8. 'ऋजि वर्जने' धा. पा. भ्वा. 177, इति अञ्धातोर्लिटि ते एशादेशे इदित्त्वान्नुमि द्वित्वेऽ- भ्यासन्ये उरदत्वे हलादिशेषे 'अत आदेः'–अष्टा. 7/4/70, इत्यभ्यासस्याऽतो दीर्घे नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यत'–इति 'तस्मान्नुड्द्विहलः'–अष्टा 7/4/71, इतिनुटि नुमो नकारस्य 'नश्चापदान्तस्य झलि'–अष्टा. 8/3/24, इतिअनुस्वारे 'अनुस्वारस्य ययि परसवर्णः'--अष्टा. 8/4/58 इति अनुस्वारस्य परसवर्णेन ञकारे च कृते रूपमिदम् ।

साधुत्वसिद्धिः, भाषायामपि 'समीधे'इति प्रयोगस्योपपत्तिश्च । अस्य वचनस्याऽसत्त्वे हि 'इजादेश्च[1]गुरुमतोऽनृच्छः' इत्यामोऽत्र दुर्वारतयाऽनयोः साधुत्वं, भाषायां च 'समीधे'–इति प्रयोगस्योपपत्तिश्च न सिद्ध्येताम् । ज्ञापकत्वं चाऽस्य शब्दस्याऽत्र वचने सूत्रकृन्मते नतु भाष्यकृन्मते । यतः सूत्रमेवेदं भगवता प्रत्याख्यातम्[2] ।

## 'ई'इति शब्दः

[3]'ईहल्यघो'रितिसूत्रे 'ई' इति-शब्दो 'भाव्यमानोऽण्-सवर्णान्न [4]गृह्णाती'-तिपरिभाषाया ज्ञापकः[5] । यतोऽस्य अभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि

---

1. अष्टा. 3/1/36 ।
2. तथाहि–"किमर्थमिदमुच्यते ? । 'इन्धेः संयोगार्थं, भवतेः पिदर्थम्' । इन्धेः संयोगार्थं वचनं, भवतेः पिदर्थम् । अयं योगः शक्योऽवक्तुम् । कथम् ? । 'इन्धेश्छन्दोविषयत्वाद्भुवो वुकोनित्यत्वात्ताभ्यां किद्वचनानर्थक्यम्' । इन्धेश्छन्दोविषयो लिट् । नह्यन्तरेण छन्द इन्धेरनन्तरोलिङ्लभ्यः । आमा भाषायां भवितव्यम् । 'भुवो वुको नित्यत्वात्' । भवतेरपि नित्युवुक् कृते गुणे प्राप्नोति । ताभ्यां किद्वचनानर्थक्यम् । ताभ्यामिन्धिभवतिभ्यां किद्वचनमनर्थक"मित्याह पत. व्या. म. भा. 1/2/1/6 ।
3. अष्टा. 6/4/113 ।
4. (क) व्याडिः प. सू. प. 30, पृ. 15 ।
   (ख) पु. दे. ल. प. वृ. प. 31, पृ. 126 ।
   (ग) सी. दे. बृ. प. वृ. प. 11, पृ. 173 ।
   (घ) नी. दी. प. वृ. प. 16, पृ. 296 ।
   (ङ) ह. भा. प. भास्क. प. 11, पृ. 326 ।
5. तथाहि–
   (क) "भाव्यमानोऽण्सवर्णान् न गृह्णाति । कथं ज्ञायते । यदयं 'ईहल्यघोः' (6/4/113) इतिदीर्घमीकारं शास्ति । कथं कृत्वा ज्ञापकम् । एतत्सूत्रम् 'इहल्यघोः' इति वक्तव्यम् । कथमिदानीमीकारो भविष्यति 'अणुदित्सवर्णस्य.' (1/1/68) इति इवर्णो-गृह्यते तत्रास्य 'स्थानेऽन्तरमः' (1/1/50) इतिदीर्घो भविष्यति दीर्घस्य नार्थो दीर्घग्रहणेन । पश्यत्याचार्यः – भाव्यमानोऽण् सवर्णान्न ग्रह्णाति ततो दीर्घोच्चारणं करोति । किमेतस्या ज्ञापने प्रयोजनम् । 'इदम इश्' (5/3/3) इत्यत्रेदमो ह्रस्वदीर्घप्लुताः पर्यायेणादेशा न भवन्ती"त्याह व्याडिः प. सू. प. 30 पृ. 15 ।
   (ख) "ज्ञापकं चात्र 'ईहल्यघोः' (6/4/113) इतिदीर्घेकारविधानम् । यदि हि विधीयमानोऽण् सवर्णानां ग्राहकः स्यात्तदा 'श्नाभ्यस्तयोरातः' (6/4/112) इत्यनुवृत्ताकारस्य स्थाने ह्रस्वेकारमेव विदध्यात् इहल्यघोरिति । अन्तरतमत्वात्त्वयं दीर्घो भविष्यति इति **दीर्घत्वविधानमस्यार्थस्य ज्ञापकमेवेती**"त्याह. पु. दे. ल. प. वृ. प. 31, पृ. 126 ।
   (ग) "सुखप्रतिपत्त्यर्थं ज्ञापकमपि केचिदाहुः" **ईहल्यघोः' (6/4/113)** इतिदीर्घेकारविधानम् । अन्यथा दीर्घस्य स्थाने सावर्ण्याद्दीर्घ एव स्या"दित्याह सी. दे. वृ. प. वृ. प. 11, पृ. 173 ।

सूत्रेऽस्मिन् [1]'श्नाभ्यस्तयोरातः' इत्यनुवर्तते, तथासति [2]'लुनीते' [3]'मिमीते'-इत्यादावाकारस्य ईत्वार्थमात्रोपात्तोऽयं शब्दोऽस्याः परिभाषाया अभावे व्यर्थः । अत्र इ-शब्दोपादानेऽपि[4] 'अणुदित् [5]सवर्णस्य चाप्रत्ययः' इत्यनेन ईकारस्याऽपि ग्रहणात् [6]'स्थानेन्तरतमः' इतिपरिभाषयैवं हि आकारस्य ईकारः सुलभः । न चेह 'अप्रत्यय'[7] इत्यनेन सवर्णग्रहणप्रतिषेधः शङ्क्यः । यतोऽत्राऽप्रत्ययपदे 'प्रत्ययः'[8] इति-विहितसंज्ञापरः । ज्ञापितायां चाऽस्यां परिभाषायामनयाऽत्र भाव्यमानतया ईकारेण इकारो न ग्रहीतुं शक्य इति आकारस्याऽपि इकार एव प्राप्नोति, न तु ईकारोऽपीति-'लुनीते' 'मिमीते'–इत्यादौ आकारस्य ईकारविधानाय सूत्रेऽस्मिन् 'ई' इतिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'इह' इत्यादौ 'इदम[9] इश्' इत्यनेन इदमः ईकाराऽऽदेशाऽभावः । अस्या असत्त्वेहि सवर्णग्रहणात्[10] पर्यायेण इदमोऽत्र दीर्घप्लुतावपीकारावापद्येताम् ।

## 'ईयङ्' इतिशब्दः

[11]'ऋतेरीयङ्'–इत्यत्र 'ईय'ङितिशब्दः 'धातुविहितानां प्रत्ययानामायन्नादयो[12] न भवन्तीति वचनस्य ज्ञापकः[13] । यतोऽस्य वचनस्याऽभावेऽत्र ऋतेश्छङित्युक्तावपि

---

1. अष्टा. 6/4/112 ।
2. 'लूञ्छेदने' धा. पा. क्र्या. 1483, इति लूधातोर्लटि तसि रूपमिदम् ।
3. 'मीञ्हिंसायाम्' धा. पा. क्र्या. 1476, लटि ते रूपमिदम् ।
4. 'ई हल्यघो'रिति सूत्रे कृतेऽपीत्यर्थः ।
5. अष्टा. 1/1/69 ।
6. अष्टा. 1/1/50 ।
7. 'अणुदित् सवर्णस्य चाप्रत्ययः'–अष्टा. 1/1/69, इत्येतद्घटकेनेतिशेषः ।
8. अष्टा. 3/1/1 ।
9. अस्मिन्नित्यर्थे इदम् शब्दात् 'इदमो हः'–अष्टा. 5/3/11, इति हप्रत्यये 'इदम इश्'–अष्टा. 5/3/3, इति इशादेशे रूपमिदम् ।
10. अष्टा. 5/3/3 ।
11. अष्टा. 3/1/29 ।
12. 'आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्'–अष्टा. 7/1/2 ।
13. तथाहि–
    (क) " 'ऋतेश्छङ्'इति सिद्धे ईयङ्वचनं ज्ञापनार्थम्–'धातुविहितानां प्रत्ययानामायन्नादयो न भवन्तीती"त्याह जया. का. 3/1/29 ।
    (ख) "अथ कस्मादीयङुच्यते, नच्छङित्येवोच्येत, तस्येयादेशे ऋतीयत इति सिद्ध्यति ? न सिद्ध्यति, परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यात् । ननु चान्तरङ्गत्वादीयादेश एव भविष्यति, अन्तङ्गत्वं न तस्यायन्नादिषु 'उपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थम्' इति वचनात् । एवं तर्ह्येतज्ज्ञापयति–'धातुप्रत्ययानामायन्नादयो न भवन्तीति । तेन शमेर्ढप्रत्यये कृते शण्ढ इत्येवमादयः सिद्धा भवन्ती"त्याह जि. बु. न्या. 3/1/29 ।

छङश्छकारस्य [1]ईयादेशेनैव 'ऋतीयते'इत्यादि प्रयोगाणां सिद्धिः सुलभेति तेषां प्रयोगाणां सिद्धयेऽत्र ऋतेरीयङ्विधानार्थोपात्तोऽसौ व्यर्थः । ज्ञापिते चाऽस्मिन्वचने छङोऽत्र धातोर्विहिततया छस्य ईयाऽऽदेशो न प्राप्नोतीति 'ऋतीयते'–इत्यादौ इयङ् प्रत्ययविधानाय स्वांशे शब्दोऽयं चरितार्थो भवति । न चाऽत्र छङ्प्रत्ययविधाने तस्य परत्वादिडागमे[2] कृते छस्य प्रत्ययादित्वाभावादीयादेशस्या[3]ऽऽप्राप्त्या 'ऋतीयते' इत्यादिप्रयोगाणां सिद्ध्यर्थमीयङ्शब्दः इयङ्प्रत्ययविधानाय चरितार्थ-इति कथमेतद्वचनस्य ज्ञापक इति शङ्क्यम् । यतोऽ[4]न्तरङ्गत्वादिटः[5] प्रागेव छस्य ईया[6]ऽऽदेशः सुलभः । [7]'उपदेशिवद्वचनमिष्टं स्वरसिद्ध्यर्थ'मितिवचनाद्धि आयन्नादीनामन्तरङ्गत्वं सिद्धम् । ज्ञापितस्याऽस्य वचनस्य फलं तु [8]'जनमेजयः 'इत्यादौ, 'रागः[9]' इत्यादौ

---

(ग) "ऋतेश्छङिति वक्तव्ये ऋतेरीयङ्वचनं (3/1/29) धातुप्रत्ययानामायन्नाद्यभावस्य ज्ञापकमिति खश्- घञादेरायनेयीयि इत्यादि (7/1/2) न भवती"त्याह पु. दे. ज्ञा. समु. नवमे प्रत्ययपादे पृ. 70 ।

(घ) "अथ कस्मादीयङुच्यते, न छङेवोच्यते, तस्य ईयादेशे कृते ऋतीयत इति सिद्धम्, परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यादितिचेत् ? न, अन्तरङ्गत्वात्, 'आयन्नादिषूपदेशवद् वचनं स्वरसिद्ध्यर्थ'मिति वचनादन्तङ्गत्वम् । ज्ञापनार्थं तु, एतज् ज्ञापयति–'धातुप्रत्ययानामायन्नादयो न भवन्तीति' तेन 'कणेष्ठः' इत्यत्रेकादेशो न भवती"त्याह ह. मि. पदम. 3/1/29 ।

(ङ) "ऋतेरीयङ् (सू. 3/1/29) इतिधातोरीयङ्विधानं ज्ञापकं, न धातुप्रत्ययानामायन्नादयो भवन्तीति"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1 पृ. 185 ।

1. 'आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्'–अष्टा. 7/1/2 ।
2. 'आर्धधातुकस्येड्वलादेः'–अष्टा. 7/2/35 ।
3. 'आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्'–अष्टा. 7/1/2 ।
4. 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः'इति 'असिद्धं बहिरङ्गमन्तरङ्गे'–इति च परिभाषाभ्यामित्यर्थः ।
5. 'आर्धधातुकस्येड् वलादेः'–अष्टा. 7/2/35 ।
6. 'आयनेयी'–अष्टा. 7/1/2 ।
7. वा. व्या. म. भा. 7/1/1/2 ।
8. णिजन्तात् 'एजृदीप्तौ' धा. पा. भ्वा. 179, 'एजृकम्पने' धा. पा. भ्वा. 3/2/28, इत्यन्यतराद् एज्धातोः 'एजेः खश्'–अष्टा. 3/2/28, इति-खश्प्रत्ययेऽनुबन्धलोपे खशः शित्त्वात् सार्वधातुकत्वे शपि गुणेऽयादेशो कर्मणि षष्ठ्यां 'जन + अस् एजय'इत्यलौकिकविग्रहे उपपदसमासे सुपो लुकि 'अरुर्द्विषदजन्तस्य मुम्'–अष्टा. 6/3/67, इति मुमि विभक्तिकार्येषु कृतेषु रूपमिदं सिद्ध्यति । जनमेजयतीति तदर्थः ।
9. 'रञ्जरागे' धा. पा. भ्वा. 999, दिवा. 1167, इति रञ्ज्धातोः 'भावे'–अष्टा. 3/3/18, इत्यनेन भावे, 'अकर्त्तरि च कारके संज्ञायाम्'–अष्टा. 3/3/19, इत्यनेन करणे वा घञि अनुबन्धलोपे 'घञि च भावकरणयोः'–अष्टा. 6/4/27, इति रञ्जेर्नलोपे 'चजोः कुघिण्ण्यतोः'–अष्टा. 7/3/52, इति जस्यकुत्वे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।

च क्रमशः खश्घआदेःईनेयादेशादीनामभावः । अस्य वचनस्याऽसत्त्वे हि तेषामादेशानामापत्तिर्दुवारा स्यात् । ज्ञापकत्वं चाऽस्य भाष्यसम्मतम्[1] ।

## 'उत्तम' इतिशब्दः

[2]'णलुत्तमो वे'तिसूत्रे 'उत्तम' इति शब्दः 'प्रत्येकं[3] वाक्यपरिसमाप्ति'रिति परिभाषाया [4]ज्ञापकः । यतोऽस्या अभावेऽत्राऽयमनुपपन्नः । 'तिङस्त्रीणि[5]त्रीणि प्रथममध्यमोत्तमाः' इत्यनेन समुदितस्य त्रिकस्योत्तमसंज्ञाविधानादेकस्य णल उत्तमत्वं हि नोपपद्यते । ज्ञापितायां चाऽस्यां प्रत्येकस्योत्तमत्वं सम्भवतीति शब्दोऽयमत्रोपपद्यते । ज्ञापिताया अस्याः फलं तु 'प्रत्येकं [6]गुणवृद्धिसंज्ञावचनम्'इति वार्तिकाऽनारम्भेऽपि प्रत्येकं [7]गुण [8]वृद्धिसंज्ञयोः सिद्धिः सुलभेति तद्वार्तिकाऽनारम्भजन्यं

---

1. तथाहि–"अथवा यदयमृतेरीयङिति धातोरीयङ्शास्ति तज्ज्ञापयत्याचार्यो 'न धातुप्रत्ययानामायन्नादयो भवन्ती'ति, यदि हि स्युः 'ऋतेश्छ'ङित्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति, न च ऋतेश्छङा सिद्ध्यति । छङि सति वलादिलक्षण इट् प्रसज्येत, इटि कृतेऽनादित्वादायादेशो न स्यात्....." इत्याह पत. व्या. म. भा. 7/1/1/2 ।
2. अष्टा. 7/1/91 ।
3. (क) व्याडिः प. सू. प. 28, पृ. 15 ।
   (ख) पु. दे. ल. पृ. वृ. प. 29, पृ. 125 ।
   (ग) सी. दे. बृ. प. वृ. प. 78, पृ. 240 ।
   (घ) ह. भा. प. भास्क. प. 80, पृ. 356 ।
4. तथाहि–
   (क) "शास्त्रे चापि इयमस्ति परिभाषा । कथं ज्ञायते । इह हि समुदितस्य त्रिकस्य उत्तमसंज्ञा क्रियते । तत्रैकस्य णल उत्तम इतिविशेषणं न प्राप्नोति । पश्यति त्वाचार्यः । प्रत्येकं वाक्यपरिसमाप्तिर्भवति । तेन प्रत्येकं त्रिके उत्तमशब्दः क्रियते । किमेतस्या ज्ञापने प्रयोजनम् । प्रत्येकं गुणवृद्धिसंज्ञे भवत इति न वक्तव्यम्"इत्याह व्याडिः प. सू. प. 28, पृ. 15 ।
   (ख) "ज्ञापकं चाऽत्र 'णलुत्तमो वा' (7/1/91) इति उत्तमपदं णल्विशेषणम् । यदि हि प्रत्येकं सम्बन्धो न स्यात् उत्तमसंज्ञायास्त्रयाणां समुदायेन सम्बन्धेन णलिति विशेषणं न स्या'दित्याह पु. दे. ल. प. वृ. प. 29 पृ. 125 ।
   (ग) "ज्ञापकमप्यत्र 'णलुत्तमो वा' (7/1/91) इत्यत्रोत्तमग्रहणं णलो विशेषणम् । यदि हि प्रत्येकं वाक्यसम्बन्धो न स्यात्तदोत्तमग्रहणं मिब्वस्मसां त्रिकेण संबद्धमिति णलः केवलस्य विशेषणं न स्या"दित्याह सी. दे. बृ. प. वृ. प. 78, पृ. 240 ।
   (घ) "ज्ञापकमप्याहुः । 'णलुत्तमो वा' (7/1/91) इत्यत्र उत्तमग्रहणं णल्विशेषणम् । यदि हि प्रत्येकं वाक्यसम्बन्धो न स्यात् तदोत्तमग्रहणं मिब्वस्मसां त्रिकेण संबद्धमिति णलः केवलस्य विशेषणं न स्या"दित्याह ह. भा. प. भास्क. प. 80, पृ. 356 ।
5. अष्टा. 1/4/101 ।
6. वा. व्या. म. भा. 1/1/3/1 ।
7. 'अदेङ्गुणः' - अष्टा. 1/1/2 ।
8. 'वृद्धिरादैच्' - अष्टा. 1/1/1 ।

लाघवम् । वार्तिकस्याऽस्याऽनारम्भे परिभाषाया अस्याश्चाऽसत्त्वे हि समुदितयोः अदेङोः आदैचोश्च क्रमशो गुणवृद्धिसंज्ञयोरापत्ती दुर्वारे स्याताम् ।

## 'उत्तरेष्वि'ति शब्दः

[1]'कर्मधारयवदुत्तरेषु' - इत्यत्र 'उत्तरेष्वि'तिशब्दः 'सिंहावलोकितोऽधिकारोऽस्ती'ति वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽसौ व्यर्थः । [3]'प्रत्ययः' -इत्येवमादीनामधिकाराणामुत्तरत्रानुवृत्तिवत् 'कर्मधारयव'दित्यस्याप्युत्तरत्राऽनुवृत्तिर्गङ्गास्रोतोऽधिकारेण सुलभेत्यत्र सूत्रे 'उत्तरेषु' इतिशब्दो व्यर्थः । ज्ञापिते चास्मिन् वचनेऽनेन कदाचिदुत्तरसूत्रेष्वस्याऽसम्बन्धोऽपि भविष्यति, स चाऽसम्बन्धो माभूदित्येतदर्थं शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्य वचनस्याऽन्यत्र फलं न दृश्यत इति नास्य ज्ञापकत्वं युक्तमिति प्रतिभाति ।

## 'उत्तरपदे'तिशब्दः

[4]'प्रत्ययोत्तरपदयोश्चे'त्यत्र 'उत्तरपदे'तिशब्दः [5]'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते'इति परिभाषाया ज्ञापकः[6] । यतोऽस्य अभावेऽत्राऽयं शब्दो व्यर्थः ।

---

1. अष्टा. 8/1/11 ।
2. तथाहि - 'सिंहावलोकिताधिकारास्तित्वे च कर्मधारयवदुत्तरेष्विति (8/1/11) ज्ञापक''मित्याह पु. दे. ज्ञा. समु. षष्ठे अपरपादे पृ. 67 ।
3. अष्टा. 3/1/1 ।
4. अष्टा. 7/2/98 ।
5. (क) व्याडिः प. पा. प. 128, पृ. 42 ।
   (ख) पु. दे. ल. प. वृ. प. 68, पृ. 141 ।
   (ग) सी. दे. बृ. प. वृ. प. 85, पृ. 245 ।
   (घ) नी. दी. प. वृ. प. 63, पृ. 306 ।
   (ङ) ह. भा. प. भास्क. प. 88, पृ. 359 ।
   (च) भ. ना. प. शे. प. 53, पृ. 224 ।
   (छ) शेषा. प. भास्क. प. 44, पृ. 423 ।
6. तथाहि –
   (क) "यस्तु मन्यते प्रकर्षप्रत्ययोन्तरङ्गस्तथा च' नित्यवीप्सयोः' (8/1/4) इत्यत्र ङ्याप्प्रातिपदिकादातिशयिको भवतीतिन्यासः (भा. 2, पृ. 497), तन्मते अत्रोत्तरपदमेव ज्ञापकम् । स्वोत्तरादौ स्वादेशविधानार्थत्वात् प्रत्ययग्रहणस्ये''त्याह पु. दे. ल. प. वृ. प. 68, पृ. 142 ।
   (ख) "ये तु मन्यन्ते 'तरबादिप्रकृतेस्तरबादिविधौ ङ्याप्प्रातिपदिकस्यैव स्वभावतः पुरुषाद्यथावृत्तित्वमित्यनवकाशत्वात्सुपं बाधित्वा प्रातिपदिकादेव तरबादिभिर्भवितव्यमिति' तन्मते नैव तरबादिविधौ ङ्यापप्रातिपदिकात् इत्यनुवर्तते इति वृत्तावुक्तम् । तथा 'स्वादिष्वसर्वनामस्थाने' (1/4/17) इत्यत्र राजतरो राजतमः इत्युदाहृतम् । तन्मते

तथाहि - सूत्रेऽस्मिन् 'तव पुत्रः त्वत्पुत्र' मम पुत्रो मत्पुत्रः' इत्यादौ युष्मद-स्मदोर्मपर्यन्तस्य त्वामाऽऽदेशविधानार्थं शब्दोऽयमुपात्तः । स चाऽस्या अभावे व्यर्थः । विभक्तिमात्राऽऽश्रयत्वाद्धि [1]पूर्वसूत्रेणैव त्वमावत्र सुलभौ । न चाऽस्या असत्त्वे-प्रत्ययेति शब्दोऽप्यत्र सूत्रे व्यर्थ इति सम्पूर्णमिदं सूत्रमस्या ज्ञापकं, यतः 'तवायं त्वदीयः'[2] 'ममायं मदीय'[3]इत्यादावपि विभक्तिमात्राऽऽश्रयतया पूर्वसूत्रेणैव[4] त्वमा-देशौ सुलभाविति शङ्क्यम् । यतः 'प्रकर्षप्रत्ययोऽन्तरङ्गः' - इति[5]मते त्वत्तरादौ[6] त्वाऽऽदेशविधानायाऽत्र 'प्रत्यये'ति शब्दश्चरितार्थः । ज्ञापितायां चाऽस्यां परिभाषायां [7]'त्वत्पुत्रो [8]मत्पुत्र' – इत्यादौ [9]षष्ठीसमासादनन्तरं लुको[10]दुर्वारतया विभक्त्यभावेन न पूर्वसूत्रेण[11] त्वमाऽऽदेशौ प्राप्नुत इति तत्र त्वमाऽऽदेशविधाना-याऽत्राऽयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलन्तु 'गोमान् प्रियो यस्तेति[12]गोमत्प्रिय' इत्यादौ अन्तरङ्गानपि[13] नुमादीन्बाधित्वा[14]बहिरङ्गस्य लुकः[15] सिद्धिः । अस्या असत्त्वे हि लुकः प्रागेवाऽत्रान्तरङ्गत्वान्नुमादयोदुर्वाराः स्युः ।

---

प्रत्ययग्रहणं न ज्ञापकमित्याहुः । उत्तरपदग्रहणमेव ज्ञापक'मित्याह सी. दे. वृ. प. वृ. प. 85, पृ. 246 ।

(ग) "अत्र ज्ञापकं 'प्रत्ययोत्तरपदयोश्च (7/2/98) इतिसूत्रे उत्तरपदग्रहणम् । प्रत्ययग्रहणं त्वाचारक्विबन्तादौ चरितार्थ"मित्याह नी. दी. प. वृ. प. 63, पृ. 306 ।

1. 'त्वमावेकवचने' - अष्टा. 7/2/97 ।
2. 'त्यदादीनि च' - अष्टा. 1/1/74, इतिवृद्धसंज्ञकात् युष्मच्छब्दात् 4/1/114, छप्रत्यये 'आयनेयीनीयियः फ -.ढ - ख- छ - घां - प्रत्ययादीनाम्' - अष्टा. 7/1/2, इतिच्छस्य ईयादेशे'प्रत्योत्तरपदयोश्च'-अष्टा. 7/2/98, इत्यनेन मपर्यन्तस्य युष्मदस्त्वाऽऽदेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
3. 'त्यदादीनि च' - अष्टा. 1/1/74, इति वृद्धसंज्ञकात् अस्मच्छब्दात् 'वृद्धाच्छः' - अष्टा. 4/1/114, छप्रत्यये 'आयनेयी.' -अष्टा. 7/1/2, इतिछस्य ईयादेशे 'प्रत्ययोत्तर.' अष्टा. 7/2/98, इतिमपर्यन्तस्य अस्मदो माऽऽदेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
4. 'त्वमावेकवचने' - अष्टा. 7/2/97 ।
5. मतमिदं वृत्ति- न्यासकारयोः ।
6. युस्मच्छब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' - अष्टा. 5/3/57, इति तरप्प्रत्यये मपर्यन्तस्य युष्मदः 'प्रत्ययोत्तरपदयोश्च' - अष्टा. - 7/2/98, इति त्वाऽऽदेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
7. तव पुत्र इत्यर्थः ।
8. मम पुत्र इत्यर्थः ।
9. 'षष्ठी' - अष्टा. 2/2/37 ।
10. 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71 ।
11. 'त्वमावेकवचने' - अष्टा. 7/2/79 ।
12. बहुव्रीहावितिशेषः ।
13. 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70 ।
14. आदिपदेनाऽत्र 'अत्वसन्तस्य चाधातोः' - अष्टा. 6/4/14, इतिदीर्घो ग्राह्यः ।
15. 'सुपो धातुप्रातिपदिकयोः' - अष्टा. 2/4/71 ।

वस्तुतस्तु सूत्रेऽस्मिन्नाऽयं शब्दोऽस्यां ज्ञापकः, किन्त्वत्र सूत्रे ममर्पन्तानुवृत्तिरेवेत्यत्रैव प्रबन्धेऽन्यत्र[1] निरूपितम् ।

## 'उदात्त' इति शब्दः

[2]'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' [3]'चतुरनडुहोरामुदात्तः' [4]'लुङ्लङ्लृङ्क्ष्वडुदात्तः' - इत्येतेषु सूत्रेषूपात्त उदात्त इति शब्दः 'अभेदका इह[5]शास्त्रे गुणाः' - इति परिभाषाया ज्ञापकः[6] । यतोऽस्या अभावे गुणानां – [7]भेदकतया अनङोऽ-

---

1. 'ज्ञापिका अनुवृत्तयः' - इत्येतस्मिन्प्रघट्टके' - इत्यर्थः ।
2. अष्टा. 7/1/75 ।
3. अष्टा. 7/1/98 ।
4. अष्टा. 6/4/71 ।
5. (क) पु. दे. ल. प. वृ. प. 57, पृ. 138 ।
 (ख) सी. दे. बृ. प. वृ. प. 80, पृ. 241 ।
 (ग) 'अभेदका गुणाः' - नी. दी. प. वृ. प. 107, पृ. 312 ।
 (घ) 'अभेदका इह गुणाः' - ह. भा. प. भास्क. प. 83, पृ. 357 ।
 (ङ) 'अभेदका गुणाः - भ. ना. प. शे. प. 118, पृ. 352 ।
 (च) शेषा. प. भास्क. प. 101, पृ. 456 ।
6. तथाहि –
 (क) "अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् ? । यदयम् - 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः, इत्युदात्तग्रहणं करोति, तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदकागुणाः स्युरुदात्तमेवोच्चारये"दित्याह पत. व्या. म. भा. 1/1/3/1 ।
 (ख) "एतच्चोदात्तवचनम् 'अभेदका इह शास्त्रे गुणाः' - इत्यस्यार्थस्य ज्ञापकम् । कथं कृत्वा ? । यदि च भेदका गुणाः स्युः, तदोदात्तयुक्तेनैवाटं समुच्चारयेत् । पश्यति त्वाचार्यः अभेदका इह शास्त्रे गुणाः 'इति, यतः स्वरान्तनिवृत्त्यर्थोदात्तवचनं कृतवान् । किमेतस्य ज्ञापने प्रयोजनम् ? 'वृद्धिरादैच्' इत्यत्रोदात्तादिभेदभिन्नानामपि वृद्धिसंज्ञा सिद्ध्यतीती"त्याह जि. बु. न्या. 6/4/71 ।
 (ग) "अयं चार्थो 'लुङ् लङ् लृङ् क्ष्वडुदात्तः' (6/4/71 ) इत्यत्र उदात्तवचनेन ज्ञाप्यते । यदि भेदाका गुणाः स्युस्तदाउदात्तगुण एवाकारः उच्चारितः स्यात् किमुदात्तवचनेनेती"त्याह पु. दे. ल. प. वृ. प. 57, पृ. 138 ।
 (घ) 'अयं चार्थः 'चतुरनडुहोरामुदात्तः' (7/1/98) इत्युदात्तग्रहणेन ज्ञापितः । तथा 'अस्थिदधि.' (7/1/75) इत्यत्रोदात्त इत्यनेन, 'लुङ्लङ्.' (6/4/71) इत्यत्रोदात्तग्रहणेन च । यदि भेदकाः स्युर्गुणास्तदोदात्तगुणयुक्त एवाकार उच्चारयितव्यः इत्युदात्तग्रहणमनर्थकं स्यात् । अतो ज्ञापक"मित्याह सी. दे. बृ. प. वृ. प. 80, पृ. 241 ।
 (ङ) 'अनङुदात्तः' (7/1/75) इति उदात्तग्रहणमपि ज्ञापकम् । अन्यथा 'अनङ्' उदात्तगुण एवोच्चार्येते"त्याह नी. दी. प. वृ. प. 107, पृ. 312 ।
 (च) "ज्ञापकमत्र 'चतुरड्डुहोरामुदात्तः' (7/1/98) 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्त (7/1/75) इत्यादिषूदात्तग्रहणम् । यदि भेदका गुणास्तदोदात्तमेवोच्चारयेत्, इति उदात्तग्रहणमनर्थकं स्या"दित्याह ह. भा. प. भास्क. प. 83, पृ. 357 ।

टश्चोदात्तोच्चारणेनैवोदात्तत्वं सुलभम् । ज्ञापितायां चास्यां परिभाषायां तत्र तत्रोदात्तगुणकोच्चारणेन अनङ्टोरुदात्तत्वं न सिद्ध्यतीति तत्रोदात्तत्वसिद्धये शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः 'शास्त्रेऽस्मिन्नुदात्तादयो गुणा भेदका न भवन्तीत्यर्थः । फलं तु 'वृद्धिरादै'[1]जित्यत्रोदात्तादिभेदभिन्नानामप्यादैचां सामान्येन ग्रहणसिद्धिः । अस्या असत्त्वे हि नैतेषां सामान्येन ग्रहणं सिद्ध्येत् । नान्तरीयक उच्चार्यमाणो गुणः प्रयत्नमन्तरेण न विवक्ष्यत इति परिभाषाया अस्या भावार्थः । तेन [2]'अनुदात्तादेरञ्' इत्यादौ शब्दोपात्तगुणस्य विवक्षा, 'उञः[3] ऊँ' इत्यत्र 'स्थानेन्तरतमः'[4] -इतिपरिभाषाया अननुनासिके उच्चारयितव्ये अनुनासिकोच्चारणस्य विवक्षा च समुपपद्येते ।

अथैवमस्थ्यादीनां 'नञ्विषयस्या निसन्तस्य'[5] इत्याद्युदात्तानामन्त्या देशस्याऽनङः स्थान्यनुरूपे अनुदात्त एवोच्चारयितव्ये उदात्तोच्चारणं विवक्षार्थमिति - कथमस्या ज्ञापकत्वमिति न शङ्क्यम् । यतः परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्याऽपि स्थानित्वसम्भवेन तद्विवक्षायां मानं नास्ति । न चैवमपि [6]'चतसर्याद्युदात्तत्वनिपातनं' [7]'पदादेशेऽन्तोदात्तनिपातनम्' 'आद्युदात्तनिपातनं[8] करिष्यते' 'सहस्य स उदात्तो निपात्यते' इत्यादि भाष्यमनुपपन्नमिति शङ्क्यम् । यत [9]एकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारण-विवक्षार्थमित्याशयेन सर्वमिदं भाष्यमुपपद्यते । त्रैस्वर्येण पाठ इति पक्षे तु भाष्यमिदं परिभाषाया अस्या ज्ञापकमिति मन्ये ।

---

(छ) "अत्र चा'स्थिदधि' इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापक"-मित्याह भ. ना. प. शे. प. 118, पृ. 352 ।

(ज) "ज्ञापकम् - 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (7/1/75) 'अडुदात्तः' (6/4/71) इत्यादयुदात्तवचनम् । यदिभेदका गुणाः, तर्ह्युदात्तोच्चारणेनैव सिद्धेरुदात्तग्रहणं व्यर्थंस्या" - दित्याह शेषा. प. भास्क. प. 101, पृ. 456 ।

(झ) 'वृद्धिरादैच्' (7/1/1) । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (सू. 7/1/75) इत्युदात्तग्रहणं ज्ञापकम् 'अभेदका गुणाः 'इती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 12 ।

7. यथैकमुदकमिदं शीतमिदमुष्णमितिगुणभेदाद्भिद्यते, तथोदात्तादीनामपि भेदकत्वेनेत्यर्थः ।

1. अष्टा. 1/1/1 ।
2. अष्टा. 4/2/44 । आदिपदेन 'अनुदात्तादेश्च' - अष्टा. 4/3/140 इतिग्राह्यम् ।
3. अष्टा. 1/1/17, 18 ।
4. अष्टा. 1/1/50 ।
5. फिट् सू. 2/26 ।
6. वा. 2 व्या. म. भा. 7/2/2/99 ।
7. वा. 1 व्या. म. भा. 6/3/3/52 ।
8. व्या. म. भा. 6/3/3/78
9. एकश्रुतिः स्वरसामान्याभावः स्वरान्तरं वा ।

## 'उपधाया'इतिशब्दः

'ऊदुपधाया[1]गोहः'–इत्यत्र 'उपधाया'इतिशब्दः [2]'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहण'मिति परिभाषाया [3]ज्ञापकः । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–'गूहति'[4]-'निगूहयति'[5] 'निगूहकः'[6] 'निगूही'[7] 'निगूहं– निगूहम्'[8],

---

1. अष्टा. 6/4/89 ।
2. (क) व्याडिः प. सू. प. 60, पृ. 27 ।
   (ख) पु. दे. ल. प. वृ. प. 72, पृ. 143 ।
   (ग) सी. दे. बृ. प. वृ. प. 68, पृ. 232 ।
   (घ) प्रकृतिग्रहणे यङ्लुगन्तस्य ग्रहणम्'–नी. दी. प. वृ. प. 76, पृ. 308 ।
   (ङ) ह. भा. प. भास्क. प. 70, पृ. 352 ।
   (च) भ. ना. प. शे. प. 101, पृ. 330 ।
   (छ) शेषा. प. भास्क. प. 86, पृ. .....
3. तथाहि–
   (क) "प्रकृतिग्रहणं यत्र भवति यङ्लुकोपि भवति तत्र ग्रहणम् । कथं ज्ञायते । यदयम्– 'ऊदुपधाया गोहः' (6/4/89) इत्युपधाग्रहणं करोति । कथं कृत्वा ज्ञापकम् । तत्रोपधाग्रहणेन उकारो गृहीतो भवति । तस्मादुकारग्रहणमेवमर्थं कर्तव्यम् । उ उतोगोह इति । पश्यति त्वाचार्यः । एवंमुच्यमाने योऽ सौ गोहेरभ्यासगत उकारः जागुहीति तस्याप्यूत्वं प्रसज्येत । तस्मादुपधाग्रहणम् । यदि च प्रकृतेर्ग्रहणे यङ्लुकोऽपि ग्रहणं भवति–तत एतदुपपन्नं भवति–। किमेतस्या ज्ञापने प्रयोजनम् । जघ्नुरिति यङ्लुको ग्रहणादुपधालोपः सिद्धो भवती"त्याह व्याडिः प. सू. प. 60, पृ. 27 ।
   (ख) "ज्ञापकं चात्र 'ऊदुपधाया गोहः' (6/4/89) इत्युपधाग्रहणम् । उद्गोह इति लाघवार्थे वक्तव्ये यदुपधाग्रहणं तद्यङ्लुगन्ते जोगुह इत्यभ्यासोकारे माभूदित्येवमर्थम् । एतदर्थता च तदा स्याद् यदि प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवेदिती"त्याह पु. दे. ल. प. वृ. प. 72, पृ. 143 ।
   (ग) "ज्ञापकमप्याहुः । 'ऊदुपधाया गोहः' (6/4/89) इत्यत्रोपधाग्रहणम् । 'उदोगोहः' इतिलाघवार्थं वक्तव्ये यदुपधाग्रहणं करोति तद्यङ्लुकि जोगूहती'त्यत्र योऽभ्यासस्योकारस्तस्य माभूदित्येवमर्थं क्रियते । एतंच्च तदा स्यात् यदि प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति । न चोत्तरार्थमुपधाग्रहणं 'गमहनजनखनघसाम्.' (6/4/98) इति । अन्यथाऽलोन्त्यस्य लोपः स्यात् । उच्यते, ज्ञापकवादिनो मते तत्र इति स्थानी प्रतिपादयितव्यः" –इत्याह सी. दे. वृ. प. वृ. प. 68, पृ. 233 ।
   (घ) "परिभाषाया ज्ञापकम्–'ऊदुपधाया गोहः' (6/4/89) इत्यत्रोपधाग्रहणम् । तद्धि उद्गोहः इति वक्तव्ये जोगुहीतीत्यत्रापि अभ्यासस्य ऊदादेशः प्राप्नोतीति तन्निवृत्त्यर्थं क्रियते न तु हकारस्य तन्निवृत्त्यर्थम् । 'ओः सुपि' (6/4/83) इत्यत ओरित्यनुवृत्त्यैव-तत्सिद्धे"रित्याह ह. भा. प. भास्क. प. 70, पृ. 353 ।
4. 'गुहूसंवरणे' धा. पा. भ्वा. 896, इति गूहूधातोर्लटि तिपि शपि लघूपधगुणमपवादात् प्रबाध्य 'ऊदुपधाया गोहः'–अष्टा. 6/4/89, इत्युपधाया उकारस्य ऊकारे रूपमिदम् ।
5. निपूर्वकाद् 'गुहूसंवरणे' धा. पा. भ्वा. 896, इति गुहधातोर्हेतुमण्णिचि तदन्तात्ल्लटि तिपि शपि णेरिकारगुणेऽयादेशें 'ऊदुपाधाया गोहः'–अष्टा. 6/4/89, इति उपधाया उकारस्य लघूपधगुणमपवादत्वात् बाधित्वा ऊकारे च कृते रूपमिदम् ।
6. निपूर्वकात् 'गुहूसंवरणे' धा. पा. भ्वा. 896, इति गुहधातोः 'ण्वुल्तृचौ'–अष्टा. 3/1/133, इति ण्वुल्प्रत्यये योः 'युवोरनाकौ'–अष्टा. 7/1/1, इति अकाऽऽदेशो 'ऊदुपधाया गोहः–

'निगूहः'[1]–इत्यादौ ओकारस्य ऊत्वार्थमारब्धे 'गोहोऽङ्गस्य उपधाया ऊकाराऽऽदेशो भवति अजादौ प्रत्यये परतः'–इत्यर्थकेऽस्मिन्सूत्रे यङ्लुकि 'जोगूहती'त्यादौ अभ्यासस्य ओकारस्य ऊत्वाऽभावाऽर्थमुपात्तोऽयमस्या अभावे व्यर्थः । प्रकृतिग्रहणे-यङ्लुगन्त-स्यापि ग्रहणाभावे हि 'ऊदोर्गोहः'–इतिलघुन्यासेनाप्यत्रेष्टसिद्धौ वैयर्थ्यमस्य शब्दस्य स्पष्टम् । नह्यस्या अभावे 'गोह' इतिशब्देन गोहयतेर्ग्रहणं वक्तुं शक्यम् । न च 'गमहन जन[2] खन घसां क्ङित्यनङी'त्यत्राऽनुवृत्त्यर्थमत्रसूत्रेऽयं शब्दश्चरितार्थ इतिशङ्क्यम् । यतो 'गमहने'त्यादिसूत्रे 'अतः' इति स्थानिनः प्रतिपत्तिः स्वीकार्येति शब्दस्याऽस्या अभावेऽपि 'जग्मतु'[3]रित्यादावुपधाया एव लोपः सुलभः । ज्ञापितायां चाऽस्यामनया 'गोहः'इतिशब्देनाऽत्र गोहयतेरपि ग्रहणं प्राप्नोतीति'जोगूहती'[4]त्यादौ यङ्लुकि ओकारस्य ऊत्त्वाऽऽपत्तिवारणाय शब्दोऽयं स्वांशे चरितार्थो भवति । नह्यत्राऽभ्या-सस्य ओकारस्य उपधात्वं संभवति । ज्ञापिताया अस्याः फलं तु 'वेवेद[5]' - इत्यादौ यङ्लुगन्तेऽपि 'विदो लटो[6]वे'ति णलाद्यादेशविकल्पसिद्धिः । अस्या असत्त्वे हि यङ् लुगन्तस्याऽत्र प्रकृतिग्रहणेन ग्रहीतुमशक्यतया णलाद्यादेशविकल्पो न सिद्ध्येत् ।

## 'उपसर्गेऽपी'तिशब्दः

[7]'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्वि'बितिसूत्रे 'उप-

---

अष्टा. 6/4/89, इत्यनेन लघूपधगुणाऽपवादे उपधाया उकारस्य ऊत्वे विभक्तिकार्येषु कृतेषु-रूपमिदम् ।

7. निपूर्वकात् 'गुहसंवरणे' धा. पा. भ्वा. 896, इतिगुह्धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये'-अष्टा. 3/2/78, इतिणिनिप्रत्यये घूपधगुणाऽपवादे 'ऊदुप.' अष्टा. 6/4/89 इत्युकारस्य ऊत्वे विभक्तिकार्येषु कृतेषु रूपमिदम् ।

8. निपूर्वकात् 'गुहूसंवरणे' धा. पा. भ्वा. 896, इतिगुह्धातोः 'आभीक्ष्ण्ये णमुल्'–अष्टा. 3/4/22, इतिणमुल्प्रत्यये 'ऊदुप.'–अष्टा. 6/4/89, इत्यनेन लघूपधगुणाऽपवादे उपधाया उकारस्य ऊकारे विभक्तिकार्येषु कृतेषु'नित्यवीप्सयोः'–अष्टा. 8/3/4, इत्यनेन पदस्य द्वित्वे च- कृते रूपमिदम् ।

1. निपूर्वकात् 'गुहूसंवरणे' धा. पा. भ्वा. 896, इतिगुह्धातोर्भावे 'भावे'–अष्टा. 3/3/18, इतिघञि 'ऊदुप.'–अष्टा. 6/4/89, इत्यनेन लघूपधगुणाऽपवादे उपधाया उकारस्य ऊकारे विभक्तिकार्ये च कृते रूपमिदम् ।

2. अष्टा 6/4/98 ।

3. 'गम्लृगतौ'–धा. पा. भ्वा. 982, इतिगम्धातोर्लिटि तसि तस अतुसादेशे द्वित्वेऽभ्यासकार्येषु कृतेषु'गमहन ज न खन घसां क्ङित्यनङि'–अष्टा. 6/4/98 इत्युपधालोपे सकारस्य रुत्वे विसर्गेच कृते रूपमिदम् ।

4. 'गुहूसंवरणे धा. पा. पा. भ्वा. 896, इतिगुह्धातोर्यङ्लुगन्ताल्लटि तिपि शपि-रूपमिदम् ।

5. 'विद ज्ञाने' धा. पा. अदा. 1064, इति विद् धातोर्यङ्लुगन्ताल्लटि तिपि 'विदो लटो वा' - अष्टा. 3/4/83, इति तिपो णलादेशे रूपमिदम् ।

6. अष्टा. 3/4/83 ।

7. अष्टा. 3/2/61 ।

सर्गेऽपी'- तिशब्दः 'अन्यत्र सुपिस्थ इत्यादौ सुबन्तग्रहणेनोपसर्गग्रहणं भवती'-तिवचनस्य [1]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽसौशब्दो व्यर्थः । अत्र हि सुपीत्यनु[2]वर्तते सुबन्ताश्चोपसर्गा इति सुब्ग्रहणेनैवोपसर्गग्रहणं सिद्धम् । ज्ञापिते चाऽस्मिन्वचने उपसर्गे उपपदेऽपि क्विप्प्रत्ययार्थं शब्दोऽयं स्वांशे चरितार्थोभवति । ज्ञापितस्याऽस्य वचनस्य फलं तु '[3]प्रवाद्य'मित्यत्र - 'वदः सुपि[4]क्यप्चे'ति-क्यपोऽभावः ।

प्रायिकं वेदं वचनम्[5] 'प्रयायी'त्यत्र 'सुप्यजातौ णिनिरिति णिनेर्दर्शनात् ।

## 'उभयेषा'मितिशब्दः

[6]'लिट्यभ्यासस्योभयेषा'मितिसूत्रे 'उभयेषा'मितिशब्दः '[7]संप्रसारणं संप्रसारणाश्रयं च कार्यं बलीयो भवती'ति परिभाषाया [8]ज्ञापकः । यतोऽस्या अभावे-

---

1. तथाहि –
   (क) "सदादिषु सुब्ग्रहणम्' । सदादिषु सुब्ग्रहणं कर्तव्यम् । होतावेदिषत् । अतिविर्दुरोणसत् । न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् ? वक्तव्यं च । किं प्रयोजनम् ? । ज्ञापकार्थम् । किं ज्ञाप्यम् ? । एतज्ज्ञापयत्याचार्यौऽन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? वदः सुप्यनुपसर्गग्रहणं चोदितं तन्न वक्तव्यं भवती"त्याह पत. व्या. म. भा. 3/2/1/61 ।
   (ख) "उपसर्गग्रहणं ज्ञापनार्थम् - अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति, 'वदः सुपि क्यप् च' इति"-इत्याह जया. का. 3/2/61 ।
   (ग) "सत्सूद्विष इत्यत्र (3/2/61) सुपीत्यनुवर्तमाने उपसर्गेऽपीतिवचनं ज्ञापकम् - अन्यत्र 'सुपिस्थः' (3/2/4) इत्यादौ सुबन्तग्रहणे नोपसर्गग्रहणं भवति । तेन प्रवाद्यमितिवदः सुपिक्यप्चेति (3/1/106) क्यप् न भवती"त्याह पु. दे. ज्ञा. समु. दशमे कर्मणिपादे पृ. 73 ।
   (घ) "सत्सूद्विष (3/2/61) अत्रोपसर्गेऽपीति ज्ञापयति अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति । तेन वदः सुप्यनुपसर्गग्रहणं चोदितम् । तन्न वक्तव्यं भवती"त्याह श्रीना. ज्ञा. सं. 3, पृ. 66 ।
2. 'वदः सुपिक्यप्च' - अष्टा. 3/2/106, इत्यतइतिशेषः ।
3. प्रपूर्वकाद् 'वद व्यक्तायां वाचि' धा. पा. भ्वा. 1009, इति वद्धातोः 'ऋहलोर्ण्यत्'-अष्टा. 3/1/124, इतिण्यत् प्रत्यये रूपमिदम् ।
4. अष्टा. 3/1/106 ।
5. तथाहि - "प्रायिकं चैतत् । तथाच भविष्यति गम्यादय इत्यत्र (3/3/3) प्रयायीति सुप्यजातौणिनिरिति (3/2/78) न्यासे - उक्त"मित्याह पु. दे. ज्ञा. समु. दशमे कर्मणिपादे पृ. 73 ।
6. अष्टा. 6/1/17 ।
7. (क) "संप्रसारणं संप्रसारणाश्रयं च कार्यं बलवत्' - पु. दे. ल. प. वृ. प. 103, पृ. 154 ।
   (ख) सी. दे. बृ. प. वृ. प. 59, पृ. 225 ।
   (ग) 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' -

ऽत्राऽसौ व्यर्थः । तथाहि –'[1]वव्रश्चे'त्यत्र परमपि हलादिशेषं[2]बाधित्वा रेफस्य [3]संप्रसारणं यथास्यादित्येवमर्थमुपात्तोऽयमस्या अभावे व्यर्थः । यत उपात्तेऽप्यस्मिन्शब्दे परत्वात्, प्राक् प्रवर्त्तमानेन हलादिशेषेण रेफस्य निवृत्तौ वकारस्य 'वव्रश्चे'त्यत्र सम्प्रसारणाऽऽपत्तिर्दुवारा स्यात् । ज्ञापितायां चाऽस्यामत्राऽनया रेफस्य प्राक्संप्रसारणे[4]ततोऽभ्यासस्य ऋवर्णस्य '[5]उरदित्यत्वे [6]रपरत्वे ततो हलादिशेषे प्राप्ते वकारस्य संप्रसारणत्वे च प्राप्ते 'न सम्प्रसारणे [7]सम्प्रसारण'मितिनिषेधाद्वस्य संप्रसारणाऽभावसम्पादनद्वारा-स्वांशे चरितार्थमसौ भवति । ज्ञापिताया अस्याः फलं तु हलादिशेषात् पूर्वं संप्रसारणे '[8]विव्यथे' इत्यस्य सिद्धिः । अस्या असत्त्वे हि पूर्वं

---

नी. दी. प. वृ. प. 133, पृ. 315 ।

(घ) ह. भा. प. भास्क. प. 61, पृ. 349 ।

(ङ) 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' - भ. ना. प.शे. प. 129, पृ. 361 ।

(च) संप्रसारणं तदाश्रयं च कार्यं बलवत्' - शेषा. प. भास्क. प. 108, पृ. 461 ।

8. तथाहि –

(क) "उक्तमत्रोभयेषाङ् ग्रहणस्य प्रयोजनम् - 'उभयेषामभ्यासस्य संप्रसारणमेव यथास्याद् यद्यत् प्राप्नोति तन्माभू' दितीत्युक्त्या ज्ञापकत्वमस्याऽस्यां सूचयति पत. व्या. म. भा. 6/1/2/17 ।

(ख) "अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति वचनम् हलादि शेषमपि बाधित्वा सम्प्रसारणमेव यथास्यादिति - विव्याध"इति-ग्रन्थेन ज्ञापकत्वमस्याऽस्यां सूचयति वाम. का. 6/1/17 ।

(ग) "अधिकारादेवोभयग्रहणे सिद्धे पुनरुभयेषां ग्रहणात् पुनः श्रुतिर्भवति । तस्याश्चैतदेव प्रयोजनम् - यत्र सम्प्रसारणं चान्यच्च प्राप्नोति तत्र सम्प्रसारणमेव यथास्यात्, माभूदयन्यदिति । तेन विव्याध, विव्यधिथ इत्यत्र हलादिशेषं परमपि बाधित्वा सम्प्रसारणमेव भवति, अन्यथात्र परत्वात् प्राक् प्रवर्त्तमानेन हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणमापद्येत ततश्च - उव्याध, उव्यधिथेत्यनिष्टंरूपं स्या"दिति ग्रन्थेन ज्ञापकत्वमस्याऽस्यां सूचयति जि. बु. न्या. 6/1/17 ।

(घ) "ज्ञापकं चास्या भाष्ये 'लिट्यभ्यासस्योभयेषाम्' (6/1/17) इत्यत्रोभयेषां वचनमुक्तम् । तद्धि वव्रश्चेत्यादौ हलादिशेषं बाधित्वा संप्रसारणं यथास्यादित्येवमर्थं' कृतम् । तेन कार्यान्तरं- बाधित्वा संप्रसारणस्य प्रवर्त्तनादस्या अस्तित्वं गमयती"त्याह सी. दे. बृ. प. वृ. प. 59. पृ. 225 ।

1. ओ व्रश्चूछेदने 'धा. पा. तुदा. 1376, इति व्रश्चूधातोर्लिटितिपिणलि रूपम् ।
2. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
3. 'इग्यणः सम्प्रसारणम्' - अष्टा. 1/1/45 ।
4. 'लिट्यभ्यासस्योभयेषाम्' - अष्टा. 6/1/17 ।
5. अष्टा. 7/4/66 ।
6. 'उरण् रपरः' - अष्टा. 1/1/51 ।
7. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
8. 'व्यथभयसंचलनयोः' धा. पा. भ्वा. 764, इति व्यथधातोर्लिटिते 'लिटस्तझयोरेशिरेच्' - अष्टा. 3/4/81 इत्यनेन तेरेशादेशे द्वित्वेऽभ्यासत्त्वे यकारस्य 'व्यथोलिटि' - अष्टा. 7/4/68, इति संप्रसारणे संप्रसारणाच्च - अष्टा. 6/1/108, इति पूर्वरूपे च - अष्टा. कृते हलादिशेषेण थकारनिवृत्तौ रूपमिदम् ।

हलादिशेषेण यस्य निवृत्तौ वस्य [1]संप्रसारणं दुर्वारमितिनाऽस्य सिद्धिः स्यात् । तथ्यमिदं ज्ञानेन्द्रभिक्षुणा; 'केचित्त्वि'त्यादिग्रन्थेनोपपादितम्[2] । भट्टोजि[3]- दीक्षित– नीलकण्ठ[4]दीक्षित – भट्ट[5]नागेश - शेषाद्रयस्तु[6] 'उभयेषामिति शब्दो नाऽत्र ज्ञापकः किन्तु 'वव्रश्चे'त्यत्र परमपि हलादिशेषं बाधित्वा सम्प्रसारणार्थं चरितार्थ इति मन्वते । भाष्ये तु परिभाषेयं भगवता प्रत्याख्याता । 'विव्यथे' इत्यादौ 'व्यथोलिटी'[7] तिसम्प्रसारणं हलादिशेषापवाद[8] इतितदाशयः ।

पुरुषोत्तमदेवेन तु '[9]सहिवहोरोदवर्णस्ये'ति सूत्रे 'वर्णस्ये'ति शब्दोऽस्याः परिभाषाया ज्ञापक इत्युक्तम्[10] ।

---

1. 'व्यथोलिटि' - अष्टा. 7/4/68 ।
2. तथाहि - "केचित्तु हलादिः शेषेण यकारनिवृत्तावपि वकारस्य सत्त्वात्सूत्रमिदम् सावकाशमिति अपवादत्वं न संभवतीति मत्वा 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनाद्धलादिशेषं बाधित्वा परस्य सम्प्रसारणे पूर्वस्य निषेधः । 'संप्रसारणं तदाश्रयं च कार्यम्.' इति वचनाभावे तु 'व्यथो लिटि' इति संप्रसारणस्य धातुविशेष-प्रत्यय-विशेषश्रयत्वेन 'इग्यणः 'इतिसंज्ञाविशेषद्वयाश्रयत्वेन च वह्वपेक्षस्य बहिरङ्गत्वात् संप्रसारणं बाधित्वा हलादि शेषे जाते वकारस्य संप्रसारणं स्यदित्याहुः' त. बो. भ्वादि प्र. पृ. 106 ।
3. अनेन हि 'लिट्यभ्यासस्ये'ति सम्प्रसारणं रेफस्य ऋकारः । 'उरत्' । तस्य' अचः परस्मिन्नि'ति स्थानिवद्भावात् 'नसंप्रसारणे' इति वस्योत्वंने'ति ग्रन्थेन ज्ञापकत्वाऽभावः सूचितः वै. सि. कौ. तुदादि प्र. पृ. 204 ।
4. अनेनहि - "निर्मुलेयं 'लिट्यभ्यासस्य.' (6/1/17) इत्युभयेषांग्रहणवैयर्थ्यापातेन भाष्ये प्रत्याख्याता"इत्युक्तम् प. वृ. प. 133, पृ. 315 ।
5. अनेन हि - "वस्तुतो 'लिटयभ्यासस्य'इतिसूत्र उभयेषां ग्रहणस्योभयेषां संप्रसारणमेव यथास्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थे "त्युक्तम् प. शे. प. 129, पृ. 361 । "संप्रसारणंतदाश्रयं च बलवदिति तूभयेषां ग्रहणवैयर्थ्यापत्त्या 'लिट्यभ्यासस्ये'तिसूत्रे भाष्ये एव प्रत्याख्यातमितितदुपन्यासः केषांचिदयुक्त एवेति" चोक्तम् ल. श. शे. भ्वादि प्र. पृ. 106 ।
6. अनेन हि - "संप्रसारणं तदाश्रयंचकार्यं बलवत् (108) तेन विव्यथे इत्यत्र हलादिशेषात्पूर्वं सम्प्रसारणे विव्यथे इति सिद्धयति । पूर्वं हलादिशेषे (7/4/60) वस्य संप्रसारणस्यात् । इदं चोत्रयेषां ग्रहणस्य (6/1/17) प्रयोजनं 'लिट्यभ्यासस्योभयेषाम्' 6/1/17 इतिसूत्रे भाष्ये स्पष्ट "मित्युक्तम् ।
7. अष्टा. 7/4/68 ।
8. हलादिः शेषः ' - अष्टा. 7/4/60 ।
9. अष्टा. 6/3/112 ।
10. तथाहि - "ज्ञापकं चात्र 'सहिवहोरोदवर्णस्य' (6/3/112) इति - अवर्णग्रहणं न्यास (अनुन्यास) कृतोक्तं संप्रसारणपूर्वरूपत्वे कृते उढ इत्युकारस्य माभूदित्येवमर्थम् । एतच्चाप्रयोजनम् संप्रसारणात् प्रागेव परत्वात् 'नुमुने' (8/2/3) इतियोगविभागेन सिद्धेषु ऊढ इत्यादौ ढत्वधत्वष्टुत्व ढलोपेषु ततः संप्रसारणपूर्वरूपत्वाभ्यांपरत्वादोत्वे कृते संप्रसारणं पूर्वरूपत्वं च विधास्याम इति न किञ्चिदनिष्टं नाम । तदेतदवर्णग्रहणं संप्रसारण-तदाश्रयपूर्वरूपत्वपोर्वलीयस्त्वस्य ज्ञापकमितीत्याह पु. दे. ल. प. वृ. प. 103, पृ. 154 ।

'न व्योलिटी'ति[1] सूत्रं व्याचक्षाणो भट्टोजिदीक्षितस्तु सूत्रेऽस्मिन् शब्दोऽयं'परमपि हलादिशेषं[2] बाधित्वा यस्य सम्प्रसारणं भवती'त्यर्थलाभार्थस्तेन'[3]विव्याये'त्यादिरूपंसिद्ध्यती''त्याह[4] । 'वचिस्वपि यजादीना'मित्यस्य[5] 'ग्रहिज्यावयिव्यधिवष्टि - विचति वृश्चति पृच्छति भृज्जतीना'मित्यस्य[6] च [7]स्वरितत्वादेवाऽत्रानुवृत्त्यैव सिद्धे पुन-'र्लिट्यभ्यासस्ये'त्यत्र[8] 'उभयेषां' ग्रहणं पुनर्विधानार्थम् । तथा च वच्यादीनां ग्रह्यादीनां चाऽभ्यांसस्य[9]संप्रसारणं स्याल्लिटीतिद्विर्विधानं लभ्यते, तत्र द्वितीयविधानं नियमार्थम् - 'उभयेषामभ्यासस्य संप्रसारणमेवस्यान्नेतर'दिति । तेनाऽभ्यासे एतत् - संप्रसारणविषये-कार्यान्तरनिवृत्तिः सिद्ध्यतीति प्रकृते'विव्याये' - त्यादौ अभ्यासयकारस्य संप्रसारणे रूपाणीष्टानि सिद्ध्यन्ति । अन्यथा [10]संप्रसारणात्प्राक्, परत्वादत्र [11]हलादिशेषेण यकारस्य निवृत्तौ वकारस्य [12]संप्रसारणे उकारे सति 'उव्याये'त्याद्यनिष्ट - रूपाणामापत्तिः स्यादितिदीक्षिताऽऽशयः । दीक्षितग्रन्थोऽयं द्वितीये ज्ञापकसंग्रहपरिशिष्टेऽपि [13]संगृहीतः ।

---

1. अष्टा. 6/1/46 ।
2. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
3. 'व्येञ्संवरणे' धा. पा. भ्वा. 1007, इति व्येधातोर्लिटि तिपिणलि 'व्ये अ' - इति स्थिते 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धौ 'व्यै अ' - इत्यवस्थायांधातोर्द्वित्वे 'व्यैव्यै अ' इति स्थितौ - अभ्यासयकारस्य 'लिट्यभ्यासस्योभयेषाम्' - अष्टा. 6/1/17, इत्यनेन संप्रसारणे पूर्वरूपेऽयादेशे च कृते रूपमिदम् ।
4. तथाहि -''परमपि हलादि शेषं बाधित्वा यस्य संप्रसारणम् उभयेषांग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किंतेने'' ति - वै. सि. कौ. भ्वादि प्र. पृ. 146 ।
5. 'वचिस्वपि यजादीनां किति' - अष्टा. 6/1/15, इत्यत इतिशेषः ।
6. 'ग्रहिज्या वयिव्यधिवष्टिविचति वृश्चति पृच्छतिभृज्जतीनां ङितिच' - अष्टा. 6/1/16, इत्यत्र इतिशेषः ।
7. 'स्वरितेनाधिकारः' - अष्टा. 1/3/11 ।
8. अष्टा. 6/1/17 ।
9. 'पूर्वोऽभ्यासः' - अष्टा. 6/1/4 ।
10. 'लिट्यभ्यासस्योभयेषाम्' - अष्टा. 6/1/17 ।
11. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
12. 'लिट्य.' - अष्टा. 6/1/17 ।
13. तथाहि–''परमपि हलादिशेषं बाधित्वा यस्य संप्रसारणम्, उभयेषां ग्रहणसामर्थ्यादित्याह एन्. एस्. राम. पृ. 214 ।

## 'उभाभ्या'मितिशब्दः

[1]'डाबुभाभ्यामन्यतरस्या'मिति[2]सूत्रे 'उभाभ्या'मितिशब्दः '[3]अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'तिपरिभाषाया विध्यंशस्य [4]ज्ञापकः । यतोऽस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि - उभाभ्यामितिशब्दोऽत्र '[5]मनः' 'अनो[6]बहुव्रीहेः' - इत्युभय-प्रतिषेधोद्देश्ययोः[7], परिग्रहार्थमुपात्तः ।' अस्याऽभावे स्वपूर्वशास्त्रोद्देश्ययोः[8] परिग्रहोऽत्रोभाभ्यामितिशब्दं विनापि सुलभः । ज्ञापिते चाऽस्मिन्परिभाषांशेऽनन्तरस्य [9]पूर्वस्यैव विधिः प्राप्नोति न चेष्टस्य पूर्वमात्रस्ये[10]ति सूत्रेऽस्मिन् अनन्तरा-ननन्तरयोरुभयोः परिग्रहार्थमुभाभ्यामितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापित-स्याऽस्य परिभाषांऽशस्य फलं तु 'सुपि[11]स्थः' इति विधिरनन्तरस्य [12]कस्यैव भवति, न व्यवहितस्याण[13]इति । ज्ञापकोऽयं सूत्रकारसम्मत एव, न तु भाष्यकार-सन्मत इति मन्ये । यतो भाष्ये सूत्रेऽस्मिन् उभाभ्यामित्ययं शब्दः [14]प्रत्याख्यातः ।

---

1. अष्टा. 4/1/13 ।
2. उभाभ्यामित्यस्य मनन्तप्रातिपदिकानन्तबहुव्रीहिभ्यामित्यर्थः ।
3. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे. ल. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
4. तथाहि –
   'इदंतर्हिज्ञापकम् – 'डाबुभाभ्याम्.' (4/1/13) इत्यत्र उभाभ्यां - ग्रहणमित्याह व्याडिः प. सू. प. 16, पृ. 10 ।
5. अष्टा. 4/1/11 ।
6. अष्टा. 4/1/12 ।
7. मनन्तप्रातिपदिकानन्तबहुव्रीह्योरित्यर्थः ।
8. मनन्तप्रातिपदिकानन्तबहुव्रीह्योरित्यर्थः ।
9. अनन्तबहुव्रीहेरेवेत्यर्थः ।
10. मनन्तप्रातिपदिकानन्तबहुव्रीहीत्युभयस्येत्यर्थः ।
11. अष्टा. 3/2/4 ।
12. 'आतोऽनुपसर्गे कः' - अष्टा. 3/2/3, इत्यस्यैवेत्यर्थः ।
13. 'कर्मण्यण्' - अष्टा. 3/2/1, इत्यण इत्यर्थः ।
14. 'तथाहि – "किमर्थमुभाभ्यामित्युच्यते ? । उभाभ्यां योगाभ्यां डाबूयथास्यात्-मनन्ताद-नन्ताच्च बहुव्रीहेः । नैतदस्ति प्रयोजनम्, प्रकृतमुभाभ्यामनुवर्तते"इत्युक्तं भगवता व्या. म. भा. 4/1/1/13 । अस्य भाष्यस्य स्वरितत्वबलैनैव व्यवहितस्यापि विधिनिषेधौ भवत इत्याशयः ।

## 'ऊ'ङितिशब्दः

[1]'नोङ्धात्वो'रित्यत्र 'ऊ'ङिति शब्दः 'भवत्यूङन्तात्स्वादयः 'इति वचनस्य ज्ञापक[2]: । यतोऽस्य वचनस्याऽभावेऽत्राऽसौ शब्दो व्यर्थः । तथाहि - 'उङः धातोश्च आदेशभूतादुयणः परे शसादय उदात्ताः न स्युरित्यर्थकेऽस्मिन्सूत्रे '[3]ब्रह्मबन्ध्वे' - त्यादौ दाऽऽदिप्रत्ययानामुदात्तत्वप्रतिषेधार्थमुपात्तोऽयंशब्दोऽस्य वचनस्याऽभावे व्यर्थः । [4]'अर्थवदधातुरप्रत्ययः प्रातिपदिक'मित्यात्राऽप्रत्यय इत्यस्य प्रत्ययो नेत्येवं प्रसज्यप्रतिषेधपरत्वं पक्षे प्रत्ययान्तः प्रत्ययश्च प्रातिपदिकसंज्ञके न भवत इत्यर्थोभवतीतिब्रह्मबन्धूशब्दस्योङ्प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञाया अप्राप्त्या ततः शसादयो [5]विभक्तयो हि दुर्लभाः । ज्ञापिते चाऽस्मिन्वचने शसादिविभक्ते-रूङन्तात् सुलभतया 'ब्रह्मबन्ध्वे'-त्यादावुदात्तत्वप्रतिषेधार्थमयं शब्दः स्वांशे-चरितार्थो-भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'कुरूः[6]' [7]'ब्रह्मबन्धूः' - '[8]अलाबूः' -

---

1. अष्टा. 6/1/175 ।
2. तथाहि –
   (क) "आचार्य प्रवृत्ति र्ज्ञापयति - 'उत्पद्यन्ते ऊङन्तात् स्वादयः' - इति, यदयं 'नोङ्धात्वो'रितिविभक्तिस्वरस्य प्रतिषेधं शास्ती"त्याह पत. व्या. म. भा. 1/2/2/45 ।
   (ख) "ब्रह्मबन्ध्वादेरङ्प्रत्ययान्तत्वात् अप्रातिपदिकत्वे कथं स्वादिः । तर्हि यदयं नोङ्धात्वोरिति (6/1/175) ऊङन्तात्परस्याः विभक्तेरुदात्तप्रतिषेधं शास्ति तत् - ज्ञापयति 'भवत्यूङन्तात्स्वादयः" - इत्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 84 2
   (ग) "अर्थवदधातुः (सू. 1/2/45) अप्रत्यय इत्यस्य प्रसज्यप्रतिषेधत्वे 'नोङ्धात्वोः' (सू. 6/1/175) इति विभक्तिस्वरप्रतिषेधात् ज्ञापकात् 'ऊङन्तादेः प्रातिपदिकत्व"मित्याह श्री ना. ज्ञा. सं. 1, पृ. 39 ।
3. ब्रह्मबन्धूशब्दात् ऊङन्तात्तृतीयैकवचने रूपम् ।
4. अष्टा. 1/2/45 ।
5. 'ङ्याप्प्रातिपदिकात्' - अष्टा. 4/1/1, 'स्वौजमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्य-सुङसोसाम् ङ्योः सुप्' - अष्टा. 4/1/2, इति विहिता इत्यर्थः ।
6. स्त्रियां कुरुशब्दात् 'ऊङुतः' - अष्टा. 4/1/66, इत्यूङिप्रत्यये सवर्णदीर्घैकादेशे विभक्तिकार्ये च कृते रूपमिदम् ।
7. ब्रह्मबन्धूशब्दात् 'ऊङुतः' - अष्टा. 4/1/66, इत्यूङि पूर्ववद्रूपम् ।
8. अलाबूशब्दः नञ् पूर्वकात्' लबि अवस्रंसने च' धा. पा. भ्वा. 379, लविधातोः इदित्त्वात् 'इदितोनुम्धातोः' - अष्टा. 7/1/18 इति नुमागमे 'कृषिचमितनिधनि सर्जिखर्जिभ्यऊः' - उणा. सू. 81 'णित्कसिपद्यर्तेः ' - उणा. सू. 85, इत्याभ्यां क्रमशः 'ऊः' णित्' - इतिचाऽनुवर्त्य 'नञिलम्बेर्नलोपश्च' - उणा. सू. 87, इत्यनेन ऊ प्रत्यये नुमागमे नकारस्य लोपे च कृते उप्रत्ययस्य णित्त्वात् 'अतउपधायाः' - अष्टा. 7/2/116 इति उपधावृद्धौ, ऊ प्रत्ययान्तात् कृदन्तात्सौ 'नञ्' - अष्टा. 2/2/65 इति समासे 'नलोपोनञः' - अष्टा. 6/3/73, इति नकारस्य लोपे च सति अलाबूशब्दात् स्त्रियाम् 'अप्राणिजातेश्चारज्ज्वादीनामिति इत्यूङ्प्रत्यये सवर्णदीर्घैकाऽऽदेशे 'प्रातिपदिकग्रहणे वक्तव्यम्' - वा. का. 4/1/66, इत्यूङ्प्रत्यये सवर्णदीर्घैकाऽऽदेशे 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'- (प. शे. प. 72, पृ. 288) इति परिभाषावलेन 'भवत्यूङन्तात्

1'कर्कन्धूः' '2भद्रबाहूः' '3पङ्गूः' '4श्वश्रूः' '5करभोरूः' '6संहितोरूः' '7शफोरूः' '8लक्षणोरूः' '9वामोरूः' '10संहितोरूः' '11सहोरूः' '12कद्रूश्च वै सुपर्णी च''13गुग्गुलूः' 'मधूः14' '15जतूः' '16पतयालूः' .'17कद्रूः' - '18कमण्डलूः' –

---

- स्वादयः' (व्या. म. भा. 1/2/2/45) इति वचनेन वाऽसौ रुत्वे विसर्गे च कृते रूपमिदं सिद्ध्यति । अत्र रूपस्वरयोर्भेदाऽभावेऽपि 'अलाब्वा' 'अलाब्वै' - इत्यादौ 'नोङ्धात्वोः' - अष्टा. 6/1/175, इति विभक्त्याद्युदात्तत्वप्रतिषेधाय दीर्घोकारान्तादप्यूङ्प्रत्ययो विहितः । असति हि तस्मिन् प्रत्यये यथा जलप्वौ जलप्वः - इत्यत्र विभक्त्याद्युदत्तत्व-प्रतिषेधो न भवति, तथेहाऽपि स न स्यात् ।

1. कर्कन्धूशब्दोऽपि 'नृतिशृध्योः कूः ' उणा. सू. 91, इत्यनुवर्तकिन' अन्दूदृन्भू जम्बू कफेलू कर्कन्धूः दिधिषूः' - उणा. सू. 93, इत्यनेन कर्कं'दधातीत्यर्थे कर्कपूर्वकात् 'डुधाञ्धारणपोषणयोः' धा. पा. जुहो. 1092, इतिधाधातोः कूप्रत्ययेनिपातनान् नुमागमे 'आतोलेप इटिच' - अष्टा. 6/4/64 इतिधातोराकारलोपे च कृते व्युत्पादितः, तस्मात् 'अप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्' वा. का. 4/1/66, इति ऊङ्प्रत्यये सवर्णदीर्घैकाऽऽदेशेस्वादि कार्ये च कृतेरूपमिदम् । अत्रापि दीर्घोकारान्तादूङ्प्रत्यय-विधानप्रयोजनम्' अलाबूः' इतिवद्बोध्यम् ।
2. भद्रबाहुशब्दात्संज्ञायांस्त्रियां 'बाह्वन्तात्संज्ञायाम्' - अष्टा. 4/1/67, इत्यूङिप्रत्यये सवर्णदीर्घैकाऽऽदेशादिकार्ये कृते रूपमिदम् ।
3. पङ्गुशब्दात्स्त्रियां' पङ्गोश्च'- अष्टा. 4/1/68, इत्यूङिपूर्ववद्रूपम् ।
4. श्वशुरस्य स्त्रीत्यर्थे 'पुंयोगादाख्यायाम्' - अष्टा. 4/1/48, इति प्राप्तं पुंयोगलक्षणं ङीषं- बाधित्वा 'श्वशुरस्योकाराकारयोर्लोपश्च वक्तव्यः' वा.का. 4/1?68, इत्यनेन श्वशुरशब्दादूङ् प्रत्यये भत्वेऽकारलोपेऽकारस्योकारस्य च लोपे विभक्तिकार्ये च कृते रूपमिदम् ।
5. करभौ इव ऊरूयस्या इत्यर्थे करभोरुशब्दादुदन्तात् 'ऊरूत्तरपदादौपम्ये' अष्टा. 4/1/69, इत्यूङि सवर्णदीर्घैकाऽऽदेशे विभक्तिकार्ये च कृते रूपमिदम् ।
6. संहितोरुशब्दात् समस्तात् 'संहितशफ. लक्षण वामादेश्च' - अष्टा. 4/1/70, इत्यूङिसवर्णदीर्घैकादेशे विभक्तिकार्ये च कृते रूपम् ।
7. शफोरुशब्दात् समस्तात् 'संहितशफ.' - अष्टा. 4/1/70, इत्यूङि सवर्णदीर्घैकाऽऽदेशे विभक्तिकार्ये च कृते रूपम् ।
8. लक्षणोरुशब्दात् समस्तात् 'संहित.' - अष्टा. 4/1/70, इत्यूङि सवर्णदीर्घैकादेशे विभक्तिकार्ये च कृते रूपम् ।
9. वामोरुशब्दात् समस्तात् 'संहित.' - अष्टा. 4/1/70, इत्यूङि सवर्णदीर्घैकाऽऽदेशे विभक्तिकार्ये च रूपम् ।
10. संहितोरुशब्दात् समस्तात् 'संहितसहाभ्यां चेति वक्तव्यम्' वा. का. 4/1/70' इत्यूङ्पूर्वव-द्रूपम् ।
11. सहोरुशब्दात् समस्तात् 'संहित.' वा. का. 4/1/70, इत्यूङि पूर्ववद्रूपम् ।
12. कद्रुशब्दात् स्त्रियां छन्दसि 'कद्रुकमण्डल्वोश्छन्दसि' - अष्टा. 4/1/71, इत्यूङि पूर्ववद्रूपम् ।
13. गुगुलुशब्दात् स्त्रियां छन्दसि 'गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्' वा. का. '4/1/71, इत्युङिपूर्ववद्रूपम् ।
14. मधुशब्दात् स्त्रियां छन्दसि 'गुग्लुलु.' वा. का. 4/1/71, इत्यूङि पूर्ववद्रूपम् ।
15. जतुशब्दात् स्त्रियां छन्दसि 'गुग्लुलु.' - वा. का. 4/1/71, इति ऊङि पूर्ववद्रूपम् ।
16. पतयालुशब्दात् स्त्रियां छन्दसि 'गुग्लुलु.' वा. का. 4/1/71, इत्यूङि पूर्ववद्रूपम् ।
17. कद्रुशब्दात् 'संज्ञायाम्' - अष्टा. 4/1/73, इत्यूङि पूर्वद्रूपम् ।
18. कमण्डलु शब्दात् 'संज्ञायाम्' - अष्टा. 4/1/73, इत्युङिपूर्ववद्रूपम् ।

इत्यादिप्रयोगाणां साधुत्व-सिद्धिः । अस्य वचनस्याऽसत्त्वे हि - ऊङन्तस्याऽप्रातिपदिकत्वात् स्वादयुत्पत्तेरभावेन नैतेषां साधुत्वं सिद्ध्येत् । कैयटस्तु ऊङन्तेभ्योऽपि 'प्रातिंपदिकग्रहणे लिङ्गविशिटस्याऽपि ग्रहण'मितिपरिभाषयाऽपि स्वाद्युत्पत्तिं[1] मनुते । जिनेन्द्रबुद्धिः 'ङ्यामप् प्रातिपदिका'दित्यत्र त्यूयाबूग्रहणं त्यूङोरुपलक्षणमिति[2] स्वीकृत्य त्यूङन्तेभ्यः 'युवतिः' 'कुरूः' इत्यादिभ्यः सुबुत्पत्तिं - मत्वा ऊङन्तेभ्यः सुबुत्तौ ज्ञापकमपि 'श्वशुरः श्वश्रूवा' - इतिनिर्देशमुपन्यस्तवान्[3] । ज्ञानेन्द्रभिक्षुस्तु जिनेन्द्रबुद्धयुक्तं ज्ञापकं निराकुर्वन् लिङ्गविशिष्टपरिभाषयैवोङन्तेभ्योऽपि स्वादयुत्पत्तिं[4]मनुते । उपायस्योपायान्तराऽदूषकतया सर्वमिदं युक्तं प्रतिभाति । यतो भगवानपि ज्ञापकमुपन्यस्योपायान्तरं समुपन्यस्तवान्[5] ।

## 'ऊ'डितिशब्दः "ऊडि'तिदीर्घोच्चारणं वा

'वाह[6] ऊठ्' - इति सूत्रे 'ऊ'डितिशब्दः 'असिद्धं बहिरङ्गमन्तरङ्गे'[7]- इतिपरिभाषाया ज्ञापकः[8] । यतोस्या अभावेत्र 'प्रष्ठौहः' 'विश्वौहः' इत्यादौ वाहः

---

1. अनेन हि - "अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति स्वादय उत्पद्यन्ते"-इत्युक्तम् प्रदी. 1/2/2/45 ।
2. "स्त्रियाम्' इति प्रकृत्य येषां विधानं तदुपलक्षणार्थमिह ङ्याब्ग्रहणम्, अतस्त्यूङोऽपि ग्रहणमिह कृतमेववे दितव्यम्"पदम. 4/1/1 ।
3. तथाहि –"स्वादयस्तूङन्ताद्भवन्त्येव, त्यूङोरपि ग्रहणात्; ज्ञापकाद्वा, 'श्वशुरः श्वश्रूवा'इति निर्देशात्" न्या. 4/1/66 ।
4. अनेन हि -"परिभाषायाः प्रयोजनम् - श्वश्रूः' । प्रत्ययान्तत्वेनाऽप्रातिपदिकत्वेऽपि इह स्वादयः । नच 'श्वशुरः श्वश्रूवे'ति निर्देशादेव स्वादिसिद्धिरिति वाच्यम्, निर्देशस्य शब्दपरत्वात्, 'विपराभ्यां जेः' 'ङेर्यः' इतिवत् .... इत्युक्तम् त. बो. अजन्तपुंलिङ्ग प्र. पृ. 92 ।
5. तथाहि - "अथवा द्वे ह्यत्र प्रातिपदिकसंज्ञे -अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तयान्तवद्भावात्स्वादयुत्पत्तिर्भविष्यति" इति, व्या. म. भा. 1/2/2/45, । 'तत्राऽन्तरङ्गत्वात् प्रत्ययोत्पत्तेः प्रागेव ब्रह्मबन्धुशब्दस्य प्रवृत्ता प्रातिपदिकसंज्ञेत्यूङेकादेशस्य पूर्वं प्रत्यन्तवद्भावादस्त्येव प्रातिपदिकत्वमिति न कश्चिद्दोषः ' इति प्रकृतभाष्याशयमाह कै. प्रदी. 1/2/2/45 ।
6. अष्टा. 6/4/132 ।
7. (क) व्याडिः प. सू. प. 36, 79, पृ. 18, 33 ।
   (ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
   (घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
   (ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।
   (च) भ. ना. प. शे. प. 51, पृ. 184 ।
   (छ) शेषा. प. भास्क. प. 42, पृ.417 ।
8. तथाहि –

(क) "असिद्धं बहिरङ्गमन्तरङ्गे । कथं ज्ञायते । यदयं वाह उठं (6/4/132) शास्ति । कथं कृत्वा ज्ञापकम् । अत्रोठ्न वक्तव्यः । वाहः सम्प्रसारणमित्येव सिद्धम् । 'प्रष्ठ ऊह अस्' इति स्थिते - योसावप्रत्यय उक्तोण्विन् तस्मिन् प्रत्ययलक्षणेन 'पुगन्तलघूपधस्य' (7/3/86) इति गुणे कृते 'वृद्धिरेचि' (6/1/88) इतिसिद्धम् । प्रष्ठौहः पश्येति । एवं सिद्धे सति यदयं वृद्ध्यर्थं वाह ऊठं शास्ति तज्ज्ञापयति– अस्तीयं परिभाषेति । तेन बहिरङ्गलक्षणस्य गुणस्यासिद्धत्वादन्तरङ्गलक्षणा वृद्धिर्न स्यात् । तत्र ण्विनमाश्रित्य वृद्धिः बाह्याश्रयत्वाद्बहिरङ्गो गुणः । किमेतस्या ज्ञापने प्रयोजनम् । ग्रामिणि कुलमित्यत्रासिद्धत्वाद्बहिरङ्गलक्षणस्य नपुंसकह्रस्वत्वस्यान्तरङ्गस्तुङ् न भवति । अत्रापि हि नपुंसकमाश्रित्य ह्रस्वत्वं तद् बाह्याश्रयं भवति बहिरङ्गम् । ह्रस्वमाश्रित्य तुक् सवर्णत्वादन्तरङ्ग"मित्याह व्याडिः प. सू. प. 79 पृ. 33 ।

(ख) "एवं तर्हि सिद्धे सति यद् वाह उठं शास्थि तज् ज्ञापयत्याचार्यो 'भवत्येषा परिभाषाऽसिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किमेतस्या ज्ञापने प्रयोजनम् ? पचावेदम् । पचामेदम् । असिद्धत्वाद् बहिरङ्गलक्षणस्याऽऽद्गुणस्यान्त- रङ्गलक्षणमैत्वं न भवतीती"त्याह व्या. म. भा. 6/4/4/132 ।

(ग) "अथ किमर्थमूठ्क्रियते, सम्प्रसारण एव कृते गुणे च 'वृद्धिरेचि' इति वृद्धौ सत्यां सिद्धं रूपं भवति - प्रष्ठौह इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते ? ज्ञापनार्थम् । एतज् ज्ञापयति - भवत्येषा परिभाषाया 'असिद्धं बहिरङ्गमन्तरङ्गे'इति । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्या"दित्याह वाम. का. 6/4/132 ।

(घ) "ज्ञापकं चास्याः 'वाहऊठ्' (6/4/132) इति वहेश्छन्दसि ण्विप्रत्यायन्तस्य ऊठादेशविधानम् । तत्रहि उच्यते । प्रकृतमेव संप्रसारणं विधीयमानं परेण पूर्वरूपत्वं ततोण्विप्रत्ययस्य प्रत्ययलक्षणेन उकारस्य गुण ओकारस्ततो 'वृद्धिरेचि' (6/1/88) इति सिद्धं प्रष्ठौहः इत्यादि । अनकारान्ते चोपपदे वर्हेर्ण्विप्रत्ययो न दृश्यते । तत् किं वचनेनेति । यदा त्वस्त्येतदसिद्धं बहिरङ्गमन्तरङ्गे इति ण्वौ धातुप्रत्यये विधीयमानत्वादन्तरङ्गे गुणे कर्तव्ये भसंज्ञा निमित्तप्रत्ययाश्रितं बहिरङ्गं संप्रसारणं नास्तीति कस्य स्थाने गुणः स्यादिति । तत् कृतमूठ्वचनं परिभाषाया अस्तित्वे ज्ञापकमिती" त्याह पुरुषोत्तमदेवः ल. प. वृ. प. 41, पृ. 129 ।

(ङ) "ज्ञापकं चात्र 'वाह ऊठ्' (6/4/132) इत्यूठो विधानम् । तत्र ह्युच्यते । प्रकृतं संप्रसारणमेव वकारस्य विधीयतां ततः पूर्वरूपत्वम् । ततो ण्विप्रत्ययस्य प्रत्ययलक्षणेनोकारस्यौकारो गुणस्ततो वृद्धिरेचीति वृद्ध्या सिद्धं प्रष्ठौहेति । अनकारान्ते चोपपदे छन्दसि वहेर्ण्विर्न दृश्यते । तत्किमूठोविधानेन । तत् कृतं ज्ञापयत्यस्तीयं परिभाषेति । बहिरङ्गंसंप्रसारणं भसंज्ञानिमित्तप्रत्यये विधानात्तत्रान्तरङ्गेऽभ्यन्तरङ्गे प्रत्ययाश्रये गुणे कर्तव्ये बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादुकारो नास्तीति कथं गुणः स्यादिती"त्याह सी. दे. बृ. प. वृ. प. 69; पृ. 234 ।

(च) "अत्र च ज्ञापकं 'वाह् ऊठ्' (6/4/132) इति ऊठ्ग्रहणम् । तद्धि विश्वौहः इत्यादि सिद्ध्यर्थम् । यदि चेयं न स्यात् वाहः संप्रसारणमित्युक्तावपि 'संप्रसारणाच्च' (6/1/108) इतिपूर्वरूपत्वे वृद्धौ च विश्वौह इतिरूपसिद्धौ किमूठ् ग्रहणेन । सत्यां

ऊठादेशायोपात्तोऽयं शब्दो व्यर्थः ऊठादेशप्रयोजनं ह्यन्यथासिद्धम् । तथाहि - प्रष्ठं वहति, विश्वं वहतीति चार्थे क्रमशः प्रष्ठमित्युपपदाद्विश्वमित्युपपदाच्च वह[1]धातोः [2]'वहश्चे'ति ण्विप्रत्यये [3]उपधावृद्धौ ण्वेः [4]सर्वापहारे उपपदसमासे[5] समासत्वात् प्रातिपदिकसंज्ञायां[6] [7]'सुपोधातुप्रातिपदिकयो'रितिसुपोलुकि प्रष्ठवाह्शब्दात्

---

ह्यस्यां बहिरङ्गसंप्रसारणस्यासिद्धतया रूपासिद्धिः स्पष्टैवे"त्याह नी. दी. प. वृ. प. 58, पृ. 304 ।

(छ) "ज्ञापकमत्र 'वाह ऊठ्' (6/4/132) इत्यूड्विधानम् । तथाहि । ऊठ्ग्रहणं मास्तु । 'वसोः संप्रसारणम्' (6/4/131) इत्यतोनुवृत्तं संप्रसारणमेव विधीयतां तस्य लघूपधगुणे कृते 'वृद्धिरेचि' (6/1/88) इतिसिद्धं विश्वौह इति । एवं स्थिते बहिरङ्ग परिभाषां ज्ञापयति । सत्यां ह्येतस्यां बहिरङ्गसंप्रसारणस्या सिद्धत्वादन्तरङ्गो गुणो न स्यादित्यूठ्ग्रहणं सार्थकम् । नन्वकारान्ते कारान्तोपसर्गेच रूपे विशेषः स्यादिति चेन्मैवम् । भाष्योक्तिज्ञापकबलेनैतादृशस्थले ण्विप्रत्ययाभावस्यानुमानादिति निबन्धकृतः" इत्याह ह. भा. प. भास्क. प. 71, पृ. 353 ।

(ज) "अस्यां च 'वाहऊठ्' सूत्रस्थमूठ्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा सम्प्रसारणमात्रविधानेन लघुपधगुणे 'वृद्धिरेचि' इति वृद्धौ विश्वौह इत्यादि सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धित्वाल्लघूपध-गुणो न स्या"दित्याह भ. ना. प.शे. प. 51, पृ. 194-196 ।

(झ) "अत्र च ज्ञापकम् - 'वाहऊठ्' (6/4/132) इतिसूत्रे ऊठ्ग्रहणम् । तद्धि विश्वौह इत्यत्र 'एत्येधत्यूठ्सु' (6/1/89) इतिवृद्ध्यर्थम् । यदीयं परिभाषा न स्यात्, तर्हि विश्वं वहतीति विग्रहे 'वहश्च' (3/2/64) इति ण्विप्रत्यये उपपदसमासे शसि भसंज्ञायां 'वाहऊठ्' (6/4/132) इति सूत्रेण 'वसोः संप्रसारणम्' (6/4/131) इत्यतोऽनुवृत्त-संप्रसारणविधौ 'संप्रसारणाच्च' (6/1/108) इति पूर्वरूपे ण्विप्रत्ययमाश्रित्य लघूपधगुणे 'वृद्धिरेचि' (6/1/88) इति वृद्धौ विश्वौह इति सिद्धेरनर्थकं स्यात् । एतत्सत्त्वे तु भसंज्ञानिमित्तशस्प्रत्ययमाश्रित्य कृत संप्रसारणस्य लघूपधगुणनिमित्तण्विप्रत्ययो-पस्थित्युत्तरकालोपस्थितिकशस्निमित्तकत्वेन बहिरङ्गत्वादसिद्धत्वाल्लघूपधगुणाभावे 'वृद्धिरेचि' (6/1/88) इत्यस्याप्रवृत्तेः 'एत्येधत्यूठ्सु' (6/1/89) इति वृद्धये ऊठ्ग्रहणमर्थव"दित्याह शेषा. प. भास्क. प. 42, पृ. 420-421 ।

1. 'वह प्रापणे' धा. पा. भ्वा. 1004 ।
2. अष्टा. 3/2/64 ।
3. 'अत उपधायाः' - अष्टा. 7/2/116 ।
4. णकारस्य 'चुटू' -अष्टा. 1/3/7, इतीत्संज्ञायां 'तस्य लोपः' - अष्टा. 1/3/9 इति लोपे इकारस्योच्चारणार्थकतया स्वतो निवृत्तौ वकारस्य 'वेरपृक्तस्य' - अष्टा. 6/1/67 इतिलोपे ण्वेः सर्वापहार इत्यर्थः ।
5. 'उपपदमतिङ्' - अष्टा. 2/2/19 ।
6. 'कृत्तद्धितसमासाश्च' - अष्टा. 1/2/46 ।
7. अष्टा. 2/4/71 ।

विश्ववाह् शब्दाच्च शसि भसंज्ञायां[1] 'वाह[2]ऊठ्' इति वकारस्य ऊठादेशे ऊकारस्य संप्रसारणसंज्ञायां[3] 'सम्प्रसारणाच्चे-[4] तिपूर्वरूपे 'प्रष्ठ + ऊह + अस्' 'विश्व + ऊह' - इत्यवस्थायाम् 'एत्येधत्यूठ्सु'[5] इतिवृद्धौ 'प्रष्ठौहः 'विश्वौहः 'इत्यादिप्रयोगाणां सिद्धये वृद्ध्यर्थमुपात्तोऽयमूडितिशब्दोऽस्याः परिभाषाया अभावे व्यर्थः । 'प्रष्ठ + वाह + अस्' 'विश्व + वाह् + अस् इत्यवस्थायां हि 'वाह [6]ऊठ्'इतिसूत्रे 'वसोः [7]संप्रसारण'- मित्यतोऽनुवृत्तस्य सम्प्रसारणमात्रस्य विधानेऽपि 'संप्रसारणाच्चेति[8] पूर्वरूपे ण्विप्रत्य यमाश्रित्य लघूपधगुणे[9] 'वृद्धिरेची[10]'तिवृद्धौ, 'प्रष्ठौहः' 'विश्वौहः इत्यादि - प्रयोगाणां सिद्धिः सुलभा । ज्ञापितायां चाऽस्यामत्र[11]भसंज्ञानिमित्त-शसुप्रत्ययमाश्रित्य कृतस्य सम्प्रसारणस्य[12] लघूपधगुण[13] निमित्तण्विप्रत्ययोपस्थि-त्युत्तरकालोपस्थितिकशसुप्रत्ययनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वाल्लघूपधगुणाऽभावे 'वृद्धि[14]रेची' ति वृद्धेरप्राप्तौ[15] वृद्ध्यर्थमूठ्विधानाय शब्दोऽयं स्वांशे चरितार्थो भवति । न चाऽत्र नैतज्ज्ञापकसाध्यम्, लोकतः सिद्धत्वात्, प्रत्यङ्गवर्ती हि लोकः तद्यथा - पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति, ततः सुहृदाम्, ततः सम्बन्धिनामितिशङ्क्यम् । यतो यत्र युगपदन्तरङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिक- न्यायाश्रयणाद् अन्तरङ्गं भवितुमर्हति, 'प्रष्ठौहः' 'विश्वौहः' - इत्यादौ तु लौकिकन्यायोऽयं नाऽवतरति । नापि च अकारान्तोपसर्गे उपपदे 'प्रौहः' इत्यत्र 'एङि पररूप[16]'मितिपररूपं बाधित्वा [17]वृद्ध्यर्थं, तथा अनकारान्ते शाल्यूहः 'इत्यत्र उकारश्रवणार्थमत्र सूत्रे 'ऊ'डितिशब्द आवश्यक इतिनाऽस्य ज्ञापकत्व-

1. 'यचि भम्' - अष्टा. 1/4/18 ।
2. अष्टा. 6/4/132 ।
3. 'इग्यणः संप्रसारणम्' - अष्टा. 1/1/45 ।
4. अष्टा. 6/1/108 ।
5. अष्टा. 6/1/89 ।
6. अष्टा. 6/4/132 ।
7. अष्टा. 6/4/131 ।
8. अष्टा. 6/1/108 ।
9. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
10. अष्टा. 6/1/88 ।
11. 'यचि भम्' - अष्टा. 1/4/18 ।
12. 'वाहः' - अष्टा. 6/4/132 ।
13. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86।
14. अष्टा. 6/1/88 ।
15. 'एत्येधत्यूठ्सु' - अष्टा. 6/1/89 ।
16. अष्टा. 6/1/94 ।
17. 'एत्येधत्यूठ्सु' - अष्टा. 6/1/89 ।

मस्यामिति शङ्कनीयम् । यतो ज्ञापकतापरभाष्यप्रामाण्येन अकारान्तोपसर्ग उपपदे अनकारान्ते चोपपदे अनभिधानाद् वहेर्ण्वि र्न भवति[1] ।

अथ विश्वौह इत्यादौ '[2]ऊडिदम्पदाद्यप् पुम्रैद्युभ्यः' इतिविभक्त्याद्युदुदात्तत्वसिद्धये 'वाह ऊठ्[3]'इति सूत्रे ऊडितिशब्दश्चरितार्थ इति नाऽस्य ज्ञापकत्वमस्याम्, न च स्वरार्थत्वे 'ऊडिद-[4]'मित्यत्र उऊड्ग्रहणमपनीय वुग्रहणं कर्त्तव्यम्, वकारसंबन्ध्युपधा भूतो य उस्ततः परविभक्तेरुदात्तो भवतीत्यर्थः, एवं च ऊड्ग्रहणं विनैव स्वरसिद्धिरिति वक्तुं शक्यम्, यतस्तथा सति तस्थुष[5] इत्यादौ 'वसोः सम्प्रसारण'मिति सम्प्रसारणात् परविभक्तेराद्युदात्तत्वं प्रसज्येत, न चेष्टाऽऽपत्तिः, [6]'तस्थुषश्च विदुषा दाशुषा'इत्यादौ हि विभक्तेरनुदात्तवं दृश्यते, - अतएव 'ऊडिद-'[7]मितिसूत्रितम्, इति चेदत्रोच्यते, 'वाहउठ्'[8]इति सूत्र्यताम्, 'ऊडिद'[9]मितिसूत्रे 'ठिदिद'मिति - सूत्र्यताम्, [10]ऊठ्युपधाग्रहणं कर्तव्य' मिति वार्तिकं, 'ठ्युपधाग्रहण'मिति च वार्तिकं कर्तव्यम्, एवं सति 'वाहऊठ्' [11]इत्यत्र दीर्घानुच्चारणाल्लाघवं स्वरश्च सिद्ध्यतीति सूत्रेऽस्मिन् 'ऊडि'ति दीर्घोच्चारणमस्यां परिभाषायां ज्ञापकमवेहि ।

ज्ञापितायां अस्या 'अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्ध-' मित्यर्थः । अत्राऽन्तरङ्गशब्देन 'अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य'तद्गृह्यते । बहिरङ्गशब्देन 'अन्तरङ्गशास्त्रीयनिमित्तसमुदायबहिर्भूताङ्गकं' गृह्यते । फलन्तु 'रियति,[12] पियति,[13] असुस्रुवत्,[14]

---

1. 'वहश्च' - अष्टा. 6/2/64 ।
2. अष्टा. 6/1/176 ।
3. अष्टा. 6/4/132 ।
4. अष्टा. 6/1/176 ।
5. क्वस्वन्तात् 'ष्ठागतिनिवृत्तौ' धा. पा. भ्वा. 928, इतिस्थाधातोः, शसि-रूपम् ।
6. अष्टा. 6/4/131 ।
7. अष्टा. 6/1/176 ।
8. 'वाह ऊठ्' अष्टा. 6/4/132 इत्येतत्स्थाने ।
9. अष्टा. 6/1/176 ।
10. वा. वै. सि. कौ. स्वरप्रक्रियायां प्रत्ययस्वर प्र. पृ. 651 ।
11. अष्टा. 6/4/132 ।
12. 'रि गतौ' धा. पा. तुदा. 1404, इति रिधातोर्लटि तिपि 'तुदादिभ्यः शः' - अष्टा. 3/1/77, इतिशप्रत्यये 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 लघूपधगुणादन्तरङ्गत्वात् 'अचिश्नु - धातु-भ्रुवां य्वोरियङुवङौ' - अष्टा. 6/4/77 इतिधातोरिकारस्य इयङि रूपम् ।
13. 'पि गतौ' धा. पा. तुदा. 1405, इतिपिधातोर्लटि तिपिशप्रत्यये इयङि रियतिवद्रूपम् ।
14. 'स्रु गतौ' धा. पा. भ्वा. वा. 940, इति स्रुधातोर्लुङि अडागमे तिपि च्लौ - च्लेः 'णि - श्रि - द्रु - स्रुभ्यः कर्त्तरि चङ्' -अष्टा. 3/1/48 इति - चङि, 'चङि' - अष्टा. 6/1/11, इति द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'असुस्रु अत्' इत्यवस्थायां लघूपधगुणादन्तरङ्गत्वादुवङि रूपम् ।

[1]अयजे इन्द्रम्, [2]मृद्व्या, पट्व्या[3] इत्यादि प्रयोगाणां साधुत्वसिद्धिः । यतोऽत्राऽऽदितस्त्रिषु प्रयोगेषु [4]लघूपधगुणाऽपेक्षया [5]इयङुवङोः चतुर्थप्रयोगे 'अयज + इ + इन्द्रम्' - इत्यवस्थायां [6]दीर्घैकाऽऽदेशाऽपेक्षया [7]गुणैकाऽऽदेशस्य, पञ्चमषष्ठप्रयोगयोः 'मृदु + ई + आ' 'पटु + ई + आ' - इत्यवस्थायां [8]-परयणपेक्षया पूर्वयणश्च शीघ्रोपस्थितिनिमित्तकत्वरूपान्तरङ्गतया पूर्वं प्रवृत्तिरनयैव परिभाषया भवतीति भवत्येषां साधुत्वसिद्धिः । अस्या असत्त्वे हि आद्येषु त्रिषु गुणस्य,[9] चतुर्थे दीर्घैकाऽऽदेशस्य[10] च [11]परत्वादापत्ती स्याताम्, पञ्चमषष्ठयोश्च शब्दपर- विप्रतिषेधेन परयणः[12] प्रवृत्त्या पूर्वस्य यण् न स्यादिति नैतेषां साधुत्वं सिद्ध्येत् । तथा [13]'पचावेद'मित्यत्र लोडुत्तमपुरुषद्विवचनान्तस्येदंशब्देन सह गुणैकाऽऽदेशे[14] पूर्वान्तवद्भावेन[15] लोडुत्तमसम्बन्धित्वस्य स्वत एत्वस्य च सत्त्वेन 'एत[16]ऐ' इत्यैत्वं प्राप्तं तद्रूपाऽन्तरङ्गे कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयाऽपेक्षत्वेन बहिरङ्गस्य गुणैकाऽऽदेशस्याऽसिद्धत्वात् 'एत ऐ' इत्यस्याऽप्रवृत्तिरस्याः फलम् । ज्ञापिताया अस्याः परिभाषायाः [17]षाष्ठीत्वेन यथोद्देशपक्षे त्रिपाद्यां प्रवृत्तिर्न भवति, यत इयं त्रिपादीं न पश्यति, [18]पूर्वत्रासिद्ध'मित्यनेन हि त्रिपाद्यसिद्धा । किन्तु

1. अयज + इ + इन्द्र'मितिच्छेदः : ।
2. मृदु –ई – आ' इतिच्छेदः ।
3. पटु + ई + आ'इतिच्छेदः ।
4. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
5. 'अचिश्नु - धातु - भ्रुवां य्वोरियङुवङौ' - अष्टा. 6/4/77 ।
6. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
7. 'आद्गुणः' - अष्टा. 6/1/87 ।
8. 'इको यणचि' - अष्टा. 6/1/77 ।
9. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
10. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
11. विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2 ।
12. 'इको यणचि' - अष्टा. 6/1/77 ।
13. पचाव + इदमिति स्थिते 'आद्गुणः' - अष्टा. 6/1/87, इतिगुणैकादेशे रूपम् ।
14. 'आद्गुणः' - अष्टा. 6/1/87 ।
15. 'अन्तादिवच्च' - अष्टा. 6/1/85 ।
16. अष्टा. 3/4/93 ।
17. 'वाह ऊठ्' - अष्टा. 6/4/132, इतिसूत्रस्थो डितिशब्दज्ञाप्यतया 'ऊ'डिति दीर्घोच्चारणज्ञाप्यतया चाऽस्याः षाष्ठीत्वम् ।
18. अष्टा. 8/2/1 ।

कार्यकालपक्षेऽपि त्रिपाद्यां नेयं प्रवर्तते इति [1]भट्टनागेशो मनुते । [2]शेषाद्रिस्तु कार्यकालपक्षे त्रिपाद्यामस्याः प्रवृत्तिं स्वीकरोति । अत्र शेषाद्रिमतं प्रमाणपरिपुष्टमिति तदेव युक्तमिति मन्ये ।

## 'ऊ'दिति शब्दः

[3]'ऊदनोर्देशे' - इतिसूत्रे 'ऊ'दितिशब्दः 'क्वचिदेकपदेऽपि अनित्या संहिते' ति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याऽभावेऽयं शब्दो व्यर्थः । तथाहि – 'अनोरुत्तरस्याप ऊकाराऽऽदेशो भवति देशाऽभिधाने' इत्यर्थकेऽस्मिन्सूत्रे [5]'अनूपो देशः' इत्यत्र ऊदादेशं विधातुमयं शब्द उपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'उ'दिति ह्रस्वेऽपि विहिते द्वयोरुकारयोः [6]सवर्णदीर्घैकाऽऽदेशेऽपि 'अनूपो देशः' इत्यस्य सिद्धिर्हि सुलभा । ज्ञापिते चाऽस्मिन् वचनेऽनेन[7]संहिताया अनित्यत्वेन कदाचित्तस्या अभावे 'अनूप'इतिप्रयोगो न सिद्ध्येदिति तत्सिद्ध्यर्थमयं शब्दः

---

1. अनेन हि - "इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात्. ............... न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम् । पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपित - बहिरङ्गत्वाभावात्तया तस्य सिद्धत्वप्रतिपादनासम्भवात् । न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं 'पूर्वत्र' इत्यनेन वक्तुमशक्यमितिवाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्रवृत्त्यापत्तेः । किंच 'पूर्वत्रे'त्यस्य प्रत्यक्षत्वे तेनानुमानिक्या अस्या बाध एवोचितः । ...... "इत्युक्तम् प. शे. प. 51, पृ. 194-199 ।
2. अनेन हि - "इयं परिभाषा कार्यकालपक्षेऽपि त्रिपाद्यां नप्रवर्तत इतिनव्योक्तिस्त्वयुक्ता । दध्यत्रेत्यादौ त्रिपादीस्थेऽन्तरङ्गे संयोगान्तलोपे भाष्यवार्तिकयोरस्याः परिभाषायाः संचारितत्वात् 'स्वरवसानयोः' (8/3/15) इति-सूत्रे वार्त्तिककृता संचारितत्वाच्च तत्र प्रवृत्तौ बाधकाभावाच्च । यद्यपि विसर्जनीय-सूत्रे भाष्ये 'अयुक्तोऽयं परिहारः । न वा बहिरङ्गलक्षणत्वात्' इत्युपक्रम्य 'यथा ह्यन्तरङ्गपरिभाषया पूर्वस्यासिद्धत्वमुच्यते एवं पूर्वत्रासिद्धम्' - (8/2/1) इतिपरिभाषया परस्यान्तरङ्गस्याप्यसिद्धत्वं वक्तुं शक्यत्वात्' इति हेतुरुक्तः, तथापि 'चोद्यान्तरमेतद्भाष्यम्'इति कैयटेनोक्तत्वात् वचनेनैव तत्र तत्र समाधाने गौरवात् 'इत्युक्तस्य' 'कर्णीष्वनव्ययस्य' इत्यादिनिर्देशात् - आनुमानिक्ययाप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्यापि 'पूर्वत्रासिद्धम्' (8/2/1) इत्यस्य बाध इति ज्ञापनसंभवात् कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिर्युक्तैव । वस्तुतस्तु तस्मादित्युत्तरस्य (1/1/67) 'कर्णीष्वनव्ययस्य' (8/3/46) इत्यादिनिर्देशा एव इमां परिभाषां त्रिपाद्यामस्याः प्रवृत्तिं ज्ञापयन्तीति न किंचिदनुपपन्न"मित्युक्तम् प. भास्क. प. 42, पृ. 422 ।
3. अष्टा. 6/3/98 ।
4. तथाहि – "ऊदनोर्देशे (6/3/98) इतिदीर्घोच्चारणं 'क्वचिदेकपदेपि - अनित्या संहिते'ति ज्ञापनार्थम् । तेन समासेऽपि 'आउदकान्त प्रियमनुव्रजती'ति भवती"त्याह पु. दे. ज्ञा. समु. त्रयोविंशे अलुक्पादे पृ. 85 ।
5. अनुगता अनुकूला वा आपोऽस्मिन्नित्यर्थे बहुव्रीहौ 'ऋक्पूरब्धूःपथामाऽनक्षे' - अष्टा. 5/4/74, इति समासान्ते अप्रत्यये 'अनु + अप' इत्यवस्थायाम् 'ऊदनोर्देशे' - अष्टा. 6/3/98, इति अपोऽकारस्य ऊदादेशे सवर्णदीर्घैकादेशे विभक्तिकार्ये च कृते रूपमिदम् ।
6. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
7. 'परः सन्निकर्षः संहिता' - अष्टा. 1/4/109 ।

स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'समासेऽपि 'आ [1]उदकान्तं प्रियमनुव्रजती'त्यत्र 'आ - उदकान्त'मितिप्रयोगस्य साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि समासे संहिताया नित्यतया[2] [3]गुणैकाऽऽदेशस्य दुर्वारतया नाऽस्य प्रयोगस्य साधुत्वं सिद्ध्येत् ।

न चाऽत्र 'निपात एकाजनाङि'ति[4] प्रगृह्यसंज्ञकतयाऽऽकारस्य 'प्लुतप्रगृह्या[5]अचि नित्य'मिति प्रकृतिभावेन सन्धिकार्यस्य [6]गुणैकाऽऽदेशस्याऽभावोऽस्य वचनस्याऽभावेऽपि सुलभ इतिशङ्क्यम् । यतोऽत्र मर्यादाऽर्थकस्याऽऽकारस्य आङ्त्वेन[7] – [8]'अना'ङिति प्रतिषेधात्प्रगृह्यसंज्ञायाः प्राप्तिरेव नास्ति ।

अत्र वामनस्तु 'दीर्घोच्चारणमवग्रहार्थम् ।अनु ऊपोऽनूप इति' इत्याह[9] । 'असति-दीर्घोच्चारणे संहितायामेव दीर्घत्वं स्यात्' नावग्रहे, 'तस्मादवग्रहेऽपि यथा स्यादित्येवमर्थं-'दीर्घोच्चारण'मिति वामनग्रन्थाऽऽशयमाह[10] जिनेन्द्रबुद्धिः । ज्ञानेन्द्रभिक्षु - वासुदेव-

---

1. वाक्यमिदमुपन्यस्तवान् पु. दे. ज्ञा. समु. त्रयोविंशे अलुक्पादे पृ. 85 ।
2. 'संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
   नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ।।" - इति हरिकारिका भट्टोजिदीक्षितेनोद्धृता वै. सि. कौ. भ्वादि प्र. पृ. 33 ।
3. आद्गुणः - अष्टा. 6/1/87 ।
4. अष्टा. 1/1/14 ।
5. अष्टा. 6/1/125 ।
6. 'आद्गुणः' अष्टा. 6/1/87 ।
7. तथाहि –
   "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
   एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ।।" –
   इत्यभिक्तोक्तिर्जयादित्येनोद्धृता का. 1/1/14, । उदाहरणं चास्याः व्याख्यानपूर्वकमाह ह. मि. पदम. 1/1/14, तथाहि – "ईषदर्थ इत्यादि । ईषदर्थे - आ + उष्णः = ओष्णः । आङीदर्थ इति चोक्तम् । क्रियायोगे – आ + इतः = एतः । प्रादिषु पठितः । मर्यादाभिविधौ चेति । समाहारद्वन्द्व आगमस्यानित्यत्वान्नुमभावः । मर्यादासहितो वाऽभिविधिः । मर्यादायाम् - आ + उदकान्ताद् = ओदकान्तात् । अभिविधौ - आ + अहिच्छत्राद् = आहिच्छत्रात् । आह च 'विना तेन मर्यादा, सह तेन इत्यभिविधिः । 'आङ्मर्यादाभिविध्योः' इति च ङिन्निर्दिष्टः पूर्वप्रक्रान्तवाक्यस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते - आ एवं नैवं पूर्वममंस्थाः, संप्रति त्वेवं मन्यसे इति । तथा स्मृतेः सूचकः आकारः प्रयुज्यते, ततः स्मृतोऽर्थो निर्दिश्यते - आ - एवं किंल तदिति" ।
   "क्रियायोगे उपसर्गसंज्ञायां ङिद्विशिष्ट एवं पठ्यते–
   'प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोऽप्यतिसूदभयश्च ।
   प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ।।' – इति" – इत्याह जि. बु. न्या. 1/1/14 ।
8. अष्टा.- 1/1/14.
9. का. 6/3/98 ।
10. न्या. 6/3/98 ।

दीक्षितावपि [1]भाष्योक्तं तथ्यमिदं मन्वाते[2] । तस्मादमीषां मतेषु यद्यपि नाऽस्य शब्दस्य ज्ञापकत्वं, तथापि 'स्थितेर्गतिश्चिन्तनी'त्येत्यभियुक्तोक्तेः पुरुषोत्तमदेवोक्तं ज्ञापक त्वमप्यस्य शब्दस्य युक्तं प्रतिभाति । न च [3]भाष्यविरोधः शङ्क्यः, एकदेश्युक्ति त्वात्तस्य[4] भाष्यस्य ।

### 'ऋच्छती'ति शब्दः

'[5]ऋच्छत्यृता'मिति सूत्रे 'ऋच्छती'तिशब्दः 'नर्च्छेर्लिट्याम्भवती'ति वचनस्य ज्ञापकः[6] । यतोऽस्याऽत्र सूत्रे '[7]आनर्च्छ' इत्यादौ ऋच्छे[8]र्लिटि गुणविधानायोपात्तोऽयम् अस्य वचनस्याऽभावे व्यर्थः । ऋच्छेर्लिट्यामि[9] हि आमा व्यवधानेन गुणो[10] न प्रवर्त्स्यतीति गुणविधानाय सूत्रेस्मिन्शब्दस्योपादानमनावश्यकम् । ज्ञापिते चास्मिन्

---

1. तथाहि – "दीर्घोच्चारणं किमर्थं, न 'ऊदनोर्देश' इत्येव वदेत् ? । का रूप सिद्धिः - अनूपः । सवर्णदीर्घत्वेन सिद्धम् । न सिद्ध्यति । अवग्रहे हि दोषः स्या'दित्याह पत. व्या. म. भा. 6/3/3/98 ।
2. (क) "दीर्घोच्चारणं क्वचिच्छाखायामवग्रहार्थम् । बह्वृचास्तु 'अनूपेगोमान्गोभिः' इत्यत्रानूपशब्दं नावगृह्णन्ति"-इत्याह ज्ञा. भि. त. बो. समासान्त प्र. पृ. 538-539 ।
   (ख) "अनूप'इत्यत्र ऊपोऽवग्रहार्थं दीर्घोच्चारणमिति भाष्यम् । बृह्वृचास्तु 'अनूपो गोमान् गोभि'रित्यत्र नावगृह्णन्ती"त्याह वा. दी. वा. मनो. समासान्त प्र. पृ. 539 ।
3. व्या. म. भा. 6/3/3/98 ।
4. तथाहि–
   (क) "अवग्रहे दोषः स्यादिति । 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम यथालक्षणं पदं कर्तव्य'मिति प्रदेशान्तरोक्तेनैतद्विरच्यते"–इत्याह कै. प्रदी. 6/3/3/98 ।
   (ख) "अतएतद्विरच्यत इति । एवञ्च दीर्घोच्चारणं नात्यावश्यकम् । अतएवाऽनूपे गोमानित्यादौ ऋग्वेदे पदपाठे नावगृह्णन्ति । यत्रावग्रहः क्रियते तत्रैतत्पदीयावग्रहस्य शास्त्रानुसारित्वबोधनायाऽत्र दीर्घोच्चारणमिति एकदेश्युक्तिरियमिति भावः"इत्याह भ. ना. उद्यो. 6/3/3/98 ।
5. अष्टा. 7/4/11 ।
6. तथाहि–
   (क) "'ऋच्छत्यृता'मिति ऋच्छेर्लिटि गुणवचनं ज्ञापकं 'नर्च्छेर्लिट्याम्भवतीती'त्याह पत. व्या. म. भा. 3/1/3/36 ।
   (ख) "इजादेश्च (सू. 3/1/36) 'ऋच्छत्यृताम्' (सू. 7/4/11) इतिऋच्छेर्लिटि गुणवचनं ज्ञापकं नर्च्छेर्लिट्याम् भवतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 159 ।
7. 'ऋच्छगतीन्द्रियप्रलयमूर्तिभावेषु' धा. पा. तुदा. 1297, इति ऋछ्धातोः 'छेच'–अष्टा. 6/1/73, इतितुकि 'ऋच्छ'इत्येतस्माल्लिटि तिपि णलि 'ऋच्छत्यृताम्'–अष्टा. 7/4/11, इति गुणे द्विर्वचने हलादिशेषे 'अतआदेः'–अष्टा. 7/4/70, इतिदीर्घे 'तस्मान्नुड्द्विहलः'–अष्टा. 7/4/71 इति नुटि रूपम् ।
8. 'ऋच्छगतीन्द्रियप्रलयमूर्तिभावेषु' धा. पा. तुदा. 1297 ।
9. 'इजादेश्च गुरुमतः'–अष्टा. 3/1/36 ।
10. 'ऋच्छतृताम्'–अष्टा. 7/4/11 ।

वचने ऋच्छेर्लिट्यामोऽभावात् तद्व्यवधानाऽभावेन तत्र गुणः प्राप्नोतीति गुणविधानायाऽसौ स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'इजादेश्च गुरुमतोऽनृच्छः'[1] –इत्यत्र 'अनृच्छः'इति प्रतिषेधाकरणजन्यं लाघवम् । ज्ञापितवचनेनैव हि ऋच्छतेरामोऽभावो लिटि सुलभः । भाष्यकृतोऽयं सिद्धान्तः । सूत्रकारस्तु 'आम्बाधाऽपेक्षया [2]तस्मि'न्निति परिभाषाबाधेन व्यवधानेऽपि गुणप्रवृत्त्या तत्सामर्थ्याभावेन तत्सार्थक्यं मन्वानः 'अनृच्छः' इतिप्रतिषेधन्तत्र सूत्रे समुपात्तवान्[3] । 'यथोत्तरं मुनीनां प्रामाण्य'मिति सिद्धान्तादस्य शब्दस्य भाष्योक्तं ज्ञापकत्वमेव युक्तमिति निश्चीयते । 'यतोऽर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः[4] ।

## 'एके'तिशब्दः

'निपात एकाजनाङ्'[5]–इत्यत्र 'एके'तिशब्दः 'वर्णग्रहणे जातिग्रहण'मितिवचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–'अ अपेहि' 'इ

---

1. अष्टा. 3/1/36 ।
2. 'तस्मिन्निति निर्दिष्टे पूर्वस्य'–अष्टा. 1/1/66 ।
3. तथाहि–
   (क) ननु च 'ऋच्छत्यृताम्'–इति ऋच्छेरनन्तरे लिटि गुणवचनं ज्ञापकम्–ऋच्छेराम् न भवति । सति हि तस्मिन् लिट आनन्तर्यं विहन्येत, तदपार्थकः प्रतिषेधः । नैतदस्ति, वचनसामर्थ्याद् व्यवधानेऽपि गुणः स्यात् । असति च तम्मिन्नागमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीत्येज् ज्ञापितं न स्यात् । तस्मादनृच्छ इतिप्रतिषेधः कर्तव्यः''इत्याह जि. बु. न्या. 3/1/36 ।
   (ख) 'न च ऋच्छेलिर्टि गुणविधानसामर्थ्यदिव तत आमभावे सिद्धेऽनृच्छइतिव्यर्थम् । आम्बाधापेक्षया 'तस्मिन्' इतिपरिभाषाबाधेन व्यवधानेऽपि गुणप्रवृत्त्या तत्सामर्थ्याभावेन तत्सार्थक्याददितिसूत्रतात्पर्यम्''–इत्याह भ. ना. ल. श. शे. भ्वा. प्र. पृ. 35 ।
4. भ. ना. प. शे. प. 134, पृ. 336. ।
5. अष्टा. 1/1/14 ।
6. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापथत्याचार्यो' ऽन्यत्रवर्णग्रहणे जातिग्रहणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धिमितियदुक्तं, तदुपपन्नं भवती''त्याह पत. व्या. म. भा. 1/1/5/14 ।
   (ख) "अपृक्त एकालिति (1/2/41) निपात एकाजनाङिति (1/1/14) च एकग्रहणं ज्ञापकम्–'अन्यत्र वर्णग्रहणे जातिग्रहण'मिति । तेन दंभेर्हल्ग्रहणस्य जातिवाचकत्वादित्युपपन्नं भवतीति भाष्य''मित्याह पु. दे. ज्ञा. समु. द्वितीये कुटादिपादे पृ. 62 ।
   (ग) "निपात एकाच् (सू. 1/1/14) । इदमेवैकग्रहणं ज्ञापयति–'वर्णग्रहणे जातिग्रहण'मिति''–इत्याह श्रीना. ज्ञा. सं. 1, पृ. 17 ।

इन्द्रं पश्य' 'उ [1]उत्तिष्ठ' 'आ[2]एवं नु मन्यसे' 'आ[3]एवं किल तत्'–इत्यत्र क्रमशः अकारेकारोकाराऽऽकाराणां प्रगृह्यसंज्ञार्थमारब्धेऽस्मिन्सूत्रे '[4]प्राग्नये वाचमीरय'· प्रेदं[5]- ब्रह्म'–इत्यादौ 'प्र'इत्यस्य प्रगृह्यत्वाऽभावाय शब्दोऽयमुपात्तः । सचाऽस्य वचनस्याऽभावे व्यर्थः । न चाऽत्राऽस्य शब्दस्याऽभावेऽचो [6]निपातविशेषण-त्वात्[7]तदन्तविधौ 'अजन्तस्य निपातस्य प्रगृह्यसंज्ञा स्या'दिति सूत्राऽर्थः स्यात्तथा सति "प्राग्नयेवाचमीरय' 'प्रेदं ब्रह्म'–इत्यादौ क्रमशः 'प्र+अग्नये' 'प्र+इदम्' इत्यवस्थायां क्रमशः सवर्णदीर्घैकाऽऽदेशो[8] गुणैकाऽऽदेशश्च[9] न स्यादितिशङ्क्यम् । यतोऽत्र निपातस्य–अज्विशेषणत्वमाश्रित्य निपातरूपो योऽच् तस्य प्रगृह्यसंज्ञेति सूत्राऽर्थाऽङ्गीकारेण 'प्र'इतिनिपातस्य अज्रूपत्वाऽभावात् प्रगृह्यत्वस्य प्राप्तिरेव नास्तीति [10]प्रकृतिभावाऽभावात्सन्धिकार्ये सवर्णदीर्घैका[11]ऽऽदेश-गुणैका[12]ऽऽदेशौ शब्दस्याऽस्याऽभावेऽपि सुलभौ । ज्ञापिते चाऽस्मिन् वचने वर्णग्रहणे सति [13]जात्याश्रयाऽनेकवर्णग्रहणं भवतीति 'अच्' इत्यनेन अच्त्वाऽऽश्रयाऽनेक-वर्णसमुदायग्रहणं स्यात्, ततश्च 'तितउ'-शब्दैकदेशे 'अ उ' शब्दाऽनुकरणे निपातसंज्ञके 'अ उ अकरो'दित्यादौ 'अ उ'–इतिसमुदाये [14]प्रगृह्यसंज्ञायां [15]प्रकृतिभावाद्[16]यणादेशो न स्यादिति प्रगृह्य त्वस्याऽत्र वारणाय शब्दोऽयं स्वांशे चरिताऽर्थोभवति । उपात्तेऽचाऽत्राऽस्मिन् शब्दे हि तत्सामर्थ्यात् एको योऽच्तद्रूपस्य निपातस्यैव प्रगृह्यत्वं भवतीति नाऽत्र प्रगृह्यत्वं प्राप्नोति ज्ञापितस्याऽस्य वचनस्य फलं

---

1. इमानि त्रीणि च्छान्दसान्युदाहरणानि । अत्र अकारः सम्बोधने, इकारो विस्मये, उकारश्च वितर्के विद्यते ।
2. लौकिकमिदं वाक्यम् । अत्राऽऽकारः वाक्यपूरणार्थः ।
3. लौकिकमिदं वाक्यम् । अत्राऽऽकारो स्मरणार्थः ।
4. 'प्र+अग्नये'–इतिच्छेदः ।
5. 'प्र+इदम्'–इतिच्छेदः ।
6. 'चादयोऽसत्त्वे'–अष्टा. 1/4/57, 'प्रादयः'–अष्टा. 1/4/58 ।
7. 'येन विधिस्तदन्तस्य'–अष्टा. 1/1/72 ।
8. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
9. 'आद्गुणः'–अष्टा. 6/1/87 ।
10. 'प्लुत-प्रगृह्या अचि नित्यम्'–अष्टा. 6/1/101
11. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
12. 'आद्गुणः'–अष्टा. 6/1/87 ।
13. जातिरत्र सामान्यम् । "तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामस्त्यत उक्तं–नित्यत्वे सतीति, नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्त" मित्याह वि. प. भ. न्या. मुक्ता. प्रत्यक्ष ख. पृ. 44-46 ।
14. 'निपात एकाजनाङ्'–अष्टा. 1/1/14 ।
15. 'प्लुत–प्रगृह्या अचि नित्यम्'–अष्टा. 6/1/125 ।
16. 'इको यणचि'–अष्टा. 6/1/77 ।

तु [1]'धिप्सती'ति प्रयोगस्य साधुत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे ह्यत्र 'दिन्भस'–इत्यवस्यायाम् इक्समीपो यो हल्नकारः ततः परः सन्न भवति, यतश्च भकारात्परः सन् स च भकारो नेक्समीपः नकारेण व्यवधानादिति 'इक्समीपाद्धलः परः झलादिः सनूकित्स्या'दित्यर्थकेन [2]'हलन्ताच्चे'त्यनेन कित्त्वं न प्राप्नोतीति कित्त्वाऽभावे लोपस्य[3] दुर्लभतया नाऽस्य प्रयोगस्य साधुत्वं सिद्ध्येत् । सति चाऽस्मिन् वचने हल्त्वजात्याश्रयाऽनेकस्येक्समीपत्वं ततः परत्वं सनोऽत्रास्तीति तस्य कित्त्वे तस्मिनूपरे धातुनकारस्य लोपः सुलभो भवतीति भवत्यस्य प्रयोगस्य साधुत्वसिद्धिः । तदुक्तम्[4]– 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्ध'मिति ।

इत्थमस्य वचनस्य 'अपृक्त एकाल्प्रत्ययः'[5]इतिसूत्रस्थः 'एके'ति शब्दोऽपि ज्ञापक[6] इत्युन्नेयम् ।

## 'एकाजि'तिशब्दः

'एकाच[7]उपदेशेऽनुदात्ता'दितिसूत्रे'एकाजि'तिशब्दः एकदेशानुमत्या 'श्तिपा

---

1. 'दम्भु दम्भने' धा. पा. स्वा. 1271, इतिदम्भ्धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा'–अष्टा. 3/1/7 सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्'–अष्टा. 7/2/49, इतिविहितस्य इटोऽभावपक्षे 'दम्भ इच्च'–अष्टा. 7/4/56, इत्यनेन धातोरचः इत्वे 'दिम्भ्स'–इति स्थिते 'सन्यङोः'–अष्टा. 6/1/9, इति द्वित्वेभ्यासत्वे 'अत्र लोपोऽभ्यासस्य'–अष्टा. 7/4/58, इत्यभ्यासलोपे च कृते 'दिम्भ स' इत्यवस्थायां 'हलन्ताच्च'–अष्टा. 1/2/10, इत्यनेन हलूग्रहणस्य जातिपरतया सनः कित्त्वे तस्मिनूपरे धातूपधाया नकारस्य 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24, इतिलोपे भषूभावे चर्त्वे 'सनाद्यन्ता-धातवः'–अष्टा. 3//32, इतिधातुत्वाल्लटि तिपि शपि पररूपे च कृते रूपमिदम् ।
2. अष्टा. 1/2/10 ।
3. 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24 ।
4. व्या. म. भा. 1/1/5/14 ।
5. अष्टा. 1/2/41 ।
6. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यदल्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः - 'अन्यत्र वर्णग्रहणे जातिग्रहणंभवती'ति । किमतेस्य ज्ञापने प्रयोजनम् ? । 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वातूसिद्ध'मित्युक्तं तदुपपन्नं भवती"त्याह पत. व्या. म. भा. 1/2/1/41 ।
   (ख) "अपृक्त एकाल् (सू. 1/2/41) । इदमप्येकग्रहणं वर्णग्रहणे जातिग्रहणं ज्ञापयती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 39 ।
7. अष्टा. 7/2/10 ।

शपा[1]ऽनुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकी'ति - परिभाषाया ज्ञापकः[2] । तथाहि सूत्रेऽस्मिन्नेकाजितिशब्दः 'कर्तुं चकृषे'इत्यादाविड्-निषेधायोपात्तः । स च अस्याअभावे व्यर्थः । यतः [3]'उदृदन्तै'रित्यादिना

---

1. (क) पु. दे. प. पा. 94, पृ. 160 व ।
   (ख) भ. ना. प. शे. प. 132, पृ. 363 ।
   (ग) शेषा. प. भास्क. प. 109, पृ. 461 ।
2. तथाहि –
   (क) "एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । 'अच'इत्येवैकत्वविवक्षया, - तद्वतो ग्रहणेनैव सिद्धे एकग्रहणसामर्थ्यानेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः, आदेशोपदेशेऽनेकाच्त्वा"दित्याह भ. दी. वै. सि. कौ. भ्वादि प्र. पृ. 40-41 ।
   (ख) "एकाच उपदेशेऽनुदात्तादितिसूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते ' अन्यथोपदेशेऽनेकाचामुदात्तस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेती" त्याह भ. ना. प. शे. प. 132, पृ. 363 ।
   (ग) "इदं च 'एकाच उपदेशेऽनुदात्तात्' (7/2/10) इतिसूत्रे - एकाज्ग्रहणेन एकदेशानुमतिद्वारा ज्ञाप्यत इति सिद्धान्तकौमुद्या"-मित्याह ह. भा. प. भास्क. प. 109, पृ. 462 ।
3. तथाहि – प्रसङ्गादनुदात्ताः सङ्गृह्यन्ते –

'ऊदृ दन्तैर्यौति - रु. - क्ष्णु - शीङ् - स्नु - नु - क्षु - श्वि - डीङ् - श्रिभिः ।
वृङ् - वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ 1 ॥
शक्लृ- पच् - मुचि - रिच् - वच् - विच्, सिच्प्रच्छि-त्यज्- निजि-भजः ।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्, रञ्ज-विजिर्-स्वञ्जि-सञ्ज्सृजः ॥ 2 ॥
अद्-क्षुद्-खिद्-छिद् - तुदि-नुदः, पद्य-भिद्-विद्यतिर् विनद् ।
शद् - सदी, स्विद्यतिः, स्कन्दि-हदी, क्रुध्, क्षुधि-बुध्यती ॥ 3 ॥
बन्धिर्, युधि - रुधी, राधि-व्यध् - शुधः, साधि-सिध्यती ।
मन्य-हन्नाप्-क्षिप् - छुप् तप् - तिपस्तृप्यति - दृप्यति ॥ 4 ॥
लिप् - लुप् - वप् - शप् - स्वप् - सृपि - यभ्,- रभ् - लभ्- गम् - नम् - यमो रमिः ।
क्रुशिर्, दंशि-दिशी दृश्-मृश्,-रिश्-रुश्-लिश्-विश्-स्पृशः कृषिः ॥ 5 ॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो, घसिः ।
वसतिर्दह- दिहि - दुहो, नह्मिह् - रह् - लिह्, वहिस्तथा ॥ 6 ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं (102) शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ 7 ॥
तृप् - दृपी, तौ वारयितुं श्यना निर्देश आदृतः ।
किं च- स्विद्यपद्यौ, सिध्यबुध्यौ, मन्य-पुष्य-श्लिषः श्यना ॥ 8 ॥
वसिः शपा, लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
णिजिर्, विजिर्, शक्लृ - इति सानुबन्धा अमी तथा ॥ 9 ॥
विन्दतिश्चान्द्र दौर्गादिरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ 10 ॥
रञ्जि-मस्जी, अदि-पदी, नुद्, क्षुध्, शुषि-पुषी, शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥ 11 ॥
इत्याह भ. दी. वै. सि. कौ. भ्वादि प्र. पृ. 45-49 ।

परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वमव्यभिचरितमिति 'उपदेशेऽनुदात्ता' - दित्येतावतैव 'कर्तुं' चकृष' इत्यादाविण्निषेधः सुलभः । न च यङ्लुकि चर्करितेत्यादाविण्निषेधव्यावृत्त्यर्थमेकाजितिशब्द इति वक्तुंशक्यम् । यतः कृतेऽप्येकाज्ग्रहणे यङ्लुग्व्यावृत्तिर्न संभवति । कृते हि द्वित्वे अनेकाच्त्वेऽपि धातूपदेशे तत्रैकाच्त्वमव्याहतम् । अथाऽत्र [1]'अवधीत्' इत्यत्रेडागमो न स्यात्, यतो हनः[2] 'हनो[3]वध लिङि' 'लुङि[4]चे'ति वधादेशे कृते अनेकाच्त्वेऽपि धातूपदेशे हन्तेरेकाच्त्वमक्षुण्णमितिचेदत्रोच्यते-'एकाच[5]उपदेशेऽनुदात्ता'दित्यत्र एकग्रहणमपनीयाच इत्युक्तेऽपि एकाच्कादिति लभ्यते, यतोऽत्र एकवचनोपात्तस्यैकत्वस्य त्यागे मानं नास्ति । न चैवं सति एकत्वविशिष्टादच ऋपरस्येत्येव लभ्यते, न त्वेकाच्कादिति बहुव्रीह्यर्थ इतिशङ्क्यम् । यतोऽनुदात्तोपदेशपरिगणने शक्लृपचिमुच्यादीनां परिगणनसामर्थ्येन 'अच' इत्यस्य मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणं संभवति । तदेवमच इत्यनेनैव एकाच्कादिति सिद्धे यदेकग्रहणं करोति तत्सामर्थ्यादुपदेशे सर्वत्र एकाजेव न तु कस्मिंश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशस्य व्यावृत्तिः सुलभा । अतोऽवधीदित्यत्र हनितिस्थान्युपदेशे एकाचोऽपि सतो हनितिधातोरादेशस्य वधेः परस्य इण्निषेधो[6] न प्राप्नोति । नच वधादेशो[7]ऽप्येकाजितिशङ्क्यम् । यतोऽवधीदित्यत्र - 'अतो[8]हलादेर्लघो'रिति वृद्धिनिवृत्तये हनो वधादेशस्यादन्तता [9]भाष्यसम्मता ।

ज्ञापितायां चाऽस्यामनया यङ्लुकि व्यावृत्त्यर्थमत्र सूत्रे 'एकाज्'इतिशब्दः स्वांशे चरितार्थो भवति । नच [10]दीक्षितग्रन्थे 'एकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः शङ्क्यः । यतः एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः किन्तु वस्तुगत्यैवैकाज्ग्रहणं, तच्चैकग्रहणं विनैव लभ्यत इति दीक्षिताऽऽशयः ।

- ज्ञापिताया अस्या अर्थस्तु – '[11]नेर्गदेति सूत्रे' स्यतिहन्तियातिवाती'त्यादयः श्तिपा निर्देशाः, सनीवेति[12]सूत्रे 'भरज्ञपिसना'मिति शपा निर्देशः, अनुबन्धनिर्देशो

---

1. हन्हिंसागत्योः' धा. पा. अदा. 1012, इति हन्धातोर्लुङ्प्रथमैकवचने रूपमिदम् ।
2. 'हन्हिंसागत्योः' धा. पा. अदा. 1012, इतिहन्धातोरित्यर्थः ।
3. अष्टा. 2/4/42 ।
4. अष्टा. 2/4/43 ।
5. अष्टा. 7/2/10 ।
6. 'एकाच उपदेशेऽनुदात्तात्' - अष्टा. 7/2/10 ।
7. 'लुङि च' - अष्टा. 2/4/43 ।
8. अष्टा. 7/2/7 ।
9. अत्रहि – "किमयं वधिर्व्यञ्जनान्तः, आहोस्विददन्तः ? किंचातः ? यदि व्यञ्जनान्तः । वधौ व्यञ्जनान्त उक्तम् । किमुक्तम् ? वध्यादेशे वृद्धितत्त्वप्रतिषेध इड्विधिश्चेति । अथादन्तो न दोषो भवति । यथा न दोषस्तथास्तु" इत्युक्तम् व्या. म. भा. 2/4/1/42 ।
10. वै. सि. कौ. भ्वा. प्र. पृ. 40-41, इत्यत्रेत्यर्थः ।
11. 'नेर्गद - नद - पत - पद - घु - मा - स्यति - हन्ति - याति - वाति - द्राति - प्साति - वपति - वहति - शाम्यति - चिनोति - देग्धिषु च' - अष्टा. 8/7/17 ।
12. 'सनीवन्तर्धभ्रस्जदम्भु श्रिस्वृयूर्णुभरज्ञापिसनाम्' - अष्टा. 7/2/49 ।

द्विधा - 'शीङः[1] सार्वधातुके गुणः' इत्यादिः स्वरूपेण, 'अनुदात्त[2]ङितः' इत्यादिः सामान्येन च गणनिर्देशः '[3]दिवादिभ्यःश्यन्'इत्यादिः, यत्र च[4] एकाज्ग्रहणम्; - एतानि पञ्च कार्याणि यङ्लुकि न भवन्तीति । अस्याः फलन्तु '[5]प्रन्यजङ्घनी'दित्यादौ[6]- 'नेर्गदे'ति णत्वाऽभावः, यतस्तत्र 'हन्ती'त्यादि श्तिपा निर्दिष्टः, बिभर्तेः सनि'बिभरिषती'त्यत्र 'एकाचः[7]' इतिनिषेधाऽप्रवृत्त्या नित्यमिटः[8] सिद्धिः, यतः - '[9]सनीवन्तर्धे' त्यत्र वैकल्पिकेड्विधायके 'भरे'तिशपा निर्दिष्टः, 'शेशीतः[10]' 'देदितः[11]' - इत्यत्र क्रमशः 'शीङः [12]सार्वधातुके गुणः' इति गुणाऽभावः, 'दीङो[13]युडचि' - इति युडभावश्च, यतोऽनयोः सूत्रयोः शीदीङौ स्व- रूपेणानुबन्धनिर्दिष्टौ, '[14]पास्पर्धीति' - '[15]शेशयीति' - इत्यत्र 'अनुदात्तङितः[16]' इत्यात्मनेपदाऽभावः, यतोऽत्रात्मनेपद - विधायके नियामके वाऽनुबन्धौ सामान्येन निर्दिष्टौ, '[17]बेभिदीति' - इत्यत्र 'रुधादिभ्यः[18]श्नम्' इति श्नमोऽभावः, यतोऽत्र श्नम्विधायके गणनिर्देशः कृतः, '[19]बेभेदिता' '[20]चेच्छेदिते' त्यादौ 'एकाच[21]उपदेशे ऽनुदात्ता'दिति इण् – निषेधाऽभावश्च यतोऽत्रेण्निषेधके कृतमेकाज्ग्रहणम् । अस्या असत्त्वे हि नैतेषां साधुत्वं सिद्ध्येत् ।

[22]भट्टनागेशस्तु - अस्या नैकाज्ग्रहणं ज्ञापकं नाऽपि फलमनन्यथासिद्धं नचाऽपि भाष्यसम्मतिरत्रार्थेऽस्तीति नास्तीयमिति मनुते । भट्टनागेशमतमिदं शेषाद्रिसुधिया

---

1. अष्टा. 7/4/21 ।
2. अष्टा. 1/3/12 ।
3. अष्टा. 3/1/69 ।
4. एका चउपदेशेऽनुदात्तात्' - अष्टा. 7/2/10 इत्यादौ ।
5. प्रनिपूर्वकात् 'हनहिंसागत्योः' धा. पा. अदा. 1012, इति हन्धातोर्यङ्लुकि लङि प्रथमपुरुषैकवचने रूपम् ।
6. अष्टा. 8/7/17 ।
7. अष्टा. 7/2/10 ।
8. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35 ।
9. अष्टा. 7/2/49 ।
10. 'शीङ्स्वप्ने' धा. पा. अदा. 1032, इतिशीधातोर्यङ्लुगन्ताल्लटि तसि रूपमिदम् ।
11. 'दीङ्क्षये' धा. पा. दिवा. 1134, इतिदीधातोर्यङ्लुगन्तात् क्तप्रत्यये रूपम् ।
12. अष्टा. 7/4/21 ।
13. अष्टा. 6/4/63 ।
14. 'स्पर्धसंघर्षे' धा. पा. भ्वा. 3, इति स्पर्ध्धातोर्यङ्लुगन्ताल्लटि तिपि रूपमिदम् ।
15. 'शीङ्स्वप्ने' धा. पा. अदा. 1032, इति शीधातोर्यङ्लुगन्ताल्लटि तिपि रूपम् ।
16. अष्टा. 1/3/12 ।
17. 'भिदिर् विदारणे' धा. पा. रुधा. 1439, इतिभिद्धातो - र्यलुगन्ताल्लटि तिपिरूपम् ।
18. अष्टा. 3/1/78 ।
19. 'भिदर्विदारणे' धा. पा. रुधा. 1439, इतिभिद्धातोर्यङ्लुङन्ताल्लुटि तिपि रूपम् ।
20. 'छिदिर्द्वैधीकरणे' धा. पा. रुधा. 1440, इतिछिद्धातोर्यङ्लुगन्ताल्लुटि तिपि रूपम् ।
21. अष्टा. 7/2/10 ।
22. अनेन हि - "परे त्वेकाज्ग्रहणव्यावर्त्योऽत्र वधिरेव । किंच उत्तरार्थमेकाज्ग्रहणम् । अतएव जागरितवानित्यादावुपदेशे उगन्तत्वमादाय 'श्र्युकः' इति इण्निषेधो न । तत्रोपदेशानुवृत्तिश्च

[1]निराकृतम् । तस्मादस्या एकाज्ग्रहणं ज्ञापकं, यतो भाष्यानुक्तिश्च नाऽस्याः प्रामाण्ये सत्त्वे वा बाधकमिति मन्ये ।

---

'स्तीर्ण'मित्यादाविण्निषेधायेत्याकरे स्पष्टम् । 'श्तिपाशंपा'इति नास्त्येव, भाष्यानुक्तत्वात् । न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादित्यर्थे सनीट्-प्रतिषेधो वक्तव्यः, बिभित्सतीति दोषोपन्यासवद् यङ्लुकि दोषानुपन्यासेन तत्र इडिष्टः । 'यङ्लोपे'इत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यलुग्विषयम् । किंच तस्य तद्विषयत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्, इड्विषये यङ्लुको लोकेऽनभिधानेन, छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्या सेनादोषात् । अन्यैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमित्युत्तरस्य च भाष्ये निरालम्वनतापत्तेः । अजर्थाः, वेभिदीतीत्यादौश्नम् - श्यनादयस्तु 'चर्करीतं चे'त्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तस्याप्राप्त्या न छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्ट-प्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायान्तु तादृशानामभाव एव । श्तिप्शवादिनिर्देशास्तु लिडादिनिमित्तक - 'भवतेरः' इत्यादिस्थतन्निर्देशवन्नार्थसाधका इत्याहुः' - इत्युक्तम् – ल. श. शे. भ्वादि प्र. पृ. 41-42 ।

"एकाच उपदेशेऽनुदात्तादिति .............. इत्यन्यत्रविस्तरः "इति - चोक्तम्. प. शे. प. 132, पृ. 363-366 ।

1. अनेन हि –"यत्तु 'एकाज्ग्रहणं वधिव्यावृत्त्यर्थम् । नच वधिः स्थान्युपदेशे एकाजेवेति वाच्यम् । साक्षादुपदेशसंभवेन एतद्विषये स्थान्युपदेशाग्रहणात् । उपदेशत्वावच्छेदेन एकाच इत्यर्थाच्च । किं चोत्तरार्थमेकाज्ग्रहणम् । अतएव जागरितवानित्यादौ उपदेशे उगन्तत्वमाश्रित्य 'श्र्युकः किति' (7/2/11) इति निषेधो न । तत्र उपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेति स्पष्टमाकरे ।

न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थम् 'उपदेशेऽनुदात्तादेकाचः श्रूयमाणात्' इत्यर्थे तत्र 'सनीट्प्रतिषेधः' इतिदोषोपन्यासवदयङ्लुकि दोषानुपन्यासेन तत्रेडिष्ट इति वाच्यम् । इड्विषये याङ्लुकोऽनभिधानेनच्छन्दसि सर्वविधीनां वैकल्पिकत्वेन चादोषात् । अन्यथा एकाज्ग्रहणं किमर्थमितिप्रश्नस्य उत्तरत्र जागर्त्यर्थमिह च वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः । न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं बिभित्सतीत्यादा-वुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव । उत्तरखण्डे अस्तित्ववत् । तच्च 'दयते.' (7/4/9) इति सूत्रे भाष्ये स्पष्टम् । एवंच प्रकृतभाष्यासंगतिरितिवाच्यम्, आक्षेपे आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेति 'एकाचो द्वे.' - (6/1/1) इतिसूत्रे भाष्ये स्पष्टम् । धातुत्वं च - उत्तरखण्ड एव । अतएव 'एकाचो बशः.' (8/2/37) इतिसूत्रे धातोरव यवो य एकाच् इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, – न त्वजर्था इति । अजर्थाः बेभिदीतीत्यादौ श्यश्नमादयस्तु 'चर्करीतं च' - इत्यादौ पाठात् यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति । छान्दसत्वादेव कार्यान्तराणामपि च्छन्दसि दृष्टप्रयोगेषु अदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव । श्तिप्शबादि-निर्देशास्तु 'भवतेरः' (7/4/73) इत्यादिवत्" (परि. शे. परि. 120-3) इति नव्योक्तम् ।

तत्र वधिव्यावृत्त्यर्थमेकाज्ग्रहणमित्युक्तम् । आद्युदात्तनिपातनसामर्थ्येन तद्व्यावृत्ते-र्भाष्यकैयटयोः स्पष्टत्वात् । तथा च 'एकाचः.' (7/2/10) इतिसूत्रे भाष्यम् - 'वध इट्प्रतिषेधः प्राप्नोति - वधिषीष्टेति । नैष दोषः । आद्युदात्तनिपातनसामर्थ्यात् । हन्त्युपदेशविषयानुदात्तत्वादत्र इट्प्रतिषेधो न भवति । नह्येतदाद्युदात्तत्वं प्रयोगसमवायि, सति शिष्टेन प्रत्ययस्वरेण बाधात्' इति । 'अच इत्येकत्वविवक्षया'इत्यादिना कौमुदी कृता वधिव्यावृत्तिरन्थापि साधिता । उत्तरार्थमेकाज्ग्रहणमित्यपि न । जागरितवानित्यत्र

## 'एका'जितिशब्दः

[1]'वस्वेकाजाद्धसा'मित्यत्र 'एका'जितिशब्दः 'वसुप्रवृत्त्या इह शास्त्रे कार्यं भवती'ति[2] 'वर्त्यर्थत् प्रवृत्त्येह कार्याणि क्रियन्ते'[3] इति वा परिभाषाया ज्ञापकः[4] ।

---

'जाग्रोऽवि.' (7/3/85) इति गुणे रपरत्वे च कृते अनुगन्तृत्वेन निषेधाप्रवृत्तेः । न च उपदेशाधिकाराप्राप्तिः प्रयोजनम् । 'यस्य विभाषा' (7/2/15) इत्यनेनैव तत्र प्रतिषेधसिद्धेः । 'इट् सनि वा' (7/2/41) इति तस्य सनि इड्विकल्पविधानात् । तथा च भाष्यम् - इट्सनिवेति सनि विभाषा, यस्य विभाषेति इट्प्रतिषेधो भविष्यति'इति । अत्र कैयटः-'यस्य विभाषेति । ननु ऋकारान्तस्य सनि विकल्पविधानादित्वरपरत्वयोरनृकारान्तत्वाद्यस्यविभाषेति प्रतिषेधाप्रसङ्गः । नैष दोषः । सनि विकल्प विधौ प्रकारान्तरत्वापेक्षणेऽपि यस्यविभाषेत्यत्र यस्य क्वचिदिड्विकल्पो दृष्टः स धातुराश्रीयते, न तु विकल्पकारणमृकारान्तम् । भवति चेत्त्वरपरत्वयोः कृतयोरपि स एव धातुरितिप्रवर्तते प्रतिषेधः इति । इत्याश्रयणे उक्तभाष्यमेव प्रमाणमिति तदाशयः । एवमुपदेशग्रहणानुवृत्तेः प्रयोजनाभावादुत्तरार्थत्वेऽपि 'इह किंचित्त्रपो'इति न्यायेन ज्ञापकत्वसंभवाच्च । उत्तरार्थमेकाज्ग्रहणं न कर्तव्यमिति एतद्भाष्याशयः कैयटेन विवृतः । एवं च - प्रयोजनाभावे आकरे स्पष्टे सति, प्रयोजनं स्पष्टमिति वादः कथमिति स एव प्रष्टव्यः ।

यङ्लुगन्ते वेभेदितेति इड्विशिष्टरूपस्य 'यत्रैकाज्ग्रहण चैव'इति - प्राचीनव्याकरणानुमोदितस्य-कैयटादि भट्टोजियज्वान्तैरभियुक्तैर्लोकेऽप्यङ्गीकृतस्य स्वबुद्ध्यानभिधानकल्पनमप्ययुक्तमेव । एतेनच्छन्दसि सर्वविधीनां विकल्प इत्यप्यपास्तम्, भाष्ये एकाज्ग्रहणं किमर्थमितिप्रयोजनद्वयस्यापि निराकरणेन भाष्ये तदर्थतोक्तेत्यस्य भाष्यानवधानमूलकत्वात् । 'अङ्गत्वविशिष्टस्य धातुत्वं तु उत्तरकाण्डस्य' इति वैषम्यकल्पनमप्ययुक्तम्, धातोरेव सनादिप्रत्ययविधानेन पूर्वभागस्य धातुत्वाभावे विभित्स इत्यस्य यस्मात्प्रत्ययविधिस्तदादित्वाभावेन समुदायस्याङ्गसंज्ञाया अभावप्रसङ्गात् । अङ्ग-संज्ञा पदसंज्ञा च एकाज्द्विर्वचनन्यायेन समुदाये प्रवर्तते, नावयवे इति 'एकाचोद्वे प्रथमस्य' (6/1/1) इतिसूत्रे भाष्ये स्पष्टम् । प्रथमस्यैव प्रत्ययविधानावधित्वमाश्रित्य तदादिग्रहणात्समुदायस्यैव ते इति पक्षान्तरमपि तत्र स्पष्टम् । एवं च यद्यपि प्रत्ययोत्पत्तये धातुसंज्ञा अवयवे प्रवृत्ता प्राक्, तथापि कार्यान्तरार्थतया अङ्गसंज्ञावत्पुनः प्रवर्तमाना धातुसंज्ञा शास्त्रहानिन्यायेन समुदाय एव युक्ता नावयवे । एवं 'स्वंरूपम्.' (1/1/68) इतिवचनादस्त्यादिसंज्ञा अपि समुदायस्यैव युक्ताः । 'दयतेर्दिगिलिटि' (7/4/9) इतिसूत्रे उत्तरभागस्यास्तित्वमाश्रित्य भूभावप्रवर्तनपरभाष्यं तु उक्तभाष्यविरोधात् तत्सूत्रोपक्रमभाष्यविरोधाच्च दोषोपलक्षणतया व्याख्यातम् - बभूवेति न सिद्ध्यतीति उक्तरीत्या अर्थवत्त्वस्यापि समुदाय एव प्राप्त्या उत्तर-भागोऽर्थवानिति गलहस्तितम् । भाष्भावे धातोरवयव इत्याश्रयणस्य गर्धप्सिद्धिः प्रयोजनमिति भाष्यं च अजर्घा इत्यादेरप्युपलक्षणं व्याख्येय''मित्युक्तम् ।

1. अष्टा. 7/2/67 ।
2. व्याडिः प. सू. प. 15, पृ. 9 ।
3. (क) पु. दे. ल. प. वृ. प. 16, पृ. 119 ।
   (ख) सी. दे. बृ. प. वृ. प. 84, पृ. 243 ।
   (ग) नी. दी. प. वृ. प. 140, पृ. 316 ।
   (घ) ह. भा. प. भास्क. प. 87, पृ. 359 ।
4. तथाहि–

यतोऽस्या अभावेऽत्रैकाजितिशब्दोऽनुपपन्नः । [1]क्वसौ हि न कश्चिदेकाजस्ति । तत्र हि नूनं [2]द्विर्वचनेन भवितव्यम् । यदि हि कश्चिदकृतद्विर्वचने भवेदेकाच् तर्हि तन्निवृत्त्यर्थमिदमुपपद्येत । ज्ञापितायां चाऽस्यां – [3]पेचिवान्' इत्यादौ भविष्यदेत्वा-[4]भ्यासलोपोत्तरकालभावी य एकांच्तदर्थमिदमुपपद्यते । न च स्वादौ चिरिजिरी[5]पठ्येते प्रत्ययान्ताश्च येऽनेकाचो धातवस्तदर्थमत्रैकाजितिशब्दो ज्ञापितामिमां परिभाषां विनाप्युपपद्यत इतिशङ्क्यम् । यतः 'कास्यनेकाच इति - वक्तव्यं चुलुम्पाद्यर्थम्'[6]-इत्यनेकाज्भ्यो नित्यम् आम् विधीयते । नापि 'उषविदजागृभ्योऽन्यतरस्या'मिति[7] [8]जागर्तेर्विकल्पेनाऽऽमृविधानात्तदर्थमेकाजित्ययं शब्दः परिभाषामिमां विनाऽप्युपपद्यत इत्यपि शङ्क्यम् । यतस्तस्यात्र प्रयोजने 'न जागुः' इत्येव सूत्रयेत् । न चोर्णोतिरपि[9]

---

(क) "वसुप्रवृत्त्या इह शास्त्रे कार्यं भवति । कथं ज्ञायते । यदयं 'वस्वेकाजाद्धसाम्' (7/2/67) इतीटमाह । कथं कृत्वा ज्ञापकम् । अत्रैकाज्ग्रहणं प्रत्याख्यायते । नहि वसौ कश्चिदेकाजस्ति । अत्रहि - द्विर्वचनेन भवितव्यम् । पश्यति त्वाचार्यः वसु-प्रवत्त्या एकाजयं भवति । कथम् । इटि कृते 'अत एकहल्मध्ये.' (6/4/120) इत्यभ्यासलोपो भवति । एकाजयं वर्त्स्यतीति इटं शास्ति । किमेतस्या ज्ञापने प्रयोजनम् । 'शदेः शितः' (1/3/60) इति आत्मनेपदं सिद्धं भवती"त्याह व्याडिः प. सू. प. 15, पृ. 9 ।

(ख) "ज्ञापकं चात्र 'वस्वेकाजाद्धसाम्' (7/2/67) इति एकाज्ग्रहणम् । तद्धि लिटि द्विर्वचन स्यावश्यंभावान्न कश्चिदेकाजस्तीति भविष्यदेत्वाभासलोपप्रवृत्त्युत्तरकालभावी य एकाच्तदर्थं कृतम् । तदर्थकता च तदास्याद्यदि वर्त्स्यत्प्रवृत्त्या शास्त्रे कार्याणि स्युः । सांप्रतिकाभावात् - सूत्रानुपपत्तौ अनुपपत्त्याभ्युपगमेतत्प्रमाणं ज्ञापक-मुखेनोपवर्ण्यते"- इत्याह पु. दे. ल. प. वृ. प. 16, पृ. 119 ।

(ग) "ज्ञापकं चात्र 'वस्वेकाजाद्धसाम्' (7/2/67) इत्येकाज्ग्रहणम् । तद्धि लिटि द्विर्वचस्यावश्यकत्वान्न कश्चिदेकाजस्तीति भविष्यदंभ्यासलोपप्रवृत्तेरुत्तरकालं भावी य एकाच् तदर्थं कृतम् । तदर्थकता च तदा स्याद्यदि वर्त्स्यत्प्रवृत्त्येह कार्याणि स्यु"रित्याह सी. दे. बृ. प. वृ. प. 84, पृ. 243 ।

(घ) "ज्ञापकमत्र 'वस्वेकाजाद्धसाम्' (7/2/67) इत्यत्र एकाज्ग्रहणम् । तद्धि कृतद्विर्वचना-नामेकाचामिड्विधानार्थम् । स च द्विर्वचनात्प्रागेव परत्वेन कर्तुं युज्यते । तत्र यदीयं न स्यात्तदा परत्वोल्लङ्घनापत्ति"रित्याह ह. भा. प. भास्क. प. 87, पृ: 359 ।

1. 'क्वसुश्च' - अष्टा. 3/2/107 ।
2. 'लिटि धातोरनभ्यासस्य'- अष्टा. 6/1/8 ।
3. पचेर्लिटि 'क्वसुश्च' - अष्टा. 3/2/107 ।
4. 'अत एकहल्मध्येऽनादेशादेर्लिटि' - अष्टा. 6/4/120, इतिलिटः क्वसुः ।
5. 'चिरि' जिरि' हिंसायाम् - धा. पा. स्वा. 1278, 1279 ।
6. वार्तिकम् का. 3/1/35 ।
7. अष्टा. 3/1/38 ।
8. 'जागृ निद्राक्षये' धा. पा. अदा. 1072 ।
9. 'ऊर्णुञ् आच्छादने' धा. पा. अदा. 1039 ।

व्यावर्त्त्यमस्य । यतो 'वाच्य ऊर्णोर्णुवद्भाव[1]:' इतिणुवद्भावाऽतिदेशेनो - र्णोरेकाच्कार्येण भाव्यमेव । ज्ञापिताया अस्याः फलं – '[2]शीयते'इत्यत्र भाविना शित्त्वेन 'शदेः[3] शितः' इत्यात्मनेपद-सिद्धिः ।

## 'एका'जितिशब्दः

'[4]वस्वेकाद्धसा'मित्यत्र 'एका'जितिशब्दः 'इतरेतराश्रयाण्यपि[5] कार्याणि शास्त्रेषु प्रकल्पन्ते'-इति परिभाषाया ज्ञापकः[6] । यतोऽस्या अभावे इतरेतराश्रयत्वान्नायमुपपद्यते । एकाजूनिमित्तोहि इडागमः, इणूनिमित्तं चैकाच्त्वम् । ज्ञापितायां चाऽस्याम् इतरेतराश्रयमपीटं विधातुमयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'यूनः[7]' इत्यादौ 'इग्यणः [8]सम्प्रसारण'मित्यनेनेतरातराश्रयाया अपि सम्प्रसारणसंज्ञायाः सिद्धिः । अस्या अभावे तु नेयं सिद्ध्येत् । यतः संप्रसारणसंज्ञया यणः स्थाने इको भवन्ति, तेनैव इकः संप्रसारणसंज्ञा च क्रियते ।

---

1. 'वाच्य ऊणोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
   आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्" - व्या. म. भा. 3/1/3/36 ।
2. 'शद्लृ शातने' धा. पा. तुदा. 1429' इतिशंद्धातोर्लटि - अष्टा. 1/3/60' शदेः शितः' ते इत्यात्मनेपदे 'तुदादिभ्यः शः' - अष्टा. 3/1/77, इति शविकरणे 'पाघ्राध्मास्थाम्नादाण्- दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' - अष्टा. 7/3/78 इतिशदः शीयादेशे च कृते रूपमिदं सिद्ध्यति ।
3. अष्टा. 1/3/60 ।
4. अष्टा. 7/2/67 ।
5. (क) व्याडिः प. सू. प. 24, पृ. 12 ।
   (ख) पु. दे. ल. प. वृ. प. 96, पृ. 152 ।
   (ग) इतरेतराश्रयाण्यपि कार्याणि शास्त्रे प्रकल्पन्ते' - सी. दे. बृ. प. वृ. प. 3, पृ. 166 ।
   (घ) नी. दी. प. वृ. प. 3, पृ. 293 ।
   (ङ) ह. भा. प. भास्क. प. 3, पृ. 319 ।
6. तथाहि–
   (क) "इतरेतराश्रयाण्यपि कार्याणि शास्त्रेषु प्रकल्पन्ते । कथं ज्ञायते । यदयं 'वस्वेकाजाद्धसाम्' (7/2/67) इत्याह । एकाजूनिमित्त इडागमः, इणूनिमित्तमेकाच्त्वम् । तदितरेतराश्रयं भवति . इतरेतराश्रयाण्यपि कार्याणि प्रकल्पन्ते । किमेतस्या ज्ञापने प्रयोजनम् । 'इग्यणः संप्रसारणम्' (1/1/45) भवति । अत्र - संप्रसारणसंज्ञया यणः स्थाने इको भवन्ति । तेनैव इकः संप्रसारणसंज्ञा क्रियते । तदितरेतराश्रयं सिद्धं भवती"त्याह व्याडिः प. सू. प. 24, पृ. 12 ।
7. युवन्शब्दाच्छसि रूपमिदम् ।
8. अष्टा. 1/1/45 ।

## 'ए'ङितिशब्दः

[1]'एङ्ह्रस्वात्सम्बुद्धे'रित्यत्र 'ए'ङितिशब्दः 'न सम्बुद्धिलोपेऽचः परिस्मिन्निति[2] स्थानिवद्भावो भवती'ति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'अग्ने[4]' '[5]वायो' – '[6]खट्वे' 'माले[7]' - इत्यादौ सम्बुद्धि-[8] लोपार्थमत्रोपात्तोऽयं शब्दः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'अग्ने 'वायो' - इत्यादौ [9]गुणस्य [10]स्थानिवद्भावेन हि ह्रस्वा-[11]दित्येव सम्बुद्धिलोपः सुलभः, 'खट्वे' 'माले' - इत्यादावपि च आपः स्थाने '[12]संबुद्धौ चे'ति जातस्य एकारस्य [13]स्थानिवद्भावेन आप्त्वात् '[14]हल्ङ्याब्भ्यः, इत्यनेनैव सम्बुद्धिलोपः सुलभः । न

---

1. अष्टा. 6/1/69 ।
2. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
3. तथाहि –
   (क) "आचार्यप्रवृत्तिर्ज्ञापयति - 'न सम्बुद्धिलोपे स्थानिवद्भावो भवती'ति । यदयम् 'एङ्ह्रस्वात्संबुद्धे'रित्येङ्ग्रहणं करोति । नैतदस्ति ज्ञापकम् । गोऽर्थमेतत् स्यात् । यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा हि 'ओ ह्रस्वाऽदित्येव ब्रूया"दित्याह पत. व्या. म. भा. 1/1/8/56 ।
   (ख) "अचः परस्मिन् (सू. 1/1/57) । ओ ह्रस्वादिति वक्तव्ये एङ्ह्रस्वादिति प्रत्याहार-ग्रहणं ज्ञापयति न सम्बुद्धिलोपे स्थानिवद्भावो भवतीती"त्याह एन. एस. रामा. ज्ञा. सं. प. 1, पृ. 141 ।
4. अग्निशब्दात् संबोधने-सौ 'एकवचनं सम्बुद्धिः' अष्टा. 2/3/49, इतिसम्बुद्धिसंज्ञायां तस्मिन्परे 'ह्रस्वस्य गुणः' - अष्टा. 7/3/108, इतीकारस्य गुणे एकारे 'एङ्ह्रस्वात्सम्बुद्धेः - अष्टा. 6/1/69, इतिसम्बुद्धिसकारलोपे च सतिरूपमिदम् ।
5. वायुशब्दात् संबोधने सौ 'एकवचनं सम्बुद्धिः' - अष्टा. 2/3/49, इतिसम्बुद्धिसंज्ञायां तस्मिन्परे 'ह्रस्वस्य गुणः' - अष्टां. 7/3/108, इत्यनेनोकारस्य गुणे ओकारे 'एङ्ह्रस्वा-त्सम्बुद्धेः' - अष्टा. 6/1/69, इतिसम्बुद्धि-सकारलोपे च कृते रूपमिदम् ।
6. खट्वाशब्दात्सौ 'एकवचनं सम्बुद्धिः' - अष्टा. 2/3/49, इतिसम्बुद्धिसंज्ञायां तस्मिन्परे 'सम्बुद्धौ च' - अष्टा. 7/3/106, इत्याप एकारे - 'एङ् ह्रस्वात् सम्बुद्धेः' - अष्टा. 6/1/69, इतिसम्बुद्धि-सकारलोपे रूपमिदम् ।
7. मालाशब्दात् सौ 'एकवचनं सम्बुद्धिः' - अष्टा. 2/3/49, इति - सम्बुद्धिसंज्ञायां तस्मिन्परे 'सम्बुद्धौच' - अष्टां. 7/3/106, इत्याप एकारे 'एङ्ह्रस्वात् सम्बुद्धेः' - अष्टा. 6/1/69, इतिसम्बुद्धिसकारलोपे रूपमिदम् ।
8. एकवचनं सम्बुद्धिः ' - अष्टा. 2/3/49 ।
9. 'ह्रस्वस्य गुणः' - अष्टा. 7/3/108 ।
10. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
11. 'एङ्ह्रस्वात् सम्बुद्धेः' - अष्टा. 6/1/69, इतिसूत्रस्थादितिशेषः ।
12. अष्टा. 7/3/106 ।
13. 'अचः परिस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
14. 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' - अष्टा. 6/1/68 ।

च 'हे गौः' इत्यत्र गोशब्दादनिष्टस्याऽपि संबुद्धिलोपस्य [1]स्थानिवद्भावेन साधनायाऽत्राऽयं शब्दश्चरिताऽर्थ इति शङ्क्यम् । यतस्तदर्थत्वे 'ओ ह्रस्वा-[2]'दित्येव ब्रूयात् । न च तथोक्तम् । ज्ञापिते चाऽस्मिन्वचने स्थानिवद्भावाऽप्राप्त्या[3] 'अग्ने' 'वायो' 'खट्वे' 'माले' इत्यादौ केनाऽपि सूत्रेण सम्बुद्धिलोपो न सिद्ध्यतीति तत्सिद्ध्यर्थमत्र शब्दोऽयं स्वांशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'हे गौः[4]' इत्यत्र औकारस्य [5]स्थानिवत्त्वाऽभावाद् एङः परत्वाऽभावादेव सम्बुद्धिलोपाऽप्राप्तेः' तत्र लोपवारणार्थं कृतस्य '[6]पूर्वविधा'वित्यस्याऽकरणजन्यं लाघवम् । अस्य वचनस्याऽसत्त्वे हि 'अचः [7]परस्मिन्पूर्वविधा'वित्यत्र 'पूर्वविधा'वित्यस्याऽनुक्तौ गोशब्दात् सम्बुद्धौ 'गो + सु' – इत्यवस्थायां सोः 'गोतो[8]णित्' - इति णिद्वद्भावेन 'अचो[9] ऽञ्णिति' इत्योकारस्य वृद्धौ 'हे गौ + स्' इत्यवस्थायां परनिमित्तकस्य ओकारस्य[10] 'अचः [11]परस्मिन्' - इतिस्थानिवद्भावो दुर्वार इतिऔकारस्य ओकारत्वेन एङ्त्वात् ततः परस्याः सम्बुद्धेः '[12]एङ्ह्रस्वात् सम्बुद्धे'रितिलोपाऽऽपत्तिः स्यादिति तस्या आपत्तेः परिहाराय 'पूर्वविधा'वित्युक्तिस्तत्राऽऽवश्यकी भवति । तत्र 'पूर्वविधा'वित्युक्तौ तु स्थानभूतादचः परस्यैवाऽत्र [13]लोपो न तु पूर्वस्येति [14]स्थानिवत्त्वाऽप्रवृत्त्या सम्बुद्धिलोपो[15]न भवतीत्येवं'[16]पूर्वविधा'वित्यस्य करणजन्यं गौरवमस्य वचनस्याऽभावे स्फुटम् । तदुक्तम् – 'अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः'[17] इति ।

---

1. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
2. 'एङ्ह्रस्वात्.' -अष्टा. 6/1/69, इतिसूत्रं विहाये तिशेषः ।
3. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 ।
4. गोशब्दात्सम्बुद्धौ 'गोतोणित्' - अष्टा. 7/1/90, इति णिद्वद्भावेन 'अचो ऽञ्णिति' - अष्टा. 7/2/115, इत्योकारस्य वृद्धावौकारे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
5. 'अचः परस्मिन् पूर्वविधौ' - अष्टा. 1/1/57 ।
6. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यत्रेतिशेषः ।
7. अष्टा. 1/1/57 ।
8. अष्टा. 7/1/90 ।
9. अष्टा. 7/2/115 ।
10. णिद्भावप्रयुक्तवृद्धेरित्यर्थः ।
11. अष्टा. 1/1/57 ।
12. अष्टा. 6/1/69 ।
13. 'एङ्ह्रस्वात्सम्बुद्धेः' - अष्टा. 6/1/69 ।
14. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
15. 'एङ्ह्रस्वात्सम्बुद्धेः' - अष्टा. 6/1/69, इत्यनेनेतिशेषः ।
16. 'अचः परस्मिन्.' - अष्टा. 1/1/57, इत्यत्रेतिशेषः ।
17. भ. ना. प. शे. प. 134, पृ. 366 ।

## 'एवे'तिशब्दः

'तयोरेव कृत्यक्तखलर्थाः'[1] इतिसूत्रे 'एवे'तिशब्दः 'चानुकृष्टं[2]नोत्तरत्रेति'-परिभाषाऽनित्येतिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावेऽत्र कर्त्रर्थव्यवच्छेदार्थमुपात्त एव शब्दो व्यर्थः । 'लः कर्मणि च[4] भावे चाकर्मकेभ्यः' इत्यत्र चकारानुकृष्टस्य [5]'कर्त्तरिकृ'दितिकर्तुरत्र सूत्रे हि निवृत्तिः परिभाषयाऽनयैव सुलभा[6] । ज्ञापिते चाऽस्मिन्नूवचने तत्परिभाषाऽनित्यत्वेन चकारानुकृष्टस्य कर्तुर्निवृत्त्यर्थं स्वांशेऽयं शब्दश्चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'तृतीया च होश्छन्दसी'[7]तिसूत्रे चानुकृष्टाया द्वितीयायाः 'अन्तरान्तरेण युक्ते'[8] इत्यादावुत्तरत्रानुवृत्तिरित्यत्रैव प्रबन्धेऽन्त्र[9] निरूपितमिति नेह प्रतन्यते ।

भगवान् भाष्यकारस्तु [10]'तयोरेवे'त्यत्र 'एवे'तिशब्दः 'कृत्यप्रत्ययेषु कर्त्रर्थस्याऽपि समावेशोऽस्तीति वचनस्य ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्रासौ शब्दो व्यर्थः । न च कृत्यादयो भावकर्मणोरेव यथा स्युः कर्त्तरि माभूवन्नित्येतदर्थसूचनायाऽसौ चरितार्थ इतिशङ्क्यम् । [11]'यतस्तयोरितिसूत्रस्य सामान्य-

---

1. अष्टा. 3/4/70 ।
2. (क) 'चानुकृष्टमुत्तरत्र नानुवर्तते' - व्याडिः प. सू. प. 59 पृ. 27 ।
   (ख) 'चानुकृष्टमुत्तरत्र नाभिसम्बध्यते'- पु. दे. ल. प. वृ. प. 87 पृ. 150 ।
   (ग) 'चानुकृष्टं नोत्तरत्र - सी. दे. बृ, प. वृ. प. 46 पृ. 213 ।
   (घ) 'चानुकृष्टं - नोत्तरत्र' - नी. दी. प. वृ, प. 57 पृ. 304 ।
   (ङ) चानुकृष्टं नेतरत्र' ह. भा. प. भास्क. प. 48 पृ. 343 ।
   (च) 'चानुकृष्टं नोत्तरत्र - भ. ना. प. शे. प. 79 पृ. 303 ।
   (छ) 'चानुकृष्टं नोत्तरत्र' शेषा. प. भास्क. प. 67, पृ. 436 ।
3. तथाहि –
   (क) '"एवकारः कर्तुरपकर्षणार्थः" -इतिग्रन्थेनास्यास्य ज्ञापकत्वमसूसुचज्जयादित्यः का. 3/4/70 । अत्र + 'अपकर्षणार्थः' - इत्यस्य निवृत्त्यर्थ इत्यर्थः ।
   (ख) '"इयं चानित्या । 'तयोरेव कृत्यक्तखलर्थाः' (4/4/70) इतिसूत्रे एवकारग्रहणात् । तद्धि कर्त्रर्थव्यवच्छेदार्थं क्रियते । यदि चानुकृष्टमुत्तरत्र न स्यात् 'लः कर्मणि च' (3/4/69) इत्यत्रापि कर्तुश्चानुकृष्टत्वादुत्तरत्राप्राप्तौ किमेवकारेण इति अस्मत्कृतपाणिनीयदीपिकायां स्पष्ट"मित्याह नी. दी. प. वृ. प. 57 पृ. 304।
4. अष्टा. 3/4/69 ।
5. अष्टा. 3/4/67 ।
6. 'चानुकृष्टं नोत्तरत्रे' ति ।
7. अष्टा. 2/3/3 ।
8. अष्टा. 2/3/4 ।
9. 'ज्ञापकाः सूत्रांशाः' इत्येतस्मिन्प्रघट्टके 'एकाजुत्तरपदे णः' - अष्टा 8/4/12 इतिसूत्रस्थ - 'ण' शब्दस्य ज्ञापकत्वनिरूपणावरे ।
10. 'तयोरेव कृत्यक्तखलर्थाः' - 3/4/70
11. 'तयोरेव कृत्यक्तखलर्थाः' - अष्टा. 3/4/70 ।

शास्त्राऽपवादत्वादेव[1] कर्तरि कृदित्यादीनाभावः सुलभः । ज्ञापिते चाऽस्मिन्वचने कर्त्रर्थस्याऽपि समावेशः प्राप्नोतीति तन्निवृत्तये शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु भव्यादिषु शब्देषु कर्तुरपि प्रतीतिसिद्धिः । तेन[2] 'गेयो माणवकः साम्नामिति कर्तरि, [3]'गेयानि माणवकेन सामानीति कर्मणि च प्रयोगः सं गच्छते । वस्तुतस्तु 'भव्यगेये'[4]त्रिसूत्रे वाग्रहणाकरणजन्यं लाघवमेवाऽस्य वचनस्य फलम् "इतिमनुते[5] । एन्. एस्. रामानुजताताचार्येणापि सिद्धान्तोऽयं भगवतः समुपन्यस्तः[6] । न चाऽस्य वचनस्याभ्युपगमे 'दाशगोघ्नौ संप्रदाने'[7] 'भीमादयोऽपादाने'[8] इत्यत्राऽपि कर्त्रर्थस्य समावेशापत्तिः स्यात्तथा सति कर्तर्यपि तेषां प्रयोग आपद्येतेति शङ्क्यम् । यतः 'आदिकर्मणि क्तः[9] कर्तरि चे'तिसूत्रस्थ'श्चे'ति - शब्दः 'आदिकर्मणि'शब्दः 'आदिकर्मणि' -इत्येतस्मात्परेषु सूत्रेषु कर्त्रा समावेशो न भवती'तिवचनं ज्ञापयति[10] । अस्य वचनस्याऽभावे हि

---

1. 'कर्तरि कृत्' - अष्टा. 3/4/67 ।
2. 'भव्यगेय. प्रवचनीयोपस्थानीयजन्या प्लाव्या पात्या वा' - अष्टा. 3/4/68, इत्यनेन 'गास्तुतौ' धा. पा. जुहो 1106, इति गाधातोः कर्तरि यत्प्रत्यये 'ईद्यति' -अष्टा. 6/4/65, इतिईत्वे गुणे कृदन्तात् स्वादिकार्ये च कृते 'गेयः' - इतिरूपं सिद्ध्यति । साम्ना कर्मणामनभिहितत्वात् कृद्योगे षष्ठी कर्तुरभिहितत्वान् माणवकशब्दात् प्रथमा च भवति ।
3. 'भव्य गेय.' - अष्टा. 3/4/68, इत्यनेन पूर्ववत् स्तुत्यर्थक गाधातोः सकर्मत्वात् कर्त्तरि यत् प्रत्यये ईत्वे स्वादिकार्ये च कृते 'गेयानी'तिरूपं' सिद्ध्यति कर्तुरनभिहितत्वात् माणवकात्तृतीया । कृद्योगा षष्ठी तु कृत्ययोगे - कर्त्तरि वैकल्पिकी, कृत्यानां कर्तरि वा' - अष्टा. इत्युक्तेः ।
4. 'भव्यगेय प्रचनीयोपस्थानीय जन्या प्लाव्या पात्या वा' - अष्टा. 3/4/68 ।
5. तथाहि – "यदप्युच्यते - 'एवकारकरणं चार्थ इति । कथं पुनरन्यो नामाऽन्यस्यार्थे, वर्त्तते । काममेवकारश्चार्थे वर्तते ? । स एष एवकारः स्वार्थे वर्त्तते । किं प्रयोजनम् ?। ज्ञापकार्थम् । किं ज्ञाप्यम् ?। एतज् ज्ञापयत्याचार्य 'इत उत्तरंसमावेशो भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ?। 'तच्च भव्यार्थम्' । भव्यादिषु समावेशः सिद्धो भवति, गेयो माणवकः साम्नां, गेयानि माणवकेन सामानीती"त्याह पत. व्या. म. भा. 3/4/1/67
6. तथाहि - "कर्तरिकृत्- (सू. 3/4/67) । 'तयोरेव' (सू 3/4/70) इत्येवकारो ज्ञापयति इत उत्तरं समावेशो भवतीती"त्याह एन्. एस्.रामा. ज्ञा. सं. परि. 1, पृ. 162 ।
7. अष्टा. 3/4/73 ।
8. अष्टा. 3/4/74 ।
9. अष्टा. 3/4/71 ।
10. तथाहि
   (क) "यद्येतज् ज्ञाप्यते इहापि समावेशः प्राप्तनोति -दाशगोघ्नौ संप्रदाने, भीमादयोऽपादान इति । अत्राऽपि सिद्धिर्भवति - यदयमादिकर्मणि क्तः कर्तरि चेतिसिद्धे समावेशे समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः - 'प्रागमुतः समावेशो भवती'ति" इत्याह पत. व्या. म. भा. 3/4/1/67 ।
   (ख) " 'आदि कर्मणि क्तः कर्तरि च' (सू. 3/4/71) इतिचकारो ज्ञापयति प्रागमुतः समावेशो भवती' ति" -इत्याह एन्.एस्. राम. ज्ञा. सं. परि. 1,4. पृ. 162 ।

पूर्ववचनादेवाऽत्र चशब्दाऽर्थस्य लाभः सुलभ इति चे'तिशब्दोऽत्र व्यर्थः। ज्ञापिते चाऽस्मिन् वचनेऽत्र कर्त्रर्थलाभाय चेतिशब्दः स्वांशे चरितार्थो भवति । दाशगोघ्नादिषु न कर्त्रर्थसमावेशाऽऽपत्तिः प्राप्नोतीति न दाश-गोघ्न-भीमादीनां कर्तरि प्रयोगः, इत्यस्य वचनस्य[1] फलम् । वामन - सूचितं नीलकण्ठदीक्षितोक्तं चास्य सूत्रस्य 'चानुकृष्टं नोत्तरत्रेति परिभाषानित्ये' ति वचनज्ञापकत्वमपि युक्तमेव प्रतिभाति ।

## 'ओ'रितिशब्दः

'ओः पुयण्ज्यपरे'[2] - इत्यत्राऽभ्यासविशेष'मो'रितिशब्दः– 'णौ कृतं [3]स्थानिव'दितिपरिभाषाया ज्ञापकः[4] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'पिपविषते'[5] – 'पिपावयिषति'[6] 'बिभावयिषति'[7] –'यियविषति'[8]

---

1. 'आदिकर्मणि.' -अष्टा. 3/4/71, इत्येतस्मात्परेषु सूत्रेषु कर्त्रा समावेशो न भवती'तिवचनस्येत्यर्थः ।
2. अष्टा. 7/4/80 ।
3. (क) पु. दे. ल. प. वृ. पः 33, पृ. 127 ।
   (ख) सी. दे. बृ. प. वृ. प. 95, पृ. 252 ।
   (ग) ह. भा. प. भास्क. प. 97, पृ. 362 ।
4. तथाहि–
   (क) "ज्ञापकं चात्र 'ओः पुयण्ज्यपरे' (7/4/80)इति अभ्यासस्य-विशेषणमोरितिपदम् । तेन हि पवर्गे यणि जकारे चावर्णपरे अभ्यासस्योकारस्य इत्वं विधीयते । विभावयिषति रिरावयिषति जिजावयिषतीत्यादौ । यदि च णौ कृतं वृद्ध्यावादेशलक्षणं कार्यं स्थानिवन्न स्यात् कुतोभ्यासस्योकारो यस्येत्वं विधीयते इती"त्याह पु. दे. ल. प. वृ. प. 33, पृ. 227 ।
   (ख) "ज्ञापकंचात्र 'ओः पुयण्ज्यपरे' (7/4/80) इत्यत्राभ्यासविशेषणमोरितिपदम् । तेन हि पवर्गे यणि जकारे चाचूपरेऽभ्यासस्येत्वं विधीयते विभावयिषतीत्यादिषु । यदि चेण्णौकृतं वृद्ध्यावादेशादिकार्यंस्थानिवन्न स्यात् कथमभ्यासस्योकारस्येत्वं विधीयेत"-इत्याह - सी. दे. बृ. पः वृ. प. 95, पृ. 252 ।
5. 'पूङ्पवने' धा. पा. भ्वा. 966, इतिपूधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि'-अष्टा. 7/2/74, इति सन इटि पूशब्दस्य 'सन्यङोः' - अष्टा. 6/1/9, इत्यनेन द्वित्वेऽभ्यासत्वे हलादिषे ह्रस्वत्वे च कृतेऽभ्यासस्योवर्णस्य 'ओः पुयण्ज्यपरे' -अष्टा. 7/4/80, इति इत्वे द्वित्वोत्तरखण्डोकारस्य गुणेऽवादेशे प्रत्ययसकारस्य षत्वे सनन्तधातोर्लटि ते शपि पररूपे टितष्टेरेत्वे च कृते रूपमिदम् ।
6. 'पूङ् पवने' धा. पा. भ्वा. 966, इति पूधातोर्ण्यन्तात्सनि 'स्मिपूङ्रञ्ज्वशां सनि' - अष्टा. 7/2/73 इतिसनः इटि णौ परतो धातोरुकारस्य 'अचोऽञ्णिति' -अष्टा. 7/2/115, इतिवृद्धौ 'एचोऽयवायावः' - अष्टा. 6/1/78, इति औकारस्याऽऽवादेशेऽपि 'णौ कृतं स्थानिवद्भवती'तिपरिभाषया स्थानिवद्भावात् 'पु'इत्यस्य 'सन्यङोः' -अष्टा. 6/1/9, इत्यनेन द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वे च कृतेऽभ्यासोवर्णस्य 'ओः यण्ज्यपरे' -अष्टा. 7/4/80, इति-इत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोऽञ्णिति' -अष्टा. 7/2/115, इति वृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटितिपिशपि पररूपे - रूपमिदं सिद्ध्यति ।
7. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इतिभूधातो र्ण्यन्तात् सनि वलादिलक्षणे इटि णौ परतः 'अचोञ्णिति' -अष्टा. 6/2/115, इतिधातोरुकारस्य वृद्धौ 'एचोऽयवायावः' अष्टा.

'यियावयिषति'[1] 'रिरावयिषति'[2] – 'लिलावयिषति'[3] जिजावयिषती'[4]त्यादौ अभ्यासोकारस्य इत्वाऽर्थमारब्ध 'उवर्णाऽन्ताऽभ्यासस्य पवर्गे यणि जकारे चाऽवर्णपरे परत इकारादेशो भवति सनि प्रत्यये परत इत्यर्थकेऽस्मिन् सूत्रेऽभ्यासविशेषणमोरितिशब्दोऽस्या अभावेऽनुपपन्नः । सम्भवव्यचिराभ्यां स्याद्

---

6/1/178, इति औकारस्याऽऽवादेशेऽपि 'णौ कृतं स्थानिवद्भवती'तिपरिभाषया स्थानिवद्भावात् 'भू' - इत्यस्य 'सन्यङोः' -अष्टा. 6/1/9, इत्यनेन द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वे भकारस्य 'अभ्यासे चर्च' -अष्टा. 8/4/54) इति - जश्त्वेन बकारेऽभ्यासोवर्णस्य 'ओः पुयण्ज्यपरे' -अष्टा. 7/4/80, इति इत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोञ्णिति' -अष्टा. 7/2/115, इति वृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

8. 'यु मिश्रणेऽमिश्रणे च' - धा. पा. अदा: 1033, इतियुधातोः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' - अष्टा. 7/2/49, इतिसन इटि युशब्दस्य 'सन्यङोः' -अष्टा.. 6/1/9, इत्यनेन द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वेऽभ्यासोवर्णस्य 'ओः पुयण्ज्यपरे' -अष्टा. 7/4/80 इतिइत्वे द्वित्वोत्तखण्डोकारस्य गुणेऽवादेशें सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

1. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा 1033, इतियुधातोर्ण्यन्तात्सनि 'सनीवंतर्ध.' -अष्टा. 7/2/49, इतिसन इटि णौ परतो धातोरुकारस्य 'अचोऽञ्णिति' - अष्टा. 7/2/115, इतिवृद्धावादेशेऽपि 'णौ कृतं स्थानिवद्भवती'तिपरिभाषया स्थानिवद्भावात् युशब्दस्य 'सन्यङोः' - 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वेऽभ्यासोकारस्य 'ओः पुयण्ज्यपरे' - अष्टा. 7/4/80, इतिइत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोऽञ्णिति' - अष्टा. 7/2/115,इति वृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

2. 'रुशब्दे' धा.-पा. अदा. 1034, इति रुधातोर्ण्यन्तात् सनि इटि णौ परतो धातोरुकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इतिवृद्ध्यादेशेऽपि 'णौ कृतं स्थानिवद्भवती'-तिपरिभाषया स्थानिवद्भावात् रुशब्दस्य 'सन्यङोः' -अष्टा. 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वेऽभ्यासोकारस्य 'ओः पुयण्ज्यपरे' - अष्टा. 7/4/80, इतिइत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोञ्णिति' -अष्टा. 7/2/115, इतिवृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

3. 'लूञ्छेदने' धा. पा. क्र्या. 1464, इति लूधातोर्ण्यन्तात्सनि इटि णौ परतो धातोरुकारस्यं 'अचोञ्णिति' -अष्टा. 7/2/115, इति वद्धावावादेशेऽपि 'णौ कृतं स्थानिवद्भवती'ति-परिभाषया स्थानिवद्भावात् लूशब्दस्य 'सन्यङोः' अष्टा. 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वेऽभ्यासोकारस्य-'ओः पुयण्ज्यपरे' - अष्टा. 7/4/80, इति इत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोञ्णिति' - अष्टा 7/2/115, इतिवृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

4: 'जुचङ्क्रम्य - दन्द्रम्य - सृगृधि - ज्वलशुचलषपतपदः' -अष्टा. 3/2/150, इत्यत्र पठितादृतौ वेगे चाऽर्थे विद्यमान सौत्रजुधातोर्ण्यन्तात् सनि इटि णौ परतो धातोरुकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावावादेशेऽपि 'णौ कृतं स्थानिवद्भवती'ति परिभाषया स्थानिवद्भावात् जुशब्दस्य 'सन्यङोः' - अष्टा. 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वेऽभ्यासोकारस्य 'ओः पुयण्ज्यपरे' -अष्टा. 7/4/80, इतिइत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावावादेशे सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

विशेषणमर्थव'दित्यभियुक्तोक्तेर्हि तस्याऽभ्यासविशेषणत्वं नोपपद्यते । नहि - 'विभावयिषति' - इत्यादौ [1]वृद्ध्यावादेशादि[2]कार्येषु कृतेषु सम्भवत्यभ्यासस्योकारः, नाऽपि च क्वचन व्यभिचारः । न च 'पापचिषते'[3] इत्यत्र व्यभिचारः शङ्क्यः । यतः सनि योऽभ्यासस्तदवयवोकारस्येत्वमिह विवक्षितम् । ज्ञापितायां चाऽस्यां 'बिभावयिषती'त्यादौ वृद्ध्यावादेशादिकार्याणां स्थानिवद्भावेनाऽभ्यासोकारः[4] सम्भवती'-तिशब्दोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'शुशावयिषति'[5] 'जुहावयिषति'[6] इत्यादावभ्यासस्योवर्णान्तत्वसिद्धिः । अस्याः परिभाषाया असत्त्वे हि श्वयतेः[7] – [8]ह्वयतेश्च[9]ण्यन्तात् सनि[10] इटि[11] णौपरतो [12]वृद्ध्यावादेशयोः[13]

---

1. 'अचोञ्णिति' - अष्टा. 7/2/11 ।
2. 'एचोऽयवायावः' - अष्टा. 6/1/78
3. 'डुपचष्पाके' धा. पा. भ्वाः 996, इतिपच्धातोर्यङि द्वित्वादिषु कृतेषु 'पापच्य' - इत्यस्माद् यङ्न्तात्सनि इटि 'अतोलोपः '- अष्टा. 6/4/48, इत्यनेन यङोऽकारलोपे 'यस्य हलः' -अष्टा. 6/4/49 इति यकारलोपे सनः सकारस्य षत्वे सनन्ताल्लटि ते शपि पररूपे टितष्टेरेत्वे रूपमिदम् ।
4. 'णौ कृतं स्थानिवद्भवती' परिभाषयेतिशेषः ।
5. 'टुओ श्वि गतिवृद्ध्योः' धा. पा.. भ्वा. 1010, इति श्विधातोर्ण्यन्तात्सनि इटि 'संप्रसारणं तदाश्रयं च कार्यं बलव'दितिपरिभाषाबलेन 'णौ च संश्चङोः' - अष्टा. 6/1/31, इति पूर्वरूपे णौ परतः उकारस्य - वृद्धौ आवादेशे च कृतेऽपि 'णौ कृतं स्थानिवद्भवती'-तिपरिभाषया स्थानिवद्भावात् शुशब्दस्य 'सन्यङोः' -अष्टा. 6/1/9, इत्यनेन द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वे द्वित्वोत्तरखण्डोकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावावादेशे णिचो गुणेऽयादेशे च कृते सनः सकारस्य षत्वे सनन्ताल्लटि तिपि- शपि पररूपे रूपमिदम् ।
6. 'ह्वेञ् स्पर्धायां शब्दे च' धा. पा. भ्वा. 1008, इतिह्वेर्धातोर्ण्यन्तात् सनि इटि 'संप्रसारणं तदाश्रयं च कार्यं बलव'दितिपरिभाषया धातोर्वकारस्य 'ह्वः संप्रसारणम्' -अष्टा. 6/1/32, इति सम्प्रसारणे, पूर्वरूपे च कृते धातोरुकारस्य णौ परतः वृद्ध्यावादेशयोः कृतयोरपि 'णौ कृतं स्थानिवद्भवती'तिपरिभाषया स्थानिवद्भावत् 'हु' -इत्यस्य द्वित्वेऽभ्यासत्वे -हलादिशेषे ह्रस्वत्वे च कृते णौ परतः द्वित्वोत्तरखण्डोकारस्य 'अचो-ञ्णिति' - अष्टा.. 7/2/115, इति वृद्धावावादेशे णिचो गुणेऽयादेशे च कृते सनः सकारस्य षत्वे सनन्ताल्लटि तिपि शपि पररूपे च कृते रूमिदम् ।
7. 'टुओ श्वि गतिवृद्ध्योः' धा. पा. भ्वा. 1010, ।
8. 'ह्वेञ्स्पर्धायां शब्दे च' धा. पा. भ्वा. 1008, ।
9. 'हेतुमति च' -अष्टा. 3/1/26 ।
10. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/17 ।
11. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35
12. 'अचो ञ्णिति' - अष्टा. 7/2/115 ।
13. 'एचोऽयवायावः' - अष्टा. 6/1/78, ।

कृतयोः शाह्वावशब्दयो[1]र्द्वित्वेऽभ्यासत्वे[2] हलादिशेषे च[3] कृतेऽभ्यासस्योवर्णान्तता न सिद्ध्येत् ।

वामनस्तु सम्पूर्णमिदं सूत्रमस्या ज्ञापकमिति मनुते[4]। जिनेन्द्रबुद्धि -हरदत्तमिश्र- – हरिभास्करास्तु सूत्रेऽस्मिन् 'वर्गप्रत्याहारजे'तिशब्दोऽस्या ज्ञापक इति मन्वते[5] । यतः 'पिपविषते'[6] [7]'यियविषती'त्यत्र '[8]द्विर्वचनेऽची'ति स्थानिभूतोकारस्येत्त्वार्थं 'पययो' रित्येतदत्राऽऽवश्यकम् । यद्यपि भाष्य[9]वार्तिकयोः सम्पूर्णमिदं सूत्रमस्या ज्ञापकमित्युक्तं, तथापि तयोर्वर्गप्रत्याहारजग्रहणस्येवाऽत्र ज्ञापकत्वे तात्पर्यमिति तदाशयः । अत्र च 'वर्गप्रत्याहाररजे'तिशब्दोऽस्याः परिभाषाया ज्ञापक

---

1. 'सन्यङोः' - अष्टा. 6/1/9, ।
2. 'पूर्वोऽभ्यासः' - अष्टा. 6/1/4 ।
3. हलादिः शेषः' - अष्टा. 7/4/60 ।
4. तथाहि –
"एतदेव 'पुयण्ज्यपरे' इति वचनं ज्ञापकम् -अद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीती"त्याह वाम. का. 7/4/80 ।
5. तथाहि –
(क) "नहि णिचमन्तरेण पुयण्ज्या वर्णपराः सर्वे सम्भवन्ति. । तत्र हि - यदि णौ कृतस्य स्थानिवद्भावो न स्यात्, तदा येषां णिचमन्तरेणावर्णपरता न सम्भवति, तेषामुवर्णान्तोऽभ्यासो न स्यात्, उच्यते चेदम् 'ओः पुयण्ज्यपरे' इति वचनम्, तस्मादेतज्ज्ञापकम् अद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीति । तेन तुतावयिषति, बिभावयिषतीत्यादि सिद्धं भवतीति । केषाञ्च पुनर्णिचमन्तरेणावर्णपरता न सम्भवति? यकारपकाराभ्यामन्येषां सर्वेषामेवे"त्याह जि. बु. न्या. 7/4/80 ।
(ख) "नहि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जोऽवर्णपराः सम्भवन्ति । पिपचिषति, यियविषते इति सम्भवतीति चेत्? किमेतावता? वर्गग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवति । तस्मादेतदेव वचनमुक्तार्थस्य सूचकमिती"त्याह ह. मि. पदम. 7/4/80 ।
(ग) "परिभाषायां ज्ञापकम् 'ओः पुयण्ज्यपरे' (7/4/80) इत्यत्र ओः पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहः । स हि मिमावयिषति अमीमवत् इत्यादावित्वार्थः । इत्वं तु णिचि वृद्धौ कृतायां द्विर्वचने ह्रस्वे सन्यत इतिइत्वे च सिद्ध्यति इति वर्गप्रत्याहार- जग्रहो व्यर्थः सन् णौ स्थानिवत्त्वं ज्ञापयति । यद्यपि भाष्यवार्तिकयोः 'ओः पुयण्ज्यपरे' (7/4/80) इतिसर्वं सूत्रं ज्ञापकमत्रोक्तं तथापि तस्योक्तविषय एव तात्पर्यम् । पिपविषते यियविषति इत्यत्र 'द्विर्वचनेऽचि' (1/1/59) इतिस्थानिवत्त्वोद्भूतोकारस्य इत्वार्थं पययोरित्यस्यावश्यकत्वा"दित्याह ह. भा. प. भास्क. प. 97, पृ 363 ।
6. रूपस्याऽस्य सिद्धिः प्रागुल्लिखिता ।
7. रूपस्याऽस्यसिद्धिः प्रागुल्लिखिता ।
8. अष्टा. 1/1/59 ।
9. तथाहि - " 'पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' । यदयम् - ओः पुयण्ज्यपरे' इत्याह, तज्ज्ञापयत्याचार्यो- भवति णौ स्थानिवदिती" त्याह पत. व्या. म. भा. 1/1/8/58 ।

इतिमतमेव ज्यायः । यतोऽस्या अभावेऽप्यत्र सूत्रे 'पययो'रिति 'पिपविषते' यियविषती'त्यत्र चरितार्थम् ।

## 'औ' इतिशब्दः

'आत[1] औ णल' इत्यत्र 'औ' इतिशब्दः 'कास्यनेकाच[2] इत्यामनित्य' इति – वचनस्य ज्ञापकः[3]।यतोऽस्य वचनस्याऽभावेऽत्रायं शब्दो व्यर्थः । [4]'पपा' वित्याद्यर्थमारब्धेनानेन सूत्रेण लाघवार्थमोकारे विहितेऽपि [5]'वृद्धिरेची'ति ओकाराकारयोर्वृद्ध्येकादेशेन 'पपौ' इत्यादिप्रयोगाणां सिद्धि र्हि सुलभा । न च ददरिद्रा'[6]-वितिप्रयोगः ओकारविधानेन न सिद्ध्यति यतो [7]'दरिद्रातेरार्धधातुके लोपः' 'सिद्धश्च प्रत्ययविधौ'[8] इत्युक्तमिति तदर्थमत्र 'औ' इतिशब्दश्चरिताऽर्थ इति

---

1. अष्टा. 7/1/34 ।
2. 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' - वा. व्या. म. भा. 3/1/3/35, । 'कास्यनेकाज्ग्रहणं कर्तव्यम्' - वा. वै. सि. कौ. भ्वादि प्र. पृ. 78 ।
3. तथाहि -
   (क) "आत औ णल (7/1/34) इत्यत्र प्रश्लिष्टावर्णत्वात् लाघवार्थमोकारो विधीयतां तत्रैव वृद्धिरेचीति (6/1/88) वृद्धौ सिद्धं पपावित्यादि । तत्र किं प्रश्लिष्टावर्णत्वाद् विवृततमत्वाच्च गुरुणा औकारविधानेन ददरिद्राविति दरिद्रातेरार्धधातुके - लोपः, सिद्धश्च प्रत्ययविधाविति (6/4/144 वा.) आतोलोपेन सिद्ध्यतीति तदर्थमौकारविधानम् । एतदर्थता वास्यकथं स्यात् यदि कास्यनेकाच (3/1/35 वा.) इत्याम् भवेत् । ननु दरिद्रातेः प्रागेव प्रत्ययोत्पत्तेराकारो लुप्त इत्यनाकारान्तत्वात् औत्वेन न भवितव्यम् । नैतत् । अतएवौकारोच्चारणसामर्थ्यात् भूतपूर्वगत्या भविष्यति । तदेतदौकारविधानं "कास्यनेकाच - इत्यामोऽनित्यत्वज्ञापकम् । 'सामान्येनैवामोऽनित्यत्वज्ञापक'मित्यन्ये । तेन ईहांचक्रे इत्यर्थे 'समीहे भर्तुमानर्च' इतिभट्टिप्रयोगः - सिद्धयती"त्याह पु. दे. ज्ञा. समु. पञ्चविंशे युवपादे पृ. 88 ।
   (ख) 'आत औ णल'इत्यत्र 'ओ' इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणाऽर्थम् । अतएव ज्ञापकादाम्नेत्येके"-इत्याह भ. दी. वै. सि. कौ. अदादि प्र. पृ. 174 - 175 ।
4. 'पा पाने' धा. पा. भ्वा. 925, इतिपाधातोर्लिटि तिपि णलि 'पा + अ'- इतिस्थिते 'अकः सवर्णे दीर्घः' - अष्टा. 6/101, इतिसवर्णदीर्घैकाऽऽदेशः प्राप्नोति, 'आत औ णलः' - अष्टा. 7/1/34, इत्यौत्त्वं च, तत्र सवर्णदीर्घैकाऽऽदेशः - 'दण्डाग्र'मित्यादौ सावकाशः, औत्वं तु न क्वचित् सावकाशम्, इत्यनवकाशत्वात् प्रागौत्वे कृते 'वृद्धिरेचि' - अष्टा. 6/1/88, इति वृद्धिः, प्राप्नोति, द्विर्वचनं च 'लिटिधातोरनभ्यासस्य'- अष्टा. 6/1/8, इत्यनेन, तत्र द्विर्वचनं 'पपाचे'त्यादौ सावकाशम्, वृद्धिस्तु 'खट्वैडके'त्यादौ सावकाशेतिपरत्वाद्- वृद्धौ कृतायां पश्चाद् 'द्विवर्चनेऽचि' - अष्टा. 1/1/59, इतिस्थानिवद्भावेन द्वित्वाऽऽदिषु कार्येषु कृतेषु रूपमिदं सिद्ध्यति ।
5. अष्टा. 6/1/88 ।
6. 'द्ररिद्रा दुर्गतौ' - धा. पा. अदा. 1073, इतिदरिद्राधातोर्लिटितिपि - णलि 'आत औ णलः' -अष्टा. 7/1/34 इतिणल औकारे 'पपौ' इति वद् द्वित्वादिकार्येषु कृतेषु रूपमिदम् ।
7. वा. व्या. व्या. म. भा. 6/4/3/114 ।
8. वा. व्या. व्या. म. भा. 6/4/3/114 ।

शङ्क्यम्, यतोऽस्य वचनस्याऽभावेऽत्र 'कास्यनेकाच'[1] इत्यामो दुर्वारतया नैतदर्थताऽत्र 'आ'- बितिशब्दस्य सम्भवति । न च दरिद्रातेः प्रागेव प्रत्ययोत्पत्तेराकारो लुप्त[2] इत्यनाकारान्तत्वादौत्वेन[3]नाऽत्र भवितव्यमितिशङ्क्यम् । यतोऽत्र सूत्रे[4] औकारोच्चारणसामर्थ्याद्भूतपूर्वगत्या[5] औत्वं नूनं प्राप्नोति । ज्ञापिते चाऽस्मिन्वचने ददरिद्रावित्यत्राऽमोऽप्राप्त्या भूतपूर्वगत्या णल औकाराऽऽ-देशसिद्ध्यर्थमयं शब्दः स्वांशे चरितार्थो भवति । वस्तुतस्तु सामान्येनैवाऽऽ-मोऽनित्यत्वमितिवचनस्याऽयं शब्दो ज्ञापकः । तेन ईहांचक्रे[6] इत्यर्थे 'समीहे'[7] इति भट्टिप्रयोगस्य साधुत्वं सिद्ध्यति । अन्यथा 'इजादेश्च गुरुमतोऽनृच्छः[8]' इतिविहित-स्याऽऽमोऽनित्यत्वाभावेनाऽत्र प्रयोगेऽनेना[9]ऽऽमो दुर्वारतया नाऽस्य प्रयोगस्य सधुत्वं सिद्ध्येत् ।



1. वा. व्या. व्या. म. भा. 3/1/3/35, तथा वै. सि. कौ. भ्वादि प्र. पृ. 78 ।
2. 'दरिद्रातेरार्द्धधातुके लोपः' वा. व्या. म. भा. 6/4/3/114 ।
3. 'आत औ णलः' - अष्टा. 7/1/34 ।
4. 'आत औ णलः' - अष्टा. 7/1/34 ।
5. 'साम्प्रतिकाभावे भूपूर्वगतिः' प. शे. प. 77, पृ. 302, इतिपरिभाषयेत्यर्थः ।
6. 'ईह चेष्टायाम्' धा. पा. भ्वा. 632, इति ईह्धातोर्लिटि ते रूपमिदम् ।
7. 'समीहे भर्तुमानर्च, इतिभट्टिः ।
8. अष्टा. 3/1/36 ।
9. 'इजादेश्च गुरुमतोऽनृच्छः' - अष्टा. 3/1/36 ।

# सप्तमोऽध्यायः

## ज्ञापकाः सूत्रांशाः

### (ख) व्यञ्जनादिशब्दाः

### 'कंसे'ति शब्दः

'[1]अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'त्यत्र 'कंसे'तिशब्दः 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति[2]परिभाषाया ज्ञापकः[3]। यतोऽस्या अभावेऽत्रायं शब्दो

---

1. अष्टा. 8/3/46 ।
2. (क) पु. दे. ल. प. वृ. प. 70, पृ. 143 ।
   (ख) सी. दे. बृ. प. वृ. प. 15, पृ. 177 ।
   (ग) नी. दी. प. वृ. प. 20, पृ. 297 ।
   (घ) ह. भा. प. भास्क. प. 15, पृ. 328 ।
   (ङ) भ. ना. प. शे. प. 23, पृ. 123 ।
   (च) शेषा. प. भास्क. प. 22, पृ. 404 ।
3. तथाहि–
   (क) ननु कमेरेव 'वृतृवदिहनिकमिभ्यः सः' इति से कृते कंस इति भवति, तत्र कमिग्रहणेनैव सिद्धत्वात्कंसग्रहणमनर्थकम् ? न, ज्ञापनार्थत्वात् । एतदनेन ज्ञाप्यते अस्तीदमपि दर्शनम् 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इतीत्याह जि. बु. न्या. 8/3/46 ।
   (ख) "कंसग्रहणमनर्थकम्, कमिग्रहणेनैव सिद्धत्वात्, कंसशब्दो हि - 'वृतृवदिहनिकमिभ्यः सः 'इतिकमेरेव व्युत्पाद्यते ? ज्ञापनार्थं तु, एतज् ज्ञापयति - उणादिषु नावश्यं व्युत्पत्तिकार्यं भवती"त्याह ह. मि. पदम. 8/4/46 ।
   (ग) "अतः कृकमिकंस.' (8/3/46) इत्यत्र सत्वविधौ कमिग्रहणं कृतम् । तेन 'कमेः सः' (उणादि 3/62) इतिअत्रापि कमेः - सग्रहणं कृत्वा उणादौ व्युत्पादितः कंसशब्दोऽपि गृहीत एव । अत्र पुनः कंसग्रहणाज् ज्ञापयति । अस्तीयं परिभाषा 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि'इतीत्याह पु. दे. ल. प. वृ. प. 70, पृ. 143 ।
   (घ) "अन्ये तु 'अतः कृकमि.' (8/3/46) इत्यत्र कमिग्रहणं कृत्वा कंसग्रहणादेतामाहु"-रित्याह सी. दे. बृ. प. वृ. प. 15 पृ. 177 ।
   (ङ) "अत्र च ज्ञापकम् - 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' (8/3/46) इतिसूत्रे कमिग्रहणात्पृथक्कंसग्रहणम् । अन्यथा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादेव कंसग्रहणस्यापि सिद्धत्वात् किं कंसग्रहणेनेति भाष्ये स्थित'मित्याह नी. दी. प. वृ. प. 20, पृ. 297 ।
   (च) " 'अतः कृकमि.' (8/3/46) इत्यत्र कंसग्रहणं ज्ञापकमिति केचि"दित्याह ह. भा. प. भास्क. प. 15, पृ. 328 ।
   (छ) "इदमेव ('अतः कृकमि.' इत्यत्र कंसग्रहणमेव) अस्या ज्ञापकमिति कैयटादयः" इत्याह भ. ना. प. शे. प. 23, पृ. 123 ।

व्यर्थः । यतः 'कमः[1] सः, इति कमेः[2] सप्रत्यये कंसशब्दस्य निष्पन्नतया कमिपरत्वेनैव '[3]अयस्कंसः' इत्यादौ सत्वसिद्धिः सुलभा । ज्ञापितायां चास्याम् 'अयस्कंस'इत्यत्र कमिग्रहणेन कंसग्रहणस्याभावात् तत्र विसर्गस्य सत्वार्थं कंसशब्दोऽत्र सूत्रे स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु '[4]जिव्रिरित्यत्रानया धातुत्वाभावात् [5]'र्वोरुपधा यादीर्घ इकः 'इति दीर्घाभावः । अस्या अभावे हि वकारान्तो धातुरितिकृत्वा अत्र इकोऽनेन दीर्घापऽऽत्तिर्दुर्वारा स्यात् ।

## 'कती'ति शब्दः

'[6]षट्कतिकतिपयचतुरां थु'गितिसूत्रे 'कती'तिशब्दः 'डत्यन्तस्यापि संख्याकार्यं भवतीति वचनस्य [7]ज्ञापकः।यतोऽस्य वचनस्याभावे, '[8]बहुगणे' तिसूत्र-प्रत्याख्याने च स ति सूत्रेऽस्मिन्नसौ शब्दोऽनुपपन्नः । तथाहि - [9]कतिथः' इत्यत्र थुगागमं विधातुमत्रायमुपात्तः । स चास्य वचनस्याभावेऽनुपपन्नः । कतिशब्दस्य संख्याग्रहणेनाग्रहणे [10]तस्माड्डटोऽऽप्राप्त्या संख्याया डतिपरे विधीयमानः थुगागमो हि नोपपद्यते । ज्ञापिते चास्मिन् वचने कतिशब्दस्यापि संख्याग्रहणेन ग्रहणात् डटः[11] सुलभतया तस्मिन्परे थुगाममो विधातुमत्र सूत्रे शब्दोऽयमुपपद्यते ।

---

(ज) " 'अंतः कृकमि. (8/3/46) इतिसूत्रे 'अयस्कंस' इत्यत्र सत्वार्थं क्रियमाणं कंसग्रहणमत्र ज्ञापकम् । उणादीनां व्युत्पत्तिपक्षे 'कमेः सः' (उणा. 3/62) इतिकमिधातोः सप्रत्यये कंसशब्दस्य निष्पन्नतया कमिपरत्वेनैव सत्वसिद्धेः कंसग्रहणं व्यर्थं स्या"दित्याह शेषा. प. भास्क. प. 22, पृ. 404 ।

1. उणा. सू. 3/62 ।
2. 'कमुकान्तौ' धा.पा.भ्वा. 443 ।
3. 'अयः + कंसः' - इतिच्छेदः ।
4. 'जॄष् वयोहानौ' धा.पा.दिवा. 1130, इतिजॄधातोः 'जीर्यतेः - क्रिन् रश्चवः' - उणा. सू. 5/727 इतिक्रिन्प्रत्यये 'ॠत इद्धातोः' - अष्टा. 7/1/100 इति ॠकारस्य इत्वे रपरत्वे रेफस्य च वत्वे स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. अष्टा. 8/2/76 ।
6. अष्टा. 5/2/51 ।
7. तथाहि –
   (क) "वतोरेव ज्ञापकं स्यात् । नेत्याह । योगापेक्षं ज्ञापक"मितिग्रन्थेन ज्ञापकत्वमत्र-वचनेऽस्य सूचयति पत.व्या.म.भा. 1/1/5/22 ।
   (ख) "वतोरिड्वा' (सू. 5/1/23) इत्याह श्रीना. ज्ञा. सं. 1, पृ. 137 ।
8. 'बहुगणवतुडतिसंख्या' - अष्टा. 1/1/23 ।
9. 'कतीनां पूरण इत्यर्थे 'तस्यपूरणे डट्' - अष्टा. 5/2/48, इति डति प्रत्यये 'षट्कतिकतिपय- चुतुरांथुक्'-अष्टा. 5/2/51, इति थुगागमे अनुबन्धानां लोपेषु कृतेषु तद्धितान्त- प्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
10. 'तस्यपूरणे डट्' - अष्टा. 5/2/4} ।
11. 'तस्यपूरणे डट्' - अष्टा. 5/2/48 ।

ज्ञापितस्यास्य वचनस्य फलं तु '[1]संख्यासंज्ञाया अकरणजन्यं लाघवम् । यतः 'अर्धमात्रालाघवेन[2]पुत्रोत्सवं मन्यन्ते वैयाकरणाः' ।

## 'कतिपये'ति शब्दः

[3]'षट्कतिकतिपयचतुरां थु'गितिसूत्रे 'कतिपये'तिशब्दः 'कतिपयशब्दात् डट्-प्रत्ययो भवती'तिवचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रासौ शब्दोऽनुपपन्नः । तथाहि – लोके संख्यात्वेनायं शब्दो न प्रसिद्धः, नापि शास्त्रीया संख्यासंज्ञास्य विहितेतिकतिपयशब्दाड्डटोऽभावाड्डटि परतः '[5]कतिपयथः 'इत्यत्र थुगागमं विधातुमत्र सूत्रे समुपात्तोऽयं वचनस्यास्याभावेऽनुपपन्नः । ज्ञापिते चास्मिन् वचनेऽस्माड् डटः सुलभतयात्र सूत्रेऽयमुपपद्यते । ज्ञापितस्यास्य वचनस्य फलं 'कतिपयथः' इत्यस्य साधुत्वमेव ।

## 'कर्मे'ति शब्दाभावः

'[6]प्रेस्त्रोऽयज्ञे'त्यत्र 'ये[7]यज्ञकर्मणी'तिसूत्रवत् 'कर्मे'तिशब्दाभावः '[8]अभिधान-लक्षणाः कृत्तद्धितसमासाः' इतिपरिभाषाया[9]ज्ञापकः । यतोऽस्या अभावेऽत्र

---

1. 'बहुगणवतुडतिसंख्या' - अष्टा. 1/1/23 ।
2. भ.ना.प.शे.प. 134, पृ. 366 ।
3. अष्टा. 5/2/51 ।
4. तथाहि –
   (क) "कतिपयशब्दो न संख्या । तस्मादस्मादेव ज्ञापकाद् डट्प्रत्ययो विज्ञायते"इत्याह जया.का. 5/2/51 ।
   (ख) "यदेतड्डटि परतः कतिपयशब्दस्य थुग्विधानं तत एव ज्ञापकाड् डट्प्रत्ययोऽस्य भवतीत्यवसीयते" इत्याह जि. बु.न्या. 5/2/51 ।
   (ग) "कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट्" -इत्याह भ.दी.वै.सि.कौ. मत्वर्थीयप्र.पृ. 736 ।
5. कतिपयशब्दाड्डटि थुगागमे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. अष्टा. 3/3/32 । "स्तृञ्आच्छादने' - अस्माद्धातोः प्रशब्दे उपपदे घञ्प्रत्ययो भवति, न चेद् यज्ञविषयः प्रयोगो भवती'तिसूत्रार्थः । 'शङ्खप्रस्तारः' इत्युदाहरणम् । 'बर्हिष्प्रस्तरः' इति च प्रत्युदाहरणम् का. 3/3/32 ।
7. अष्टा. 8/2/88 । "'ये' इत्येतस्य यज्ञकर्मणिप्लुतोभवती"त्यर्थः । 'ये-३ यजामहे' इत्युदाहरणम्, 'ये यजामह इतिपञ्चाक्षरम्' इति च प्रत्युदाहरणम्, का. 8/2/88 ।
8. व्याडिः प. सू.प. 72, "ी. 31 ।
9. तथाहि– "अभिधानं दृष्ट्वा कृत्तद्धितसमासानां प्रयोगो भवति। कथं ज्ञायते । यदयं 'प्रेस्त्रोऽयज्ञे' (3/3/32) इतिकर्मग्रहणं न करोति । कथं कृत्वा ज्ञापकम् । अत्र कर्मग्रहणं कर्तव्यम् । प्रस्त्रोऽयज्ञकर्मणीति । यथान्यत्र 'येयज्ञकर्मणि (8/2/88) इति ब्रवीति । एतदाचार्यः पश्यति यत्र नाभिधानं तत्र कृत्प्रत्यायानाम् उत्पत्ति न भवति । तेनासत्यपि कर्मग्रहणेअयज्ञज्ञकर्मणोत्र घञ्भवति । तस्मात् कर्मग्रहणं न क्रियते । किमेतस्या ज्ञापने प्रयोजनम् । यत्राभिधानमात्रोच्यते तत्रेयं परिभाषा वक्तव्या न भवति - इत्याह व्याडिः प.सू.प. 72, पृ. 31 ।

कर्मेतिशब्दोपादानमावश्यकम् । ज्ञापितायां चास्यां 'कर्मे'तिशब्दाभावोऽत्रोपपद्यते । ज्ञापिताया अस्याः फलन्तु यत्राभिधानमाश्रीयतें तत्रेयं परिभाषा कर्तव्या न भवतीति ।

## 'कलापी'तिशब्दः

'[1]कलापिवैशम्पायनान्तेवासिभ्यश्चे'त्यत्र 'कलापी'तिशब्दः 'अन्तेवासिशब्देनात्र साक्षादन्तेवासिन एव ग्रहणं न त्वन्तेवास्यन्तेवासिनः' इति वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याभावेऽत्र 'कलापी'तिशब्दो व्यर्थः । तथाहि - कलाप्यन्तेवासिभ्यः वैशम्पायनान्तेवासिभ्यश्च तृतीयान्तेभ्यःतेन प्रोक्तमधीयते इत्यर्थे णिनिप्रत्ययविधानाय सूत्रमिदमारब्धम् । कलापिनः [3]शिष्याश्चत्वारः, वैशम्पायनशिष्या [4]नव । तत्र हरिद्रुः - कलापिनः शिष्यः, तेन प्रोक्तमधीयते इत्यर्थे ततो णिनिप्रत्यये हारिद्रविणः[5]

---

1. अष्टा. 4/3/104 ।
2. तथाहि –
   (क) "यदयं कलापिखाडायनग्रहणं करोति तज्ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति । कथं कृत्वा ज्ञापकम् । वैशम्पायनान्तेवासी कठः । कठान्तेवासी साडायनः । वैशम्पा यनान्तेवासी कलापी ।यद्यन्तेवास्यन्तेवासिभ्योऽपि स्यात् कलापिखाण्डायनग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो - नान्तेवास्यन्तेवासिभ्यो भवतीति - ततः कलापिखाडायनग्रहणं करोती"त्याह पत. व्या.म.भा. 4/3/1/104 ।
   (ख) "प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः । कुतः ? कलापि - खाण्डायनग्रहणात् ।तथाहि-वैशम्पायनान्तेवासी कलापी,तदन्तेवासिनो वैशम्पायनान्तेवासिन एव भवन्ति किं कलापिग्रहणेन ? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी खाण्डायनंस्तस्य किं शौनकादिषु पाठेन ? तदेतत्प्रत्यक्षकारिग्रहणस्य लिङ्ग"मित्याह जया.का. 4/3/104 ।
   (ग) "वैशम्पायनस्य कलाप्यन्तेवासी, तस्य येऽन्तेवासिनस्ते वैशम्पायनान्तेवासिनो भवन्त्येव । यदि तत्र ये व्यवहितास्तेऽप्यन्तेवासिनो गृह्येरन् कलापिग्रहणमनर्थकं स्यात्; 'वैशम्पायनान्तेवासिभ्यः 'इत्येवं प्रब्रूयात् । तथा वैशम्पायनान्तेवासी कठः, ततो वैशम्पायनान्तेवासित्वादनेनैव सूत्रेण सिद्धे शैनकादिषु खाण्डायनशब्दस्य पाठो निष्फल एव स्यात् । तस्मादिहापि कलापिग्रहणं शौनकादिषु खाण्डायनशब्दस्य पाठ एतदुभयमपि साक्षात्कारिग्रहणस्य लिङ्गं ज्ञापक"मित्याह ह.मि.पदम. 4/3/104 ।
   (घ) "कलापिवैशम्पायना - (सू.4/3/104) कलापिखाण्डायनग्रहणात् ज्ञापकात् नान्तेवास्यन्तेवासिभ्यो भवती"त्याह एन्.एस्.रामा.ज्ञा.सं.परि. 1, पृ. 168 ।
3. तत्र "कलाप्यन्तेवासिनश्चत्वारः - हरिद्रुः, छगली, तुम्बुरुः उलप इती"त्याह जया. का 4/3/104, तथा 'हरिद्रुः, छगली, तुम्बुरुः, उलप इति चत्वारः कलापिशिष्या इत्याह वा. दी. बा. मनो. शैषिक प्र. पृ. 664 ।
4. 'वैशम्पायनान्तेवासिनो नव - आलम्बि, पलङ्ग, कमल, ऋचाभ, आरुणि, ताण्ड्य, श्यामायन, कठ, कलापी - इती"त्याह जया. का. 4/3/104, - तथा "आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्डयः, श्यामायनः, कठः, कलापी - इति नव वैशम्पायनशिष्याः" इत्याह वा. दी. बा. मनो. शैषिक प्र. पृ. 664 ।
5. अत्र त्र - 'ओर्गुणः' - अष्टा. 6/4/146 इतिगुणः, अवादेशः, तद्धितेष्वचामादेः' - अष्टा. 7/2/117, इति आद्यचो वृद्धिः, हारिद्रविन्शब्दादध्येत्रणः 'प्रोक्ताल्लुक्' - अष्टा. 4/2/64, इति लुगपि भवति । अत्र - अनलम्बिन्शब्दात् अध्येत्रणः 'प्रोक्ताल्लुक्' - अष्टा. 4/2/64, इतिलुगपि भवति ।

तथा - 'आलम्बिः' वैशम्पायनस्य शिष्यः, तेन प्रोक्तमधीयते इत्यर्थे ततो णिनिप्रत्यये 'आलम्बिनः, - इत्यादीनि चास्य सूत्रस्योदाहरणानि सन्ति । अस्य वचनस्य अभावे हि लोके शिष्यशिष्येऽपि शिष्य इति व्यवहारदर्शनाद् वैशम्पायन - शिष्य - कलापि - शिष्यस्य हरिद्रोरपि वैशम्पायनान्तेवासित्वेनैव णिनिः प्रत्ययः सुलभ इति सूत्रेऽस्मिन्कलापी-'तिशब्दो व्यर्थः । ज्ञापिते चास्मिन्वचने वैशम्पायन - शिष्य - कलापि-शिष्यस्य हरिद्रोस्तदन्येषां च त्रयाणां वैशम्पायनान्तेवासित्वेन ग्रहीतुमशक्यतया कलापिशिष्येभ्यो हरिद्रुप्रभृतिभ्यस्तेन प्रोक्तमधीयते इत्यर्थे णिनिप्रत्ययविधानायात्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु वैशम्पायनान्तेवास्यन्तेवासिभ्यः कलाप्यन्तेवास्यन्तेवासिभ्यश्य तेन प्रोक्तमधीयत इत्यर्थे णिनिप्रत्ययाभावः ।

## 'कात्पूर्वे'तिशब्दः

'सुट्[1]कात्पूर्व'इत्यत्र 'कात्पूर्वे'तिशब्दः 'सुडभक्त'इतिवचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – 'संस्कर्ता[3]' '[4]संस्कर्तुम्' '[5]संस्कर्तव्य'-

---

1. अष्टा. 6/1/135।
2. तथाहि –
   (क) "कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम् । तथाहि - संस्कृषीष्ट, संस्क्रियते इतिसंयोगादिलक्षणाविड्गुणौ न भवतः" - इत्याह वाम. का. 6/1/135 ।
   (ख) "सुट्कात्पूर्व (6/1/135) इत्यत्र कात्पूर्वग्रहणं सुटोऽभक्तत्वं ज्ञापयति । तेन संस्कृषीष्ट संस्क्रियते इतिगुणोर्त्तिसंयोगाद्योरिति - (7/4/29) ऋतश्चसंयोगादेरिति (7/4/10) संयोगादिलक्षणौइड्गुणौ न भवतः" इत्याह पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे . पृ. 83 ।
3. 'संपूर्वकात्' डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोर्लुटि तिपि तासिप्रत्यये तेर्डाऽऽदेशे डोरातोलोपे धातोः ऋकारस्य गुणे रपरत्वे सम् + कर्ता इतिस्थिते 'सम्पर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/137, इतिकात्पूर्वं सुटि 'सम् +.स्कर्ता' इत्यवस्थायां 'समोवालोपमेके' - इतिभाष्यवचेनन समोमकारस्य लोपपक्षे 'अनुनासिकात्परोऽनुस्वारः' - अष्टा. 8/3/4, इत्यनुसाराऽऽगमे रूपमिदम् । संपूर्वकात् तृचि वा रूपमिदम् ।
4. संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' - अष्टा. 3/4/10, इतितुमुन्प्रत्यये ऋकारगुणे रपरत्वे- 'सम्पर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/37, इति कृञः सुटि 'सम् + स्कर्तुम्' इत्यवस्थायां समोमकारस्य 'समोवा लोपमेके'इतिभाष्यवचनाल्लोपे 'अनुनासिकात्परोऽनुस्वारः' - अष्टा. 8/3/4, इत्यनुस्वाराऽऽगमे कृदन्त - प्रातिपदिकादुत्पन्नाया विभक्तेः तुमुनो मान्तत्वेन 'कृन्मेजन्तः' अष्टा. 1/1/39, इत्यव्यत्वात् 'अव्ययादाप्सुपः' - अष्टा. 2/2/82, इत्यनेन लुकि रूपमिदम् ।
5. संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोः 'तव्यत्तव्यानीयरः' - अष्टा. 3/2/96, इतितव्यति तव्ये वा प्रत्यये ऋकारस्य गुणेरपरत्वे'सम् + कर्तव्य' - इत्यवस्थायां समोमकारस्य 'समोवा लोपमेके' इति भाष्यवचनाल्लोपे 'अनुनासिकात्परोऽनुस्वारः' - अष्टा. 8/3/4, इत्यनुस्वाराऽऽगमे कृदन्तप्रातिपदिकात्सौ सोरमि रूपमिदम् ।

मित्यादौ 'सम्पर्युपेभ्यः[1] करोतौ' - [2]इत्यादिसूत्रैर्विहितस्य सुटः ककारात्पूर्वं विधातुमारब्धे "इत उत्तरं यद्वक्ष्यामस्तत्र 'सुट्' इति, 'कात्पूर्वः'- इतिचैतदधिकृतं वेदितव्य" - मित्यर्थकेऽस्मिन्नधिकारसूत्रे शब्दोऽयमुपन्नः । अस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । सुडयमादिलिङ्गः, करोतिश्च ककाराऽऽदिरित्यन्तरेणापि 'कात्पूर्व'- इतिशब्दम् '[3]आद्यन्तौटकिता'वित्यनेनैव हि 'संस्कर्ते'त्यादौ कात्पूर्व एव सुट् सुलभः । ज्ञापिते चास्मिन् - वचनेऽनेन सुटोऽभक्ततया 'संस्कर्ते'त्यादौ कात्पूर्व एव सुड्यथा स्यादित्येतदर्थंशब्दोऽयमत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[4]संस्कृषीष्ट' –'[5]संस्क्रियते' - इत्यत्र क्रमशः संयोगाऽऽदिलक्षणस्य इटो[6] गुणस्य[7]चाभावः । अस्य वचनस्यासत्त्वे हि 'संस्कृषीष्ट' इत्यत्र कात्पूर्वः सुट् करोतेर्भक्तः स्यात्ततस्तस्य करोतिग्रहणेन ग्रहणात् कृञः संयोगादित्वं जातमिति 'ऋतश्च संयोगादे[8]'रिति इडापद्येत, तथा 'संस्क्रियते' - इत्यत्र करोति - भक्तत्वं सुटः स्यात्, ततश्च संयोगाऽऽदित्वं करोतेर्जातमिति '[9]गुणोऽर्त्तिसंयोगाद्यो'रितिगुण आपद्येत । सति चास्मिन्वचने सुटोऽभक्ततया संयोगाऽऽदित्वाऽभावान्नात्रेड्गुणयोरापत्ती भवतः । न चास्य वचनस्य स्वीकारे सुटोऽभक्ततया समःपदस्य सुटा व्यवहितत्वात् सुटश्चापदत्वात् 'संस्क्रियत' इत्यत्र [10]'तिङ्ङतिङः' - इति निघातो न सिद्ध्येदिति शङ्क्यम् । यतः 'स्वरविधौ व्यञ्जनमविद्यमानवदि'त्यनेन

1. अष्टा. 6/1/137 ।
2. अत्र आदिपदेन - 'अडभ्यास व्यवायेऽपि' - अष्टा. 6/1/136, 'समवाये च' - अष्टा. 6/1/38, 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु'-अष्टा. 6/1/139, 'किरतौ लवने'- अष्टा. 6/1/140, 'हिंसायां प्रतेश्च'-अष्टा. 6/1/141, 'अपाच्चतुष्पाच्छकुनिष्वालेखने' अष्टा. 6/1/142, इतीमानि ग्राह्याणि ।
3. अष्टा. 1/1/46 ।
4. संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोराशिषि लिङि ते 'संपर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/137, इति कृञः सुटि सीयुटि'उश्च' - अष्टा. 1/2/12, इतिलिङः कित्त्वाद्गुणाभावे 'सुट्तिथोः' - अष्टा. 3/4/107, इतितकारस्य सुडागमे सीयुटः सुटश्च सकारस्य षत्वे तकारस्य ष्टुत्वे समो मकारस्य 'समो वा लोपमेके' इतिभाष्यवचनाल्लोपे रूपमिदम् ।
5. संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः कर्मणि लटि ते यकि 'रिङ्शयग्लिङ्क्षु' - अष्टा. 7/4/28, इतिधातोः ऋकारस्यरिङादेशे 'संपर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/137, इति कृञः सुटि समो मकारस्य 'समो वा लोपमेके'इतिभाष्यवचनाल्लोपे टितष्टेरेत्वे रूपमिदम् ।
6. "ऋतश्च संयोगादेः" - अष्टा. 7/2/43 ।
7. गुणोऽर्त्तिसंयोगाद्योः' - अष्टा. 7/4/29 ।
8. अष्टा. 7/2/43 ।
9. अष्टा. 7/4/29 ।
10. अष्टा. 8/1/28 ।

व्यवधानमत्र नास्तीति निघातः सुलभः । नापि चैतद्वचनस्वीकारे '[1]सञ्चस्करतुः' '[2]सञ्चस्करु'रित्यत्र गुणः कथम् ? '[3]ऋतश्चसंयोगादेर्गुणः' 'इत्यनेन हि ऋकारान्तस्याङ्गस्य संयोगादेर्लिटि गुणो विधीयते, स चाभक्ते सुटि करोतेरसंयोगाऽऽदित्वान्न प्राप्नोतीति शङ्कनीयम् । यतोऽत्र द्विर्वचने कृते द्वौ करोती भवतः, तन्मध्ये च सुडस्तीति '[4]तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इत्यनयापरिभाषया सुटः करोतिग्रहणेन ग्रहणात् कृञोऽसंयोगादित्वं नास्ति । न च 'द्विः प्रयोगो द्विर्वचनम्' इत्यस्मिन्पक्षे उच्चारणमात्रंभिद्यते, धातुस्त्वेक एव, तत्कथमत्र द्वौ करोती भवत इत्यपि शङ्क्यम् । यतोऽत्र धातोरभिन्नत्वेऽप्युच्चारणभेदाद्भेदः 'अडभ्यासव्यवायेऽपी'ति [5]वचनादाश्रीयते । अभेदे हि व्यवाय एव नास्तीत्यभ्यासग्रहणमनर्थकं स्यात् । अथवा'[6]ॠतश्चसंयोगादेर्गुणः' इत्यत्र संयोगोपध - ग्रहणं [7]क्रियते; तथा सति संयोग उपधा यस्येति संयोगोपधत्वेन ऋकारं विशेष्य पश्चात्तेनाङ्गं विशेष्यते, ततश्च तदन्तस्याङ्गस्येत्यर्थो लभ्यते । 'सञ्चस्करतु'रित्यादौ यद्यपि करोतेरङ्गं संयोगोपधं न भवति तथापि ऋकारः संयोगोपधो भवतीति सुटोऽभक्त- तत्वेऽपि गुणः सुलभः । न च सुटोऽभक्तत्वे टित्करणस्य वैयर्थ्यं शङ्क्यम् । यतः '[8]सुट्स्तुस्वञ्जा'मित्यत्र विशेषणार्थं तच्चरितार्थम् । 'सुटस्तुस्वञ्जाम्' - इत्युच्यमाने हि 'सुरे' त्यादौ यः सुशब्दो यश्चोपसर्गस्तस्यापि ग्रहणं स्यात्, ततश्च 'सुरां परिचष्टे परिसुरयति[9]' 'अतिसुस्थिरः[10]' '[11]अतिसुस्थितः' - इत्यादावपि षत्वं प्रसज्येत ।

---

1. संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोर्लिटि तसि तसोऽतुसादेशे द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे चुत्वे 'सम् चकृ अतुस्' - इत्यवस्थायाम् 'अडभ्यासव्यवायेऽपि'-अष्टा. 6/1/136, इतिसुडागमे सम् चस् कृ अतुस्' - इत्यवस्थायाम् - ऋतश्च संयोगादेर्गुणः - अष्टा. 7/4/10, इति द्वित्वोत्तरखण्डस्थस्य ऋकारस्य गुणे रपरत्वे मकारस्यानुस्वारे परसवर्णे अतुसः सकारस्य रुत्वे विसर्गे च रूपमिदम् ।
2. 'संपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोर्लिटि झौ झेरुसि 'सञ्चस्करतुः' - इतिवद्रूपमिदम् ।
3. अष्टा. 7/4/10 ।
4. प. शे. प. 90, पृ. 324 ।
5. अष्टा. 6/1/136 ।
6. अष्टा. 7/4/10 ।
7. तथाहि–
   (क) "संयोगोपधग्रहणं च 'ऋतश्च संयोगादेर्गुणः' - इत्यत्र कर्तव्य"मित्याह वाम. का. 6/1/135 ।
   (ख) संचस्करतुरित्यत्र च गुणार्थं संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यमिति (7/4/10 वा) यत्नः कृतः "-इत्याह पु. दे. ज्ञा. समु. एकविंशे एकाच्पादे पृ. 83 ।
8. 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' - अष्टा. 8/3/70 ।
9. परिसुराशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' - ग. सू. वै. सि. कौ. चुरा. प्र. पृ. 238, इति णिचि इष्ठवद्भावाट्टिलोपे ण्यन्ताल्लटि तिपि शपि णेरिकारगुणेऽयादेशे रूपमिदम् ।
10. 'अतिसु' - इत्युपसर्गद्वयपूर्वकात् 'ष्ठागतिनिवृत्तौ' धा. पा. भ्वा. 928, इतिस्थाधातोः 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' उणा. सू. 53, इतिनिपातनात् किरच्प्रत्यये

ज्ञापकोऽयं वृत्तिकार - ज्ञापकसमुच्चयकारयोरेव[1]सम्मतः, वार्तिककारभाष्यकारौ तु कात्पूर्व इतिशक्यमकर्तुमिति मन्वाते[2] । तथ्यमिदं हरदत्तमिश्रेण स्फुटमुपपादितम्[3] । भट्टोजिदीक्षितोऽपि 'कात्पूर्वः' - इत्यस्य प्रत्याख्यानं[4]निरूपयति । [5]सुटि

---

'आतो लोप इटि च' - अष्टा. 6/4/34, इतिधातोराकास्य लोपे निपातनाट्टिलोपे वा कृदन्तप्रातिपदिकात् सौ सकारस्य रुत्वे विसर्गे च रूपमिदम् ।

11. 'अतिसु' - इत्युपसर्गद्वयपूर्वकात्स्थाधातोर्भावे क्तप्रत्यये 'द्यति स्यति मा स्थामित्तिकिति' - अष्टा. 7/4/40, इतिधातोरिकारस्य इत्वे कृदन्तप्रातिपदिकात् सौ सकारस्य रुत्वे विसर्गे च रूपमिदम् ।

1. द्र. का. 6/1/135, तथा ज्ञा. समु. एकविंशे एकाच्पादे पृ. 83 ।
2. द्र. व्या. म. भा. 6/1/5/135 ।
3. तथाहि–"संचस्कारेत्यादावभ्यासे सञ्जाते साभ्यास्य करोतित्वाच्चात्पूर्वः सुट् स्यात्, माभूच्चात् पूर्वः, कात्पूर्व एव यथा स्यादित्येवमर्थं कात्पूर्वग्रहणमिति ? तन्न, अत्र हि लिटिद्विर्वचनं च प्राप्नोति, सुट् च, तत्र द्विर्वचनमकृते सुटि कृशब्दस्य प्राप्नोति, कृते तु स्कृशब्दस्य । सुडपि कृते द्विर्वचने चकृशब्दस्य प्राप्नोति, अकृते तु कृशब्दस्येत्युभयोरनित्ययोः परत्वात्सुटि कृते तस्य धातुग्रहणेन ग्रहणात्सहैव तेन द्विर्वचने 'शर्पूर्वाः खयः' इति खयः शेषे - संचस्कारेतिसिद्धम् । न च साभ्यासस्याकृतः सुडिति पुनः सुट्प्रसङ्गः, अस्मिन्नेव प्रयोगे लक्षणस्य प्रवृत्तत्वात् । ननु 'पूर्वंधातुः साधनेन युज्यते' इतिदर्शने पूर्वं साधनवाचिनि लकारे तदाश्रये च द्विर्वचने एकपदाश्रयत्वादन्तरङ्गे कृते पदद्वयाश्रयत्वाद्बहिरङ्गः सुट् पश्चाद्भवन्चात्पूर्वः स्यात्, विकरणान्ताङ्गभक्तो ह्यडागमस्तमेव न व्यवदध्यात्, करोतिंतुव्यवदधात्येव, इह च समस्कृत, संस्कृथाइति यत्र करोतिरेवाङ्गं तत्राटः कृग्रहणेन ग्रहणादट एव पूर्वः सुट्स्यात्, अतोऽडभ्यासयोरपि कृतयोः कात्पूर्वः सुड्यथास्यादितिकर्तव्यंकात्पूर्वग्रहणम् ? न कर्तव्यम्; 'अडभ्यासव्यवायेऽपि, इत्येतस्मादेव निर्देशादेतत्सिद्धम् । नच तत्र करिष्यामीति कात्पूर्वग्रहणम्; कृतेऽप्यस्मिन्नसिद्धः । तथाहि – क्रियमाणमप्येतत् कालावधारणार्थं वा स्यात् करोतेस्तस्यामवस्थायां सुड्भवति यस्यामवस्थायांभवन्कात्पूर्वो भवतीति । करोत्यवधारणार्थं वा – तस्य करोतेः सीयुड् भवति यस्य भवन् कात्पूर्वो भवतीति । तत्र पूर्वस्मिन्पक्षे यद्यप्यन्तरङ्गे अप्यडद्विर्वचने वाधित्वा कात्पूर्वग्रहणसामर्थ्यात् पूर्वंसुड्भवति, पश्चात्तयोः कृतयोरिष्टं सिद्ध्यति ! द्वितीयेतु प्रत्युताभ्यासवतोर्निवृत्त्यर्थमेव कात्पूर्वग्रहणस्यात् नहि तद्वतोर्भवन् कात्पूर्वः कृतः स्यात् । स्यादेतत् - न करोत्यवधारणोर्थं कात्पूर्वग्रहणम्, किंतर्हि ? अपकृष्यविधिः, करोतेः सर्वत्रसुड्भवति, स तु प्रदेशान्तरे प्राप्तः कात्पूर्वः कर्तव्य इति ? एवमपि समस्कृत, समस्कृथाइतिसिद्ध्यति, अटः प्राक्प्राप्नुवन्कात्पूर्वो नीयत इति, समस्करोदित्यादौ त्वसिद्धिरेव, कथम् ? प्रदेशान्तरे प्राप्तस्य विधिरपकृष्टोभवति, नचात्र सुट्प्राप्तोऽटा व्यवधानादिति कथमपकृष्यतिविधिर्भवेत् । कथं च संचस्कारेत्यादावपि द्विःप्रयोगे द्विर्वचने उच्चारणभेदाच्छब्दभेद इति द्वौ करोती, तत्र यः समोऽनन्तरो न तस्य ककारः, यस्य च ककारो नासौ समोऽनन्तरः - इति अप्राप्तत्वान्न कात्पूर्वं विधीयेत ? स्थाने द्विर्वचने च स्थानिवद्भावादेक एव करोतिः, स त्वाऽव्यवहित इतिकात्पूर्वः प्राप्तः कात्पूर्वः कृत इति न कश्चिद्दोषः । तदेवं धातुः पूर्वं साधनेन युज्यते, ततश्च क्रियमाणेऽपि कात्पूर्वग्रहणे नैवेष्टं सिद्ध्यतीति 'अडभ्यासव्यवायेऽपि'इत्येतदेव कर्तव्यम् । कात्पूर्वग्रहणं तु शक्यमकर्तुमिति वार्तिककारस्य पक्षः ।

भाष्यकारस्तु मेने उभयं न कर्तव्यम् । पूर्वं धातुरुपसर्गेण युज्यते, ततश्चानुत्पन्न एव प्रत्यये संकृ इतिस्थिते सुटि कृते लकारः, ततस्तन्निबन्धनावडभ्यासौ - ससुट्कस्यैव भविष्यतः ।

कृते 'सुकृ' - इत्यस्य[1]द्वित्वे [2]उरदत्वे रपरत्वे[3] 'शर्पूर्वाः खयः[4] इति रेफसकारयोर्निवृत्तौ [5]अभ्यासचुत्वे 'संचस्कारे'ति रूपसिद्धेः '[6]कात्पूर्वः' इति '[7]अडभ्यासव्यवायेऽपी'ति च न कर्तव्यम्, एवं '[8]समस्करो'दित्यत्रापि [9]विकरणान्ताङ्ग-[10]भक्ताडा[11]गमापेक्षयाऽन्तरङ्ग[12]- त्वात् प्रथमं सुड्[13]भविष्यतीति 'अड्व्यवायेऽपी'-

---

ननु च लब्धस्वरूपा क्रिया विशेषणमाकाङ्क्षति, तल्लाभश्च साधनान्तर इतिपूर्वं धातुः साधनेन युज्यते, लब्धस्वरूपेति, कोऽर्थः ? किं प्रतिपन्नस्वरूपा, उत निष्पन्नस्वरूपा ? निष्पत्तिस्तावद्विशेषणसम्बन्धेनोपयुज्यते, प्रतिपत्तिस्तु विशेषणसम्बन्धात्प्रागपि क्रियायाः सम्भवति । विशिष्टा च क्रिया साधनेन युज्यते, तथाहि – तिष्ठतीति गतिनिवृत्तेः साधनसंबन्धः प्रतीयते, प्रतिष्ठत इतिगतेः गच्छतीति गमनस्य आगच्छतीत्यागमनस्य, करोतीतिव्यापारमात्रस्य, संस्करोतीतिभूषणस्य । विशिष्टा च क्रियोपसर्गस्बन्धे सत्येव प्रतीयत इतिद्योतकत्वेन वाचकत्वेन वापूर्वमुपसर्गसम्बन्धोऽपेक्षणीयः । अवश्यं चैतदेवं विज्ञेयम्, अन्यथा भवतेरकर्मकत्वाद्भावे लकार उत्पन्ने पश्चादनुशब्देन सम्बन्धेन अनुभूयते कम्बलो देवदत्तेनेति कथं कर्मणि लकारः स्यात् ? अतः 'पूर्वं' - धातुरुपसर्गेण युज्यते' इत्येतदेव सम्प्रतिपन्नम् । एवं च पूर्वोक्तन्यासेन सिद्धमिष्टमिति नार्थः कात्पूर्वग्रहणेन, नापि 'अडभ्यासव्यवायेऽपि'इत्यनेन । यदि पूर्वं धातुरुपसर्गेण युज्यते, अध्येता, प्रत्येता प्रत्यायक इत्यादौ पूर्वं धातूपसर्गयोरेवादेशे तस्य धातुं प्रत्यादिवत्त्वात्तत एव प्रत्ययोत्पत्तावनिष्टं प्राप्नोति ? नैष दोषः, 'नेन्द्रस्य परस्य' - इत्यत्र ज्ञापितमेतत् - पूर्वोत्तरपदयोस्तावत्कार्यं भवति, पश्चात्स्वरसन्धिरिति । प्रत्यय इति वा निर्देशोऽस्यार्थस्य ज्ञापक" - इत्याह ह. मि. पदम. 6/1/135 ।

4. तथाहि - "सुट्कात्पूर्वः । 6/1/135 । 'अडभ्यासव्यवायेऽपी'त्युक्तम् । संचस्कार । 'कात्पूर्व' - इत्यादि भाष्ये प्रत्याख्यातम् । तथाहि - पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात् सुट् । ततो द्वित्वम् । एवञ्च - 'ऋतश्च संयोगादेर्गुणः' । संचस्करतुः' " - इत्याह भ. दी. वै. सि. कौ. तना. प्र. पृ. 214-215 ।
5. 'अडभ्यासव्यवायेऽपि' - अष्टा. 6/1/136 ।
1. 'लिटिधातोरनभ्यासस्य' - अष्टा. 6/1/8 ।
2. 'उरत्' - अष्टा. 7/4/66 ।
3. 'उरण्रपरः' - अष्टा. 1/1/51 ।
4. अष्टा. 7/4/61 ।
5. 'कुहोश्चुः' - अष्टा. 7/4/62 ।
6. 'सुट्कात्पूर्वः' - अष्टा. 6/1/135, इतिसूत्रमित्यर्थः, 'सु'डित्यंशस्तु 'संपम्पर्युपेभ्यः करो तौ भूषणे' - अष्टा. 6/1/137, इत्यत्रैव पाठ्य इत्याशयः ।
7. अष्टा. 6/1/136 ।
8. सम्पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोर्लङिअडागमे तिपि उविकरणे सुटि रूपम् ।
9. 'तनादिकृञ्भ्यः उः' - अष्टा. 3/1/79 ।
10. 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' - अष्टा. 1/4/13 ।
11. 'लुङ् - लङ् - लृङ्क्ष्वडुदात्तः' - अष्टा. 6/4/71 ।
12. 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' - प. शे. प. 39, पृ. 170, 'असिद्धं बहिरङ्गमन्तरङ्गे' - प. शे. प. 51, पृ. 184, इतिबलादित्यर्थः ।
13. 'सम्पर्युपेभ्यः करोतौ भूषणे' - अष्टा. 6/1/137 ।

त्यंशो न कर्तव्यः, पूर्वं धातुरुपसर्गेण युज्यत[1]' इत्याश्रयणाच्च अनङ्गत्वात् सुटि कृते 'संस्कृ'इत्यस्माल्लिटि तसि तसोऽतुसि[2] 'ऋतश्च[3]संयोगादेर्गुणः' इतिगुणे 'संचस्करतु'-रितिसिद्ध्यति, 'पूर्वंधातुः साधनेन युज्यते[4]' इत्याश्रयणे तु 'चक्रतु'रिति परिनिष्ठितस्य समित्युपसर्गयोगात्संयोगाऽऽदित्वाभावाद्गुणो[5] न सिद्ध्येदितिभाष्यानु-यायिदीक्षिताऽऽशयः । 'यथोत्तरं मुनीनां [6]प्रामाण्यमित्युक्तत्वान्नास्य शब्दस्योक्त-वचनज्ञापकत्वं युक्तमिति मन्ये ।

## 'कारक'इतिशब्दः

'[7]अकर्तरि च कारके संज्ञाया'मित्यत्र 'कारक' इतिशब्दः "[8]नञिवयुक्तमन्यसदृशा-धिकरणे तथा ह्यर्थगति'रितिपरिभाषाऽनित्ये"तिवचनस्य [9]ज्ञापकः । यतोऽस्य वचनस्याभावे 'नञिवयुक्त'मितिपरिभाषया कर्तृसादृश्यादेव कारकप्रतीतेः सुलभतयात्रायंशब्दो व्यर्थः । ज्ञापिते चास्मिन्वचनेऽत्र प्रसज्यप्रतिषेधो नञर्थोऽस्तीति वक्तुं शक्यतयाऽकर्तरीत्यनेन कर्तृभिन्न इत्यर्थलाभेऽपि कारक इत्यर्थाला-भात्तदर्थलाभार्थमयंशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अपुनरुक्तम्' 'अपुनर्ज्ञेय'मित्यादौ नञः प्रसज्यप्रतिषेधार्थे प्रयोगस्य साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि तदर्थेऽस्य प्रयोगस्य साधुता न सिद्ध्येत् । यतोऽत्रापि नञिवयुमितिन्यायस्य प्रवृत्तिर्दुर्वारा स्यात् । 'ओषधेश्च विभक्तावप्रथमाया'मित्यत्र [10]विभक्ता'वितिशब्दोऽप्येतद्वचनस्य [11]ज्ञापकः । यतोऽस्य वचनस्याभावे

---

1. पश्चात्साधनेनेतिशेषः ।
2. 'परस्मैपदानां णलतुसुस्थलथुसुणल्वमाः' 3/4/82 ।
3. अष्टा. 7/4/10 ।
4. पश्चादुपसर्गेणेतिशेषः ।
5. 'ऋतश्चसंयोगादेर्गुणः' - अष्टा. 7/4/10 ।
6. भ. दी. वै. सि. कौ. अजन्तपुंलिङ्ग-प्र. पृ. 113 ।
7. अष्टा. 3/3/19 ।
8. (क) 'नञिवयुक्तमन्यसदृशाधिकरणं तथाह्यर्थः' व्याडिः प. सू. प. 54, पृ. 25 ।
   (ख) पु. दे. ल. प. वृ. प. 97 , पृ. 152 ।
   (ग) सी. दे. बृ. प. वृ. प. 31, पृ. 196 ।
   (घ) नी. दी. प. वृ. प. 41, पृ. 300 ।
   (ङ) ह. भा. प. भास्क. प. 31, पृ. 335 ।
   (च) भ. ना. प. शे. प. 75, पृ. 296 ।
   (छ) शेषा. प. भास्क. प. 63, पृ. 433 ।
9. तथाहि –
   (क) "प्रायिकत्वं चास्याः 'अकर्तरि च कारके.' (3/3/19) इतिनिर्देशेन ज्ञापितम् । नित्ये ह्येतस्मिन्नञ्युक्तकर्तृसादृश्यादेव कारकप्रतीतिः स्या"दित्याह पु. दे. ल. प. वृ. प. 97, पृ. 153 ।
10. अष्टा. 6/3/132 ।
11. तथाहि–

नञिवयुक्तन्यायस्य नित्यतयाऽत्र प्रथमायाः प्रतिषेधादन्य- विभक्तावित्यर्थलाभोऽस्य शब्दस्यासत्त्वेऽपि सुलभः। भट्टनागेशस्तु शब्दयोरनयोर्ज्ञापकत्वं नेति[1]मनुते।

जयादित्य - जिनेन्द्रबुद्धि - पुरुषोत्तमदेव - हरदत्तमिश्रास्तु 'अकर्तरिच[2]कारके-संज्ञाया'मित्यत्र 'कारक'इतिशब्दः'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती'तिवचनस्य ज्ञापक इत्याहुः[3]। यतोऽस्य वचनस्याभावेऽत्र 'नञिवयुक्तमन्यसदृशाधिकरणे

---

(क) "अनित्यत्वमस्याः 'ओषधेश्च विभक्तावप्रथमायाम्' (6/3/132) इतिविभक्तिग्रहणाद्-विज्ञायते। यदि हि सा नित्या स्यात्प्रथमायाः प्रतिषेधादन्यविभक्तावेव भविष्यतीति विभक्तिग्रहणं न कुर्यात्। कृतं च तज्ज्ञापयति - अनित्यैषा परिभाषे"त्याह पु. दे. ल. प. वृ. प. 97, पृ. 153।

(ख) " 'ओषधेश्च विभक्तावप्रथमायाम्' 'अकर्तरि च कारके'इति विभक्तिकारक-ग्रहणाभ्यांञिवयुक्तन्यायस्यानित्यत्वकल्पनाच्चे"त्याह भ. दी. प्रौ. मनो. अजन्तपुंलिङ्ग प्र. पृ. 199।

(ग) " 'ओषधेश्च विभक्तावप्रथमायाम्' (6/3/132) 'अकर्तरि च कारके संज्ञायाम्' (3/3/19) इत्यादौ विभक्तिकारकग्रहणाभ्यामस्या अनित्यत्वं ज्ञाप्यते" -इत्याह नी. दी. प. वृ. प. 41, पृ. 300।

1. तथाहि- "ओषधेश्च विभक्तावप्रथमायामित्यादौ विभक्तिग्रहणं ह्येतन्न्यायसिद्धार्थानुवाद एव। **एतेन** विभक्तावित्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः। अनित्यत्वे **भाष्यसम्मतफलाभावात्**। अतएव 'अकर्तरि च'इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमितिबोध्य"मित्याह भ. ना. प. शे. प. 74, पृ. 296।
2. अष्टा. 3/3/19।
3. तथाहि–

(क) "कारकग्रहणं पर्युदासे न कर्तव्यम्। तत् क्रियते 'प्रसज्यप्रतिषेधेऽपि समासोऽस्ती'ति ज्ञापनार्थम्–आदेच उपदेशेऽशिती"त्याह जया. का. 3/3/19।

(ख) "यदि तर्हि पर्युदास एवैष नञ्समासः स्यात् कारकग्रहणमनर्थकं स्यात्, विनापि हि तेन कारक एव प्रत्ययो लभ्यते, प्रसज्यप्रतिषेधे तु सति कारकग्रहणमर्थवद्भवति, नहि तत्र विनापि तेन कारके प्रत्ययो लभ्यते। इदञ्चानन्तरमेव प्रतिपादिम्। तस्मात् कारकग्रहणेन प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञाप्यते। तेन 'आदेच उपदेशेऽशिति' इत्यत्र प्रसज्यप्रतिषेधे समासो लभ्यते, ततश्च यदुक्तम्–'अनैमित्तिकमात्वं शिति प्रतिषेधः' इतितदुपपन्नंभवति। किंपुनः कारणं तत्र प्रसज्यप्रतिषेध आश्रीयते ? प्रागेव प्रत्ययोत्पत्तेरनिमित्तकआत्वेकृते सुग्लः सुम्लः इति 'आतश्चोपसर्गे'इति को यथा स्यात्। पर्युदासे तु तत्राश्रीयमाणे शितोऽन्यत्र तृजादौ प्रत्यये परभूत आत्वे नभवितव्यम्, ततश्च ग्लायति–प्रभृतिभ्य आकारान्तलक्षणः प्रत्ययो नस्यात्। ननुचाचार्यप्रवृत्तिर्ज्ञापयति– भवत्येजन्तेभ्य आकारान्तलक्षणः प्रत्ययइति, यदयं कबाधनार्थम् 'ह्वावामश्वच' इत्ययं शास्ति, तस्मादशीतीतिपर्युदासेऽप्याश्रीयमाणे ज्ञापकादेजन्तस्याकारलक्षणः प्रत्ययः सिद्ध्यत्येव ? नैतदस्ति, कर्मोपपदविषयमेवैतज्ज्ञापकं विज्ञायते। तस्मादशीतीत्यत्र-प्रसज्यप्रतिषेध एवाश्रयितुं युक्तः। तस्य चास्तित्वमिह कारकग्रहणेन ज्ञाप्यते"–इत्याह जि. बु. न्या. 3/3/19।

(ग) "नञिवयुक्तकर्तृसादृश्यादेव कारकसिद्धौ 'अकर्तरि च कारक'इत्यत्र (3/3/19) कारक-ग्रहणं प्रसज्यप्रतिषेधे नञः समासज्ञापनार्थम्। तेन 'आदेच उपदेशेऽशिती'ति (6/1/45) सिद्ध्यतीत्याह पु. दे. ज्ञा. समु. एकादशे बहुलपादे पृ. 73।

तथाह्यर्थगतिरितिपरिभाषया कारक इत्यस्य लाभः सुलभः । ज्ञापिते चास्मिनूवचने 'अकर्तरी'- त्यनेन कारक इत्यस्य लाभो न भवतीति तल्लाभायात्रायं शब्दः स्वांशे चरितार्थो भवति ।

ज्ञापितस्यास्य वचनस्य फलं तु '[1]सुग्लः'–'सुम्लः'[2]–इत्यत्र '[3]आतश्चोपसर्गे'' इतिकप्रत्ययस्य '[4]सुग्लानः' 'सुम्लानः'[5] इत्यादौ 'आतो[6]यु'जिति युचूप्रत्ययस्य 'सुम्ला'[7]–इत्यत्र स्त्रियाम्–'आतश्चोपसर्गे'[8]–इत्यङ्प्रत्ययस्य च सिद्धिः । प्रसज्यप्रतिषेधे ह्यात्वस्य शिति प्रतिषेधः क्रियते, न तु किञ्चिन्निमित्तमाश्रीयत इतितदनैमित्तिकंभवतीति प्रागेव प्रत्ययोत्पत्तेरात्वस्य प्रवृत्त्यात्र सर्वत्र आकारान्तलक्षणाः प्रत्ययाः सिद्ध्यन्ति । 'अशिती'त्यस्य पर्युदासत्वे तु शितोऽन्यदात्वनिमित्तमाश्रितं स्यात्, तथा सति यावदात्वस्य निमित्तं, न

---

(घ) ''पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिंस्तत्सदृशे कारक एव प्रतीतिर्भवति, यथा अब्राह्मण इति क्षत्रियादौ । तस्मात् पर्युदासे कारकग्रहणं कर्तव्यम् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां यञ्भवति, कर्तरि तु न भवत्येषोऽर्थो भवति । तत्र प्रथमे वाक्येऽर्थनिर्देशाभावाद् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इतिस्वार्थ एव स्यात् । ननु च विहितः स्वार्थे पूर्वेणैव ? नेत्याह, धात्वर्थस्य हि सिद्धतारख्येधर्मे घञादयो भवन्ती'त्युक्तम्, इह तु साध्यरूपे शुद्धे प्रकृत्यर्थे स्यात् । ननु च कर्तरि प्रतिषेधसामर्थ्यादनिर्दिष्टार्थोऽपिघञ् धात्वर्थसम्बन्धिनि कारक एव विज्ञास्यते ? नैतदस्ति, असति हि प्रतिषेधे 'कर्त्तरिकृत्'- इति–वचनान्नायमनिर्दिष्टार्थः स्यात् । अतः प्रसज्यप्रतिषेधार्थं कारकग्रहणम् । पर्युदासे तु न कर्तव्य''मित्याह ह. मि. पदम. 3/3/19 ।

1. सुपूर्वकात् 'ग्लैहर्षक्षये' धा. पा. भ्वा. 903, इतिग्लैधातोरैकारस्य 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यात्वेकृते 'सुग्ला'–इत्यस्मात् 'आतश्चोपसर्गे'–अष्टा. 3/1/136, इतिकप्रत्यये 'आतोलोपइटिच'–अष्टा. 6/4/64, इत्यातो लोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. सुपूर्वकात् 'म्लैहर्षक्षये' धा. पा. भ्वा. 904, इतिम्लैधातोरैकारस्य 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यात्वे कृते 'म्ला'–इत्यस्मात्–'आतश्चोपसर्गे'–अष्टा. 3/1/136, इतिकप्रत्यये 'आतोलोपइटिच'–अष्टा. 6/4/64, इत्यातो लोपे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
3. अष्टा. 3/1/136 ।
4. सुपूर्वकात् 'ग्लैहर्षक्षये' धा. पाः भ्वा. 903, इतिग्लैधातोरैकारस्य 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यात्वे 'सुग्ला'इत्यस्मात् 'आतोयुच्'–अष्टा. 3/3/128, इतियुचूप्रत्यये योः 'युवोरनाकौ'–अष्टा. 7/1/1, इत्यनाऽऽदेशे सवर्णदीर्घैकाऽऽदेशे च कृते विभक्तिकार्येषु कृतेषु रूपमिदम् ।
5. सुपूर्वकात् 'म्लैहर्षक्षये' धा. पा. भ्वा. 904, इति म्लैधातोरैकारस्य'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यात्वे 'सुम्ला'इत्यस्मात् 'आतोयुच्'–अष्टा. 3/3/128, इतियुच्प्रत्ये योः 'युवोरनाकौ'–अष्टा. 7/1/1, इत्यानाऽऽदेशे सवर्णदीर्घैकाऽऽदेशे च कृते विभक्तिकार्ये षुकृतेषु रूपमिदम् ।
6. अष्टा. 3/3/128 ।
7. सुपूर्वकात् 'म्लैहर्षक्षये' धा. पा. भ्वा. 904, इतिम्लैधातोरैकारस्य 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/145, इत्यात्वे 'सुम्ला'इत्यतः 'आतश्चोपसर्गे'–अष्टा. 3/3/106, इत्यङ् प्रत्यये 'आतोलोपइटिच'–अष्टा. 6/4/64, इत्यातो लोपे स्त्रियां टापि सवर्णदीर्घैकाऽऽदेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
8. अष्टा. 3/3/106 ।

भवति तावदात्वेन न भवितव्यमित्यनाकारान्तत्वात् 'सुग्ल'इत्यादौ [1]कादिप्रत्यया न सिद्ध्येयुः । न चात्र शितिप्रतिषेधे क्रियमाणे 'जग्ले[2]' 'मम्ले[3]' इत्यादीष्टप्रयोगा न सिद्ध्येयुः, 'लिटस्तझयोरेशिरेच्'[4] इत्येशादेशः शिद्भवती'ति अशीतीतिप्रतिषेधाद् एशि आत्वमत्र हि न प्राप्नोति, आत्वाभावे चात्र 'ग्लै+ए' इत्याद्यवस्थासु ऐकारस्याऽऽयादेशे कृते स्थानिवद्भावेन 'ग्लै' इत्यादीनां द्विर्वचनं स्यात्, तथा सति 'जग्लाय'इत्याद्यनिष्टरूपाण्यापद्येरन्निति शङ्क्यम् । यतोऽत्र शकार इद्यस्य सोयं शिदिति न बहुव्रीहिः किन्तु शकार एव इत् शिदितितत्पुरुषः, तथा सत्यल्ग्रहणमेवात्र भवतीति 'यस्मिन्विधि- [5]स्तदादावल्ग्रहणे' इतिपरिभाषया शिदादौ प्रत्यये प्रतिषेधेन भवितव्यमित्येशः शिदन्तत्वेन शिदादित्वाभावात्तस्मिन् परेऽशितीत्यात्त्वप्रतिषेधा-भावेनाऽऽ[6]त्वमत्र प्राप्नोति । न चैवं '[7]ग्लानीयम्' '[8]पानीयम्'–इत्यादौ अनीयरि[9] प्रत्यये कृते आत्त्वं[10] च प्राप्नोति, [11]आयादयश्च, तत्र परत्वादायादयः स्युरितिशङ्कनीयम् । यतः कृतेष्वप्यायाद्यादेशेषु [12]अलोऽन्यस्याऽऽत्वे सवर्णदीर्घै-काऽऽदेशे[13] च कृते 'ग्लानीय'मित्यादिप्रयोगाणां सिद्धिः सुलभा । अथात्राऽऽयादिषु कृतेषु नायमेजन्तः, अलाश्रयत्वाच्च स्थानिवद्भावोऽपि दुर्लभ इतिकथमात्त्वमित्य-पि[14]शङ्क्यम् । यतोऽत्रोपदेशगतमेजन्तत्वं गृह्यते न सम्प्रतितनमिति स्थानिवद्भावं

---

1. 'आतश्चोपसर्गे'–अष्टा. 3/1/136, 'आतोयुच्'–अष्टा. 3/3/128, 'आतश्चोपसर्गे'–अष्टा. 3/3/106, इत्येतैर्विहिताः क-यु-जङ्प्रत्यया इत्यर्थः ।
2. 'ग्लैहर्षक्षये'धा. पा. भ्वा. 903, इतिग्लैधातो र्भावे लिटि ते एशादेशे आत्वे द्वित्वादिकृतेषु आतोलोपे रूपमिदम् ।
3. 'म्लैहर्षक्षये' धा. पा. भ्वा. 904, इतिम्लैधातोर्भावे लिटि ते एशादेशे द्वित्वादिषु कृतेषु आतोलोपे रूपमिदम् ।
4. अष्टा. 3/4/81 ।
5. प. शे. प. 34, पृ. 156
6. 'आदेच उपदेशेऽशिति'–अष्टा. 6/1/45 ।
7. 'ग्लैहर्षक्षये' धा. पा. भ्वा. 903, इतिग्लैधातोः 'तव्यत्तव्यानीयरः'–अष्टा. 3/2/96, इति-अनीयर्प्रत्यये 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यैकारस्याऽऽत्वे सवर्णदीर्घैकाऽऽ-देशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
8. 'पै शोषणे' धा. पा. भ्वा. 920, इति पै धातोः 'तव्यत्तव्यानीयरः' अष्टा. 3/2/96, इतिअनीयर्प्रत्यये 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45, इत्यैकारस्याऽऽत्वे सवर्णदीर्घैका-ऽऽदेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
9. 'तव्यत्तव्यानीयरः'–अष्टा. 3/2/96 ।
10. 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45 ।
11. 'एचोऽयवायावः'–अष्टा. 6/1/78 ।
12. 'अलोऽन्त्यस्य'–अष्टा. 1/1/52, इतिपरिभाषयेतिशेषः ।
13. 'अकः सवर्णेदीर्घः'–अष्टा. 6/1/101 ।
14. 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45 ।

विनाप्याप्त्वं[1]सुलभम् । न चैवमपि '[2]जग्लतु'रित्यादौ [3]आत्वात्प्रागैकारस्याऽऽ[4]या-देशे यकारस्याऽऽत्वे[5] कृते जग्ला + आ + अतु'सितिस्थितेऽन्तरङ्गमप्या-कारयोरेकाऽऽदेशं[6] 'वार्णादाङ्गं[7]बलीय'इतिपरिभाषया बाधित्वा '[8]आतो लोप इटिचे'त्या तोलोपे नेष्टं रूपं स्यात्, पूर्वस्याऽऽकारस्य पुनर्लोपस्तु न संभवति, यकाराऽऽकार- लोपस्य पूर्वविधौ स्थानिवद्भावात्[9] 'असिद्धवदत्राभा[10]'-दित्यसिद्धत्वाच्चेतिशङ्क्यम् । यतः [11]समानाऽऽश्रये 'वार्णादाङ्गं बलीयः'–इतिप्रवर्तते, इह तु व्याश्रयत्वादन्तरङ्ग एकाऽऽदेशे सति पश्चादाल्लोप इति सिद्ध्यतीष्टं रूपम् ।

ज्ञापकोऽयं सूत्रकारसम्मत एव । यतो भाष्येऽत्र सूत्रे 'कारक'इतिशब्दः [12]प्रत्याख्यातः ।

## 'क्वी'ति शब्दः

'समः[13] समि' '[14]नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वा'वित्यत्र 'क्वी 'तिशब्दः

---

1. 'आदेचउपदेशेऽशिति'–अष्टा. 6/1/45 ।
2. 'ग्लैहर्षक्षये' धा. पा. भ्वा. 903, इतिग्लैधातोः कर्त्तरि लिटि तसि अतुसादेशे धातोरैकार-स्य आत्वे द्वित्वादिषु कृतेषु चुत्वे 'आतोलोपइटि च'–अष्टा. 6/4/64, इत्यातो लोपे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
3. 'आदेच.' अष्टा. 6/1/45 ।
4. 'एचोऽयवायावः–अष्टा. 6/1/78 ।
5. 'आदेच.'–अष्टा. 6/1/45 ।
6. 'अकः सवर्णेदीर्घः' अष्टा. 6/1/101 ।
7. 'वार्णादाङ्गं बलीयो भवति'–प. शे. प. 56, पृ. 238 ।
8. अष्टा. 6/4/64 ।
9. 'अचः परस्मिंन्पूर्वविधौ'–अष्टा. 1/1/57 ।
10. अष्टा. 6/4/22 ।
11. 'समानस्थानिताकत्वे'इत्यर्थः । तथाहि–"सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एवे"-त्याह भ. ना. प. शे. प. 56, पृ. 243, । अत्र–"धर्मिग्राहकमानादिति । समानकार्यित्वं धर्मः । परिभाषा धर्मी । तद्ग्राहकं बोधकं मानं प्रमाणम् । अभ्यासस्यावर्ण इतिसूत्रम्, तस्मादित्यर्थः । तद्विषये तथैव सत्त्वादितिभावः । समानकार्यित्व एवेति । समानस्थानिताकत्वएवेत्यर्थः । तत्त्वञ्च वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्व-माङ्गशास्त्रे, यथेयायेत्यादाविण्धातोर्लिटि तस्य णलादेशे द्वित्वे इ इ अ. इतिस्थिते दीर्घशास्त्रीयस्थानितापरेकारनिष्ठा तत्समानाधिकरणस्थानिता वृद्धिनिरूपिता तन्निरूपकत्वं वृद्धिशास्त्रस्येतिसमन्वयः"–इत्याह ज. मि. विजयायाम् प. 56, पृ. 243 ।
12. तथाहि–"'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' । नञ्–युक्तमिवयुक्तं चान्यस्मिंस्तत्स-दृशे कार्यं विज्ञायते । तथाह्यर्थो गम्यते । तद्यथा 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्ठमानीय कृतीभवति । एवमिहापि–'अकर्तरी'तिकर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते । किंचान्यदकर्तृ कर्तृसदृशम् ? । कारक"मित्याह पत. व्या. म. भा. 3/3/1/19 ।
13. अष्टा. 6/3/93 ।
14. अष्टा. 6/3/116 ।

'यत्र सप्तम्यन्तं विशेषणतया धातु ग्रहणं क्रियते तत्राल्ग्रहणत्वाभावेऽपि तदादिविधिर्भवती'तिवचनस्य ज्ञापकः[1] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि– 'सम्यङ्'[2] इत्यादौ क्विबन्ते अञ्चतौ परे समः सम्यादेशं विधातुमारब्धे–'समः[3] समी'- तिसूत्रे, '[4]उपान'दित्यात्रौ क्विबन्तेषु नह्यादिषु परतः पूर्वपदस्य दीर्घार्थमारब्धे '[5]नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वा'वितिसूत्रे च '[6]समञ्चनम्' '[7]उपनहन'मित्यत्र क्रमशः सम्यादेशस्य पूर्वपददीर्घस्य च वारणार्थमनुवृत्त उपात्तश्च 'क्वी'तिशब्दः क्व्य-

---

1. तथाहि–
   (क) "किमर्थमञ्चतिनह्यादिषु क्विब्ग्रहणं क्रियते । इह माभूत् समञ्चनम् । उपनहनम् ! नैतदस्ति प्रयोजनम् । उत्तरपद इति वर्त्तते । न चान्तरेण क्विपमञ्चति-नह्यादय उत्तरपदानि भवन्ति । तत्रान्तरेण क्विब्ग्रहणं क्विबन्त एव भविष्यति । तदादिविधिर्न प्राप्नोति । अत उत्तरं पठति–'अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिनूविधिस्तदादावल्ग्रहणे' । अल्ग्रहणे ह्येतद्भवति । न चेदमल्ग्रहणम् । एवं तर्हि सिद्धे सति यदञ्चतिनह्यादिषु क्विब्ग्रहणं करोति तज्ज्ञापयत्याचार्यो'ऽन्यत्र धातुग्रहणे तदादिविधिर्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'त्यत्रायस्कृत् अयस्कारइत्यपि सिद्धं भवती"त्याह पत. 6/3/3/93, 116 ।
   (ख) "'समः समि' (सू. 6/3/93) 'नहिवृति' (सू. 6/3/116), अञ्चतिनह्यादिषु क्विब्ग्रहणात् धातुग्रहणेन तदादिविधिर्भवतीती"त्याह श्रीना. ज्ञा. सं. 6, पृ. 109 ।
2. सम्अञ्चतीतिविग्रहे 'सम्' इतिसुबुपपदाद्'अञ्चुगतिपूजनयोः' धा. पा. भ्वा. 188, इतिपूजार्थकाद् अञ्च्धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च'–अष्टा. 3/2/59, इतिक्विनि 'लशक्वतद्धिते'–अष्टा. 1/38, इतिककारस्य 'हलन्त्यम्'–अष्टा. 1/3/3, इतिनकारस्य चेत्संज्ञायां 'तस्य लोपः'–अष्टा. 1/3/9, इत्यनेन ककारनकारयोर्लोपे क्विनि इकारस्योच्चारणार्थकतया निवृत्तौ वकारस्य'वेरपृक्तस्य'–अष्टा. 6/1/67, इतिलोपे 'अनिदितां हलउपधायाः क्ङिति'–अष्टा. 6/4/24, इतिनलोपे 'कृदतिङ्'–अष्टा. 3/1/93, इतिक्विनः कृत्त्वात्तदन्तात्सौ 'समः समि'–अष्टा. 6/3/93, इत्यनेन समः सम्यादेशे 'उगिदचां सर्वनामस्थानेऽधातोः'–अष्टा. 7/1/70, इतिनुमि सोः सकारस्य हल्ङ्यादिलोपे चकार- स्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्यस्य कुः'–अष्टा. 8/2/62, इति नासिकास्थानत आन्तर्यात्कुत्वेन ङकारे रूपमिदम् ।
3. अष्टा. 6/3/93 ।
4. उपनह्यते इतिविग्रहे उपपूर्वकात् 'णह बन्धने' धा. पा. दिवा. 1166, इतिनह्धातोः सम्पदादित्वात् 'संपदादिभ्यः क्विप्' वा. का. 3/3/94, इति क्विपि क्वपः सर्वापहारे 'नहिवृतिवृषि- व्यधिरुचिसहितनिषु क्वौ'–अष्टा. 6/3/116, इत्यनेन पूर्वपदस्य दीर्घे निष्पन्नात्पादुकावाचकात् उपानह्शब्दात् कृदन्तात्सौ सोर्हल्ङ्यादिलोपे हस्य च 'नहो धः'-8/2/34, इति 'होढः'–अष्टा. 8/2/31, इतिढत्वापवादे धकारे जश्त्वे चर्त्वे च कृते रूपमिदम् ।
5. अष्टा. 6/3/116 ।
6. सम्पूर्वकात् 'अञ्चुगतिपूजनयोः' धा. पा. भ्वा. 188, इतिअञ्च्धातोर्ल्युटि योरनादेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।
7. उपपूर्वकात् 'णह बन्धने' धा. पा. दिवा. 1166, इतिनह्धातोर्ल्युटि योरनादेशे विभक्तिकार्येषु कृतेषु रूपमिदम् ।

न्तार्थबोधकोऽस्य वचनस्याभावे व्यर्थः । अस्य शब्दस्याभावेऽपि '[1]उत्तरपदे'–इत्यधिकारमहिम्नैव क्व्यन्त इतिलाभसम्भवाद् अञ्चुनह्यादिरूपे उत्तरपदे परेऽनयोः सूत्रयोः प्रवृत्तिर्भवतीति समञ्चनमुपनहनमित्यत्र क्रमशः अञ्चन–नहनयोरुत्तर-पदत्वेऽपि अञ्च्-नहोरुत्तरपदत्वाभावादेव सम्यादेशपूर्वपददीर्घयोरभावः सुलभः । ज्ञापिते चास्मिन्वचने अञ्चतावित्यस्य नहिवृतीद्यादेश्च उत्तरपदे इत्येतद्विशेषणत्वेन तदादिविधौ सति अञ्च्-इत्यादिर्धातुरादिर्यस्योत्तरपदस्य तस्मिन्परतः समः सम्यादेशः–पूर्वपदस्य दीर्घश्च भवत इति सूत्रार्थः सम्पद्यते, तथा सति 'समञ्चनम्' 'उपनहन'मित्यादावपि क्रमशः समः सम्यादेशः[2] पूर्वपदस्य[3]दीर्घश्च प्राप्नोति, यतोऽञ्चननहनयोरुत्तरपदयोरञ्चुनही आद्यावयवौ स्तः, अतोऽत्र सम्यादेशपूर्वपद-दीर्घवारणायात्र शब्दोऽयं स्वांशे चरितार्थो भवति । नह्यञ्चन- नहनशब्दौ क्व्यन्तौ स्तः । ज्ञापितस्यास्य वचनस्य फलं तु 'अतः [4]कृकमिकंसकुम्भपात्रकुशाकर्णीष्व-नव्ययस्ये'त्यत्र उत्तरपदाधिकारात्तद्विशेषणेन 'कृ' इत्यनेन कृधात्ववयवकमुत्तरपदं गृह्यत इति 'अयस्कार'[5]इत्यत्रापि सत्त्वस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि क्व्यन्ते कृधातौ परत एव–'[6]अयस्कृत्'–इत्यादौ सत्वं स्यात्, नतु 'अयस्कार'इत्यत्राप्यणन्ते परे सत्वं सिद्ध्येत् ।

## 'की'ति शब्दः

[7]'चायःकी'त्यत्र 'की'तिशब्दः 'यङ्युक्तं यङ्लुक्यपि भवती'तिवचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याभावेऽत्रासौ व्यर्थः । अत्र–चायः[9] 'कि'–इति ह्रस्वाऽऽदेशेऽपि

---

1. 'अलुगुत्तरपदे'–अष्टा. 6/3/1 ।
2. 'समः समि'–अष्टा. 6/3/93 ।
3. 'नहि वृति.'–अष्टा. 6/3/116 ।
4. अष्टा. 7/3/36 ।
5. 'अयः करोतीत्यर्थे 'अयस्'–इतिकर्मोपपदात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः 'कर्मण्यण्'–अष्टा. 3/2/1, इति अण्प्रत्ययेऽनुबन्धलोपे 'अचोञ्णिति'–अष्टा. 7/2/115, इति वृद्धावांकारे रपरत्वे-'कर्तृकर्मणोः कृति'–अष्टा. 2/3/65, इतिकर्मणि षष्ठ्याम् 'अयस्+अस्–कार'इत्यलौकिकविग्रहे 'उपपदमतिङ्'–अष्टा. 2/2/19, इतिसमासे विभक्तिलुकि अयसः सकारस्य रुत्वे विसर्गे 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्यय-स्य'–अष्टा. 8/3/36, इतिविसर्गस्य सकारे 'अयस्कार'–इत्यस्मात् कृदन्तात्सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
6. अयः करोतीत्यर्थे अयः पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः'क्विप्'–अष्टा. 3/2/76, इति क्विपि क्विपः सर्वापहारे अयसो विसर्गस्य 'अतः कृकमि.'–अष्टा. 8/3/36, इतिसकारे–'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/4/34, इतितुकि कृदन्ताद् अय-स्कृच्छब्दात्सौ सोः सकारस्य हल्ङ्यादिलोपे रूपमिदम् ।
7. अष्टा. 6/1/21 ।
8. तथाहि–

विहिते '[1]चेकीयते'–इत्यस्य '[2]अकृत्सार्वधातुकयोदीर्घः'–इतिदीर्घेणैव हि साधुत्वं सुलभम् । ज्ञापिते चास्मिन्वचने 'चेकीतः[3]' इत्यत्र–चायः 'की'–इत्यादेशविधानायासौ शब्दोऽत्र स्वांशे चरितार्थो भवति । नह्यत्र 'अकृ'[4]–दितिदीर्घः प्राप्नोति यकारस्य [5]लुप्तत्वात् । न चात्रापि [6]प्रत्ययलक्षणेन दीर्घः[7] सुलभ इतिशङ्क्यम् । यतो '[8]नलुमताङ्गस्ये'त्यनेन[9]प्रत्ययलक्षणमत्र न संभवति । ज्ञापितस्यास्य वचनस्य फलं तु [10]बोभवीतीत्यादौ '[11]सन्यङो'रितिद्वित्वस्य सिद्धिः । अस्य वचनस्यासत्त्वे हि यङोऽभावादत्र द्वित्वं न सिद्ध्येत् । न च एकाचो विधीयमानं[12]द्वित्वं कथमिह यङ्लुकि स्यात्, [13]'श्तिपाशपे'तिनिषेधादितिशङ्क्यम् । यतो '[14]गुणोयङ्लुको'-रित्याद्यभ्यासकार्यविधिभिर्द्वित्वनिषेधाभावो ज्ञाप्यते । द्वित्वाभावे हि अभ्यासकार्यं यङ्लुकि न प्राप्नोतीति तत्तद्विधिवैयर्थ्यं स्पष्टम् ।

---

(क) "दीर्घोच्चारणं यङ्लुगर्थम् । चेकीतः ।"–इतिग्रन्थेन ज्ञापकत्वमस्यात्र वचने सूचयति वाम. का. 6/1/21 ।

(ख) "कथं पुनः 'यङि च' इत्युच्यमाने आदेशो यङ्लुकि स्यात् ? प्रत्ययलक्षणं प्रतिषिध्यते ? एवमस्मादेव दीर्घोच्चारणाद् यङ्लुकि भवतीति–विज्ञायते, अन्यथा तदपार्थकं स्या"दित्याह जि. बु. न्या. 6/1/21 ।

(ग) "चेकीयत इत्यत्राकृत्सर्वाधातुकयोरिति (7/4/25) दीर्घसिद्धौ चायः कीति (6/1/21), दीर्घादेशविधानं यङन्तार्थं कृतं ज्ञापयति–'यङ्युक्तं यङ्लुक्यपि भवति । तेन बोभवीतीत्यादौ द्विरुक्तिः–सिद्ध्यतीति । प्रत्ययलोपलक्षणं चात्र नास्ति नलुमतेति निषेधा"–दित्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 81 ।

(घ) "कथं पुनर्यङ्युच्यमान आदेशो यङ्लुकि स्यात् ? प्रत्ययलक्षणेन । 'नलुमताङ्गस्य' ? एवंतर्हि दीर्घोच्चारणसामर्थ्याल्लुक्यपि भविष्यती"त्याह ह. मि. पदम. 6/1/21 ।

9. "चायृ पूजानिशामनयोः'–धा. पा. भ्वा. 880 ।

1. 'चायृ पूजानिशामनयोः'–धा. पा. भ्वा. 880, इतिचाय्धातोर्यङि चायः क्यादेशे तदन्ताल्लटि. ते रूपमिदम् ।

2. अष्टा. 7/4/25 ।

3. 'चायृ पूजानिशामनयोः' धा. पा. भ्वा. 880, इतिचाय्धातोर्यङ्लुगन्ताल्लटि तसि रूपमिदम् ।

4. 'अकृत्सार्वधातुकयोदीर्घः'–अष्टा. 7/4/25 ।

5. 'यङोऽचि च'–अष्टा. 2/4/74 ।

6. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।

7. 'अकृत्सार्वधातुकयोर्दीर्घः'–अष्टा. 7/4/25 ।

8. अष्टा. 1/1/63 ।

9. अष्टा. 1/1/63 ।

10. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इतिभूधातोर्यङ्लुगन्ताल्लटि तिपि रूपम् ।

11. अष्टा. 6/1/9 ।

12. 'सन्यङोः'–अष्टा. 6/1/9 ।

13. "श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि" ॥
–प. शे. प. 132, पृ. 363 ।

14. अष्टा. 7/4/82 ।

वस्तुतस्तु ज्ञापकसिद्धस्यास्य वचनस्य फलं बोभवीतीत्यादौ द्वित्वसिद्धिरूपमन्यथासिद्धमिति नायंशब्दोऽस्य वचनस्य ज्ञापकः । कथं तत्रैतद्वचनाभावे द्वित्वं स्यादिति चेत् ? प्रत्ययलक्षणेने'ति[1] । न च '[2]नलुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधः शङ्क्यः । यतो लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यमेव '[3]नलुमते'त्यनेन प्रतिषिध्यते । द्वित्वा[4]-दिकं हि यङन्तस्य कार्यं, यङि परतस्तद्विधानाभावान्न यङ्निमित्तकम् । इत्थं प्रत्ययलक्षणेन 'चेकीतः'–इत्यत्र 'की'त्यादेशविधानाय'की'तिशब्दश्चरितार्थ[5]इति पुरुषोत्तमदेवप्रभृतिभिरुक्तमस्योक्तवचनज्ञापकत्वं न युक्तमिति निश्चीयते ।

## 'कुर'जिति शब्दः

'विदिभिदिच्छिदेः[6] कुरच्'इतिसूत्रे कुरजितिशब्दः 'आतिदेशिकं कार्यमनित्यमि'तिवचनस्य [7]परिभाषाया वा ज्ञापकः[8] । यतोऽस्य वचनस्य अस्याः परिभाषाया वा अभावेऽत्र कुरजितिशब्दो व्यर्थः । तथाहि–'विदुरः[9] पण्डितः' 'भिदुरं[10]काष्ठम्' 'छिदुरा- [11]रज्जु'रित्यमीषां प्रयोगाणां सिद्धये प्रकृतमव्यवहितपूर्वसूत्रोक्तं [12]घुरचं

---

1. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
2. अष्टा. 1/1/63 ।
3. 'न लुमताङ्गस्य'–अष्टा. 1/1/63 ।
4. 'सन्यङोः'–अष्टा. 6/1/9 ।
5. तथाहि–"दीर्घोच्चारणं यङ्लुगर्थम् । अतएव 'नलुमते'तिनिषेधोऽपि न प्रवर्तत इति यङ्लुक्यपि चायः की स्यादेव । चेकीतः"इत्याह ज्ञा. भि. त. बो. यङन्त प्र. पृ. 273 ।
6. अष्टा. 3/2/162 ।
7. (क) 'अनित्यमातिदेशिकम्'–व्याडिः प. पा. प. 95, पृ. 41 ।
   (ख) 'आतिदेशिकमनित्यम्'–भ. ना. प. शे. प. 99, पृ. 330 ।
8. तथाहि–
   (क) 'भञ्जादिसूत्रा- (3/2/161)नन्तरं विदिभिदि छिदेः कित्त्वेऽपि कित्त्वातिदेशेन सिद्धौ कुरच्विधानं (3/2/161) ज्ञापकम्–'आतिदेशिकं कार्यमनित्य'मिति नपदान्तसूत्रे (1/1/58) न्यासः । तेन 'अपि शाकं पचानस्य'–इत्यत्रातोङित (7/2/81) इत्यानशब्दाकारस्येयादेशो न भवति आतिदेशिकस्य ङित्त्वस्यानित्यत्वात् । आनेमुक् (7/2/82) चात्र नास्त्यागमशास्त्रस्यानित्यत्वादितिन्यासे उक्त"मित्याह पु. दे. ज्ञा. समु. दशमे कर्मणिपादे पृ. 74 । (यद्यप्यधुनोपलब्धप्रकाशितन्यासपुस्तकेषु 'नपदान्त.'–अष्टा. 1/1/58, तथा 'आनेमुक्'–अष्टा. 7/2/82, इतिसूत्रे पुरुषोत्तमदेवोक्तौ क्रमशः पाठाविमौ नोपलभ्येते तथापि मन्येऽनुन्यासे पाठाविमौ भवेता'मिति प्रमादादधुनोपलब्धप्रकाशितज्ञापकसमुच्चये'अनुन्यासः'इति पाठस्थाने 'न्यासः'–इत्यपपाठो दृश्यते) ।
9. 'विदज्ञाने' धा. पा. अदा. 1064, इतिविद्धातोः कर्मकर्तरि'विदिभिदिच्छिदेः कुरच्'–अष्टा. 3/2/162, इतिकुरच्प्रत्यये कुरचः कित्त्वात्–क्ङिति च'–अष्टा. 1/1/5, इत्यनेन 'पुगन्तलघूपधस्यच'–अष्टा. 7/3/86, इतिप्राप्तस्य लघूपधगुणस्य निषेधे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
10. 'भिदिर्विदारणे' धा. पा. रुधा. 1440, इतिभिद्धातोः कर्मकर्तरि 'विदिभिदिच्छिदेः कुरच्'–अष्टा. 3/2/162, इति कुरच्प्रत्यये कुरचः कित्त्वात् 'क्ङिति च'–अष्टा. 1/1/5, इत्यनेन 'पुगन्तलघूपधस्यच'–अष्टा. 7/3/86, इतिप्राप्तस्य लघूपधगुणस्य निषेधे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
11. 'छिदिर्द्वैधीकरणे' धा. पा. रुधा. 1441, इतिछिद्धातोः कर्मकर्त्तरि 'विदिभिदिच्छिदेः कुरच्'–अष्टा. 3/2/162, इति कुरच्प्रत्यये कुरचः कित्त्वात् 'क्ङितिचे'–अष्टा. 1/1/5,

विहायानेन सूत्रेण कुरच्प्रत्ययो विहितः । कुरचः ककार इत्संज्ञक[1] इति तस्य कित्त्वात्तस्मिन् परे 'क्ङिति[2] चे'ति निषेधादेषु प्रयोगेषु गुणो[3]न भवतीति सिद्धिरेषां हि भवति । अस्य वचनस्य, अस्याः परिभाषाया वा अभावे हि 'विदिभिदिच्छिदेः कित्'इति न्यासमत्र कृत्वा प्रकृते [4]घुरचि कित्त्वं यद्यतिदिश्यते तदापि '[5]क्ङितिचेति[6]गुणनिषेधेन'भिदुरः 'इत्यादिप्रयोगाणां सिद्धेःसुलभतया कुरज्विधानायात्र शब्दोऽयं व्यर्थः । ज्ञापिते चास्मिन्वचनेऽनेन कदाचिदपि भिदुरम्भूत्यादौ गुणो माभूदित्येतदर्थं कित्[7]कुरच्विधानमत्र स्वांशे चरितार्थं भवति । ज्ञापितस्यास्य वचनस्य अस्याः परिभाषाया वा फलं तु 'अपि शाकं पचानस्य'[8] इत्यत्र पच+आन इत्यवस्थायां '[9]शानचः' सार्वधातुकमपित्'[10]इति ङित्त्वातिदेशेऽपि 'आन'– इत्याकारस्य 'आतो–ङित'[11] इति इयादेशाभावः । न चात्र 'आनेमु'[12]गिति मुगागमस्य दुर्वारतया 'पचानस्ये'तिप्रयोग एव खपुष्पायित इति शङ्क्यम्, यतोऽनित्यमागमशासनम् । तदनित्यत्वं च ज्ञापकलभ्यमित्यत्रैव प्रबन्धेऽन्यत्र[13] निरूपितम् ।

अथवा सूत्रेऽ[14]ङित्त्वमनित्य'मितिवचनस्य[15]- ज्ञापकः । यतोऽस्य वचनस्याभावे 'विदिभिदिच्छिदेर्ङिदितिप्रकृतस्यैव घुरचो ङित्त्वं यद्यतिदिश्यते तदापि विदुरः पण्डित

---

इत्यनेन 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86, इतिप्राप्तस्य लघूपधगुणस्य निषेधे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदं सिद्ध्यति ।

12. 'भञ्जभासमिदोघुरच् 3/2/161 ।

1. 'लशक्वतद्धिते'–अष्टा. 1/3/8 ।
2. अष्टा. 1/1/5 ।
3. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86 ।
4. 'भञ्जभासमिदोघुरच्'–अष्टा. 3/2/161 ।
5. अष्टा. 1/1/5 ।
6. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86 ।
7. लशक्वतद्धिते'–अष्टा. 1/3/8 ।
8. 'डुपचष्पाके'–धा. पा. भ्वा. 996, इतिपच्धातो र्लटि लटः शानजादेशे शपि' आगमशासनस्यानित्यत्वात् 'आनेमुक्'–अष्टा. 7/2/82 इतिमुगागमाभावे कृदन्तप्रादिपदिकान्ङसि ङसः स्याऽऽदेशे रूपमिदम् ।
9. 'लटः शतृशानचावप्रथमासमानाधिकरणे'–अष्टा. 3/2/124 ।
10. अष्टा. 1/2/4 ।
11. अष्टा. 7/2/81 ।
12. अष्टा. 7/2/82 ।
13. 'ज्ञापकाः सूत्रांशाः'इति. प्रघट्टके'आनिलोट्'–अष्टा. 8/4/16, इत्यत्र 'आ'शब्दस्य ज्ञापकत्वनिरूपणावसरे' इत्यर्थः ।
14. विदिभिदिच्छिदेः कुरच्–अष्टा. 3/1/62
15. तथाहि–'विदिभिदिच्छिदेर्ङिदिति प्रकृतस्यैव घुरचो ङित्त्वातिदेशेनैव सिद्धे 'प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यम्'–इति ज्ञापनार्थम् । तेन 'धू विधूनने' कुटादिः, ततः 'अर्त्तिलूधू'-इतीत्रप्रत्यये कृते ङित्कार्यं न भवती''त्याह ह. मि. पदम. 3/2/162 ।

इत्यादौ 'क्ङिति[1]चे'ति [2]लघूपधगुणनिषेधः सुलभ इति कुरच्प्रत्ययस्य विधानायात्र 'कुरजितिशब्दोऽयं व्यर्थः । ज्ञापिते चास्मिन्वचनेऽनेन कदाचिदपि 'विदुरः पण्डितः' इत्यादौ गुणो माभूदित्येतदर्थं कितः-कुरचो विधानाय सूत्रेऽस्मिन् 'कुर'जितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'धू विधूनने'[3]इतिधूधातोः '[4]अर्तिलूधूसूखनसहचर इत्रः 'इति इत्रप्रत्यये धवित्रमित्यत्र ङित्कार्यस्य 'क्ङितिचे'ति[5] गुणनिषेधस्याभावः । अस्य वचनस्यासत्त्वे हि 'धू विधूनने'[6]इत्यस्य [7]कुटादौ पाठात् '[8]गांङ्कुटाभ्योऽञ्णिन् ङि'दितिङित्त्वादत्र गुणनिषेधाऽऽपत्तिर्दुर्वारा स्यात् । [9]मतमिदं हरदत्तमिश्रस्य ।

## 'कृ'ञितिशब्दः

'आम्प्रत्ययवत्[10] कृञोऽनुप्रयोगस्ये'त्यत्र 'कृ'ञितिशब्दः''कृञ्चानुप्रत्युज्यते[11] लिटी'त्यत्र 'कृ'ञितिप्रत्याहारः"–इति, "कृञ्वद्भवतेरस्तेश्चानुप्रयोगो भवती"ति वा वचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि–'गोपायाञ्चकार'[13] 'एधाञ्चक्रे'[14] - इत्यादौ क्रमशः – परस्मैपदा[15]ऽऽत्मनेपदयोः[16] –

---

1. अष्टा. 1/1/5 ।
2. 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86 ।
3. धा. पा. तुदा. 1399 ।
4. अष्टा. 3/2/184 ।
5. अष्टा. 1/1/5 ।
6. धा. पा. तुदा. 1399 ।
7. 'कुट कौटिल्ये' धा. पा. तुदा. 1367, इत्यारभ्य 'कुङ्शब्दे धा. पा. तुदा. 1402 इत्यन्ताः षट्चत्वारिंशद्धातवः कुटादिः । द्र. वै. सि. कौ. तुदादिप्र. पृ. 206-207 ।
8. अष्टा. 1/2/1 ।
9. द्र. पदम. 3/2/162 ।
10. अष्टा. 1/2/63 ।
11. अष्टा. 3/1/40 ।
12. तथाहि–
   (क) "कृञ्ग्रहणं किमर्थम् ? । इहं माभूत्–ईहामास ईहामासतुः–ईहामासुः । कथं चात्रास्तेरनुप्रयोगो भवति । प्रत्याहारग्रहणं हि तत्र विज्ञायते । कथं पुनर्ज्ञायते तत्र प्रत्याहाग्रहणमिति ? इह–कृञ्ग्रहणा"दित्याह पत. व्या. म. भा. 1/3/2/63 ।
   (ख) "'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्ये'तिसूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीतिज्ञायते । तेन 'कृभ्वस्तियोगे'इत्यतः-'कृञोद्वितीये'ति ञकारेण प्रत्याहारग्रहणात् कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थन्न प्रयुज्यते"इत्याह भ. दी. वै. सि. कौ. भ्वादि प्र. पृ. 35-36 ।
13. 'गुपूरक्षणे' धा. पा. भ्वा. 395, इति गुप्धातोः 'आयादय आर्धधातुकेवा' अष्टा. 3/1/31, इति विकल्पेनाऽऽयप्रत्यये 'पुगन्तलघूपधस्य च'- अष्टा. 7/3/86, इत्युकारस्य गुणे 'गोपाय'

सिद्ध्यर्थमारब्धे 'आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्या'दित्यर्थकेऽस्मिन्सूत्रे '[1]ईहामासे'त्यादावात्मनेपदस्य व्यावृत्त्यर्थं शब्दोऽयमुपात्तः । स चास्य वचस्याभावे व्यर्थः । अस्य वचनस्याभावे हि 'कृञ्चानुप्रयुज्यते [2]लिटी'त्यनेन कृञ एवलिट्परकस्यानुप्रयोगो भवेन्न तु [3]भवतेरस्ते[4]श्चापीति 'ईहामासे'त्यादिप्रयोगा एव खपुष्पायिताः । ज्ञापिते चास्मिन्कृञ्वद् भ्वसोरप्यनुप्रयोगस्य सुलभतया 'ईहामासे'त्यादिप्रयोगाः संभवन्तीति तत्राऽऽत्मनेपदव्यावृत्त्यर्थमत्र सूत्रेऽयं शब्दः स्वांशे चरितार्थो

---

- इत्यस्य 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32, इतिधातुसंज्ञायां लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' - अष्टा. 3/1/35, इति आम् प्रत्यये आस्कासोराम्विधानात्मकाकारस्येत्त्वाभावेन लोपाभावे 'गोपाय आम् लिट्' - इतिस्थितौ ' अतोलोपः' - अष्टा. 6/4/48, इत्यल्लोपे 'आमः' - अष्टा. 2/4/81, इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' - अष्टा. 3/1/40, इतिलिट्परककृञनुप्रयोये लिटस्तिपि णलि कृञो द्वित्वेऽभ्याससंज्ञायाम् । 'उरत्' - अष्टा. 7/4/66, इति अभ्यासऋवर्णस्याकारे रपरत्वे च कृते 'हलादिः शेषः' - अष्टा. 7/4/60, इति रलोपे कुहोश्चुः' - अष्टा. 7/4/62, इति अभ्यासककारस्य चकारे 'गोपायाम् चकृ अ' - इत्यवस्थायाम् ' अचोऽञ्णिति' - अष्टा - 7/2/115, इति ऋकारस्य वृद्धौ रपरत्वे मकारस्यानुस्वारे परसवर्णे च कृते रूपमिदम् ।

14. 'एध वृद्धौ' धा. पा. भ्वा. 2, इति एधधातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' - अष्टा. 2/4/81, इति लिटो लुकि 'एध्आम्' इतिस्थितौ 'कृञ्चानुप्रयुज्यते लिटि' - अष्टा. 3/1/40, इतिलिट्परककृञोऽनुप्रयोगे लिटः स्थाने 'आम् - प्रत्ययवत् कृञोऽनुप्रयोगस्य' - अष्टा. 1/3/63, इत्यात्मनेपदे ते तस्य एशादेशे कृञोद्वित्वेऽभ्यासकार्ये 'एधाम् च कृ ए 'इतिजाते 'असंयोगाल्लिट्कित्' - अष्टा. 1/2/5, इतिकित्त्वाद्गुणनिषेधे यणि मकारस्यानुस्वारे परसवर्णे च कृते रूपमिदम् ।

15. 'लः परस्मैपदम्' - अष्टा. 1/4/99,

16. 'तङानावात्मनेपदम्' - अष्टा. 1/4/100,

1. 'ईह चेष्टायाम्' धा. पा. भ्वा. 632, इतिईहधातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' - अष्टा. 3/1/36, इत्याम्प्रत्यये 'आमः' - अष्टा. - 2/4/81, इति लिटोलुकि 'कृञ्चानुप्रयुज्यतेलिटि' - अष्टा. 3/1/40, इतिलिट्परकास्तेरनुप्रयोगे लिटस्तिपि णलि असो द्वित्वेऽभ्याससंज्ञायाम् - हलादिशेषेऽभ्यासस्य 'अतआदेः' - अष्टा. 7/4/70, इतिदीर्घे आकाराकारयोः सवर्णदीर्घैकाऽऽदेशे रूपमिदम्

2. अष्टा. 3/1/70 ।

3. भूधातोरित्यर्थः ।

4. अस्धातोरित्यर्थः ।

भवति । ज्ञापितस्यास्य वचनस्य फलं तु [1]'एधांबभूव' [2]'एधामास' इत्यादि प्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि भवतेरस्तेश्चानुप्रयोगस्य गगनकुसुमावितततया नैषां साधुत्वं सिद्ध्येत् । न च ज्ञापितेऽप्यस्मिन् वचने 'ईहामासे'त्यादावात्मनेपदस्याऽऽपत्तिर्दुर्वारा, यतोऽत्रापि [3]'कृभ्वस्तियोगे' इत्यतः [4]'कृञोद्वितीये'ति ञकारेण प्रत्याहाराऽऽश्रयणस्य निवारयितुमशक्यतयाऽस्त्यादिभ्योऽप्याम्प्रत्ययवदात्मनेपदं प्राप्नोतीति शङ्क्यम् । [5]यतोऽत्र 'कृञ्' इतिशब्दः [6]'इह न प्रत्याहारग्रहण'मित्यस्यापि वचनस्य ज्ञापकः । अस्य वचनस्याभावे हि ज्ञापितेऽपि पूर्वोक्तवचने नासौ शब्दः स्वांशे चरित्तार्थो भवति । न चैवम् 'इन्दाञ्चकारे'त्यादौ परगामिनि क्रियाफले [7]आत्मनेपदाऽऽपत्तिः स्यात्, परगामिन्यपि क्रियाफले 'एधाञ्चक्रे' इत्यादौ हि [8]कृञ्धातोरात्मनेपदार्थमस्याऽऽरम्भादितिशङ्क्यम् । यतः आम्प्रकृतेः 'इदि [9]परमैश्वर्ये इति [10]इद् धातोरात्मनेपदं नास्ति, असौ हि धातुः [11]परस्मैपदी । अतएवात्र सूत्रे "आम्प्रत्ययव"दित्युपात्तम् ।

---

1. 'एधवृद्धौ' धा. पा. भ्वा. 2, इतिएधधातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' अष्टा. 3/1/36, इत्याम्प्रत्यये आमः– अष्टा. 2/4/81, इतिलिटो लुकि 'एध् आम्' इति स्थितौ 'कृञ्चानुप्रयुज्यते लिटि'– अष्टा. 3/1/40, इतिलिट्परकभवतेरनुप्रयोगे 'एध्आम्भूलिट्' इत्यवस्थायां लिटः स्थाने 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य'– अष्टा. 1/3/63, इतिपरस्मैपदे तिपि णलि 'भुवो वुग्लुङ्लिटोः' अष्टा. 6/4/88, इतिवुगागमे 'भूवुअ' इत्यवस्थास्यां 'लिटिधातोरनभ्यासस्य'– अष्टा 6/1/8, इतिभूवुशब्दस्य द्वित्वेऽभ्यासत्वे हलादिशेषे 'ह्रस्वः' अष्टा. 7/4/59, इत्यभ्यासस्य ह्रस्वत्वे 'भवतेरः'– अष्टा. 7/4/73, इत्यभ्यासोकारस्याकारे भस्य 'अभ्यासेचर्च' अष्टा. 8/4/54 इतिवत्वे आमो मकारस्यानुस्वारे च कृते रूपमिदम् ।
2. 'एध वृद्धौ – धा. पा. भ्वा. 2, इतिएधधातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः– अष्टा. 3/1/36, इत्याम्प्रत्यये 'आमः' अष्टा. 2/4/81, इतिलिटो लुकि 'एध्आम्' इतिस्थितौ 'कृञ्चानुप्रयुज्यतेलिटि'– अष्टा. 3/1/40 इतिलिट्परकास्तेरनुप्रयोगे 'एध्आम्अस्लिट्' इत्यवस्थायां लिटः स्थाने 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य'– अष्टा. 1/3/63. इतिपरस्मैपदे तिपि णलि असो द्वित्वेऽभ्याससंज्ञायां हलाविशेषेऽभ्यासस्य 'अत आदेः' अष्टा. 7/4/70, इति दीर्घे आकाराकारयोः सवर्णदीर्घैकाऽऽदेशे रूपमिदम् ।
3. 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' अष्टा. 65/4/50
4. कृञोद्वितीयतृतीयशम्बबीजात्कृषौ'– अष्टा. 5/4/58
5. 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य'– अष्टा. 1/2/63, इत्यत्रेत्यर्थः ।
6. 'आमप्रत्ययवत् कृञोऽनुप्रयोगस्य'– अष्टा. 1/2/63, इत्यत्रेत्यर्थः ।
7. 'स्वरितञितः कर्त्रभिप्राये क्रियाफले'– अष्टा. 1/3/72
8. 'आम्प्रत्यवत् कृञोऽनुप्रयोगस्य'– अष्टा. 1/2/63, इत्यस्येत्यर्थः ।
9. धा. पा. भ्वा. 63
10. 'तङानावात्मनेपदम्'–अष्टा. 1/4/100
11. "लः परस्मैपदम्"– अष्टा. 1/4/99

अथ [1]"इन्दांचकारे"त्यादौ मास्त्वनेन[2] सूत्रेण परगामिनि क्रियाफले [3]आत्मनेपदम्, आत्मगामिनि तु क्रियाफले "स्वरितञितः [4]कर्त्रभिप्राये क्रियाफले इत्यनेनाऽऽत्मनेपदं- दुर्वारम्, यतोऽस्य सूत्रस्य "एधाञ्चक्र" इत्यादौ परगामिनि क्रियाफले [5]आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतयाऽऽत्मगामिनि क्रियाफले "स्वरित[6]ञित" इति प्राप्तस्याऽऽत्मनेपदस्य निवारणे सामर्थ्यं नास्तीत्यपि न शङ्कनीयम् । यतः "[7]आम्प्रत्ययवत् कृञोऽनुप्रयोगस्ये"त्यत्र [8]"पूर्ववत्सनः" इति पूर्वसूत्रात् "पूर्ववदित्यनुवर्त्त्य "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्ये"त्येकं वाक्यं, "पूर्ववत् कृञोऽनुप्रयोगस्ये"त्यपरं वाक्यमिति वाक्यद्वयं भगवता [9]स्वीकृतम् । तत्र पूर्ववदिति तृतीयान्ताद्वतिः[10], पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः । तत्र वाक्यद्वयंस्य समानार्थकत्वे वैयर्थ्याद् द्वितीयवाक्यं पूर्ववदेवाऽऽत्मनेपदं न तु तद्विपरीतमिति नियमार्थं सम्पद्यते । एवं च पूर्ववाक्येन "एधाञ्चक्रे" इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु "इन्दाञ्चकारे"त्यादौ

---

1. "इदि परमैश्वर्ये" धा. पा. भ्वा. 63, इति इद्धातोः "इदितोनुम्धातोः" अष्टा. 7/1/58, इतिनुमि इन्देर्लिटि "इजादेश्च गुरुमतोऽनृच्छः"– अष्टा. 3/1/36, इत्याम्प्रत्यये "आमः"– अष्टा. 2/4/81, इतिलिटो लुकि "कृञ्चानुप्रयुज्यते लिटि"– अष्टा. 3/1/40, इति लिट्परककृञोऽनुप्रयोगे लिटः "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" –अष्टा. 1/3/63, इति परस्मैपदेतिपि णलि कृञो द्वित्वेऽभ्याससंज्ञायाम् "उरत्"– अष्टा. 7/4/66, इति अभ्यासऋवर्णस्याकारे रपरत्वे च कृते"हलादिः शेषः"– अष्टा. 7/4/60, इतिरलोपे "कुहोश्चुः" अष्टा. 7/4/62, इति अभ्यासककारस्य चकारे "इन्दाम् च कृ अ" इत्यवस्थायाम् "अचोञ्णिति"– अष्टा. 7/2/115, इति अकारस्य वृद्धौ रपरत्वे आमो मकारस्यानुस्वारे च कृते रूपमिदम् ।
2. "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य"– अष्टा. 1/3/63
3. "तङानावात्मनेपदम्" – अष्टा. 1/4/100
4. अष्टा. 1/3/72
5. "तङानावात्मनेपदम्"– अष्टा. 1/4/100
6. स्वरितञितः कर्त्रभिप्राये क्रियाफले'– अष्टा. 1/3/72
7. अष्टा. 1/3/63
8. अष्टा. 1/3/62
9. तथाहि– "अथेह कस्मान्न भवति– उदुम्भाञ्चकार । उदुब्जाञ्चकार? ननु चाऽऽम्प्रत्ययव"- दित्युच्यते, न चात्राऽऽम्प्रत्ययादात्मनेपदं पश्यामः । न ब्रूमोऽनेनेति । किं तर्हि? स्वरित- ञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवती"ति । नैव दोषः । इदं नियमार्थं भविष्यति "आम्प्रत्ययवदेवे"ति यदि नियमार्थम्, विधिर्न प्रकल्पते ईहांचक्रे ऊहांचक्रे इति । विधिश्च प्रक्लृप्तः । कथम्? पूर्ववदिति वर्तते । आम्प्रत्ययवत् पूर्ववच्चेति"– इत्याह पत. व्या. म. भा. 5/1/1/15
10. "तेन तुल्यं क्रिया चेद् वतिः"– अष्टा. 5/1/15

कर्तृगामिनि क्रियाफले "[1]स्वरित ञित"इत्यात्मनेपदस्य निवृत्तिश्च सिद्ध्यतीति भगवदाशयः ।

नच 'कृभ्वस्तियोगे'[2] इत्यस्य, [3]'कृञोद्वितीये'त्यस्य च सूत्रस्य मध्ये [4]'अभिविधौ संपदा चेतिपठितमितिकृञ्प्रत्याहारे संपदोऽपि कुतो न ग्रहणमिति शङ्क्यम् । यतोऽनन्वितार्थकतयाऽत्र प्रत्याहारे [5]संपदो ग्रहणं न भवति । सिद्धस्य वस्तुनो रूपान्तराऽऽपत्तिः सम्पदेरर्थः, [6]एधादिधातोराम्प्रकृतिभूतस्य वृद्ध्यादिरर्थ इतितयोरुभयोरपि विशेषरूपत्वेन सामान्यविशेषभावाभावेनाभेदान्वयो ह्यसंभवः । कृभ्वस्तीनां तु [7]क्रियासामान्यवाचित्वादाम्प्रकृतीनां[8]विशेषवाचित्वात्तदर्थयोरभेदान्वयः सुलभ इति तेषां कृञ्प्रत्याहारे पाठो युक्तः[9] न तु संपदेरपि । जिनेन्द्रबुद्धिस्त्वत्र समाधानान्तरं प्रश्नमिममुत्थायाऽऽह[10] ।

इत्थमत्रायं शब्दो निरुक्तवचनयोरन्यतरवचनस्य ज्ञापकः फलस्य साम्यादिति निश्चीयते ।

## 'कृ'ञितिशब्दः

[11]'तनादिकृञ्भ्य उ'रित्यत्र 'कृ'ञितिशब्दः '[12]गणकार्यमनित्य'मितिपरिभाषाया [13]ज्ञापकः । यतोऽस्या अभावेऽत्र 'कृ'ञितिशब्दो व्यर्थः । [14]कृञस्तनादित्वादेव हि

---

1. "स्वरित ञितः कर्त्रभिप्राये क्रियाफले'– अष्टा. 1/3/72
2. 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरिच्विः'– अष्टा. 5/4/50
3. 'कृञो द्वितीय तृतीय शम्बबीजात्कृषौ' अष्टा. 5/4/58
4. अष्टा. 5/4/53
5. सम्पूर्वकात् 'पद गतौ' धा. पा. दिवा. 1169, इतिपद्धातोरित्यर्थः ।
6. 'एध वृद्धौ' धा. पा. भ्वा. 2
7. धातूनामनेकार्थत्वादितिशेषः ।
8. 'एधवृद्धौ' धा. पा. भ्वा. 2, इति एधप्रभृतीनामित्यर्थः ।
9. तथाहि– 'तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । संपदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते" इत्याह भ. दीः वै. सि. कौ. भ्वादि प्र. पृ. 36
10. तथाहि– "यदि तर्हि कृञिति प्रत्याहारग्रहणम्, एवंसति 'अभिविधौ सम्पदा च' इतिसम्पदानुप्रयोगः प्राप्नोति, तस्य प्रत्याहारेऽन्तर्भूतत्वाद्? नैष दोषः, 'सनाद्यन्ता धातवः' इत्यतो धातुग्रहणमनुवर्तते, तेन च कृञ्विशिष्यते– कृञ् यो धातुरिति, नच सम्पदेत्ययंधातुः, किंतर्हि? धातूपसर्गसमुदायः, तस्मान्नानुप्रयुज्यते" इत्याह जिं. बु. न्या. 3/1/40
11. अष्टा. 3/1/79
12. (क) पु. दे. ल. प. वृ. प. 109, पृ. 156
(ख) सी. दे. वृ. प. वृ. प. 118, पृ. 267
(ग) नी. दी. प. वृ. प. 92, पृ. 310
(घ) ह. भा. प. भास्क. प. 120, पृ. 370
(ङ) भ. ना. प. शे. प. 96, पृ. 328
(च) शेषा. प. भाम्क. प. 83, पृ. 445
13. तथाहि–

करोतीत्यादौं उः प्रत्ययः सुलभः । ज्ञापितायां चास्यां कदाचित् तनादिगणप्रयुक्तः उप्रत्ययाभावः कृञो माभूदित्येतदर्थं 'कृ'ञितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु [1]'न विश्वसेदविश्वस्तं [2]मित्रं चापि न विश्वसे'दित्यत्र विपूर्वकाश्वसः [3]'कर्तरि शबि'ति विहितस्य शपः '[4]अदिप्रभृतिभ्यः शपः' इतिलुगभावः । अस्या असत्त्वे तु शपो लुको दुर्वारतया 'विश्वसे'दित्यस्य साधुत्वं न सिद्ध्येत् । इत्थं 'स चापि गदया दैत्यः [5]सर्वा एवाहनत्पृथ'गित्यत्र हन्तेर्विधिलिङि तिपि शब्लुकोऽभावोऽस्याः फलम् । जयादित्यस्तु "तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानंनियमार्थम्, अन्यत्तनादिकार्यं माभूदिति । 'तनादिभ्यस्तथासोः' इतिविभाषा सिचो लुङ्न भवति अकृत, अकृथाः" [6]इत्याह । तस्मादस्यां नायं शब्दो ज्ञापकः । नियमार्थत्वे नासौ हि सार्थकः । भट्टनागेशस्तु भाष्यानुक्तमिमां परिभाषां न मनुते[7] । अस्या [8]ज्ञापकान्तरमन्यत्रात्रैव प्रबन्धे[9] निरूपितं निराकृतं च ।

## कृत्यतृच्छब्दौ

[10]अर्हेकृत्यतृचश्चे'त्यत्र 'कृत्यतृच्छब्दौ' 'वाऽसरूप'– [11]विधिरनित्य 'इति

---

(क) "तनादिकृञ्भ्यः' इत्यत्र कृञ्ग्रहणमत्र लिङ्गम् । तेन न विश्वसेदित्यादिसिद्ध'मित्याह नी. दी. प. वृ. प. 92 पृ. 310

(ख) "तनादिकृञ्भ्य उः' इत्यत्र तनादित्वेन सिद्धे पुनः कृञ्ग्रहणात्......" इत्याह ह. भा. प. भास्क. प. 120, पृ. 370

(ग) "तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इतिसूत्रे कृञ् ग्रहणात् 'गणकार्यमनित्य"-मित्याह भ. ना. प. शे. प. 96, पृ. 328

(घ) "तनादिकृञ्भ्य उः' (3/1/79) इतितनादित्वादेव सिद्धे कृञ् ग्रहणमस्या ज्ञापक"मित्याह शेषा. प. भास्क. प. 83, पृ. 446

14. 'डुकृञ्करणे' धा. पा. तना. 1472
1. 'श्वसप्राणने' धा. पा. अदा. 1069, इति श्वस्धातोर्विधिलिङि 'गणकार्यमनित्य' मितिपरिभाषया शपोलुगभावे रूपम ।
2. चा. नी. श.
3. अष्टा. 3/1/68
4. अष्टा. 2/4/72
5. मा. पु. दुर्गास. श्लो. उ. अ. 8
6. का. 3/1/79
7. द्र. प. शे. पृ. 330
8. 'क्षमूष्सहने' धा. पा. भ्वा. 442, इति षकारानुवन्धः ।
9. 'ज्ञापका अनुवन्धा' इतिप्रघट्टके ।
10. अष्टा. 3/3/169
11. 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94

[1]वचनस्य ज्ञापकौ । यतोऽस्य वचनस्याभावे [2]'वोढव्या' [3]'वहनीया' [4]'वाह्या' [5]'वोढा' इत्यादौ चकारसमुच्चितलिङ्ग कृत्यतृचोर्बाधाभावायात्र सूत्रे समुपात्तौ कृत्य-तृच्छब्दौ व्यर्थौ । वाऽसरूपन्यायेनैव हि 'वोढव्या' 'वहनीया' 'वाह्या' 'वोढे'त्यादौ [6]वहेः [7]कृत्यतृचावपि[8]सुलभौ । ज्ञापिते चास्मिनूवचनेऽनित्यत्वेन 'वाऽसरूप'विधेरिहा-प्रवृत्तौ चकारसमुच्चितलिङ्ग कृत्यतृचोरेषु प्रयोगेषु बाधाभावाय शब्दाविमौ स्वांशे चरितार्थौ भवतः । ज्ञापितस्यास्य वचनस्य फलं तु [9]'हसितं, छात्रस्य [10]हसन'मित्यादौ [11]घञः, [12]'इच्छतिभोक्तु'मित्यत्र[13]लिङ्लोटोः, [14]'ईषत्पानः सोमो

---

1. तथाहि–
   (क) "अत्र च ज्ञापकम्– 'अर्हेकृत्यतृचश्च' (3/3/169) इतिसूत्रे च कृत्यतृचोर्ग्रहणम् । तद्धि समुच्चितलिङ्ग कृत्यतृचोर्बाधा माभूदित्येतदर्थम् । यदि च वासरूपविधिः स्यात्, किं तदुपादानेन । तथा च वासरूपविधेरनित्यत्वं ज्ञाप्यते इतिफलित"मित्याह नी. दी. प. वृ. प. 54, पृ. 303
   (ख) "तदनित्यत्वे ज्ञापकं चार्हेकृत्यतृचश्चेति, तत्र हि चकारसमुच्चितलिङ्ग कृत्यतृचोर्वाधो माभूदिति कृत्यतृचोर्ग्रहणं क्रियते" इत्याह भ. ना. प. शे. प. 69, पृ. 285-286
2. 'वहप्रापणे' धा. पा. भ्वा. 1004, इतिवहधातोः 'अर्हेकृत्यतृचश्च' अष्टा. 3/3/169, इति तव्यति तव्ये वा कृते रूपमिदम् ।
3. 'वहप्रापणे' धा. पा. भ्वा. 1004, इतिवहधातोः 'अर्हेकृत्यतृचश्च'– अष्टा. 3/3/169, इति अनीयरि प्रत्यये कृते रूपमिदम् ।
4. 'वह प्रापणे' धा. पा. भ्वा. 1004, इतिवह्धातोः 'अर्हेकृत्यतृचश्च'– अष्टा. 3/3/169, इतिण्यति रूपमिदम् ।
5. 'वहप्रापणे' धा. पा. भ्वा. 1004, इतिवहधातोः 'अर्हे कृत्यतृचश्च'– अष्टा. 3/3/169, इतितृचि रूपमिदम् ।
6. 'वहप्रापणे' धा. पा. भ्वा. 1004
7. 'वोढव्या' 'वहनीया' इत्यत्र 'तव्यत्तव्यानीयरः'– अष्टा. 3/2/96, इति क्रमशः तव्यत्तव्यानीयराः । 'वाह्या'– इत्यत्र 'ऋहलोर्ण्यत्– अष्टा. 3/1/124 इतिण्यत् ।
8. 'वोढा'–इत्यत्र 'ण्वुलतृचौ'– अष्टा. 3/1/133, इतितृच् ।
9. हसे हसने' धा. पा. भ्वा. 721, इतिहसधातोः 'नपुंसके भावे क्तः' अष्टा. 3/3/114 इतिक्तप्रत्यये रूपमिदम् ।
10. 'हसे हसने' धा. पा. भ्वा. 721, इतिहसधातोः 'ल्युट्च' अ. 3/3/115 इति ल्युटि 'युवोरनाकौ' अष्टा. 7/1/1 इति योरनादेशे रूपमिदम् ।
11. 'भावे'– अष्टा. 3/3/18, इतिविहितस्येत्यर्थः
12. भुज पालनाभ्यवहारयोः'– धा. पा. रुधा. 1454, इतिभुजधातोः 'समानकर्तृकेषु तुमुन्'– अष्टा. 3/3/158, इतितुमुनि रूपमिदम् ।
13. 'इच्छार्थेषु लिङ्लोटौ'– 3/3/157, इति विहितयोरित्यर्थः ।
14. 'पा पाने' धा. पा. भ्वा. 925, इति पाधातोः 'आतो युच्' अष्टा. 3/3/128, इतियुचि 'युवोरनाकौ'– अष्टा. 7/1/1, इतियोरनाऽऽदेशे रूपमिदम् ।

भवते'त्यत्र [1]खलश्चाभावः । अस्य वचनस्याभावे हि [2]'वाऽसरूप'न्यायेनात्र क्रमशः [3]घञ्लिङ्- [4]लोट् [5]खल् प्रत्ययानामापत्तिर्दुर्वारा स्यात् । एतद्वचनमूला' 'क्तल्युट्-तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ती'ति [6]परिभाषापि पापठ्यते ।

## 'कृत्या'इतिशब्दः

'[7]प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'तिसूत्रे 'कृत्या'इतिशब्दः [8]स्त्र्यधिकारात्- परेण वासरूपविधिर्नावश्यं भवती'ति वचनस्य ज्ञापकः[9]।यतोऽस्य वचनस्याभावे शब्दोऽयमत्र सूत्रे व्यर्थः, 'भवता कटः करणीयः, कर्तव्यः, कार्य इत्यादौ वासरूपन्यायेनैव कृत्या हि सुलभाः । ज्ञापिते चास्मिन्वचनेऽनित्यत्वेन वासरूपविधेरप्रवृत्तौ प्रैषाद्यर्थ-विशेषविहितेन लोटा कृत्याः प्रैषादिविषये बाध्येरन्निति पुनः कृत्यानां विधानायात्र 'कृत्या'इतिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [10]'हसितं'

---

1. 'ईषद्दुःसुषु कृच्छाकृच्छार्थेषु खल्'– अष्टा. 3/3/126, इति विहितस्येत्यर्थः ।
2. 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94
3. 'भावे'– अष्टा. 3/3/18
4. 'इच्छार्थेषु लिङ्लोटौ'– अष्टा. 3/3/157
5. ईषद् दुःसुषु कृच्छाकृच्छार्थेषु खल्'– अष्टा. 3/3/126
6. (क) पु. दे. ल. प. वृ. प. 76, पृ. 145
   (ख) सी. दे. बृ. प. वृ. प. 36, पृ. 205
   (ग) नी. दी. प. वृ. प. 54, पृ. 303
   (घ) ह. भा. प. भास्क. प. 38, पृ. 339
   (ङ) भ. ना. प. शे. प. 69, पृ. 285
   (च) शेषा. प. भास्क. प. 58, पृ. 431
7. अष्टा. 3/3/163
8. 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94
9. तथाहि–
   (क) "किमर्थं प्रैषादिषु कृत्या विधीयन्ते, न सामान्ये भावकर्मणोर्विहिता एव, ते प्रैषादिष्वन्यत्र च भविष्यन्ति? विशेषविहितेनानेन लोटा बाध्यन्ते । वासरूपविधिना भविष्यन्ति? एवं तर्हि ज्ञापयति– 'स्त्र्यधिकारात्परेण वासरूपविधिर्नावश्यं भवति' इती"त्याह जया. का. 3/3/163
   (ख) "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति (3/3/163) कृत्यग्रहणं लोटा समावेशार्थं स्त्र्यधिकारात् परेण वासरूपविधेरनित्यतां ज्ञापयतीति जयादित्यमतम् । क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति उपपद्यते" इत्याह पु. दे. ज्ञा. समु. दशमे कर्मणि पादे पृ. 75
   (ग) "अनित्यत्वज्ञापकं तु 'प्रैषातिसर्ग.' (3/3/163) इतिकृत्यग्रहणम् । वासरूपविधेर्नित्यत्वे तेनैव लोटा समावेशस्य सिद्धतया तदानर्थक्यं स्पष्टमेवे"त्युक्त्वा ज्ञापकत्वं 'कृत्या' इतिशब्दस्य सूचयति शेषाद्रिः प. भास्क. प. 58, पृ. 431
10. 'हसे हसने' धा. पा. भ्वा. 721, इतिहसधातोः 'नपुंसके भावे क्तः' अष्टा. 3/3/114, इतिक्तः ।

[1]'हसनम्, [2]'इच्छतिभोक्तुम्' [3]'ईषत्पानः सोमो भवते'त्यादौ क्रमशः [4]यञ् [5]लिङ्लोट् [6]खल् प्रत्ययानामभाव इत्यत्रैव प्रबन्धेऽन्यत्र[7]निरूपितमिति नेह प्रतन्यते । स्त्र्यधिकारात्' परेणे'तिवचने यन्निवेशितं तत्फलं तु 'योऽन्योऽजादिप्रत्ययापवादः स्त्र्यधिकाराप्राग्- भूतस्तत्र वासरूपविधिर्भवत्येवेति । यथा– 'आज्विधौ भयादीनामुप[8]-संख्यानम्' इत्यज्विषये [9]वाऽसरूपविधिना ल्युडपि भवति[10], [11]भयं, [12]भयनम्, [13]वर्षं, [14]वर्षणमिति ।

## कृत्वोऽर्थ इतिशब्दः

[15]द्विस्त्रिश्चतुरिति कृत्वोऽर्थे' इत्यत्र चतुरो विशेषणं कृत्वोऽर्थ इतिशब्दः ''सहचरितासहचरितयोः [16]सहचरितस्यैव ग्रहण'मिति– परिभाषाऽनित्येति वचनस्य[17]ज्ञापकः ।

---

1. 'हसे हसने' धा. पा. भ्वा. 721, इतिहसधातोः 'ल्युट्च'– अष्टा. 3/3/115, इतिल्युट् ।
2. 'भुज पालनाभ्यवहारयोः' धा. पा. रुधा. 1454, इतिभुजधातोः 'समानकर्तृकेषु तुमुन्'– अष्टा. 3/3/158, इतितुमुन् ।
3. 'पा पाने' धा. पा. भ्वा. 925, इतिपाधातोः 'आतोयुच्'– अष्टा. 3/3/128, इतियुच् ।
4. 'भावे' अष्टा. 3/3/18
5. 'इच्छार्थेषु लिङ्लोटौ'– अष्टा. 3/3/157
6. 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्'– अष्टा. 3/3/126
7. 'अर्हेकृत्यतृचश्च'– अष्टा. 3/3/169 इत्यत्रत्यकृत्यतृच्छब्दज्ञापकत्वनिरूपणावसर इत्यर्थः
8. वा. का. 3/3/56
9. 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94
10. 'कृत्यल्युटोबहुलम्'–अष्टा. 3/3/113
11. 'ञिभी भये' धा. पा. जुहो. 1084, इतिभीधातोः' अज्विधौ भयादीनामुपसंख्यानम्' वा. का. 3/3/56, इतिअच् ।
12. 'ञिभी भये' धा. पा. जुहो. 1084, इतिभीधातोः 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94. इतिपरिभाषया 'कृत्यल्युटोबहुलम्'– अष्टा. 3/3/13, इतिल्युट् ।
13. 'वृषु सेचने' धा. पा. भ्वा. 706, इति वृषधातोः 'अज्विधौ भयादीनामुपसंख्यानम्' वा. का. 3/3/56, इतिअच् ।
14. 'वृषु सेचने' धा. पा. भ्वा. 706, इतिवृषधातोः 'वाऽसरूपोऽस्त्रियाम्'– अष्टा. 7/1/94. इतिपरिभाषया 'कृत्यल्युटोवहुलम्' – अष्टा. 3/3/13 वा. का. 3/3/56, इतिल्युट् । तथाच व्याकरणमहाभाष्ये 'वृषभो वर्षणा'दित्युक्तम्– 1/1/1
15. अष्टा. 8/3/43
16. (क) व्याडिः प. पा. प. 67, पृ. 40
    (ख) पु. दे. ल. प. वृ. प. 49, पृ. 134
    (ग) सी. दे. बृ. प. वृ. प. 115, पृ. 266
    (घ) नी. दी. प. वृ. प. 99, पृ. 311
    (ङ) ह. भा. प. भास्क. प. 117, पृ. 370
    (च) भ. ना. प. शे. प. 112, पृ. 346
    (छ) शे, षा. प. भास्क. प. 95, पृ. 454
17. तथाहि–

यतोऽस्य वचनस्याभावे– 'चतुःकपाल'[1] इत्यादौ [2]द्विस्त्रिः शब्दयोस्सुजन्तत्वेन कृत्वोऽर्थकत्वात्ताभ्यां साहचर्यात् कृत्वोऽर्थकश्चतुःशब्दो गृह्यत इति हि चतुःकपाल इत्यादौ षत्वाभावः सुलभः । ज्ञापिते चास्मिन्वचनेऽत्र तस्या अप्रवृत्त्या चतुःकपालमित्यादौ षत्वाभावाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [3]'दीधीवेवीटा'मित्यत्र दीधीवेव्योः साहचर्यात् [4]'इटकिटकटी गतौ'इतिइड्धातोर्ग्रहणाभावः, आगमस्येटो ग्रहणं च । अस्यासत्त्वे हि धातोरिटोऽपि ग्रहणाऽऽपत्तिर्दुवारा स्यात् ।

## 'खिष्णु'जिति शब्दः

'कर्त्तरि भुवः [5]खिष्णुच्खुकञौ' इत्यत्रेकाराऽऽदिश्चान्तः 'खिष्णु'जितिशब्दः

---

(क) "अनित्याचेयं परिभाषा शास्त्रे । तच्चानित्यत्वमस्याः 'द्विस्त्रिश्चतुरितिकृत्वोऽर्थे (8/3/43) इत्यत्र चतुरोविशेषणेन कृत्वोऽर्थग्रहणेन ज्ञापितम् । यदि हीयं नित्या स्याद् द्विस्त्रिः शब्दयोः सुच्प्रत्ययान्तयोः साहचर्यदेव कृत्वोऽर्थवृत्तेरित्येव चतुरोऽपि विशेषणं स्यादि ति किं चतुरो विशेषणेन कृत्वोऽर्थग्रहणेन । तेनास्या अनित्यत्वमिति 'दीधीवेवीटाम्' इत्यत्र दीधीवेव्योः साहचर्यात् इटकिटकटी गतावितीटो धातोर्ग्रहणं न भवति, किं तर्हि आगमस्येती"त्याह पु. दे. ल. प. वृ. प. 49 पृ. 134

(ख) "अनित्या चेयम् । तच्चानित्यत्वं 'द्विस्त्रिश्चतुरितिकृत्वोऽर्थे (8/3/43) इत्यत्रन्यास-(अनुन्यास)कारेण कृत्वोऽर्थग्रहणाच्चतुरो विशेषणाद्विज्ञापितम् । यदीयं नित्या स्याद् द्विस्त्रिःशब्दयोः सुच्प्रत्यान्ततया तत्साहचर्यात् कृत्वोऽर्थवृत्तेरेव ग्रहणं सिद्धं चतुरोऽपीति किं कृत्वोऽर्थग्रहणेन । अनित्यत्वे चास्य 'दीधीवेवीटाम्' (1/1/6) इत्यत्र दीधीवेव्योः साहचर्यादिटकिटगतावित्यस्य धातोर्ग्रहणं न भवति, आगमस्य तु भवती"-त्याह. सी. दे. बृ. प. वृ. प. 115, पृ. 266

(ग) "कृत्वोऽर्थग्रहणं तु 'साहचर्यं न सर्वत्र व्यव्स्थापकमित्यत्र ज्ञापक"मित्याह ज्ञा. भि. त. बो. विसर्गसंधि प्र. पृ. 78

(घ) "अव्यापकश्चायम् । 'द्विस्त्रिश्चतु'रित्यत्र (8/3/43) कृत्वोऽर्थग्रहणात् । तेन 'दीधीवेवीटाम्' (1/1/6) इत्यत्र आगमस्य इटो ग्रहण"मित्याह ह. भा. प. भास्क. प. 117, पृ. 370

(ङ) "द्विस्त्रिश्चतुः' इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणा-देषाऽनित्या । तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहण"मित्याह भ. ना. प. शे. प. 112, पृ. 346-347

(च)"अयं न्यायोऽनित्यः । 'द्विस्त्रि.' (8/4/43) इतिसूत्रे सुजन्ताभ्यां द्विस्त्रिःशव्दाभ्यां साहचर्याच्चतुःशब्दस्यापि सुजन्तस्य ग्रहणे सिद्धे तदर्थं कृत्वोऽर्थग्रहणा"दित्याह शेषा. प. भास्क. प. 95, पृ. 455

1. चतुर्षु कपालेषु संस्कृतः पुरोडास इत्यर्थे 'संस्कृतं भक्षाः' (अष्टा.- 4/2/16 इत्यणि विवक्षिते 'तद्धितार्थो..' (अष्टा. 2/1/51) इतिसमासे 'द्विगोर्लुगनपत्ये' (अष्टा. 4/1/88) इत्यणो लुकि रूपम् । अत्र चतुश्शब्दस्य कृत्वोऽर्थेऽवृत्ते न तद्विसर्गस्य षत्वविकल्पः, किन्तु 'इदुदुप...' (अष्टा. 8/3/41)) इति नित्यमेव षत्वं भवति ।
2. 'द्वित्रिचतुर्भ्यः सुच्'– अष्टा. 5/4/18
3. अष्टा. 1/1/6
4. धा. पा. भ्वा. 318, 319, 320
5. अष्टा. 3/2/57 'आढ्यादिषु सुबन्तेषूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच्खुकञ्इत्येतौ प्रत्ययौ भवतः 'इतिसूत्रार्थमाह जया. का. 3/2/57

'लक्षणप्रतिपदोक्तयोः [1]प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्ये'ति परिभाषाया [2]ज्ञापकः । यतोऽस्या अभावेऽत्र गृस्नुरित्युक्तावपि– [3]भवतेरुदात्तत्वादिटि[4]सति

---

1. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्'–
व्याडिः प. सू. प. 3, पृ. 3
(ख) पु. दे. ल. प. वृ. प. 3, पृ. 113
(ग) सी. दे. बृ. प. वृ. प. 39, पृ. 208
(घ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'–
नी. दी. प. वृ. प. 102, पृ. 311
(ङ) ह. भा. प. भास्क. प. 41, पृ. 341
(च) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'–
भ. ना. प. शे. प. 114, पृ. 348
(छ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'–
शेषा. प. भास्क. प. 97, पृ. 455
2. तथाहि–
(क) "तस्य ज्ञापकं 'कर्त्तरि भुवः खिष्णुच्खुकञौ' (3/2/57) इतिखिष्णुज्ग्रहणम् । कथं कृत्वा ज्ञापकम् । अयं खिष्णुच् किमर्थमिकारादिः क्रियते । न च क्स्नुरेवोच्यते । तत्राप्ययमर्थः चित्करणं न कर्तव्यं भवति । एकाचश्चित्करणानर्थक्यम् । प्रत्ययस्वरेण कृतत्वादिति । का रूपसिद्धिः । आढ्यम्भविष्णुरिति । इड्गुणावादेशमूर्धन्येषु कृतेषु सिद्धं भवति । सत्यमेवैतत् । स्वरे तु दोषो भवति । आढ्यंभविष्णुरित्यत्र 'कृत्योकेष्णुच्चावार्दयश्च' (6/2/160) इति इष्णुज्ग्रहणेन ग्रहणं न प्राप्नोति । किं कारणम् । नायमिष्णुच् किंतर्हि । क्स्नुः । ननु चायमिण्मूर्धन्ययोः कृत्योरिष्णुर्भवति । सत्यं भवति किन्त्वत्र गुणो न प्राप्नोति कित्त्वात् । नायं ककारः कस्तर्हि । खकारश्चर्त्वभूतो निर्दिश्यते । एवमप्ययमिष्णुर्भविष्यति । यत्र सूत्रे इष्णुज्गृह्यते तत्रापि सूत्रे इस्न चार्वादयश्चेति वक्ष्यामी"त्याह व्याडिः प. सू. प. 3, पृ. 3
(ख) "ज्ञापकं चास्याः कर्त्तरि भुवः खिष्णुच्खुकञौ' (3/2/57) इतिखिष्णुच इकारादित्वम् । तद्धि न रूपसिद्ध्यर्थम् । भुव उदात्तत्वादिटि सति आढ्यंभविष्णुरित्यस्य सिद्धत्वात् । किं तर्हि नञः 'कृत्योकेष्णुच्चार्वादयश्च' (6/2/160) इतिकृदजादित्वात् स्वरविधौ प्रतिपदोक्तग्रहणं यथा स्यात्तेनानाढ्यंभविष्णुरित्यत्र नञ उत्तरस्येष्णुजन्तस्यान्तोदात्तत्वं यथा स्यादिति । इटि तु कृते इष्णुचोऽस्य लाक्षणिकत्वान्नात्र ग्रहणं स्यादिति खिष्णुच इकारादित्वमस्याः परिभाषाया ज्ञापकमित्याह पु. दे. ल. प. वृ. प. 3, पृ. 113
(ग) "ज्ञापकं चात्र 'कर्त्तरि भुवः खिष्णुच्खुकञौ' (3/2/57) इत्यत्र खिष्णुच इकारादित्वम् । तदुक्तम्–
उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिष्णुचः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ।। इत्याह सी. दे. बृ. प. वृ. प. 39, पृ. 209
(घ) "परिभाषायां ज्ञापकं तु 'कर्त्तरि भुवः खिष्णुच्खुकञौ, (3/2/57) इत्यत्र खिष्णुच इकारादित्वम् । अन्यथा हि इडागमेनैव तत्सिद्धौ व्यर्था स्यात् । सत्यां त्वस्यां 'कृत्योकेष्णुच्चार्वादयश्च' (6/2/160) इत्यत्रास्य लाक्षणिकत्वाद्ग्रहणं माभूदिति-तत्सार्थकमित्याहुः'– इत्याह ह. भा. प. भास्क. प. 41, पृ. 341
3. 'भू सत्तायाम्' धा. पा. भ्वा. 1
4. 'आर्धधातुकस्येड्वलादेः– अष्टा. 7/2/35

[1]गुणावादेश[2]मूर्ध[3]न्येषु कृतेषु '[4]आढ्यंभविष्णु'रित्यस्य सिद्धिः सुलभा । न चात्र 'एकाच[5]उपदेशेऽनुदात्ताद्' इतीट्प्रतिषेधः शङ्क्यः । उदात्तादितरो ह्यनुदात्तः । नापि [6]चित्स्वरासिद्धिः शङ्क्या । यतः क्स्नोरेकाच्त्वेन प्रत्ययस्वरेणैव[7] चित्स्वरोऽन्यथासिद्धः । न चात्र क्स्नोर्विधाने 'अनाढ्यंभविष्णुरित्यत्र 'कृत्योकेष्णुच्चार्वादयश्चे'ति[8] नञ उत्तरस्योत्तरपदस्य विहितमन्तोदात्तत्वं न सिद्ध्येद्यतः क्स्नुर्न इष्णुसिति शङ्क्यम् । यतोऽ[9]त्रेण्मूर्धन्ययोः[10] कृतयोः क्स्नुरपि भवति इष्णुरिति[11]स्वरवधौ क्स्नोरपि ग्रहणं सुलभम् । न च 'आढ्यंभविष्णु'रित्यत्र खिष्णुच्प्रत्यये सति गुणो भवति, क्स्नुप्रत्यये तु कित्त्वात् 'क्ङिति चे'ति[12] निषेधेन गुणो[13] न सिद्ध्येद्रिति शङ्क्यम् । यतः क्स्नावप्युपदेशे ककारो नास्ति, किन्तु खकार एव । खकारस्य चर्त्वे कृते हि क्सनुरित्युच्यते । ज्ञापितायाञ्चास्यां स्वरविधौ[14] 'असुभ्रगम्भविष्णु'रित्यादौ इष्णुग्रहणेन इण्मूर्धन्ययोः कृतयोः इष्णुरूपतां प्राप्तस्य क्नोग्रर्हहणं न स्यादिति तत्र तद्ग्रहणायायं शब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः परिभाषायाः 'अनुमेय-प्रत्यक्षयोः प्रत्यक्षस्यैव ग्रहणं, न त्वनुमेयस्ये'त्यर्थः । यतोऽत्र लक्ष्यत इति व्युत्पत्त्या [15]लक्षणशब्दस्यानुमेयमित्यर्थः प्रतिपदोक्तशब्दस्य च प्रत्यक्षमित्यर्थः । तदुक्तम्–"वस्तुतः प्रत्यक्षानुमानयोः प्रत्यक्षं बलीय इति न्यायसिद्धैवेयं परिभाषेति[16] । ज्ञापिताया अस्याः फलन्तु 'अध्याप्य गतः'

---

1. 'सार्वधातुकार्धधातुकयोः'– अष्टा. 3/3/84
2. 'एचोऽयवायावः'– अष्टा. 6/1/78
3. 'आदेशप्रत्ययोः– अष्टा. 8/3/59
4. अनाढ्य आढ्यो भवतीत्यर्थे आढ्यमितिसुबन्तोपपदात् 'भूसत्तायाम्' - धा. पा. भ्वा. 1, इतिभूधातोः 'कर्तरि भुवः खिष्णुच्खुकञौ' - अष्टा. 3/2/57, इतिखिष्णुच्प्रत्यये कृदन्तप्रातिपदिकत्वात्सुपो लुकि खित्वान्मुमि भुव उकारस्य गुणेऽवादेशे मकारस्यानुस्वारे विभक्तिकार्येषु- कृतेषु रूपमिदम् ।
5. अष्टा. 7/2/10 ।
6. 'चितः' - अष्टा. 6/1/163 ।
7. 'आद्युदात्तश्च' - अष्टा. 3/1/3 ।
8. अष्टा. 6/2/160 ।
9. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35 ।
10. 'आदेशप्रत्यययोः' - अष्टा. 8/3/59 ।
11. 'कृत्योकेष्णुच्चार्वादयश्च' - अष्टा. 6/2/160 ।
12. 'अष्टा. 1/1/5.
13. सार्वधातुकार्धधातुकयोः - अष्टा. 7/3/48 ।
14. कृत्योकेष्णुच्चार्वादयश्च - अष्टा. 6/2/160—कृत्य उक इष्णुच् इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्तीति सूत्रार्थमाह वाम. का. 6/2/160.
15. लक्ष दर्शनाशङ्क्योः - धा. पा. चुरा. 1539 इति लक्षधातोः 'कृत्यल्युटो बहुलम्' अष्टा. 3/1/113, इति ल्युटि रूपमिदम् ।
16. ह. भा. पा. भास्क. प. 41 पृ. 341.

इत्यत्र [1]इङो [2]णिचि "[3]क्रीङ्जीनां णा"- वित्यात्वे कृते [4]पुकि च सति इङ आबूरूपत्वेऽपि लाक्षणिकत्वाद्[5] "विभाषाऽपः" इति णेरयादेशाभावः तथा[6] "विभाषा दिक्समासे बहुव्रीहा-"विति सर्वनामसंज्ञायां"[7] दिङ्नामान्यन्तराले" इति विहितस्य प्रतिपदोक्तस्यैव दिक्समासस्य ग्रहणं भवति 'दक्षिणपूर्वस्ये'इत्यत्र दक्षिण-पूर्वेत्यस्य, न तु या पूर्वा सोत्तरा यस्योन्मुग्धस्य स पूर्वोत्तरस्तस्मै' पूर्वोत्तराय देही'-त्यत्र पूर्वोत्तरस्येति । अस्याअसत्त्वेहि यथा '[8]प्रापय्ये'त्यत्र णेरयादेशो[9]भवति, तथा 'अध्याप्य गतः' इत्यत्रापि णेरयादेशाऽऽपत्तिः[10], 'दक्षिणपूर्वस्यै'इत्यत्र यथा 'दक्षिणपूर्वे'- त्यस्य सर्वनामसंज्ञा[11]भवति, तथा 'पूर्वोत्तराय देही'त्यात्रापि 'पूर्वोत्तरे'त्यस्य सर्वनाम[12]- संज्ञाऽऽपत्तिश्च दुर्वारे स्याताम् । जयादित्यस्तु 'अनाढ्यंभविष्णु'रित्यत्र नञः [13]स्वर-सिद्ध्यर्थं खिष्णुच इकाराऽऽदित्वं चरितार्थमिति [14]मनुते । जिनेन्द्रबुद्धिनापि खिष्णुच इकाराऽऽदित्वस्य चारितार्थ्यमुपपादितम्[15] । हरदत्तमिश्रस्तु खिष्णुच इकाराऽऽदित्वस्य

---

1. इङ् अध्ययने नित्यमधिपूर्वः- धा. पा. अदा. 1121.
2. 'तत्प्रयोजको हेतुश्च' अष्टा. 1/4/55, 'हेतुमति च' अष्टा. 3/1/26.
3. अष्टा. 6/1/48.
4. 'अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' अष्टा. 7/3/36.
5. अष्टा. 6/4/57.
6. अष्टा. - 1/1/28
7. अष्टा. 2/2/26.
8. प्र पूर्वकात्' आप्लृ गतौ धा. पा. स्वा. 1342, इतिआप्धातोर्ण्यन्तात् 'समानकर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21, इतिक्त्वाप्रत्यये प्रशब्देन समासे 'समासेऽनञ्पूर्वेक्त्वोल्यप्' -अष्टा. 7/3/37, इतिल्यपि 'विभाषाऽऽपः' - अष्टा. 6/4/57, इतिणेरयादेशे रूपमिदम् ।
9. 'विभाषाऽऽपः' - अष्टा. 6/4/57 ।
10. 'विभाषाऽऽपः' - अष्टा. 64/57 ।
11. 'विभाषा दिक्समासे बहुव्रीहौ' - अष्टा. 1/1/28 ।
12. 'विभाषा दिक्समासे बहुव्रीहौ' - अष्टा. 1/1/28 ।
13. 'कृत्योकेष्णुच्चार्वादयश्च' - अष्टा. 6/2/160 ।
14. तथाहि -

    "उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिष्णुचः ।
    नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ।।" - इत्याह जया. का. 3/2/57 ।

15. तथाहि - "यदि खिष्णुच इकारादित्वं न क्रियते, ततो यद्यपीटि कृते सतीकारादित्वं तस्य भवति, तथापि तस्य लाक्षणिकत्वात् "कृत्योकेष्णुच्चार्वादयश्च" इत्यत्रेष्णुज्ग्रहणेन न ग्रहणं स्यात् । ततश्चानाढ्यम्भविष्णुरिति नञ उत्तरस्योत्तरपदस्यान्तोदात्तत्वं न स्यात्, इष्यते च । अतो नञ उत्तरस्योत्तरपदान्तोदात्तत्वम्, तेनेकारादित्वमिष्णुचः क्रियते । ननु च सत्यपीकारादित्वे अलंकृञादिसूत्रे विहितस्यैवेष्णुचो ग्रहणेन भवितव्यम् नेतरस्य, तस्यैकानुबन्धकत्वात्, अस्य द्व्यनुबन्धकत्वात् ? इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भवतीत्यदोषः । खकारो मुमर्थः, चकारः स्वरार्थः" - इत्याह जि. बु. न्या. 3/2/57 ।

प्रयोजनं चिन्त्यमित्यङ्गीकृतम्[1]। व्याडिरपि खिष्णुच इकाराऽदित्वस्य ज्ञापकत्वमुपपाद्य तन्निराकृत्य च सिद्धान्ते [2]ज्ञापकान्तरमस्यामुपन्यस्तवान्[3]। अत्र निर्दुष्टत्वाद् व्याडिमतमेव युक्तं विभाव्य नास्य शब्दस्य परिभाषाया अस्या ज्ञापकत्वमिति निश्चीयते।

## 'गुण'इति वृद्धिरिति च शब्दौ

'[4]ओर्गुणः'इति सूत्रे गुण' इतिशब्दः 'उतो वृद्धिर्लुकि हलि'[5] इतिसूत्रे वृद्धिरितिशब्दश्च 'संज्ञापूर्वको विधिरनित्यः[6] 'इतिपरिभाषाया[7]ज्ञापकौ। यतोऽस्या

1. तथाहि – "यद्ययमिकारादिर्न क्रियते, ततः सत्यपीटि"कृत्योकेष्णुच्चार्वादयश्च"इत्यस्य ग्रहणं न स्यात्, अस्य चकाराभावात्। अथास्यापि चकारःक्रियेत ? एवमपि लाक्षणिकत्वात् षत्वणत्वयोश्चासिद्धत्वादिष्णुजितिरूपाभावाद् ग्रहणं न स्यादेव, तत इकारादित्वं क्रियते। ननु च सत्यपीकारादित्वे"तदनुबन्धकग्रहणे नातदनुबन्धकस्य" "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" इति वा अलंकृञादीष्णुच एव ग्रहणेन भवितव्यम्, नास्य ? इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीति मन्यते। यद्येवं खिष्णुजयमस्तु, तत्र षत्वणत्वयोश्चकारस्य च करणसामर्थ्यादिटि कृतेऽस्यापि ग्रहणं सिद्धमिति चिन्त्य-प्रयोजनमिकारादित्व"मित्याह ह. मि. पदम. 3/2/57।
2. व्रीह्यादौ प्रवृद्धशब्दपाठः।
3. तथाहि – अथवा इदं तावदयं प्रष्टव्यः। अथास्मिन् क्रुस्नुचि क्रियमाणे कस्य ग्रहणं स्यात्। ताच्छीलिकस्यालंकृञादिपठितस्य। अयमपीष्णुरेव यथा व्याख्यानम्। तस्मान्नार्थ इदादिग्रहणेन। एवं सिद्धे सति यदिदादिग्रहणं करोति तज्ज्ञापयति – 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणं भवति। अलंकृञादिषु - (3/3/136) च प्रतिपदमिष्णुः क्रियते। अयं पुनरक्रियमाणे इजादित्वलक्षणेन इष्णुच् क्रियते। नैतदस्ति ज्ञापकम्। असत्यां परिभाषायामवश्यमयमिकारादिः कर्तव्यः। मूर्धन्येन निर्देशं करिष्यामि। अस्य हीडागमे पूर्वत्रासिद्धमितिलक्षणेन क्रियमाणं षत्वमसिद्धं भवति। तेनायमिष्णुर्भवति। स च इष्णुरुच्यते। ननु चायमलंकृञादिसूत्रे (3/2/136 इष्णुच् क्रियते, कुत एतत्। षत्वानित्यत्वज्ञापनार्थं मूर्धन्येन पठ्यते तदपि ज्ञापितं स्यात्। एवं च सति लाक्षणिकं षत्वमसिद्धं भवति। तस्मादवश्यं खिष्णुच् र्कतव्यः सामान्यग्रहणार्थः न ज्ञापकार्थः। इदं तर्हि ज्ञापकं व्रीह्यादिमहाप्रवृद्धेति तत्र प्रवृद्धग्रहणम्। कथं कृत्वा ज्ञापकम्। अत्र प्रवृद्धग्रहणं नाख्यातव्यम्। कथं महाप्रवृद्ध इति। पूर्वपदप्रकृतिस्वरो भविष्यति 'कर्मधारायेऽनिष्ठा' (6/2/46) 'क्ते च' (6/2/45)। तत्र हि 'अर्थे' 'क्ते' (6/2/44, 45) इत्यतः प्रभृति क्त इत्यनुवर्तते महच्छब्दश्चानिष्ठा। एवंसिद्धे सति यद्व्रीह्यादिषु प्रवृद्धशब्दं पठति तज्ज्ञापयत्याचार्यः प्रवृद्धशब्दश्चक्तान्तः यत्र पूर्वोत्तरपदानि प्रतिपदमुच्यन्ते तत्रायं विधिर्भवति। क्व च पूर्वोत्तरपदानि प्रतिपदमुच्यन्ते। 'श्रेण्यादयः कृतादिभिः' (2/1/59 इति। अत्र ह्यनिष्ठान्तानि पूर्वपदानि क्तान्तानि चोत्तरपदानि। महाप्रवृद्ध इति पुनः 'सन्महत्परमोत्तम.' - (2/1/61) इत्यत्र पूर्वपदमेव प्रतिपदमेव प्रतिपदोक्तं भवति नोत्तरपदम्। अथ विशेषणविशेष्यसमासः, उभयं नोक्तं भवति। एवं सति किं कृतं भवति। लक्षणप्रतिदोक्तयोः प्रतिपदोक्तस्यैव' इयं परिभाषा कर्तव्या भवती"त्याह व्याडिः प. सू. प. 3, पृ. 3-4।
4. अष्टा. 6/4/146।
5. अष्टा. 7/3/89।
6. (क) व्याडिः प. सू. प. 53, पृ. 25।

अभावेऽत्र सूत्रयोरमू शब्दौ व्यर्थौ । तथाहि - '[1]बाहूबाहवी'त्यादृयर्थम् '[2]ओर्गुणः' इतिसूत्रमारब्धम् । तत्र गुण उकारस्थाने भवन्[3]स्थानसाम्यादोकार एव भवति,

---

(ख) पु. दे. ल. प. वृ. प. 83, पृ.149 ।
(ग) सी. दे. बृ. प. वृ. प. 71, पृ. 235 ।
(घ) नी. दी. प. वृ. प. 78, पृ. 308 ।
(ङ) इ. भा. प. भास्क. प. 73, पृ. 354 ।
(च) भ. ना. प. शे. प. 94, पृ. 328 ।
(छ) शेषा. प. भास्क. प. 81, पृ. 445 ।

7. तथाहि –
(क) "इह यः संज्ञापूर्वको विधिरारभ्यते स किलानित्यो भवति । कथं ज्ञायते । यदयम् - 'ओर्गुणः' (6/4/146) इत्याह । अत्र हि ओर्गुणे क्रियमाणे ओकारो भवति । तत्र लघ्वर्थमोरोदिति वक्तव्यम् । उवर्णस्य ओद् भवति । एवंसिद्धे सति यदयं गुणग्रहणं करोति तत्पश्यति संज्ञापूर्वको विधिरनित्यः । तत इहाप्यनित्यो गुणो यथा स्यात् । संज्ञापूर्वको विधिरनित्य इति । किमेतस्या ज्ञापने प्रयोजनम् । स्वयंभुवोऽपत्यं स्वायभुव इति गुणो न भवती"त्याह व्याडिः प. सू. प. 53, पृ. 25 ।
(ख) " 'ओरोत्' इति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात्, तेन स्वायम्भुव इति सिद्धं भवती"त्याह वाम. का. 6/4/146 ।
(ग) "अयं चार्थः 'ओगुर्णः' ~6/4/146) इत्यत्र गुणग्रहणेन ज्ञापितः । ओरोदिति वक्तव्ये गुणग्रहणं संज्ञापूर्वकत्वेनानित्यत्वमस्य यथा स्यादित्येवमर्थम् । तेन 'धाम स्वायंभुवं ययुः' (कुमार. 2/1) इति ओर्गुणाभावादुवङ्सिद्ध्यती"त्याह पु. दे. ल. प. वृ. प. 83, पृ. 149 ।
(घ) "ज्ञापकं चात्र 'ओरोत्' - इति कर्तव्ये 'ओर्गुणः' (6/4/146) इतिगुणग्रहणम् । तथा 'उतोवृद्धिर्लुकि हलि' (7/3/89) इत्यत्र औदिति कर्तव्ये वृद्धिग्रहणम् । तेन स्तुयादित्यत्र वृद्धिर्न भवती'त्याह सी. दे. बृ. प. वृ. प. 71, पृ. 235-236 ।
(ङ) "ओरो'दिति वक्तव्ये गुणोक्तिः - 'संज्ञापूर्वको विधिरनित्य'इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादिसिद्ध'मित्याह भ. दी.वै. सि. कौ. बहुव्रीहिप्र. पृ. 500-501 ।
(च) "अत्र च ज्ञापकम् - 'ओरोत्' (6/4/146) इति वक्तव्ये गुणग्रहण"मित्याह नी. दी. प. वृ. प. 78, पृ. 308 ।
(छ) "ज्ञापकमत्र 'ओरोत्' - इतिवक्तव्ये गुणग्रहणमेव । तथा 'उतो वृद्धिर्लुकि हलि' (7/3/89) इत्यत्र वृद्धिग्रहणम् । तेन स्तुयादित्यादौ न वृद्धि"रित्याह ह. भा. प. भास्क. प. 73, पृ. 354 ।
(ज) "यत्त्वोरोदितिवाच्ये 'ओर्गुणः'इतिगुणग्रहणात् -'संज्ञापूर्वकविधेरनित्यत्वम्' (प. 94) ....... इत्यादिभाष्यानुक्तं बोध्यम् । स्वायम्भुवमित्यादिलोकेऽसाध्वेवे"त्याह भ. ना. प. शे. पृ. 328-330 ।
(झ) "ज्ञापकम् - 'ओर्गुणः' (6/4/146) इतिसूत्रे 'ओरोत्' - इतिवक्तव्ये गुणग्रहण"मित्याह शेषा. प. भास्क. प. 81, पृ. 445 ।

1. बाहौ बाहौ च परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमितिविग्रहे 'तत्र तेनेदमिति सरूपे' - अष्टा. 22/27 इति समासे समासप्रातिपदिकतया 'सुपोधातु.' - अष्टा. 2/4/71,

ततश्च[1]लाघवात्, 'ओरो'दित्येव सिद्धे गुण इति गुरुनिर्देशो व्यर्थः । तथा '[2]उतोवृद्धिर्लुकिहली'- तिसूत्रं '[3]यौती'त्यादौ वृद्ध्यर्थमारब्धम् । तत्र वृद्धिरुकारस्य स्थाने भवन्[4]स्थानसाम्यादौकार एव भवति, ततश्च लाघवात्[5] 'औ'दित्येव सिद्धे वृद्धिरितिशब्दो व्यर्थः । ज्ञापितायां चास्यां गुणस्य वृद्धेश्च संज्ञापूर्वकत्वेन-क्वचिदभावाय शब्दावमू स्वांशे चरितार्थौ भवतः । ज्ञापिताया अस्या 'विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरनित्य' इत्यर्थः । अन्यथा 'ओंरो'दिति सूत्रितेऽपि 'भस्य' 'तद्धिते' इत्येवंरूपसंज्ञापूर्वकत्वमस्त्येव तथा 'औ'दितिसूत्रेऽपि 'हलि' 'सार्वधातुके' - इत्येवं संज्ञापूर्वकमस्त्येवेति शब्दाविमौ स्वांशे चरितार्थौ न स्याताम् । न च 'ओ'दिति 'औ'दिति च '[6]तपरस्तत्कालस्ये'ति संज्ञे एवेतिशङ्क्यम् । यतोऽत्र विधेयत्वेन तपरत्वे फलाभावात् तकारावुच्चारणार्थविवोपात्तौ स्त इति वक्तुं शक्यम् । फलन्त्वस्याः 'धाम स्वायंभुवं[7]ययु'-रित्यत्र '[8]स्वायंभुव'- मित्यस्मिन्प्रयोगे संज्ञापूर्वकत्वेन '[9]ओर्गुण' इतिगुणाभावः; '[10]युयात्' '[11]स्तुया'दित्यादौ संज्ञापूर्वकत्वेन वृद्धेरभावश्च[12] ।

---

इतिसुब्लुकि 'अन्येषामपि दृश्यते' - अष्टा. 6/3/137 इतिपूर्वपदस्य दीर्घे 'इच्कर्मव्यतिहारे' - अष्टा. 5/4/127 - इतिइचि समासान्ते 'यस्येति च' - अष्टा. 6/4/148 इतिबाधित्वा ओ-र्गुणेऽवादेशेऽव्ययत्वात्सुपो लुकि रूपमिदम् ।

2. अष्टा. 6/4/146 ।
3. 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' - इतिपरिभाषाबलादित्यर्थः ।
1. 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' - इत्युक्तेः ।
2. अष्टा. 7/3/89 ।
3. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1033, इतियुधातोर्लटि तिपि उकारस्य वृद्धौ रूपमिदम् ।
4. 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' इतिपरिभाषाबलादितिशेषः ।
5. 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' - इत्युक्तेः ।
6. अष्टा. 1/1/70 ।
7. कुमार. 2/1 ।
8. 'स्वयम्भुव इद'मित्यर्थे 'तस्येदम्' - अष्टा. 4/3/89 ।
इत्यणि संज्ञापूर्वकत्वेनानित्यत्वादोर्गुणाभावे उवङि आदिवृद्धौ प्रातिपदिककार्ये च कृते रूपमिदम् ।
9. अष्टा. 6/4/146 ।
10. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1033, इतियुधातोर्विधिलिङि तिपि रूपमिदम् ।
11. 'ष्टुञ्स्तुतौ' धा. पा. अदा. 1043, इतिस्तुधातोर्विधिलिङि तिपि रूपमिदम् ।
12. उतो वृद्धिर्लुकि हलि' - अष्टा. 7/3/89 ।

भट्टनागेशस्तु[1] 'संज्ञापूर्वको विधिरनित्यः' इतीयं परिभाषा भाष्ये न दृश्यत इति न स्वीकार्या, स्वायम्भुवमिति प्रयोगस्य लोके साधुता नास्तीति मन्वानः 'ओर्गुणः' इतिगुणग्रहणं नास्यां ज्ञापकमिति स्वीकरोति । नागेशोक्तमिदं न युक्तम् । यतो भाष्यानुक्तत्वं न कस्यापि प्रामाण्ये बाधकम्, अपि तु भाष्यविरोध एव प्रामाण्ये बाधकः । न चेहास्ति भाष्यविरोधः । तस्माद् 'ओर्गुण' इतिगुणग्रहणमस्यां परिभाषायां ज्ञापकमिति मन्ये । कथमन्यथा महाकविकालिदासप्रयुक्तस्य '[2]स्वायं-भुव'-मित्यस्य साधुत्वमुपपाद्येत ।

'उतो वृद्धिर्लुकि[3] हली' तिसूत्रे वृद्धिरितिशब्दस्य ज्ञापकत्वमस्यां परिभाषायां सूत्रसम्मतमेव, न भाष्यसम्मतम् । यतो भाष्ये '[4]ङिच्च पिन्न भवती, त्युक्तम् । युयात् स्तुयादित्यादौ हि पित्त्वप्रतिषेधादेव वृद्धेरभावः सुलभः । न चात्र यासुटो ङिद्वचनात्[5] । 'पिच्च ङिन्न भवती'[6]ति भगवद्वचनेनात्र ङित्त्वेन पित्त्वस्यैव बाधः कुतो नेति शङ्क्यम् । यतो यासुडादेः सार्वधातुकस्य साक्षाच्छिष्टं ङित्त्वमनवकाशम्, तिबादीनां तु पित्त्वं लकारान्तरेषु सावकाशम्, तेन 'ङिच्च पिन्न भवति' इति 'पिच्च ङिन्न भवति' इति वचनद्वयसद्भावेऽपि 'ङिच्च पिन्न भवति' इत्येतदेवात्र प्रवर्तते । न चात्र [7]'क्ङिति चे'ति वृद्धिप्रतिषेधः शङ्क्यः । यतः इक इत्येवमिक्सम्बन्धेन या वृद्धिस्तस्याः सः प्रतिषेधः, इह तु 'उतः' इतिनिर्दिष्टस्थानिकत्वादिक्परिभाषा[8] नोपतिष्ठते ।

## 'गुण'इतिशब्दः

[9]'शीङः सार्वधातुके गुणः 'इत्यत्रैकारे विधातव्ये गुण इतिशब्दः 'उपजात-निमित्तोऽप्युत्सर्ग [10]उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते' इति,

---

1. अनेन हि - "भाष्ये तु न दृश्यते । स्वयंभुव इदमित्यर्थेऽणि स्वायंभुवो लोकेऽसाधुरेव, भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्या"दित्युक्तम्' ओर्गुणः' इत्यस्य व्याख्यानावसरे ल. श. बहुव्रीहिप्र. पृ. 500-571 । तथा प. शे. पृ. 330 ।
2. 'धाम स्वायंभुवं ययुः' - कुमार. 2/1 ।
3. अष्टा. 7/3/89 ।
4. व्या. म. भा. 3/1/4/83 पृ. 154 ।
5. 'यासुट् परस्मैपदेषूदात्तो ङिच्च' अष्टा. 3/4/103 ।
6. व्या. म. भा. 3/1/4/83 ।
7. अष्टा. 1/1/5 ।
8. 'इको गुणवृद्धी' - अष्टा. 1/1/3 ।
9. अष्टा. 7/4/21 ।
10. (क) सी. दे. बृ. प. वृ. प. 93, 251 ।

[1]परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशत' इति च परिभाषयोर्ज्ञापकः[2] । यत एतयोः परिभाषयोरभावेऽत्रैकारे विधातव्ये 'गुण' इतिशब्दो व्यर्थः । तथाहि - अयं हि शब्दः '[3]शेते' - इत्यत्र ङकारस्य एकारो माभूत् किन्त्विकारस्य गुण एकारो भवत्वित्येतदर्थमुपात्तः । एतयोरभावे हि शेते इत्यादिप्रयोगाः उत्सर्गभूतया [4]इत्संज्ञया ङकारलोपानन्तरम्[5] एकारस्यानेन[6] [7]विधानेऽपि सिद्धाः । ज्ञापितयोश्चैतयोः ङकारेत्संज्ञालोपयोः प्रागेव ङकारस्य एत्वं भवेत् तन्माभूदित्येतदर्थमिक्-[8]परिभाषोपस्थानद्वारात्र ईकारस्य गुणो भवत्वेतदर्थं चायं स्वांशे चरितार्थो भवति । ज्ञापितयोरेतयोः फलं तु [9]'ददती'त्यत्र उपजातनिमित्तमप्यन्तरङ्गं [10]'झोन्तः'

---

1. (क) सी. दे. बृ. प. वृ. प. 94, पृ. 251 ।
   (ख) नी. दी. प. वृ. प. 66, पृ. 306 ।
2. तथाहि -
   (क) "ज्ञापकं चात्र 'शीङः सार्वधातुके गुणः' (7/4/21) इत्यत्रैकारे विधातव्ये गुणग्रहणम् । तस्यैतत्प्रयोजनं गुणश्रुत्येक्परिभाषोपस्थानादिक एव स्थाने गुणो यथा स्यादिति । अन्यथा शेते इत्यत्र ङकारेत्संज्ञां बाधित्वैकारः स्यात् । तत्र यद्यन्तरङ्गस्तदा गुण ग्रहणमनर्थकं ङकारे लुप्तेऽन्यथैवेकारस्यैकारादेशप्रसङ्गात् । अतएव शीङः सार्वधातुके गुण इत्यपनीय सर्वधातुकमपिदशीङ इति न कृतम् । न चैवमधिशय्येते इत्यत्र ङित्त्वप्रतिषेधात् 'आतो ङितः (7/2/81) इतीयादेशो न स्यादिति वाच्यम् । यतोऽशीङ इति पञ्चमीनिर्देशाच्छीङ उत्तरस्य प्रतिषेधेन भवितव्यम् । न चाऽशीङ्पर्युदासाच्च सादृश्येनाजन्तत्वाच्चाचो ङित्त्वेन भवितव्यम् पर्युदासस्य ग्रहणात् । अथवा न शीङ इतिपृथगेव क्रियतामिति । तस्मात् परिभाषाद्वयस्य ज्ञापकमिती"त्याह सी. दे. बृ. प. वृ. प. 93, पृ. 251-252 ।
   (ख) "अत्र ज्ञापकं 'शीङः सार्वधातुके गुणः' (7/4/21) इत्यत्र इक्परिभाषोपस्थापकं गुणग्रहणम् । यदाह्येषा न स्यात् तदा शेते इत्यादिकमुत्सर्गभूतया इत्संज्ञया उकारलोपे सति एकारविधानेन सिद्धमिति तन्न कुर्यात् । सत्यां त्वस्यामित्संज्ञां बाधित्वा ङकारस्यैकारो माभूदित्येतदर्थमुपयुज्यते । अतएव 'सार्वधातुकमपित्, न शीङः' - इतिपठित्वा शीङ उत्तरस्य ङित्त्वं न निषिद्धं सूत्रकृते"त्याह ह. भा. प. भास्क. प. 96, पृ. 362 ।
3. 'शीङ् स्वप्ने' धा. पा. अदा. 1032, इति शी धातोर्लटि ते शपि शपो लुकि 'शीङः सार्वधातुके गुणः' - अष्टा. 7/4/21 इतीकारस्य 'क्ङिति च' अष्टा. 1/1/5, इतिसूत्रमपवादत्वात्प्रबाध्य गुणे एकारे कृते रूपमिदम् ।
4. 'हलन्त्यम्' - अष्टा. 1/3/3 ।
5. 'तस्य लोपः' - अष्टा. 1/3/9 ।
6. 'शीङः सार्वधातुके गुणः' - अष्टा. 7/4/21 ।
7. 'अलोऽन्त्यस्य' - अष्टा. 1/1/52, इतिपरिभाषयेतिशेषः ।
8. 'इको गुणवृद्धी' - अष्टा. 1/1/3 ।
9. 'डुदाञ् दाने' धा. पा. जुहो. 1091 इति दाधातो र्लटि झौ श्लौ द्वित्वे झेः 'अदभ्यस्तात्' - अष्टा. 7/1/4, इत्यदादेशे रूपम् ।
10. अष्टा. 7/1/3 ।

इत्यन्तादेशमुपजनिष्यमाणनिमित्तस्य [1]'अदभ्यस्ता'दित्यदादेशस्य सिद्धिः । अन्यथात्रादादेशो न सिद्ध्येत् ।

## 'घसी'ति शब्दः

[2]'शासिवसिघसीनां चे'त्यत्र 'घसी'तिशब्दः 'आदेशप्रत्यययोरित्यत्राऽऽदेशसकारयोः सामानाधिकरण्य'मिति[3]वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्रायं शब्दो व्यर्थः । तथाहि - '[5]जक्षतु'रित्यादौ घसः सकारस्य षत्वार्थमत्र सूत्रे शब्दो ऽयमुपात्तः । स चास्य वचनस्याभावे व्यर्थः, 'आदेशस्य यः सकारः 'इत्येवं वैयधिकरण्येनाऽऽदेशसकारयोरन्वये हि [6]'आदेशप्रत्यययो'रित्यनेनैव हि 'जक्षतु'-रित्यादौ घसेः सकारस्य षत्वं सुलभम् । न च 'घस्लृ[7]अदने' इति घसोऽनादेशस्य षत्वार्थमत्र 'घसी'तिशब्दश्चरितार्थ इतिशङ्क्यम् । यतोऽनादेशस्य घसः सार्वधातुके आर्धधातुके च यत्र लिङ्गं नास्ति वचनं च, तत्र प्रयोगो न भवति । न चात्र मानाभावः शङ्क्यः । यतो 'लिट्यन्यतरस्या'मिति[8] सूत्रमेवात्र[9]मानम् । सर्वत्र हि घसेः प्रयोगे लिटि परतोऽदोऽन्यतरस्यां घस्लादेशविधायकं सूत्रमिदं व्यर्थम् । 'घस्लृ

---

1. अष्टा. 7/1/4 ।
2. अष्टा. 8/3/60 ।
3. अष्टा. 8/3/59 ।
4. तथाहि - " 'आदेशप्रत्यययोरित्यत्र (8/3/59) आदेशसकारयोः सामानाधिकरण्य'मिति शासिवसिघसीनामित्यत्रं (8/3/60) घसिग्रहणात् ज्ञापकात् । वैयधिकरण्ये हि घसिग्रहणमनर्थकं स्यात् । आदेशस्य यः सकारः इत्येव सिद्धेः । न च घस्लृ अदन इत्यनादेशस्य ग्रहणं युक्तं, घस्लृधातोर्लिङ्गेन केनचिद्विना प्रयोगाभावस्य लिट्यन्यतरस्यामित्यत्र (2/4/40) न्यासकारेण ज्ञापितत्वा"दित्याह पु. दे.ज्ञा. समु. एकत्रिंशेमतुपूपादे पृ. 99 ।
5. 'अद भक्षणे' धा. पा. अदा. 1011, इति अद्धातोर्लिटि' लिट्यन्यतरस्याम्' - अष्टा. 2/4/40, इत्यनेन अदोघस्लादेशे लिटस्तसि अतुसादेशे 'जघस् अतुस्' इति स्थिते 'असंयोगाल्लिट्कित्' - अष्टा. 1/2/5, इत्यतुसः कित्त्वात् 'गमहनजनखनघसां लोपः क्ङित्यनङि' - अष्टा. 6/4/98, इत्युपधालोपे तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वेन ककारे सस्य 'शासिवसिघसीनां च' - अष्टा. 8/3/60, इति षत्वेऽतुसः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
6. अष्टा. 8/3/59 ।
7. धा. पा. भ्वा. 715 ।
8. अष्टा. 2/4/40 ।
9. तथाहि - "715 घस्लृ अदने । अयं न सार्वत्रिकः । 'लिट्यन्यतरस्या' - मित्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः" इत्याह भ. दी. वै. सि. कौ. भ्वादि. प्र. पृ. 99 ।

[1]अदने'इत्येतस्य' जघास जक्षतुः जक्षु'रिति, '[2]अदभक्षणे' इत्यस्य 'आद आदतुः आदुरि'त्यस्य च सिद्धिरस्य सूत्रस्याभावेऽपि हि सुलभा । नच घसेः प्रकृत्यन्तरत्वेन प्रयोगे मानाभावः शङ्क्यः । यतोऽत्र 'सृघस्यदः क्मरच्'[3] - इति ततः 'घस्मरः'[4] इत्यत्र क्मरज्विधानमेव मानम् । ज्ञापिते चास्मिन्वचने 'जक्षतु'रित्यादौ घसेरादेशत्वेऽपि तत्सकारस्यानादेशतया 'आदेशप्रत्ययो'रिति षत्वाप्राप्त्या तत्र षत्वार्थमयं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[5]तिस्रः' '[6]तिसृणा'मित्यादौ[7]षत्वाभावः । नच[8] 'त्रिचतुरोः स्त्रिया'मित्यत्राऽऽदेशे सकारोच्चारणसामर्थ्यादत्रप्रयोगेषु षत्वाभावोऽन्यथासिद्ध इतिशङ्क्यम् । यतः 'तिस्रः इत्यत्र 'न रपर[9]सृपिसृजिस्पृशि स्पृहि सवनादीना'मिति षत्वनिषेधेन तत्र सकारोच्चारणं चरितार्थम् । [10]विसंविसम् 'मुसलं[11]मुसल'मित्यादौ [12]षत्वाभावोऽप्यस्य वचनस्य फलम् । अस्य वचनस्यासत्त्वे हि 'तिस्रः' इत्यादौ विसंविस'मित्यादौ च सकारस्याऽऽदेशावयवतया षत्वाऽऽपत्तिर्दुर्वारा स्यात् । न च 'विसंविस'मित्यादौ [13]द्विर्वचनस्याऽऽदेशत्वाभावः शंक्यः । '[14]नित्यवीप्सयो-'रित्याष्टमिकद्विर्वचनं ह्यादेशरूपम् ।

---

1. धा. पा. भ्वा. 715 ।
2. धा. पा. अदा. 1011 ।
3. अष्टा. 3/2/160 ।
4. 'घस्लृ अदने' धा. पा. भ्वा. 715, इति घस्धातोः क्मरचि प्रत्यये रूपमिदम् ।
5. त्रिशब्दाज्जसि शसि वा स्त्रियां 'त्रिचतुरोः स्त्रियां तिसृचतसृ' - अष्टा. 7/2/99, इति त्रिशब्दस्य तिस्रादेशे 'तिसृ + अस्' इत्यवस्थायाम् जसि 'ऋतोङिसर्वनामस्थानयोः' - अष्टा. 7/3/110, इति प्राप्तं 'जसिच'- अष्टा. 7/3/109, वा प्राप्तं गुणं बाधित्वा 'अचि र ऋतः' - अष्टा. 7/2/100, इति ऋकारस्य रेफाऽऽदेशे जसः सकारस्य रुत्वेविसर्गे च रूपमिदम् ।
6. त्रिशब्दादाम्विभक्तौ स्त्रियां 'त्रिचतुरोः स्त्रियां तिसृ चतसृ' - अष्टा. 7/2/99, इति त्रिशब्दस्य तिस्रादेशे 'ह्रस्वनद्यापोनुट्' - अष्टा. 7/1/54, इतिनुडागमे 'तिसृ + नाम्' इत्यवस्थायां 'नामि' - अष्टा. 6/4/3, इति प्राप्तस्य दीर्घस्य 'न तिसृचतसृ' - अष्टा. 6/4/4, इत्यनेन निषेधे नुटो नकारस्य' ऋवर्णान्नस्य णत्वं वाच्यम्' वा. ल. सि. कौ. अजन्तपुंलिङ्ग प्र. पृ. 56, 'ऋवर्णाच्चेतिवक्तम्' वा. का. 8/4/1, इतिणकारे रूपमिदम् ।
7. 'आदेशप्रत्यययोः' - अष्टा. 8/3/59 ।
8. 'त्रिचतुरोः स्त्रियां तिसृ चतसृ' - अष्टा. 7/2/99 ।
9. अष्टा. 8/3/110 ।
10. 'नित्यवीप्सयोः' - अष्टा. 8/1/4, इति द्वित्वे रूपमिदम् ।
11. 'नित्यवीप्सयोः' अष्टा. 8/1/4, इतिद्वित्वे रूपमिदम् ।
12. 'आदेशप्रत्यययोः' - अष्टा. 8/3/59 ।
13. 'नित्यवीप्सयोः' - अष्टा. 8/1/4, इतिविहितस्येत्यर्थः ।
14. अष्टा. 8/1/4 ।

भगवान् भाष्यकारस्तु सूत्रेऽस्मिन् 'घसी'तिशब्दः 'आदेशप्रत्यययोरित्यत्र नानाविभक्त्योरेष समासः 'इतिवचनस्य ज्ञापक इत्याह[1] । तथ्यमिदं भट्टोजिदीक्षितोऽपि न्यरूपयत्[2] । भट्टनागेस्त्वत्र 'प्रत्ययशब्दस्य लक्षणयोभयत्रापि सामानाधिकरण्य'मिति[3]मनुते । तथ्यमिदं ज्ञानेन्द्रभिक्षुवासुदेवदीक्षिताभ्यामपि स्वीकृतम्[4] । तस्मात् पुरुषोत्तमदेवोक्तमस्य शब्दस्यैतद्वचनज्ञापकत्वं युक्तमिति निश्चीयते ।

---

1. "आचार्य प्रवृत्ति र्ज्ञापयति – "नानाविभक्त्योरेष समास' इति, यदयं शासिवसिघसीनां चे'ति घसिग्रहणंकरोति । कथंकृत्वा ज्ञापकम् ? यदि ह्यादेशस्य यः सकार इत्येवं स्याद्घसिग्रहणमनर्थक स्यात् । पश्यतित्वाचार्यः - 'आदेशो यः सकारस्तस्य षत्व'मिति, - ततोघसिग्रहणं करोती"त्याह प. व्या. म. भा. 8/3/2/59 ।
भाष्यमिदं व्याचक्षाणः "नन्वाचार्यस्यार्थेष्ववैभवात् कथं भिन्नप्रस्थानयोर्द्वन्द्वः । उच्यते । एकविभक्त्योरयं द्वन्द्वो, नानाविभक्तितुल्यफलकत्वान्नानाविभक्तिरुक्तः । साद्ग्रहणाद् घसिग्रहणाच्च नोभयत्र सामानाधिकरण्यं वैयधिकरण्यं च । तत्र प्रत्ययावयववृत्तित्वात् प्रत्ययशब्दस्य सामानाधिकरण्येऽपि वैयधिकरण्यफललाभः" इत्याह कै. प्रदी. 8/3/2/59 ।
2. तथाहि – "यदि तु आदेशावयवो गृह्येत तर्हि तिसृणामित्यादौ दोषः । यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात् । यद्यप्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहात् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद् बोध्यः" इत्याह भ. दी. प्रौ. मनो. अजन्तपुंलिङ्गप्र. पृ. 249-250 ।
3. तथाहि – "साद्ग्रहणान्नोभयत्र मुख्यार्थेन सामानाधिकरण्यं, घसिग्रहणाच्च नोभयत्र वैयधिकरण्यं, घसेरादेशत्वेनादेशावयवस्येति षत्वस्य सिद्धत्वेन 'शासिवसी'तिसूत्रे घसिग्रहणवैयर्थ्यापत्तेः । तस्मात् प्रत्ययशब्दस्य लक्षणयोभयत्रापि सामानाधिकरण्यमितिभावः" इत्याह भ.ना. उद्यो. 8/3/2/59 "प्रत्ययशब्दस्तदवयपरो व्याख्यानात् सातेः षत्वनिषेधाल्लिङ्गाच्चे'ति चाऽऽह भ. ना. ल. श. शे. अजन्तपुलिङ्ग प्रं. पृ. 144 ।
4. तथाहि –
(क) यदि तु आदेशावयवो गृह्यते, तर्हि 'तिसृणा'मित्यादौ दोषः । यद्यपि सकारोच्चारणसामर्थ्यात् तत्र षत्वं न स्यात्, तथापि विसम्विसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्यात् । आष्टमिकद्विर्वचनस्यादेशरूपत्वात् । यदि तु 'प्रत्ययो यः सकार' इतिगृह्येत, तर्हि' रामेषु' 'करिष्यती'त्यादौ न स्यात्, किंतु 'इन्द्रो मा वक्षत्' इत्यादावेव स्यात् । इह मनोरमायामेकापि षष्ठी विषयभेदाद् भिद्यत इत्युक्त्वा सहविवक्षाभावेपि सौत्रत्वाद् द्वन्द्व इत्युक्तं' तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायोक्तमिति बोध्य"मित्याह ज्ञा. भि. त. बो. अजन्तपुलिङ्ग ग. प्र. पृ. 105 ।
(ख) "प्रौढमनोरमायां तु आदेशप्रत्यययोरित्येकापि षष्ठी प्रत्ययविषयेअवयवार्थिका, आदेशविषये चाभेदार्थिका । तथा च आदेशस्य प्रत्ययावयवस्य च सकारस्येति लभ्यत इतिप्रत्ययशब्दस्य लक्षणां विनोक्तम् । सहविवक्षाभावेऽपि सौत्रोद्वन्द्व इति च स्वीकृतम् । यदि तु आदेशविषयेऽपि अवयवषष्ठी स्यात् - 'आदेशावयवस्य सस्य ष' इति, 'तिस्रः' 'तिसृणा'मित्यादौ दोषः । न च 'त्रिचतुरोः स्त्रिया'मित्यत्राऽऽदेशे सकारोच्चारणसामर्थ्यान्न षत्वमिति वाच्यं, तिस्र इत्यत्र 'न रपरसृपिसृजिस्पृशि स्पृहि सवनादीना'मिति षत्वनिषेधेन चरितार्थत्वात् । विसम्विसमित्यादौ सकारस्याऽऽदेशावयवतया षत्वापत्तेश्च, नित्यवीप्सयोरित्याष्टमिकद्विर्वचनस्यादेशरूपताया वक्ष्यमाणत्वात् । 'प्रत्ययो यः सकारस्तस्ये'ति व्याख्याने तु जिगीषुरित्यादावेव स्यात् । 'रामेषु'इत्यादौ न स्यात् । अत 'आदेशः प्रत्ययावयश्च यः सकारस्तस्येति व्याख्यातम् । प्रत्ययावयवलक्षणायां तु 'हलिसर्वेषा'मितिनिर्देशो लिङ्ग"मित्याह वा. दी. बा. मनो. अजन्तपुंलिङ्गप्र. पृ. 105 ।

## 'ङी'ति शब्दः

'[1]न ङिसम्बुद्ध्योः 'इत्यत्र 'ङी'तिशब्दः '[2]प्रत्ययलक्षणेन भसंज्ञा[3] न भवती'- ति वचनस्य [4]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र शब्दोऽयं व्यर्थः । तथाहि 'परमे व्योमन्' - इत्यादौ 'सुपां [5]सुलु'गिति ङेर्लुक्यपि तस्य [6]प्रत्ययलक्षणेन व्योमन्नित्यस्य 'सुप्तिङन्तं[7]पंद'मिति पदत्वात् प्राप्तस्य 'नलोपः [8]प्रातिपदिकान्तस्ये'ति नलोपस्य निषेधार्थमत्रायं शब्द उपात्तः । स चास्य वचनस्याभावे व्यर्थः । 'परमे व्योमन्' इत्यादौ हि 'सुपां [9]सुलु'गिति ङेर्लुक्यपि तस्य[10]प्रत्ययलक्षणेन 'यचि [11]भ'मिति भसंज्ञया पदसंज्ञाया[12]बाधात् - 'नलोपः [13]प्रातिपदिकान्तस्ये'ति नलोपस्य प्राप्तिरेव-नास्ति । ज्ञापिते चास्मिनूवचने' - 'परमे व्योमन्' – इत्यादौ भसंज्ञया [14]पद-संज्ञाया[15]बाधाभावेन [16]पदसंज्ञायाः सुलभतया प्राप्तनलोपस्य निषेधार्थमत्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'राजपुरुषः' इत्यादौ भसंज्ञाया[17]अभावः । अस्य वचनस्यासत्त्वे हि' राज्ञः पुरुषो राजपुरुष' इत्यादौ

---

1. अष्टा. 8/2/8 ।
2. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
3. 'यचि भम्' - अष्टा. 1/4/18 ।
4. तथाहि –
   (क) "एतस्मादेव नलोपप्रतिषेधवचनाद् ...... भसंज्ञा च न भवतीति । तथा च – राज्ञः पुरुषो राजपुरुष इत्यत्र नलोपश्च भवति, अल्लोपश्च न भवती"त्याह वाम. का. 8/2/8 ।
   (ख) "न ङिसम्बुद्ध्यो (8/2/8)रिति ङौ नलोपप्रतिषेधो ज्ञापयति 'प्रत्ययलक्षणेन भसंज्ञा न भवती'तिभाष्ये उक्तम् । यदि भवेत् आर्द्रेचर्मन्निति ङे : सुपां सुलुगिति (7/1/39) प्रत्ययलोपलक्षणेन भसंज्ञया पदसंज्ञा बाधितेति किंनिषेधेनेती"त्याह पु. दे. ज्ञा. समु. त्रिंशत्तमे असिद्धपादे पृ.96 ।
   (ग) "न ङिसंबुद्ध्योः (सू. 8/2/8) इतिप्रतिषेधात् ज्ञापकात् न प्रत्ययलक्षणेन भसंज्ञा भवती"त्याह एन्. एस. रामा. ज्ञा. सं. परि. -1, पृ. 142 ।
5. 'सुपां सुलुक् पूर्वसवर्णच्छेयाडाड्यायाजालः' - अष्टा. 7/1/39 ।
6. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
7. अष्टा. 1/1/4 ।
8. अष्टा. 8/2/7 ।
9. 'सुपां सुलुक्पूर्वसवर्णच्छेयाडाड्यायाजालः ' - अष्टा. 7/1/39 ।
10. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
11. अष्टा. 1/4/18 ।
12. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14 ।
13. अष्टा. 8/2/7 ।
14. 'यचि भम्' - अष्टा. 1/4/18 ।
15. 'सुप्ङिन्तं पदम्' - अष्टा. 1/1/14 ।
16. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14 ।
17. 'यचि भम्' - अष्टा. 1/4/18 ।

'सुपो[1]धातुप्रातिपदिकयो'रिति सोर्लुक्यपि [2]प्रत्ययलक्षणेन [3]'यचिभ'मिति भसंज्ञा दुर्वारा स्यात् तथा सति भसंज्ञ या [4]पदसंज्ञाया बाधात् नलोपः [5]प्रातिपदिकान्तस्ये'-ति नलोपो न सिद्ध्येत् [6]अल्लोपाऽऽपत्तिश्च दुर्वारा स्यात् । न च ज्ञापितेऽप्येतस्मिन् वचने 'राजपुरुष 'इत्यादौ 'राजान् -इत्येवमादीनाम् 'अप्रत्ययः'[7] 'इतिप्रतिषेधात् प्रातिपदिकत्वाभावेन नलोपो न सिद्ध्येदितिशङ्क्यम् । यतोऽत्र ङी'तिशब्दः ''प्रत्ययलक्षणेन'[8] 'अप्रत्ययः'[9] इतिप्रातिपदिकसंज्ञाप्रतिषेधो ने'तिवचन-स्यापि ज्ञापकः[10] । यतोऽस्य वचनस्याभावे ज्ञापितेऽपि पूर्वोक्तवचने[11] 'परमेव्योमन्नित्यादौ 'अप्रत्ययः[12] 'इतिप्रतिषेधाद् व्योमन्नित्यादेः प्रतिपदिकत्वाभावेन सत्यपि पदत्वे नलोपस्याप्राप्त्यात्रायं शब्दो ङौ नलोपप्रतिषेधार्थमुपात्तः 'कार्यकालं[13]-संज्ञापरिभाष' मितिपक्षे व्यर्थ एव । ज्ञापिते चास्मिन् वचने 'परमेव्योमन्' इत्यादौ प्रतिपादिक[14] संज्ञायाः सुलभतया पूर्वोक्तवचनात्[15]पदत्वस्याक्षुण्णतया[16] च प्राप्तस्य

---

1. अष्टा. 2/4/71 ।
2. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
3. अष्टा. 1/4/18 ।
4. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14 ।
5. अष्टा. 8/2/7 ।
6. 'अल्लोपोऽनः' - अष्टा. 6/4/134 ।
7. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
9. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
10. तथाहि –
    (क) ''एतस्मादेव नलोपप्रतिषेधवचनाद् 'अप्रत्यय' इतिप्रत्ययलक्षणेन प्रातिपद्रिकसंज्ञा न प्रतिषिध्यते - इति ज्ञाप्यते'' - इत्याह वाम. का. 8/2/8 ।
    (ख) ''न ङिसंबुद्ध्योरिति (8/2/8) नलोपनिषेधवचनं ज्ञापयति - 'प्रत्ययलोपलक्षणेनाप्रत्यय इति (1/2/45) प्रातिपदिकसंज्ञानिषेधो न भवति । तेन राजेत्यत्र पदस्येति (8/1/16) अनुवर्तमाने नलोपः प्रातिप्तिकान्तस्येति (8/2/8) पदस्यान्तो नकारो लुप्यते'' - इत्याह पु. दे. ज्ञा. समु. त्रिंशत्तमे असिद्धपादे पृ, 95-96 ।
11. 'प्रत्ययलक्षणेन भसंज्ञा न भवती'तिवचन इत्यर्थः ।
12. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
13. प. शे. प. 3, पृ. 10 ।
14. 'सुपतिङन्तं पदम्' - अष्टा. 1/1/14 ।
15. 'प्रत्ययलक्षणेन भसंज्ञा न भवती'ति वचनादित्यर्थः ।
16. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14, । इतिपदत्वस्येत्यर्थः । तथाहि - ''ज्ञापकेन चामुना स्वादिष्विति (1/4/17) प्राप्ता पदसंज्ञा न प्रतिप्रसूयते । किं तर्हि सुप्तिङन्तं पदमिति (1/1/14) प्राप्ता । अन्यथा काश्यपिनः कौशिकिन इति न सिद्ध्येत् । अत्र हि काश्यपेन कौशिकेन प्रोक्तमधीयते इंति-प्रोक्तप्रत्ययान्तादध्येतृ - वेदितृप्रत्ययस्य लुकि कृते प्रत्ययलक्षणेन-स्वादिष्विति (2/4/17) पदत्वे नकारलोपः स्यात् । न चासर्वनामस्थान इति शक्यते प्रतिषेद्धुम-

नलोपस्य[1] प्रतिषेधार्थमत्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु कार्यकालपक्षे 'राजे'त्यादौ नलोपसिद्धिः[2] । अस्य वचनस्यासत्त्वे हि 'कार्यकालं[3] संज्ञापरिभाष'मितिपक्षे' अप्रत्ययः[4] 'इतिप्रतिषेधात् प्रातिपदिकसंज्ञाया अभावेन [5]सुलोपानन्तरं'राजे'त्यादौ नलोपो[6] न सिद्ध्येत् ।

ज्ञापकोऽयं सूत्रकारस्यैव[7]सम्मतः, यतो भाष्ये छन्दसि 'परमेव्योमन्' इत्यादौ [8]'अयस्मयादीनिच्छन्दसी'ति भत्वात् [9]पदत्वाभावान्नलोपस्या-[10]प्रसक्तेर्ङौ प्रतिषेधो न कर्तव्य इति - 'ङी'तिशब्दोऽत्र प्रत्याख्यातः[11] । न च 'राजन्यती'त्यत्र लोके राजनीवाऽऽचरतीत्यर्थे 'अधिकरणाच्चे[12]'ति वक्तव्य'मिति क्यचि 'सनाद्यन्ता [13]धातवः' इतिधातुत्वात्तदवयवस्य ङेः'सुपो[14]धातुप्रातिपदिकयो'रितिलुकि 'राजन्ये'-त्यस्मात्तिपि' राजन्यती'त्यत्राप्यन्तर्वर्तिविभक्त्या[15] पदत्वमाश्रित्य[16]नकारस्य [17]लोपप्राप्तौ तन्निषेधार्थं ङिग्रहणस्यात्राऽऽवश्यकतया तत्प्रत्याख्यानमनुपपन्नमिति-शङ्क्यम् । यत एतद्भाष्यप्रामाण्यादेव राजनीवाऽऽचरतीत्यर्थे 'अधिकरणाच्चे'-ति[18] वक्तव्य'मिति क्यचोऽनभिधानमभ्युपगम्यते । अतोऽत्रास्य शब्दस्योक्त-

---

सर्वनामस्थानप्रत्यासत्तेः सर्वनामस्थाननिमित्तपदसंज्ञायाः प्रतिषेधः । इह त्वन्याश्रया पदसंज्ञा **स्यादेवे**ति स्वादिसूत्रे रक्षितः" - इत्याह पु. दे. ज्ञा. समु. त्रिशंत्तमे असिद्धपादे पृ. 96 ।

1. 'नलोपः प्रातिपदिकान्तस्य' - अष्टा. 8/2/7 ।
2. 'नलोपः प्रातिपदिकान्तस्य' अष्टा. 8/2/7 ।
3. प. शे. प. 3, पृ. 10 ।
4. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' - अष्टा. 1/2/45 ।
5. 'हल्ङ्याब्भ्यो दीर्घात् सु-ति-स्यपृक्तं हल्' - अष्टा. 6/1/68, इत्यनेनेतिशेषः ।
6. 'नलोपः प्रातिपदिकान्तस्य' - अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
7. पाणिनेरेवेत्यर्थः ।
8. अष्टा. 1/4/20 ।
9. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14, इत्यनेनेतिशेषः ।
10. 'नलोपः प्रातिपदिकान्तस्य' -अष्टा. 8/2/7 इत्यनेनेतिशेषः ।
11. तथाहि – " 'भत्वात्तु ङौ प्रतिषेधानर्थक्यम्' । ङौ प्रतिषेधोऽनर्थकः । किंकारणम् ? 'भत्वात्' । भसंज्ञाऽत्र भविष्यति । यदि तर्हि भसंज्ञाऽत्र भवति रथन्तरे सामन्नित्यत्र 'अल्लोपोन' इत्यल्लोपः प्राप्नोति । नैष दोषः । उक्त'मुभयसंज्ञान्यपि छन्दांसि दृश्यन्ते' । तद्यथा स सुष्टुभा स ऋक्वता गणेन । पदत्वात् कुत्वं भत्वाज्जश्त्वं न भवति - एवमिहापि पदत्वादलोपो न, भत्वान्नलोपो न भविष्यति । तस्मान्नार्थो ङिग्रहणेने"त्याह पत. व्या. म. भा. 8/2/1/8 ।
12. वा. वै. सि. कौ. नामधातु प्र. पृ. 293 ।
13. अष्टा. 3/1/32 ।
14. अष्टा. 2/4/71 ।
15. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62, इत्यनेनेत्यर्थः ।
16. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14, इत्यनेनेतिशेषः ।
17. 'नलोपः प्रातिपदिकान्तस्य' - अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
18. वा. वै. सि. कौ. नामधातु प्र. पृ. 293 ।

वचनद्वयज्ञापकत्वं वामन - पुरुषोत्तमदेवाऽऽद्यभ्युपगतं न युक्तम् । 'यथोत्तरं मुनीनां प्रामाण्य'[1]मित्युक्तेरिति निश्चीयते ।

## 'ङी'बिति शब्दः

[2]'संख्याव्ययादेर्ङी'बित्यत्र सूत्रे 'ङी'बितिशब्दः 'अनन्तरस्य[3]विधिर्वा भवति प्रतिषेधो वे'तिपरिभाषायां विध्यंशस्य ज्ञापकः[4] । यतोऽस्याभावे 'ऋन्नेभ्यो ङी-'[5] बित्यतो ङीबनुवृत्त्या ङीपो विधानस्यात्र सुलभतया 'ङी'बितिशब्दो व्यर्थः । ज्ञापिते चास्मिन्परिभाषांशे व्यवहिततया[6] ङीपोऽनुवृत्तिर्न सुलभेति ङीषो[7]ऽव्यवहितस्यानुवृत्त्या ङीष एव विधानमापद्येतेति तदभावाय ङीष्शब्दोऽत्र ङीब्विधानसम्पादकतया स्वांशे चरितार्थो भवति ।

नचानन्तरस्य ङीषोऽनुवृत्तावुक्तसूत्र-वैयर्थ्येन सामर्थ्याद् व्यवहितस्यापि ङीपोऽनुवृत्तिसिद्धौ तस्य स्वांशे चारितार्थ्याभाव इतिशङ्क्यम् । यतो ङीपोऽनुवृत्तावपि परिच्छेदकादेश्चेत्सख्यादेरेव असत्त्ववाचकादेश्चेदव्ययादेरेवेति नियमार्थतया 'आढकोध्नी''अग्रेवणोध्नी'त्यादौ ङीषोऽभावायोक्तसूत्रस्य चारितार्थ्येन वैयर्थ्य-

---

1. भ. दी. वै. सि. कौ. अजन्तपुंलिङ्ग प्र. पृ. 113 ।
2. अष्टा. 4/1/26 ।
3. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भ. प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
4. तथाहि –
   (क) "अयं चार्थः प्रत्यासत्तिन्यायलब्धः पठ्यते । ज्ञापकप्याहुः । 'संख्याव्ययादेः' (4/1/26) इतिङीब्वचनम् । तद्धि 'बहुव्रीहेरूधसोऽङीष् (4/1/25) इतिङीषा व्यवहितो ङीविति पुनः क्रियते" इत्याह सी. दे. बृ.प. वृ. प. 48, पृ. 216 ।
   (ख) "अत्र च ज्ञापकमादेशे 'संख्याव्ययादेर्ङीप्' (4/1/26) इति - ङीव्वचनम् । तद्धि अनन्तरस्य ङीष एव विधिर्माभूत् इति क्रियते" - इत्याह नी. दी. प. वृ. प. 51. पृ. 302 ।
   (ग) "अथ परिभाषायां ज्ञापकम् । तत्राद्येंशे 'संख्याव्ययादेर्ङीप्' (4/1/26) इति ङीव् वचनम् । तद्धि ङीषा व्यवहितो ङीप् इति पुनः क्रियते" इत्याह ह. भा. प. भास्क. प. 50, पृ. 344-345 ।
   (घ) "अतएव 'संख्याव्ययादे'रिति ङीब्ग्रहणं चरितार्थम् । तद्ध्यनन्तरस्य ङीषो विध्यभावाये"त्युक्त्या भट्टनागेशो ज्ञापकत्वमस्य सूचयति प. शे. प. 62, पृ. 277 ।
5. अष्टा. 4/1/5 ।
6. 'बहुव्रीहेरूधसोङीष्' - अष्टा. 4/1/25 इत्यनेनेतिशेषः ।
7. 'बहुव्रीहेरूधसोङीष्' - अष्टा. 4/1/25 इत्यतइतिशेषः ।

मूलकोक्तकल्पनाया असम्भदुक्तिकतया स्वांशे तस्य चारितार्थ्यं सूपपद्यते । ज्ञापितस्यास्य फलं तु 'वा छन्दसी'[1]त्यनेन 'सेर्ह्यपिच्चे'[2]त्यनन्तरमपित्त्वं विकल्प्यते, न तु व्यवहितो हिरादेशः, 'प्रीणाहि' 'प्रीणीही'ति[3] । अस्याभावे तु तेन हिरादेशोऽपि विकल्प्येत, तथा सति नेमे इष्टे रूपे सिद्ध्येताम् । फलानन्तर- मप्यस्यात्रैवान्यत्र निरूपितम् ।

## 'चे'ति शब्दः

[4]'सनिग्रहगुहोश्चे'त्यत्र 'श्र्युकोरनुकर्षणार्थश्चेतिशब्दः सर्वविधिभ्य इड्विधिर्बलवानिति[5]परिभाषाया ज्ञापकः[6] । यतो रुरूषति[7] 'लुलूषती'[8]त्यादौ सनि

---

1. अष्टा. 3/4/88 ।
2. अष्टा. 3/4/87 ।
3. 'सार्वधातुकमपित्' इति 'अपित्त्वपक्षे ङित्त्वे 'ई हल्यघोः' - अष्टा. 6/4/113, इति ईत्वे प्रीणीहीति 'प्रीञ् तर्पणे कान्तौ च' धा. पा. क्र्या. 1475 इतिप्रीधातोर्लोटि प्रथमपुरुषैकवचने परस्मैपदे रूपम् । 'प्रीणाहि' इति अपित्त्वाभावपक्षे ङित्त्वाभावात् ईत्वाभावे रूपम् । नात्र हिरादेशोऽपि विकल्प्यते' इत्याशयः ।
4. अष्टा. 7/2/12 ।
5. (क) व्याडिः प. सू. प. 56, पृ. 26 ।
   (ख) पु. दे. प. पा. प. 90, पृ. 150 ।
   (ग) सी. दे. बृ. प. वृ. प. 82, पृ. 242 ।
   (घ) नी. दी. प. वृ. प. 136, पृ. 316 ।
   (ङ) ह. भा. प. भास्क. प. 85, पृ. 358 ।
   (च) भ. ना. प. शे. प. 100, पृ. 330 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् इत्याह ।
6. तथाहि –
   (क) "सर्वेभ्यो विधिभ्य इड्विधिर्बलवान् भवति । कथं ज्ञायते । यदयं 'सनिग्रहगुहोश्च' (7/2/12) इतिचकारेण श्र्युकोऽनुकर्षणं करोति । कथं कृत्वा ज्ञापकम् । अत्रहि चकारोऽनर्थकः । कस्माल्लूञः सनि इण् न । तत्र तावदत्रेण् न भवति । 'इकोझल्' (1/2/9) इतिकित्त्वं तावत् प्रतीक्षते कित्त्वे कृते ''श्र्युकः किति' (7/2/11) इतिइट्प्रतिषेधो भविष्यति । नार्थश्चकारेण । पश्यत्याचार्यः कित्त्वादपि पूर्वमिडागमः । इटि कृते 'इकोझल्' (1/2/9) इति कित्त्वं नास्ति झलिति वचनात् । तस्माच्चकार इट्प्रतिषेधार्थः इगन्तानाम् । किमेतस्या ज्ञापने प्रयोजनम् । श्वयितेत्यत्र सम्प्रसारणात् पूर्वमिट्सिद्धो भवति । इटि कृते 'न क्त्वा सेट् (1/2/18) इतिकित्त्वप्रतिषेधः । असति कित्त्वे संप्रसारणं न भवती'त्याह व्याडिः प. सू. प. 56, पृ. 26 ।
   (ख) 'ज्ञापकं' चात्र यदयं 'सनिग्रहगुहोश्च' (7/2/12) इत्युगनुर्षणार्थं चकारं करोति' अन्यथा हि रुरूषति इत्यादौ ' इकोझल्' (1/2/9) इतिसनः कित्त्वे 'श्र्युकः किति' (7/2/11) इत्येव प्रतिषेधः सिद्ध इति किमुकोऽनुकर्षणेन । पश्यत्याचार्यः 'इड्विधिर्बलवान्' इतितस्मिन्पूर्वे कृते झलादित्वाभावात् कित्त्वं नास्तीति । ततश्चकारेणोगनुकर्षणं करोती"त्याह पु. दे. ल. प. वृ. प. 90, पृ. 150 ।
   (ग) 'ज्ञापकं चात्र 'सनिग्रहगुहोश्च (7/2/12) इत्यत्रोकोऽनुकर्षणार्थं चकारकरणम् । अन्यथा रुरूषतीत्यत्र 'इकोझल्' (1/2/9) इतिसनः कित्त्वे-'श्र्युकः किति' (7/2/11)

इणूनिषेधायात्र 'श्र्युकः[1] किती' त्यत उकोऽनुकर्षणार्थश्चेतिशब्दोऽस्या अभावे व्यर्थः। इटः प्रागत्र सनो झलादित्वेन 'इको झ' लिति[2] कित्त्वे 'श्र्युकः[3] 'किती' त्यनेनैवेण्-निषेधो हि सुलभः। ज्ञापितायां चास्यामनया कित्त्वात् प्रागेवात्रेटः[4] प्रवृत्त्या सति चेटि सनो झलादित्वाभावात् [5]कित्त्वाभावेन पूर्वसूत्रेणेण्[6]निषेधो न प्राप्नोतीति तन्निषेधार्थश्चेतिशब्द उकारानुकर्षणद्वारा स्वांशे चरितार्थो भवति। ज्ञापिताया अस्याः फलं तु 'श्वयित्वे'[7]त्यत्र [8]संप्रसारणात्पूर्वमिटः[9] सिद्धिः। अत्रहि पूर्वमिटि ततो 'न क्त्वासे' डिति[10]कित्त्वनिषेधात् सम्प्रसारणाभावः[11] सिद्ध्यति। अस्या असत्त्वे हि इटः प्रागेव कित्त्वात् सम्प्रसारणाऽऽपत्तिरत्र दुर्वारा स्यात्।

---

इत्येवेट्प्रतिषेधः सिद्ध इति किमुकोऽनुकर्षणार्थेन चकारेण। पश्यत्याचार्योऽन्यत्रेड्-विधिर्बलवानिति प्रथमतस्तस्मिन्कृते झलादित्वाभावात्कित्त्वं नास्तीत्युकोऽनुकर्षणं करोती' त्याह सी. दे. बृ. प. वृ. प. 82, पृ. 242।

(घ) "ज्ञापकमत्र 'सनिग्रहगुहोश्च' (7/2/12) इत्यत्र चकारकरणम्। तद्धि 'श्र्युकः किति' (7/2/11) इत्यतउकोऽनुकर्षणार्थम्। यदीयं न स्यात् तदा' इकोझल्' (1/2/9) इतिकित्त्वादेव' श्र्युकः किति' (7/2/11) इत्यनेन रुरूषतीत्यत्र इडभावे सिद्धे किं तेन। सत्यां त्वस्यां पूर्वमेव इट्प्रवृत्ते झलादित्वाभावात् इकोझल्' (1/2/9) इत्यस्याप्रवृत्तौ सार्थकं तदिती' त्याह ह. भा. प. भास्क. प. 85, पृ. 358।

7. 'रुशब्दे' धा. पा. अदा. 1034, इतिरुधातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' -अष्टा. 3/1/7, इतिसनि' सनिग्रहगुहोश्च' -अष्टा. 7/2/12 इति उगन्तत्वाद् इणूनिषेधे द्वित्वादिकार्येषु कृतेषु 'अज्झनगमां सनि' - अष्टा. 6/4/16 इति द्वितीयोकारस्य दीर्घे सकारस्य षत्वे लटितिपि शपि पररूपे रूपमिदम्।

8. 'लूञ् छेदने' धा. पा. क्रया. 1484 इति लूधातोः 'धातोः कर्मण'- अष्टा. 3/1/7 इति सनि 'सनिग्रहगुहोश्च' - अष्टा. 7/2/12 इतिउगन्तत्वादिणूनिषेधे द्वित्वादिकार्येषु कृतेषु 'अज्झनगमां सनि' - अष्टा. 6/4/16 इति द्वितीयोकारस्य दीर्घे सकारस्य 'आदेश प्रत्यययोः' - अष्टा. 8/3/59 इतिषत्वे लटि तिपि शपि पररूपे रूपमिदम्।

1. अष्टा. 7/2/11।
2. अष्टा. 1/2/9।
3. अष्टा. 7/2/11।
4. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/351।
5. 'इकोझल्' - अष्टा. 1/2/9।
6. 'श्र्युकः किति' - अष्टा. 7/2/11।
7. 'टुओ श्वि गतिवृद्ध्योः' धा. पा. भ्वा. 1010, इति श्विधातोः 'समानकर्तृकयोः पूर्वकाले" - अष्टा. 3/4/21 इति क्त्वाप्रत्यये 'वचिस्वपियजादीनां किति' - अष्टा. 7/1/15 इति सम्प्रसारणात् पूर्वम् 'आर्धधातुकस्येड् बलादेः' - अष्टा. 7/2/35 इतीडागमे ततः 'न क्त्वा सेट्'- अष्टा. 1/2/18 इति कित्त्वनिषेधात् सम्प्रसारणाभावे रूपमिदम्।
8. 'वचिस्वपियजादीनां किति' - अष्टा. 6/1/15।
9. आर्धधातुकस्येड् वलादेः' - अष्टा. 7/2/35।
10. अष्टा. 1/2/18।
11. 'वचिस्वपियजादीनां किति' - अष्टा. 6/1/15।

भट्टनागेशस्तु भाष्यानुक्तत्वादस्या अप्रामाणिकत्वं स्वीकरोति[1] । यत इड्विधेर्बलवत्त्वेनेड्वशी[2]'त्यत इडनुवर्तमाने पुनः [3]'आर्धधातुकस्येड्वलादे'रित्यत्रेड्ग्रहणं ज्ञापकं-प्राचोक्तम्, भाष्यकृता च तस्य प्रत्याख्यानाज्ज्ञापकाभावेन नेयं प्रामाणिकी ।

वस्तुतस्तु भाष्यानुक्तत्वेऽपि भाष्यविरोधाभावादस्यामस्य चेतिशब्दस्य ज्ञापकत्वं युक्तमेवेति मन्ये ।

## 'चिण्ण'लिति शब्दौ

[4]'जाग्रोऽविचिण्णल् ङित्सु' – इत्यत्र 'अविचिण्णल्ङित्सु' - इत्येतद्घटकौ' चिण्णलि'तिशब्दौ 'न गुणाभिनिर्वृत्तस्य[5] वृद्धिर्भवती' तिवचनस्य 'ज्ञापकौ[6] । यतोऽस्य वचनस्याभावेऽत्रामू व्यर्थौ । तथाहि – सूत्रेऽस्मिन् 'अविचिण्णल्ङित्सु' –

---

1. प. शे. प. 100, पृ. 330 ।
2. 'नेड्वशि कृति' - अष्टा. 8/2/8 ।
3. अष्टा. 7/2/35
4. अष्टा. 7/3/85 'जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये चे'तिसूत्रार्थः ।
5. 'गुणशब्देन निष्पन्नो योऽकारः तस्य अत उपधाया इति वृद्धिर्न भवती' ति वचनार्थः ।
6. तथाहि –
   (क) "यदयमचिण्णलोरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'न गुणाभिनिर्वृत्तस्य वृद्धिर्भवती'-तीत्याह प. व्या. म. भा. 7/3/2/85 ।
   (ख) "यद्यनेन गुणे कृतेऽत उपधाया इतिवृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात्, कृते गुणे वृद्ध्या रूपस्य सिद्धत्वात्, तस्माच्चिण्णलोः प्रतिषेध उपधावृद्ध्यभावस्य ज्ञापकः । वृद्धिमात्राभावस्य तु न ज्ञापकः, तथा च ''ह्म्यन्तक्षणे'त्यत्र जागृग्रहणमजागरीदित्यत्र वृद्धिनिषेधार्थं कृतम् । अन्यथा गुणे कृते 'अतोल्रान्तस्ये' - त्यनेन वृद्धिर्न भविष्यतीति किं जागृग्रहणेन?" – इत्याह कै. प्रदी. 7/3/2/85 ।
   (ग) 'वृद्धिविषये, प्रतिषेधविषये च यथा स्यात् – इतिजागर्तेरयं गुण आरभ्यते । तस्मिन्कृते या 'अत उपधायाः 'वृद्धिः प्राप्नोति, सा न भवति । यदि हि स्याद् अनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमर्थक"मित्याह वाम. का. 7/3/85 ।
   (घ) "चिण्णलोः प्रतिषेधस्यैतत्प्रयोजनम् - वृद्धेः श्रवणं यथा स्यात् । यदि तु कृतेऽपि गुणे 'अत उपधायाः' इति स्यात् चिण्णलोः प्रतिषेधोऽनर्थकः स्यात्, अस्त्वत्र गुणः, सत्यपि तस्मिन् पुनरुपधाया - इति वृद्ध्या भवितव्यम्, ततश्च वृद्धेः श्रवणं भविष्यतीती"त्याह जि. बु. न्या. 7/3/85 ।
   (ङ) "यदि गुणे कृते 'अत उपधाया' इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात् । अस्तु तत्रापि गुणः, वृद्धौ सत्यामजागारि, जजागारेति सिद्ध"मित्याह ह. मि.पदमः 7/3/85 ।
   (च) 'जागरयति जागरक इत्यत्र गुणे कृते अत उपधाया इति (7/1/116) वृद्धिर्न भवति । जाग्रोऽविचिण्णल्ङित्स्विति (7/3/85) अजागारि जजागार इत्यर्थं चिण्णलोर्गुण-प्रतिषेधात् ज्ञापका"दित्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 93 ।

इत्येतद्घटकौ 'चिण्णल्'इतिशब्दौ क्रमशः 'अजागारि'[1] 'जजागार'[2] - इत्यादौ चिण्[3]णलोः[4] परे गुणाऽभावायोपात्तौ । तौ चास्य वचनस्याभावे व्यर्थौ । तत्र हि सत्यपि गुणे[5] 'अजागर् इ' 'जजागर् अ' – इत्यवस्थायाम् 'अत उपधायाः'[6] इति वृद्ध्या इष्टरूपसिद्धिः सुलभेति तयोः परे गुणप्रतिषेधायोपात्तावमू शब्दौ व्यर्थौ । ज्ञापिते-चास्मिन् वचने चिण्णलोर्जाग्रो गुणे सति तदभिनिर्वृत्तस्य अकारस्य वृद्धि[7]र्न भवेदिति तयोर्गुणप्रतिषेधायामू शब्दौ स्वांशे चरितार्थौ भवतः । [8]गुणाभावे हि 'अचोञ्णिति'[9] - इति वृद्धौ 'अजागारि' 'जजागार' – इतिरूपसिद्धिर्भवति नाऽन्यथा । ज्ञापितस्यास्य वचनस्य फलं तु 'जागरयति'[10] 'जागरकः'[11] – इत्यादौ गुणे कृते[12] 'अत उपधायाः[13] 'इतिवृद्धेरभावः । अस्य वचनस्यासत्त्वे हि तेन[14] वृद्धेरापत्तिरत्र दुर्वारा स्यात् ।

---

(छ) "जाग्रोऽवि (सू. (7/3/85) । चिण्णलोः प्रतिषेधो ज्ञापयति, न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीती'त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 190 ।

1. 'जागृ निद्राक्षये' धा. पा. अदा. 1072, इति जागृधातोर्भावे लुङि अडागमे ते च्लौ 'चिण्भावकर्मणोः' अष्टा. 3/1/66, इति च्लेश्चिणि ऋकारस्य, 'अजागृ इत' इत्यवस्थायां चिणि परे 'जाग्रो.' - अष्टा. 7/3/85, इति गुणाभावे 'अचोञ्णिति' - अष्टा 7/2/115, इतिवृद्धावाकारे 'उरण्रपरः' 'अष्टा. 1/1/51, इति रपरत्वे 'अजागार इत' - इत्यवस्थायां 'चिणोलुक्' - अष्टा. 6/4/104, इति तशब्दस्य लुकि रूपमिदम् ।
2. 'जागृ निद्राक्षये' धा. पा. अदा । 1072, इतिजागृधातोः कर्त्तरि लिटि तिपि णलि द्वित्वेऽभ्यासकार्येषु कृतेषु 'जजागृ अ' – इत्यवस्थायां णलिपरे ऋकारस्य 'जाग्रो. - अष्टा. 7/3/85 इतिगुणाभावे 'अचोञ्णिति' - अष्टा. 7/2/115, इति वृद्धावाकारे रपरत्वे रूपमिदम् ।
3. 'चिण्भावकर्मणोः' – अष्टा. 3/1/66, इतिविहितेतिशेषः ।
4. 'परस्मैपदानां णलतुसुस्थलथुसुणल्वमाः - अष्टा. 3/4/82 इति विहितेतिशेषः ।
5. 'जाग्रो. - अष्टा. 7/3/85 ।
6. अष्टा. 7/2/116 ।
7. 'अत उपधायाः' - अष्टा. 7/2/116 ।
8. 'जाग्रो. - अष्टा. 7/3/85, इतिविहितेतिशेषः ।
9. अष्टा. 7/2/115 ।
10. 'जाग निद्राक्षये' धा. पा. अदा. 1072 इतिजागृधातोः 'हेतुमति च' - अष्टा. 3/1/26 इतिणिचि तदन्ताल्लटि तिपि शपि 'जागृ इ अ ति' – इत्यवस्थायाम् ऋकारस्य 'जाग्रोऽविचिण्णल्ङित्सु' - अष्टा. 7/3/85, इति गुणेऽकारे रपरत्वे इकारस्य सार्वधातुकगुणेऽयादेशे रूपमिदम् ।
11. जागर्तेः 'ण्वुल् तृचौ' - अष्टा. 3/1/133, इति ण्वुलि वोः 'युवोरनाकौ' - अष्टा. 7/1/1. इत्यकादेशे 'जाग्रोः' - अष्टा. 7/3/85, इति ऋकारस्य गुणे परत्वे कृदन्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
12. 'जाग्रोऽविचिण्णल्ङित्सु' - अष्टा. 7/3/85 ।
13. अष्टा. 7/2/116 ।
14. 'अत उपधाया'' - अष्टा. 7/2/116, इत्यनेनेत्यर्थः ।

## 'च्छि'ति शब्दः

'च्छ्वोः [1]शूडनुनासिके चे'तिसूत्रे 'च्छ्' इतिसतुक्शब्दो '[2]वार्णादाङ्गं बलीय'-इत्यनित्यमिति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याभावेऽत्र च्छ्इति शब्दो व्यर्थः । तथाहि – 'विश्नः' 'प्रश्नः' इत्यादौ हि[4] विच्छिप्रच्छिभ्यां नङ् प्रत्यये 'विछ्+न' 'प्रछ + न' इत्यवस्थायां [5]गुणादन्तरङ्ग[6]त्वात्तुकि[7] कृते 'विच्छ + न' 'प्रच्छ+न' इत्यवस्थायां सतुकश्छस्य शादेशार्थमत्रायमुपात्तः । स च वार्णपरिभाषाया नित्यत्वे हि तयैव तुकः प्राक् शादेशे सुलभे पश्चात्तुकोऽप्राप्त्या व्यर्थः । ज्ञापिते चास्मिन्वचनेऽनेन वार्णस्यापि तुकः[8] शादेशात्प्राक् प्रवृत्तेर्दुवारतया सतुकश्छकारस्य शादेशार्थमयं स्वांशे चरितार्थो भवति । अन्यथा 'विश्नः' इत्यादौ चकारस्यानिष्टस्य श्रवणाऽऽपत्तिः स्यात् । ज्ञापिताया अस्याः फलं तु सिवेरौणादिके[9]नप्रत्यये वकारस्य[10]

---

1. अष्टा. 6/4/19 ।
2. (क) व्याडिः प. पा. प. 39, पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 74, पृ. 144 ।
   (ग) सी. दे. बृ. प. वृ. प. 66, पृ. 231 ।
   (घ) नी. दी. प. वृ. प. 60, पृ. 305 ।
   (ङ) ह. भा. प. भास्क. प. 68, पृ. 351 ।
   (च) भ. ना. प. शे. प. 56, पृ. 238 ।
   (छ) शेषा. प. भास्क. प. 47, पृ. 425 ।
3. तथाहि –
   (क) "अनित्या चेयं 'च्छ्वोः शूडनुनासिके च' - (6/4/19) इतिसतुक्छग्रहणात् । स हि तुकः श्रवणं मा भूदिति क्रियते । यदि च पूर्वं शादेशः स्यात्ततस्तुकोऽप्राप्तेस्तद् वैयर्थ्यं स्पष्टमेवेती"त्याह नी. दी. प. वृ. प. 60, पृ. 305 ।
   (ख) इयं चानित्या 'च्छ्वो'रिति सतुङ्निर्देशात् । अन्यथान्तरङ्गत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवे'त्याह भ. ना. प. शे. प. 56, पृ. 249 ।
   (ग) 'अनित्या चेयम् 'च्छ्वोः.' (6/4/19) इतिसूत्रे सतुक्कग्रहणात् । आङ्गस्य बलीयस्त्वे हि वार्णादन्तरङ्गमपि तुकं बाधित्वा आङ्गत्वात् शादेशसिद्धौ किं सतुक्कग्रहणेन । तेन स्योन इत्यत्राङ्गमपि लघूपधगुणं बाधित्वा अन्तरङ्गो यण् सिद्ध्यती"त्याह शेषा. प. भाष्क. प. 47, पृ. 425
4. 'यज याच यत विच्छ प्रच्छरक्षो नङ्' - अष्टा. 3/3/90 ।
5. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
6. 'असिद्धं वहिरङ्गमन्तरङ्गे' इतिपरिभाषयेत्यर्थः ।
7. 'छे च' - अष्टा. 6/1/73 ।
8. 'छे च' - अष्टा. 6/1/73 ।
9. 'षिवु निरसने' धा. पा. दिवा. 1110 इतिसिवूधातोरित्यर्थः ।
10. 'च्छ्वोः.' - अष्टा. 6/4/19 ।

ऊठि 'सिऊ+न' इत्यवस्थायामूठःस्थानिवद्भावेन[1] प्राप्तमाङ्गमपि लघूपलगुणं[2]बाधित्वा अन्तरङ्गस्य यणः[3] सिद्धिः । अस्य वचनस्यासत्त्वे हि लघूपधगुणस्यात्र दुर्वारतया यण् न सिद्ध्येत् ।

पुरुषोत्तमदेवसीरदेवौ तु च्छितिशब्दो हि 'समानाश्रय एव न तु व्याश्रये 'वार्णादाङ्गं बलीय' इति परिभाषा प्रवर्तते', इति वचनस्य ज्ञापकंइति मन्वाते[4] । तन्न युक्तम् । यतो व्याश्रयेऽप्यस्याः प्रवृत्तिर्नङो ङकारानुबन्धज्ञापनेन लभ्यते । तथ्यमिदमत्रैव प्रबन्धेऽन्यत्र निरूपितम्[5] ।

## 'छस्ये'ति शब्दः

'[6]बिल्वकादिभ्यछस्य लु'गित्यत्र[7] 'छस्ये'तिशब्दः ' संनियोगशिष्टानामन्यतरापाये उभयोरप्यपाय 'इतिपरिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽत्र छस्येति'

---

1. स्थानिवदादेशोऽनल्विधौ' - अष्टा. 1/1/56 ।
2. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।
3. 'इको यणचि' - अष्टा. 6/1/77 ।
4. तथाहि –
   (क) "सा चेयं समानाश्रया एव इति व्याश्रये न प्रवर्तते इति । तत्र 'च्छ्वोः शूट्. (6/4/19) इति सतुक्कस्य छकारस्योपादानं लिङ्गम् । यदि हि वार्णादाङ्गं वलीय इति व्याश्रयेऽपि प्रवर्तते तदा छकारनिमित्तकं वार्णं तुकं बाधित्वा 'विश्नः' इत्यादावनुनासिकनिमित्तोऽङ्गस्य छकारस्य शकारः स्यात् । तत्र च कृते निमित्ताभावात् तच्छकारानाश्रयत्वेन च स्थानिवद्भावात् नास्ति तुगिति किं सतुक्चकारोपादानेन । तंत्कृतमुक्तार्थस्य ज्ञापकं सम्पद्यते" इत्याह पु. दे. ल. प. वृ. प. 74, पृ. 145 ।
   (ख) "अत्र चार्थे 'च्छवोः शूड्नुनासिके च' (6/4/19) इत्यत्र सतुक्कस्य छकारस्योपादानं लिङ्गम् । यदि व्याश्रयेऽपि प्रवर्तते तदा छकारनिमित्तं वार्णतुकं बाधित्वा 'विश्नः' इत्यादावनुनासिकनिमित्तआङ्गच्छकारस्य शकारः स्यात् । तंत्र कृते निमित्ताभावान्नास्ति तुगिति किं सतुक्कच्छकारोपादानेनेति । न चासिद्धपरिभाषया तुगाशङ्कनीयः । तुकः पूर्वमेव बाधितत्वा"दित्याह सी. दे. वृ. प. वृ. प. 66, पृ. 231 ।
5. 'यजयाच.' - अष्टा. 3/3/90, इति नङो ङकारानुबन्धज्ञापनावसरे 'ज्ञापका अनुवन्धाः'इति प्रघट्टके इत्यर्थः ।
6. अष्टा. 6/4/153 ।
7. (क) व्याडि प. सू. प. 41, पृ. 20 ।
   (ख) पु. दे. ल. प. वृ. प. 65, पृ. 140 ।
   (ग) सी. दे. बृ. प. वृ. प. 72, पृ. 236 ।
   (घ) नी. दी. प. वृ. प. 77, पृ. 308 ।
   (ङ) ह. भा. प. भास्क. प. 74, पृ. 354 ।
   (च) भ. ना. प. शे. प. 87, पृ. 319 ।
   (छ) शेषा. प. भास्क. प. 74, पृ. 442 ।
8. तथाहि –

(क) एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यो – 'भवत्येषा परिभाषा संनियोगशिष्टानामन्यतराभाव उभयोरप्यभाव इति । तस्माच्छग्रहणं कर्तव्यं छस्यैव लुग् यथास्यात्तुको माभूदिती"त्याह पत. व्या. म. भा. 6/4/4/153 ।

(ख) 'शास्त्रे चापि ज्ञापकम् । यदयं 'बिल्वकादिभ्यश्छस्य लुक्' (6/4/153) इत्याह । कथं कृत्वा ज्ञापकम् । यदयमस्मिन्सूत्रे छग्रहणं करोति । अत्र हि बिल्वकादिभ्यो लुगित्युच्यमाने 'प्रत्ययस्य लुक्श्लुलुपः' (1/1/61) इत्यनया परिभाषया बिल्वकादिभ्य उत्तरतः तद्धिते परतः नैवान्यप्रत्ययोऽस्ति विना छकारम् । तस्मादत्रान्तरेण छग्रहणं छस्यैव लुग् भवति नार्थश्छकारेण तद्यथा– बिल्वकानामदूरभवं नगरमित्यस्मिन् विग्रहे नडादीनां कुक् च (4/2/91) इत्यनेन बिल्वशब्दाच्छप्रत्ययो भवति कुक् चागमः । 'तत्र भवः 'इतिबिल्वकीया । तस्यां बिल्वकीयायां भव इत्यस्मिन्नर्थेऽण् । तत्र अकृत-व्यूहाः पाणिनीयाः । 'बिल्वक छ'इतिस्थिते अनन्तरेण छवचनं छस्य लुकि कृते-अणोऽपि लुक् प्रसज्यते । अयमपि हि तदा बिल्वकशब्दादुत्तरो भवति । ननु च तद्धित इत्युच्यते नचाण् तद्धितः परोऽस्ति । नैष दोषः । यदा बैल्वकस्येदमित्यस्मिन्विग्रहे वृद्धलक्षणश्छः क्रियते तदाण् तद्धितपरो भवति । तस्मादण्निवृत्त्यर्थं छग्रहणं क्रियते । नैतदस्ति । अत्र ह्यणो लुकि क्रियमाणे 'असिद्धवदत्राभात्' (6/4/22) इति छलुगसिद्धो भवति तेनाणो लुग् भवति तस्मान्नार्थश्छग्रहणेन । एवं सिद्धे यच्छग्रहणं करोति तत्पश्यति प्रत्ययस्य निवृत्तिः क्रियमाणा सागमकस्यापि भवति । तेन कथमिह छस्यैव स्यात् । कुतो माभूदिति । अयं कुक् छसंनियोगशिष्ट इति । एवं सति किं कृतं भवति । 'संनियोगशिष्टानामन्यतरापाये द्वयोरप्यभाव' इत्येषा परिभाषा कर्तव्या भवति । अपर आह – छकारोच्चारणं क्रियते, छकारस्यैव लुग् यथा स्यात् ककारस्य माभूत् इति । तच्च न । प्रत्ययस्य लुगुच्यमानः कः प्रसङ्गो यदप्रत्ययस्य । कुतः पूर्वभक्तस्य स्यादिति । पश्यत्याचार्यः अस्त्येषा परिभाषा यतश्छकारोच्चारणं करोति । किमेतस्याः ज्ञापने प्रयोजनम् । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः, दशेन्द्र इति, स्त्रीप्रत्ययस्य लुकि कृते तत्राऽऽनुकोपि निवृत्तिः सिद्धा भवती"त्याह व्याडिः प. सू. प. 41, पृ. 20 ।

(ग) "छग्रहणं छमात्रस्य लुग् यथा स्यात् कुगागमो मानिर्वृतदित्येवमर्थं क्रियते । यदि चैषा परिभाषा न स्यात् । तदा कुको नैव निवृत्तिः प्राप्नोतीति किं तदभावार्थेन छग्रहणेन "इत्याह कै. प्रदी. 6/4/4/153 ।

(घ) "बिल्वकादिभ्यश्छस्य लुक्' (6/4/153) इत्यत्र छग्रहणेन इयं परिभाषा भाष्ये ज्ञापिता । तत्र ह्युक्तं बिल्वकादिभ्यः इतिकुका निर्देशः । कुक् चायं 'नडादीनां कुक् च' (4/2/91) इतिछप्रत्ययसंनियुक्तस्ततश्च बिल्वकादिभ्यः परः छप्रत्यय एव संभवतीति बिल्वकादिभ्यो लुक् इत्येवमप्युच्यमाने भसंज्ञानिमित्तप्रत्यये छप्रत्ययस्यैव लुग् भविष्यति इति किमिह छग्रहणेन । तत् क्रियते छस्यैव केवलस्य लुग् यथा स्यात् । अन्यथा संनियोगशिष्टानामेकस्यापाये उभयोरप्यपाय इति कुको निवृत्तिः स्यादित्येवायमर्थः । एवं च तदस्याः परिभाषाया अस्तित्वे ज्ञापकमिती"त्याह पु. दे. ल. प. वृ. प. 65, पृ. 140 ।

(ङ) "ज्ञापकमप्यस्या भाष्यकारेण 'बिल्वकादिभ्यश्छस्य लुक्' (6/4/153) इत्यत्र व्याख्या-तम् । तत्र ह्युक्तं बिल्वकादिभ्य इति कुका निर्देशः । कुक् चायं 'नडादीनां कुक् च' (4/2/91) इतिछप्रत्ययसंनियुक्तस्ततश्च बिल्वादिभ्यः परश्छ एव संभवतीति बिल्वका-दिभ्यो लुगित्युच्यमाने भसंज्ञा - निमित्तप्रत्यये छस्यैव लुग् भविष्यति, किं छग्रहणेन ।

शब्दो व्यर्थः । तथाहि – बिल्वा यस्यां सन्ति 'बिल्वकीयां, 'तस्यां भवाः 'बैल्वकाः' –इत्यत्र बिल्वकीयशब्दात् कृतकुगागमक – छप्रत्ययान्तात् 'प्राग्दीव्यतोऽण्'[1] इत्यणप्रत्यये[2] तस्मिन् तद्धितप्रत्यये परे छप्रत्ययस्य लुगर्थं सूत्रेऽस्मिन् 'छस्ये'तिशब्द उपात्तः । अस्या अभावे हि–[3]बिल्वकादिशब्दात् कृतकुगागमात् परश्छ एवास्ति, नान्यः कश्चन प्रत्ययस्तद्धितपर इति 'छस्ये'तिशब्दाभावेऽप्यत्र छस्यैव लुक् स्यान्नान्यस्येत्यसौ शब्दोऽत्र व्यर्थः । ज्ञापितायां चास्यामनयात्र कुकोऽपि निवृत्तिर्माभूदित्येतदर्थं 'छस्ये'तिशब्दः स्वांशे चरितार्थो भवति ।

---

तत्कृतं छस्यैव लुग् यथा स्यात् । अन्यथा संनियोगपरिभाषया कुकोऽपि निवृत्तिः स्यादित्येवमर्थम् । एवं चास्याः परिभाषाया अस्तित्वे ज्ञापक'मित्याह सी. दे. बृ. प. वृ. प. 72, पृ. 236-237 ।

(च) "अत्र च ज्ञापकं 'बिल्कादिभ्यश्छस्य लुक्' (6/4/153) इतिसूत्रे छग्रहणमित्येके" इत्याह नी. दी. प. वृ. प. 77, पृ. 308 ।

(छ) "ज्ञापकमत्र भाष्यकार आह 'बिल्वकादिभ्यछस्य लुक्' (6/4/153) इतिछग्रहणम् । तद्धि 'नडादीनां कुक् च' (4/2/91) इति छप्रत्ययसंनियोगशिष्टस्य कुकोऽनया परिभाषया लुक् माभूत्, किन्तु - छस्यैव यथा स्यादित्येवमर्थमिती"त्याह ह. भा. प. भास्क. प. 74, पृ. 354 ।

(ज) "अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गणबिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन । न चैवमपि छग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धे । अन्यथा बिल्वादिभ्य इत्येव वदेत्, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग-इतिवाच्यम् । ततोऽपि प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽणि'ति विकारार्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्या"दित्याह भ. ना. प. शे. प. 87, पृ. 319-321 ।

(झ) 'ज्ञापकम् – बिल्वादिभ्यश्छस्य लुक्' (6/4/153) इति सूत्रे छग्रहणम् । तद्धि न छस्य लुक्प्राप्त्यर्थम्, बिल्वकेति नडाद्यन्तर्गणीभूतसकुक्कबिल्वादेर्व्याख्यानादग्रहणमिति स्वीकृत्य ततो विहितस्य तद्धिते परतो लुगित्यर्थस्वीकारेण छस्यैव कुग्विशिष्टविधानेन तस्यैव लुक् सिद्धेः । 'नडादीनां कुक् च' (4/2/91) इत्यत्र 'धिन्विकृण्व्योर च' (3/1/80) इतिवत् शब्दक्रमेण प्रथमं कुग्विधीयते, पश्चाच्चानुकृष्टोऽयमिति तस्य कुग्विशिष्टाद्विधानसंभवः । एवं सिद्धे सति छग्रहणं अस्यैव निवृत्तिर्यथा स्यात्, तत्संनियोगशिष्टस्य कुको निवृत्तिर्माभूदित्येवमर्थं सदुक्तपरिभाषाज्ञापक"मित्याह शेषा. प. भास्क. प. 74, पृ. 442-443 ।

(ञ) "बिल्वकादिभ्य(श्च) (श्छस्य) (सू. 6/4/153) अत्र (च) (छ) ग्रहणं ज्ञापयति संनियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इती"त्याह श्रीना. ज्ञा. सं. 6, पृ.115।

1. अष्टा. 4/1/83 ।
2. अत्र 'उत्करादिभ्यश्छः – अष्टा. 4/2/90 'नडादीनां कुक् च' - अष्टा. 4/2/91, इति चातुरर्थिकश्छः, कुगागमश्च भवति ।
3. अष्टा. 6/4/150 ।

नचात्र बिल्वकादिभ्यो लुगित्युच्यते चेत्तर्हि सामान्येन प्रत्ययमात्रस्य लुक् स्यात्तथा सति बिल्वकादित्यादौ सुपोऽपि लुगापत्तिःस्यादिति सुपो लुगभावाय छस्ये'ति शब्दश्च चरितार्थोऽतो नासौ ज्ञापक इति शङ्क्यम् । यतो [1]हलस्तद्धितस्येतिसूत्रादिह सूत्रे तद्धितग्रहणनुवर्तते, तेनात्र सुपो लुक् न प्राप्नोतीति नास्य सुपो लुगभावाय चारितार्थ्यम् । न चैवमपि 'बिल्वकस्यावयवो विकारो वा बैल्वक इत्यत्र 'कोपधाच्चे[1]'त्यणो लुगभावाय 'छस्ये'ति शब्दश्चरितार्थ इति शङ्क्यम् । यतः 'आपत्यस्य[2]च तद्धितेऽनाती'त्यतस्तद्धित इत्यस्यानुवृत्तिर्भवति तथा च 'बिल्वकादिभ्यो भसंज्ञकेभ्यः परस्य तद्धितस्य तद्धिते परतो लुग् भवती'ति सूत्रार्थः सम्पद्यते । न चात्राणः परस्तद्धित इति तस्य लुगेव न प्राप्नोतीत्यणोऽत्र लुगभावाय नासौ चरितार्थः । नापि बिल्वके भवो बैल्वको बैल्वकस्येदं-[3]बैल्वकीय-मित्यत्राणस्तद्धितछप्रत्ययपरकस्य लुगभावाय तच्चारितार्थ्यं शङ्कनीयम् । यतो नात्र बिल्वकाच्छो विहितः, किन्तु बैल्वकात् । 'बिल्वकादिभ्यो यो विहितस्तस्यैव तद्धितस्य भसंज्ञकेभ्यः परस्य तद्धिते परतो लुग् भवतीति हि सूत्रार्थः । इत्थमस्याः परिभाषाया असत्त्वे सर्वथा व्यर्थोऽयं परिभाषामिमां ज्ञापयतीति निश्चीयते । ज्ञापितायां चास्यां शब्दोऽयं तत्र कुकोऽनिवृत्त्यर्थं स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु – 'पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्रः 'इत्यत्र 'द्विगोर्लुगनपत्ये[4] इतिदेवतार्थस्याणो[5]लुकि 'लुक्तद्धितलुकि'[6] इति ङीपो लुकि तत्सन्नियोगशिष्टस्यानुकोऽपि[7] निवृत्ति-सिद्धिः । अस्या असत्त्वे हि निमित्ताभावान् निवृत्तिरानुको न सिद्ध्येत् ।

## 'जे'ति शब्दः

'ज्ञाजनोर्जे'ति[8]सूत्रे 'जे'तिशब्दः 'अङ्गवृत्ते पुन वृत्तादविधिर्निष्ठितस्ये'ति[9] परिभाषाया ज्ञापकः[10] । यतोऽस्या अभावेऽत्र 'ज' – इत्यादेशेऽपि – 'अतो

1. अष्टा. 4/2/79 ।
2. अष्टा. 6/4/151 ।
3. 'वृद्धाच्छः' - अष्टा. 4/2/144 ।
4. अष्टा. 4/2/88 ।
5. 'साम्य देवता' - अष्टा. 4/2/24 ।
6. अष्टा. 1/2/49 ।
7. 'इन्द्र-वरुण - भव- शर्व - रुद्र - मृड - हिमारण्य - यव - यवन - मातुलाचार्याणामानुक्' - अष्टा. 4/1/49, ङीर्निर्विहितस्येत्यर्थः ।
८. अष्टा. 7/3/79 ।
९. (क) व्याडिः प. सू. प. 34, पृ. 17 ।
(ख) पु. दे. ल. प. वृ, प. 71, पृ. 143 ।
(ग) सी. दे, ल. प. वृ, प. 91, पृ. 248 ।

दीर्घो[1] यञी'ति दीर्घे कृते जानीते,[2] जानाति,[3] जायते'[4] इत्यादिप्रयोगाणां सिद्धेः सुलभतया 'जा' - इत्ययं शब्दो व्यर्थः । ज्ञापितायां चास्यां परिभाषायामनयात्र 'ज' - इत्यादेशे कृते दीर्घो न प्राप्तोतीति[5] 'जानीते' इत्यादिप्रयोगाणां सिद्ध्यर्थं 'जा'- इति–

---

(घ) 'अङ्गवृत्ते पुनर्वृत्तावविधिः' नी. दी. प. वृ. प. 84, पृ. 309 ।
(ङ) ह. प. भा. प. 94. पृ. 361 ।
(च) भ. ना. प. शे. प. 93, पृ. 327 ।
(छ) "शेषा. प. भास्क. प. प. 80. पृ. 445 ।

10. तथाहि –

(क) "अङ्गवृत्ते कार्ये कृते पुनर्वृत्तात्कार्यस्य विधिर्न भवति योऽन्यः प्राप्नोति । कथं ज्ञायते, यदयं 'ज्ञाजनोर्जा' (7/3/79) इत्याह, एतत्किल वक्तव्यं 'ज्ञाजनोर्ज' इति. का रूपसिद्धिः । जानीते जायते । जभावेकृते पश्चात् 'अतोदीर्घोयञि' (7/3/101) इतिदीर्घत्वं – भविष्यति । एवं सिद्धे सति यद्दीर्घमादेशं शास्ति तज्ज्ञापयति – अङ्गनिमित्तेअजादेशे कृते पुनर्दीर्घत्वं न स्यादिति । किमेतस्या ज्ञापने प्रयोजनम् ? क्रियते इत्यत्र रिङादेशे कृते अकृत्सार्वसार्वधातुकयो दीर्घत्वं (7/425) न भविष्यति । अङ्गवृत्ते पुनर्वृत्तादविधिर्निष्ठितस्येती"त्याह व्याडिः प. सू. प. 34, पृ. 17 ।

(ख) "दीर्घोच्चारणं किमर्थं, 'ज्ञाजनोर्ज' इत्येवोच्येत ? का रूपसिद्धिःजानाति जायते । अतोदीर्घो यञीति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यद् दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा – 'अङ्गवृत्ते पुनर्वृत्तावविधि'- रिती"त्याह प. व्या. म. भा. 7/3/2/79 ।

(ग) "ज्ञापकं चात्र 'ज्ञाजनोर्जा' (7/3/79) इत्यत्र ज इतिकर्तव्ये - जादेशकरणम् । यदि ह्येकस्मिन्नङ्गकार्येऽप्यपरमङ्गकार्यं स्यात् - जकारादेशोऽपि पुनः 'अतोदीर्घोयञि' (7/3/101) इतिदीर्घे सति जायते इत्यादि सिद्ध्यत्येवे"त्याह पु. दे. ल. प. वृ. प. 71, पृ. 143 ।

(घ) "इयं च परिभाषा भाष्ये 'ज्ञाजनोर्जा' (7/3/79) इत्यत्र ज्ञापिता । तथाहि । तत्रोक्तम् – 'किमर्थं' जाभावो विधीयते, जभाव एव विधीयताम् । तत्रापि 'अतोदीर्घोयञि' (7/3/101) इत्यनेन सिद्ध्यत्येव जायत इति" इत्याह सी. दे. वृ. प. वृ. प. 91, पृ. 248 ।

(ङ) "ज इति ह्रस्वोच्चारणेऽपि 'अतोदीर्घोयञि' इतिदीर्घे सिद्धे जाग्रहणमङ्गवृत्त-परिभाषाया ज्ञापनार्थम् । तेन पाधातोः पिबादेशे कृते गुणो न भवति । पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तरमित्याहुः" इत्याह ज्ञा. भि. त. बो. दिवादि प्र., पृ. 189 ।

(च) "ज्ञापिता चेयं भाष्यकारेण 'ज्यादादीयसः' (6/4/160) 'ज्ञाजनोर्जा (7/3/79) इतिसूत्रयोः । तथाहि .........द्वितीये तु जादेशविधानम् । अन्यथा जं कृत्वा 'अतोदीर्घोयञि' (7/3/101) इति दीर्घेणैव जानातीति साधयेदिति किं तेनेती"त्याह ह. भा. प. भास्क. प. 94. पृ. 361 ।

1 अष्टा. 7/3/1010 ।

2. 'ज्ञा अवबोधने' धा. पा. क्र्या. 1606. इतिज्ञाधातोर्लटि ते 'क्र्यादिभ्यः श्ना' 311/81 इति श्नाविकरणे कृते ज्ञाजनोर्जा–अष्टा. 7/3/79 इति जाऽऽदेशे रूपमिदम् ।

3. 'ज्ञा अवबोधने' धा पा. क्र्या. 1606 इति ज्ञाधातोर्लटि तिपि जादेशे विकरणे च कृते रूपमिदम् ।

4 'जनी प्रादुर्भावे' धा. पा. दिवा. 1224 इति जन्धातोर्लटि ते श्यनि 'ज्ञाजनोर्जा' - अष्टा. 7/3/79 इति जाऽऽदेशे रूपमिदम् ।

5. 'अतोदीर्घो यञि' - अष्टा. 7/3/111 ।

शब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'क्रियते[1]'इत्यत्र [2]रिङादेशे कृते [3]'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घाभावः, [4]'पिबती'त्यत्र पिबादेशे[5] कृते 'पुगन्तलघूपधस्य[6]चे'ति लघूपधलक्षणस्य गुणस्याभावः । 'यूयं[7]' 'वय[8]'मित्यत्र शेषे [9]लोपोऽन्त्यलोप इतिपक्षे 'जसः[10] शी'ति श्यादेशाभावः [11]'अस्मभ्य'मित्यत्र [12]भ्यमादेशपक्षे शेषेलोपो[13]ऽन्त्यलोप - इति पक्षे 'बहुवचने[14]झल्ये'दित्येत्वाभावश्च । अस्या असत्त्वे हि क्रमशो दीर्घ – गुण – स्यादेशैत्वानि दुर्वाराण्यत्र स्युः ।

अत्रेदमवधेयम् – यैस्त्वस्यां परिभाषायां निष्ठितस्येतिपदं न निवेश्यते तेषां मते' 'द्वयोः[15]' इति निर्देशादस्या अनित्यत्वेन द्वाभ्यां[16] द्वयो[17]रित्यादौ [18]दीर्घैत्वे[19] भवतः[20] । 'निष्ठितस्ये'ति पदप्रवेशं कुर्वतां मते त्वस्या अनित्यत्वं नाऽऽवश्यकं, यतोऽत्र दीर्घैत्वाभ्यां विनानयोः परिनिष्ठितत्वं नास्तीति ते सुलभे ।

---

1. 'डुकृञ्करणे' धा. पा. तना. 1565 इति कृधातोः कर्मणि लटि ते यकि'रिङ्शयग्लिङ्क्षु' - अष्टा. 7/4/28 इतिरिङादेशे रूपमिदम् ।
2. 'रिङ्शयग्लिङ्क्षु' - अष्टा. 7/4/28 ।
3. अष्टा. 7/4/25 ।
4. 'पा पाने' धा. पा. भ्वा. 991, इति पाधातोर्लटि तिपि शपि 'पाघ्रा.' - अष्टा. 7/3/78, इति पिबादेशे रूपमिदम् ।
5. 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छ पश्यर्च्छधौशीयसीदाः' - अष्टा. 7/3/78 ।
6. अष्टा. 7/3/86 ।
7. युष्मच्छब्दाज्जसि रूपमिदम् ।
8. अस्मच्छब्दाज्जसि रूपमिदम् ।
9. अष्टा. 7/2/90 ।
10. अष्टा. 7/1/17 ।
11. 'अस्मच्छब्दाद् भ्यसि रूपमिदम् ।
12. 'भ्यसोभ्यम्' - अष्टा. 7/1/30 ।
13. अष्टा. 7/1/17 ।
14. अष्टा. 7/3/103 ।
15. 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' - अष्टा. 5/3/92 ।
16. द्विशब्दाद्भ्यामि रूपमिदम् ।
17. 'द्विशब्दादोसि रूपमिदम् ।
18. 'सुपि च' - अष्टा. 7/3/102 ।
19. 'ओसि च' - अष्टा. 7/3/104 ।
20. तथाहि –
    (क) "अनित्या चेयम् द्वयोरित्यादिनिर्देशा"दित्याह नी. दी. प. वृ. प. 86, पृ. 310 ।
    (ख) "अनित्या चेयं 'द्वयोः' 'एकस्य'इत्यादिनिर्देशा"दित्याह ह. भा. प. भास्क. प. 94, पृ. 361 ।
    (ग) "इयं चानित्या । 'द्वयोः'इतिनिर्देशा'दित्याह भ. ना. प. शे. प. 93, पृ. 327 ।
    (घ) "अनित्येयम् । द्वयोरिति निर्देशात् । त्यदाद्यत्वे कृते 'ओसि च' (7/3/104) इत्येत्वमपि निर्दिष्ट"मित्याह शेषा. प. भास्क. प. 80, पृ. 445 ।

भट्टनागेश-शेषाद्री तु नैतां परिभाषां मन्वाते । यतोऽमू केचिदित्यादि[1]ग्रन्थेनास्याः फलान्यन्यथासिद्धानीति प्रतिपादयतः ।

## 'जातिपरिप्रश्न'इति शब्दः

'कतरकतमौ जातिपरिप्रश्ने'[2]इत्यत्र 'जातिपरिप्रश्न'इतिशब्दः 'जातिपरिप्रश्नादन्यत्रापि डतमजस्ती'ति वचनस्य[3]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – [4]'कतरकठः' – [5]'कतमकठः' – इत्यादौ समासार्थमारब्धे 'कतरकतमौ

---

1. "केचित्त्वनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते । अतएव 'ज्ञाजनोर्जा' 'ज्यादादीयस' इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः । स च न वक्तव्य इत्येव प्रयोजनमुक्तं, न तु लक्ष्यसिद्धिरूपम् । तदुक्तं 'भ्यसोभ्यमि'त्यत्राभ्यमितिच्छेदः । शेषेलोपश्चान्त्यलोप एव । 'अतोगुणे' इतिपररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं 'भ्यसोभ्य'मिति सूत्रस्थभाष्यमेकदेश्युक्तिरित्याहुः' प. शे. प. 93, पृ. 327 ।
"केचित्वियं प्रयोजनाभावान्न स्वीकर्तव्ये'त्याहुः" - इति चाह शेषाद्रिः प. भास्क. प. 80, पृ. 445 ।
2. अष्टा. 2/1/63 ।
3. तथाहि –
(क) "ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति कतमशब्दोऽन्यत्रापि वर्तत इति । तथा च प्रत्युदाहरणम् – कतरो भवतोर्देवदत्तः । कतमो भवतां देवदत्तः" इत्याह जया. का. 2/1/63 ।
(ख) "कतरकतमादिसूत्रे (2/1/63) जातिपरिप्रश्नग्रहणं ज्ञापयति – 'जातिपरिप्रश्नादन्यत्रापि डतमजस्ती'ति । तेन कतमो भवतां देवदत्त इति सिद्ध्यतीति । कतरशब्दस्तु साधारण एवे"त्याह - पु. दे. ज्ञा. समु. पञ्चमे समर्थपादे पृ. 65 ।
4. किं शब्दात् 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' - अष्टा. 5/3/92 इति डतरच्प्रत्यये डित्त्वाट्टेरिमोलोपे तद्धितान्तात्सौ सकारस्य रुत्वे विसर्गे च कृते कतर इति रूपं सिद्ध्यति, कठेन प्रोक्तमधीते – इत्यर्थे कठशब्दात् 'वैशम्पायनान्तेवासित्वात् 'कलापिवैशम्पायनान्तेवासिभ्यश्च' - अष्टा. 4/3/104, इतिप्रोक्ते णिनिप्रत्यये तस्य 'कठचरकाल्लुक्' - अष्टा. 4/3/104, इतिलुकि ततः 'कठमधीते' - इत्यर्थे 'तदधीते तद्वेद' - अष्टा. 4/2/59, इत्यणि तस्य 'प्रोक्ताल्लुक्' - अष्टा. 4/2/64 इतिलुकि तद्धितान्तात्सौ सकारस्य रुत्वे विसर्गे च कृते कठ इतिरूपं सिद्ध्यति, ततोऽनयोः पदयोः 'कतरकतमौ जातिपरिप्रश्ने' - अष्टा. 2/1/63, इति – समासे विभक्तिलुकि समासप्रातिपदिकात् सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदं सिद्ध्यति । नचात्र घटत्वादिवत् कठशाखाध्येतृत्वं न जातिः, 'आकृतिग्रहणाजातिः' -इतिलक्षणस्य 'लिङ्गानां च न सर्वभाक्, सकृदाख्यातनिर्ग्राह्या' - इतिलक्षणस्य च तत्राप्रवृत्तेरितिशङ्क्यम् । यतो - 'गोत्रं च चरणैः सहे'तिजातित्वं कठे सुलभम् । अनयोः कः कठ इतिप्रयोगस्यास्यार्थः ।
5. किमृशब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' - अष्टा. 5/3/93, इतिडतमच्प्रत्यये डित्वाट्टेरिमो लोपे तद्धितान्तात् सौ सकारस्य रूत्वे विसर्गे च कृते कतमइति रूपं सिद्ध्यति, कठ इति च पूर्वोक्तरीत्या सिद्ध्यति, ततोऽनयोः पदयोः 'कतरकतमौ जातिजातिपरिप्रश्ने' - अष्टा. 2/1/63, इति समासे विभक्तिलुकि समासप्रातिपदिकात् सौ सकारस्य रुत्वे – विसर्गे च कृते रूपमिदं सिद्ध्यति । एषां कः कठ इति प्रयोगस्यास्यार्थः । कठस्य जातित्वं तु 'गोत्रं च चरणैः सहे'त्यनेन पूर्वोक्तं बोध्यम् ।

जातिपरिप्रश्ने वर्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवती'-त्यर्थकेऽस्मिंन् सूत्रे कतरशब्दविशेषणार्थमुपात्तोऽयं शब्दः । स चास्य वचनस्याभावे व्यर्थः । कतमशब्दस्य जातिप्रश्न एव व्युत्पादिततया [1]तत्साहचर्याज्जातिपरिप्रश्ने विद्यमानस्यैव कतरशब्दस्यात्र सूत्रे ग्रहणमस्य शब्दस्याभावेऽपि हि सुलभम् । ज्ञापिते चास्मिन् वचने कतमशब्दस्यान्यत्रार्थेऽपि संभवतया तत्साहचर्यात् कतरशब्दस्य जातिपरिप्रश्नादन्यस्मिन्नर्थवृत्तेरपि ग्रहणं प्राप्नोति तद्व्यावृत्त्यर्थं जातिपरिप्रश्नवृत्तेरेव कतरशब्दस्यात्र ग्रहणं भवत्वेतदर्थं कतरशब्दविशेषणतया शब्दोऽयं स्वांशे चरितार्थो भवति । तेन 'कतरो भवतोर्देवदत्तः' इत्यत्र समासाभावः सिद्ध्यति । ज्ञापितस्यास्य वचनस्य फलं तु 'कतमो भवतां देवदत्त' इत्यस्यप्रयोगस्य साधुत्वसिद्धिः । अस्य वचनस्यासत्त्वे हि जातिपरिप्रश्नादन्यत्रार्थे [2]डतमचोऽभावेन नास्य प्रयोगस्य साधुत्वं सिद्ध्येत् । जयादित्यपुरुषोत्तमदेवाभ्यामुक्तमस्य[3]वचनस्य ज्ञापकत्वं न युक्तम् । यतो भगवता डतर - डतमविधौ 'द्वयो[4]'रिति [5]'बहूना'मिति [6]'जातिपरिप्रश्ने'इति च [7]प्रत्याख्यातमिति' 'कतमो भवतां देवदत्त' इति प्रयोगे किंशब्दाड्डतमचः सिद्धेः सुलभतया ज्ञापितस्यास्य वचनस्याभावेऽप्यस्य प्रयोगस्य साधुत्वमुपपद्यते । अतएव भट्टनागेशः भाष्यकृत्कृत 'द्वयोः' 'बहूनां' 'जातिपरिप्रश्ने' - इत्येतत्त्रितयशब्द-प्रत्याख्यानमाश्रित्य 'कतमो भवतां पण्डितः' इत्यादौ समासाभावाय यथान्यासेऽपि

---

1. 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' - प. शे. प. 112, इतिपरिभाषयेत्यर्थः ।
2. 'वा बहूनां जातिपरिप्रश्ने डतमच्' - अष्टा. 5/3/93 ।
3. का. 2/1/63, तथा ज्ञा. समु. पञ्चमे समर्थपादे पृ. 65 ।
4. 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' - अष्टा. 5/3/92,.इत्यत्रेतिशेषः ।
5. 'वा बहूनां जातिपरिप्रश्ने डतमच्' - अष्टा. 5/3/93, इत्यत्रेतिशेषः ।
6. 'वा बहूनां जातिपरिप्रश्ने डतमच्' - अष्टा. 5/3/93, इत्यत्रेतिशेषः ।
7. तथाहि–"किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' । किमादीनां द्विबह्वर्थे प्रत्यय-विधानादुपाधिग्रहणमनर्थकम्' । किं कारणम् ? । बहिर्धारणं निर्द्धारणमिति, यावता द्वयोरेकस्यैव बहिर्धारणंभवति । अपर आह – 'बहूनां .जातिरिप्रश्नेडतम' दित्यत्र वहुग्रहणमनर्थकम् । किंकारणम् ? । किमित्येतत्परिप्रश्ने वर्तते परिप्रश्न- श्चानिर्ज्ञातेऽनिर्ज्ञातं च वहुषु । द्व्येकयोः पुनर्निर्ज्ञातं, निर्ज्ञातत्वात् द्व्येकयोः परिप्रश्नो यः, परिप्रश्नाभावात् किमेव नास्ति कुतः प्रत्ययः ?" –इत्याह पत. व्या. म. भा. 5/3/2/92, 93 । प्रत्याख्यानभाष्यमिदं व्याचक्षाणः कैयटः - "अयं भावः – 'द्वयोरित्यनर्थकम्, बहूनामपि निर्धारणे डतरच इष्टत्वादजातिपरिप्रश्नेऽपि कतमशब्ददर्शनाद्वा वहूनामित्यत्र जाति परिप्रश्न-ग्रहणं न कर्तव्य"मित्याह प्रदी. 5/3/2/92, 93 । कैयटग्रन्थं चेमं व्याचक्षाणो भट्टनागेशः – "इष्टत्वादिति । 'बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति – कतरो देवदत्त'इति 'प्रत्यय'इति सूत्रे भाष्यप्रयोगादितिभावः । अजातिपरिप्रश्नेऽपीति । 'कतमा कतमा एषामाढ्या'इति 'प्रकारवचनस्ये'तिभाष्यप्रयोगादितिभावः" - इत्याह उद्यो. 5/3/2/92. 93 ।

कतरार्थमत्रसूत्रे जातिपरिप्रश्ने'इतिशब्दस्य चारितार्थ्यमाह[1] । तस्मादत्र सूत्रेऽस्य शब्दस्य ज्ञापकत्वं न युक्तमिति निश्चीयते ।

## 'झ'लितिशब्दः

'इको[2]झ'लित्यत्र 'झ'लितिशब्दः " 'न[3]से'डितिसूत्रेणौपदेशिकस्य कित्त्वस्य प्रतिषेधो भवति नातिदेशिकस्य कित्त्वेस्ये"ति वचनस्य[4]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – [5]बुभूषतीत्यादौ इगन्तात्परस्य झलादेः सनः

---

1. तथाहि–कतरकतमौ । 'द्वयोरेकस्य''वा बहूनाम्' इतिसूत्रयोरुपाधिप्रत्याख्यानात् 'कतमो भवतां पण्डित' इत्यादौ समासाभावाय जातिपरिप्रश्ने इति । यथान्यासेऽपि कतरार्थं तत्"इत्याह भ. नां. ल. श. शे. तत्पुरुष प्र. पृ. 448 ।
2. अष्टा. 1/2/9 ।
3. क्त्वा ग्रहणस्य प्रत्याख्याततया 'न सेट्' - अष्टा. 1/2/18, इत्यनेनेत्यर्थः ।
4. तथाहि –
   (क) "यदयम् 'इकोझ'लिति झल्ग्रहणं करोति तज्ज्ञापयत्याचार्यः – 'औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्ये'ति । कथं कृत्वा ज्ञापकम् ? । झल्ग्रहणस्यैतत् प्रयोजनं – 'झलादौ यथा स्यादिह माभूत् – "शिशायिषत' इति यदि चात्रातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्याज्झल्ग्रहणनर्थकं स्यात् । अस्त्वत्र कित्त्वम्', न से'डितिप्रतिषेधो भविष्यति । पश्यति त्वाचार्य 'औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्ये'ति ततो झल्ग्रहणं करोति" इत्याह पत. व्या. म. भा. 1/2/1/18 ।
   (ख) "न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
   ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥" इतिभाष्यस्थसंग्रहश्लोकमाह जया. का. 1/2/18 ।
   (ग) "यदयम् 'इकोझल्'इतिसन्विशेषणं करोति, ततो ज्ञायते – औपदेशिकस्य कित्त्वस्य 'न सेडिति' प्रतिषेधोऽयम्, नातिदेशिकस्येति । झल्ग्रहणं हि शिशयिषत इत्यत्र कित्त्वंमाभूदित्येवमर्थः क्रियते । यदि च नसेडितिप्रतिषेधः आतिदेशिकस्यापि त्त्विस्यं स्यात्, झल्ग्रहणमनर्थकं स्यात् । अस्त्वत्र कित्त्वम्, तस्य न सेडितिप्रतिषेधो भविष्यतीति - तस्मादौपदेशिकस्य कित्त्वस्य प्रतिषेधोऽयं, नातिदेशिकस्येती"त्याह जि. बु. न्या. 1/2/18 ।
   (घ) "इकोझल्' इत्यत्र झल्ग्रहणस्यैतत्प्रयोजनम् - शिशयिषत इत्यत्र माभूदिति । यदि च नसेडिति प्रतिषेधआतिदेशिकस्यापि कित्त्वस्य स्याद्झल्ग्रहणमनर्थकं स्यात् । प्राप्नोत्वत्र कित्त्वम्, 'नसेट्' इतिप्रतिषेधो भविष्यति । तदेतद् झल्ग्रहणमौपदेशिकस्य कित्त्वस्यायं प्रतितिषेधो नातिदेशिकस्येत्यस्यार्थस्य ज्ञापक"मित्याह ह. मि. पदम. 1/2/18 ।
   (ङ) "न क्त्वा सेट्' (सू. 1/2/18) । 'इकोझल्' (सू. 1/2/9) इतिझल्ग्रहणं ज्ञापयति – औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्येती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 144 ।
5. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोः, सनि तदन्ताल्लटि तिपि रूपमिदम् ।

कित्त्वं विधातुमारब्धेऽस्मिन्सूत्रे [1]'शिशयिषते' – इत्यादौ सेटः सनोऽजादित्वात् कित्त्ववारणार्थमुपात्तोऽयं शब्दोऽस्य वचनस्याभावे व्यर्थः । 'न[2]क्त्वा से'डित्यत्र क्त्वाग्रहणस्य [3]प्रत्याख्यानेहि सेटः यस्य कस्यापि कित्त्वनिषेधात् 'शिशयिषते' – इत्यादौ सेटः सनोऽपि कित्त्वनिषेधलाभात् । तत्फलकोऽत्र सूत्रेऽयं शब्दोऽनर्थकः । ज्ञापिते चास्मिन्वचने 'शिशयिषते'इत्यादौ सेटः सनः औपदेशिकं कित्त्वं नास्ति; किन्तु '[4]इकोझ'लित्यातिदेशिकमिति तस्य '[5]न से'डित्यनेन प्रतिषेधो न प्राप्नोतीति तत्रं कित्त्वाभावायात्र सूत्रे शब्दोऽयं स्वांशे चरितार्थो भवति । न च [6]'नक्त्वासे-'डित्यत्र 'क्त्वा' – इत्यस्य प्रत्याख्याने निष्ठायामपि 'गुधितः'[7] [8]'गुधितवा'नित्यत्र कित्त्वनिषेधस्यानेन[9]दुर्वारतयोपधागुणा[10]ऽऽपत्तिः स्यादितिशङ्क्यम् । यतो [11]'न से'डित्यनेनैव कित्त्वनिषेधे सिद्धे 'निष्ठा[12]शीङ्स्विदिमितिक्ष्विदिधृष'इतिसूत्रं 'शीङादिभ्य एव परा निष्ठा न कि'दितिनियमार्थं, तथा सति – 'गुधित'इत्यादौ

---

1. 'शीङ्स्वप्ने' धा. पा. अदा. 1032, इतिशीधातोः सनि तदन्ताल्लटि ते सनो झलादित्वाभावात् कित्त्वाभावेन 'क्ङिति च' – अष्टा. 1/1/5 इति गुणप्रतिषेधाप्राप्त्या सार्वधातुकगुणेऽया- देशे रूपमिदम् ।
2. अष्टा. 1/2/18 ।
3. तथाहि – " ' नसेडिति कृतेऽकित्त्वे' । 'नसे'डित्येव सिद्धम्, नार्थः क्त्वाग्रहणेन । निष्ठायामपि तर्हि प्राप्नोति – गुधितः गुधितवानिति । 'निष्ठायामवधारणात्' । निष्ठायामवधारणा भविष्यति । किमवधारणम् ? । 'निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः' इति । परोक्षायां तर्हि प्राप्नोति । किंच स्यात् ? पपिव पपिम, क्ङितीत्याकारलोपो न स्यात् । माभूदेवम्, इटीत्येवं भविष्यति । इदं तर्हि– जग्मिव जघ्निव, क्ङितीत्युपधालोपो न स्यात् ।' 'ज्ञापकान्न परोक्षायाम्' । ज्ञापकात्परोक्षायां न भविष्यति । किं ज्ञापकम् ? । 'सनि झल्ग्रहणं विदुः' ........ व्या. म. भा. 1/2/1/18 ।
4. अष्टा. 1/2/9 ।
5. अष्टा. 1/2/18 ।
6. अष्टा. 1/2/18 ।
7. 'गुध परिवेष्टने' धा. पा. दिवा. 1120, इतिगुध्धातोः क्तप्रत्यये इति कृदन्तत्वाद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।
8. 'गुध परिवेष्टने' धा. पा. दिवा. 1120, इतिगुध्धातोः क्तवत् प्रत्यये इटि कृदन्तत्वाद्-विभक्तिकार्येषु कृतेषु रूपमिदम् ।
9. 'नसेट्' - अष्टा. 1/2/18, इत्यनेनेत्यर्थः ।
10. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86, इत्यनेनेतिशेषः ।
11. अष्टा. 1/2/18 ।
12. अष्टा. 1/2/19 ।

निष्ठायाः कित्त्वनिषेधा[1]- ऽऽभावान्नोपधागुणा[2]ऽऽपत्तिः प्राप्नोति । नापि च 'पपिव[3]' 'पपिम[4]' – इत्यादौ 'प पा इव' 'पपा इम' इत्यवस्थायां सेटो वस्य मस्य च कित्त्वनिषेधात्[5] [6]क्ङित्याकारलोपो न स्यादिति शङ्क्यम् । यतोऽत्रेटं निमित्तीकृत्याऽऽकारलोपः[7] सुलभः । ज्ञापितस्यास्य वचनस्य फलं तु [8]'जग्मिव' '[9]जघ्निव' - इत्यादौ 'असंयोगा[10]- ल्लिट्कि'दित्यातिदेशिकस्य कित्त्वस्य '[11]नसे'ड़ित्यनेन प्रतिषेधाभावः । तेनात्र [12]क्ङितीत्युपधालोपः सिद्ध्यति । अस्य वचनस्यासत्त्वे हि 'नसे'डिति[13]कित्त्वनिषेधस्य दुर्वारतयात्र[14]'गमहनजनखनघसांलोपःक्ङित्यनङी'-त्युपधालोपो न सिद्ध्ययेत् ।

## 'ण'इतिशब्दः

[15]'एकाजुत्तरपदे ण' इत्यत्र 'ण'इतिशब्दः 'चानुकृष्टमुत्तरत्र नानुवर्तते'इति-[16]परिभाषानित्ये'तिवचनस्य ज्ञापकः[17] । यतोऽस्य वचनस्याभावेऽत्र 'ण'इतिशब्दः'

---

1. 'नसेट्' - अष्टा. 1/2/18 ।
2. 'पुगन्त.' - अष्टा. 7/3/86 ।
3. 'पा पाने' धा. पा. भ्वा. 925, इतिपाधातोर्लिटि वसि वसो वाऽऽदेशे क्रादिनियमादिटि धातोर्द्वित्वेऽभ्यासकार्ये च कृते 'असंयोगाल्लिट्कित्' - अष्टा. 1/2/5, इति वस्य कित्त्वात्, 'आतोलोप इटि च' - अष्टा. 6/4/64, इत्याकारलोपे रूपमिदम् ।
4. 'पा पाने' धा. पा. भ्वा. 925, इति पाधातोर्लिटि मसि मसो माऽऽदेशे क्रादिनियमादिटि धातोर्द्वित्वेऽभ्यासकार्ये च कृते 'असंयोगाल्लिट्कित्' - अष्टा. 1/2/5, इतिमस्य कित्त्वात् 'आतोलोप इटि च' - अष्टा. 6/4/64, इत्याकारलोपे रूपमिदम् ।
5. 'नसेट्' - अष्टा., 1/2/18 इत्येनेनेतिशेषः ।
6. 'आतोलोप इटि च' - अष्टा. 6/4/64 इत्यनेनेतिशेषः ।
7. 'आतोलोप इटि च' - अष्टा. 6/4/64 इत्यनेनेतिशेषः ।
8. 'गम्लृ गतौ' धा. पा. भ्वा. 982, इतिगम्धातोर्लिटि वसि वसो वाऽऽदेशे क्रादिनियमादिटि धातोर्द्वित्वेऽभ्यासकार्ये 'जगम्इव' - इत्यवस्थायां वस्य 'असंयोगाल्लिट्कित्' - 1/2/5, इति कित्त्वात् 'गमहन जन खनघसांलोपः क्ङित्यनङि' - अष्टा. 6/4/98, इत्युपधालोपे रूपमिदम् ।
9. 'हनहिंसागत्योः' धा. पा. अदा. 1012, इतिहन्धातोर्लिटि वसि वसोवाऽऽदेशे क्रादिनियमादिटि धातो र्द्वित्वेऽभ्यासकार्ये 'जघन्इव' इत्यवस्थायां वस्य 'असंयोगाल्लिट्कित्' - अश्टा. 1/2/5, इतिकित्त्वात् 'गमहनजनखनघसां लोपः क्ङित्यनङि' - अष्टा. 6/4/98, इत्युपधालोपे रूप .दम् ।
10. अष्टा. 1/2/5 ।
11. अष्टा. 1/2/18 ।
12. 'गमहनजनखनघसां लोपः क्ङित्यनङि' - अष्टा. 6/4/98, इत्यनेनेतिशेषः ।
13. अष्टा. 1/2/18 ।
14. अष्टा. 6/4/98 ।
15. अष्टा. 8/4/12 ।
16. (क) व्याडिः प. सू. प. 59, पृ. 27 ।

'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति चानुकृष्टमपि विकल्पं निवर्तयितुमुपात्तो व्यर्थः । ज्ञापिते चास्मिन् वचनेऽत्र सूत्रे 'प्रातिपदिकान्तनुम्[1]विभक्तिषुचे'तिचानुकृष्टं विकल्पं निवर्त्तयितुमयंशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'तृतीया[2]च होश्छन्दसीतिसूत्रे चाऽनुकृष्टाया द्वितीयायाः 'अन्तरान्तरेण[3]युक्ते' इत्यादावुत्तरत्रानुवृत्तिसिद्धिः । तेन 'अन्तरा त्वां च मां च [4]कमण्डलुः' 'अन्तरेण त्वां च मां च [5]कमण्डलुः' 'अन्तरेण[6]पुरस्कारं न किञ्चिल्लभ्यते' इत्यादौ युष्मदस्मत्पुरस्कारशब्देभ्यो [7]द्वितीया-सिद्धिर्भवति । अस्य वचनस्यासत्त्वे हि नात्र सा[8]सिद्ध्येत् ।

---

(ख) 'चानुकृष्टमुत्तरत्र नाभिसम्बध्यते' –
पु. दे. ल. प. वृ. प. 87, पृ. 150 ।
(ग) 'चानुकृष्टं नोत्तरत्र' –
सी. दे. बृ. प. वृ. प. 46, पृ. 213 ।
(घ) 'चानुकृष्टं नोत्तरत्र' –
नी. दी. प. वृ. प. 57, पृ. 304 ।
(ङ) 'चानुकृष्टं नेतरत्र' –
ह. भा. प. भास्क. प. 48, पृ. 343 ।
(च) 'चानुकृष्टं नोत्तरत्र' –
भ. ना. प. शे. प. 79, पृ. 303 ।
(छ) 'चानुकृष्टं नोत्तरत्र' –
शेषा. प. भास्क. प. 67, पृ. 436 ।

17. तथाहि–
(क) " 'णः' इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थ"मितिग्रन्थेन ज्ञापकत्वमस्यात्र सूचयति वाम. का. 8/4/12 ।
(ख) "अनित्या चेयं परिभाषा । अनित्यत्वमस्या 'नुम्विभक्तिषु च' (8/4/11) इतिचानुकृष्टमपि विकल्पं निवर्तयितुम्'एकाजुत्तरपदे णः' (8/4/12) इतिपुनर्णग्रहणादवसीयते"- इत्याह पु. दे. ल. प. वृ. प. 87, पृ. 150 ।
(ग) "अनित्या चेयम् । तच्चानित्यत्वं 'प्रातिपदिकान्तनुम्विभक्तिषु च' (8/4/11) इतिचानुकृष्टमपि विकल्पेन निवर्त्तयितुम्'एकाजुत्तरपदे णः' (8/4/12) इतिपुनर्णग्रहणादवसीयते"इत्याह सी. दे. बृ. प. 46, पृ. 213 ।
(घ) "अनित्या चेयम् । 'एकाजुत्तरपदे णः' (8/4/12) इत्यत्र विकल्पाधिकारस्पष्टीकरणार्थात्पुनर्णग्रहणा"दित्याह ह. भा. प. भास्क. प. 48, पृ. 343 ।
(ङ) "इदमनित्यम् .......... "इत्याह भ. ना. प. शे. प. 79, पृ. 303 ।
(च) "इदमनित्यम्, ......... "इत्याह शेषा. प. भास्क. प. 67, पृ. 436 ।

1. अष्टा. 8/4/11 ।
2. अष्टा. 2/3/3 ।
3. अष्टा. 2/3/4 ।
4. तव मम च मध्ये कमण्डलुरित्यर्थः ।
5. " "
6. विना पुरुषकारेणेत्यर्थः ।
7. 'अन्तरान्तरेण युक्ते' - अष्टा. 2/3/4 ।
8. 'अन्तरान्तरेणयुक्ते' - अष्टा. 2/3/4, इत्यनेन द्वितीयेत्यर्थः ।

## 'णमु'लितिशब्दः

[1]'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वा-णमुला'वित्यत्र 'णमु'लितिशब्दः 'चानुकृष्टमुत्तरत्र नानुवर्त्तते'[2] इतिपरिभाषाया ज्ञपकः[3] । यतोऽस्या अभावेऽत्र

---

1. अष्टा. 3/4/59 ।
2. (क) व्याडिः प.सू.प. 59, पृ. 27 ।
   (ख) 'चानुकृष्टमुत्तरत्र नाभिसंबध्यते' - पु.दे.ल.प,वृ.प. 87. पृ. 150 ।
   (ग) 'चानुकृष्टं नोत्तरत्र' - सी.दे. वृ.प. वृ.प. 46, पृ. 213 ।
   (घ) 'चानुकृष्टं नोत्तरत्र' - नी. दी. प. वृ. प. 57, पृ. 304
   (ङ) 'चानुकृष्टं नोत्तरत्र' - ह.भा.प,भास्क.प, 48, पृ. 343 ।
   (च) 'चानुकृष्टं नोत्तरत्र' - भ.ना.प,शे.प, 79, पृ.303 ।
   (छ) 'चानुकृष्टं नोत्तरत्र' - शेषा. प, भास्क. प. 67, प. 436 ।
3. तथाहि –
   (क) "चानुकृष्टमुत्तरत्र नानुवर्तते । कथं ज्ञायते । यदयम् 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3/4/59) इत्यत्र णमुल्ग्रहणं करोति । कथं कृत्वा ज्ञापकम् । णमुलधिकृतोऽनुवर्तते । तत्र क्त्वा तावद् वक्तव्यम् । क्त्वा चेति चकारेण णमुलोधिकृतस्यानुकृष्टिर्भविष्यति । नार्थो णमुल्ग्रहणेन । पश्यति त्वाचार्यः । यद्यनुकर्पणमिह क्रियते 'तिर्यच्यपवर्गे' (3/4/6) इत्येवमादिषु सूत्रयोगेष्वनुवृत्तिर्न स्यात् । तस्मात् क्वाग्रहणं क्रियते । अयुगपदुभयोरुत्तरत्रानुवृत्तिर्यथा स्यात् इति । चानुकृष्टमुत्तरत्र नानुवर्तते । किमेतस्या ज्ञापने प्रयोजनम् । 'वदः सुपिक्यप् च' (3/1/106) इति यतो 'भुवोभावे' (3/1/107) इत्यात्रानुवृत्तिर्न भवती"त्याह व्याडिः प.सू.प.59, पृ. 27 ।
   (ख) "णमुलधिकारे पुनर्णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम्, तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यती" ति ग्रन्थेन ज्ञापकत्वमस्याऽस्यां सूचयति जया. का. 3/4/59 ।
   (ग) "यदि क्त्वा चेत्युच्येत चकारेण यत्नादुकृष्टों णमुलुत्तरत्रानुवर्तेतेति, यत्नाभावात् । यथा तेन क्त्वाप्रत्ययस्यान्वाचीयमानता विज्ञायेत ततश्चोत्तरत्र तस्याप्राधान्यादनुवृत्तिर्न स्यात् । पुनर्णमुल्ग्रहणे सति सहनिर्देशात् क्त्वा णमुलोर्गुणप्रधानभावो न भवतीतिद्वयोरनुवृत्तिर्भवृती' तिग्रन्थेन ज्ञापकत्वमस्यास्यां सूचयति जि.बु. न्या. 3/4/59 ।
   (घ) "यदि तु चकारेण यत्नेन णमुलनुकृष्येत, उत्तरत्र नानुवर्त्तेत, यत्नाभावात् । पुनर्णमुल्ग्रहणे तु द्वन्द्वनिर्दिष्टयोर्द्वयोरप्युत्तरत्रानुवत्तिः सिद्धा भवती'ति ग्रन्थेन ज्ञापकत्वमस्याऽस्यां सूचयति ह. मि.पदम. 3/4/59 ।
   (ङ) "ज्ञापकं चात्र 'अव्ययेऽयथाभिप्रेताख्याने कृञ्क्त्वाणमुलौ' (3/4/59) इति णमुलधिकारे णमुल्वचनम् । तद्धि उत्तरार्थम् । यदि चानुकृष्टमपि उत्तरत्रानुवर्तेत तदा लाघवार्थं क्त्वा चेत्येवावक्ष्य"दित्याह पु.दे.ल.प,वृ.प. 87, पृ. 150 ।

'णमु'लिति शब्दो व्यर्थः । 'क्त्वा चे'त्युक्तावपि हि [1]'स्वादुमि णमु'लिति णमुलोऽनुवृत्त्यैव तल्लाभः सुलभः । ज्ञापितायां [2]चास्यामुत्तरत्र णमुलः सम्बन्धार्थमिह सूत्रे 'णमु'लितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्या'श्चकारेणानुकृष्टं नोत्तरत्राऽनुवर्तते'इत्यर्थः । फलं तु 'भुवो[3]भावे' इति सूत्रे 'वदः सुपि[4]क्यप्चे'त्यतश्चानुकृष्टस्य [5]'यतो'ऽनुवर्तनाऽभावः । तेन 'ब्रह्मभूय'मित्यत्र [6]ब्रह्मोपपदाद्भवतेः [7]क्यप् सिद्ध्यति । यति प्रत्यये हि [8]गुणः प्रसज्येत ।

## 'णिश्वी'तिशब्दौ

[9]'ह्म्यन्तक्षण श्वसजागृणिश्व्येदिताम्' इतिसूत्रे 'णिश्वी'तिशब्दौ [10]'अनन्तरस्य विधिर्वा प्रतिषेधो वे'तिपरिभाषाया[11]ज्ञापकः । यतोऽस्या अभावेऽमूशब्दावत्र

---

(च) "ज्ञापकं चात्र 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3/4/59) इत्यत्र णमुलधिकारेण णमुल्वचनम् । यदि चानुकृष्टमप्यनुवर्तते तदा'क्त्वा च' -इत्येवोच्येते" त्याह सी.दे.वृ.प. 46, पृ. 213 ।

(छ) "अत्र च ज्ञापकं णमुल्यनुवर्तमाने 'अव्ययेऽयथाभिप्रेताख्याने.' (3/4/59) इतिसूत्रे पुनर्णमुल् ग्रहणम् । अन्यथा क्त्वाचेत्युक्तावपि उत्तरत्रोभयोः संबन्धसिद्धौ किंतेने"त्याह नी.दी. प,वृ.प. 57, पृ. 304 ।

(ज) "ज्ञापकमत्र 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3/4/59) इत्यत्र णमुलधिकारे पुनर्णमुल्वचनम् । अन्यथा हि क्त्वा च इत्येवाक्ष्य"दित्याह ह.भा.प,भा. प. 48, पृ. 343 ।

(ञ) "णमुल्यनुवर्तमाने 'अव्ययेऽयथाप्रेते'तिसूत्रे पुनर्णमुल्ग्रहणमस्यां ज्ञापकम् । अन्यथा क्त्वाचेति वदेत् । तद्धि उत्तरत्रोभयोः सम्बन्धार्थ"मित्याह भ. ना.प.शे.प.79, पृ.303 ।

(ट) "ज्ञापकमस्याः णमुल्यनुवर्तमाने 'अव्ययेऽयथाभिप्रेताख्याने.' (3/4/59) इत्युत्तरत्र संबन्धार्थं क्रियमाणं णमुल्ग्रहणम् ।चानुकृष्टस्योत्तरत्रसंबन्धास्वीकारे 'क्त्वाच' इत्येवासिद्धेस्तदानर्थक्यं स्या"दित्याह शेषा.प.भास्क.प.67, पृ. 436 ।

1. अष्टा. 3/4/26 ।
2. 'तिर्यच्यपवर्गे' - अष्टा. 3/4/6
3. अष्टा. 3/1/107 ।
4. अष्टा. 3/1/106 ।
5. 'अचो यत्' - अष्टा 3/1/97 ।
6. 'भू सत्तायाम्' धा.पा. भ्वा. 1
7. "भुवो भावेः"- अष्टा. 3/1/107 ।
8. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84 ।
9. अष्टा. 7/2/5 ।
10. (क) व्याडिः प,सू.प, 16, पृ. 9 ।
(ख) पु.दे.ल.प.वृ.प. 17, पृ. 119 ।
(ग) सी.दे.बृ.प.वृ.प, 48, पृ.215 ।
(घ) नी.दी.प,वृ.प, 51, पृ. 302 ।
(ङ) ह.भा.प.भास्क.प. 50, पृ. 344 ।
(च) भ.ना.प.शे.प, 62, पृ. 277 ।

व्यर्थौ । तथाहि – सूत्रेऽस्मिन् णिश्विशब्दौ [1]'औनयीत्' [2]'ऐलयी'दित्यादौ [3]'अश्वयी' दित्यत्र च 'सिचिवृद्धिः:[4] परस्मैपदेषु' इति सिचि प्राप्ताया वृद्धेः प्रतिषेधार्थमुपात्तौ । तौ चास्या अभावे व्यर्थौ । औनयीदित्यादौ अश्वयीदित्यत्र च 'नेटी[5]'तिप्रतिषेधेनैव हि वृद्ध्यभावःसुलभः। ज्ञापितायां चास्यां 'नेटी'[6]ति सूत्रमनन्तरा हलन्तलक्षणां[7]वृद्धिमेव प्रतिषेधति नतु वृद्धिमात्रमिति णिश्व्योः सिचि वृद्धिप्रतिषेधार्थममू शब्दौ स्वांशे चरितार्थौ भवतः।ज्ञापिताया अस्याःफलन्तु अत्रैवान्यत्र[8]निरूपितमिति नेह प्रतन्यते ।

वस्तुतस्तु शब्दाविमौ 'न सिच्यन्तरङ्गत्वमस्ती'ति वचनस्य [9]ज्ञापकौ । यतोऽस्य वचनस्याभावेऽऽत्रामू व्यर्थौ । न च 'अनन्तरस्येतिपरिभाषाज्ञापनद्वारा 'औनयीत्'

---

(छ) शेषा. प,भास्क.प. 52, पृ. 427 ।

11. तथाहि – "अनन्तरस्य विधिर्वा प्रतिषेधो वा' । कथं ज्ञायते । यदयं णिश्व्योः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । णिश्व्योः प्रतिषेधो न वक्तव्यः । यतो हि 'नेटि' (7/2/4) इति प्रतिषेधे कृते गुणे अयादेशे चेष्टं सिद्ध्येत् । पश्यति त्वाचार्यः, अनन्तराया हलन्तलक्षणाया वृद्धेः (7/2/3) प्रतिषेधः, न वृद्धिमात्रस्य। ततो णिश्व्योः प्रतिषेधं शास्तीति । कथं वृद्धधेरपि णिश्व्योः सिचि प्रतिषेधः स्यादिति । एवं सति किंकृतं भवति । अनन्तरस्य विधिर्वा प्रतिषेधो वा इत्येषा परिभाषा वक्तव्या भवती"त्याह व्याडिः प.सू.प. 16, पृ. 9 ।

1. 'ऊन परिहाणे' धा.पा.चुरा. 2036, इति ऊन्धातोश्चुरादित्वात् णिचि तदन्ताल्लुङि तिपि च्लौ 'नोनयति 'ध्वनयत्येलयत्यर्दयतिभ्यः' - अष्टा. 3/1/51, इति चङि प्रतिषिद्धे सिचि 'आडजादीनाम्' - अष्टा. 6/4/72 इत्याटि 'आटश्च' -अष्टा. 6/1/90 इति वृद्धौ इटि ईटि दीर्घैकादेशे सकारलोपे गुणेऽयादेशे च कृते 'ह्म्यन्त.' - अष्टा. 7/2/5 इति सिचि वृद्धि-निषेधे रूपमिदम् ।

2. 'इल प्रेरणे' धा.पा. चुरा. 1788, इति इल्धातोश्चुरादित्वात् णिचि तदन्ताल्लुपिङि तिप च्लौल 'नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः' -अष्टा. 3/1/51, इति चङि प्रतिषिद्धे सिचि 'आडजादीनाम्' - अष्टा 6/4/72,इत्याटि 'आटश्च' -अष्टा. 6/1/50इति वृद्धौ इटि ईटि दीर्घैकादेशे सकारलोपे गुणेऽयादेशे'ह्म्यन्त.' - अष्टा. 7/2/5, इति सिचि [2]वृद्धिनिषेधे रूपमिदम् ।

3. 'टुओश्वि गतिवृद्ध्योः' धा.पा. 1079, इतिश्विधातोर्लुङि तिपि अडागमे च्लौ 'विभाषाधेट्श्व्योः' - अष्टा. 3/1/49, इतिचङभावपक्षे सिचि इटि सवर्णदीर्घे सकारलोपे गुणेऽयादेशे 'ह्म्यन्त.' - अष्टा.7/2/5, इति सिचिवृद्धिनिषेधे रूपमिदम् ।

4. अष्टा. 7/2/1 ।

5. अष्टा. 67/2/4 ।

6. अष्टा. 7/2/4 ।

7. 'वदव्रजहलन्तस्याचः' - अष्टा. 7/2/3 ।

8. 'डाबुभाभ्यामन्यतरस्याम्' - अष्टा. 4/1/13, इतिसूत्रस्य 'उभाभ्या'मितिशब्दस्य ज्ञापकत्वनिरूपणावसर इत्यर्थः ।

9. तथाहि –
(क) "जागृ-णि-श्वीनां तु सिचि वृद्धिः प्राप्ता, सा च 'नेटि' इति न प्रतिषिध्यते । न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति सिचि वृद्धेरनवकाशत्वात् । यदि पूर्वं गुणः स्यात्, इह श्विग्रणमनर्थकं स्यात्, गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्यासिद्धत्वात् । तस्मादिदमेव णिश्विग्रहणं ज्ञापकम् - न सिच्यन्तरङ्गमस्तीती"त्याह वाम.का. 7/2/5 ।

'अश्वयीत्' - इत्यादौ 'नेटी'[1]ति सिचि[2]वृद्धिप्रतिषेधाऽप्राप्त्या तत्प्रति- षार्थममू शब्दौ चरितार्थौ स्त इति शङ्कनीयम् । यतोऽत्रान्तरङ्गत्वादेव[3] गुणेऽयादेशे[4] यकारान्तत्वादेव वृद्धिप्रतिषेधः [5]सुलभः ।

## 'तदर्थे'तिशब्दः

[6]'चतुर्थीतदर्थार्थबलिहितसुखरक्षितै'रित्यत्र 'तदर्थे'तिशब्दः 'तादर्थ्ये चतुर्थी भवती'तिवचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दोऽनुपपन्नः । तथाहि–'यूपाय दारु यूपदारु' 'कुण्डलाय हिरण्य'मित्यादौ तदर्थवाचिना सुबन्तेन समासं विधातुं 'तदर्थ, अर्थ, बलि, हित, सुख, रक्षित' इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवती'त्यर्थकेऽस्मिन्सूत्रे शब्दोऽयमुपात्तः । स चास्य वचनस्याभावेऽनुपपन्नः । नह्येतद्वचनं विना तादर्थ्ये चतुर्थी सम्भवति । ज्ञापिते चास्मिन् वचने तादर्थ्ये चतुर्थ्याः सुलभतया कुण्डलहिरण्यमित्यादौ चतुर्थ्यन्तस्य तदर्थवाचिना सुबन्तेन समासं विधातुमत्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'रन्धनाय स्थाली' 'अवहननायोलूखलं'- मित्यादौ रन्धनावहननादिशब्देभ्यश्चतुर्थ्याः सिद्धिः । तदर्थेन समासस्तु नात्र भवति, यत'स्तदर्थेन प्रकृति-विकृतिभावे समासोऽयमिष्यते' । न चात्र

---

(ख) "अकार्षीदित्यादावन्तरङ्गत्वाद्गुणे कृते रपरत्वे च अनिगन्तत्वात् सिचि वृद्धिर्न प्राप्नोति । उच्यते । ह्म्यन्तक्षण (7/2/5) इत्यत्रापि णिश्विग्रहणं ज्ञापकं "न सिच्यन्तरत्वमस्ती'ति । अन्यथाहि गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधसिद्धौ णिश्विग्रहणमनर्थकं स्या" दित्याह पु. दे. ज्ञा.,समु. षड्विंशे सिचिपादे पृ. 89 ।

1. अष्टा. 7/2/4 ।
2. 'सिचि वृद्धिः परस्मैपदेषु' - अष्टा. 7/2/1 ।
3. 'सार्वधातुकार्धधातुकयोः' - अष्टा. 7/3/84 ।
4. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।
5. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' - अष्टा. 7/2/5 ।
6. अष्टा. 2/1/36 ।
7. तथाहि–

(क) "समासोऽपि तर्हि न प्राप्नोति । वचनात्समासो भविष्यती"त्युक्त्या ज्ञापकत्वमत्र वचने सूचयति पत. व्या. म. भा. 2/1/2/36 ।
"आचार्यप्रवृत्तिर्ज्ञापयति–'भवति हि तादर्थ्ये चतुर्थी'ति यदयं'चतुर्थीतदर्थार्थे'ति चतुर्थ्यन्तस्य तदर्थेन समासं शास्ती"ति चाऽऽह पत. 2/3/1/13 ।
(ख) "चतुर्थी चास्मादेव ज्ञापकादत्तादर्थ्ये भवती"त्याह जया. का. 2/1/36 ।
(ग) "यदि तादर्थ्ये चतुर्थी न स्यात्, तदा तदर्थग्रहणमनर्थकं स्यात् । तस्माद्यदेतत् तदर्थेन चतुर्थ्यन्तस्य समासविधानं तदेव ज्ञापकम्–तादर्थ्ये चतुर्थी भवतीती"त्याह जि. बु. न्या. 2/1/36 ।
(घ) "चतुर्थी सम्प्रदाने (सू. 2/3/13) 'चतुर्थी तदर्थार्थ' (2/1/36) इति...... चतुर्थ्यन्तस्य तदर्थेन समासविधानात् ज्ञापकात् भवति तादर्थ्ये चतुर्थीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 155 ।

मानाभावः शङ्क्यः, यतोऽयमर्थो[1]ज्ञापकाल्लभ्यते । [2]ज्ञापकश्चास्यात्रान्यत्र[3] निरूपयिष्यते ।

## 'ताभ्या'मितिशब्दः

'ताभ्यामन्यत्रोणादयः'[4]–इत्यत्र 'ताभ्या'मितिशब्दः 'अनन्तरस्य–विधिर्भवति प्रतिषेधोवे[5]'तिपरिभाषाया निषेधांशस्य ज्ञापकः[6] । यतोऽस्य परिभाषांशस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि–सूत्रेऽस्मिन् [7]सम्प्रदानापादानयोः[8] पर्युदासाय शब्दोऽयमुपात्तः । स चास्य परिभाषांशस्याभावे व्यर्थः । तनित इति–[9]तन्तुरित्यादौ सूत्रेणानेन [10]कृत्त्वात् कर्तर्येव [11]विहितानामुणादीनां[12]कर्मादिषु परिभाषणं क्रियत इति परिभाषांशस्यास्याभावे हि प्रकृतत्वादेवान्यत्रपदेनैव सम्प्रदानापादानयोः पर्युदासः सुलभः । ज्ञापिते चास्मिन्परिभाषांशेऽन्यत्र शब्देनात्रानन्तरस्यापादानस्यैव[13] पर्युदासः स्यात् न व्यवहितस्य [14]संप्रदानस्यापीत्युभयोः पर्युदासायात्र शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्यांशफलं तु 'सुडनपुंसकस्ये'-[15]त्यत्र 'अनपुंसकस्ये'तिनिषेधः सुट्त्वप्रयुक्त-

---

1. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः'–अष्टा. 2/1/36, इत्यत्र बलिरक्षितशब्दज्ञापकादित्यर्थः ।
2. प्रबन्धे इत्यर्थः ।
3. बलिरक्षितशब्दज्ञापकत्वनिरूपणावसरे इत्यर्थः ।
4. अष्टा. 3/4/75 ।
5. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
   (च) भ.ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
6. तथाहि–"इदं तर्हि ज्ञापकम्.......' ताभ्यामन्यत्रोणादयः (3/4/75) इतिताभ्यांग्रहण"मित्याह व्याडिः प. सू. प. 16, पृ. 10 ।
7. 'दाशगोघ्नौ संप्रदाने'–अष्टा. 3/4/73 ।
8. 'भीमादयोऽपादाने'–अष्टा. 3/4/74 ।
9. 'तनु विस्तारे'धा. पा. तना. 1463, इति तन्धातोः 'ताभ्यामन्यत्रोणादयः'–अष्टा. 3/4/75, इतिबलेन'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' उणा. 1/69 इति कर्मणि तुन्प्रत्यये कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
10. 'कृदतिङ्'–अष्टा. 3/1/93 ।
11. 'कर्तरि कृत्'–अष्टा. 3/4/67, इत्युक्तत्वादिति शेषः ।
12. 'उणादयो बहुलम्'–अष्टा. 3/3/1, इत्यनेन विहितानामिति शेषः ।
13. 'भीमादयोऽपादाने'–अष्टा. 3/4/74 ।
14. 'दाशगोघ्नौ संप्रदाने'–अष्टा. 3/4/74 ।
15. अष्टा. 1/1/43 ।

संज्ञाया[1]एव भवति, न तु 'शि सर्वनामस्थान'मिति शित्त्वप्रयुक्तसंज्ञाया[2]अपी'ति । शित्त्वप्रयुक्तसर्वनामसंज्ञाया निषेधे हि '[3]शिसर्वनामस्थान'मितिनिर्विषयं स्यात् । तेन 'कुण्डानी'त्यत्र[4]क्लीबेऽपि सर्वनामस्थाने दीर्घः[5] सिद्ध्यति । एवं 'नेटी'ति[6]वृद्धि-प्रतिषेधोऽप्यनन्तराया एव हलन्तलक्षणाया[7] वृद्धेरेव न तु व्यवहिताया: सिचि[8]वृद्धे-रपी'त्यपि फलमस्यांशस्य । तेन '[9]अलावी'दित्यत्र सिचि वृद्धिः[10] 'सिद्ध्यति ।

## 'तासी'ति शब्दः

'[11]तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङो'रित्यत्र 'तासी'-ति-शब्दः–[12]'न विकरणस्वरो लसार्वधातुकस्वरं बाधते'इति परिभाषाया ज्ञापकः[13] ।

---

1. 'सर्वनामस्थानसंज्ञाया इत्यर्थः ।
2. – " " ।
3. अष्टा. 1/1/42 ।
4. कुण्डशब्दान्नपुंसकाज्जसि शसि च 'जश्शसोः शिः'–अष्टा. 7/1/20, इतिजश्शसोः श्यादेशे 'शिसर्वनामस्थानम्'–अष्टा. 1/1/42 इतिशेः सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः'–अष्टा. 7/1/72, इतिनुमि'सर्वनामस्थाने चासम्बुद्धौ'–अष्टा. 6/4/8, इत्युंपधादीर्घे च कृते रूपमिदम् ।
5. 'सर्वनामस्थाने चासम्बुद्धौ'–अष्टा. 6/4/8 ।
6. अष्टा. 7/2/4 ।
7. 'वद-व्रज-हलन्तस्याचः'–अष्टा. 7/2/3 ।
8. 'सिचि वृद्धिः परस्मैपदेषु'–अष्टा. 7/2/1 ।
9. 'लूञ् छेदने' धा. पा. क्र्या. 1483, इतिलूधातोर्लुङि तिपि च्लौ तस्य सिचि इटि ईटि च कृते सिचो लोपे 'सिचि वृद्धिः परस्मैपदेषु'–अष्टा. 7/2/1 इतिधातोरुकारस्य वृद्धावौकारे आवादेशे इकारस्य ईकारस्य च सवर्णदीर्घैकाऽऽदेशे तेरिकारस्य लोपे च कृते रूपमिदम् ।
10. 'सिचि वृद्धिः परस्मैपदेषु'–अष्टा. 7/2/1, इत्यनेनेतिशेषः ।
11. अष्टा. 6/1/186 ।
12. व्याडिः प. सू. प. 84, पृ. 35 ।
13. तथाहि–
 (क) "'न विकरणस्वरो लसार्वधातुकस्वरं बाधते' । कथं ज्ञायते । यदयं कर्तेत्यत्र तासः परस्य लसार्वधातुकस्य निषेधं शास्ति तज्ज्ञापयति, भवतीयं परिभाषेति । किमेतस्या ज्ञापने प्रयोजनम् । चिनुते क्रीणीते इत्यत्र विकरणस्वराल्लसार्वधातुकस्वरः सिद्धो भवती"त्याह व्याडिः प. सू. प. 84, पृ. 35 ।
 (ख) 'ननु परत्वात्तिबादिषु कृतेषु विकरणैर्भवितव्यम्, अतः सति सार्वधातुकस्वरे श्नास्वरस्य शिष्यमाणत्वात् तस्य सति शिष्टत्वम्, एवञ्च श्नास्वरेणैव बाधा युक्ता तत्स्वरस्य ? एवं मन्यते यत्'तास्यनुदात्तेन्ङिदुपदेश' इत्यादिना तासेः परस्य लसार्वधातुकत्वं शास्ति, तज्ज्ञापयति शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरेण बाध्यत इती"त्याह जि. बु. न्या. 6/1/158 ।
 (ग) "तास्यनुदात्तेदिति (6/1/186) तासेः परस्य लसार्वधातुकस्यानुदात्तवचनं-ज्ञापकम् 'सति शिष्टस्वरो बलीयानन्यत्र विकरणेभ्य'इत्यर्थस्य । विकरणस्वरबलीयस्त्वे हि तासि स्वरे कृते शेषनिघातादेवेष्टसिद्धे"रित्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 84 ।

यतोऽस्या अभावे तासीत्ययं शब्दोऽत्र व्यर्थः । तथाहि–[1]'कर्ते'त्यादौ तासेः परस्य लसार्वधातुकस्यानुदात्तत्वस्वरविधानाय सूत्रेऽस्मिन् 'तासी'–त्ययं शब्द उपात्तः । स चास्य अभावे व्यर्थः । यतोऽस्य शब्दस्याभावेऽपि 'कर्ते'त्यादौ परनिमित्तकत्वाभावेन तिबादीनामन्तरङ्गत्वेन तिबादिषु कृतेषु क्रियमाणस्य तासिस्वरस्य सतिशिष्टत्वाच्छेष-निघातेन[2]सिद्धिः सुलभा । ज्ञापितायां चास्यामनयात्र शेषनिघातेन तासिस्वरो न सिद्ध्य-तीति तत्रानुदात्तत्वविधानाय शब्दोऽयमत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'चिनुते[3] '[4]क्रीणीते'–इत्यत्र विकरणस्वराल्ल-[5]सार्वधातुकस्वरस्य[6]सिद्धिः । अस्या असत्त्वे हि लसार्वधातुकस्वरं प्रबाध्यात्र विकरणस्वराऽऽपत्तिर्दुर्वारा स्यात् ।

वस्तुतस्तु नेयं ज्ञापकसाध्या, किन्तु वाचनिकीति भट्टनागेशो मनुते[7] ।

---

(घ) "एवं मन्यते–यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापकमुक्तार्थस्य अन्यथा यद्यपि लावस्थायां तासि र्विधीयते, तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं तत्स्या"-दित्याह ह. मि. पदम. 6/1/158 ।

(ङ) "सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम् । अन्यत्रेति । अत्र ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधानम् । अन्यथा परनिमित्तकत्वाभावेन तिबादी-नामन्तरङ्गत्वेन तिबादिषु कृतेषु क्रियमाणस्य तासिस्वरस्य सति शिष्टत्वाच्छेषनिघातेन सिद्धे तद्वैयर्थ्यं स्पष्टमेवे'त्याह भ. ना. ल. श. शे. साधारणस्वर प्र. पृ. 623-624 ।

(च) "अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम् । तथाहि–यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु, परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं तत्स्या"दित्याह जयकृष्णमौनिः सुबो. स्वरप्रक्रियायां साधारणस्वर प्र. पृ. 623 ।

(छ) "तासेरत्परस्य लसार्वधातुकस्यानुदात्तविधानात् ज्ञापकात्सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं बाधत इती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 178।

1. 'डुकृञ्करणे' धा. पा. तना. 1472, इति कृधातोर्लुटि प्रथमपुरुषैकवचने रूपम् ।
2. 'अनुदात्तं पदमेकवर्जम्'–अष्टा. 6/1/158 ।
3. 'चिञ् चयने' धा. पा. स्वा. 1252, इति चिधातोर्लटि ते 'स्वादिभ्यः श्नुः'–अष्टा. 3/1/73, इतिश्नुप्रत्यये शकारस्येत्संज्ञालोपयोः कृतयोः श्नोः शित्त्वेन तकारस्य तिङ्त्वेन सार्वधातुकतया 'सार्वधातुकमपित्'–अष्टा. 1/2/4, इति ङित्त्वात् 'क्ङिति च'–अष्टा. 1/1/5, इति निषेधेन धातोरिकारस्य श्नोरुकारस्य च सार्वधातुकलक्षणस्य गुणस्याभावे टितष्टेरेत्वे च कृते रूप-मिदम् ।
4. 'डुक्रीञ् द्रव्यविनिमये' धा. पा. क्र्या. 1474, इति क्रीधातोर्लटि ते 'क्र्यादिभ्यः श्ना'–अष्टा. 3/1/81, इतिश्नाविकरणे तस्य अपिलसार्वधातुकत्वेन ङित्त्वादीकारस्य सार्वधातुकलक्षणगुणाभावे श्नः आकारस्य 'ईहल्यघोः'–अष्टा. 6/4/113, इति ईत्वे टितष्टेरेत्वे च कृते रूपमिदम् ।
5. 'आद्युदात्तश्च'–अष्टा. 3/1/3 ।
6. 'तास्यनुदात्तेत्.'–अष्टा. 6/1/186 ।
7. भ. ना. ल. श. शे. साधारणस्वर प्र., पृ.- 624 ।

## 'तु'गिति शब्दः

'[1]नलोपस्सुप्स्वरसंज्ञातुग्विधिषु कृती'त्यत्र'तु'गितिशब्दः 'अवयवलोपिनामतो लोपोनास्ती'ति[2] परिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्रासौ शब्दो व्यर्थः । 'वृत्रहभ्या'मित्यत्र हि नलोपे [4]कृते वृत्रह+भ्यामित्यवस्थायां [5]प्रत्ययलक्षणेन 'अतो-लोपः[6]' इत्यल्लोपस्य दुर्वारतया कृते चाल्लोपे ह्रस्वस्याऽभावेन तुकोऽ[7]प्राप्त्यात्र तुग्वारणाय नलोपस्यासिद्धत्वार्थमुपात्तोऽयं शब्दो नाऽऽवश्यकः ।ज्ञापितायां चास्यामन-यातोलोपाभावेन तुको दुर्वारतया तद्वारणाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापि-ताया अस्याः फलं तु 'राजीयति[8]राजायते'[9]इत्यादि प्रयोगाणां साधुत्वसिद्धिः । अस्या असत्त्वे हि [10]अल्लोपस्यात्राऽपि दुर्वारतयाकाराभावेन क्रमशः [11]इत्वदीर्घौ[12] न

---

1. अष्टा. 8/2/2 ।
2. व्याडिः प. सू. प. 88, पृ. 36 ।
3. तथाहि–
   (क) " 'अवयवलोपिनामतोलोपो नास्ति' । कथं ज्ञायते । यदयं 'नलोपस्सुप्स्वरसंज्ञातुग्विधिषुकृति (8/2/2) इति तुग्विधिं प्रति नलोपस्यासिद्धत्वं शास्ति । कथं कृत्वा ज्ञापकम् । 'वृत्रहभ्या'मित्यत्र नलोपे कृते पश्चादतोलोपः प्राप्नोति । तस्मिन्कृते नैव तुक्प्राप्नोति । कथं कृत्वा । ह्रस्वस्येति तदा न शक्यते वक्तुम् । तस्मान्नार्थो नलोपस्यासिद्धत्वेन । तद्यस्मात्तुग्विधिं प्रति लोपस्यासिद्धत्वं शास्ति तज्ज्ञापयति अस्तीयं परिभाषेति । किमेतस्या ज्ञापने प्रयोजनम् । राजीयति–राजायते एवमादयः सिद्धा भवन्तीत्याह व्याडिः प. सू. प. 88, पृ. 36 ।
4. 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7 ।
5. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62 ।
6. अष्टा. 6/4/48 ।
7. 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/1/71 ।
8. राजानमिवाचरतीत्यर्थे, द्वितीयान्ताद्राजञ्शब्दात्, 'उपमानादाचारे'–अष्टा. 3/1/10, इति क्यचि तदन्ताल्लटि ति 'क्यचि च' अष्टा. 7/4/33, इत्यकारस्य ईत्वे 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7, इति नलोपे रूपमिदम् ।
9. 'राजा इवाचरतीत्यर्थे'प्रथमान्ताद्'राजञ् शब्दात्' कर्तुः क्यङ् सलोपश्च'–अष्टा. 3/1/11. इति क्यङि तदन्ताल्लोटि ते नलोपे 'अकृत्सार्वधातुकयोर्दीर्घः'–अष्टा. 7/4/25, इति जकारोत्तरस्याकारस्य दीर्घे रूपमिदम् ।
10. 'अतो लोपः'–अष्टा. 6/4/48 ।
11. 'क्यचि च'–अष्टा. 7/4/33 ।
12. 'अकृत्सार्वधातुकयोर्दीर्घः'–अष्टा. 7/4/25 ।

प्राप्नुत इति नास्य साधुत्वं सिद्ध्येत् । वामनस्तु '[1]सन्निपातान्तरङ्ग-[2]परिभाषेऽनित्ये इति वचनस्य ज्ञापकोऽत्रायं शब्द इति मतान्तरमाह[3] ।

अत्र सूत्रे 'तु'गिति शब्दः" 'असिद्धं [4]बहिरङ्गमन्तरङ्गे'इतिपरिभाषानित्ये"ति वचनस्य ज्ञापकः ।यतोऽस्य वचनस्याभावे नित्यत्वादनयैव 'वृत्रहभ्या'मित्यत्रान्तरङ्गे तुकि[5] कर्तव्ये बहिरङ्गस्य [6]नलोपस्यासिद्धत्वादेव [7]तुकोऽभावः सिद्ध इति तुकि कर्तव्ये नलोपस्यासिद्धत्वार्थमुपात्तोऽयं शब्दोऽत्र व्यर्थ इति पुरुषोत्तमदेव–सीरदेवावपि [8]मन्वाते । ज्ञापितस्यास्य वचनस्य फलं तु 'अमू'[9]इत्यस्य साधुत्वसिद्धिः । अस्य वचनस्या-

---

1. संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'तिपरिभाषास्वरूपम् ।
2. "असिद्धं बहिरङ्गमन्तरङ्गे'–इतिपरिभाषास्वरूपम् ।
3. तथाहि–"अत्र केचित्–'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य'–इति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वासिद्धत्वात्तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः, तत्तु क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितु"मित्याह वाम. का. 8/2/2 ।
4. (क) व्याडिः प. सू. प. 36, 79, पृ. 18, 33 ।
   (ख) पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ग) सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
   (घ) नी. दी. प. वृ. प. 58, पृ. 304 ।
   (ङ) ह. भा. प. भास्क. प. 71, पृ. 353 ।
   (च) भ. ना. प. शे. प. 51, पृ. 184 ।
   (छ) शेषा. प. भास्क. प. 42, पृ. 417 ।
5. 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/1/71 ।
6. 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7 ।
7. 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/1/71, इतिविहितस्येत्यर्थः ।
8. तथाहि–
   (क) "अनित्यत्वं चास्याः'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' (8/2/2) इतितुग्विधौ नलोपस्यासिद्धत्ववचनेन ज्ञापितम् । यदि हीयं नित्या स्यादनयैव वृत्रहभ्यामित्यत्रान्तरङ्गे तुकि कर्तव्ये बहिरङ्गस्य नलोपस्यासिद्धत्वादेव सिद्धमिति"–इत्याह पु. दे. ल. प. वृ. प. 41, पृ. 129 ।
   (ख) "अनित्या चेयं परिभाषा । तच्चानित्यत्वं 'नलोपः सुप्स्वर.' (8/2/2) इतितुर्गविधौ नलोपस्यासिद्धत्वेन ज्ञापितम् । तथाहि, यदीयं नित्या स्यात् तदानयैव वृत्रहभ्यामित्यत्रान्तरङ्गे तुकि र्तव्ये बहिरङ्गस्य नलोपस्यासिद्धत्वं सिद्धमेवेत्यनित्यत्वे ज्ञापकम् । ननु सिद्धे पुनर्यदसिद्धवचनं तन्नियमार्थं स्यात् । कृत्प्रत्ययलक्षणे तुक्येवासिद्धं न छलक्षण इति । तेन-वृत्रहच्छत्रमित्यत्र तुकि कर्तव्येऽसिद्धं बहिरङ्गमन्तरङ्ग इति न प्रवर्तते । न च विधिनियमसंभवे विधिरेव ज्यायानित्यस्ति, नियमज्ञापकयोरर्थद्वयापेक्षत्वेन तुल्यत्वात् । उच्यते । वृत्रहच्छत्रमित्यत्र नलोपो न बहिरङ्गोऽपितु तुगेव तुको द्विपदाश्रयत्वात् । वृत्रहभ्यामित्यत्र तु विभक्तिमाश्रित्य नलोप इति तत्र तस्य बहिरङ्गत्वम् । अनित्यत्वे चामू इत्यत्रैकादेशस्य बहिरङ्गस्यान्तरङ्गे उत्वे मत्वे च कर्तव्येऽसिद्धत्वं न भवती"त्याह सी. दे. बृ. प. वृ. प. 69, पृ. 234 ।
9. अदस् शब्दादौविभक्तावत्वे पररूपे 'अद औ'–इत्यवस्थायां वृद्धिरेचि'–अष्टा. 6/1/88, इति वृद्ध्येकादेशे 'अदसोऽसेर्दादुदो मः'–अष्टा. 8/2/80, इत्युत्वमत्वयोः कृतयो रूपमिदम् ।

सत्त्वे ह्यत्रैकादेशस्य[1] बहिरङ्गस्यान्तरङ्गे उत्वे मत्वे[2]च कर्तव्येऽनया[3]ऽसिद्धत्वस्य दुर्वारतया, [4]उत्वमत्वयोरप्राप्त्या नास्य साधुत्वं सिद्ध्येत् । सति चास्मिन्वचनेऽत्रैकाऽऽ[5]देशस्य बहिरङ्गस्यान्तरङ्गे उत्वे मत्वे च[6] कर्तव्येऽसिद्धत्वं भवतीत्युत्वमत्वयोः[7] सुलभतयाऽस्य साधुत्वं सिद्ध्यति ।

## 'तु'गितिशब्दः

'[8]षित्वतुकोरसद्धः'–इत्यत्र 'तु'गिति शब्दः 'उत्तरपदाधीनो नञ्तत्पुरुष'इति वचनस्य [9]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र '[10]अधीत्ये'त्यादौ[11]तुकि कर्तव्ये एकाऽऽदेश- [12]स्यासिद्धत्वायोपात्तस्तुगितिशब्दो व्यर्थः । तथाहि अस्य वचनस्याभावे कार्यासिद्धत्वपक्षे 'अधीत्ये'त्यादावनेन[13] एकाऽऽदेशे दीर्घे निवर्तितेऽपि'नहि विप्रस्य हन्तरि हते पुनस्तस्योज्जीवनं भवती'ति न्यायेन प्रागेव [14]आदेशनिवर्तितस्थानिनोः पूर्वपरयोरुद्गमासंभवाद् ह्रस्वाभावेन तुग्दुर्लभ इतितत्र तुगर्थं तुकि कर्तव्येएकादेशस्यासिद्धत्वसम्पादकोऽयं शब्दोऽत्र व्यर्थः । ज्ञापिते चास्मिन्वचने शास्त्रासिद्धत्व-

---

1. 'वृद्धिरेचि'–अष्टा. 6/1/88 ।
2. 'अदसोऽसेर्दादुदो मः'–अष्टा. 8/2/80 ।
3. 'असिद्धं बहिरङ्गमन्तरङ्गे'–इत्यनया परिभषयेत्यर्थः ।
4. 'अदसोऽसेर्दादुदो मः'–अष्टा. 8/2/80, इतिविहितयोरित्यर्थः ।
5. 'वृद्धिरेचि'–अष्टा. 8/1/88 ।
6. 'अदसोऽसेर्दादुदोमः'–अष्टा. 8/2/80, इत्यनेनेतिशेषः ।
7. " " " "
8. अष्टा. 6/1/86 ।
9. तथाहि–"षत्वतुकोरसिद्ध इति कार्यासिद्धत्वपक्षे अधीत्येत्यादौ असिद्धवचनेन एकादेशे दीर्घे निवर्तितेपि कथं ह्रस्वाश्रयः तुक्, स्थानिनोः पूर्वपरयोः प्रागेव आदेशेन निवर्तितत्वात् । नहि विप्रस्य हन्तरि हते पुनस्तस्योद्गमो भवति । एवंतर्हि इदमेव तुकि असिद्धवचनं ज्ञापकम् । 'उत्तरपदाधीनो नञ्तत्पुरुष इति । तेनानेकः पुरुषः अद्वाविंशतिर्गावं इत्येकवचनम्, अद्वौ न क्षय इति द्विवचनम्, अनापोऽचत्वार इति बहुवचनम्, अवर्षा हेमन्त इति स्त्रीलिङ्गता सिद्ध्यती"त्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 83 ।
10. अधिपूर्वकात् 'इङ् अध्ययने' धा. पा. अदा. 1046, इति इङ्धातोः 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21, इति क्त्वाप्रत्यये समासे 'समासेऽनञ्पूर्वे क्त्वोल्यप्'–अष्टा. 7/3/37, इति क्त्वो ल्यपि 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101, इतिदीर्घैकाऽऽदेशे 'षत्वतुकोरसिद्धः'–अष्टा. 6/1/86, इति तदसिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/1/71, इतितुकि रूपमिदम् ।
11. 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/1/71 ।
12. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
13. 'षत्वतुकोरसिद्धः'–अष्टा. 6/1/86, इत्यनेनेत्यर्थः ।
14. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1 ।

मिहविज्ञातं [1]भवतीति विप्रहन्तोद्यते तद्धन्तरि हते विप्रस्योज्जीवनं भवतीतिन्यायेन-ह्रस्वेकारहननोद्यते दीर्घैकाऽऽदेशे एवासिद्धत्वाऽऽरोपात् तदप्रवृत्तिबुद्धौ ह्रस्वस्योपलम्भाद् 'अधीत्ये'- [2]त्यादौ तुकः सिद्धयेऽत्र 'तु'गितिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अनेकः पुरुष' 'आद्वाविंशतिर्गावः'—इत्यत्रैकवचनस्य[3], 'अद्वौ'—इत्यत्र [4]द्विवचनस्य, 'अनापोऽचत्वारः'—इत्यत्र[5]बहुवचनस्य, अवर्षा हेमन्तः'—इत्यत्र [6]स्त्रीलिङ्गतायाश्च सिद्धिः । अत्र सर्वत्र हि-'उत्तरपदाधीनो[7]नञ्तत्पुरुषो भवति । वस्तुतस्तु ज्ञापितेऽप्येतस्मिन्ज्ञापकस्य स्वांशे स्फुटं चारितार्थ्यं नास्तीति पुरुषोत्तमदेवोक्तोऽयं ज्ञापको न युक्तः ।

कैयटस्तु 'षत्वतुकोरसिद्धः'—इत्यत्र 'तु'गितिशब्दः 'अधीत्य' 'प्रेत्ये'त्यादौ तुकि कर्तव्ये एकाऽऽदेशस्यासिद्धत्वार्थमुपात्तः" 'अन्तादिवच्चे'त्यनेन कार्यमात्रमतिदिश्यते न तु रूप"मितिवचनस्य ज्ञापक इति [8]मनुते । पुरुषोत्तमदेवोऽपि तथ्यमिदमाह[9] ।

---

1. तथाहि—" 'तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात्' । तत्रोत्सर्गलक्षणस्य कार्यस्याप्रसिद्धिः । अधीत्य प्रेत्येति । किं कारणम् ? । उत्सर्गाभावात् । ह्रस्वस्येत्युच्यते । नचात्र ह्रस्वं पश्यामः । 'ननु चात्रापि' 'असिद्धवचनात्सिद्धम्' । 'असिद्धवचनात्सिद्धमितिचेन्नान्यस्यासिद्धवचनादन्यस्य भावः । असिद्धवचनात्सिद्धमितिचेत्तन्न । किं कारणम् ? । 'नान्यस्यासिद्धवचनादन्यस्य भावः' नह्यन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावो भवति । नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति । 'तस्मात्स्थानिवद्वचनमसिद्धत्वे च' । तस्मात्स्थानिवद्भावोवक्तव्योऽसिद्धत्वं च । अधीत्य प्रेत्येतिस्थानिवद्भावः । कोऽसिचद् योऽसिचदित्यत्रासिद्धत्वम् । 'स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्' । स्थानिवद्वचनमनर्थकम् । किं कारणम् ? । 'शास्त्रासिद्धत्वात्' । नानेन कार्यासिद्धत्वं क्रियते । किं तर्हि ? शास्त्रासिद्धत्वमनेन क्रियते-' एकादेशशास्त्रं तुक्शास्त्रेऽसिद्धं भवती'ति"—इत्याह पत. व्या. म. भा. 6/1/4/86 ।
2. 'ह्रस्वस्य पिति कृति तुक्'—अष्टा. 6/1/71 ।
3. 'द्व्येकयोर्द्विवचनैकवचने'—अष्टा. 1/4/22 ।
4. 'द्व्येकयोर्द्विवचनैकवचने'—अष्टा. 1/4/22 ।
5. 'बहुषु बहुवचनम्'—अष्टा. 1/4/21 ।
6. सत्त्वादिगुणानामपचयरूपायाः शास्त्रीयस्त्रीलिङ्गताया इत्यर्थः ।
7. अष्टा. 2/2/6 ।
8. तथाहि—"कार्यमात्रमनेनातिदिश्यते न तु रूपम् । विशिष्टवर्णरूपाश्रयाश्चैते विधयो नातिदिश्यन्ते । तुक्यसिद्धवचनं चास्यार्थस्य लिङ्गम् । यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत तदाऽधीत्य प्रेत्येत्यादावेकादेशस्य ह्रस्वत्वं प्रत्यादिवद्भावात्तुकः सिद्धत्वात्तुक्यसिद्धत्वं न ब्रूया"दित्ययमाह प्रदी. 6/1/4/85 ।
9. "अधीत्येत्यादौ परं प्रत्यादिवत्त्वे ह्रस्वग्रहणेन ग्रहणात्तुक्सिद्धौ षत्वतुकोरसिद्ध इति (6/1/86) ज्ञापयति—'वर्णाश्रयविधौ नान्तादिवत्त्वमिति कैयटः । वर्णाश्रये रूपाश्रय इत्यर्थः । अथवा अन्तादिवच्चेत्यनेन (6/1/85) कार्यमात्रमतिदिश्यते न रूपमित्यर्थः । तेन खट्वाभिरित्यादौ टापः पूर्वं प्रत्यन्तवत्त्वात् अत इति (7/1/9) भिस ऐस् न भवति"ज्ञा. समु. एकविंशे एकाच्पादे 83 ।

एतएव वामनो वर्णाश्रयविधावयमन्तादिवद्भावो नेष्ट[1]इत्याह । तथ्यं चेदं भगवता सूचितम्[2] । अतः कैयटोक्तमस्यात्र वचने ज्ञापकत्वं युक्तमिति मन्ये ।

## 'तुमर्थ'इति शब्दः

'[3]तुमर्थे से सेनसे असेन् क्से कसेनध्यै अध्यैनूकध्यैकध्यैन्–शध्यैशध्यैन् तवै तवेङ्तवेनः'–इत्यत्र तुमर्थइति शब्दः 'कर्तुरन्योऽपि तुमुनोऽर्थोस्ती'तिवचनस्य[4]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि–'वक्षेराय:[5]'–इत्यादिप्रयोगेषु भावे सयादिप्रत्ययान् विधातुमारब्धे 'छन्दसि-विषये-धातोः सयादयः प्रत्यया भवन्ती'त्यर्थकेऽस्मिन् सूत्रे 'तुमर्थ'इति–शब्दोऽस्य वचनस्याभावे व्यर्थः । कर्तुस्तु-

---

1. तथाहि–"वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथाहि–खट्वाभिरित्यत्रान्तवद्भावाभावाद् 'अतो भिस ऐस्' इति न भवति । ह्वयतेः–जुहावेति सम्प्रसारणपूर्वत्वस्यादिवद्भावाभावाद् 'आत औ णलः' इति न भवति । अस्यै अश्वः, अस्या अश्व इति 'वृद्धिरेचि'इति वृद्धिः 'एङः पदान्तादति'इत्यत्र विधावादिवन्न भवति"–का. 6/1/85 ।
2. 6/1/4/85 ।
3. अष्टा. 3/4/9 ।
4. तथाहि–
   (क) "तुमर्थे इत्युच्यते कस्तुमर्थः । कर्ता । यद्येवं नार्थस्तुमर्थग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना सयादयोपि भविष्यन्ति । एवं तर्हि सिद्धेसति यत्तुमर्थग्रहणं करोति तज् ज्ञापयत्याचार्योऽ'स्त्यन्यः कर्तुस्तुमुनोऽर्थ'इति । कः पुनरसौ भावः । कुतो न खल्वेतद्भावे तुमुन्भविष्यति, न पुनः कर्मादिषु कारकेष्विति । ज्ञापकादयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे भविष्यति । तद्यथा गुप्तिज्किद्भ्यः सन्, यावादिभ्यः कन्निति । सोऽसौ स्वार्थे भवन् भावे भविष्यति । किमेतस्य ज्ञापने प्रयोजनम् ? 'अव्ययकृतो भावे भवन्ती'त्येतन्न वक्तव्यं भवती'त्याह पत. व्या. म. भा. 3/4/1/9 ।
   (ख) "तुमर्थो भावः । कथं ज्ञायते ? वचनसामर्थ्यात् । तावदयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे तुमुन्नादिश्यते । अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति । स्वार्थश्च धातूनां भाव एवे'त्याह जया. का. 3/4/9 ।
   (ग) "अर्थान्तरस्य निर्देशाद् या प्रकृतिः प्रत्यायानां निमित्तत्वेनोपादीयते तदर्थस्य प्रत्यासत्तेस्तत्रैवानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति, स पुनरिह स्वार्थो भावः । कुत एतत् ? धात्वधिकारात्, धातोश्च भाववचनत्वात् । यद्येवम्, भावग्रहणमेव कुर्यात्, लघुत्वात् ? नैवं शक्यम्, भावग्रहणे सति 'कर्तृरि कृत्' इतिवचनात् तुमुन् कर्तर्येव स्यात् । तुमर्थग्रहणे हि तुमुनोऽपि भाव एवार्थ इत्येतद् ज्ञापितं भवतीति न कश्चिद्दोष इती"त्याह जि. बु. न्या. 3/4/9 ।
   (घ) "तुमर्थे से–(सू. 3/4/9) । तुमर्थग्रहणं ज्ञापयति अस्त्यन्यः कर्तुस्तुमुनोऽर्थ इती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1 पृ. 162 ।
5. 'वच परिभाषणे' धा. पा. अदा. 1063, इतिवच्धातोः' तुमर्थेसेसेन.'–अष्टा. 3/4/9, इति से प्रत्यये 'चोः कुः'–अष्टा. 8/2/30, इतिचकारस्य कुत्वेन ककारे प्रत्ययसकारस्य षत्वे च कृते रूपमिदम् ।

मुनोऽर्थत्वे हि 'कर्तरि[1]कृत्' इत्यनेनैव [2]सयादि-प्रत्ययानां कर्त्रर्थकत्वं सुलभम् । ज्ञापिते चास्मिन्वचने भावस्यापि तुमर्थतया 'वक्षे रायः'इत्यादौ भावेऽर्थे सयादिप्रत्ययान् विधातुमत्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अव्यय- कृतोभावे'[3]–इत्यतेद्वार्तिकानारम्भजन्यं लाघवम् । सति ह्यस्मिन् ज्ञापिते वचने तुमर्थग्रहणानुवृत्त्यैव अव्ययकृतां क्त्वाऽऽदीनां भावार्थकत्वसिद्धि-रेतद्वार्तिकं विनापि सुलभा ।

## 'तृ'जिति शब्दः

[4]'अर्हे कृत्यतृचश्चे'त्यत्र 'तृ'जितिशब्दः'प्राङ्ण्मुलः कृत्यसंज्ञा भवती'ति–वचनस्य-ज्ञापकः[5] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । अस्य वचनस्याभावे हि तृचोऽपि [6]कृत्यसंज्ञकत्वेन 'अर्हे कृत्याः' इत्येव सूत्रयितुं शक्यम् । न चोक्तज्ञापकेन 'तृचः' प्राक्कृत्यसंज्ञे'त्येव वचनं ज्ञापयितुं शक्यं, नतु 'प्राङ्ण्मुलः कृत्यसंज्ञे'ति वचनमितिशङ्कनीयम् । यतोऽस्य ज्ञापकस्य सूत्रापेक्षत्वेन तृच्घटितात् [7]'ण्वुल्तृचौ'इति सूत्रात् प्राक् कृत्यसंज्ञाधिकार इतिज्ञापयितुमनेन [8]शक्यते । ज्ञापिते चास्मिन् वचने तृचः कृत्यसंज्ञाया अभावाद् 'अर्हे कृत्या'[9] इत्यनेन न्यासेन तृचो विधानं नप्राप्नोतीति'भवान्खलु कन्याया वोढा'[10]–इत्यादौ वहादिधातोस्तृचं विधातुमयं शब्दः स्वांशे चरितार्थो

1. अष्टा. 3/4/67 ।
2. 'से-सेन्-असे-असेन्-क्से-कसेन्-अध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेन्'- इत्येतेषामित्यर्थः ।
3. वा. व्या. म. भा. 3/4/1/9 ।
4. अष्टा. 3/3/169 ।
5. तथाहि–
   (क) "यदयमर्हे कृत्यतृचश्चेति तृज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः – "प्राङ्ण्वुलः कृत्यसंज्ञा भवती'ति । एवमपि ण्वुलः कृत्यसंज्ञा प्राप्नोति । योगापेक्षं ज्ञापक"मित्याह पत. व्या. म. भा. 3/1/6/95 ।
   (ख) "कृत्याः (सू. 3/1/95) । अर्हे कृत्यतृज्ग्रहणं ज्ञापकं प्राङ्ण्वुलः कृत्संज्ञा भवतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 160 ।
6. 'कृत्याः'–अष्टा. 3/1/95, इत्यनेनेतिशेषः ।
7. अष्टा. 3/1/133 ।
8. तथाहि–"योगापेक्षमिति । ण्वुल्तृचावित्येतस्माद्योगात् प्राक्कृत्यसंज्ञाधिकार इत्येवं तृज्ग्रहेणानानुमास्यत इत्यर्थः"इत्याह कै. प्रदी. 3/1/6/95 ।
9. अष्टा. 3/3/169 ।
10. 'वह प्रापणे' धा. पा. भ्वा. 1004, इतिवह्धातोः 'अर्हे कृत्यतृचश्च'–अष्टा. 3/3/169, इति तृचि 'वह् तृ'इति स्थिते ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य'–अष्टा. 6/3/112, इत्यकारस्योकारे कृदन्ताद्'वोढृ'–शब्दात् सौ 'ऋतो ङिसर्वनामस्थानयोः'–अष्टा. 7/3/110 इति प्राप्तं गुणं बाधित्वा 'ऋदुशनस् पुरुदंसोऽनेहसां च'–अष्टा. 7/1/94, इत्यनेन

भवति । ज्ञापितस्यास्यवचनस्य फलं तु–"[1]प्राङ्ण्मुलः"इति वार्तिकस्याकरणजन्यं लाघवम् । काशिकास्थः[2] 'कृत्याः प्राङ्ण्मुलः'–इति सूत्रपाठो न्यास[3]समर्थितस्तु भाष्यस्यासम्मततयोपेक्ष्य एवेतिमन्ये । यतः 'कृत्याइत्येतावदेवसूत्र'मित्याह कैयटः । कैयटस्य मतमिदं भट्टोजिदीक्षित–ज्ञानेन्द्रभिक्षु–हरदत्तमिश्रा अपि स्वीकुर्वन्ति[4] ।

---

ऋकारस्यानङि 'अप्तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशस्तृणाम्'–अष्टा. 6/4/11, इत्युपधादीर्घे हल्ङ्यादिलोपे नलोपे च कृते रूपमिदम् ।

1. 'कृत्यसंज्ञायां प्राङ्ण्वुल्वचनम्'–वा. व्या. म. भा. 3/1/6/95 ।
2. 3/1/95 ।
3. तथाहि–"अथ 'रोगाख्यायां ण्वुल्बहुलम्'इत्यस्य ण्वुलोवधित्वं कस्मान्न विज्ञायते ? ज्ञापकात् । यदयम् 'अर्हे कृत्यतृचश्च'इति कृत्यग्रहणं कृत्वा तृजूग्रहणं करोति, ततो ज्ञायते नास्यावधित्वमिति, अन्यथा तृचोपि कृत्यत्वाद्भेदेनोपादानमनर्थकं स्यात् । यद्येवं प्राग्वचनमनर्थकं स्यात्, अतएव ज्ञापकात्तृच इव संज्ञा न भविष्यति ? नैतदस्ति, असति ह्येतस्मिन् तृच एव न स्यात्, ण्वुलस्तु स्यादेव । स्यादेतत्–योगापेक्षं ज्ञापकम्, एतस्मिन् योगे कृत्यसंज्ञा भवति–एषोऽर्थस्तृज्ग्रहणेन ज्ञाप्यते, तेन ण्वुलोऽपि न भविष्यतीति ? एवमन्येषामजादीनां स्यात्, प्रतिपत्तिगौरवञ्च स्यात्, योगापेक्षस्य ज्ञापकस्य दुर्विज्ञानत्वात्"इत्याह जि. बु. न्या. 3/1/95 ।
4. तथाहि–
   (क) कृत्याः 3/1/95 । अधिकारोऽयं ण्वुलः प्राक्"–इत्याह भ. दी. वै. सि. कौ. कृदन्ते प्र. पृ. 382 ।
   (ख) "कृत्याः । अत्र 'प्रत्ययः'–इत्यादिवत् कृत्य इत्यधिकारेणापीष्टसिद्धे र्बहुवचन मनुक्तप्रत्ययसमुच्चयार्थं, तेन केलिमरादयो ज्ञापकसिद्धा इति नोपसंख्येया इत्याहुः । ण्वुलः प्रागिति । 'ण्वुल्-'तृचौ'इत्यतः प्रागित्यर्थः । 'रोगाख्यायां ण्वुल्बहुल'मिति-नाविधिः, प्रत्यासत्तिन्यायात् । अवधिविशेषे ज्ञापकं तु 'अर्हे कृत्यतृचश्चेत्यत्र कृत्यात् पृथक्तृचो ग्रहणमेव । न चैवं तृचोऽकृत्यत्वेऽपि ण्वुलः कृत्यत्वं दुर्वारं स्यात्, इष्टापत्तौ तु 'तयोरेवे'ति भावकर्मणोरेव ण्वुल् स्यान्नतु कर्तरीतिवाच्यम्, भाष्ये एव ण्वुलः कृत्यत्वमाशङ्क्य योगापेक्षं ज्ञापकमिति सिद्धान्तितत्वात् । वृत्तिकारस्तु सूत्रे प्राग्ण्वुल इति प्रचिक्षेप"–इत्याह ज्ञा. भि. त. बो. कृदन्ते कृत्य प्र. पृ. 382 ।
   (ग) "रोगाख्यायां ण्वुल् बहुलम्' इत्ययं त्ववधिर्न भवति, 'अर्हे कृत्यतृचश्च'इतिपृथक् तृचो ग्राहणात् । यद्येवम्, 'प्राङ्ण्वुलः'इति न वक्तव्यम्ः, 'कृत्याः'इत्येवास्तु, तृज्ग्रहणादेव ज्ञापकात्परतोऽनुवृत्तिर्न भविष्यति, योगापेक्षं च ज्ञापकम्'ण्वुल्तृचौ'इत्यस्माद्योगात्प्राक् कृत्यसंज्ञाधिकार इति ? सत्यम्, 'कृत्याः'इत्येतावदेव पठितं सूत्रकारेण । वृत्तिकारस्तु, भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रचिक्षेप । विचित्रा हि 'वृत्तेः कृतिर्वृत्तिकारेण ! 'कृत्याः'- इति बहुवचनमनुक्तसमुच्चयार्थम्, तेन 'केलिमर उपसङ्ख्यानम्'इत्यादि नोपसंख्येयं भवती'त्याह ह. मि. पदम. 3/1/95 ।

## 'तृतीये'ति शब्दः

'अपवर्गे [1]तृतीये'त्यत्र 'तृतीये'तिशब्दः [2]'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'- परिभाषाया विध्यंशस्य [3]ज्ञापकः । यतोऽस्याभावेऽत्र सूत्रे 'तृतीया[4]च होश्छन्दसी'ति सूत्रात् तृतीयेत्यस्यानुवृत्तिः सुलभेत्यसौ व्यर्थः । ज्ञापिते चास्मिन् परिभाषांशेऽनेन [5]'अन्तरान्तरेण युक्ते' [6]'कालाध्वोरत्यन्तसंयोगे'इति सूत्रयोर्द्वितीया-विधानेनान्तरिता तृतीया नेहानुवर्तेत, तथा सति तृतीयाविधिरत्रानुपपन्ना स्यादतस्तृतीयाविधानायात्र सूत्रे 'तृतीये'तिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्यांशस्य फलं तु 'सुपि स्थः[7]' इति विधिरनन्तरस्य [8]कस्यैव, न व्यवहितस्याण-[9]इति ।

## 'तृन्तृजि'ति शब्दौ

[10]'अप्तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणा'मिति सूत्रे भेदेनोपात्तौ 'तृन्तृजि'तिशब्दौ [11]'अर्थवद्ग्रहणे नानर्थकस्ये' ति परिभाषाऽनित्येति

---

1. अष्टा. 2/3/6 ।
2. (क) व्याडिः प.सू. प. 16, पृ. 16, पृ. 9 ।
   (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भा.प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प.शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
3. तथाहि – "तत्र अनन्तरस्यैव विधिरत्रार्थे 'अपवर्गे तृतीया, (2/3/6) इति तृतीयापदं ज्ञापकम् । तद्धि अनन्तरसूत्रयोर्द्वितीयाविधानेन अन्तरिता तृतीयेति पुनः क्रियते" इत्याह पु. दे. ल. प. वृ. प. 17, पृ. 120 ।
4. अष्टा. 2/3/3 ।
5. अष्टा. 2/3/4 ।
6. अष्टा. 2/3/5 ।
7. अष्टा. 3/2/4 ।
8. 'आतोऽनुपसर्गे कः' - अष्टा. 3/2/3 ।
9. 'कर्मण्यण्' - अष्टा. 3/2/1 ।
10. अष्टा. 6/4/11 ।
11. (क) व्याडिः प.सू. प. 1, पृ. 1 ।
    (ख) पु. दे. ल. प. वृ. प. 1, पृ. 112 ।
    (ग) सी. दे. बृ. प. वृ. प. 9, पृ. 170 ।
    (घ) नी. दी. प. वृ. प. 11, पृ. 295 ।
    (ङ) ह. भा. प. भास्क. प. 9, पृ. 323 ।
    (च) भ. ना. प. शे. प. 15, पृ. 98 ।
    (छ) शेषा. भ. भास्क. प. 14, पृ. 397 ।

वचनस्य [1]ज्ञापकौ । यतोऽस्य वचनस्याभावे भेदेनोपात्ताविमौ शब्दौ व्यर्थौ । तथाहि इमौ हि शब्दौ [2]'अर्वणस्त्रसावनञः' इति 'तृ' शब्दस्य परिहारार्थं भेदेनोपात्ताविह व्यर्थौ । अर्थवद्ग्रहणपरिभाषयैवाऽऽदेशस्य तृशब्दस्य परिहारो हि सुलभः । ज्ञापिते चास्मिन् वचनेऽर्थवद्ग्रहणपरिभाषाया 'अवर्णस्त्रसावनञः' इत्यत्राप्रवृत्तौ तत्राऽऽदेशस्य तृशब्दस्य परिहारार्थं भेदेनोपात्तौ तृंन्तृजितिशब्दावत्र सूत्रे स्वांशे चरितार्थौ भवतः । न चार्वन्तावर्वन्त इत्यत्र नित्यत्वान्नुमि कृते [3]'अप्तृन्नि'ति उपधाया विहितो दीर्घो न भविष्यतीति 'अवर्णस्त्रसावनञः' इत्यत्राऽऽदेशस्य तृशब्दस्य ग्रहणेऽपि क्षत्यभावान्नैतौ भेदेनोपात्तौ स्वांशे चरितार्थावितिशङ्क्यम्। यतो 'वा षपूर्वस्य[4]निगमे' इत्यतः अप्तृन्नितिसूत्रे पूर्वग्रहणानुवृत्तेदीर्घत्वमेवात्र नुमः प्राग् भविष्यति । पूर्व-ग्रहणानुवृत्तिश्चात्र सूत्रे 'बह्वाम्पि तडागानी'त्यत्रापि नुमि कृते दीर्घायाऽऽवश्यकी । अन्यथा दीर्घत्वमत्र न स्यात् । ज्ञापितस्यास्य वचनस्य फलं तु 'दध्ना' इत्यादौ [5]'अल्लोपोऽनः' इत्यल्लोपस्य, बहुवाग्मीनी'त्यत्र 'इन्हन्पूषार्यम्णां[6] शौ' इतिदीर्घस्य, 'निर्गतस्ततो निस्तता'इत्यत्र 'अत्वसन्तस्य[7] चाधातोः' इति दीर्घस्य, सुप्रथिमे'त्यत्र [8]'मनः' इतिङीप्प्रतिषेधस्य च सिद्धिः । अन्यथाऽनर्थकत्वान्नैतेषामत्र सिद्धिः स्यात् । एतद्वचनमूला च [9]'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च

---

1. तथाहि –
   (क) "तच्च 'अप्तृन्.' (6/4/11) इत्यादिसूत्रे 'तुरिष्टेमेयः सु' (6/4/154) इतिवत् 'तृ' इति सामान्यग्रहणेन सिद्धे 'अर्वणस्त्रसौ.' (6/4/127) इतिअर्वादेशतृपरिहारार्थं कृतेन तृन्तृचोर्भेदेनोपादानेन ज्ञापितम् । यदि हि अर्थवत्परिभाषा नित्या स्यात् तदा तयैवार्वादेश-तृशब्दनिरासे कृते तदर्थं तृन्तृचोर्भेदेनोपादानमनर्थकं स्यादिती"त्याह पु. दे. ल. प. वृ. प. 77, पृ. 146 ।
   (ख) "तच्चानित्यत्वनोदि – (6/4/11) सूत्रे तृन्तृचोर्भेदेनोपादानमित्याहुः । तृन्तृचोर्भेदेनोपादानम् 'अर्वणस्त्रसावनञः' (6/4/127) इत्यर्वादेशतृनन्त्राशब्दपरिहारार्थम् । यदि त्वर्थवत्परिभाषा नित्या स्यात्तदार्थवत्परिभाषयैवार्वादेशस्य तृशव्दस्य निरासे सिद्धे तृन् तृचोर्भेदेनोपादानमनर्थकम् । कृतं च तदनित्यत्वे ज्ञापक'मित्याह सी. दे. वृ. प. वृ. प. 65, पृ. 230 ।
2. अष्टा. 6/4/127 ।
3. अष्टा. 6/4/11 ।
4. अष्टा. 6/4/9 ।
5. अष्टा. 6/4/34 ।
6. अष्टा. 6/4/12 ।
7. अष्टा. 6/4/14 ।
8. अष्टा. 4/1/11 ।
9. (क) व्याडिः प.पू. प. 129, पृ. 43 ।
   (ख) पु. दे. ल. प. वृ. प. 77, पृ. 146 ।
   (ग) सी. दे. बृ. प. वृ. प. 65, पृ. 260 ।
   (घ) नी. दी. प. वृ. प. 15, पृ. 296 ।
   (ङ) ह. भा. प. भास्क. प. 67, पृ. 351 ।

तदन्तविधिं प्रयोजयन्ती'तिपरिभाषापि पठितास्ति[1] । पुरुषोत्तमदेवः "अप्त्रादिसूत्रे (6/4/11) तृन्निति सामान्यनिर्देशेनैव सिद्धौ तृन्तृचोर्भेदेनोपादानं 'सामान्य निर्देशेऽपि क्वचिद् विशेषो गृह्यत' इति । तेन 'न कोपधाया' इत्यत्र (6/3/37) सामान्योक्तावपि तद्धितसम्बन्ध्येव ककारो गृह्यते न ककारमात्रमिति । तथा तत्रैव तृग्रहणेन व्युत्पत्तिपक्षे नप्त्रादीनामपि संग्रहे सिद्धे पृथगुपादान – 'मव्युत्पन्नान्यपि प्रातिपदिकानी'त्यस्य पक्षस्यास्तित्वं सूचयती"त्ययाह[2] ।

## 'दीधीवेवी'ति शब्दौ

[3]'दीधीवेवीटा'मित्यत्रं [4]'आदीधीता' [5]'आदीध्यकः' [6]'आवेवीता' [7]'आवेव्यकः' - इत्यादौ [8]दीधीङ् – [9]वेवीङोः 'सार्वधातुकार्धधातुकयोः'[10] इति प्राप्तस्य गुणस्य, [11]'अचोञ्णिती'ति प्राप्तायाश्च वृद्धेश्च क्रमशः प्रतिषेधार्थमुपात्तौ दीधीवेवीशब्दौ 'नहि कार्यी निमित्तत्वेनाश्रीयते'[12] इति परिभाषाया[13]ज्ञापकौ ।

---

(च) भ. ना. प. शे. प. 17, पृ. 109 ।
(छ) शेषा. प. भास्क. प. 10, पृ. 401 ।

1. व्या. म. भा. 1/1/9/71, पृ. 547 ।
2. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 85 ।
3. अष्टा. 1/1/6 ।
4. आङ्पूर्वकाद् दीधीधातोः 'ण्वुल्तृचौ' - अष्टा. 3/1/133 इति तृंच् ।
5. आङ्पूर्वकाद् दीधीधातोः 'ण्वुल्तृचौ' - अष्टा. 3/1/133 इति ण्वुल् ।
6. आङ्पूर्वकाद्वेवीधातोः ण्वुल्तृचौ' - अष्टा. 3/1/133 इति तृच् ।
7. आङ्पूर्वकाद् वेवीधातोः - ण्वुल्तृचौ' - अष्टा. 3/1/133 इति ण्वुल् ।
8. धा. पा. 'दीधीङ् दीप्तिदेवनयोः' - अष्टा. 1076 ।
9. धा. पा. 'वेवीङ्वेतिना तुंल्ये' - अदा. 1077 ।
10. अष्टा. 7/3/84 ।
11. अष्टा. 7/3/115 ।
12. (क) पु. दे. ल. प. वृ. प. 95, पृ. 151 ।
(ख) सी. दे. बृ. प. वृ. प. 2, पृ. 164 ।
(ग) नी. दी. प. वृ. प. 2, पृ. 293
(घ) ह. भा. प. भास्क. प. 2, पृ. 319 ।
(ङ) 'कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते'
भ. ना. प.शे. प. 11, पृ. 41 ।
(च) शेषा. प. भास्क. प. 10, पृ. 386 ।
13. तथाहि–
(क) "ज्ञापकं चात्र 'दीधीवेवीटाम्' (1/1/6) इति ङितोरपि दीधीङ्वेवीङोर्गुणप्रतिषेधवचनम् । यदा च क्ङितिचेति अनिग्लक्षणाया अंपि वृद्धे र्निषेध इतिपक्षस्तदेदं ज्ञापकम् । अन्यथा तु दीधीवेवीग्रहणमनिग्लक्षणप्रतिषेधार्थमेव स्यात्र ज्ञापक"मित्याह पु. दे. ल. प. वृ. प. 95, पृ. 152 ।

यतोऽस्या अभावेऽनयोर्ङित्त्वात् - [1]'क्ङितचे'तिसूत्रेणैव गुणवृद्धिप्रतिषेधस्यात्र सुलभतया सूत्रेऽस्मिन्शब्दाविमौ व्यर्थौ । नच [2]'क्ङितिचे'ति सूत्रेण इग्लक्षणाया एव वृद्धेः प्रतिषेधः क्रियते, अतोऽजूलक्षणाया[3]अपि वृद्धेः प्रतिषेधार्थं दीधीवेव्योरुपादान-मत्र सूत्रे सार्थकमिति नैतौ ज्ञापकावस्या इति - शङ्क्यम् । यतः 'अजूलक्षणाया अपि वृद्धेः क्ङितिचेति प्रतिषेधो भवती'ति वचनम् 'इन्धिभवतिभ्यां[4]च' इत्यत्र भवतिग्रहणेन ज्ञापितम् । एतद्वचनाभावे हि भवतिग्रहणमिह व्यर्थम् ।

वस्तुतस्तु नानयोः शब्दयो र्ज्ञापकत्वं भाष्यसम्मतम् । तत्र हि [5]वुको नित्यत्वात् [6]इन्धेश्छान्दसत्वात् [7]'इन्धिभवतिभ्यां चे'ति सूत्रं [8]प्रत्याख्यातं, तथा [9]'दीधीवेवीटा'-मित्यपि । यदाह 'दीधीवेव्योर्ग्रहणमनर्थकम् अनयोश्छान्दसत्वात्, 'अदीधेत्' 'अदीधीयाताम्' 'अदीधयुः' इत्यादौ गुणदर्शनाच्च । इटश्चापि ग्रहणमनर्थकं 'नेड्वशि[10]कृति' इत्यत्र इड्ग्रहणानुवृत्तौ [11]'आर्धधातुकस्येड्वलादेः' इत्यत्र यदिड्ग्रहणं तटिदो विकाराभावार्थम् । ततो लघूपधगुणाभावात्[12] सिद्धं 'कणिताश्वो''रणिताश्व' इति ।

---

(ख) "ज्ञापकं चात्र 'दीधीवेवीटाम्'इत्यत्र ङितोरपि दीवीवेवीङोर्गुणवृद्धिप्रतिषेधार्थमुपादानम् .... " इत्याह सीं. दे. बृ. प. वृ. प. 2, पृ. 164 ।

(ग) "इयं 'देधीवेवीटाम्' (1/1/6) इतिसूत्रेण गुणवृद्धिप्रतिषेधाज् ज्ञायते । अन्यथा दीधीङ्दीप्तिदेवनयोः, वेवीङ्वेतिनातुल्ये, एतयो ङित्त्वादेव गुणनिषेधे सिद्धे किं गुणनिषेधेन । प्रयोजनम् 'इङ् अध्ययने अध्येता' 'शीङ्स्वप्ने शयिता' - इत्यादौ तृचि सार्वधातुकार्धधातुकयोः (7/3/84) इतिगुण "इत्याह नी. दी. प. वृ. प. 2, पृ. 293 ।

(घ) "परिभाषायां ज्ञापकं तु दीधीवेव्योर्गुणप्रतिषेध इतिकेचित्" - इत्याह ह. भा. प. भास्क. प. 2, पृ. 319 ।

1. अष्टा. 1/1/5 ।
2. अष्टा. 1/1/5 ।
3. 'अचोञ्णिति' - अष्टा. 7/3/115 ।
4. अष्टा. 1/2/6 ।
5. 'भुवोवुग्लुङ्लिटोः' - अष्टा. 6/4/38 ।
6. 'धा. पा. 'ञिइन्धी दीप्तौ' रुधा. 1449 ।
7. अष्टा. 1/2/6 ।
8. व्या. म. भा. 1/2/1/6 ।
9. व्या. म. भा. 1/1/4/6 ।
10. अष्टा. 7/2/8 ।
11. अष्टा. 7/2/35 ।
12. 'पुगन्तलघूपधस्य च' - अष्टा. 7/3/86 ।

न च [1]'पिपठीः' [2]'अपाठीत्' इत्यत्रापि क्रमशः [3]'र्वोरुपधाया दीर्घ इकः' - इति 'अकः [4]सवर्णे दीर्घः 'इति च दीर्घो न स्यादितिवक्तव्यम् । यतः समानजातीयतयाऽङ्गकार्यमेव व्यावर्त्यते । ग्रहीतेत्यत्र तु 'ग्रहोऽलिटि [5]दीर्घः' इतिसूत्राऽऽरम्भसामर्थ्याद् दीर्घो भवति ।

## 'दीपे'ति शब्दः

[6]'सूददीपदीक्षश्चे'ति सूत्रे 'दीपे'तिशब्दः 'ताच्छीलिकेषु वासरूपविधिर्नास्ती' ति [7]परिभाषाऽनित्ये'ति वचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याभावे [9]'दीपिते'त्यत्र

---

1. पिपठिषतेः क्विप् ।
2. 'पठेर्लुङि अटि तिपि च्लेः सिचि इटि ईटि सलोपे सवर्णदीर्घे च कृते रूपमिदम् ।
3. अष्टा. 8/2/76 ।
4. अष्टा. 6/1/101 ।
5. अष्टा. 7/2/37 ।
6. अष्टा. 3/2/153 ।
7. (क) व्याडिः प. सू. प. 27, पृ. 14 ।
   (ख) पु. दे. ल. पृ.वृ.-प. 28, पृ. 124 ।
   (ग) सी. दे. बृ. प. वृ. प. 43, पृ. 211 ।
   (घ) नी. दी. प. वृ. प. 53, पृ. 303 ।
   (ङ) ह. भा. प.भास्क. प. 45, पृ. 342 ।
   (च) भ. ना. प. शे. प. 68, पृ. 285 ।
   (छ) 'ताच्छीलिका अपवादा अताच्छीलिकानुत्सर्गांस्ताच्छीलिकाँश्च नित्यं बाधन्ते' - शेषा. प. भास्क. प. 57, पृ. 430 ।
8. तथाहि –
   (क) "यद्येतज्ज्ञाप्यते 'सूददीपदीक्षश्च' (3/2/153) इतिदीपग्रहणमनर्थकम् । अस्माद्दीपोयुजूविधीयते । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (3/2/167) इति । स विशेषविहितः सामान्यविहितं युचं बाधिष्यते । एवं सिद्धे सति प्रतिषेधाधिकारे यद्दीपग्रहणं करोति तज्ज्ञापयत्याचार्यः युजूरयोः समावेशइति । किमेतस्या ज्ञापने प्रयोजनम् । कम्रा कमनमिति च सिद्धं भवती" त्याह व्याडिः प.सू. प. 27, पृ. 14 ।
   (ख) "ननु च दीपेर्विशेषविहितो रप्रत्ययो दृश्यते - 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति, स एव बाधको भविष्यति, किं प्रतिषेधेन ? वाऽसरूपेण युजपि प्राप्नोति । ताच्छीलिकेषु च वाऽसरूपविधिर्नास्तीतिप्रायिकमेतद् इत्युक्तम् । तथा च समावेशो दृश्यते । कम्रा युवतिः। कमना युवतिः । कम्प्रा शाखा । कम्पना शाखेती"त्याह जया. का. 3/2/153 ।
   (ग) "प्रायिकत्वस्य चाऽयमेव लिङ्गम् । यदि हि सर्वत्र वाऽसरूपविधेरभावः स्यात्, ततो विशेषविहितेनैव प्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽनर्थकः स्या"दित्याह जि. बु. न्या. 3/2/153 ।
   (घ) "प्रायिकत्वस्य चायमेव प्रतिषेधो लिङ्गम्, सर्वत्र वाऽसरूपविधेरभावे विशेषविहितेन रप्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽयमनर्थकः स्या"दित्याह ह. मि. पदम. 3/2/153 ।

'अनुदात्तेतश्च [1]हलादे'रितिप्राप्तस्य युचः प्रतिषेधार्थमुपात्तोऽत्र सूत्रे 'दीपे'तिशब्दो व्यर्थः। विशेषविहितेन [2]'नमिकम्पिरस्म्यजसकमहिंसदीपो रः' इतिरप्रत्ययेन हि दीपो युजभावः प्रतिषेधं विनापि सिद्धः। न च दीपो युचः प्रतिषेधाभावे 'वाऽसरूपोऽ-

---

(ङ) 'नमिकम्पी'ति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति - 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीति प्रायिकमिति। तेन कम्रा कमना युवतिः। कम्प्रा कम्पना शाखे" त्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 451।

(च) "अनित्या चेयं परिभाषा। तच्चानित्यत्वमस्या 'सूपदीपदीक्षश्च' (3/2/153) इतिदीपो युच्प्रतिषेधेन ज्ञापितम्। यदि ताच्छीलिके वाऽसरूपविधिर्नास्तीति तदा 'नकमिकम्पि.' (3/2/167) इति दीपो रप्रत्ययेनैव विशेषविहितेन युज् बाधित इति किं तन्निषेधेन। तत् कुर्वाणो ज्ञापयति क्वचिदस्ति समावेश इति। तेन कम्रा कमना युवतिरिति रयुचोः समावेशः सिद्ध्यति। गन्ता गामुक इति तृन्नुकञोः विकत्थो विकत्थन इति युज्घिनुणोः समावेशः सिद्ध इती"त्याह पु. दे. ल. प. वृ. प. 28, पृ. 124-125।

(छ) "प्रायिकं चैतत्। 'सूददीपदीक्षश्च' (3/2/153) इति। दीपो युच्प्रतिषेधेन ज्ञापितम्। यदि ताच्छीलिकेषु वाऽसरूप - (3/1/94) विधिर्नास्त्येव तदा'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (3/2/167) इति रप्रत्ययेनैव विशेषविहितेन युज्बाधिष्यते किं प्रतिषेधेन। तत् कुर्वन् ज्ञापयति क्वचिदस्ति समावेश इति - कम्रा कमना युवतिरिति रयुचोः समावेशः सिद्धः। गन्ताऽखिलः गामुक इति तृजुकञोर्विकत्थोविकत्थन इति घिनुणयुचोः समावेशः सिद्धः" इत्याह सी. दे. बृ. प. वृ. प. 43, पृ. 211।

(ज) "इयं चानित्या। 'सूददीप.' (3/2/153) इत्यनेन युच्प्रतिषेधात्। अन्यथा 'नमिकम्पि.' (3/2/157) इतिरप्रत्ययेनैव तद्बाधे सिद्धे किं तेनेति स्पष्टं भाष्यतत्त्वविवेके"इत्याह नी. दी. प. वृ. प. 53, पृ. 303।

(झ) "अनित्या चेयम्। 'सूददीपदीक्षश्च' - (3/2/153) इतिदीपोयुच्प्रतिषेधात्। अन्यथा 'नमिकम्पि.' (3/2/167) इतिविशेषविहित-रप्रत्ययेन युज्निवृत्तिसिद्धौ किं तेन। तथा च कम्रा कम्पनेत्यादिसिद्ध"मित्याह ह. भा. प. भास्क. प. 45, पृ. 342।

(ञ) "नन्वेवं कम्रा कमपनेत्याद्यसिद्धिर्नमिकम्पीति रेणानुदात्तेतश्च हलादेरिति युचो बाधादितिचेत् - न। 'सूददीपदीक्षश्चे'त्यनेन दीपे र्युज्निषेधेनोक्तार्थस्या-नित्यत्वा"दित्याह भ. ना. प.शे. प. 68, पृ. 285।

(ट) "प्रायिकं चैतत्। 'सूददीप.' (3/2/153) इतिदीपेर्युज्निषेधाल्लिङ्गात्। यदि सार्वत्रिकं स्यात्, तर्हि 'नमिकम्पि.' (3/2/167) इति रेण युचो बाधे सिद्धे किं तन्निषेधेन। तेन कम्रा कमना युवतिरिति रविषये युजपि सिद्ध्यती"त्याह शेपा. प. भास्क. प. 57, पृ. 430-431।

(ठ) "सूददीपे'त्यत्र दीपग्रहणात् ज्ञापकात् भवति युचो रेण समावेशः" इत्याह श्री. ना. ज्ञा. सं. 3, पृ. 70।

9 'दीपी दीप्तौ' धा. पा. दिवा. 1150, इतिदीपृधातोः 'अनुदात्तेतश्च हलादेः' अष्टा. 3/2/149, इति प्राप्तस्य युचः 'सूददीपदीक्षश्च' - अष्टा. 3/2/153 इतिप्रतिषेधे 'तृन्' - अष्टा. 3/2/135, इतितृनि रूपमिदम्।

1. अष्टा. 3/2/149।

2. अष्टा. 3/2/167।

[1]स्त्रिया'मिति परिभाषया 'अनुदात्तेतश्च[2]हलादे'रितियुजापत्तिर्दीपेर्दुर्वार इतिशङ्क्यम्। यतः 'ताच्छीलिकेषु वासरूपविधिर्नास्ती'तिपरिभाषयैवात्र युचोऽभावः सुलभः । ज्ञापिते चास्मिन्वचनेऽनित्यत्वेन 'ताच्छीलिकेष्वितिपरिभाषया युच्यप्रवृत्त्या 'वाऽस-[3]रूपन्यायेन दीपेर्युचो दुर्वारतया तत्प्रतिषेधायात्र शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [4]'क्रमा' [5]'कमना' [6]'कम्प्रा' '[7]कम्पना' इत्येतेषां समेषां प्रयोगाणां साधुत्वसिद्धिः । अस्यासत्त्वे हि 'ताच्छीलिकेषु वासरूप-विधिर्नास्ती'तिपरिभाषया कमिकम्पिभ्यां रप्रत्ययेन युचो नित्यं बाधः स्यात्, तथा सति 'कम्रा युवतिः' 'कम्प्रा शाखा' - इत्यनयोरेव साधुत्वं स्यात् 'कमना युवतिः' 'कम्पना शाखा' इत्यनयोः साधुत्वं न सिद्ध्येत् । अस्य सत्त्वे तु 'ताच्छीके'ष्वित्यस्या अत्राऽप्रवृत्त्या रयुचोः समावेशः सुलभ इति 'कमना' कम्पना' इत्यनयोरपि साधुत्वमुपपद्यते ।

## 'दीर्घ'इति शब्दः

[8]'न क्तिचि दीर्घश्चे'ति सूत्रे दीर्घ इतिशब्दः [9]'अनन्तरस्य विधिर्भवति प्रतिषेधो वे' तिपरिभाषाया निषेधांशस्य ज्ञापकः[10] । यतोऽस्यांशस्याभावेऽत्रासौ व्यर्थः ।

---

1. अष्टा. 7/1/94 ।
2. अष्टा. 3/2/149 ।
3. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/194 ।
4. 'कमु कान्तौ' धा. पा. भ्वा. 443, इति कम्धातोः 'नमिकम्पि.' - अष्टा. 3/2/167 इत्यादिना रप्रत्यये सति रूपमिदम् ।
5. 'कमु कान्तौ' धा. पा. भ्वा. 443, इतिकम्धातोः 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 इतिपरिभाषया 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149 इतियुचि युवोरनाकौ' - अष्टा. 7/1/1 इति योरकाऽऽदेशे रूपमिदम् ।
6. 'कपि चलने' धा. पा. भ्वा. 375, इतिकपिधातोरिदित्त्वात् - इदितो नुम्धातोः' अष्टा. 7/1/58, इतिनुमि 'नमिकम्पि.' - अष्टा. 3/2/167, इतिरप्रत्यये रूपमिदम् ।
7. 'कपि चलने' धा. पा.भ्वा. 375, इति कपिधातोरिदित्त्वात् इदितो नुम्धातोः' अष्टा. 7/1/58, इतिनुमि 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 इतिपरिभाषया 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149, इतियुचि 'युवोरनाकौ' - अष्टा. 7/1/1, इतियोरकाऽऽदेशे रूपमिदम् ।
8. अष्टा. 6/4/39 ।
9. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे.ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
   (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. प. 52/ पृ. 427 ।
10. तथाहि–

ज्ञापिते चास्मिन् परिभाषांशेऽनया 'यन्तिः' 'तन्तिः' इत्यत्र [1]'अनुदात्तोपदेशवनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिती'त्यनुनासिकस्यैव निषेधो भवेत्' नतु व्यवहितस्य [2]'अनुनानासिकस्य क्विझलोः क्ङिती'ति दीर्घस्यापि निषेधार्थमत्र सूत्रे दीर्घ इतिशब्दः स्वांऽशे चरितार्थो भवति । ज्ञापितस्यास्य फलं तु [3]'सुडनपुंसकस्य' इत्यत्र 'अनपुंसकस्य' इतिनिषेधः सुट्त्वप्रयुक्तसंज्ञाया एव भवति, नतु 'शि सर्वनामस्थानम्'[4] इतिशित्त्वप्रयुक्तसंज्ञाया अपीति । शित्त्वप्रयुक्तसंज्ञाया अपि निषेधे 'शि सर्वनामस्थानमि'ति निर्विषयं स्यात् । तेन [5]'कुण्डानी'त्यत्र क्लींबेऽपि सर्वनामस्थाने [6]दीर्घः सिद्ध्यति । तथा [7]'नेटी'ति वृद्धिप्रतिषेधोऽप्यनन्तराया एव

---

(क) "ननु च प्रकरणापेक्षया यदस्मिन्प्रकरणे विहितं तन्न भवतीति विज्ञायमानेऽन्तरेणापि दीर्घग्रहणं दीर्घस्यापि प्रतिषेधो भविष्यति तत् किं दीर्घग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति - अस्तीयं परिभाषा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'इती"त्याह जि. बु. न्या. 6/4/39 ।

(ख) "प्रतिषेधोपि अनन्तरस्यैव इत्यस्यापि । तत्र ज्ञापकं 'न क्तिचि दीर्घश्च' (6/4/39) इतिदीर्घग्रहणम् । तद्धि अनया परिभाषया यन्तिः तन्तिः इत्यत्र 'अनुदात्तोपदेशवनति-तनोत्यादीनाम्.' (6/4/37) इत्यनुनासिकस्यैव निषेधः स्यात् न व्यवहितस्य' अनुनासिकस्य क्विझलोः क्ङिति' (6/4/15) इत्यस्य दीर्घस्य इत्येवमर्थं क्रियते"त्याह पु. दे. ल. प. वृ. प. 17, पृ. 120 ।

(ग) "प्रतिषेधोऽप्यनन्तरस्यैव भवतीत्यत्र 'न क्तिचि दीर्घश्च' (6/4/39) इतिदीर्घग्रहणं ज्ञापकम् । तदप्यनया परिभाषया यन्तिः सन्तिरित्यत्रानन्तरस्य 'अनुदात्तोपदेश.' (6/4/37) इत्यस्यैव प्रतिषेधः स्यात् । न व्यवहितस्य 'क्विझलोः क्ङिति' (6/4/15) इत्यस्येत्येवमर्थं क्रियते' इतीत्याह सी. दे. बृ. प. वृ. प. 48, पृ. 216 ।

(घ) "अन्ये तु 'न क्तिचि दीर्घश्च (6/4/39) इत्यस्यैव निषेधो माभूत् इत्येतदर्थमिति सीर-देवीयपरिभाषावृत्त्यादिषु स्पष्ट"मित्याह नी. दी. प. वृ. प. 51, पृ. 302 ।

(ङ) "अन्ये तु 'न क्तिंचि दीर्घश्च' इति दीर्घग्रहणम् । ..... इतीत्याह ह. भा. प. भास्क. प. 50, पृ. 345 ।

(च) "अतएव ........ 'न क्तिची'तिसूत्रे दीर्घग्रहणं चरितार्थम् । तदप्यनन्तरस्यानुदात्तोप-देशेत्यस्यैव निषेधाभावाये"तिग्रन्थेन ज्ञापकत्वं सूचयति भ. ना. प. शे. प. 62, पृ. 277 ।

1. अष्टा. 6/4/37 ।
2. अष्टा. 6/4/15 ।
3. अष्टा. 1/1/43 ।
4. अष्टा. 1/1/42 ।
5. कुण्डशब्दान्नपुंसके जसि शसि च' जश्शसोः शिः' - अष्टा. 7/1/20 इतितयोः श्यादेशे 'शि सर्वनामस्थानम्' - अष्टा. 1/1/42 इतिशेः सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' - अष्टा. 7/1/72 इति नुमि 'सर्वनामस्थाने चासम्बुद्धौ' - अष्टा. 6/4/8 इतिदीर्घे च कृते रूपमिदम् ।
6. 'सर्वनामस्थाने चासम्बुद्धौ' - अष्टा. 6/4/8 ।
7. अष्टा. 7/2/4 ।

हलन्तलक्षणाया[1]वृद्धेर्न व्यवहितायाः [2]सिचि वृद्धेरिति । तेन - [3]'अलावी'दित्यत्र सिचि[4]वृद्धिः सिद्ध्यति ।

अत्र 'शित्त्वप्रयुक्तसंज्ञाया अपि [5]'सुडनपुंसकस्ये'तिनिषेध इतिस्वीकारे [6]'शिसर्वनामस्थान'मित्यस्य निरवकाशत्वं स्यात् । नपुंसकस्यैव हि शिः [7]सम्भवती'तिकैयटग्रन्थश्चिन्त्य[8]इति भट्टनागेशस्योद्योतग्रन्थस्तु न युक्तः । यतः [9]'अनपुंसकस्ये'त्यनेन [10]'शि सर्वनामस्थान'मित्यस्यापि प्रतिषेधमिच्छता भट्टनागेशेन किं नपुंसकस्य यत् तत्सर्वनामस्थानं नेति वाक्यार्थः स्वीक्रियेत ? उत नपुंसकस्य सुट् सर्वनामस्थानं नेति ? द्वितीये लक्षणप्रतिपदोक्तयोः प्रतिपदोक्त[11]- स्यैव ग्रहण'मितिपरिभाषया सुट्पदवत्तया उपस्थितस्य [12]'सुडनपुंसकस्ये'त्यस्यैव निषेधः स्यात् न तु [13]'शिवसर्वनामस्थान'मित्यस्य । आद्ये नपुंसकस्य यत् तत् सर्वनामस्थानं नेति स्वीकारे शसः शिरपि नपुंसकसम्बन्ध्येवेति तस्यापि

---

1. 'वद -व्रज - हलन्तस्याचः ' - अष्टा. 7/2/3 ।
2. 'सिचि वृद्धिः परस्मैपदेषु' - अष्टा. 7/2/1 ।
3. 'लूञ्छेदने' धा. पा. क्र्या. 1483, इति लूधातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे रूपमिदम् ।
4. 'सिचि वृद्धिः परस्मैपदेषु'- अष्टा. 7/2/1 ।
5. अष्टा. 1/1/43 ।
6. अष्टा. 1/1/42 ।
7. प्रदी. 1/1/6/42 ।
8. तथाहि – "सुट्सम्बन्धे तु इदं चिन्त्यं, शसः शौ चरितार्थत्वा"दित्युक्तं भट्टनागेशेन उद्यो. 1/1/6/42 ।
9. 'सुडनपुंसकस्य' - अष्टा. 1/1/43 ।
10. अष्टा. 1/1/42 ।
11. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्' - व्याडिः प. सू. प. 3, पृ. 3 ।
    (ख) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न लाक्षणिकस्य' - पु. दे. . प. वृ. प. 3, पृ. 113 ।
    (ग) सी. दे. बृ. प. वृ. 39, पृ. 208 ।
    (घ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' नी. दी. प. वृ. प. 102, पृ.
    (ङ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य' - ह. भा. प. भास्क. 41, पृ.
    (च) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' - भ. ना. प. शे. प. 114, पृ. 348 ।
    (छ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' - शेषा. प. भास्क. प. 97, पृ. 4551
12. अष्टा. 1/1/43 ।
13. अष्टा. 1/1/42 ।

प्रतिषेधविषयत्वात् [1]'शिवसर्वनामस्थान'मित्यस्य निरवकाशत्वमव्याहतम् । तस्मादत्र भट्टनागेशस्य कैयटग्रन्थोक्तिश्चिन्त्येत्युक्तिर्न युक्तेति निश्चप्रचम् ।

## 'दीर्घा'दिति शब्दः

[2]'अष्टनो दीर्घा'दितिसूत्रे 'दीर्घा'दितिशब्दः "अष्टन आ विभक्तौ"वित्यात्वं वैकल्पिक"- मितिंवचनस्य "भवत्यात्वे कृतेऽष्टनः षट्संज्ञे'तिवचनस्य वा [3]ज्ञापकः ।

---

1. अष्टा. 1/1/42 ।
2. अष्टा. 6/1/172 ।
3. तथाहि –
   (क) दीर्घग्रहणं किमर्थम् ?। अष्टसु प्रक्रमेषु ब्राह्मण आदधीत । दीर्घादिति शक्यमकर्तुम् । कस्मान्न भवति अष्टसु प्रक्रमेषु ब्राह्मण आदधीतेति ? । षट्स्वरोऽत्र वाधको भविष्यति । नाप्राप्ते षट्स्वरेऽष्टनः स्वर आरभ्यते स यथैव दीर्घाद्बाधते एवं ह्रस्वादपि बाधेत । न दीर्घात् षट्स्वरः प्राप्नोति । किं कारणम् ? आत्वे कृते षट् संज्ञाभावात् । अत उत्तरं पठति - 'अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्' । अष्टनो दीर्घग्रहणं क्रियते । ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज् ज्ञापयत्याचार्यो भवत्यात्वे कृते षट्संज्ञे'ति । किमेतस्य ज्ञापने प्रयोजनम् ? आकारान्तस्य नुडर्थम्' । आकारान्तस्य नुट्सिद्धो भवति, - अष्टानामिति । ननु च नित्यमात्वम् । एतदेव ज्ञापयति - 'विभाषाऽऽत्वमिति यदयं दीर्घग्रहणं करोति इतरथा हि 'अष्टन'इत्येव ब्रूया"दित्याह पत. व्या. म. भा. 6/1/6/171 ।
   (ख) "इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञा' ज्ञापयति, अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन? "इत्याह वाम. का. 6/1/172, ।
   (ग) "यदि हि नित्यमात्वं स्यादिह दीर्घग्रहणमनर्थकं स्यात्, व्यावर्त्त्याभावा"दिद्याह जि. बु. न्या. 6/1/172 "दीर्घग्रहणं ह्येवमर्थं क्रियते – यत्रात्वं नास्ति तत्रायं स्वरो मा भूदिति । यदि कृतात्वस्याष्टनः षट्संज्ञा न स्यात्, तदात्वपक्षे षट्संज्ञायामसत्यां सावकाशोऽष्टनः स्वरः, तत्रापि षट्स्वरः प्राप्नोतीति कृत्वा । ततश्च यति दीर्घग्रहणं न क्रियते, तदानवकाशत्वाद् यदात्वपक्षेऽष्टनः स्वरो न भवति, तदेतरस्मिन्नपि पक्षे स्यात् । अतस्तन्निवृत्तयेदीर्घग्रहणं क्रियमाणमर्थवद्भवति । कृतात्वस्याष्टनः षट्संज्ञायाम्–अष्टानामित्यत्र 'षट्चतुर्भ्यश्च' इतिनुट् सिद्धो भवति" – इतिचाऽऽह जि. बु. न्या. 6/1/172 ।
   (घ) "नित्ये ह्यात्वे व्यावर्त्याभावादिह दीर्घग्रहणमनर्थकं स्या"दित्याह ह. मि. पदम. 6/1/172 ।
   "आत्वाभावपक्षेऽयं स्वरो माभूदित्येतदर्थं हि दीर्घग्रहणम् । यदि च कृतात्वस्याष्टनः षट्संज्ञा-न- स्यात्, तदाऽऽत्वपक्षे सावकाशमिममष्टनः स्वरमनात्वपक्षे षट्संज्ञायां सत्याम् 'झल्युपोत्तमम्' इति षट्स्वरः परत्वाद् बाधिष्यते - इत्यनर्थकं दीर्घग्रहणं स्यात् । यदा तु कृतात्वस्याष्टनः षट्संज्ञा भवति, तदा नाप्राप्ते षट्स्वरे आरभ्यमाणोऽष्टनः स्वरोऽनात्वपक्षेऽपि स्यादिति तन्निवृत्तये क्रियमाणमर्थवद् भवति । कथं पुनरेकेन यत्नेनोभयं शक्यं ज्ञापयितुम् ? को दोषः ? अन्यथानुपपत्त्या ह्यनेकोऽप्यर्थो ज्ञाप्यते, तेनैतदुभयमन्तरेणानुपपद्यमानमुभयमपि ज्ञापयती'ति चाऽऽह ह. मि. पदम. 6/1/172 ।

यतोऽस्य प्रथमस्य वचनस्याभावेऽत्र शब्दोयं व्यर्थः । तथाहि –[1]'अष्टाभिर्विकर्षती-'त्यत्र सर्वनामस्थानविभक्तेर्भिस इकारस्योदात्तत्वार्थमारब्धे दीर्घादष्टनञ्शब्दात् पराऽसर्वनामविभक्तिरुदात्ता स्यादित्यर्थकेऽस्मिन् सूत्रे [2]'अष्टभि'रित्यत्राऽऽत्वाभावस्थले भिस इकारस्योदात्तत्वं माभूत् किन्तु [3]'झल्युपोत्तम'मित्यनेनोपोत्त-[4]मस्योदात्तत्वेन मध्योदात्तत्वं भवत्वेतदर्थमुपात्तोऽयं शब्दोऽस्य वचनस्याभावे व्यर्थः । अस्य वचनस्याभावे ह्यष्टन आत्वं नित्यं स्यात्तथा सति' अष्टभि'रिति ह्रस्वान्तव्यावृत्त्येऽत्र 'दीर्घा'दितिशब्दो व्यर्थः । 'अष्टभि'रिति प्रयोगस्यैव हि गगनकुसुमायितंतया 'दीर्घा'दित्यस्य व्यावर्त्त्यं नास्ति । न च [5]'प्रियाष्ट्ने'त्यादौ विभक्तेरुदात्तत्ववारणाय 'दीर्घा'दितिशब्दस्यात्र चारितार्थ्यात् कथमस्य शब्दस्योक्तवचनज्ञापकत्वमितिशङ्क्यम् । यतोऽत्र सूत्रे [6]'अन्तोदात्ता'दित्यनुवर्त्त्याष्टनःपराऽसर्वनामस्थानविभक्तिरुदात्तेत्यर्थाऽभ्युपगमाद् अस्य शब्दस्याभावे 'अष्टभि'रित्यत्र - विभक्तेरुदात्तत्वं दुर्वारम् । घृताऽऽ[7]दित्वेन ह्यष्टनोऽन्तोदात्तत्वम्[8] । 'प्रियाष्ट्ने' - त्यादि बहुव्रीहौ तु [9]पूर्वपदस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद् विभक्त्युदात्तत्वं न प्रवर्तत इति 'दीर्घा'दित्ययं शब्दोऽत्र नूनमुक्तवचनस्य ज्ञापकः । ज्ञापिते चास्मिन् वचने आत्वस्य

---

(ङ) "अष्टनो दीर्घादिति (6/1/172) दीर्घवचनं ज्ञापकम् 'अष्टन आ विभक्तौ (7/4/84) इति विकल्पेनात्व'मिति । तेन अष्टअष्टौ वेति भवती'त्याह पु. दे. ज्ञा. समु. एकविंशे एकाचूपादे पृ. 83 ।

(च) "वैकल्पिकं चेदमष्टनआत्वम् । 'अष्टनोदीर्घा'दितिदीर्घग्रहणाज् ज्ञापका"दित्याह भ. दी. वै. सि. कौ. हलन्तपुंलिङ्गप्र. पृ. 195 ।

(छ) "अष्टनो दीर्घात् (सू. 6/1/172) अष्टनो दीर्घग्रहणं षट्संज्ञायां ज्ञापकम् आकारान्तस्य नुडर्थम् आत्वविकल्पस्य च ज्ञापकमेत"दित्याह श्रीना. ज्ञा. सं. 6, पृ. 101 ।

1. अष्टञ्शब्दाद् भिसि 'अष्टन आ विभक्तौ' - अष्टा. 7/2/48, इत्यात्वे सवर्णदीर्घेकाऽऽदेशे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
2. अष्टञ्शब्दाद् भिसि 'अष्टनआविभक्तावित्यात्वं वैकल्पिक'मितिवचनादात्वाभावपक्षे नलोपे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
3. अष्टा. 6/1/180 ।
4. त्रिप्रभृतीनामन्त्यमुत्तमं तत्समीपे च यत्तदुपोत्तममित्याह वाम. का. 6/1/180 ।
5. प्रियाअष्टौ यस्येत्यर्थे बहुव्रीहौ निष्पन्नादष्टञ्शब्दाट्टाविभक्तौ गौणत्वाद् - आत्वाभावे 'अल्लोपोऽनः' - अष्टा. 6/4/134, इत्यलोपे पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावात् कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा अकारव्यवधानेन ष्टुत्वाभावे टकारेण व्यवधानाद् 'अट्- कु-प्वाङ् - नुम् - व्यवायेऽपि' - अष्टा. 8/4/2,इति णत्वाभावे च सति रूपमिदम् ।
6. 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' - अष्टा. 6/1/169, इत्यत इतिशेषः ।
7. घृतादिराकृति गणः ।
8. 'घृतादीनां च' - फिट्सू. 21 इत्यनेनेतिशेषः ।
9. 'वहुव्रीहौ प्रकृत्या पूर्वपदम्' - अष्टा. 6/2/1 ।

वैकल्पिकतया तदभावपक्षे 'अष्टभि'रित्यादि व्यावर्त्त्यस्य समुपलम्भादयं शब्दोऽत्र तद्व्यावृत्त्यर्थं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [1]'अष्टौ' [2]'अष्टौ' [3]'अष्ट' [4]'अष्ट' - इत्यादि प्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्याभावे हि आत्वस्य नित्यं प्रवृत्त्या 'अष्टौ' - 'अष्टौ' [5]'अष्टाभिः' [6]'अष्टासु' इत्यादीनां साधुत्वेऽपि 'अष्ट' 'अष्ट' 'अष्टभिः' – इत्यादीनां साधुत्वं न सिद्ध्येत् । अथवात्र[7]सूत्रे 'दीर्घा'दित्ययं शब्दः 'आत्वे कृतेऽपि षट्संज्ञा भवती'ति वचन- स्य ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । ना चास्य शब्दस्याभावे [8]'अष्टभिः' [9]'अष्टभ्यः [10]'अष्टसु' - इत्यत्र ह्रस्वादष्टञ्शब्दात् पराणां भिस्भ्य-सुसुपां- विभक्तीनामुदात्तत्वाऽऽपत्तिः स्यादिति तद्वारणाय शब्दोऽयं चरितार्थ इति शङ्क्यम् । यत एषु प्रयोगेषु 'षट्त्रितुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्या''दित्यर्थकेन 'झल्युपोत्तमम्' इत्यनेन परत्वादुपोत्तमानां टकारोत्तरा-काराणामुदातत्तया भ्यसादीनां पूर्वेण[11] सूत्रेणोदात्तत्वस्य प्राप्तिरेव नास्ति । नापि

---

1. अष्टञ्शब्दाज्जसि 'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति' (वै. सि. कौ. हलन्तपुंलिङ्गप्र. पृ. 195) इत्युक्तेः 'अष्टन आ विभक्तौ' - अष्टा. 7/4/84, इत्यात्वे सवर्णदीर्घैकाऽऽदेशे जसः 'अष्टाभ्य औश्' अष्टा. 7/1/21, इत्यौशादेशे 'वृद्धिरेचि' - अष्टा. 6/1/88, वृद्ध्यैकाऽऽदेशे च कृते रूपमिदम् ।
2. अष्टञ्शब्दाच्छसि 'अष्टाभ्यः' - इतिनिर्देशान्नकारस्य 'अष्टन आ विभक्तौ' - अष्टा. 7/4/84, इत्यात्वे सवर्णदीर्घैकाऽऽदेशे शसः 'अष्टाभ्यऔश्' -अष्टा. 7/1/21, इत्यौशादेशे 'वृद्धिरेचि' - अष्टा. 6/1/88, इति वृद्ध्यैकाऽऽदेशे च कृते रूपमिदम् ।
3. अष्टञ्शब्दाज्जसि 'अष्टनो दीर्घा'दितिसूत्रस्थेन दीर्घादितिशब्देनाऽऽत्वस्य वैकल्पिकत्वज्ञापना-दात्वाभावपक्षे 'ष्णान्ताः षट्' - अष्टा. 1/1/24, इति षट्संज्ञायां 'षड्भ्योलुक्' - अष्टा. 7/1/22, इति जसो लुकि नलोपे च कृते रूपमिदम् ।
4. अष्टञ्शब्दाच्छसि 'अष्टनो दर्घा'दिति सूत्रस्थेन दीर्घादिति शब्देनाऽऽत्वस्य वैकल्पिकज्ञापनादात्वाभावपक्षे 'ष्णान्ताः षट्' - अष्टा. 1/1/24, इति षट्संज्ञायां 'षड्भ्योलुक्' - अष्टा. 7/1/22, इतिशसो लुकि नलोपे च कृते रूपमिदम् ।
5. अष्टञ्शब्दाद्भिसि 'अष्टन आविभक्तौ' - अष्टा. 7/4/84 इत्यात्वे सवर्णदीर्घैकाऽऽदेशे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
6. अष्टञ्शब्दात् सुपि विभक्तौ 'अष्टन आ विभक्तौ' - अष्टा. 7/4/84 इत्यात्वे सवर्णदीर्घैकाऽऽदेशे च कृते रूपमिदम् ।
7. 'अष्टनो दीर्घात्' - अष्टा. 6/1/172
8. अष्टञ्शब्दाद् भिसि आत्वाभावपक्षे रूपमिदम् ।
9. अष्टञ्शब्दाद् भ्यसि आत्वाभावपक्षे रूपमिदम् ।
10. अष्टञ्शब्दात् सुपि आत्वाभावपक्षे रूपमिदम् ।
11. 'षट्चतुर्भ्यो हलादिः' -अष्टा. 6/1/179 ।

अष्टाभ्यः' इत्यादावप्युपोत्तमः[1]स्वरः परत्वात्[2] स्यादितिप्रश्ने येन नाप्राप्तिन्यायेन[3] [4]'अष्टन' इति स्वरस्योपोत्तमस्वर- [5]बाधकत्वमिति समाधेयम्, तथा चेत्तुल्ययुक्त्या 'अष्टभ्य' - इत्यादावपि परमुपोत्तमस्वरं[6] बाधित्वा अपवादत्वात् [7]'अष्टनः' इति विभक्तिस्वरः प्राप्नोतीति तद्वारकतया शब्दोऽयमत्र सार्थक इति शङ्कनीयम् । यतः 'अष्टभि'रित्यादावपि नकारस्याऽऽत्वे कृते नकारान्तत्वाभावेन षट्संज्ञाविरहात् द्य[8]षट्संज्ञामाश्रित्य विधीयमानो [9]'झल्युपोत्तम'मितिस्वरो नैव भाविष्यती'ति तस्मिन्नवश्यं प्राप्ते सति [10]अष्टनः इति सूत्रमारभ्यत इति वक्तुमशक्यतयोपोत्तमस्वर- [11]स्यापवादत्वमेव अष्टनः[12] 'इतिस्वरस्य नास्तीति 'अष्टभि'रित्यत्र परत्वादुपोत्तम- स्वर एव भविष्यति नानिष्टो विभक्तिस्वरः । [13]न लोपे कृतेऽप्यत्र तस्यासिद्धत्वात् नकारान्त त्वेन षट्संज्ञकतयोपोत्तमस्वरप्राप्तिर्हि सुलभेत्यसौ शब्दोऽत्र व्यर्थः । ज्ञापिते चास्मिन्वचने 'अष्टभि'रित्यादावपि षट्संज्ञकत्वाद् [14]उपोत्तमस्वरे प्राप्त एव [15]'अष्टन्' इतिसूत्राऽऽरम्भाद् येन[16]नाप्राप्तिन्यायेनापवादत्वम् 'अष्टन' इति सूत्रस्येति 'अष्टभि'रित्यादावुपोत्तमस्वरो न प्रवर्तते, तुल्यन्यायेन 'अष्टभि'रित्या- दावप्यपवादत्वाद्[17]विभक्तिस्वरे प्राप्ते तद्वारकतया शब्दोऽयमत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [18]'अष्टाना'मितिरूपस्य साधुत्वसिद्धिः । 'अष्टन्आम्' इत्यवस्थायाम् 'अष्टन आ [19]विभक्तौ' इति नकारस्याऽऽत्वे

---

1. 'झलुयुपोत्तमम्' - अष्टा. 6/1/180 ।
2. 'विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2, इतिबलादित्यर्थः ।
3. 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति 'प.शे.प. 58, पृ. 261, इति न्यायस्वरूपम् ।
4. 'अष्टनोदीर्घात्' - अष्टा. 6/1/172 ।
5. 'झल्युपोत्तमम्' - अष्टा. 6/1/180 ।
6. 'झल्युपोत्तमम्' - अष्टा.6/1/180 ।
7. 'अष्टनोदीर्घात्' - अष्टा. 6/1/172 ।
8. 'ष्णान्ताः षट्' - अष्टा. 1/1/24 ।
9. 'अष्टा. 6/1/180 ।
10. 'अष्टनो दीर्घात्' - अष्टा. 6/1/172 ।
11. 'झल्युपोत्तमम्' - अष्टा. 6/1/180 ।
12. 'अष्टनोदीर्घात्' - अष्टा. 6/1/172 ।
13. 'नलोपः प्रातपदिकान्तस्य' - अष्टा. 8/2/7 ।
14. 'झल्युपोत्तमम्' - अष्टा. 6/1/180, इत्यनेनेतिशेषः ।
15. 'अष्टनोदीर्धात्' - अष्टा. 6/1/172 ।
16. 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' प.शे.प, 58, पृ. 261, इति न्यायस्वरूपम् ।
17. 'अष्टनोदीर्घात्' - अष्टा. 6/1/172 ।
18. अष्टन्शब्दादामि विभक्तौ रूपमिदम् ।
19. अष्टा. 7/4/84 ।

सवर्णदीर्घेकाऽऽदेशे च कृते आकारान्तस्याप्यनेन वचनेन षट्संज्ञकत्वात् [1]'षट्चतुर्भ्यश्च' इत्यामो नुटि हि रूपमिदं सिद्ध्यति । अस्य वचनस्यासत्त्वे हि आकारन्तस्य नान्तत्वाभावात्षट्त्वा[2]भावेन नुटो[3]ऽप्राप्त्यास्य प्रयोगस्य साधुत्वं सिद्ध्येत् ।

वस्तुतस्तु 'अष्टाना'मित्यस्य 'अष्टन् आम्' - इत्यवस्थायाम् [4]आत्वापेक्षया अन्तरङ्गत्वं षट्संज्ञाया[5] इति षट्संज्ञायां कर्तव्यायामात्वस्य [6]बहिरङ्गत्वासिद्धत्वात् नान्तत्वादेव[7]षट्संज्ञायाः सुलभतया तन्निमित्तके नुटि[8] 'नोपधायाः[9]' इत्युपधादीर्घेनलोपे[10]च कृते सिद्धिः सुलभेतिज्ञापितवचनस्य फलाभावाद् 'भवत्यात्वेकृते षट्संज्ञे'-तिवचनस्यात्रायं शब्दो न ज्ञापकः, किन्तु "अष्टन आविभक्ता'वित्यात्वं वैकल्पिक'-मितिवचनस्यैव ज्ञापक इति मन्ये ।

## 'दीर्घा' दितिशब्दः

'क्षियो[11]दीर्घा'दित्यत्र 'दीर्घा'दितिशब्दः [12]'प्रकृतिवदनुकरणं भवती'ति परिभाषाया [13]ज्ञापकः । यतोऽस्या अभावेऽत्र दीर्घादितिशब्दो व्यर्थः । तथाहि –

---

1. अष्टा. 7/1/55 ।
2. 'षृणान्ताः षट्' - अष्टा. 1/1/24 ।
3. 'षट् चतुर्भ्यश्च' - अष्टा. 7/1/55 ।
4. 'अष्टन आ विभक्तौ' - अष्टा. 7/4/84
5. 'षृणान्ताः षट्' - अष्टा. 1/1/24 ।
6. 'असिद्धं बहिरङ्गमन्तरङ्गे' प.शे.प. 51, पृ. 184, इत्यनया परिभाषयेतिशेषः ।
7. 'षृणान्ताः षट्' - अष्टा.. 1/1/24 ।
8. 'षट्चतुर्भ्यश्च' - अष्टा. 7/1/55 ।
9. अष्टा. 6/4/7 ।
10. 'नलोपः प्रातिपदिकान्तस्य' - अष्टा. 8/2/7 ।
11. अष्टा. 8/2/46 ।
12. (क) व्याडिः प.सू.प. 86, पृ. 35 ।
    (ख) पु.दे.ल.प.वृ.प. 114, प. 159 ।
    (ग) सी. दे. बृ.प. वृ. प. 18, पृ. 181 ।
    (घ) नी.दी.प.वृ. प. 23, पृ. 297 ।
    (ङ) ह.भा.प. भा.स्क.प. 18, पृ. 329 ।
    (च) भ.ना.प.शे.प. 37, पृ. 163 ।
    (छ) शेषा.प.भास्क.प. 36, पृ. 410 ।
13. तथाहि – "प्रकृतिवदनुकरणं भवति' । कथं ज्ञायते ।यदयं क्षियोदीर्घात्' (8/2/46) इतिदीर्घग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अत्र दीर्घग्रहणं न कर्तव्यम् । निर्देशादेव क्षियइति दीर्घादिति गम्यते । कथं दीर्घस्येङादेशो विधीयते । यदि हि ह्रस्वत्वं स्यात् क्षेरितिब्रूयात्, नैतदस्ति । यथैवा प्राप्तासुबुत्पत्तिः एवमियङादेशोऽप्राप्तः स्यात् । कथमप्राप्ता सुबुत्पत्तिः । अर्थवत् प्रातिपादिकमधातुकम् । अयं च धातुः, तस्मात्सुबुत्पत्तिर्न प्राप्नोति । उच्यते । नैष धातुः । धातोरनुकरणमेतत् । क्षि इति यो धातुः तस्मादधातुत्वात् प्रातिपतिक-

सूत्रेऽस्मिन् कृतदीर्घस्य 'क्षी'तिशब्दस्य इयङा निर्देशादनुपात्तेऽपि दीर्घादिशब्दे दीर्घस्यैव ग्रहणमस्याअभावेसुलभम् । यदि हि ह्रस्वोऽत्र क्षिशब्दो विवक्षितः स्यात्तर्हि 'क्षे'रित्येवात्र ब्रूयात् । ज्ञापितायां चास्यां 'क्षि'धातोरेवेदमनुकरणं सुबुत्तीयङौ निर्देशादेवोपपद्येत इति कृत्वा 'अक्षितमसिमां मेष्ठाः' इत्यत्र निष्ठाया भावेविधानेन भावस्य ण्यदर्थतया 'निष्ठाया[1]मण्यदर्थे इतिदीर्घाभावाद् ह्रस्वात्[2]क्षेःपरस्य निष्ठातस्य नत्वाभावाय 'दीर्घा' दित्ययंशब्दोऽत्र स्वांशे चरितार्थोभवति । ज्ञापिताया अस्याः फलं तु 'कश्चिद्द्विः पचतु' इत्याहेत्यत्र 'तिङ्ङ[3]तिङः' इति निघातसिद्धिः, अस्या असत्त्वे हि द्विःपचत्वोरत्रानुकरणेऽपदत्वेन नि[4]घातो न सिद्ध्येत् । सूत्रसम्मतोऽयं ज्ञापकः, नतु भाष्यसम्मतः । यतो भाष्ये 'दीर्घा'दित्ययं शब्दः प्रत्या[5]ख्यातः । ज्ञापकशब्दाभावेहि कः शब्दोऽत्र ज्ञापकः स्यात् । वामनस्तु ह्रस्वस्यापि क्षेरिहानुकरणे इयङा निर्देशः सुलभमिति नेयङानिर्देशेन दीर्घस्य क्षेरित्यर्थलाभः सुलभ इति दीर्घात्परस्य तस्य नत्वाभावाय दीर्घादितिशब्दोऽत्राऽऽवश्यंकइति मन्वानो नास्य शब्दस्य ज्ञापकत्वं मनुते[6] ।

पुरुषोत्तमदेवस्तु 'घेर्ङि[7]तिगुणात्पूर्वविप्रतिषेधेन इय[8]ङ्भवती' तिवचनस्य ज्ञापकोऽदीर्घादिति शब्द इतिमनुते[9] । सर्वं चेदं भाष्यविरोधादुपेक्ष्यम् । तत्रहि दीर्घग्रहणं

---

संज्ञा । प्रातिपदिकात् स्वादयः । तेनात्र प्राप्ता सुबुत्पत्तिः । इयङादेशो न भवति । न चेद्भवति । निर्देशादेव क्षियइतिसिद्धम् । नार्थोदीर्घवचनेन । एतदाचार्यः पश्यति प्रकृतिवदनुकरणं भवतीति ततो धातोरेवेदमनुकरणं भवति । धातुवदेव सुबुत्पत्तिर्न प्राप्नोति । यथैवाप्राप्ता सुबुत्पत्तिरियङादेशोऽपिअप्राप्तः स्यात् । तस्माद्दीर्घवचनं क्रियते । किमेतस्या ज्ञापने प्रयोजनम् । इह कश्चिद् द्विः पचतु हत्याह । तत्प्रकृतिवदनुकरणं भवति । पदद्वयात् सिद्धो भवति तेन 'तिङतिङः' (8/1/28) इति निधातः । सर्वस्य सुबन्तस्य तिङन्तस्य च पदसंज्ञा एका । तत्र पदादिति न शक्यते वक्तुं तस्मात् समुदायपदत्वमेतेन भवति तस्मादयं यत्न, इतीत्याह व्याडिः प.सू.प. 86, पृ. 35-36 ।

1. अष्टा. 6/4/60 ।
2. 'क्षिये' धा.पा.भ्वा. 244 ।
3. अष्टा. 8/1/28 ।
4. अष्टा. 8/1/28 ॥
5. द्र. व्या.म.भा. 8/2/2/46 ।
6. अनेन हि – "दीर्घादिति किम् ? अक्षितमसि मामेष्टाः । अक्षितमितिक्तप्रत्ययो भावे, भावश्च ण्यदर्थइति दीर्घाभावः । ह्रस्वस्यापि हि धात्वनुकरणस्य इह इयङा निर्देशः । क्षियः 'निष्ठायामण्यदर्थे' इत्यत्र दीर्घग्रहणं क्रियते । 'विपराभ्यां जेः' इत्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वात् जिरूपसामान्यानुकरणं द्रष्टव्य"मित्युक्तम्, का. 8/2/46 ।
7. अष्टा. 7/3/111 ।
8. अचिश्नुधातुभ्रुवां युवोरियङुवङौ' - अष्टा. 6/4/77 ।
9. तथाहि – क्षियोदीर्घदिति (8/2/46) दीर्घग्रहणं ज्ञापयति – 'घेर्ङि'ति गुणात् पूर्वप्रतिषेधेन इयङ्भवति । दीर्घग्रहणं हि तत्र यदि ह्रस्वस्यापि क्षिशब्दस्य गुणं बाधित्वा इयङ्स्यात् तदा रूपसाम्यात् तद्व्यवच्छेदार्थविशेषमनुपपद्यते । तेनाङ्गपादे क्षियइति सिद्ध्यती'ति ज्ञा. समु.त्रिंशत्तमे असिद्धपादे पृ. 97 ।

प्रत्याख्यातम्[1] ।

## 'दीव्यत'इतिशब्दः

[2]'प्रागुदीव्यतोऽण्' -इत्यत्र 'दीव्यतः 'इति शब्दः 'प्राग्दीव्यतो येऽर्थास्तेष्वण्भवती'- तिवचनस्य [3]ज्ञापकः । यतोऽस्य वचनस्याभावेऽसौ व्यर्थः । 'प्राकृठकः'- इत्युक्त्यैवेष्टं' हि संगृहीतं भवति । ठक्शब्देन च [4]'प्राग्वहतेष्ठ' गितिसूत्रं हि परामृश्येत । ज्ञापितेचास्मिन्वचने 'प्राग्दीव्यतः इतिसूत्रपूर्वभाविठगर्थेऽप्यण्भवतीति लभ्यते, तत्रच प्राकूठक इत्युक्ते ठग्विषये अण्नैवप्राप्नुयादिति ठग्विषयेऽप्यणः प्राप्त्यर्थमयंशब्दः स्वांशे चरितार्थोभवति । ज्ञापितस्यास्यवचनस्य फलं तु समानेऽर्थे एकस्याः प्रकृतेर्द्वयोः अणञ्प्रत्यययोः प्रसक्तौ प्रकृत्यन्तरे सावकाशस्याणः इञ्बाधक इति बाध्यबाधकभावस्य निर्णयः ।

## 'धी'तिशब्दः

'पेषं वास[5] वाहनधिषु चे, त्यत्र 'धी'तिशब्दः' द्विर्बद्धं [6]सुबद्धंभवती'- तिपरिभाषाया ज्ञापकः[7] । यतोऽस्याभावेऽत्रासौ शब्दो व्यर्थः । यत– '[8]उदधि'रित्यत्र

---

1. तथाहि – "अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या । तद्यथा 'नेर्विशः' 'परिव्यवेभ्यः क्रियः 'विपराभ्यांजे'रिति । अथाप्येतन्नास्ति करणं प्रकृतिवदनु भवतीत्येवमपि न दोषः । धातोरजादौ यद्रूपं तदनुक्रियते" इत्याह पत.व्या.म.भा. 8/2/2/46 ।
अत्र "इयङ्तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थक" मित्याह कै.प्रदी. 8/2/2/46 ।
2. अष्टा. 4/1/83 ।
3. तथाहि –
(क) "किं पुनः कारणमियानवधिर्गृह्यते, न 'प्राक्.ठक' इत्येवोच्येत । एतजज्ञापयत्यर्थेष्व- यंभवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? । प्रकृतिविशेषादुत्पद्यमान इञ् अणं बाधते" - इत्याह पत. व्या.म.भा. 4/1/3/83 ।
(ख) "प्राक् कःइतिवक्तव्ये 'प्रागुदी यत' (सू.4/1/83) इत्युक्तिर्ज्ञापयति अर्थेष्वयमिती'त्याह श्रीना.ज्ञा.सं. 4, पृ. 77 ।
4. अष्टा. 4/4/1 ।
5. अष्टा. 6/3/58 ।
6. व्याडिः प. सू. प. 92, पृ. 38 ।
7. तथाहि - "द्विर्बद्धं सुबद्धं भवति' । कथं पुनर्ज्ञायते इयं परिभाषा विद्यते इति । उच्यते । यदयं 'पेषं वासवाहनधिषुच' (8/3/58) इतिधिशब्दे उदकस्य उदभावं शास्ति । कथं कृत्वा न वक्तव्यम् । उच्यते । पूर्वसूत्रेण सिद्धत्वात् । 'उदकस्योदः संज्ञायाम्' (6/3/57) इति । संज्ञायामुदधिर्भविष्यति । एवं सिद्धे यद्द्वितीयसूत्रे 'पेषं वासवाहनधिषुच' (6/3/58) इति उदकस्योदभावं शास्ति । तज्ज्ञापयति । अस्तीयं परिभाषा 'द्विर्बद्धं सुबद्धं भवति' । किमेतस्या ज्ञापने प्रयोजनम् । यत् सकृद्बद्धं तत्र क्वचिद्भवत्यपि । यथाऽचिरप्रकाशिका विद्युदिति । 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' (7/3/44) इती"त्याह व्याडिः प.सू.प. 92, पृ. 38 ।
8. उदकं धौयतेऽस्मिन्नित्यर्थे 'डुधाञ्धारणपोषणयोः' धा.पा.जुहो. 1167 इति धा धातोः 'कर्मण्यधिकरणे च' - अष्टा. 3/3/93, इति किप्रत्यये 'आतो लोप इटि च' अष्टा. 6/4/64, इत्या–कारलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।

हि धिशब्दे परे उदकशब्दस्य उदाऽऽदेशायोपात्तोऽयमस्या अभावे व्यर्थः। उदधेः समुद्र-संज्ञात्वेन 'उदकस्योदः[1] संज्ञाया'मित्यनेनैव हि उदकस्योदादेशः सुलभः। ज्ञापितायां चास्यामचिरप्रकाशिका विद्युदिव क्वचिदसकृद्बद्धं न भवत्यपीति नियमेन उदधिरित्यत्र धिशब्देपरे उदकस्योदाऽऽदेशार्थमयंशब्दः स्वांशे चरितार्थोभवति। ज्ञापतायाअस्याः फलं तु 'प्रत्यस्थात् कात्[2] पूर्वस्यात इदाप्यसुपः 'इत्यादौ नानुपपत्तिः। अन्यथात्र द्विः पञ्चम्या निर्देश अनुपपन्नो भवेत्। वस्तुतस्तु नास्य ज्ञापकत्वं युक्तम्। यतो घटादिजलपात्रवाचकस्य उदधिशब्दस्यासंज्ञात्वेन [3]पूर्वेण उदादेशो न सिद्ध्यतीति-सूत्रेऽस्मिन् असंज्ञायामपि धिशब्दे परे उदकस्योदादेशार्थं धिशब्दोपादानं चरितार्थ-मितिमन्ये।

## 'नगरे'तिशब्दः

[4]'प्राचां ग्रामनगराणा'मित्यत्र 'नगरे'तिशब्दः 'अन्यत्र'ग्रामग्रहणे नगरग्रहणं न भवती'तिवचनस्य [5]ज्ञापकः। यतोऽस्य वचनस्याभावेऽत्रायंशब्दो व्यर्थः। तथाहि–जनसमूहनिवासवाचकौ ग्रामनगरशब्दाविति ग्रामशब्देनैव जनसमूहनिवासत्वाविशेषा-

---

1. अष्टा. 6/3/57।
2. अष्टा. 7/4/44।
3. "उदकस्योदः संज्ञायाम्'–अष्टा. 6/3/57।
4. अष्टा. 7/3/14।
5. तथाहि–
(क) "नगरग्रहणं किमर्थं, न 'प्राचां ग्रामाणा'मित्येव सिद्धम्?। न सिद्ध्यति। अन्योहि ग्रामोऽन्यन्नगरम्। कथं ज्ञायते?। एवं हि कश्चित् कंचित् पृच्छति–'कुतो भवाना-गच्छति ग्रामात्?। स आह–'न ग्रामान्नगरा'दिति। ननु च भो 'य एव ग्रामस्तन्न-गरम्'। कतुं ज्ञायते?। लोकतः। ये हि ग्रामे विधयो नेष्यन्ते साधीयस्य ते नगरे न क्रियन्ते। तद्यथा–'अभक्ष्यो ग्रामकुक्कुटः' 'अभक्ष्यो ग्राम्यसूकर' इत्युक्ते सुतरां नागरोऽपि न भक्ष्यते। तथा 'ग्रामे नाध्येय'मिति साधीयो नगरेऽपि नाधीयते। तस्माद्य एव ग्रामस्तन्नगरम्। कथं यदुक्तम्–'एवं हि कश्चित्कंचित् पृच्छति–कुतो भवानागच्छति ग्रामात्। स आह–न ग्रामान्नगरा'दिति?। संस्त्यायविशेषमसावा-चष्टे। संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति। एवंतर्हि सिद्धे सति यद्ग्रामग्रहणे नगरग्रहणं करोति तज्ज्ञापयत्याचार्यो'ऽन्यत्र ग्रामग्रहणे नगरग्रहणं न भवती'ति। किमेतस्य ज्ञापने प्रयोजनम्?। 'विशिष्टलिङ्गो नदीदेशोऽग्रामा'इत्यत्र नगरप्रतिषेधश्चोदितः, स न वक्तव्यो भवती"त्याह पत. व्या. म. भा. 7/3/1/14।
(ख) "यदयम्–'प्राचां ग्रामनगराणाम्'इत्यत्र ग्रामनगरयोर्भेदेनोपाद नं करोति, इह शास्त्रे ग्रामग्रहणेननगराणां ग्रहणं न भवतीति"त्याह जि. बु. न्या. 2/4/7।
(ग) "प्राचां ग्रामनगरमिति (7/3/14) ज्ञापकम्। 'अन्यत्र ग्रामग्रहणे नगरग्रहणं न भवति। तेन विशिष्टलिङ्गो नदीदेशोऽग्रामा (2/4/7) इत्यत्र नगरप्रतिषेधो न भवति। मथुरापाटलिपुत्रमित्येकवद्भाव एव भवति। अस्य विषयत्वाच्च ज्ञापकस्य उदीच्यग्रामाच्चेति (4/2/109) नगरादप्यत्र भवति महानगरमिती"त्याह पु. दे. ज्ञा. समु. सप्तविंशेदेविकापादे पृ. 91।
(घ) "प्राचां ग्रामनगराणाम्' (सू. 7/3/14) प्राचां ग्रामाणामित्येव सिद्धे नगरग्रहणं ज्ञापयति ग्रामग्रहणे नगरग्रहणं नेती"त्याह श्रीना. ज्ञा. सं. 7, पृ. 121।

न्नगरस्याप्यत्र सूत्रे ग्रहणं सुलभमिति 'पूर्वेषु कामशम्यां भवः पूर्वेषुकामशमः'–'पूर्वस्मिन् पाटलिपुत्रेभवः पूर्वपाटलिपुत्रकः[1] 'इत्युभयत्र दिश उत्तरेधामचामादेरचोवृद्ध्यर्थमारब्धे 'प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचोवृद्ध्यर्थमारब्धे 'प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचोवृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः 'इत्यर्थकेऽस्मिन्सूत्रे'नगरे'तिशब्दो व्यर्थः । ज्ञापिते चास्मिन् वचनेऽनेनात्रव्याकरणे ग्रामग्रहणेन नगरग्रहणं न प्राप्नोतीति 'पूर्वास्मिन्पाटलिपुत्रके भवः पूर्वपाटलिपुत्रकः 'इत्यादौ उत्तरपदस्य वृद्ध्या पूर्वपदस्याऽऽदिवृद्धिनिवृत्त्यर्थमात्रायं-शब्दः स्वांशे चरितार्थोभवति । ज्ञापितस्यास्य वचनस्य फलं तु 'मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्र[2]'- मित्यत्रैकवद्भाव-सिद्धिः । अस्य वचनस्यासत्त्वे हि ग्रामग्रहणे नगरस्यापि ग्रहणादत्र 'विशिष्ट[3]लिङ्गो नदीदेशोऽग्रामाः'इति सूत्रस्थग्रामप्रतिषेधेन नगरस्यापि प्रतिषेधस्यदुर्वारतयाऽत्रैकवद्भावो न सिद्ध्येत् । 'अग्राम इत्यत्र [4]नगराणां प्रतिषेधो वक्तव्यः 'इतिवार्तिकं तु ज्ञापकसिद्धवचनमेव, नतु स्वतन्त्रं लाघवात् ।

[5]एकदेशिभाष्य–जिनेन्द्र[6]बुद्धि–पुरुषोत्तम[7]देव–[8]श्रीनागेशैरुपपादितमस्य वचनस्यज्ञापकत्वमस्य शब्दस्य न युक्तम् । यतोऽत्र सूत्रे भगवता शब्दोऽयं प्रत्याख्यातः[9] ।

---

1. पूर्वस्मिन् पाटलिपुत्रे भव इति तद्धितार्थे समासे 'रोपधेताः प्राचाम्'–अष्टा. 4/2/123, इतिवुञि वोरकाऽऽदेशे 'यस्येतिच'–अष्टा. 6/4/148, इत्यकारलोपे 'प्राचां ग्रामनगराणाम्'–अष्टा. 7/3/14, इत्युत्तरपदस्याऽऽद्यचोवृद्ध्या पूर्वपदस्याचो वृद्ध्यभावे तद्धितान्ताद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. 'चार्थेद्वन्द्वः'–अष्टा. 2/2/29 । इति द्वन्द्वे 'विशिष्टलिङ्गोनदीदेशोऽग्रामाः'–अष्टा. 2/4/7, इत्येकवद्भावे रूपमिदम् ।
3. अष्टा. 2/4/7 ।
4. वा. का. 2/4/7 ।
5. व्या. म. भा. 7/3/1/14 ।
6. न्या. 2/4/7 ।
7. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 91 ।
8. ज्ञा. सं. 7, पृ. 121 ।
9. तथाहि–"यद्येतज्ज्ञाप्यते–'उदीच्य ग्रामाच्च बह्वचोऽन्तोदादात्ता'दित्यंत्र नगरग्रहणं कर्तव्यम् । बाहीकग्रामेभ्यश्च नगरग्रहणं कर्तव्यम् । दिक्षब्दा ग्रामजनपदाख्यानचानराटेषु नगरग्रहणं कर्तव्यम् । इदं चतुर्थं ज्ञापकार्थम् । तत्रातिनिर्बन्धो न लाभः । तस्माद्यस्मिन्नेव ग्रामग्रहणे-नगरग्रहणं नेष्यते, तस्य प्रतिषेधो वक्तव्यः"–इत्याह पत. व्या. म. भा. 7/3/1/14 ।
"तत्तु–'उदीच्यग्रामात्'–(सू. 4/2/109) 'वाहीकग्रामेभ्यश्च' (4/2/117) 'दिक्षब्दाग्राम' (6/2/103) इतिस्थलत्रये नगरग्रहणकर्तव्यतापत्त्या भाष्ये दूषितम् । 'विशिष्टलिङ्ग' (सू. 2/4/7) इत्यत्र तु नगरप्रतिषेधोऽवक्तव्य एवेतिभाष्ये स्पष्ट"मित्याह श्रीना. ज्ञा. सं. 7, पृ. 121-122 ।

## 'नदी'तिशब्दः

[1]'विशिष्टलिङ्गो नदीदेशोऽग्रामाः'इत्यत्र 'नदी'तिशब्दः 'नदीदेशग्रहणेन न गृह्यते'इति वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । 'विशिष्ट लिङ्गानाम्=भिन्न लिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्राम-वर्जितानां द्वन्द्व एकवद्भवती' त्यर्थकेऽस्मिन् सूत्रेऽस्य वचनाभावे हि देशग्रहणेनैव नदीवाचिनां ग्रहणं सुलभमिति । उद्ध्यश्च इरावती च उद्ध्येरावति'इत्यादौ नदीवा-चिनां [3]द्वन्द्वे देशवाचितयैवैकवद्भावः सुलभः । ज्ञापिते चास्मिन्वचने नद्यादेशग्रहणेन-ग्रहणं न प्राप्नोतीति नदीद्वन्द्वे 'उद्ध्येरावति'–इत्यादावेकवद्भावार्थमत्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापकसिद्धस्यास्य वचनस्यान्यत्र फलं नास्तीति पुरुषोत्तम-देवोक्तमत्र सूत्रेऽस्य शब्दस्य ज्ञापकत्वं न युक्तमिति मन्ये । अतएव जयादित्योऽत्रसूत्रे नदीशब्दस्य सार्थक्यमाह[4] ।

## 'नपुंसक'मितिशब्दः 'एका'इतिशब्दश्च

''अर्धनंपुंसक'[5]मित्यत्र 'नपुंसक'मितिशब्दः [6]'आकडारादेकासंज्ञे'त्यत्र 'एका' इतिशब्दश्च'सूत्रे [7]'लिङ्गवचनमतन्त्र' मितिपरिभाषाया[8]ज्ञापकौ । यतोऽस्या अभा-

---

1. अष्टा. 2/4/7 ।
2. तथाहि–''विशिष्ट-लिङ्गो नदीदेशोऽग्रामा इति (2/4/7) ज्ञापकम्–'नदीदेशग्रहणेन न गृह्यत इती''त्याह पु. दे. ज्ञा. समु. अष्टमे द्विगुपादे पृ 68 ।
3. 'चार्थेद्वन्द्व'–अष्टा. 2/2/29 ।
4. तथाहि–''नदीग्रहणमदेशत्वात् । जनपदो हि देशः, तथाचपर्वतानां ग्रहणं न भवति–कैलासश्च गन्धमादनं च कैलासगन्धमादने''–का. 2/4/7 ।
5. अष्टा. 2/2/2 ।
6. अष्टा. 1/4/1 ।
7. (क) पु. दे. ल. प. वृ. प. 117, पृ. 159 ।
   (ख) सी. दे. बृ. प. वृ. प. 30, पृ. 196 ।
   (ग) नी. दी. प. वृ. प. 40, पृ. 300, 'लिङ्गवचनमतन्त्रम्' ।
   (घ) ह. भा. प. भास्क. प. 30, पृ. 335 ।
   (ङ) भ. ना. प. शे. प. 74, पृ. 294 ।
   (च) शेषा. प. भास्क. प. 62, पृ. 432 ।
8. तथाहि–
   (क) ''ज्ञापकमप्यत्रार्थे'अर्धनपुंसकम्' (2/3/2) इतिनपुंसकग्रहणम् 'आकडारादेका संज्ञा (1/4/1) इति एकाग्रहण''मित्याह पु. दे. ल. प. वृ. प. 117, पृ. 160 ।
   (ख) ''ज्ञापकं चात्रार्थे'आकडारादेका संज्ञा' (1/4/2) इत्यत्रैकाग्रहणम् । 'अर्धनपुंसकम्' (2/2/2) इत्यत्र नपुंसकग्रहणं चे''त्याह सी. दे. बृ. प. वृ. प. 30, पृ. 196 ।

वेत्रायं शब्दोव्यर्थो नपुंसकलिङ्गकेन 'अर्ध'मितिशब्देनैव, स्त्रीलिङ्गैकवचनकेन 'संज्ञा'-इति च शब्देनैव हि नपुंसकं'मित्यस्य, 'एका'इत्यस्य चात्र लाभौ सुलभौ । ज्ञापितायां चास्यां 'ग्रामार्द्धः' इत्यादौ समानाधिकरणसमासाभावाय,[1] संज्ञाद्वयस्याभावाय चात्र क्रमशोऽमू शब्दौ स्वांर्शे चरितार्थौ भवतः । ज्ञापिताया अस्याः फलं तु 'बन्धुनि [2]बहुव्रीहौ' इत्यत्र नपुंसकनिर्देशस्यातन्त्रत्वसिद्धिः [3]'ग्रीवाभ्योऽण्च' इत्यत्र च बहुवचननिर्देशस्यातन्त्रत्वसिद्धिश्च । अस्या असत्त्वेऽत्रानयोर्ह्यतन्त्रत्वे न सिद्ध्येताम् । तयोश्चातन्त्रत्वे 'कारीषगन्ध्याबन्धुरस्य कारीषगन्धीबन्धुरित्यत्र पुंलिङ्गबन्धशब्दोत्तर-पदे संप्रसारणं[4] ष्यङो न स्यात्, तथा ग्रीवायां[5] भवमित्यर्थे 'ग्रैवम्' 'ग्रैवेय'मित्यत्र क्रमशः ग्रीवाशब्दाद् अणूढञौ[6]न स्याताम् ।

## 'नवे'तिशब्दः

'पूर्वादिभ्यो [7]नवभ्यो वा'–इत्यत्र 'नवे'तिशब्दः पूर्वं गणपाठः पश्चात्पाणिनि-सूत्रपाठः 'इतिवचनस्य [8]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्र सूत्रे नवाधिकत्यदादि-[9]निरासार्थमुपात्तोऽयं व्यर्थः । यदि हि पाणिनिसूत्रं गणपाठात् पूर्वं स्यात्तर्हि पाणिनि-

---

(ग) "सूत्रे लिङ्गंवचनं चाविवक्षितं स्यात् । 'अर्धंनपुंसकम्'–(2/2/2) इतिनपुंसकग्रहणात् । 'आकडारादेकासंज्ञा' (1/4/1) इत्यत्र एक ग्रहणाच्च"त्याह ह. भा. प. भा. स्क. प. 30, पृ. 335 ।

(घ) " 'अर्द्धंनपुंसक'मिति नपुंसकग्रहणमस्या ज्ञापकम् । .... अतए 'वाकडार'सूत्रेएकेति चरितार्थ"मित्याह भ. ना. प. शे. प. 74, पृ. 294-295 ।

(ङ) "ज्ञापकं चात्र–'अर्धंनपुंसकम्' (2/2/2) इतिसूत्रे नपुंसकग्रहणम् । यदि सूत्रे लिङ्गवचनं विवक्षितं स्यात्, अर्धमितिनिर्देशादेव सिद्धे नपुंसकग्रहणमनर्थकं स्या"दित्याह शेषा. प. भास्क. प. 62, पृ. 433 ।

1. 'अर्धं नपुंसकम्'–अष्टा. 2/2/2 ।
2. अष्टा. 6/1/14 ।
3. अष्टा. 4/3/57 ।
4. 'बन्धुनि बहुव्रीहौ'–अष्टा. 6/1/14 ।
5. ग्रीवाशब्दोऽत्र धमनीसंघाते वर्तते ।
6. 'ग्रीवाभ्योऽणूच'– अष्टा. 4/3/57, इत्यनेनेतिशेषः ।
7. अष्टा. 7/1/16 ।
8. तथाहि–

(क) एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'स पूर्वः पाठोऽयं पुनःपाठः' इति, यदयं 'पूर्वादि-भ्यो नवभ्योवे'तिनवग्रहणं करोति । नवैव हि पूर्वादीनी"त्याह पत. व्या. म. भा.1/1/6/33 ।

(ख) 'पूर्वपरा (सू. 1/1/34) । पूर्वं गणपाठः पश्चात्सूत्रपाठः । 'पूर्वादिभ्यो नवभ्योवा' (सू. 7/1/16) इतिनवग्रहणाज्ज्ञापकात् । सूत्रपाठे नवैव हि पूर्वादीनी"त्याह श्रीना. ज्ञा. सं. 1, पृ. 22 ।

9. तथाहि–

सूत्रे पूर्वादीनां नवानामेव पूर्वपरेत्यादिसूत्रत्रयेण[1] विशिष्यनिर्देशात् नवाधिकानां [2]त्यदादीनां पूर्वादिभ्य इत्यनेन ग्रहणस्य प्रसक्तिरेव नास्ति । ज्ञापिते चास्मिन्वचने नियतसन्निवेशस्य गणपाठस्य सूत्रपाठात्प्राक्सद्भावेन पूर्वादिभ्य इत्यनेन त्यदादीनामपि ग्रहणं प्राप्नोतीति त्यदादिनिरासार्थमत्रायंशब्दः स्वांशे चरितार्थो भवति । ज्ञापित-स्यास्य वचनस्य फलं तु 'गणघटित[3]सूत्राणा'मुपपत्तिः । अन्यथा तत्तद्गण-पाठस्य पूर्वम- सद्भावात्तत्तद्गणघटितसूत्राण्यनुपपन्नानि भवेयुः ।

## 'नाग्लोपी'तिशब्दः

'[4]नाग्लोपिशास्वृदिता'मित्यत्र 'नाग्लोपी'तिप्रषेधवाचकः शब्दः 'पूर्वत्रासिद्धीये न [5]स्थानिवदिति, परिभाषाया [6]ज्ञापकः । यतोऽस्या अभावेऽत्रायं शब्दो व्यर्थः । तथाहि 'मालमाख्यत–अममाल[7]'दित्यत्र ह्रस्ववारणायात्रोपात्तोऽयमस्या अभावे व्यर्थः,

---

(क) "तथाहि नवग्रहणं त्यदादिनिरासार्थं क्रियते । यदि च नियतसंनिवेशो गणपाठः पूर्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्य" मित्याह कै. प्रदी. 1/1/6/33 ।

(ख) "ननु च 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' 'स्वमज्ञातिधनाख्या-याम्' 'अन्तरंबहिर्योगोपसंव्यानयोः'इतिनवैव सूत्रे पूर्वादीनि पठ्यन्ते, तदपार्थकं नव-ग्रहणम् ? नैतदस्ति, नहीह सूत्रपरिपठितानि पूर्वादीनि गृह्यन्ते, किंतर्हि ? गण-पठितानि। कुत एतत् ? जसि हि सूत्रपरिपठितानां तेषां सर्वनामसंज्ञा, नङसिङ्योः । 'सर्वनाम्नश्च'- इतीहानुवर्तते, किं प्रयोजनम् ? विद्यमाने स्वे यजते, स्वाद् बिभेतीत्यत्र माभूत् । तस्माद् गणपरिपठितान्येव पूर्वादीनि गृह्यन्ते, तत्रासति नवग्रहणे त्यदादिभ्योऽपि स्यात् । तस्मान्नवग्रहणं कर्तव्यमित्याह जि. बु. न्या. 7/1/16 ।

(ग) "द्वये पूर्वादयः–सूत्रपठिताः, गणपाठपठिताश्च, 'सर्वनाम्नः' इति चेहानुवर्त्तते, तत्रासति नवग्रहणे ङसिङ्योर्येन सर्वनामसंज्ञा स गणपाठ एव गृह्यत इति नवग्रहण"मित्याह ह. मि. पदम. 7/1/16 ।

1. 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्'–अष्टा. 1/1/34, स्वमज्ञातिधना-ख्यायाम्'–अष्टा. 1/1/35, 'अन्तरं बहिर्योगोपसंव्यानयोः' अष्टा. 1/1/36, इतिसूत्रत्रयेणे-त्यर्थः ।
2. "त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्'–इति सर्वादिगणपठितस्त्यदादिः ।
3. 'सर्वादीनि सर्वनामानि'–अष्टा. 1/1/27 इत्यादि 'क्षुभ्नादिषुच'–अष्टा. 8/4/39, इत्य-न्तानि यानि सूत्राणि तेषामित्यर्थः ।
4. अष्टा. 7/4/2 ।
5. (क) पु. दे. ल. प. वृ. प. 112, पृ. 158 ।
   (ख) सी. दे. बृ. प. वृ. प. 92, पृ. 249 ।
   (ग) नी. दी. प. वृ. प. 128, पृ. 315 ।
   (घ) ह. भा. प. भास्क. प. 95, पृ. 361 ।
   (ङ) शेषा. प. भास्क. प. 110, पृ. 464 ।
6. तथाहि–

(क) "एवं तर्हि सिद्धे सति यदग्लोपिनां नेति प्रतिषेधं शास्ति, तज् ज्ञापयत्याचार्यः 'इत उत्तरं स्थानिवद्भावो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । 'पूर्वत्रासिद्धे न स्थानिव'दित्युक्तन्तन्न वक्तव्यं भवती'त्याह पतञ्जलिः व्या. म. भा. 7/4/1/2, पृ. 238 ।

(ख) "एतच्च'नाग्लोपि शास्वृदिताम्' (7/4/2) इंत्यत्र भाष्ये ज्ञापितम् । तथाहि तत्र भाष्ये 'अममालत्' इत्यादौ अजादेशस्य स्थानिवत्त्वादेवणोचङ्परे ह्रस्वो नभविष्यति किमग्लोपि- नामिति प्रतिषेधेन । तत्रोक्तं यत्र स्थानिवद्भावो नास्ति तदर्थम् अत्यरराजत् इति । नह्यत्र टिलोपोऽजादेशः । किं तर्हि । हलचोरादेशः । ततः पुनरुक्तं तर्हि अग्लोपिनां नेति प्रतिषेधोऽप्यत्र न प्राप्नोति । नह्यत्र अगेवलुप्यते । किं तर्हि अन्योऽपि । अथ योऽत्र अग्लुप्यते तदाश्रये निषेधः । एवं तर्हि योऽत्रागलुप्यते तदाश्रयः स्थानिवद्भावो न भविष्यतीत्युक्त्वा उपसंहृतम् । एवं तर्हि सिद्धे सति अग्लोपिनां नेति यत् प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः इत आरभ्य उत्तरत्र स्थानिवद्भावो न भवतीति । तेन पूर्वत्रासिद्धीये न स्थानिवदिति उपपन्नं भवतीती"त्याह प. दे. ल. पु. वृ. प. 112, पृ. 158 ।

(ग) "इयं च परिभाषा 'नाग्लोपिशास्वृदिताम्' (7/4/2) इत्यत्र भाष्ये ज्ञापिता । तत्र ह्युक्तम् । अचकथदित्यादावजादेशस्य स्थानिवत्त्वादेवणौह्रस्वो न भविष्यति, किमग्लोपिनां नेति प्रतिषेधेन । तत उक्तं यत्र स्थानिवद्भावो नास्ति तदर्थमत्यरराजदिति । नह्यत्र टिलोपोऽजादेशः किं तर्हि, हलचोरादेश इति । ततः पुनरुक्तम् । न तर्ह्यग्लोपिनां नेति प्रतिषेधोऽत्र प्राप्नोति । नह्यत्रागेव लुप्यते । किं तर्ह्यन्योऽपि । अथ योत्राग्लुप्यते तदाश्रयो निषेधः । एवं तर्हि'योऽज्लुप्यते तदाश्रयः स्थानिवद्भावोऽपि भविष्यति'इत्युक्तक्त्वोपसंहृतम् । एवं तर्हि यदग्लोपिनां नेति प्रतिषेधं शास्ति ततोज्ञापयत्याचार्यः 'इत आरभ्येतरत्र स्थानिवद्भावो न भवतीति' । तेन पूर्वत्रासिद्धीये न स्थानिवदिति वक्तव्यं न भवतीती"त्याह सी. दे. बृ. प. वृ. प. 92, पृ. 250 ।

(घ) "अत्र ज्ञापकम्–'नाग्लोपि.' (7/4/2) इति सूत्रे अग्लोपिप्रतिषेध इति भाष्ये उक्तम् । स हि मालामाख्यत् अममालदित्यत्र ह्रस्ववारणाय । यदि स्थानिवद्भावः स्यात्, तर्ह्यनुप- धात्वादाकारस्य ह्रस्वाप्राप्तेरनर्थकः स्यात् । ननु राजानमत्यक्रमीत् अत्यरराजदित्यत्र अज्झलसमुदायस्य टेर्लोपस्य स्थानिवत्त्वाभावात् ह्रस्वनिषेधार्थं तदितिचेत्, अत्र भाष्यम् अग्लोपित्वमपि तस्य न स्यात्, अगनक्समुदायस्यैव तत्रलोपात् । अगपि तत्रलुप्यते इत्यग्लोपित्वस्वीकारे अज्झल्समुदायस्यादेशोऽजादेश इत्यपि शक्यते वक्तुमिति स्थानिवत्त्वमिति तस्य न स्यात्"इत्याह शेषा. प. भास्क. प. 95, पृ. 362 ।

(ङ) "अत्र ज्ञापकम्–'नाग्लोपि. (7/4/2) इति सूत्रे अग्लोपिप्रतिषेध इति भाष्ये उक्तम् । स हि मालामाख्यत् अममालदित्यत्र ह्रस्ववारणाय । यदि स्थानिवद्भावः स्यात्, तर्ह्यनुप- धात्वादाकारस्य ह्रस्वाप्राप्तेरनर्थकः स्यात् । ननु राजानमत्यक्रमीत् अत्यरराजदित्यत्र अज्झल्समुदायस्य टेर्लोपस्य स्थानिवत्त्वाभावात् ह्रस्वनिषेधार्थं तदितिचेत्, अत्र भाष्यम् अग्लोपित्वमपि तस्य न स्यात्, अगनक्समुदायस्यैव तत्रलोपात् । अगपि तत्रलुप्यते इत्यग्लोपित्वस्वीकारे अज्झल्समुदायस्यादेशोऽजादेश इत्यपि शक्यते वक्तुमिति स्थानिवत्वमपि तस्य न स्यात्"इत्याह शेषा. प. भास्क. प. 110, पृ. 464 ।

7. 'तत्करोति तदाचष्टे'–चुरा. ग. सू. वै. सि. कौ. पृ. 239, इति मालाशब्दाण्णिचि 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च'–चुरा. ग. सू. वै. सि. कौ. पृ. 238, इति इष्ठवद्भावे 'तुरिष्टेमेयः सु.'–अष्टा. 6/4/154 इति टिलोपे धातुत्वाल्लुङि च्लौ च्लेश्चङि तिपि द्वित्वादिकार्येषु कृतेषु रूपमिदम् ।

[1]स्थानिवद्भावेनाऽत्र आकारस्यानुपधा[2]त्वाद् ह्रस्वस्य[3] प्राप्तिरेव हि नास्ति । न च राजानमत्यक्रमीत् [4]अत्यरराजदित्यत्र टेर्लोपस्य[5] अज्झलसमुदायतया[6] स्थानिवद[7]-द्भावो न प्राप्नोतीति आकारस्योपधात्वमक्षुण्णमिति प्राप्तस्य ह्रस्वस्य निषेधार्थमसौ शब्दश्चरितार्थोऽत्रेति कथमस्य ज्ञापकोऽस्यामितिशङ्क्यम् । यतोऽज्झल्समुदायतया टिलोपस्याजादेशत्वं नास्तीत्युच्येत यदि तर्हि अगनक्समुदायस्यैवात्र 'अन्'इत्यस्य लोपेन अग्लोपित्वमपि नेतिस्वीकार्यम्, तथा सति उपात्तेऽप्यस्मिन्शब्दे प्रतिषेधाप्राप्त्या कुतस्तस्य चारितार्थ्यम् । यदि चात्र अगपि लुप्यत इति कृत्वा अंस्याग्लोपित्वं स्वीक्रियेत तर्हि अचोऽप्यादेश इति कृत्वा अज्झल्समुदायस्याऽऽदेशस्य टिलोपस्यापि अजादेशतया स्थानिवत्त्वम् 'अचः परस्मिन्[8]पूर्वविधौ'इत्यनेन दुर्वारमित्यनुपधात्वा-दाकारस्य 'णौ चङ्युपधाया[9]ह्रस्वः' इतिह्रस्वत्वस्याप्राप्त्या तत्प्रतिषेधार्थमुपात्तोऽयं प्रतिषेधोऽत्रास्याअभावे व्यर्थ एव । ज्ञापितायां चास्यां मालामाख्यत् अममालदित्या-दावाकारस्योपधात्वेन प्राप्तस्य ह्रस्वस्य निषेधार्थमत्रायंशब्दः स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'पापच्यतेः [10]पापक्तिः, यायज्यतेर्यायष्टिः[11] पाचयतेः-[12]पाक्तिः, याजयतेर्याष्टि[13]रित्यादावल्लो[14]पणिलोपयोः[15] स्थानिवत्त्वाभावात् क्रमशः

---

1. अचः परस्मिन्पूर्वाविधौ'-अष्टा. 1/1/57 ।
2. 'अलोन्त्यात्पूर्व उपधा'-अष्टा. 1/1/65 ।
3. 'णौ चङ्युपधाया ह्रस्वः'-अष्टा. 7/4/1 ।
4. 'राजन्शब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च'-चुरा. ग. सू. वै. सि. कौ. पृ. 238; इति णिचि इष्ठवद्भावे च कृते तुरिष्ठेमेयः सु'-अष्टा. 6/4/154 इति टिलोपे धातुत्वाल्लुङि चूलौ च्लेश्चङितिपिद्वित्वादिकार्येषु-कृतेषु रूपमिदम् ।
5. 'तुरिष्ठे मेयः सु'-अष्टा. 6/4/154 ।
6. 'अनः'इति शेषः ।
7. 'अचएवादेश'इत्यर्थे 'अचः परस्मिन्पूर्वविधौ'-अष्टा. 1/1/57 इति ।
8. अष्टा. 1/1/57 ।
9. अष्टा. 7/4/1 ।
10. 'डुपचष् पाके' धा. पा. भ्वा. 1065, इति पचधातोर्यङि तदन्तात् 'स्त्रियां क्तिन्'-अष्टा. 3/3/94 इति क्तिन् प्रत्यये 'वधपापच्यति' इत्यवस्थायाम् अतो लोपः'-अष्टा. 6/4/48, इत्यकारस्य 'यस्यहळः'-अष्टा. 6/4/49 इति यकारस्य च लोपे 'पापचति'इत्यवस्थायां प्राप्तस्य 'अचः परस्मिन्पूर्वौ'-अष्टा. 1/1/57, इति स्थानिवत्त्वस्य 'पूर्वत्रासिद्धीये न स्थानिव'दिति परिभाषया निषेधात् झलि तकारे परे 'चोः कुः'-अष्टा. 8/2/30, इति कुत्वे स्वादिकार्येषु कृतेषु रूपमिदम् ।
11. 'यज देवपूजासंगतिकरणदानेषु' धा. पा. भ्वा. 1071, इति यज्धातोर्यङि तदन्तात् क्तिनि यकाराकारयोर्लोपे 'अचः.'-अष्टा. 1/1/57 इति स्थानिवत्त्वस्य 'पूर्वत्रासिद्धीयेनस्थानिव'-दितिनिषेधे 'व्रश्चभ्रस्जसृजमृजयजराजभ्रजच्छशांषः'-अष्टा. 8/2/36, इतिषत्वे ष्टुत्वे स्वादि-कार्येषुकृतेषुरूपमिदम् ।
12. 'डुपचष्पाके' धा. पा. भ्वा. 1065, इतिपच्धातोर्णिचि तदन्तात् 'स्त्रियांक्तिन्'-अष्टा. 3/3/94, इति क्तिन्प्रत्यये 'णेरनिटि-अष्टा. 6/4/51, इति णिलोपे, तस्य अचः परस्मिन्.-

[1]कुत्व- [2]षत्वयोः सिद्धिः । अस्या असत्त्वे हि नात्र कुत्वषत्वे सिद्ध्येताम् । यतोऽत्राल्लोपणिलोपयोः स्थानिवद्भावो दुर्वारः ।

शेषाद्रिस्तु[3] ज्ञापकमिदं दूषयित्वा[4] ज्ञापकान्तरमुपन्यस्तवान् । भट्टोजिदीक्षितस्तु 'अचः परस्मिन्निति स्थानिवद्भावं प्रतिनिपाद्या असिद्धत्वेन तत्र स्थानिवद्भावाप्रवृत्तेर्न्यायसिद्धत्वमस्या मनुते ।

## 'नित्य'मितिशब्दः

'नित्यं [5]कौटिल्ये गतौ' इत्यत्र 'नित्य'मितिशब्दः 'असति संभवे [6]बाधनं भवति' अस्ति च संभवो [7]यदुभयं स्या'दिति परिभाषयोर्ज्ञापकः[8] । यतोऽस्या एतयोर्वा

---

अष्टा. 1/1/57, इति प्राप्तस्य स्थानिवत्त्वस्य 'पूर्वत्रासिद्धीये न स्थानिव'दिति परिभाषया निषेधे 'चोः कुः'–अष्टा. 8/2/30, इति तकारे झलि परे कुत्वे स्वादिकार्येषु कृतेषु रूपमिदम् ।

13. 'यज् देवपूजासंगतिकरणदानेषु' धा. पा. भ्वा. 1071 इति यज्धातोर्णिचि तदन्तात् क्तिनि 'णेरनिटि'–अष्टा. 6/4/51, इति णेर्लोपे तस्य स्थानिवत्त्वस्य 'पूर्वत्रासिद्धीये.'–इति परिभाषया निषेधे 'व्रश्च.' अष्टा. 8/2/36 इति तकारे झलि परे षत्वे स्वादिकार्येषु कृतेषु रूपमिदम् ।
14. 'अतोलोपः'–अष्टा. 6/4/48 ।
15. 'णेरनिटि'–अष्टा. 6/4/51 ।
1. 'चोः कुः'–अष्टा. 8/2/30 ।
2. 'व्रश्चभ्रस्ज सृज मृज यजराज भ्राजच्छशां षः'–अष्टा. 8/2/36 ।
3. तथाहि–
"इदं तु 'हलचोरादेशः स्थानिवदितिचेद्विंशतेस्तिलोप एकादेशः' इति 'अचः परस्मिन्.' (1/1/57) सूत्रस्थभाष्यविरोधादुपपत्तिविरोधाच्चायुक्तम् । अग्नकृसमुदायलोपे अग्लोपित्वं तु अग्लोपिग्रहणसामर्थ्याद्भवति । तस्मात् 'यीवर्णयोः' (7/4/53) इतिसूत्रे वर्णग्रहणमस्या ज्ञापकम् । तद्धि ण्यन्तात् ण्वुलि आदीधकः–इत्यत्र नित्यत्वात् प्रथमं णिलोपे पश्चाद्भूतपूर्वगत्या इवर्णपरत्वमाश्रित्य लोपाय । स्थानिवत्त्वे णिलोपस्य तदानर्थक्यं स्पष्टमेव । यद्यपि आदीधी इ अक इति स्थिते अन्तरङ्गत्वात् दीधी वेव्योरन्त्यस्य लोपे पश्चाण्णिलोपे सिद्ध्यतीष्टम्, तथापि वर्णग्रङ्णेनान्तरङ्गबलीयस्त्वस्या नित्यत्वपि ज्ञाप्यते । तेन 'नधातुलोपे.'–(1/1/4) इतिसूत्रे भेद्यत इत्यत्र प्रथमंणिलोपे कृते पश्चात् 'नधातुलोप.' (1/1/4) इति निषेधवारणाय धातुलोपइति बहुव्रीह्याश्रयणमिति भाष्यग्रन्थः संगच्छते"इति, प. भास्क. प. 110. पृ. 464-465 ।
4. द्र. श. कौ. 'अचः परस्मिन्.'– 1/1/8/56 पृ. 47 ।
5. अष्टा. 3/1/23 ।
6. (क) व्याडिः प. सू. प. 21. पृ. 11 ।
(ख) पु. दे. ल. प. वृ. प. 21. पृ. 121 ।
(ग) 'असति संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात्' सी. दे. वृ. प. वृ. प. 35. पृ. 204 ।
(घ) नी. द्वी. प. वृ. प. 45. पृ. 301 ।
(ङ) ह. भा. प. भास्क. प. 36. पृ. 339 ।
7. (क) पु. दे. ल. प. वृ. प. 22. पृ. 121 ।

अभावेऽत्रासौ शब्दो व्यर्थः । कुटिलंक्रामति [1]चङ्क्रम्यते इत्यादौ कौटिल्य एव गत्यर्थेभ्यो यङितिनियमार्थमुपात्तोऽयं यदि सत्यपि संभवे बाधः स्यात्तर्हि कौटिल्य-यङाक्रियासमभिहारयङो[2] निवृत्तिर्हि नित्यमितिशब्दाभावेऽपि सुलभा, तथा 'अस्ति च संभवो यदुभयं स्या'–दित्यस्या अभावे [3]गत्यर्थेभ्यः क्रियासमभिव्याहारे यङोऽप्राप्त्या तन्निवृत्त्यर्थमुयपात्तोऽयंशब्दो व्यर्थः । कौटिल्ययङा[4] क्रियासमभिहारयङो[5]बाधो विशेषविहितत्वादेव हि सुलभः । ज्ञापितयोश्चैतयोः गत्यर्थेभ्योऽपि क्रमु[6] प्रभृतिभ्यः क्रियासमभिहारविहितोयङ् दुर्वारः कौटिल्ययङोऽभावपक्षे, इति क्रियासम-भिहारविहितस्य यङः कौटिल्ययङोऽभावपक्षे वारणाय नित्यमित्ययं शब्दः स्वांशे चरितार्थोभवति । नच कुटिलं क्रामतीति वाक्य - निवृत्त्यर्थमिह नित्यमितिशब्द इतिशङ्क्यम् । यतो वाक्यमिदमिष्टमेव । [7]तदुक्तम् – 'विग्रहेण यङन्तप्रति-पाद्यविशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यं नहि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यत'

---

(ख) नी. दी. प. वृ. प. 46, पृ. 301 ।
(ग) ह. भा. प. भास्क. प. 37, पृ. 339 ।

8. तथाहि–
(क) "ज्ञापकं चात्र 'नित्यं कौटिल्ये गतौ' (3/1/23) इति नित्यग्रहणम् । तद्धि गत्यर्थेभ्यः कौटिल्ययङा क्रियासमभिहारयोर्विरोधाभावात् सति संभवे प्रसक्तस्य समभिहारयङो बाधनार्थंक्रियते । तदेवमर्थं क्रियमाणम् अन्यत्र तथा स्वमुभयं प्रमाणं ज्ञापयती'त्याह पु. दे. ल. प. वृ. 21, 22 पृ. 121 ।
(ख) "ज्ञापकं चात्र 'नित्यं कौटिल्ये गतौ' (3/1/23) इत्यत्र नित्यग्रहणम् । तद्धि गत्यर्थेभ्यः कौटिल्ये एव यङ्यथा स्यात् । क्रियासमभिहारे माभूत्येवमर्थं क्रियते । यदितु सत्यपि संभवे बाधनंभवेत् तदा नित्यग्रङणमनर्थकंस्यात् । कौटिल्ययङा क्रियासमभिहारयङो बाधस्य सिद्धत्वात् । ननु कुटिलं क्रामतीति वाक्यं माभूदित्येवमर्थं नित्यग्रङणं क्रियते तत् कुतो ज्ञापकम् । उच्यते । कुटिलं क्रामतीत्यादिकं वाक्यमिष्ययमाणमेव । तथा च रक्षितः । नित्यग्रहणंवाक्य निवृत्त्यर्थं न भवति वाक्यस्येष्माणत्वा"दित्याह सी. दे. बृ. प. वृ. प. 35 पृ. 205 ।
(ग) "ज्ञापकं चात्र 'नित्यं कौटिल्येगतौ' (3/1/23) इति नित्यग्रहणम् । तच्च गत्यर्थेभ्यः कौटिल्य एवयङ् इति नियमार्थम् । यदि सत्यपिसंभवे बाधः स्यात्तर्हि कौटिल्य यङा क्रियासमभिहारयङः सिद्धैवनिवृत्तिरिति किंतेन । कुटिलं क्रामतीति वाक्यंत्विष्यत एवेत्याहुः" इत्याह ह. भा. प. भास्क. प. 37, पृ. 339 ।

1 'क्रमुपादविक्षेपे' धा. पा. भ्वा. 473, इति क्रम्धातोः 'नित्यं कौटिल्येगतौ' अष्टा. 3/1/23. इति यङिद्वित्वादिकार्येषु कृतेषु नुगतोऽननुासिकान्तस्य'–अष्टा. 7/4/85, इति नुगागमे अनुसावारपरसवर्णयोः कृतयोः सनाद्यन्तधातुत्वाल्लटिते रूपम् ।
2. 'धातोरेकाचो हलादेः क्रियासभिहारे यङ्'–अष्टा. 3/1/22 ।
3. 'नित्यं कौटिल्येगतौ'–अष्टा. 3/1/23 ।
4. 'नित्यं कौटिल्येगतौ' - अष्टा. 3/1/23 ।
5. 'धातोरेकाचो हलादेः क्रियासमभिहारेयङ्' - अष्टा. 3/1/22 ।
6. क्रमुपादविक्षेपे'धा. पा. भ्वा. 473 ।
7. व्या. म. भा. 3/1/2/23 ।

इति । तथाहि क्रामतीति वाक्यात् संशयो भवति – किं गति-कौटल्यम् ? उत मनः कौटिल्यमिति ? चंक्रम्यत इति वृत्तौ त्वसंशयं गतिकौटल्यमेव [1]गम्यते"इति च ।

ज्ञापितयोरेतयोः फलं तु क्रमशः 'रामेभ्यः[2]' इत्यादौ [3]एत्वेन [4]दीर्घस्य बाध - सिद्धिः 'यथाजातीयस्तथाजातीय'[5][6] इत्यत्र [7]थाल्-जातीयरोश्च[8]मिथो बाधाभावा-दुभयोश्च सिद्धिः । आद्याया अभावे एत्वेन[9] दीर्घस्य[10] बाधो न सिद्ध्येत् । द्वितीयस्या अभावेऽत्र यत्तच्छब्दाभ्यां [11]थाल्जातीयरौ[12] न सिद्ध्येताम् ।

[13]हरदत्तमिश्रस्तु 'नित्य'मित्यस्यात्र चिन्त्यप्रयोजनत्वं मनुते ।

भट्टोजिदीक्षितस्तु नित्यशब्दस्य एवार्थं स्वीकृत्य कौटिल्ये इत्यस्योपरि तन्निधाय 'गत्यर्थात् कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे' कुटिलं व्रजति वाव्रज्यते"इत्याह[14]।

ज्ञानेन्द्रभिक्षुस्तु "तक्रकौण्डिन्य-[15] न्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यासस्यानित्यत्वज्ञापनार्थम् । तेन '[16]मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमाने क्तेनाबाधनात् पूजार्थेभ्यो भूते क्तः सिद्ध्यति । ततश्च 'क्तस्यच[17] वर्तमाने' इति षष्ठी न प्रवर्तत इति 'पूजितो यः सुरासुरैरिति तृतीया साधुरेवे"त्याह[18] ।

1. न्या. 3/1/23 ।
2. रामशब्दाद्भ्यसि रूपमिदम् ।
3. 'बहुवचने झल्येत्' - अष्टा. 7/1/103 ।
4. 'सुपि च' - अष्टा. 7/3/102 ।
5. 'यच्छब्दात् 'प्रकारवचने थाल्' - अष्टा. 5/3/23, इति थालि 'प्रकारवचने जातीयर' - अष्टा. 5/3/69, इति जातीयरि च कृते तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. तच्छब्दात् 'प्रकारवचनेथाल्' - अष्टा. 5/3/23, इतिथालि 'प्रकारवचनेजातीयर' अष्टा. 5/3/69, इतिजातीयरि च कृते तद्धितान्तप्रातिपदकित्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
7. 'प्रकारवचने थाल्' - अष्टा. 5/3/23 ।
8. 'प्रकारवचने जातीयर्' - अष्टा. 5/3/69 ।
9. 'बहुवचने झल्येत्' - अष्टा. 7/1/103 ।
10. 'सुपि च' - अष्टा. 7/3/102 ।
11. 'प्रकारवचने थाल्' - अष्टा. 5/3/23 ।
12. 'प्रकारवचने जातीयर्' - अष्टा. 5/3/69 ।
13. अनेन हि – "ननु यथा 'वडवाया वृषे वाच्ये' इत्यपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, यथा वा 'ञीतः क्तः' भूते प्राप्तस्ततोपकृष्य वर्तमाने विधीयते, एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ्विहितः' गतिवचनात् तु कौटिल्य इति ? तक्रकौण्डिन्य-न्यायेनैव बाधः सिद्धः । यथा वा विवक्षितार्थानभिधानाद्वाक्यं न भवति तथा समभिहारानवगमादत्र प्रत्ययो न भविष्यति । अथैवमपि वचनापेक्षा ? वाक्यनिवृत्तावपि वचनमपेक्षस्व । तदेतन्नित्यग्रहणं चिन्त्यप्रयोजन"मित्युक्तम् पदम. 3/1/23 ।
14. वै. सि. कौ. तिङन्ते यङन्त प्र. पृ. 270 ।
15. 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति न्यायस्वरूपम् ।
16. अष्टा. 3/2/188 ।
17. अष्टा. 2/3/67 ।
18. त. बो. तिङन्ते यङन्त प्र. 270-271 ।

भट्टनागेशस्तु[1] 'गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्येवेति'मनुते ।

## 'निपातयो'रितिशब्दः

'[2]यावत्पुरा-निपातयोर्लट्' इति सूत्रे निपातयोरिति विशेषणवाचकः[3] शब्दः 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येतिपरिभाषाऽनित्ये'ति-वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावेऽत्र वत्वन्ततृतीयान्तयोर्व्यावृत्त्यर्थ-मत्रोपात्तोऽयं शब्दो व्यर्थः । प्रतिपदोक्तत्वादेव हि यावत्पुरानिपातयोरेव ग्रहणं सुलभम् । ज्ञापिते चास्मिन्वचनेऽत्र कदाचिदपि लाक्षणिकयोर्वत्वन्त-तृतीयान्तयोर्ग्रहणं माभूदित्येतदर्थं स्वांशेऽयं शब्दश्चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [5]दाधाघ्वदा'बित्यत्र धाग्रहणेन धेटोऽपि ग्रहण-सिद्धिः, तथा अध्यापयतीत्यत्र

---

1. अनेन हि – "कौटिल्य एवेति । इदञ्च वृत्त्यनुरोधेन । 'धातोरेकाचः' इति सूत्रे भाष्ये तु उत्तरयो र्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम् । क्रियासमभिहारे च नैतेभ्यो यङ भवितव्यमिति । चेन विशेषासम्प्रत्ययादित्यनुकृष्यते । विग्रहेण = कुटिलङ्गच्छतीत्यनेन, चङ्क्रम्यतइत्यर्थासम्प्रत्ययान्नित्यग्रहणमाद्येऽनर्थकं, कुटिलं पन्थानं गच्छतीत्येव सम्प्रत्यात् । क्रिया- समभिहारे चेत्येतद् लुंपसदे'त्येद् विषयस्यैव भाष्ये उदाहरणात् । तस्माद् गत्यर्थेभ्यः क्रियासमभिहारे यङ् भवत्येवे"त्युक्तम् ल. श. शे. तिङन्ते यङन्त प्र. पृ. 270 ।
2. अष्टा. 3/3/4 ।
3. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्' व्याडिः प. सू. प. 3, पृ. 3 ।
   (ख) पु. दे. ल. प. वृ. प. 3, पृ. 113 ।
   (ग) सी. दे. बृ. प. वृ. प. 39, पृ. 348 ।
   (घ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' नी. दी. प. वृ. प. 102, पृ. 311 ।
   (ङ) ह. भा. प. भास्क. प. 41, पृ. 341 ।
   (च) भ. ना. प. शे. प. 114, पृ. 348 ।
   (छ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
   शेषा. प. भास्क. प. 97, पृ. 455 ।
4. तथाहि–
   (क) "अनित्यत्वं चास्याः 'यावत्पुरानिपातयोर्लट्' (3/3/4) इतिनिपातयोरिति विशेषणेन ज्ञापितम् । यदि हीयं नित्या स्यात्प्रतिपदोक्तत्वादेव यावत्पुरानिपातयोर्भवति, न लाक्षणिकयोर्वत्वन्ततृतीयान्तयोरिति किं निपातयोरित्यनेन । कृतं चैतत् । तेनास्या अनित्यत्वं सिद्ध्यति । तेन्न धाग्रहणे धेटोऽपि ग्रहणं सिद्ध्यती" - त्याह पु. दे. ल. प. वृ. प. 3, पृ 114 ।
   (ख) "अनित्या चेयं परिभाषा । तच्चानित्यत्वं 'यावत्पुरानिपातयोः 0' (3/3/4) इति विशेषणादवसितम् । तेन 'दाधाघ्वदाप्' (1/1/20) इत्यत्र धाग्रहणेन धेटोऽपि ग्रहणं भवति । एतत्त्वपिदिति कर्तव्येऽदाबिति यत् कृतं तल्लक्षणपरिभाषाया अभावे हेतुरिति तत एव सिद्ध"मित्याह सी. दे. बृ. प. वृ. प. 39, पृ. 209 ।
   (ग) "अध्यापयतीत्यत्र लाक्षणिकाकारस्य पुक् कथमितिचेत् एतत्परिभाषाया अनित्यत्वात् 'यावत्पुरानिपातयोर्लट्' (3/3/4) इत्यत्र निपातग्रहणा"दित्युक्तम् – ह. भा. प. भास्क. प. 41, पृ. 341 ।
5. अष्टा. 1/1/20 ।

लाक्षणिकास्याऽऽकारस्य पुकः[1]सिद्धिः । अस्यासत्त्वे हि नानयोः सिद्धिः स्यात् । भट्टनागेश – शेषाद्री तु- 'भुवश्च महाव्याहृते'रित्यत्र[2] 'महाव्याहृते'रितिशब्देऽस्य वचनस्य ज्ञापक इति [3]मन्वाते । स हि भुव इत्यत्र जसन्ते अप्रवृत्त्यर्थः तस्य लाक्षणिकत्वादेवाप्रवृत्तौ व्यर्थोऽसावनित्यत्वेऽस्याः परिभाषाया ज्ञापक इति तदाशयः ।

## 'नु'मिति शब्दः

[4]'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्यत्र 'नु'मितिशब्दः 'नुमयं न पूर्वान्तो न परादिः, अपि त्वभक्तः' इति वचनस्य ज्ञापकः[5] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – 'प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवती'त्यर्थकेऽस्मिन् सूत्रे '[6]माषवापाणि' माषवापानि' - इत्यादौ नुमो नकारस्य विकल्पेन णत्वार्थमुपात्तोऽयं शब्दः । स चाऽस्य वचनस्याभावे व्यर्थः । नुमः पूर्वान्तत्वे प्रातिपदिकान्तेन, परादित्वेऽपि विभक्तिग्रहणेन ग्रहणात् 'माषवापाणी'त्यादौ णत्वं हि सूत्रेऽस्मिन्नस्य शब्दस्याभावेऽपि सुलभम् । ज्ञापिते चास्मिन्वचने नुमोरभक्त्या क्रमशः प्रातिपदिकान्तेन विभक्तिग्रहणेन च ग्रहीतुमशक्यतया 'माषवापाणी'त्यादौ नुमो नकारस्य णत्वार्थमयं शब्दोऽत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं

---

1. 'अर्ति ह्री ब्लीरी क्नूयी क्ष्माय्यातां पुङ्णौ' - अष्टा. 7/3/36 ।
2. अष्टा. 8/2/11 ।
3. तथाहि–
   (क) "अनित्या चेयं 'भुवश्च महाव्याहृतेः 'इतिमहाव्याहृतिग्रहणादित्याह भ. ना. प. शे. प. 114, पृ. 350 ।
   (ख) "अनित्या चेयम्, 'भुवश्च महाव्याहृतेः' (8/2/27) इतिसूत्रे महाव्याहृतिग्रहणात् । तद्धिभूशब्दाज्जसि उवङि मन्दोपस्थितिकभुवःशब्दस्य ग्रहणव्यावृत्तये क्रियते । यदीयं परिभाषा स्यात्, तर्हि तदानर्थक्यं स्पष्टमेवे"त्याह शेषा. प. भास्क. प. 97, पृ. 456 ।
4. अष्टा. 8/4/11 ।
5. तथाहि – "नुमयं न पूर्वान्तो, न परादिः, अपि त्वभक्तः इति सूत्रकारस्य पक्षः । णत्वविधौ 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्यत्र (8/4/11) नुम्ग्रहणाज्ज्ञापकात् । पूर्वान्तत्वे हि प्रातिपदिकान्तेन ग्रहणात् परादित्वेऽपिविभक्तिग्रहणेन णत्वस्य सिद्धत्वात् नुम्ग्रहणमकृतं स्या"दित्याह पु. दे. ज्ञा. समु. द्वात्रिंशत्तमे रेफपादे पृ. 99 ।
6. माषान् वपन्तीत्यर्थे 'डुवप्बीजसन्ताने' धा. पा. भ्वा. 1003, इति वपधातोः 'कर्मण्यण् - अष्टा. 3/2/1, इत्यणि उपपदमासे समासप्रातिपदिकाऽवयवस्य सुपो लुकि समस्ताद् माषवापशब्दान्नपुंसकाज्जसि शसि च तयोः 'जश्शसोः शिः' - अष्टा. 7/1/20, इतिश्यादेशे नपुंसकस्य झलचः '-अष्टा. 7/1/72, इतिनुमि शेः सर्वनामसंज्ञायां 'सर्वनामस्थाने चाऽसम्बुद्धौ-अष्टा. 6/4/8, इत्युपधादीर्घे'प्रातिपदिकान्तनुम्विभक्तिषु च' - अष्टा. 8/4/11, इत्यनेन नुमो नकारस्य वैकल्पिके णत्वे च कृते रूपमिदम् ।

तु 'अङ्गसंज्ञायां [1]तदादिवचनं स्यादिनुमर्थमित्यत्र नुमर्थताया उपपत्तिः पुरुषोत्तमदेव-मात्रोक्तौ ज्ञापकोऽयं सूत्रकारस्यैव सम्मतः। यतो भगवता भाष्ये नुमः पूर्वान्तत्वपक्षः '[2]कुण्डानी'ति मितः पूर्वान्तत्वेन नकारान्तमङ्गमिति 'नोपधायाः' सर्वनामस्थाने[3]-दीर्घस्य'वहं लिहः'[4] - इत्यत्र पदान्तेऽनुस्वारस्य[5] च सिद्ध्यर्थं 'मिदचोऽन्त्यात्[6] पर'-इत्यात्रा'ऽऽद्यन्ता[7]'वित्यतोऽन्तग्रहणमनुवर्त्त्य स्वीकृतः[8]। 'यथोत्तरं मुनीनां[9] प्रामाण्य'मितिसिद्धान्तादत्रास्य शब्दस्यैतद्वचनज्ञापकत्वं न युक्तमिति मन्ये।

## 'ना'वितिशब्दः

'[10]नौद्व्यचष्ठन्' - इत्यत्र 'नौ' इति शब्दः 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति[11] पक्षे 'नाव्यपवृक्तस्यावयवस्य तद्विधि'रिति[12] वचनस्य ज्ञापकः[13]। यतोऽस्य वचनस्याभावेऽत्र पक्षे [14]सूत्रेऽस्मिन्नयं शब्दो व्यर्थः। तथाहि – '[15]नाविकः'

---

1. वा. व्या. म. भा. 1/4/2/13।
2. कुण्डशब्दान्नपुंसकाज्जसि शसि च तयोः 'जश्शसोः शिः' - अष्टा. 7/1/20, इतिश्यादेशे, 'नपुंसकस्य झलचः' - अष्टा. 7/1/72, इतिनुमि शेः 'शि सर्वनामस्थानम्'- अष्टा. 1/1/42, इतिसर्वनामस्थानसंज्ञायां 'सर्वनामस्थाने चासम्बुद्धौ' - अष्टा. 6/4/8, इत्युपधादीर्घे च कृते रूपमिदम्।
3. 'सर्वनामस्थाने चाऽसम्बुद्धौ - अष्टा. 6/4/8।
4. 'वहं लेढी'त्यर्थे वहमितिकर्मोपपदात् 'लिह आस्वादने' धा. पा. अदा. 1016, इति लिहधातोः खश्प्रत्यये उपपदसमासे अम्विभक्तेर्लुकि 'अरुर्द्विषदजन्तस्य मुम्' - अष्टा. 6/3/67, इतिमुमागमे मकारस्य 'मोऽनुस्वारः' - अष्टा. 8/3/23, इत्यनुस्वारे कृदन्तात्सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम्।
5. 'मोऽनुस्वारः' - अष्टा. 8/3/23।
6. अष्टा. 1/1/47।
7. 'आद्यन्तौ टकितौ' - अष्टा. 1/1/46।
8. व्या. म. भा. 1/1/7/46।
9. भ. दी. वै. सि. कौ. अजन्तपुंलिङ्ग प्र. पृ. 113।
10. अष्टा. 4/4/7।
11. पक्षोऽयं भगवता भाष्यकारेण निरूपितः व्या. म. भा. 1/1/2।
'ए ओङ्' 'ऐ औच्' मा. सू. 3, 4।
12. "अव्यपवृक्तस्य = अभिन्नबुद्धिविषयस्य एकत्वविषयकबुद्धिग्राह्यस्य - एकमित्याकारकबुद्धि-विषयस्य समुदायस्य योऽवयवस्तस्य तद्विवधिः = पृथग् वर्णविधि र्न भवती"ति वचनार्थः।
13. तथाहि – "ए ओङ्' 3। गोनौग्रहणाज्ज्ञापकात् नाव्यपवृक्तस्यावयवस्य तद्विधि- रिती"त्याह श्रीना. ज्ञा. स. 1, पृ. 4।
14. 'वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते' - इत्येतस्मिन्पक्षे'इत्यर्थः।
15. 'नावा तरती'त्यर्थे नौद्व्यशब्दात् तृतीयैकवचनात् 'नौचष्ठन्' - अष्टा. 4/4/7, इति ठन्, ठकारस्य 'ठस्येकः' - अष्टा. 7/3/50, इत्यनेन इकादेशे तद्धितान्त - प्रातिपदिकावयवस्य तृतीयैकवचनविभक्तेर्लुकि औकारस्याऽऽवादेशे तद्धितान्तप्रातिपदिकत्वेन नाविकशब्दात् सौ विभक्तौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम्।

'[1]घटिकः' इत्यादौ ठन् प्रत्ययार्थमारब्धे 'नौशब्दात् द्व्यच्क-शब्दाच्च तरतीत्यर्थे ठन् प्रत्ययो भवती'त्यर्थकेऽस्मिन् सूत्रे 'ना'विति शब्दोऽस्य वचनस्याभावे 'वर्णैकदेशा वर्ण-ग्रहणेन गृह्यन्ते' - इत्येतस्मिन्पक्षे व्यर्थः, नौशब्दे हि औकारस्य आकारोकारेति वर्णद्वयसमुदाय- रूपत्वेन द्व्यच्कत्वमस्तीति 'द्व्यचष्ठन्' इत्येतन्मात्रोक्तावपि 'नाविकः' - इत्यात्रापि ठन् प्रत्ययः सुलभः । ज्ञापिते चास्मिन् वचने 'नाविकः' इत्यत्र औकारस्य द्व्यच्कत्वाभावात् ठनोऽप्राप्तौ तत्र ठन्प्रत्ययविधानाय शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'अग्ने इन्द्र'मित्यादौ सवर्णदीर्घैका[2]ऽऽदेशाभावः । अस्य वचनस्याऽसत्त्वे हि 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते'इतिपक्षे एकारावयंवस्य इकारस्य इकारग्रहणेन ग्रहणं दुर्वारमिति सवर्णदीर्घै-काऽऽदेशोऽत्र[3] दुर्वारः स्यात् ।

अस्मिन् वचने[4] 'गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्य'दित्यत्र गोशब्दोऽपि ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' - इति [5]भाष्यनिरूपितपक्षे व्यर्थः । तथाहि – 'गव्यः[6]' 'धन्यम्[7]' इत्याद्यर्थमारब्धे "गोशब्दात् द्व्यचश्च प्रातिपदिकात् संख्यापरिमाणाश्वादिविवर्जिताद्यत् प्रत्ययो भवति 'तस्य निमित्तं संयोगोत्पातौ'- इत्येतस्मिन्नर्थे" इत्यर्थकेऽस्मिन् सूत्रेऽयं शब्दोऽस्य वचनस्याभावेऽत्र पक्षे[8] व्यर्थः । पक्षेऽस्मिन् 'गव्यः' इत्यादौ हि गोशब्दे य ओकारः अकारोकारेतिवर्णद्वयसमुदायरूपः तदवयवयोः 'अ इ' इत्यनयोः पृथग्भूताकारग्रहणेन उकारग्रहणेन च ग्रहणस्य दुर्वारतया गोशब्दस्य द्व्यच्कत्वाद् 'द्व्यच'इत्यनेन ग्रहणं सुलभमिति द्व्यच्कत्वादेव 'गव्यः' इत्यत्र गोशब्दात् यत् प्रत्ययः सुलभः । ज्ञापिते चास्मिन् वचने ओकारस्य वर्णद्वयरूपतया ग्रहीतुमशक्यत्वेन 'गव्यः' इत्यत्र गोशब्दात्

---

1. 'घटेन तरतीत्यर्थे घटशब्दात् तृतीयैकवचनान्तात् 'नौद्व्यचष्ठन्' - अष्टा. 4/4/7, इतिठन् प्रत्यये 'ठस्येकः' - अष्टा. 7/3/7, इति ठकारस्य इकादेशे तद्धितान्तप्रातिपदिकावयव-विभक्ते र्लुकि, टकारोत्तराकारस्य 'यस्येति च' - अष्टा. 6/4/148, इतिलोपे तद्धितान्तप्रातिपदिकत्वेन घटिकशब्दात्सौ विभक्तौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
2. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
3. 'अकः सवर्णे दीर्घः' - अष्टा. 6/1/101 ।
4. अष्टा. 5/1/39 ।
5. व्या. म. भा. 1/1/2, 'ए ओङ्' 'ऐ औच्' मा. सू. 3, 4 ।
6. 'गो र्निमित्तं संयोग उत्पातो वेत्यर्थे गोशब्दात् 'गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्' - अष्टा. 5/1/39, इति यत् प्रत्यये ओकारस्य अवादेशे तद्धितान्तात्सौ विभक्तौ सरकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
7. 'धनस्य निमित्तं संयोग उत्पातो वेत्यर्थे धनशब्दात् 'गोद्व्यचो.' - अष्टा. 5/1/39, इत्यनेन द्व्यच्कत्वाद् यत् प्रत्यये 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलोपे तद्धितान्तात् सौ सोरेमि पूर्वरूपे च कृते रूपमिदम् ।
8. 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' - इत्येतस्मिन् पक्ष इत्यर्थः ।

यत्प्रत्ययो न प्राप्नोतीति ततो यत्प्रत्ययसिद्ध्येऽयं शब्दोऽत्र स्वांशे चरितार्थो भवति । [1]अत्र सूत्रे 'ना'विति शब्दः 'दीर्घे द्व्यज्लक्षणो विधिर्न भवती'ति वचनस्यापि ज्ञापकः[2] । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – 'नाविकः' 'घटिकः' इत्यादौ ठन् प्रत्ययार्थमारब्धे 'नौशब्दात् द्व्यच्कशब्दाच्च तरतीत्यर्थे ठन् प्रत्ययो भवती'त्यर्थकेऽस्मिन् सूत्रे 'ना'विति शब्दोऽस्य वचनस्याभावे 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' - इत्येतस्मिन् पक्षे व्यर्थः, नौशब्दे हि औकारस्य आकारोकारेति वर्णद्वयसमुदायरूपत्वेन द्व्यच्कत्वमस्तीति 'द्व्यचष्ठन्'इत्येतन्मात्रोक्तावपि 'नाविकः' इत्यत्रापि ठन् प्रत्ययः सुलभः । ज्ञापिते चास्मिन्वचने दीर्घे औकारे द्व्यज्लक्षणस्य ठनोऽप्रवृत्तौ 'नाविकः' इत्यत्र नौशब्दात् ठन्प्रत्ययविधानायात्रायं शब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु '[3]एकवर्णवच्चे'ति-वार्तिकस्यानाऽऽरम्भजन्यं लाघवम् । वार्तिकमिदं हि वाचा तरतीत्यर्थे वाक्शब्दात् 'नौद्व्यचष्ठन्' - इत्यनेन ठन्प्रत्ययाऽऽपत्तिवारणाय 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इत्येतस्मिन् पक्षे [4]आरब्धम् । अस्य वचनस्य सत्त्वे तु वाचा तरतीत्यर्थे वाक्षब्दाद्द्व्यज्लक्षणस्य ठनः प्राप्तिरेव न भवतीति तदापत्तिवारणाय नेदं वार्तिकमारम्भणीयं भवति ।

अस्मिन् वचने 'गोद्व्यचोऽसंख्यापरिमाणाश्वदेर्यत्'[5] - इत्येतत्सूत्रघटको गोशब्दोऽपि ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' - इति भाष्यनिरूपितपक्षे व्यर्थः । तथाहि – 'गव्यः' - 'धन्यम्' - इत्याद्यर्थमारब्धे "गोशब्दाद् द्व्यचश्च प्रातिपदिकात्संख्यापरिमाणाश्वादिविवर्जिताद्यत् प्रत्ययो भवति 'तस्य निमित्तं संयोगोत्पातौ' इत्येतस्मिन्नर्थे"इत्यर्थकेऽस्मिन्सूत्रेऽयं शब्दोऽस्य वचनस्याभावेऽत्र पक्षे व्यर्थः । पक्षेऽस्मिन् 'गव्यः' इत्यादौ हि गोशब्दे य ओकारः अकारोकारेति वर्णद्वयसमुदायरूपः तदवयवयोः 'अ उ' इत्यनयोः पृथग्भूताकारग्रहणेन उकार - ग्रहणेन च ग्रहणस्य दुर्वारतया गोशब्दस्य द्व्यच्कत्वात्

---

1. 'नौद्व्यचष्ठन्' - अष्टा. 4/4/7 ।
2. तथाहि –
   (क) "अत्रापि गोनौग्रहणं ज्ञापकम् - 'दीर्घाद् द्व्यज्लक्षणो विधिर्न भवति'इती"त्याह पत. व्या. म. भा. 1/1/2, एओङ्, ऐऔच्' - मा. सू. 3, 4 ।
   (ख) "गोनौ ग्रहणाज् ज्ञापकात् दीर्घे द्व्यज्लक्षणो विधिर्न भवती"त्याह एन. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 135 ।
3. वा. व्या. म. भा. 1/1/2, मा. सू. 3, 4 ।
4. तथाहि–
   "एकवर्णवच्च दीर्घो भवती'तिवक्तव्यम् । किं प्रयोजनम् ? । वाचा तरतीति, द्व्यज्लक्षणठन् माभूदिति । इह च वाचो निमित्तम्, 'तस्य निमित्तं संयोगोत्पातौ'इत्यनुवर्तमाने 'गोद्व्यच'इति द्व्ज्लक्षणो यन्माभूदिती"त्याह पत. व्या. म. भा. 1/1/2 मा. सू. 3, 4 ।
5. अष्टा. 5/1/39 ।

'द्व्यच'इत्यनेन ग्रहणं सुलभमिति - द्व्यच्कत्वादेव 'गव्य' इत्यत्र गोशब्दातद् यत् प्रत्ययः सुलभः । ज्ञापिते चास्मिन्वचने दीर्घे द्व्यज्लक्षणस्य यत्प्रत्ययस्याप्राप्त्या 'गव्यः' - इत्यत्र गोशब्दाद्यत्प्रत्ययविधानाय शब्दोऽयमत्र स्वांशे चरितार्थो भवति ।

## 'न्थ'इतिशब्दः

'[1]थोन्थः' इति सूत्रे 'न्थ'इति शब्दः '[2]अनित्यमागमशासन'मिति परिभाषाया [3]ज्ञापकः । यतोऽस्या अभावेऽत्रासौ शब्दो व्यर्थः । 'थो नु'डिति न्यासेनापि हि नुडागमे सिद्ध्यन्ति '[4]पन्थाः' इत्यादिप्रयोगाः । ज्ञापितायां चाऽस्यामत्र नुड्विधाने कदाचित्तदभावेऽनिष्टं प्रसज्येतेत्यनिष्टाऽऽपत्तिवारणाय शब्दोऽयमत्र स्वांशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु '[5]पचानः' इत्यस्यापि साधुत्वसिद्धिः । अस्या असत्त्वे तु 'आने[6]मुगि'तिमुकोऽत्र दुर्वातया नास्य साधुत्वं सिद्ध्येत् । अन्ये त्वस्या ज्ञापकान्तरं[7] मन्यन्ते ।

## 'पञ्चम्ये'तिशब्दः

'[8]अपपरिबहिरञ्चवः पञ्चम्ये'त्यत्र 'पञ्चम्ये'तिशब्दः 'बहिर्योगे पञ्चमी भवती'-

---

1. अष्टा. 7/1/87 ।
2. (क) 'अनित्यमागमशासनम्' - व्याडिः प.सू.प. 78, पृ. 32 ।
   (ख) अनित्यमागमशासनम्' - पु.दे.ल.पृ.वृ.प. 84, पृ. 149 ।
   (ग) 'अनित्यमागमशासनम्' - सी.दे.बृ.प.वृ.प. 98, पृ. 254 ।
   (घ) 'आगमशास्त्रमनित्यम्' - नी.दी.प.वृ.प. 87, पृ. 310 ।
   (ङ) 'अनित्यमागमशासनम्' - ह.भा.प.भास्क.प. 100, पृ. 365 ।
   (च) 'आगमशास्त्रमनित्यम्' - भा.ना.प.शे.प. 95, पृ. 328 ।
   (छ) 'अनित्यमागमानुशासनम्' - शेषा. प.भास्क.प. 32, पृ. 445 ।
3. तथाहि –
   "य इमे टित्किन्मित आगमाः शास्त्रे शिष्यन्ते ते अनित्याः । न सर्वकालमेव भवन्ति । कथं ज्ञायते । यदयं 'थोन्थ' - (7/1/87) इत्याह । कथं कृत्वा ज्ञापकम् । एतत् सूत्रं 'थोनु'डिति वक्तव्यम् । नुडागमेनापि सिद्धं भवति । ततश्चेयमस्ति परिभाषा 'अनित्यमागमशासनमिति । पचानः इत्यपि भवति । पचमान इति प्राप्ते 'आनेमुक्' (7/2/82) न भवति । आगमस्यानित्यत्वा"दित्याह व्याडिः प.सू.प. 76, पृ. 32 ।
4. पथिञ्शब्दात् सौ रूपमिदम् ।
5. 'डुपचष् पाके' धा.पा.भ्वा. 996, इति पच्धातोर्लटि शानजादेशे मुगागमाभावे सवर्णदीर्घैकाऽऽदेशे रूपमिदम् ।
6. अष्टा. 7/2/82 ।
7. 'यजयाचयतविच्छप्रच्छरक्षो नङ्' - अष्टा. 3/3/90, इत्यत्र नङो ङकारानुबन्धः, 'आनिलोट्' - अष्टा. 8/4/16, इत्यत्र 'आ' इति शब्दः, 'स्तोः श्चुना श्चुः' - अष्टा 8/4/40, इत्यत्र 'स्तो-' रिति निर्देशश्च । अमीषां ज्ञापकत्वं क्रमशः 'ज्ञापका अनुबन्धाः' 'ज्ञापकाः सूत्रांशाः' - 'ज्ञापका निर्देशाः' - इत्येतेषु प्रघट्टकेष्वत्र चारु निरूपितम् ।
8. अष्टा. 2/2/12 ।

तिवचनस्य ज्ञापकः[1] । यतोऽत्र पञ्चम्यन्तेन सह अपपरिबहिरञ्चूनां समासविधानाय शब्दोऽयमुपात्तः । स चास्य वचनस्याभावे व्यर्थः । न च 'पञ्चम्यन्तेने' - त्यर्थलाभायासावावश्यक इति शङ्क्यम् । यतः सुपेत्यनुवृत्त्या ततस्तदन्तविधौ सुबन्तेनेत्यर्थेनैव तदर्थलाभः सुलभः । न च तथा सति येन केनापि सुबन्तेन सह समाऽऽसापत्तिरपपरिबहिरञ्चूनामिति शङ्कनीयम् । यतः कर्मप्रचननीयैरपादिभियोर्गे पञ्चम्येव विहिता । तथाहि अपपरियोगे - '[2]पञ्चम्याङ्परिभि'रिति, अञ्चूत्तरपदयोगे -- '[3]अन्यारा'दित्यादिना, पञ्चमी विहिता । ज्ञापिते चास्मिन्वचने बहिर्योगे पञ्चम्याः सुलभतया तदन्तेन बहेः समासार्थं पञ्चम्येतिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु 'ग्रामाद्[4]बहिरिति' प्रयोगस्य विभाषाधिकारेण साधुत्वसिद्धिः । अस्यासत्त्वे हि बहिर्योगे पञ्चम्याअभावान्नास्य साधुत्वं सिद्ध्येत् । न

---

1. तथाहि –
   (क) "पञ्चमीग्रहणं शक्यमकर्तुम् । कथम् ? । सुबन्तेनेति वर्तते । एतैश्च कर्मप्रवचनीयैर्योगे पञ्चमी विधीयते । तत्रान्तरेणापि - पञ्चमीग्रहणं पञ्चम्यन्तेनैव समासो भविष्यति । इदं तर्हि प्रयोजनम्, बहिःशब्देन योगे पञ्चमी न विधीयते, तत्रापि यथा स्यात् -बहिर्ग्रामं बहिर्ग्रामात् . अथ क्रियमाणेऽपि पञ्चमीग्रहणे यावता बहिः शब्देन योगे पञ्चमी न विधीयते, कथमिवैतत् सिद्ध्यति ? पञ्चमीग्रहणसामर्थ्या"दिति ग्रन्थेन ज्ञापकत्वमस्य सूचयति पत.व्या.म.भा. 2/1/2/12 ।
   (ख) "बहिर्योगे पञ्चमीभावस्यैतदेव ज्ञापक"मित्याह जया. का. 2/12 ।
   (ग) "यदेतत् पञ्चम्यन्तेन सह बहिःशब्दस्य समासविधानम्, तज्ज्ञापयति –"भवति हि बहिःशब्दयोगे पञ्चमीती"त्याह जि. बु न्या. 2/1/12 ।
   (घ) "न च वचनसामर्थ्याद् बहिःशब्दस्यापञ्चम्यन्तेन समासो भवत्विति वाच्यम्, पञ्चमीग्रहणात् । इह ह्यपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ गृह्येते, तौ च कर्मप्रवचनीयौ, तद्योगे च पञ्चम्येव विहिता । अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव4 गृह्यते, तद्योगेऽप्यञ्चूत्तरपदलक्षणा पञ्चम्येवास्ति । तदेतत् पञ्चमीग्रहणं ज्ञापयति - षष्ठीविषय बहिर्योगे पञ्चमी भवतीति"इत्याह ह.मि.पदम. 2/1/12 ।
   (ङ) "अपपरिबहिरञ्चवः पञ्चम्येति (2/1/12) ज्ञापकात् 'बहिःशब्दयोगे पञ्चमीति । तेन ग्रामाद् बहिः । ज्ञापकसिद्धमनित्यमिति (परिभाषा 117), 'करस्य करभो बहिः' (अमरकोषः 2/6/81) - इत्याह पु.दे.ज्ञा.समु. पञ्चमे समर्थपादे पृ. 65 ।
   (च) "अपपरिबहि'रिति समासविधानाज्ज्ञापकाद् - बहिर्योगे पञ्चमी । ग्रामाद् बहिः" - इत्याह भ.दी.वै.सि.कौ. कारक प्र. पृ. 339 ।
   (छ) अपपरियोगे 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी विहिता, अञ्चूत्तरपदयोगेऽपि 'अन्यारा'दित्यादिना विहितैव । तेनात्र 'पञ्चम्या'इति ग्रहणं 'बहिर्योगे पञ्चमी भवति' इति ज्ञापनार्थम् । 'ज्ञापकसिद्धं न सर्वत्रे'ति 'करस्य करभो बहि'रित्यपि सिद्ध"मित्याह ज्ञा. भि.त.बो.अव्ययीभाव प्र. पृ. 411 ।
   (ज) "अस्मादेव ज्ञापकाद्बहिर्योगे पञ्चमी'त्याह वासुदेवदीक्षितः बा. मनो. अव्ययीभाव-प्र. पृ. 411 ।
2. अष्टा. 2/3/10 ।
3. 'अन्यारादितरर्तेदिक्षब्दाञ्चूत्तरपदाजाहियुक्ते' - अष्टा. 2/3/29 ।
4. वाक्यमिदम् ।

च 'करस्य[1]करभो बहि'रितिप्रयोगस्यासाधुत्वं शङ्क्यम् । यतः 'ज्ञापकसिद्धस्यासार्वत्रिकतयाऽस्य[2] साधुत्वमपि समुपपद्यते ।

## 'प'दितिशब्दः

'[3]जुचङ्क्रम्य दन्द्रम्य - सृगृधिज्वलशुचलषपतपदः' इति सूत्रे 'प'दितिशब्दः 'ताच्छीलिकेषु[4] वाऽसरूपविधिर्नास्तीति परिभाषाया[5]ज्ञापकः । यतोऽस्या अभावे

---

1. अमरकोषः 6/2/81 ।
2. 'ज्ञापकसिद्धं न सर्वत्रे'तिपरिभाषयेत्यर्थः ।
3. अष्टा. 3/2/150 ।
4. (क) व्याडिः प.सू.प. 27, पृ. 14 ।
   (ख) पु.दे.ल.प.वृ.प. 28, पृ.124 ।
   (ग) सी.दे.बृ.प,वृ.प. 43, पृ. 211 ।
   (घ) नी.दी.प.वृ.प. 53, पृ. 303 ।
   (ङ) ह.भा.प.भास्क.प. 45, पृ. 342 ।
   (च) भ.ना.प.शे.प. 68, पृ. 385 ।
   (छ) 'ताच्छीलिका अपवादा, अताच्छीलिकानुत्सर्गांस्ताच्छीलिकाश्च नित्यं बाधन्ते' - शेषा. प. भास्क. प. 57, पृ. 430 ।
5. तथाहि –
   (क) "ताच्छीलिकेषु प्रत्ययेषु वाऽसरूपविधिन्यायो न भवति । कथं ज्ञायते । यदयं 'जुचङ्क्रम्य.' (3/2/150) इति सूत्रे पदेर्युचं शास्ति । कथं कृत्वा ज्ञापकम् । अयं पदिरनुदात्तेत् । तस्य 'अनुदात्तेतश्च हलादेः' (3/2/149) इति युच् सिद्धः । नार्थः पुनः पदिग्रहणेन । एवं सिद्धे सति यत् पदिग्रहणं करोति तज्ज्ञापयति ताच्छीलिकेषु वाऽसरूपविधिर्न भवति । किमेतस्या ज्ञापने प्रयोजनम् । भासते भास्वरः इति वाऽसरूपविधिना पुनरनुदात्तलक्षणो युजून भवती"त्याह व्याडिः प.सू.प. 27, पृ. 14 ।
   (ख) "एतज्ज्ञापत्याचार्यः ताच्छीलिकेषु ताच्छीलिका वाऽसरूपेण न भवन्ती"त्याह पत.व्या.म.भा. 3/2/2/150 ।
   (ग) "ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति – ताच्छीलिकेषु मिथो वाऽसरूपविधिर्नास्ती"-त्याह जया. का. 3/2/150 ।
   (घ) "तथा 'लषपतपद.' (3/2/154) इति उकञ्समावेशार्थं जुचङ्क्रम्य.' (3/2/150) इति पदेर्धातोर्युज्विधानं ज्ञापकम् । यदि ताच्छीलिकेषु समानजातीयः प्रत्ययो बाधको वाऽसरूपेण स्यात् लषपतपदेति उकञ्विषयेपि पद्यते र्वाऽसारूपेण अनुदात्तेल्लक्षणो युजपि सिद्ध इति किं पुनर्जुचङ्क्रम्येतियुज्विधानेन । तज्ज्ञापयति ताच्छीलिकेषु समानजातीयेषु वाऽरूपविधिर्नास्तीती"त्याह पु.दे.ल.प,वृ.प.28, पृ. 124 ।
   (ङ) "जुचङ्क्रम्यदन्द्रम्य - सृगृधिज्वलशुचलषपतपदः' (3/2/150) इत्यत्र पदेर्धातोर्युजर्थं पदग्रहणमनर्थकम् । 'अनुदात्तेतश्च हलादेः' (3/2/149) इत्यनेनैव युचा पदनः इत्यस्य सिद्धत्वात् । एवं तर्हि 'लषपतपद.' (3/2/154) इति पद्यतेर्युचो बाधक उकञ्स्यात् । न । वाऽसरूपविधिना युजपि भविष्यति । तदेव युज्विधानं ज्ञापयति ताच्छीलिकानां ताच्छीलिकैर्वाऽसरूपविधिर्नास्तीति । तेनालंपूर्वकात् करोतेस्तृन्न भवति अलंकर्तेती"- त्याह सी.दे.बृ.प.वृ.प. 43, पृ. 211 ।

शब्दोऽयमत्र व्यर्थः । तथाहि – 'पदनः इत्यत्र [1]पद्धातोर्युच्सिद्धये शब्दोऽयमत्रोपात्तः । स चास्या असत्त्वे व्यर्थः । यतः पदिरयमनुदात्तेदिति ततः 'अनुदात्तेतश्च [2]हलादे'रित्यनेनैव 'पदनः' इत्यत्र युचूसुलभः । न चात्र '[3]लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति उकञा युचो[4]बाधे प्राप्ते पक्षे युज्विधानायात्रपदितिशब्दश्चरितार्थ इतिशङ्क्यम् । यतोऽस्या अभावे[5]वाऽसरूप'- परिभाषयैवात्र युजपि सिद्धः । ज्ञापितायां चास्यामनया 'लषपतपदे'ति उकञा युचो बाधे प्राप्ते पक्षे युज्विधानाय शब्दोऽयमत्र स्वांशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलन्तु 'भासते' इत्यर्थे[6]भास्धातोः ''[7]स्थेशभासपिसकसो वरच्' इति वरचि 'भास्करः' इत्यस्यैव साधुत्वम् । अस्या असत्त्वे हि 'भासनः 'इत्यस्यापि साधुत्वमापद्येत । यतो 'वाऽसरूपन्यायेन भास्धातोः '[8]अनुदात्तेतश्च हलादेः' इतियुजपि दुर्वारः । तथा तच्छीलार्थे अलंपूर्वकात् [9]कृञः [10]अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधु – सहचर इष्णुच्' इत्यनेन इष्णुचि 'अलंकरिष्णुः' इत्यस्यैव साधुत्वम् । 'अस्या

---

(च) पूर्वेण सिद्धे पदिग्रहणं 'लषपतपदे'त्युकञा बाधा माभूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती'ति । तेनालङ्कृञस्तृन्ने''त्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र.पृ. 450 ।

(छ) ताच्छीलिकानामताच्छीलिकैस्ताच्छीलिकैश्च वासरूपविधिर्न । द्वितीयं यथा– अलंपूर्वात् करोतेस्तृन्न भवति किन्तु इष्णुजेव अलंकरिष्णुरिति । 'अनुदात्तेतश्च' (3/2/149) इति युचि सिद्धे पुनः 'जुचङ्क्रम्य.' (3/2/150) इत्यादिना पदेर्युज्विधानात् । नच' लषपतपदस्था.' - (3/2/154) इतिउकञा बाधे प्राप्ते पक्षे अनेन युच् इतिप्रसूयतइति वाच्यम् । वाऽसरूपन्यायेन तत्सिद्धे''रित्याह ह.भा.प.भास्क.प. 45, पृ. 342 ।

(ज) ''ज्ञापकं चात्र - 'लषपत.' (3/2/154) इत्युकञ्विषये 'जुयङ् क्रम्य.' (3/2/150) इतिपदधातो र्युज्विधानम् । यदि वासरूपविधिः स्यात्तदा 'अनुदात्तेतश्च.' (3/1/14) इतियुचि सिद्धे तदनर्थकं स्या''दित्याह शेषा.प.भास्क.प. 57, पृ. 430 ।

(झ) '''जुचङ्क्रमय' (सू.3/2/150) अत्र पदग्रहणातज् ज्ञापकात् -ताच्छीलिकास्ताच्छीलिकेषु वाऽसरूपेण न भवन्ती'त्याह श्रीना. ज्ञा.सं. 3,पृ. 70 ।

1. 'पद गतौ' धा.पा. दिवा. 1169 ।
2. अष्टा. 3/2/149 ।
3. अष्टा. 3/2/154 ।
4. 'अनुदात्तेतश्च हलादेः' - अष्टा. 3/2/149 । इतिविहितस्येत्यर्थः ।
5. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 7/1/94 ।
6. 'भासृ दीप्तौ' धा.पा.भ्वा. 624 ।
7. अष्टा. 3/2/175 ।
8. अष्टा. 3/2/149 ।
9. डुकृञ् करणे' तना. 1472 ।
10. अष्टा. 3/2/136 ।

असत्त्वे हि 'वाऽसरूप'न्यायेन अलंपूर्वकात् कृञः '[1]ण्वुल्तृचौ'इति पर्यायेण ण्वुल्तृचोः तृनश्चापि दुर्वारतया 'अलंकारकः' अलंकर्ते'त्यनयोरपि साधुत्वमापद्येत ।

अत्रेदमवधेयम्-व्याडिपतञ्जलिभ्यां पदिग्रहणमत्रसूत्रे सामान्यापेक्षं ज्ञापकमितिस्वीकृतमित्यनयोः सिद्धान्तमनुसृत्य पदिग्रहणं कृत्स्नपरिभाषाज्ञापकमिति । तदन्येषांसिद्धान्तेषु ताच्छीलिकानां ताच्छीलिकैः सह[2] वाऽसरूपविधिर्नेति विशेषापेक्षं ज्ञापकमत्र सूत्रे पदिग्रहणम्, 'ताच्छीलिकानामताच्छीलिकैर्वाऽरूपविधिर्नेति' [3]ज्ञापकान्तरलभ्यमितिं ।

## 'परस्मैपदे'ष्वितिशब्दः

'सिचि वृद्धिः[4] परस्मैपदे'ष्वित्यत्र 'परस्मैपदे'ष्वितिशब्दः 'पुरुषसंज्ञा[5] [6]परस्मैपदसंज्ञां न बाधते' इतिवचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्याभावेऽत्राऽयं शब्दोऽनुपपन्नः । [8]तिबादिषु परस्मैपदसंज्ञायाः [9]पुरुषसंज्ञया [10]परत्वाद्धि बाधो दुर्वारः । न चैकसंज्ञाधकारात् तिपूतसूझि-[11]प्रभृतीनां पुरुषसंज्ञाया विधानादनया परस्मैपदसंज्ञाया यदि बाधः स्यात्तर्हि परस्मैपदसंज्ञा निरवकाशेति शङ्क्यम् । यतः परस्मैपदसंज्ञा शतृक्वस्वोः सावकाशा । ज्ञापिते चास्मिन् वचने पुरुषसंज्ञया परस्मैपदसंज्ञाया बाधो न भवतीति '[12]अचैषी'दित्यादौ तिपः परस्मैपदसंज्ञा

---

1. अष्टा. 3/1/133 ।
2. 'तृन्' -अष्टा. 3/2/135 ।
3. 'निन्द-हिंस - क्लिश्-खाद - विनाश-परिक्षिप - परिरट - परिवाद-व्याभाषा सूञोञु' - अष्टा. 3/2/146 इति वुञ्विधानलभ्यमित्यर्थः ।
4. अष्टा. 7/2/1 ।
5. 'तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः' - अष्टा. 1/4/101, इतिविहितेत्यर्थः ।
6. 'लः परस्मैपदम्' - अष्टा. 12/4/99, इत्यनेन विहितामित्यर्थः ।
7. तथाहि –
   (क) "यदयं 'सिचिवृद्धिः परस्मैपदेषु' इतिपरस्मैपदग्रहणं करोति तज् ज्ञापयत्याचार्यो" न पुरुषसंज्ञा परस्मैपदसंज्ञां बाधत' इती"त्याह पत.व्या.म.भा. 1/4/4/99 ।
   (ख) "लः परस्मैपदम्' (सू. 1/4/99) । सिचिवृद्धौ परस्मैपदग्रहणं ज्ञापकं पुरुषसंज्ञा परस्मैपदसंज्ञां न बाधत इति"त्याह श्रीना. ज्ञा. सं. 1, पृ. 50 ।
8. अत्रादिपदेन तस् - झि-सिप्-थस्-थ-मिब् - वस् - मसो गृह्यन्ते ।
9. 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' अष्टा. 1/4/101 ।
10. 'विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2, इति सूत्रात् 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ' प.शे.प. 39, पृ. 170 इति परिभाषायां पूर्वात्परं बलवदिति लाभादित्यर्थः ।
11. प्रभृतिपदेन सिप् - थस् -थ - मिब् -वस् - मसो ग्राह्याः ।
12. 'चिञ् चयने' धा.पा.स्वा. 1252, इति चिधातोर्लुङि तिपि च्लौ तस्य सिजादेशे 'एकाच उपदेशेऽनुदात्तात्' - अष्टा. 7/2/10, इत्यनेन इटः प्रतिषेधे अडागमे 'नित्यं ङितः' - 3/4/19, इत्यनुवर्तमाने' 'इतश्च' - अष्टा. 3/4/100, इति तिप इकारलोपे

सुलभेत्ययं शब्दोऽत्र वृद्ध्यर्थमुपपद्यते । 'अचैषी'दित्यादौ [1]वृद्धिसिद्धिरेवास्य ज्ञापितस्य वचनस्य फलम् । ज्ञापकोऽयं च सामान्यापेक्षः[2] । तेनाऽऽत्मनेपद-संज्ञायाऽपि पुरुषसंज्ञानां समावेशःसिद्ध्यति । [3]ज्ञापकस्यास्य विशेषापेक्षत्वे हि परस्मैपदेषु सावकाशाः पुरुषसंज्ञाः[4] तङि[5] अनवकाशया आत्मनेपदसंज्ञया परत्वाद्बाधिता[6]भवेयुः ।

## 'परिमाण'इतिशब्दः

'यत्तदेतेभ्यः[7] परिमाणे वतु'बित्यत्र 'परिमाण'इतिशब्दः 'अन्यत् प्रमाणम्-अन्यत्परिमाण'-मिति वचनस्य [8]ज्ञापकः । यतोऽस्य वचनस्याभावेऽत्रायं शब्दो व्यर्थः । तथाहि – '[9]यावान्' – इत्यादौ वतुप्प्रत्ययार्थमारब्धे 'यत्तदेतेभ्यः प्रमासमर्थेभ्यः परिमाणोपाधिकेभ्यः[10] 'अस्य' इति षष्ठ्यर्थे वतुप्प्रत्ययो भवतीत्यर्थकेऽस्मिन् सूत्रेऽस्य वचनस्याभावेऽयं शब्दो व्यर्थः । 'प्रमाणे द्वयसज् दघ्नञ्मात्रचः' [11]इति सूत्रात् 'प्रमाणे' - इत्यस्यानुवृत्त्या परिमाणार्थलाभो न संभवति परिमाण-

---

'अस्तिसिचोऽपृक्ते' अष्टा. 7/3/96, इति ईडागमे 'इणूकोः अष्टा. 8/3/57, इत्यनुवर्तमाने आदेशप्रत्यययोः' - अष्टा. 8/3/59, इति सिचः सकारस्य षत्वेच कृते रूपमिदम् ।

1. 'सिचिवृद्धिः परस्मैपदेषु' - अष्टा. 7/2/1 इत्यनेनेतिशेषः ।
2. "अस्मादेव लिङ्गादेकसंज्ञाधिकारोऽत्र बाध्यत इति भावः । आत्मनेपदसंज्ञया परस्मैपद-संज्ञाया बाधनं यथा स्यादित्येवमर्थं त्विह प्रकरणेऽनयोः संज्ञयोर्विधानम् । सामान्यापेक्षं च ज्ञापकमित्यात्मनेपदसंज्ञयाऽपि पुरुषसंज्ञानां च समावेशो भवति । अन्यथा पुरुषसंज्ञाः सावकाशास्तिङ्क्षु अनवकाशया आत्मनेपदसंज्ञया बाध्येरन्"- इत्याह कै. प्रदी. 1/4/4/99 ।
3. 'तङानावात्मनेपदम्' - अष्टा. 1/4/100 ।
4. 'तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः' - अष्टा. 1/4/10 ।
5. 'तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः' - 1/4/101 ।
6. 'तङानावात्मनेपदम्' - अष्टा. 1/4/100 ।
7. अष्टा. 5/2/39 ।
8. तथाहि –
   (क) "किमर्थं परिमाण इत्युच्यते, न, प्रमाण इति वर्तते ? । एवं तर्हि सिद्धे सति यत्परिमाणग्रहणं करोति तज् ज्ञापयत्याचार्योऽन्यत्प्रमाणमन्यत्परिमाणमिती"त्याह पत. व्या. म. भा. 5/2/39 ।
   (ख) "यत्तदेतेभ्यः परिमाणे (सू. 5/2/39) । परिमाणग्रहणं ज्ञापयति अन्यत् प्रमाणम् अन्यत् परिमाणमिती"त्याह एन्. एस्.. रामा. ज्ञा. सं. परि. 1 पृ. 170 ।
9. यत्परिमाणमस्येत्यर्थे यच्छब्दात् 'यत्तदेतेभ्यः परिमाणे वतुप्' - अष्टा. 5/2/39, इति वतुपि 'आ सर्वनाम्नः' - अष्टा. 6/3/91, इत्याकारे तद्धितान्तात् सौ 'उगिदचां सर्वनामस्थानेऽधातोः' - अष्टा. 7/1/70 इति नुमि 'अत्वसन्तस्य चाधातोः - अष्टा. 6/4/14, इति दीर्घे हल्ङ्यादि-संयोगान्तलोपयोः कृतयो रूपमिदम् ।
10. आरोहपरिमाणाहाभ्यां स्वगताभ्यां धान्यादि येन मीयते काष्ठादिमयेन तत्परिमाणं प्रस्थादिक-मुच्यते ।
11. अष्टा. 5/2/37 ।

प्रमाणयोर्भेदादिति[1]परिमाणार्थलाभाय शब्दोऽयमत्र स्वांशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [2]प्रमाणोपाधिकेभ्यः शब्देभ्यो वतुप्प्रत्ययस्याभावः ।

## 'पी'तिशब्दः

'प्यायः[3] पी' - इति सूत्रे 'पी'तिशब्दः 'न सर्वस्य यणः संप्रसारणं भवती'ति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावे 'पीनं मुखम्'[5] 'आपीनोऽन्धुः'[6] 'आपीनमूधः'[7] इत्यादौ प्यायः[8] पीभावसम्पादनायात्र पीशब्द उपात्तः । स चास्य वचनस्याभावे व्यर्थः । इमानि हि रूपाणि द्वयोर्यकारयोः संप्रसारणे कृते[9] संप्रसारणपूर्वरूपत्वे[10] द्वयोरिकारयोर्दीर्घेकाऽऽदेशे[11] सति पीभावं विनापि सिद्ध्यन्ति । न चात्र संप्रसारणविधायकाभावः शङ्क्यः, सूत्रेऽत्र सम्प्रसारणमिति पदं 'ष्यङः

---

1. तथाहि – "उर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
   आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ।।"
   - इत्याह पत. व्या. म. भा. 5/1/1/19 ।
2. दारुवस्त्रादीनां विस्तारो येन मीयते तत्प्रमाणं हस्तादि ।
3. अष्टा. 6/1/28 ।
4. तथाहि –
   (क) "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'न सर्वस्य यणः संप्रसारणं भवती'ति यदयं प्यायः पीभावं शास्ति । कथं कृत्वा ज्ञापकम् ?। पीभाववचने एतत्प्रयोजनम्– आपीनोऽन्धुः, आपीनमूधः, – एतद्रूपं यथा स्यादिति । यदि चात्र सर्वस्य यणः सम्प्रसारणं स्यात् पीभाववचनमनर्थकं स्यात्, संप्रसारणे कृते सम्प्रसारणपूर्वरूपत्वे च द्वयोरिकारयोरेकादेशे सिद्धं रूपं स्यात्, आपीनोऽन्धुः, आपीनमूध इति । पश्यति त्वाचार्यो 'न सर्वस्य यणः संप्रसारणं भवती'ति, ततः प्यायः पीभावं शास्ति" - इत्याह पत. व्या. म. भा. 6/1/2/37 ।
   (ख) " ' प्यायः पीभावो (6/1/28) ज्ञापयति' न सर्वस्य यणः संप्रसारणं भवतीति । अन्यथा प्यायीधातोर्याशब्दस्य यशब्दस्य च संप्रसारणे पूर्वरूपत्वे च कृते द्वयोरिकारयोरकः सवर्णदीर्घत्वे च निष्ठायां पीन इति सिध्यत्येव । तेन व्यधेर्विद्धमित्यादौ ग्रहिज्यादिना (6/1/16) संप्रसारणं यकारस्यैव भवति, न वकारस्य इति - ज्ञापकमाश्रित्य भाष्ये 'न संप्रसारणे संप्रसारणमिति प्रत्याख्यायैवोक्तम्, .. "इत्याह पु. दे. ज्ञा. समु एकविंशे एकाचूपादे पृ. 81 ।
5. 'ओप्यायी वृद्धौ' - धा. पा. भ्वा. 488, इति प्यायधातोः क्तप्रत्यये 'प्यायः पी' - अष्टा. 6/1/28, इति पीभावेकृते ओदितश्च' - अष्टा. 8/2/45, इति निष्ठातकारस्य नत्वे रूपमिदम् ।
6. 'पीन'मितिवद्रूपमिदं सिद्धयति, आङ्पूर्वकात् प्यायूधातोः क्तप्रत्यये ।
7. 'पीन'मितिवद्रूपमिदं सिद्धयति, आङ्पूर्वकात् प्यायूधातोः क्तप्रत्यये ।
8. 'ओ प्यायी वृद्धौ' - धा. पा. भ्वा. 488 ।
9. 'प्याय' - अष्टा. 6/1/28 ।
10. 'संप्रसारणाच्च' - अष्टा. 6/1/108 ।
11. 'अकःसवर्णे दीर्घः' - अष्टा. 6/1/101 ।

संप्रसारणं[1] पुत्रपत्योस्तत्पुरुषे' - इति सूत्रादनुवर्त्त्य क्तप्रत्यये परेऽनेनैव सूत्रेण संप्रसारणमेषु प्रयोगेषु सुलभम् । ज्ञापिते चाऽस्मिनूवचने द्वयोर्यकारयोरत्र संप्रसारणं न स्यादिति प्यायः पीभावसम्पादनाय सूत्रेऽस्मिन् 'पी'तिशब्दः स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु व्यधे[2]र्विद्धमित्यादौ[3]–'ग्रहिज्ये'ति[4] सूत्रेण यकारस्य संप्रसारणे कृते वकारस्यापि संप्रसारणाभावः । अस्य वचनस्यासत्त्वे हि वकारस्याप्यत्र संप्रसारणाऽऽपत्ति दुर्वारा स्यात् । न चात्र 'न संप्रसारणे[5] संप्रसारण'मिति निषेधाद् वकारस्य संप्रसारणाभावोऽस्य वचनस्याप्यभावेऽपि सुलभ इति शङ्क्यम् । यतः सूत्रस्यास्य[6] प्रत्याख्यानायैव ज्ञापकमिदमुपन्यस्तं[7] भगवता । न चास्य वचनस्य स्वीकारेऽपि 'आप्यानश्चन्द्रमा' - इत्यत्र पीभावः शङ्क्यः । यतः आङ्पूर्वादेवान्धूधसोरेवाङ्पूर्वादित्युक्तम्[8] । वामन[9] –भट्टोजिदीक्षितौ[10] तु 'प्यायः पी'ति व्यवस्थितविभाषेति मन्वाते । भट्टनागेशस्तु 'प्यायः पी'त्यत्र 'विभाषाऽभ्यव-पूर्वस्ये' ति सूत्राद् विभाषेति पदस्यानुवृत्तिं स्वीकृत्य नाऽस्य सूत्रस्य व्यवस्थित-विभाषात्वं मनुते[11] ।

---

1. अष्टा. 6/1/13 ।
2. 'व्यध ताडने' धा. पा. दिवा. 1181 ।
3. 'व्यधताडने' - धा. पा. दिवा. 1181, इति व्यध् धातोः क्तप्रत्यये ग्रहिज्येति सम्प्रसारणे पूर्वरूपे च कृते रूपमिदम् ।
4. ग्रहि - ज्या - वयि - व्यधि - वष्टि - विचति - वृश्चति - पृच्छति - भृज्जतीनां ङ्किति' - अष्टा. 6/1/16 ।
5. अष्टा. 6/1/37 ।
6. 'न संप्रसारणे संप्रसारणम्, अष्टा. 1/3/37 ।
7. व्या. म. भा. 6/1/2/37 ।
8. व्या. म. भा. 6/1/2/28 ।
9. अनेन हि – " 'विभाषा' इत्येव । 'ओप्यायी वृद्धौ' - इत्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति । पीनं मुखम्, पीनौ बाहू । पीनमुरः । इयमपि व्यवस्थितविभाषैव, तेनानुपसर्गस्य नित्यं भवति । सोपसर्गस्य तु नैव भवति । आप्यानश्चन्द्रमाः । आङ्पूर्वस्यान्धूधसोर्भवत्येव - आपीनोऽन्धुः । आपीनमूधइति" - इत्युक्तम् का. 6/1/28 ।
10. अनेन हि – "प्यायः पी' (6/1/28) वा स्यान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम् । पीनं मुखम् । अन्यत्र प्यानः पीनःस्वेदः । सोपसर्गस्य न - प्रप्यानः । आङ्पूर्वकादन्धूधसोः स्यादेव । आपीनोऽन्धुः । आपीनमूधः " –इत्युक्तम् ।
11. तथाहि – "अत्र भाष्यम् - 'आङ्पूर्वादन्धूधसोरेव । नेह आप्यानश्चन्द्रमाः तथा आङ्-पूर्वादेवाऽन्धूधसोः । नेह प्रप्यानोऽन्धुः, प्रप्यानमूधः, इति । आङ्पूर्वादेवेतिनियमे-उपसर्गान्तरमेव निवर्त्यते, न केवलः प्यायतिः । आङाश्रयणेन नियमद्वयविधानात् केवलस्य सर्वत्र पीभावः पीनोऽन्धुः, पीनमूधः, पीनं पुष्पं, पीनमुखी कन्येति । तेन विभाषाग्रहणा-ननुवृत्तिरेवात्र लभ्यते । व्यवस्थितविभाषेति मूलं तु वृत्त्यनुरोधेन बोध्यम्" - ल. श. शे. पूर्वकृदन्त प्र. पृ. 439 ।

## 'पुयण्जी'तिशब्दः

'ओः पुयण्[1] ज्यपर' इतिसूत्रे 'पुयण्जी'तिशब्दः 'णिच्यच आदेशो न स्याद्-द्वित्वे[2] कर्तव्ये' इति वचनस्य, 'णौ कृतं द्वित्वे न स्थानिव'दिति[3] परिभाषाया वा ज्ञापकः[4] । यतोऽस्य वचनस्याऽभावेऽत्रायं शब्दो व्यर्थः । तथाहि – 'ओः[5] पुयण् ज्यपरे' इतिसूत्रस्य 'सनि परे यदङ्गं तदवयवाभ्यासोवर्णस्य इकारः स्यादवर्णपरकेषु पवर्गयण्जकारेषु परतः 'इत्यर्थः । [6]'पूङ्' - [7]'पिपावयिषति, 'भू'[8] – [9]विभावयिषति 'यु'[10] – यियावयिषति,[11] 'रु'[12] रिरावयिषति,[13] 'लूञ्'[14] लिलावयिषति,[15] 'जु'[16] - जिजावयिषतीति[17] चोदाहरणानि । अत्र सर्वत्र द्वित्वं प्रत्यनिमित्ते णिचि [18]'द्विर्वचनेऽचीति निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्

---

1. अष्टा. 7/4/80 ।
2. वै. सि. कौ. चुरादि. प्र. पृ. 234-235 ।
3. नी. दी. प. वृ. प. 127, पृ. 315 ।
4. तथाहि –
   (क) " 'ओ पुयण्जी' तिसूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारज-ग्रहो लिङ्गं'णिच्यच आदेशो न स्थानिवद् द्वित्वे कर्तव्ये' इतीत्याह-भ.दी. वै. सि. कौ. चुरादि प्र. पृ. 234-235 ।
   (ख) "इदं च 'द्विवर्वचनेऽचि' (1/1/59) इति सूत्रे भाष्ये वार्तिकत्वेन पठितम् । 'ओः पुयण्जि.' (7/4/80) इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहोऽस्या लिङ्गम्' इति, 'ऊन परिहाणे' इति धातौ सिद्धान्तकौमुदीमनोरमयीः 'द्विर्वचनेऽचि' (1/1/59) इति सूत्रे कौस्तुभें च विस्तरेण प्रपञ्चितमित्याह नी. दी. प. वृ. प. 127, पृ. 315 ।
5. अष्टा. 7/4/80 ।
6. 'पूङ्पवन' धा. पा. भ्वा. 1035 ।
7. 'पूङ्पवने धा. पा. भ्वा. 1035, इति पूधातोर्णिचि तदन्तात्सनि लटि तिपिरूपमिदम् ।
8. 'भूसत्तायाम्' – धा. पा. भ्वा. ।
9. 'भूसत्तायाम् धा. पा. भ्वा. 1, इति भूधातो र्णिचितदन्तात् सनि तदन्ताल्लटि तिपिरूप-मिदम् ।
10. यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1107 ।
11. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1107, इति युधातोर्णिचि तदन्तात्सनि तदन्ताल्लटि तिपि रूपमिदम् ।
12. 'रुशब्दे' धा. पा. 1108 ।
13. 'रुशब्दे' धा. पा. 1108, इति रुधातोर्णिचि तदन्तात् सनि तदन्ताल्लुटि तिपि रूपमिदम् ।
14. 'लूञ्छेदने' धा. पा. क्र्या. 1580 ।
15. लूञ्छेदने' धा. पा. क्र्या 1580, इति लूधातोर्णिचि तदन्तात् सनि तदन्ताल्लटि तिपि रूपमिदम् ।
16. 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' - अष्टा. 3/2/150 इति सौत्रो जु धातुर्गतौ वेगे च वर्तते ।
17. गतौ चार्थे विद्यामानाद् 'जुचङ्क्रम्य.' - 3/2/150, इतिसौत्र– जुधातोर्णिचि तदन्तात्सनि तदन्ताल्लटि तिपि रूपमिदम् ।
18. अष्टा. 1/1/59 ।

[1]वृद्ध्यावादेशयोः[2] कृतयोः अभ्यासाऽऽकाराणां– ह्रस्वत्वे सति 'सन्यतः'[3] इत्यनेनैव इत्वसिद्धिः सुलभेति 'पुयण्जीति शब्दोऽत्र सूत्रेऽस्य वचनस्याऽभावे व्यर्थः । पकार – यकारशब्दौ तु नात्र व्यर्थौ । यत इमौ [4]पिपावयिषति, विभावयिषती[5]त्यत्र द्वित्वं[6] प्रत्यनिमित्ते णिचि 'द्विर्वचनेऽची'[7]ति निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद् [8]वृद्ध्यावोदशयोः[9] कृतयोरभ्यासेषु आकारस्य ह्रस्वत्वे[10] सति 'सन्यतः[11]' इति इत्वसिद्धावपि 'पिपविषते'[12] 'यियविषती-[13]'त्यत्र अण्यन्तात्पूङ्धातोर्युधातोश्च सनि इत्वार्थमावश्यकौ । यतोऽत्र 'इकोझ'लिति[14] सनः कित्त्वात् – 'श्र्युकः[15] किति' इति प्राप्तमिण्निषेधं बाधित्वा 'स्मिपूङ्रञ्ज्वशां सनी'ति[16] – [17]'सनीवन्त र्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसना'मिति सूत्राभ्याम् इटि कृते इडादेः सनो द्वित्वनिमित्तत्वेन[18] इटोऽपि द्वित्व-निमित्ततायां'द्विर्वचनेऽची'ति[19] गुणाऽऽवादेशयोः निषेधे सति 'पू' 'यु' - इत्यनयोर्द्वित्वे अभ्यासे अकाराऽभावेन 'सन्यतः[20] 'इत्यस्याऽप्रवृत्त्या इत्वार्थं पययोरित्यावश्यकमेतद्वचनाभावेऽपि । ज्ञापिते चास्मिन्

1. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
2. 'एचोऽयवायावः' - अष्टा. 6/1/78 ।
3. अष्टा. 7/4/79 ।
4. 'पूङ् पवने' धा. पा. भ्वा. 1035, इति पूधातोर्णिचि तदन्तात् सनि तदन्ताल्लटि तिपि रूप-मिदम् ।
5. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1107 इति युधातोर्णिचि तदन्तात्सनि तदन्ताल्लटि तिपि रूपमिदम् ।
6. 'सन्यङोः' - अष्टा. 6/1/9 ।
7. अष्टा. 1/1/59 ।
8. 'अचोञ्णिति' - अष्टा. 7/2/115 ।
9. 'एचोऽयवायावः' अष्टा. 6/1/78 ।
10. ह्रस्वः - अष्टा. 7/4/59 ।
11. अष्टा. 7/4/79 ।
12. पूङ्पवने'धा. पा. भ्वा. 1035, इति पूधातोः सनिलटि ते रूपमिदम् ।
13. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1107, इतियुधातोः सनि तदन्ताल्लटितिपि रूप-मिदम् ।
14. अष्टा. 1/2/9 ।
15. अष्टा. 1/2/9 ।
16. अष्टा. 7/2/74 ।
17. अष्टा. 7/2/49 ।
18. अष्टा. 7/2/49 ।
19. 'सन्यङोः' - अष्टा. 6/1/9 ।
20. अष्टा. 1//59 ।

वचने' [1]विभावयिषती'त्यादिषु णिचि लुप्ते सति 'चङी[2]तिद्वित्वे कार्ये [3]प्रत्ययलक्षण-माश्रित्य णिचि गुणाऽऽवादेशयोः प्रतिषेधे सति उवर्णान्तानां भूप्रभृतीनां द्वित्वे अभ्यासे अकाराऽभावेन 'सन्यतः'[4] इत्यस्याऽप्रवृत्त्या[5] इत्वार्थं 'पुयण्जी'ति शब्दः स्वांऽशे चरिताऽर्थो भवति ।

अथ 'कृत[6]संशब्दने' इति कृत धातोर्णौ[7] 'उपधायाश्चे'[8]ति ॠत इत्त्वे रपरत्वे किर्त्[9] इत्यस्माल्लुङि[10] चङि[11]च्लौ[12] णिलोपे[13] द्वित्वे[14] हलादिशेषे कस्य[15] चुत्वे[16] उत्तरखण्डे इकारस्य - 'उपधायांचे'[17]ति दीर्घे 'अचिकीर्त'दिति रूपमिष्यते, तन्न सिद्ध्येदस्य वचनस्यास्वीकारे, यतः द्वित्त्वे कर्तव्ये णावच आदेशस्य निषिद्धतया इत्वात् प्रागेव कृदित्यस्यद्वित्वे, उरदत्वे, रपरत्वे, हलादिशेषे, कस्य चुत्वे, उत्तर खण्डे, रपरत्वे, उपधादीर्घे, 'अचकीर्त्तदित्यापद्येते''ति शङ्क्यम् । यतोऽस्य ज्ञापकस्य सजातीयाऽपेक्षत्वेन'यत्र धातौ चङि द्विर्वचने कृते अभ्यासोत्तर-खण्डस्यआद्योऽच् प्रक्रियादशायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये वचनमिदं प्रवर्तते । 'अचिकीर्त्त'दित्यत्र हि प्रक्रियादशायां परिनिष्ठिते रूपे वा उत्तरखण्डे नास्त्यवर्ण इति नेदं वचनं प्रवर्तत इतीष्टस्य रूपस्य सिद्धिः सुलभा । ज्ञापितस्याऽस्य वचनस्य फलं तु '[18]औननत्' इत्यत्र नशब्दस्य द्वित्व-सिद्धिः ।

---

1. अष्टा. 7/4/79 ।
2. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोर्णिचि तदन्तात् सनि तदन्ताल्लटि तिपि रूप-मिदम् ।
3. अष्टा. 6/1/11 ।
4. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
5. अष्टा. 7/4/79 ।
6. धा. पा. चुरा. 1779 ।
7. 'सत्याप पाश रूपवीणा तूलश्लोक सेना लोमत्वचवर्म वर्ण चूर्ण चुरादिभ्यो- णिच्' - अष्टा. 3/1/25 ।
8. अष्टा. 7/1/101 ।
9. 'उरण् रपरः' - अष्टा. 1/1/51 ।
10. 'लुङ्' - अष्टा. 3/2/110 ।
11. 'च्लिलुङि' - अष्टा. 3/1/43 ।
12. 'णि श्रि द्रु स्रुभ्यः कर्त्तरि चङ्' - अष्टा. 3/1/48 ।
13. 'णेरनिटि' - अष्टा. 6/4/51 ।
14. 'चङि' - अष्टा. 6/1/11 ।
15. 'हलादिः शेषः' - अष्टा. 7/4/60 ।
16. 'कुहोश्चुः' - अष्टा. 7/4/62 ।
17. अष्टा. 8/2/78 ।
18. 'ऊन परिहाणे' धा. पा. चुरा. 1889, इति ऊन धातोः 'सत्याप.' - अष्टा. 3/1/25, इति णिचि 'अतोलोपः' - अष्टा. 6/4/48, इत्यकारलोपे लुङि च्लौ च्लेश्चङि तिपि शब्दस्य द्वित्वादिषु कृतेषु रूपमिदं सिद्ध्यति ।

यतोऽस्य वचनस्याऽभावेऽत्र द्वित्वत्वात् प्रागेव अल्लोपे कृते निशब्दस्य द्वित्वं स्यान्न तु नशब्दस्य । तथा सति 'औनन'दितीष्ट'रूपं न सिद्ध्येत् किन्तु 'औनिन-'दित्यनिष्टरूपमापद्येत । सति चास्मिन्वचनेऽत्र अल्लोपात् प्रागेव नशब्दस्य द्वित्वाऽऽश्रयणे प्रक्रियादशायामुत्तरखण्डेऽवर्णलाभावादल्लोपस्य निषेधे सति 'न'-शब्दस्यैव द्वित्वं भवति नतु 'नि'शब्दस्येति रूपमिष्टं सिद्ध्यति । इत्थमस्याः परिभाषाया[1] अभावेऽपि ज्ञापकत्वमस्योह्यम् ।

यद्यपि भाष्ये [2]भगवता, काशिकायां वामनेन,[3] बृहत्परिभाषावृत्तौ सीरदेवेन,[4] परिभाषाभास्करे [5]हरिभास्करेण, शब्दकौस्तुभे भट्टोजिदीक्षितेन[6] लघुशब्देन्दुशेखरे–

---

1. 'णौ कृतं द्वित्वं न स्थानिवत्' - नी. दी. प. वृ. प. 127, पृ. 315 ।
2. अनेन हि – "ओ पुयण्जिषु वचनं ज्ञापकं – णौ- स्थानिवद्भावस्य । यद्येतज्ज्ञाप्यते 'अचिकीर्त्तदित्यत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? यथाजातीयकाः पुयण्जयः । कथंजातीयकाश्चैते ?। अवर्णपराः "इत्युक्तम् व्या. म. भा. 1/1/8/58 ।
3. अनेन हि – "एतदेव 'पुयण्ज्यपरे' इति वचनं ज्ञापकम् 'अद्विर्वचननिमित्तेऽपि णौ स्थानिवद् भवतीती"त्युक्तम् का. 7/4/80 ।
4. अनेन हि – "ज्ञापकं चात्र 'ओः पुयण्ज्यपरे' (7/4/80) इत्यभ्यासविशेषणमोरिति पदम् । तेन हि पवर्गे यणि जकारे चाच् परेऽभ्यासस्येत्वं विधीयते विभावयिषतीत्यादिषु । यदि च णौ कृतं यद्वृद्ध्यावादेशादिकार्यं स्थानिवन्न स्यात् कथमभ्यासोकारस्येत्त्वं विधीयते । तुल्यजातीयकत्वाज्ज्ञापकस्य । पराणां पुयण्जां सदृशा अन्येऽवर्णपरा एव स्थानिवत्त्वं भजन्ते । तेनाचिकीर्त्तदित्यत्र न स्थानिवदिति 'उर्ऋत्' - (7/4/7) इत्यत्र रक्षितः । एतत्तु न सम्यक् 'स्तौतिण्योरेव षण्यभ्यासात्' (8/3/61) इत्यत्र सिषेधयिषतीत्युदाहरणे एकारपरेऽनया स्थानिवत्त्वं कृत्वा द्विर्वचनस्य प्रतिपादितत्वात् । तथौजढदित्यत्रानया स्थानिवत्त्वेन द्विर्वचनमुक्तमयुक्तं स्यात् । तथा 'लोपः पिबतेरीच्चाभ्यासस्य' (7/4/4) इत्यत्रापीप्यदित्यत्र णौ कृतं स्थानिवद्भवतीति वृत्तिकृद्वचनं व्याहतं स्यात् । तस्मात् सामान्येन परिभाषा ज्ञापक-सिद्धं न सर्वत्रेत्यचिकीर्त्तदित्यत्र व्यवस्थे"त्युक्तम् बृ. प. वृ, प. 95, पृ. 252 ।
5. अनेन हि – "परिभाषाया ज्ञापकं' 'ओः पुयण्ज्यपरे' (7/4/80) इत्यत्र 'ओः पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहः । स हि मिमावयिषति, अमीमवत् इत्यादावित्वार्थः । इत्वं तु णिचि वृद्धौ कृतायां द्विर्वचने ह्रस्वे सन्यत इति इत्वे च सिद्ध्यति इति वर्गप्रत्याहारजग्रहो - व्यर्थः सन् णौ स्थानिवत्त्वं ज्ञापयती"त्युक्तम् प. भास्क. प. 97, पृ. 363 ।
6. अनेन हि – "अत्राहुः – ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति । अस्यार्थः – यौतेः पूङ्श्च सनीवन्तेतिस्मिपूङ्रञ्ज्वशामितिसूत्राभ्यामिविकृते यियविषति पिपविषते इत्यत्र द्विर्वचनेऽचीति स्थानिवद्भावाद्यकारपकारयोरवर्णपरयोः परतो यद्यप्यभ्यास उकारो लभ्यते, तस्य चेकारादेशविधानेन ओः पुयण्सूत्रे पकारयकारग्रहणं चरितार्थम्, तथापि वर्गग्रहणं प्रत्याहारजग्रहणं च ज्ञापकं 'द्वित्वनिमित्तस्याचो णिचा व्यवधानेऽपि थानिवद्भावः प्रवर्त्तते' इति । तं विना अवर्णपरेषु पुयण्जिषु परेषु उवर्णान्तस्याभ्यासस्य दुर्लभत्वात् । येन नाव्यवधानाच्च णिचैवैकेन द्वित्वनिमित्तस्याचो व्यवधानमाश्रीयते । तेन निनवनीयिषतीत्यादौ न स्थानिवत् । ल्युट्क्यज्भ्यां व्यवधानात् । एवं णिजन्तात्ल्युट्क्यच्सन्स्वपि न स्थानिवत् । निनावयिषतीत्यादि । नहि णौ कृतं स्थानिवदिति वचनमस्ति, किन्तु ज्ञाप्यमानः स्थानिवद् भावो लाघवादेकेनैव व्यवधान इत्युक्तम् । इह त्वेकेनैव व्यवधानं स्पष्टमेवे"त्युक्तम् । श. कौ. 7/4/80 ।

भट्टनागेशेन[1] ज्ञापकसंग्रहे श्री नागेशेन[2] च 'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्ये'त्युक्तं[3] तथापि सर्वेषाममीषां सिद्धान्तेषु फलभेदाभावात् न कश्चन मिथो विरोध इति मन्ये । यद्यपि भाष्यवार्तिकयोः ओः [4]पुयण् ज्यपरे' इति सर्वं सूत्रं ज्ञापकमत्रोक्तं तथापि तस्योक्तविषय एव तात्पर्यम् । यतः 'पिपविषते यियविषति' इत्यत्र 'द्विर्वचनेऽचि'[5] इति स्थानिवत्त्वोद्भूतोकारस्य इत्त्वार्थं पययोरित्त्वमावश्यकम् । ज्ञापितस्य वचनस्य फलन्तु यत्र 'ओः पुयण्' इत्यस्याऽप्राप्तिस्तत्र बोध्यम् । तद्यथा चुक्षावयिषति[6] । अन्यथाऽत्र [7]वृद्ध्यावादेशयोः[8] कृतयोः क्षुशब्दस्य द्वित्वं[9] न सिद्ध्येत् ।

## 'पूग-सङ्घे'तिशब्दौ

[10]'बहुपूगगणसङ्घस्य तिथु'गितिसूत्रे 'पूग-सङ्घे'तिशब्दौ 'पूगसङ्घशब्दाभ्यां डड् भवती'तिवचनस्य ज्ञापकौ[11] । यतोऽस्य वचनस्याऽभावे संख्यात्वाभावादाभ्यां

---

1. अनेन हि – "परे तु भाष्ये' 'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य – – – अवर्णपराः' इत्युक्तम् । तत्र 'णा'वित्यस्य णिनिमित्तकोऽच आदेश इत्यर्थः । णौ परे इत्यर्थे रेफेण व्यवधानात् 'पुस्फारयिषती'त्याद्यसिद्धिः । ज्ञापनफलं तु 'तुतावयिषतीत्यादी''त्युक्तम् ल. श. तिङन्ते चुरादि प्र. पृ. 2361
2. "ओः पुयण् जि' वचनं ज्ञापकं णौ स्थानिवद्भावस्ये"त्याह श्रीनागेशः ज्ञा. सं. । पृ. 32 ।
3. 'णौ कृतं स्थानिवत्' इत्यस्येत्यर्थः इदञ्च परिभाषेति सीरदेव-हरिभास्कारौ मन्वाते । द्र. बृ. प. वृ. प. 95, पृ. 252 प. भास्क. प्र. 97, 363.,
4. अष्टा. 7/4/80 ।
5. अष्टा. 1/1/59 ।
6. 'टुक्षु' शब्दे' - धा. पा. अदा. 1111, इति क्षुधातो र्णिचि तदन्तात् सनि तदन्ताल्लटि तिपि रूपमिदम् ।
7. 'अचोञ्णिति' - अष्टा. 7/2/115, ।
8. 'एचोऽयवायावः' - 6/1/78 ।
9. 'सन्यङोः' - अष्टा. 6/1/9 ।
10. अष्टा. 5/2/52 ।
11. तथाहि –
    (क) "पूगसंख्ययोरसंख्यात्वादिदमेव ज्ञापकं डटोभावस्ये"त्याह जया. का. 5/2/52 ।
    (ख) "यदेतड्डतिपरतस्तयोस्तिथुको विधानमेतदेव ज्ञापयति – भवति ताभ्यां डट्प्रत्यय इति । नह्यसतस्तिथुगागमं प्रति निमित्तभाव उपपद्यते" - इत्याह जि. बु. न्या. 5/2/52 ।
    (ग) "पूगसङ्घयोरसंख्यात्वेप्यत एव डट्" - इत्याह भ. दी. वै. सि. कौ. मत्वर्थीय प्र. पृ. 736 ।

डटोऽप्राप्त्या[1] डटि परतः 'पूगतिथः'[2] 'सङ्घतिथः'[3] इत्यत्र तिथुगागमं विधातुमत्रोपात्ताविमावनुपपन्नौ । ज्ञापिते चाऽस्मिन्वचने पूग - सङ्घ - शब्दाभ्यां डटः[4] सुलभतयाऽनयोर्डटि परतस्तिथुगागमं विधातुमिमावुपपन्नौ भवतः । ज्ञापितस्याऽस्य वचनस्य फलं तु 'पूगतिथः' सङ्घतिथः' इत्यनयोः साधुत्वमेव ।

## 'पूर्व'मितिशब्दः

[5]'भीह्रीभृहुमद - जनधनदरिद्रा जागरां प्रत्ययात् पूर्वं पिती'त्यत्र 'पूर्व'-मितिशब्दः 'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यः' – इतिवचनस्य ज्ञापकः[6] ।

---

1. 'तस्य पूरणे डट्' - अष्टा. 5/2/48 ।
2. पूगस्य पूरण इत्यर्थे ज्ञापकाड् ्डटि 'बपूपुग.' - अष्टा. 5/2/52, इति तिथुगागमेऽनुबन्धलोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषुपू रूपमिदम् ।
3. सङ्घस्य पूरण इत्यर्थे ज्ञापकाड् डटि 'बहुपूपूग. अष्टा. 5/2/52, इतितिथुगागमेऽनुबन्धलोपे तद्धितान्तप्रातिपदिकत्वेन स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. 'तस्य पूरणे डट्' - अष्टा. 5/2/48 ।
5. अष्टा. 6/1/192 ।
6. तथाहि –
   (क) "अथ पूर्वग्रहणं किमर्थं, न, 'तस्मिन्निति निर्दिष्टेपूर्वस्ये'ति पूर्वस्यैव भविष्यति । एवं तर्हि सिद्धे सति यत् पूर्वग्रहणं करोति - तज्ज्ञापयत्याचार्यः 'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ती'ति । किमेतस्य ज्ञापने प्रयोजनम् ?। 'उपोत्तमं रिति' । रिदन्तस्य । 'चङ्यन्यतरस्याम्, चङन्तस्ये"त्याह प. व्या. म. भा. 6/1/6/162 ।
   (ख) "अथ पूर्वग्रहणं किमर्थम्, प्रत्यये पितीति वक्तव्यम् । तत्र 'तस्मिन्नितिनिर्दिष्टे पूर्वस्य' इति पूर्वस्यैव भविष्यति ? इदं तर्हि प्रयोजनम्, पिति पूर्वं कार्यभाग् यथा स्यात्, पिदन्तं माभूदिति । कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः ? एतदेव ज्ञापयति - स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इति । किं सिद्धं भवति? उपोत्तमं रिति', रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति, नतु रिति परतः पूर्वस्य, 'चङ्यन्यतरस्याम्' चङन्तस्ये" त्याह ह. मि. पदम. 6/1/192 ।
   (ग) "नन्वेवमपि 'प्रत्यये पिती'त्येवोच्यतां, किं पूर्वग्रहणेन ? । न चाऽभ्यस्तानां लसार्वधातुके इत्यनुवृत्त्या पितोऽप्रत्ययस्याऽसम्भवेन प्रत्यय इति व्यर्थमिति वाच्यम्, पूर्वोक्तार्थ- (स्वरविधौ सङ्घातः कार्यीति) ज्ञापनार्थमावश्यकत्वात् । 'प्रत्यय' इत्युक्तौ तु सामर्थ्यान्निर्दिष्टपरिभाषायाः पुनः प्रवृत्त्याऽव्यवहितस्यैव ग्रहणमिति न दोष इतिचेन्न, 'सौवर्यः सप्तम्यस्तदत्तन्तसप्तम्यः 'इति ज्ञापनार्थत्वा"दित्याह भ. ना. ल. श. शे. धातुस्वर प्र. पृ. 634 ।
   (घ) "ननु पूर्वग्रहणं व्यर्थं 'प्रत्यये पितीत्येवोक्ते' तस्मिन्नितिनिर्दिष्टे' इति पूर्वस्यैव भविष्यति । नच पितः पूर्वमेव कार्यभाग् यथा स्यात्, पिदन्तं माभूदित्येवमर्थं तदिति वाच्यम्, कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः ? । एतदेव ज्ञापयति – 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य'- इति । तेन 'उपोत्तमं रिति' रित् प्रत्यायान्ते उपोत्तममुदात्तं भवति । 'चङ्यन्यतरस्यां' - चङन्तस्येत्यर्थो, नतु रिति परतश्चङि पर इती"त्याह जयकृ. सुबो. धातुस्वर प्र. पृ. 634-635 ।
   (ङ) "पूर्वग्रहणं ज्ञापकं स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इतीत्याह श्रीना. ज्ञा. सं. 6. पृ. 104 ।

यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः। तथाहि – 'बिभेति'[1] 'जिह्रेति'[2] – 'बिभर्ति'[3] 'जुहोति'[4] 'ममत्तुन:[5] परिज्मा' – 'जनमिन्द्रम्'[6] 'दधनत्'[7] 'दरिदरति'[8] 'जागर्ति'[9] - इत्यादौ [10]'अनुदात्ते चे'त्याद्युदात्तस्वरे प्राप्ते प्रत्ययात् पूर्वस्य भीह्री-प्रभृतीनामुदात्तत्वाऽर्थमारब्धे 'भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, जागृ'-इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वमुदात्तं भवती'त्यर्थकेऽस्मिन्सूत्रे

---

1. 'ञिभी भये' धा. पा. जुहो. 1084, इति भीधातोर्लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इति शपः श्लौ 'श्लौ'- अष्टा. 6/1/10, इतिद्वित्वेऽभ्यासत्वे हलादिशेषेऽभ्यासस्य ह्रस्वत्वे भकारस्य 'अभ्यासे चर्च' - अष्टा. 8/4/54, जश्त्वेन बकारे सार्वधातुकलक्षणे गुणे च कृते रूपमिदम्।
2. 'ह्री लज्जायाम्' धा. पा. जुहो. 1085, इति ह्रीधातोर्लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इति शपः श्लौ 'श्लौ' - अष्टा. 6/1/10, इति द्वित्वेऽभ्यासत्वे हलादिशेषेऽभ्यासस्य ह्रस्वत्वे 'कुहोश्चुः' - अष्टा. /4/62, इत्यभ्यासहकारस्य चुत्वेन जकारे सार्वधातुकलक्षणे गुणे च कृते रूपमिदम्।
3. 'डुभृञ् धारण- पोषणयोः' - धा. पा. जुहो. 1087, इति भृधातोर्लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इति शपः श्लौ 'श्लौ' - अष्टा. 6/1/10, इति द्वित्वेऽभ्यासत्वे 'भृञामित्' -अष्टा. 7/4/76, इत्यभ्यासस्य ऋकारस्य इत्त्वे रपरत्वे हलादिशेषेऽभ्यासभकारस्य 'अभ्यासे चर्च' - अष्टा. 8/4/54, इति जश्त्वेन बकारे सार्वधातुकलक्षणे गुणे रपरत्वे च कृते रूपमिदम्।.
4. 'हु दानाऽदनयोः' - धा. पा. जुहो. 1083, इति हुधातोर्लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इतिशपः श्लौ 'श्लौ'- अष्टा. 6/1/10, इति द्वित्वेऽभ्यासत्वे-हलादिशेषेऽभ्यासहकारस्य 'कुहोश्चुः' -अष्टा. 7/4/62, इत्यभ्यासहकारस्य चुत्वेन जकारे सार्वधातुकलक्षणे गुणे च कृते रूपमिदम्।
5. 'मदी हर्षे' धा. पा. दिवा. 1208, इति मद्धातोर्लोटि तिपि 'दिवादिभ्यः श्यन्' - अष्टा. 3/1/69, इति श्यनि, तस्य छन्दसि श्लौ द्वित्वे भ्यासत्वे हलादिशेषे तिप इकारस्य 'एरुः' -अष्टा. 3/4/86, इति उत्वे दकारस्य 'खरि च' - अष्टा. 8/4/55, इति चर्त्वेन तकारे च कृते रूपमिदम्।
6. 'जन जनने' धा. पा. जुहो. 1105, इति जन्धातोश्छन्दसि लेटिमिपि शपि 'इतश्च लोपः परस्मैपदेषु' - अष्टा. 3/4/97, इतिमिप इकारलोपे 'लेटोऽडाटौ' - अष्टा. 3/4/94, इत्यडागमे जुहोत्यादित्वाच्छपः श्लौ द्वित्वेऽभ्यासत्वे हलादिशेषे च कृते रूपमिदम्।
7. 'धन धान्ये' धा. पा. जुहो. 1104, इतिधन् धातोश्छन्दसि लटि तिपि शपि 'इतश्च लोपः परस्मैपद्रेषु' - अष्टा 3/4/97, इति तिप इकिारलोपे-'लेटोऽडाटौ' - अष्टा. 3//94, इत्यडागमे 'जुहोत्यादित्वाच्छपः श्लौ द्वित्वत्वेऽभ्यासत्वे हलादिशेषेऽभ्यासधकारस्य - अभ्यासे चर्च - अष्टा. 8/4/54, इति जश्त्वेन दकारे च कृते रूपमिदम्।
8. 'दरिद्रा दुर्गतौ' धा. पा. अदा 1073, इति दरिद्राधातोर्लटि झौ शपि 'अदिप्रभृतिभ्यः शपः' अष्टा. 2/4/72, इति शपो लुकि दरिद्रातेः 'जक्षित्यादयः षट्' - अष्टा. 6/1/6, इति अभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' - अष्टा. 7/1/4, इति झस्याऽदादेशे 'श्नाभ्यस्तयोरातः' - अष्टा. 6/4/112, इत्याकारलोपे च कृते रूपमिदम्।
9. 'जागृ निद्राक्षये' धा. पा. अदा. 1072, इति जागृधातोर्लटि तिपि शपि - 'अदि प्रभृतिभ्यः शपः' - अष्टा. 2/4/72, इति शपो लुकि सार्वधातुकलक्षणे गुणे रपरत्वे च कृते रूपमिदम्।
10. अष्टा. 6/1/190।

'बिभेती'त्यादौ प्रत्ययात् पूर्वस्योदात्तत्वाऽर्थमुपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । एतच्छब्दाऽभावेऽप्यत्र सूत्रे 'पिती'ति सप्तमीश्रवणादेव हि 'तस्मिन्निति[1] निर्दिष्टे पूर्वस्ये'ति परिभाषया पिति पूर्वस्योदात्तत्वं 'बिभेती'त्यादौ सुलभम् । । ज्ञापिते चाऽस्मिन्वचने 'भीप्रभृतिभ्यो विहितो यः पित् तदन्तमुदात्तं भवती'-तिसूत्रस्याऽर्थो लभ्यते, तथा सति 'बिभेती'त्यादौ सर्वेषामचां पर्यायेणोदात्तत्वं स्यात्, एकस्य प्रत्ययात्पूर्वस्यैवोदात्तत्वमिष्यत इति, तदर्थमयं शब्दः स्वांशे चरिताऽर्थो भवति । ज्ञपितस्याऽस्य वचनस्य फलं तु [2]करणीय'मित्यादौ 'उपोत्तमं[3] रिती'त्यनेन रित्प्रत्ययान्तस्य[4]यदुपोत्तमं तस्योदात्तत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि 'करणीय'-मित्यादौ रितिप्रत्यये परतः उपोत्तमस्योदात्तत्वाऽऽपत्तिः स्यात् । तथा 'मा हि चीकरता'[5]मित्यत्र 'चङन्तेऽन्तरस्यामुपोत्तममुदात्तं भवती'त्यर्थकेन 'चङ्यन्य-तरस्या'[6]मित्यनेन धात्वकारस्योदात्तत्वसिद्धिरस्य वचनस्य फलम् । अस्य वचनस्याऽ-भावे हि 'चङ्यन्तस्ये'त्यर्थाऽलाभाद् धात्वकारस्योदात्तत्वं न सिद्ध्येत् ।

न चाऽस्य वचनस्य स्वीकारे 'चतुरः[7] कल्पयन्तः' इत्यादौ 'चतुरः शसी'-त्यनेन[8] शसन्तस्योदात्तत्वमापद्येत शसि परे चतुरोऽन्तस्य चोदात्तत्वमिष्यत इति-शङ्क्यम् । यतोऽत्र सूत्रे शस्ग्रहणसामर्थ्यात् शसन्तस्योदात्तत्वाऽऽपत्तिर्नभविष्यति । यदि हि [9]'चतुरः शसी'त्यनेन शास उदात्तत्वमिष्टं स्यात्तत 'उडिदं[10] पदा'-दित्यस्याऽनन्तरं 'चतुरश्चे'त्येव ब्रूयात् । तत्राऽसर्वनामस्थानग्रहणाऽनुवृत्त्या

---

1. अष्टा. 1/1/66 ।
2. 'डु कृञ् करणे' धा. पा. तना. 1473, इति कृधातोः 'तव्यत्तव्यानीयरः' - अष्टा. 3/2/96, इति अनीयरि प्रत्यये कृते आर्धधातुकलक्षणे ऋकारस्य गुणेऽकारे रपरत्वे विभक्तिकार्येषु च कृतेषु रूपमिदम् ।
3. अष्टा. 6/1/217 ।
4. 'त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपे यत्तदुपोत्तम'मिति का. 6/1/217 ।
5. माङ्पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोर्ण्यन्ताल्लुङि तसि तामादेशे च्लौ चङि द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे - 'सन्वल्लघुनि चङ्परेऽनग्लोपे' - अष्टा. 7/4/93, इतिसन्वद्भावात् अभ्यासाऽकारस्य 'सन्यतः' - अष्टा. 7/4/79, इतिइत्वे 'दीर्घो लघोः' - अष्टा. 7/4/94, इति दीर्घे 'कुहोश्चुः' - अष्टा. 7/4/62, इतिचुत्वेन अभ्यासककारस्य चकारे 'णेरनिटि' - **अष्टा. 6/4/51**, इति णिलोपे द्वितीयखण्डस्य ऋकारस्य आर्धधातुकलक्षणेन गुणेनाऽकारे रपरत्वे च कृते 'न माङ्योगे' - अष्टा. 6/4/74, इत्यटि प्रतिषिद्धे च रूपमिदम् ।
6. अष्टा. 6/1/217 ।
7. चतुर्शब्दात् शसि विभक्तौ रूपमिदम् ।
8. अष्टा. 6/1/167 ।
9. अष्टा. 6/1/167 ।
10. 'उडिदम्पदाद्यप् पुम्रैद्युभ्यः' - अष्टा. 6/1/176 इत्यस्येर्थः ।

'षट्त्रिचतुर्भ्योहलादि'[1]रिति हलादे-रुदात्तविधानाच्च शस एव भविष्यतीति शस्ग्रहणमत्र व्यर्थम् । भट्टनागेशस्तु सूत्रेऽस्मिन् शब्दोऽयं 'षष्ठ्यर्थे सप्तमी'त्येव वचनस्य ज्ञापकः, तदन्तविधिश्च न्यायसिद्धो 'येनविधिस्तदन्तस्ये'ति परिभाषयेति मनुते[2] । भट्टनागेशसिद्धान्तोऽत्र [3]भाष्यविरोधादुपेक्ष्यः । बहूनां मते ज्ञापकोऽयं सामान्यापेक्षः[4] । अन्यथा'ञ्नित्यादिर्नित्य'[5]मित्यादौ नाऽस्य प्रवृत्तिः स्यात् । केषाञ्चन मते ज्ञापकोऽयं विशेषाऽपेक्षः[6] । विशेषाऽपेक्षत्वमस्य ज्ञापकस्य चिन्त्यमिति चाऽऽह[7] भट्टनागेशः ।

---

1. अष्टा. 6/1/179 ।
2. तथाहि – "वस्तुतः 'षष्ठ्यर्थे सप्तमी'त्येव ज्ञाप्तते । तदन्तविधिस्तु 'येन विधि'– रितिपरिभाषया न्यायसिद्धः" - इत्याह भ. ना. ल. श. शे. धातुस्वर प्र. पृ. 634 ।
3. व्या. म. भा. 6/1/6/192 ।
4. तथाहि – "अत्र बहवः - इदं सामान्यापेक्षं, तेन ञ्नित्यादि'रित्यादावपि प्रवृत्तिः । नचैवं 'गर्गाः' इत्यादौ 'यञञोश्चे'तिलुकि आद्युदात्तत्वप्रसङ्गः, इत्पदघटितेऽनुबन्धनिमित्तस्वरे कर्तव्ये आङ्गत्वाऽभावेऽपि (प्रत्यये परतः पूर्वकार्यत्वाऽभावेऽपि) 'लुमता लुप्ते प्रत्ययलक्षणं नास्तीत्यर्थस्य 'संज्ञायामुपमान'मित्यानेन ज्ञापनान्न दोषः । तद्धि चञ्चेत्यादावाद्युदात्तत्वाय । अन्यथा कनो लुपि प्रत्ययलक्षणेन 'ञ्नित्यादि'रित्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अतएव 'अत्रयः' इत्यत्र ढको लुकि न दोषः । वस्तुतः 'अत्रयः' - इत्यादौ न दोषः, कार्यिणोऽभावेन प्रत्ययलक्षणाऽप्रवृत्तेः । प्रत्ययलक्षणेन हि तन्निमित्तमन्यस्य कार्यमतिदिश्यते न तु तस्यैव स्थानिवत्त्वं प्रतिपाद्यते, असतः प्रसङ्गाऽभावेन स्थानिवत्त्वबाधात् । अतएव नखभिन्न इत्यादावैसादिकं न । 'माहिदाता'मित्यादौ 'आदिः सिच'इत्यस्य प्रवृत्तये – 'इत्पदघटिते'ति । पथिप्रियो मथिप्रिय इत्यत्र च 'पथिमथोः सर्वनामस्थाने' इत्येतत् स्वरनिवृत्त्यर्थं 'न लुमताऽ-ङ्गस्ये'तिसूत्रभाष्यपठितम् 'अत्र लुमता लुप्ते प्रत्ययलक्षणं नेष्यते' इतिवचनमेव शरणम् । यदि प्रागुक्तं ज्ञापकं 'क्वचित्स्वरे कर्त्तव्ये प्रत्ययलक्षणं ने'त्येव, 'क्वचि'दित्युक्त्या च' 'आमन्त्रितस्य च' 'सर्वस्य सुपी'त्यादौ न दोष इत्युच्यते, तदा न काचिद् दोषशङ्केति वदन्ती"त्याह भ. ना. ल. श. शे. धातुस्वर प्र. पृ. 634 ।
5. अष्टा. 6/1/197 ।
6. तथाहि – "केचित्तु विशेषापेक्षमेतत् - यत्र तद्तग्रहण- सत्त्वाऽसत्त्वाभ्यां स्वराश्रयकार्यिभेदस्तत्रैवेत्त्वप्रवृत्तिरिति । 'भीह्री'त्यत्र हि पूर्वग्रहणाऽभावे तदनु तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामलोऽन्त्यस्य भवन्नुदात्तः प्रत्ययाऽन्त्यस्य स्यात् । सप्तम्यर्थपुरस्कारे तु पितमपहाय भ्यादीनामेवोदात्तः स्यादिति स्पष्टस्तद्भेदः । 'उपोत्तमं रिति' 'चङ्यन्यतरस्या'-मित्यत्रापि द्ररिद्राधातुविषये फलभेदः । ञ्नित्यादि'रित्यादौ न तद्भेदः, उभयथापि-प्रकृतेरादेरेवोदात्तत्वात्, अतस्तत्र परसप्तम्येव । एवञ्च 'गर्गाः' इत्यादौ 'न लुमते' तिनिषेधादेव न दोषइति । पथिमथ्यर्थमपि वचनं नावश्यकम् । ननु सूत्रद्वये 'रितः' 'चङः' इति षष्ठीनिर्देश एवास्तु, किं परिभाषयेति चेन्न, लाघवार्थत्वात् । ननु 'चतुरः शसी'त्यत्र फलभेदस्य स्पष्टत्वेन पक्षद्वयेऽपि एतत्परिभाषाप्रवृत्तिर्दुवारा । तथा च शस एवोदात्त-त्वंस्यादिति चेन्न, 'चतुरः शस'इत्येव वक्तव्ये मध्ये विजातीयसप्तम्यन्तपाठेन तदप्रवत्तेरित्याहुः" भ. ना. ल. श. शे. धातुस्वर प्र. पृ. 634-635 ।
7. तथाहि – "इदं चिन्त्यम् 'उपमानं संज्ञाया'मिति सूत्रस्थभाष्यविरोधात् । किंच 'सर्वस्य सुपी'त्यत्राऽप्येवं सति तदन्तसप्तमी न स्यात् । तथा च - 'नलुमते'ति निषेधापत्तौ सर्वस्तोमाऽसिद्धिः । 'चतुरः शसी'त्यस्याऽपि लाघवार्थताया वक्तुं शक्यत्वाच्च । 'नलुमता' इति सूत्रस्थ - भाष्यन्तु - 'लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यानं सर्वामन्त्रित-

## 'पूर्वस्मि'न्निति शब्दः

[1]'यथाविध्यनुप्रयोगः पूर्वस्मि'न्नित्यत्र 'पूर्वास्मि'न्नितिशब्दः [2]'अनन्तरस्य विधिर्वा भवति प्रतिषेधोवे 'ति परिभाषाया विध्यंशस्य ज्ञापकः[3] । तथाहि – 'क्रिया - समभिव्याहारे[4] लोट् लोटो हिस्वौ वा च तध्वमोः', 'इति [5]'समुच्चयेऽन्य-तरस्या'मिति च सूत्राभ्यां लोड्विधौ उक्तौ तयोर्मध्ये यत्पूर्वसूत्रं 'क्रिया समभिव्याहारे लो'डिति तस्यैवाऽत्र ग्रहणं भवतु, माभूत् 'समुच्चयेऽन्यतरस्या'मित्यस्यापीत्येतदर्थमत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्यामस्यांऽशस्याऽभावे व्यर्थः । यतः पूर्वस्मिन्नि-त्युक्तावपि 'समुच्चयेऽन्यतस्या'मित्यस्याऽपि पूर्वसूत्रत्वेन तस्याऽपि पूर्वशब्देनाऽत्र परामर्शोदुर्वारः । ज्ञापिते चाऽस्मिन् परिभाषांऽशे व्यवहितस्यैव 'क्रिया समभिव्याहारे 'लो' - डित्यस्य परामर्शाय सूत्रेऽस्मिन् - पूर्वस्मिन्नित्यं. शब्दोऽयं स्वांऽशे चरिताऽर्थो भवति । अतएव यथा लुनीहि लुनीहीत्येवायं लुनातीत्येव साधुर्भवति, न तु लुनीहि – लुनीहीत्येवाऽयं छिनत्ती'त्यपि साधुर्भवति तथा ओदनं भुङ्क्ष्व सक्तून् पिब धाना खादेत्येवाऽयं भुङ्क्ते पिबति खादति वेति न साधुर्भवति किन्तु ओदनं भुङ्क्ष्व सक्तून् पिब धाना खादेत्येवाऽयमभ्यवहरतीत्येव साधुर्भवति ।

---

सिच्लुक्स्वरवर्जं, प्रयोजनं ञिन्नित् किल्लुक् स्वराः, पथिमथोः सर्वनामस्थाने लुकी'-तिवार्तिक- व्याख्यानपरम् । 'उपमान'मिति सूत्रस्थन्तु तत्प्रत्याख्यानपरमिति न तयोर्विरोधः । इमानि च वार्तिकानि – 'नलुमताङ्गस्येत्यत्राऽङ्गाधिकारः प्रतिनिर्दिश्यते' इतिपक्ष इव 'प्रत्यये परतः पूर्वस्य कार्यमात्रे प्रतिषेध' इति पक्षेऽप्यावश्यकानि, सौवरीणां सप्तमीनान्तदन्तसप्तमीत्वात् । 'उत्तरपदत्वे चाऽपदादिविधौ'इतिवत् । 'ञिन्नित् कित्स्वरस्याऽनाङ्गत्वात् प्रतिषेधाऽप्राप्ति'रिति कैयटस्तूपलक्षणम् । इह 'किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणं न भवति, किंञ्चिच्चाऽन्यत्र न भवती'ति सूत्रशेषभाष्ये । 'किञ्चिच्चे'- तिशब्देनाहर्ददाती'त्यत्राऽसुपीतिप्रतिषेधो ग्राह्य इति न कश्चिद्भाष्यविरोधः । 'किञ्चिच्चे'ति प्रतीके ञिन्नित्कित्स्वरा इति कैयट उपलक्षणतया व्याख्येय इति सुधियो विभावयन्तु" – इति ल. श. शे. धातु स्वर प्र. पृ. 635 ।

1. अष्टा. 3/4/4 ।
2. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
   (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
   (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
   (घ) नी. दी. प. वृ. प. 51, पृ. 5302 ।
   (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
   (च) भ. ना. प. शे. प. 62, पृ. 277 ।
   (छ) शेषा. प. भास्क. पं. 52, पृ. 427 ।
3. तथाहि – "इदं तर्हि ज्ञापकम् ....... 'यथाविध्यनुप्रयोगः पूर्वस्मिन् (3/4/4) इति पूर्वग्रहण"- मित्याह व्याडिः प. सू. प. 16 पृ. 10 ।
4. अष्टा. 3/4/2 ।
5. अष्टा. 3/4/3 ।

ज्ञापितस्याऽस्य परिभाषांशस्य फलं तु 'सुपिस्थ'[1] इतिविधिरनन्तरस्य कस्यैव न[2] तु व्यवहितस्याऽण[3] इति ।

## 'पौर्णमास्याग्रहायणी'ति शब्दौ

[4]'नदी पौर्णमास्याग्रहायणीभ्यः' – इत्यत्र पौर्णमास्याग्रहायणी - शब्दौ 'इह नदी-पदेन न [5]नदीसंज्ञकस्य ग्रहणमिति वचनस्य ज्ञापकौ[6] । यतोऽस्य वचनस्या-ऽभावेऽत्र – 'कृत्रिमाकृत्रिमयोः कृत्रिमे[7] कार्यसम्प्रत्ययः' इतिन्यायेन कृत्रिमस्यैव नदीसंज्ञकस्य ग्रहणं स्यात्तथा सति पौर्णमासीशब्दस्य आग्रहायणीशब्दस्य च नदीशब्देनैव ग्रहणं सुलभमित्यमू शब्दावत्र सूत्रे व्यर्थौ । ज्ञापिते चाऽस्मिन्वचने नदीशब्देनाऽत्रानयोः शब्दयोर्ग्रहणं न भवतीति 'उपपौर्णमासम्' - 'उपाग्रहायण'-मित्यत्र वैकल्पिकस्य टच्प्रत्ययस्य सिद्ध्यर्थमत्र सूत्रे शब्दावमू स्वांऽशे चरिताऽर्थौ भवतः, ज्ञापितस्याऽस्य वचनस्य फलं तु 'उपगोदावरि' - इत्यादौ वैकल्पिकस्य टचोऽभावः[8] । अस्या असत्त्वे हि वैकल्पिकष्टजत्र दुर्वारः स्यात् ।

---

1. अष्टा. 3/2/4 ।
2. 'आतोऽनुपसर्गे कः' - अष्टा. 3/2/3 ।
3. 'कर्मण्यण्' - अष्टा. 3/2/1, । - अष्टा. 3/2/1 इत्यण इत्यर्थः ।
4. अष्टा. 5/4/110 ।
5. 'यूस्त्र्याख्यौ नदी' - अष्टा. 1/4/3 ।
6. तथाहि –
   (क) "यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति, 'नदीपौर्णमास्याग्रहायणी-भ्यः 'इत्यत्रापि प्रसज्येत पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यी"त्याह पत. व्या. म. भा. 1/1/5/22 ।
   (ख) "नदीशब्देन स्वरूपं गृह्यते, न संज्ञा । यदि संज्ञा गृह्येत, पौर्णमास्याग्रहायणीग्रहणं न कुर्यादित्याह जि बु. न्या. 5/4/110 ।
   (ग) " 'नदी' इति स्वरूपग्रहणं, न संज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणा"दित्याह ह. मि. पदम. 5/4/110 ।
   (घ) "इह स्वरूपस्यैव ग्रहणं न संज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणा"दित्याह ज्ञा. मि. त. बो. अव्ययीभाव प्र. पृ. 417 ।
   (ङ) "अत्र नदीसंज्ञाकस्य न ग्रहणम्, पौर्णमास्याग्रहायणीग्रहणाल्लिङ्गा"दित्याह वा. दी. बा. मनो. अव्ययीभाव प्र. पृ. 417 ।
   (च) "बहुगण,. (सू. 1/1/23) । 'नदीपौर्णमास्याग्र,. (सू. 5/4/110) इत्यत्र न नदीसंज्ञकग्रहणम्, पौर्णमास्याग्रहायणीग्रहणसामर्थ्यादित्याह श्रीना. ज्ञा. सं. 1, पृ.18 ।
7. प. शे. प. 9, पृ. 39 ।
8. 'नदीपौर्ण'.- अष्टा. 5/4/110 ।

## 'प्रत्यये' तिशब्दः

'प्रत्ययलोपे प्रत्ययलक्षण'[1]मित्यत्र द्वितीयप्रत्ययेतिशब्दः 'वर्णाश्रये नास्ति [2]प्रत्ययलक्षण'मितिपरिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्र 'प्रत्ययलोपे तल्लक्षण'- मित्युक्तावेव 'राजा[4] "दधि'[5] 'वारी'[6]त्यादौ सुब्लक्षणायाः 'सुप्तिङन्तं[7] पद'मिति-पदसंज्ञायाः सुलभतया द्वितीयप्रत्ययेतिशब्दो व्यर्थः । ज्ञापितायां चाऽस्यां

---

1. अष्टा. 1/1/62 ।
2. (क) व्याडिः प. पा. प. 96, पृ. 41 ।
   (ख) 'वर्णाश्रये प्रत्ययलोपलक्षणप्रतिषेधः' - पु. दे. ल. प. वृ. प. 52, पृ. 135 ।
   (ग) सी. दे. बृ. प. वृ. प. 7, पृ. 169 ।
   (घ) नी. दी. प. वृ. प. 9, पृ. 295 ।
   (ङ) ह. भा. प. भास्क. प. 7, पृ. 320 ।
   (च) भ. ना. प. शे. प. 22, पृ. 120 ।
   (छ) शेषा. प. भास्क. प. 21, पृ. 403 ।
3. तथाहि –
   (क) "अथ द्वितीयं प्रत्ययलक्षणं किमर्थम् ? प्रत्ययलक्षणं यथा स्यात् । वर्णलक्षणं माभूदिति । गवेहितं गोहितम् । रायः कुलं रैकुल" - मितिग्रन्थेन ज्ञापकत्वमस्य सूचयति पत. व्या. म. भा. 1/1/9/61 ।
   (ख) "अयं चार्थः 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इत्यत्र द्वितीयप्रत्य-प्रत्ययग्रहणेन साधितः । तथाहि तत्रोक्तम् तल्लक्षणमितिवाच्ये प्रत्ययग्रहणं प्रत्ययस्वरूपाश्रितमेव कार्यं प्रत्ययलक्षणेन यथा स्यात् । यथा 'सुप्तिङन्तंपदम्' (1/4/14) इति, अचीत्यादि-वर्णाश्रितं माभूदिती"त्याह पु. दे. ल. प. वृ. प. 52, पृ. 136 ।
   (ग) "अयं चार्थः 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इत्यत्र द्वितीयप्रत्ययग्रहणेन साधितः । तथाहि तत्रोक्तम् – तल्लक्षणमितिवक्तव्ये प्रत्ययलक्षणमित्यत्र यत्पुनः प्रत्ययग्रहणं प्रत्ययाश्रितमेव कार्यं प्रत्ययलक्षणेन यथा स्यात् । यथा सुप्तिङन्तंपदम् । (1/4/14) इति, अचीत्येतद्वर्णमात्राश्रितं माभूदिती"त्याह सी. दे. बृ. प. वृ. प. 7 पृ. 169 ।
   (घ) "परिभाषायां ज्ञापकं 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) - इति द्वितीयं प्रत्ययग्रहण" मित्याह ह. भा. प. भास्क. प. 7, पृ. 320-321 ।
   (ङ) "तत्त्वञ्च 'प्रत्ययलोप' इति सूत्रे स्थानिवत् इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्यमस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत् सिद्धमित्याह भ. ना. प. शे. प. 22, पृ. 121 ।
   (च) "इदं च 'प्रत्ययलोपे प्रत्ययलक्षणम्' (1/1/62) इत्यत्र द्वितीयप्रत्ययग्रहणस्यार्थतया व्याख्यातम् । तथाहि – प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः, प्रत्ययस्वरूपाश्रयेण वा वर्णरूपाश्रयेण वा तत्सर्वं स्यात्, सर्वनाम्नो वास्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययतानिमित्तमेव कार्यं प्रत्ययलोपेऽपि भवति न तु वर्णतानिमित्तम्' (1/1/62 प्रदीप) इति कैयटः" इत्याह शेषा. प. भास्क. प. 21, पृ. 404 ।
4. राजन्शब्दात् सौ रूपमिदम् ।
5. दधिशब्दात् सौ अमि च रूपमिदम् ।
6. वारिशब्दस्य सौ अमि च रूपमिदम् ।
7. अष्टा. 1/4/14 ।

यत्र प्रत्ययस्याऽसाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणकार्यं भवत्वेतदर्थं स्वांऽशे चरिताऽर्थोऽसौ भवति । ज्ञापिताया अस्याः फलं तु 'गेवे हितं[1] गोहितं' रायः कुलं रैकुल'[2]मित्यादौ अजूरूपवर्णाऽऽश्रयस्य 'एचोऽयवायावः'[3] इत्यवाद्यादेशे कर्तव्ये प्रत्ययलक्षणाऽभावः । अस्या असत्त्वे हि प्रत्ययलक्षणेन अच्त्वाश्रयणमिवाद्यादेशानामापत्तिरत्र दुर्वारा स्यात् ।

नीलकण्ठदीक्षितस्तु "इयं परिभाषा 'प्रत्ययलोपे प्रत्ययलक्षण'मितिसूत्रे प्रत्ययपदस्याऽनुवर्तनाल्लोपे प्रत्ययलक्षणमित्येव सिद्धे पुनः प्रत्ययग्रहणेन ज्ञाप्यते । तेन प्रत्ययस्यैवासाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणं नान्यत्रेति प्रत्ययलक्षणसूत्रे भाष्ये स्पष्ट" मित्याह[4] ।

## 'प्रत्यया'दिति शब्दः

[5]'भी ह्री भृ हु मदजनधन दरिद्रा जागरां प्रत्ययात् पूर्वं पिती'त्यत्र - 'प्रत्यया'-दिति शब्दः 'स्वरविधौ संघातः कार्यी'ति वचनस्य ज्ञापकः[6] । यतोऽस्य

---

1. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' - अष्टा. 2/1/36 । इति समासे रूपमिदम् ।
2. 'षष्ठी' अष्टा. 2/2/8, इति समासे रूपमिदम् ।
3. अष्टा. 6/1/78 ।
4. प. वृ. प. 9, पृ. 295 ।
5. अष्टा. 6/1/192 ।
6. तथाहि –
   (क) अथ प्रत्ययग्रहणं किमर्थम् ? । प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यादाटः पूर्वस्य माभूदिति । बिभयानि । न चैवास्ति विशेषः – प्रत्ययाद्वा पूर्वस्योदात्तत्वे सत्याटो वा । अपि च पिद्भक्तः पिद्ग्रहणेन ग्रहीष्यते । इदं तर्हि प्रयोजनं – प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यादाट एवं माभूदिति । एतदपि नास्ति प्रयोजनम् । पिद्भक्तः पिद् ग्रहणेन ग्रहीष्यते । एवं तर्हि सिद्धे सति यत् प्रत्ययग्रहणं करोति तज्ज्ञापयत्याचार्यः – 'स्वरविधौ संघातः कार्यी भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ?। 'चित् स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेनेत्युक्तं तदुपपन्नं भवती"त्याह पत. व्या. म. भा. 6/1/6/192 ।
   (ख) "अथ प्रत्ययग्रहणं किमर्थम्, यावता भ्यादिभ्यः परः पित् प्रत्यय एव सम्भवति, ननु चायमस्ति – ' आडुत्तमस्य पिच्च' – बिभयानि, अत्रापि लोडुत्तमस्यैव पित्त्वं विधीयते, न त्वाट् इति, आट्सहितो लोडुत्तमः पिद्भवति स च प्रत्यय एव । अतएव लोडादेशात्पितः पूर्वमाड्भवति, प्रत्ययात्तु पूर्वोक्तं भवति, आट्सहितस्याप्रत्ययत्वादिति तन्निवृत्त्यर्थं प्रत्ययग्रहणमिति न वाच्यम्, कथम्? यथैव प्रत्ययत्वमाट्सहितस्य, तथा पित्त्वमपि तस्यैव? इदं तर्हि - प्रोयजनम् - प्रत्ययात्पूर्वस्याच उदात्तत्वं यथा स्यात् सङ्घातस्य माभूदिति, एतदेव ज्ञापकम् –' स्वर- विधौ सङ्घातः कार्यीति, तेन 'तास्यनुदात्तेत्' इति निघातः 'पचमानः' इत्यादौ चित्स्वरं परत्वाद्बाधत इति यदुक्तं तदुपपन्नं भवती"त्याह ह. मि. पदम. 6/1/192 ।
   (ग) "ननु प्रत्ययादिति किमर्थं, भ्यादिभ्यः परस्य पितः प्रत्यस्यैव सम्भवादिति चेन्न, प्रत्ययात् पूर्व एवोदात्तो यथा स्यात्, सङ्घात उदात्तो माभूदिति । न चोदात्तत्वादीनामजधर्मत्वेन 'पिती'ति सप्तम्या निर्दिष्टपरिभाषाप्रवृत्त्या अलोऽन्त्यपरिभाषया चाऽन्त्यस्यैव भविष्यतीतिवाच्यं, स्वरविधौ सङ्घातः कार्यीत्यर्थस्यापि ज्ञापनात् । एवञ्च 'अलोऽन्त्यस्ये'त्यादीनामप्रवृत्तिः । अतएव 'कर्षाऽऽत्वतः' इति

वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'जुहोती'[1]त्यादौ 'अनुदात्ते[2] चे'त्यनेनाऽऽद्युदात्तस्वरो माभूत्, किन्तु प्रत्ययात् पूर्वस्य ओकारस्य उदात्तत्वं भवत्वित्येतदर्थं 'भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं स्यादित्यर्थकं सूत्रमिदमारब्धम् । तत्राऽस्य वचनस्याऽभावे भ्यादिभ्यः परस्य पितः प्रत्ययस्यैव सम्भवात् – 'प्रत्यया'दित्ययं शब्दो व्यर्थः । न चाऽत्राऽस्य शब्दस्याऽभावे 'बिभयानि'[3] इत्यत्र 'नि'इति पिति परे पूर्वस्य आटः उदात्तत्वं भवेत्, आटः[4] पूर्व स्यैव च नेष्यते, तदर्थं 'प्रत्यया'दित्ययं शब्दश्चरितार्थः, सति हि तस्मिन् [5]यदागमन्यानेन आट्सहितस्य प्रत्यत्वात् प्रत्ययात्पूर्वस्य 'आनि'इत्यतः पूर्वस्य भकारोत्तराऽकारस्यैवोदात्तत्वं सिद्ध्यतीति शङ्क्यम् । यतोऽत्राऽस्यशब्द स्याऽभावेऽपि पिति पूर्वमुदात्तमित्युक्ते पितो नेर्भक्तः आडपि पिद्ग्रहणेन ग्रहीष्यत[6] इति आनि इत्येतस्मिन्परे ततः पूर्वस्यैवोदात्तत्वं प्राप्नोतीत्याटः उदात्तत्वाऽ-प्राप्त्याऽत्राऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थ एव । ज्ञापिते चाऽस्मिन्वचने 'बिभयानी'त्यत्र 'आनि'–इत्यतः पूर्वस्य संघातस्य उदात्तत्वं माभूत्, किन्तु प्रत्ययात्पूर्वस्याऽचः उदात्तत्वं यथा स्यादित्येतदर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थोभवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [7]'चित्स्वरात् तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेने'ति भाष्योक्तस्योपपत्तिः । अस्य वचनस्याऽभावे हि नाऽस्य भाष्यस्योपपत्तिः सम्भवति । तथाहि– 'आसीनः'[8] [9]'शयानः' इत्यादौ

---

सूत्रेऽन्तग्रहणं चरितार्थम् । यद्यप्यनेकोदात्तानां न यौगपद्यं, युगपद्ग्रहणात्, तथापि पर्यायेण सर्वेषां स्यात्, तदभावार्थं प्रत्ययादिति चरितार्थम्, तेन 'आसीनः' इत्यादौ 'चित्स्वरात्तस्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेने'तिसिद्धम् । अन्यथा चित्त्वेनाऽन्तोदात्तत्वमनुदात्तत्वञ्चादेरित्यसम्भवाऽभावाद्विप्रतिषेधोऽसङ्गतः स्यादितिदि''गित्याह भ. ना. ल. श. शे. धातुस्वर प्र. पृ. 634 ।

(घ) भी ह्री भृः (सू. 6/1/192) । अत्रत्य-प्रत्ययग्रहणं 'ज्ञापकं स्वरविधौ सङ्घातः कार्यीती''त्याह श्रीना. ज्ञा.सं. 6, पृ. 104 ।

1. 'हु दानाऽदनयोः' धा. पा. जुहो. 1083, इति हुधातो र्लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इति शपः श्लौ 'श्लौ' - अष्टा. 6/1/110, इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'कुहोश्चुः' -अष्टा. 7/4/62, इतिचुत्वेन धातुहकारस्य चकारे सार्वधातुकलक्षणे गुणे च कृते रूपमिदम् ।
2. अष्टा. 6/1/190 ।
3. 'ञिभी भये' धापा. जुहो. 1084, इति भीधातोर्लोटि मिपि शपि शपः श्लौ द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वे 'अभ्यासेचर्च' - अष्टा. 8/4/54, इति जश्त्वेनाऽभ्यासभकारस्य वकारे मिपो' मेर्निः 'अष्टा. 3/4/89, इति न्यादेशे 'आडुत्तमस्य पिच्च'-अष्टा. 3/4/92, इत्याडागमे सार्वधातुकलक्षणे गुणेऽयादेशे च कृते रूपमिदम् ।
4. 'आडुत्तमस्य पिच्च'-अष्टा. 3/4/92, इति विहितस्येतिशेषः ।
5. 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' प. शे. प. 12, पृ. 63 ।
6. 'यदागमास्तदगुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषयेतिशेषः ।
7. वा. व्या. म. भा. 6/1/6/86
8. 'आस उपवेशने' धा. पा. अदा. 1021, इति आसधातोर्लटि तस्य शानजादेशे आनस्याऽऽकारस्य 'आदेः परस्य'– अष्टा. 1/1/54, इतिपरिभाषाबलेन 'ईदासः'– अष्टा., 7/2/83, इति ईकारे कृदन्तत्वाद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।
9. 'शीङ्स्वप्ने' धा. पा. अदा. 1032, इति शीधातोर्लटि 'लटः शतृशानचावप्रथमासमानाधिकरणे' –अष्टा. 3/2/24, इत्यत्र लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासमानाधि-

[1]शानचः चित्त्वात् चितोन्त [2]उदात्तः प्राप्तः, [3]'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङो'रित्यनेन शानचः अनुदात्तोऽपि प्राप्तः, उभयोः प्राप्तौ [4]'विप्रतिषेधे परं कार्य'मित्यनेन परत्वादनुदात्त एव भवती'ति वार्तिककृतोक्तम्, उक्तिरियं 'स्वरविधौ यदि संघातस्य कार्यित्वं स्यात्तदैवोपपद्यते' नाऽन्यथा । यतः 'आदेः [5]परस्ये'ति परिभाषया शानचः आदेराकारस्याऽनुदात्तत्वम्, अन्तस्य च [6]'चित्तः' इत्यन्तोदात्तत्वं सुलभमिति विरोधाऽभावाद् 'विप्रतिषेधे परं [7]कार्यमित्यस्यसंचार एवाऽत्राऽसम्भवः । संघातस्य कार्यित्वे हि 'आन' इति संघातस्यानुदात्तत्वं तदन्तस्योदात्तत्वेन विरुद्ध्यत इति विप्रतिषेधात् वार्तिककृतः परत्वादनुदात्तत्वोक्तिश्चारु संगता भवति ।

## 'प्रथमयो'रितिशब्दः

'प्रथमयोः[8] पूर्वसवर्णः' इत्यत्र 'प्रथमयो'रितिशब्दः 'प्रथमयोस्त्रिकयोरत्र ग्रहण'मिति वचनस्य [9]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्र प्रथमयोः प्रत्यययोः औजसोरेव ग्रहणं स्यादिति प्रथमयोरित्ययं शब्दो व्यर्थः । 'औजसोः पूर्वसवर्णः 'इत्येव हि सूत्रं कुर्यात् । ज्ञापिते चाऽस्मिन् वचने प्रथमा - द्वितीययोस्त्रिकयोः पूर्वसवर्णदीर्घाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [10]'रामानित्यादौ शसि पूर्वसवर्णदीर्घसिद्धिः । अस्य वचनस्यासत्त्वे हि प्रथमयोः प्रत्यययोः औजसोरेव पूर्वसवर्णदीर्घः स्यान्न शस्यपि ।

---

करणेऽपि शानजादेशे 'शीङः सार्वधातुके गुणः' अष्टा. 7/4/21, इतिधातोरीकारस्य गुणेऽयादेशे कृदन्तत्वाद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।

1. 'लटः शतृशानचावप्रथमासमानाधिकरणे'– अष्टा. 3/2/124, इत्यत्रल ङित्यनुवर्तमाने पुनर्लड्ग्रहणात् प्रथमासमानाधिकरणेऽपि क्वचिद्विहितस्येतिशेषः ।
2. 'चितः' – अष्टा. 6/1/163, इत्यनेनेतिशेषः
3. अष्टा. 6/1/186
4. अष्टा. 1/4/2
5. अष्टा. 1/1/54
6. अष्टा. 6/1/163
7. अष्टा. 1/4/2
8. अष्टा. 6/1/102
9. तथाहि–
   (क) "अथवा वचनग्रहणमेव कुर्यात् 'औजसोः पूर्वसर्वणः" इत्युक्त्या ज्ञापकत्वमस्मिन्वचनेऽस्य शब्दस्य सूचयति पत. व्या. म. भा. 1/4/4/104
   (ख) "औजसौरितिवक्तव्ये प्रथमयोरित्युक्त्या च पूर्वसवर्णदीर्घ विधौ त्रिकग्रहणमिति ज्ञाप्यते इत्याह श्रीना. ज्ञा. सं. 1, पृ. 50
10. रामशब्दाच्छसि 'राम+अस्'-इत्यवस्थायां 'प्रथमयोः पूर्वसर्णः' अष्टा. 6/1/102 इति पूर्वसवर्णदीर्घैकादेशे 'तस्माच्छसो नः पुंसि' अष्टा. 6/1/103, इति शसः सकारस्य नत्वे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' अष्टा. 8/4/2, इति प्राप्तस्य णत्वस्य 'पदान्तस्य' अष्टा. 8/4/37, इत्यनेन निषेधे रूपमिदम् ।'

अस्मिन् वचने [1]'तस्माच्छसो नः पुंसी'त्यत्र 'तस्मा'दितिशब्दोऽपि ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि– 'रामा'नित्यादौ कृत-पूर्वसवर्णदीर्घात्परस्य शसः सकारस्य नत्वं विधातुमारब्धे 'पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यान्पुंसी'त्यर्थकेऽस्मिन् सूत्रे 'एतान् गाः पश्ये त्यत्र गो+शस्' इत्यवस्थायाम् [3]'औतोऽमशसो'रित्यनेन ओकाराऽकारयोराकारैकाऽऽदेशे 'गास्' इत्यवस्थायां सकारस्य नत्वाऽभावार्थमुपात्तः, तस्मादित्यस्य हि पूर्वसवर्णदीर्घादित्यर्थः । स च शब्दोऽस्य वचनस्याऽभावे व्यर्थः [4]'प्रथमयोः पूर्वसवर्णः' इत्यनेन प्रथमयोः प्रत्यययोः औजसोरेव पूर्वसवर्णदीर्घविधाने हि शसि पूर्वसवर्णदीर्घाऽप्रसक्त्या शसः सकारः पूर्वसवर्णदीर्घात्परो न भवष्यितीत्यसौ शब्दोऽत्र व्यर्थः । ज्ञापिते चाऽस्मिन्वचने शस्यपि पूर्वसवर्णदीर्घः प्राप्नोतीति 'एतान् गाः पश्ये'त्यत्र शसः सकारस्य [5]नत्वाऽभावाऽर्थमयं शब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति ।

सीरदेवस्तु [6]'प्रथमयोः पूर्वसवर्णः' इत्यत्र प्रथमयोरिति शब्दः 'क्वचित् समुदायेन [7]वाक्यपरिसमाप्तिः' इतिपरिभाषाया ज्ञापकः । यतोऽस्या अभावे 'प्रत्येकं [8]वाक्यपरिसमाप्ति'रितिपरिभाषया प्रत्येकं प्रथमाशब्दः प्रयुज्येत, तथा सति

---

1. अष्टा. 6/1/103
2. तथाहि–
   (क) "यत्तर्हि 'तस्माच्छसो नः पुंसी'त्यनुक्रान्तं पूर्वसवर्णदीर्घं सवर्णदीर्घं प्रति निर्द्दिशति तज्ज्ञापयत्याचार्यो– 'विभक्त्योर्ग्रहणमिती"त्याह पत. व्या. म. भा. 1/4/4/104
   (ख) " 'तस्माच्छसो नः पुंसि' (सू. 6/1/103) इति नत्वविधानात्, औजंसोरिति वक्तव्ये प्रथमयोरित्युक्त्या च पूर्वसवर्णविधौ त्रिकग्रहणमिति ज्ञाप्यते" इत्याह श्रीना. ज्ञा. सं. 1, पृ. 50
3. अष्टा. 5/1/93
4. अष्टा. 6/1/102
5. 'तस्माच्छसो नः पुसि' अष्टा. 6/1/103, इत्यनेनेतिशेषः ।
6. अष्टा. 6/1/102
7. (क) पु. दे. ल. प. वृ. प. 30, पृ. 125
   (ख) सी. दे. ल. प. वृ. प. 79, पृ. 240
   (ग) 'क्वचित्समुदायेऽपि' नी. दी. प. वृ. प. 105, पृ. 312
   (घ) 'क्वचित् समुदाये वाक्यपरिसमाप्तिः' ह. भा. प्र. भास्क. प. 81, पृ. 356
   (ङः) 'क्वचित् समुदायेऽपि' भ. ना. प. शे. प. 117, पृ. 352
   (च) 'समुदाये वाक्यपरिसमाप्तिः' शेषा. प. भास्क. प. 100, पृ. 456
8. (क) व्याडिः प. सू. प. 28, पृ. 15
   (ख) 'प्रत्येकं वाक्यपरिसमाप्तिर्ज्ञेया' पु. दे. ल. प. वृ. प.
   (ग) सी. दे. बृ. प. वृ. प. 78, पृ. 240
   (घ) नी. दी. प. वृ. प. 104, पृ. 312
   (ङ) ह. भा. प. भास्क. प. 80, पृ. 356
   (च) भ. ना. प. शे. प. 116, पृ. 351
   (छ) शेषा. प. भास्क. प. 99, पृ. 456

सोरेकवचनस्य प्रथमाशब्देन ग्रहणं स्यात्, सामीप्याच्चाम इति लाघवाऽर्थः 'स्वमोः पूर्वसवर्णः' इत्येव सूत्रस्यैवौचित्येन सूत्रेऽस्मिन्शब्दोऽयं व्यर्थः। ज्ञापितायां चाऽस्यां परिभाषायां सुपा त्रिकस्य स्वौजससिति समुदास्य सामीप्याच्च अमौट्शसीति समुदायस्य च ग्रहणाऽर्थमत्राऽयं शब्दः स्वांशे चरिताऽर्थो भवति। ज्ञापितस्याऽस्य वचनस्य फलं तु हल्समुदायस्य संयोगसंज्ञा[1]सिद्धिरित्याह[2]। भट्टनागेशस्तु प्रत्येकं [3]संयोग-संज्ञा[4]समास[5]संज्ञाऽभ्यस्तसंज्ञानामभावोऽस्याः [6]फलमिति मनुते।

### प्रयोग'इतिशब्दः

'[7]कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इत्यत्र 'प्रयोग' इतिशब्दः 'प्रकरणाऽर्थोऽपि विभक्तीनां निमित्त'मितिवचनस्य ज्ञापकः[8]। यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः। तथाहि [9]'पञ्चकृत्वोऽह्नो भुङ्क्ते' [10]'द्विरह्नोऽधीते' इत्यादौ अहन्शब्दात्

---

1. 'हलोऽनन्तराः संयोगः'– अष्टा. 1/1/7
2. तथाहि– "ज्ञापकमप्याहुः। प्रथमयोः पूर्वसवर्णः' (6/1/102) इत्यत्र प्रथम द्वितीययोर्वचनषट्कयोः प्रयुक्तं प्रथमयोरिति पदम्। प्रथमाशब्दो हि यदि सुपां त्रिकस्य स्वौजससिति समुदायस्य संज्ञा स्यात् सामीप्याच्चामौटशसिति त्रिकेषु प्रयुज्यते तदा प्रथमयोरिति निर्देशः साधीयान् भवति। यदि तु प्रत्येकं प्रथमाशब्दः स्यात्तदा सोरेकवचनस्य प्रथमाशब्देन ग्रहणं स्यात्। सामीप्याच्चाम इति लाघवार्थं सोरेकवचनस्य प्रथमाशब्देन ग्रहणं स्यात् सामीप्याच्चाम इति लाघवार्थं स्वमोरित्येवं कुर्यात्। तस्मात् 'प्रथमयोः' (6/1/102) इति निर्देशेन समुदायेन वाक्यपरिसमाप्तिं बोधयती"त्याह सी. दे. बृ. प. बृ. प. 79, पृ. 240
3. 'हलोऽनन्तराः संयोगः' अष्टा. 1/1/7
4. 'प्राक्कडारात् समासः' अष्टा. 2/1/3
5. 'उभे अभ्यस्तम्' अष्टा. 6/1/5
6. तथाहि "नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह 'क्वचित् समुदायेऽपि"– इत्याह भ. ना. प. शे. प. 117, पृ. 352
7. अष्टा. 2/3/64
8. तथाहि–
   (क) "ननु च बहिरङ्गः प्रकरणाद्यर्थ इति पञ्चकृत्व इत्यन्यत्र च वचनस्य चारितार्थ्यादिह न भविष्यति? एवं तर्ह्येतज् ज्ञापयति प्रकरणाद्यर्थोऽपि विभक्तीनां निमित्तमिति। तेन 'वृद्धो यूना' इति 'सहयुक्तेऽप्रधाने'इति सहार्थे गम्यमाने तृतीया भवतीती"त्याह जि. बु. न्या. 2/3/65
   (ख) "कृत्वोऽर्थप्रयोग इत्यत्र (2/3/64) प्रयोगग्रहणं किमित्युक्त्वा प्रत्युदाहृतम् 'अहनिभुङ्क्ते' इति। ननु गम्यतेऽत्र कृत्वोर्थः प्रकरणेन, स च बहिरङ्गः। अन्तरङ्गे वचनं चरितार्थं बहिरङ्गे न भविष्यति। एवं तर्हि ज्ञापयति 'प्रकरणार्थोपि विभक्तीनां निमित्तम्'। तेन वृद्धोयूनेति (1/2/65) गम्यमानेपि सहार्थे तृतीयासिद्धि"रित्याह पु. दे. ज्ञा. समु. सप्तमे अनभिहितपादे पृ. 68
9. पञ्चन्शब्दात् 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' अष्टा. 5/4/17 इति कृत्वसुच् प्रत्यये रूपमिदम्। क्रियायाः पञ्चोत्पत्तेः करोतीति प्रयोगाऽर्थः।
10. द्विशब्दात् 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' अष्टा. 5/4/17 इति कृत्वसुचोऽपवादे 'द्वित्रिचतुर्भ्यः सुच्' अष्टा. 5/4/18, इति सुच्प्रत्यये कृते रूपमिदम्।

'षष्ठीविभक्तिं विधातुमारब्धे 'कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवती'त्यर्थकेऽस्मिन् सूत्रे 'अहनि भुक्त'मित्यादौ 'द्विश्चतुर्वे'त्यस्य कृत्वोऽर्थस्य प्रकरणाऽऽदिना गम्यमानत्वेऽपि तत्प्रयोगाऽभावे षष्ठ्यभावायोपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः। प्रकरणाऽऽदिना गम्यमानस्य कृत्वोऽर्थस्य बहिरङ्गतयाऽन्तरङ्गे कृत्वोऽर्थेऽस्य सूत्रस्याऽप्रवृत्तिरस्य शब्दस्याऽभावेऽपि हि सुलभा। ज्ञापिते चाऽस्मिन् वचने बहिरङ्गेऽपि प्रकरणाऽऽदिलभ्ये कृत्वोऽर्थेऽस्य सूत्रस्य प्रवृत्तिर्दुर्वारेति 'अहनिभुक्त'मित्यादौ षष्ठ्यभावाय शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति। ज्ञापितस्याऽस्य वचनस्य फलं तु [1]'वृद्धो यूने'त्यत्र गम्यमानेऽपि सहाऽर्थे [2]तृतीयायाः सिद्धिः। अस्य वचनस्याऽभावे हि 'पुत्रेण सहाऽऽगतः पिते'त्यादौ सहप्रयोगे तृतीयाविधेश्चारितार्थ्येन[3] गम्यमाने सहाऽर्थे नाऽत्र प्रयोगे [4]तृतीया सिद्ध्येत।

## 'प्रशस्य' इति शब्दः

'रेवतीजगतीहविष्याभ्यः[5] प्रशस्ये' इत्यत्र क्यप्प्रत्ययान्तः प्रशंसनाऽर्थकः 'प्रशस्य' इतिशब्दः 'सकर्मकेभ्योऽपि धातुभ्यः कदाचित् भावे कृत्यप्रत्यया भवन्ती'ति वचनस्य ज्ञापकः[6]। यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दोऽनुपपन्नः। नह्यस्य वचनस्याऽभावे [7]प्रपूर्वकात् शंसुधातोः [8]सकर्मकाद्भावे [9]क्यप् प्रत्ययः सम्भवति। ज्ञापितस्याऽस्य वचनस्य फलं तु 'कां दिशं [10] गन्तव्य'मिति प्रयोगस्य साधुत्वसिद्धिः। अस्य वचनस्याऽभावे ह्यत्र गम्धातोर्भावे तव्यत्तव्ययोरसंभवतया 'कांदिश'मिति [11]द्वितीयायाः कर्मणि [12]प्रत्यये कर्मण उक्ततयाऽसंभवान्नाऽस्य प्रयोगस्य साधुत्वं सिद्ध्येत्।

---

1. 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः'– अष्टा. 1/2/65
2. 'सहयुक्तेऽप्रधाने'– अष्टा. 2/3/19
3. 'सहयुक्तेऽप्रधाने' अष्टा. 2/3/19
4. 'सहयुक्तेऽप्रधाने' अष्टा. इत्यनेनेतिशेषः। 2/3/19
5. अष्टा. 4/4/122
6. तथाहि– ''रेवतीजगतो हविष्यादिभ्यः प्रशस्ये इति (4/4/122) यद्विधौ प्रसंसनार्थः प्रशस्यशब्दो ज्ञापकः– 'सकर्मकेभ्योपि धातुभ्यः कदाचिद् भावे कृत्यप्रत्यया भवन्ती'ति। तेन 'कां दिशं गन्तव्यम्' इतिं सिद्ध्यतीति रक्षितः' इत्याह पु. दे. ज्ञा. सं. षोडशे ठक्पादे पृ. 79
7. 'शंसु स्तुतौ' धा. पा. भ्वा. 728
8. 'स्वार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्' भ. ना. परमलघुमञ्जूषायां धात्वर्थ प्र. पृ. 87
9. 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' वा. का. 3/1/109, इत्यनेनेतिशेषः। यद्यपि वार्तिकमिदं भाष्ये नाऽस्ति तथापि 'प्रशस्यस्य श्रः' अष्टा. 5/3/60, इति निर्देशबलाच्छंसेः क्यबनुमीयते।
10. 'गम्लृ गतौ' धा. पा. भ्वा. 982, इतिगम् धातोर्भावे 'तव्यत्तव्यानीयरः' अष्टा. 3/2/96, इति तव्यति तव्ये वा प्रत्यये कृते रूपमिदम्।
11. 'कर्मणि द्वितीया'– अष्टा. 23/2, इति विहिताया इत्यर्थः।
12. तव्यति तव्ये वेत्यर्थः।

वस्तुतस्तु रक्षितेनोक्तं [1]पुरुषोत्तमदेवेनानूदितमस्य शब्दस्यैतद्वचनज्ञापकत्वं न युक्तम् । यतः [2]'कृत्यल्युटो बहुल'मित्यनेनैवाऽत्र प्रपूर्वकात्शंसधातोः सकर्मकात् क्यप्प्रत्यस्य सुलभतया ज्ञापितैतद्वचनाऽभावेऽपि शब्दोऽयमत्रोपपद्यते । फलमप्यस्य वचनस्याऽन्यथासिद्धम् ।[3]बाहुलकादेव हि तत्र भावे सकर्मकाद् गम्धातोस्तव्यत् तव्यो वा प्रत्ययः सुलभ इतिकर्मणोऽनुक्ततया 'कांदिश'मिति [4]द्वितीयायाः सिद्धिः सुलभेति मन्ये ।

## प्राग्दीव्यत इतिशब्दौ

'प्राग्दीव्यतोऽण्'[5]– इति सूत्रे 'प्राग्-दीव्यतः' इतिशब्दौ 'गङ्गास्रोतोऽधिकारोऽस्ती'ति वचनस्य [6]ज्ञापकौ । यतोऽस्य वचनस्याऽभावेऽत्र शब्दावमू व्यर्थौ । 'अण्' इत्येतावदुक्तावपि दीव्यतेः[7] प्राग् अणधिकारः सुलभः । ज्ञापिते चाऽस्मिन्वचने शब्दाविमौ स्वांऽशे चरिताऽर्थौ भवतः । तथाहि– अस्मिन् सूत्रेऽनयोः शब्दयोरनुपादाने 'गङ्गास्रोतोऽधिकाराऽस्तित्त्वे हि 'स्त्रीभ्यो [8]ढक्' इत्येवमादिनाऽधिकाराऽन्तरेण अणो विच्छिन्नतया 'तेन रक्तं रागात्'[9]– इत्येवमादिषु पुनरण्ग्रहणं कर्तव्यं भवेत् । अवधिनाधिकारपरिमाणे आख्याते तदवधिकेष्वर्थेषु सर्वेष्वयमभ्यनुज्ञात इति पुनरण्ग्रहणं कर्तव्यं न भवति । एवं सति चाऽस्मिन् वचने कृते च प्राग्ग्रहणे 'दीव्यतोऽण्' इत्युच्यमाने प्रकृतिरणो दीव्यच्छब्दो विज्ञायेत । अस्य वचनस्याऽसत्त्वे हि मण्डूकप्लुताऽधिकारेण [10]विच्छिन्नेऽप्यणः सम्बन्धः सुलभ इतीमौ शब्दावत्र व्यर्थौ भवतः । ज्ञापितस्याऽस्य वचनस्य फलमन्यत्र नोपलभ्यत इति नाऽस्य ज्ञापकत्वं युक्तं प्रतिभाति ।

---

1. ज्ञा. समु. षोडशे ठक्पादे पृ. 79
2. अष्टा. 3/3/113
3. क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति'–इत्याह वरदरा. ल. सि. कौ. कृत्य प्र. पृ. 222
4. 'अनभिहिते'– अष्टा. 2/3/1, इत्यधिकारे 'कर्मणि द्वितीया' अष्टा. 2/3/2, इतिविहिताया इत्यर्थः ।
5. अष्टा. 4/1/83
6. एवं 'गङ्गास्रोतोऽधिकारास्तित्वे प्रागदीव्यत इति (4/1/83) लिङ्गमित्याह पु. दे. ज्ञा. समु. षष्टे अपरपादे पृ. 67
7. 'तेन दीव्यति खनतिजयति जितम्'– अष्टा. 4/4/2
8. अष्टा. 4/1/120
9. अष्टा. 4/2/1
10. 'तेन रक्तं रागात्'– अष्टा. 4/2/1, इत्यादौ 'स्त्रीभ्योढक्' अष्टा. 4/1/120 इत्याद्यधिकारान्तरेण विच्छिन्नेऽपीत्यर्थः ।

## 'फलभजे'तिशब्दः

'तॄ-फल-भज-[1]त्रपश्चे'त्यत्र 'फल-भजे'ति शब्दः 'एत्वाऽभ्यासलोपयोः कर्तव्ययोः अभ्यासाऽऽदेशः सिद्धः' इति वचनस्य [2]ज्ञापकः। यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः। तथाहि– [3]'तेरतुः' 'फेलतुः'[4] 'भेजतुः'[5] 'त्रेपे' इत्याद्यर्थमारब्धे तॄ, फल, भज, त्रप– इत्येतेषामङ्गानामत एकाराऽऽदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतःस्थलि च सेटी'त्यर्थकेऽस्मिन् सूत्रे 'फलभजे'तिशब्दः 'फेलतुः 'भेजतु'रित्यत्र फलधातोः भजधातोश्च [6]लिटि [7]द्वित्वे 'फल् फल् अतुः' 'भज् भज् अतुः'– इत्यवस्थायां [8]हलादिशेषे [9]जश्त्वे च कृते 'पफल् अतुः' 'बभज् अतुः' इत्यवस्थायामङ्गस्याऽऽदेशाऽऽदित्वेन 'अतएकहल्[10]मध्येऽनादेशादेर्लिटी'ति सूत्रस्याऽप्राप्त्या एत्वाऽभ्यासलोपसिद्ध्यर्थमुपात्तोऽस्य वचनस्याऽभावे व्यर्थः। अत्र हि

---

1. अष्टा. 6/4/122
2. तथाहि–
   (क) "यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः– 'सिद्धोभ्यासादेश एत्व'इती"त्याह पत. व्या. म. भा. 6/4/3/120
   (ख) " 'अतएक हल्मध्य सूत्रे (6/4/120) अनादेशादेरिति किम्। बभणतुः वभणुरित्युक्तम्। तत्राऽभ्यासजश्त्वस्य पूर्वत्रासिद्धत्वात्लिट्यनादेशादेरेवायं प्राप्नोति। तत्र तॄफलभजत्रपश्चेति (6/4/122) फलिभजिग्रहणं ज्ञापकम् 'एत्वेऽभ्यासादेशस्यनासिद्धत्व'मिति। असिद्धत्वे त्वनादेशत्वादः एकहल्मध्य इत्येत्वसिद्धितस्या"दित्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे।
   (ग) " 'अतएक.. (सू. 6/4/120)। फलिभजिग्रहणं ज्ञापकम् अभ्यासादेशसिद्धत्वस्ये"त्याह श्रीना. ज्ञा. सं. 6, पृ. 112
3. 'तॄ प्लवनतरणयोः' धा. पा. भ्वा. 969, इति धातो लिर्टि तसि अतुसादेशे द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे द्वितीयखण्डस्थस्य ऋकारस्य 'ऋच्छत्यृताम्' अष्टा. 7/4/11. इतिगुणेऽकारे रपरत्वे 'ततर्अतु'सितिस्थिते 'तॄफलभजत्रपश्च' अष्टा. 6/4/122. इत्येत्वाऽभ्यासलोपे सकारस्यात्वे विसर्गे च कृते रूपमिदम्।
4. 'फल निष्पत्तौ' धा. पा. भ्वा. 530, 'ञि फला विशरणे' धा. पा. भ्वा. 516, इति वा फल् धातो लिर्टि तसि अतुसादेशे द्वित्वे भ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' –अष्टा. 8/4/54. इतिफकारस्य चर्त्वेन पकारे 'तॄफलभजत्रपश्च' अष्टा. 6/4/122. इत्येत्वाऽभ्यासलोपयोः कृतयोः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम्।
5. 'भज सेवायाम्' धा. पा. भ्वा. 998, इति भज्धातोः लिटि तसि अतुसादेशे द्वित्वेऽभ्यासत्वे हलादिशेषे' अभ्यासे चर्च' अष्टा. 8/4/54, इतिभकारस्य जश्त्वेन वकारे 'तॄफलभजत्रपश्च' अष्टा. 6/4/122, इत्येत्वाऽभ्यासलोपे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम्।
6. 'परोक्षे लिट्'– अष्टा. 3/2/125
7. 'लिटि धातोरनभ्यासस्य'– अष्टा. 7/4/60
8. 'हलादिः शेषः'– अष्टा. 7/4/60
9. 'अभ्यासे चर्च'– अष्टा. 8/4/54
10. अष्टा. 6/4/120

अभ्यासाऽऽदेशभूतस्य [1]जश्त्वस्याऽसिद्धतया[2] अनादेशित्वादेव [3]'अतएक-हल्मध्येऽनादेशादे र्लिटी'त्यनेनैव एत्वाऽभ्यासलापौ सुलभौ । ज्ञापिते चाऽस्मिन् वचने 'फेलतुः' 'भेजतुः' इत्यादौ [4]जश्त्वस्य सिद्धतयाऽऽदेशाऽऽदित्वादप्राप्तयोरेत्वाभ्यासलोपयोः सिद्धये शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य-वचनस्य फलं तु [5]'बभणतु'रित्यादावभ्यासजश्त्वस्य[6]सिद्धत्वादादेशाऽऽदित्वेन [7]एत्वाऽभ्यासलोपयोरभावः । अस्य वचनस्याऽभावे हि 'बभणतु'रित्यत्र 'भण् भण् अतु'रित्यवस्थायां हलादिशेषे अभ्यासभकारस्य [8]'अभ्यासे चर्चे'ति जश्त्वे तस्य [9]एत्वाऽभ्यासलोपयोः कर्तव्ययोः 'पूर्वत्रासिद्ध'मित्यनेनाऽसिद्धत्वादङ्गस्याऽनादेशत्व-मेवाऽस्तीति एत्वाऽभ्यासलोपयो [10]र्दुवारतया 'भेणतु'रित्यनिष्टस्य रूपस्याऽऽपत्तिः स्यात् । सति चाऽस्मिन्वचने [11]जश्त्वस्य सिद्धतया आदेशाऽऽदित्वेन एत्वाऽभ्यासलोपयोरापत्तिरत्र[12] न भवति ।

## 'बलि– रक्षिते'तिशब्दौ

[13]'चतुर्थी तदर्थार्थबलिहितसुखरक्षितै'रित्यत्र 'बलिरक्षिते'तिशब्दौ 'तादर्थ्ये प्रकृति-विकारभावे समासो भवती'तिवचनस्य [14]ज्ञापकौ । यतोऽस्य वचनस्याऽ-

---

1. 'अभ्यासे चर्च' अष्टा. 8/4/54, इति विहितस्येत्यर्थः ।
2. 'पूर्वत्रासिद्धम्'– अष्टा. 8/2/1, इत्यनेनेतिशेषः
3. अष्टा. 6/4/120
4. 'अभ्यासे चर्च'– अष्टा. 8/4/54, इति विहितस्ये'त्यर्थः
5. '..........भण..... शब्दार्थाः'धा. पा. भ्वा. 447, इति भणधातोर्लिटि तसि अतुसादेशे द्वित्वेऽभ्यासत्वे हलादिशेषे' अभ्यासे चर्च'– अष्टा. 8/4/54, इत्यभ्यास – भकारस्य जश्त्वे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
6. 'अभ्यासे चर्च'– अष्टा. 8/4/54, इति विहितस्येत्यर्थः ।
7. 'अतएक हल्मध्येऽनादेशादेर्लिटि'– अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
8. अष्टा. 8/4/54
9. 'अतएक हल्मध्येऽनादेशादेर्लिटि'– अष्टा. 6/4/120, इत्यनेनेतिशेषः
10. 'अतएक.' अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
11. 'अभ्यासे चर्च'– अष्टा. 8/4/54, इति विहितस्येत्यर्थः
12. 'अतएक.'– अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
13. अष्टा. 2/1/36
14. तथाहि–
    (क) "आचार्यप्रवृत्तिर्ज्ञापयति– 'विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते' इति, यदयं बलिरक्षितग्रहणं करोति । तत्कथं कृत्वा ज्ञापकम्? यथाजातीयकानां समासे बलिरक्षित- ग्रहणेनाऽर्थस्तथाजीतयकानां समासः । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण, ततो बलिरक्षितग्रहणमर्थवद्भवती"त्याह पत. व्या. म. भा. 2/1/2/36

भावेऽत्रेमौ शब्दौ व्यर्थौ । तथाहि– 'कुबेराय बलिः कुबेरबलि'रित्यत्र, 'गवे रक्षितं गोरक्षित'मित्यत्र च चतुर्थ्यन्तेन बलिरक्षितयोः क्रमशः समासविधानार्थमत्र सूत्रे शब्दाविमावुपात्तौ । तौ चाऽस्य वचनस्याऽभावे व्यर्थौ । 'कुबेरबलिः, गोरक्षित'मित्यत्र [1]'यूपदारु' [2]'कुण्डलहिरण्यमि'त्यत्र यथा प्रकृतिविकारभावस्तथा प्रकृतिविकाराऽ- भावात्तादर्थ्ये चतुर्थीसमासो न प्राप्नोतीति समासाऽर्थमत्रेमौ शब्दौ स्वांऽशे चरिताऽर्थौ भवतः । ज्ञापितस्याऽस्य वचन फलं तु 'रन्धनाय स्थाली' 'अवहननायोलूखल'मित्यादौ [3]समासाऽभावः । नह्यत्र प्रकृतिविकार-भावोऽस्ति । अस्य वचनस्याऽसत्त्वे ह्यत्र प्रकृतिविकारभावाऽभावेऽपि [4]समासाऽऽपत्तिर्दुर्वारा स्यात् । न चाऽश्वेभ्यो घासः अश्वघासः, धर्माय नियमो धर्मनियम इत्यादौ प्रकृतिविकृतिभावविरहात् कथं तदर्थेन समास इतिशङ्क्यम् । यतोऽत्र षष्ठीसमास एव । अश्वघासादयः षष्ठीसमास इत्याह हि भट्टोजिदीक्षितः[5] ।

हरदत्तमिश्रस्तु सिद्धान्ते 'वचनस्याऽस्य प्रयोजनं चिन्त्य'मिति [6]मनुते । वस्तु-तस्तु हरदत्तमिश्रोक्तं चिन्त्यप्रयोजनत्वमस्य वचनस्य न युक्तम् । यतः शाब्दबोधे

---

(ख) "तदर्थेन विकृतिविकारभावे समासोऽयमिष्यते" इतिग्रन्थेन ज्ञापकत्वमनयोः सूचयति जया. का. 2/1/36

(ग) "यदि तादर्थ्यमात्रे समासः स्यात्, बलिरक्षितग्रहणमनर्थकं स्यात् । तथाहि– कुबेरबलिः, गोरक्षितमित्रापि तादर्थ्यं गम्यत एव । तस्माद्बलिरक्षितग्रहणाल्लिङ्गात्' तादर्थ्ये प्रकृति-विकारभावे समासो भवति' इति विज्ञायते"– इत्याह जि. बु. न्या. 2/1/36

(घ) "यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति– 'विकृतिश्चतुर्थ्यन्तप्रकृत्या समस्यत' इति, अन्यथा कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत् स्या"दित्याह ह. मि. पदम. 2/1/36

(ङः) "तदर्थेन प्रकृतिविकृतिभाव एव, बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह रन्धनाय स्थाली'– इत्याह भ. दी. वै. सि. कौ. तंपुरुषसमास प्र. पृ. 423-424

1. 'यूपाय दारु' इति विग्रहः ।
2. 'कुण्डलाय हिरण्यम्' इति विग्रहः ।
3. चतुर्थी तदथार्थबलिहितसुखरक्षितैः'– अष्टा. 2/1/36, इत्यनेनेतिशेषः ।
4. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः'– अष्टा. 2/1/36, इत्यनेनेतिशेषः ।
5. वै. सि. कौ. तत्पुरुषसमास प्र. पृ. 424
6. तथाहि– "रन्धनाय स्थाली'त्यत्र षष्ठीसमासः कस्मान्न भवति? कश्चिदाह भवंत्येव, तद्यथा गोग्रासः, लीलाम्बुजम्, क्रीडासरः, वासभवनम्, नाट्यशालेति । अपर आह– रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति । उभावपि प्रति ब्रूमः–येषु षष्ठी समास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु नेष्यते तेषु तु चतुर्थी समास एवानभिधानान्नेष्यताम्, माकारि ज्ञापनार्थं बलिरक्षितग्रहणम्, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभावे च व्यवस्थास्यते । किं चैवं सति सूत्रमेवैतदनर्थकम्, यूपदार्वादावपि षष्ठीसमास एवास्तु, 'चतुर्थीतदर्थ'इत्येतत्तु' षष्ठी तदर्थ' इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम् । नन्वर्थभेदो भवति षष्ठीसमासे सम्बन्धमात्रं गम्यते, चतुर्थीसमासे तु तादर्थ्यं सम्बन्धविशेष-? नैषोऽस्ति विशेषः, आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः । यद्येवम्, केवलेऽपि

सम्बन्धत्व - तादर्थ्यत्वकृतवैलक्षण्यायोक्तवचनं सफलम् । एवं चाऽत्र 'रन्धनाय स्थाली'ति सम्बन्धत्वेन भाने षष्ठीसमास इष्ट एव, तादर्थ्यत्वेन भाने चतुर्थीसमास-वारणाय वचनमित्यवधेयम् । भट्टनागेशस्तु "रन्धनाय स्थाली'त्यादावभिधान-स्वाभाव्यात्तादर्थ्येनैव तस्य भानं न सम्बन्धत्वेनेति षष्ठीसमासः । चतुर्थीसमासवारणाय तु प्रकृतिविकृतिभावे एवेत्युक्तम् । अश्वघासादावुपकारकत्वेन बोधे वाक्यमेव । सम्बन्धत्वेन बोधे षष्ठ्यन्तेन समासोऽपीति व्यवस्था"इत्याह[1] ।

## 'बहुगणे'तिशब्दौ

[2]'बहुपूगगणसङ्घस्य तिथु'गित्यत्र बहुगणेतिशब्दौ बहुगणयोः संख्याकार्यं भवती'-ति वचनस्य [3]ज्ञापकौ । यतोऽस्य वचनस्याऽभावे [4]'बहुगणे'ति सूत्रप्रत्याख्याने च सति शब्दाविमावत्राऽनुपपन्नौ । तथाहि– [5]'बहुतिथः' [6]'गणतिथः'– इत्यत्र बहुगण-शब्दयोर्डति परे तिथुगागमं विधातुं सूत्रेऽस्मिन्निमौ शब्दावुपात्तौ । तौ चाऽस्य वचन-स्याऽभावे नोपपद्येते । बहुगणयोः संख्याशब्देनाग्रहणे हि बहुगणशब्दाभ्यां 'तस्य [7]पूरणे डट्' इति डटोऽप्राप्त्या तस्मिन्परे तिथुगमविधानायाऽनयोरुपादानमनुपपन्नम् ।

---

षष्ठीसमासे तथा विशेषोऽवगंस्यते, किञ्च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यविसायः सर्वत्रैव तथास्तु, नार्थोऽनेन? उच्यते– हितशब्देन तावत् षष्ठीसमासो न भवति, तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः । ततश्च 'क्ते च' इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थम् । एवं च गोरक्षितमित्यत्र न स्यात्, चतुर्थ्या असम्भवात् । 'षष्ठीतदर्थ'इत्यस्य चाप्रसङ्गः, प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः । अर्थशब्देनापियोगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः बलिसुखग्रहणमपि कर्तव्यम्, तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथास्यादित्येवमर्थम् । तस्मादारब्धव्यमेव सूत्रम् । प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्य"मित्याह ह. मि. पदम. 2/1/36

1. ल. श. शे. ततपुरुष समास प्र. पृ. 424
2. अष्टा. 5/2/52
3. तथाहि–
   (क) "वतोरेव ज्ञापकं स्यात् । नेत्याह । योगापेक्षं ज्ञापक"मितिग्रन्थेनात्र वचने ज्ञापकत्वमनयोः सूचयति पत. व्या. म. भा. 1/1/5/22
   (ख) "वतोरिड्वा' (सू. 5/1/23) इत्यादिज्ञापकाद्बहुगणादीनां संख्याकार्यं भवती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 137
4. 'बहुगणवतुडतिसंख्या" अष्टा. 1/1/23
5. बहूनां पूरण इत्यर्थे बहुशब्दात् 'तस्य पूरणे डट्' अष्टा. 5/2/48, इति डटि 'बहुपूगगण सङ्घस्य तिथुक्'– अष्टा. 5/2/52, इतितिथुगागमेऽनुबन्धानां लोपेषु तद्धितान्त-प्रातिपदिकत्वेन स्वादिकार्येषु च कृतेषु रूपमिदम् ।
6. गणस्य पूरण इत्यर्थे 'बहुतिथः' इतिवत् डटि तिथुगादिषु च कृतेषु रूपमिदम् ।
7. अष्टा. 5/2/48

ज्ञापितेचाऽस्मिन् बहुगणयोरपि संख्यात्वात्ताभ्यां [1]डटः सुलभतयाऽत्र सूत्रे शब्दाविमौ तिथुगागमायोपपन्नौ भवतः। ज्ञापितस्याऽस्य वचनस्य फलं तु [2]'संख्यासंज्ञाया अकरणजन्यं लाघवम्। यतः [3]अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः।

## 'बहुवचनस्ये'तिशब्दः

[4]'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्य'मित्यत्र 'बहुवचनस्ये'ति शब्दः 'सर्वो द्वन्द्वो [5]विभाषयैकवद्भवती'ति परिभाषाया [6]ज्ञापकः। यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः। तथाहि– 'उदितौ तिष्यपुनर्वसू'इत्यत्र द्विवचन-

---

1. 'तस्य पूरणे डट्' अष्टा. 5/2/48
2. 'बहुगणवतुडति संख्या'– अष्टा. 1/1/23
3. भ. ना. प. शे. प. 134, पृ. 366
4. अष्टा. 1/2/63
5. (क) व्याडिः प. सू. प. 73, पृ. 31
   (ख) पु. दे. ल. प. वृ. प. 50, पृ. 134
   (ग) सी. दे. बृ. प. वृ. प. 16, पृ. 177
   (घ) नी. दी. प. वृ. प. 22, पृ. 297
   (ङ) ह. भा. प. भास्क. प. 16, पृ. 328
   (च) भ. ना. प. शे. प. 35, पृ. 160
   (छ) शेषा. प. भास्क. प. 34, पृ. 410
6. तथाहि–
   (क) "एवं तर्हि सिद्धे सति यद्बहुवचनग्रहणं करोति, तज्ज्ञापयत्याचार्यः 'सर्वो द्वन्द्वो विभाषयैकवद्भवती'ति। किमेतस्या ज्ञापने प्रयोजनम्? बाभ्रवशालङ्कायनं, बाभ्रवशालङ्कायना इत्येतत् सिद्धम् भवती"त्याह पत. व्या. म. भा. 1/2/2/63
   (ख) "यदयमेकवचन-निवृत्त्यर्थं बहुवचनग्रहणं करोति, ततोऽवसीयते अस्तीयं परिभाषा 'सर्वो द्वन्द्वो विभाषयैकवद्भवतीती"-त्याह जि. बु. न्या. 1/2/63
   (ग) "ज्ञापकं चास्याः 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे' (1/2/63) इत्यत्र बहुवचनग्रहणम्। तेन हि बहुवचनप्रसङ्गे द्विवचनं विधीयते। 'उदितौ तिष्यपुनर्वसू इति तत्रोक्तम्। तिष्य एकःपुनर्वसू द्वौ इति बहुवचनं द्वन्द्वस्यैकवचनप्रसङ्गो नास्त्येवेति बहुवचन प्रसङ्गएवैतद्द्विवचनं भविष्यतीति किं बहुवचनस्येत्यनेन। तत् कृतं ज्ञापयति– 'सर्वो द्वन्द्वो विभाषा एकवद्भवती' तीत्याह पु. दे. ल. प. वृ. प. 50, पृ. 135
   (घ) 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्, इतिसूत्रे बहुवचनग्रहणं ज्ञापकम्। यदि च नित्यमेकवत्तदा बहुवचनायोगात् तस्य द्विवचनविधानमनुपपन्नं स्यादिति तिष्यपुनर्वस्वोरिति सूत्रे भाष्येस्थित"मित्याह नी. दी. प. वृ. प. 22, पृ. 297
   (ङ) 'ज्ञापकमत्र– 'तिष्यपुनर्वस्वोः' (1/2/63) इत्यत्र बहुवचनग्रहणमिति भाष्यकारादयः' इत्याह ह. भा. प. भास्क. प. 16, पृ. 328
   (च) "तिष्यपुनर्वस्वो'रिति सूत्रस्थं बहुवचनस्येतिग्रहणमस्या ज्ञापकम्। तद्धीदं तिष्यपुनर्वस्वित्यत्र तद्व्यावृत्तयर्थ"मित्याह भ. ना. प. शे. प. 35, पृ. 161-162
   (छ) "ज्ञापकमपि 'तिष्यपुनर्वस्वोः' (1/2/63) इतिसूत्रे बहुवचनग्रहणम्। तद्धि 'उदितं तिष्य पुनर्वसु' इत्यत्र एकवचनस्य द्विवचनवारणाय। यद्यत्र समाहारद्वन्द्वो न स्यात्, तर्हि तदनर्थक"मित्याह शेषा. प. भास्क. प. 34, पृ. 410
   (ज) "तिष्यपुनर्वस्वोः (सू. 7/2/63) अत्र बहुवचनग्रहणाज् ज्ञापकात् सर्वो द्वन्द्वो विभाषयैकवदिति ज्ञाप्यते"–इत्याह श्रीना. ज्ञा. सं. 1, पृ. 40

सिद्धयेऽत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्या अभावे व्यर्थः 'उदितौ तिष्यपुनर्वसू' इत्यत्र हि द्वन्द्वीभूततिष्यपुनर्वसुशब्दस्योद्भूताऽवयवसमुदायबोधकत्वे 'तिष्य एकः पुनर्वसू द्वा'विति बहुवचनमेव प्राप्नोति, नाऽत्र द्वन्द्वादेकवचनप्रसङ्गोऽस्तीति बहुवचन-प्रसङ्ग एवैतद्द्विवचनमस्य शब्दस्याऽभावेऽपि स्वतः सिद्धम् ।

अथवाऽत्र सूत्रे 'इदं तिष्यपुनर्वसु'–इत्यत्र एकवचनस्य द्विवचनाऽभावा-योपात्तोऽयं शब्दोऽस्या अभावे व्यर्थः । यतो द्वन्द्वीभूततिष्यपुनर्वसुशब्दस्यो-द्भूताऽवयव – समुदायबोधकत्वे बहुवचनाऽन्तस्यैव सत्त्वेन 'इदं तिष्यपुनर्व'स्विति-व्यावर्त्त्यस्थलमस्या अभावे नोपलभ्येत ।

वस्तुतस्तु अस्या अभावे उद्भूताऽवयवसमुदायबोधकत्वे बहुवचनाऽन्तस्यैव सत्त्वेन 'इदं तिष्यपुनर्व'स्विति व्यावर्त्यस्थलाऽभावाद्बहुवचनस्येतिशब्दो व्यर्थः । तिरोहिताऽवयवभेदकसमुदायबोधकत्वे एकवचनान्तस्यैव सत्त्वेन बहुवचनाऽन्तस्याऽ-सम्भवात्सूत्रस्यैव वैयर्थ्यमित्युभयविवक्षायां क्रमशोऽत्र 'बहुवचनस्ये'तिशब्दः सम्पूर्ण सूत्रं च व्यर्थीभूय परिभाषामिमां ज्ञापयतीति युक्तमिति मन्ये ।

ज्ञापितायां चाऽस्यामुभयविवक्षायां सम्भवव्यभिचारयोः सत्त्वेन स्वांऽशे ज्ञापक-स्य चारितार्थ्यं भवति । नच ज्ञापितायामप्यस्याम् 'इदं तिष्यपुनर्वसु'इत्यत्र 'जातिर-[1]प्राणिना'मिति नित्यैकवत्त्वाद् बहुवचनस्य सर्वथाऽसंभवेन सूत्रमिदं व्यर्थमेवेति शङ्क्यम् । यतः 'यावता यदनुपपन्नं तावत्सर्वं तज्ज्ञापयती'त्यभियुक्तोक्तेः 'जातिर-प्राणिना'मितिवैकल्पिक'मिति वचनमपीदं सूत्रं ज्ञापयति । तथा चोभयवचनाऽन्तस्य तिष्यपुनर्वसुशब्दस्य सत्त्वेन सम्भवव्यभिचारयोः सत्त्वात् स्वांऽशे चारितार्थ्यं ज्ञापकस्याऽक्षुण्णम् ।

अथैकवद्भावप्रकरणस्य वैकल्पिकत्वे 'बदरामलक'मितिवत् बदरामलकानीत्यपि स्यात्, नचैतदिष्यत इतिशङ्कनीयम् । यतो ज्ञापितमस्य वैकल्पिकत्वं व्यवस्थितम् । व्यवस्था चैषा बदरत्वजातेः प्राधान्ये विवक्षित एकवद्भावः, बदरादिव्यक्तेः प्राधान्ये विवक्षिते बहुवचनान्तत्वमिति ।

नचाऽत्र बदरामलकमित्यादौ बदरत्वादेर्धर्म्मिविशेषत्वेनैव भानं भवतीति जातेः प्राधान्याऽभावः शङ्क्यः । यतोऽत्र प्राधान्यं पदजन्यबोधविषयत्वप्रकारकतात्पर्यीय-विषतासमनियतत्वरूपं गृह्यते । तच्च बदरत्वादौ सुलभम् ।

नचैवं तिष्यत्वपुनर्वसुत्वयोः प्राधान्ये विवक्षिते एकवचनं भविष्यति तद् व्यावृत्त्यर्थम् अन्यत्र बहुवचनस्य द्विवचनाऽर्थं च बहुवचनग्रहणं चरितार्थमिति परिभाषाज्ञापकं न भविष्यतीत्यपि शङ्क्यम् । यतः '[2]फल्गुनीप्रोष्ठे'ति सूत्रात्

---

1. अष्टा. 2/4/6 ।
2. 'फल्गुनी प्रोष्ठपदानां नक्षत्रे'–अष्टा. 1/2/60 ।

नक्षत्रग्रहणाऽनुवृत्त्यैव सिद्धे पुनर्नक्षत्रग्रहणात् तिष्यपुनर्वसुनक्षत्रव्यक्तिप्राधान्य एव [1]'तिष्यपुन'रितिसूत्रं प्रवर्तते । तत्र [2]'जातिरप्राणिना'मित्यस्याऽप्राप्त्या परिभाषामिमां विना समाहारेतरेतरयोगाऽन्यतरविवक्षाया एव सत्त्वे एकवचने बहुवचनस्याऽभावात् बहुवचने व्यावर्त्त्याऽभावाद् व्यर्थं सद् बहुवचनग्रहणं परिभाषामिमां ज्ञापयति । ज्ञापितायां चाऽस्यामुभयविवक्षायास्तिष्यपुनर्वसुशब्दे सत्त्वेनैकवचनव्यावृत्तिपुरस्सरं बहुवचनस्थानितालाभाय बहुवचनग्रहणं चरितार्थं भवति ।

अथैवमपि 'द्वन्द्वश्च [3]प्राणितूर्यसेनाङ्गाना'मित्यादिसूत्राणाम् 'एषामेव समाहारः' इत्येतन्नियामकत्वेनाऽन्यत्र तिष्यपुनर्वस्वादावेकवचनाऽभावेन व्यावर्त्त्याऽभावाज् ज्ञापितायामप्यस्यां, ज्ञापिते च [4]''जातिरप्राणिना'मितिवैकल्पिक''मितिवचने बहुवचनस्येतिशब्दोऽत्र सूत्रे व्यर्थ एवेति चेत्–सत्यम् । असावेव'बहुवचनस्ये'तिशब्दः प्राण्यङ्गादीनां समाहार एवेतिवचनमपि ज्ञापयति । ज्ञापिते चाऽस्मिन्वचने तत्तत्-प्रकरणाऽविषये उभयविवक्षायास्सत्त्वेन ज्ञापकस्याऽस्य स्वांऽशे निर्विवादं चरितार्थ्यं भवति । ज्ञापिताया अस्याः द्वन्द्वावच्छेदकावच्छिन्नो द्वन्द्वो विकल्पेनैकवद्भवती'त्यर्थः । फलं तु 'घटपटं' 'घटपटा'वित्यादिप्रयोगयोः साधुत्वसिद्धिः । अस्या असत्त्वे हि कस्यचनैकतरस्यैवाऽनयोः साधुत्वं सिद्ध्येन्नोभयोः । अतएवोक्तं भगवता ''बाभ्रव-शालङ्कायनं' 'बाभ्रवशालङ्कायना, इत्येतत् सिद्धं भवती[5]''ति ।

अथाविशेषेण द्वन्द्वमात्रे उद्भूतावयवभेदविवक्षारूपेतरेतरयोगतिरोहिताऽवयवभेद-विवक्षारूपसमाहारयोस्सत्त्वेन सर्वस्मादेव द्वन्द्वीभूतशब्दाद् विवक्षाभेदेनैकवचनद्वि-वचनयोः सुलभतया निष्प्रयोजनत्वान्नैषा स्वीकार्येति चेन्नैवम् । यतो द्विविधः शब्दो भवति–कश्चनोद्भूतावयवभेदकसमुदायबोधको यथा वृक्षशब्दः, कश्चन तिरोहितावयव-भेदकसमुदायबोधको यथा वनशब्दः । अतएवाऽऽद्यो बहुवचनान्त एव 'वृक्षाः'इति, द्वितीयस्तु एकवचनान्त एव 'वन'मिति प्रयुज्यते । तथा च्चाविशेषेणेतरेतरयोगसमा--हारयोः 'चार्थे द्वन्द्वः'[6] इति द्वन्द्वविधानेऽपि द्वन्द्वीभूतोऽपि घटपटादिशब्दः एकव्निध समुदायबोधक एव भवेदिति एकस्मिन् घटपटादिरूपद्वन्द्वीभूतशब्दे उभय- विवक्षाया अभावेनैकवचनद्विवचनान्तत्वं नोपपद्येतेति तदुपपत्तये परिभाषायाः स्वीकार आवश्यकः ।

---

1. 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्'–अष्टा. 1/2/63 ।
2. अष्टा. 2/4/6 ।
3. अष्टा. 2/4/2 ।
4. अष्टा. 2/4/6 ।
5. व्या. म. भा. 1/2/63 ।
6. अष्टा. 2/2/29 ।

न चास्या अभ्युपगमेऽनयैव निर्वाहे 'विभाषा [1]वृक्षमृगे'तिसूत्रवैयर्थ्यं शङ्कनीयम् । यतो 'वृक्षादीनां स्वसजातीयैरेव द्वन्द्वे एकवद्भावः 'इति नियमार्थं सूत्रमिदमावश्यकम् । नियमफलं तु 'नरवानररक्षसा'मिति भट्टिप्रयोगस्य[2] साधुत्वम् । अत्र हि इतरेतर-योगद्वन्द्वेन बहुवचनस्य साधुत्वमस्य नियमस्याऽभावे न सिद्ध्येत् ।

व्याडिस्तु [3]"तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्य'मितिसूत्रे 'बहुवचनस्ये'तिशब्दः [4]'योगविभागादिष्टसिद्धि'रिति परिभाषाया [5]ज्ञापक इत्याह ।

## 'भिक्षे'तिशब्दः

[6]'भिक्षासेनादायेषु चे'त्यत्र 'भिक्षे'तिशब्दः 'चरेष्ट'[7]–इति सूत्रमधिकरण उपपद एव प्रवर्तते'–इति वचनस्य [8]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–[9]'भिक्षाचरः' [10]'सेनाचरः' 'आदायचरः'[11]–इत्येतदर्थ-

1. 'विभाषा वृक्षमृगतृणधान्य व्यञ्जनपशु शकुन्यश्ववडवपूर्वापराधरोत्तराणाम्'–अष्टा. 2/4/12 ।
2. भट्टिकाव्यम् ।
3. अष्टा. 1/1/63 ।
4. व्याडिः प. सू. प. 68, पृ. 30 ।
5. तथाहि–"कथं ज्ञायते अस्त्येषा परिभाषेति । यदयं 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे.'–(1/1/63) इत्यत्र बहुवचनग्रहणं करोति । कथं कृत्वा ज्ञापकम् । बहव एवं तिष्यपुनर्वसवः । तत्र युक्तं यद्बहुवचनं स्यात् । नार्थो बहुवचनग्रहणेन । पश्यत्याचार्यः । 'विभाषा वृक्षमृग.' (2/4/12) इत्यत्र योगविभागोऽस्ति । सर्वो द्वन्द्वो विभाषयैकवद्भवति । तन्निवृत्त्यर्थं बहुवचनग्रहणं क्रियमाणं ज्ञापकं भवति । किमेतस्या ज्ञापने प्रयोजनम् । 'अस्मदो द्वयोश्च' (1/2/59) इत्यत्र योगविभागः सिद्धो भवति । अस्मद एकस्मिन्बहुवचनं सिद्धं भवति । ततश्च द्वयोरर्थयोर- स्मदोर्बहुवचनं भवतीत्याह व्याडिः प. सू. प. 68, पृ. 30 ।
6. अष्टा. 3/2/17 ।
7. अष्टा. 3/2/16 ।
8. तथाहि–
   (क) "यदयं 'भिक्षासेनादायेषु चे'ति चरेर्भिक्षाग्रहणं करोति तज् ज्ञापयत्याचार्यो 'न भवति कर्मणी'ती"त्याह पत. व्या. म. भा. 3/2/1/16 ।
   (ख) "चरेष्टः' (सू. 3/2/16) । भिक्षासेनादायेषु च' (सू. 3/2/17) इत्यत्र भिक्षाग्रहणात् ज्ञापकात् अधिकरण एव, न कर्मणी"त्याह श्रीना. ज्ञा. सं. 3, पृ. 66 ।
9. भिक्षां चरतीत्यर्थे भिक्षामिति कर्मोपदात्'.....चरगत्यर्थाः' धा. पा. भ्वा. 559, इतिचर्धातोः 'भिक्षासेनादायेषु च'–अष्टा. 3/2/17, इतिटप्रत्यये रूपमिदम् । चरतेरत्र चरणपूर्वके अर्जने वर्तते इति चरणेन भिक्षामर्जयतीति प्रयोगाऽर्थः ।
10. सेनां चरति=प्रविशतीत्यर्थे सेनामिति कर्मोपपदात्'..... चरगत्यर्थाः' धा. पा. भ्वा. 559 इतिचर्धातोः 'भिक्षा.'–अष्टा. 3/2/17, इति टप्रत्यये रूपमिद् । सेनां प्रापयतीति प्रयोगाऽर्थः ।
11. आदाय चरतीत्यर्थे 'आदाये'ति ल्यबन्तकर्मोपदात्'.....चर गत्यर्था' धा. पा. भ्वा. 559. इति चर्धातोः 'भिक्षा.' इष्टा. 3/2/17, इति ट प्रत्यये रूपमिदम् । लब्धं द्रव्यं गृहीत्वा चरतीति प्रयोगाऽर्थः ।

मारब्धे'भिक्षा, सेना, आदाय'–इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवती'त्यर्थकेऽस्मिन्सूत्रे 'भिक्षाचरः'–भिक्षामिति कर्मोपपदाच्चर्[1]धातोष्ट-प्रत्ययार्थमुपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । [2]'चरेष्टः' इत्यनेनैव हि भिक्षामिति कर्मोपदाच्चर्धातो र्भिक्षां चरतीत्यर्थे टप्रत्यये'भिक्षाचरः' इतिरूपस्य सिद्धिः सुलभा । नच 'चरेष्टः[3]'–इत्यत्र 'अधिकरणे[4] शेते'रित्यतोऽधिकरणे' इत्यस्यानुवृत्तिर्भवतीति कर्मण्युपपदे नाऽस्य प्रवृत्तिः संभवतीति शङ्क्यम् । यतोऽत्र सूत्रे [5]'कर्मणी'- त्यस्याऽप्यनुवृत्तिर्भवति, अन्यथोत्तरसूत्राणां[6] कर्मण्युपपदे प्रवृत्ति र्न स्यात् । ज्ञापिते चाऽस्मिन्वचने 'भिक्षाचरः' इत्यत्र 'चरेष्टः[7] इत्यस्याऽप्रवृत्त्या तत्र टप्रत्ययविधानायाऽयं शब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'कुरूंश्चरती'त्यत्र कर्मण्युपपदे चरेष्ट[8]प्रत्ययस्याऽभावः । अस्य वचनस्याऽसत्त्वे हि चरेष्ट[9]प्रत्ययोऽत्र दुर्वारः स्यात् ।

## 'भ्राजे'तिशब्दः

[10]'व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छशां षः' इति सूत्रे-'भ्राजे'ति शब्दः [11]'अर्थवद्ग्रहणे नानर्थकस्ये'ति परिभाषाया [12]ज्ञापकः । यतोऽस्याअभावे 'भ्राजे'

1. '.....चर गत्यर्थाः'–धा. पा. भ्वा. 559 ।
2. अष्टा. 3/2/16 ।
3. अष्टा. 3/2/16 ।
4. अष्टा. 3/2/15 ।
5. 'कर्मण्यण्'–अष्टा. 3/2/1, इत्यत इतिशेषः ।
6. 'कृञो हेतुताच्छील्यानुलोम्येषु'–अष्टा. 3/2/20, इत्यादीनामित्यर्थः ।
7. अष्टा. 3/2/16 ।
8. 'चरेष्टः'–अष्टा. 3/2/16, इत्यनेनेतिशेषः ।
9. 'चरेष्टः'–अष्टा. 3/2/16, इत्यनेनेतिशेषः ।
10. अष्टा. 8/2/36 ।
11. (क) व्याडिः प. सू. प. 1, पृ. 1 ।
    (ख) पु. दे. ल. प. वृ. प. 1, पृ. 112 ।
    (ग) सी. दे. बृ. प. वृ. प. 9, पृ. 170 ।
    (घ) नी. दी. प. वृ. प. 11, पृ. 295 ।
    (ङ) 'अर्थवद्ग्रहणे नार्थकस्य ग्रहण'मिति ह. भा. प. भास्क. प. 9, पृ. 323 ।
    (च) भ. ना. प. शे. प. 15, पृ. 98 ।
    (छ) शेषा. प. भास्क. प. 14, पृ. 397 ।
12. तथाहि–
    (क) "अथवा व्रश्चादि (8/2/36) सूत्रे भ्राजग्रहणमस्याः सत्त्वे ज्ञापकम् । यदि हि निरर्थकस्यापि हि ग्रहणं भवति तदा तत्र राजग्रहणेनैव भ्राज.'इति भ्राज ग्रङणं पृथग्न कुर्यात् । कृतं तु । अतो ज्ञापकम्–अर्थवत एव ग्रहणं नान्यस्येती"त्याह पु. दे. ल. प. वृ. प. 1, पृ. 112 ।

तिशब्दोऽत्र व्यर्थः । 'भ्राजे'तिशब्दाऽभावेऽपि हि राजग्रहणेनैव भ्राजैकदेशस्याऽपि राजशब्दस्य 'बिभ्राट्'[1]–[2]'भ्राष्टि'रित्यत्र षत्वमनेन सुलभम् । ज्ञापितायां चाऽस्यां भ्राजघटक-राजशब्दस्यानर्थकतयाऽत्र ग्रहीतुमशक्यत्वात्तत्र षत्वसम्पादनाय भ्राजेति शब्दः स्वांऽशेत्र चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलन्तु [3]'प्रोढवानित्यादौ[4] 'प्रादूहोढोढ्येषैष्येषु'[5]इत्यादिभि[6]र्वृद्ध्या[7]-द्यभावः । अस्या असत्त्वे हि तत्र वृद्ध्याद्यापत्तिर्दुर्वारा स्यात् । [8]भट्टोजिदीक्षित–[9]शेषाद्रिसुधीभ्यां तु 'व्रश्चे'ति

---

(ख) "अथवा व्रश्चादि (8/2/36) सूत्रे भ्राज्ग्रहणमस्यास्तित्वे ज्ञापकम् । यदि ह्यनर्थकस्यापि ग्रहणं स्यात्तदा राजग्रहणेनैव भ्राजैकदेशस्यापि ग्रहणे सिद्धे राजभ्राजेति भ्राजग्रहणं न कुर्यात् । कृतं चातो ज्ञापकमर्थवत एव ग्रहणं नानर्थकस्येती"त्याह सी. दे. बृ. प. वृ. प. 9, पृ. 171 ।

(ग) "अर्थवद् ग्रहणे नानर्थकस्य ग्रहणम् । 'व्रश्चे'ति सूत्रे राजेः पृथग् भ्राजिग्रहणाज् ज्ञापकात्"इत्याह भ. दी. वै. सि. कौ. अच्सन्धि प्र. पृ. 45-46 ।

(घ) "अच च ज्ञापकं 'व्रश्च' (8/2/36) इति सूत्रेराजेः पृथग् भ्राजिग्रहणमिति कौस्तुभकाराः' इत्याह नी. दी. प. वृ. प. 11, पृ. 295 ।

(ङ) "सीरदेवस्त्वाह 'व्रश्च' (पा. सू. 8/2/36) इति सूत्रेराजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिती"त्याह भ. दी. प्रौ. मनो. अच्सन्धि प्र. पृ. 121 ।

(च) "अस्याः परिभाषाया व्रश्चादिसूत्रे (8/2/36) राजेः पृथग् भ्राजिग्रहणं ज्ञापकमिति सीरदेवः"इत्याह शेषा. प. भास्क. प. 14, पृ. 397 ।

1. विपूर्वकात् 'टु भ्राजृदीप्तौ' धा. पा. भ्वा. 823, इति भ्राज् धातोः 'क्विप् च'–अष्टा. 3/2/76, इति क्विपि तस्य सर्वापहारे 'प्रत्ययलोपे प्रत्ययलक्षण'मिति क्विबन्तत्वेन कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ 'हल्ङ्याब्भ्योदीर्घात् सुतिस्यपृक्तंहल्'–अष्टा. 6/1/68, इति सलोपे पदान्तजकारस्य 'व्रश्च.'–अष्टा. 8/2/36, इति षत्वे जश्त्वचर्त्वयोः कृतयोः रूपमिदम् ।
2. 'टुभ्राजृदीप्तौ' धा. पा. भ्वा. 823, इति भ्राज् धातोः 'क्तिन्नावादिभ्यश्च वक्तव्यः' वा. का. 3/3/94, इति क्तिन् प्रत्यये 'तितुत्रतथसिसुसरकसेषु च'–अष्टा. 7/2/9, इतीटो निषेधे 'व्रश्च.'–अष्टा. 8/2/36, इति जकारस्य षत्वे ष्टुत्वे च कृते कृदन्तप्रातिपदिकत्वात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. प्रपूर्वकाद् 'वह प्रापणे' धा. पा. भ्वा. 1004, इति वहधातोः निष्ठा.- अष्टा. 3/2/102 इति कर्तरि क्तवतुप्रत्यये 'प्र + उढवत् इत्यवस्थायामित्यर्थः ।
4. आदिपदेन सप्तम्येकवचनान्तेषु 'काशे कुशे बभ्रुशे'इत्यादि ग्राह्यम् ।
5. वा. वै. सि. कौ. अच्सन्धि प्र. पृ. 45 ।
6. आदिपदेन 'शे'–अष्टा. 1/1/13 इत्यादि सूत्राणि ग्राह्याणि ।
7. आदिपदेन प्रगृह्यसंज्ञादिग्राह्यम् ।
8. अनेन हि "नन्वेतदयुक्तं फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत् विभ्राट् विभ्रागिति रूपद्वयं हि साध्यं, तच्च व्रश्चादिसूत्रे 'राजृ इति पठित्वाऽपि सुसाध्यम् । एकस्या भ्राजतेर्ॠकारस्य प्रागपि दातुं शक्यत्वात्–ॠभ्राज इति । भ्राज भास (पा. सू. 7/4/3) इति विकल्पस्य वाचनिकतया ॠकारस्य आत्मनेपदमात्रफलकतया वक्ष्यमाणत्वेन तत्स्थानेऽकारस्य सुपठत्वाच्च । तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेवे"त्युक्तम् प्रौ. मनो. स्वरसन्धि प्र. पृ. 121-122 ।
9. अनेन हि–"नन्विदमयुक्तं, षत्वविधौ राजिसाहचर्यात्-फणादेरेव ग्रहणं, न तु भ्राजृ दीप्तावित्यस्य तदर्थं भ्राजिग्रहणस्य सार्थक्यादिति चेत्, मैवम् । फणादौ 'टुभ्राजृ'इति पठ्यताम् । प्रकृत-सूत्रे राजृ इति पठ्यताम् । एवं च ॠभ्राज इत्यस्याग्रहणं सिद्ध्यति ।'

सूत्रस्थ-'भ्राजे'ति शब्दोऽस्या ज्ञापक इति स्वीकृतम् । हरिभास्करेण तु नास्या ज्ञापको 'व्रश्चे'त्यादिसूत्रस्थो भ्राजशब्द इति स्थिरीकृतम्[1] । अमीषां मतेषु हरिभास्करमतमेव पुष्टं युक्तञ्चेति मन्ये । यतः परस्परसाहचर्येण फणाद्योरेव राजि-भ्राज्योर्ग्रहणमिति नियमार्थतया व्रश्चादिसूत्रे भ्राजिग्रहणं सार्थकम् । भट्टोजिदीक्षित–शेषाद्रिसुधीभ्यां कृतम् 'ऋभ्राज' 'राजृ'राज' इत्याद्यनुबन्धननूतनसूत्राऽऽकारादि-कल्पनया भ्राजशब्दस्य वैयर्थ्योपपादनं तु न केवलं क्लिष्टं, प्रत्युत 'राराष्टी'त्यत्र यङ्लुगन्ते षत्वाऽनापत्तिदूषणग्रस्तमिति हरिभास्करेण चारु प्रतिपादितमतो तन्नेह वितन्यते । तस्मान्नायं भ्राजशब्दः परिभाषाया अस्या ज्ञापक इति निश्चीयते । अतोऽस्या ज्ञापकान्तरमत्रैव[2]प्रघट्टकेऽन्यत्र निरूपितम्[3] ।

---

वस्तुतः ऋभ्राज इत्यपि मास्तु । भ्राजेत्यकारोऽनुदात्त आत्मनेपदार्थः पठ्यताम् 'भ्राज भास.' (7/4/3) इति सूत्रेण उपधाह्रस्वनिषेधस्य ऋदित्कार्यस्यात्राभावात् केवलात्मनेपदप्रयोजनस्या-कारेणापि सुसाधुत्वात् । तस्मात् पृथग् भ्राजिग्रहणं ज्ञापकमेवेत्युक्तम् बृ. परि. वृ. प. 14. पृ. 397-398 ।

1. तथाहि–"यत्तु सीरदेवः 'व्रश्चादि सूत्रगतं राजेः पृथग्भ्राजिग्रहणं तत्' इत्याह तच्चिन्त्यम् । विभ्राड्विभ्रागिति रूपसिद्ध्ये साहचर्यात् फणादि भ्राजेरेव षत्वार्थतया भ्राजिग्रहणस्योपक्षी-णत्वात् । यदप्यूचुः 'अर्थवत्परिभाषाऽभावे व्रश्चेति सूत्रे फणादिभ्राज्येकदेशस्यापि राजेस्सत्त्वेन फणादेरेव ग्रहणमिति नियामकाभावेन तत्साहचर्येण फणादिभ्राजि-ग्रहणार्थं भ्राजिग्रहणं नोपक्षीणम्' तदपि मन्दम् । परस्पर-साहचर्येण फणाद्योरेव राजिभ्राज्योर्ग्रहणमिति नियमार्थतया भ्राजिग्रहणस्योपक्षीणतायास्तादवस्थ्यात् । यथा राम-लक्ष्मणावित्यत्रोभयोर्दाशरथित्वेपि परस्पर-साहचर्येण दाशरथ्योरेव प्रतीतिः । अतएव 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता' इत्यादि-भर्तृहर्युक्तिमनूद्य काव्यप्रकाशकृता साहचर्योदाहरण-प्रसङ्गे 'रामलक्ष्मणाविति दाशरथी'इत्युक्तम् । तत्र दाशरथाविति क्वाचित्कपाठोऽपि 'प्रदीयतां दाशरथाये'तिवत् तस्येदमित्यणि कृते न विरुद्ध्यते । यथा च हल्ङ्यादिसूत्रे परस्पर-साहचर्याद्विभतीनामेव सुतिसीनां ग्रहणात् 'अभैत्सीत्'इत्यादौ सिचो लोपाऽभावः । न च तत्र सुत्योर्विभक्त्योरेव सत्त्वेन ताभ्यां साहचर्यात् सेरपि विभक्तेरेव लोप इति शङ्क्यम् । सुरां सुनोतीति सुरासुत् तमाचष्टे सुरसयति ततः क्विप् सुरा; सुरासौ सुरासः । स्वस्ति आचष्टे स्वस्तयति ततः क्विप्स्वः स्वस्तौ स्वस्तः इत्यादावविभक्त्योरपि सुत्योः सत्त्वात् । यदप्युक्तं राजेः, फणादेरेव ग्रहणमिति नियमेऽपि राजिग्रहणेन अफणादेर्ग्रहणाऽसंभवेन किं तद्व्यावृत्तये राजिसाहचर्येण फणादेव राजेर्ग्रहणार्थेन भ्राजिग्रहणेनेति, तदप्यनेनैव परास्तम् । यदपि मनोरमायां 'षत्वविधौ राजइति पठित्वा सुसाधमेकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यात् 'ऋभ्राज'इत्युक्तं तदपि चिन्त्यम् । धातुसूत्र-न्यासभङ्गेन क्लिष्टत्वात् । किं चैवमनुबन्धनिर्देशाद्राराष्टि इत्यादौ षत्वानापत्तेः । अपि च भ्राजेकदेशस्य राजेर्ग्रहणं न स्यात् ऋकारस्य समुदायानुबन्धत्वात् । कथमन्यथा रमायै इत्यत्र प्रागुक्ताटश्चेति वृद्धिदूषणं भवदुक्तं सङ्गच्छेते"त्याह ह. भा. प. भास्क. प. 9. पृ. 325-326 ।

2. 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्'–अष्टा. 1/1/3. इत्यत्र परशब्दा-त्पृथगपरेतिशब्द इत्यर्थः ।

3. तथाहि–"परिभाषायां ज्ञापकं 'पूर्वपरावरदक्षिण.' (1/1/34) इतिसूत्रे परशब्दात् पृथगपरग्रहणमितिं प्रतीमः"–इत्याह ह. भा. प. भास्क. प. 9. पृ. 325 ।

## 'महाव्याहृते'रिति-शब्दः

[1]'भुवश्च महाव्याहृते'रित्यत्र 'महाव्याहृते'रितिशब्दः 'लक्षणप्रतिपदोक्तयोः [2]प्रतिपदोक्तस्यैव ग्रहण' मिति परिभाषाऽनित्येति वचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–'भुव[4]इत्यन्तरिक्षम्' [5]'भुवरित्यन्तरिक्षम्'–इत्यत्र 'भुव'सित्यन्तरक्षिवाचकाव्ययशब्दघटकसकारस्य रु-रेफेति

---

1. अष्टा. 8/2/71 ।
2. (क) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्'–व्याडिः प. सू. प. 3, पृ. 3 ।
   (ख) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य'–पु. दे. प. वृ. प. 3, पृ. 113 ।
   (ग) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य' सी. दे. बृ. प. वृ. प. 39, पृ. 208 ।
   (घ) नी. दी. प. वृ. प. 102, पृ. 311 ।
   (ङ) 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य'–ह. भा. प. भास्क. प. 41, पृ. 341 ।
   (च) भ. ना. प. शे. प. 114, पृ. 348 ।
   (छ) शेषा. प. भास्क. प. 97, पृ. 455 ।
3. तथाहि–
   (क) "लाक्षणिकत्वादेवास्य न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन महाव्याहृतिग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति–'अनित्या प्रतिपदोक्तपरिभाषे'ति । तेन क्रापयतीत्यत्र पुगागमः सिद्धो भवति, नित्यत्वे तु तस्य न स्यात्, अस्याकारान्तस्य लाक्षणिकत्वा"दित्याह जि. बु. न्या. 8/2/71 ।
   (ख) "लक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणम्–अस्याः परिभाषाया अनित्यत्वज्ञापनार्थम् । तेन क्रापयतीत्यत्र पुक् सिद्धो भवती"त्याह ह. मि. पदम. 8/2/71 ।
   (ग) "अनित्या चेयं 'भुवश्च महाव्याहृतेः' इति महाव्याहृतिग्रहणा"दित्याह भ. ना. प. शे. प. 14, पृ. 350 ।
   (घ) "अनित्या चेयम्, 'भुवश्च महाव्याहृतेः' (8/2/27) इतिसूत्रे महाव्याहृतिग्रहणात् । तद्धि भूशब्दाजसि उवङि मन्दोपस्थितिकभुवःशब्दस्य ग्रहणव्यावृत्तये क्रियते । यदीयं परिभाषा स्यात्, तर्हि तदानर्थक्यं स्पष्टमेवे"त्याह शेषा. प. भास्क. प. 97, पृ. 456 ।
   (ङ) "लाक्षणिकत्वादेवास्या ग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेन क्रापयतीत्यादौ पुक् सिद्ध्यती"त्याह ज. कृ. मौ. सुबो. वैदिक प्र. पृ. 614 ।
4. महाव्याहृतेः 'भुवस्'इत्यस्य सकारस्य 'भुवश्च महाव्याहृतेः'–अष्टा. 8/2/71, इति रुत्वपक्षे रोः 'भोभगो अघो अपूर्वस्य योशि'–अष्टा. 8/3/17, इति यादेशे 'लोपेः शाकल्यस्य'–अष्टा. 8/3/19, इतियकारलोपे 'भुव इति'–रूपमिदम् ।
5. महाव्याहृते'र्भुवस्' इत्यस्य सकारस्य 'भुवश्च महाव्याहृतेः'अष्टा. 8/2/71, इति रेफादेशपक्षे 'भो भगो.'–अष्टा. 8/3/17, इतियत्वाप्राप्तौ 'भुवरिति'रूपमिदम् ।

वाऽऽदेशाऽर्थमारब्धे '[1]महाव्याहृतेर्भुवस्, इत्येतस्य छन्दसि विषये रुर्वा रेफो वेत्यर्थकेऽस्मिन्सूत्रे '[2]भुवो विश्वेषु सवनेषु'—इत्यत्र तिङन्तभुवः सकारस्य वा रुरेफाऽऽदेशयोर्वारणाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । लाक्षणिकत्वादेव तिङन्त-भुवः सकारस्य रु-रेफाऽऽदेशयोरभावो हि 'लक्षणप्रति-पदोक्त-' परिभाषयैव सुलभः । ज्ञापिते चाऽस्मिन् वचने तिङन्तभुवः सकारस्याऽपि रुरेफादेशौ[3]कदाचिदापद्येतामिति तद्वारणार्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्यफलं '[4]क्रापयती'त्यत्र [5]पुगागमसिद्धिः । अस्य वचनस्याऽसत्त्वे हि नाऽत्र पुगामः सिद्ध्येत् । 'क्रे'त्याकारा[6]न्तस्यालाक्षणिकतया 'लक्षणप्रति-पदोक्त' परिभाषया हि पुगागमस्याऽत्र प्राप्तिरेव नाऽस्ति । अस्य वचनस्य सत्त्वे तु 'लक्षणप्रतिपदोक्त'—परिभाषायाअनित्यत्वेन [7]पुगागमोऽत्र लाक्षणिकाऽऽकारस्याऽपि सिद्ध्यति ।

## 'मा'दिति शब्दः

'[8]अदसो मा'दित्यत्र 'मा'दितिशब्दः 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः[9]'रिति परिभाषाया[10]ज्ञापकः । यतोऽस्या अभावे 'इदूदेद्[11]द्विवचनं प्रगृह्य'-

---

1. तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः, इह तु मध्यमाया ग्रहणम् । अन्तरिक्षं हि महत्, तस्य व्याहृतिः=उक्तिर्यस्मात्, तस्मान्-महाव्याहृतिर्भवति ।
2. (क) 'तिङन्तमेतद् भवतेः' छन्दसि लुङ्लङ्लिटः 'इतिवर्तमाने लङ् । सिप् । शपि गुणाऽभाव- श्छान्दसः । बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभाव''इत्याह ज. कृ. मौ. सुबो. वैदिक प्र. पृ. 614 ।
   (ख) ''भुवो विश्वस्येति । भूशब्दस्य षष्ठ्यन्तस्य पञ्चम्यन्तस्य वा प्रयोगः''इत्याह जि. वु. न्या. 8/2/71 ।
   (ग) ''भुवो विश्वेषु सवनेष्विति । तिङन्तमेतत् । भवतः 'छन्दसि लुङ् लङ् लिट' इति वर्तमाने लङ्, सिप्, शपि गुणाभावश्छान्दसः, 'बहुलं छन्दस्यमाङ्योगेऽपि'इत्यडभावः'' इत्याह ह. मि. पदम. 8/2/71 ।
3. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाऽनित्ये'ति वचनेन लक्षणप्रतिपदोक्त- परिभाषाया अप्रवृत्तावित्यर्थः ।
4. 'डु क्रीञ् द्रव्यविनिमये' धा. पा. क्र्या. 1474, इति क्रीधातोः 'हेतुमति च'—अष्टा. 3/1/26, इति णिचि 'अचोञ्णिति'—अष्टा. 7/2/115, इति धातोरीकारस्य वृद्धावैकारे 'क्रीङ्जीनां णौ'—अष्टा. 6/1/48, इतिऐकारस्य आत्वे 'अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां-पुङ्णौ'—अष्टा. 7/3/36, इतिपुगागमे ण्यन्ताल्लटि ति शपि गुणेऽयादेशे च कृते रूपमिदम् ।
5. 'अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातांपुङ्णौ'—अष्टा. 7/3/36, इत्यनेनेतिशेषः ।
6. 'क्रीङ्जीनांणौ'—अष्टा. 6/1/48, इति आत्वनिष्पन्नस्येत्यर्थः ।
7. 'अर्ति-ह्री.'—अष्टा. 7/3/36, इत्यनेनेतिशेषः ।
8. अष्टा. 1/1/12 ।
9. (क) पु. दे. ल. प. वृ. प. 24, पृ. 122 ।
   (ख) सी. दे. बृ. प. वृ. प. 14, पृ. 175 ।
   (ग) नी. दी. प. वृ. प. 19, पृ. 296 ।

मिति सूत्रे ईदूतोरेवाऽनुवृत्तेः सुलभतया 'अमुकेऽत्रेत्यत्रैकारस्य प्रगृह्यत्वाऽभावायै-दित्यस्याऽननुवृत्त्यर्थमुपात्तोऽयं शब्दोऽत्र[1] व्यर्थः । ज्ञापितायां चाऽस्यामनया 'ए'दित्यस्याप्यनुवृत्तेरत्र दुर्वारतया तदनुवृत्त्यभावाय शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । नहि मात्परः क्वचनैकारोऽस्तीत्यसम्भवात्तदनुवृत्तिरिह न भवति । तदनुवृत्तौ हि 'अमुकेऽत्रेत्यत्राऽनेन प्रगृह्यसंज्ञाऽऽपत्तिर्दुवारा स्यात् । ज्ञापिताया अस्याः फलमनित्यत्वं चाऽस्या अत्र प्रबन्धेऽन्यत्र[2] निरूपितमतो नेहोपन्यस्ते ।

## 'य'गिति शब्दः

[3]'न दुहस्नुनमां यक्चिणा'विति सूत्रे यगितिशब्दः 'भवति कर्मकर्तरि य'गिति वचनस्य ज्ञापकः[4] । यतोऽस्य वचनस्याभावेऽत्र यगितिशब्दः कर्मकर्तरि यकः

---

(घ) 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः'–ह. भा.प.भास्क. प. 14, पृ. 327 ।

(ङ) भ. ना. प. शे. प. 18, पृ. 111 ।

(च) शेषा. प. भास्क. प. 17, पृ. 401 ।

10. तथाहि–

(क) "मात् किम् ? अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेतेत्युक्त्या ज्ञापकत्वम-स्यैतस्यां सूचयति–भ. दी. वै. सि. कौ. प्रकृतिभाव प्र. पृ. 58 ।

(ख) "ज्ञापकजिज्ञासायां तु 'ईदूदेद् द्विवचनं प्रगृह्य'मित्यत्र ईदूदित्येतन्मात्रानुवृत्त्यैव सिद्धा-वेकाराननुवृत्त्यर्थक्रियमाणम् 'अदसोमा'–दित्यत्र माद्ग्रहणमेवेत्याह म. म. जयदेव मिश्रः प. शे. विजयायाम् प. 18, पृ. 112 ।

11. अष्टा. 1/1/11 ।

1. अदस् शब्दात् 'अव्ययसर्वनाम्नामकच् प्राक्टेः'–अष्टा. 5/3/71 इत्यकचि अदकस् शब्दा-ज्जसि त्यदाद्यत्वे पररूपे, जसः श्यादेशे'आद्गुणः'–अष्टा. 6/1/87, इति गुणे उत्वे मत्वे च रूपमिदम् ।

2. हनः सिच्'–अष्टा. 1/2/14, 'आर्धधातुकस्येड्वलादेः 'अष्टा. 7/2/32, इतिसूत्रांश-सिजिटो-र्ज्ञापकत्वनिरूपणावसरे'इत्यर्थः ।

3. अष्टा. 3/1/89 ।

4. तथाहि–

(क) "अथवाचार्यप्रवृत्तिर्ज्ञापयति भवति कर्मकर्तरि य'गिति, यदयं 'न दुहस्नुनमां यक्-चिणा'विति प्रतिषेधं शास्ति"–इत्याह पत. व्या. म. भा. 3/1/4/67 ।

(ख) "यग्विधाने कर्मकर्त्तर्युपसंख्यानम् । विप्रतिषेधाद्धि यकः शपो वलीयस्त्वम् । क्रियते कटः स्वयमेव । पच्यते ओदनः स्वयमेव"–इतिग्रन्थेन ज्ञापकत्वमस्य वचनेऽस्मिन् सूचयति जया का. 3/1/67 ।

(ग) "ज्ञापकात् कर्मकर्त्तर्यपि यग्भविष्यति । किं तज्ज्ञापकम् ? 'न दुहस्नुनमां यक्चिणौ' इतिप्रतिषेधः । यदि हि कर्मकर्तरि यग् न स्यात् प्रतिषेधोऽनर्थकः स्या"दित्याह जि. बु. न्या. 3/1/67 ।

(घ) " 'न दुहस्नुनमां यक्चिणौ'इति यक्प्रतिषेधो ज्ञापयति–भवति कर्मकर्तरि यगिती"त्याह ह. मि. पदम. 3/1/67 ।

(ङ) "सार्वधातुके यक् (सू. 3/1/67) । 'न दुहस्नुनमां यक्चिणौ' (सू. 3/1/89) इति प्रतिषेधाज् ज्ञापकात् भवति कर्मकर्तरि यक्" इत्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 159 ।

प्रतिषेधार्थमुपात्तो व्यर्थः । नहि भाववाचिनि कर्मवाचिनि च सार्वधातुके परे विधीयमानो [1]यक् कर्मकर्तरि लकारे परे 'दुग्धे[2] गौः पयः स्वयमेव'–इत्यादौ प्राप्नोतीत्यसावत्र व्यर्थः । ज्ञापिते चाऽस्मिन्वचने कर्मकर्तरि लकारे यक् प्राप्नोतीति तत्प्रतिषेधार्थमत्रसूत्रे यगितिशब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं '[3]पच्यते ओदनः स्वयमेव'–इत्यादौ यकः[4] सिद्धिः । अस्य वचनस्यासत्त्वे हि कर्तकर्तरि शबत्र[5] दुर्वारः स्यात् ।

अथात्र "'कर्मवत्[6]कर्मणा तुल्यक्रियः'–इत्यतिदेशाद् यक्सुलभ इति न ज्ञापितवचनाऽपेक्षाऽस्ति, नापि यक्शब्दस्याऽत्र ज्ञापकत्वं सम्भवति, यतोऽसावतिदेश-[7]लभ्यस्य यकः प्रतिषेधाय चरितार्थ इति नाऽसौ व्यर्थः"इति शङ्का न कार्या । यतः शङ्केयं समाहितचरा[8] । तथाहि 'कर्तरिशप्'[9]–इत्यस्याऽवकाशः–शुद्धः कर्ता, भवतीति, '[10]सार्वधातुके यक्'इत्यस्याऽवकाशः–शुद्धं कर्म, पच्यतओदन इति, पच्यत–ओदनः स्वयमेवेत्यत्र [11]कर्मवद्भावाद् यक्[12] प्राप्नोति, वत्करणात्[13] स्वाश्रयमपि यथास्यादिति कर्तृत्वस्य सम्भवाच्छबपि[14], तत्र परत्वाच्छबेव स्यात् । अतो नैतद्वचनं विना यगत्र सम्भवति । वचस्यैतस्याऽभावे कर्मकर्त्तरि कर्मवद्भावादपि पूर्वोक्तरीत्या यको दुर्लभतया तत्प्रतिषेधार्थमुपात्तोऽत्र सूत्रे यक्शब्दो व्यर्थ इति ज्ञापकत्वमप्यस्यात्रवचने चारु घटते । नचैवं कथं यग्विधाने कर्मकर्तर्युपसंख्यानम् । विप्रतिषेधाद्धि यकः शपो बलीयस्त्व'मित्युक्ति[15]र्जयादित्यस्य संघटते ? अत्रोच्यते-तत्रोपसंख्यानमित्यस्य प्रतिपादनमित्यर्थः, प्रतिपादनं च ज्ञापकोपादानमेव ।

---

1. 'सार्वधातुके यक्'–अष्टा. 3/1/67 ।
2. 'दुह प्रपूरणे' धा. पा. अदा. 1014, इतिदुह्धातोः कर्मकर्तरि लटि ते 'न दुह.'–अष्टा. 3/1/89, यको निषेधे कर्त्तरि शपि 'अदिप्रभृतिभ्यः शपः' अष्टा. 2/4/72, इति शपो लुकि घत्व-धत्व-जश्त्वेषु कृतेषु रूपमिदं सिद्ध्यति, गौः स्वयमेव पय उत्सृजती'त्यर्थः ।
3. 'डुपचष्पाके' धा. पा. भ्वा. 996, इति पच्धातोः कर्मकर्तरि लटि ते यकि टितष्टेरेत्वे रूपमिदम्, ओदनकर्तृकः पाक' इत्यर्थः ।
4. 'सार्वधातुके यक्'–अष्टा. 3/1/67 ।
5. 'कर्त्तरि शप्'–अष्टा. 3/1/68 ।
6. अष्टा. 3/1/87 ।
7. 'कर्मवत् कर्मणा तुल्यक्रियः'–अष्टा. 3/1/87 ।
8. न्या. 3/1/67 ।
9. अष्टा. 3/1/68 ।
10. अष्टा. 3/1/67 ।
11. 'कर्मवत्कर्मणा तुल्यक्रियः'–अष्टा. 3/1/87 ।
12. 'सार्वधातुके यक्'–अष्टा. 3/1/67 ।
13. 'कर्मवत्.'–अष्टा. 3/1/87, इत्यत्रेतिशेषः ।
14. 'कर्त्तरि शप्'–अष्टा. 3/1/68 ।
15. का. 3/1/67 ।

[1]विप्रतिषेधाद्धि शपो बलीयस्त्वमित्युक्तिर्हि शास्त्राऽतिदेशमभ्युपेत्य संघटते । वस्तुतस्तु न त्वसौ शास्त्राऽतिदेशः, किन्तर्हि ? कार्याऽतिदेशः । कार्याऽतिदेशसूत्रमेव स्वतन्त्रं यगादेः कार्यस्य विधायकम्, तच्च परम्, अतो विप्रतिषेधाद्यक एव बलीयस्त्वं युक्तमिति ज्ञापकत्वमस्य शास्त्राऽतिदेश-पक्षाऽभिप्रायक'मिति मन्ये ।

## 'यज्ञे'ति शब्दः

'[2]क्रतुयज्ञेभ्यश्चे' त्यत्र 'यज्ञे'तिशब्दः 'क्रतुशब्दः सोमयागेष्वेव रूढः' इतिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्र सूत्रे क्रतुयज्ञयोः पर्यायतया क्रतुग्रहणेनैवेष्टसिद्धौ यज्ञेतिशब्दो व्यर्थः । ज्ञापिते चाऽस्मिन्वचनेऽसोमयागेभ्योऽपि 'पाञ्चौदनिकः' 'दाशौदनिकः'—इत्यादौ [4]ठञ्प्रत्ययसिद्धये 'यज्ञे'तिशब्दः स्वांशे चरितार्थोभवति । ज्ञापितस्याऽस्य वचनस्य फलं तु क्रतुशब्देन सोमयागस्यैवाऽत्र ग्रहणमिति प्रतिभाति ।

## 'य'न्नितिशब्दः

[5]'ब्राह्मण-माणव-वाडवाद्य'न्नित्यत्र यन्नितिशब्दः 'ब्राह्मणाऽऽदिभ्योऽन्येभ्योऽपि यन् भवती'तिवचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः ।तथाहि –

---

1. 'विप्रतिषेधे परं कार्यम्'—अष्टा. 1/4/2 ।
2. अष्टा. 4/3/68 ।
3. तथाहि–
   (क) " 'क्रतुभ्यः'—इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्—पाञ्चौदनिकः । दाशौदनिकः" इति ग्रन्थेन ज्ञापकत्वं सूचयति—जया. का. 4/3/68 ।
   (ख) (4/3/68) पृ. 78 ।
4. 'क्रतुयज्ञेभ्यश्च'—अष्टा. 4/3/68 ।
5. अष्टा. 4/2/42 ।
6. तथाहि –
   (क) "किमर्थं ब्राह्मणादिभ्यो यन् विधीयते, न यञ्प्रकृतस्सोऽनुवर्तिष्यते, नह्यस्ति विशेषो ब्राह्मणादिभ्यो यनो वा यञो वा तदेव रूपं स एव स्वरः ? एवंतर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्यो'ऽन्येभ्योऽप्ययं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? यन्प्रकरणे पृष्ठादुपसंख्यानं चोदयिष्यति तत्र वक्तव्यं भवती"त्याह पत. व्या. म. भा. 4/2/1/41 ।
   (ख) "किमर्थं पुनर्ब्राह्मणादिभ्यो यन् विधीयते, न प्रकृतौ यञेव विधीयते, नहि वृद्धेषु यञो यनो वा विशेषोऽस्ति - तदेव रूपम्, स एव स्वरः, ठञस्त्वस्वरितत्वादननुवृत्तिः ? ज्ञापकाऽर्थं तु । एतज्ज्ञापयात – 'अन्येभ्योऽप्ययम् ' । किं सिद्धं भवति ? पृष्ठादुपसंख्यानं चोदयिष्यति, तत्र वक्तव्यं भवती"त्याह ह. मि. पदम. 4/2/42 ।
   (ग) "ब्राह्मण-माणव - (सू. 4/2/42) । यञ्प्रकृते यन्विधानं - ज्ञापयति- अन्येभ्योऽप्ययमिती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. । पृ. 165 ।

'ब्राह्मणानां समूहो [1]ब्राह्मण्यम्' '[2]माणव्यम्' '[3]वाडव्यम्' - इत्येतेषां प्रयोगाणां सिद्ध्यर्थमारब्धे 'ब्राह्मणाऽऽदिभ्यः शब्देभ्यो यन्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन् विषये' - इत्यर्थकेऽस्मिन्सूत्रेऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । [4]'केदाराद्यञ्चे'तिसूत्रादत्र सूत्रे यञोऽनुवृत्त्या यञ्प्रत्ययविधानेनैव 'ब्राह्मण्य'-मित्यादिप्रयोगाणां सिद्धि र्हि सुलभा । न च यञि प्रत्यये सत्यादिवृद्धिर्भवेन्नतु यनिप्रत्यये कृते, इत्यस्ति यञ्यनो विशेष इति शङ्क्यम् । यतो [5]वृद्धसंज्ञकभ्यो ब्राह्मण - माणव - वाडव - शब्देभ्यो यञि आदिवृद्धिकृतो न कश्चन विशेषः संभवति । नाऽपि च स्वाराऽर्थं यन्प्रत्ययविधानायाऽत्राऽयं शब्दश्चरितर्थ इति शङ्क्यम् । यतो यञिप्रत्यये कृतेऽपि ब्राह्मण्यमित्यत्र ञित्वात् स एव स्वरः सुलभः । न च यञि प्रत्यये कृते स्त्रियां '[6]यञश्चे'ति ङीप् स्याद्, यनि तु नेति विशेषः शङ्क्यः । यतो '[7]यञश्चे'ति सूत्रेण अपत्याऽधिकारीययञन्तादेव ङीप् भवति न तु यञन्तमात्रादित्युक्तं भट्टोजिदीक्षितेन[8] । नच [9]ठञ्[10]वुञोऽ सम्बन्धार्थमत्राऽयं शब्दश्चरितार्थ इत्यपि शङ्कनीयम् । यतोऽ[11]स्वरितत्वे [12]योगविभागसामर्थ्याच्च [13]ठञः, चानुकृष्टत्वाच्च[14]वुञोऽसम्बन्धोऽस्य शब्दस्याऽभावेऽपि सुलभः । ज्ञापिते चाऽस्मिन्वचने 'पृष्ठानां समूहः 'पृष्ठ्य'मित्यत्र [15]आदिवृद्ध्यभावाय शब्दोऽयमत्र

---

1. ब्राह्मणानां समूह इत्यर्थे बाह्मणशब्दात् 'ब्राह्मण.' - अष्टा. 4/2/42, इति यन्प्रत्यये 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलोपे तद्धितान्ताद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. माणवानां समूह इत्यर्थे माणवशब्दात् 'ब्राह्मण.' - अष्टा. 4/2/42, इतियन् प्रत्यये पूर्वप्रयोगवदिदंरूपम् ।
3. वाडवानां समूह इत्यर्थे वाडवशब्दात् 'ब्राह्मण.' - अष्टा. 4/2/42 , इतियन्प्रत्यये पूर्वप्रयोगवदिदं रूपम् ।
4. 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117 ।
5. 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' - अष्टा. 1/1/73 ।
6. अष्टा. 4/1/16 ।
7. अष्टा. 4/1/16 ।
8. तथाहि – "अनपत्याधिकारस्थत्वान्न ङीप् । द्वीपे भवा द्वैप्या । अधिकारग्रहणात् (नेह) दैवस्यापत्यं दैव्या । 'देवाद्यञञा'विति यञ् प्राग्दीव्यतीयो, न त्वपत्याधिकारपठितः" वै. सि. कौ. स्त्रीप्रत्यय प्र. 270-271 ।
9. 'ठञ् कवचिनश्च' - अष्टा. 4/2/41 ।
10. 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' - अष्टा. 4/2/39 ।
11. 'स्वरितेनाधिकारः' - अष्टा. 1/3/11 ।
12. 'ठञ्कवचिनश्च' - अष्टा. 4/2/41, 'ब्राह्मणमाणववाडवाद्यन्' - अष्टा. 4/2/42 , इतियोगद्वयकरणसामर्थ्यादित्यर्थः ।
13. 'ठञ्कवचनिश्च' - अष्टा. 4/2/41 ।
14. 'गोत्रो.' - अष्टा. 4/2/39 ।
15. 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117 ।

स्वांऽशे चरिताऽर्थो भवति, यनि प्रत्यये हि नाऽऽदिवृद्धिः[1] प्राप्नोति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'पृष्ठादुपसंख्यान'मिति वार्तिकस्याऽकरणजन्यं लाघवम् । यनूविधाने हि ज्ञापितेनाऽनेन वचनेनैव 'पृष्ठ्य'मित्यत्राऽपि वार्तिकमिदं विनाऽपि यनूप्रत्ययःसुलभः । जिनेन्द्रबुद्धिस्तु ज्ञापकत्वभस्य न स्वीकरोति । यतोऽत्रसूत्रे [2]'ठञ्कवचिनश्चे'तिसूत्रादनुवृत्तात् चकारादनुक्तसमुच्चयाऽर्थकादेव 'पृष्ठ्य'मित्यत्र पृष्ठाद् यनूप्रत्ययः सुलभ इति वार्तिकमिदं न स्वतन्त्रं, किन्तु चकारलब्धाऽर्थानुवादकमेवेति [3]मन्यते । फलतौल्याद् यद्यपीदं जिनेन्द्रबुद्धिमतमप्यत्र युक्तं प्रतिभाति, तथाऽपि [4]भाष्यविरोधात् जिनेन्द्रबुद्धिमतमिदमुपेक्ष्यम् । तत्र हि शब्दस्याऽस्यैतद्वचनज्ञापकत्वमेवोक्तम् ।

## 'युक्ते' इति शब्दः

'न च [5]वाहाहैवयुक्ते' - इत्यत्र 'युक्ते' - इतिशब्दः 'अन्यत्र युक्तयुक्तेऽपि प्रतिषेधो भवती'ति वचनस्य ज्ञापकः[6] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो

---

1. 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117 ।
2. अष्टा. 4/2/41 ।
3. तथाहि –
   "पृष्ठादुपसंख्यानमिति । पृष्ठशब्दाद् यनूप्रत्ययस्योपसंख्यानं = व्याख्यानं कर्तव्यमित्यर्थः । तत्रेदं व्याख्यानम्– पूर्वसूत्रादिह चकारोऽनुवर्तते, स चाऽनुक्तसमुच्चयाऽर्थः, तेन पृष्ठशब्दादपि भविष्यती" त्याह जि बु. न्या. 4/2/42 ।
4. व्या. म. भा. 4/2/41, इतिसूत्रस्थज्ञापकतापराभाष्यविरोधादित्यर्थः ।
5. अष्टा. 8/1/24 ।
6. तथाहि –
   (क) "युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् । युक्तयुक्ते प्रतिषेधो न भवति । ग्रामश्च ते स्वम्, नगरं च मेस्वम्" इति-ग्रन्थेन ज्ञापकत्वमस्मिन्वचनेऽस्य शब्दस्य सूचयति - वाम. का. 8/1/24 ।
   (ख) "ननु च साक्षाद्योगप्रतिपत्त्यर्थं युक्तग्रहणम् - युक्तयुक्ते माभूदित्येवमर्थं कथं क्रियते, नच चादियोगे प्रतिषेध उच्यमानो युक्तयुक्ते प्राप्नोति, नहि पश्यादिभिर्युक्तयुक्तेन योगः स चादियोगो भवति, तत् किं साक्षाद्योगप्रतिपत्त्यर्थेन युक्तग्रहणेन ? एवंतर्ह्येतदेव युक्तग्रहणं - ज्ञापयति - इह प्रतिषेधकाण्डे युक्तयुक्तेऽपि प्रतिषेधो भवति । तेनोत्तरसूत्रे यद्वक्ष्यते - 'पश्यार्थैर्युक्तयुक्तेऽप्रतिषेधः 'इति तदुपपन्नं भवती"त्याह जि. बु. न्या. 8/1/24 ।
   (ग) "वान्नावादिनिषेधविधौ 'तृतीययैव (तृतीयस्यैव) युक्तार्थे 'लब्धे' न चवाहाहैव युक्ते (8/1/24) इति युक्तपदं ज्ञापयति - 'आन्यत्र युक्तयुक्तेऽपि निषेधो भवतीति । तेन पश्यार्थैश्चानालोचन इति (8/1/25) ग्रामस्तव स्वं समीक्ष्यागत इति अत्राऽपि निषेधः सिद्ध्यती' त्याह पु. दे. ज्ञा. समु. एकोनत्रिंशत्तमे सर्वपादे पृ. 95 ।
   (घ) "युक्तग्रहणमनर्थकम्, तृतीयानिर्देशत एव सिद्धम्, यथा 'तुल्यार्थैरतुलोपमाभ्याम्' इत्यत्र ? इत्यत आह - युक्तग्रहणमिति । यदा युष्मदस्मदर्थगतान् समुच्चयादींश्चादयो द्योतयन्ति, तदा तैस्तयोः साक्षाद्योगः, तत्रैवायं प्रतिषेधो यथा स्यात्, युक्तयुक्ते माभूदित्येवमर्थं युक्तग्रहणमित्यर्थः । एतदेव युक्तग्रहणं लिङ्गम् - अत्र प्रकरणे युक्त-

व्यर्थः । तथाहि – 'हरिस्त्वां मां च रक्षतु' 'कथं त्वां मां वा न रक्षे'दित्यादौ[1] – 'त्वामौ [2]द्वितीयायाः' – [3]इत्यादिसूत्रैः प्राप्तानां त्वामाऽऽद्यादेशानां[4] प्रतिषेधार्थमारब्धे 'चा[5]ऽऽदिपञ्चकयोगे वांनावादय[6] आदेशा न स्यु'रित्यर्थकेऽस्मिन्सूत्रे परम्परासम्बन्धे– 'हरो [7]हरिश्च मे स्वामी'त्यादौ 'मे' इत्यादीनामादेशानां प्रतिषेधाऽभावाऽर्थमुपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । न हि युक्तार्थलाभाऽर्थमत्राऽयं शब्द इतिशङ्क्यम् । यतो[8]'वृद्धो यूने'त्यादिवत्तृतीयं येव[9] युक्तशब्दं विनाऽप्यत्र तदर्थलाभः सुलभः । ज्ञापिते चाऽस्मिन्वचनेऽस्य निषेधस्य साक्षाद् योगे एव प्रवृत्तिर्न तूत्तरसूत्रवत्[10] परम्परायोगेऽपि प्रवृत्तिरित्येतदर्थं शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । तेन 'हरो हरिश्च मे स्वामी'त्यादौ परम्परासम्बन्धे 'मे' - इत्याद्यादेशाः सिद्ध्यन्ति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'भक्तस्तव रूपं ध्यायती'त्यादौ परम्परयाऽचाक्षुषज्ञानाऽर्थकधातुसम्बन्धेऽपि [11]'पश्यार्थैश्चाऽनालो-

---

युक्तस्यापि ग्रहणमिति तेनोत्तरः प्रतिषेधो युक्तयुक्तेषु भवती"त्याह ह. मि. पदम. 8/1/24 ।

(ङ) "परम्परासम्बन्धेऽप्ययं निषेधः" इतिग्रन्थेन ज्ञापकत्वमस्मिन्वचनेऽस्य शब्दस्य सूचयति भ. दी. वै. सि. कौ. हलन्तपुंलिङ्ग प्र. पृ. 213 ।

(च) "पूर्वसूत्रस्थ - 'युक्त' ग्रहणेन ज्ञापितमेतद् भवत्यन्यत्र परम्परासम्बन्धेऽपि निषेध इती"त्याह ज्ञा. भि. त. बो. हलन्तपुंलिङ्गप्र. पृ. 213 ।

1. अत्रादिपदेन – 'हरि र्युवामावां च रक्षतु', हरिर्युष्मानस्मांश्च रक्षतु', 'ग्रामस्तव च स्वम्', 'ग्रामो मम च स्वम्' 'ग्रामो युवयोश्च स्वम्', 'ग्राम अवयोश्च स्वम्', 'ग्रामो युष्मकं च स्वम्', 'ग्रामोऽस्माकं च स्वम्', 'ग्रामस्तुभ्यं च दीयते', 'ग्रामो मह्यं च दीयते, 'ग्रामो युवाभ्यां च दीयते' 'ग्राम आवाभ्यां च दीयते', ग्रामः युष्मभ्यं च दीयते', 'ग्रामोऽस्मभ्यं च दीयते', कथं युवाम् आवां वा न रक्षेत्' 'कथं युष्मान् अस्मान् वा न रक्षेत्', इत्यादयो ग्राह्याः ।
2. अष्टा. 8/1/23 ।
3. अत्राऽऽदिपदेन 'तेमयावेकवचनस्य' - अष्टा. 8/1/22, 'युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोर्वान्नावौ' -अष्टा. 8/1/20, 'बहुवचनस्य वस्नसौ' - अष्टा. 8/1/21, इतिग्राह्यम् ।
4. अत्रादिपदेन 'वां' नौ' 'वस्' 'नस्' इतिग्राह्यम् ।
5. 'समुच्चयाऽर्थकस्य 'च' - शब्दस्य, विकल्पकाऽर्थकस्य 'वा'शब्दस्य, अद्भुताऽर्थकस्य 'हा' - शब्दस्य, खेदाऽर्थकस्य 'अह' शब्दस्य, अवधारणाऽर्थस्य 'एव' शब्दस्य च योगे' इत्यर्थः ।
6. अत्राऽऽदिपदेन – 'वस्' 'नस्' 'त्वा' 'मा' इतिग्राह्यम् ।
7. 'अत्र 'च'शब्दस्य हरिहरयोः साक्षादन्वयः, समुच्चितयोर्हरिहरयोः स्वामीत्यत्राऽन्वयः, 'स्वामी'त्यस्य 'मे'इत्यनेनाऽन्वयः, ततश्च चशब्दस्य अस्मच्छब्देन साक्षादन्वयाऽभावान्मेआदेशस्य निषेधो न भवति ।
8. 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' - अष्टा. 1/2/65 ।
9. अत्राऽऽदिपदेन – 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' - अष्टा. 2/3/72 ।
10. 'पश्यार्थैश्चाऽनालोचने' - अष्टा. 8/1/25 ।
11. अष्टा. 8/1/25 ।

चने'- इत्यनेन 'ते' [1]इत्याद्यादेशानां प्रतिषेधसिद्धिः । अस्य वचनस्याऽसत्त्वे हि [2]'पश्यार्थैश्चानालोचने' - इत्यनेन 'चेतसा त्वां मां समीक्षते'[3]इत्यादावेव साक्षादचाक्षुषज्ञानार्थकधातुयोगे त्वामाऽऽद्यादेशानां[4] प्रतिषेधः स्यात्, परम्परयाऽचाक्षुषज्ञानाऽर्थकैर्ध्यैप्रभृतिभिर्धातुभिर्योगे 'भक्तस्तव रूपं ध्यायती'त्यादौ 'ते[5]' [6]इत्याद्यादेशानां निषेधोन स्यात् ।

## 'युगप'दितिशब्दः

'[7]तवै चान्तश्च युगप'दित्यत्र युगपदिति शब्दः 'युगपदनेकस्वरो न भवती'ति वचनस्य ज्ञापक[8]: । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि - '[9]अन्वेतवै'- इत्यादौ तवैप्रत्ययान्तस्याऽन्तोदात्तत्वमनन्तरस्य गतिसंज्ञकस्य पूर्वपदस्य प्रकृतिस्वरं च विधातुमारब्धे 'तवैप्रत्ययान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद् भवती'त्यर्थकेऽस्मिन्सूत्रे युगपदनेकस्वरं विधातुमुपात्तोऽयं शब्दोऽत्राऽस्य वचनस्याऽभावे व्यर्थः । अत्राऽस्य शब्दस्याऽभावेऽपि एकस्मिन्पदे एककाले विशेधाऽभावादनेकस्वरसिद्धिर्हि सुलभा । ज्ञापिते चाऽस्मिन्वचने 'अन्वेतवै' - इत्यादौ प्रत्ययस्वरगति-स्वरयोर्युगपत्प्रवृत्त्यर्थमत्राऽयंशब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं त्वन्यत्र युगपत्स्वराभावः । अस्य वचनस्यासत्त्वे हि युगपदनेकस्वरस्याऽन्यत्राऽप्यापत्तिर्दुवारा स्यात् । जिनेन्द्रबुद्धि - हरदत्तमिश्र - जयकृष्णमौनिनस्तु 'युगपदित्ययंशब्दः पर्यायनिवृत्त्यर्थ इति [10]मन्वाते । [11]भाष्यविरोधान्नाऽमीषाम्मतं युक्तमिति मन्ये ।

---

1. अत्राऽऽदिपदेन 'मे' 'वां' 'नौ' 'वस्' 'नस्' - इतिग्राह्यम् ।
2. अष्टा. 8/1/25 ।
3. अत्राऽऽदिपदेन 'ग्रामस्तव स्वं समीक्ष्याऽऽगतः' - 'ग्रामो मम स्वं समीक्ष्याऽऽगतः, 'ग्रामस्तुभ्यं दीयमानं समीक्ष्याऽऽगतः' 'ग्रामो मह्यं दीयमानं समीक्ष्याऽऽगतः' - इत्यादि ग्राह्यम् ।
4. 'अत्राऽऽदिपदेन 'ते' 'मे' 'वां' 'नौ' 'वस्' 'नस्' – इति - ग्राह्यम् ।
5. 'तेमयावेकवचनस्य' - अष्टा. 8/1/22 ।
6. अत्राऽऽदिपदेन 'त्वामौ द्वितीयायाः' - अष्टा. 8/1/23, 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' - अष्टा. 8/1/20, इतिग्राह्ये ।
7. अष्टा. 6/2/51 ।
8. तथाहि -
   (क) "यदयं 'तव चान्तश्च युगप'दिति सिद्धे यौगपद्ये यौगपद्यंशास्तितज् ज्ञापयत्याचार्यो - 'न युगपत्स्वरो भवतीती"त्याह पत. व्या. म. भा. 6/1/6/158 ।
   (ख) "अनुदात्तंपदम् (6/1/158) । यदयं 'तवैचान्तश्च युगपत्' (सू. 6/2/51) इतिसिद्धे यौगपद्ये यौगपद्यं शास्ति तज् - ज्ञापयति न युगपत्स्वरो भवतीती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 177 ।
9. 'अनुपूर्वात् 'इण् गतौ' - धा. पां. अदा. 1045, इति इधातोः 'कृत्यार्थे तवैकेन्यत्वनः' अष्टा. 3/4/14, इति तवैप्रत्यये आर्धधातुकलक्षणे गुणे रूपमिदम् ।
10. तथाहि–

## 'य्वो'रितिशब्दः

'अचिश्नुधातुभ्रुवां [1]य्वोरियङुवङा'वित्यत्र 'य्वो'रिति शब्दः 'इण्प्रत्याहारः परेण णकारेणैवे'ति वचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽर्धमात्रालाघवेन[3] इण इत्युक्तेऽपीवर्णोवर्णयोरेव ग्रहणं सुलभमिति तयोरेव ग्रहणार्थ-मुपात्तो-'य्वो[4]'रिति-गुरुशब्दो व्यर्थः । ज्ञापिते चाऽस्मिन्वचनेऽत्र इण इति लघु-शब्दोपादाने ऋकारादीनामपि ग्रहणस्याऽऽपत्तिः स्यादिति तदापत्तिवारणाय गुरु-

---

(क) "युगपद्ग्रहणं पर्यायनिवृत्त्यर्थ'मित्याह जि. बु. न्या. 6/2/51 ।

(ख) "युगपदिति पर्यायनिवृत्त्यर्थ"मित्याह ह. मि. पदम. 6/2/51 ।

(ग) "कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्ते ? शृणु । प्रकृत्येति वर्तते । तत्रैवमभिसम्बन्धः क्रियते, तवैप्रत्ययान्तस्य यः प्रकृत्याश्रयः स्वरः प्राप्तः सोऽन्त्यस्य भवतीति, स चोदांत्त एवेति युगपद्ग्रहणं पर्यायनिवृत्त्यर्थ"मित्याह ज. कृ. मौ. सुबो. समास स्वरप्र. पृ. 669-670 ।

11. तथाहि – "यद 'रिक्ते विभाषे'ति सिद्धे पर्यये पर्यायं शास्ति तज् - ज्ञापयत्याचार्यो -'न पर्यायो भवतीती"त्याह पत. व्या. म. भा. 6/1/6/158 ।

1. अष्टा. 6/4/77

2. तथाहि -

(क) "इण्ग्रहणेषु तर्हि सन्देहः । 'असन्दिग्धम्' । परेण, न पूर्वेण । कुत एतत् ?। 'य्वोरन्यत्र परेणेणग्रहणात्' । यत्रेच्छति-पूर्वेण, संमृद्यग्रहणं तत्र करोति – 'य्वो'-रिति । तच्च गुरु भवति । कथं कृत्वा ज्ञापकम् ? तत्र विभक्तिनिर्देशे समृद्यग्रहणे चादर्धचत स्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज् ज्ञापयत्याचार्यः 'परेण, न पूर्वेणे'तीत्याह पत. व्या. म. भा. 1/1/2 मा. सू. 6 ।

(ख) "अथ 'इणः षीध्वम्' - इत्यत्रेकारेणास्य ग्रहणं न भवतीति कुतोऽवसितम् ? 'अचिश्नु धातुभ्रुवांय्वोः' इतीकारोकारयोः संमृज्य - निर्देशात् । यदीकारेणास्य ग्रहणं स्यात् ततो लाघवार्थम्, 'इण्' - इत्येव निर्दिशेत् । 'य्वोः' इति संमृज्य निर्देशेऽर्धचतस्रो मात्रा भवन्ति, इणिति निर्देशे तिस्रः, तत्र लघीयसा न्यासेन सिद्धे यद्गरीयांसं प्रयत्न मारभते ततो ज्ञायते नास्य णकारस्येकारेण ग्रहणं भवतीती"त्याह जि. बु. न्या. प्रत्याहार प्र. वृ. 21, 'अइउण्' ।

(ग) "अथ 'इणः षीध्वम्' इत्यादाविकारेण ग्रहणं कस्मान्न भवति ? 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ'इत्यत्रेकारोकारयोर्द्वयोः स्वरूपेण निर्देशाद् । अन्यथा हि 'इणः' इतिब्रूया"दित्याह ह. मि. पदम. प्रत्याह प्र. पृ. 21, 'अइउण्' ।

(घ) " 'इण' इति वक्तव्ये 'य्वो'रिति गुरुनिर्देश 'इण्प्रत्याहारः परेणैव णकारेण गृह्यत' इति ज्ञापनार्थः' "इत्याह ज्ञा. भि. त. बो. अजन्तपुंलिङ्ग ग प्र. पृ. 137 ।

(ङ) "इण् परेणैव । 'अचिश्नुधातु' (सू. 6/4/77) इति सूत्रे इण इत्येव सिद्धे य्वोरित्युक्तेर्ज्ञापका"दित्याह श्रीना. ज्ञा. सं. 1. पृ. 12 ।

3. इणः इत्यत्र हि इकारस्यैका, णकारस्याऽर्धम्, अकारस्यैका, विसर्गस्याऽर्धमितितिस्रो मात्राः ।

4. य्वोरित्यत्र हि यकारवकारयोरेका मात्रा, ओकारस्य द्वे मात्रे विसर्गस्यार्धमात्रा इति आहत्य सार्धास्तिस्रो मात्रा भवन्ति ।

शब्दोऽयं स्वांऽशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'इणः [1]षः' इत्यादावीकारस्याऽपि ग्रहणात् - 'गोषक्त'मित्यादौ षत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि इणः पूर्वणकारेण ग्रहणे ओकारस्य इणृत्वाऽभावान्नाऽत्र[2]षत्वं सिद्ध्येत् ।

## 'रधे'रितिशब्दः

[3]नेट्यलिटि रधे'रितिसूत्रे 'रधे'रितिशब्दः 'प्रतिपदविधानाद् योगविभागो [4]गरीया'निति परिभाषाया [5]ज्ञापकः । यतोऽस्या अभावे " 'जभोऽचि' 'रधेः' - 'नेट्यलिटि[6]' " - इति सूत्रत्रयेण '[7]रन्धकः' '[8]जम्भकः' '[9]रधिता' - इत्यादीष्ट-प्रयोगाणां सिद्धेः सुलभतयाऽत्र 'रधे'रिति शब्दो व्यर्थः । ज्ञापितायां चाऽस्यां लाघ-वायाऽत्र 'रधी'तिशब्दः स्वांऽशे चरितार्थो भवति । ज्ञापिताया अस्याः फलं तु 'पूङः क्त्वा[10]च' इत्यत्र योगविभागे 'न क्त्वा[11]सेट्' इति क्त्वाग्रहणं प्रत्याख्यातं तद्

---

1. अष्टा. 8/3/39 ।
2. 'इणः षः' - अष्टा. 8/3/39, इत्यनेनेतिशेषः ।
3. अष्टा. 7/1/62 ।
4. (क) व्याडिः प. सू. प. 74, पृ. 31 ।
   (ख) पु. दे. ल. पृ. वृ. प. 98, पृ. 153 ।
   (ग) सी. दे. बृ. प. वृ. प. 110, पृ. 110 ।
   (घ) नी. दी. प. वृ. प. 138, पृ. 316 ।
   (ङ) ह. भा. प. भास्क. प. 112, पृ. 369 ।
5. तथाहि - "प्रतिपदपाठात् सत्यामर्थसिद्धौ योगविभागः क्रियमाणो गुरुतरो भवति । कथं ज्ञायते । यदयं 'नेट्यलिटि रधेः' (7/1/62) इत्याह । कथं कृत्वा ज्ञापकम् । अत्र सूत्रे रधिग्रहणं न कर्तव्यम् । जभेरचिनुम् भवति । ततो रधेश्च नुम् भवति । अचीत्येव । ततो नेट्यलिटीत्येव । रधेरित्येव । पुनारधिग्रहणं न कर्तव्यम् । एवं सिद्धे सति यद्रधिग्रहणं करोति तत्पश्यति गुरुतरमेव भवति । कथम् । अक्रियमाणे रधिग्रहणे योगो भवति । प्रतिपदविधानाद्योगविभागो गरीयानिति । किमेतस्या ज्ञापने प्रयोजनम् । 'पूङः–क्त्वा च' (1/2/22) इत्यत्र योगविभागे 'न क्त्वा सेट्' - (1/2/18) इति क्त्वाग्रहणं प्रत्याख्यातं तद् गुरु भवति । तन्माभूदिति - क्त्वाग्रहणमेव क्रियते" - इत्याह व्याडिः प. सू. प. 74, पृ. 32 ।
6. अष्टा. 7/1/61-62 ।
7. 'रध हिंसासंराध्योः' धा. पा. दिवा. 1270 इतिरधूधातोः 'ण्वुल्तृचौ' - अष्टा. 3/1/133, इतिण्वुलि 'युवोरनाकौ' - अष्टा. 7/1/1 इति वोरकादेशे 'रधिजभोरचि' - अष्टा. 7/1/61, इतिनुमि रूपमिदम् ।
8. 'जभ जृभी गात्रविनामे' धा. पा. भ्वा. 415, इतिजभूधातोः ण्वुलि अकादेशे 'रधिजभोरचि' - अष्टा. 7/1/61, इतिनुमि रूपमिदम् ।
9. 'रध हिंसासंराध्योः' धा. पा. दिवा. 1270 इतिरधूधातोर्लुटि तिपि तासिप्रत्यये तिपो डादेशे 'नेट्यलिटि रधेः' - अष्टा. 8/4/62, इतिनुमः प्रतिषेधे रूपमिदम् ।
10. अष्टा. 1/2/22 ।
11. अष्टा. 1/2/18 ।

गुरु भवति, तन्माभूदित्येतदर्थं यत् कृतमिह कृत्वाग्रहणं दाक्षीपुत्रेण तस्योपपत्तिः । भाष्यविरोधादस्य ज्ञापकत्वमस्यां न युक्तम् । यतो भगवता 'इमौ द्वौ प्रतिषेधावुच्येते – उभौ शक्याववक्तुम् । कथम् । एवं वक्ष्यामि 'इटि लिटिरधेर्नुम्, (इटि लिटि रधेर्नुम् भवतीति) । तन्नियमार्थं भविष्यति - 'लिट्येवेडादौ नान्यस्मिन्निडादा- 'वितीत्युक्तम्[1] ।

पुरुषोत्तमदेव-सीरदेवाभ्यां नाऽस्या ज्ञापकत्वं रोचते[2] । नीलकण्ठहरि- भास्कराभ्यां परिभाषैव न युक्तेति निरूपितम्[3] ।

## 'राजन्य-मनुष्ये'ति शब्दौ

'[4]गोत्रोक्षोष्ट्रोरभ्रराज राजन्य राजपुत्रवत्समनुष्याजाद्वुञ्'त्यत्र 'राजन्यमनुष्ये'ति- शब्दौ '[5]अपत्याधिकारादुत्तरं गोत्रग्रहणं [6]लौकिकगोत्रपरं न तु पारिभाषिक- गोत्र[7]पर[8]'- मिति वचनस्य [9]ज्ञापकौ । यतोस्य वचनस्याभावे शास्त्रीयगोत्रस्य[10]

---

1. व्या. म. भा. 7/1/2/62 ।
2. आभ्यां हि - क्रमशः प्रतिपदविधानाच्छब्दमुच्चार्य विधानाद् योगविभागो बलीयान् । अतो योगविभागे लाघवेनैव सिद्धे किमर्थं ग्रन्थगौरवकारि प्रतिपदविधानमिति च न चोदनीयमित्यर्थः । गरीयस्त्वं च योगविभागस्य यौक्तमेव । तथा ह्येकयोगे ग्रन्थगौरवेप्यैकैव वाक्यार्थप्रतीतिरुपादीयते । योगविभागे तु प्रतियोगं भिन्नबुद्ध्युदयाद् व्यक्तं प्रतिपत्ति- गरीयस्त्वम् । एतेन - 'जभोऽचि' 'रधेः' 'नेट्यलिटि' (7/1/61-62) इतिसूत्रत्रयेण सिद्धौ किमर्थं द्विः रधिग्रहणमिति न वाच्य"मित्युक्तम् - पु. दे. ल. प. वृ. प. 98, पृ. 153 । " 'प्रतिपदविधानाद् योगविभागो गरीयान्' । तेन 'जभोऽचि' 'रधेश्च' 'नेट्यलिटि.' (7/1/61-62) सूत्रत्रयेण सिद्धौ किमर्थं द्वीरधिग्रहणमिति न पूर्वपक्षणीयमिति । गरीयस्त्वं च योगविभागस्य युक्तमेव । तथा ह्येकयोगे ग्रन्थगौरवेऽप्येकैव वाक्यार्थप्रतीतिरुदेति भिन्नयोगे प्रतियोगं भिन्नबुद्ध्युदयाद् व्यक्तं प्रतिपत्तिगौरवमिती"त्युक्तम् - सी. दे. बृ. प. वृ. प. 110, पृ. 264 ।
3. तथाहि– "इयं निर्मूला, तत्र तत्र योगविभागमाश्रित्य सूत्रप्रत्याख्यानपरभाष्य-विरुद्धा चे"त्युक्तं नी. दी. प. वृ. प. 138, पृ. 316 ।
" 'प्रतिपदविधानाद् योगविभागो गरीयान्' । तेन 'जभोऽचि' 'रधेश्च' 'नेट्यलिटि' इति न्यासेन एकस्य रधिग्रहणस्य न वैयर्थ्यमिति सीरदेवः । तन्न । एवं हि योगविभागमाश्रित्य पदप्रत्याख्यानं भाष्योक्तमसङ्गतं स्यात् ..... तस्माद् युक्तैवेयं परिभाषे"त्युक्तं ह. भा. प. भास्क. प. 112, पृ. 369 ।
4. अष्टा. 4/2/39 ।
5. 'तस्यापत्यम्' - अष्टा. 4/1/92 ।
6. प्रवराऽध्याये परिगणितं पुत्रपौत्राऽऽदि कृत्स्नाऽत्यपरमित्यर्थः ।
7. 'अपत्यं पौत्रप्रभृति गोत्रम्' - अष्टा. 4/1/162 ।
8. प्रवराऽध्यायेपरिगणितं पुत्रपौत्राऽऽदि कृत्स्नाऽपत्परपरमित्यर्थः ।
9. तथाहि –
(क) "यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'लौकिकं परं गोत्र- ग्रहणं'मिति । युवा च लोके 'गोत्रमित्युपचर्यते - किङ्गोत्रोऽसि माणवक ?,

ग्रहणेऽत्रेमौ शब्दौ व्यर्थौ । तथाहि - '[11]औपगवकम्' – '[12]औक्षकम्' '[13]औष्ट्रकम्' '[14]औरभ्रकम्' – '[15]राजकम्' – '[16]राजन्यकम्' '[17]राजपुत्रकम्' '[18]वात्सकम्' –

---

गार्ग्यायणः । किङ्गोत्रोऽसि माणवक ? वात्स्यायनः" इत्याह पत. व्या. म. भा. 6/1/3/90 ।

(ख) "प्राग् गोत्रसंज्ञाया 'गोत्रे कुञ्जादिभ्य'इत्यतो गोत्रग्रहणानुवर्तनाच्छास्त्रीयगोत्राभिधायिनौ राजन्यमनुष्यशब्दौ, ततश्च गोत्रग्रहणेनैव ताभ्यां वुञ्सिद्धत्वात् किं तयोर्ग्रहणेन ? गृहीतो तु ज्ञापयतो - 'गोत्र-ग्रहणं लौकिक-गोत्रंपर'मिति । राजन्यमनुष्यशब्दौ च लौकिके प्रयोगे जातिविशेषवाचित्वाल्लौकिकगोत्राभिधायिनौ न भवत इति कर्तव्यं तयोर्ग्रहणम् । लौकिकं च गोत्रमपत्यमात्रम्" - इत्याह कै. प्रदी. 6/1/3/90 ।

(ग) "अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं नतु पौत्र'प्रभृत्येवे"ति ग्रन्थेन ज्ञापकत्वमस्मिन् वचनेऽनयोः शब्दयोः सूचयति जया. का. 4/2/39

(घ) "गोत्रोक्षोष्ट्रोरभ्रेत्यत्र (4/2/39) अनन्तरापत्यार्थं क्रियमाणं राजन्यग्रहणं ज्ञापयति - 'अपत्याधिकारे गोत्रश्रुत्या लौकिकगोत्रं न गृह्यत'इति । लौकिक-ग्रहणे ह्यत्र गोत्र-ग्रहणादेव राजन्यशब्दस्यापि वुञ्सिद्धः अपत्यमात्रस्य लौकिक-गोत्रत्वात् । अनेन च - 'अपत्याधिकारादन्यत्रापि प्रत्ययविधौ लौकिकं गोत्रं गृह्यत इति ज्ञापयते । तेनाणिञोरनार्षयोरित्यत्र (4/1/78) कण्वादिभ्यो गोत्रे (4/2/111) इञश्च (4/2/112) इत्यत्र लौकिकगोत्रग्रहणे युवप्रत्ययान्तत्वात् पाणिनिशब्दात् अण् न भवति छ एव भवति पाणिनीया इति । पाणिनिशब्दो हि पाणिनस्याऽपत्यमिति वृद्धस्य च पूजायामिति (4/1/166) गोत्रस्यैव युवसंज्ञायां युवापत्ये अत इञन्तः । इदं तावद्वार्तिककारदर्शनम् । स हि राजन्यशब्दस्यापत्यार्थमभ्युपेत्य-'प्रकृत्याके राजन्यमनुष्ययुवान' (6/4/163वा.) इति 'आपत्यस्य च तद्धिते नाऽतीति (6/4/154) यलोपनिवृत्तये प्रकृतिभावमारभते" इत्याह पु. दे. ज्ञा. समु. चतुर्दशे रक्तपादे पृ. 77-78 ।

(ङ) "लौकिकमिह गोत्रं, तच्चाऽपत्यमात्र'मितिग्रन्थेन ज्ञापकत्वमस्मिन्वचनेऽस्य शब्दस्य सूचयति भ. दी. वै. सि. कौ. तद्धिते रक्ताद्यर्थ प्र. ।

(च) "यूनि लुक् (सू. 4/1/90) । 'गोत्रोक्षोष्ट्र' (सू. 4/2/39) इतिवुञ्विधौ राजन्यमनुष्यग्रहणं ज्ञापकं लौकिकं परं गोत्रमिति । युवा च लोके गोत्रमित्युपचर्यते । किं गोत्रोऽसि माणवक ? गार्ग्याणः" - इत्याह श्रीना. ज्ञा. सं. 4, पृ. 78 ।

10. 'अपत्यं पौत्रप्रभृति गोत्रम्' - अष्टा. 4/1/162, इत्यस्येत्यर्थम्' - अष्टा. 4/1/92 ।

11 उपगोरपत्यमित्यर्थे षष्ठ्यन्तात् समर्थादुपगुशब्दात् 'तस्यापत्यम् इत्यणि तद्धितान्त-प्रातिपदिकत्वात् 'सुपोधातुप्रातिपदिकयोः' - अष्टा. 2/4/71, इति षष्ठ्या विभक्तेर्लुकि 'उपगु + अ' - इत्यवस्थायाम् 'तद्धितेष्वचामादेः' अष्टा. 7/2/117, इत्यादूयचो वृद्धौ गोरुकारस्य 'ओर्गुणः' अष्टा. 6/4/146, इतिगुणे ओकारेऽवादेशे औपगवशब्दो निष्पद्यते । अथाऽत्र 'उपगु + अ' - इत्यवस्थायाम् 'ओर्गुणः' - अष्टा. 6/4/146, इतिओर्गुणात्परत्वात् 'अचोञ्णिति' - अष्टा. 7/2/115, इतिवृद्धिः स्यात्, ओर्गुणस्य 'पशव्य' - इत्यादौ चरितार्थत्वात् । कृते च गुणेऽवादेशे सति 'अत उपधायाः' - अष्टा. 7/2/116, इतिवृद्धि-र्दुर्वारा, त्वष्टुरपत्यं त्वाष्ट्रः, मघवतोऽपत्यं माघवत इत्यादौ गुणाऽप्रसक्त्या अन्त्योपधा-वृद्ध्योर्निर्वाधत्वाच्च । न च परत्वादादिवृद्धौ अन्त्योपधावृद्धी बाध्येते इतिवाच्यम्, विप्रतिषेधे हि परस्य पूर्वबाधकता, न चेह विप्रतिषेधोऽस्ति, देशभेदेनोभयसंभवात् । नाप्यन्त्योपधा-वृद्ध्योरपवाद आदिवृद्धिरिति वक्तुं शक्यं, सुश्रुतोऽपत्यं सौश्रुत इत्यादौ अन्त्योपधा-वृद्ध्योरप्यादिवृद्धेः प्रवृत्तेः, तस्मादादिवृद्धिस्थलेऽन्त्योपधावृद्धी स्याता'मितिशङ्क्यम् । यतोऽत्र 'अचोञ्णिति' - अष्टा. 7/2/115, इत्यन्त्यवृद्धिम् 'अत उपधायाः' - अष्टा.

'[19]मानुष्यकम्' – '[20]आजक' मित्यादौ'तस्य [21]समूहः' इत्यधिकृत्य समूहेऽर्थे गोत्र-वाचकाद् उक्षोष्ट्रोरभ्रराज - राजन्य - राजपुत्र - वत्स - मनुष्य शब्देभ्यश्च

---

7/2/116, इत्युपधावृद्धिं च आदिवृद्धिर्बाधते । तक्रकौण्डिन्यन्यायात् सत्यपि संभवे हि बाधनं भवति । न चाऽत्र मानाऽभावः शङ्क्यः, अनुशतिकादीनां च' - अष्टा. 7/3/20, इत्युभयपदवृद्ध्यर्थमनुशतिकादिगणे पुष्करसच्छब्दपाठ एव मानम् । यतो यदि आदिवृद्धिरन्त्योपधावृद्धी न बाधेत, तदा आदिवृद्ध्या उपधावृद्ध्या च पौष्करसादेः । सिद्धत्वादनुशतिकादौ पुष्करसच्छब्दपाठोऽनर्थकः स्यात् । इत्थमुपगोरपत्यमित्यर्थे 'औपगवः' इत्येव साधु भवतीति निश्चीयते । ततः औपगवानां समूह इत्यर्थे गोत्रवाचकात् औपगवशब्दात् षष्ठ्यन्तात् 'गोत्रो.' -' अष्टा. 4/2/39, इति वुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकादेशे प्रातिपदिकत्वे विभक्तेः षष्ठ्या लुकि 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलोपे तद्धितान्तत्वात् विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

12. उक्षाणां समूह इत्यर्थे षष्ठ्यन्तादुक्षञ्शब्दात् 'गोत्रो.' - अष्टा. 4/2/39, इतिवुञि 'युवोरनाकौ' - अष्टा. 7/1/1, इति वोरकाऽऽदेशे विभक्तेर्लुकि-'नस्तद्धिते' - अष्टा. 6/4/144, इति टिलोपे 'तद्धितेष्वाचामादेः' - अष्टा. 7/2/117, इत्याद्यचो वृद्धौ तद्धितान्तत्वाद् विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

13. उष्ट्राणां समूह इत्यर्थे उष्ट्रशब्दात् षष्ठ्यन्तात् 'गोत्रो.' - अष्टा. 4/2/39, इतिवुञि वोरकाऽऽदेशे विभक्तेर्लुकि अकारस्य 'यस्येति च' - अष्टा. 6/4/148, इतिलोपे ञित्त्वाद् आद्यचो वृद्धौ तद्धितान्तत्वाद् विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

14. उरभ्राः - मेषाः, तेषां समूह इत्यर्थे उरभ्रशब्दात् षष्ठ्यन्तात् 'गोत्रो.' - अष्टा. 4/2/39. इतिवुञि वोरकाऽऽदेशे विभक्तेर्लुकि अकस्य लोपे ञित्त्वादाद्यचो वृद्धौ तद्धितान्तत्वाद् विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

15. राज्ञां समूह इत्यर्थे राजञ्शब्दात्-षष्ठ्यन्तात् 'गोत्रो.' - अष्टा. 4/2/39, इति वुञि वोरकाऽऽदेशे विभक्तेर्लुकि 'नस्तद्धिते' - अष्टा. 6/4/44, इति टिलोपे ञित्त्वादाद्यचो वृद्धौ तद्धितान्तत्वाद् विभक्तिकार्येषु रूपमिदम् ।

16. राज्ञोऽपत्यमित्यर्थे षष्ठ्यन्तात् राजञ्शब्दाद् 'राजश्वशुराद्यत्' - अष्टा. 44/1/137, इति क्षत्रियजात्यर्थेयत्प्रत्यये विभक्तेर्लुकि 'नस्तद्धिते' - अष्टा. 6/4/144, इति टेर्लोपे प्राप्ते 'ये चाऽभावकर्मणोः' - अष्टा. 6/4/168, इति प्रकृतिभावेन टिलोपाऽभावे तद्धितान्तत्वाद्विभक्तिकार्येषु कृतेषु 'राजन्यः' - इतिरूपम् । ततो राजन्यानां समूह इत्यर्थे षष्ठ्यन्ताद् राजन्यशब्दात् 'गोत्रो.' - अष्टा. 4/2/39, इतिवुञ्प्रत्यये वोरकाऽऽदेशे विभक्तेर्लुकि 'आपत्यस्य च तद्धितेऽनाति' - अष्टा. 6/4/151, इति प्राप्तस्य यलोपस्य 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' - वा. वै. सि. कौ. रक्ताद्यर्थ प्र. पृ. 622, इति प्रकृतिभावाभावे 'यस्येति च' - अष्टा. 6/4/148. इत्यकारलोपे ञित्वादाद्यचो वृद्धौ. तद्धितान्तत्वाद्विभक्तिकार्येषु च कृतेषुरूपमिदम् ।

17. राजपुत्राणां समूह इत्यर्थे षष्ठ्यन्ताद् राजपुत्रशब्दात् 'गोत्रो.' - 4/2/39, इति वुञि वोरकाऽऽदेशे विभक्तेर्लुकि 'यस्येति च'- अष्टा. 6/4/148, इत्यकारलोपे तद्धितान्तत्वाद्विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

18. वत्सानां समूह इत्यर्थे षष्ठ्यन्ताद् वत्सशब्दात् 'गोत्रो.' - अष्टा. 4/2/39 इतिवुञि वोरकाऽऽदेशे विभक्तेर्लुकि 'यस्येति च' - अष्टा. 6/4/148. इत्यकारलोपे तद्धितान्तत्वाद्विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

19. मनुशब्दाज्जात्यर्थे 'मनोर्जातावञ्यतौ षुक् च' - अष्टा. 4/1/161 इति यत्प्रत्यये तत्सन्नियोगेन षुगागमे मनुष्यशब्दस्ततो मनुष्याणां समूह इत्यर्थे मनुष्यशब्दात् षष्ठ्यन्तात्

वुञ्प्रत्ययविधानाऽर्थमारब्धे 'गोत्राऽऽदिभ्यो वुञ्प्रत्ययो भवति 'तस्यसमूहः' इत्येतस्मिन् विषये' - इत्यर्थकेऽस्मिन्सूत्रे 'राजन्यकम्' 'मानुष्यकम्' - इत्यत्र वुञर्थमिमौ शब्दावुपात्तौ । तौ चाऽस्य वचनस्याऽभावे व्यर्थौ । गोत्रत्वादेवाऽभ्यां शब्दाभ्यां हि गोत्रग्रहणेनैव वुञ्प्रत्ययः सुलभः । ज्ञापिते चाऽस्मिन् वचने राजन्यमनुष्यशब्दौ लौकिकप्रयोगे जातिविशेषवाचितया लौकिक गोत्रवाचकौ न भवत इति गोत्रग्रहणेनाऽनयोर्ग्रहणं न भवतीति ताभ्यां वुञ्प्रत्ययविधानायाऽत्रेमौ शब्दौ स्वांऽशे चरिताऽर्थौ भवतः । ज्ञापितस्याऽस्य वचनस्य फलं तु 'प्रागुदीव्य-तोऽधिकारे यूनो – [1]वृद्धवदतिदेशः' इति[2]वार्तिकस्याऽकरणजन्यं लाघवम् । तथाहि – 'गार्ग्यायणानां समूहः गार्ग्यायणक'मित्यत्र[3]फको [4]युवप्रत्ययस्य गोत्रवद्भावं[5] विना 'गोत्रोक्षोष्ट्रोरभ्रे'[6]ति समूहाऽर्थे वुञ् न सिद्ध्येयदिति युवप्रत्ययस्य गोत्रवद्भावाऽर्थं वार्तिकमिदमारब्धम् । ज्ञापितस्याऽस्य वचनस्य सत्त्वे हि युवापत्यार्थकफक्[7]-प्रत्ययान्तस्याऽपि गार्ग्यायणशब्दस्य लौकिकगोत्राऽर्थकत्वेन गोत्रवद्भावाऽतिदेशं विनाऽपि गोत्रग्रहणेन ग्रहणं भवतीति, ततः समूहाऽर्थे [8]वुञ् सुलभ इति - गोत्रवदतिदेशो नाऽऽवश्यक इति वार्तिकमिदमनारम्भरणीयं भवति ।

जिनेन्द्रबुद्धि – हरदत्तौ तु सूत्रेऽस्मिन् इमौ शब्दौ 'राजन्यमनुष्ययोर्यकारस्य किञ्चिदपत्याश्रितं कार्यं न भवती'ति वचनस्य ज्ञापकौ । यतोऽस्य वचनस्याऽ-भावेऽपत्यार्थकप्रत्ययाऽन्ततया गोत्रग्रहणेनैवाऽनयोरपि राजन्यमनुष्ययोर्ग्रहणं सुलभ-मिति वुञर्थमुपात्ताविमावत्र व्यर्थौ । ज्ञापिते चाऽस्मिन्वचनेऽपत्यकार्यस्याऽऽभ्यां वुञो दुर्लभतया तदर्थमत्रेमौ शब्दौ स्वांऽशे चरिताऽर्थौ भवतः । ज्ञापितस्याऽस्य वचनस्य

---

'गोत्रो.' - अष्टा. 4/2/39, इतिवुञ वोरकादेशे विभक्तेर्लुकि ञित्वादादृयचोवृद्धौ 'आपत्यस्य च तद्धिते नाति' - अष्टा. 6/4/151, इति प्राप्तस्य यलोपस्य 'प्रकृत्याऽके राजन्य-मनुष्ययुवानः' वा. वै. सि. कौ. रक्ताद्यर्थ प्र. पृ. 622, इतिप्रकृतिवद्भावे 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलोपे तद्धितान्तत्वाद् विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

20. अजानां समूह इत्यर्थे अजशब्दात् षष्ठ्यन्तात् 'गोत्रो.' - अष्टा. 4/2/39, इतिवुञि वोरकाऽऽदेशे विभक्तेर्लुकि ञित्वादाद्यचो वृद्धौ तद्धितान्तत्वाद्विभक्तिकार्येषु च कृतेषु रूपमिदम् ।

21. 'राजश्वशुराद्यत्' - अष्टा. 4/1/137, 'राज्ञोऽपत्ये जातिग्रहणम्' - वा. का. 4/1/137, 'मनोर्जाता वञ्यतौ षुक्च' - अष्टा. 4/1/161, इत्युक्तेरितिशेषः ।

1. "गोत्रवदित्यर्थः । अन्यथा गोत्रसंज्ञाया युवसंज्ञया बाधितत्वाद्गोत्राश्रयकार्याऽप्रसङ्गः' - इत्याह कै. प्रदी. 4/1/3/90 ।
2. व्या. म. भा. 4/1/3/90 ।
3. गर्गस्याऽपत्यं गोत्रमित्यर्थे गर्गशब्दात् षष्ठ्यन्ताद् 'गर्गादिभ्यो यञ्' - अष्टा. 4/1/105, इति यञि विभक्ते लुंकि आदयचो वृद्धावकारलोपे च कृते निष्पन्नाद्गार्ग्यशब्दात् षष्ठ्यन्ताद् गार्ग्यस्यापत्यं युवेत्यर्थे 'यञिञोश्च' - अष्टा. 4/1/101, इतिविहितस्येत्यर्थः ।
4. 'जीवति तु वंश्ये युवा' - अष्टा. 4/1/163 ।
5. 'प्रागुदीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः' - वा. व्या. म. भा. 4/1/3/90 इतिविहितमित्यर्थः ।
6. अष्टा. 4/2/39 ।
7. 'यञिञोश्च' - अष्टा. 4/1/101 ।
8. 'गोत्रो.' - अष्टा. 4/3/39 ।

फलं तु 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' [1]इतिवार्तिकस्याऽनारम्भजन्यं लाघवम् । अस्य वचनस्याऽसत्त्वे हि वार्तिकमिदमारम्भणीयं स्यात् । यतो 'राजन्यकम्' 'मानुष्यक'मित्यत्र 'आपत्यस्य च तद्धितेऽनाऽति'[2] - इत्यनेन यलोपस्य दुर्वारतया तद्वारणाय वार्तिकमिदमावश्यकं भवति । सति चाऽस्मिन्वचनेऽनेन यलोपस्य प्राप्तिरेव नाऽस्तीति तद्वारणाय वार्तिकमिदमनावश्यकं भवतीति मन्वाते[3] । तथ्यमिदं पुरुषोत्तमदेवोऽपि प्रतिपादयति[4] ।

---

1. वा. वै. सि. कौ. रक्ताद्यर्थ प्र. पृ. 622, वा. का. 4/2/39 ।
2. अष्टा. 6/4/151 ।
3. तथाहि –
   (क) 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति । यद्येवम्, गोत्रग्रहणेनैतस्य सिद्धत्वाद् राजन्यमनुष्ययोरुपादानमनर्थकम् ? नैतदस्ति, नहि तौ गोत्रप्रत्ययान्तौ, जातेः प्रत्ययार्थत्वात् । यद्येवम्, लोपस्य प्राप्तिरेव नास्ति, तत्र यदुक्तम् - 'प्रकृत्याऽके राजन्यमनुष्ययुवानः ' इतियलोपो न भवतीति, तदनर्थकं स्यात् ? एतत् - पुनरेकीयमतमाश्रित्योक्तम् । केचिदाचार्या राजन्यमनुष्ययोरपत्य - प्रत्ययान्तत्वमिच्छन्ति, अतस्तन्मतमाश्रित्यैतदुक्तमित्यदोषः, तन्मतेन तर्हि राजन्य-मनुष्ययोर्ग्रहणमनर्थकं स्यात् ? ज्ञापनार्थत्वात् । तेनैतद् ज्ञाप्यते – राजन्यमनुष्ययोर्यकारस्य किञ्चिदपत्याश्रितं कार्यं न भवतीति । किं पुनस्तत् ? आपत्यव्यपदेशम् । तेन राजन्यकम्, मानुष्यकमिति – अत्रापि 'आपत्यस्य च तद्धितेऽनाति'इतियलोपो न भवतीति । तथा सूत्रोपात्त एव राजन्यमनुष्ययोः प्रकृतिभावः 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इत्यनेनाख्यायत इतिवेदितव्य''मित्याह जि. बु. न्या. 4/2/39 ।
   (ख) ''अपत्याधिकारादन्यत्रेति । यद्येवम्, राजन्यमनुष्ययोरुपादानमनर्थकम्, गोत्र इत्येव सिद्धम् । न तावदपत्यप्रत्ययान्तौ, जातेः प्रत्ययार्थत्वात् । उक्तं हि – 'राज्ञोऽपत्ये जाति ग्रहणम्, मनोर्जातावञ्यतौ षुक्चेति । किं तर्ह्युच्यते 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति - यलोपो न भवतीति, यावताऽनपत्ययकारत्वेनैव न भविष्यति ? सत्यम्, अपत्यार्थत्वमभ्युपेत्यैतदुच्यते । यद्यपत्यार्थमभ्युपेयते, राजन्यमनुष्ययोर्ग्रहणमनर्थकम् ? नानर्थकम्, ज्ञापनार्थत्वात्, एतज्ज्ञापयति नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' - इति न वक्तव्य''मित्याह ह. मि. पदम. 4/2/39 ।
4. तथाहि – '' ..................... नैयायिकास्तु गोत्रोक्षेत्यत्र प्रत्ययविधावपि क्वचिल्लौकिक-गोत्रग्रहणमाश्रित्य गोत्रग्रहणेनैव सिद्धौ राजन्यग्रहणस्यापत्यप्रत्ययान्तकार्यनिवृत्तिः प्रयोजनमाहुः । तेन प्रकृत्याक इति प्रकृतिवद्भावोस्य न वक्तव्यो भवति । एतदेव नैयायिकदर्शनं तत्र वृत्तौ लिखितम् अपत्याधिकारादन्यत्र प्रत्ययाधिकारे लौकिकं गोत्रं गृह्यत इति । 'कण्वादिभ्यो गोत्रे' (4/2/111) 'इञश्च' (4/2/112) 'अणिञोरनार्षयो'रित्यत्र (4/1/78) च कृत्रिमाकृत्रिम-न्यायेन पारिभाषिकमेव गोत्रं गृह्यत इति । अपत्याधिकारे तु तस्यापत्यमित्यनुवृत्तौ अपत्या-धिकारादेवापत्यमात्रे लौकिकगोत्रस्य ग्रहणे सिद्धे 'गोत्रे कुञ्जादिभ्य' (4/1/98) इत्यादौ गोत्र-ग्रहणादेव शास्त्रीयगोत्रपरिग्रहणमिती''त्याह पु. दे. ज्ञा. समु. चतुर्दशे रक्तपादे पृ 78 ।

इत्थमत्र यद्यपि जातेः प्रत्ययाऽर्थत्वे प्रथमवचनस्यैव, जातेरप्रत्ययाऽर्थत्वे द्वितीयवचनस्यैव शब्दाविमौ ज्ञापकाविति लभ्यते, तथापि [1]भाष्यप्रामाण्यात् प्रथमवचनस्यैव-'राजन्यमनुष्ये'तिशब्दौ ज्ञापकाविति निश्चीयते ।

## 'री'ङिति शब्दः

'रीङ्ऋतः'[2]इतिसूत्रे 'री'ङितिशब्दः [3]'अङ्गवृत्ते पुनर्वृतावविधि' रितिपरिभाषाया ज्ञापकः[4] । यतोऽस्या अभावेऽत्र रिङ्विधानेऽपि [5]'मात्रीयती'त्यादीनाम् - [6]'अकृत्सार्वधातुकयोर्दीर्घः' इतिदीर्घे कृते सिद्धिः सुलभा । ज्ञापितायां चाऽस्यामङ्गकार्ये रिङादेशे कृतेऽनया 'मात्रीयती'त्यादौ दीर्घो[7] न प्राप्नोतीत्येषां प्रयोगाणां सिद्ध्यर्थं 'री'ङितिशब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलमत्रैवाऽन्यत्र[8] निरूपितमतो नेह प्रतन्यते ।

## 'रूप'मिति शब्दः

[9]'स्वं रूपं शब्दस्याशब्दसंज्ञे'त्यत्र 'रूप'मितिशब्दः 'अर्थवद्ग्रहणे- [10]नानर्थकस्ये'-तिपरिभाषाया ज्ञापकः[11] । यतोऽस्याभावे रूपमित्यसौ शब्दोऽत्र व्यर्थः । तथाहि –

---

1. व्या. म. भा. 6/1/3/90 ।
2. अष्टा. 7/4/27 ।
3. (क) 'अङ्गवृत्तेपुनर्वृत्तादविधिर्निष्ठितस्य' - व्याडिः प. सू. प. 34, पृ. 17 ।
   (ख) 'अङ्गवृत्तेरपुनर्वृत्तादविधिर्निष्ठितस्य' - पु. दे. ल. प. वृ. प. 71, पृ. 143 ।
   (ग) 'अङ्गवृत्तेपुनर्वृत्तादविधिर्निष्ठितस्य' - सी. दे. बृ. प. व. प. 91, पृ. 248 ।
   (घ) नी. दी. प. वृ. प. 86, पृ. 309 ।
   (ङ) ह. भा. प. भास्क. प. 80, पृ. 361 ।
   (च) भ. ना. प. शे. प. 93, पृ. 327 ।
   (छ) शेषा. प. भास्क. प. 80, पृ. 445 ।
4. (क) "एवं 'रीङ्ऋतः' (7/4/27) इत्यत्र च दीर्घोच्चारणमत्रार्थे ज्ञापक"मित्याह पु. दे. ल. प. 71, पृ. 143 ।
   (ख) रीङ्ऋतः (सू. 7/4/27) रीङितिदीर्घोच्चारणम् अङ्गवृत्तपरिभाषाया ज्ञापक"मित्याह श्रीना. ज्ञा. सं. 7, पृ. 128 ।
5. मातरमिवाचरतीत्यर्थे मातृशब्दाद्द्वितीयान्तात् 'उपमानादाचारे' - अष्टा. 3/1/10, इति क्यचि ऋकारस्य 'रीङ्ऋतः' - अष्टा. 7/4/27, इतिरीङादेशे सनाद्यन्तत्वेन धातुत्वाल्लटि तिपि शपि पररूपे रूमिदम् ।
6. अष्टा. 7/4/25 ।
7. अष्टा. 7/4/25 ।
8. 'जा' इति शब्दस्य ज्ञापकत्वनिरूपणावसर इत्यर्थः ।
9. अष्टा. 1/1/68 ।
10. (क) व्याडिः- प. सू. प. 1, पृ. 1 ।

(ख) पु. दे. ल. प. वृ. प. 1, पृ. 112 ।
(ग) सी. दे. बृ. प. वृ. प. 9, पृ. 170 ।
(घ) नी. दी. प. वृ. प. 11, पृ. 295 ।
(ङ) 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहण'मिति - ह. भा. प. भास्क. प. 9, पृ. 323 ।
(च) भ. ना. प. शे. प. 15, पृ. 98 ।
(छ) 'शेषा. प. भास्क. प. 14, पृ. 397 ।

11. तथाहि –

(क) "इदं तर्हि ज्ञापकम् - 'स्वं रूपं शब्दस्याशब्दसंज्ञा' (1/1/68) इति । अत्र रूपग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अस्मिन् सूत्रे रूपग्रहणं न कर्तव्यम् । स्वंशब्दस्येत्येव सिद्धम् । नहि शब्दस्य स्वरूपमन्यदतो ब्रूयात् । पश्यत्याचार्यः यदन्यच्छब्दस्य स्वम् । किं पुनस्तत् । अन्यदर्थः । तेनेह न रूपं गृह्यते । अन्यत्र चार्थवान् गृह्यते नानर्थकः । किं कृतं भवति । अर्थवद्ग्रहणे नानर्थकस्येतिपरिभाषा कर्तव्या भवति । किमेतस्या ज्ञापने प्रयोजनम् । काशे कुशे बभ्रुशे इति प्रगृह्यसंज्ञा न भवति इती"त्याह व्याडिः प. 1, पृ. 2 ।

(ख) "रूपग्रहणं किमर्थम् । न 'स्व'शब्दस्याशब्दसंज्ञा भवतीत्येव रूपंशब्दस्य संज्ञा भविष्यति । नह्यन्यत् स्वंशब्दस्यास्त्यन्यदतो रूपात् । एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः - अस्त्यद्रूपात्स्वं शब्दस्येति । किं पुनस्तत् ? अर्थः । किमेतस्या ज्ञापने प्रयोजनम् ? । 'अर्थवद्ग्रहणे नानर्थकस्येत्येषा परिभाषा न कर्तव्या भवती"त्याह भगवान् पतञ्जलिः व्या.म. भा. प. 1/1/9/67 पृ. 516-517 ।

(ग) "तत्रास्याः प्रमाण्ये 'स्वंरूपम्' (1/1/68) इति स्वरूपग्रहणं - ज्ञापकम् । तत्रह्युक्तं शब्दप्रतीतावुपदेशानपेक्षत्वादसाधारणत्वान्नित्यसम्बन्धित्वाच्च स्वरूपमेव प्रत्यासन्नं नार्थो विपर्ययात् । अतः स्वरूपग्रहणादेव रूपपरिग्रहे सिद्धे व्याकरणे रूपवदर्थोप्यङ्गीक्रियत इति रूप - ग्रहणमिति । रूपवदर्थोऽप्यङ्गीक्रियत इति अर्थवान् शब्दो - गृह्यते इति अर्थवद्ग्रहणपरिभाषाया एवायमर्थः संपद्यते" इत्याह पु. दे. ल. प. वृ. प. 1 पृ. 112 ।

(घ) "इयं परिभाषा 'स्वंरूपम्' (1/1/68) इत्यत्र भाष्ये ज्ञापिता । तत्र ह्युक्तम् । रूपग्रहणं न कर्तव्यम् । स्वंशब्दस्येत्युच्यमाने यद्यपि शब्दस्य रूपमर्थश्च संभवति तथापि रूपमेव ग्राह्यं नार्थः । यतः शब्दोच्चारणे रूपप्रतिपत्तिरादौ ततोऽर्थप्रतिपत्तिः । तथा शब्दोनुकरणकालेऽर्थं जहाति न रूपम् । तदेवम्प्रत्यासन्नबुद्धित्वादहेयत्वेन् नित्यसम्बन्धित्वाच्च शब्दस्य रूपमेव ग्राह्यं नार्थो विपर्ययात् । अतः स्वंग्रहणादेव रूपग्रहणे सिद्धे व्याकरणशास्त्रे रूपवदर्थोप्यङ्गीक्रियत इति लभ्यते" इत्याह सी. दे. बृ. प. वृ. प. 9, पृ. 171 ।

(ङ) भाष्ये तु 'स्वंरूपम्.' (1/1/68) इतिसूत्रे रूपग्रहणं विहाय स्वंशब्दस्य इति सूत्रिते सति अर्थवद्ग्रहणे अनर्थकस्य ग्रहणाभावः इति' स्थितमित्याह नी. दी. प. वृ. प. 11, पृ. 295 ।

(च) "किंच 'स्वंरूप'मिति शास्त्रे स्वशब्देनाऽऽत्मीयवाचिनाऽर्थो गृह्यते । रूपशब्देन स्वरूपम् । एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः । तत्रार्थो न विशेष्यः । तत्र शास्त्रीयकार्यासम्भवात् । किन्तु शब्दविशेषणम् । एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्ट'मित्याह भ. ना. प. शे. प. 15, पृ. 100-101 । तथा ल. श. शे. संज्ञा. प्र. पृ. 151 ।

रूपमित्ययं शब्दोऽत्र शब्दस्वरूपस्य तत्तदानुपूर्वी-विशिष्टस्य संज्ञित्वलाभायोपात्तो व्यर्थः । यतः स्वशब्देनैवाऽऽत्माऽऽत्मीयवाचकेन तत्तदानुपूर्वी विशिष्टस्य तत्तदर्थ-वाचकस्य संज्ञित्वं सुलभम् । नहि जातुचिदपि शब्दो रूपमानुपूर्वी विशिष्टं जहाति, अर्थं त्वनुकरणकाले जहाति । अतः प्रथमबुद्धिविषयत्वादव्यभिचाराच्च स्वशब्देनैव तत्तदानुपूर्वीविशिष्टस्य ग्रहणं प्राग् भविष्यति, पश्चादर्थस्येति 'रूप'मिति शब्दं विनापि शब्दस्वरूपस्य तत्तदर्थवाचकस्य संज्ञित्वमुपपन्नमित्यसौ शब्दोऽत्र व्यर्थः । ज्ञापितायां चाऽस्यामर्थरूपयोर्नियमेन शब्दादुपस्थितौ स्वशब्देनाऽर्थस्यैव कदाचित् संज्ञित्वं माभूत् तत्तदानुपूर्वीविशिष्टस्य शब्दस्वरूपस्याऽपि संज्ञित्वं भवत्वित्येतदर्थं रूपमित्ययं शब्दोऽत्र चरिताऽर्थो भवति । अन्यथा स्वशब्देन केवलमर्थोप्यत्र ग्रहीतुं शक्यः, तथा सति केवलमर्थस्यापि संज्ञित्वं स्यात् । सति चास्मिन् शब्दे स्वशब्देनाऽऽत्मीयः केवलं शब्दस्यार्थ एव गृह्येत । नाऽऽत्मस्वरूपं तत्तदानुपूर्वी-विशिष्टम् । अत आनुपूर्वीविशेषे विशिष्टस्य शब्दस्वरूपस्याऽपि संज्ञित्वलाभायो-पात्तोऽत्र रूपमित्ययं शब्दोस्याः ज्ञापकतामञ्चतीति निश्चप्रचम् । ज्ञापिताया अस्याः फलं तु 'काशे कुशे ब्रभ्रुशे' इत्यतेषु काश - कुश-बभ्रुश - शब्देभ्यः सप्तम्यैवचने निष्पन्नेषु 'शे'[1] इति प्रगृह्यसंज्ञाया अभावः । अतोऽत्र शेशब्दोऽनर्थकः । अस्या अभावे तु यथा 'अस्मे[2] इन्द्रा बृहस्पती' इत्यत्र प्रगृह्यसंज्ञा तेन सूत्रेण भवति तथाऽत्रापि दुर्वारा स्यात् । तथा [3]'दाधाघ्वदा'बिति घुसंज्ञाया 'दाशृ[4]दाने' 'धावु[5]गतिशुद्ध्योः' इति धात्वैकदेशयोर्दाधाशब्दयोरभावः, [6]प्रोढ़वानित्यत्र [7]'प्रादूहोढ़ोढ्येषैष्येषु' इति वृद्ध्यैकादेशाभावश्च । अस्या अभावे हि क्रमशोऽत्र घुसंज्ञा वृद्धिश्च नूनमापद्येताम् ।

---

(छ) "भाष्ये तु 'स्वं रूपम् - '- (1/1/68) इत्यत्र शब्दस्य स्वं संज्ञा इत्येतावता सिद्धे अतिरिच्यमानं रूपग्रहणमस्याः परिभाषाया ज्ञापकमित्युक्तम् । तेन 'प्रादूहोढ.' इति वृद्धिः प्रोढ़वानित्यत्र न भवती'त्याह शेषा. प. भास्क. प. 14, पृ. 397 ।

(ज) "स्वं रूपंशब्दस्य' (सु 1/1/68), रूपग्रहणं ज्ञापयति 'अस्त्यन्यद्‌दारूपात् स्वंशब्दस्येती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 144 ।

1. अष्टा. 1/1/13 ।
2. अस्मच्छदाद् आमि, आमः 'सुपां सुलुक् पूर्वसवर्णच्छेयाडाड्यायाजालः '- अष्टा. 7/1/39, इति छन्दसि शेशब्दादेशे 'शेषे' लोपः ' - अष्टा. 7/2/90, इत्यदो लोपे शकारस्येत्संज्ञा-लोपयोश्च कृतयो रूपमिदम् ।
3. अष्टा. 1/1/20 ।
4. धा. पा. भ्वा. 882 ।
5. धा. पा. भ्वा. 601 ।
6. प्रपूर्वकाद् 'वह प्रापणे' धा. पा. भ्वा. 1004' इति वह्धातोः 'निष्ठा' - अष्टा. 3/2/102 इति कर्तारि क्तवतु प्रत्यये कृते 'प्र + ऊढ़वत्' इत्यवस्थायामित्यर्थः ।
7. वा. अचूसन्धि प्र. वै. सि. कौ. पृ. 45 ।

अस्य सूत्रस्यैव प्रत्याख्यानात् कथमेतत्सूत्रस्थं रूपग्रहणमस्या ज्ञापकमितिचेत् - सत्यम् । यतः प्रत्याख्यानपक्षे न्यायसिद्धेयमिति [1]नीलकण्ठ – भट्टोजिदीक्षित-[2] भट्ट-नागेशा[3]मन्वते । अन्ये तु ज्ञापकान्तरमस्या[4]मन्वते । तच्चाऽत्रैवाऽन्यत्र निरूपितम् ।

## 'लु'गिति शब्दः

[5]'गुणो यङ्लुको'रितिसूत्रे 'लु'गितिशब्दः "श्तिपा शपानुबन्धेन निर्दिष्टं-यद्गणेनच । यत्रैकाज् ग्रहणं चैव पञ्चैतानि न यङ्लुकी"ति [6]परिभाषानित्ये'तिवचनस्य ज्ञापकः[7] । यतोऽस्य वनस्याभावेऽत्र लुक् शब्दो व्यर्थः । तथाहि – लुक्षब्दोऽत्र 'चोक्रुशीती'-[8]

---

1. अनेन हि – "उपस्थितस्यार्थस्य शब्दाविनाभूतस्य शब्दं प्रति विशेषणत्वेनान्वयसंभवे सर्वथा त्यागे मानाभाव इति न्यायमूलैषे"त्युक्तम् । प. वृ. प. 11 पृ. 295 ।
2. अनेन हि – "उपस्थितार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादितिभावः " इत्युक्तम् प्रौ. मनो. अ अचूसन्धि प्र. पृ. 121 ।
3. अनेन हि – "विशिष्टरूपोपादाने उपस्थितार्थस्य विशेषणतयान्वयसंभवे तत्त्यागे मानाभावोऽस्या मूल"मित्युक्तम् प. शे. प. 15, पृ. 98-99 ।
4. 'व्रश्च - भ्रस्ज - सृज - मृज - यज - राज - भ्राज - च्छशां षः' - अष्टा. 8/2/36, इत्यत्र राजेः पृथग् भ्राजिग्रहणम्, 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् - अष्टा. 1/1/34 इतिसूत्रे परशब्दात् पृथगपरग्रहणं वा ।
5. अष्टा. 7/4/82 ।
6. (क) पु. दे. प. पा. प. 94, पृ. 160 ।
   (ख) भ. ना. प. शे. प. 132, पृ. 363 ।
   (ग) शेषा. प. भास्क. प. 109, पृ. 461 ।
7. तथाहि –
   (क) "श्तिपाशपेति गुणनिषेधस्त्वनित्यः, 'गुणो यङ्लुको'रिति सामान्यापेक्षज्ञापका"-दित्याह भ. दी. वै. सि. कौ. यङ्लुङन्त प्र. पृ. 279 ।
   (ख) "द्वित्वं 'सनाद्यन्ता धातव' इति 'भूवादय' इति भवत्येव, गुणो यङ्लुकोरित्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावोऽप्यजर्घा इत्यादौ भवतीत्याह भ. ना. प. शे. प. 132, पृ. 363 ।
   (ग) "अनित्येयम्, 'गुणो यङ्लुकोः' (7/4/82) इतिज्ञापकात् । एकाज्व्यपदिष्टं हि द्वित्वं यदि यङ्लुकि न प्रवर्तेत, तर्हि तत्राभ्यासाभावादभ्यासस्य विधीयमानो गुणोऽनर्थकः स्यात् । तेन 'जङ्घनीती'त्यत्र 'अभ्यासाच्च' (7/3/55) इति हन्तेरिति श्तिपा निर्देशेन विधीयमानं कुत्वं सिद्ध्यतीष्टं सिद्ध"मित्याह शेषा. प. भास्क. प. 109, पृ. 464 ।
8. 'क्रुश आह्वाने रोदने च' धा. पा. भ्वा. 856, इति क्रुश्धातोः 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' - अष्टा. 3/1/22, इति यङि तस्य' 'यङोऽचि च' - अष्टा. 2/4/74, इति लुकि प्रत्ययलक्षणेन 'सनाद्यन्ता धातवः' -अष्टा. 3/1/32, इतिधातुत्वे 'सन्यङोः' - अष्टा. 6/1/9, इति द्वित्वेऽभ्याससंज्ञाहलादिशेषह्रस्वेषु कृतेषु 'कुहोश्चुः' - अष्टा. 7/4/62, इत्यभ्यासककारस्य चुत्वे 'गुणो यङ्लुकोः' - अष्टा. 7/4/82, इत्यभ्यासस्य उकारस्य गुणे लटि तिपि शपि 'चर्करीतं च' (ग. सू.) इति यङ्लुकोऽदादौ पाठात् 'अदिप्रभृतिभ्यः शपः' - अष्टा. 2/4/72, इति शपो लुकि - 'यङो वा' - अष्टा. 7/3/94, इति ईडागमे रूपमिदम् ।

त्यादौ यङ्लुकि - [1]'न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद् यङ्निमित्तको[2]गुणो न प्राप्नोति, [3]'पुगन्तलघूपधस्य चे'ति प्राप्तोऽपि गुणो [4]'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यनेन प्रतिषिद्ध इति तत्राऽभ्यासस्य गुणसम्पादनायाऽत्रोपात्तोऽयं शब्दः, स चाऽस्य वचनस्याऽभावे व्यर्थः । यतः 'श्तिपे'तिपरिभाषयैकाज्व्यपदिष्टस्य [5]द्वित्वस्याऽप्रवृत्त्याऽभ्यासाभावेन 'चोक्रुशीती'त्यादौ यङ्लुकि गुणस्य प्राप्तिरेव नास्ति । न च ज्ञापितेऽप्यस्मिन्वचने स्वांऽशे चारिताऽर्थ्याऽभावः शङ्क्यः । यतोऽनेन वचनेन 'श्तिपे' तिपरिभाषाया यङ्लुक्येकाज्निर्दिष्टद्वित्वेऽप्रवृत्त्या कृते द्वित्वेऽभ्यासलाभात्तत्र गुणसम्पादनायासौ शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [6]'जङ्घनी'त्यत्र 'अभ्यासाच्चे[7]'ति 'हन्ते'रिति श्तिपा निर्दिष्टस्याऽपि कुत्वस्य सिद्धिः । अस्य वचनस्याऽभावे हि 'श्तिपे'ति परिभाषाया अत्र प्रवृत्तेर्दुर्वारतया कुत्वमिदं नाऽत्र सिद्ध्येत् । नचैकाऽज्लक्षणप्रतिषेधाऽनित्यत्वज्ञापनेनैव लुक्शब्दोऽत्र सार्थक इति श्तिपा निर्देशनिमित्तकस्य निषेधस्य यङ्लुक्यप्रवृत्तौ मानाभावात् कुत्वमत्र दुर्लभमित्यपि शङ्कनीयम् । यतो 'गुणो[8]यङ्लुको'रित्यभ्यासस्य यङ्लुकि गुणविधानमेकाऽज्ग्रहण-निमित्तक-निषेधस्याऽनित्यत्वं ज्ञापयत्तद्वचनोपात्तत्वसामान्यात् 'श्तिपाशपे'त्यादि सर्वनिषेधानां यङ्लुकि क्वचिदप्रवृत्तिं ज्ञापयति । अयं हि ज्ञापकः सामान्यापेक्षो, न तु विशेषापेक्षः ।

---

1. अष्टा. 1/1/63 ।
2. 'गुणो यङ्लुकोः' - अष्टा. 7/4/82 ।
3. अष्टा. 7/3/86 ।
4. अष्टा. 7/3/87 ।
5. 'सन्यङोः' - अष्टा. 6/1/9 इत्यत्र 'एकाचो द्वे प्रथमस्य' - अष्टा. 6/1/1, 'अजादेर्द्वितीयस्य' - अष्टा. 6/1/2, इत्यनयोरनुवर्तनाद्द्वित्वस्यैकाज्व्यपदिष्टत्वं प्रसिद्धम् ।
6. 'हन हिंसागत्योः' धा.पा. अदा. 1012, इति हन्धातोः 'धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्' - अष्टा. 3/1/22, इति यङ्प्रत्यये 'यङोऽचि च' - अष्टा. 2/4/74, इतियङो लुकि प्रत्ययलक्षणेन 'सनाद्यन्ता धातवः' - अष्टा. 3/1/32, इति धातुत्वे 'सन्यङोः' - अष्टा. 6/1/9; इति द्वित्वेऽभ्याससंज्ञाहलादिशेषेषु कृतेषु - 'ह हन्' इत्यवस्थायां 'नुगतोऽनुनासिकान्तस्य' - अष्टा. 7/4/85 - इति नुगागमे 'कुहोश्चुः' - अष्टा. 7/4/62, इत्यभ्यासहकारस्य चुत्वेन जकारे 'अभ्यासाच्च'- अष्टा. 7/3/55, इति द्वितीयहकारस्य कुत्वे तिपि 'यङोवा' - अष्टा. 7/3/94, इति ईडागमे शपि 'चर्करीतंच' ग. सू. इति यङ्लुगन्तस्यादादौ पाठात् 'अदिप्रभृतिभ्यः शपः ' - अष्टा. 2/4/72, इति शपो लुकि रूपमिदम् ।
7. अष्टा. 7/3/55 ।
8. अष्टा. 7/4/82 ।

## 'लु'गिति शब्दः

[1]'लुग्वा दुह दिह लिह गुहामात्मनेपदे दन्त्ये' इत्यत्र 'लु'गितिशब्दः 'लोपवदन्त्यस्य न भवति लुक् किन्तु सर्वादेशः, - इति वचनस्यं ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'अदुग्ध'[3] – 'अधुक्षत'[4] 'अदिग्ध'[5] 'अधिक्षत'[6] 'अलीढ'[7] –'अलिक्षत'[8] 'न्यगूढ'[9] 'न्यघुक्षत'[10] – इत्यादौ क्सस्य[11]

---

1. अष्टा. 7/3/73 ।
2. तथाहि–
   (क) "लोप इति वर्तमाने लुग्ग्रहणं सर्वदिशार्थम्, तच्च वह्यर्थम् । अन्यत्त्वन्त्यस्यैव लोपे कृते 'झलो झलि' इति सकारलोपेन सिद्धयति । स्थानिवद्भावोऽपि अकारलोपस्य नास्ति, 'पूर्वत्रासिद्धे न स्थानिवत्' इति । दन्त्योष्ठ्योऽपि वकारो दन्त्य इति गृह्यते । यदि स न गृह्येत, ततस्तौग्रहणमेवात्र कृतं स्या"दिति ग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिनवचने सूचयति वाम. का. 7/3/73 ।
   (ख) "लोपवदन्त्यस्य न भवति लुक् सर्वदिश' इति । अत्र ज्ञापकं घो र्लोपे-प्रकृते लुग् वा दुह दिहेति (7/3/73) क्सप्रत्ययस्य – लुग्वचनम् । योगापेक्षं च ज्ञापकमिति लुक्सर्वदिशः सिद्धयति । तेन खरकुटीति लुग्मनुष्य इति (5/3/98) कनः सर्वस्यलुग् - भवती"त्याह पु. दे. ज्ञा. समु. सप्तविंशे दैविकापादे पृ, 93 ।
3. 'दुह प्रपूरणे' धा. पा. अदा. 1014, इति दुह्धातोर्लुङि लस्य ते अडागमे च्लिप्रत्यये च्लेः 'शल इगुपधादनिटः क्सः - अष्टा. 3/1/45, इतिक्साऽऽदेशे 'लुग्वा दुह - दिह - लिह - गुहामात्मनेपदे दन्त्ये' - अष्टा. 7/3/73, इति क्सस्य लुकि 'अदुह्त' - इत्यवस्थायां हकारस्य 'दादेर्धातोर्घः' - अष्टा. 8/2/32, इति घकारे दकारस्य 'एकाचो बशो भष्न्तस्य स्ध्वोः' - अष्टा. 8/2/37, इति धकारे 'झषस्तर्थोर्धोधः' अष्टा. 8/2/40, इति तकारस्य धकारे झकारस्य जश्त्वेन गकारे च कृते रूपमिदम् ।
4. 'दुह प्रपूरणे' धा. पा. अदा. 1014, इति दुह्धातोर्लुङि लस्य ते अडागमे च्लिप्रत्यये च्लेः 'शल इगुपधादनिटः क्सः' - अष्टा. 3/1/45, इति क्सादेशे 'लुग्वां दुह.' - अष्टा. 7/3/73, इतिलुगभावपक्षे 'अदुह्स्त' - इत्यवस्थायां 'दादेर्धातोर्घः' - अष्टा. 8/2/32, इतिहकारस्य घकारे 'एकाचो वशो भष्.' - अष्टा. 8/2/37, इति दकारस्य धकारे घकारस्य जश्त्वेन गकारे तस्य चर्त्वेन ककारे सस्य षत्वे च कृते रूपमिदम् ।
5. 'दिह उपचये' धा. पा. अदा. 1015, इति दिह्धातोर्लुङि ते 'अदुग्ध' इतिवदिदं ग्रम् ।
6. 'दिह उपचये' धा. पा. अदा. 1015, इति दिह्धातोर्लुङि ते 'लुग्वा दुहदिह.' - अष्टा. 7/3/73, इति क्सस्य लुगभावपक्षे अधुक्षत' इतिवदिदं रूपम् ।
7. 'लिह आस्वादने' धा. पा. 1016, इति लिह्धातोर्लुङि लस्य ते अडागमे - च्लिप्रत्यये च्लेः 'शल.' - अष्टा. 3/1/45, इति क्सादेशे 'लुग्वा दुहदिहलिह.' - अष्टा. 7/3/73, इतिक्सस्य लुकि 'अलिह्त' -इत्यवस्थायां हकारस्य 'होढः' - अष्टा. 8/2/31, इति ढकारे' झषस्तथोर्धोधः' - अष्टा. 8/2/32, इतिधकारे धस्य ष्टुत्वेन ढकारे 'ढो ढे लोपः' - अष्टा. 8/3/13, इति प्रथमढकारस्य लोपे धातोरिकारस्य 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' - अष्टा. 6/3/111, इति दीर्घे च कृते रूपमिदम् ।
8. 'लिह आस्वादने' धा. पा. 1016, इति लिह्धातोर्लुङि लस्य ते अडागमे च्लिप्रत्यये च्ले 'शल इगुपधादनिटः क्सः' - अष्टा. 3/1/45, इति क्साऽऽदेशे 'लुग्वा.' - अष्टा. 7/3/73, इतिलुगभावपक्षे 'अलिह्स्त'- इत्यवस्थायां हकारस्य 'होढः' - अष्टा. 8/2/31, इति ढकारे' षढोः कः सि' - अष्टा. 8/2/41, इति ढकारस्य ककारे सस्य षत्वे च कृते रूपमिदम् ।

वा लुगर्थमारब्धे - दुह,दिह लिह, गुह इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवती'त्यर्थकेऽस्मिन् सूत्रे शब्दोऽयमुपात्तोऽस्य वचनस्याऽभावे व्यर्थः। अत्र हि 'घोर्लोपो लेटि वा'[1] –इत्यतो 'लोप' इत्यनुवर्त्य क्सस्य वा लोपविधानेनैव 'अदुग्ध' इत्यादीष्टप्रयोगाणां सिद्धिः 'लु'गितिशब्दाऽभावेऽपि सुलभा । ज्ञापिते चाऽस्मिन्वचने [2]'अदुह्वी'त्यादौ 'अलोऽन्त्यस्ये'ति[3] क्सस्याऽन्त्यप्राप्तस्य लोपो माभूत् किन्तु सर्वस्य क्सस्य लुग् भवत्वित्येतदर्थं शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । लुक्संज्ञा[4] हि प्रत्ययाऽदर्शनस्य कृता । न च 'अदुग्धे'त्यादावप्यस्य स्वांशे चारितार्थ्यं शङ्क्यम् । यतो यदात्मनेपदं दन्त्यादि तत्सर्वं झलाद्येवेतितत्राऽनन्त्यस्यैवाऽकारस्य लोपे कृते 'झलोझली'ति[5] सकारस्य लोपेनेष्टं सिद्ध्यत्येव । न च 'अदुग्ध' -इत्याद्यपि लुका विना न सिद्ध्यति, अकारलोपस्य[6] सकारलोपे[7]कर्तव्ये 'अचः परस्मिन्[8]पूर्वविधौ' इति स्थानिवद्भावो हि दुर्वार इत्यपि शङ्क्यम् । यतः 'पूर्वत्रासिद्धे न स्थानिव'[9]दिति स्थानिवद्भावनिषेधादत्राऽकारलोपस्य

---

9. निपूर्वकात् 'गुहूसंवरणे 'धा. पा. भ्वा. 916, इतिगुहधातोर्लुङि लस्य ते अडागमे च्लिप्रत्यये च्लेः 'शल.' अष्टा. 3/1/45, इतिक्साऽऽदेशे 'लुग्वा.' अष्टा. 7/3/73, इति क्सस्य लुकि उपसर्गेकारस्य यणि 'न्यगुहूत' इत्यवस्थायां हकारस्य 'होढः' अष्टा. 8/2/31, इत ढकारे 'झषस्तथोर्धोधः' - अष्टा. 8/2/32, इतितकारस्य धकारे धकारस्य ष्टुत्वेन ढकारे प्रथमढकारस्य 'ढोढेलोपः '-अष्टा. 8/2/13, इतिलोपे धातोरुकारस्य 'द्रलोपे पूर्वस्य दीर्घोऽणः' अष्टा. 6/3/111, इति दीर्घे च कृते रूपमिदम् ।
10. निपूर्वकात्' गुहू संवरणे' धा. पा. भ्वा. 816, इतिगुहूतोर्लुङि लस्य ते अडागमे च्लिप्रत्यये च्लेः 'शल'. अष्टा. 3/145, इति क्साऽऽदेशे 'लुग्वा. '-अष्टा. 7/3/73, इति लुगभावपक्षे उपसर्गेकारस्य यणि' न्यगुहूसत' इत्यवस्थायां हकारस्य' होढः' अष्टा. 8/2/31, इति ढकारे 'एकाचोवशोभष्. '-अष्टा. 8/2/37, इतिगकारस्य घकारे' षढोः कः सि' अष्टा. 8/241, ढकारस्य ककारे सकारस्य षत्वे च कृते रूपमिदम् ।
11. 'शल इगुपधादनिटः क्सः '-अष्टा. 3/1/45, इतिविहितस्येत्यर्थः ।
1. अष्टा. 7/3/70, ।
2. 'दुह प्रपूरणे' धा. पा. अदा. 1014, इतिदुहधोतोर्लुङि उत्तमपुरुषद्विवचने आत्मनेपदे 'अदुग्ध' इतिवद्रूपमिदम् । यतो' लुग्वा. -अष्टा. 7/3/73, इत्यत्र ''दन्त्योष्ठयोऽपि वकारो दन्त्य इति गृह्यते । यदि स न गृह्येत, ततस्तौग्रहणमेवात्र कृतं स्यादि 'दित्याह वाम. का. 7/3/73
3. अष्टा. 1/1/52 ।
4. 'प्रत्ययस्य लुक्-श्लु - लुपः ' -अष्टा. 1/1/761, ।
5. अष्टा. 8/2/26 ।
6. 'लुग वा.' - अष्टा. 7/3/73, इत्यत्र लुग्ग्रहणाऽभावे 'घोर्लोपो लेटि वा' -अष्टा. 7/3/70, इत्यतो लोपग्रहणाऽनुवृत्तौ 'अलोऽन्त्यस्य' अष्टा. 1/1/52, इत्येतत्परिभाषया कृतस्येत्यर्थः ।
7. 'झलो झलि' - अष्टा. 8/2/26, इत्यनेनेतिशेषः ।
8. अष्टा. 1/1/57 ।
9. व्या. म. भा. 1/1/8/57 । वै. सि. कौ. अजन्तपुंलिङ्ग प्र. प- 121, इत्यत्र 'त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 । इत्यतिदेशस्याऽप्रवृत्त्या न्याय-सिद्धिमिदं वचनमुपन्यस्तम् ।

स्थानिवद्भावो[1] न भवति। वस्तुतस्तु [2]'झलो झली'ति सिच एव सकारस्य लोपविधानात् 'अदुग्धे'त्यादावपि सर्वस्य क्सस्य लुगर्थमयं शब्दोऽत्र स्वांऽशे चरिताऽर्थः । [3]काशिकाकारस्यांऽत्र प्रमाद एवेति मन्ये । ज्ञापितस्याऽस्य वचनस्य फलं तु [4]'खरकुटी'त्यत्र 'लुम्मनुष्ये'[5] इत्यनेन सर्वस्य कनो लुक्सिद्धिः । अस्य वचनस्याऽसत्त्वे हि [6]'अलोऽन्त्यस्ये'त्यस्याऽत्र- प्रवृत्तेदुर्वारतया सर्वस्य कनो लुक्न[7] सिद्ध्येत् ।

## 'लेखे'तिशब्दः

[8]'हृदयस्य हृल्लेखयदण्लासे'ष्वित्यत्र 'लेखे'तिशब्दः 'उत्तरपदाधिकारे[9] प्रत्ययग्रहणे न तदन्तग्रहण'मितिपरिभाषाया ज्ञापकः[10] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –सूत्रेऽस्मिन् 'हृद्यं लिखतीति हृल्लेखः'[11] इत्यत्र लेखशब्दे

---

1. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57 । इत्यनेनेतिशेषः ।
2. अष्टा. 8/2/26 ।
3. वामनो हि – "लोप इति वर्तमाने लुग्ग्रहणं सर्वादेशार्थम्, तच्च वह्यर्थम् । अन्यत्र त्वन्त्यस्यैव लोपे कृते 'झलो झलि' इति सकारलोपे न सिद्ध्यती"त्याह का. 7/3/73 ।
4. खरकुटीव मनुष्य इत्यर्थे 'संज्ञायां च' - अष्टा. 5/3/97, इति कनि 'लुम्मनुष्ये' अष्टा. 5/3/98, इति कनो लुकि रूपमिदम् ।
5. अष्टा. 5/3/98 ।
6. अष्टा. 1/1/52 ।
7. 'लुम्मनुष्ये' अष्टा. 5/3/98, इत्यनेनेतिशेषः ।
8. अष्टा. 6/3/50
9. (क) पु. दे. प. पा. प. 26, पृ. 12 अ ।
   (ख) भ. ना. प. शे. प. 26, पृ. 132 ।
   (ग) 'उत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषा न भवति' - शेषा. प. भास्क. प. 25, पृ. 405 ।
10. तथाहि –
   (क) "यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः ? लेखग्रहणात् । यदयं लेखग्रहणं करोति- तज्- ज्ञापयत्याचार्यो' न यदणन्ते भवति । अपर आह - अत्यल्पमिदमुच्यते । सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् । कुतः, लेखग्रहणादेव । किं प्रयोजनम् ? । कुमारी गौरितरा । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येते"- त्याह-पत. व्या. म. भा. 6/3/3/50 ।
   (ख) "एतदेव लेखग्रहणं ज्ञापकम् - उत्तरपदाधिकारे तदन्ताग्रहणस्ये"त्याह वाम. का. 6/3/50 ।
   (ग) "अण्ग्रहणादेव तदन्तस्य लेखशब्दस्य ग्रहणे सिद्धे तस्य पृथग्ग्रहणं क्रियमाणमेतज्- ज्ञापयति – 'उदत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तं न गृह्यत' इति । तेनेह यदण्ग्रहणे घरूपादिसूत्रे च घादिप्रत्ययग्रहणे प्रत्ययमात्रं गृह्यते, न तदन्तविधि- रिती"त्याह ह. मि. पदम. 6/3/50 ।
   (घ) "कर्मण्यणन्तेप्यण्ग्रहणेन लेखग्रहणे सिद्धे लेखग्रहणं ज्ञापकम्, 'इका लुगुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ती'ति । तेन 'घकालतने'ष्विति

परे हृदयशब्दस्य हृदादेशायोपात्तोऽयं शब्दः । अस्या अभावे हि 'प्रत्ययग्रहण-[1] परिभाषया कर्मण्यणन्ते लेखशब्दे परेऽणन्तत्वादेव 'हल्लेख'इत्यत्र हृदादेशः सुलभ इत्ययं शब्दोऽत्र व्यर्थः । नचाऽत्र घञन्तलेखशब्दे परे हृदयशब्दस्य हृदादेशाऽर्थमत्राऽयं शब्दश्चरिताऽर्थ इतिशङ्क्यम् । यतो [2]भावघञन्त-लेखशब्दस्याभिधानं नाऽस्ति । लेखग्रहणेन तदन्तविधिना[3] हृदशब्दस्य परमलेखशब्देन समासे 'हृत्परमलेख' इति भवति, तदभावे अणन्ततदादिरूपोत्तरपदत्वाऽभावेन 'हृदयपरमलेख'इति स्यादिति वैषम्यात् कथमत्राऽयं शब्दोऽस्यां ज्ञापक इत्यपि न शङ्कनीयम् । यतो [4]'गिलेऽगिलस्ये'त्यत्र[5]तदन्तविधौ 'गिलान्ते उत्तरपदे' - इत्यर्थेन [6]'तिमिङ्गिलः'-

---

(6/3/17) सप्तम्यलुग्विधौ तदन्तत्वाभावात् पूर्वाह्णेतरामित्यादि सिद्ध्यती"त्याह पु. दे. ज्ञा. समु. त्रयोविंशेअलुक्पादे पृ. 84 ।

(ङ) 'लेखग्रहणमेव ज्ञापकम् - उत्तरपदाधिकारे तदन्तविधिर्नास्ती"त्याह भ. दी. वै. सि. कौ. समासाश्रय प्र. पृ. 550 ।

(च) "उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्, 'हृदस्य हृल्लेखयदण्लासेषु' इत्यत्र लेखग्रहणा"दित्याह भ. ना. प. शे. प. 26, पृ. 132-133 ।

(छ) "उत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषा न भवति' हृदयस्य हृल्लेख.' (6/3/50) इतिसूत्रे लेखग्रहणाज्ज्ञापकात् । यद्यत्र - प्रत्ययग्रहणपरिभाषा स्यात्, तर्हि हृदयं लिखितीति हृल्लेखः इत्यत्र कर्मण्यणन्ते लेखशब्दे अणन्तत्वादेव हृदादेशसिद्धौ लेखग्रहणमनर्थकं स्या"दित्याह शेषा प. भास्क. प. 25, पृ. 405 ।

(ज) "लेखग्रहणादुत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं ज्ञाप्यते" इतिग्रन्थेन ज्ञापकत्व-मस्यामस्य शब्दस्य सूचयति श्रीना. ज्ञा. सं. 6, पृ. 108 ।

11. हृदयमिति कर्मोपपदात् 'लिख अक्षरविन्यासे' धा. पा. तुदा. 1366, इति लिख्धातोः 'कर्मण्यण्' - अष्टा. 3/2/1, इत्यणि कृदन्तप्रातिपदिकाऽवयवस्य सुपो लुकि हृदयशब्दस्य 'हृदस्य हृल्लेखयदण्लासेषु'-अष्टा. 6/3/50, इति हृदादेशे 'तोर्लि' - अष्टा. 8/4/60. इतिदकारस्य परसवर्णे हृल्लेखेति कृदन्तप्रातिपदिकाद्विभक्तिकार्येषु-कृतेषु-रूपमिदम् ।

1. 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' प. शे. प. 24. पृ. 124 ।
2. 'भावे' - अष्टा. 3/3/18 ।
3. 'येन विधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
4. वा. वै. सि. कौ. समासाश्रयप्र. पृ. 555 ।
5. 'येन विधिस्तदन्तस्य' - अष्टा. 1/1/72 ।
6. तिमिः = मत्स्यविशेषः तं गिलतीत्यर्थे तिमिमिति कर्मोपपदात् 'गॄनिगरणे 'धा. पा. तुदा. 1411. इति गॄधातोः 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' वा. वै. सि. कौ. पूर्वकृदन्तप्र. पृ. 407, इति मूलविभुजादेराकृतिगणत्वेन कप्रत्यये 'ॠत इद्धातोः' - अष्टा. 7/1/100, इतिधातोः ॠकारस्य इत्त्वेपरत्वे 'अचि विभाषा' -अष्टा. 8/2/21. इतिरेफस्य लकारे उपपदसमासे विभक्तेर्लुकि 'गिलेऽगिलस्य' वा. वै. सि. कौ. समासाश्रयप्र. पृ. 555. इति मुमागमेऽनुस्वारे परसवर्णे च कृते' तिमिङ्गिले'तिकृदन्तप्रातिपदिकात् सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।

इतिवत् 'तिमिङ्गिलगिलः'1 इत्यस्य सिद्धौ 2'गिलगिलेचे'त्येतत्सामर्थ्यात् 'उत्तरपदाधिकारे प्रातिपदिकग्रहणे न 3तदन्तग्रहण'मितिपरिभाषाऽन्तरं ज्ञापितमिति लेखशब्दे तदन्तविधिरेव न भवंति । अतएव 4'इष्टकापरिचित'मित्यादौ ह्रस्वत्वाऽभावः5 सिद्ध्यति । ज्ञापितायां चाऽस्यां परिभाषायामत्र सूत्रे 'प्रत्ययग्रहण'6 - परिभाषाया अप्रवृत्त्या 'अणन्त' —इत्यर्थाऽलाभेन 'हृल्लेख' इत्यत्र हृदादेशार्थमत्र सूत्रे - 'लेखे'तिशब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु 'कुमारी गौरितरे'त्यत्र कुमारीशब्दोत्तरस्य ईकारस्य ह्रस्वत्वाऽभावः7 । अस्या असत्त्वे हि 'घरूपे'8त्यांदिसूत्रे घशब्देन तदन्तविधिर्दुर्वारेति 'गौरितरे'ति घान्तोत्तरपदपरत्वेन ह्रस्वत्वाऽऽपत्तिरत्र दुर्वारा स्यात् ।

नीलकण्ठदीक्षितस्तु सूत्रेऽस्मिन् 'लेखे'तिशब्दः "पदाङ्गाधिकारे तस्य च9 तदन्तस्य चे'तिपरिभाषा उत्तरपदशब्दविशेष्यं कृत्वा तद्विशेषणे न प्रवर्त्तत" इतिवचनस्य ज्ञापक इति मनुते10 ।

---

1. गिलं गिलतीति गिलगिलः, तिमिषु गिलगिलः, इतिविग्रहे 'संज्ञायाम्' - अष्टा. 2/1/44. इतिसप्तमीसमासे विभक्तेर्लुकि' गिलगिले च' वा. वै. सि. कौ. समासाश्रयप्र. पृ. 555, इति मुमागमे. विभक्तिकार्येषु च कृतेषु रूपमिदम् ।
2. वा. वै. सि. कौ. समासाश्रय प्र. पृ. 555 ।
3. 'प्रातिपदिकविधौ तदन्तविधिर्नास्ती'तिपरिभाषास्वरूपमाह व्याडिः प. सू. प. 69, पृ. 30. अन्येतु 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'तिपिरिभाषास्वरूपमाहुः, पु. दे ल. प. वृ. प. 78, पृ. 147, सी. दे. बृ. प. वृ. प. 55, पृ. 222, नी. दी प. वृ. प. 71, पृ. 307, ह. भा. प. भास्क प. 57, पृ. 348, भ. ना. प. शे. प. 32, पृ. 153, शेषा. प. भास्क. प. 31, पृ. 409 ।
4. इष्टकाभिः परिचिततूलमिति विग्रहे 'कर्तृकरणे कृता बहुलम्' - अष्टा. 2/1/32, इति समासे रूपमिदम् ।
5. 'इष्टकेषीकामालानां चिंततूलभारिषु' - अष्टा. 6/3/65, इत्यनेनेति - शेषः ।
6. प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्यग्रहणम्' - प. शे. प. 24, पृ. 124 ।
7. 'घरूपकल्पचेलड् ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः' - अष्टा. 6/3/43 ।
8. अष्टा. 6/3/43 ।
9. (क) 'पदाङ्गाधिकारे तस्य च ग्रहणं भवति, तदुत्तरस्य च'
   'व्याडिः प. पा. प. 125, पृ. 42 ।
   (ख) पु. दे. प. पा. प. 30, पृ. 12 अ ।
   (ग) नी. दी. प. वृ, प. 36, पृ. 299, पृ. 108, पृ. 312 ।
   (घ) भ. ना. प. शे. प. 30, पृ. 147 ।
   (ङ) शेषा. प. भास्क. प. 29, पृ. 407 ।
10. तथाहि – "इयं चोत्तरपदाधिकारेऽपि प्रवर्तते । परंतु उत्तरपदशब्दं विशेष्यं कृत्वा तद्विशेषणे तु न प्रवर्तते । हृदयस्य हृल्लेख.' - (6/3/50) इतिलेखग्रहणा"दित्याह नी. दी. प. वृ. प. 108, पृ. 312 ।

## 'ल्य'बितिशब्दः

1'अदो जग्धिर्ल्यप् ति किती'त्यत्र 'ल्य'बितिशब्दः 2'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यबूबाधते' इतिपरिभाषाया ज्ञापकः3 । यतोऽस्या अभावेऽत्राऽयं शब्दो

---

1. अष्टा. 2/4/36 ।
2. (क) पु. दे. ल. प. वृ. प. 54, पृ. 136 ।
   (ख) सी. दे. बृ. प. वृ. प. 34, पृ. 202 ।
   (ग) नी. दी. प. वृ. प. 62, पृ. 305 ।
   (घ) ह. भा. प. भास्क. प. 34, पृ. 338 ।
   (ङ) भ. ना. प. शे. प. 55, पृ. 237 ।
   (च) शेषा प. भास्क. प 46, पृ. 425 ।
3. तथाहि –
   (क) "एवं तर्हि सिद्धे सति यल्ल्यबूग्रहणं करोति तज्ज्ञापयत्याचार्यः – 'अन्तरङ्गानपि विधिन् बहिरङ्गोल्यबूबाधते 'इति । किमेतस्या ज्ञापने प्रयोजनम् ?। ल्यबादेश उपदेशिवद्वचनमनादिष्टार्थं बहिरङ्गलक्षणत्वा'दिति वक्ष्यति, तन्न वक्तव्यं भवति ।
   'जग्धिविधिर्ल्यपि यत्तदकस्मात् सिद्धमदस्तिकितीति विधानात् ।
   हि प्रभृतींस्तु सदा बहिरङ्गो ल्यबूभव तीति कृतं तदु विद्धि" ।। एष एवार्थः –
   'जग्धौ सिद्धेऽन्तरङ्गत्वातूतिकितीति ल्यबुच्यते ।
   ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्" ।
   इत्याह पत. व्या. म. भा 2/4/1/36
   (ख) "जग्धौसिद्धेऽन्तरङ्गत्वात्तिकितीति ल्यबुचूयते ।
   ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ।।" इत्याहतुःज्यादित्य - जिनेन्द्रबुद्धी, का. 2/4/36, न्या. 2/4/36 ।
   (ग) "इदं पदद्वयापेक्षं समासमपेक्षमाणो ल्यब्बहिरङ्गः, क्त्वाप्रत्ययमात्रापेक्षस्तु जग्ध्यादेशोऽन्तरङ्गः, तत्र क्त्वावस्थायामेव जग्धौ कृते प्रजग्ध्येति सिद्धिम्, नार्थो ल्यब्ग्रहणेन । एवं तर्हि ल्यबूविषयेऽप्यन्तरङ्गत्वात्तिकितीत्येव सिद्धे जग्धौ ल्यबिति यदुच्यते - तज्ज्ञापयति - अन्तरङ्गाणामपि विधीनां हि- प्रभृतीनां ल्यपा भवति बाधनमिती"त्याह ह. मि. पदम. 2/4/36 ।
   (घ) "ज्ञापकं चात्र 'अदो जग्धिर्ल्यपूति किति' 92/4/36) इति - ल्यबूग्रहणम् । अन्यथा प्रजग्ध्येत्यत्र अन्तरङ्गत्वादेव क्त्वावस्थायां तकारादौ कितीत्येव जग्धौ सिद्धे ल्यविति पृथक् न कृतं स्या"दित्याह पु. दे. ल. प. वृ, प. 54, पृ. 137 ।
   (ङ) "ज्ञापकं चात्र 'अदोजग्धिर्ल्यप्तिकिति' (2/4/36) इत्यत्र ल्यबूग्रहणम् । अन्यथा हि प्रजग्ध्येत्यत्रान्तरङ्गत्वात् क्त्वावस्थायां तकारादौ कितीत्येव जग्धौ सिद्धे ल्यपीति न कुर्यात् । तदुक्तम् 'जग्धौ सिद्धिेऽन्तरङ्गत्वात्तिकितीतिल्यबुच्यते । ज्ञापयत्यन्तराङ्गाणां ल्यपा भवति बाधनम्" ।। इती 'त्याह सी. दे. बृ. प. वृ, प. 34, पृ. 202 ।
   (च) "अन्तरङ्गानपि विधीन् वहिरङ्गो ल्यब् बाधते जग्धिविधौ ल्यबूग्रहणात् । तेन हित्वदत्त्वात्वेत्वदीर्घत्वशूडिटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रक्रम्य । आपृछ्य । प्रदीव्य । प्रपठ्य । –इत्याह भ. दी. वै. सि. कौ. उत्तरकृदन्त प्र. प. 576 ।
   (छ) 'अदोजग्धिर्ल्यप् तिकिति' (2/4/36) इतिसूत्रे ल्यबूग्रहणमत्र ज्ञापकमिति तत्रैव सूत्रे भाष्ये स्पष्ट"मित्याह नी. दी. प. बृ. प. 62, पृ. 305 ।

व्यर्थः । तथाहि – 1'प्रजग्ध्ये'त्यत्र अदेर्जग्ध्यादेश-2 सिद्ध्यर्थमत्र ल्यबितिशब्द-मुपात्तः । स च अस्या अभावे व्यर्थः । 'प्रजग्ध्ये'त्यत्र हि ल्यबुत्पत्तेः3 प्रागेव 'प्र + त्वा' इत्यवस्थायां तिकिति परे कृत्वाप्रत्ययमात्रापेक्षो जग्ध्यादेशोऽन्तरङ्गत्वात्सुलभः, ल्यप् च पदद्वयापेक्षं समासमपेक्षमाणो बहिरङ्गः । अथ यथा जग्ध्यादेशोऽन्तरङ्ग-स्तथा ल्यबादेशोऽपि नित्यः, कृताकृतप्रसङ्गित्वं हि तस्य, तदेवं नित्यान्तरङ्गयोः परत्वाल्ल्यपा भवितव्यं, ततो ल्यपि जग्ध्यादेशो यथा स्यादित्येवमर्थं ल्यबिति शब्दोऽत्रावश्यक इति कथमस्यैतस्या ज्ञापकत्वमिति न शङ्क्यम् । यतो जग्ध्यादेशोपि नित्यः, ल्यबादेशे कृते हि 'असिद्ध'परिभाषया'4 जग्ध्यादेशस्य प्रप्तिरप्रत्यूहा । ज्ञापिताया अस्या 'अनेकपदाऽश्रयसमासनिमित्ततया बहिरङ्गो ल्यप् एकपदविषय- प्रकृतिप्रत्यया-पेक्षतया अन्तरङ्गान् हि त्वादीन् बाधते'-इत्यर्थः । फलं तु–'विधाय'5 'विहाय'6

---

(ज) "अत्र ज्ञापकम् – 'अदो जग्धिर्ल्यप् तिकिति' (2/4/36) इत्यत्र तिकितीत्यतः पृथग् ल्यब्ग्रहणमिति द्वितीये सप्तमे च भाष्यकारः । उक्तं च –
'जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्' ॥ इती" –
त्याह ह. भा. प. भास्क. पः 34, पृ. 338 ।

(झ) "अदो जग्धिः' - इतिसूत्रे तिकितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापक"मित्याह भ. ना. प. शे. प. 55, पृ. 237 ।

(ञः "अत्र च ज्ञापकम् - 'अदो जग्धिः. ' (2/4/36) इत्यत्र तिकितीत्येव सिद्धे ल्यब्-ग्रहण"मित्याह शेषा. प. भास्क. प. 46, पृ. 425 ।

(ट) "अदो जग्धिः' (सू. 2/4/36), ल्यबग्रहणं ज्ञापयति अन्तरङ्गानपि विधीन् बहिर-ङ्गो ल्यब्बाधत इती"त्याह श्रीना. ज्ञा. सं. 2, पृ. 59 ।

1. प्र पूर्वकात् 'अद्भक्षणे' धा. पा. अदा 1011, इति अद्धातोः क्त्वाप्रत्यये क्त्वो ल्यपि अदेर्जग्ध्यादेशे रूपमिदम् ।
2. अद्धातोरित्यर्थः ।
3. 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' - अष्टा. 7/3/37 ।
4. 'असिद्धं बहिरङ्गमन्तरङ्गे' - इतिपरिभाषयेत्यर्थः ।
5. विपूर्वकात् 'डुधाञ्धारणपोषणयोः' धा. पा. जुहो. 1092 इति धा. धातोः 'समान-कर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21, इति क्त्वा प्रत्यये 'कुगतिप्रादयः' - अष्टा. 2/2/18. इति समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप् - अष्टा. 7/3/37. इति कृत्वो ल्यबादेशे रूपमिदम् ।
6. 'विपूर्वकात् 'ओ हाक् त्यागे' धा. पा. जुहो. 1090. इति हाधातोः क्त्वाप्रत्यये समासे ल्यपि 'विधाये'तिवद् रूपमिदम् ।

'प्रदाय'1 'प्रखन्य'2 'प्रस्थाय'3 'प्रकम्य'4 'आपृछ्य'5 'प्रदीव्य'6 'प्रपठ्य'7 –इत्येतेषु क्रमशः 'दधातेर्हिः'8 'जहातेश्च9 क्त्वि' 'दो दद्घोः10' 11'जनसनखनां सञ्झलोः' 12'द्यति स्यति मास्थामित्ति किति' 'अनुनासिकस्य13 क्विझलोः क्ङिति' 'छ्वोः शूडनुनासिके च'14 'आर्धधातुकस्येड्वलादेः'15 इत्येतैः सूत्रैः हित्व-दत्त्वात्वेत्व-दीर्घत्व - शूडिड्विधीनां क्त्वावस्थायामेव बहिरङ्गेण ल्यपा बाधनम् । अस्या असत्त्वे हि ल्यपा नैतेषां विधीनां बाधः स्यादिति साधुत्वममीषां प्रयोगाणां न सिद्ध्येत् । यतो विधायेत्यत्र हित्वं, विहायेत्यत्र हित्वं प्रदायेत्यत्र दत्त्वं, प्रखन्येत्र आत्वं, प्रस्थायेत्यत्र इत्वं, प्रक्रम्येत्यत्र दीर्घत्वम् आपृच्छ्येत्यत्र शादेशः, प्रदीव्येत्यत्र ऊठ्, प्रपठ्येत्यत्र इट् ल्यपः प्रागेवाऽऽपद्येरन् । अथात्र सूत्रे ल्यप्शब्दस्यैतत्परिभाषाज्ञापकत्वाऽभ्युपगमे भगवतोक्तं ल्यब्ग्रहणस्य 'अलाश्रयेषु कार्येषु स्थानिवद्भावाभावः' इत्येतद्वचन-ज्ञापकत्वं16 कथं संगच्छेतेत्यपि नाशङ्कनीयम् । यतो 'यमर्थमन्तरेण यस्यानुपपत्तिस्तस्य सर्वस्य ज्ञापकं तद् भवति –इत्यनेकोऽप्यर्थो ल्यब्ग्रहणेन ज्ञाप्यते ।

---

1. प्रपूर्वकात् 'डुदाञ् दाने' धा. पा. जुहो. 1091, इति 'दा'धातोः विधायेतिवत् क्त्वो ल्यपि रूपमिदम् ।
2. प्रपूर्वकात् 'खनु अवदारणे' धा. पा. भ्वा. 878 इतिखन्धातोः 'विधाये'तिवत् क्त्वो ल्यपि रूपमिदम् ।
3. प्रपूर्वकात् 'ष्ठा गतिनिवृत्तौ' धा. पा. भ्वा. 928, इति स्थाधातोः 'विधाये'इतिवत् क्त्वो ल्यपि रूपमिदम् ।
4. 'क्रमु पादविक्षेपे' धा. पा. भ्वा. 473, इति क्रम्धातोः 'विधाये'तिवत् क्त्वो ल्यपि रूप-मिदम् ।
5. आङ्पूर्वकात् 'प्रच्छ ज्ञीप्सायाम्' धा. पा. तुदा. 1413, इति प्रच्छधातोः 'विधाये'तिवत् क्त्वो ल्यपि 'ग्रहि ज्या वयि व्यधिवष्टिविचति वृश्चति पृच्छति भृज्जतीनां ङिति च' - अष्टा. 6/1/16. रेफस्य संप्रसारणे ऋकारे कृते च रूपमिदम् ।
6. प्रपूर्वकात् 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' धा. पा. दिवा. 1107, इतिदिव्धातोः 'विधाये'तिवत्क्त्वो ल्यपि रूपमिदम् ।
7. प्रपूर्वकात् 'पठ व्यक्तायां वाचि' - धा. पा. भ्वा. 330, इतिपठ्धातोः 'विधाये'तिवत् क्त्वो ल्यपि रूपमिमदम् ।
8. अष्टा. 7/4/42 ।
9. अष्टा. 7/4/43 ।
10. अष्टा. 7/4/46 ।
11. अष्टा. 6/4/42 ।
12. अष्टा. 7/4/40 ।
13. अष्टा. 6/4/15 ।
14. अष्टा. 6/4/19 ।
15. अष्टा. 7/2/35 ।
16. तथाहि –
"आचार्यप्रवृत्ति ज्ञापयति - 'अल्विधौ स्थानिवद्भावो न भवती'ति यदयम् – 'अदो जग्धिर्ल्यप्तिकिती'ति 'तिकिती'त्येव सिद्धे ल्यब्ग्रहणं करोती"त्याह पत. व्या. म. भा. 1/1/8/55 ।

अन्यथा स्थानिवत्त्वेन 'विधाये'त्यादौ याद्यादेशा आपद्येरन् । तस्मादत्र सूत्रे 'ल्य'बितिशब्दः 'अल्विधौ स्थानिवद्भावो न भवतीतिवचनस्यापि ज्ञापकः1 । यतोऽस्य वचनस्याऽभावे 'प्रजग्ध्ये'त्यत्र क्त्वास्थानिकस्य ल्यपः स्थानिवद्भावेन कित्त्वं तकारादित्वं चास्तीति 'तिकिति' इत्यनेनैव तथापि परतोऽप्यादेशसिद्धेः सूत्रेऽस्मिन् 'ल्य'बितिशब्दो व्यर्थः । जग्ध्यादेशात् प्राक् क्त्वो ल्यबादेशेऽपि तत्र स्थानिवद्भावेन2 कित्त्वं तकारादित्वं चाऽलभ्यमिति तत्राऽदेर्जग्ध्यादेशसिद्ध्यर्थमत्र सूत्रे शब्दोऽयं स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'अनल्विधावित्यस्य3 प्रत्याख्यानसिद्धिः ।

## 'वप्रत्यय' इतिशब्दः

4'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' - इत्यत्र 'वप्रत्यय' इतिशब्दः 'अन्यत्र धातुग्रहणे तदादिविधिं'रिंति वचनस्य ज्ञापकः5 । यतोऽस्य वचनस्यऽभावेऽत्राऽयं

---

1. तथाहि –
"अदो जग्धिर्ल्यप्तिकिति' (सू. 2/4/36) इतिल्यब्ग्रहणाज् ज्ञापकाद् 'अल्विधौ स्थानिवद्भावो न भवती"त्याह श्रीना. ज्ञा. सं. 1. पृ. 140 ।
2. 'स्थानिवदादेशः.' - अष्टा. 1/1/56 ।
3. स्थानिवदादेशोऽनल्विधौ' - अष्टा. 1/1/56, इत्येतत्सूत्रस्थस्येत्यर्थः ।
4. अष्टा. 6/3/92 ।
5. तथाहि –
(क) "एवं तर्हि सिद्धे सति यदञ्चतिनह्यादिषु क्विब्ग्रहणं करोति तज् – ज्ञापयत्याचार्योऽन्यत्र धातुग्रहणमेतदादिविधिर्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् । 'अतः कृकमि कंस कुम्भपात्र कुशाकर्णीष्वनव्ययस्ये'त्यत्राऽयस्कृत् अयस्कार इत्यपि सिद्धं भवती"त्याह पत. व्या. म. भा. 6/3/3/116 ।
(ख) "वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम् । तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमि कंसकुम्भपात्र'इतिसत्वं भवती"ति ग्रन्थेन ज्ञापकत्वमस्य शब्दस्यास्मिन् वचने सूचयति - वाम. का. 6/3/92 ।
(ग) "अन्यत्र धातुग्रहणे, धात्वादेः प्रकृतिप्रत्ययसमुदायस्य प्रतिपत्तिः = प्रतीतिर्यथा-स्यादित्येवमर्थं वप्रत्ययग्रहणम् । अनेन ह्ययमर्थो विज्ञाप्यते–इतोऽन्यत्र धातुग्रहणे सति न केवलं धातुरेव गृह्यते, अपितु, धात्वादिः शब्द इति । तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमि' -इत्यादिना विसर्जनीयस्य सकारः सिद्धो भवति । यदि पुनरयमर्थो न विज्ञाप्येत, तदा करोतेरेव केवलस्य ग्रहणं स्यात्, ततो यत्र करोतेः केवलस्य प्रत्ययरहितस्य प्रयोगस्तत्रैव स्याद् - अयस्कृदिति । अत्र तुगागमः करोतेरेव भक्तत्वात्तद् - ग्रहणेन गृह्यत इति केवलस्य प्रयोगः" - इत्याह जि. बु. न्या. 6/3/92।
(घ) "यदि धातुग्रहणे तदादिविधिर्न स्याद् वप्रत्ययग्रहणमकर्तव्यं स्यात्; कृतं तु तदादिविधिं ज्ञापयती"त्याह ह. मि. पदम. 6/3/92 ।
(ङ) 'समः समि' (सू. 6/3/93) 'नहि वृति' सू. 6/3/116) अञ्चतिनह्यादिषु क्विब्ग्रहणात् धातुग्रहणेन तदादिविधिर्भवतीती"त्याह श्रीना. ज्ञा. सं. 6. पृ. 109 ।

शब्दो व्यर्थः । तथाहि – 1'विष्वद्र्यङ्' 'देवद्र्यङ्'2 –'तद्र्यङ्'3 'यद्र्यङ्'4 - इत्यादीनां सिद्ध्यर्थमारब्धे 'विष्वक्, देव इत्यनयोः सर्वनाम्नश्च टेः अद्रीत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्त उत्तरपदे' इत्यर्थकेऽस्मिन्सूत्रे – 5'विष्वगञ्चन'- मित्यत्राद्र्यादेशवारणाय क्विबन्तप्रतिपत्त्यर्थमुपात्तोऽयं शब्दोऽस्य वचनस्याऽभावे व्यर्थः । यतः 'अञ्चता'वित्येतन्मात्रोक्तावपि केवल एवाञ्चतावुत्तरपदे कार्येण भवितव्यं, वप्रत्यान्त एवाञ्चतिः केवलमुत्तरपदं हि भवति, नतु 'विष्वगञ्चन'मित्यत्र 'अञ्चन'-मितिल्युडन्तम् । ज्ञापिते चाऽस्मिन्वचने अञ्चत्युत्तरपदत्वस्य 'विष्वगञ्चन'-मित्यत्राऽञ्चन'मित्यत्राऽपि सत्त्वेन प्राप्तस्याऽद्र्यादेशस्य वारणार्थमयं शब्दः स्वांशे चरिताऽर्थो भवति । नह्यत्राञ्चनं वप्रत्ययान्तम् । ज्ञापितस्याऽस्य वचनस्य फलं तु '6अयस्कृतम्' 7अयस्कारः' इत्यत्र 8'अतः कृकमि-कंस-कुम्भपात्रकुशा

---

1. 'विष्वगञ्चती'त्यर्थे 'विष्वगितिसुबन्तोपपदात् 'अञ्चुगतिपूजनयोः' धा. पा. भ्वा. 108, इति अञ्चूधातोः 'ऋत्विग्-दधृक्स्रग्-दिगुष्णिगञ्चुयुजि - क्रुञ्चां च' - अष्टा. 3/2/59, इति क्विन्प्रत्यये क्विनः सर्वापहारे उपपदसमासे विभक्तेर्लुकि 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24, इति धात्ववयवनकारस्य लोपे 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' अष्टा. 6/3/92, इतिटेरकोऽद्र्यादेशे इकारस्य यणि च कृते निष्पन्नाद्विष्वद्र्यच्शब्दात्सौ 'उगिदचां सर्वनामस्थानेऽधातोः 'अष्टा. 7/1/70, इतिनुमागमे हल्ङ्यादिलोप-संयोगान्त-लोपाभ्यां सकारचकारयोर्निवृत्तौ नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः 'अष्टा. 8/2/62, इतिकुत्वेन ङकारे च कृते रूपमिदम् ।
2. देवमञ्चतीत्यर्थे देवमिति कर्मोपपदात् 'अञ्चुगतिपूजनयोः 'धा. पा. भ्वा. 188, इति अञ्चूधातोः 'ऋत्विग् - दधृक्स्रग् - दिगुष्णिगञ्चु-युजि - क्रुञ्चां च' अष्टा. 3/2/59, इति क्विन्प्रत्यये क्विनः सर्वापहारे उपपदसमासे विभक्तेर्लुकि 'अनिदितां हल उपधायाः क्ङिति' - अष्टा. 6/4/24, इतिधात्ववयवनकारस्य लोपे 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' - अष्टा. 6/3/92, इतिटेरकारस्य अद्र्यादेशे इकारस्य यणि च कृते निष्पन्नाद्देवद्र्यच्शब्दात् सौ 'उगिदचां सर्वनामस्थाने धातोः' - अष्टा. 7/1/70, इतिनुमागमे हल्ङ्यादिलोप - संयोगान्तलोपाभ्यां सकारचकारयोर्निवृत्तौ नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' अष्टा. 8/2/62, इतिकुत्वेन ङकारे च कृते रूपमिदम् ।
3. तमञ्चतीत्यर्थे तमिति कर्मोपपदात् 'अञ्चुगतिपूजनयोः' धा. पा. भ्वा. 188, इति अञ्चधातोः 'ऋत्विग्.' - अष्टा. 3/2/59, इति क्विन्प्रत्यये क्विनः सर्वापहारे उपपदसमासे विभक्तेर्लुकि 'अनिदितां.'- अष्टा. 6/4/24, इति धात्ववयवनकारस्य लोपे 'विष्वग्.' - अष्टा. 6/3/92, इतिटेरकारस्य अद्र्यादेशे इकारस्य यणि च कृते निष्पन्नात् तद्र्यच्शब्दात् सौ हल्ङ्यादिलोप-संयोगान्तलोपाभ्यां सकारचकारयो र्निवृत्तौ नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः'- अष्टा. 8/2/62, इतिकुत्वेन ङकारे च कृते रूपमिदम् ।
4. यमञ्चतीत्यर्थे यमितिकर्मोपपदात् 'अञ्चुगतिपूजनयोः' धा. पा. भ्वा. 188, इति अञ्चूधातोः 'ऋत्विग्.' अष्टा. 3/2/59, इति क्विनि 'तद्र्यङ्' इतिवद्रूपमिदम् ।
5. अत्र 'अञ्चु गतिपूजनयोः' धा. पा. भ्वा. 188, इति अञ्चूधातोः 'ल्युट् च' अष्टा. 3/3/115, इतिल्युटि वोरकाऽदेशे अञ्चनेतिशब्दो निष्पन्नः ।
6. अयसा कृतमित्यर्थः ।
7. अयः करोतीत्यर्थे 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः कर्मण्यणि रूपमिदम् ।
8. अष्टा. 8/3/36 ।

कर्णीष्वनव्ययस्ये'ति सत्त्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि विसर्गस्य सत्त्वविधायके 'अतः कृकमी'तिसूत्रे1 करोतेरेव केवलस्य ग्रहणं स्यात्, ततो यत्र करोतेः केवलस्य प्रत्ययरहितस्य प्रयोगस्तत्रैव '2अयस्कृत्' इत्यत्र विसर्गस्य सत्त्वं स्यान्नतु 'अयस्कृत'मित्यादौ । सति चाऽस्मिन्वचने करोत्यादावुत्तरपदे 'अयस्कृत्' 'अयस्कृतम्' 'अयस्कारः' इत्यादौ सर्वत्र विसर्गस्य सत्त्वं सिद्ध्यति ।

पुरुषोत्तमदेवस्तु सूत्रेऽस्मिन् 'वप्रत्यय' इतिशब्दः 'अन्यधातुग्रहणे न तदन्तविधि'रितिवचनस्य ज्ञापक इति मनुते3 । अत्र पुरुषोत्तमदेवोक्तवचने 'न तदन्तविधि'रित्यस्य तदादिविधिरित्यर्थो बोध्यः ।

भट्टोजिदीक्षितस्तु 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये'इति सूत्रपाठं स्वीकृत्याऽत्र अप्रत्यय' इतिशब्दः 'अन्यत्र धातुग्रहणे तदादिविधि'रितिवचनस्य ज्ञापक इत्याह4 ।

## 'वरे' इतिशब्दः

5'न पदान्त द्विर्वचन वरे यलोप स्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधि'ष्वित्यत्र 'वरे' इतिशब्दः 'समुदायेषु6 शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते' इतिपरिभाषाया ज्ञापकः7 । यतोऽस्या अभावेऽत्रासौ व्यर्थः । तथा हि 'यायावरः'8 इत्यत्र यङोऽकारस्य

---

1. अष्टा. 8/3/36 ।
2. अयः करोतीत्यर्थे' धा. पा. तना. 1473, इति कृधातोः 'क्विप् च' - अष्टा. 3/2/76, इति क्विपि क्विपः सर्वापहारे 'ह्रस्वस्य पिति कृति तुक्' - अष्टा. 6/4/34, इतितुगागमे कृदन्तात्सौ हल्ङ्यादिलोपे रूपमिदम् ।
3. तथाहि –
"विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये (6/3/92) इति क्विबन्तप्रतिपत्त्यर्थं वप्रत्ययग्रहणं ज्ञापयति - 'अन्यधातुग्रहणे न तदन्तविधि'रिति । तेनायस्कृतमयस्कार इत्यतःकृकमीति (8/3/46) सत्वं भवति । अन्यथा तु अयस्कृदिति क्विबन्त एव करोतौ सत्त्वं चरितार्थं स्या"दित्याह पु. दे. ज्ञा. समु. त्रयोविंशोअलुक्पादे, पृ. 85
4. तथाहि - "अप्रत्ययग्रहणं ज्ञापयति - 'अन्यत्र धातुग्रहणे तदादिविधि'रिति । तेनाऽयस्कारः । 'अतः कृकमी'ति सः " -इत्याह भ. दी. वै. सि. कौ. हलन्तपुंलिङ्ग प्र. पृ. 217
5. अष्टा. 1/1/58 ।
6. व्याडिः प. सू. प. 85, पृ. 35 ।
7. तथाहि – "समुदायेषु शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । कथं ज्ञायते । लोकतः । तद्यथा लोके तैलं भुक्तं, धृतं भुक्तमिति । शास्त्रेऽपि ज्ञापकं यदयं वरे स्थानिवद्भावस्य प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । इह यायावर इति योऽसौ यङोऽकारो लुप्तः अतोलोप इति, तस्य स्थानिवद्भावः शिष्टः, आकारलोपो माभूदिति । आर्धधातुकेऽचि क्ङिति आकारलोपो विधीयते । तत्र कः प्रसङ्गो यदुत यङोऽवयवलोपेऽचि लोपः स्यात् । एवं सिद्धे सति यद् वरे स्थानिवद्भावप्रतिषेधं शास्ति तज्ज्ञापयति समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति । किमेतस्या ज्ञापने प्रयोजनम् 'न धातुलोप आर्धधातुके' (1/1/4) इत्यत्र धात्ववयवलोपे कृते गुणवृद्धिप्रतिषेधः सिद्धो भवतीत्याह व्याडिः प. सू. प. 85, पृ. 35 ।
8. 'या प्रापणे' धा. पा. अदा. 1125 इतिया धातोर्यङि द्वित्वादौ कृते तदन्ताद्' यश्च यङः' -अष्टा. 3/2/176 इति वरच्प्रत्यये 'अतो लोपः' अष्टा. 6/4/48, इत्यकारलोपे, 'लोपोव्योर्वलि' -अष्टा. 6/1/66 इति यङो यकारलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।

लोपे तस्य1 स्थानिवद्भावाद्2 'आतो लोप3 इटि चे'त्याकारलोपः प्राप्नोति, स माभूदित्येतदर्थमत्र वरेशब्द उपात्तः, तदुपादाने हि वरे योऽजादेशः स न स्थानिवदित्यर्थेन यङोऽकारस्य 'अतो लोपः'4 इत्यनेन लुप्तस्य स्थानिवद्भावः प्रतिषिद्धो भवति । अस्या अभावे तु यङोऽवयवेऽचि स्थानिवद्भावलभ्ये5नाऽऽतोलोपः6 प्राप्नोतीत्यसौ व्यर्थः । नहि यङोऽवयव आर्धधातुकं7 किन्तु यङिति समुदायः । ज्ञापितायां चास्यामनया यङोऽवयवस्य अकारस्याप्यार्धधातुकतया तस्मिन् स्थानिवद्भावलभ्ये आतो लोपो माभूदित्येतदर्थमसौ शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः, फलं तु लविता8 लावक9 इत्यादौ लूञोऽवयवस्य10 ऌकारस्य यो हि लोपः सोऽपि धातुलोप इतिकृत्वा 'न धातुधातुलोप आर्धधातुके'11 इतिगुणवृद्धिप्रतिषेधयोः सिद्धिः । अस्या असत्त्वे हि अकारस्याऽत्राऽधातुत्वेन तल्लोपेऽनेन12गुणवृद्धिप्रतिषेधो न सिद्ध्येताम् । ज्ञापकोऽयं सूत्र-सम्मतः, न तु भाष्यसम्मतः । 'न धातुलोप आर्धधातुके' इति सूत्रं हि भगवता 13प्रत्याख्यातमतो ज्ञापितायाः फलाऽभावः । ज्ञापकं च तदेव भवति यदनुपन्नं ज्ञाप्याभावे, ज्ञापिते चार्थे स्वांऽशे यस्य चारितार्थ्यं यज् ज्ञापितस्य च फलमन्यत्र भवतीति शाब्दिकानां ज्ञापकराद्धान्तः ।

---

1. 'अतोलोपः' अष्टा. 6/4/48"
2. 'अच. परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
3. अष्टा. 6/4/64 ।
4. अष्टा. 6/4/48 ।
5. 'अच. परस्मिन् पूर्वविधौ' - अष्टा. 1/1/57 ।
6. 'आतोलोप इटि' - अष्टा. 6/4/64 ।
7. 'आर्धधातुकं शेषः' - अष्टा. 3/4/114 ।
8. 'लूञ्छेदने' धा. पा. क्र्या. 1580, इति लूधातोर्लुटि प्रथमपुरुषैकवचने रूपमिदम् ।
9. 'लूञ् 'छेदने' धा. पा. क्र्या. 1580, इति लूधातोर्ण्वुलि वोरकाऽऽदेशे रूपमिदम् ।
10. 'लूञ्छेदने' धा. पा. क्र्या. 1580
11. अष्टा. 1/1/4
12. अष्टा. 1/1/4
13. व्या. म. भा. 1/1/4/4

## 'वर्ज'मिति शब्दः

1'अनुदात्तं पदमेकवर्ज'मितिसूत्रे 'वर्ज'मितिशब्दः 2'नञ्घटितमनित्य'मिति परिभाषाया ज्ञापकः3 । यतोऽस्या अभावेऽत्र 'वर्जे'तिशब्दो व्यर्थः, 'अनुदात्त'-मित्यत्र हि विनार्थकनञा 4समासस्वीकारादेव तदर्थलाभः सुलभः । ज्ञापितायां चाऽस्यां क्वाचित्कत्वमस्य सूत्रस्य मा भवत्वेतदर्थमत्र 'वर्ज'मितिशब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु 'हापितः क्वासि हे सुभ्रु' - इति भट्टिप्रयोगस्य 'विमानना सुभ्रु कुतः पितुर्गृहे 'इति च कालिदासप्रयोगस्य साधुत्वसिद्धिः । अस्या असत्त्वे हि 5'नेयङुवङस्थानावस्त्री'ति नदीत्वनिषेधस्य दुर्वारतया 6ह्रस्वत्वाभावेन'सुभ्रु' इत्यस्य साधुत्वं न सिद्ध्येत् । अस्याः सत्त्वे तु नञ्घटितत्वेन नदीत्वनिषेधस्यानित्यत्वादत्राप्रवृत्तौ सत्यां नदीसंज्ञायां ह्रस्वत्वस्य सुलभतया 'सुभ्रुः' इत्यस्य साधुत्वामुपपद्यते ।

परिभाषामिमां व्याचक्षाणो भट्टनागेशः—'नञ्घटितमनित्यम्', तेन 'नेयङुवङ्' इत्यस्यानित्यत्वाद्धेसुभ्रु इति सिद्ध'मिति तन्न, भाष्येऽदर्शनात् भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणा-दावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्या''दिति7ग्रन्थेन न केवलमस्या अप्रामाण्यं न्यरूपयत् – प्रत्युत भाष्यानुक्तानां समेषामेव वचनानां ज्ञापकानां चाप्राण्यमसूसुचत् । भट्टनागेशमतमिदं **शेषाद्रये** न रोचते । यतोऽसौ ''व्याकरणं हीदं स्मृतिरूपं प्रमाणम् । तस्याश्च प्रामाण्यं स्वकालसत्ताग्राहकप्रत्यक्ष- सध्रीचीनपूर्वकालसत्ता-ग्राहकपूर्वस्मृतिमूलतया । तथा च हरदत्तः – 'गवादिशब्दाना- मनादित्वमेव साधुत्वं गाव्यादीनां तु वाचकाऽशक्तिजत्वादसाधुत्वं च प्रसाध्य, कथं पुनराचार्येण पाणिनिनावगतम् - एते साधव इति ? आपिशलेन व्याकरणेन । आपिशलिना तर्हि केनावगतम् ? ततः पूर्वेण व्याकरणेन । यद्येवमन्धपरम्परा स्यादिति मूलाशुद्धिमाशङ्क्य, नैष दोषः । सर्व एव हि स्वे स्वे काले गाव्यादिभ्यो विभक्तान्

---

1. अष्टा. 6/1/158 ।
2. (क) भ. ना. प. शे. प. 98, पृ. 329
   (ख) शेषा. प. भास्क. प. 85, पृ. 446
3. तथाहि – ''अनुदात्तं पदमेकवर्जम्' इतिसूत्रे विनार्थकनञा समासस्वीकारात् सिद्धे वर्जग्रहणं ज्ञापकम् । तेन 'हापितः क्वासि हे सुभ्रु' इति नेयङुवङ्.' (1/4/4) इति निषेधस्यानित्यत्वात् सिद्ध्यति । कालिदासोऽपि 'विमानना सुभ्रु कुतः पितुर्गृहे' इती''त्याह शेषा प. भास्क. प. 85, पृ. 446
4. 'नञ्' - अष्टा. 2/2/6
5. अष्टा. 1/4/4
6. 'अम्बार्थनद्योर्ह्रस्वः' - अष्टा. 7/3/107, इत्यनेनेतिशेषः ।
7. प. शे. प. 98, पृ. 329

प्रत्यक्षेणोपलभन्ते । पूर्वकालसत्तां च पूर्वव्याकरणतोऽध्यवस्यन्ति । तेऽपि स्वकालसत्तां प्रत्यक्षेण पूर्वकालसत्तां पूर्वव्याकरणादिति नान्धपरम्परेति व्याकरणस्य-समूलतामुपापीपदन्' । **पार्थसारथिश्च** व्यकरणाऽधिकरणे व्याकरणस्य समूलता-मुपपादयन्–

"स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे, प्रत्यक्षव्यवधानाच्च नान्धवाक्य-समानता" - इत्याह । स्वेनापि ग्रन्थादौ ' प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र पाणिनीये तन्त्रे ज्ञापकन्यायसिद्धानि' (परि. शे. परि. 1) इत्युक्तम् । यद्यपि भाष्यवार्तिकयो र्निबद्धानि परिभाषारूपाणि (परि. शे. परि. 1) इत्युक्तम्, तथापि भाष्यवार्तिकयोरनिबद्धान्यपि प्राचीनव्याकरणसिद्धानि व्याख्यातृपरम्परयाभियुक्तैः स्मर्यमाणानि सौत्रज्ञापकानुमोदितानि नाप्रमाणीभवितुमर्हन्ति । अतएव 'मणीवादीनां प्रतिषेधः' इति तु मुनित्रयानुक्तत्वादप्रामाणमिति सौत्रज्ञापकाभावोऽपि अप्रमाण्यज्ञापकत्वेन कैयटादिभिरुक्तः । वृद्धिसूत्रे भाष्ये 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रणिधानेन सूत्राणि प्रणयतिस्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम् । किं पुनरियता सूत्रेण' (1/1/1 महाभाष्य) इतिसामान्यत आचार्यवचसां सार्थक्यमुक्तम् । तत्र यद् यत् सूत्रोक्तं भाष्यवार्तिककृद्भ्यां प्रत्याख्यायते तस्य प्रयोजनान्तरं परम्पराप्राप्तमभियुक्तैर-विभागेन यत्र वर्ण्यते तत्र भाष्यवार्तिकयोस्तद्ग्रहणं तत्प्रयोजनं न भवतीति प्रयोजन विशेषप्रतिपादने तात्पर्यम् । प्रयोजनान्तरं त्वभियुक्तैः कथ्यमानं यदि भाष्यवार्तिकाभ्यां न विरुध्यते तदा तदपि प्रमाणमेव । यत्र तु तैरपि प्रयोजनान्तरं नोच्यते , तत्र नैष्फल्यमेवेति युक्तम् । यत्तु – प्रत्याख्यातानामदृष्टार्थपारायणादौ विनियोग इति, तदविचारितरमणीयम् । अदृष्टं हि वेदैकप्रमाणकम् । न च ईदृशानि पाणिनीयानि वाक्यानि पठेत् इति वेदोऽस्ति, पाणिनेः सादित्वेन ततः पूर्वमेतद्वेदस्याबोधकत्वप्रसङ्गात् । यद्यपि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' (महाभाष्य आ. 1) इति भाष्योक्ता श्रुतिः प्रमाणं भवेत्, तथापि सा दृष्टप्रयोजना । अध्ययनसंस्कृतेन वेदेन फलवदर्थावबोधं सम्पादयेदिति वेदांशे तस्या अर्थात्तदैकरूप्याय व्याकरणांशेऽपि दृष्टसाधुत्वप्रतिपत्तिरूप-प्रयोजनत्वमेव युक्तम् । न त्वदृष्टार्थत्वम्, 'यस्य दृष्टं न लभ्येत स्यात्तस्या-दृष्टकल्पना' इतिन्यायात् । किं च अदृष्टार्थत्वं कल्प्यमानमपि अङ्गाध्ययनत्वेन कल्प्येत । अङ्गत्वं च व्याकरणत्वादिना । व्याकरणत्वं च शब्दसाधुत्वप्रति-पत्तिप्रयोजकशब्दत्वम् । न च तत् शब्दसाधुत्वप्रतिपत्त्यनुपयोगिषु प्रत्याख्यातपदेषु विद्यते येन तेषां तादृशश्रुतिबलाददृष्टार्थता कल्प्येत । ईदृशश्चार्थो भाष्यानुक्तो न्यायापेतश्च त्वया कल्प्यमानो यदि प्रामाणिकः, तदैतद्व्याकरण – प्रामाण्योप-

जीव्यानां पूर्वव्याकरणे पठितवचनानां भाष्यानुक्तानामपि सौत्रज्ञापकसिद्धत्वेनाभि-युक्तपरम्परया वर्ण्यमानानामर्थानामप्रामाणिकत्ववचनं तेषु मात्सर्यमात्र-निबन्धन"मित्याह1 । तस्माज्ज्ञापकसिद्धानां भाष्यानुक्तानामपि भाष्याविरुद्धानां परिभाषारूपाणां तद्व्यतिरिक्तानां च सर्वेषां वचनानां प्रामाण्यमक्षुण्णमिति निश्चीयते ।

## 'वर्णे'तिशब्दः

2'सहिवहोरोदवर्णस्ये'त्यत्र 'वर्णे'तिशब्दः" 'तपरस्तत्कालस्ये'त्यत्र3'तपर'-इतिपदे तात्परस्तपर इति पञ्चमीसमासोऽप्यस्ती"तिवचनस्य ज्ञापकः4 । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'सोढा'5 'सोढुम्'6

---

1. प. भास्क. प. 85, पृ. 446-447
2. अष्टा. 6/3/112 ।
3. अष्टा. 1/1/70 ।
4. तथाहि –
   (क) "वर्णग्रहणं किमर्थं, न सहिवहोरोदस्येत्येवोच्येत ? । वृद्धावपि कृतायामीत्वं यथा स्यात् ।उदवोढाम्, उदवोढम् -उदवोढे'ती"तिग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन्वचने सूचयति पत. व्या. म. भा. 6/3/3/112 ।
   (ख) "अत्राऽसति वर्णग्रहणे तादपि परस्तपर इत्यकारस्य तपरत्वाद्भिन्नकालस्य ग्रहणं न स्याद् वर्णग्रहणात्त्ववर्णमात्रस्य भवती"ति ग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन् वचने सूचयति कै. प्रदी. 6/3/3/112 ।
   (ग) "वर्णग्रहणं किम्? कृतायामपि वृद्धौ यथा स्यात् - उदवोढाम् । उदवोढम् । तादपि परस्तपरः, तपरत्वादाकारस्य ग्रहणं न स्या"दितिग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन्वचने सूचयति वाम. का. 6/3/112 ।
   (घ) "..........तादपि परस्तपरः इत्यस्य च समासस्यैतदेव वर्णग्रहणं ज्ञापकं वेदितव्य"मित्याह जि. बु. न्या. 6/3/112 ।
   (ङ) "इदमेव वर्णग्रहणं लिङ्गं 'तपरस्तत्कालस्य' इत्यत्र पञ्चमीसमासोऽप्याश्रीयत इति । तेनैतन्न चोदनीयम् – 'सहिवहोरस्यौत् 'इत्येवं कस्मान्न कृतमिती"त्याह ह. मि. पदम. 6/3/1121
   (च) "सहिवहोरोदवर्णस्य (6/3/112) इतिवर्णग्रहणं कृतायामपि वृद्धौ ओ यथा स्यात् उदवोढामिति । अन्यथा तादपि परस्तपर इत्यकारस्य तपरत्वादाकारस्य ग्रहणं न स्यात् । एवमर्थं क्रियमाणं तादपि परस्तपर इत्यस्य सत्त्वे ज्ञापकं भवती"त्याह पु. दे. ज्ञा. समु. अलुकपादे पृ. 85 ।
5. 'षह मर्षणे' धा. पा. भ्वा. 852, इति सहधातोर्लुटि लस्य तादेशे तासिप्रत्यये तस्य डादेशे डित्त्वाट्टेरासो लोपे 'सह्ता' इत्यवस्थायां 'तीषसहलुभरुषरिषः' अष्टा. 7/2/48, इति इडभावपक्षे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'सढा' इतिस्थिते 'सहिवहोरोदवर्णस्य' -अष्टा. 6/3/112, इति सकारोत्तराऽकारस्य ओत्त्वे कृते रूपमिदम् ।
6. 'षह मर्षणे' धा. पा. भ्वा. 852, इति सह्धातोः 'तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्' अष्टा. 3/4/10, इतितुमुन्प्रत्यये 'सह्तुम्' इत्यवस्थायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'सढुम्' -इतिस्थिते 'सहिवहोरोदवर्णस्य'-अष्टा. 6/3/112, इतिसकारोत्तराकारस्य ओत्त्वे कृते कृदन्तत्वादागतविभक्तेरव्ययात् परत्वेन लुकि रूपमिदम् ।

'सोढव्यम्[1] 'वोढा'[2] 'वो'[3] 'वोढव्यम्'[4] – इत्यादीनां सिद्ध्यर्थमारब्धे– 'सहि वहि – इत्येतयोरवर्णस्यौकार आदेशो भवति लोपे' इत्यर्थकेऽस्मिन्सूत्रे [5]'उदवोढाम्' [6]'उदवोढ'मित्यादौ कृतायामपि [7]वृद्धावाकारस्य ओकाराऽऽदेशार्थमुपात्तोऽयं शब्दः। स चाऽस्य वचनस्याऽभावे व्यर्थः। 'सहिवहोरोदस्ये'त्युक्तावपि ह्यत्राऽ-कारेणाऽऽकारस्याऽपि ग्रहणम्।'अणुदित्सवर्णस्य चाप्रत्ययः[8]' इत्यनेनैव सुलभम्। नह्यत्राऽकारस्तपर इतिशङ्क्यः। यतस्तपर[9]इतिशब्दे तः परो यस्मादिति बहुव्रीहि-रेवेति वक्तुं शक्यम्। ज्ञापिते चाऽस्मिन्वचनेऽत्र सूत्रे अकारेण आकारस्य ग्रहणं न प्रोप्नोतीति[10] 'उदवोढ'मित्यादौ अकारेण आकारस्य ग्रहणाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति। ज्ञापितस्याऽस्य वचनस्य फलं तु त्रिमात्रिकस्य

---

1. 'षहमर्षणे धा. पा. भ्वा. 852, इति सह्धातोः 'तव्यत्तव्यानीयरः' - अष्टा. 6/3/112, इतिसकारोत्तराऽकारस्य ओत्त्वे विभक्तिकार्येषु च कृतेषु रूपमिदम्।
2. वह प्रापणे' धा. पा. भ्वा. 1004, इति वह्धातोर्लुटि लस्य तिपि तासिप्रत्यये ते डाऽऽदेशे डित्त्वाट्टेरासो लोपे 'वह ता' इत्यवस्थायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'वढव्य' इतिस्थिते' 'सहिवहो.'-अष्टा. 6/3/112, इतिवकारोत्तराऽकारस्य ओत्त्वे च कृते रूपमिदम्।
3. 'वह प्रापणे' धा. पा. भ्वा. 852, इति वह्धातोः 'तुमुनूण्वुलौ.' -अष्टा. 3/4/10, इतितुमुन्प्रत्यये 'वह्तुम्' -इत्यवस्थायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'वढुम्' - इति स्थिते 'सहिवहो.'- अष्टा. 6/3/112, इतिवकारोत्तराऽकारस्य ओत्त्वे कृते कृदन्तत्वादागतविभक्ते-रव्ययात्परत्वेन लुकि रूपमिदम्।
4. 'वहप्रापणे' धा. पा. भ्वा. 1004, इतिवह्धातोः 'तव्यत्तव्या. -अष्टा. 3/2/96, इति तव्यति तव्ये वा प्रत्यये ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'वढव्य' इतिस्थिते' सहिवहो.' अष्टा. 6/3/112, इतिवकारोत्तराऽकारस्य ओत्त्वे विभक्तिकार्येषु च कृतेषु रूपमिदम्।
5. 'उत्पूर्वकात्' वहप्रापणे' धा. पा. भ्वा. 1004, इतिवह्धतोर्लुङि च्लौ च्लेः सिजादेशे लस्य तसि तसस्तामादेशेऽडागमे ढत्वादेरसिद्धत्वात् ततः पूर्वं 'वदव्रजहलन्तस्याचः' - अष्टा. 7/2/3, इति वृद्धौ उद्वाह्स् ताम्' इत्यवस्थायां 'झलो झलि - अष्टा. 8/2/26, इतिसकारलोपे 'सहिवहो.' - अष्टा. 6/3/112, इतिवकारोत्तराऽकारस्य ओत्त्वे ढत्व-धत्वष्टुत्व-ढलोपेषु कृतेषु रूपमिदम्।
6. 'उत्पूर्वकात् 'वहप्रापणे' धा. पा. भ्वा. 1004, इति वह्धातोर्लुङि च्लौ च्लेः सिजादेशे लस्य थसादेशे थसस्तामादेशेऽडागमे ढत्वादेरसिद्धत्वात् ततः पूर्वं 'वदव्रजहलन्तस्याचः' - अष्टा. 7/2/3, इतिवृद्धौ'उदवाह्स् तम्' इत्यवस्थायां 'झलो झलि'- अष्टा. 8/2/26, इति सकारलोपे 'सहिवहो.' - अष्टा. 6/3/112, इति वकारोत्तराऽकारस्यओत्त्वे ढत्वधत्वढलोपेषु कृतेषु रूपमिदम्।
7. 'वदव्रजहलन्तस्याचः' -अष्टा. 7/2/3, इत्यनेनेतिशेषः।
8. अष्टा. 1/1/69।
9. 'तपरस्तत्कालस्य' - अष्टा. 1/1/70, इतिसूत्रस्थ इतिशेषः।
10. 'तपरस्तत्कालस्य'–अष्टा. 1/1/70, इतिसूत्रबलादितिशेषः;

चतुर्मात्रिकस्य च ऐचो वृद्धिसंज्ञाया[1] अभावः । अस्य वचनस्याऽसत्त्वे हि [2]'वृद्धिरादै'जित्यत्र ऐजंशे [3]तपरसूत्राऽप्रवृत्त्या त्रिमात्रिकस्य चतुर्मात्रिकस्य च ऐचो वृद्धिसंज्ञाया आपत्तिर्दुवारा स्यात् । सत्यां चैचस्त्रिमात्रिकस्य चतुर्मात्रिकस्य वृद्धिसंज्ञायां 'खट्वैलका'–इत्यादौ चतुर्मात्रिक एकाऽऽदेश ऐकारो '[4]वृद्धिरेची'-त्यनेनाऽऽपद्येत । सति चाऽस्मिन् वचने चतुर्मात्रिकस्य ऐकारस्य वृद्धिसंज्ञाया एवाऽभावान्नाऽत्र वृद्ध्यैकाऽऽदेशश्चतुर्मात्रिक[5] ऐकार आपद्यते ।

## 'विधी'तिशब्दः

'[6]स्थानिवदादेशोऽनल्विधा 'वितिसूत्रे'विधी'तिशब्दः 'क्वचिद् विशेषोऽप्यतिदिश्यते'इतिवचनस्य [7]ज्ञापकः । यतोऽत्र सूत्रेऽस्य ५वचनस्याऽभावे शब्दोऽयं व्यर्थः ।

---

1. 'वृद्धिरादैच्'–अष्टा. 1/1/1, इत्यनेनेतिशेषः ।
2. अष्टा. 1/1/1 ।
3. 'तपरस्तत्कालस्य'–अष्टा. 1/1/70, इतिसूत्रेत्यर्थः ।
4. अष्टा. 1/1/1 ।
5. 'वृद्धिरेचि'–अष्टा. 6/1/88, इत्यनेनेतिशेषः ।
6. अष्टा. 1/1/56 ।
7. तथाहि–

(क) "अथ विधिग्रहणं किमर्थम् ? । सर्वविभक्त्यन्तः समासो यथा विज्ञायेत–अलः परस्य विधिः–अल्विधिः । अलोविधिः अल्विधिः, अलिविधिः–अल्विधिः । अलाविधिः–अल्विधिरिति । नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित् प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा साऽऽश्रयितव्या । इदं तर्हि प्रयोजनम्–उत्तरपदलोपो यथा विज्ञायेत–अलमाश्रीयते अलाश्रयः, अलाश्रयोविधिः अल्विधिरिति । यत्र प्राधान्येनालाश्रीयते, तत्रैव प्रतिषेधः स्यात् । यत्र विशेषणत्वेनाऽलाश्रीयते, तत्र प्रतिषेधो न स्यात् । किं प्रयोजनम् ? प्रदीव्य प्रसीव्येति । वलादिलक्षण इण् माभूदिति"+ उक्त्या ज्ञापकत्वमस्य शब्दस्याऽस्मिन्वचने सूचयति पत. व्या. म. भा. 1/1/8/55 ।

(ख) "अनल्विधाविति विधिग्रहणमलाश्रयो विधिरल्विधिरित्युत्तरपदलोपिसमासे सामान्याश्रयं विशेषाश्रयं वा यत्कार्यं स्थानिवदित्यतिदेशात्प्राप्नोति तन्निषेधार्थं क्रियते प्रतिदीव्येत्यत्र ल्यपोवलादित्वाश्रय इड्निषेधो यथा स्यात् । अन्यथा हि सामान्यातिदेशे विशेषानतिदेश इति (परिभाषा 64) यदेव प्रत्ययत्वार्द्धधातुकत्वादि सामान्याश्रयं तदेवातिदेशेन स्यात्, न वलादित्वविशेषाश्रयमिति प्रतिदीव्येत्यत्र ल्यपो वलादित्वाभावादिड् नास्तीति किं विधिग्रहणेन । फलं च ज्ञापकस्याग्रहीदित्यत्र 'ग्रहोऽलिटि दीर्घ'इति (7/2/37) दीर्घग्रहणात् यलतः स्थानिवदित्यतिदेशात् इड्रूपत्वे 'इट ईटी'ति (8/2/28) सिच्लोपसिद्धिरिति"ग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन्वचने संसूचयति पु. दे. ज्ञा. समु. प्रथमपादे पृ. पृ. 59 ।

(ग) "क्वचिद्विशेषोऽप्यतिदिश्यते । तत्र 'स्थानिवदादेशोऽनल्विधौ' (1/1/56) इतिविधिग्रहणं लिङ्गम् । तत्र ह्युच्यते – अनल् इति सम्बन्धसामान्ये षष्ठी क्रियताम्, अतएवालाश्रये विधिर्व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वे णत्वप्राप्तिः तथाऽल एव स्थाने

तथाहि – विधिशब्दोऽत्र अलाश्रयो विधिरल्विधि'रित्युत्तरपदलोपि - समास–लाभार्थमत्र सूत्रे गृहीतंः, उत्तरपदलोपि-समास-लाभफलं तु समान्याऽऽश्रयं विशेषाऽऽश्रयं च यावत्कार्यं 'स्थानिव'दित्यतिदेशात् प्राप्नोति तत्तत्कार्याणाम् 'अनल्विधा'विति प्रतिषेधः, तेन 'प्रतिदीव्ये[1]'त्यादौ क्त्वागतं वलादित्वं विशेषधर्मं '[2]स्थानिव'दित्यतिदेशलब्धमादाय '[3]आर्धधातुकस्येड्वलादे'रितिप्राप्तस्य इडागमस्याऽभावः सिद्ध्यति । अस्य वचनस्याऽभावे 'लोके ब्राह्मणवदस्मिन्क्षत्रिये प्रवर्त्तितव्यमित्युक्त्या ब्राह्मणसामान्यकार्यं वन्दनादिकमतिदिश्यते न तु माठरादिविशेषसम्बद्धं परिवेषणादिक'मिति लोकन्यायसिद्ध्या 'सामान्याऽतिदेशे विशेषानतिदेशः'[4] इतिपरिषया 'प्रतिदीव्ये'त्यादौ [5]ल्यपि 'क्त्वा'[6] -निष्ठस्य कृत्त्व - प्रत्ययत्वाऽऽर्धधातुकत्वादिधर्माऽतिदेशे तन्निष्ठस्य तत्तत्सामान्य-धर्माऽपेक्षया विशेषस्य वलादित्वरूपधर्मस्याऽतिदेशाऽप्राप्त्या तदतिदेशनिरासायोपात्तोऽसौ शब्दोऽत्र सर्वथा

---

विधिर्द्युकाम इत्यत्रोत्त्वस्य स्थानिवत्त्वाद्धलि लोपः । तथाल उत्तरो यो विधिर्द्यौरित्यादौऔत्वस्य स्थानिवत्त्वाद्धलः सुलोपः । तथालि परतो यो विधिः 'स इष्टवानि' त्यत्र सम्प्रसारणस्य स्थानिवत्त्वाद् 'एतत्तदोः सुलोप' (6/1/132) इतिसुलोपः, स सर्वोऽल्विधिरित्यनल् इत्युच्यमाने इदं चार्थचतुष्टयं लभ्यत एव तत् किं विधिग्रहणेन । इदं तर्हि प्रयोजनमलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समासो यथा स्यादिति । तेनानल्विधाविति प्रतिषेधः सामान्याश्रयं (विशेषाश्रयं) च कार्यं यावत् स्थानिवदित्यतिदेशात् प्राप्नोति तन्निरासार्थं क्रियते । तेन 'प्रतिदीव्ये'त्यत्र क्त्वागोचरबलादित्वाश्रयेणूनिषेधो भवति । अन्यथा सामान्यातिदेशे विशेषानतिदेश इति यदेव प्रत्ययत्वार्धधातुकसामान्याश्रयं तदेवातिदेशेन स्यान्न वलादिविशेषाश्रयमपीति प्रतिदीव्येति वलादित्वाभावादिड् नास्ति, किं विधिग्रहणेन । ज्ञापकस्य च फलमग्रहीदित्यत्र ग्रहोऽलिटि दीर्घस्य स्थानिवत्त्वातिदेशादिड्रूपत्वेन 'इट ईटि' (8/2/28) इतिसिचो लोपसिद्धिः "इत्याह सी. दे. बृ. प. वृ. प. 106, पृ. 262 ।

(घ) "स्थानिवत्सूत्रे (1/1/56) तु अनल्विधाविति यलाद्विशेषोऽप्यतिदिश्यत इतिस्थानिवत् सूत्रभाष्यकैयटयोः'–इत्याह शेषा. प. भास्क. प. 93, पृ. 454 ।

1. "प्रतिपूर्वकात् दिव्धातोः 'समानकर्त्तृकयोः पूर्वकाले'–अष्टा. 7/4/21 इति क्त्वाप्रत्यये क्त्वः 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'–अष्टा. 7/3/37 इति ल्यपि रूपमिदम् ।
2. 'स्थानिवदादेशोऽनल्विधौ'–अष्टा. 1/1/56 ।
3. अष्टा. 7/2/35 ।
4. (क) व्याडिः प. सू. प. 91, पृ. 37 ।
   (ख) पु. दे. ल. प. वृ. प. 64, पृ. 140 ।
   (ग) सी. दे. बृ प. वृ. प. 106, पृ. 162 ।
   (घ) नी. दी. प. वृ. प. 97, पृ. 311 ।
   (ङ) ह. भा. प. भास्क. प. 108, पृ. 367 ।
   (च) भ. ना. प. शे. प. 110, पृ. 344 ।
   (छ) शेषा. प. भास्क. प. 93, पृ. 454 ।
5. 'समासेऽनञ्पूर्वेक्त्वोल्यप्'–अष्टा. 7/3/37 ।
6. 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 7/4/21 ।

व्यर्थः । ज्ञापिते चाऽस्मिन्वचने विशेषधर्मस्याऽप्यतिदेशः सुलभ इति तन्निरासार्थमत्र विधिशब्दः स्वांऽशे चरिताऽर्थतामेति । ज्ञापितस्याऽस्य वचनस्य फलम् 'अग्रहीत्'[1] इत्यत्र 'ग्रहोऽलिटि दीर्घः[2] 'इतिदीर्घस्य स्थानिवत्त्वाऽतिदेशादिट्त्वरूप-विशेषधर्मवत्तया 'इट[3] ईटि'इति सिचो लोपसिद्धिः । अस्य वचनस्याऽभावे हि इट्त्वरूपविशेषधर्मस्याऽत्राऽतिदेशाऽसम्भवान्नासौ [4]सिद्ध्येत् ।

## 'विधि'रितिशब्दः

[5]'यस्मात् प्रत्यय-विधिस्तदादि प्रत्ययेऽङ्ग'मित्यत्र 'विधि रितिशब्दः [6]'आभाच्छास्त्री-यमसिद्धत्वमनित्य'मितिवचनस्य ज्ञापकः[7] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । अत्र सूत्रे हि शब्दोऽयं '[8]स्त्री [9]इयती'–इत्यत्र स्त्रीशब्दघटकस्य ईकारस्य इयच्छब्दे प्रत्यये परे 'यस्येतिचे'ति[10] प्राप्तस्य लोपस्य '[11]स्त्रियाः' इतीयङो वा वारणाऽर्थमुपातः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'स्त्री इयती'त्यत्र 'यस्येति[12] चे'ति लोपेन निवृत्तस्य ईशादेशस्य [13]'असिद्धवदत्राभादित्यनेनाऽ-सिद्धत्वात् तद्व्यवधाने इयत्प्रत्यये परतोऽङ्गसंज्ञा विधिरितिशब्दाऽभावेऽपि 'स्त्री'इत्यस्य हि न प्राप्नोति । ज्ञापिते चाऽस्मिन्वचनेऽनेन 'स्त्री इयती'-त्यत्र [14]लोपेन निवृत्तस्य ईशादेशस्याऽसिद्धत्वाऽभावात् प्राप्तस्य

---

1. ग्रहधातोर्लुङि प्रथमैकवचने रूपम् ।
2. अष्टा. 7/2/37 ।
3. अष्टा. 8/2/28 ।
4. 'इट ईटि'–अष्टा. 8/2/28, इतिसिचो लोप इत्यर्थः ।
5. अष्टा. 1/4/13 ।
6. 'असिद्धवदत्राभात्'–अष्टा. 6/4/22 ।
7. तथाहि–
   (क) "एवं तर्हि विधिग्रहणेनैतज्ज्ञाप्यते–भाधिकारीयमसिद्धत्वमनित्यमिति, तेन 'वुग्युटावुवङ्यणोः सिद्धौ वाच्यौ' इत्येतन्न वक्तव्यं भवतीति । वुक्-बभूव, युट्–उपदिदीय इती"-त्याह जि. बु. न्या. 1/4/13 ।
   (ख) "यस्मादादिसूत्रे (1/4/13) स्त्री इयतीत्येवमर्थं विधिग्रहणं ज्ञापयति–'आभाच्छा–स्त्रीयमसिद्धत्वमनित्य'मिति । तेन देभतुर्देभुरित्येत्वे कर्तव्ये नलोपस्याऽसिद्धत्वं न भवतीती"त्याह पु. दे. ज्ञा. समु. चतुर्थे कारकपादे पृ. 64 ।
8. स्त्रीशब्दात्सौ हल्ङ्यादिलोपे रूपमिदम् ।
9. इदं परिमाणमस्या इत्यर्थे इदंशब्दात् 'किमिदंभ्यां वोघः'–अष्टा. 5/2/40, इति वतुप्प्रत्यये-वकारस्य घाऽऽदेशे, घस्य इयादेशे 'इदं किमोरीश्की'–अष्टा. 6/3/90, इति इदम ईशादेशे 'यस्येति च'–अष्टा. 6/4/148, इतिईकारलोपे 'इयत्' इतिस्थिते स्त्रीत्वात्ततः 'उगितश्च'–अष्टा. 4/1/6, इति ङीपि ङ्यन्तात् सौ हल्ङ्यादिलोपे रूपमिदम् ।
10. अष्टा. 6/4/148 ।
11. अष्टा. 6/4/79 ।
12. अष्टा. 6/4/148 ।
13. अष्टा. 6/4/22 ।
14. 'यस्येति च'–अष्टा. 6/4/148, इतिलोपेनेत्यर्थः ।

ईकारलोपस्य[1]इयङादेशस्य[2]वा वारणार्थमयं शब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति । न हि स्त्रीशब्दात् इयत्[3]प्रत्ययो विहितः किन्तु इदम्शब्दादेव । ज्ञापितस्याऽस्य वचनस्य फलं तु 'वुग्युटावुवङ्यणोः [4]सिद्धावि'त्येतद्वार्तिकाऽनारम्भजन्यं लाघवम् । '[5]बभूव' '[6]दिदीये'–इत्यादौ क्रमशो वुकः[7], [8]युटश्च '[9]असिद्धवदत्राभा'दित्यसिद्धत्वात् प्राप्तस्य [10]उवङो [11]यणश्चाऽभावाय वार्तिकमिदमारब्धम् । सति चाऽस्मिन् वचनेऽत्र वुग्युटोरसिद्धत्वाऽभावेनोवङ्यणोः स्वतोऽप्राप्त्या तयोरभावः सुलभ इति वार्तिकमिदं नाऽऽरम्भणीयं भवति । तथा '[12]देभतुः' [13]देभुरित्यत्रेत्वा[14]ऽभ्यालोपयोः कर्तव्ययोः, [15]नलोपस्याऽसिद्धत्वा[16]ऽभावोऽप्यस्य

---

1. 'यस्येतिच'–अष्टा. 6/4/148 ।
2. 'स्त्रियाः'–अष्टा. 6/4/79 ।
3. 'किमिदभ्यां वोघः'–अष्टा. 5/2/40,
4. वा. व्या. म. भा. 6/4/2/22 ।
5. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोर्लिटि तिपि तिपो णलादेशे 'भू अ'इतिस्थितौ 'भुवो वुग्लुङ्लिटोः'–अष्टा. 6/4/88, इतिवुगागमे 'भुव् अ'–इतिस्थितौ 'लिटिधातोरनभ्यासस्य'–अष्टा. 6/1/8, इति द्वित्वे 'भूव्भूव् अ'–इत्यवस्थायां 'पूर्वोऽभ्यासः'–अष्टा. 6/1/4, इति प्रथम'भूव्' शब्दस्याऽभ्याससंज्ञायां 'हलादिः शेषः'–अष्टा. 7/4/60, इति हलादि- शेषे 'भू भूव् अ' इति स्थिते अभ्यासोकारस्य 'ह्रस्वः' अष्टा. 7/4/59, ह्रस्वत्वे, 'भवेतरः'–अष्टा. 7/4/73, इत्यभ्यासस्य उकारस्य अकाराऽऽदेशे 'अभ्यासे चर्च'–अष्टा. 8/4/54, इतिजश्त्वेनाऽभ्यासस्य भस्य बत्वे रूपमिदम् ।
6. 'दीङ् क्षये' धा. पा. दिवा. 1134, इतिदीधातोर्लिटि प्रथमपुरुषैकवचने आत्मने लस्य ताऽऽदेशे द्वित्वेऽभ्यासह्रस्वे तकारस्यैशादेशे 'दीङो युडचि क्ङिति'–अष्टा. 6/4/63, इति युडागमे रूपमिदम् । न चाऽत्र युटः असिद्धवदत्राभात्' अष्टा. 6/4/22, इत्याभीयत्वेन सिद्धतया परत्वात् 'एरनेकाचोऽसंयोगपूर्वस्य'–अष्टा. 6/4/82, इति यण् स्यादिति शङ्क्यम् । यतो 'वुग्यटावुंवङ्यणौ सिद्धौ वक्तव्यौ' वा. ल. सि. कौ. दिवा. प्र. पृ. 171, इत्यनेन युटोऽसिद्धत्वाऽभावो बोधितः ।
7. 'भुवोवुग्लुङ्लिटोः'–अष्टा. 6/4/88, इति विहितस्येत्यर्थः ।
8. 'दीङो युडचि क्ङिति'–अष्टा. 6/4/63, इति विहितस्येत्यर्थः ।
9. अष्टा. 6/4/22 ।
10. 'अचिश्नु-धातु-भ्रुवां य्वोरियङुवङौ'–अष्टा. 6/4/77, इति विहितस्येत्यर्थः ।
11. 'एरनेकाचोऽसंयोगपूर्वस्य'–अष्टा. 6/4/82, इतिविहितस्येत्यर्थः ।
12. 'दम्भुदम्भने' धा. पा. स्वा. 1271, इति दम्भ् धातोर्लिटि तसि तसोऽतुसादेशे 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनांलिटः कित्त्वं वेति, व्याकरणान्तरेण लिटोऽत्र कित्त्वात् 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24, इति नलोपे 'दभ् अतुस्'–इत्यवस्थायां द्वित्वेऽभ्यासत्वे 'दम्भेश्च एत्वाऽभ्यासलोपौ वक्तव्यौ, वा. वै. सि. कौ. स्वा. प्र. पृ. 200, इत्येत्वाभ्यासलोपयोः कृतयोः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
13. देभतुरितिवत् दम्भे र्लिटि झौ झेरुसादेशे नलोप-द्वित्वादिषु कृतेषु रूपमिदम् ।
14. 'अत एकहल्मध्येऽनादेशादेर्लिटि'–अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
15. 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24 ।
16. 'असिद्धवदत्राभात्'–अष्टा. 6/4/22, इत्यनेनेतिशेषः ।

वचनस्य फलम् । अस्य वचनस्याऽसत्त्वे हि [1]एत्वाऽभ्यासलोपयोः कर्तव्ययोर्न्न-लोपस्याऽसिद्धत्वम्[2] '[3]असद्धिवदत्राभावा'दित्येन दुर्वारमिति नाऽत्रैत्वाऽभ्यासलोपौ[4] सिद्ध्येताम् । इत्थं 'वुग्युटावुवङ्यणोः [5]सिद्धौ' 'दम्भ एत्वम्[6]'–इत्येतद्वार्तिकद्वयाऽनारम्भजन्यं लाघवमस्य ज्ञापितवचनस्य फलम् ।

वस्तुतस्तु जिनेन्द्रबुद्धि–पुरुषोत्तमदेवाभ्यामुपपादितमुपर्युक्तमत्र सूत्रेऽस्य शब्दस्योक्तवचनज्ञापकत्वं न युक्तम्, भाष्यविरोधात् । भाष्ये हि 'वुग्युटावुवङ्यणोः[7] सिद्धौ'-इति च वार्तिकं 'दम्भ[8]एत्वम्' इति च वार्तिकमेव स्वीकृतं भगवता । इत्थं ज्ञापितैतद्वचनफलस्य 'बभूव' 'दिदीये'देभतु'रित्यादिप्रयोगसाधुत्वस्याऽन्यथासिद्ध्या-सूत्रेऽस्मिन् नाऽस्य शब्दस्योक्तवचनज्ञापकत्वं युक्तमिति मन्ये । अतएव–"श्रन्थि ग्रन्थ-दम्भि स्वञ्जीनां लिटः कित्त्वं वे'तिव्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदितामितिनलोपः, तस्याऽऽभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्वाऽभ्यासलोपौ वक्तव्यौ - देभतुः, दम्भतुः"इति भट्टोजिदीक्षितोक्तिः[9] संगच्छते ।

## 'विभाषे'तिशब्दः

'[10]विभाषाग्रेप्रथमपूर्वेषु'इत्यत्र 'विभाषे'तिशब्दः 'क्त्वाणमुलौ यत्र सह विधीयेते तत्र- वां स्वरूपविधि[11]र्नास्ती'तिवचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्याऽभावेऽ-

---

1. 'अत एकहल्मध्येऽनादेशादेर्लिटि'–अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
2. 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24 ।
3. अष्टा. 6/4/22 ।
4. 'अत एक.'–अष्टा. 6/4/120, इत्यनेनेतिशेषः ।
5. वा. व्या. म. भा. 6/4/2/22 ।
6. वा. व्या. म. भा. 6/4/3/120 ।
7. व्या. म. भा. 6/4/2/22 ।
8. व्या. म. भा. 6/4/3/120 ।
9. वै. सि. कौ. स्वा. प्र. पृ. 200 ।
10. अष्टा. 3/4/24 ।
11. 'वासरूपोऽस्त्रियाम्'–अष्टा. 3/1/94 ।
12. तथाहि–
   (क) "विभाषा ग्रहणम्–एताभ्यां मुक्ते लादयोऽपि यथा स्युः । अग्रेभुङ्क्ते ततो व्रजति । ननु च वासरूप इति भविष्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीत्येतदनेन ज्ञाप्यते, तेनाभीक्ष्ण्ये लडादयो न भवन्ती'त्याह जया. का. 3/4/24 ।
   (ख) "वासरूपविधिनैव पक्षे लडादिषु सिद्धेषु यत्तदर्थं विभाषाग्रहणं क्रियते, तेन यत्र क्त्वाणमुलौ युगपद्विधीयेते तत्र वासरूपविधिर्नास्तीत्येषोऽर्थो ज्ञाप्यते"–इत्याह जि. बु. न्या. 3/4/24 ।
   (ग) "किमर्थं पुनः क्त्वा विधीयते, यावता नाभीक्ष्ण्येऽपि समानकर्तृकयोरित्येवासौ सिद्धः ? सत्यम्, विभाषाग्रहणेन वासरूपविधेरभावो ज्ञाप्यत इति वक्ष्यति । नच केवलं णमुल्-विधौ–तदभावो ज्ञापयितुमिष्यते, किंतर्हि ? क्त्वासहित-णमुल्विधौ । तस्माण्णमुलः क्त्वासहितस्य विधिर्यथास्यादिति णमुल्चेत्यनुवृत्त्या क्त्वोऽप्यनुवादः क्रियते । एवं हि द्वयोः सहविधातुमुपादीयमानं विभाषाग्रहणं तादृश एव विषये वासरूपविधेरभावं ज्ञापयतीति सिद्धमिष्ट"मित्याह ह. मि. पदम. 3/4/24 ।

त्रासौ व्यर्थः । तथाहि 'अग्रे भुङ्क्ते ततो व्रजती'त्यादौ क्त्वाणमुलोरभावे लडादिसिद्ध्यर्थमत्र सूत्रे शब्दोऽयमुपात्तः, स चाऽस्य वचनस्याऽभावे व्यर्थः, '[1]वासरूपोऽस्त्रिया'मित्यनेनैव हि लडादयोऽप्यस्य विषये सुलभाः । ज्ञापिते चाऽस्मिन्वचनेऽग्रेभुङ्क्ते ततो व्रज- ती'त्यादौ लडादयो न सिद्ध्येयुरिति तत्- सिद्ध्यर्थमसौ स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'भोजं[2] भोजं व्रजति, भुक्त्वा भुक्त्वा[3] व्रजती'- त्यादौ अभीक्ष्ण्ये लडादेरभावः । अस्याऽसत्त्वे हि लडादयोऽप्यत्र वासरूपविधिना दुर्वाराः स्युः, तथा सति 'अग्रे भुङ्क्ते भुङ्क्ते, ततो व्रजतीत्येवंप्रयोगस्याऽपि साधुत्वाऽऽपत्तिः स्यात् ।

## 'विभाषे'तिशब्दः

'[4]विभाषा कृवृषो'रित्यत्र 'विभाषे'तिशब्दो 'नानुबन्धकृतमसारूप्य'मिति[5] परिभाषाया [6]ज्ञापकः । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–[7]'कृत्यं'

---

1. अष्टा. 3/1/94 ।
2. 'भुज पालनाऽभ्यवहारयोः' धा. पा. रुधा. 1547 इतिभुजधातोः 'आभीक्ष्ण्ये णमुल्'–अष्टा. 3/4/22, इति णमुलि 'आभीक्ष्ण्ये द्वे भवतः 'इत्युपसंख्यानाद् द्विर्वचनम् । 'नित्यवीप्सयोः'– अष्टा. 8/1/4, इत्यत्र 'तिङ्क्षु नित्यता अव्ययकृत्सु चे'ति वामनोक्ते र्नित्यग्रहणादेवात्र वा द्विर्वचनम् ।
3. 'भुज पालनाभ्यवहारयोः' धा. पा. रुधा. 1547, इति भुजूधातोः 'आभीक्ष्ण्ये णमुल्'–अष्टा. 3/4/22, इति क्त्वाप्रत्यये द्विर्वचने च कृते रूपमिदम् ।
4. अष्टा. 3/1/120 ।
5. (क) व्याडिः प. सू. प. 13, पृ. 8 ।
   (ख) पु. दे. ल. प. वृ. प. 12, पृ. 118 ।
   (ग) सी. दे. बृ. प. वृ. प. 38, पृ. 207 ।
   (घ) नी. दी.प. वृ. प. 8, पृ. 294 ।
   (ङ) ह. भा. प. भास्क. प. 40, पृ. 340 ।
   (च) भ. ना. प. शे. प. 8, पृ. 37 ।
   (छ) शेषा. प. भास्क. प. 6, पृ. 384 ।
6. तथाहि–
   (क) "अनुबन्धैः सह प्रत्ययानामसारूप्यं न भवति । कथं ज्ञायते । यदयं 'विभाषा कृवृषोः' (3/1/120) इतिविभाषा क्यपं शास्ति ण्यश्च यथा स्यादिति । अत्र हि क्यप् ण्यत् इति अनुबन्धैः सहासरूपौ । तत्र हि 'वासरूपोऽस्त्रियाम् (3/1/94) इत्येव सिद्धं भवति । नार्थो विभाषावचनेन । पश्यत्याचार्यः अनुबन्धैः सहासारूप्यं न भवति । लुप्तानुबन्धका येऽसरूपास्तेषां वासरूपन्यायेन समावेशो भवति । इह च ण्यत्क्योपोरनुबन्धलोपे कृते सारूप्यं भवति । ततो विभाषाऽऽरभ्यते । किमेतस्या ज्ञापने प्रयोजनम् । 'कर्मण्यण्' (3/2/1) 'आतोनुपसर्गे कः' (3/2/3) अत्र वासरूपन्यायो न भवति । नानुबन्धकृतम- सारूप्यं भवतीती"त्याह व्याडिः प. सू. प. 13, पृ. 8-9 ।

[1]'कार्यं' 'वृष्यं'[2] 'वर्ष्यं'[3]–मित्यत्र [4]करोतेः 'ऋहलो[5]र्ण्यत्'दिति ण्यति प्राप्ते [6]वर्षतेः ऋदुपधत्वात् '[7]ऋदुपधाच्चाक्लृपिचृते'रिति नित्यं क्यपि प्राप्ते क्यप्-ण्यतोर्विभाषया सिद्ध्यर्थमत्र शब्दोऽयमुपात्तः । स चाऽस्या अभावे व्यर्थः । 'अनुबन्धा एकान्ता'इति [8]सिद्धान्तपक्षे हि सानुबन्धयोः क्यबृण्यतोरसरूपतया '[9]वाऽसरूपोऽस्त्रिया'मित्यनेनैवाऽत्र क्यप्-ण्यतौ सिद्धौ । ज्ञापितायां चाऽस्यामनयाऽनुबन्धकृतमसारूप्यमादाय 'वासरूपो[10]ऽस्त्रिया'मितिपरिभाषाया अप्राप्त्या करोतेर्वर्षतेश्च क्यपृण्यतोः सिद्ध्यर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । विभाषा शब्दाऽभावे हि करोतेर्वर्षतेश्च क्यबेव स्यान्न तु ण्यदपि । ज्ञापिताया अस्याः फलं तु 'गोदः'[11]–इत्यदौ 'कर्मण्यण्'[12]-इत्यणोऽभावः । अस्या असत्त्वे हि सानुबन्धयोः काणोरसरूपंतया 'वाऽसरूपो[13]ऽ-

---

(ख) "ज्ञापकं चात्र 'विभाषा कृवृषोः' (3/1/120) इति ण्यतो विषये विकल्पेन क्यब्-विधानम् । यदि ह्यनुबन्धकृतमसारूप्यं स्यात्तदा वासरूपविधिनैव कृत्यं कार्यं वृष्यं-वार्ष्यमितिक्यप्-ण्यतौ सिद्धियतः"–इत्याह पु. दे. ल. प. वृ. प. 12, पृ. 118 ।

7. 'डुकृञ्करणे' धा. पा. तना. 1472, इति कृ धातोः 'विभाषा कृवृषोः' अष्टा. 3/1/120. इति क्यपि 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/4/34, इति तुकि कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।

1. 'डुकृञ्करणे' धा. पा. तना. 1472, इति कृधातोः क्यपोऽभावपक्षे 'ऋहलोर्ण्यत्'–अष्टा. 3/1/124, इति ण्यति 'अचोञ्णिति'–अष्टा. 7/2/115. इति ऋकारस्य वृद्धावाकारे रपरत्वे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।

2. 'वृषु सेचने' धा. पा. भ्वा. 706, इति वृषधातोः 'विभाषा कृवृषोः'–अष्टा. 3/1/120, इति क्यपि कित्त्वात् क्ङिति च'–अष्टा. 1/1/5, इतिगुणनिषेधे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।

3. 'वृषसेचने' धा. पा. भ्वा. 706-इतिवृष्धातोः क्यपोऽभावपक्षे'ऋहलोर्ण्यत्'–अष्टा. 3/1/124. इतिण्यति 'पुगन्तलघूपधस्य च'–अष्टा. 7/3/86. इति ऋकारस्य गुणेऽकारेरपरत्वे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।

4. 'डुकृञ्करणे' धा.पा. तना. 1472, इति कृधातोरित्यर्थः ।

5. अष्टा. 3/1/124 ।

6. 'वृषुसेचने' धा. पा. भ्वा. 706, इतिवृष्धातोरित्यर्थः ।

7. अष्टा. 3/1/110 ।

8. तथाहि–"उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति, किमत्र न्याय्यम् ? एकान्ता इत्येव न्याय्य"मित्याह पत. व्या. म. भा. 1/3/1 ।

9. अष्टा. 7/1/94 ।

10. अष्टा. 7/1/94 ।

11. गां ददातीत्यर्थे गामिति कर्मोपपदात् 'डुदाञ्दाने' धा. पा. जुहो. 1081. इति दाधातोः 'आतोनुपसर्गे कः'–अष्टा. 3/2/3, इति कप्रत्यये 'आतो लोप इटि च'–अष्टा. 6/4/64. इत्यातोलोपे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।

12. अष्टा. 3/2/1 ।

13. अष्टा. 7/1/94 ।

स्त्रिया'मित्यनेनाऽत्राऽणपि[1]दुर्वारः स्यात् । सत्यां चाऽस्यामनया काणोरसरूपत्वाऽभावेन 'वाऽसरूप'[2]–न्यायाऽप्रवृत्त्याऽत्र क[3]एव भवति, नाऽण्[4] ।

न चाऽस्या अभावे सूत्रमेवेदं व्यर्थमिति शङ्क्यम् । यतः करोतेः क्यपः केनाऽप्यप्राप्त्या ततस्तदर्थं सूत्रमिदमावश्यकम् ।

## 'विभाषे'तिशब्दः

'[5]ददातिदधात्योर्विभाषे'त्यत्र विभाषे'तिशब्दो '[6]नानुबन्धकृतमसारूप्य'मितिपरिभाषाया ज्ञापकः[7] । यतोऽस्या अभावे 'अनुबन्धा एकान्ता' इति सिद्धान्त-[8]

---

1. 'कर्मण्यण्'–अष्टा. 3/2/1 ।
2. 'वाऽसरूपोऽस्त्रियाम्'–अष्टा. 7/1/94 ।
3. 'आतोऽनुपसर्गे कः'–अष्टा. 3/2/3 ।
4. 'कर्मण्यण्'–अष्टा. 3/2/1 ।
5. अष्टा. 3/1/139 ।
6. (क) व्याडिः प. सू. प. 13, पृ. 8 ।
   (ख) पु. दे. ल. प. वृ. प. 12, पृ. 118 ।
   (ग) सी. दे. बृ. प. वृ. प. 38, पृ. 207 ।
   (घ) नी.दी. प. वृ. प. 8, पृ. 294 ।
   (ङ) ह. भा. प. भास्क. प. 40, पृ. 340 ।
   (च) भ. ना. प. शे. प. 8, पृ. 37 ।
   (छ) शेषा. प. भास्क. प. 6, पृ. 384 ।
7. तथाहि –
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति – 'नानुबन्धकृतमसारूप्यं भवती'ति, यदयं 'ददातिदधात्योर्विभाषे'ति विभाषां शास्ती"त्याह पत.व्या. म. भा. 1/3/9 ।
   "आचार्य प्रवृत्तिर्ज्ञापयति – 'नानुबन्धकृतमसारूप्यं भवती'ति, यदयं 'ददातिदधात्योर्विभाषां शास्ती'ति चाह पत. व्या. म. भा. 3/1/94 ।
   (ख) "अत्र 'ददातिदधात्योर्विभाषा' इति विभाषाग्रहणं ज्ञापकम् । यदि ह्यनुबन्धकृतमसारूप्यं स्याद् विभाषाग्रहणमनर्थकं स्यात् । अनुबन्धकृतादसारूप्यादेव हि 'श्याद्व्यध' - इत्यादिसूत्रेण पक्षेणो भविष्यती"त्याह जि. बु. न्या. 3/1/94 ।
   (ग) "'ददाति-दधात्योर्विभाषा'इति विभाषाग्रहणं च लिङ्गमस्यार्थस्य, अन्यथाऽनुबन्धकृतादसारूप्यादेव श-विषये णो भविष्यतीति किं तेने"त्याह ह. मि. पदम.3/1/94।
   (घं) "ज्ञापकं चाऽत्र 'ददाति-दधात्योर्विभाषा' (3/1/139) इतिणस्य विषये विकल्पेन श-विधानम् । यद्यनुबन्धकृतमसारूप्यं स्यातत्तदा वाऽसरूपविधिनैव दायो ददः इति णशभ्यां सिद्धं स्या"दित्याह सी. दे. वृ. प. वृ. प. 38, पृ. 207 ।
   (ङ) "अत्र च ज्ञापकं 'ददाति-दधात्योर्विभाषा' (3/1/139) इतिसूत्रे विभाषा ग्रहणम् । अन्यथा वासरूपन्यायेनणप्रत्ययप्रवृत्त्या दायो धायः इतिरूपसिद्धौ शप्रत्यये ददः दधः इति च रूपसिद्धौ किं विभाषा ग्रहणेनेति वासरूपसूत्रे भाष्ये स्पष्ट"मित्याह नी. दी. प. वृ. प. 8, पृ. 204 ।

पक्षेऽत्र विभाषेति शब्दो व्यर्थः । तथाहि – 'ददः[1]' 'दधः[2]' 'दायः'[3] 'धायः'[4] – इत्येतेषां प्रयोगाणां णशप्रत्ययाभ्यां साधुत्वाऽर्थमत्र सूत्रे शब्दोऽयमुपात्तः । स चाऽस्या अभावे व्यर्थः । यतो 'ददः' 'दायः' 'दधः' 'धायः' इत्यादावनुबन्ध-कृतमसारूप्यमादाय 'वाऽसरूपोऽ[5]स्त्रिया' मित्यनेनैव श[6] - णौ[7] प्रत्ययौ सुलभौ । ज्ञापितायां चाऽस्यामनयाऽनुबन्धकृतमसारूप्यस्याऽग्रहणेन 'वाऽसरूप'[8] – न्यायात्त-योरसिद्ध्या विकल्पेन शं विधातुमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति ।

---

(च) "ज्ञापकमत्र 'ददाति-दधात्योर्विभाषा' (3/1/139) इतिणस्य विषये विकल्पेन शकार विधानम् । अन्यथा वासरूपन्यायेन णशयोः सिद्धौ तद्व्यर्थं स्या"दित्याह ह. भा. प. भास्क. प. 40, पृ. 340 ।

(छ) "ददाति-दधात्योर्विभाषे'ति णबाधकशस्य विकल्प-विधायकमस्या ज्ञापक"मित्याह भ. ना. प. शे. प. 8, पृ. 38 ।

(ज) "अस्याश्च परिभाषायाः 'ददाति-दधात्योर्विभाषा' (3/1/139) इति कापवाद-श-प्रत्यय-विधायकसूत्रे पक्षे काभ्यनुज्ञानाय क्रियमाणं विभाषाग्रहणं ज्ञापकम् । अनुबन्ध-कृते असारूप्ये तु कशयोरसारूप्यात् 'वासरूपोऽस्त्रियाम्' (3/1/94) इत्यनेनैव विकल्पस्य सिद्धतया तदनर्थकं स्या"दित्याह शेषा. प. भास्क. प. 6, पृ. 384 ।

(झ) " 'ददाति-दधात्योर्विभाषा' (सू. 3/1/139) इति ज्ञापकात् 'नानुबन्धकृतमसारूप्य'-मित्याह श्रीना. ज्ञा. सं. 1, पृ. 45, तथा ज्ञा. सं. 3, पृ. 65 ।

४. तथाहि – "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति । किमत्र न्याय्यम् ? एकान्ता इत्येव न्याय्य"मित्याह पत. व्या. म. भा. 1/3/1/9 ।

1. 'डु दाञ्दाने' धा. पा, जुहो. 1091, इति दाधातोः 'ददाति - दधात्योर्विभाषा' अष्टा. 3/1/139, इति शप्रत्यये 'तिङ्शित् सार्वधातुकम्' - अष्टा. 3/4/113, इति शस्य सार्वधातुकत्वे 'कर्त्तरि शप्' - अष्टा. 3/1/68, इति शप्प्रत्यये शपः 'जुहोत्यादिभ्यः श्लुः' - अष्टा. 2/4/75, इति श्लौ 'श्लौ' - अष्टा. 6/1/10, इति धातो र्द्वित्वेऽभ्यासकार्ये 'ददा अ' - इत्यवस्थायां शप्रत्ययाऽकारस्य 'सार्वधातुकमपित्' - अष्टा. 1/2/4, ङित्त्वेन 'श्ना-भ्यस्तयोरातः' - अष्टा. 6/4/112, इत्याकारलोपे कृदन्तप्रातिपदिकत्वेन स्वादिकार्येषु-कृतेषु रूपमिदम् ।

2. 'डुधाञ्धारणपोषणयोः' धा. पा. जुहो. 1092, इति धाधातोः 'ददातिदधात्योर्विभाषा' - अष्टा. 3/1/139, इति शप्रत्यये 'ददः' - इतिवद्रूपमिदम् ।

3. 'डुदाञ्दाने' धा. पा. जुहो. 1091, इति दाधातोः शाऽभावपक्षे 'श्याऽऽद् व्यधासु-संस्रवतीणवसावहृ लिह श्लिषश्वसश्च' - अष्टा. 3/1/141, इति णप्रत्यये 'आतो युक्चिण्-कृतोः' - अष्टा. 7/3/33, इति युगागमे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।

4. 'डुधाञ्दारणपोषणयोः' धा. पा. जुहो. 1092, इतिधाधातोः शाऽभावपक्षे 'श्याऽऽद्.' - अष्टा. 3/1/141, इतिणप्रत्यये 'दायः' इतिवद्युगादिषु कृतेषु रूपमिदम् ।

5. अष्टा. 3/1/94 ।

6. 'ददाति-दधात्योर्विभाषा' - अष्टा. 3/1/139 ।

7. 'श्याऽद्व्यधास्रु संस्रवतीणवसावहृलिह श्लिष श्वसश्च' -अष्टा. 3/1/141 ।

8. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 3/1/94 ।

यद्यनुबन्धकृतमपि वैरूप्यं स्यात्तदा 'वाऽसरूपोऽ[1]स्त्रिया'मित्यत्राऽसरूपग्रहणं व्यर्थमिति तत्सामर्थ्यात् प्रयोगगतमसारूप्यमत्राऽऽश्रयणीयमित्यपि न शङ्क्यम् । यतः प्रयोगगतस्याऽसारूप्यस्य 'वाऽसरूपोऽ[2]स्त्रियामि'त्यत्र ग्रहणे 'शास्त्रकृत्' 'शास्त्रकार' इत्यत्र क्रमशः [3]क्विबणो[4]र्वासरूपन्यायेन समावेशो न स्यात् । सर्वापहारितया हि क्वापि क्विपः प्रयोगो न भवति । इत्थमत्राऽयं शब्दोऽस्याः परिभाषाया ज्ञापक इत्यत्र नाऽस्ति कश्चन विवाद इति मन्ये ।

ज्ञापिताया अस्याः परिभाषाया – 'इत्संज्ञकवर्णकृतं वैजात्यं नाऽऽश्रीयत'- इत्यर्थः, फलं तु 'गोदः'[5] – इत्यादौ – [6]कविषयेऽणो[7]ऽभावः, 'शप्य[8]'मित्यादौ [9]यद्विषये ण्यतो[10]ऽभावश्च । अस्या असत्त्वे हि 'गोदः' - इत्यादावण् 'शप्य'मित्यादौ ण्यच्च 'वाऽसरूप'[11] - न्यायेन नूनमापद्येताम् ।

## 'वु'ञितिशब्दः

[12]निन्द हिंस क्लिशखादविनाश परिक्षिप परिरट परिवादि व्याभाषासूञो वुञि'त्यत्र 'वु'ञितिशब्दः '[13]ताच्छीलिकेषु वाऽसरूपविधिर्नास्ती'तिपरिभाषाया ज्ञापकः[14] । यतोऽस्याऽअभावेत्रायंशब्दो व्यर्थः । तथाहि – 'निन्दकः'[15] 'हिंसकः'[16]

---

1. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 3/1/94 ।
2. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 3/1/94 ।
3. 'क्विप्च' - अष्टा. 3/2/76 ।
4. 'कर्मण्यण्'- अष्टा. 3/2/1 ।
5. गां ददातीत्यर्थे गामिति कर्मोपपदात् 'डुदाञ्दाने' धा. पा. जुहो. 1091, इति दाधातोः 'आतोनुपसर्गे कः' - अष्टा. 3/2/3, इति कप्रत्यये 'आतो लोप इटि च' - अष्टा. 6/4/64. इत्यातोलोपे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. 'आतोऽनुपसर्गे कः' - अष्टा. 3/2/3 ।
7. 'कर्मण्यण्' - अष्टा. 3/2/1 ।
8. 'शप् आक्रोशे' धा. पा. भ्वा. 1000, 'शप् आक्रोशे' धा. पा. दिवा. 1168. इति वा शप् धातोः 'पोरदुपधात्' - अष्टा. 3/1/98. इति यत्प्रत्यये कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
9. 'पोरदुपधात्' - अष्टा. 3/1/98 ।
10. 'ऋहलोर्ण्यत्' - अष्टा. 3/1/124 ।
11. 'वाऽसरूपोऽस्त्रियाम्' - अष्टा. 3/1/94 ।
12. अष्टा. 3/2/146 ।
13. (क) व्याडिः प. सू. प. 27, पृ. 14 ।
    (ख) 'ताच्छीलिकेषु च वासरूपविधिर्नास्ति' - पु. दे. ल. प. वृ. प. 28, पृ. 124 ।
    (ग) सी. दे. बृ. प. वृ. प. 43, पृ. 211 ।
    (घ) नी. दी. प. वृ. प. 53, पृ. 303 ।
    (ङ) ह. भा. प. भास्क. प. 45, पृ. 342 ।
    (च) भ. ना. प. शे. प. 68, पृ. 285 ।

(छ) 'ताच्छीलिका अपवादा अताच्छिलिकानुसर्गांस्ताच्छीलिकांश्च नित्यं बाधन्ते' शेषा. प. भास्क. प. 57, पृ. 430 ।

14. तथाहि –

(क) "निन्दादिभ्यो वुञ्वचनं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? । एतज्ज्ञापयत्याचार्यः 'तच्छीलादिषु वासरूपन्यायेनाऽन्येभ्यो ण्वुल् न भवती'ति । अथवैके मन्यन्ते – एतज् ज्ञापयत्याचार्यः । 'ताच्छीलिकेषु सर्व एव तृजादयो वासरूपेण न भवन्ती'ती"त्याह पत. व्या. म. भा. 3/2/2/146 ।

(ख) "ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम् – ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्तीती"त्याह जया. का. 3/2/146 ।

(ग) "यदि तच्छीलादिषु वाऽसरूपविधिना तृजादयोऽपि स्युः निन्दादिभ्यो वुञ्न विदध्यात्, विहितश्चाऽसौ अतएव वुञ्विधानं ज्ञापयति - तच्छीलादिषु वासरूपविधिर्नास्तीति । तेनालंकारकः, निराकर्त्तेत्यादीनां तच्छीलादिषु साधुत्वं न भवती"त्याह जि. बु. न्या. 3/2/146 ।

(घ) "ज्ञापकं चात्र तृज्बाधनार्थं 'निन्दहिंस.' (3/2/146) इतिवुञ् विधानम् । यदि वासरूपेण भिन्नजातीयास्तृजादयस्ताच्छीलिकेषु भवेयुः तृन्ण्वुल्भ्यां निन्दिता निन्दक इति रूपद्वयेन अवश्यं भाव्यमिति किंवुञ्विधानेन । तदेतज् ज्ञापयति ताच्छीलिकेषु भिन्न-जातीयाः प्रत्ययास्तृजादयो वासरूपेण न भवन्तीती"त्याह पु. दे. ल. प. वृ. प. 28, पृ. 124 ।

(ङ) "ज्ञापकं चात्र तृज्बाधनार्थं निन्दहिंसादि. (3/2/146) सूत्रे वुञ्विधानम् । यदि हि वाऽसरूप (3/1/94) विधिना ण्वुलादयस्ताच्छीलिकेषु भवेयुः तदा ण्वुल्तृचौ (3/1/133) इति ण्वुलि कृते निन्दको हिंसक इत्यादयः सिद्धाः । किं वुञो विधानेन । तत्कृतं ज्ञापयति ताच्छीलिकेषु वाऽसरूप (3/1/94) विधिना तृजादयो न भवन्तीती"त्याह सी. दे. वृ. प. वृ. प. 43, पृ. 211 ।

(च) 'ण्वुला सिद्धे वुञ्वचनं ज्ञापकं – 'तच्छीलादिषु वाऽसरूपन्यायेन तृजादयो ने'ती" त्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 450 ।

(छ) "अत्र च ज्ञापकं' 'निन्दहिंसादिसूत्रेण वुञ्विधानम् । अन्यथा ण्वुलैव सिद्धे किं तेने-"त्याह नी. दी. प. वृ. प. 53, पृ. 303 ।

(ज) " ताच्छीलिकानामताच्छीलिकै र्वासरूपविधिर्न । 'निन्दहिंस.' (3/2/146) इत्यादि सूत्रेण वुञो विधानाज्ज्ञापकात् । अन्यथा वाऽसरूपविधिना ण्वुलि निन्दक इत्यादि सिद्धौ वुञविधानमनर्थकं स्या"दित्याह ह. भा. प. भास्क. प. 45, पृ. 342 ।

(झ) "ण्वुलि सिद्धे 'निन्दहिंसादि' सूत्रैणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकम् । तत्र ण्वुल्वुञोः स्वरे विशेषाभावा'दित्याह भ. ना. प. शे. प. 68, पृ. 285 ।

15. 'णिदि कुत्सायाम्' धा. पा. भ्वा. 66, इति निन्दधातोर्ण्यन्तात् 'इदितोनुम्धातोः' - अष्टा. 7/1/58. इति कृतनुमागमात्' निन्द.' - अष्टा. 3/2/146, इति वुन्प्रत्यये 'णेरनिटि' - अष्टा. 6/4/51, इति णेर्लोपे वोरकाऽऽदेशे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूप-मिदम् ।

16. 'हिसि हिंसायाम्' धा. पा. रुधा. 1457, इति हिंस्धातोर्ण्यन्तात्'इदितोनुम्धातोः' - अष्टा. 7/1/58, इति कृतनुमागमात् 'निन्द.' -अष्टा. 3/2/146, इति वुञ्प्रत्यये 'णेरनिटि' - अष्टा. 7/1/58. इतिणिलोपे वोरकाऽऽदेशे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।

'क्लेशकः'[1] 'खादकः'[2] – [3]'विनाशकः' [4]'परिक्षेपकः' [5]परिराटकः' 'परिवादकः[6]' [7]व्याभाषकः' 'असूयकः'[8]– इत्यादौ वुञ्प्रत्ययविधानाऽर्थमत्र शब्दोऽयमुपात्तः । स चाऽस्या अभावे व्यर्थः । [9]'णिदि'- [10]प्रभृतिभ्यो धातुभ्यो [11]'वाऽसरूप'न्यायेन [12]ण्वुल्प्रत्ययेनैव 'निन्दकः' इत्यादिप्रयोगाणां सिद्धिर्हि सुलभा । नाऽपि स्वरे

---

1. 'क्लिश उपतापे' धा. पा. दिवा. 1161, इतिक्लिश्धातोर्ण्यन्तात्' निन्द.' - अष्टा. 3/2/146 इति वुञ्प्रत्यये'णेरनिटि'- अष्टा. 7/1/58, इतिणिलोपे वोरकाऽऽदेशे लघूपधगुणे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
2. 'खादृ भक्षणे' धा. पा. भ्वा. 49, इति खादृधातोर्ण्यन्तात् 'निन्द.' - अष्टा. 3/2/146, इति वुञ्प्रत्यये 'णेरनिटि' - अष्टा. 7/1/58, इतिणिलोपे वोरकाऽऽदेशे कृदन्त-प्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. विपूर्वकात् 'णश अदर्शने' धा. पा. दिवा. 1194, इति नश्धातोर्णौ' अत उपधायाः' - अष्टा. 7/2/116, इत्युपधाया अतो वृद्धौ ण्यन्तात् 'निन्द. 'अष्टा. 1/3/46, इति वुञ्प्रत्यये 'णेरनिटि' - अष्टा. 7/1/58, इतिणिलोपे वोरकाऽऽदेशे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. 'क्षिपप्रेरणे' धा. पा. दिवा. 1121, इति, 'क्षिपप्रेरणे' धा. पा. तुदा. 1286, इति वा क्षिप् धातोः 'निन्द.' - अष्टा. 3/2/146, इतिवुञ्प्रत्यये वोरकाऽऽदेशे लघूपधगुणे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
5. परिपूर्वकात् 'रटपरिभाषणे' धा. पा. भ्वा. 297, इतिरट् धातोर्ण्यन्तात् 'निन्द.' - अष्टा. 3/2/146, इति वुञ्प्रत्यये वोरकाऽऽदेशे - 'णेरनिटि' - अष्टा. 7/1/58, इतिणिलोपे 'अत उपधायाः' - अष्टा. 7/2/116, इत्युपधाया अतो वृद्धौ कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
6. परिपूर्वकात् 'वदव्यक्तायां वाचि' धा. पा. भ्वा. 1009, इतिवद्धातोर्ण्यन्तात् 'निन्द.' - अष्टा. 3/2/146, इति वुञ्प्रत्यये वोरकाऽऽदेशे-'णेरनिटि' - अष्टा. 7/1/58, इतिणिलोपे 'अत उपधायाः' - अष्टा. 7/2/116, इत्युपधाया अतो वृद्धौ कृदन्तप्रातिपदिकात्स्वा-दिकार्येषु कृतेषु रूपमिदम् ।
7. व्याङ्पूर्वकात् 'भाष व्यक्तायां वाचि' धा. पा. भ्वा. 612, इतिभाषधातोः 'निन्द.' - अष्टा. 3/2/146, इतिवुञ्प्रत्यये वोरकाऽऽदेशे कृदन्तप्रातिपदिकात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
8. कण्ड्वादियगन्तात् असूयधातोः 'निन्द.' अष्टा. 3/2/146, इतिवुञ्प्रत्यये वोरकाऽऽदेशे 'अतोलोपः' अष्टा. 6/4/48, इति यकारोत्तराऽकारस्य लोपे कृदन्तप्रतिपदिकात्स्वादिकार्येषु-कृतेषु रूपमिदम् ।
9. 'णिदि कुत्सायाम्' धा. पा. भ्वा. 66 ।
10. प्रभृतिशब्देन'हिसि हिसायाम्' धा. पा. रुधा. 1457, क्लिश उपतापे' धा. पा. दिवा. 1161, 'खादृभक्षणे, धा. पा. भ्वा. 49, विपूर्वः 'णशअदर्शने' धा. पा. दिवा. 1194,'क्षिपप्रेरणे' धा. पा. दिवा. 1121, तुदा. 1286, ण्यन्तः परिपूर्वः 'रट परिभाषणे' धा. पा. भ्वा. 297, परिपूर्वोण्यन्त 'वद व्यक्तायां वाचि धा. पा. भ्वा. 1009, व्याङ्पूर्वो 'भाष व्यक्तायां वाचि' धा. पा. भ्वा. 612, कण्ड्वादियगन्तः असूय धातुश्च ग्रहीतव्यः ।
11. 'वाऽसरूपोऽस्त्रियाम्' अष्टा. 7/1/94
12. 'ण्वुल्तृचौ' अष्टा. 3/1/133

विशेषः [1]लित्स्वरञित्स्वराभ्यां[2] ह्याद्युदात्तत्वमेव । ज्ञापितायां चाऽस्यां परिभाषायां ताच्छीलिकेषु वाऽसरूपविधेरप्रवृत्तौ [3]'णिदि' - प्रभृतिभ्यो ण्वुल्प्रत्ययो न प्राप्नोतीति तेभ्यो धातुभ्यः [4]'तृन्' इत्यनेन तच्छीलादिषु तृनि प्राप्ते वुञर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । वस्तुतस्तु [5]अस्यतेर्ण्वुलि[6] [7]'लिती'तिप्रत्ययात्पूर्व उकार उदात्तः, [8]वुञि तु [9]'ञ्नित्यादिर्नित्यम्' इतिधातोरकार उदात्त इति विशेषात् 'अस्यतेर्वुञ्विधानार्थमत्र सूत्रे वुञिति शब्दश्चरिताऽर्थ इति सूत्रेऽस्मिन् निन्दादिशब्दा एव परिभाषाया अस्या ज्ञापका इति युक्तं मन्ये । तथ्यमिदं शेषाद्रिः [10]स्फुटमाह । ज्ञापिताया अस्याः परिभाषायाः फलं तु [11]'अलंकरिष्णुः' [12]निराकरिष्णुः इत्यनयोरेव साधुत्वम्, अलंकारकः निराकर्तेत्यादीनां प्रयोगाणां ताच्छीलादिषु [13]ण्वुल्तृज्भ्यां साधुत्वाऽभावः । अस्या असत्त्वे हि [14]'वाऽसरूपोऽस्त्रिया'मित्यनेन साधुत्वाऽऽपत्तिरेषां प्रयोगाणां दुर्वारा स्यात् ।

---

1. 'लिति' अष्टा. 6/1/193 ।
2. 'ञ्नित्यादिर्नित्यम्' अष्टा. 6/1/197 ।
3. 'णिदि कुत्सायाम्' धा. पा. भ्वा. 66 ।
4. अष्टा. 3/2/135
5. कण्ड्वादियगन्ताद् असूयधातोरित्यर्थः ।
6. 'ण्वुल्तृचौ'– अष्टा. 3/1/133 ।
7. अष्टा. 6/1/193 ।
8. 'निन्द हिंस.' अष्टा. 3/2/146 ।
9. अष्टा. 6/1/197 ।
10. तथाहि– "ज्ञापकं च निन्दहिंसादिसूत्रे (3/2/146) निन्दहिंसादिग्रहणम् । तेन हि सूत्रेण ताच्छीलिके वुञ्प्रत्ययो विधीयते निन्दकः इत्यादि सिद्धये । यदि वाऽसरूपविधिः (3/1/94) स्यात् ण्वुला निन्दक इत्यादि सिद्धम् । नहि स्वरे विशेषः । ञिल्लित्स्वरयोरिह विशेषाभावात् । ज्ञापिते तु वासरूपविध्यभावे 'तृन्' (3/2/135) इति तृना बाधो माभूदिति निन्दादिग्रहणमर्थवत्' इति प. भास्क. प. 57, पृ. 430
11. अलंपूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोः 'अलंकृञ् निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' अष्टा. 3/2/136, इतिइष्णुच्प्रत्यये तृनोपवादे कृते आर्धधातुकलक्षणे गुणे धातोः ऋकारस्य अकारे रपरत्वे कृदन्तप्रातिपदिकात्स्वादि–कार्येषु कृतेषु रूपमिदम् ।
12. निराङ्पूर्वकात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोः 'अलंकृञ्निराकृञ्. अष्टा. 3/2/136, इति तृनोऽपवादे इष्णुच्प्रत्यये धातोः ऋकारस्य गुणेऽकारे रपरत्वे कृदन्तप्रातिपदिकात्स्वादिकार्येषु- कृतेषु रूपमिदम् ।
13. 'ण्वुल्तृचौ' अष्टा. 13/1/133
14. अष्टा. 7/1/94

## 'वृ'इतिशब्दः

'कृसृभृवृस्तुद्रुस्रुश्रुवो[1] लिटी'त्यत्र 'वृ'इतिशब्दः 'प्रकृतिप्रत्ययोभयलक्षणस्याऽपि इणूनिषेधस्य क्रादिनियमः 'इतिवचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – "[3]ववृव", "[4]ववृम", "[5]ववृवहे", "[6]वृवमहे" – इत्यत्रेण्निषेधाय सूत्रेऽस्मिन् शब्दोऽयमुपात्तः । स चास्य वचनस्याभावे व्यर्थः । यदि

1. अष्टा. 7/2/13
2. तथाहि–
   (क) "अथ कृद्ग्रहणं किमर्थम् ? । इह माभूत्-बिभिदिव बिभिदिमेति । नैतदस्ति प्रयोजनं 'कृसृभृवृस्तुद्रु सुश्रुवो लिटी'त्येतस्मान्नियमादत्रेड् भविष्यति ।नाऽत्र तेन परिप्रापणं प्राप्नोति, किं कारणम् ? । प्रकृतिलक्षणस्य, प्रतिषेधस्य स प्रत्यारम्भः प्रत्यलक्षणश्चाऽयं प्रतिषेधः ।उभयोः स प्रत्यारम्भः । कथं ज्ञायते ?। वृङ्वृञोर्ग्रहणात् । कथं कृत्वा ज्ञापकम् ? । इमौ वृङ्वृञावुदात्तौ, तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यत्याचार्य - 'उभयोः स प्रत्यारम्भ' इति, ततो वृङ्वृञोर्ग्रहणं करोती"त्याह पत. व्या. म. भा. 7/2/1/8 ।
   (ख) वृङ्वृञोर्ग्रहणादिति । सामान्यग्रहणं विशेषनिष्ठं संपद्यत इति प्रदर्शनार्थं वृङ्ञोरिति भेदेनोपादानम् । वृग्रहणस्य प्रयोजनं ववृवहे इत्यादाविण् माभूदिति । यदि च क्रादिनियमः प्रकृत्याश्रयमेव प्रतिषेधं बाधेत न प्रत्ययाश्रयं, तदा 'नेड्वशि" 'श्र्युकः कितीति, योगद्वयेन यथायोगं सिद्धत्वात् प्रतिषेधस्य नार्थो वृग्रहणेन, तत् क्रियमाणं प्रत्ययाश्रयस्यापि प्रतिषेधस्य निवृत्तिं ज्ञापयती"त्याह कै. प्रदी. 7/2/1/8
   (ग) अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः, वृवृङोस्तु प्रत्ययाश्रयः, तदुभयस्याप्ययं नियमः 'इत्याह वाम.का. 7/2/13
   (घ) क्रादीनां चतुर्णां ग्रहणं नियमार्थम् –प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिणूनिषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इती"त्याह भ. दी. वै. सि. कौ. भ्वादि प्र. पृ. 68 ।
   (ङ) "प्रत्ययाश्रयस्य नियमे वृ ग्रहणमेव मान"मित्याह भ.ना.ल.श.शे.भ्वा.प्र. पृ. 68 ।
   (च) नेड्वशि कृति (सू. 7/2/8) "कृ सृ भृ"इति सूत्रे वृवृङोर्ग्रहणं ज्ञापकं प्रत्याश्रयोऽपीट्प्रतिषेधो नियम्यत इती"त्याह श्रीना. ज्ञा. सं. 7 पृ. 118.
3. "वृञ्वरणे" धा.पा.स्वा. 1255, इति वृधातोर्लिटि वसि वसो वादेशे कृते वलादिलक्षणस्येटः "कृ सृ भृ वृ स्तुद्रु सु श्रुवो लिटि' - अष्टा . 7/2/13, इति प्रतिषेधे द्वित्वादिषु कृतेषु रूपमिदम् ।
4. "वृञ्वरणे" धा.पा.स्वा 1255, इति वृ धातोर्लिटि मसि मसो मादेशे कृते वलादिलक्षणस्येटः "कृसृभृवृ." अष्टा. 7/2/13, इति प्रतिषेधे द्वित्वादिषु कृतेषु रूपमिदम् ।
5. "वृङ् संभक्तौ" धा.पा, क्र्या. 1510, इति वृधातोर्लिटि वहिङ्. वलादिलक्षणस्येटः 'कृ सृ भृ वृ." - अष्टा. 7/2/13 इति प्रतिषेधे द्वित्वादिषु कृतेषु रूपमिदम् ।
6. "वृङ् संभक्तौ" धा.पा, क्र्या. 1510, इति वृधातोर्लिटि वहिङ्. वलादिलक्षणस्येटः 'कृ सृ भृ वृ." - अष्टा. 7/2/13 इति प्रतिषेधे द्वित्वादिषु कृतेषु रूपमिदम् ।

हि क्रादिनियमः [1]प्रकृत्याश्रयमेव प्रतिषेधं बाधेत, न [2]प्रत्ययाश्रयंतदोक्तप्रयोगेषु [3]"नेड्वशि कृति" "[4]श्र्युकः किती"ति सूत्राभ्यामेवेट्प्रतिषेधस्य सिद्धतयाऽत्रोपात्तोऽयं शब्दो व्यर्थः। ज्ञापिते चास्मिन् वचने सूत्रेऽस्य शब्दस्याभावे [5]वृङ्[6]वृञोः क्रादिभिन्नतया, ततः प्रत्ययाश्रयः "नेड्[7]वशि" – इतीण्निषेधोऽपि क्रादिभ्य एवेण्निषेध इति नियमेन व्यावर्तितः स्यात्, तथा सति"[8]ववृमहे"- इत्यादाविण्निषेधो न सिद्ध्येदिति तत्रापीण्निषेधस्य सिद्ध्यर्थमत्रायं शब्दः स्वांशे चरितार्थो भवति। ज्ञापितस्यास्य वचनस्य फलं तु 'नेड्वशि[9]कृती"तिसूत्रे कृद्ग्रहणस्याकरणजन्यं लाघवम्। सूत्रेऽस्मिन् [10]बिभिदिवे'त्यादाविण्निषेधा[11]ऽप्रवृत्तये हि कृद्ग्रहणं कृतम्। तच्चाऽस्य वचनस्य सत्त्वेऽनावश्यकम्। यतो 'बिभिदेवे'त्यादाविण्निषेधा[12]ऽप्रवृत्तिः क्रादिनियमादेव[13] सुलभा।

## 'शब्दस्ये'ति शब्दः

[14]'स्वं रूपं शब्दस्याऽशब्दसंज्ञे'ति सूत्रे 'शब्दस्ये'ति शब्दः 'यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते नाऽर्थपरनिर्देश' – इति वचनस्य [15]ज्ञापकः। यतोऽस्य

---

1. कृ सृ भृ." – इत्येतेषां त्रयाणामनुदात्तोपदेशान्तर्भूतम् "एकाच उपदेशे नुदात्तात्' – अष्टा. 7/2/10, इति यः प्रकृत्याश्रयो निषेधस्तमेवेत्यर्थः।
2. वृ धातोर्यः "श्र्युकःकिति" – अष्टा. 7/2/11, इति यः प्रत्ययाश्रयो" निषेधस्तमित्यर्थः।
3. अष्टा. 7/2/8
4. अष्टा. 7/2/11
5. 'वृङ् संभक्तौ" धा. पा. क्र्या. 1510
6. "वृङ् वरणे" धा.पा. स्वा. 1255
7. अष्टा. 7/2/8
8. वृङ् संभक्तौ" धा.पा. क्र्या. 1510, इति वृ धातोर्लिटि महिडि. रूपमिदम्।
9. अष्टा. 7/2/8।
10. 'भिदिर्विदारणे' धा.पा.स्वा. 1440, इतिभिद्धातोर्लिटि वसि वसो वाऽऽदेशे क्रादिनियमादिडागमे द्वित्वाऽऽदिषु कृतेषु रूपमिदम्।
11. 'नेड्वशि कृति' - अष्टा. 7/2/8, इतीतिशेषः।
12. 'नेड्वशिकृति' - अष्टा. 7/2/8, इतीतिशेषः।
13. 'प्रकृत्याश्रयः प्रत्याऽऽश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नाऽन्येभ्यः' इत्याकारकादित्यर्थः।
14. अष्टा. 1/1/68।
15. तथाहि –
    (क) "शब्दानुशासनप्रस्तावादेव च शब्दस्येति सिद्धे शब्दग्रहणम्' यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते, नार्थपरो निर्देश' इतिज्ञापनार्थम्। तेन 'स्वेपुषः' इत्यत्र स्वरूपस्य ग्रहणं न भवति। अर्थपरत्वन्तु निर्देशस्याविच्छिन्नपारम्पर्यादाचार्योपदेशाद्विज्ञायते" इत्याह जि.बु.न्या. 1/1/68।
    (ख) "शब्दानुशासनप्रस्तावादेव शब्दस्येति सिद्धे स्वंरूपसूत्रे (1/1/68) शब्दग्रहणं ज्ञापयति - 'यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यत इति। नार्थपरनिर्देश इति। तेन स्वेपुष (3/4/40) इत्यादौ स्वरूपग्रहणं न भवतीति स्वरूपसूत्रे न्यासः "-इत्याह पु.दे.ज्ञा.समु.प्रथमपादे पृ. 60।

वचनस्याभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'अग्ने[1]र्ढक्' वाय्वृतुपित्रुषसो[2]यत्' [3]'राज्ञो य'दित्यादौ लौकिकव्युत्पत्त्या उपस्थितानां वह्निवातादीनामर्थानां ढगादि-प्रत्ययैः पौर्वापर्यासम्भवात् - [4]'प्रातिपादिका'दित्यनेनाऽन्वयाऽसंभवाच्च तत्तदर्थक-पर्यायशब्दानां ग्रहणाऽऽपत्तौ तन्नियमार्थमारब्धे 'शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विने'त्यर्थकेऽस्मिन्सूत्रे [5]'अग्नेर्ढ'गित्यादौ अग्न्यादिशब्दस्य स्वरूपं श्रुतं तदेव अग्न्यादिशब्दैः प्रत्येतव्यं, न तु तदन्यस्तत्पर्यायोऽपीत्येतदर्थं शब्दोऽय-मुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । शब्दानुशासनप्रस्तावादेव 'शब्दस्ये'त्यस्य लाभो हि सुलभः । ज्ञापिते चाऽस्मिन्वचनेऽर्थपरनिर्देशे स्वरूपग्रहणाऽभावाय शब्दोऽयं स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [6]'स्वेपुषः' इत्यादौ स्वरूपग्रहणाऽभावः । अस्य वचनस्याऽसत्त्वे हि [7]'स्वपोषं पुष्णाती'त्यत्रैव पुषे[8] र्णमुल्[9] प्रत्ययः स्यात्, [10]'गोपोषम्' [11]'पितृपोषम्' [12]'धनपोषम्'- इत्यादौ पुषेर्णमुल्प्रत्ययो न स्यात् । सति चाऽस्मिन्वचने सर्वत्रैषु प्रयोगेषु क्रमशः आत्माऽऽत्मीयज्ञातिधनवाचिनि करणे उपपदे णमुल्प्रत्ययः सिद्ध्यति ।

ज्ञापकोऽयं सूत्रकारसम्मत एव । यतो भाष्ये सूत्रमेवेदं प्रत्याख्यातम्[13] । सूत्र-सम्मत ज्ञापकसिद्ध-वचनस्याऽस्य स्वीकारेऽपि 'स्वपोषं पुष्णाती'त्यत्र स्वशब्दे करणे उपपदे णमुल्प्रत्ययसिद्ध्यर्थं स्वरूपग्रहणमप्यत्र भवति, न तु पर्यायाणामेवेति निर्णयः ऋते व्याख्यानाच्छिष्टकृतान्न सम्भवतीति लक्ष्यानुसारिव्याख्यानेनैवाऽर्थग्रहणं स्वरूप-

---

1. अष्टा. 4/2/33
2. अष्टा. 4/2/31 ।
3. 'राजश्वशुराद्यत्' - अष्टा. 4/1/137 ।
4. 'ङ्याप्प्रातिपदिकात्'- अष्टा. 4/1/10, इत्याधिकारलब्धादित्यर्थः ।
5. अष्टा. 4/2/33 ।
6. अष्टा. 3/4/40 ।
7. आत्मवाचिनि स्वशब्द उपपदे 'पुषपुष्टौ' धा.पा. क्र्या. 1530, इतिपुष् धातोः 'स्वेपुषः 'अष्टा. 3/4/40, इतिणमुलि रूपमिदम् ।
8. 'पुषपुष्टौ' धा.पा.क्र्या. 1530 ।
9. 'स्वेपुषः' - अष्टा. 3/4/40, इत्यनेनेतिशेषः ।
10. आत्मीयवाचिनि गोशब्दउपपदे' पुष् पुष्टौ' धा.पा. क्र्या. 1530, इति पुष् धातोः 'स्वेपुषः' - अष्टा. 3/4/40 इतिणमुलि रूपमिदम् ।
11. ज्ञातिवाचिनि पितृशब्द उपपदे 'पुष्पुष्टौ' धा.पा. क्र्या. 1530, इति पुष् - धातोः 'स्वेपुषः' – अष्टा 3/4/40' इतिणमुलि रूपमिदम् ।
12. धनवाचिनि धनशब्द उपपदे 'पुष् पुष्टौ' धा.पा. क्र्या. 1530. इति पुष् - धातोः 'स्वेपुषः' - अष्टा. 3/4/40, तिणमुलि रूपमिदम् ।
13. व्या.म.भा. 1/1/9/67 ।

ग्रहणं चात्र, सुलभमिति वचनस्याऽस्य किमपि फलमनन्यथासिद्धं नास्तीति नाऽस्य शब्दस्याऽत्र वचनज्ञापकत्वं युक्तमिति मन्ये ।

## 'शाणे'ति शब्दः

[1]'परिमाणान्तस्यासंज्ञाशाणयो'रित्यत्र 'शाणे'तिशब्दः 'उन्मानमपि परिमाण'मिति-वचनस्य ज्ञापकः[2] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि - 'द्वाभ्यां सुवर्णाभ्यां क्रीतं [3]द्विसौवर्णिक'मित्यादौ ञिति णिति किति च तद्धिते परतः संज्ञायां विषये परिमाणाऽङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याऽचामादेरचो वृद्धि-विधानार्थमारब्धेऽस्मिन्सूत्रे 'द्वाभ्यां शाणाभ्यां क्रीतं [4]द्वैशाण''मित्यादौ उत्तरपदवृद्धि-प्रतिषेधार्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । नहि शाणस्य परिमाणत्वमस्तीति 'द्वैशाण'मित्यादावुत्तरपदवृद्धेः[5] प्राप्त्यभावाद् 'असंज्ञाशाणयो-'रित्यनेन वृद्धिप्रतिषेधार्थमत्राऽयं शब्दो व्यर्थतामेति । ज्ञापिते चाऽस्मिन्वचने 'द्वैशाण'-मित्यादौ [6]उन्मानस्याऽपि [7]परिमाणत्वेन ग्रहणं भवतीति तत्र प्राप्ताया उत्तरपदवृद्धेः प्रतिषेधार्थमयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'द्विवसौवर्णिक'मित्यत्रोत्तरपदवृद्धिसिद्धिः[8] । अस्य वचनस्याऽसत्त्वे हि सुवर्णस्य गुरुमानतयोन्मानत्वेन परिमाणत्वाऽभावात्तत्र परिमाणान्तस्याङ्गस्य संख्यायाः परस्यो-

---

1. अष्टा. 7/3/17 ।
2. तथाहि –
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति– गुरुत्वपरिमाणमपीह परिच्छेदहेतुत्वात् परिमाणं गृह्यत इति, यदयम् - 'असंज्ञाशाणयोः इति शाणप्रतिषेधमारभते" – इत्याह जि. बु.न्या. 7/3/17 ।
   (ख) "परिमाणान्तरस्यासंज्ञाशाणयोरिति (7/3/17) शाणप्रतिषेधो ज्ञापयति । 'उन्मानमपि परिमाण'मिति । तेन नैष्किकमिति क्रीतवत् परिमाणादिति (4/1/156) ठक् भवती"-त्याह पु.दे.ज्ञा.समु. सप्तविंशेदे विकापादे पृ. 92 ।
3. 'प्राग्वतेष्ठञ्' - अष्टा. 5/1/18, इति ठञि अनार्हीयत्वाच्च प्रत्ययस्य 'अध्यर्द्धपूर्वाद्द्वि-गोर्लुगसंज्ञायाम्' - अष्टा. 5/1/28, इति ठञोलुगभावे ठस्य 'ठस्येकः' - अष्टा. 7/3/50, इति इकाऽऽदेशे 'यस्येति च' - अष्टा. 6/4/148, इत्यकारलोपे 'परिमाणान्तस्यासंज्ञा-शाणयोः' - अष्टा. ,7/3/17 इत्युत्तरपदस्याऽऽद्यचो वृद्धौ तद्धितान्ताद् विभक्ति-कार्येषु कृतेषु रूपमिदम् ।
4. 'शाणाद्वा' - अष्टा. 5/1/35, 'द्वित्रिपूर्वादण् च' - अष्टा. 5/1/36 इति द्विशाणशब्दादणि 'यस्येति' - अष्टा. 6/4/148, इतिणकारात्तराकारलोपे 'परिमामाणान्तस्या संज्ञाणयोः' - अष्टा. 7/3/17, इतिशाणप्रतिषेधादुत्तरपदस्याऽऽद्यचो वृद्धिप्रतिषेधे 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117, इति पूर्वपदस्याऽऽद्यचो वृद्धौ तद्धितान्ताद् विभक्तिकार्येषु कृतेषु रूपमिदम् ।
5. परिमाणान्तस्य. ' - अष्टा. 7/3/17, इत्यनेनेतिशेषः ।
6. उन्मीयते येन तदुन्मानम् ।
7. 'परिमीयते येन तत्परिमाणम् ।
8. 'परिमाणान्तस्यासंज्ञाशाणयोः' - अष्टा. 7/3/17 ।

त्तरपदस्याऽचामादेरचो विहिता वृद्धिर्न [1]सिद्ध्येत् । सति चाऽस्मिन्वचने उन्मान्स्याऽपि सुवर्णस्य परिमाणत्वेन ग्रहणादत्रोत्तरपदस्याऽचामादेरचो [2]वृद्धिः सिद्ध्यति । 'नैष्किक-' मित्यत्र 'क्रीतवत् परिमाणात्'[3] – इत्यनेन ठकः सिद्धिश्चाऽस्य वचनस्य फलम् । भट्टनागेशस्तु – "इह परिमाणशब्देन परिच्छेदकमात्रं, शाणपर्युदासा- "दित्याह[4] ।

## 'शि'दितिशब्दः

[5]'अनेकालशित्सर्वस्ये'त्यत्र 'शि'दितिशब्दः [6]'नानुबन्धकृतमनेकाल्त्व'मिति – परिभाषाया[7]ज्ञापकः । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'औश्'[8]

---

1. 'परिमाणान्तस्यासंज्ञाशाणयोः' - अष्टा. 7/3/17 ।
2. 'परिमाणान्तस्यासंज्ञाशाणयोः' - अष्टा. 7/3/17 ।
3. अष्टा. 4/3/156 ।
4. ल.श.शे. आर्हीयप्र. पृ. 696 ।
5. अष्टा. 1/1/55 ।
6. (क) व्याडिः प.स.प. 12, पृ. 8 ।
   (ख) पु.दे.ल.प,वृ.प. 11, पृ. 118 ।
   (ग) सी.दे.बृ.प.प. 6, पृ. 168 ।
   (घ) नी.दी.प.वृ.प. 6, र. 294 ।
   (ङ) ह.भा.प.भाष्क.प.6, पृ. 320 ।
   (च) भ.ना.प.शे.प. 6, पृ. 30 ।
   (छ) शेषा.प.भास्क.प.7, पृ. 384 ।
7. तथाहि –
   (क) "अनुबन्धकृतमनेकाल्त्वं न भवति । कथं ज्ञायते । यदयम् 'अनेकाल्शित्सर्वस्य' (1/1/55) इतिशिद्ग्रहणं करोति । तत्र हि सानुबन्ध आदेशः । अनुबन्धेन सार्धमनेकालेव भवति । तत्रानेकाल् इत्येव स सर्वदिशः सिद्धः । नार्थः शित्करणेन । पश्यतित्वाचार्यः योनुबन्धेन साकमनेकाल् आदेशः स एकाल् एव । स च न सर्वदिशः । तस्माच्छिद्ग्रहणम् । किमेतस्या ज्ञापने प्रयोजनम् । 'ऊदुपधाया गोहः' (6/4/89) इति । अस्त्ययमनेकाल् । सर्वदिशो न भवति । सर्वदिशो न स्थानिनिर्देशः । न उदुपधायाः सर्वदिशो न भवती"त्याह व्याडिः प. सू. प. 12, पृ. 8
   (ख) "शित्सर्वस्येति शक्यमकर्तुम् । कथम्? अन्यस्यायं स्थाने भवन्नप्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात्, असत्यामित्संज्ञायां लोपो न स्यात् । असतिलोपेऽनेकाल् । यदा अनेकाल्, तदा सर्वादेशो यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययः, तदेत्संज्ञा । यदेत्संज्ञा, तदा लोपः । एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह तज्ज्ञापयत्याचार्योऽस्त्येषा परिभाषा 'नानुबन्धकृतमनेकाल्त्वं भवती'ति । किमेतस्य ज्ञापने प्रयोजम्? तत्राऽसम्प्रसर्वादेशदाप्प्रतिषेधेषु पृथगुन्निर्देशोऽनाकारान्तत्वा'दित्युक्तं, तत्र वक्तव्यं भवती"त्याह पत. व्या. म. भा. 1/1/7/54

'इश्'[1] 'शी'[2] 'एश्'[3] – [4]इत्यादीनामादेशानां सर्वाऽऽदेशत्वाऽर्थमत्रो पात्तोऽयं शब्दः । स चाऽस्या अभावे ·व्यर्थः । अष्टावित्यादावौशादीनां हि सर्वाऽऽदेशत्वमनुबन्धा एकान्ता इति [5]सिद्धान्तपक्षेऽनेकाल्त्वादेव सुलभम् । ज्ञापितायां चास्यां परिभाषायाम् औशादीनामनुबन्धशकारं विनाऽनेकाल्त्वाऽभावात् सर्वाऽऽदेशत्वं न सिद्ध्यतीतितेषां सर्वाऽऽदेशत्वाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । न च ज्ञापितायामप्यस्यामौशादीनां शकारोच्चारणसामर्थ्यादनुबन्धकृतमप्यनेकाल्त्वमादाय सर्वाऽऽदेशत्वं भविष्यतीति पुनः शिद्ग्रहणं व्यर्थमितिशङ्क्यम् । यतोऽनुबन्धकृतानेकाल्त्वस्य सर्वादेशप्रयोजकत्वे सिद्धे शकारोच्चारणसामर्थ्येना [6]द्यादेशत्वस्यापि कल्पनापत्तिःस्यात् । 'इत्संज्ञायोग्यवर्णकृतं सर्वाऽऽदेशप्रयोजकीभूतमनेकाल्त्वं

---

(ग) "शितः शकारानुबन्धेनानेकाल्त्वेऽपि शिदिति पृथक्क्करणं 'नानुबन्धकृतमनेकाल्त्वम्' इति ज्ञापनार्थम् । तस्य तु प्रयोजनम् दिवउत्' इत्यादिषु सर्वादिशाभावः"– इत्याह जि. बु. न्या. 1/1/55

(घ) "ज्ञापकं चात्रानेकाल्त्वात् सर्वादेशत्वसिद्धेः शित्करणम् । यदि ह्यनुबन्धकृतमनेकाल्त्वं स्याद् व्यतिबभूवे इत्यादौ एशादेः शित्त्वेप्यनेकाल्त्वात् सवदिशत्वसिद्धेः शित्करणं पृथग् न कुर्या"दित्याह पु. दे. ल. प. वृ. प. 11, पृ. 118

(ङ) "ज्ञापकं चात्र 'अनेकाल्शित्सर्वस्य' (1/1/55) इत्यत्र शिद्ग्रहणम् । यद्यनुबन्धेनाप्यनेकाल्त्वं स्यात् तदा सर्वे इत्यादौ शीभावस्यानेकाल्त्वादेव सर्वादिशे जसः सिद्धे शिद् ग्रहणमनर्थकं स्या"दित्याह सी. दे. बृ. प. वृ. प. 6, पृ. 168

(च) 'एतच्च 'अनेकाल्शित् सर्वस्य' (1/1/55) इतिसूत्रे शित्करणेन ज्ञाप्यते । अन्यथा 'इदम इश् (5/3/3) इत्यादेरनेकाल्त्वेन सवदिशत्वे सिद्धे किं तदर्थेन शित्करणेन इति 'अनेकाल्शित्सर्वस्य' (1/1/55) इति सूत्रे भाष्य स्पष्ट"मित्याह नी. दी. प. वृ. प. 6, पृ. 294

(छ) "ज्ञापकमत्र 'अनेकाल्शित्' (1/1/55) इति शिद्ग्रहण"मित्याह ह. भा. प. भास्क. 6, प. पृं. 320

(ज) "शिद्ग्रहणमेतज्ज्ञापकम् । तेनार्वणस्तृ इत्यादेर्न सर्वादिशत्व"मित्याह भ. ना. प. शे. प. 6, पृ. 34

(झ) "अस्याश्च ज्ञापकम् 'अनेकाल्शित्सर्वस्य' (1/1/55) इत्यत्र शिद्ग्रहणम् । अनुबन्धकृते अनेकाल्त्वे औशादीनामप्यनेकाल्त्वादेव सर्वादिशत्वसिद्धेः किं तेने" त्याह शेषा. प. भास्क. प. 7, पृ. 384

(ञ) "अनेकाल् (सू. 1/1/55) अत्र शित्सर्वस्येत्युक्तिर्नानुबन्धकृतमनेकाल्त्वमिति ज्ञापयती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 28

8. 'अष्टाभ्यऔश्'– अष्टा. 7/1/21

1. 'इदम इश्'– अष्टा. 5/3/3
2. 'जसः शी'– अष्टा. 7/1/17
3. 'लिटस्तझयोरेशिरेच्'– अष्टा. 3/4/81
4. अत्राऽऽदिपदेन– 'जशसोः शिः' अष्टा. 7/1/20, इतिविहितः 'शि' इत्यादेशो ग्राह्यः ।
5. भगवता हि 'अनुबन्धा एकान्ता'इत्येव न्याय्यमित्युक्तम् व्या. म. भा. 1/3/19
6. 'आदेःपरस्य'– अष्टा. 1/1/54, इत्यनेनेतिशेषः ।

नाऽऽश्रीयत' इति ज्ञापिताया अस्या अर्थः । फलं तु [1]'अर्वन्तौ' [2]'अर्वन्तः' इत्यत्र [3]'अवर्णस्त्रसामनञः 'इतित्रादेश- स्याऽन्त्याऽऽ[4]देशत्वसिद्धिः । अस्या असत्त्वे हि त्रादेशोऽत्र [5]सर्वस्याऽऽपद्येत ।

## 'शेष'इतिशब्दः

[6]'शेषे विभाषा कखादावषान्त उपदेशे'—इत्यत्र 'शेष'इतिशब्दः 'अपवाद-विषयेऽप्युत्सर्गसमावेशः'[7] इति परिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि— सूत्रेऽस्मिन्नयं शब्दः '[9]प्रणिगदती'त्यादौ गदादिषु परेषु नेर्णत्वं [10]नित्यं भवतु [11]विभाषया माभूदित्येतदर्थमुपात्तः । स चाऽस्या अभावे व्यर्थः । अत्र 'शेष' इतिशब्दं विनाऽपि हि नेर्नकारस्य गदादिषु परेषु [12]पूर्वेण नित्यं, गदादिभ्यो योऽन्यस्तस्मिन् [13]'प्रणिपचति' [14]प्रनिपचती'त्यादौ विभाषया च [15]णत्वं सुलभम् ।ज्ञापितायां चाऽस्यामत्र 'शेष' इति शब्दाऽभावे गदादिषु परेष्वपि 'प्रणिगदती'-

---

1. अर्वञ्शब्दात्प्रथमाया द्वितीयायाश्च द्विवचने रूपमिदम् ।
2. अर्वञ्शब्दाज्जसि विभक्तौ रूपमिदम् ।
3. अष्टा. 7/4/127
4. 'अलोऽन्त्यस्य' अष्टा. 1/1/53, इत्यनेनेतिशेषः ।
5. अनेकाल्त्वात् 'अनेकाल् शित्सर्वस्य' अष्टा. 1/1/55, इत्यनेनेतिशेषः ।
6. अष्टा. 8/4/18
7. व्याडिः प. सू. प. 83, पृ. 34
8. तथाहि— "अपवादविषयेऽप्युत्सर्गसमावेशः' । कथं ज्ञायते । यदयं 'शेषेविभाषा.' (8/4/18) इतिशेषग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अत्र शेषग्रहणानर्थक्यम् । अन्तरेणापि हि शेषवचनं गदादिभ्यः अन्यस्मिन्नेव शेषे कार्यं विज्ञास्यते । एतच्छेषग्रहणं क्रियते । गदादिषु-परेषु नेः णत्वं विभाषया माभूदिति । तेन गदादिषु पूर्वेणैव नित्यो विधिर्भविष्यति । अयं च गदादिभ्यो योऽन्यः तस्मिन् विभाषा विधिर्मविष्यति एवं सिद्धे सति यच्छेषग्रहणं करोति-तज्ज्ञापयति अपवादविषयेऽप्युत्सर्गसमावेशः तत इह गदादिषु परेषु स्यादियंविभाषाया । तस्माच्छेष- वचनम् । किमेतस्या ज्ञापने प्रयोजनम् । 'प्रदीयतां दाशरथाय मैथिली' इती—ञोपवादविषये अणपि सिद्धो भवती"त्याह व्याडिः प. सू. प. 83, पृ. 34
9. प्रतिपूर्वकात् 'गदव्यक्तायांवाचि' धा. पा. भ्वा. 52, इतिगद्धातोर्लटि तिपि शपि नेर्गद.' अष्टा. 8/4/17, धातुन कारस्य णत्वे च कृते रूपमिदम् ।
10. 'नेर्गद नद पत पद घुमास्यति हन्ति याति वाति द्राति प्सातिवपति वहति शाम्यति चिनोतिदेगृधिषु च' अष्टा. 8/4/17, इत्येनेनेतिशेषः ।
11. 'शेषे विभाषाऽकखादावषान्त उपदेशे' अष्टा. 8/4/18, इतिविहितमित्यर्थः ।
12. 'नेर्गद.' अष्टा. 8/4/17, इत्यनेनेत्यर्थः ।
13. प्रनिपूर्वकात् 'डुपचष् पाके' धा. पा. भ्वा. 996, इतिपचूधातोर्लटि तिपि शपि 'शेषे विभाषा.' अष्टा. 8/4/18, इति नस्य णत्वे रूपमिदम् ।
14. 'प्रनिपूर्वकात् 'डुपचष् पाके' धा. पा. भ्वा. 997, इतिपचूधातोर्लटि तिपि शपि 'शेषे विभाषा.' अष्टा. 8/4/18, इति नस्य णत्वाऽभावपक्षे रूपमिदम् ।
15. 'शेषे विभाषा. अष्टा. 8/4/18, इतिविहितमित्यर्थः ।

त्यादौविभाषयाऽनेन णत्वं[1] स्यात्तन्माभूदित्येतदर्थं शब्दोऽयमत्र स्वांऽशे चरिताऽर्थोभवति । ज्ञापितायाअस्याः फलं तु 'प्रदीयतां [2]दाशरथाय मैथिली'त्यत्र 'अत इञ्'[3] इत्यपवादविषयेऽपि [4]'तस्यापत्य'- मित्युत्सर्गस्याऽप्यणो दशरथशब्दात् षष्ठ्यन्तात्सिद्धिः । अस्या असत्त्वे हि [5]षष्ठ्यन्ताद्दशरथशब्दादण् नाऽत्र सिद्ध्येत् किन्तु [6]इञ्प्रत्ययाऽऽपत्तिरत्र दुर्वारा स्यात् ।

जिनेन्द्रबुद्धिस्तु सूत्रेऽस्मिन् शेषग्रहणं स्पष्टाऽर्थमिति मनुते[7] । हरदत्त मिश्रस्तु शेष इति शक्यमवक्तुमिति [8]मन्यते ।

## 'श्नु' इतिशब्दः

[9]'अचिश्नुधातुभ्रुवां य्वोरियङुवङा'वित्यत्र 'श्नु' इतिशब्दः 'न प्रत्ययंस्योवङा-[10]देशो भवती'तिवचनस्य ज्ञापकः[11] । यतोऽस्य वचनस्याऽभावेत्राऽयं शब्दो व्यर्थः । तथाहि– 'आप्नुवन्ति'[12] 'राध्नुवन्ति'[13] इत्यादौ[14] श्नुप्रत्ययाऽन्तस्याङ्गस्य

---

1. 'शेषे विभाषा.' अष्टा. 8/4/18, इत्यनेनेत्यर्थः ।
2. अयं रामायणप्रयोगो व्याडिनोद्धृतः प. सृ. प. 83, पृ. 34
3. अष्टा. 4/1/95
4. अष्टा. 6/1/92
5. 'तस्यापत्यम्' अष्टा. 6/1/92, इतिविहित इत्यर्थः ।
6. 'अत इञ्' अष्टा. 4/1/95 इतिविहित इत्यर्थः ।
7. तथाहि– 'शेषग्रहण'मितिस्पष्टार्थम् । यदि च गदादिषु विभाषा स्यात् पूर्वयोगो निरर्थकः स्या'दित्याह जि. बु. न्या. 8/4/18
8. तथाहि– "शेषग्रहणं किम्? गदादिषु माभूत् । यदि तेष्वपि स्यात् पूर्वयोगो निर्विषयः स्यात्, तस्माच्छेष इतिशक्यमवक्तुम् "इत्याह ह. मि. पदम. 8/4/18 ।
9. अष्टा. 6/4/77 ।
10. 'प्रत्ययाऽऽत्मको यो धातुसरूपस्तस्योवङादेशो न भवती'तिवचनाऽर्थः ।
11. तथाहि–
    (क) "आचार्यप्रवृत्तिर्ज्ञापयति– 'न प्रत्ययस्योवङादेशो भवती'ति यदयं तत्र अचिश्नु-धातुरिति श्नुग्रहणं करोती"त्याह पत. व्या. म. भा. 1/3/1/1/1
    (ख) 'भूवादयो (सू. 1/3/1) 'अनिश्नु' (सू. 6/4/77) इत्यत्र श्नुग्रहणं ज्ञापकं न प्रत्ययस्योवङादेशो भवतीती'त्याह श्रीना. ज्ञा. सं. 1, पृ. 146-147
12. 'आप्लृव्याप्तौ' धा. पा. भ्वा. 1261, इति आपधातोर्लटि झौ झेरन्तादेशे 'स्वादिभ्यः श्नुः अष्टा. 3/1/73, इतिश्नुप्रत्यये 'आप्नु अन्ति' इत्यवस्थायां संयोगपूर्वकत्वात् 'हुश्नुवोः सार्वधातुके' अष्टा. 6/4/87 इति यणोऽप्राप्तौ 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' अष्टा. 6/4/77, इत्यनेनोरकारस्योवङादेशे रूपमिदम् ।
13. 'राध संसिद्धौ, धा. पा. स्वा. 1263, इति धातोर्लटि झौ झेरन्तादेशे 'स्वादिभ्यः श्नुः' अष्टा. 3/1/73, इतिश्नुप्रत्यये 'राध्नु अन्ति' इत्यवस्थायां संयोगपूर्वकत्वात् 'हुश्नुवोः सार्वधातुके' अष्टा. 6/4/87 इति यणोऽप्राप्तौ 'अचिश्नु.' अष्टा. 6/4/77, इत्यनेनोकारस्योवङादेशे रूपमिदम् ।
14. अत्राऽदिपदेन 'शक्नुवन्ती'ति ग्राह्यम् ।

'डिच्चे'[1]त्यनेन [2]श्नोरुकारस्योवङर्थं 'श्नुप्रत्ययाऽन्तस्याऽङ्गस्य धातोरिवर्णोवर्णाऽन्तस्य 'भ्रू' इत्येतस्य च इयङ् उवङ् इत्येतावादेशौ भवतोऽजादिप्रत्यये परतः' 'इत्यर्थकेऽस्मिन् सूत्रे शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । यदि प्रत्ययस्याऽप्युवङादेशः स्यात्तर्हि श्नुप्रत्यये 'नु' इत्यस्याऽपि धातुत्वेनैवोवङः सिद्धिर्हि सुलभा । ज्ञापिते चाऽस्मिन्वचने 'आप्नुवन्ती'त्यादौ प्रत्ययाऽऽत्मकस्य धातुस्वरूपस्य नोरुकारस्योवङादेशो न प्राप्नोतीति तत्रोवङर्थं शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [3]'त्रस्नु' इत्यत्र [4]नोरुकारस्योवङादेशाऽऽ[5]पत्तेरभावः । अस्य वचनस्यासत्त्वे हि 'नु' इत्यस्य धातुपाठे पठिततया 'त्रस्नु औ' इत्यवस्थायामत्र 'नु' इत्यस्य धातुत्वेनोकारस्योवङापत्तिर्दुर्वारा स्यात् । न च णुर्धातुषु पठितो, न तु नुः, नाऽस्य च णुना सारूप्यमित्येतद्वचनाऽभावेऽपि नाऽत्रोवङापत्तिरुकारस्येतिशङ्क्यम् । यतः प्रयोगे [6]नुशब्दस्यैव धातुत्वेन तत्सारूप्यस्य 'त्रस्नु' इत्यत्र शब्देऽपि सत्त्वमक्षुण्णम् । सति चाऽऽस्मिन्वचने 'त्रस्नु' इत्यत्र प्रत्यस्य नोर्धातु[7]सरूपत्वेऽपि [8]नोवङापत्तिर्भवति ।

## 'श्वी'तिशब्दः

'श्वीदितो [9]निष्ठाया'मित्यत्र 'श्वी'तिशब्दः [10]'औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहण'मितिपरिभाषाया [11]ज्ञापकः । यतोऽस्या अभावेऽत्राऽसौ व्यर्थः ।

---

1. अष्टा. 1/1/53
2. स्वादिभ्यः श्नुः' अष्टा. 3/1/73, इति विहितस्येत्यर्थः ।
3. 'त्रसी उद्वेगे' धा. पा. दिवा. 1117, इतित्रस्धातोस्तच्छीलादिषु कर्तृषु'त्रसि गृधि धृषि क्षिपेः क्नुः' अष्टा. 3/2/140, इति क्नुप्रत्यये कृदन्तप्रातिपदिकादौ विभक्तौ 'प्रथमयोः पूर्वसवर्णः' अष्टा. 6/1/102, इति पूर्वसवर्णदीर्घेकाऽऽदेशे रूपमिदम्
4. 'त्रसि गृधि धृषि क्षिपेः क्नुः' अष्टा. 3/2/140, इतिविहितस्याऽनुबन्धविनिर्मुक्तस्येत्यर्थः ।
5. 'अचि श्नु धातु भ्रुवां य्वोरियङुवङौ' अष्टा. 6/4/77, इत्यनेनेतिशेषः ।
6. 'णोनः' अष्टा. 6/1/65, इति सूत्रादितिशेषः ।
7. 'णु स्तुतौ' धा. पा. अदा. 1035, इति णोर्णकारस्य 'णोनः' अष्टा. 6/1/65, इति नकारे कृते सति विशेषः ।
8. 'अचिश्नु. अष्टा. 6/4/77, इत्यनेनेतिशेषः ।
9. अष्टा. 7/2/14
10. (क) व्याडिः प. सू. प. 5, पृ 5
    (ख) पु. दे. ल. प. वृ. प. 4, पृ. 114
    (ग) सी. दे. बृ. प. वृ. प. 81, पृ. 241
    (घ) नी. दी. प. वृ. पा. 135, पृ. 316
    (ङ) ह. भा. भास्क. प. 84, पृ. 357
    (च) भ. ना. प. शे. प. 131 पृ. 362
11. तथाहि–

तथाहि – 'शूनः[1] 'शूनवान्'[2] - इत्यत्र इण्निषेधायाऽत्राऽसावुपात्तः । अस्या असत्त्वेऽत्र [3]संप्रसारणपूर्वरूपयोः[4] कृतयोरुगन्तत्वात् 'श्र्युकः[5] किती'त्यनेनैव इण् - निषेधो भविष्यतीत्यसौ शब्दोऽत्र व्यर्थः । न चाऽत्र 'श्र्युकः[6] किती'त्यत्रोपदेशग्रहणाऽनुवृत्तेरुपदेशे[7]चाऽस्योगन्तत्वाऽभावान्नाऽनेन इट्प्रतिषेधः संभवतीतिशङ्क्यम् । यतोत्रोपदेशग्रहणानुवृत्तिर्नाभ्युपेयते । न चात्र तदनुवृत्त्यनङ्गीकारे [8]तीर्णमित्या-

---

(क) "औपदेशिकस्य प्रायोगिकस्य च ग्रहणे औपदेशिकस्य ग्रहणं भवति न प्रयोगिकस्य च । कथं ज्ञायते । यदयं 'श्वीदितो निष्ठायाम्' (72/14) इति श्विग्रहणंकरोति । पश्यति त्वाचार्यः औपदेशिकस्य उको ग्रणमिति । तस्मात् श्विग्रहणं करोति । किमेतस्या ज्ञापने प्रयोजनम्॰। 'तरप्तमपौ घः' (1/1/22) इति । अत्र औपदेशिकस्य ग्रहणं न प्रोयोगिकस्य' । इह न भवति नदीतर इती'त्याह व्याडिः प. सू. प. 5, पृ. 5

(ख) "ज्ञापकं चात्र 'श्वीदितो निष्ठायाम्' (7/2/14) इति इण्निषेधार्थं श्विग्रहणम् । यदि हि प्रायोगिकस्यापीह ग्रहणम् अभविष्यत् संप्रसारणे कृते पूर्वरूपत्वे च कृते शूनः शूनवानित्यत्रोगन्तत्वाच् 'श्र्युकःकिति' (7/2/11) इति निषेधे सिद्धे पृथक् श्विग्रहणं नाकरिष्य"दित्याह पु. दे. ल. प. वृ. प. 4, पृ. 114

(ग) ज्ञापकं चात्र 'श्वीदितो निष्ठायाम् (7/2/14) इति श्विग्रहणम् । यदि प्रायोगिकस्यापि ग्रहणमभविष्यत्तदा संप्रसारणे कृते शूनः शूनवानित्यत्रोगन्तत्वादेव 'श्र्युकः किति' (7/2/11) इतीट्प्रतिषेधः सिद्ध इति विग्रहणं न कुर्या"दित्याह सी. दे. बृ. प. वृ. प. 81, पृ. 241

(घ) "परिभाषायां ज्ञापकं तु 'श्वीदितो निष्ठायाम्' (7/2/14) इत्यत्र विग्रहणम् । तद्धि 'शूनः' 'शूनवान्' इत्यत्रानयापरिभाषया 'श्र्युकः किति' (72/11) इति निषेधाप्रवृत्तौ सार्थकम् । नहि 'श्र्युकः किति' (7/2/11) इत्यत्र उपदेशग्रहणानुवृत्तिरस्ति । तीर्ण–मित्यादाविट्प्रतिषेधस्तु औपदेशिकोगन्तात्परयो र्गित्किते नेट् इति व्याख्यानात् साधनीयः । नचैवमपि श्विग्रहणं व्यर्थम् । उड्डीनवदोदित्त्वादेव इडागमाभावसिद्धे इति वाच्यम् । सर्वविधिभ्य इड्विधेबर्लवत्ताज्ञापनार्थत्वात् । एकस्य श्विग्रहणस्य कथमर्थद्वयज्ञापकतेति चेन्न । अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते इत्यत्रोक्तयुक्ते"रित्याह ह. भा. प. भास्क. प. 84, पृ. 357

1. 'टु ओश्वि गतिवृद्ध्योः' धा. पा. भ्वा. 1010. इति श्विधातोः 'निष्ठा' - अष्टा. 3/2/102, इति क्तप्रत्यये 'वचिस्वपियजादीनां किति' - अष्टा. 6/1/15, इति यजादित्वाच्छ्वयते र्वकारस्य संप्रसारणे उकारे 'संप्रसारणाच्च' - अष्टा. 6/1/108, इति पूर्वरूपे 'हलः' अष्टा. 6/4/2. इति उकारस्य दीर्घे 'श्वीदितो निष्ठाया'मितीण्निषेधे 'ओदितश्च' - अष्टा. 8/2/45, इति निष्ठातकारस्य नत्वे कृतन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
2. 'शूनः' इतिवत् श्वयतेः क्तवतु प्रत्यये रूपमिदम् ।
3. 'वाचिस्वपियजादीनां किति' - अष्टा. 6/1/15 ।
4. 'संप्रसारणाच्च' - अष्टा. 6/1/108 ।
5. अष्टा. 7/2/11 ।
6. अष्टा. 7/2/11 ।
7. 'एकाच उपदेशेऽनुदात्तात्' - अष्टा. 7/2/10, इत्यत इतिशेषः ।
8. 'तॄप्लवनतरणयोः' धा. पा. भ्वा. 969 इति तॄ धातोः 'निष्ठा' - अष्ठा. 3/2/102 इति क्त प्रत्यये 'ॠत इद्धातोः' - अष्टा. 7/1/100 इति ॠकारस्य इत्वे रपरत्वे 'र्वोरुपधाया दीर्घ इकः' - अष्टा. 8/2/76, इति इकारस्य दीर्घे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' - अष्टा. 8/2/42 नत्वे णत्वे रूपमिदम् ।

दाविट्प्रतिषोऽनेन न सिद्ध्येदिति शङ्कनीयम् । यतः 'श्र्युकः[1] किती'त्यस्य 'औपदेशिकोगन्तात्परयोर्गित्किता नें'डिति व्याख्यानात्तीर्णमित्यादाविण्निषेधः सुलभः । ज्ञापितायां चाऽस्यां 'शूलः' इत्यादाविण्निषेधायाऽत्र 'श्वी'तिशब्दः स्वांऽशे चरिताऽर्थो भवति । यतोऽत्र श्विधातोरुपदेशे उगन्तत्वं नास्तीति 'श्र्युकः[2] किती'-तीण्निषेधोऽनया न प्राप्नोति । न चैवमपि श्वि-शब्दोऽत्र व्यर्थः, [3]उड्डीनवदोदित्त्वादेव ऊडागमाऽभावः[4] शून इत्यादौ सुलभ इतिशङ्क्यम् ! 'सर्वविधिभ्य इड्विधिर्बलवा'निति [5]परिभाषाज्ञापनेनाऽस्य चारितार्थ्यमक्षुण्णम् । यत[6]इटि सति उगन्तात्परत्वं निष्ठा-तस्य नास्ति अतः श्र्युकः[7] कितीति नेण्निषेधः प्राप्नोति । न चैकस्य श्वीतिशब्दस्य परिभाषाद्वयज्ञापकत्वं युक्तमितिशङ्क्यम् । 'येन विना यदनुपपन्नं तावत् सर्वं ज्ञापयतीत्युभियुक्तोक्तेरेकस्याऽर्थद्वयज्ञापकत्वं युक्तमेव । ज्ञापिताया अस्याः फलं तु 'नदीतर'[8] इत्यत्र 'घरूपे'ति[9] ह्रस्वत्वाऽभावः । अस्याः सत्त्वे हि 'तरपूतमपौ घः'[10] इति घसंज्ञायां तरप्प्रत्ययस्यैव ग्रहणं भवति न तु नदीतर इति तरतेरप्प्रत्यये कृते प्रयोगस्थस्य । अस्या असत्त्वे तु प्रयोगस्थस्यापि तरपः घसंज्ञाया

---

1. अष्टा. 7/2/11 ।
2. अष्टा. 7/2/11 ।
3. उत्पूर्वकात् 'डीङ् विहायसा गतौ' धा. पा. दिवा. 1135, इति डीधातोः क्त प्रत्यये 'ओदितश्च' अष्टा. 8/2/45. इति तस्य नत्वे रूपमिदम् ।
4. (क) "डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य । स हि नत्वार्थः । नत्वं च निष्ठातोऽनन्तरस्य विधीयते । उड्डीनः । उड्डीनवान्"- इत्याह वाम. का. 7/2/14 ।
   (ख) "यदि डीङः परस्या निष्ठाया इट्स्यात् तदा सत्यप्योदित्त्वे इटा व्यवहितत्वान्नत्वेन न भवितव्यम् । नित्योदितां मध्ये तस्य पाठोऽनर्थकत्वान्न कृतः स्यात्, स चास्ति, तस्मात् स एव पाठो ज्ञापकः डीङः उत्तरस्या निष्ठाया इण्न भवतीती"त्याह जि. बु. न्या. 7/2/14 ।
   (ग) 'ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्, उड्डीनः '-इत्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 428 । यदि डीङ इट् स्यात् तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति तदाशयः ।
5. (क) व्याडिः प. सू. प. 56, पृ. 26 ।
   (ख) पु. दे. प. पा. 79, 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्' ।
   (ग) सी. दे. बृ. प. वृ. प. 82, पृ. 242 ।
   (घ) नी. दी. प. वृ. प. 136, पृ. 316 ।
   (ङ) ह. भा. प. भास्क. प. 85, पृ. 358 ।
   (च) भ. ना. प. शे. प. 100, पृ. 330, 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्' ।
6. 'आर्धधातुकस्येड्वलादेः'–अष्टा. 7/2/35 ।
7. अष्टा. 7/2/11 ।
8. 'तॄप्लवनतरणयोः' धा. पा. भ्वा. 969, इति तॄधातोः 'दोरप्'–अष्टा. 3/3/57, इति अप्रत्यये ॠ-कारस्य गुणेपरत्वे कृदन्तप्रातिपदिकात्स्वादिकार्ये कृते निष्पन्नस्य तर इत्यस्य नद्या सह षष्ठीतत्पुरुषे रूपमिदम् ।
9. 'घरूपकल्प चेलड् ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः'–अष्टा. 6/3/43 ।
10. अष्टा. 1/1/22 ।

दुर्वारतया ह्रस्वत्वाऽऽपत्तिरत्र दुर्वारा स्यात् । यद्यपि '[1]तरप्तमपौ घः' इत्यत्र तमपा [2]साहचर्यात् '[3]लक्षण'–परिभाषया '[4]प्रत्ययाप्रत्ययो'रित्यादिपरिभाषाया च प्रत्यय-स्यैव तरपो ग्रहणादतरबन्तस्याऽग्रहणस्यान्यथासिद्धत्वान्नेदं फलमस्या इत्युच्येत तर्हि [5]'दादेर्धातोर्घः' इति घत्वस्य'अधोक्'[6] 'दामलिट्'[7]इत्यादावभावोऽस्याः फलमवेहि । अस्याः सत्त्वे हि घत्वमौपदेशिकस्य दादेर्धातोर्भवति । 'धातोरित्यावर्तते तत्रैक-मतिरिच्यामानमुपदेशकालं लक्षयती'ति प्रौढ़मनोरमोक्तं[8] तु चिन्त्यमेव । अनयैव हि 'अधोक्' 'दामलिट्'इत्यादौ नाऽव्याप्त्यतिव्याप्ती भवतः ।

अथास्या अभ्युपगमे [9]'उपदेशेऽजनुनासिक इत्' इत्यादौ [10]उपदेशग्रहणं व्यर्थम् । तद्धि 'अभ्रआँ अपः'इत्यत्र '[11]आङोऽनुनासिकश्छन्दसी'त्यनुनासिकाऽऽकारस्येत्संज्ञा-निवृत्त्यर्थम् । अस्याः सत्त्वे हि तत्राऽनयैवेत्संज्ञा निवर्तेत किं तेनेति चेत्, सत्यम् अस्या, अनित्यत्वज्ञापनेन तच्चरितार्थम् । न च 'अभ्रआँ अपः'इत्यत्राऽस्तु इत्संज्ञा, का क्षतिरिति शङ्क्यम् । यतोऽनुबन्धानामनेकान्तत्वपक्षे '[12]आदितश्चे'त्यत्र समीपवर्तीआकार इद् यस्येति व्याख्यानाद् '[13]अटितः' इत्यत्र इण्निषेधा[14]ऽऽपत्तिः स्यात् ।

वस्तुतस्तु परिभाषेयं न स्वीकार्या । यतः [15]तत्र-तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतोऽसम्मता, '[16]दादेर्धातोर्घः' इतिसूत्रे 'अधोक्' इत्यादौ घत्वाऽप्राप्तिसमा-

---

1. अष्टा. 1/1/22 ।
2. 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहण'मिति परिभाषयेतिशेषः ।
3. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' ।
4. 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' ।
5. अष्टा. 8/2/32 ।
6. 'दुह प्रपूरणे' धा. पा. अदा. 1014. इति दुह्धातोर्लङि तिपि सिपि वा रूपमिदम् ।
7. 'दामलेढीति विग्रहे दामेति कर्मोपपदात् 'लिहआस्वादने'धा. पा. अदा. 1016. इति लिह्धातोः 'क्विप्च'–अष्टा. 3/2/76, इति क्विपि कृदन्तप्रातिपदिकात्सौ रूपमिदम् ।
8. हलन्तपुंलिङ्गप्र. पृ. 360 ।
9. अष्टा. 1/3/2 ।
10. आदिपदेन–'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च'–अष्टा. 6/4/62. इतिग्राह्यम् ।
11. अष्टा. 6/1/126 ।
12. अष्टा. 7/2/16 ।
13. 'अट-पट गतौ' धा. पा. भ्वा. 295. 296. इतिअट्धातोः 'क्त'प्रत्यये इागमे रूपमिदम् ।
14. 'आदितश्च'–अष्टा. 7/2/16 ।
15. (क) 'उपदेशेऽजनुनासिक इत्'–अष्टा. 1/3/2 ।
    (ख) 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट्च'–अष्टा. 6/4/2. इत्यत्रेत्यर्थः ।
16. अष्टा. 8/2/32 ।

धानपरभाष्याऽसम्मता चेयम् । [1]'श्वीदितो निष्ठाया'मित्यत्र भाष्ये श्विग्रहणस्य सार्थक्य- [2]प्रदर्शनेन ज्ञापकाऽभावश्चाऽस्याम् । अधोगित्यादौ घत्वस्याऽन्यथासिद्ध्या फलं च नाऽस्त्यस्याः । कैयटस्तु इदमेव श्विग्रहणमुपदेशाधिकारस्य तत्र ज्ञापकम्, 'अन्ये त्विह श्विग्रहणं 'सर्वविधिभ्य इड्विधिर्बलवा'नित्यस्य ज्ञापकमाहु''रित्याह[3] ।

## 'षि'ति शब्दः

[4]'ष्णान्ताःष'डित्यत्र 'षि' तिशब्दः 'शब्दसंज्ञायां स्वरूपविधिर्न भवती'तिवचनस्य ज्ञापकः[5] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–'षकाराऽन्ता नकाराऽन्ता च या संख्या सा षट्संज्ञा भवती'त्यर्थकेऽस्मिन्सूत्रे 'षट्[6]तिष्ठन्ति' 'षट्[7] पश्ये'-त्यत्र षष्शब्दस्य षकाराऽन्तस्य षट्संज्ञा सिद्ध्यर्थमुपात्तः । स चाऽस्य वचन-स्याऽभावे व्यर्थः । 'स्वंरूपं[8]शब्दस्ये'त्यनेन षष्शब्दस्वरूपस्य षट्संज्ञा हि सुलभा । ज्ञापिते चाऽस्मिन्वचने 'षट्तिष्ठन्तीत्यादौ षष्शब्दस्य 'स्वंरूपं[9]शब्दस्ये'त्यनेन षट्-संज्ञा न सिद्ध्यतीति तस्य षट्संज्ञाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'स्वंरूपं[10]शब्दस्याऽशब्दसंज्ञे'त्यत्र 'अशब्द-

---

1. अष्टा. 7/2/14 ।
2. तथाहि–"श्विग्रहणं किमर्थं, नप्रसारणे कृते संप्रसारणपूर्वरूपत्वे चोगन्तादित्येव सिद्धम् ? अत उत्तरं पठति–'श्विग्रहणमिदन्तत्वादुपदेशस्य' श्विग्रहणं क्रियते, किं कारणम्, इदन्तत्वादुप- देशस्य । 'उपदेशे उगदन्ता'दित्युच्यते । श्वयतिश्चोपदेशे इदन्तः"इति व्या. म. भा. 7/2/1/14 ।
3. प्रदी. 7/2/1/14 ।
4. अष्टा. 1/1/24 ।
5. तथाहि–
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति–'शब्दसंज्ञायां न स्वरूपविधिर्भवती'ति यदयं–'ष्णान्ताः ष'-डिति षकाराऽन्तायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः सम्प्रत्ययः स्यात्, स्वरूपग्रहणाच्च षकारान्तायाः"इत्याह पत. व्या. म. भा. 1/1/9/67 ।
   (ख) "स्वं रूपं शब्दस्य (सू. 1/1/68) । 'ष्णान्ताः षट्' (1/1/24) इतिषकारान्तायाः संख्यायाः षट्संज्ञाज्ञापकाच्छब्दसंज्ञायां न स्वरूपविधिर्भवतीती"त्याह श्रीना. ज्ञा. सं. 1, पृ. 144 ।
6. षष् शब्दज्जसि 'ष्णान्ताः षट्'–अष्टा. 1/1/24, षट्त्वात् 'षड्भ्यो लुक्'–अष्टा. 7/1/22, इतिजसो लुकि षकारस्य जश्त्वे चर्त्वे च कृते रूपमिदम् ।
7. षष्शब्दाच्छसि 'ष्णान्ताः षट्'–अष्टा. 1/1/24, इतिषट्त्वात् 'षड्भ्यो लुक्'–अष्टा. 7/1/22, इति शसो लुकि षकारस्य जश्त्वे चर्त्वे च कृते रूपमिदम् ।
8. अष्टा. 1/1/68 ।
9. अष्टा. 1/1/68 ।
10. अष्टा. 1/1/68 ।

संज्ञे'त्यस्याऽकरणजन्यं लाघवम् । सति ह्यस्मिन्वचने टि[1] घु[2]प्रभृतिषु स्वरूपस्य संज्ञावारणार्थमत्रोपात्तोऽयं [3]नाऽऽवश्यको भवति ।

## 'सि'ति शब्दः

'न विभक्तौ [4]तुस्माः' इत्यत्र 'स्'इतिशब्दः 'उदित्[5]सवर्णं गृह्णाति न वर्णमात्र'मिति परिभाषाया ज्ञापकः[6] । यतोऽस्या अभावेऽत्र शब्दोऽयं व्यर्थः । वर्णमात्रस्योदित्पदेन ग्रहणे हि तुशब्देनैवाऽत्र सकारस्यापि ग्रहणं सुलभम् । ज्ञापितायां चास्यां नुग्रहणेन सकारस्य ग्रहणं न स्यादिति 'स्'इतिशब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु 'चोः[7] कु'रित्यत्र चुग्रहणेन शकारस्य ग्रहणाभावः । तेन विडित्यस्य[8] साधुत्वं सिद्ध्यति । अस्या असत्त्वे[9]हि

---

1. 'अचोन्त्यादि टि'–अष्टा. 1/1/64, इति विहित-टिसंज्ञायाः 'टेः'–अष्टा. 6/4/143, 6/4/155, इत्यादिप्रदेशे टिशब्द इत्यर्थः ।
2. 'दाधाघ्वदाप्'–अष्टा. 1/1/20, इतिविहितघुसंज्ञायाः'उपसर्गेघोः किः'–अष्टा. 3/3/92, इत्यादिप्रदेश घुशब्द इत्यर्थः ।
3. तथाहि–"लक्ष्यानुसारात्तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषष्शब्दस्य षट्-संज्ञाकरणेन शब्दशास्त्रीयसंज्ञायां स्वरूपाग्रहणज्ञापनाच्च'उपसर्गे घो'रित्यादावदोषेणाऽ'शब्द-संज्ञे'त्यपि व्यर्थमित्युक्त"मित्याह भ. ना. ल. श. शे. संज्ञा प्र. पृ. 153-154 ।
4. अष्टा. 1/3/4 ।
5. (क) 'उदित् स्ववर्गमेव गृह्णाति न सवर्णमात्रम्'व्याडिः प. सू. प. 55, पृ. 25 ।
   (ख) 'उदित्सवर्णं गृह्णाति न सवर्णमात्रम्' पु. दे. ल. प. वृ. प. 89, पृ. 150 ।
   (ग) सी. दे. बृ. प. वृ. प. 17, पृ. 179 ।
   (घ) 'उदित्सवर्णं गृह्णाति' नी. दी. प. वृ. प. 131, पृ. 315 ।
   (ङ) 'उदित्सवर्णं गृह्णाति' न सवर्णमात्रम्'–ह. भा. प. भास्क. प. 17, पृ. 329 ।
6. तथाहि–
   (क) "उदिद्वर्णो गृह्यमाणः स्ववर्गमेव गृह्णाति, न सवर्णमात्रम् । कथं ज्ञायते । यदयं 'न विभक्तौ तुस्माः (1/3/4) इत्यत्र तुग्रहणादेव सिद्धे सकारस्य ग्रहणं करोति । किमेतस्या ज्ञापने प्रयोजनम् । चोः कुः (8/3/30) इत्यत्र चुग्रहणेन शकारस्याग्रहणात् कुत्वं न भवति तेन विडिति सिद्धं भवतीत्याह व्याडिः प. सू. प. 55, पृ. 26 ।
   (ख) "ज्ञापकं चात्र 'न विभक्तौ तुस्माः' (1/3/4) इत्यत्र तुग्रहणं कृत्वाऽपि पृथक् सकार-ग्रहणमिती"त्याह पु. दे. ल. प. वृ. प. 89, पृ. 150 ।
   (ग) "ज्ञापकं चात्र 'नविभक्तौ तुस्माः' (1/3/4) इत्यत्र तुग्रहणं कृत्वा सकारग्रहणमिती"त्याह सी. दे. बृ. प. वृ. प. 17, पृ. 179 ।
   (घ) "उदिद्वर्णः'अणुदित्सवर्णस्य.' (1/1/69) इतिसूत्रेण स्थानप्रयत्नाभ्या विशिष्टमेवसवर्णं गृह्णाति, नतु स्थानैकतुल्यं सवर्णमात्रम् । 'नवभिक्तौ.' (1/3/4) इत्यत्र वर्गात् पृथक् सकारग्रहणाल्लिङ्गा"दित्याह ह. भा. प. भास्क. प. 17, पृ. 329 ।
7. अष्टा. 8/3/30 ।
8. विशब्दात्सौ रूपम् ।
9. 'चोः कुः'–अष्टा. 8/3/30,

कुत्वस्यात्र दुर्वारतया नाऽस्य साधुत्वं सिद्ध्येत् । वस्तुतस्तु स्थानप्रयत्नाभ्यां सदृशस्य सवर्णसंज्ञाविधानात्तकारसकारयोः स्पर्शोष्मणोः प्रयत्नभेदादेव सावर्ण्यं नास्तीति नाऽत्र 'स्'इतिशब्दोऽस्यां ज्ञापकः जस्तस्थसां सकारसंज्ञाप्रतिषेधाय हि चरितार्थोऽयम् ।

## 'सप्तमी'ति शब्दः

'सप्तमी विशेषणे[1]बहुव्रीहा'वित्यत्र 'सप्तमी'तिशब्दो 'व्यधिकरणपदोऽपि बहुव्रीहि'रितवचनस्य ज्ञापकः[2] । यतोऽत्राऽयं शब्दो बहुव्रीहौ 'कण्ठेकालः'[3] इत्यत्र सप्तम्यन्तस्य पूर्वनिपातं विधातुमुपात्तोऽस्य वचनस्याऽभावे व्यर्थः । नहि 'कण्ठेकालः' इत्यत्र विभिन्नविभक्तिकयोः केनाऽपि सूत्रेण बहुव्रीहिः सम्भवति । '[4]अनेकमन्यपदार्थे' इतिसूत्रं हि समानाधिकरणानां पदानामेव बहुव्रीहिं शास्ति, न तु व्यधिकरणानां पदानामपि । ज्ञापिते चाऽस्मिन्वचने विभिन्नविभक्तिकयोरपि बहुव्रीहि- समासस्याऽनेन वचनेन सुलभतया 'कण्ठेकालः'–इत्यत्र सप्तम्यन्तस्य 'काले'–इत्यस्य पूर्वनिपातसम्पादनाय शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति ।

न चाऽत्र 'कण्ठेस्थः[5] कालो यस्येति विग्रहे '[6]सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्चे'तिबहुव्रीहिसमासे स्थशब्दस्य लोपे 'अमूर्धमस्तकात् [7]स्वाङ्गादकामे' इति सप्तम्या अलुकि च कृते 'कण्ठेकालः' इत्यत्र सप्तम्यन्तस्य 'कण्ठे'–इत्यस्य पूर्वनिपातसिद्धयेऽत्राऽस्य शब्दस्याऽऽवश्यकतया कथमुक्तवचनज्ञापकत्वमस्येति शङ्क्यम् । यतोऽत्र 'कण्ठेस्थ'शब्दस्य विशेषणत्वादेव पूर्वनिपाते कृतेऽप्यस्य प्रयोगस्य साधुत्वमत्राऽस्य शब्दस्याऽभावेऽपि सुलभम् । अतो यदा स्थपदमनादृत्य 'कण्ठे' इत्यस्याऽधिकरणत्वम्, तस्य च कालरूपे उत्तरपदार्थे उपसङ्क्रमस्तदा 'कण्ठे कालो यस्ये'त्यर्थे बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातविधानायोपात्तोऽत्र 'सप्तमीति'तिशब्दो

---

1. अष्टा. 2/2/35 ।
2. तथाहि–
   (क) "अतएव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहि"रित्याह भ. दी. वै. सि. कौ. बहुव्रीहि प्र. पृ. 513 ।
   (ख) "सप्तमी विशेषणे (सू. 2/2/35) अतएव ज्ञापकात् व्यधिकरणपदोऽपि बहुव्रीहि"रित्याह एन्. एस्. रामा. ज्ञा. सं. परि. 2, पृ. 207 ।
3. 'कण्ठे कालो यस्येति विग्रहः' ।
4. अष्टा. 2/2/24 ।
5. कण्ठे तिष्ठतीत्यर्थे सुबुपपदात् 'ष्ठा गतिनिवृत्तौ'धा. पा. भ्वा. 928, इति स्थाधातोः 'सुपिस्थः'–अष्टा 3/2/4, इत्यत्र विभक्तेन 'सुपी'तियोगेन कप्रत्यये 'आतो लोप इटि च' अष्टा. 6/4/64, इत्याकारलोपे कृदन्तप्रातिपदिकात् स्वादिकार्येषु कृतेषु 'कण्ठेस्थः'इतिरूपम् ।
6. वा. वै. सि. कौ. बहुव्रीहि प्र. पृ. 483 । जयादित्यस्तु 'सप्तम्युपानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः'–इतिवार्तिकस्वरूपमाह का. 2/2/24 ।
7. अष्टा. 6/3/12 ।

व्यर्थ एव, नह्येतद्वचनं विनाऽत्र बहुव्रीहेः संभावनाऽस्ति । इत्थमभित्तिचित्रायिते सप्तम्यन्तस्य पूर्वनिपाते व्यर्थोऽत्राऽयं शब्दोऽस्य वचनस्य ज्ञापक इति निश्चप्रचम्[1] । ज्ञापितस्याऽस्य वचनस्य फलं तु 'सच्छास्त्रजन्मा हि विवेकलाभः[2]' इत्यत्र 'सच्छास्त्रात् जन्म यस्ये'ति विग्रहे निष्पन्नस्य 'सच्छास्त्रजन्मे'तिपदस्य साधुत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि विभिन्नविभक्तिकयोरत्र बहुव्रीहेरलाभान्नास्य प्रयोगस्य साधुत्वं सिद्ध्येत् ।

## 'समर्थाना'मितिशब्दः

'समर्थानां [3]प्रथमाद्वे'तिसूत्रे 'समर्थाना'मितिशब्दः '[4]अकृतव्यूहाः पाणिनीयाः' 'कृतमपि शास्त्रं निवर्तयन्ती'तिपरिभाषाया [5]ज्ञापकः । यतोऽस्य अभावेऽत्राधिकार-

---

1. तथाहि–"यदा कण्ठे किञ्चिदस्तीति ज्ञायते, तस्य विशेषणं काल इति, तदेदं सप्तमी-ग्रहणम् । अन्यदा तु तेन विनाऽपि विशेषणत्वादेव सिद्ध"मित्याह ज्ञा. भि. त. बो. बहुव्रीहि प्र. पृ. 513 ।
2. उद्धृतवानिमं प्रयोगं वा. दी. बा. मनो. बहुव्रीह प्र. पृ. 513 ।
3. अष्टा. 4/1/82 ।
4. (क) 'अकृतव्यूहाः पाणिनीयाः'–व्याडिः प. सू. प. 65, पृ. 29 ।
   (ख) 'अकृतव्यूहाः पाणिनीयाः, प्रवर्तितमपि शास्त्रं व्यावर्तयन्ति'–पु. दे. ल. प. वृ. प. 104, पृ. 155 ।
   (ग) 'अकृतव्यूहाः पाणिनीयाः, कृतमपि शास्त्रं निवर्तयन्ति'–सी. दे. बृ. प. वृ. प. 49, पृ. 216 ।
   (घ) 'अकृतव्यूहाः पाणिनीयाः'–नी. दी. प. वृ. प. 61, पृ. 305 ।
   (ङ) 'अकृतव्यूहाः पाणिनीयाः'–ह. भा. प. भास्क. प. 51, पृ. 345 ।
   (च) 'अकृतव्यूहाः पाणिनीयाः'–भ. ना. प. शे. प. 57, पृ. 250 ।
   (छ) 'अकृतव्यूहाः पाणिनीयाः' शेषा. प. भास्क. प. 48, पृ. 425 ।
5. तथाहि–
   (क) "एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते–अस्तीयं परिभाषा-'अकृतव्यूहाःपाणिनीया' इति । तेन पपुषः तस्थुष इत्यादि सिद्धंभवति । अत्रान्तरङ्गत्वात्पूर्वं कृतोऽपीडागम एतत्परि- भाषावशान्निवर्तते । तत्र पपा वस् अस्इतिस्थिते इट् च प्राप्नोति, संप्रसारणं च । तत्र संप्रासरणं बलीयः, प्रतिपदविधित्वादिति, तत्र कृते वलादित्वाभावादिण् नास्तीति सिद्धं पपुष इती"त्याह कै. प्रदी. 4/1/3/82, पृ. 105 ।
   (ख) "समर्थानां प्रथमाद्वेत्यत्र (4/1/82) प्रथमासमर्थात् प्रत्यये लब्धे समर्थग्रहणं ज्ञापयति–'समर्थमिति कृतसर्वकार्यात्तद्धितो भवतीति । तेन सौत्थिति वैक्ष्यमाणिरित्यादौ निर्वृत्ते सवर्णदीर्घत्वे तद्धितो भवतीति भाष्यम् । अन्यथा कृतेऽपि सवर्णदीर्घत्वे अकृतव्यूहाः पाणिनीया (परिभाषा 104) इतिवचनात् प्रविभज्यान्वाख्याने सवर्णदीर्घत्वमकृत्वा वृद्धावनिष्टं रूपं स्यात् । एवं चैतस्यां परिभाषायामप्येतदेव समर्थग्रहणं लिङ्गमिती"त्याह पु. दे. ज्ञा. समु. त्रयोदशे ङ्याप्पादे पृ. 77 ।
   (ग) "इदं तर्हि प्रयोजनम्–यदर्थाभिधानसमर्थं तस्माद्यथा स्यात् । किं पुनस्तत् ? कृतवर्णानुपूर्वीकं पदम्–सौत्थितिः, वैक्षमाणिरिति, अत्र सवर्णदीर्घत्वे कृते प्रत्ययो भवति, सु + उत्थित वि+ईक्षमाण+इत्यवस्थायां न भवति । यदि स्यात् सावुत्थितिः वायीक्षमाणिरिति

सूत्रेऽस्मिन् 'समर्थाना'मितिशब्दो व्यर्थः । तथाहि—[1]सौत्थितिः [2]वैक्षमाणिरित्यादौ कृत-संधिभ्यः सूत्थित-वीक्षमाणप्रभृतिशब्देभ्यस्तद्धितोत्पत्तयेऽत्रायमुपात्तः[3] । अस्या अभावे 'समर्थाना'मितिशब्दाऽभावेऽपि' सु +उत्थित' 'वि+ईक्षमाण' इत्यस्याम-वस्थायामन्तरङ्गत्वात्[4] सवर्णदीर्घे कृते पश्चात्तद्धितोत्पत्तिः[5] सुलभेत्ययं शब्दोऽत्र व्यर्थः । ज्ञापितायां चाऽस्यां सौत्थितिरित्यादौ 'सु+उत्थित' इत्याद्यवस्थायां [6]तद्धितप्रत्यये कृते—'वार्णादाङ्गं[7]बलीयः'इतिपरिभाषाबलेनाऽऽदिवृद्धौ कृतायां

---

प्राप्नोति, 'वार्णादाङ्गं बलीय'इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद् वार्णेषु कृतेषु प्रत्ययो भविष्यति ? एवं तर्ह्येतदर्थं समर्थवचनं कुर्वन्नेतज्ज्ञापयति—अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीयाः'कृतमपिशास्त्रं निवर्तयन्ती"त्याह ह. मि. पदम. 4/1/82 ।

(घ) "ज्ञापकं चात्र 'समर्थानां प्रथमाद्वा' (4/1/82) इत्यत्र समर्थग्रहणम् । तथाहि – यद्येषा न स्यात् तदा समर्थितसर्वकार्यात्तद्धितो यथा स्यादित्येवमर्थं समर्थग्रहणमनर्थकं स्या"दित्याह सी. दे. बृ. प. वृ. प. 49, पृ. 217 ।

(ङ) "समर्थानां प्रथमात्' (4/1/82) इत्यत्र समर्थग्रहणमपि ज्ञापकमिति"त्याह नी. दी. प. वृ. प. 61, पृ. 305 ।

(च) "ज्ञापकमत्र 'समर्थानां प्रथमाद्वा' (4/1/82) इत्यत्र समर्थग्रहण"मित्याह ह. भा. प. भास्क. प. 51, पृ. 345 ।

(छ) "अत्र च ज्ञापकं 'समर्थानां प्रथमात्'इति सूत्रे समर्थानामिति । तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् । अन्यथाऽन्तरङ्गत्वाद्दीर्घे कृत एव प्राप्त्या तद्व्यर्थता स्पष्टैव । तत्र भाविन्याऽऽदिवृद्ध्या सवर्णाचूत्वविनाशः स्पष्ट एवे"त्याह भ. ना. प. शे. प. 57, पृ. 250-251 ।

(ज) "अस्याः परिभाषाया ज्ञापकम्—'समर्थानां प्रथमाद्वा' (4/1/82) इतिसूत्रे समर्थग्रहणम् । तद्धि 'सौत्थितिः'—इत्यादौ कृतसन्धेस्तद्धितोत्पत्तये । यदीयं परिभाषा न स्यात्, तदा अन्तरङ्गत्वात् सवर्णदीर्घे कृते पश्चात्तद्धितोत्पत्तिसिद्धेरनर्थकं स्या"—दित्याह शेषा. प. भास्क. प. 48, पृ. 426 ।

1. सूत्थितस्यापत्यमित्यर्थे षष्ठ्यन्तात् सूत्थितशब्दात् 'अत इञ्'—अष्टा. 4/1/95, इतीञि कृते 'तद्धितेष्वचामादेः'—अष्टा. 7/2/117, इत्याद्यचो वृद्धौ प्रातिपदिककार्येषु रूपमिदम् ।
2. वीक्षमाणस्याऽपत्यमित्यर्थे षष्ठ्यन्ताद्वीक्षमाणशब्दात् 'अत इञ्'—अष्टा. 4/1/95, इतीञि कृते 'तद्धितेष्वचामादेः'—अष्टा. 7/2/117, इत्याद्यचोवृद्धौ प्रातिपदिककार्येषु कृतेषु रूपमिदम् ।
3. तथाहि—"अथैतत् समर्थग्रहणं नैव कर्तव्यम् ? । कर्तव्यं च । किं प्रयोजनम् ? । समर्थादुत्पत्ति- र्यथा स्यादसमर्थान्माभूदिति । किं पुनः समर्थम् ? । अर्थाभिधाने यत् समर्थम् । किं पुनस्तत् ? । कृतवर्णानुपूर्वीकं पदं, सौत्थितिः, वैक्षमाणि"रित्युक्तं भगवता व्याः म. भा. 4/1/3/82 ।
4. 'असिद्धं बहिरङ्गमन्तरङ्गे'—इतिपरिभाषया ।
5. 'अत इञ्'—अष्टा. 4/1/95 ।
6. 'अत इञ्'—अष्टा. 4/1/95, इति इञि कृते इत्यर्थः ।
7. (क) व्याडिः प. पा. 39, पृ. 40 ।
   (ख) पु. दे. ल. प. वृ. प. 74, पृ. 144 ।
   (ग) सी. दे. बृ. प. वृ. प. 66, पृ. 231 ।
   (घ) नी. दी. प. वृ. प. 60, पृ. 305 ।
   (ङ) ह. भा. न. भास्क. प. 68, पृ. 351 ।
   (च) भ. ना. प. शे. प. 56, पृ. 238 ।
   (छ) शेषा. प. भास्क. प. 47, पृ. 425 ।

सवर्णदीर्घस्य[1] निमित्तं सवर्णाच्त्वं विनङ्क्ष्यतीति सवर्णदीर्घोऽनया न प्राप्नोतीति कृतसवर्णदीर्घेभ्यः सूत्थितादिशब्देभ्यस्तद्धितोत्पत्तये समर्थग्रहणमिह स्वांऽशे चरितार्थं भवति । अर्थाभिधानसमर्थं यत् तदेव हि समर्थम् । तच्च सूत्थितादि, न तु 'सु + उत्थित' इत्यादि । अकृतसन्धेः प्रत्ययोत्पत्तौ तु सावुत्थितिः वायीक्षमाणिरित्याद्य-निष्टमापद्येत । न चाऽत्र 'सु+उत्थित' 'वि+ईक्षमाणे'त्याद्यवस्थायां सवर्णदीर्घै-काऽऽदेशप्रवृत्तिसमये वृद्धेर[2]- प्राप्त्या, कृते च सवर्णदीर्घैकादेशे वृद्धेः प्राप्तावपि सवर्ण-दीर्घैकाऽऽदेशनिमित्तविनाशाऽभावः शङ्क्यः । यतोऽत्रैकाऽऽदेशेऽपि सतः सवर्णाच्त्वरूपनिमित्तस्य धर्मिनाशादेव नाशोऽकृतव्यूहपरिभाषाप्रवृत्तिप्रयोजकः । ज्ञापिताया अस्याः फलं तु '[3]सेदुषः' इत्यादौ 'भाषायां सदवसश्रुवः[4]' इति लिटः क्वसौ 'लिटि धातोरनभ्यासस्ये[5]'तिद्वित्वे '[6]अत एकहल्मध्येनादेशादेर्लिटी'ति एत्वाभ्यासलोपयोः कृतयोः'सेद्वस्'–इत्यतः शसि 'वसोः [7]सम्प्रसारण'मिति संप्रसार-णेन विनङ्क्ष्यतो वकारस्य निमित्तत्वेनाऽनाश्रयणाद्वलादिलक्षणेटोऽभावः[8] । अस्या अभावे हि सम्प्रसारणेन विनङ्क्ष्यन्तमपि वकारं निमित्तत्वेनाऽऽश्रित्य वलादिलक्षणे-डिह दुर्वारःस्यात् ।

न च 'सौत्थिति'रित्यादौ [9]वृद्धेर्बहिरङ्गतयाऽन्तरङ्गपरिभाषया[10] तस्या असिद्ध-त्वान्न तन्निमित्तस्य विनाश इतिशङ्क्यम् । यतोऽकृतव्यूहपरिभाषारूपेऽन्तरङ्गे कर्तव्येऽ-न्तरङ्गपरिभाषा न प्रवर्तते'इतिवचनमप्ययं 'समर्थाना'मितिशब्दो ज्ञापयति ।

अत्र 'समर्थाना'मितिशब्दः 'अन्तरङ्गपरिभाषाऽनित्ये'तिवचनस्यैव ज्ञापक इति वक्तुं न शक्यते । यतोऽन्तरङ्गपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातस्य बहिरङ्गस्य चान्तरङ्गे कर्तव्येऽसिद्धत्वं प्रातिपाद्यते, न तु जातेऽन्तरङ्गे बहिरङ्गस्याऽसिद्धत्वम् । नहि जातेऽन्तरङ्गे बहिरङ्गस्याऽसिद्धत्वे किमपि मानं फलं च समुपलभ्यते । नापि च ज्ञापितेऽप्येतस्मिन् वचनेऽत्र समर्थशब्दः स्वांऽशे चरिताऽर्थः यतः 'सु+उत्थित'–इतिस्थिते वृद्धेरप्राप्त्या दीर्घस्य प्रवृत्त्या कृतसन्धिकार्यादेव प्रत्ययोत्पत्तिः समर्थग्रहणं विनापि सुलभा । नहि परिभाषाऽधीना दीर्घप्रवृत्तिर्येन अन्तरङ्गपरिभाषाया अनित्यत्वात्तदप्राप्तावप्राप्तसवर्णदीर्घप्रवृत्त्यर्थं चरिताऽर्थोऽयं शब्दोऽत्र भवेत् ।

---

1. 'अकः सवर्णे दीर्घः'–अष्टा. 6/1/101 ।
2. 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117 ।
3. 'षद्लृ विशरणगत्यवसादनेषु' धा. पा. भ्वा. 854, इति सद्धातोर्लिटि लिटः क्वसुरादेशे द्वितीयाबहुवचने रूपमिदम् । अत्राऽऽपिपदेन'पपुषः' 'तस्थुष'इत्यादि प्रयोगा ग्राह्याः ।
4. अष्टा. 3/2/108 ।
5. अष्टा. 6/1/8 ।
6. अष्टा. 6/4/129 ।
7. अष्टा. 6/4/131 ।
8. 'आर्धधातुकस्येड्वलादेः'–अष्टा. ।
9. 'तद्धितेष्वचामादेः'–अष्टा. 7/2/117 ।
10. 'असिद्धं बहिरङ्गमन्तरङ्गे'–इत्यनयेत्यर्थः ।

'अकृतव्यूहपरिभाषाया व्याख्यानावसरे भट्टनागेशेन "निमित्तनाशो नैमित्तिकस्यापि नाशो भवतीति [1]वकारस्य संप्रसारणेन नाशे इटोपि नाश इत्यर्थः। लोकसिद्धश्चायं न्यायः—नैयायिकमते अपेक्षाबुद्धिनाशस्य द्वित्वनाशकत्वं दृष्टं, वेदान्तिनये प्रारब्धनाशस्य विक्षेपशक्तिनाशकत्वं दृष्टमितीहापि 'निमित्तनाशात्कार्यनाशो भवती'ति ज्ञापनमेव युक्तम्। न तु भाविनि निमित्तनाशे पूर्वमनुत्पत्तौ कश्चिन्न्यायः, नापि संप्रतिपन्नो दृष्टान्तः "इतियदुक्तं[2] तन्न युक्तम्। यतो लोके नङ्क्ष्यन्तं प्रभुमुपेक्ष्य भाविनं प्रभुमाश्रयति। तथा च माघः—

"छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्।
'सर्वोऽपि नोपगतमप्यपचीयमानं वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥[3] इति

यद्यपि निमित्तकारणनाशस्य क्वचित् कार्यनाशहेतुत्वं तान्त्रिकं सम्प्रतिपन्नं, तथा न लोकसंप्रतिपन्नम्। लौकिकन्याय एवाऽस्मिन् शास्त्रे उपजीव्यते, नतु तान्त्रिकन्यायः। तदुपवजीवनसंभवेऽपि कार्यस्य भाविनं निमित्तविनाशं पर्यालोच्य तदप्रवृत्तिज्ञापनमेव लघु। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमितिन्यायात्[4]।

वस्तुतस्तु 'अन्तरङ्गपरिभाषाया अनित्यत्वेन[5] सौत्थितिरित्यादौ सु + उत्थित'—इत्याद्यवस्थायां सवर्णदीर्घैकाऽऽदेशे कर्तव्येऽन्तरङ्गपरिभाषाया अप्रवृत्त्या कृतसवर्णदीर्घादेव तद्धितोत्पत्तेः सुलभतयाऽन्तरङ्गपरिभाषाऽनित्यत्वलभ्यार्थानुवादके 'समर्थानां प्रथमाद्वे'तिसूत्रे 'समर्थाना'मिति शब्दो, न तु अकृतव्यूहपरिभाषाया ज्ञापकः। अकृतव्यूहपरिभाषाऽप्यन्तरङ्गपरिभाषाऽनित्यत्वस्य प्रपञ्च एवं।

भट्टनागेशोऽपि[6] 'यदि तु 'सेदुष' इत्यादौ पदावधिकेऽन्वाख्याने 'सेद्वस् अस्'—इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं

---

1. 'सेदुषः'—इत्यादावित्यर्थः।
2. प. शे. प. 57, पृ. 253-256।
3. शिशु. 5/14
4. तथाहि—
   (क) "यद्यपि 'कृतमपि कार्यं निवर्तयन्ति' इति परिभाषान्तरं पठ्यते, फलं च तुल्यम्, तथापि 'अकृत'—इत्येव लघु। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'इति न्याया"दित्याह भ. दी. प्रौ. मनो. परिभाषा पृ. 64।
   (ख) "यद्यप्येतत्फलकमेव 'कृतमपि वा निवर्तयन्ति'इतिपरिभाषान्तरं पठ्यते, तथापि तद्गुरु।'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इतिन्याया"दित्याह ह. भा. प. भा. प. 51, पृ. 345।
5. 'असिद्धं बहिरङ्गमन्तरङ्गे'इत्यस्याः परिभाषाया अनित्यत्वे ज्ञापकम् 'अल्लोपोऽनः'—अष्टा. 6/4/134, इत्यत्र तपरकरणमित्यत्रैव प्रबन्धे'ज्ञापकानि तपरकरणानि' इतिप्रघट्टके निरूपितम्।
6. अष्टा. 4/1/82।

संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुसाराच्च पदावधिकमेवाख्यानमितितत्सिद्धेः 'अकृतव्यूहा'इतिपरिभाषा निष्फला भाष्येऽव्यवहृता चेत्याह[1] ।

## 'समास'इतिशब्दः

'[2]समासेऽनञ्पूर्वे क्त्वो ल्य'बित्यत्र ल्यब्निमित्तवाचकः 'समास'इतिशब्दः समासश्च द्विपदाश्रयत्वाद् बहिरङ्गोऽपि ल्यपं [3]बाधते'इतिपरिभाषाया ज्ञापकः[4] । यतोऽस्याअभावेऽत्राऽयंशब्दो व्यर्थः । तथाहि–'कृत्वा'[5] '[6]हृत्वे'त्यादौ ल्यपोऽभावायाऽत्राऽयं शब्द उपात्तः, अस्या असत्त्वे ह्यन्तरङ्गत्वाल् ल्यपः द्विपदाश्रयबहिरङ्गसमासापेक्षया प्राक्प्रवृत्तेरनिवार्यतया ल्यब्निमित्तवाचकोऽयं शब्दोऽत्र व्यर्थः । ज्ञापितायां चाऽस्यां ल्यपः प्राक् सर्वत्र संमासप्रवृत्तिर्भवतीत्यसमासे ल्यपोऽभावाय शब्दोऽयं स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु '[7]प्रकृत्ये'त्यादौ ल्यपः प्राक्समासे ततोऽनञ्पूर्वत्वाल्ल्यपः[8] सिद्धिः । अस्या असत्त्वे हि ल्यपः प्राक्समासो न स्यादितीह ल्यप् न सिद्ध्येत् ।

## 'सम्बुद्धी'तिशब्दः

'[9]न ङिसम्बुद्ध्यो'रित्यत्र 'सम्बुद्धी'तिशब्दः '[10]संयोगान्तलोपे नलोपः[11] सिद्धः' इति वचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–

---

1. 'परेतु ... दिक्' इतिग्रन्थेन, प. शे. प. 57, पृ. 256-260 ।
2. अष्टा. 7/1/37 ।
3. ह. भा. प. भास्क. प. 35, पृ. 339 ।
4. तथाहि–"अयं चार्थः 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (7/1/37) इत्यत्र समासस्य ल्यब्निमित्तत्वाभिधानादवसीयते–इत्याह ह. भा. प. भास्क. प. 35, पृ. 339 ।
5. 'डुकृञ् करणे' धा. पा. तना. 1473, इति कृधातोः 'समानकर्तकयोः पूर्वकालेः'–अष्टा. 3/4/21, इति क्त्वाप्रत्यये रूपमिदम् ।
6. 'हृञ् हरणे' धा. पा. 899 इति हृधातोः 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21, इतिक्त्वाप्रत्यये रूपमिदम् ।
7. प्रपूर्वकात् 'डुकृञ् करणे' धा. पा. तना. 1473, इतिकृधातोः 'समानकर्तृकयोः पूर्वकाले'–अष्टा. 3/4/21, इति क्त्वाप्रत्यये 'कुगतिप्रादयः'–अष्टा. 2/2/18, इति समासे 'ह्रस्वस्य पिति कृति तुक्'–अष्टा. 6/4/34, इतितुगागमे 'समासेऽनञ्पूर्वे क्त्वो क्यप्' अष्टा. 7/1/37 इति क्त्वो ल्यपि रूपमिदम् ।
8. 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'–अष्टा. 7/1/37 ।
9. अष्टा 8/2/8 ।
10. 'संयोगान्तस्य लोपः'–अष्टा. 8/2/23 ।
11. 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7 ।
12. तथाहि–
   (क) "आचार्य प्रवृत्तिर्ज्ञापयति–'सिद्धः संयोगान्तलोपे नलोप' इति यदयं 'न ङिसम्बुद्ध्यो'रिति- संबुद्धौ प्रतिषेधं शास्ती"त्याह पत. व्या. म. भा. 6/1/? 68 ।

'आर्द्रे[1]- चर्म'न्नित्यादौ–'[2]हेराज'न्नित्यादौ च नलोप-[3] प्रतिषेधार्थमारब्धे 'ङौ परतः सम्बुद्धौ च नकारलोपो न भवती'त्यर्थकेऽस्मिन् सूत्रे 'हे राज'न्नित्यादौ नलोपप्रतिषेधाऽर्थमत्र शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे राजञ्शब्दात्सम्बुद्धेः[4] संयोगान्तलोपस्य[5] नलोपे[6]कर्तव्येऽसिद्धत्वं[7] दुर्वारमिति नकारस्य [8]पदत्वाऽभावादेव लोपा[9]ऽऽप्राप्त्या [10]तन्निषेधार्थमत्राऽयं शब्दो हि व्यर्थः । न च 'हेब्रह्मन्'[11]–इत्यत्र नपुंसके [12]लोपाऽभावार्थमत्राऽस्य शब्दस्याऽऽवश्कतया नैतद्वचनज्ञापकत्वंयुक्तमितिशङ्क्यम् । यतो लुका[13]लुप्ते [14]प्रत्ययलक्षणा-[15]ऽभावेन[16] 'संबुद्धौ वा [17]नपुंसकानाम्'–इत्यस्याऽऽवश्यकतयाऽत्राऽस्य शब्दस्य नपुंसके चारिताऽर्थ्यं वक्तुमशक्यम् ।

---

(ख) "संयोगान्तलोपे नासिद्धः । 'न ङिसम्बुद्ध्योः'इति सूत्रे सम्बुद्धिग्रहणाज् ज्ञापकात् । नचैवं गोमानित्यादावपि नलोपापत्तिः । ज्ञापकस्य विशेषविषयत्वात् । यत्र हि नकारविभक्त्योरानन्तर्यन्तत्रैव सिद्धत्वं व्याख्याना"दित्याह भ. दी. प्रौ. मनो. अजन्त पुं. लिङ्ग प्र. पृ. 302 ।

(ग) "हल्ङ्याब्भ्यो (सू. 6/1/68) । 'न ङिसंबुद्ध्योः' (सू. 8/2/8) इति सम्बुद्धौ प्रतिषेधो ज्ञापयति सिद्धः संयोगान्तलोपे नलोप इती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 6, पृ. 175 ।

1. 'चर्मञ्शब्दान्ङौ 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः'–अष्टा. 7/1/39, इति ङेर्लुकि 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7, इति प्राप्तस्य नलोपस्य 'न ङिसम्बुद्ध्योः' अष्टा. 8/2/8 इतिनिषेधे रूपमिदम् ।
2. राजञ्शब्दात्सम्बुद्धौ सकारस्य हल्ङ्यादिलोपे संयोगान्तलोपे वा कृते 'नलोपः प्रातिपदिकान्तस्य'–अष्टा. 8/2/7, इति प्राप्तस्य नलोपस्य 'न ङिसम्बुद्ध्योः'–अष्टा. 8/2/8, इति प्रतिषेधे रूपमिदम् ।
3. 'नलोपः प्रापिदिकान्तस्य'–अष्टा. 8/2/7, इत्यनेन प्राप्तशेषः इति ।
4. 'एकवचनं सम्बुद्धिः'–अष्टा. 2/3/49 ।
5. 'संयोगान्तस्य लोपः'–अष्टा. 8/2/23, इत्यनेनेतिशेषः ।
6. 'नलोपः प्राति.'–अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
7. 'पूर्वत्रासिद्धम्'–अष्टा. 8/2/2, इत्यनेनेतिशेषः ।
8. 'सुप्तिङन्तं पदम्'–अष्टा. 1/1/14, इत्यनेनेतिशेषः ।
9. 'नलोपः प्राति.'–अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
10. 'नलोपनिषेधाऽर्थ'मित्यर्थः ।
11. ब्रह्मञ्शब्दान्नपुंसके सम्बुद्धौ, 'स्वमोर्नुपुंसकात्'–अष्टा. 7/1/23, इति सोर्लुकि 'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः 'इति (वा. वै. सि. कौ. हलन्तनपुंसक प्र. पृ. 234 नलोपाऽभावपक्षे रूपमिदम् ।
12. 'नलोपः प्रापिदकिान्तस्य'–अष्टा. 8/2/7, इतिप्राप्तेतिशेषः ।
13. 'प्रत्ययस्य लुक्–श्लु–लुपः 'अष्टा. 1/1/61, इतिलुक्शब्देनेत्यर्थः ।
14. 'स्वमोर्नपुंसकात्' अष्टा. 7/1/23, इत्यनेनेतिशेषः ।
15. 'प्रत्ययलोपे प्रत्ययलक्षणम्'–अष्टा. 1/1/62, इत्यनेनेतिशेषः ।
16. 'नलुमताऽङ्गस्य'–अष्टा. 1/1/63, इतिनिषेधादितिशेषः ।
17. 'वा नपुंसकानाम्' वा. व्या. म. भा. 8/2/1/8, 'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः' वा. वै. सि. कौ. हलन्त पुंलिङ्ग प्र. पृ. 234 ।

ज्ञापिते चाऽस्मिन् वचनेऽनेन [1]संयोगान्तलोपो नासिद्ध इति'हे राजन्' इत्यादौ नलोपः[2] प्राप्नोतीति तत्प्रतिषेधाऽऽर्थमत्राऽयं शब्दः स्वांऽशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [3]'सखे'त्यादौ[4] नकारस्य [5]लोपसिद्धिः । अस्य वचनस्याऽसत्त्वे हि [6]संयोगान्तलोपस्याऽसिद्ध-[7] त्वान्नलोपो[8]नाऽत्र सिद्ध्येत् । न च 'सखे'त्यादौ सकारस्य 'हल्ङ्याब्भ्यो दीर्घात् [9]सु-ति-स्यपृक्तं ह'लित्यनेनैव लोपो भवति, न तु [10]'संयोगान्तस्य लोप'इत्यनेनेति शङ्क्यम् । यतो हलन्तात्परेषां-संयोगान्तलोपसंभवात् [11]'हल्ङ्या'बिति सूत्रे 'सखे'त्यादौ नलोपाऽर्थं[12] प्रथमहल्-ग्रहणं न कर्तव्यम् [13]'अभिनोऽत्रे'त्यत्र रोरुत्वसिद्ध्यर्थम्,[14] [15]'अबिभर्भवा'-

---

1. 'संयोगान्तस्य लोपः'—अष्टा. 8/2/23, इतीति शेषः ।
2. 'नोलपः प्राति.'—अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
3. सखिशब्दात् प्रथमैकवचने सुविभक्तौ अङ्गसंज्ञायाम् 'अनङ्सौ'—अष्टा. 7/1/93, इति अनङि अनुबन्धलोपे 'सखन् स्'—इतिस्थितौ 'सर्वनामस्थाने चाऽसंबुद्धौ'—अष्टा. 6/4/8, इत्युपधादीर्घे 'हल्ङ्याब्भ्यो.'—अष्टा. 6/1/68, इति सकारलोपे 'नलोपः प्रातिपदिकान्तस्य' अष्टा. 8/2/7, इतिनकारलोपे च कृते रूपमिदम् ।
4. 'अत्राऽऽदिपदेन 'राजा' इत्यादयो ग्राह्याः ।
5. 'नलोपः प्राति.'—अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
6. 'संयोगान्तस्य लोपः'—अष्टा. 8/2/23, इतीतिशेषः ।
   'संयोगान्तस्य लोपः'—अष्टा. 8/2/23, इतीतिशेषः ।
8. 'नलोपः प्राति.'—अष्टा. 8/2/7, इत्यनेनेतिशेषः ।
9. अष्टा. 6/1/68 ।
10. अष्टा. 8/2/23 ।
11. 'हल्ङ्यांभ्यो दीर्घात् सु-ति-स्यपृक्तं हल्'—अष्टा. 6/1/68 ।
12. 'नलोपः प्रातिपदिकान्तस्य'—अष्टा. 8/2/7, इलेनेतिशेषः ।
13. 'अभिनः+अत्र'—इत्यवस्थायामितिशेषः ।
14. 'अतोरोरप्लुतादप्लुते'—अष्टा. 6/1/113, इत्यनेनेतिशेषः । 'हल्ङ्याब्.'—अष्टा. 6/1/68, इत्यत्र प्रथमहल्ग्रहणाऽभावे हि सिपि 'दश्च'—अष्टा. 8/2/75, इति भिद्धातोर्दकारस्य रुत्वे विभक्तिसकारस्य 'संयोगान्तस्य लोपः'—अष्टा. 8/2/23, इतिसंयोगान्तलोपे तस्याऽसिद्ध-त्वादितिभावः ।
15. 'डु भृञ्धारणपोषणयोः'—धा. पा. जुहो. 1087, इति भृधातोर्लङि तिपि अडागमे शपि शपः 'जुहोत्यादिभ्यः श्लुः'—अष्टा. 2/4/75, इति श्लौ 'श्लौ'—अष्टा. 6/1/10, इति धातोर्द्वित्वेऽभ्यासत्वे भृञामित्'—अष्टा. 7/4/76, इति प्रथमस्य ऋकारस्य इत्वे परत्वे हलादिशेषे भकारस्य जश्त्वेन बकारे 'इतश्च'अष्टा. 3/4/100, इति तिप इकारलोपे 'अबिभृत्'—इति स्थिते सार्वधातुकलक्षणे ऋकारस्य गुणे परत्वे तकारस्य हल्ङ्यादिलोपे रेफस्य रुत्वे विसर्गे च कृते रूपमिदम् ।

नित्यादौ[1]– '[2]रात्सस्ये'ति नियमात्तकारस्य [3]संयोगान्तलोपाप्राप्त्या तकारलोपार्थं हलङ्यादि सूत्रे[4] प्रथमहल्ग्रहणं कर्तव्यमेवेति ज्ञापकवादिनामभिप्रायः[5] ।

## 'सवर्ण' इतिशब्दः

'झरो झरि[6] सवर्णे'–इत्यत्र 'सवर्ण'इतिशब्दः 'इह प्रकरणे यथासंख्यं[7] नाऽस्ती'तिवचनस्य ज्ञापकः[8] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः ।

---

1. अत्राऽदिपदेन 'अजागर्भवान्'–इति ग्राह्यम् ।
2. अष्टा. 8/2/24, इत्यनेन रातस्यैव संयोगान्तलोप इति नियमादित्यर्थः ।
3. 'संयोगान्तस्य लोपः'–अष्टा. 7/2/23 इत्यनेनेतिशेषः ।
4. 'हल्ङ्याब्भ्योदीर्घात् सु-ति-स्यपृक्तं हल्'–अष्टा. 6/1/68, इतिसूत्र इत्यर्थः ।
5. तथाहि–"अत्राहुः 'संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति । रात्तु तेनैव लोपः स्याद्धलस्त- स्माद्विधीयते ।"–इत्याह भ. दी. प्रौ. मनो. अजन्तपुंल्लिङ्ग प्र. पृ. 302 ।
6. अष्टा. 8/4/65
7. 'यथासंख्यमनुदेशः समानाम्'–अष्टा. 1/3/10, इतीत्यर्थः ।
8. तथाहि–
   (क) "सवर्णग्रहणं किमर्थम् । 'झरोझरि सवर्णग्रहणं समसंख्यप्रतिषेधार्थम्' । झरोझरि सवर्णग्रहणं क्रियते । (किं प्रयोजनम् ?) । 'समसङ्ख्यप्रतिषेधार्थम् । सङ्ख्यातानुदेशो माभूदिति । किं च स्यात् ? इह न स्यात्–शिण्ढि पिण्डी"त्याह पत. व्या. म. भा. 8/4/1/65 ।
   (ख) 'सवर्णग्रहणात्तु–यथासङ्ख्याऽभावः । नहि यथासङ्ख्ये सत्यप्यसवर्णो झरस्ति यद्व्या-वृत्त्यर्थं सवर्णग्रहणं स्या"दित्याह कै. प्रदी. 8/4/1/65 ।
   (ग) "सवर्णग्रहणसामर्थ्यादिह सङ्ख्यातानुदेशो न भवति, सवर्णमात्रे लोपो विज्ञायते । तेन शिण्ढि, पिण्ढि इति ढकारे डकारस्य लोपो भवती"त्याह वाम. का. 8/4/65 ।
   (घ) "यद्यत्र यथासंख्यं स्यात्, ततो झकारस्य झकार एव लोपः प्रसज्येत, यावता झकारस्य झकार एव सवर्णः, एवञ्च सति सवर्णग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात् । नहि झकारस्यासवर्णो झकारः सम्भवति । तस्मादत्र सवर्णग्रहणसामर्थ्यान्न संख्यातानुदेशो भवति । तेन शिण्ढि, पिण्ढीत्यत्र सवर्णमात्रे ढकारे डकारलोपो भवतीती"त्याह जि. बु. न्या. 8/4/65 ।
   (ङ) "झरो झरिसवर्णे इति (8/4/65) सवर्णग्रहणम्'इह प्रकरणे यथासंख्यं नास्ती'ति ज्ञापयति । तत अभ्र वभ्रेति गत्यर्थधातुभ्यां यकि हलो यमां यमिलोप इति (8/4/65) यमि यकारे रेफस्य यमो लोपे अभ्यते बभ्यते इति यङि वावभ्यते इति भवतीति पारायणिकाः' इत्याह पु. दे. ज्ञा. समु. द्वात्रिंशे रेफपादे पृ. 100 ।
   (च) "ननु च निमित्तानां कार्यिणां च संख्यासामान्यादिह संख्यातानुदेशे सति नैव तर्प्तेत्यत्र-लोपः प्राप्नोति, तत्किमेतन्निवृत्त्यर्थेन सवर्णग्रहणेन ? अत आह–'सवर्णग्रहणसामर्थ्या'-दिति । नहि यथासंख्ये सवर्णे झरस्ति, यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्या"दित्याह ह. मि. पदम. 8/4/65 ।
   (छ) "सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यमत्र न भवति । तेन 'शिण्ढी'त्यत्र डस्य विकल्पेन लोपः सिद्ध्यती"त्याह ज्ञा. भि. त. बो. अच्संधि प्र. पृ. 43 ।

तथाहि–[1]'प्रत्तम्' '[2]अवत्त'मित्यादौ[3] मध्यमस्य[4]तकारस्य मध्यमयोस्तकारयो[5]-र्मध्यमानां[6] वा तकाराणां लोपार्थमारब्धे 'हल उत्तरस्य झरोझरिसवर्णे परतो लोपो भवत्यन्यतरस्या'–मित्यर्थकेऽस्मिन्सूत्रे '[7]तर्प्ता' '[8]तर्प्तु'मित्यादौ[9] पकारस्य लोपाऽभावाऽर्थं शब्दोऽयमुपात्तः। स चाऽस्य वचनस्याऽभावे व्यर्थः। यतोऽस्य वचनस्याऽभावेऽत्र निमित्तानां कार्यिणां च साम्यात् [10]संख्याऽनुदेशेन भाव्यमिति 'सर्वर्ण'इतिशब्दाऽभावेऽपि'तर्प्ते'त्यादौ तकारे परे पकारस्य लोपो नैव प्राप्नोतीति 'शब्दोऽयमनावश्यकः। नहि तकारस्याऽसवर्णस्तकारः संभवति, अतो नास्त्यस्य व्यच्छेद्यम्। ज्ञापिते चाऽस्मिन् वचने झरः पकारस्य तकारेऽपि झरि 'तर्प्ते'त्यादौ लोपः प्राप्नोति, स मा भवत्वित्येतदर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति। ज्ञापितस्याऽस्य वचनस्य फलं तु [11]'शिण्ढी'त्यादौ[12]-ढकारे परे डकारस्य लोपसिद्धिः[13]। अस्य वचनस्यासत्त्वे हि संख्या[14]-

---

1. प्रपूर्वकात् 'डुदाञ् दाने' धा. पा. जुहो 1091, इति दाधातोः क्तप्रत्यये धातोराकारस्य 'अच उपसर्गात्तः'–अष्टा. 7/4/47, इतितादेशे 'दोदद्घोः'–अष्टा. 7/4/46, इति दधादेशाऽपवादे कृते दकारस्य 'खरि च'–अष्टा. 8/4/55, इतिचर्त्त्वेन तकारे कृदन्तप्रातिपदिकाद् विभक्तिकार्येषु कृतेषु रूपमिदम्।
2. अवपूर्वकात् 'डुदाञ्दाने' धा. पा. जुहो. 1097, इतिदाधातोः क्तप्रत्यये धातोराकारस्य 'अच उपसर्गात्तः'–अष्टा. 7/4/47, इतितादेशे 'दोदद्घोः'–अष्टा. 7/4/46, इति दधादेशाऽपवादे कृते दकारस्य 'खरि च'–अष्टा. 8/4/55, इतिचर्त्त्वेन तकारे कृदन्तप्रातिपदिकाद्-विभक्तिकार्येषु कृतेषु रूपमिदम्।
3. अत्राऽऽदिपदेन 'मरुत्त'मितिग्राह्यम्।
4. अत्र त्रयस्तकाराः, द्वावादेशौ, एकः प्रत्ययाऽवयवश्चेति।
5. 'झयो होऽन्यत रस्याम्'–अष्टा. 8/4/62, इत्यतः 'झरो झरि सवर्णे'–अष्टा. 8/4/65. इत्यत्र 'अन्यस्या'मित्यनुवृत्तेरितिशेषः।
6. 'झयो होऽन्यतरस्याम्'–अष्टा. 8/4/62, इत्यतः 'झरोझरि सवर्णे'–अष्टा. 8/4/65, इत्यत्र 'अन्यतरस्या'मित्यनुवृत्तेः 'अनचि च'अष्टा. 8/4/47, इतियो निर्वृत्तः, स हि क्रमश्चतुर्थः, इति- शेषः।
7. तृप प्रीणने' धा. पा. दिवा. 1195, इति तृप्धातोर्लुटि तिबादेशे तासिप्रत्यये ते डाऽऽदेशे 'अनुदात्तस्य चर्दुपधस्यान्तरस्याम्'–अष्टा. 6/1/59, इत्यमागमाऽभावपक्षे धातोः ऋकारस्य गुणे रपरत्वे च कृते रूपमिदम्।
8. 'तृप प्रीणने' धा. पा. दिवा. 1195, इतितृप्धातोः 'तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्'–अष्टा. 3/4/10, इतितुमुन्प्रत्यये धातोः ऋकारस्य गुणे रपरत्वे कृदन्तप्रातिपदिकादुत्पन्नाया विभक्ते र्मान्तस्याऽव्ययत्वाल्लुकि रूपमिदम्।
9. अत्राऽऽदिपदेन 'तर्प्तव्य'मिति ग्राह्यम्।
10. 'यथासंख्यमनुदेशः समानाम्'–अष्टा. 1/3/10।
11. शिष्लृ विशेषणे' धा. पा. रुधा. 1452. इतिशिष्धातोर्लोटि सिपि 'सेर्ह्यपिच्च'–अष्टा.3/4/87. इतिसेर्ह्यादेशे 'रुधादिभ्यः श्नम्'–अष्टा. 3/1/78, इतिशपोपवादे श्नमि 'श्नसोरल्लोपः'–अष्टा. 6/4/111 इति श्नसोऽकारस्य लोपे 'हुझल्भ्योर्हेर्धिः'–अष्टा. 6/4/101, इतिहेर्धिभावे 'झलाञ्जशझशि'–अष्टा. 8/4/53, इति जश्त्वेन षकारस्य डकारे'नश्चापदान्तस्य झलि'–अष्टा. 8/4/24, इतिनकारस्याऽनुस्वारे 'ष्टुना ष्टुः'अष्टा. 8/4/41, इतिष्टुत्वेन धकारस्य ढकारे, 'अनुस्वारस्य ययि परसवर्णः' अष्टा. 8/4/58, इति अनुस्वारस्य पर-

तानुशेदेशेनात्र डकारस्य[1]लोपो ढकारे परे न सिद्ध्येत् । तथा '[2]बभ्यते' '[3]बाबभ्यते' इत्यादीनां प्रयोगाणां साधुत्वसिद्धिरस्य वचनस्य फलम् । अस्य वचनस्यासत्त्वे हि यमि यकारे रेफस्य यमः–'हलोयमांयमिलोपः[4]' इतिलोपस्याप्राप्त्या नैतेषां साधुत्वं सिद्ध्येत् । वस्तुतस्तु 'झरोझरीत्यत्र[5] यथासंख्यं नास्ती'त्याकारकमेवाऽत्र ज्ञाप्यवचनं सूत्रेऽस्मिन् 'असवर्ण' इति शब्देन ज्ञाप्यते । अतोऽत्र पुरुषोत्तमदेवेनाऽनूदितः[6] पारायणिकसिद्धान्तो न युक्त इति मन्ये । अन्यथा '[7]माहात्म्य'मित्यत्रापि पारयणिक-सिद्धान्तेन यकारे परे मकारस्य लोपाऽऽपत्तिः[8] स्यात् । तथ्यमिदं भट्टोजिदीक्षितेन सूचितम्[9] । पारायणिकोक्तस्य पुरुषोत्तमदेवेनाऽनूदितस्य 'बभ्र'धातोश्च धातुपाठे पाठो नास्ति[10] ।

## 'संवत्सरे'तिशब्दः

[11]'संख्यायाः संवत्सरसंख्यस्य चे'त्यत्र 'संवत्सरे'तिशब्दः [12]'परिमाणग्रहणेन कालग्रहणं न भवती'तिवचनस्य [13]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो

---

सवर्णे णकारे डकारस्य ढकारे परे'झरोझरिसवर्णे'–अष्टा. 8/4/65, इतिलोपे च कृते रूपमिदम् ।

12. अत्राऽऽदिपदेन 'पिण्ढी'तिग्राह्यम् ।
13. 'झरोझरिसवर्णे'–अष्टा. 8/4/65, इत्यनेनेतिशेषः ।
14. 'यथासंख्यमनुदेशः समानम्'–अष्टा. 1/3/10, इत्यनेनेतिशेषः ।
1. 'झरोझरिसवर्णे'–अष्टा. 8/4/65, इत्यनेनेतिशेषः ।
2. पारायणिकोक्त'बभ्रधातोः कर्मणि ते यकि 'हलोयमां यमि लोपः'–अष्टा. 8/4/64, इति यमि दकारे परे रेफस्य यमो लोपे टितष्टेरेत्वे रूपमिदम् ।
3. पारायणिकोक्तगत्यर्थक-बभ्रधातोर्यङि 'हलोयमांयमिलोपः–अष्टा. 8/4/64, इतिरेफस्य यकारेपरे लोपेद्वित्वादिषुकृतेषुयङन्तालटि ते टितष्टेरेत्वे रूपमिदम् ।
4. अष्टा. 8/4/64 ।
5. अष्टा. 8/4/65 ।
6. ज्ञा. समु. द्वात्रिंशे रेफपादे पृ. 100 ।
7. महात्मनोभाव इत्यर्थे षर्ष्ठ्यन्त्रान् महात्मन्शब्दात् 'गुणवचनब्राह्मणादिभ्य कर्मणिच'–अष्टा. 5/1/124, इत्यनेन ब्राह्मणादित्वात् ष्यञ्प्रत्यये टिलोपे आदिवृद्धौ तद्धितान्तप्रातिपदिकावयवस्य सुपोलुकि विभक्तिकार्येषुकृतेषु रूपमिदम् ।
8. 'हलोयमां यमिलोपः'-अष्टा. 8/4/54, इत्यनेतिशेषः ।
9. तथाहि–"'यमां यमीति यथासंख्यविज्ञानान्नेह माहात्म्यम्"–इत्याह भ. दी. वै. सि. कौ. अच्सन्धि प्र. पृ. 39 ।
10. धातुपाठे हि 556, अभ्र' 556, 'वभ्र' 557, 558 'मभ्र' 559, चरगत्यर्था 'इत्येवं पाठो दरीदृश्यते, नतु बभ्रेति ।
11. अष्टा. 7/3/15 ।
12. 'परिमाणान्तस्यासंज्ञाशाणयोः'–अष्टा. 7/3/17, इत्यादावितिशेषः ।
13. तथाहि–
(क) "एवं तर्हि ज्ञापयत्याचार्यः 'कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? । 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि'–

व्यर्थः । तथाहि–'[1]द्विसांवत्सरिकः' '[2]द्विषाष्टिकः' इत्यादौ आदेरचोवृद्ध्यर्थमारब्धे'संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः' इत्यर्थकेऽस्मिन्सूत्रे 'द्विसांवत्सरिकः'इत्यत्राऽऽदेरचोवृद्ध्यर्थं शब्दोऽयमत्रोपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । कालोऽपि–क्रियापरिच्छेदहेतुत्वात् [3]परिमाणमिति 'द्विसांवत्सरिक' इत्यत्र कालरूपपरिमाणवाचके संवत्सरशब्दे [4]'परिमाणान्तस्यासंज्ञाशाणयो'रित्यनेनैवोत्तरपदस्थाऽऽ-

---

द्विवर्षा त्रिवर्षा । परिमाणपर्युदासेन पर्युदासो न भवती"त्याह पत. व्या. म. भा. 7/3/1/15 ।

(ख) " 'परिमाणान्तस्य 'इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः, त्रैसमिकः–इत्युत्तरपदवृद्धिर्न भवति । द्विवर्षा त्रिवर्षा माणविकेति 'अपरिमाणबिस्ताचित'–इतिपर्युदासो न भवती"त्याह. वाम. का. 7/3/15 ।

(ग) "संवत्सरग्रहणेनासावर्थो ज्ञाप्यते–परिमाणग्रहणे कालपरिमाणं न भवतीति"त्याह जि. बु. न्या. 7/3/15 ।

(घ) "(संख्यायाः) परिमाणान्तस्ये'त्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याऽग्रहणार्थम् । तेन द्वैसमिक इत्युत्तरपदवृद्धिर्ने"त्याह भ. दी. वै. सि. कौ. ठञधिकार प्र. पृ. 712 ।

(ङ) "संख्यायास्सं.... (सू. 7/3/15) । परिमाणान्तस्यासंज्ञेति सिद्धे संवत्सरग्रहणं ज्ञापयति परिमाण- ग्रहणेन कालग्रहणं नेति । तेन–द्विवर्षेत्यादौ 'अपरिमाण'इति पर्युदासो ने"त्याह श्रीना. 7 पृ. 122 ।

1. द्वौ संवत्सरौ अधीष्टो भृतो भूतो भावी वेत्यर्थे 'तद्धितार्थोत्तरपदसमाहारे च'–अष्टा. 2/1/51, इतितद्धिताऽर्थे समासे द्विसंवत्सरशब्दात् 'प्राग्वतेष्ठञ्'–अष्टा. 5/1/37, इतिप्राग्वतीये ठञि ठस्य 'ठस्येकः'–अष्टा. 7/3/50, इति इकाऽऽदेशे 'यस्येति च'–अष्टा. 6/4/148, संवत्सरशब्दघटकरेफोत्तराऽकारस्य लोपे 'संख्यायाः संवत्सरसंख्यस्य'–अष्टा. 7/3/15, इत्यनेन संख्याया उत्तरपदस्य संवत्सरशब्दस्याचामादेरचो वृद्धौ तद्धितान्तप्रातिपदिकाद्विभक्तिकार्येषु कृतेषु रूपमिदम् ।
2. द्वे षष्टी अधीष्टो भृतो भूतो भावी वेत्यर्थे 'तद्धितार्थोत्तरपदसमाहारे च'- अष्टा. 2/1/51, इति तद्धितार्थे समासे द्विषष्टिशब्दात् वर्षेषु संख्येयेषु वर्तमानात् प्राग्वतेष्ठञ्' - अष्टा. 5/1/37, इति प्राग्वतीये ठञि ठस्य 'ठस्येकः' - अष्टा. 7/3/50, इति इकादेशे 'यस्येति च'- अष्टा. 6/4/148, इति षष्टिशब्दघटकेकारस्य लोपे 'संख्यायाः संवत्सर-संख्यस्य च' - अष्टा. 7/3/15, इत्यनेन संख्याया परस्योत्तरपदभूताया आद्यचो वृद्धौ तद्धितान्तप्रातिपदिकाद्विभक्तिकार्येषु कृतेषु रूपमिदम् ।
3. तथाहि –

(क) "परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र परिमाणशब्देन परिच्छेदहेतुमात्रं गृह्यते, न तु प्रस्थादिवदारोहपरिमाणपरिच्छेदहेतुः, अन्यथा शाणप्रतिषेधोऽनर्थकः स्यात्, नहि शाणः परिमाणमारोहपरिणाहपरिच्छेदहेतुः, अतः कालोऽपि परिच्छेदहेतुर्भवति, ततश्च सोऽपि परिमाण"मित्याह जि. बु. न्या. 7/3/15 ।

(ख) " 'परिमाणान्तस्यासंज्ञाशाणयोः 'इत्यत्र परिच्छेदहेतुत्वमात्रं गृह्यते, न त्वारोहतः परिणाहतश्च येन मीयते तदेव प्रस्थादि, अन्यथा शाणप्रतिषेधोऽनर्थकः स्यात्, कालश्चापि परिच्छेदहेतुर्भवत्येवे"त्याह ह. मि. पदम. 7/3/15 ।

4. अष्टा. 7/3/17 ।

देरचोवृद्धि र्हि शब्दस्याऽस्याऽत्राभावेऽपि सुलभा । ज्ञापिते चाऽस्मिन्वचनेऽनेन 'परिमाणान्तस्ये'[1]त्यत्र परिमाणशब्देन संवत्सरूपकालपरिमाणस्य ग्रहणं न भवतीति द्विसांवत्सरिका इत्यादौ तेन सूत्रेणोत्तरपदस्याचामादेरचो वृद्धेरप्राप्त्या तत्र वृद्धि-सिद्ध्यर्थमत्र शब्दोऽयं स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'द्विवर्षा' इत्यादौ द्वे वर्षे भृता इत्यर्थे 'तमधीष्टो[2] भूतो भृतो भावी' - इति प्राग्वतीये ठञि तस्य 'वर्षाल्लुक्च' इतिलुकि कृते प्राप्तस्य 'द्विगो'[3]रिति ङीपः 'अपरिमाण[4]-बिस्ताचितकम्बल्येभ्यो न तद्धितलुकी'ति प्रतिषेधसिद्धिः । अस्य वचनस्याऽसत्त्वे हि कालस्याऽपि परिमाणतया द्विवर्षशब्दस्य परिमाणान्तत्वेन 'अपरिमाणे'[5]ति पर्युदासाद् 'द्विवर्षे'त्यादौ ङीपः प्रतिषेधो न सिद्ध्येत् । 'त्रिसमिकः'[6] इत्यादौ[7] उत्तरपद-वृद्धेरभावश्चा स्य[8]वचनस्य फलम् । अस्य वचनस्याऽसत्त्वे हि 'परिमाणान्तरस्य.[9]' इतिवृद्ध्यापत्तिरत्र दुर्वारा स्यात्[10] ।

## 'सर्वेभ्य'इतिशब्दः

[11]'परिमाणाख्यायां सर्वेभ्यः' इत्यत्र 'सर्वेभ्य'इतिशब्दः पुरस्तादपवादा अनन्त[12]-रान् विधीन् बाधन्ते नोत्तरा'निति परिभाषाया ज्ञापकः[13] । यतोऽस्या अभावेऽत्राऽयं

---

1. 'परिमाणान्तस्यासंज्ञाशाणयोः' - अष्टा. 7/3/17 ।
2. अष्टा. 5/1/80 ।
3. अष्टा. 5/1/88 ।
4. अष्टा. 4/1/21 ।
5. अष्टा. 4/1/22 ।
6. अष्टा. 4/1/22, इत्यत्रस्थेतिशेषः ।
7. प्राग्वतीये 'तमधीष्टोभृतोभूतोभावी' - अष्टा. 5/1/80, इति त्रिसमाशब्दात् ठञि ठस्येकाऽऽदेशे 'यस्ये'तिलोपे आद्यचो वृद्धौ तद्धितान्तप्रातिपदिकात् स्वादिकार्येषुकृतेषु रूपमिदम् ।
8. 'अत्राऽऽदिपदेन द्वैसमिकः' इतिग्राह्यम् ।
9. 'परिमाणान्तस्यासंज्ञाशाणयोः' - अष्टा. 7/3/17, इत्यनेनेतिशेषः ।
10. अष्टा. 7/3/17 ।
11. अष्टा. 3/3/20 ।
12. (क) 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते' - व्याडिः प. सू. प. 9, पृ. 6 ।
    (ख) पु. दे. ल. प. वृ. प. 8 पृ. 116 ।
    (ग) सी. दे. बृ. प. वृ. प. 44, पृ. 211 ।
    (घ) नी. दी. प. वृ. प. 49, पृ. 302 ।
    (ङ) ह. भा. प. भास्क. प. 46, पृ. 342 ।
    (च) भ. ना. प. शे. प. 60, पृ. 276 ।
    (छ) शेषा. प. भास्क. प. 50, पृ. 427 ।
13. तथाहि –
    (क) "ज्ञापकं चास्याः 'परिमाणाख्यायां सर्वेभ्यः' (3/3/20) इतिसर्वग्रहणम् । तद्धि द्वौ (स)कारौ त्रयः (स)काराः इत्यत्रापो बाधनार्थं क्रियते । अन्यथा

शब्दो व्यर्थः । स च करोतेर्घञि 'द्वौ कारौ' 'त्रयः काराः 'इत्यत्राऽपो[1] बाधनायोपात्तः । अस्या अभावे ह्यत्र 'सर्वेभ्यः' इति शब्दाऽभावेऽपि [2]अजपोरपि[3] बाधनमपवादत्वादत्र[4]सुलभम् । ज्ञापितायां चाऽस्यां परिभाषायामनया 'द्वौ कारा'-वित्यादौ निकटस्थस्य 'एरच्'[5] - इत्यस्यैव बाधनं स्यान्न त्वपः[6] इति [7]अपो बाधनार्थमयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु '[8]ह्वावामश्च' इत्यपवादेन अणा निकटस्यैव 'आतोऽनुपसर्गेकः[9]' इति कस्य बाधो भवति, न तु [10]'स्वर्गाह्वायी' '[11]धान्यमायी'त्यत्र व्यवहितस्य ताच्छीलिकस्य णिन[12] इति । अस्या असत्त्वे हि-णिनेरप्यनेनाऽत्र[13]बाधाऽऽपत्तिर्दुवारा स्यात् । तथा 'एत्येधत्यूठ्सु'[14] इति वृद्ध्या '[15]एङिपररूप'मित्यस्यैव बाधनं भवति, न तु '[16]ओमाङोश्चे'त्यस्येति । तेन

---

पुरस्तादपवादन्यायेन निकटस्य 'एरच्' (3/3/56) इत्यस्यैव बाधनं स्यादिती"त्याह पु. दे. ल. प. वृ. प. 8, पृ. 116 ।

(ख) "ज्ञापकं चात्र 'परिमाणाख्यायां सर्वेभ्यः' (3/3/20) इत्यत्र सर्वग्रहणम् । तद्धि द्वौ (स)कारौ त्रयः (स)कारा इत्यत्रापो बाधनार्थम् । अन्यथा पुरस्तापदवादन्यायेन समीपस्य 'एरच्' (3/3/56) इत्यस्यैव वाधकं स्यादिती"त्याह सी. दे. बृ. प. पृ. प. 44, पृ. 212 ।

(ग) "ज्ञापकमत्र 'परिमाणाख्यायां सर्वेभ्यः' (3/3/20) इत्यत्र सर्वग्रहणम् । तद्धि पुरस्तादपवादन्यायेन 'एरच्' (3/3/56) इत्यस्यैव बाधो माभूत्, किन्तु 'द्वौकारौ' 'त्रयः काराः' इत्यादौ 'ॠदोरप्' (3/3/57) इत्यस्यापि बाधो यथा स्यादित्येवमर्थम्" इत्याह ह. भा. प. भास्क. प. 46, पृ. 343 ।

1. 'ॠदोरप्' - अष्टा. 3/3/57 ।
2. 'एरच्' - अष्टा. 3/3/56 ।
3. 'ॠदोरप्' - अष्टा. 3/3/57 ।
4. 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' प. शे. प. 39, इत्यनया परिभाषयेतिशेषः ।
5. अष्टा. 3/3/56 ।
6. 'ॠदोरप्' - अष्टा. 3/3/57 ।
7. 'ॠदोरप्' - अष्टा. 3/3/57 ।
8. अष्टा. 3/2/2 ।
9. अष्टा. 3/2/3 ।
10. 'स्वर्गमाह्वयते तच्छील' - इत्यर्थे स्वर्गमिति कर्मोपपदात् 'ह्वेञ् स्पर्द्धायां शब्दे च' धा. पा. भ्वा. 1008, इति ह्वेधातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' - अष्टा. 3/2/78, इतिणिनिप्रत्यये सुपो लुकि णित्यजन्ताङ्गस्य वृद्धावायादेशे कृदन्ताद्विभक्तिकार्येषु-कृतेषु-रूपमिदम् ।
11. धान्यं मिमीते तच्छीलः' इत्यर्थे धान्यमिति कर्मोपपदात् 'माङ् माने शब्दे च' धा. पा. जुहो. 1088, इति माधातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' - अष्टा. 3/2/78 इति णिनिप्रत्यये सुपो लुकि युगागमे कृदन्तप्रातिपदिकाद्विभक्तिकार्येषु कृतेषु रूपमिदम् ।
12. 'सुप्यजातौ णिनिस्ताच्छील्ये' - अष्टा. 3/2/78 ।
13. 'परिमाणाख्यायां सर्वेभ्यः' - अष्टा. 3/2/2, इति घञेत्यर्थः ।
14. अष्टा. 6/1/29 ।
15. अष्टा. 6/1/94 ।
16. अष्टा. 6/1/95 ।

'[1]अवेहो'ति प्रयुज्यते । एवम् 'आद्यन्तौ[2] टकितौ' इत्यपवादेन 'षष्ठीस्थाने[3] योगा'-इत्यस्य बाधेऽपि [4]'प्रत्ययः' [5]'परश्च'इत्यनयोरबाधात् 'कुरुचरी'त्यादौ 'चरेष्टः[6]' इत्यादयः परा एव भवन्तीत्यपि फलमस्याः ।

## 'सर्वस्ये'ति शब्दः

'सर्वस्य[7] द्वे' – इतिसूत्रे 'सर्वस्ये'तिशब्दः 'पूर्वत्रासिद्धीयमद्विर्वचने'[8] इतिपरिभाषाया ज्ञापकः[9] । यतोऽस्या अभावेऽत्रायं शब्दः सर्वशब्दस्य मत्वर्थीयाच्प्रत्य[10]-यान्ततया 'सर्वकार्ययुक्तस्य द्विर्वचनं' 'सर्वकार्यं कृत्वा द्विवर्वचनं भवती'त्यर्थ लाभायोपात्तः । स चाऽनुपपन्नः । [11]'पूर्वत्रासिद्ध'मित्यस्य द्वित्वेऽपि कर्तव्ये प्रवृत्तिस्वीकारे द्वित्वं प्रत्यसिद्धानां पूर्वेषां शास्त्राणां द्वित्वात् प्राक्प्रवृत्तिर्ह्यसंभवा । ज्ञापितायां चास्या-

---

1. अव + आ + इहि 'इतिच्छेदः । 'अवेहि मां किङ्करमष्टमूर्त्तेः' इत्याह का. दा. रघु. 2/35 ।
2. अष्टा. 1/1/21 ।
3. अष्टा. 1/1/49 ।
4. अष्टा. 3/1/1 ।
5. अष्टा. 3/1/2 ।
6. अष्टा. 3/2/16 ।
7. अष्टा. 8/1/1 ।
8. (क) 'पूर्वत्रासिद्धीयमद्वित्वे ' पु. दे. ल. प. वृ. प. 110, पृ. 157 ।
   (ख) सी. दे. ल. प. वृ. प. 97, पृ. 253 ।
   (ग) 'पूर्वत्रासिद्धीयमद्वित्वे' नी. दी. प. वृ. प. 126, पृ. 314 ।
   (घ) ह. प. भास्क. प. 99, पृ. 364 ।
   (ङ) 'पूर्वत्रासिद्धीयमद्वित्वे' भ. ना. प. शे. प. 127, पृ. 360 ।
   (च) शेषा. प. भास्क. प. 106, पृ. 460 ।
9. तथाहि –
   (क) "ज्ञापकं चात्र 'सर्वस्य द्वे' (8/1/1) इत्यत्र सर्वस्येति वचनम् । तद्धि मत्वर्थीयाकारप्रत्ययान्तम् । तेनायमर्थः– सर्वकार्ययुक्तस्य द्विर्वचनं, सर्वं कार्यं कृत्वा द्विर्वचनं भवतीत्यर्थः । एवं च तदुपपद्यते यथाऽसिद्धत्वं न भवतीति ज्ञापक"मित्याह सी. दे. वृ.प. भास्क. प. 97, पृ. 254 ।
   (ख) "तत्रैव सूत्रे मत्वर्थीयाच्प्रत्ययान्तः सर्वशब्दो ज्ञापक इत्यन्ये" - इत्याह ह. भा. प. भास्क. प. 99, पृ. 364 ।
   (ग) "ज्ञापकम् 'सर्वस्य द्वे' (8/1/1) इति सूत्रे सर्वग्रहणम् । तद्धि अर्श आद्यजन्तस्य रूपम्, सर्वकार्यविशिष्टस्येत्यर्थः । यादृशकार्यविशिष्टस्य द्वित्वं न प्राप्नोति, तादृशसर्वकार्यविशिष्टस्य द्वित्वार्थं क्रियते । पूर्वत्रासिद्धीयकार्यविशिष्टस्य द्वित्वं न प्राप्नोति, 'पूर्वत्रासिद्धम्' (8/2/1) इत्यसिद्धत्वात् । तद्वारणार्थं क्रियमाणं सर्वग्रहणं ज्ञापक"मित्याह शेषा. प. भास्क. प. 106, पृ. 460-461 ।
10. 'अर्शआदिभ्योऽच्' - अष्टा. 5/2/127 , इत्यनेनेतिशेषः ।
11. अष्टा. 8/2/1 ।

मनया द्वित्वे कर्तव्ये पूर्वत्रासिद्धीयशास्त्राणामसिद्धत्वाऽभावाद्यथाप्राप्तं सर्वशास्त्र-प्रवृत्तिः सुलभा भवतीति सर्वकार्यविशिष्टस्य द्वित्वसम्पादनाय सर्वस्येतिशब्दोऽत्रोप-पन्नो भवति । ज्ञापिताया अस्याः 'पूर्वत्रासिद्ध'मित्यधिकारभवं पूर्वत्रासिद्धीयं तद्[1]द्वि-र्वचनादन्यत्राऽसिद्धं भवती'त्यर्थः । फलं तु 'द्रोग्धा - द्रोग्धा' 'द्रोढा द्रोढा' - इत्यनयोः सिद्धिः । इमौ प्रयोगौ हि दुह्[2]धातोस्तृचि[3] 'एकाच [4]उपदेशेऽनु-दात्ता'दितीण्निषेधे [5]'वा द्रुहमुहष्णुहष्णिहा'मिति कदाचिद्धत्वे कदाचिद् ढत्वे च कृते[6] तयोरनयासिद्धत्वाद्घत्वविशिष्टस्य ढत्वविशिष्टस्य च द्वित्वे कृते सिद्ध्यतः । अस्या असत्त्वे हि द्विर्वचने[7] कर्तव्ये धत्वादेरसिद्धत्वं दुर्निवारमिति दुहृतृशब्दस्य द्वित्वे[8] पश्चात् पाक्षिक-घत्वढत्वयोः[9] प्रवृत्तौ 'द्रोग्धा द्रोढा' 'द्रोढा द्रोग्धा' इत्यनिष्टयोरिहाऽऽपत्तिर्दुर्वारा स्यात् ।

## 'से'तिशब्दः

[10]'सामन्त्रित'मित्यत्र 'से'तिशब्दः 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो[11]वेति-परिभाषाऽनित्ये ति वचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्या भावेऽत्राऽयं शब्दो

---

1. 'गहादिभ्यश्छः' - अष्टा. 4/2/138, इति छप्रत्यये रूपमिदम् ।
2. 'द्रुह जियांसायाम्' धा. पा. अदा. 1197 ।
3. 'ण्वुल् तृचौ' - अष्टा. 3/1/133 इत्यनेनेतिशेषः ।
4. अष्टा. 7/2/10 ।
5. अष्टा. 8/2/33 ।
6. 'हो ढः '- अष्टा. 8/2/31, इत्यनेनेतिशेषः ।
7. 'सर्वस्य द्वे'- अष्टा. 8/1/1, इत्यनेनेतिशेषः ।
8. 'र्स्वस्य द्वे' - अष्टा. 8/1/1, इत्यनेनेतिशेषः ।
9. 'वा द्रुह मुह ष्णुह ष्णिहाम्' - अष्टा. 8/2/33, हो ढः '- अष्टा. 8/2/31, इत्याभ्यां क्रमश इतिशेषः ।
10. अष्टा. 2/3/48 ।
11. (क) व्याडिः प. सू. प. 16, पृ. 9 ।
    (ख) पु. दे. ल. प. वृ. प. 17, पृ. 119 ।
    (ग) सी. दे. बृ. प. वृ. प. 48, पृ. 215 ।
    (घ) नी. दी. प. वृ. प. 51, पृ. 302 ।
    (ङ) ह. भा. प. भास्क. प. 50, पृ. 344 ।
    (च) भ. ना. प. शे. प. 62, पृ. 277 ।
    (छ) शेषा. प. भास्क. प. 52, पृ. 427 ।
12. तथाहि –
    "यद्येषा परिभाषाऽस्ति 'सामन्त्रितम्' (2/3/48) इति साग्रहणं किमर्थम् । ननु अनन्तरस्य विधिर्वा भवतिप्रतिषेधो वेति अनया संबोधनलक्षणाया एवं प्रथमाया आमन्त्रितसंज्ञा भवति न प्रातिपदिकलक्षणायाः । एवं तर्हि सिद्धे यत् साग्रहणं करोति तज्ज्ञापयति अनित्यैषा परिभाषेति । किमेतस्या अनित्यत्वज्ञापने प्रयोजनम् । 'न गोश्वन्साववर्ण.' - (6/1/182) इत्ययं प्रतिषेधः 'सावेकाच्.' (6/1/168) इतिकाण्डस्य

व्यर्थः । तथाहि – 'अग्ने तव श्रवो वयः' इत्यृचि 'अग्ने'इत्यस्य, 'देवाऽस्मान्पाहि' - इत्यत्र देवेत्यस्य, 'अग्ने नये'त्यृचि' 'अग्ने' - इत्यस्य, 'अग्न इन्द्र वरुणे'त्यृचि'अग्ने' इत्यस्य, 'आमन्त्रितं पूर्वमविद्यमानव'दित्यनेनाऽविद्यामानवद्भावार्थमारब्धे[1] – 'सम्बोधने या प्रथमा तदन्तं शब्दस्वरूपमामन्त्रितसंज्ञं भवती'त्यर्थकेऽस्मिन्सूत्रे 'पचन्'[2] 'पचमान'[3]इत्यादौ प्रातिपदिकाऽर्थे या प्रथमा भवति तदन्तस्याऽऽमन्त्रित-संज्ञा मा भूत्, 'अग्ने तव श्रवो वयः' - इत्यादौ[4] 'संबोधने चे'[5]त्यनेन संबोधने या प्रथमा भवति, तदन्तस्यैवाऽऽमन्त्रितसंज्ञा भवत्वित्येतदर्थमत्र शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावेऽत्र व्यर्थः । यतोऽत्र 'से'ति शब्दाऽनुपादानेऽपि 'अनन्तरस्य विधिर्वा भवति[6] प्रतिषेधो वे'तिपरिभाषयैव अनन्तरेण[7] 'संबोधने[8] चे'तिसूत्रेण 'अग्ने तव श्रवो वयः' इत्यादौ विहिता या संज्ञा तदन्तस्यैवाऽऽमन्त्रितसंज्ञा सुलभा । ज्ञापिते चाऽस्मिन् वचनेऽनेन 'अनन्तरस्ये'ति परिभाषाया आमन्त्रितसंज्ञासूत्रेऽप्रवृत्त्या

---

भवति नानन्तरस्य । 'विभाषा साकाङ्क्षे' (3/2/114) इति 'अभिज्ञावचनमात्रस्य' (3/2/112) भवति । नानन्तरस्य न यदीत्यस्यं । 'ओरञ्' (4/2/71) इत्येवमादयो योगाः 'तस्मिन्नस्तीतिदेशे.' - (4/2/67) इत्येवमादिषु चतुर्ष्वेव भवन्ति, नानन्तरस्येती"त्याह व्याडिः प. सू. प. 16, पृ. 10 ।

1. अविद्यमानवद्भावाद्धि - 'अग्ने तवे'त्यत्र 'देवाऽस्मा'नित्यत्र च युष्मदस्मदोः क्रमशः 'ते मयावेकवचनस्य' - अष्टा. 8/1/22, इत्यनेन 'ते' - इत्यादेशः 'बहुवचनस्य वस्नसौ' - अष्टा. 8/1/21, इत्यनेन-नसादेशश्च न भवति । तव अस्मानित्यनयोः पदात्परत्वाऽभावात् पादादौ स्थितत्वाच्च, 'अग्ने नये'त्यत्र 'नयेति'तिङन्तस्य 'तिङ्ङतिङः' अष्टा. 8/1/28, इत्यनुदात्तत्वं न भवति, अतिङन्तात्परं तिङन्तं निहन्यते इति हि तदर्थः, इह च 'अग्ने'इत्यतिङन्तस्या-विद्यमानत्वादतिङन्तात्परत्वाऽभावान्नानुदात्तत्वम् । 'अग्न इन्द्र वरुणे'त्यत्र तु 'आमन्त्रितस्य च' - अष्टा. 8/1/19, इतिसर्वाऽनुदात्तत्वं न भवति, पदात्परमामन्त्रितं निहन्यते इति हि तदर्थः । इह च अग्नेशब्दस्याऽविद्यमानवत्त्वेन पदात्परत्वाऽभावादिन्द्रशब्दस्य नाऽनुदात्त-त्वम् । एवं वरुणशब्दस्याऽपि नाऽनुदात्तत्वं, ततः प्राचीनयोरग्ने इन्द्र इत्यनयोरविद्यमान-त्वात् । नन्वेवं 'सर्वदा रक्ष देव नः' - इत्यत्र कथं नसादेशः, देवेत्यस्याऽविद्यमानत्वादिति चेत्, अत्रोच्यतेऽत्र देवेत्यस्याऽविद्यमानवद्भावेऽपि ततः प्राचीनं 'रक्षे'त्येतदाश्रित्य नसादेशो भवतीति । एवम् 'इमं मे गङ्गे यमुने सरस्वति शतुद्रिस्तामं परुष्णिया'इतिमन्त्रे 'यमुने' इत्यादिभ्यः प्राचीनानामामन्त्रिताऽविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः 'आमन्त्रितस्य च' - अष्टा. 8/1/19, इत्यनेन भवति । 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि' 'प्रतापरुद्र ! ते ख्यातिरित्यादौ तु 'ते' इतिविभक्तिप्रतिरूपकमव्ययं, तत्र आमन्त्रितस्याऽविद्यमानवत्त्वाद्युष्मच्छब्दस्य पादादिस्थत्वात् ।
2. शत्रन्तात्पच्धातोः प्रथमाया एकवचने रूपमिदम् ।
3. शानजन्तात्पच्धातोः प्रथमाया एकवचने रूपमिदम् ।
4. अत्राऽऽदिपदेन 'देवाऽस्मान् पाही'त्यादि ग्राह्यम् ।
5. अष्टा. 2/3/47 ।
6. प. शे. प. 62, पृ. 277 ।
7. अव्यवहितपूर्वेणेत्यर्थः ।
8. अष्टा. 2/3/47 ।

व्यवहिताऽव्यवहिताभ्यां[1] ये प्रथमे विहिते तदुभयप्रथमान्तस्याऽऽमन्त्रितसंज्ञाऽऽपत्तिः प्राप्नोतीति तद्वारणाय 'संबोधने चे'[2]तिसूत्रविहित- प्रथमान्तस्यैवाऽऽमन्त्रितसंज्ञा-सिद्ध्यर्थं चाऽत्राऽयं शब्दः स्वांऽशे चरितार्थो भवति । ज्ञापितस्यास्य वचनस्य फलं तु [3]'सावेकाचस्तृतीयादिविभक्तिः' इतिकाण्डस्य [4]'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः'-इतिप्रतिषेधसिद्धिः, [5]अभिज्ञावचनमात्रे 'विभाषा साकाङ्क्षे'[6] - इत्यस्य प्रवृत्तिः, 'तदस्मिन्नस्तीति देशे[7] तन्नाम्नि' - इत्येवमादिषु चतुर्ष्वेव'[8] ओरञ्'[9] - इत्येवमादीनां योगानां प्रवृत्तिश्च ।अस्य वचनस्याऽसत्त्वे हि 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः[10] - इति प्रतिषेधः अनन्तरस्यैव[11]स्यात् । न तु 'सावेकाचस्तृतीयादिर्विभक्ति'रिति-काण्डस्य[12]- [13]अनन्तरे एव 'विभाषा साकाङ्क्षे'[14] इत्यस्य प्रवृत्तिः स्यात्, न [15]अभिज्ञावचनमात्रे, [16]'अनन्तरे एव [17]'ओरञ्' - इत्येवमादीनां योगानां प्रवृत्तिः स्यात्, नतु [18]'तदस्मिन्नस्तीति देशे तन्नाम्नि' - इत्येवमादिषु चतुर्ष्वेव[19] ।

जिनेन्द्रबुद्धि-हरदत्तमिश्रौ तु सूत्रेऽस्मिन् 'से'तिशब्दः 'हेपचन्' 'हेपचमान' इत्यादौ [20]पूर्वसूत्रेणाऽपि सम्बोधने या प्रथमा विहिता तस्या अपीयं संज्ञा यथा

---

1. 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' - अष्टा. 2/3/46, 'संबोधने च' - अष्टा. 2/3/47, इत्याभ्यामित्यर्थः ।
2. अष्टा. 2/3/47 ।
3. अष्टा. 6/1/168 ।
4. अष्टा. 6/1/182 ।
5. 'अभिज्ञावचने लृट्' - अष्टा. 3/2/112, 'नय दि' - अष्टा. 3/2/113 ।
6. अष्टा. 3/2/114 ।
7. अष्टा. 4/2/67 ।
8. 'तदस्मिन्नस्तीति देशे तन्नाम्नि' अष्टा. 4/2/67, 'तेन निर्वृत्तम्' - अष्टा. 4/2/68, 'तस्य निवासः '-अष्टा. 4/2/69 'अदूरभवश्च' - अष्टा. 4/2/70 ।
9. अष्टा. 4/2/71 ।
10. अष्टा. 6/1/182 ।
11. 'विभाषा भाषायाम्' - अष्टा. 6/1/181, इत्यस्यैवेत्यर्थः ।
12. सावेकाचस्तृतीयादिर्विभक्तिः' - अष्टा. 6/1/168, इत्यारभ्य 'विभाषा भाषायाम्' - अष्टा. 6/1/181, इत्यन्तस्येत्यर्थः ।
13. 'न यदि' - अष्टा. 3/2/113, इत्यत्रैवेत्यर्थः ।
14. अष्टा. 3/2/114 ।
15. 'अभिज्ञावचने लृट्' - अष्टा. 3/2/112, 'न यदि' - अष्टा. 3/2/113, इत्युभयत्रेत्यर्थः ।
16. 'अदूरभवश्च' - अष्टा. 4/2/70, इत्यत्रैवेत्यर्थः ।
17. अष्टा. 4/2/71 ।
18. अष्टा. 4/2/67 ।
19. तदस्मिन्नस्तीतिदेशे तन्नाम्नि' - अष्टा. 4/2/67. 'तेन निर्वृत्तम्' - अष्टा. 4/2/68, 'तस्य निवासः' - अष्टा. 4/2/69, 'अदूरभवश्च' अष्टा. 4/2/70, इत्येतेषु ।
20. 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' - अष्टा. 2/3/46, इत्यनेनेत्यर्थः ।

स्यादित्येतदर्थं चरिताऽर्थ इति मन्वाते[1] । मतमिदमनयोर्न युक्तम् । यतः सम्बोधनस्य प्रातिपदिकान्नियतोपस्थितेरभावेन प्रातिपदिकाऽर्थत्वाऽभावादेव[2] पूर्वसूत्रेण[3] सम्बोधने प्रथमैव न प्राप्नोति । 'से'तिशब्दो ह्यत्र तच्छब्दस्य बुद्धिविषयावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्नशक्त्या सम्बोधनप्रथमाया[4]एव वाचकः । तस्माद् व्याड्युक्तं ज्ञापकत्वमेवाऽस्मिनूवचने युक्तमिति मन्ये ।

---

1. तथाहि –
(क) "सेति वचनं पूर्वसूत्रेणापि सम्बोधने या विहिता तस्या अपीयं संज्ञा यथा स्यात् – हेपचन्, हेपचमानेत्यत्र । असति त्वस्मिन्- 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति पूर्वसूत्रेणैव या विहिता तस्या एव स्यात्, सेत्येतदुच्यमानं सर्वनामपदं सामान्येन प्रवर्त्तत इति कृत्वा । अतः सम्बोधनमात्रे या प्रथमा तां प्रतिपादयति, तेन सर्वत्र संज्ञा सिद्धा भवति" - इत्याह जि. बु. न्या. 2/3/48
(ख) "सेति वचनं प्रातिपदिकार्थसूत्रेणाऽपि सम्बोधने विहिता या प्रथमा तदन्तस्यापि संज्ञा यथा स्यात् हेपचन्, हे पचमान । असति तु तस्मिन् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा'इत्यनन्तरसूत्रविहिताया एव स्यात्"- इत्याह ह. मि. पदम. 2/3/48 ।
2. 'नियतोपस्थितिकः प्रातिपदिकार्थः' - इत्याह भ. दी. वै. सि. कौ. कारक प्र. पृ. 300, 'प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः इति चाह – भ. ना. ल. श. शे. कारक प्र. पृ. 616 । यद्यपि –
"प्रातिपदिकार्थः सत्ते"इत्याह जया. का. 2/3/46, "यत्राऽर्थान्तरनिरपेक्षा शब्दस्य प्रवृत्तिः स सर्वः प्रातिपदिकार्थः" - इत्याह जि. बु. न्या. 2/3/46, "योऽर्थः सन्नेव केवलं न जात्यादिरूपो न लिङ्गसंख्याकारकशक्तियोगी, स इह प्रातिपदिकार्थत्वेन विवक्षितः, यथा - अव्ययार्थ इत्यर्थः । अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुम्, न पुनरीदृशस्तादृश इती"त्याह च ह. मि. पदम. 2/3/46 ।
तथापि - इमानि च मतानि भट्टोजिदीक्षितेन खण्डितानि तथाहि - "यत्तु प्राचोक्तम् - प्रातिपदिकार्थः सत्तेति । यच्च व्याख्यातं योऽर्थः सन्नेव केवलं भासते, न जात्यादिरूपो, न लिङ्गः संख्याकारकयोगी स विवक्षितः । यथाऽव्ययार्थः । यथाऽव्ययार्थो हि केवलमस्तीति शक्यते वक्तुम्, न पुनरीदृशस्तादृश इतीति चेन्न । उच्चैर्नीचैरित्यादिशब्दानां सन्नित्याकारक - प्रतीतिजनकत्वस्य सर्वतन्त्रसिद्धत्वात् । अस्त्यादिसामानाधिकरण्यस्यापि असत्त्वार्थकेषु दुर्लभत्वात् । नच लिङ्गसंख्याकारकयोगीति त्वदुक्तिविरोधाच्च । पदान्तरोपस्थापितस्य अस्तिसामानाधिकरण्यमस्तीति चेन्न । तस्य अव्यावर्तकत्वात् । न पुनरित्यादिवाक्यशेष-विरोधाच्च । कृष्णः श्रीरित्यादावव्याप्तेश्च । नच लिङ्गग्रहणात् तत्सिद्धिः, मात्रशब्देनाधिकव्यवच्छेदात् । यदपि प्राचा व्याख्यातं यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिः स सर्वः प्रातिपदिकार्थः शब्दप्रवृत्तिनिमित्तमितियावत् । यथा उच्चैर्नीचैरिति लिङ्गसंख्यावेतौ केवलं जात्यादिनिरपेक्षम् स्वार्थमाहतुरिति, तदपि न, प्रवृत्तिनिमित्तमिह प्रकारीभूय भासते तथा च तन्मात्रबोधोऽसम्भवी । यदि सोऽपीष्टस्तर्हि घटादिशब्देभ्योऽपि स्यादिति संख्याकारकाद्यनन्वय एव स्यात्" - प्रौ. मनो. कारक प्र. पृ. 502-504 ।
3. 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' - अष्टा. 2/3/46, इत्यनेनेत्यर्थः ।
4. 'संबोधने च' - अष्टा. 2/3/47, इति विहिताया इत्यर्थः ।

## 'सा'दितिशब्दः

[1]'सात्पदाद्यो'रित्यत्र 'सा'दितिशब्दः [2]'स्वादिषु पदत्वेन येषां पदसंज्ञा न तेभ्यः प्रतिषेधः' इतिवचनस्य ज्ञापकः[3] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – [4]'अग्निसाद् भवति शास्त्रम्' 'दधि [5]सिञ्चति' - इत्यादौ - प्रत्ययांऽदेश-सकारयोः क्रमशः [6]'आदेश-प्रत्यययो'रित्यनेन प्राप्तस्य षत्वस्य प्रतिषेधार्थमारब्धे 'सात् इत्येतस्य पदादेश्च मूर्द्धन्यादेशो न भवती'त्यर्थकेऽस्मिन् सूत्रे 'अग्निसा'दित्यादौ प्रत्ययसकारत्वेन प्राप्तस्य [7]षत्वस्य प्रतिषेधाऽर्थं शब्दोऽयमत्रोपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'अग्निसा'दित्यत्र [8]प्रत्ययलक्षणेन अग्नेः [9]'स्वादिष्वसर्व-नामस्थाने'इतिपदत्वात् पदादित्वेन सातः सकारस्य पदादित्वेनैव हि षत्वप्रतिषेधो हि सुलभः। ज्ञापिते चाऽस्मिन्वचने पदादित्वेनाऽत्र सातः सकारस्य प्रत्ययसकारत्वेन प्राप्तस्य [10]षत्वस्य प्रतिषेधो न प्राप्नोतीति तत्र षत्वप्रतिषेधाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [11]'रामे'ष्वित्यादौ[12] षत्वनिषेधाऽभावः[13] । अस्य वचनस्याऽसत्त्वे हि 'रामे'त्यादेः

---

1. अष्टा. 8/3/109 ।
2. 'स्वादिष्वसर्वनामस्थाने' - अष्टा. 1/4/17 ।
3. तथाहि –
   (क) "सात्प्रतिषेधो ज्ञापकः - 'स्वादिषु परत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवती'तीत्याह पत. व्या. म. भा. 1/1/9/62 ।
   (ख) "सात्प्रतिषेधो ज्ञापयति – 'स्वादौ यत्पदं'न तस्मात् प्रतिषेध'-इती'त्याह ह. मि. पदम. 8/3/109 ।
   (ग) "स्वादिष्विति या पदसंज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्तते, इति सातिग्रहणेन ज्ञापितत्वा"दित्याह भ. दी. प्रौ. मनो. अजन्तपुंलिङ्गप्र. पृ. 252-254 ।
   (ङ) "नलुमता (सू. 1/1/63) । सात्प्रतिषेधो ज्ञापकः स्वादिषु पदत्वेन येषां पदसंज्ञा न तेभ्यः प्रतिषेध इती"त्याह एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 139 ।
4. अग्निशब्दात् 'विभाषा साति कार्त्स्न्ये'-अष्टा. 5/4/52, इतिसातिप्रत्यये कृते रूपमिदम् ।
5. 'षिच क्षरणे' धा. पा. तुदा. 1435, इतिसिच्धातोर्लटि तिपि 'तुदादिभ्यः शः' - अष्टा. 3/1/77, इति शविकरणे 'शेमुचादीनाम्' - अष्टा. 7/1/59 इति नुमागमे नकारस्यानुस्वारे परसवर्णे च कृते रूपमिदम् ।
6. अष्टा. 8/3/59 ।
7. 'आदेश - प्रत्यययोः' - अष्टा. 8/3/59, इत्यनेनेतिशेषः ।
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
9. अष्टा. 1/4/17 ।
10. 'आदेशप्रत्यययोः' - अष्टा. 8/3/59, इत्यनेनेतिशेषः ।
11. रामशब्दात्सुपि विभक्तौ 'बहुवचने झल्येत्' - अष्टा. 7/1/103, इत्यकारस्य एत्वे 'आदेश-प्रत्यययोः' - अष्टा. 8/3/59, इतिषत्वे च कृते रूपमिदम् ।
12. अत्राऽऽदिपदेन 'देवेष्वि'त्यादि प्रयोगा ग्राह्याः ।
13. 'सात्पदाद्योः' - अष्टा. 8/3/109, इत्यनेनेतिशेषः ।

[1]'स्वादि'ष्वितिपदत्वात्- तस्मात्परस्य सुपः सकारस्याऽपि [2]षत्वनिषेधाऽऽपत्ति-दुर्वारा स्यात् । सति चाऽस्मिन्वचने 'रामे'ष्वित्यादौ रामेत्यादेः [3]'स्वादि'ष्विति पदत्वेऽपि तस्मात्परस्य सुपः सकारस्य पदादित्वेन षत्वनिषेधा[4]ऽऽपत्तिर्न भवति । अस्य वचनस्य च 'स्वादिषु परत्वेन येषांपदसंज्ञा[5]तेभ्यः परस्य [6]'सुप्तिङन्तंपद'-मितिपदत्वमाश्रित्याऽपि [7]षत्वस्य [8]'सात्पदाद्योे'रिति प्रतिषेधो न भवती'त्यर्थः । तेन [9]'परमवाक्षु'–इत्यादौ [10]षत्वस्य निषेधाऽभावः[11] सिद्ध्यति । वाक्शब्दो ह्यत्राऽन्तर्वर्त्तिविभक्त्या[12]पदं[13]विद्यत इति वचनस्याऽस्यैतदर्थाऽनभ्युपगमे [14]षत्व-निषेधाऽऽपत्तिर्दुवारा स्यात् ।

## 'सामर्थ्य'इतिशब्दः

[15]'इसुसोः सामर्थ्ये' इत्यत्र 'सामर्थ्य'इतिशब्दः 'क्वचित् पदविधावपि समर्थ-परिभाषा नाश्रीयते'[16]इतिवचनस्य ज्ञापकः[17] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –'सर्पिष्करोति' 'सर्पिःकरोति' - [18]इत्यादौ यदा सर्पिरादयः

---

1. 'स्वादिष्वसर्वनामस्थाने' - अष्टा. 1/3/17 ।
2. 'सात्पदाद्योः' - अष्टा. 8/3/109, इत्यनेनेतिशेषः ।
3. 'स्वादिष्वसर्वनामस्थाने' - अष्टा. 1/3/17 ।
4. 'सात्पदाद्योः' - अष्टा. 8/3/109, इत्यनेनेतिशेषः ।
5. 'स्वादिष्वसर्वनामस्थाने' - अष्टा. 1/3/17, इत्यनेनेतिशेषः ।
6. अष्टा. 1/1/14 ।
7. 'आदेश - प्रत्ययोः' - अष्टा. 8/3/59, इति प्राप्तस्येतिशेषः ।
8. अष्टा. 8/3/109 ।
9. परमा चाऽसौ वाक् चेति लौकिकविग्रहे 'परमासु वाच्सु' इत्यलौकिकविग्रहे 'विशेषणं विशेष्येण बहुलम्' - अष्टा. 2/1/57, इति समासे तदवयवयोः सुपोर्लुकि समुदायात्सुपि विभक्तौ चकारस्य कुत्वे सुपः सकारस्य 'आदेश-प्रत्यययोः' - अष्टा. 8/3/59, इतिषत्वे च कृते रूपमिदम् ।
10. 'आदेश - प्रत्यययोः' - अष्टा. 8/3/59, इतिविहितस्येतिशेषः ।
11. 'सात्पदाद्योः ' - अष्टा. 8/3/109, इत्यनेनेतिशेषः ।
12. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62, इत्यनेनेतिशेषः ।
13. 'सुप्तिङन्तं पदम्' - अष्टा. 1/1/14, इत्यनेन सुबन्तत्वादितिशेषः ।
14. 'सात्पदाद्योः' - अष्टा. 8/3/109, इत्यनेनेतिशेषः ।
15. अष्टा. 8/3/44 ।
16. 'समर्थः पदविधिः' - अष्टा. 2/1/1 ।
17. तथाहि –
"पदस्येत्यधिकारे इसुसोः सामर्थ्ये इत्यत्र (8/3/44) सामर्थ्यग्रहणं तिष्ठतु सर्पिः पिबोदकमित्यादौ षत्वं माभूदिति एवमर्थं क्रियमाणं 'क्वचित् पदविधावपि समर्थपरिभाषा न आश्रीयते' इतिसामान्यज्ञापकमितिसमर्थसूत्रे रक्षितः । तेन शालीनांते आदेनं दास्यामीति हलि यकारान्तस्य पदस्याप्यनुस्वारोऽसत्यपि सामर्थ्ये भवती"त्याह पु. दे. ज्ञा. समु. एकत्रिंशे मतुप्पादे पृ. 98 ।
18. यजुष्करोति, यजुः करोतीत्यादिपदग्राह्यम् ।

शब्दा इसुसुप्रत्ययान्ता व्युत्पाद्यन्ते[1], इतिदर्शनं तदा केनचिदप्राप्त एव विसर्गस्य षत्वे [2]'कुप्वो'रित्यादिना जिह्वामूलीयाऽऽदिषु प्राप्तेषु वैकल्पिकषत्वार्थमारब्धे, यदा तु 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति दर्शनं तदाऽप्रत्ययविसर्जनीयत्वेन 'इदुदुपधस्य चाप्रत्ययस्ये'तिनित्ये षत्वे प्राप्ते वैकल्पिकषत्वाऽर्थमारब्धे 'इस्'-उस्-इत्येतयोर्विसर्जनीयस्याऽन्यतरस्यां षकाराऽदेशो भवति सामर्थ्ये कुप्वोः परत' इत्यर्थकेऽस्मिन् सूत्रे 'तिष्ठतु सर्पिः पिब त्वमुदक'मित्यत्र वैकल्पिकषत्वस्याऽभावाऽर्थं शब्दोऽयमत्रोपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । यतोऽत्र [3]'पदस्ये'त्यनुवर्तते, 'कार्यकालं[4]संज्ञापरिभाष'मितिदर्शनेन पदाधिकारादेव समर्थपरिभाषाया[5] उपस्थानात् 'सामर्थ्य'इत्यस्य लाभः सुलभ इति 'तिष्ठतु सर्पिः पिबत्वमुदक'मित्यत्र वैकल्पिकषत्वाऽभावोऽस्मिन्सूत्रेऽस्य शब्दस्याऽभावेऽपि सुलभः । ज्ञापिते चाऽस्मिन्वचनेऽनेन' तिष्ठतु सर्पिः पिब त्वमुदक' - 'मित्यत्राऽसामर्थ्येऽपि[6] कदाचिदपि विसर्गस्य षत्वं मा भवत्वित्येतदर्थमत्र शब्दोऽयं स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'शालीना ते आदेनंदास्यामी'त्यत्राऽसत्यपि[7]सामर्थ्ये हलि मकाराऽन्तस्य [8]पदस्याऽनुस्वार - सिद्धिः । अस्य वचनस्याऽसत्त्वे हि [9]'मोऽनुस्वार' इत्यत्र [10]'पदस्ये'त्यस्याऽनुवर्तनात् [11]'समर्थपरिषोपस्थिताव-[12] सामर्थ्येऽनुस्वारो नाऽत्र प्रयोगे सिद्ध्येत् । सति चाऽस्मिन्वचने [13]'मोऽनुस्वार'-इत्यत्र [14]समर्थपरिभाषायाः पदविधावप्यनाऽऽश्रयणेनाऽ[15]नुस्वारोऽसामर्थ्ये-

---

1. तथाहि – " 'अर्चिशुचि हु सृपि च्छर्दिच्छादिभ्य इसिः', 'जनेरुसिः '- इत्यनुवर्तमाने 'अर्त्तिपॄ वपि यजि तनि धनितपिभ्यो नित्' - इत्येवं सर्पिः यजुरादयः शब्दा इसुसुप्रत्ययान्ता व्युत्पाद्यन्ते"इत्याह जि. बु. न्या. 8/3/44 ।
2. 'कुप्वो ≍ क ≍ पौ च ' - अष्टा. 8/3/37 ।
3. अष्टा. 8/1/16 ।
4. प. शे. प. 3, पृ. 10 ।
5. 'समर्थः पदविधिः' - अष्टा. 2/1/1 ।
6. अत्र हि सर्पिरित्यस्य पिबेत्यनेन व्यपेक्षालक्षणं सामर्थ्यं नास्ति । तथाहि - पिबेत्येतदुदकमपेक्षते, सर्पिरित्येतत्तु तिष्ठत्विति ।
7. 'विशेषण-विशेष्यभावाऽवगाह्येकोपस्थितिजनकत्वरूपैकाऽर्थीभावलक्षण-सामर्थ्यें' - इत्यर्थः ।
8. 'मोऽनुस्वारः' - अष्टा. 8/3/24. इत्यनेनेतिशेषः ।
9. अष्टा. 8/3/24 ।
10. अष्टा. 8/1/16 ।
11. 'समर्थः पदविधिः' - अष्टा. 2/1/1 ।
12. एकाऽर्थीभावलक्षण - सामर्थ्याभाव इत्यर्थः ।
13. अष्टा. 8/3/24 ।
14. 'समर्थः पदविधिः' - अष्टा. 2/1/1 ।
15. 'मोऽनुस्वारः' - अष्टा. 8/3/24. इत्यनेनेतिशेषः ।

ऽपि[1]प्रयोगेऽस्मिन् सिद्ध्यति । मतमिदं रक्षितस्य पुरुषोत्तमदेवेनोपस्थापितम्[2] ।

जिनेन्द्रबुद्धिस्तु– 'सूत्रेऽस्मिन्नयं शब्दः 'सामर्थ्यमिह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं वे'तिवचनस्य ज्ञापकः' इति मनुते[3] । 'शालीनां ते ओदनं दास्यामि' 'असूर्यम्पश्या राजदाराः' इत्यादावसामर्थ्येऽपि 'क्रमशो 'मोऽनुस्वारः[4] 'इत्यनुस्वारो – नञोऽसत्यपि सूर्यशब्देन सामर्थ्ये समासं च 'आङ्गयुक्तं तिङाकाङ्क्ष'मिति[5] प्लुतसूत्रे युक्तग्रहणेन समर्थपरिभाषाया अनित्यत्वं ज्ञापयित्वा [6]साधयत्यसौ[7] ॥

## 'सामान्याप्रयोग'इतिशब्दः

'उपमितं व्याघ्रादिभिः[8]सामान्याप्रयोगे' - इत्यत्र सामान्याप्रयोग इतिशब्दः 'भवति प्रधानस्य सापेक्षस्याऽपि वृत्ति[9]'रितिवचनस्य ज्ञापकः[10] । यतोऽस्य

---

1. 'एकार्थीभावलक्षणसामर्थ्याऽभावेऽपीत्यर्थः ।
2. ज्ञा. समु. एकत्रिंशे मतुपूपादे पृ. 98 ।
3. तथाहि – "ननु चोभयसामर्थ्यवाचित्वात् सामर्थ्यशब्दः सामान्यशब्दः, तत्रेदं युक्तं यदेकार्थीभावलक्षणं सामर्थ्यं नाश्रीयते, उभयं तु कथं नाश्रयितुं युक्तम्, नहि सामान्यशब्दाः प्रकरणादिकमन्तरेण-विशेषेष्ववतिष्ठन्ते, नचेह प्रकरणादिकमस्ति तथाविधं किञ्चिद् येन व्यपेक्षालक्षणमेव सामर्थ्यं ग्रहीतव्यम्? नैष दोषः, कार्यकालं संज्ञापरिभाषम्' इति, इह 'पदस्य' इतिवर्तते, तत्र पदाधिकारादेव समर्थपरिभाषाया उपस्थापनात् सामर्थ्ये लब्धे यतः सामर्थ्यग्रहणं क्रियते तस्येदं प्रोयजनम् - इष्टसामर्थ्यस्य परिग्रहो यथा स्यात् । इह च व्यपेक्षालणमेवेष्टं सामर्थ्यमिति तदेवाश्रयितुं युक्तम् नैकार्थीभावः, नाप्युभयमिती"-त्याह जि. बु. न्या. 8/3/44 ।
4. अष्टा. 8/3/24 ।
5. अष्टा. 8/2/96 ।
6. तथाहि – " अथ युक्तग्रहणं किमर्थम्, यावता पदविधित्वादेव योगो विज्ञास्यते । एवंतर्हि युक्तग्रहणं कुर्वन्नेतज्ज्ञापयति -'समर्थः पदविधिः ' इत्येषा परिभाषाऽनित्या । तेनासूर्यम्पश्यानि मुखानीति नञोऽसत्यपि सूर्यशब्देन सामर्थ्ये समासः सिद्धो भवती"त्याह. जि. बु. न्या. 8/2/96 ।
7. जिनेन्द्रबुद्धिरित्यर्थः ।
8. अष्टा. 2/1/56 ।
9. समास इत्यर्थः । 'समस्यमानयोः पदयोर्मध्ये विशेष्यवाचिपदस्य समासघटकपदसापेक्षत्वेऽपि समासो भवती'ति वचनाऽर्थः ।
10. तथाहि –

(क) "सामान्याप्रयोग इति किमर्थम् ?। इह माभूत् - 'पुरुषोऽयं व्याघ्र इव शूरः, 'पुरुषोऽयं व्याघ्र इव बलवान्' । 'सामान्याऽप्रयोग इति शक्यमवक्तुम्' । इह कस्मान्न भवति – पुरुषोऽयं व्याघ्र इव शूरः, पुरुषोऽयं व्याघ्र इव बलवान् ? । 'असामर्थ्यात्' । कथमसामर्थ्यम् ?। 'सापेक्षमसमर्थं भवती'ति । एवं तर्हि सिद्धे सति यत् 'सामान्याऽप्रयोगे'इतिप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो'भवति वै प्रधानस्य सापेक्षस्यापि समास 'इति । किमेतस्य ज्ञापपने प्रयोजनम् ?। 'राजपुरुषोऽभिरूपः' 'राजपुरुषो दर्शनीयः' अत्र वृत्तिः सिद्धा भवती"त्याह पत. व्या. म. भा. 2/1/56 ।

(ख) "ननु च सामान्यस्य समासेऽन्तर्भूतत्वात् तद्वाचिनां शब्दानां प्रयोगो नास्ति, तत् किं प्रतिषेधेन ? नैतदस्ति, साधारणधर्मः सामान्यं हि समासेऽन्तर्भूतम्; नतु तद्विशेषः ।

वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – 'पुरुषव्याघ्र'[1]इत्यादौ[2] विशेष्यस्य पूर्वनिपातप्रयोजनक-[3]समासार्थमारब्धे 'उपमेयम् = उपमितं तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत् सामान्यवाची शब्दः प्रयुज्यते' इत्यर्थकेऽस्मिन्सूत्रे 'पुरुषोऽयं व्याघ्र इव शूरः' इत्यादौ[4] समासाऽभावार्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावेऽत्राऽयं व्यर्थः । 'पुरुषो व्याघ्र इव शूरः 'इत्यादौ हि समस्यमानपुरुषशब्दस्य समासाऽघटक-शूरपदसापेक्षत्वेन समासघटकपदनिरपेक्षत्वरूपसामर्थ्यस्याऽभावादेव[5] समासाऽभावः सुलभः । ज्ञापिते चाऽस्मिन्वचनेऽनेन 'पुरुषो व्याघ्र इव शूर, इत्यादौ विशेष्यसमर्पकस्य पुरुषपदस्य शूराऽऽदिपदसापेक्षत्वेऽपि समासः[6] प्राप्नोतीति

---

तत्रासति प्रतिषेधे विशिष्टसाधारणधर्मवाचिनः प्रयोगः स्यादेवेति कर्त्तव्यः प्रतिषेधः? न कर्त्तव्यः, कथम् ? सामान्यशब्दप्रयोगे हि सति तदपेक्षत्वेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यादेव समासो न भविष्यति । एवं तर्ह्येतज्ज्ञापयति – 'भवति हि प्रधानस्य सापेक्षस्यापि समासः' इति । पुरुषश्चात्रोपमेयत्वात् प्रधानः, उपमानन्तु व्याघ्रादि तदर्थत्वादप्रधानम् । किमेतेन ज्ञापकेन प्रयोजनम्? 'राजपुरुषः शोभनः 'इत्येवमादि सिद्धं भवती"त्याह जि. बु. न्या. 2/1/56 ।

(ग) "उपमितं व्याघ्रादिभिरित्यत्र (2/1/56) सामान्याप्रयोगग्रहणं पुरुषोऽयं व्याघ्र इव शूर इत्यत्र समासो माभूदित्येतदर्थं क्रियामाणं ज्ञापयति 'भवति प्रधानस्य सापेक्षस्य समास इति । तेन पुरुषोऽभिरूप इति सिद्ध्यती"त्याह पु. दे. ज्ञा. समु. पञ्चमे समर्थपादे पृ. 65 ।

(घ) ननु सामान्यशब्दप्रयोगे सति तदपेक्षत्वादसामर्थ्यादेव न भविष्यति, एवंतर्ह्येतज्ज्ञापयति – भवति प्रधानस्य सापेक्षस्य वृत्तिरिति । तेन राजपुरुषोऽभिरूप औपगवः शोभन इत्यादि सिद्धंभवती"त्याह ह. मि. पदम. 2/1/56 ।

(ङ) "न च पुरुषशब्दस्य शूर-शब्दसापेक्षत्वादसामर्थ्यदिवात्र समासस्य न प्रवृत्तिः, अतः सामान्याऽप्रयोगे 'इतिव्यर्थामितिवाच्यम्, समस्यमानेष्वप्रधानस्यैव हि सापेक्षत्वं सामर्थ्यविघातकं, न त प्रधानस्य । तथा चाऽत्र पुरुषस्य प्रधानतया तस्य शूरापेक्षत्वेऽपि अस्त्येव सामर्थ्यमिति समास-प्रवृत्तेः, तन्निवृत्त्यर्थं सामान्याऽप्रयोग इतिवचनम् । इदमेव 'प्रधानस्य सापेक्षत्वेऽपि न सामर्थ्यविघातकत्वमिति ज्ञापयति । तेन 'राजपुरुषः सुन्दर 'इत्यादौ समासः सिद्धो भवतीति भाष्ये स्पष्ट"मित्याह वा. दी. बा. मनो. तत्पुरुष प्र. पृ. 445 ।

(च) "उपमितं व्याघ्रा... (सू. 2/1/56) । सामान्यप्रयोगे सापेक्षत्वादसामर्थ्येन वृत्तेरप्राप्तेः स निषेधो ज्ञापयति – भवति प्रधानस्य सापेक्षस्यापि वृत्तिरिती"त्याह श्रीना. ज्ञा. सं. 2, पृ. 57 ।

1. पुरुषोऽयं व्याघ्र इवेत्यर्थः ।
2. अत्राऽऽदिपदेन 'पुरुषसिंहः' - 'नृसोमः' इत्यादि ग्राह्यम् ।
3. उपमानोपमेयसमभिव्याहारे उपमानस्यैव विशेषणत्वात् 'विशेषणं विशेष्येण बहुलम्' - अष्टा. 2/1/57, इत्यनेन समासे हि व्याघ्रस्यैव पूर्वनिपातः स्यादितिशेषः ।
4. 'पुरुषोऽयं व्याघ्र इव बलवा'नित्यादिपदग्राह्यम् ।
5. 'सापेक्षमसमर्थव'दित्युक्तेरितिशेषः ।
6. 'उपमितं व्याघ्रादिभिः' - अष्टा. 2/1/56, इत्यनेनेतिशेषः ।

तन्निवृत्त्यर्थं शब्दोऽयमत्र स्वांऽशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'राजपुरुषोऽभिरूपः'[1] – 'राजपुरुषो[2]दर्शनीयः' 'इत्यादौ विशेष्यवाचिपुरुषपदस्य समासाऽघटकाऽभिरूपादिपदसापेक्षत्वेऽपि समास[3]- सिद्धिः । अस्य वचनस्याऽसत्त्वे हि समस्यमानपुरुषशब्दे समासाऽघटकाऽभिरूपाऽऽदिपदनिरपेक्षत्वरूपसामर्थ्य-स्याऽभावादत्र समासो[4] न सिद्ध्येत् । नचैतद्वचनज्ञापनेन सामान्याप्रयोग' इतिशब्दस्य चारितार्थ्येऽपि 'भाष्याब्धिः क्वातिगम्भीरः'[5] इति कैयटप्रयोगस्य[6] कथं साधुत्वं 'सामान्यप्रयोगसत्त्वे तेन समासो हि न प्राप्नोतीति शङ्क्यम् । यत इह गाम्भीर्येण सादृश्यं न विवक्षितं, किन्तु विततदुरवगाहत्वादिनेति विततत्वादेरप्रयोगादत्र समासः सुलभ इति कैयटप्रयोगस्य साधुत्वमक्षुण्णम् ।

## 'साये' तिशब्दः

[7]'संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङि'वित्यत्र 'साये'तिशब्दः 'सर्वोऽप्येक-देशोऽह्ना समस्यते'[8] इति 'सर्व एव एकदेशवचना अवयविना समस्यन्ते, न तु - पूर्वापरादय[9] एवे'ति वा वचनस्य ज्ञापकः[10] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दोऽनुपपन्नः । तथाहि – 'द्व्यहनि'[11] 'द्व्यह्नि'[12] 'द्व्यह्ने'[13] 'व्यहनि'[14]

---

1. राज्ञः पुरुष इति विग्रह इतिशेषः ।
2 राज्ञः पुरुष इति विग्रह इतिशेषः ।
3. 'षष्ठी' - अष्टा. 2/2/8. इत्यनेनेतिशेषः ।
4. 'षष्ठी' - अष्टा. 2/2/8. इत्यनेनेतिशेषः ।
5. 'भाष्याब्धिः क्वाऽति गम्भीरः क्वाऽहं मन्दमतिस्ततः ।
   छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥ 6 ॥
   तथापि हरिबद्धेन सारेण ग्रन्थसेतुना ।
   क्रममाणः शनैः पारं तस्य प्राप्तोऽस्मि पङ्गुवत् ॥ 7 ॥
   इति षष्ठपद्यस्य प्रथमचरणात्मक इत्यर्थः ।
6. प्रदी. 1/1/1 शास्त्रप्रोयजनाधिकरणस्थस्येत्यर्थः ।
7. अष्टा. 6/3/110 ।
8. भट्टोजिदीक्षितसम्मतोऽयं वचनाऽऽकारः ।
9. पुरुषोत्तमदेवसम्मतोऽयं वचनाऽऽकारः ।
10. तथाहि –
   (क) "एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञाकम् । तेन मध्यमह्नो मध्याह्न इत्यपि - भवती"ति ग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन्वचने सूचयति वाम. का. 6/3/110 ।
   (ख) "ततपुरुषसमासे 'अह्नोह्न एतेभ्यः' इत्यनेनाह्नादेशो विधीयते, 'एतेभ्यः 'इत्यनेन च 'ततपुरुषस्याङ्गुलेः संख्याव्ययादेः 'इति, तथा 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति प्रक्रान्ताः संख्याव्ययादयः प्रत्यवमृश्यन्ते । तत्र यदि पूर्वादय एवैकदेशिना समस्येरन्, तदा न सायंशब्दः 'एतेभ्यः' इत्यनेन प्रत्यवमृश्येत, तस्य संख्यादिष्वपरिपठितत्वात् । ततश्च सायंशब्दात्परस्याह्नादेशो न स्यात् । एवं सायम्पूर्वस्याह्नशब्दस्याभावात् तस्येह ग्रहणं न क्रियेत, कृतञ्च, तस्मादेतदेव सायं-

'व्यह्नि'[1] 'व्यह्ने'[2] 'सायाहनि'[3] – 'सायाह्नि'[4] 'सायाह्ने' – इत्यादौ अह्नशब्दस्यान्यतरस्याम् 'अहन्' इत्यादेशाऽर्थमारब्धे 'संख्या, वि, साय इत्येवं-

---

पूर्वस्याह्नशब्दस्य - ग्रहणं ज्ञापयति – पूर्वादिभ्योऽन्यस्याप्येकदेशिसमासो भवतीति । तेन मध्यमह्नो मध्याह्न इति सिद्धं भवती"ति ग्रन्थेन ज्ञापकत्वमस्य शब्दस्याऽस्मिन् वचने सूचयति जि. बु. न्या. 6/3/110 ।

(ग) " 'अह्नोऽह्न एतेभ्यः 'इत्यत्र 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति प्रक्रान्ताः- संख्यादयः परामृश्यन्ते । यदि च पूर्वादय एवैकदेशिनस्समस्येरन्त्र सायंशब्दात्परस्याह्नादेशः स्यात् 'एतेभ्यः 'इत्यनेन तस्यापरामृष्टत्वात् । ततश्च तत्र पूर्वस्याह्नशब्दस्येह ग्रहणमनुपपन्नं स्यात् । तस्मात् सायशब्दस्य समासस्तावदनुमीयते । तत्र सामान्येन ज्ञापकमाश्रीयते – अन्यस्यापि भवतीती"त्याह ह. मि. पदम. 6/3/110 ।

(घ) "संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ (6/3/110) इत्यह्नस्येति सामान्यज्ञापकात् 'सर्व एव एकदेशवचना अवयविना समस्यन्ते, न तु पूर्वापरादय एव । एवं हि मध्याह्नसायाह्नपश्चिमरात्रादीनां सिद्धि"रित्याह पु. दे. ज्ञा. समु. त्रयोविंशे अलुक्पादे पृ. 85 ।

(ङ) "सर्वोऽप्येकदेशोऽह्ना समस्यते । 'संख्याविसाये'तिज्ञापका"दित्याह भ. दी. वै. सिक. कौ. ततुरुष प्र. पृ. 434 ।

11. द्वयोरह्नोर्भव इत्यर्थे भावाऽर्थविवक्षायां 'तद्धितार्थोत्तरपदसमाहारे च' - अष्टा. 2/1/51, इति तद्धिताऽर्थे समासे, ततः 'कालाट्ठञ्' अष्टा. 4/3/11, इति ठञ्प्रत्यये ठञो 'द्विगोर्लुगनपत्ये' - अष्टा. 4/1/88, इतिलुकि 'राजाहःसखिभ्यष्टच्' - अष्टा. 5/4/9, इतिटचि समासान्ते कृते 'अह्नोऽह्न एतेभ्यः' - अष्टा. 5/4/88, इत्यनेन अहन्नित्येतस्याऽह्नादेशे इकारस्य यणि द्व्यह्नशब्दो निष्पन्नः । द्व्यह्नशब्दाच्च ङौ विभक्तौ 'संख्या विसाय पूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' अष्टा. 6/3/110, इत्यनेन अह्नशब्दस्य 'अहन्' - इत्यादेशे रूपमिदम् ।

12. द्व्यह्न शब्दान् ङौ विभक्तौ 'संख्याविसाय.' - अष्टा. 6/3/110, इति अह्नशब्दस्य 'अहन्' - इत्यादेशे 'विभाषाङिश्योः' अष्टा. 6/4/136, इत्यकारलोपपक्षे रूपमिदम् ।

13. द्व्यह्नशब्दान् ङौ विभक्तौ 'संख्याविसाय.' - अष्टा. 6/4/110 इत्यहन्नादेशाऽभावपक्षे ङेरिकारस्य 'आद्गुणः' - अष्टा. 6/1/87, इति गुणैकाऽऽदेशे रूपमिदम् ।

14. व्यपगतमह इत्यर्थे प्रादिसमासे 'राजाहः सखिभ्यष्टच्' - अष्टा. 5/4/91, इति टचि समसान्ते कृते 'अह्नोह्न एतेभ्यः' - अष्टा. 5/4/88, इत्यनेन अहन्नित्येतस्याऽह्नाऽऽदेशे वेरिकारस्य यणि व्यह्नशब्दो निष्पन्नः । व्यह्नशब्दाच्च ङौ विभक्तौ' 'संख्याविसाय.' अष्टा. 6/3/110, इत्येनेन अह्नशब्दस्य 'अहन्' इत्यादेशेरुपमिदम् ।

1. व्यह्नशब्दान्ङौ विभक्तौ 'संख्याविसाय.' - अष्टा. 6/3/110, इतिअह्नशब्दस्य' अहन्' इत्यादेशे' विभाषाङिश्योः 'अष्टा. 6/4/136, इत्यहन्नादेशाऽभावपक्षे ङेरिकारस्य 'आद्गुणः' अष्टा. 6/1/87 इतिगुणैकादेशे रूपमिदम् ।

2. अहनः सायमित्यर्थे 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' - अष्टा. 2/2/1, इत्यनेन 'सर्वोऽप्येकदेशोऽह्ना समस्यते' इतिवचनबलात् एकदेशिसमासे, मकारलोपे 'राजाहः सखिभ्यष्टच्' - अष्टा. 5/4/91, टचि समासान्ते कृते 'अह्नोऽह्न एतेभ्यः - अष्टा. 5/4/88, इत्यनेन अहन्नित्यस्याऽह्नादेशे सवर्णदीर्घैकाऽऽदेशे च कृते सायाह्नशब्दो निष्पन्नः । ततः सायाह्नशब्दान् ङौ विभक्तौ 'संख्याविसाय.' -अष्टा. 6/3/110, इत्यनेन अह्नशब्दस्य 'अहन्' इत्यादेशे रूपमिदम् । अत्र " 'संख्याविसायेभ्यः' - इत्येव वक्तव्ये पूर्वशब्दस्याधि-

पूर्वस्याह्नशब्दस्य स्थाने अहनित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः' इत्यर्थ-केऽस्मिन्सूत्रे सायाहनि सायाह्नि सायाह्ने'-इत्यत्र 'साय' पूर्वकस्याह्नशब्दस्य वैकल्पिकाऽहन्नादेशाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । अस्य वचनस्याऽभावे हि 'अह्नः साय' इतिविग्रहे सायशब्दस्य पूर्वाद्यप्रविष्टत्वादहन्-शब्देनैकदेशिसमासो[1] न प्राप्नोतीति 'षष्ठी'[2]इति सूत्रेण अहन्शब्दस्य षष्ठ्यन्तस्य सायशब्देन समासः करणीयस्तथा सति षष्ठ्यन्तस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपाते[3] सति सायशब्दात्परस्याऽह्नशब्दस्याऽसंभवतया सायशब्दात् परस्याऽ-ह्नशब्दस्याऽहन्नादेशविधानार्थमुपात्तोऽयं शब्दोऽत्राऽनुपपन्नः । ज्ञापिते चाऽस्मिन्-वचने [4]पूर्वाद्यप्रविष्टेनाऽप्यवयर्वृत्तिना सायशब्देन षष्ठ्यन्तस्याऽह्नशब्दस्य एकदेशिसमासः[5] सुलभो भवतीति सायशब्दात् परस्याऽह्नशब्दस्योपलम्भात्तत्राऽ-ह्नशब्दस्य ङावन्यतरस्यामहन्नादेशाऽर्थमुपात्तोऽयं शब्दोऽत्रोपपन्नो भवति । ज्ञापित-स्याऽस्य वचनस्य फलं 'मध्याह्नः'[6] 'सायाह्नः[7] इत्यादिप्रयोगाणां साधुत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति सूत्रेण 'पूर्वअपरअधर उत्तरे' ति चतुर्णामेव अवयववाचकानामवयविना समासः स्यात्, तथा सति –'अह्नोमध्य' इति विग्रहे, अह्नः साय इति विग्रहे च अह्नोऽ-वयवित्वेऽपि मध्यसायशब्दयोः पूर्वादिष्वनुपात्ततया समासाऽप्राप्त्या 'मध्याह्नः' इत्यादिप्रयोगाणां साधुत्वं न सिद्ध्येत् । सति चाऽस्मिन्वचने मध्यादीनामप्येक-देशानामह्ना समासस्य[8]सुलभतया साधुत्वमेषां सिद्ध्यति ।

---

कस्य ग्रहणं तदधिककार्यविधानसूचनार्थम् । तेन सायाह्न इत्यत्र मकारलोपः सिद्धो भवतीति न्या. 6/3/110, ग्रन्थमनुसृत्य मकारलोप उल्लिखितः । अह्नः साय इतिविग्रहाभ्युपगमे तु मकारस्याऽभावादत्र मकारलोपोनावश्यक इतिमन्ये ।

3. सायाह्न शब्दान् ङौ विभक्तौ 'संख्याविसाय. - अष्टा. 6/3/110, इति अह्नशब्दस्य 'अहन्' - इत्यादेशे 'विभाषाङिश्योः' - अष्टा. 6/4/136, इत्यकारलोपपक्षे रूपमिदम् ।
4. सायाह्नशब्दान् ङौ विभक्तौ 'संख्याविसाय.' - अष्टा. 6/3/110, इत्यहन्नादेशाऽभावपक्षे ङेरिकारस्य 'आद्गुणः' - अष्टा. 6/1/87, गुणैकाऽऽदेशेरुपमिदम् ।

1. 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' - अष्टा. 2/2/1, इत्यनेनेतिशेषः ।
2. अष्टा. 2/2/37 ।
3. 'प्रथमानिर्दिष्टं समास उपसर्जनम्' - अष्टा. 1/2/43, 'उपसर्जनंपूर्वम्' - अष्टा. 2/2/30. इत्यनेनेतिशेषः ।
4. पूर्वापराधरोत्तरेष्वप्रविष्टेनेत्यर्थः ।
5. 'पूर्वापराधरोत्तरमेकदेशिनेकाधिकरणे' - अष्टा. 2/2/1, इत्यनेनेतिशेषः ।
6. अह्नो मध्यमिति विग्रहे 'सर्वोऽप्येकदेशोऽह्ना समस्यते 'इति वचनब्लात् 'पूर्वापरा' - अष्टा. 2/2/1-इति समासे' राजाहः सखिभ्यष्टच्'-अष्टा. 5/4/91, इति [illegible] समासान्तेकृते 'अह्नोह्न एतेभ्यः 'अष्टा. 5/4/88, इत्यनेन अहन्नित्येतस्याऽह्नादेशो समासात्सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
7. अह्नः साय इति विग्रहे 'मध्याह्नः 'इतिवदिदंरूपम् ।
8. 'पूर्वापर.' - अष्टा. 2/2/1, इत्यनेनेतिशेषः ।

अत्रेदमवधेयम् – "न केवलं सर्वोप्येकदेशोऽह्नैव समस्यते, अपितु कालसामान्येन, ज्ञापकस्य [1]सामान्यापेक्षत्वात्, तेन [2]'मध्यरात्रः' [3]'पश्चिमरात्रः' इत्यादिप्रयोगाणां साधुत्वं सिद्ध्यतीति 'साये'तिशब्दोऽत्र[4] 'सर्वोप्येकदेशः कालसामान्येन समस्यते' - इत्यस्यैव वचनस्य ज्ञापक इति पक्षान्तरमप्याह भट्टोजिदीक्षित[5] इति । पक्षान्तरेऽस्मिन् 'दिनमध्य[6]:' [7]'रात्रिमध्यः' - इत्यादीनां साधुत्वं न स्यादेकदेशिसमास्य[8]दुर्वारतया मध्यशब्दस्यैव पूर्वनिपाताऽऽपत्तेरित्यपि नैव शङ्कनीयम् । यतो [9]'ज्ञापकसिद्धं न सर्वत्रे'तिपरिभाषया 'सर्वोप्येकदेशः कालसामान्येन समस्यत इतिवचनं 'दिनमध्यः 'इत्यादौ न प्रवर्तते, इति [10]'षष्ठी' इति समासेन दिनशब्दस्य पूर्वनिपाते[11]साधुत्वमेषां सुलभम् ।

## 'सिजि'तिशब्दः

'हनः[12] सिजि'त्यत्र 'सिजि'तिशब्दः [13]'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति'रितिपरिभाषाया [14]ज्ञापकः । यतोऽस्या अभावेऽत्र सूत्रे 'लिङ्सिचावात्म-

---

1. 'सामान्येन ज्ञापकमाश्रीयते' इतिह्याह ह. मि. पदम. 6/3/110 ।
2. रात्रेर्मध्यमित्यर्थे 'सर्वोऽप्येकदेशः कालसामान्येन समस्यते' इतिवचनवलात् 'पूर्वापरा.' - अष्टा. 2/2/1, इत्येकदशिसमासे 'अहःसर्वैक-देशसंख्यातपुण्याच्च रात्रेः' - अष्टा. 5/4/87, इत्यच् प्रत्यये 'यस्येति च ' - अष्टा. 6/4/1 48, इति रात्रेरिकारलोपे समासात् सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
3. रात्रेः पश्चिममिति विग्रहे 'मध्यरात्रः' - इतिवदिदं रूपम् ।
4. 'संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' - अष्टा. 6/3/110, इत्यत्रेत्यर्थः ।.
5. तथाहि – "केचित्तु सर्वोऽप्येकदेशः कालेन समस्यते न त्वह्नैव । ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः । 'उपारताः पश्चिमरात्रगोचरा'दित्यादि सिद्धमित्याहुः"-इत्याह भ. दी. वै. सि. कौ. तत्पुरुष प्र. पृ. 434 ।
6. दिनस्य मध्यमित्यर्थः ।
7. रात्रेर्मध्यमित्यर्थः ।
8. 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' - अष्टा. 2/2/1, इत्यनेनेतिशेषः ।
9. (क) 'ज्ञापकलक्षणं न सर्वत्र ' -
   व्याडिः प. पा. प. 140, पृ. 43 ।
   (ख) सीं. दे. बृ. प. वृ. प. 118, पृ. 160 ।
   (ग) सी. दे. बृ. प. वृ. प. 126,
   (घ) नी. दी. प. वृ. प. 119,
   (ङ) ह. भा. प. भास्क. प. 129,
   (च) भ. ना. प. शे. प. 126, पृ. 359 ।
10. अष्टा. 2/2/37 ।
11. 'प्रथमा-निर्दिष्टं समास उपसर्जनम्' – अष्टा. 1/2/43, 'उपसर्जनं पूर्वम्' - अष्टा. 2/2/30, इतीतिशेषः ।
12. अष्टा. 1/214
13. (क) पु. दे. ल. प. वृ. प. 24, पृ. 122

[1]नेपदेष्वि'तिसूत्रात् सिच्शब्दानुवृत्त्यैवेष्टार्थलाभः सुलभः । ज्ञापितायां चाऽस्यामनया सिज्मात्रस्याऽत्राऽनुवृत्त्यसम्भवात् 'सिजि' तिशब्दः स्वांशे चरितार्थोऽत्र भवति । ज्ञापिताया अस्याः फलं तु 'अतो [2]ल्रान्तस्ये'त्यत्र [3]'सिचिवृद्धिः परस्मैपदेषु' इत्येतस्य सर्वस्य, [4]'भावे' इत्यत्र [5]'सृस्थिरे' इत्येतस्य सर्वस्य, [6]'उश्चे'त्यत्र [7]'लिङ्-सिचावात्मनेपदेषु' इत्येतत्सर्वस्य चाऽनुवृत्तिसिद्धिः ।

ज्ञापिता चेयं परिभाषाऽनित्या यतः [8]'झोऽन्तः 'इत्यत्र 'आयनेयीनीयियः[9] फढखच्छघां प्रत्यायादीना'मित्यतः 'प्रत्यय, इत्येतन्मात्रस्यानुवृत्तिर्दृष्टा पुनरादेरपि । आदेरित्यस्याऽत्राऽनुवर्त्तने हि 'अद्य श्वो वा विजनिष्यमाणाः पतिभिः सह शयान्ते'

---

(ख) सी. दे. बृह. प. वृ. प. 14, पृ. 175
(ग) नी. दी. प. वृ. प. 19, पृ. 296
(घ) 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ह. भा. प. भास्क. प. 14. पृ. 327
(ङ) भ. ना. प. शे. प. 18. पृ. 111
(च) शेषा. प. भास्क. प. 17, पृ. 401

14 तथाहि–
(क) "ज्ञापकं चात्र 'हनः सिच्' (1/2/14) इति कित्त्वविधौ सिज्ग्रहणम् । यदि त्वेकसूत्रनिर्दिष्टयोरपि एकोऽनुवर्तते नापर इति स्यात्तदा 'लिङ्सिचावात्मनेपदेषु' (1/2/11) इत्यतो लिङ्ग्रहणं नानुवर्तिष्यते सिजेवानुवर्त्तिष्यते इति सिज्ग्रहणमनर्थकं स्या"दित्याह पु. दे. ल. प. वृ. प. 24, पृ. 122.
(ख) "ज्ञापकं चात्र 'हनःसिच्' (1/2/14) इतिसिज्ग्रहणम् । यद्येकसूत्रनिर्दिष्टयोरपि पदयोरेकमनुवर्तते नापरमिति तदा 'लिङ्सिचावात्मनेपदेषु' (1/2/11) इत्यतो लिङ्ग्रहणं नानुवर्तिष्यते सिज्ग्रहणमेवानुवर्तिष्यते इतिसिज्ग्रहणनर्थकं स्यात्" इत्याह सी. दे. वृ. प. वृ. प. 14, पृ. 176
(ग) "ज्ञापकमत्र 'हनः सिच्' (1/2/14) इति सूत्रे सिज्ग्रहणम् । अन्यथा 'लिङ्सिचौ. (1/2/11) इत्यतोनुवृत्त्यैव तदर्थसिद्धौ तन्न कुर्यात्"इत्याह ह. भा. पा. भास्क. प. 14. पृ. 328
(घ) "अत्र ज्ञापकं च 'लिङ्सिचा'वित्यतः सिच्पदानुवृत्तिसम्भवे हनः सि'जित्यत्र सिज्ग्रहण"मित्याह म. म. तात्येतिप्रसिद्धो रामकृष्णशास्त्री प. शे. भू. ति. प. 17, पृ. 93
(ङ) "लिङ्सिचा'वित्यतः सिज्ग्रहणानुवृत्त्यैव सिद्धौ 'हनः सिच्' इत्यत्र सिज्ग्रहणं च ज्ञापक"मित्याह म. म. जयदेवमिश्रः प. शे. विजयाम् प. 17, पृ. 112
(च) "अत्र च ज्ञापकम्– 'हनः सिच्' (1/2/14) इति सिज्ग्रहणम् । यद्येकयोगनिर्दिष्टानामपि कस्यचित्प्रवृत्तिः कस्यचिन्न प्रवृत्तिः स्यात्; तर्हि 'हनः' (1/2/14) इति सूत्रे सिज्ग्रहणमनुवर्तते, इतरन्निवृत्तमिति वक्तुं शक्यत्वेन तत्र सिज्ग्रहणमनर्थकं सज्ज्ञापक" मित्याह शेषा. प. भास्क. प. 17. पृ. 401

1 अष्टा. 1/2/11
2 अष्टा. 7/2/2
3. अष्टा. 7/2/1
4 अष्टा. 3/3/18
5 अष्टा. 3/3/17
6 अष्टा. 1/2/12
7 अष्टा. 1/2/11
8 अष्टा. 7/1/3
9 अष्टा. 7/1/2

[1]इतिश्रुतौ 'शयान्ते' इत्यत्र [2]शीङो [3]लेटोऽडाटौ'[4]इतिलावस्थायामेव आटि सति झकारस्याऽनादित्वा'दन्त'इत्यमादेशो[5] न सिद्ध्येत् । 'प्रत्यय' इत्यस्याऽननुवृत्तौ तु 'उज्झिता'[6] [7]'उज्झितुम्' [8]'उज्झितव्यम्' इत्यादौ धात्ववयवझकारस्याप्यन्ताऽऽदेशापत्तिः स्यात् ।

## 'सुप'इतिशब्दः

[9]'अव्ययादापूसुपः' इतिसूत्रे 'सुप' इतिशब्दः 'उत्पद्यन्ते व्ययेभ्यःऽस्वादयः' इति वचनस्य [10]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्रासौ व्यर्थः । तथाहि–सूत्रमिदं 'तत्र शालाया[11]'मित्यादावापः '[12]कृत्वे'त्यादौ सुपश्च लुगर्थमारब्धम् । अस्य वचन-

---

1. वामनेन श्रुतिरियमुद्धृता का. 7/1/3
2. 'शीङ्स्वप्ने' धा. पा. अदा. 1032
3. 'लिङर्थे लेट्'– अष्टा. 3/4/7
4. अष्टा. 3/4/94
5. 'झोऽन्तः' अष्टा. 7/1/3. इत्यनेनेतिशेषः ।
6. 'उज्झ उत्सर्गे' धा. पा. तुदा. 1303. इति उज्झधातोः 'ण्वुलतृचौ' अष्टा. 3/1/133. इति तृचि रूपमिदम्
7. 'उज्झ उत्सर्गे' धा. पा. तुदा. 1304. इति उज्झधातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' अष्टा. 3/4/10, इति तुमुनि रूपमिदम् ।
8. 'उज्झुत्सर्गे' धा.पा.तुदा. 1304, इति उज्झूधातोः 'तव्यत्तव्यानीयरः' - अष्टा. 3/2/96, इति तव्ये रूपमिदम् ।
9. अष्टा. 2/4/82 ।
10. तथाहि –
    (क) "अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति -'उत्पद्यन्तेऽव्ययेभ्यः-स्वादय' इति, यदयम् 'अव्ययादापूसुप' इतिलुकं शास्ती"त्याह. पत.व्या.म.भा. 2/4/2/82 ।
    (ख) "एवं तर्ह्येतदेवाव्ययादुत्पन्नस्य सुपो लुग्वचनं ज्ञापकम् भवन्त्यव्ययात् स्वादय इति । नह्यनुत्पन्नस्य लुगुपपद्यते" - इत्याह जि.बु.न्या. 2/4/82 ।
    (ग) "अव्ययादापूसुप इति (2/4/82) लुग्वचनं ज्ञापकं 'भवन्ति अव्ययात्स्वादय इति" - इत्याह पु. दे. ज्ञा. समु. अष्टमे द्विगुपादे पृ. 69 ।
    (घ) "इदमव्ययेभ्य इव तेभ्योऽपि सुप् एकवचनाभ्युपगमेन । यदि तु तदुत्पत्तिः सत्येव गमके यथाऽव्ययेभ्य उत्पत्तौ 'अव्ययादापूसुपः' इतिगमकम् । नान्यत्र 'एकवचन'मिति महासंज्ञाकरणात् । प्रकृते तु न तथा गमक"मिति ग्रन्थेन ज्ञापकत्वमत्राऽस्य सूचयति ह. दी.श.र. अजन्तपुंल्लिङ्गप्र. पृ. 197 ।
11. तच्छब्दात् 'सप्तम्याम्त्रल्' - अष्टा. 5/3/10. इति त्रलि तस्य 'प्रागदिशो विभक्तिः' - अष्टा. 5/3/1. इतिविभक्तिसंज्ञायां त्यदाद्यत्वे पररूपत्वे टापि सवर्णदीर्घे' तसिलादिष्वाकृत्वसुचः' - अष्टा. 6/3/35. इति पुंवद्भावे 'तद्धितश्चाऽसर्वविभक्तिः' - अष्टा. 1/1/38, इत्यव्ययत्वे तत उत्पन्नस्य सुपः 'अव्ययादापसुपः ' - अष्टा. 2/4/82. इतिलुकि रूपमिदम् ।
12. 'डुकृञ्करणे' धा.पा.तना. 1473. इति कृधातोः 'समानकर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21, इतिक्त्वाप्रत्यये तदन्तस्य 'क्त्वातोसुन्कसुनः' - अष्टा. 1/1/40. इत्यव्ययत्वे तत उत्पन्नस्य सुपः 'अव्ययादापूसुपः' अष्टा. 2/4/82. इतिलुकि रूपमिदम् ।

स्याऽसत्त्वे हि कृत्वेत्याद्यव्ययेभ्यः[1] संख्यालिङ्गकारकाऽभावेन सुबनुत्पत्त्या तल्लुगर्थमत्राऽयंशब्दो व्यर्थः । नह्येतद्वचनं विनाऽव्ययेभ्यः सुबुत्पत्तिः स्वादिसूत्रेण[2] सम्भवति । यतो 'बहुषु[3]बहुवचनम्' - इत्यादिना[4]शास्त्रान्तरेण संख्याविशेषेषु स्वादयो नियताः । नह्यव्ययेषु संख्याविशेषः सम्भवति । यतोऽव्ययानां लिङ्गसंख्याकारकाऽभावं श्रुतिराह[5] । न चाऽत्र सूत्रे आबूग्रहणस्याऽपि वैयर्थ्यं, यतः स्त्रियां विहितः '[6]अजाद्यतष्टा'बितिटाप् 'तत्र शालाया'मित्यादौ तत्रेत्याद्यव्ययेभ्योऽलिङ्गेम्यः सम्भवतीति शङ्क्यम् । यतः '[7]स्त्रिया'मिति गुणप्रधाननिर्देशः स्त्रीत्ववति पदार्थे टाबादय इति । स्त्रीत्ववति च तस्यां शालायामित्येतस्मिन् पदार्थे तत्रेत्येतदव्ययं वर्तते । यद्यपि वाक्याऽर्थोऽत्र स्त्रीत्वम्, तथापि वाक्यार्थतयैव तस्य स्त्रीप्रत्ययो द्योत्यते, सति च स्त्रीप्रत्यये पदार्थ एवं स्त्रीत्वं भवतीति तत्रेत्याद्यव्ययेभ्यष्टापो लुगर्थमत्र सूत्रे टाब्ग्रहणं चरितार्थम् । ज्ञापिते चास्मिन्वचनेऽव्ययेभ्योऽलिङ्गसंख्याकारके- भ्योऽपिसुपः सुलभतया तल्लुगर्थं शब्दोऽसौ स्वांशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु [8]प्रत्ययलक्षणेनाऽव्यायानां पदत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि तेभ्यः सुपोऽनुत्पत्त्या तेषां पदत्वं गगनकुसुमायितं स्यात् । भट्टोजिदीक्षितस्तु वार्तिककृन्मतमनुसृत्याऽत्र सूत्रे आबूग्रहणस्य वैयर्थ्यं [9]मनुते । आपोऽत्र सूत्रे वैयर्थ्येऽपि सुप इतिशब्दस्य ज्ञापकत्वे न कश्चन संशयलेश इति निश्चप्रचम् ।

---

1. 'स्वरादिनिपातमव्ययम्' -अष्टा. 1/1/37, 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' ग. सू.वै.सि.कौ. अव्य प्र.पृ. 246, 'तद्धितश्चाऽसर्वविभक्तिः' - अष्टा 1/1/38, 'कृन्मेजन्तः' - अष्टा. 1/1/39, क्त्वातोसुन्कसुनः' - अष्टा. 1/1/40, 'अव्ययीभावश्च' -अष्टा. 1/1/41, इत्यन्यतमेनाऽव्ययसंज्ञकेभ्य इत्यर्थः ।
2. 'स्वौजसमौट्छस्टाभ्यांभिस् -ङेभ्यां भ्यस्-ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्'अष्टा. 4/1/2 ।
3. अष्टा 1/4/21 ।
4. आदिपदेन 'द्व्येकयोर्द्विवचनैकवचने' - अष्टा. 1/4/22, इतिग्राह्यम् ।
5. "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ।। - इत्यार्थवर्णश्रुतिः –
भगवता 'तद्धितश्चाऽर्व-विभक्तिः' अष्टा. 1/1/38, इतिसूत्रे
भाष्ये' स्त्रीपुंनपुंसकत्वानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च,
एतानर्थान् ये न वियन्ति तदव्ययमित्युपक्षिप्य प्रमाणतया समुपन्यस्ता ।
6. अष्टा. 4/1/4 ।
7. अष्टा. 4/1/3 ।
8. 'प्रत्ययलोपे प्रत्ययलक्षणम्' - अष्टा. 1/1/62 ।
9. अनेन हि – "आब्ग्रहणं व्यर्थम्, अलिङ्गत्वा"दित्युक्तं वै. सि.कौ. अव्यय प्र.पृ. 249 ।

## 'सुहितार्थे'ति शब्दः

'[1]पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने'त्यत्र 'सुहितार्थे' तिशब्दः 'तृप्त्यर्थयोगे षष्ठी भवती'तिवचनस्य [2]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – '[3]छात्राणां पञ्चमः' '[4]बलाकायाः शौक्ल्यम्' 'फलानां[5]सुहितः' '[6]ब्राह्मणस्य कुर्वन्' '[7]ब्राह्मणस्य कृत्वा' '[8]ब्राह्मणस्य कर्तव्यम्' – 'पाणिनेः[9] सूत्रकारस्य' - इत्यादौ '[10]षष्ठी'इति षष्ठीसमास-निषेधार्थमारब्धे 'पूरणगुण, सुहितार्थ, सद्, अव्यय, तव्य समानाधिकरण' – इत्येतैः षष्ठी न समस्यते' - इत्यर्थकेऽस्मिन्सूत्रे

---

1. अष्टा. 2/2/11 ।
2. तथाहि –
"पूरणगुणेत्यत्र (2/2/11) सुहिताऽर्थयोगे षष्ठीनिषेधो ज्ञापकः तृप्त्यर्थयोगे षष्ठीभावस्य । तेन 'नाग्निस्तृप्यति काष्ठानाम्' इति सिद्ध्यती"-त्याह पु. दे.ज्ञा.समु.षष्ठे अपरपादे पृ. 66 ।
3. पञ्चानां पूरण इत्यर्थे पञ्चन्शब्दात् 'तस्य पूरणे डट्' - अष्टा. 5/2/48, इति डट्प्रत्यये 'नान्तादसंख्यादेर्मट्' - अष्टा. 5/2/49, इति डटो मडागमे डित्वाट्टिलोपे तद्धितान्तात् सौ सकारस्य रुत्वे विसर्गे च 'पञ्चमः 'इति रूपम् । छात्राशब्दात् समुदायसमुदायिसम्वन्धे 'षष्ठीशेषे' अष्टा. 2/3/50, इति शेषलक्षणा षष्ठी ।
4. शुक्लस्य भाव इत्यर्थे शुक्लशब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' अष्टा. 5/1/124; इतिभावे ष्यञ्प्रत्यये 'तद्धितेष्वचामादेः '-अष्टा. 7/2/117, इत्यादूयचो वृद्धौ 'यस्येति च' - अष्टा. 6/4/148, इतिलकारोत्तराकारस्य लोपे तद्धितान्तात् सौ सोरमि पूर्वरूपे च कृते 'शौक्ल्य'मितिरूपम् । बलाकाशब्दात् षष्ठी तु गुणगुणिसम्बन्धे 'शेषे षष्ठी' - अष्टा. 2/3/50, इतिशेषलक्षणा ।
5. सुपूर्वकात् 'हि गतौ वृद्धौ च' - धा.पा.स्वा. 1258, इति हिधातोरुपसर्गवलात् तृप्त्यर्थकात् भूते क्तप्रत्यये कृदन्तात् स्वादिकार्ये कृते सुहित इतिरूपम् । फलशब्दात् षष्ठी तु करणत्वस्याऽविवज्ञायां सम्बन्धविवक्षायां 'शेषे षष्ठी' - अष्टा. 2/3/50, इत्यनेन । पुरुषोत्तमदेवमते तु 'तृप्त्यर्थयोगे षष्ठी भवती'तिवचनादत्र फलशब्दात् षष्ठी ।
6. 'डुकृञ्करणे' धा.पा.तना. 1473, इति कृधातोर्लटि लटः शत्रादेशे कृदन्तात्सौ उगित्त्वान्नुमि सुलोपे तकारस्य संयोगान्तलोपे च कृते कुर्वन् इतिरूपम् । अत्र किङ्कर इतिशेषः । यतो नाऽत्र घटादूयपेक्षया षष्ठीब्राह्मणस्या घटं कुर्वन्निति । तथा हि सत्यसामर्थ्यादेव समासाऽप्रसक्तौ निषेधोऽयं व्यर्थः स्यात् । अत्र ब्राह्मणशब्दात् शेषलक्षणा षष्ठी 'शेषे षष्ठी' - अष्टा. 2/3/50, इत्यनेन भवति ।
7. 'डुकृञ्करणे 'धा.पा.तना. 1473, इतिकृधातोः 'समानकर्तृकयोःपूर्वकाले' - अष्टा. 3/4/21. इति क्त्वाप्रत्यये कृदन्तात्सुपि 'क्त्वातोसुन् कसुनः' - अष्टा. 1/1/40. इत्यव्ययत्वात् 'अव्ययादाप्सुपः' - अष्टा. 2/2/82, इतिसुपो लुकि कृत्वेति रूपम् । ब्राह्मणशब्दातषष्ठी तु तादर्थ्यसम्बन्धस्य सामान्यरूपेण विवक्षणात् । ब्राह्मणसम्बन्धिनी या क्रिया तदनन्तरमिति प्रयोगाऽर्थः ।
8. 'डुकृञ्करणे' धा.पा.तना. 1473, इति कृधातोः 'तव्यत्तव्यानीयरः '-. अष्टा. 3/2/96. तव्यप्रत्यये गुणे रपरत्वे तदन्तात्सौ सोरमि कर्तव्यमितिरूपम् । 'कृत्यानां कर्तरि वा' - अष्टा. 2/3/71, इत्यनेन ब्राह्मणशब्दादत्र षष्ठी भवति ।
9. अत्रोभाभ्यां शब्दाभ्यां शेषलक्षणा षष्ठी ।
10. अष्टा. 2/2/37 ।

'फलानां सुहितः' इत्यत्र सुहितार्थयोगेषष्ठीसमासनिषेधाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावेऽत्र व्यर्थः । अस्य वचनस्याऽभावे हि [1]निष्ठायोगे षष्ठी निषेधाद्[2] यथा 'विष्णुना [3]हता दैत्याः' 'देत्यान्[4]हतवान् विष्णुः' - इत्यादौ विष्णुशब्दात्षष्ठी न भवति, तथा 'फलानां सुहितः 'इत्यत्राऽपि निष्ठायोगे षष्ठ्या [5]निषेधात् षष्ठी न भवेदिति सुहितार्थयोगे षष्ठ्या अभावात्षष्ठी [6]समासस्याऽप्राप्त्या तन्निषेधाऽर्थमुपात्तोऽयमत्र व्यर्थः । ज्ञापिते चाऽस्मिन् सुहिताऽर्थोऽत्र तृप्त्यर्थ इति तृप्त्यर्थयोगे षष्ठ्याः सुलभतया 'फलानां सुहितः' इत्यत्र प्राप्तस्य षष्ठीसमासस्य[7]निषेधार्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'नाग्निस्तृप्यति काष्ठाना'मित्यत्र तृप्त्यर्थयोगे 'काष्ठाना'मिति षष्ठ्याः साधुत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि तृप्त्यर्थयोगे षष्ठ्या असम्भवान्नाऽत्र षष्ठ्याः साधुत्वं सिद्ध्येत् ।

पुरुषोत्तमदेवोक्तमत्र. 'सुहिताऽर्थे'तिशब्दस्योक्तवचनज्ञापकत्वं न युक्तम् । यतोऽस्य वचनस्याऽभावेऽपि शेषत्वविवक्षैव नियता सुहिताऽर्थयोगे करणस्येति 'फलानां- सुहितः'इत्यत्र करणस्यैव शेषत्वविवक्षया [8]षष्ठी सुलभा । न चाऽत्र निष्ठायोगे षष्ठीनि[9]-षेधः शङ्कनीयः, कृद्योगलक्षणाया[10]एव हि षष्ठ्या निष्ठायोगे निषेधो भवतीति मन्ये ।

## 'से'इति-शब्दः

'थासः[11]से'इत्यत्र 'से'इतिशब्दः ' [12]लादेशानां टेरेत्वं न भवती'तिवचनस्य [13]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽयं शब्दो व्यर्थः । तथाहि – '[14]एधसे'

---

1 'क्तक्तवतू निष्ठा' - अष्ठा. 1/1/26 ।
2. 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' - अष्टा. 2/3/69, इत्यनेनेतिशेषः ।
3. 'हन हिंसागत्योः' - धा.पा.अदा. 1012, इति हन्धातो भूते कर्मणि 'निष्ठा' - अष्टा. 3/2/102. इत्यनेन क्तप्रत्यये तदन्ताज्जसि विभक्तौ रूपमिदम् ।
4. 'हन हिंसागत्योः 'धा.पा. अदा. 1012, इति हन्धातो भूते कतर्त्तरि 'निष्ठा' - अष्टा. 3/2/102. इत्यनेन क्तवतुप्रत्यये तदन्तात् सौ उगित्त्वान्नुमि नान्तलक्षणोपधादीर्घे सुलोपे तकारम्य संयोगान्तलोपे च कृते रूपमिदम् ।
5 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' - अष्टा. 2/3/69, इत्यनेनेतिशेषः ।
6. 'षष्ठी' अष्टा. 2/3/50, इत्यनेनेतिशेषः ।
7. 'षष्ठी' अष्टा. 2/3/50, इत्यनेनेतिशेषः ।
8. 'शेषेषष्ठी' - 2/3/50, इत्यनेनेतिशेषः ।
9 'नलोकाव्ययनिष्ठा खलर्थतृनाम्' - अष्टा. 2/3/69 ।
10. 'कर्तृकर्मणोः कृति' - अष्टा. 2/3/65, इति विहिताया इत्यर्थः ।
11. अष्टा. 3/4/80 ।
12. 'तिङ'मित्यर्थः ।
13. तथाहि –

इत्यादौ थासः 'से' इत्यादेशाऽर्थमारब्धे 'टितो लकारस्य यस्थास्तस्य सेशब्द आदेशो भवती'त्यर्थकेऽस्मिन्सूत्रेऽयं शब्दो व्यर्थः । 'थः[1]सः' - इति न्यासेनाऽपि थकारस्य सकारे कृते परस्य भागस्य [2]टेरेत्वे[3] कृते 'एधसे' - इत्यादिप्रयोगाणां सिद्धिर्हि सुलभा । ज्ञापिते चाऽस्मिन् वचने 'थःस' इति न्यासेन थकारस्य सकारे कृते परभागस्य[4]टेरेत्वं[5] न प्राप्नोतीति 'एधसे' इत्यादिप्रयोगाणां सिद्ध्यर्थमेकादेशविधानाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु '[6]एधिता' '[7]एधितारौ' –

---

(क) "टेरेत्वेनैव सिद्धम् एकारान्तत्वे यदेकारान्तत्वमादेशस्य क्रियते, तत् 'तिङामादेशानां टेरेत्वं न भवति 'इतिज्ञापनार्थम् । तेन डारौरस्प्रभृतिषु टेरेत्वं न भवतीति - पक्ता, पक्तारौ, पक्तार इती"त्याह जि.बु.न्या. 3/4/80 ।

(ख) "थासः से, इति (3/4/80) एकारवानादेशो लादेशानां टेरेत्वाभावं ज्ञापयति । तेन डारौरस्सु टेरेत्वं न भवती"त्याह पु.दे.ज्ञा.समु.द्वादशे धातुसम्बन्धपादे पृ. 75 ।

(ग) "इह 'थः सः' इति वक्तव्यम्, थकारस्य सकारे कृते परभागस्य टेरेत्वे सति सिद्धमिष्टम् । पचतः । पचथ अत्रापि प्राप्नोति ? 'आत्मनेपदानाम्' इतिवर्तते । एवमप्याथम- स्थकारस्य प्राप्नोति ? धातोरिति वर्तते – धातोरनन्तरो यस्थकार इति । इहापि तर्हि न प्राप्नोति - पचसे, चिनुसे इति ? विकरणेन व्यवधानात् । क्व तर्हि स्यात् ? य एते लुग्विकरणाः श्लुविकरणाः, श्नम्विकरणाः । तस्मात् थासः से इति वक्तव्यम् । एवमपि स शब्द एवादेशो विधेयः । टेरेत्वेनैव सिद्धम् ? ज्ञापकार्थम् । एतज्ज्ञापयति -आत्मनेपदानां य आदेशास्तेषां टेरेत्वं न भवति । तेन पक्ता, पक्तारौ, पक्तार इति डारौरसामेत्वं न भवती"त्याह ह.मि.पदम. 3/4/80 ।

(घ) "तङादेशानां टेरेत्वं नेति ज्ञापकमेकारोच्चारणम्"इत्याह भ.ना.ल.शे. भ्वादि प्र.पृ. 34 ।

(ङ) "एकारोच्चारणं ज्ञापनार्थम्" - इत्याह ज्ञा. भि.त. वो. भ्वादि प्र. पृ. 34 ।

14. 'एध वृद्धौ'-धा.पा.भ्वा. 2, इतिएध्धातोर्लटि थासि'थासः 'से' इत्यादेशे शपि रूपमिदम् ।

1 'थासः से' - अष्टा. 3/4/80, इति न्यासमकृत्वेतिशेषः ।

2 'अचोऽन्त्यादि टि' - अष्टा. 1/1/64, इत्यनेन टिसंज्ञकस्य सकारोत्तराऽकारस्येत्यर्थः ।

3. 'टित आत्मनेपदानां टेरे' - अष्टा. 6/4/79, इत्यनेनेतिशेषः ।

4. 'अचोऽन्त्यादि टि' - अष्टा. 1/1/64, इतिटिसंज्ञकस्य थासादेशसकारोत्तराऽकारस्येत्यर्थः ।

5. 'टित आत्मनेपदानां टेरे' - अष्टा. 6/4/79, इत्यनेनेतिशेषः ।

6. 'एधवृद्धौ' धा.पा.भ्वा. 2, इति एधधातोर्लुटि ते तासिप्रत्यये वलादिलक्षणे इडागमे 'लुटः प्रथमस्य.' - अष्टा. 2/4/85, इति तेर्डादेशे डित्त्वात् टेरासो लोपे कृते रूपमिदम् ।

7. 'एधवृद्धौ' धा.पा. भ्वा. 2, इतिएधूधातोर्लुटि, लुटः आतामादेशे तासिप्रत्यये वलादिलक्षणे इडागमे 'लुटः प्रथमस्य डारौरसः' - अष्टा. 2/4/85, इति आतामो रावित्यादेशे 'रिच' अष्टा. 7/4/51, इतितासः सकारस्य लोपे रूपमिदम् ।

[1]एधितारः'[2]इत्यादौ [3]डारौरसां [4]टेरेत्वाऽभावः[5] । अस्य वचनस्याऽसत्त्वे हि डारौरसां टेरेत्वाऽऽपत्तिरत्र दुर्वारा स्यात्

## 'से'टीतिशब्दः

''थलि[6]च सेटीडन्तो वे'त्यत्र 'सेटी'तिशब्दः '[7]प्रधानान्वाचयशिष्टयोः प्रधानशिष्टे संप्रत्ययः' इतिपरिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽयं शब्दो व्यर्थः । तथाहि '[9]लुलविथे'त्यत्र [10]चतुर्णां स्वराणां पर्यायेण सिद्ध्यर्थमारब्धे 'सेटि थलि इड्वा

---

1. 'एध वृद्धौ' धा.पा.भ्वा. 2, इति एध्धातोर्लुटि लुटः झाऽऽदेशे'स्यतासी लृलुटोः' - अष्टा. 3/1/33. इतितासिप्रत्यये वलादिलक्षणे इडागमे 'लुटः प्रथमस्य डारौरसः' - अष्टा. 2/4/85. इति झस्य रसादेशे 'रिच' - अष्टा. 7/4/51, इतितासः सकारस्य लोपे धातोरुकारस्याऽऽर्धधातुकलक्षणे गुणे ओकारे अवादेशे च कृते रूपमिदम् ।
2. अत्रादिपदेन 'पक्ता' पक्तारौ' 'पक्तारः 'इत्यादिप्रयोगा ग्राह्याः ।
3. 'लुटः प्रथमस्य डारौरसः' - अष्टा. 2/4/85, इत्यनेन विहितानामित्यर्थः ।
4. 'अचोऽन्त्यादि टि' - अष्टा. 6/4/79, इत्यनेन टिसंज्ञकानाम् - ताऽऽतांझाऽऽदेशानां डारौरसामाकारौकाराणामित्यर्थः ।
5. 'टित आत्मनेपदानां टेरे' - अष्टा. 6/4/79, इत्यनेनेतिशेषः ।
6. अष्टा. 6/1/196 ।
7. व्याडिः प.सू.प. 67, पृ. 29 ।
8. तथाहि –
   (क) ''शास्त्रेऽपि ज्ञापकं 'थलि च सेटीडन्तो वा' (6/1/196) इति सेड्ग्रहणम् । कथं कृत्वा ज्ञापकम् । अत्र सूत्रे सेड्ग्रहणं न कर्तव्यम् । थल्लोडन्तो वेति वक्तव्यम् । इट एव उदात्तत्वात् सेटि सम्प्रत्ययो भवति । नार्थः सेड्ग्रहणेन । पश्यति त्वाचार्यः । थलि आद्यन्तौ लिट्स्वरश्च प्रधानशिष्टः इट्स्वरश्चान्वाचयशिष्टः । तेन यत्र तावदिस्ति तत्र चत्वारो भवन्ति । यत्रेदानीमिण् नास्ति तत्र प्रधानान्वाचयशिष्टयोः प्रधानशिष्टमिष्टम् । तेन त्रयः स्वराः स्युः । अनिटि ते माभूवन्निति सेड्ग्रहणं- क्रियते । किमेतस्या ज्ञापने प्रयोजनम् । 'अव्ययसर्वनाम्नामकच् प्राक्टेः' 'कस्य च दः' (5/3/71,72) इति । अत्राकच्सन्निनियोगेन कस्य च दकार उच्यते । अकच्प्रत्ययो भवति । यत्र ककारस्य दकारो भवति तत्रैव स्यात् ततोऽन्यत्र न स्यात् । अस्यां पुनस्सत्यां न दोषो भवति । अकच् अत्र प्रधानः, चकारोन्वाचयशिष्टः । तेन यत्रापि ककारस्य दकारो नास्ति तत्राप्यकच् सिद्धो भवती''त्याह व्याडिः पृ. सू. प. 67, पृ. 29-30 ।
9. 'लूञ्छेदने' धा. पा. क्र्या. 1580, इति लूधातोर्लिटि सिपि थलादेशे क्र्यादिनियमाद् इडागमे द्वित्वादिषु कृतेषु धातोरुकारस्य आर्धधातुकलक्षणे गुणे ओकारेऽवादेशे च कृते रूपमिदम् ।
10. 'थलिच.' - अष्टा. 6/1/196, इति इटः उदात्तस्वरः, आद्युदात्तत्वम् इटः' इट एव अन्तोदात्तत्वम्, यदा नैते त्रयः स्वराः, तदा'लिति'- अष्टा. 6/1/193, इति प्रत्ययात् पूर्वस्योदात्तत्वमिति चतुर्णामित्यस्याऽर्थः ।

उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्या'मित्यर्थकेऽस्मिन्सूत्रे 'ययाथे[1]'त्यत्र 'लिति[2]' प्रत्ययात्पूर्वमेवोदात्तम् – इत्ययमेवाऽत्र यथा स्यादित्येतदर्थं शब्दोऽयमुपात्तः । स चाऽस्याहभावेऽत्र व्यर्थः । 'थलिडन्तो वे'त्युक्तावेव हि इट एव उदात्तत्वात् सेटीत्यस्य सम्प्रत्ययः सुलभ इति 'ययाथे'त्यत्र सेट्त्वाऽभावादेव सूत्रस्याऽस्याऽप्रवृत्तिः सुलभा । ज्ञापितायां चाऽस्यां परिभाषायां थलि आद्यन्तो लिट्स्वरश्च[3]प्रधानशिष्टः, इट्स्वरश्चाऽन्वाचयशिष्ट[4] इति यत्र 'लुलविथे'त्यत्र चत्वारो भवन्तु, 'ययाथे'त्यत्र यत्रेदादानीमिण्नास्ति तत्र प्रधानाऽन्वाचयशिष्टयोः प्रधानशिष्टमिष्टमिति – त्रयः स्वरा आपद्येरन्, अनिटि 'ययाथे'त्यत्र आपद्यमानास्ते त्रयः स्वरा माभूवन्नित्येतदर्थं शब्दोऽयमत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु '[5]उच्चकै' – रित्यादौ[6] '[7]अव्ययसर्वनाम्नामकच्प्राक्टे'-रित्यकच्प्रत्ययसिद्धिः ।· अस्या असत्त्वे हि यत्र 'धकित्[8]' – '[9]इत्यादौ' [10]अव्ययसर्वनाम्नामकच्प्राक्टे'रित्यकच्सन्नियोगशिष्टः 'कस्य[11]च दः' इति ककारस्य दकारोऽन्वायचयशिष्टः, तत्रैवाऽकच्प्रत्ययः स्यात्, यत्र च 'उच्चकै' - रित्यादौ 'कस्य[12]च दः' इति ककारस्य दकारोनाऽन्वाचय- शिष्टस्त- त्राऽकच्प्रत्ययो न सिद्ध्येत् । सत्यां त्वस्यां परिभाषायाम् '[13]अकच्' प्रधानशिष्टः, ककारस्य दकारस्तु 'कस्य च दः[14]' इति चकारादन्वाचयशिष्ट इति यत्राऽपि ककारस्य दकारोऽन्वाचयशिष्टो नास्ति तत्राऽपि 'उच्चकै'रित्यादौ [15]अकच्प्रत्ययः सिद्ध्यति ।

---

1. 'या प्रापणे' धा. पा. अदा. 1049, इतियाधातोर्लिटि सिपि सिपस्थलादेशे 'अचस्तास्वत्थल्यनिटोनित्यम्' - अष्टा. 7/2/61. इतीण्निषेधेन इडागमाऽभावे द्वित्वादिषु कृतेषु रूपमिदम् ।
2. अष्टा. 6/1/193 ।
3. 'थलि च सेटीडन्तो वा' - अष्टा. 6/1/196. इत्येनेनतिशेषः ।
4. 'थलि च सेटीडन्तो वा' - अष्टा. 6/1/196. इत्यनेनेतिशेषः ।
5. 'उच्चै'सित्यव्ययात् 'अव्ययसर्वनाम्नामकच्प्राक्टेः ' - अष्टा. 5/3/71, इत्यकचि रूपमिदम् ।
6. अत्राऽऽदिपदेन 'नीचकै'रिति ग्राह्यम् ।
7. अष्टा. 5/3/71 ।
8. 'धिक' - इत्यव्ययात् 'अव्ययसर्वनाम्नामकच्प्राक्टेः' - अष्टा. 5/3/71, इत्यकचि 'कस्य च दः' – अष्टा. 5/3/72, इति अक्च्सन्नियोगेन ककारस्य दाकाराऽऽदेशे च कृते रूपमिदम् ।
9. अत्राऽऽदिपदेन हिरुक् – 'हिरकुत्' - पृथक् – 'पृथकत्' – इति ग्राह्यम् ।
10. अष्टा. 5/3/71 ।
11. अष्टा. 5/372 ।
12. अष्टा. 5/3/72 ।
13. 'अव्ययसर्वनाम्नामकच्प्राक्टेः' - अष्टा. 5/3/71 ।
14. अष्टा. 5/3/72 ।
15. 'अव्ययसर्वनाम्नाम्.' - अष्टा. 5/3/71, इत्यनेनेतिशेषः ।

## 'सेटी'तिशब्दः

'[1]निष्ठायां सेटी'त्यत्र 'सेटी'तिशब्दः 'पूर्वस्माद्विधौ स्थानिवद्भावोऽनित्यः क्वचिदिष्यते' - इति वचनस्य[2]ज्ञापकः । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – '[3]कारित'मित्यादौ[4] णिलोपाऽर्थमारब्धे 'निष्ठायां सेटि परतो णेर्लोपोभवती'त्यर्थकेऽस्मिन् 'संज्ञपितः[5] पशु'रित्यत्र णिलोपाऽभावाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । 'संज्ञपितः पशुरि'त्यंत्र यदि ह्यनिटि पूर्वेण[6]णिलोपः स्यात्तदा सेड्ग्रहणमनर्थकं स्यात् '[7]निष्ठाया'मित्येव ब्रूयात्, अत आरम्भ सामर्थ्यादिव 'निष्ठायां सेटी, ति सेडर्थो भविष्यति, अत्र च [8]सनीवन्तर्धे'ति [9]ज्ञपेरिटि विकल्पिते 'यस्य[10]विभाषे'ति निष्ठायां प्रतषेधो भवति इति नायं सेट् ।

---

1. अष्टा. 6/3/52 ।
2. तथाहि –
निष्ठायां सेटीत्यत्र (6/4/52) आरम्भसामर्थ्यादिव सेडर्थतायां लब्धायां सेड्ग्रहणं किल णिलोपे कालावधारणार्थं कृते निष्ठायाम् इटि कृते णिलोपो यथा स्यात् । प्राक्णिलोपे हि कारितामित्यादौ एकाच उपदेशे (7/2/10) इत्यनेन एकदेशविकृतमिति स एवायं करोतिरितीट्निषेधः स्यात् । एतच्चाऽप्रयोजनं पूर्वस्मादपि विधौ स्थानिवद्भाव इतिणिलोपस्य स्थानिवत्त्वात् अनेकाच्त्वे इण्निषेधो न भविष्यतीति किं सेटीत्यनेन । तर्हीदमेव सेटीति ज्ञापकं 'पूर्वस्माद्विधौ स्थानिवद्भावोऽनित्यः क्वचिदिष्यते' । तेन हे गौरित्यत्र औत्वस्य स्थानिवत्त्वात् एङ् ह्रस्वात्संबुद्धेरिति (6/1/69) न सुलोपः । प्रगणय्येत्यत्रातो लोपस्यस्थानिवत्वात्अलघुपूर्वत्वादिवर्णस्य ल्यपिलघुपूर्वादिति (6/4/56) अयादेशाप्रवृत्तिश्च न भवती''त्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 86 ।
3. 'डुकृञ्करणे' - धा. पा. तना. 1473, इति कृधातोर्ण्यन्तात्क्तप्रत्यये - इडागमे 'निष्ठायां सेटि' - अष्टा. 6/4/52, इतिणिलोपे धातोरिकारस्य गुणे रपरत्वे कृदन्तात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
4. अत्राऽऽदि पदेन 'हारित'मित्यादि ग्राह्यम् ।
5. संपूर्वकात् 'ज्ञप मारणतोषण-निशामनेषु' - धा. पा. चुरा. 1625, ज्ञप्धातोः । 'ज्ञप मिच्च' ग. सू. चु. 1625, इतिणिचि, उपधावृद्धौ' मितांह्रस्वः' अष्टा. 6/4/92, इत्युपधाह्रस्वत्वेण्यन्तात् क्तप्रत्यये 'वादान्त शान्त पूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' - अष्टा. 7/2/27, इति इट्प्रतिषेध- णिलुको र्निपातनात्सायाऽभावपक्षे रूपमिदम् ।
6. 'णेरनिटि' - अष्टा. 6/4/51, इत्यनेनेत्यर्थः ।
7. अष्टा. 6/4/52 ।
8. 'सनीवन्तर्धभ्रस्जदम्भु श्रिस्वृ यूर्णुभरज्ञपिसनाम्' - अष्टा. 7/2/49 ।
9. 'ज्ञप मिच्च' धा. पा. चुरा. 1625, इतिज्ञप्धातोरित्यर्थः ।
10. अष्टा. 7/2/15 ।

यस्य[1]विभाषे' त्यत्र 'एकाच उपदेशेऽ[2]नुदात्तात्' इत्यत्र एकाज्ग्रहणमनुवर्तते, ततोऽनेकाच्त्वाज्ज्ञपे[3]: प्रतिषेधो[4] न प्राप्नोतीति भवितव्यमिडागमेन निष्ठायामिति व्यावर्त्याऽभावादिह सेड्ग्रहणमनर्थकम्, न च ज्ञप्त[5] इत्यत्र माभूदित्येतदर्थं सेड्ग्रहणमत्र साऽर्थकमिति शङ्क्यम् । यतः क्रियमाणेऽप्यत्र सेड्ग्रहणे 'वा दान्तशान्त[6]- पूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' निपातनादत्र भवितव्यमेव णिलोपेन । इत्थमनर्थकमपि सेड्ग्रहणम् इडागमे कृते णिलोप इति कालावधारणाय कृतमिति वक्तव्यम् । असति हि सेड्ग्रहणे, कारित इति स्थिते [7]णिलोपः प्राप्नोति, [8]इट् च, तत्र कृताऽकृतप्रसङ्गित्वेन णिलोपेनैव[9]भवितव्यम्, णिलोपे च सत्येकदेशविकृतस्यानन्यत्वात्स[10] एवाऽयं करोतिरिति 'एकाच उपदेशेऽ[11]नुदात्तात्' इतीट्प्रतिषेधः प्रसज्येत, ततश्च कारितमित्येतन्न सिद्ध्येदिति कालावधारणार्थमत्र[12]सेड्ग्रहणमिति निश्चप्रचम् । अस्य वचनस्याऽभावे हि कालावधारणार्थमपि 'सेटी'त्ययं शब्दोऽत्र व्यर्थः, पूर्वस्मादपि विधौ स्थानिवद्भाव[13] इति णिलोपस्य[14] स्थानिवत्वात् अनेकाच्त्वे 'कारित'मित्यत्र इण्निषेधाऽ[15]भावोऽस्य शब्दशब्दस्याऽभावेऽपि हि सुलभः । ज्ञापिते चाऽस्मिन्वचनेऽनेन कारितमित्यादौ पूर्वस्माद्विधौ स्थानिवद्भावो[16] न भवतीति कालावधारणार्थं सेटीति शब्दोऽत्र स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'हेगौरित्यत्र[17]

---

1. अष्टा. 7/2/15 ।
2. अष्टा. 7/2/10 ।
3. 'ज्ञपमिच्च' धा. पा. चुरा. 1625, इति ज्ञप्धातोरित्यर्थः ।
4. 'यस्य विभाषा' - अष्टा. 7/2/15, इत्यनेनेतिशेषः ।
5. 'ज्ञप मिच्च' धा. पा. चुरा. 1625, इतिज्ञप्धातोर्णिचि उपधावृद्धौ'मितांह्रस्वः' - अष्टा. 6/4/92, इत्युपधाह्रस्वत्वें ण्यन्तात् क्तप्रत्यये 'वा दान्त शान्त पूर्णदस्त स्पष्टच्छन्नज्ञप्ताः' - अष्टा. 7/2/27, इत्यनेनं इट्प्रतिषेध-णिलुकोर्निपातनपक्षे रूपमिदम् ।
6. अष्टा. 7/2/27 ।
7. 'णेरनिटि' - अष्टा. 6/4/51, इत्यनेनेतिशेषः ।
8. 'आर्धधातुकस्येड्वलादेः' - अष्टा. 7/2/35, इत्यनेनेतिशेषः ।
9. 'णेरनिटि' - अष्टा. 6/4/51, इत्यनेनेतिशेषः ।
10. 'एकदेशविकृतमनन्यवत्' प. शे. प. 38, पृ. 164, इत्यनयेतिशेषः ।
11. अष्टा. 7/2/10 ।
12. 'निष्ठायां सेटि' - अष्टा. 6/4/52 ।
13. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
14. 'णेरनिटि' - अष्टा. 6/4/51 ।
15. 'एकाच उपदेशेऽनुदात्तात्' - अष्टा. 7/2/10 ।
16. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
17. गोशब्दात् सम्बुद्धौ 'गोतोणित्' - अष्टा. 7/1/90, इति सोर्णिद्वद्भावात् 'अचोञ्णिति' - अष्टा. 7/2/115, इति ओकारस्य वृद्धावौकारे सकारस्य रुत्वे विसर्गे च रूपमिदम् ।

सुलोपाऽभावः1 । अस्य वचनस्याऽसत्त्वे हि हेगौरित्यत्र औत्वस्य2 स्थानिवत्त्वात्3 4'एङ्ह्रस्वात्संबुद्धे'-रिति सुलोपाऽऽपत्तिर्दुरा स्यात् । सति चास्मिन्वचनेऽत्र पूर्वस्माद् विधौ स्थानिवद्भावो5 न भवत्यौत्वस्येति सुलोपाऽभावः6 सिद्ध्यति । प्रगणय्ये'त्यत्र7 8अयादेश-सिद्धिश्चाऽस्य वचनस्य फलम् । अस्य वचनस्याऽसत्त्वे हि 'प्रगणय्ये'त्यत्राऽतो 9लोपस्य'पूर्वस्मादपि विधौ 10स्थानिवद्भावो दुर्वार इति अलघु-पूर्वत्वादिवर्णस्य ल्यपि 11लघुपूर्वादिति अयादेशाऽप्रवृत्तेर्दुवारतया अयादेशो न सिद्ध्येत् ।

12पुरुषोत्तमदेवमात्रोक्तमत्राऽस्य शब्दस्यैतद्वचनज्ञापकत्वं सूत्रकारसम्मतमेव, न तु भाष्यकारस्याऽपि सम्मतम् । यतो भगवता न केवलमत्र सेड्ग्रहणं प्रत्याख्यातं प्रत्युत सूत्रमेवेदं प्रत्यख्यातम्13 । प्रत्याख्यानभाष्यमिदं कैयटेन चारु व्याख्यातं14 च ।

---

1. 'एङ्ह्रस्वात् सम्बुद्धेः' -अष्टा. 6/1/69, इत्यनेनेतिशेषः ।
2. 'अचोञ्णिति' - अष्टा. 7/2/115, इतिवृद्धिप्रसूतस्येत्यर्थः ।
3. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यस्य पूर्वस्माद्विधौ स्थानिवद्भाव इत्यर्थेऽनेनेतिशेषः ।
4. अष्टा. 6/1/69 ।
5. 'अचः परस्मिन्पूर्वविधौ'-अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
6. 'एङ्ह्रस्वात् सम्बुद्धेः '-अष्टा. 6/1/69, इत्यनेनेतिशेषः ।
7. 'प्रपूर्वकाद् 'गण संख्याने' धा. पा. चुरा. 1854, इतिगणधातोर्णिचि 'अतो लोपः' अष्टा. 6/4/48, इत्यतोलोपे 'प्रगणि' इत्यम्माद्धातोः 'समानकर्तृकयोः पूर्वकाले 'अष्टा. 3/4/21, इति क्त्वाप्रत्यये प्रशब्देन समासे 'समासे नञ्पूर्वे क्त्वोल्यप्' -अष्टा. 7/x/37, क्त्वो ल्यबादेशे 'ल्यपि लघुपूर्वात्' -अष्टा. 6/4/56, इतिणेरयादेशेकृदन्ताद्विभक्तेरव्यत्वाल्लुकि रूपमिदम् ।
8. 'ल्यपि लघुपूर्वात्'-अष्टा. 6/4/56, इत्यनेनेतिशेषः ।
9. 'अतोलोपः' – अष्टा. 6/4/48, इतिकृतस्येतिशेषः ।
10. 'अचः परस्मिन्पूर्वविधौ' - अष्टा. 1/1/57, इत्यनेनेतिशेषः ।
11. अष्टा. 6/4/56 ।
12. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 86 ।
13. तथाहि –
"एवं तर्हि नार्थः- सेड्ग्रहणेन, नापि सूत्रेण । कथम्?। सप्तमे योगविभागः करिष्यते । इद-मस्ति - निष्ठा नेड् भवति । ततो'णेः' – ण्यन्तस्य निष्ठायां नेड्भवति । कारितम् हारितम् । ततो 'वृत्तम्' । वृत्तमिति च निपात्यते । किं निपात्यते? । णे र्निष्ठायां लोपो निपात्यते । किं प्रयोजनम् ? । नियमार्थम् । अत्रैव णे र्निष्ठायां लोपो भवति नान्यत्र । क्व माभूत्? । कारितम् हारितम् । इहापि तर्हि प्राप्नोति -वर्तितमन्नम्; वर्तिता भिक्षेति । ततः 'अध्ययने' । अध्ययायने चेद् वृत्तिर्वर्तत इती"त्याह पत. व्या. म. भा. 6/4/2/652 ।
14. "सप्तमे योगविभाग इति । 'णेरध्ययने वृत्त'मिति योगं विभज्य योगत्रयं करिष्यते । क्रम-विपर्यासश्चाऽऽश्रीयते । 'णे'रित्येको योगः । तत्र 'निष्ठायां ने'डिति वर्त्तते । ततो 'वृत्त'-मिति द्वितीयो योगो णिलोपनियमार्थो गुणप्रतिषेधार्थश्च, अनेकप्रयोजनत्वान्निपातनानाम् । अथवा वृत्तं वृत्तमित्येकशेषाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भविष्यति । ततोऽध्ययन इति तृतीयो योगो वृत्तशब्दस्याऽर्थविशेषनियमार्थः" इत्याह कै. प्रदी. 6/4/2/52 ।

## 'स्त्रिया'मितिशब्दः

1'णचः स्त्रियामञ्'. इत्यत्र 'स्त्रिया'मितिशब्दः 'स्वार्थिकाः प्रकृतितोलिङ्ग-वचनान्यतिवर्तन्तेऽपि'2 इतिपरिभाषाया ज्ञापकः3 । यतोस्याः परिभाषाया अभावेऽत्रायं शब्दो व्यर्थः । तथाहि–'व्यावक्रोशी'4 इत्यादौ5 णजन्तादञ्विधानार्थमारब्धे

---

1. अष्टा. 5/4/14 ।
2. (क) 'स्वार्थिका एव प्रत्ययाः, प्रकृतितो लिङ्गवचान्यतिवर्तन्ते' व्याडिः पा. पा. प. 74, पृ. 41 ।
   (ख) पु. दे. ल. प. वृ. प. 58, पृ. 138 ।
   (ग) सी. दे. बृ. प. वृ. प. 58, पृ. 223 ।
   (घ) 'स्वार्थिकाः प्रत्ययाः, प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' - नी. दी. प. वृ. प. 73, पृ. 307 ।
   (ङ) 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' - ह. भा. प. भास्क. प. 60, पृ. 348 ।
3. तथाहि–
   (क) "स्त्रीग्रहणं किमर्थं, न स्वार्थिकोऽयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते?। एवंतर्हि सिद्धे सति यतः स्त्रीग्रहणं करोति - तज्ज्ञापयत्याचार्यः - 'स्वार्थिका अतिवर्त्तन्तेऽपि लिङ्गवचनानी'ति । किमेतस्य ज्ञापने प्रयोजनम् ? गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत् सिद्धं भवती"त्याह प. व्या. म. भा. 5/4/1/14 ।
   (ख) "स्त्रीग्रहणं किमर्थम्, यावता णच् स्त्रियामेव विहितः, ततः स्वार्थिकस्तत्रैव भविष्यति? एवं तर्ह्येतज्ज्ञापयति – स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि । तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवतत्येवमादि उपपन्नं भवती'त्याह जया. क. 5/4/14 ।
   (ग) "ज्ञापकं चात्र स्वार्थिकानां लिङ्गवचनानामतिक्रणे 'णचः स्त्रियामञ्' (5/4/14) इत्यत्र स्त्रियामिति पदम् । तत्र ह्युक्तं - कर्मव्यतिहारे णच् स्त्रियाम्' (3/3/43) इति णच् विहितः । तदन्तादयं स्वार्थिकोऽञ् इति प्रकृतिगतेन लिङ्गेन सिद्धो भविष्यति । किं स्त्रियामित्यनेन । तत्कृतं स्वार्थिकाः प्रकृतिगतं लिङ्गमतिवर्तन्तेऽपि इत्यस्यार्थस्य ज्ञापकमेव भविष्यति"– इत्याह पु. दे. ल. प. वृ. पृ. 58, पृ. 138 ।
   (घ) "ज्ञापकं चात्र 'णचः स्त्रियामञ्' (5/4/14) इत्यत्र स्त्रियामिति वचनम् । लिङ्गानतिक्रमे हि स्त्रियामिति न कर्तव्यम् । 'कर्मव्यतिहारे णच् स्त्रियाम्' (3/3/43) इति णचः स्त्रियामेव विधानात्स्त्रियामञपि सिद्ध इती"त्याह सी. दे. बृ. प. वृ. प. 58, पृ. 223 ।
   (ङ) " 'णचः स्त्रियामञ्' (5/4/14) इत्यत्र स्त्रियां ग्रहणं ज्ञापकमस्याः । अन्यथा 'कर्मव्यतिहारे णच् (3/3/43) इति णचः स्त्रियामेव विधानात् किं स्त्रियामित्यनेने"त्याह नी. दी. प वृ. प. 73, पृ. 307 ।
   (च) "ज्ञापकं चात्र 'णचः स्त्रियामञ्' (5/4/14) इत्यत्र स्त्रियां ग्रहणम् । अन्यथा 'कर्मव्यतिहारे णच् स्त्रियाम्' (3/3/43) इतिस्त्रियामेव णच् विहितः किं तेन । तस्य च ज्ञापकस्य सामान्यापेक्षतया वचनातिक्रमविषयतापि बोध्या" – इत्याह ह. भा. प. भास्क. प. 60. पृ. 348 ।
4. व्यवपूर्वात् 'क्रुश आह्वाने रोदने च' धा. पा. भ्वा. 856. इति क्रुशधातोः 'कर्मव्यतिहारे णच् स्त्रियाम्' - अष्टा. 3/3/43. इति स्त्रीलिङ्गे भावे णच्प्रत्यये 'कृद्ग्रहणे

"कर्मव्यतिहारे णच् स्त्रियाम्' इति – णज्विहितः, तदन्तात् स्वार्थेऽञ्प्रत्ययो भवती"- त्यर्थकेऽस्मिन्सूत्रेऽञः स्त्रीत्वविषयताद्योतनाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्याऽअभावे व्यर्थः । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्त इति कृत्वा 'व्यावक्रोशी'त्यादौ णचः स्त्रियां विहिततया तदन्ताद्विहितस्य अञः स्त्रीविषयत्वं हि स्वतः सिद्धम् । ज्ञापितायां चाऽस्यां परिभाषायामनया स्वार्थिकानां प्रत्ययानां प्रकृतिगतस्य लिङ्गस्य वचनस्य चातिक्रमोऽपि कदाचिद् भवतीति लिङ्गवचनाऽतिक्रमवारणायशब्दोऽयमत्राञः स्त्रीत्वविषतां द्योतयितुं स्वांऽशे चरिताऽर्थो भवति । ज्ञापकस्याऽस्य सामान्यापेक्षतया वचनातिक्रमविषताऽपि बोध्यत इति वचनाऽतिक्रमोऽपि स्वार्थिकानां प्रत्ययानां ज्ञापकेनाऽनेन ज्ञाप्यत इति बोध्यम् । अस्यामपिशब्दोपादानात् क्वचित् स्वार्थिकप्रत्ययानां प्रकृतिगतलिङ्गवचनयोरतिक्रमाभावोऽपि बोध्यते । ज्ञापिताया अस्याः फलं तु 'कुटीर'1 इत्यादौ2 प्रकृतेः स्त्रीलिङ्गत्वेऽपि प्रत्ययान्तस्य पुंलिङ्गता-सिद्धिः, 3पचन्तिरूपमित्यादौ4 प्रकृतेर्बहुवचनत्वेऽपि प्रत्यायान्तस्यैकवचनत्वसिद्धिश्च । अस्या असत्वे हि नाऽत्र लिङ्गवचनयोरतिक्रमः सिद्ध्येत् । 'कुत्सितोऽश्वोऽश्वकः'5 प्रशस्तो वैयाकरणो वैयकरणरूपः'6 – इत्यादौ लिङ्गवचनाऽनतिक्रमोऽप्यस्याः फलम् । यतोऽस्यामपि– शब्दाऽनुपादानेऽत्र लिङ्गवचनाऽनतिक्रमो न सिद्ध्येत् ।

---

गतिकारकपूर्वस्याऽपि ग्रहणम्' प. शे. प. 29, पृ. 144, इति गत्योरपि णजन्तेऽनुप्रवेशात्समुदायात् 'णचः स्त्रियामञ्' - अष्टा. 5/4/14, इति अञ्प्रत्यये 'तद्धितेष्वचामादेः' - अष्टा. 7/2/117 इत्यङ्गस्याद्यचो वृद्धौ अञन्तात् 'टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्तयप्ठक्-ठञ्-कञ्-क्वरपः' -अष्टा. 4/1/15, इतिङीपि 'यस्येति च' अष्टा. 6/4/148, इत्यकारलोपे स्वादिकार्येषु कृतेषु रूपमिदम् । अत्र 'न य्वाभ्यां पदान्ताभ्यां पूर्वौतु ताभ्यामैच्'-. अष्टा. 7/3/3, इत्यैजागमस्तु न भवति, न कर्मव्यतिहारे' -अष्टा. 7/3/6, इतिनिषेधात् । परस्परं निन्दक इति च प्रयोगाऽर्थः ।

5. अत्राऽऽदिपदेन 'व्यावहासी'ति ग्राह्यम् ।

1. 'ह्रस्वा कुटी' - इत्यर्थे कुटीशब्दात् 'कुशीशमीशुण्डाभ्यो रः' -अष्टा. 5/3/88, इति रप्रत्यये तद्धितान्तात्सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।

2. अत्राऽऽदिपदेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवता, चातुर्वण्यम्, त्रैलोक्यमिति ग्राह्यम् ।

3. तिङश्चेत्यनुवर्तनात्' प्रशंसायां रूपप्'- अष्टा. 5/3/66, इतिपचन्तीति तिङन्तात् प्रशंयायां रूपप्प्रत्यये कृते रूपमिदम् ।

4. अत्राऽऽदिपदेन पचतिरूपम् पचतोरूपमितिग्राह्यम् ।

5. अश्वशब्दात्' कुत्सिते' अष्टा. 5/3/74, इतिअकचि रूपमिदम् । योऽश्व एव सन् तत्साध्यां क्रियां सुष्ठु न करोति स एवमुच्यते ।

6. वैयाकरणशब्दात् प्रशंसायां 'प्रशंसायां रूपप्'-अष्टा. 5/3/66 इतिरूपप्प्रत्यये रूपमिदम् ।

## 'स्तौती'तिशब्दः

'उपसर्गात् सुनोतिसुवति स्यति स्तौति[1] स्तोभति स्थासेनयसेध सिचसञ्जस्वञ्जाम्' - इत्यत्र 'स्तौती'तिशब्दः [2]'निमित्ताऽभावे नैमित्तिकस्याप्यभावो भवती'तिपरिभाषाया ज्ञापकः[3] । यतोऽस्या अभावेऽत्राऽयं शब्दोऽनुपपन्नः । उपदेशे 'ष्टु'[4] इत्यस्य शब्दस्य षकारस्य 'धात्वादेः[5] षः सः' इति सकारे कृते टकारस्य[6] निवृत्तौ प्रमाणाऽभावाद्धि 'स्तौती'तिशब्दोऽत्राऽनुपपन्नः । ज्ञापितायां चाऽस्यामनयाऽत्र षकारस्य निवृत्तौ[7] षकारनिमित्तस्य ष्टुत्वस्य[8]निवृत्तिः सुलभा भवती-तिशब्दोऽयमुपपद्यते । ज्ञापिताया अस्याः फलं तु 'पपुषः'[9] इत्यादौ[10]

---

1. अष्टा. 8/3/65 ।
2. (क) व्याडिः प. सू. प. 40, पृ. 19 ।
   (ख) 'निमित्तापाये नैमित्तिकस्याप्यपायः' – पु. दे. ल. प. वृ. प. 113, पृ. 158 ।
   (ग) 'निमित्तापाये नैमित्तिकस्याप्यपायः' - सी. दे. वृ. प. वृ. प. 99, पृ. 256 ।
   (घ) 'निमित्तापाये नैमित्तिकस्याप्यपायः' - नी. दी. प. वृ. प. 64, पृ. 306 ।
   (ङ) 'निमित्तपाये नैमित्तिकस्याप्यपायः' - ह. भा. प भास्क. प. 101, पृ. 365 ।
3. तथाहि–
   "शास्त्रेऽपि ज्ञापकं यदयं सुनोत्यादिषु स्तौतीति ब्रवीति । कथं कृत्वा ज्ञापकम् । अत्र ष्टु इत्ययं शब्द उपदेशे पठितः । तस्य धात्वादेरिति षकारस्य सकारः कृतः । षत्वनिमित्तं च ष्टुत्वम् । तस्याभावे ष्टुत्वस्याऽभावो भवति । ततः स्तौतीति भवति । एवं निमित्ताभावे इति सिद्धम् । तस्या ज्ञापने प्रयोजनम् – पपुषः तस्थुषः इत्यत्र वलृनिमित्तक इट् वलभावे तस्याप्यभावः''इत्याह व्याडिः प. सू. प. 40, पृ. 19-20 ।
4. ष्टुञ् स्तुतौ' धा. पा. अदा. 1043 ।
5. अष्टा. 6/1/64 ।
6. 'ष्टुना ष्टुः' - अष्टा 8/4/41 इति ष्टुत्व-निष्पन्नस्येतिशेषः ।
7. 'धात्वादेः षः सः' - अष्टा. 6/1/64, इत्यनेनेतिशेषः ।
8. 'ष्टुना ष्टुः' - अष्टा. 8/4/41, इत्यनेन जातस्य टकारस्येत्यर्थः ।
9. 'पा पाने' धा. पा. भ्वा. 925, इति पाधातो र्लिटि तस्य 'क्वसुश्च' अष्टा. 3/2/107. क्वसुरादेशे वलादिलक्षणे इडागमे द्वित्वादिषु कृतेषु-'आतो लोप इटि च' - अष्टा. 6/4/64. इत्यातो लोपे पपिवस्शब्दाच्छसि विभक्तौ वकारस्य 'वसोः सप्रसारणम्' -अष्टा. 6/4/131. इति संप्रसारणे उकारे 'सम्प्रसारणाच्च' - अष्टा. 6/1/108. इति पूर्वरूपे इटो निमित्तस्य वकारस्य संप्रसारणेनाऽपाये इटः 'निमित्ताभावे नैमित्तकस्याऽप्यपायो भवती'तिपरिभाषया निवृत्तौ शसः सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
10. 'अत्राऽऽदिपदेन 'तस्थुषः' 'सेदुषः' - इत्यादीनां ग्रहणं कार्यम् । स्नातीत्यत्र मूर्धन्याभावे णत्वनिवृत्तिः, पटुभार्य इत्यत्र ङीब्निवृत्तौ यणादेशनिवृत्तिश्चाऽस्याः फलम् ।

वल्निमित्तकस्येटो[1] वलभावे[2] निवृत्तिसिद्धिः । अत्र सूत्रे 'स्था' इति शब्दोऽपि परिभाषाया अस्या ज्ञापक इतिबोध्यम् । 'ज्ञापका निर्देशा'इति प्रघट्टकेऽपि, यद्यपि ज्ञापकत्वमस्य निरूपितन्तथाऽप्यस्य प्रपञ्चोऽत्र स्थूणा-खनन-न्यायेन कृत इत्यवधेयम् । अस्यां परिभाषायामपि पदोपादानस्य फलं 'पुत्रवान् भविष्यती'त्यत्र मतुपो[3] निवृत्त्यभावः । अपिशब्दाद्धि क्वचित्कारणापाये कार्यं नापैतीति लभ्यते । अत्राऽपि शब्दाऽभावे हि [4]'तदस्याऽस्त्यस्मिन्निति मतुप्' - इति वर्तमानकालविवक्षायां कृतस्य मतुपोऽत्र भविष्यत्कालविक्षायां वर्तमाननिवृत्तौ निवृत्त्यापत्तिर्दुवारा स्यात् ।

अतएव 'विभावाऽनुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति'रिति भरतसूत्रमुपपद्यते[5] । अन्यथा रसप्रत्ययनिमित्तानां विभावादिज्ञानानामपाये रसप्रत्ययस्य नैमित्तिकस्याऽप्यभावस्य दुर्वारतया सूत्रमिदमनुपपन्नं स्यात् ।

## 'स्थाने' इतिशब्दः

'उदीचामातः स्थाने[6] यकपूर्वाया' - इत्यत्र 'स्थाने' इतिशब्दः 'विधौ परिभाषोपतिष्ठते[7] नाऽनुवादे' इतिपरिभाषाया ज्ञापकः[8] । यतोऽस्या

---

1. 'आर्धधातुकस्येड्वलादेः' – अष्टा. 7/2/35, इति-जातस्येत्यर्थः ।
2. संप्रसारणपूर्वरूपयोः कृतयोरितिशेषः ।
3. तदस्यास्त्यस्मिन्निति मतुप्' – अष्टा. 5/2/94, इतिविहितस्येत्यर्थः ।
4. अष्टा. 5/2/94 ।
5. मम्मटाऽऽचार्येणोद्धृतम्. काव्यप्रकाश उल्ला. 4, पृ. 87 ।
6. अष्टा. 7/3/46 ।
7. (क) सी. दे. बृ. प. वृ. प. 89, पृ. 248 ।
   (ख) नी. दी. प. वृ. प. 84, पृ. 309 ।
   (ग) ह. भा. प. भास्क. प. 92, पृ. 360 ।
   (घ) भ. ना. प. शे. प. 102, पृ. 332 ।
   (ङ) 'विधौ परिभाषा नानुवादे' - शेषा. प. भास्क. प. 87, पृ. 449 ।
8. तथाहि –
   (क) "किंच विधौ परिभाषाव्यापारो नानुवाद इति उदीचामातः स्थान इत्यधिकारविशेषणार्थमनूद्यत इति स्थानसम्बधी न लभ्यत इति स्थानग्रहणे कृते ज्ञापकमित्याहुः" इत्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 93 ।
   (ख) "ज्ञापकं चात्र 'उदीचामातः स्थाने.' - इत्यत्र स्थानप्रतिपत्त्यर्थं स्थानग्रहण"मित्याह सी. दे. बृ. प. वृ. प. 89. पृ. 248 ।
   (ग) "षष्ठीस्थाने योगेत्यनेनैव लब्धे सूत्रे स्थाने ग्रहणमनूद्य विशेषणेषु परिभाषा नोपतिष्टत इति ज्ञापनार्थ"मित्याह ज्ञा. भि त. वो. स्त्रीप्रत्यय प्र. पृ. 263 ।
   (घ) " 'उदीचामातः स्थाने' (7/3/46) इतिस्थाने ग्रहणमस्या ज्ञापकमित्यन्ये" - इत्याह नी. दी. प. वृ. प. 84. पृ. 309 ।
   (ङ) "ज्ञापकमत्र 'उदीचामातः स्थाने यकपूर्वायाः 'इतिस्थाने ग्रहणम् । अन्यथा 'षष्ठीस्थाने योगा' (1/1/49) इत्यनेनातः स्थान एवेत्व भविष्यतीति किं तेने"त्याह ह. भा. प. भास्क. प. 92. पृ. 360 ।

अभावेऽत्राऽयं शब्दो व्यर्थः । आत इतिषष्ठ्याः 'षष्ठीस्थाने। योगा' इतिपरिभाषयैव ह्यत्र स्थानार्थकत्वलाभः सुलभः । ज्ञापितायां चाऽस्यां परिभाषायामनयाऽनुवादेऽत्र 'षष्ठी स्थाने योगा'2 इतिपरिभाषाया अप्रवृत्त्या स्थानार्थकत्वलाभो न स्यादिति तदर्थलाभाऽर्थमत्राऽयंशब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितायाअस्याः फलन्तु 'क्ङितिचे'3त्यत्र 4'तस्मिन्निर्तिनिर्दिष्टे पूर्वस्ये'ति परिभाषायाअप्रवृत्तिः । तेन क्ङिन्निमित्ते प्रत्यये निषेधाद् 5'भिन्न'मित्यात्राऽपि निषेधः6 सिद्ध्यति । एवं 7'वृद्धिर्यस्याचामादिस्तद्वृद्ध'मित्यत्र 'अतोगुणे'8 - इत्यत्र च 9'इकोगुणवृद्धी' इतीकः इत्यस्याऽनुपस्थितिरप्यस्याः फलम् । अस्या असत्त्वे हि इक इत्यस्योपस्थितिरत्र दुर्वारा10स्यात्, तथा सति 'औपगवीय'11 इत्यादावेव 'वृद्धाच्छः12 'इति छ प्रत्ययः स्यात्; न तु 'शालीयः'13 'मालीयः'14 - इत्यादौ ।

---

(च) "ज्ञापकम् 'उदीचामात.' (7/3/46) इतिसूत्रे स्थाने ग्रहणम् । यद्यनुवाद्यविशेषणे परिभाषाणामुपस्थितिः स्यात्, तर्हि आत इतिषष्ठ्याः 'षष्ठी स्थाने योगा' (1/1/49) इतिपरिभाषयैव स्थानार्थकत्वसिद्धेः किंतेने"त्याह शेषा. प. भास्क. प. 87, पृ. 449 ।

(छ) "न च 'षष्ठीस्थानेयोगा' इत्येव सिद्धेरिह स्थानेग्रहणं व्यर्थमितिवाच्यम्, अनुवादे परिभाषाणामनुपस्थितेः । तत्र च इदमेव स्थानेग्रहणं ज्ञापकम् । अतएव 'वृद्धिर्यस्याचामादिस्तद्वृद्ध'मित्यत्र यस्यादिर्वृद्धिरित्यनुवादे इक्परिभाषा न प्रवर्तते । तत्प्रवृत्तौ तु शालाशब्दस्य वृद्धसंज्ञा न स्यात् शकारादाकारस्य इक्स्थानिकत्वाभावात् । ततश्च 'शालीय' इति 'वृद्धाच्छः' -इति छो न स्यात्: 'औपगवीय' इत्यादावेव स्या"-दित्याह वा. दी. बा. मनो. स्त्रीप्रत्यय प्र. पृ. 262 ।

1. अष्टा. 1/1/49 ।
2. अष्टा. 1/1/49 ।
3. अष्टा. 1/1/5 ।
4. अष्टा. 1/1/66 ।
5. 'भिदिर्विदारणे' धा. पा. रुधा. 1532, इतिभिद्धातोः कर्मणि निष्ठाकृत्प्रत्यये रूपमिदम् ।
6. 'क्ङिति च' - अष्टा. 1/1/5, इत्यनेनेतिशेषः ।
7. अष्टा. 1/1/73 ।
8. अष्टा. 6/1/97 ।
9. अष्टा. 1/1/3 ।
10. 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' - अष्टा. 1/1/73, इत्यत्रेत्यर्थः ।
11. 'उपगौ भवः' - इत्यर्थे उपगुशब्दात् 'वृद्धाच्छः' - अष्टा. 4/2/114, इति छप्रत्यये 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' - अष्टा. 7/1/2. । इतिईयादेशे आद्यचो वृद्धावौकारे गकारोत्तरोकारस्य गुणे ओकारेऽवादेशे तद्धितान्ताद्विभक्तिकार्येषु कृतेषु रूपमिदम् ।
12. अष्टा. 4/2/114 ।
13. 'शालायां भवः' - इत्यर्थे शालाशब्दात् 'वृद्धाच्छः' - अष्टा. 4/2/114, इति छप्रत्यये 'आयनेयी.' - अष्टा. 7/1/2, इति ईयादेशे' यस्येति च' - अष्टा. 6/4/148, इत्याकारलोपे आद्यचो वृद्धौ तद्धितान्तात् सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
14. 'मालायां भवः' - इत्यर्थे मालाशब्दात् 'वृद्धाच्छः' - अष्टा. 4/2/114, इति छप्रत्यये ईयादेशादिषु कृतेषु 'शालीयः' - इतिवद् रूपमिदम् ।

यतोऽत्राऽऽकारस्य वृद्धेरिक्स्थानिकत्वं नाऽस्ति । एवम् - 'अतोगुणे'1 -इत्यत्रेका परिभाषाया उपस्थितौ 'एधे'2 'पचे'3 'यजे'4 -इत्यादावेव पररूपं स्यात्5 । 'टित 6आत्मनेपदानां टेरे' इत्यनेन इट एत्वे कृते हि इक्स्थानिकत्वमेकारस्य गुणस्य विद्यते । 'भवन्ती7' 'पचन्ती'8त्यादौ 9पररूपं न स्यात्, गुणस्याऽकारस्य इक्स्थानिकत्वाऽभावात् ।

अत्रानुन्यासकृन्मतमुपस्थापयन् 'स्थाने'इत्ययं शब्दः "न सर्वा षष्ठी स्थानेयोगा भवति, अपितु यस्या एव कलादिलिङ्गं प्रतिज्ञायते सैव षष्ठी स्थानेयोगा भवती'तिवचनस्य ज्ञापक इत्यप्याह10पुरुषोत्तमदेवः ।

भट्टनागेशस्तु नाऽत्राऽस्य शब्दस्य ज्ञापकत्वमस्यां, किन्तु 'स्थाने' इत्ययं शब्दोऽत्र स्पष्टाऽर्थमेवे"त्याह11 ।

---

1. अष्टा. 6/1/97 ।
2. 'एध वृद्धौ' धा. पा. भ्वा. 2, इति एध्धातोर्लटि लटः इडादेशे शपि इट इकारस्य 'टित आत्मनेपदानां टेरे' अष्टा. 3/4/79, इति एत्वे 'अतोगुणे' - अष्टा. 6/1/97, इति पररूपैकाऽऽदेशे रूपमिदम् ।
3. "डुपचष् पाके' धा. पा. भ्वा. 1065, इति पच्धातोर्लटि आत्मनेपदे उत्तमपुरुषैकवचने रूपमिदम् ।
4. 'यज देवपूजासंगतिकरणदानेषु' धा. पा. भ्वा. 1071, इति यज् - धातोर्लटि आत्मनेपदे उत्तमपुरुषैकवचने रूपमिदम् ।
5. अष्टा. 6/1/97 ।
6. अष्टा. 3/4/79 ।
7. 'भू सत्तायाम्' धा. पा. भ्वा. 1, भूधातोर्लटि शत्रादेशे शपि ङीपि नुमि रूपमिदम् ।
8. 'डुपचष्पाके' धा. पा. भ्वा. 1065, इति पच्धातोर्लटि शत्रादेशे शपि ङीपि नुमि रूपमिदम् ।
9. 'अतोगुणे' - अष्टा. 6/1/97, इत्यनेनेतिशेषः ।
10. तथाहि –

"षष्ठीस्थाने योगा' इत्येवं स्थानसम्बन्धे लब्धे 'उदीचामातः स्थानेयकपूर्वायाः' (7/3/46)- इति स्थानग्रहणं ज्ञापयति– 'न सर्वा षष्ठी स्थानेयोगा भवति, अपितु यस्या एव कलादिलिङ्गं प्रतिज्ञायते' इति । कला नाम स्वरितत्ववर्णधर्मः कोपि । तेनाङ्गस्येति (6/4/1) (न) स्थानषष्ठी, अपितु सम्बन्धसामान्ये षष्ठीतिन्यासः । इदं च प्रधानाप्रधानन्यायमनाश्रित्य 'उदीचामातः, स्थान'इत्यत्र 'प्रत्ययस्थात्' (7/3/44) इत्यतोऽत इत्यनुवृत्तावनुवादविशेषणं षष्ठ्यन्तेऽपि 'षष्ठीस्थाने योगेतिपरिभाषामभ्युपेत्य स्थानग्रहणं ज्ञापकमुक्तम् । प्राधान्यविधानात्तु विध्यङ्गशेषभूता परिभाषा कथमत इत्यनुवादे स्या"दित्याह पु. दे. ज्ञा. समु. सप्तविंशे देविकापादे पृ. 93।

11. तथाहि –

"किञ्चो'दीचामातः स्थाने'इतिसूत्रे स्थानेग्रहणमस्या लिङ्गम् । अन्यथा 'षष्ठीस्थाने' इतिपरिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति तन्न । 'उदात्तस्वरितयोर्यणः ' – इत्यादौ 'ष्यङः सम्प्रसारणम्' इतिभाष्योक्तरीत्या 'अल्लोपोऽन' - इत्यादौ चैतस्याव्यभिचरितत्वात्, भाषानुक्तत्वाच्च । स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठीस्थाने'इतिसूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च । तत्र स्थानेग्रहणं स्पष्टार्थमेवेत्याह भ. ना. प. शे. प. 102, पृ. 333-334 ।

शेषाद्रये भट्टनागेशमतमिदं न रोचते[1] ।

वस्तुतस्तु वृद्धाच्छं बाधित्वा 'अण् ऋगयनादिभ्यः[2] 'इत्यणप्रत्ययो यथा स्यादित्येतदर्थमृगयनादिगणे[3] व्याकरणशब्दः पठितः, यद्यनुवाद्यविशेषणेषु परिभाषा उपतिष्ठेरन्तर्हि तत्पठनं व्यर्थं स्यात्, आकारवृद्धेरिक्स्थानिकत्वाऽभावेन वृद्धसंज्ञाया अभावाच्छस्याऽप्रवृत्तेः, तथा च तस्मादेव पाठादुक्ताऽर्थज्ञापनसंभवे 'स्थाने'इत्ययं शब्दोऽत्र स्पष्टाऽर्थमेव न तु ज्ञापक इति मन्ये ।

हरदत्तमिश्रस्तु 'षष्ठी[4]स्थानेयोगे'तिसूत्रस्य भगवता प्रत्याख्यानात्, ततः स्थानेग्रहणस्याऽनुवृत्तिर्न संभवतीति मन्वानः सर्वमिदं ज्ञापकत्ववर्णनं न युक्तमिति[5] सूचयति ।

## 'स्ये'तिशब्दः

'वृद्भ्यः [6]स्यसनो'रित्यत्र 'स्ये'तिशब्दो 'विकरणेभ्यो नियमो[7]बलीया'निति परिभाषाया ज्ञापकः[8] । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि –

---

1. तथाहि –
"यत्तु 'उदात्तस्वरितयो.' .................. (परि. शे. परि. 93. 10) इति नव्योक्तम् । तदसत् । अनित्यत्वादस्याः 'उदात्तस्वरितयोः' (8/2/4) 'अल्लोपोऽनः' (6/4/134) इत्यनयोरिष्टसिद्धेः । भाष्यानुक्तत्वं तु न दोष इत्युक्तम् । 'उरण्रपरः' - (1/1/51) इतिसूत्रे 'सिद्धं तु प्रसङ्गे रपरत्वात्' (1/1/51 वा.) इति वार्तिकव्याख्याने भाष्यकृता 'स्थाने'इत्यनुवर्त्यते । स्थानं च प्रसङ्गः । यद्येवमादेशोविशेषितो भवति । आदेशश्च विशेषितः । कथम् । द्वितीयं स्थानग्रहणमनुवर्त्तते । तत्रैवमभिसंबन्धः करिष्यते 'उः स्थाने अण्स्थाने' इतिवदता एतद्वचनस्य सूचनात्, कैयटेन तत्र स्पष्टमुक्तत्वच्च स्थानसंबंधस्य'षष्ठी स्थाने योगा' (1/1/49) इतिपरिभाषालभ्यत्वाभावेऽपि 'व्याख्यानतो विशेषप्रतिपत्तिः.' (परिभाषा - 1) इतिपरिभाषालभ्यत्वस्य तस्मिन्नेव सूत्रे भाष्ये स्पष्टतया ज्ञापकत्वसम्भवाच्च । एतेन स्थानेग्रहणं स्पष्टार्थमित्यपास्त"मित्याह शेषा. प. भास्क. प. 87, पृ. 450 ।
2. अष्टा. 4/3/73 ।
3. "ऋगयन, पदव्याख्यान, छन्दोमान, छन्दोभाषा, छन्दोविचिति, न्याय, पुनरुक्त, निरुक्त, व्याकरण, निगम, वास्तुविद्या, क्षत्त्रविद्या, अङ्गविद्या, विद्या, उत्पाद, उत्पात, उद्याव, संवत्सर, मुहूर्त, उपनिषद्, निमित्त, शिक्षा, भिक्षे"ति ऋगयनादिः ग. पा. 4/3/73,
4. अष्टा. 1/1/49 ।
5. तथाहि – "भाष्ये सूत्रं प्रत्याख्यातम्, कथम् ? 'अस्तेर्भूः' इत्यत्र सन्देहः स्थानेऽनन्तरः, समीप इति ? लक्ष्यानुरोधात्स्थान इति व्याख्यास्यामः "इत्याह ह. मि. पदम. 1/1/49 ।
6. अष्टा. 1/3/92 ।
7. (क) पु. दे. ल. प. वृ. प. 53, वृ. 136 ।
(ख) सी. दे. बृ. प. वृ. प. 19 वृ. 182 ।
(ग) नी. दी. प. वृ. प. 24 वृ. 297 ।
(घ) ह. भा. प. भास्क. प. 19, वृ. 329 ।
(ङ) भ. ना. प. शे. प. 42, वृ. 178 ।
(च) शेषा. प. भास्क. प. 41, वृ. 417 ।
8. तथाहि –

परिभाषाया अस्या अभावे [1]परत्वाद् विकरणे स्ये[2] कृते तद्व्यवधानाद् 'अनुदात्तङित्त[3] आत्मनेपद'मितिनियमशास्त्राप्रवृत्तौ 'तिप्तस्झी[4]'तिसामान्यशास्त्रेणैव 'वर्त्स्यति'[5] 'वर्तिष्यते'[6] - 'अवर्त्स्यत्'[7] 'अवर्तिष्यत'[8] इत्यादौ[9] पदद्वयं सिद्धमिति

---

(क) "ज्ञापकं तु 'वृद्भ्यः स्यसनो'रित्यत्र स्ये विकल्पविधान"मित्याह कै. प्रदी. 1/3/2/12 ।

(ख) "यदयं 'वृद्भ्यः स्यसनोः 'इति स्ये विकल्पं शास्ति, तज्ज्ञापयति-'विकरणेभ्यो नियमो बलीया'नित्याह ह. मि. पदम. 1/3/12 ।

(ग) "अयं चार्थो 'वृद्भ्यः स्यसनोः' (1/3/92) इत्यात्मनेपद - विकल्पेन ज्ञापितः । अन्यथा हि वृतु वर्तने इत्येवमादीनामनुदात्तेतां विकरणेन स्येन व्यवधानादनुदात्तङित्त एवात्मनेपदमिति नियमो नास्तीति सामान्यविहितेषु तिबादिषु कृतेषु सिद्धमुभयं वर्त्स्यति वर्तिष्यते इति किमनेन विकल्पेन । तत्कृतमुक्तार्थस्य ज्ञापकमिती"त्याह पु. दे. ल. प. वृ. प. 53, पृ. 136 ।

(घ) "अयं चार्थो 'वृद्भ्यः स्यसनोः' (1/3/92) इत्यत्र परस्मैपद - विधानेन ज्ञापितः । अन्यथा 'वृतु वर्तने' इत्येवमादीनां स्येन व्यवधानात् 'अनुदात्तङित्त आत्मनेपदम्' (1/3/12) इति नियमो नास्तीति सामान्यविहितेषु तिबादिषु सिद्धमुभयं वर्त्स्यति वर्तिष्यते इति किमनेन विधानेन । तत्कृतमस्यार्थस्य ज्ञापक"मित्याह सी. दे. बृ. प. वृ. प. 19, पृ. 182 ।

(ङ) "अत्र च ज्ञापकं 'वृद्भ्यः स्यसनोः' इतिसूत्रे स्यग्रहणम् । अन्यथा परस्मैपदात्पूर्वमेव 'स्यतासी लृलुटोः' (1/3/12) इतिभाष्ये स्थित"मित्याह नी. दी. प. वृ. प. 24, पृ. 297 ।

(च) "कैयटहरदत्तादयस्तु 'वृद्भ्यः स्यसनोः' (1/3/92) इतिपरस्मैपदविधानं तदिति प्रतिपेदिरे । प्रांग्विकरणप्रवृत्तौ हि तेन व्यवायादेव अनुदात्तङितः शेषात्कर्तरीति वाक्ययोरप्रवृत्ते'स्तिप्तस् झी'तिसामान्यवाक्येन पदद्वयसिद्धौ तद्व्यर्थं भवेदिती"त्याह ह. भा. प. भास्क. प. 19, पृ. 329 ।

(छ) "अत्र 'वृद्भ्यः स्यसनोः' इतिसूत्रेण स्ये विभाषाऽतङ् विधानं ज्ञापकम् । अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्या"दित्याह भ. ना. प. शे. प. 42, पृ. 178 ।

(ज) "अत्र वृद्भ्यः स्यसनोः' इति स्यविषये विकल्पेन परस्मैपदविधानं ज्ञापकम् । यदि परत्वाद्विकरणः स्यात्तर्हि 'तिप्तस्,' - (3/4/78) इतिसामान्यसूत्रेणैव सिद्धे पक्षे परस्मैपदविधानमनर्थकं स्या" दित्याह शेषा. प. भास्क. प. 41, पृ. 417 ।

1. 'विप्रितिषेधे परं कार्यम्' - अष्टा. 1/4/2, इतिशास्त्रबलादित्यर्थः ।
2. 'स्यतासी लृलुटोः' - अष्टा. 3/1/33, इत्यनेनेतिशेषः ।
3. अष्टा. 1/4/12 ।
4. 'तिप् - तस् - झि - सिप् - थस् - थ - मिब् - वस् - मस् - ताताां झ - थासाथां ध्व-मिड्वहिमहिङ्' - अष्टा. 3/4/78 ।
5. 'वृतुवर्तने' धा. पा. भ्वा. 758, इतिवृत्धातोर्लृटि स्यप्रत्यये परस्मैपदे प्रथमपुरुषैकवचने 'न वृद्भ्यश्चतुर्भ्यः' - अष्टा. 7/2/59, इतीण्निषेधादिटोऽभावे रूपमिदम् ।
6. 'वृतु वर्तने' धा. पा. भ्वा. 758, इतिवृत्धातोर्लुटि स्यप्रत्यये आत्मनेपदे प्रथमपुरुषैकवचने 'न वृद्भ्यश्चतुभ्यः 'अष्टा. 7/2/59, इति इटो निषेधाऽप्राप्ताविटि प्रत्ययाऽवयवसकारस्य षत्वे च कृते रूपमिदम् ।
7. 'वृतु वर्तने' धा. पा. भ्वा. 758, इतिवृत्धातोर्लुङि अडागमे स्यप्रत्यये परस्यैपदे प्रथमपुरुषैकवचने 'न वृद्भ्यश्चतुर्भ्यः '-अष्टा. 7/2/59 - इतीण्निषेधादिटोभावे रूपमिदम् ।

'वृतु वर्तने'[1] - 'वृधु[2]वृद्धौ' [3]'शृधु शब्दकुत्सायाम्' 'स्यन्द[4] प्रस्रवणे' 'कृपू सामर्थ्ये'[5] इत्येतेभ्यः पञ्चभ्यो वृताऽऽदिभ्यो धातुभ्यः स्ये[6] सनि[7] च परतो वा परस्मैपदं[8] विधातुमारब्धेऽस्मिन् सूत्रे 'स्ये'तिशब्दो हि व्यर्थः । न च विकरणव्यव- धाने नियमशास्त्राऽप्रवृत्तौ[9] तत्तन्नियमशास्त्रवैयर्थ्यं शङ्क्यम् । यतो लुग्विकरणेभ्यः[10] श्न म्[11]– विकरणेभ्यश्च 'आस्ते'[12] 'शेते'[13] 'अत्ति'[14] [15]'भिनत्ती'त्यादौ [16]नियमशास्त्राणि चरिताऽर्थानि भवन्ति । नह्यत्र विकरणव्यवधानम् ।

न चाऽस्या अभावेऽत्र सूत्रे सन्शब्दोऽपि व्यर्थ इतिशङ्क्यम् । यतोऽत्र सूत्रे ऽसत्यामप्यस्यां 'विवृत्सति' 'विवर्तिषते'–इत्यादौ कस्यचन व्यवधानस्याऽभावेन 'अनुदात्तङित [17]आत्मनेपद'मिति नियमशास्त्रप्रवृत्तौ बाधकाऽभावात् 'पूर्व[18]-वत्सनः' इत्यात्मनेपदसिद्धावपि परस्मैपदसिद्ध्यर्थं सन्-शब्दश्चरितार्थः । ज्ञापिताया-

---

8. 'वृतु वर्तने' धा. पा. भ्वा. 758, इतिवृत्धातोर्लुङि अडागमे स्यप्रत्यये आत्मनेपदे प्रथमपुरुषैकवचने 'न वृद्भ्यश्चतुर्भ्यः' - अष्टा. 7/2/59, इतीण्निषेधाऽप्राप्ताविटि प्रत्ययाऽवयवसकारस्य षत्वे रूपमिदम् ।
9. अत्राऽऽदिपदे 'वर्त्स्यति' 'वर्धिष्यते' 'अवर्त्स्यत्' 'अवर्द्धिष्यत' इत्यादिग्राह्यम् ।
1. धा. पा. भ्वा. 758 ।
2. धा. पा. भ्वा. 759 ।
3. धा. पा. 760 ।
4. धा. पा. भ्वा. 761 ।
5. धा. पा. भ्वा. 762 ।
6. 'स्यतासी लृलुटोः' - अष्टा. 3/1/33, इतिविहिते इत्यर्थः ।
7. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा '- 3/1/7, इतिविहिते इत्यर्थः ।
8. 'लः परस्मैपदम्'–अष्टा. 1/4/99 ।
9. 'अनुदात्तङितआत्मनेपदम्'–अष्टा. 1/4/12 ।
10. 'अदिप्रभृतिभ्यः शपः'–अष्टा. 2/4/72. इतीतिशेषः ।
11. 'रुधादिभ्यः श्नम्'–अष्टा. 3/1/78, इतीतिशेषः
12. 'आस उपवेशने' धा. पा. अदा. 1021. इति आस्धातोर्लटि 'अनुदात्तङितआत्मनेपदम्'– अष्टा. 1/4/12. इत्यनुदात्तलक्षणे आत्मनपदेते शपि शपो लुकि टितष्टेरेत्वे च कृते रूपमिदम् ।
13. 'शीङ्स्वप्ने' धा. पा. अदा. 1032. इतिशीधातोर्लटि 'अनुदात्तङितआत्मनेपदम्'–अष्टा. 1/4/12. इतिङिल्लक्षणे आत्मनेपदे ते शपि शपो लुकि सार्वधातुकलक्षणे धातोरीकारस्य गुणे एकोर टितष्टेरेत्वे च कृते रूपमिदम् ।
14. 'अद भक्षणे'धा. पा. अदा. 1011, इतिअद्धातोर्लटि 'शेषात्कर्तरि परस्मैपदम्'–अष्टा. 1/3/78. इतिपरस्मैपदे तिपि शपि शपो लुकि धातुदकारस्य चर्त्वेन तकारे च कृते रूपमिदम् ।
15. 'भिदिर्विदारणे' धा. पा. रुधा. 1439, इतिभिद्धातोर्लटि'शेषात्कर्तरि परस्मैपदम्'–अष्टा. 1/3/78. इति परस्मैपदे तिपि श्नमि धातुदकारस्य चर्त्वेन तकारे च कृते रूपमिदम् ।
16. 'अनुदात्तङित आत्मनेपदम्'–अष्टा. 1/4/12, स्वरितञितः कर्त्रभिप्राये क्रियाफले'–अष्टा. 1/3/72. 'शेषात्कर्तरि परस्मैपदम्'–अष्टा. 1/3/78. इत्यादीनीतिशेषः ।
17. अष्टा. 1/4/12 ।
18. अष्टा. 1/3/62 ।

मस्यामनया 'वर्त्स्यति' 'अवर्त्स्य'दित्यौ स्य-विकरणात् प्रागेव [1]नियमशास्त्रप्रवृत्त्याऽ-प्राप्तपरस्मैपदविधानार्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापिताया अस्याः फलं तु [2]'एधते' इत्यादौ[3] परमपि [4]शपमनया बाधित्वा 'अनुदात्तङित [5]आत्मनेपद'मित्यात्मनेपदसिद्धिः । अस्या असत्त्वे हि परत्वाच्छपि[6] विकरणे कृते [7]लस्य अनुदात्तङिदन्यतरांतत्परत्वं न स्यादिति अनुदात्तङित[8] आत्मनेपदमेवेति नियमाऽप्रवृत्त्या नाऽत्राऽऽत्मनेपदं सिद्ध्येत् ।

इदं चाऽत्र सूत्रे 'स्ये'तिशब्दस्याऽस्य ज्ञापकत्वं 'तिप्-तस्[9]-झी'त्यादिसामान्य-सूत्रेण विहितानाम् [10]'अनुदात्तङितः.'-इत्यादि नियमेनेतरव्यावृत्तिपक्षे बोध्यम् । यतस्तिबादिविध्येकवाक्यतया नियमशास्त्राणां[11]' विधायकत्वमिति सिद्धान्तपक्षे लकाराऽवस्थायां सार्वधातुकपरत्वाऽभावाच्छबादिविकरणानां प्राप्तिरेव नास्ती'ति नाऽस्य ज्ञापकत्वमुपपद्यते ।

यद्यपि [12]भाष्ये [13]'अनुपसर्गाद्वा'-इति क्रमेरात्मनेपदविधानं वैकल्पिकमस्याः परिभाषाया ज्ञापकमित्युक्तं, तथापि 'चक्राम[14]' [15]'चक्रमे' [16]'क्रम्यात्'-'क्रंसीष्ट'[17]

---

1. 'अनुदात्तङित आत्मनेपदम्'-अष्टा. 1/4/12, इतीतिशेषः ।
2. 'एध वृद्धौ' धा. पा. भ्वा. 2, इति एध्धातोर्लटि 'अनुदात्तङित आत्मनेपदम्'-अष्टा. 1/4/12, इत्यनुदात्तेल्लक्षणे आत्मनेपदे ते शपि टितष्टेरेत्वे च कृते रूपमिदम् ।
3. अत्राऽऽदिपदेन 'पवते'-इत्यादि ग्राह्यम् ।
4. 'कर्तरि शप्'-अष्टा. 3/1/68 ।
5. अष्टा. 1/4/12 ।
6. 'कर्तरि शप्'-अष्टा. 3/1/68 ।
7. लट इत्यर्थः ।
8. अष्टा. 1/4/12 ।
9. तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-तातां झ थासाथांध्वमिड्-वहिमहिङ्'-अष्टा.3/4/78 ।
10. 'अनुदात्त ङितआत्मनेपदम्'-अष्टा. 1/4/12 ।
11. 'अनुदात्त ङितआत्मनेपदम्'-अष्टा. 1/4/12, 'स्वरित ञितः कर्त्रभिप्राये क्रियाफले'-अष्टा. 1/7/72, 'शेषात्कर्तरि परस्मैपदम्'-अष्टा. 1/7/78, इत्यादीनामित्यर्थः ।
12. तथाहि-"यत्तर्हि 'अनुपसर्गाद्वे'ति विभाषां शास्ती"त्याह पत. व्या. म. भा. 1/3/2 ।
13. अष्टा. 1/3/43 ।
14. 'क्रमुपादविक्षेपे'धा. पा. भ्वा. 473, इति क्रम्धातो र्लिटि 'अनुपसर्गाद्वा' अष्टा. 1/3/43, इत्यात्मनेपदाभावपक्षे 'शेषात् कर्तरि परस्मैपदम्'-अष्टा. 1/7/78, इतिपरस्मैपदे तिपि णलादेशे द्वित्वादिषु कृतेषु रूपमिदम् ।
15. 'क्रमुपादविक्षेपे' धा. पा. भ्वा. 473, इति क्रम्धातोर्लिटि'अनुपसर्गाद्वा'-अष्टा. 1/3/43, इत्यात्मनेपदपक्षे ते द्वित्वादिषुकृतेषु टितष्टेरेत्वे रूपमिदम् ।
16. 'क्रमुपादविक्षेपे' धा. पा. भ्वा. 473, इति क्रम्धातोराशीर्लिङि 'अनुपसर्गाद्वा'-अष्टा. 1/3/43, इत्यात्मनेपदाभावपक्षे शेषात्कर्त्तरि परस्मैपदम्'-अष्टा. 1/7/78, इतिपरस्मैपदे तिपि यासुडादिषु कृतेषु 'इतश्च'-अष्टा. 3/4/100, इतितेरिकारलोपे च कृते रूपमिदम् ।
17. 'क्रमुपादविक्षेपे' धा. पा. भ्वा. 473, इति क्रम्धातोराशीर्लिङि 'अनुपसर्गाद्वा'-अष्टा. 1/3/43, इत्यात्मनेपदे ते सीयुडादिषु कृतेषु रूपमिदम् ।

इत्यत्र लिङ्-लिङोर्विकरणाऽभावेन तत्सार्थक्यमनुगम्य कैयट-हरदत्तमिश्र- पुरुषतोत्तम-देव-सीरदेव-नीलकण्ठदीक्षित-हरिभास्कर-भट्टनागेश-शेषाद्रिभिः 'वृद्भ्यः [1]स्यसनो'रित्यत्र वृतादिभ्यः परस्मैपदविधानाऽर्थमुपात्तः 'स्ये'तिशब्दोऽस्या ज्ञापक इत्युपपादितम् । [2]भाष्ये तु ज्ञापकदिगेव दर्शितेति तेषामाशयः[3] ।

हरिभास्करस्तु क्रमेर्लिडाशीर्लिङोः प्रयोगाऽभावं परिकल्प्य [4]'अनुपसर्गाद्वे'ति सूत्रस्यैवैतत्परिभाषाज्ञापकत्वं भाष्योक्तं सूपपादमित्यप्याह[5] । श्रीनागेशोऽपि 'अनुपसर्गाद्वा' (सू. 1/3/43) इति विकल्पविधानं ज्ञापकं, 'विकरणेभ्यो नियमो बलीया'नित्यस्येत्याह[6] । "अन्ये तु 'वृद्भ्यः स्यसनो[7]'रित्यत्र 'स्ये'तिशब्दः 'कृतेऽपि विकरणे नियमः प्रवर्तते' इत्यस्याः परिभाषाया ज्ञापक इति मन्वते"[8]इत्यप्याहुः सीरदेवाऽऽदयः । सर्वं चैतत् पक्ष-भेदेन व्याख्यानवैलक्ष्येण च सम्यगेवेति मन्ये ।

---

1. अष्टा. 1/3/92 ।
2. व्या. म. भा. 1/3/2 ।
3. कैयटादीनामित्यर्थः । तथाहि–"यत्तर्हीति । एतत्तु लिट्लिङर्थं स्यात् । चक्रमे, चक्राम, क्रम्यात् क्रंसीष्टेति । तस्माज् ज्ञापकदिक् प्रदर्शिता भाष्यकृता, ज्ञापकं तु 'वृद्भ्यः स्यसनो'रित्यत्र स्ये-विकल्प विधान"मित्याह कै. प्रदी. 1/3/2/12 ।
4. अष्टा. 1/3/43 ।
5. लथाहि–"वस्तुतः ख्याधातोरार्धधातुके प्रयोगाभावकल्पनेन'सस्थानत्वं नमः ख्यात्रे' (2/4/54 वा.) इतिवार्तिकवद् वहादीनां प्रयोगाभावानुमानेन 'वाह ऊठ्' (6/4/132) इति ऊठ्ग्रहण-स्यासिद्धपरिभाषाज्ञापकत्वाच्च क्रमे र्लिडाशीर्लिङोः प्रयोगाभावकल्पनेन भाष्योक्तं ज्ञापेकं सूपपाद"मित्याह ह. भा. प. भास्क. प. 19. पृ. 330 ।
6. ज्ञा. सं. 1/3 पृ. 45 ।
7. अष्टा. 1/3/92 ।
8. तथाहि–
   (क) "अन्येत्वस्माज्ज्ञापकात् कृतेऽपि विकरणे नियमः प्रवर्तते'इतिपरिभाषामाहुः । अस्मिन् दर्शने एधिष्यत इत्यत्र लावस्थायामेवान्तरङ्गत्वात् स्यप्रत्ययेन भवितव्यम् । तथाऽस्मिन्नेव दर्शने औप्यत औह्यत इत्यत्राजादित्वात् 'आडजादीनाम्' (6/4/72) इत्याड् भवति । अन्यथा विकरणान्नियमस्य बलीयस्त्वे नियमाडागमयोः संप्रधारणायां परत्वादडागमेन भवितव्यम् । न चाडागमप्रवृत्तिकाले नित्यो विकरणः शक्यते प्रवर्तयितुम् । पूर्वमेव नियमेनापसारित्वात् । आडागमस्तु नियमेन नापसर्यत इतिपरत्वादसौ बाधकः प्राप्नोत्येव । तदेवं हलादित्वादडागमे कृते 'आटश्च' (6/1/90) इति वृद्ध्यभावादौह्यत इत्येवमादि न सिद्ध्यति । तथाऽस्मिन्नेव दर्शने 'ऋच्छेरनादेशस्य ग्रहणम् । अर्त्यदिशस्य चार्तीत्येव सिद्धे- रिति 'समोगम्यादि.' (1/3/29) सूत्रे वृत्तिग्रन्थ उपपद्यते । नहि विकरणान्नियमबलीयस्त्वे शिति विकरणे विधीयमान ऋच्छादेश आत्मनेपदात् प्रागेव भवति । तथाऽस्मिन्नेव दर्शने-'नेर्गदादि.' (7/4/17) सूत्रे विकरणान्तस्याडागम उक्तः । अन्यथा विकरणान्नियमबलीयस्त्वे ततोऽपि परत्वादडागमे कृते कथं विकरणान्तस्याडागम उपपद्यते"इत्याह सी. दे. बृ. प. वृ. प. 19,पृ. 183 ।
   (ख) " 'शदेः शितः' (1/3/60) इतिसूत्रे भाष्ये तु विकरणव्यवधानेऽपि नियमप्रवृत्तिः स्यग्रहणेन ज्ञाप्यते'इति ध्वनितम् । तेन चिनोति- सुतोतीत्यादौ तिपमाश्रित्य 'सार्वधातुकार्धधातुकयोः (7/3/84) इति गुणो न । किन्तु विकरणस्यापित्-

पुरुषोत्तमदेवस्तु 'कृतेऽपि विकरणे नियमः प्रवर्तते' इति परिभाषान्तरमस्वीकृत्य 'विकरणेभ्यो नियमो बलीयानि'ति परिभाषाया एव प्रायिकत्वमपि 'समो[1]गम्यृच्छि-प्रच्छिस्वरत्यर्ति- श्रुविदिभ्यः'इत्यत्र "ऋच्छेरनादेशस्य ग्रहणम्–[2]समृच्छिष्यते, अर्त्यादेशस्य त्वर्त्तीत्येवं[3] सिद्धमात्मनेपद"मिति [4]जयादित्यग्रन्थप्रामाण्यान्मनुते[5] । फलतौल्यादिदमपि प्रतिपादनं युक्तं प्रतिभाति ।

## 'स्वृ'इतिशब्दः

[6]'सनीवन्तर्ध-भ्रस्जदम्भु-श्रि-स्वृयूर्णुभरज्ञपिसना'मित्यत्र 'स्वृ'–इतिशब्दः [7]'स्वरतिसूतीति विभाषा उग्लक्षणस्य प्रतिषेधस्य[8] विषये न भवती'ति वचनस्य

---

सार्वधातुकत्वाद् ङित्त्वे 'क्ङिति च' (1/1/5) इति गुणनिषेधः"–इत्याह नी. दी. प. वृ. प. 24, पृ. 297-298 ।

(ग) "अपरे तु'उपस्थितस्य सम्बन्धो दुर्वारः 'इतिन्यायेन उपस्थितधातुपदसम्बन्धो वारयितुमशक्यः । नच प्रयोजनाभावस्तद्वारकः । चङ्ङ्भ्यामात्पदनेपदनिवृत्तेरेव प्रयोजनत्वात् । नहि प्रकृतपरिभाषया तत्सिद्धिः । 'वृद्भ्यः स्यसनोः' (1/3/92) इत्यत्र 'कृतेपि विकरणे नियमः प्रवर्तते'इत्यस्यैव ज्ञापनीयतया विकरणान्नियमबलीयस्त्वस्यानङ्गीकारात् । अन्यथा औह्यत इत्यादौ नियमाडागमयोः संप्रसारणे परत्वादिटि सति आटश्चेति न स्या"दित्याह ह. भा. प. भास्क. प. 19, पृ. 330 ।

(घ) "विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति 'शदेः शित'इत्यत्र भाष्ये ध्वनित"मित्याह भ. ना. प. शे. 42, पृ. 178 ।

(ङ) "अस्मिन्नेव पक्षे (भिन्नवाक्यतापक्षे) कृतेऽपि विकरणे नियमप्रवृत्तिरित्यत्र इदमेव (स्यग्रहणमेव) ज्ञापकमिति 'शदेः शितः'इतिसूत्रे कैयटः"–इत्याह शेषा. प. भास्क. प. 41, पृ. 417 ।

(च) "विकरणव्यवधानेऽपि नियमप्रवृत्ते र्ज्ञापकमिति 'शदेः शितः' (सू. 1/3/60) इति सूत्रे भाष्ये ध्वनित"मित्याह श्रीना. ज्ञा. सं. 1/3, पृ. 45 ।

1. अष्टा. 1/3/2/9 ।
2. संपूर्वकात्–'ऋच्छर गतीन्द्रियप्रलयमूर्त्तिभावेषु'धा. पा. इति, ऋच्छ्धातोर्लृटि स्यप्रत्यये 'समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः'–अष्टा. 1/3/29, इत्यात्मनेपदे त इडागमे प्रत्ययाऽवयवसकारस्य षत्वे टितष्टेरेत्वे चकृते रूपमिदम् । यद्यादेशस्य ग्रहणं स्यात् तदेतन्न सिद्ध्येत् पाघ्रादि सूत्रे ऋच्छादेशस्य शितीत्येवं विधानात् ।
3. स्थानिवद्भावेनेतिशेषः ।
4. का. 1/3/29 ।
5. तथाहि–"प्रायिकं चैतदिति कृत्वा 'ऋच्छेरनादेशस्य ग्रहणम् । अर्त्यादेशस्य त्वर्त्तेरित्यसिद्धमिति 'समो गमि.' (1/3/29) इत्यादिसूत्रे वृत्तिः । नहि विकरणेभ्यो नियमो बलीयानिति विकरणे विधीयमाने ऋच्छादेशः प्रागात्मनेपदात् संभवती"त्याह पु. दे. ल. पृ. वृ. प. 53, पृ. 136 ।
6. अष्टा. 7/2/49 ।
7. 'स्वरति सूति सूयति–धूञूदितो वा'–अष्टा. 7/2/44 ।
8. 'श्र्युकः किति'–अष्टा. 7/2/11 ।

ज्ञापकः[1] । यतोऽस्य वचनस्याभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि–[2]'दिदेविषति' [3]'दुद्यूषति'–[4]'सिसेविषति' [5]'सुस्यूषति' [6]'अर्दिधिषति' [7]'ईर्त्सति'–[8]'बिभ्रज्जिषति'

---

1. तथाहि–
(क) "अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नेयं विभाषा उग्लक्षणस्य प्रतिषेधस्य विषये भवती'ति –यदयं 'सनीवन्तर्धभ्रस्जदम्भुश्रि स्वृयूर्णुभर ज्ञपि सना"मिति स्वृग्रहणं करोती"त्याह. पत. 7/2/2/44 ।
(ख) "स्वरति सूति (7/2/44) 'सनीवन्तर्ध' (सू. 7/2/49) इत्यत्र स्वृग्रहणाज् ज्ञापकाद् नेयं विभाषा उग्लक्षणस्य प्रतिषेधस्य विषये भवतीती"त्याह. एन्. एस्. रामा. ज्ञा. सं. परि. 1, पृ. 188 ।
2. 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' धा. पा. दिवा. 1107. इतिदिवूधातोः सनि 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इति इडागमे 'दिव् इ स' इत्यवस्थायाम् अझलादित्वात् 'हलन्ताच्च'–अष्टा. 1/2/10, इति सनः कित्त्वाऽभावे'च्छ्वोः शूडनुनासिके च'–अष्टा. 6/4/19, इत्यूठोऽप्राप्तौ दिव्शब्दस्य 'सन्यङोः'–अष्टा. 6/1/9, इति द्वित्वेऽभ्यासकार्येषु कृतेषु लघूपधगुणे प्रत्ययाऽवयवसकारस्य षत्वे सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
3. 'दिवु क्रीडा.'–धा. पा. दिवा. 1107, इति दिव्धातोः सन्प्रत्यये–'सनीवन्तर्ध.'–अष्टा. 7/2/49, इतीडभावपक्षे 'हलान्ताच्च'–अष्टा. 1/2/10, इति सनः कित्त्वे 'च्छ्वोः शूडनानसिके च'–अष्टा. 6/4/19 इति वकारस्य ऊठि यणादेशे द्युषशब्दस्य 'सन्यङोः'– अष्टा. 6/1/9, इति द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वत्वे च कृते सन्नन्ताल्लटि तिपि पररूपे रूपमिदम् ।
4. 'षिवु तन्तुसन्ताने' धा. पा. दिवा. 1108, इति सिव्धातोः सन्प्रत्यये'सनीवन्तर्ध.' अष्टा. 7/2/49, इति इट्पक्षे दिदेविषेती'तिवद्रूपमिदम् ।
5. 'षिवु तन्तु.' धा. पा. दिवा. 1108, इति सिव्धातोः सन् प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49. इति इडभावपक्षे 'दुद्यूषती'तिवद्रूपमिदम् ।
6. 'ऋधु वृद्धौ' धा. पा. दिवा. 1246, इति ऋध् धातोः सन्प्रत्यये 'सनीवन्तर्ध.' अष्टा. 7/2/49, इति इडागमे ऋकारस्य लघूपधगुणेऽकारे रपरत्वे 'अर्ध्इस'–इत्यवस्थायां 'सन्यङोः'–अष्टा. 6/1/9, 'अजादे र्द्वितीयस्य'–अष्टा. 6/1/2, इति 'धिस' इत्येतस्य द्वित्वेऽभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च'–अष्टा. 8/4/54, इति जश्त्वेनाऽभ्यासधकारस्य दकारे प्रत्ययाऽवयवसकारस्य षत्वे सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् । अत्र रेफस्य 'नन्द्राः संयोगादयः'–अष्टा. 6/1/3, इति निषेधाद्द्वित्वं न भवति ।
7. ऋधुवृद्धौ' धा. पा. दिवा. 1246, इति ऋध्धातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इति इडभावपक्षे ऋकारस्य लघूपधगुणेकारेऽरपरत्वे 'सन्यङोः'–अष्टा. 6/1/9, 'अजादे-र्द्वितीयस्य'–अष्टा. 6/1/2, इति 'धस' इत्येतस्य द्वित्वेऽभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च'– अष्टा. 8/4/54, इतिजश्त्वेन धकारस्य दकारे 'सन्यतः'–अष्टा. 7/4/79 इत्यभ्यासस्याऽत इत्वे 'ऋदिधस'–इति स्थिते 'आप्ज्ञप्यृधामीत्' अष्टा. 7/4/55, इति अङ्गस्याऽच ईत्वे रपरत्वे 'अत्र लोपोऽभ्यासस्य' अष्टा. 7/4/58, इत्यभ्यासलोपे 'खरि च'–अष्टा. 8/4/55. इतिचर्त्वेन धकारस्य तकारे सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
8. 'भ्रस्जपाके' धा. पा. तुदा. 1285, इति भ्रस्ज्धातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49. इति इडागमे 'सन्यङोः'–अष्टा. 6/1/9. इति 'भ्रस्ज्' इत्येतस्य द्वित्वेऽभ्यासकार्येषु कृतेषु 'सन्यतः'–अष्टा. 7/4/79. इत्यभ्यासस्याऽत इत्वे 'बि भ्रस्ज्इस'–इतिस्थिते 'झलां जश् झशि'–अष्टा. 8/4/53, इतिसकारस्य दकारे दकारस्य 'स्तोः श्चुना श्चुः'–अष्टा. 8/4/40. इतिश्चुत्वेन जकारे प्रत्ययावयवसकारस्य षत्वे सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

[1]'बिभ्रक्षति' [2]'बिभर्जिषति'–[3]'बिभर्क्षति'–'दिदम्भिषति[4]' 'धिप्सति'[5]धीप्सति[6]' 'उच्छिश्रयिषति '[7]'उच्छिश्रीषति'[8]–'सिस्वरिषति,[9]'सुस्वूर्षति'[10]'यियविषति'[11]'युयवि[12]-

---

1. 'भ्रस्ज् पाके' धा. पा. तुदा. 1285, इति भ्रस्जधातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इतिइडभावपक्षे 'भ्रस्जोरोपधयोरमन्यतरस्याम्'–अष्टा. 6/4/47, रमागमाभावपक्षे च 'भ्रस्ज् स'–इत्यवस्थायां 'सन्यङोः'–अष्टा. 6/1/9, भ्रस्ज्'–इत्येतस्य द्वित्वेऽभ्यासकार्येषु कृतेषु 'सन्यतः'–अष्टा. 7/4/79, इत्यभ्यासस्याऽत इत्वे 'विभ्रस्ज'इतिस्थिते 'स्कोः संयोगाद्योरन्ते च'–अष्टा. 8/3/29, इतिसकारलोपे जकारस्य चोः कुः'–अष्टा. 8/2/30, कुत्वेन ककारे सनः सकारस्य षत्वे 'बिभ्रक्षे'ति सन्नन्तात् लटि तिपि शपि पररूपे रूपमिदम् ।
2. 'भ्रस्जपाके'धा. पा. तुदा. 1285, इति भ्रस्जधातोः सन्प्रत्यये 'सनीवन्तर्ध.' अष्टा. 7/2/49, इति इडागमे भ्रस्जूइस्'–इतिस्थिते 'भ्रस्जोरोपधयोरमन्यतरस्याम्'–अष्टा. 6/4/47, इति अकारादुपरि सकारात्प्राग्रेफाऽऽगमे 'रोपधयो'रिति षष्ठीनिर्देशाद्रमागमेन भकाराद्रेफस्य सकारस्य च निवृत्तौ'भर्जइस' इति स्थिते 'सन्यङोः'–अष्टा. 6/1/9, इति 'भर्ज'इत्यस्य द्वित्वेऽभ्यासत्वे हलादिशेषे अभ्यासस्याऽतः 'सन्यतः'–अष्टा. 7/4/79, इतिइत्वे भकारस्य' अभ्यासे चर्च' अष्टा. 8/4/54, इति जश्त्वे बकारे सनः सकारस्य षत्वे'विभर्जिषे'ति-सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
3. 'भ्रस्जपाके' धा. पा. तुदा. 1285, इति भ्रस्जधातोः सन्प्रत्यये 'सनीवन्तर्ध.'अष्टा. 7/2/49, इति इटोऽभावे 'भ्रस्जोरोपयोरमन्यतरस्याम्'–अष्टा. 6/4/47, इति अकारादुपरि सकारात्-प्राग्रेफाऽऽगमे 'रोपधयो'रितिषष्ठीनिर्देशाद्रमागमेन भकाराद्रेफस्य सकारस्य च निवृत्तौ 'भर्ज् स'इत्यवस्थायां 'सन्यङोः'–अष्टा. 6/1/9, इति 'भर्ज्' इत्यस्य द्वित्वेऽभ्यासत्वे हलादिशेषे अभ्यासस्याऽतः 'सन्यतः'–अष्टा. 7/4/79, इति इत्वे भकारस्य 'अभ्यासे चर्च'–अष्टा. 8/4/45, इति जश्त्वेन बकारे 'बिभर्ज्ज्स' इति स्थिते जकारस्य 'चोः कुः'–अष्टा. 8/2/30, इतिकुत्वेन ककारे सनः सकारस्य 'आदेशप्रत्यययोः'–अष्टा. 8/3/59, इतिषत्वे 'विभर्क्षे'ति-सन्नन्ताल्लटि तिपि शपि परररूपे रूपमिदम् ।
4. 'दम्भुदम्भने' धा. पा. स्वा. 1271, इति दम्भ्धातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इति इडागमे 'दम्भ्इस'इति स्थिते 'दम्भ्' इत्यस्य 'सन्यङोः'–अष्टा. 6/1/9, इति द्वित्वे अभ्यासकार्येषु कृतेषु सनः सकारस्य षत्वे 'दिदम्भिषे'तिसन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् । अत्र सनो झलादित्वाभावेनाऽकित्त्वान्नलोपो न भवति ।
5. 'दम्भु दम्भने' धा. पा. स्वा. 1271, इति दम्भ धातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इति इडभावपक्षे 'दम्भ इच्च'–अष्टा. 7/4/56, इतिदकारोत्ताराऽकारस्य इत्वे 'दिम्भ्स' इतिस्थिते–'हलन्ताच्च' अष्टा. 1/2/10, इत्यत्र हल्ग्रहणं हल्त्वजात्याक्रान्तैकाऽनेक-हल्व्यक्तिपरमिति सिद्धान्तात् सनः कित्त्वात्, 'अनिदितां हल उपधायाः क्ङिति'–अष्टा. 6/4/24, इत्युपधानकारस्य लोपे 'सन्यङोः'–अष्टा. 6/1/9, इति 'दिभ्' इत्येतस्य द्वित्वेऽ-भ्यासत्वे 'अत्रलोपोऽभ्यासस्य'–अष्टा. 7/4/58, इत्यभ्यासलोपे दकारस्य भष्भावेन धकारे भकारस्य 'खरि च'–अष्टा. 8/4/55, इति चर्त्वेन पकारे सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
6. इडभावपक्षे 'दम्भ इच्च'–अष्टा. 7/4/56, इतिईत्वपक्षे'धिप्सती'तिवद्रूपमिदम् ।
7. उत् पूर्वकात् 'श्रिञ्सेवायाम्' धा. पा. भ्वा. 897, इति श्रिधातोः सन्प्रत्यये 'सनीवन्तर्ध.'–अष्टा. 7/2/49, इति इडागमे 'सन्यङोः-अष्टा. 6/1/9, इति श्रिशब्दस्य द्वित्वेऽभ्यासत्वे हलादिशेषे 'शिश्रिइस' इति स्थिते अझलादित्वात् सनः 'हलन्ताच्च'–अष्टा. 1/2/10, इतिकित्त्वाऽभावे 'अज्झनगमां सनि'–अष्टा. 6/4/16, इतिदीर्घाऽभावे च सति आर्धधातुकलक्षणे गुणेऽयादेशे सनः सकारस्य षत्वे उपसर्गदकारस्य श्चुत्वेन चकारे 'शश्छोऽटि'–

षति'—[1]'प्रोर्णुनुविषति' [2]'प्रोर्णुनविषति' [3]प्रोर्णुनूषति' [4]'बिभरिषति' – [5]'बुभूर्षति'

---

अष्टा. 8/4/63. इति शकारस्य च्छकारे 'उच्छिश्रयिषे'तिसन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

8. 'सनीवन्तर्ध.'—अष्टा. 7/2/49, इतिइडभावपक्षे 'अज्झनगमां सनि'—अष्टा. 6/4/16, इति-दीर्घः सनः कित्वाद्गुणाभावश्चाऽत्र विशेषः,सर्वमन्यत्कार्यम्' उच्छिश्रयिषती'तिवदत्र बोध्यम् ।
9. 'स्वृ शब्दोपतापयोः' धा. पा. भ्वा. 932, इति स्वृ धातोः सन्प्रत्यये 'सनीवन्तर्ध.'—अष्टा. 7/2/49. इति इडागमे 'स्वृ इ स'—इत्यवस्थायां 'सन्यङोः'—अष्टा. 6/1/9, इति 'स्वृ'—इत्येतस्य द्वित्वेऽभ्यासत्वे ऋकारस्य अत्वे रपरत्वे हलादिशेषे सकारोत्तराकारस्य 'सन्यतः'—अष्टा. 7/4/79. इति इत्वे द्वितीयखण्डस्य ऋकारस्यआर्धधातुकलक्षणे गुणेऽकारे रपरत्वे सनः सकारस्य षत्वे 'सिस्वरिषे'तिसन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
10. 'स्वृ शब्दोपतापयोः' धा. पा. भ्वा. 932, इति स्वृ धातोः सनि 'सनीवन्तर्ध.'—अष्टा. 7/2/49. इति इडभावपक्षे 'अज्झनगमांसनि'—अष्टा. 6/4/16. इति ऋकारस्य दीर्घे 'उदोष्ठ्य पूर्वस्य'—अष्टा. 7/1/102, इति ऋकारस्य उत्वे रपरत्वे 'हलिच'—अष्टा. 8/2/77, इतिदीर्घे 'स्वूर्ष'—इत्येतस्य 'सन्यङोः'—अष्टा. 6/1/9. इति द्वित्वेऽभ्यासकार्येषु कृतेषु 'आदेशप्रत्यययोः' —अष्टा. 8/3/59. इति सनः सकारस्य षत्वे 'सुस्वूर्षे'ति सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
11 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1033, इति युधातोः सनि 'सनीवन्तर्ध.'—अष्टा. 7/2/49. इति इडागमे'द्विर्ववचनेऽचि'—अष्टा. 1/1/19. इति गुणनिषेधात् 'यु' इत्यस्य 'सन्यङोः'—अष्टा. 6/1/9. इति द्वित्वेऽभ्यासत्वे 'ओः पुयण् ज्यपरे'—अष्टा. 7/4/80. इत्यभ्यासस्येत्त्वे 'यियु इस'—इत्यवस्थायामुकारस्याऽऽर्धधातुकलक्षणे गुणेऽवादेशे सनः सकारस्येत्वे 'यियविषे'ति सन्नन्ताल्लटितिपि शपि पररूपे रूपमिदम् ।
12. 'सनीवन्तर्ध.'—अष्टा. 7/2/49, इति इडभावपक्षे 'अज्झनगमां सनि'—अष्टा. 6/4/16, इति दीर्घः कित्त्वाद् गुणाभावश्चात्र विशेषः सर्वमन्यत्कार्यं'यियविषती'तिवद्बोध्यम् ।

1. प्रपूर्वकात् 'ऊर्णुञ् आच्छादने' धा. पा. अदा. 1039, इति ऊर्णुधातोः सनि 'सनीवन्तर्ध.' अष्टा. 7/2/49, इति इडागमे 'ऊर्णुइस' हति स्थिते 'विभाषोर्णोः' - अष्टा. 1/2/3, इति ङित्त्वपक्षे गुणाऽभावात् 'नु' इत्येतस्य 'सन्यङोः' - अष्टा. 6/1/9, इतिद्वित्वेऽभ्यासत्वे उत्तरखण्डस्य उवङि सकारस्य षत्वे 'ऊर्णुनुविषेति, सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
2. 'विभाषोर्णोः' - अष्टा. 1/2/3. इतिङित्त्वाऽभावपक्षे 'नु' - इत्यस्य द्वित्वे उत्तरखण्डस्य उकारस्य गुणाऽवादेशौ विशेषौ सर्वमन्यत् - कार्यम् 'प्रोर्णुनुविषती'तिवद्बोध्यम् ।
3. 'सनीवन्तर्ध.' - अष्टा. 7/2/49, इति इडभावपक्षे 'नन्द्राः संयोगादयः' - अष्टा. 6/1/3, इति रेफंवर्जयित्वा 'सन्यङोः' - अष्टा. 6/1/9, इति नुसुशब्दस्य द्वित्वेऽभ्यासादि कार्येषु कृतेषु अज्झनगमांसनि'- अष्टा. 6/4/16, इति दीर्घेसकारस्यषत्वे प्रपूर्वकाद् ऊर्णोतेः सन्नन्ताल्लटि तिपिशपिरूपमिदम् ।
4. 'भृञ् भरणे' धा. पा. भ्वा. 898, इति भृधातोः सन्प्रत्यये 'सनीवन्तर्ध.' अष्टा. 7/2/49, इति इडागमे 'भृइस' इतिस्थिते 'सन्यङोः' - अष्टा. 7/2/49, इति 'भृ' इत्येतस्य द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे अभ्यासस्य अत इत्वे भकारस्य जश्त्वेन बकारे उत्तरखण्डस्य गुणे रपरत्वे सकारस्य षत्वे 'बिभरिषे'ति सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
5. 'भृञ्भरणे' धा. पा. भ्वा. 898, इति भृधातोः सन्प्रत्यये 'सनीवन्तर्ध.' - अष्टा. 7/2/49, इति इडभावपक्षे 'भृस' इतिस्थिते 'अज्झनगमांसानि' - अष्टा. 6/4/16, इति ऋकारस्य दीर्घे 'उदोष्ठ्यपूर्वस्य' - अष्टा. 7/1/102, इति उत्वे रपरत्वे 'सन्यङोः' - अष्टा. 6/1/9, इति 'भुर्' इत्येतस्य द्वित्वेऽभ्यासकार्येषु कृतेषु उत्तरखण्डस्य 'हलि च' - अष्टा. 8/2/77, इतिदीर्घे सकारस्य षत्वे-'वुभूर्षे'ति सन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।

[1]'जिज्ञपयिषति' '[2]ज्ञीप्सति' – '[3]सिसनिषति' [4]'सिषासति' – इत्यादौ सनि वा इडागमार्थमारब्धे 'इवन्तानाम्[5] धातूनाम् – [6]ऋधु, [7]भ्रस्ज, [8]दम्भु,– श्रि[9], [10]स्वृ, [11]यु, [12]ऊर्णु, [13]भर, [14]ज्ञपि, [15]सन् इत्येतेषां च।[16]सनि वा इडागमो भवती' -

1. मारणतोषणनिशामनेषु ज्ञेति घटादौ पठितः, ततो हेतुमण्णौ पुकि घटादित्वेन मित्त्वादुपधाह्रस्वे ज्ञपीति ण्यन्तो धातुः, तस्मात्सन्प्रत्यये, 'ज्ञपमिच्चे'(1625)ति यः स्वतः पकारान्तः पठितश्चुरादौ, न तु पुगन्तः, तस्माद् वा ण्यन्तात् सन्प्रत्यये 'सनीवन्तर्ध.' - अष्टा. 7/2/49, इति इडागमे - 'ज्ञप् इ इस' - इतिस्थिते 'सन्यङोः' - अष्टा. 6/1/9, इति'ज्ञप्' इत्येतस्य द्वित्वेऽभ्यासकार्येषु कृतेषु अभ्यासस्याऽत इत्वे णेरिकारस्य गुणेऽयादेशे सकारस्य षत्वे 'जिज्ञपयिषे'तिसन्नन्तात्लटि तिपि शपि पररूपे रूपमिदम् ।
2. पूर्वोक्तोभयविधादपि ण्यन्ताज्ज्ञपीत्यस्मात् सनि 'सनीवन्तर्ध.' - अष्टा. 7/2/49, इति इडभावपक्षे णेः परस्य सनः 'इकोझल्' अष्टा. 1/2/9 इति कित्वाद् गुणाऽभावे णेर्लोपे सति अचोऽभावाद्दीर्घाऽभावे 'आपूज्ञप्यृधामीत्' - अष्टा. 7/4/55, इति ईत्वे 'ज्ञी'बित्यस्य 'सन्यङोः' अष्टा. 6/1/9, इतिद्वित्वेऽभ्यासत्वे हलादिशेषे 'अत्र लोपोऽभ्यासस्य'- अष्टा. 7/4/58, इत्यभ्यासलोपे 'ज्ञीप्से'तिसन्नन्ताल्लटि तिपि शपि पररूपे रूपमिदम् ।
3. 'षणु दाने' धा. पा. तना. 1465, 'षण सम्भक्तौ' धा. पा. भ्वा. 464, इति वा धातोः सन्प्रत्यये 'सन्नीवन्तर्ध.' - अष्टा. 7/2/49, इति इडागमे सनो झलादित्वाऽभावात् 'जनसनखनां सञ्झलोः' - अष्टा. 6/4/42, इति नकारस्याऽऽत्त्वाऽभावे 'सन्' इत्यस्य 'सन्यङोः' - अष्टा.य 6/1/9, द्वित्वेऽभ्यासकार्येषु कृतेषु अभ्यासस्याऽत इत्वे 'स्तौतिरेवे'ति नियमादुत्तरखण्डस्य सकारस्य षत्वाऽभावे सनः सकारस्य षत्वे-'सिसनिषे'ति सन्नन्तात् लटि तिपि शपि पररूपे रूपमिदम् ।
4. 'षणुदाने' धा. पा. तना. 1465, 'षण सम्भक्तौ' - धा. पा. भ्वा. 464, इति वा सन् धातोः सन्प्रत्यये 'सनीवन्तर्ध.' - अष्टा. 7/2/49, इति इडभाचपक्षे धातोर्नकारस्य 'जनसनूखनां सञ्झलोः' - अष्टा. 6/4/42, इत्यात्त्वे कृते 'सा' इत्यस्य 'सन्यङोः' - अष्टा. 6/1/9, इतिद्वित्वेऽभ्यासस्य ह्रस्वे अत इत्वे अभ्यासोत्तरखण्डस्य मकारस्य षत्वे 'सिषासे'ति सन्नन्तात् लटि तिपि शपि पररूपे रूपमिदम् ।
5. 'दिवु क्रीडाविजिगीषाव्यवहार द्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' धा. पा. दिवा. 11107, 'षिवु तन्तुसन्ताने' धा. पा. दिवा. 1108, - इत्येवमादीनामित्यर्थः ।
6. 'ऋधु वृद्धौ' धा. पा. दिवा. 1246 ।
7. 'भ्रस्जपाके' धा. पा. तुदा. 1285 ।
8. 'दम्भु दम्भने' धा. पा. स्वा. 127 ।
9. 'श्रिञ्सेवायाम्' धा. पा. स्वा. 897 ।
10. 'स्वृ शब्दोपतापयोः' - धा. पा. भ्वा. 932 ।
11. 'यु मिश्रणेऽमिश्रणे च' - धा. पा. अदा. 1033 ।
12. 'ऊर्णुञ्आच्छादने' - धा. पा. अदा. 1039 ।
13. 'भृञ्भरणे' धा. पा. भ्वा. 898 ।
14. 'मारणतोषणनिशामनेषु ज्ञेति घटादौ पठितः, ततो हेतुमण्णौ पुकि घटादित्वे मित्त्वात उपाधाह्रस्वे 'ज्ञपी'ति ण्यन्तो धातुः, 'ज्ञपमिच्च' 1625 - इति यः स्वतः पकारान्तः पठितश्चुरादौ तस्माण्णौ 'ज्ञपि' - इति ण्यन्तो धातुश्च ।
15. 'षणु दाने' धा. पा. तना. 1465, 'षण सम्भक्तौ' - धा. पा. भ्वा. 464 ।
16. 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' - अष्टा. 3/1/17, इति - विहिते' इत्यर्थः ।

त्यर्थकेऽस्मिन् सूत्रे 'सिस्वरिषति' 'सुस्वूर्षतीत्यादौ सनि वा इडागमार्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याभावे व्यर्थः । '[1]स्वरतिसूति सूयतिधूञूदितो वे'त्यनेनैव इड्विकल्पस्य सिद्धिः 'सिस्वरिषति' - इत्यादौ हि सुलभा । ज्ञापिते चाऽस्मिनूवचने 'सिस्वरिषती'त्यादौ '[2]श्र्युकः किती'तिप्रतिषेधः प्राप्नोतीति तद्बाधनाय सूत्रेऽस्मिन्नयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु '[3]स्वृत्वा' इत्यत्र [4]इडभावसिद्धिः । अस्य वचनस्याऽसत्त्वे हि 'स्वरती'तिसूत्रं [5]येन नाप्राप्तिन्यायेन यथा एकाजूलक्षणस्य[6] इणूनिषेधस्य बाधकं तथा '[7]श्र्युकः किती'त्यस्याऽबाधकं भवेदिती-[8]हेडानापत्ति[9]र्दुर्वारा स्यात् । सति चाऽस्मिनूवचनेऽनेन 'स्वृत्व' इत्यत्र इड्विकल्पस्य[10] प्राप्तिर्न भवतीति 'श्र्युकः [11]किती'तीड्निषेधादत्रप्रयोगे इडभावः सिद्ध्यति ।

## 'हन् ग्रहे'ति शब्दौ

'[12]स्य सिच् सीयुट् तासिषु भावकर्मणोरुपदेशेऽज्झन ग्रह दृशां वा चिण्वदिट् चे'त्यत्र 'हनग्रहे'तिशब्दौ '[13]उच्चरितप्रध्वंसिनोऽनुबन्धाः' – इति - परिभाषाया [14]ज्ञापकौ । यतोऽस्या अभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – '[15]चायिष्यते' -

---

1. अष्टा. 7/2/44 ।
2. अष्टा. 7/2/11 ।
3. 'स्वृ शब्दोपतापयोः' - धा. पा. भ्वा. 932, इति स्वृधातोः 'समानकर्तृकयोः पूर्वकाले' - अष्टा. 3/4/21 ।
4. 'स्वरति सूति सूयति धूञदितो वा' - अष्टा. 7/2/44 ।
5. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' प.शे. प. 58, पृ. 261 ।
6. 'एकाच उपदेशेऽनुदात्तात्' - अष्टा. 7/2/10 ।
7. अष्टा. 7/2/11 ।
8. 'स्वृत्वा' इत्यत्रेत्यर्थः ।
9. 'स्वरति.' - अष्टा. 7/2/44, इत्यनेनेतिशेषः ।
10. 'स्वरति.' - अष्टा. 7/2/44, इत्यस्येत्यर्थः ।
11. अष्टा. 7/2/11 ।
12. अष्टा. 6/4/62 ।
13. व्याडिः प. सू. प. 11, पृ. 8 ।
4. तथाहि –
   (क) 'उच्चरितप्रध्वंसिनोऽनुबन्धाः । उच्चरितमात्रा एवानुबन्धाः प्रध्वस्यन्ते । कथं ज्ञायते । यदयं 'स्यसिचूसीयुट्तासिषु भावकर्मणोरुपदेशे.' (6/4/62) इतिसिद्धेऽज्ग्रहणे हनो ग्रहणं करोति । अत्र हि इनूग्रहावजन्तौ तत्र अच् इत्येव सिद्धम् । पश्यत्याचार्यः उच्चरितमात्रा एवानुबन्धाः प्रध्वस्यन्ते इति । अत्र अकार उच्चरित मात्र एव लुप्यते । तस्मान्नाजूग्रहणेन सिद्धम् । तस्माद्धन्ग्रहोग्रहण''मित्याह व्याडिः प. सू. प. 11, पृ. 8 ।

[1]इत्यादौ वा चिण्वदिटोः सिद्ध्यर्थमारब्धे 'स्य[2]-सिच्[3]' सीयुट्[4], तासि[5]- इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानां[6], हन्[7], [8]ग्रह, दृश[9] – इत्येतेषां च चिणवत् कार्यं भवति वा, यदा चिण्वत्तदा इडागमो भवती'त्यर्थकेऽस्मिन् सूत्रे '[10]घानिष्यते' '[11]ग्राहिष्यते' - इत्यादौ[12] चिण्वदिटोः सिद्ध्यर्थं शब्दोऽयमुपात्तः। स चाऽस्य वचनस्याऽभावे व्यर्थः। अजन्तत्वेन हनग्रहयोश्चिण्वदिटोः '[13]अच्' - एत्यनेनैव हि सिद्धिः सुलभा। ज्ञापितायां चाऽस्यां [14]हन- [15]ग्रहयोरकारयो-

---

(ख) स्यसिचूसूत्रे (6/4/62) ग्रहधातोरदन्तत्वादन्तग्रहणेनैव सिद्धे हलन्तत्वमभिधाय पृथक् ग्रहशब्दोपादानं ज्ञापयति 'तदुच्चरितप्रध्वंसिनो ह्यनुबन्धाः कार्यकाले न सन्ती'ति। तेन लूञोऽनुबन्धस्य धातुसंज्ञायाः प्रागेव लोपात् ञकारलोपस्याधातुलोपत्वात् - लवितुमित्यत्र 'न धातुलोप' इति (1/1/4) गुणनिषेधो न भवती''त्याह पु. दे. ज्ञा समु. चतुर्विंशे अङ्गपादे पृ. 86।

15. 'चिञ्चयने' धा. पा. स्वा. 1252, इति धातोः कर्मणि लृटि स्यप्रत्यये लस्य स्थाने 'भावकर्मणोः' - अष्टा. 1/3/13, इत्यात्मनेपदे ते 'स्यसिच्.' अष्टा. 6/4/62, इति चिण्वद्भावेटोः कृतयोः चेरिकारस्य 'अचोञ्णिति' - अष्टा. 7/2/115, इतिवृद्धावैकारेऽया-देशे प्रत्ययाऽवयवसकारस्य षत्वे टितष्टेरेत्वे च कृते रूपमिदम्।

1. अत्रादिपदेन 'दायिष्यते' 'घानिष्यते' 'ग्राहिष्यते' दर्शिष्यते' इत्यादीनि ग्राह्याणि।
2. 'स्यतासी लृलुटोः' - अष्टा. 3/1/33।
3. 'च्लेः सिच्' - अष्टा. 3/1/44।
4. 'लिङः सीयुट्' - अष्टा. 3/4/102।
5. 'स्यतासी लृलुटोः' अष्टां. 3/1/33।
6. 'भू सत्तायाम्' धा. पा. भ्वा. 1, 'चिञ्चयने' धा. पा.स्वा. 1252, इत्यादीनामत्यर्थः।
7. हनहिंसागत्योः ' - धा. पा. अदा. 1012।
8. 'ग्रह उपादाने' धा. पा. क्र्या. 1534।
9. 'दृशिर् प्रेक्षणे' धा. पा.भ्वा. 988।
10. 'हन हिंसागत्योः' धा. पा. अदा. 1012, इति हन्धातोः कर्मणि – लृटि स्यप्रत्यये 'भावकर्मणोः' - अष्टा. 1/3/13, इत्यात्मनेपदे ते 'स्यसिच्.' - अष्टा. 6/4/62, इतिचिण्वद्भावेटोः कृतयोः 'अत उपधायाः' - अष्टा. 7/2/116, इत्युपधाया अतो वृद्ध वाकारे चिण्वद्भावात् 'होहन्तेर्ञ्णिन्नेषु' - अष्टा. 7/3/54, इति हकारस्य कुत्वेन घकारे प्रत्ययाऽवयवसकारस्य षत्वे टितष्टेरेत्वे च कृते रूपमिदम्।
11. 'ग्रह उपादाने' धा. पा. क्र्या. 1534, इति ग्रह्धातोः कर्मणि लृटिस्य प्रत्यये लस्य स्थाने 'भावकर्मणोः' - अष्टा. 1/3/13, इत्यात्मनेपदे ते 'स्यसिच्.' अष्टा. 6/4/62, इतिचिण्वदिटोः कृतयोः 'अत उपधायाः' - अष्टा. 7/2/116, इत्युपधाया अतो वृद्धावाकारेप्रत्ययाऽवयव सकारस्य षत्वे टितष्टेरेत्वे च कृते रूपमिदम्।
12. अत्राऽऽदिपदेन 'अघानिष्यत' 'अघानिषाताम्' 'घानिषीष्ट' 'घानिता'। 'घानिता' 'अग्राहिष्यत' 'अग्राहिषाताम्' 'ग्राहिषीष्ट' 'ग्राहिते' तिग्राह्यम्।
13. 'स्यसिच्.' - अष्टा. 6/4/62, इति सूत्रस्थेनेतिशेषः।
14. 'हन हिंसागत्योः' - धा. पा. अदा. 1012।
15 'ग्रह उपादाने' धा. पा. क्र्या. 1534।

रुच्चरितप्रध्वंसितया [1]नाऽजित्यनेन चिण्वदिटौ सिद्ध्यत इति 'घानिष्यते' 'ग्राहिष्यते' - इत्यादौ चिंण्वदिटोः सिद्ध्यर्थमत्राऽमू शब्दौ स्वांऽशे चरिताऽर्थौ भवतः। ज्ञापिताया अस्याः फलं तु 'चायिष्यते' इत्यादावजन्तत्वप्रयुक्तस्य चिण्वद्-भावस्य सिद्धिः। अस्या असत्त्वे हि [2]चिञो काररूपहलन्ततया अजन्तत्व-प्रयुक्तचिण्वद्भावो नाऽत्र सिद्ध्येत्। एवं '[3]लवितु'मित्यादौ[4]गुणनिषेधस्या[5]ऽ-भावेऽप्यस्याः फलम्। अस्या असत्त्वे हि [6]लूञो ञकारस्य धातुलोपित्वात् '[7]न धातुलोप आर्धधातुके' इत्यनेन गुणस्य[8] निषेधोऽत्र दुर्वारः स्यात्।

## 'ह'लितिशब्दः

'[9]घुमास्थागापाजहातिसां हली'त्यत्र 'ह'लितिशब्दः 'विप्रतिषेधे [10]परत्वविषये [11]नाभाच्छास्त्रीयोत्वमसिद्धं[12] भवती'तिवचनस्य ज्ञापकः[13]। यतोऽस्य वचनस्या-

---

1. 'स्यसिच्.' - अष्टा. 6/4/62, इतिसूत्रस्थेनेतिशेषः।
2. 'चिञ्चयने' धा. पा. स्वा. 1252।
3. 'लूञ्छेदने' धा. पा. क्र्या. 1478, इतिलूधातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' - अष्टा. 3/4/10, इति तुमुन् प्रत्यये धातोरुकारस्य आर्धधातुकलक्षणे गुणे ओकारेऽवादेशे कृदन्तात्सौ मान्तस्याऽव्ययतया सुपो लुकि रूपमिदम्।
4. अत्राऽऽदि पदेन 'पवितु'मित्यादि ग्राह्यम्।
5. 'न धातुलोप आर्धधातुके' - अष्टा. 1/1/4।
6. 'लूञ् छेदने 'धा. पा. क्र्या. 1484।
7. अष्टा. 1/1/4।
8. 'सार्वधातुकार्धधातुकयोः' अष्टा. 7/3/84।
9. अष्टा. 6/4/66।
10. 'विप्रतिषेधे परं कार्यम्' - अष्टा. 1/4/2।
11. 'असिद्धवदत्राभात्' - अष्टा. 6/4/22, इत्यधिकारस्थमित्यर्थः।
12. 'घुमा.' - अष्टा. 6/4/66, इति विहितमित्यर्थः।
13. तथाहि–

(क) "हलिति किम्? ददतुः ददुः। आतो लोपाद्धि परत्वादीत्वं स्यात्। एतदेव हल् ग्रहणं ज्ञापकम् - अस्मिन् प्रकरणे विप्रतिषेधे नासिद्धत्वं भवती' त्याह वाम. का. 6/4/66। घुमास्थागापाजहातिसां हलि' - इति हल्ग्रहणं ज्ञापकम् - अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीती"तिचाऽऽह वाम. का. 6/4/42।

(ख) "यद्यत्र विप्रतिषेधे कर्तव्ये सिद्धत्वं स्याद्,हल्ग्रहणमनर्थकं स्यात्। भवत्वत्रेत्त्वम्, तस्यासिद्धत्वादातो लोपो भविष्यति, तत् किं हल्ग्रहणेन? तदेतत् कथमर्थवद् भवति? यदि विप्रतिषेधे कर्तव्ये सिद्धत्वं स्यात्, नान्यथे"त्याह जि. बु. न्या. 6/4/66।

"कथं कृत्वा ज्ञापकम्? हल् ग्रहणस्यैतदेव प्रयोजनम् - हलादावीत्त्वं स्यात्, इह माभूत् - 'आतोऽनुपसर्गे कः' गोदः कम्बलद इति। यदि चात्र विप्रतिषेधो न स्याद हल्ग्रहणमनर्थकं स्यात्। अस्त्वत्रेत्त्वम्, तस्यासिद्धत्वाल्लोपो भविष्यति। पश्यति त्वाचार्यः - भवतीह प्रकरणे विप्रतिषेधः इति, यतो हल्ग्रहणं करोति। ननु चासति हल्ग्रहणेऽजादावपीत्त्वं स्यात्, ततश्चेयङ् प्रसज्येतेत्यनिष्टं रूपमापद्येत।

ऽऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि – [1]दीयते' - [2]इत्यादावीत्त्वाऽर्थमारब्धे –

---

तस्मादनिष्टनिवृत्त्यर्थत्वाद्धल्ग्रहणस्य न युज्यते ज्ञापकत्वम् ? नैष दोषः, असिद्धत्वादेवेत्त्वस्येयङादेशो न भविष्यति । व्यवस्थार्थं तर्हि हल्ग्रहणं स्यात्, असति हि तस्मिन्नेत्त्वस्यासिद्धत्वादाल्लोपः, आकारलोपस्यासिद्धत्वादीत्त्वमिति - चक्रवद-व्यवस्था स्यात् ? एतदप्यप्रयोजनम्, यदिव्यवस्थार्थं हल्ग्रहणं स्यात्, नैवायं हल्ग्रहणं कुर्वीत । अविशेषेणेकारमुक्त्वा तस्याजादौ लोपमपवादं विदध्यात् । तत् कथमिदमस्तु –'आतोलोप इटि च' इति ? ततः 'घुमास्थागापाजहातिसाम्' आकारलोपो भवतीत्यजादौ च क्ङिति । किमर्थमिदम् ? प्रत्ययमात्रे घ्वादीनां यदीत्त्वं वक्ष्यते, तस्यायमिट्यजादौ च क्ङित्यपवादः, ततः 'ईत्' इतीत्त्वं भवति घादीनामनचि क्ङिति, ततः 'एर्लिटि' - 'वान्यस्य संयोगादेः' 'न ल्यपि', 'मयतेरिदन्यतरस्याम्', ततो यदीत्त्वं भवति – सोऽयमेवं लघीयसा न्यासेन सिद्धे यद्धल्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः भवति विप्रतिषेधः इती"ति चाऽऽहजि. बु. न्या. 6/4/42 ।

(ग) "कथं कृत्वा ज्ञापकम् ? हल् ग्रहणस्यैतत् प्रयोजनम् - हलादौ यथा स्यात्, इह मा भूत् - गोदः कम्बलद इति । यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणमनर्थकं स्यात् । अस्त्वत्रेवम्' तस्यासिद्धत्वादियङादेशो असत्याल्लोपे तत्सिद्धं स्यात्, सति विप्रतिषेधे आल्लोपस्यावकाशः पार्ष्णित्रम्, अङ्गुलित्रमिति, ईत्वस्य दीयते, मीयते, गोद इत्यादावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्रहणमर्थवद्भवति ? नैतदस्ति ज्ञापकम्, व्यवस्थार्थमेतत् स्यात् । असति हि तस्मिन्नोत्वस्यासिद्धत्वादालोपः, तस्यासिद्धत्वादीत्वमिति चक्रकमव्यवस्था प्राप्नोति ? नास्ति चक्रकप्रसङ्गः, न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम्, शास्त्रतो नाम व्यवस्था । तत्र पूर्वमीत्वम्, तस्यासिद्धत्वादाल्लोपः, लोपेनावस्थानं भविष्यति । एवमपि कुत एतत् - ईत्वस्यासिद्धत्वादाल्लोपः, लोपेनावस्थानमिति, न पुनर्विपर्ययः स्यात् - पूर्वमाल्लोपः, तस्यासिद्धत्वादीत्वमीत्वेन व्यवस्थानमिति ? एवं तर्हि यदि व्यवस्थार्थमेतत्स्यात्, नैवायं हल्ग्रहणं कुर्वीत, अविशेषेणायमीत्वंकृत्वा तस्याजादौ लोपमपवादं विदधीत, कथम् ? इदमस्ति 'अतोलोप इटि च', ततो घुमास्थागापाजहातिसां लोपो भवति - इटि चाजादौ क्ङितिरति किमर्थं पुनरिदमीत्वम् ? वक्ष्यति तस्य बाधनार्थं तत्, ईद्भवति घ्वादीनाम्, ततः 'एर्लिङि' - 'वान्यस्य संगादेः', 'नल्यपि', 'मयतेरिदन्यतरस्याम्', ततः 'यति च', यति च ईद्भवति 'आतः' इत्येव, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यति यद्धल्ग्रहणं करोति तदगरीयांसं यत्नमारभते, तज्ज्ञापयत्याचार्यः – भवतीह विप्रतिषेध इती"त्याह ह. मि. पदम. 6/4/42 ।

(घ) "घुमास्थादिसूत्रे (6/4/66) हलीतिपदं ददतुः ददुः इत्यादौअचीत्वं माभूदित्येवमर्थम् । आतो लोपाद्धि (6/4/64) परत्वादत्रेत्वं स्यात् । एवं च हलीत्येतज्ज्ञापकं 'विप्रतिषेधे परत्वविषय्रे नाभाच्छास्त्रीयमीत्वमसिद्धं भवती'ति । अन्यथा हि आतोलोपे कार्ये ईत्वस्यासिद्धत्वात् क्वपरत्वादीत्वप्राप्तिरिति यन्निवृत्तये हलीतिस्यात् । तयोः सतोरेव हि विप्रतिषेधात्परत्वमिति वामनवृत्ति"-रित्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 86 ।

1. 'डु दाञ्दाने' धा. पा. जुहो 1091, इति दाधातोः कर्मणि लटि ते यकि 'घुमास्था.' - अष्टा. 6/4/66, इत्याकारस्य ईत्वे टितष्टेरेत्वे च कृते रूपमिदम् ।
2. अत्राऽऽदिपदेन 'देदीयते' 'धीयते' देधीयते' 'मीयते' मेमीयते' 'स्थीयते' 'तेष्ठीयते' 'गीयते'

[1]'घुसंज्ञकानामङ्गानां[2]मा, स्था[3], –गा[4], पा[5], जहाति[6], सा[7]–इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवती'त्यर्थकेऽस्मिन्सूत्रे '[8]ददतु'रित्यादावीत्वाऽ-[9]भावाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । ददतुरित्यादौ हि 'आतोलोप[10] इटि चे'त्यनेनाऽऽकारलोपस्य दुर्वारतयाऽत्र 'हली'तिशब्दस्याऽभावे-ऽपीत्त्वाऽभावः सुलभः । न च अतो[11]लोपस्याऽवकाशः – [12]ययतुः, [13]ययुरिति, [14]ईत्त्वस्याऽवकाशः – दीयते, [15]धीयत इति, ददतुरित्यादौ तूभयं प्राप्नोतीति परत्वा दीत्वं मा भवत्वित्येतदर्थमत्राऽयं शब्दश्चरितार्थ इति शङ्क्यम् । यतः

---

'जेगीयते' 'अध्यगीष्ट' 'अध्यगीषाताम्' 'अध्यगीषत' 'पीयते' पेपीयते' 'हीयते' 'जेहीयते' 'अवसीयते' 'अवसेसीयते' - इत्यादीनि ग्राह्याणि ।

1. 'दाधाघ्वदाप्' - अष्टा. 1/1/20 ।
2. 'मेङ्प्रणिदाने' धा. पा. भ्वा. 961, 'माङ् माने शब्दे च' धा. पा. जुहो. 1088, 'मा माने' धा. पा. अदा. 1062, इति त्रयाणामपि ग्रहणमत्र 'गामादाग्रहणेष्वविशेषः' - प. शे. प. 115, पृ. 351, इत्युक्तेः ।
3. 'ष्ठा गतिनिवृत्तौ' - धा. पा. भ्वा. 928 ।
4. 'गाङ्गतौ' धा. पा. भ्वा. 950, 'गैशब्दे' धा. पा. भ्वा. 917, 'गास्तुतौ धा. पा. जुहो. 1106, 'इणो गा लुङि' - अष्टा.2/4/45, इतीणो - गाऽऽदेशः, 'इण्वदिक इति वक्तव्यम्' वा. वै. सि. कौ. अदा. प्र. पृ. 165, इतीको गाऽऽदेशः, 'गाङ्लिटि' - अष्टा. 2/4/49, 'विभाषालुङ् - लृङोः' - अष्टा. 2/4/50, इति चेङो गाऽऽदेशः एषां समेषामविशेषेणाऽत्र ग्रहणम् । सत्यपि सर्वेषां ग्रहणे यस्य क्ङिदार्धधातुकपरं सम्भवति - तस्यैवेत्त्वं भवति, नेतरस्य, निमित्ताऽभावात् ।
5. 'पा पाने' धा. पा. भ्वा. 925, इत्यस्यैवात्र ग्रहणं न तु 'पा रक्षणे' - धा. पा. अदा. 1056, इत्यस्य । 'पातेरहि ग्रहणं नास्ति, लुग्विकरणत्वा'दित्याह वाम. का. 6/4/66 ।
6. 'ओ हाक्त्यागे' धा. पा. जुहो. 1090, इत्यस्यैवाऽत्र ग्रहणं न तु 'ओहाङ्गतौ' धा. पा. जुहो. 1089, इत्यस्याऽपि 'जहाती'ति श्तिपा निर्देशात् ।
7. 'षोन्तकर्मणि' धा. पा. दिवा. 1147 ।
8. 'डुदाञ्दाने' धा. पा. जुहो. 1091, इतिदाधातोर्लिटि तसि अतुसादेशे द्वित्वाऽभ्यासकार्येषु कृतेषु 'ददा अतुस्' - इत्यवस्थायाम् 'आतो लोप इटि च' - अष्टा. 6/4/64; इत्याकारलोपे सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
9. 'ददु'रित्याद्यादिपदग्राह्यम् ।
10. अष्टा. 6/4/64 ।
11. 'आतो लोप इटि च' - अष्टा. 6/4/64, इत्यस्येत्यर्थः ।
12. 'या प्रापणे' धा. पा.अदा. 1049, इति या धातोर्लिटि तसि अतुसि आतोलोपे च कृते रूप-मिदम् ।
13. 'घुमास्थागापाजहातिसां हलि' - अष्टा. 6/4/66 ।
14. डुधाञ्धारणपोषणयोः' धा. पा. जुहो. 1092, इतिधाधातोः कर्मणि लटि ते यकि 'घुमा'. अष्टा. 6/4/66, इत्याकारस्येत्वे टितष्टेरेत्वे च कृते रूपमिदम् ।
15. अष्टा. 6/4/22 ।

सिद्धयोर्विप्रतिषेध उपपद्यते, ददतुरित्यादौ तु '[1]असिद्धवदत्राभा'दित्यनेन [2]आत्त्वे-त्त्वयोरप्यसिद्धत्वमिति विप्रतिषेधाऽभावेन आतोलोपात् परत्वादीत्त्वस्याऽप्राप्त्या नात्रेत्वाऽभावार्थमयं शब्दश्चरिताऽर्थो भवत्यस्य वचनस्याऽभावे। ज्ञापिते चाऽस्मिन्-वचने 'ददतु'रित्यादौ [3]'असिद्धवदत्राभा'दित्यनेनेत्वस्या[4]ऽसिद्धत्वं न भवतीति सिद्धयोर्द्वयोर्विप्रतिषेधस्याऽक्षुण्णतया परत्वादीत्वाऽऽपत्तिः प्राप्नोतीति तदभावार्थ-मत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति। ज्ञापितस्याऽस्य वचनस्य यद्यप्यन्यत्र किमपि फलं नास्ति, तथाऽप्यन्यथानुपपत्तिलक्षण - ज्ञापकत्वं 'हली'तिशब्दे नूनमस्तीति सूत्रेऽस्मिन् ज्ञापकत्वमस्य शब्दस्य वामन - जिनेन्द्रबुद्धि - हरदत्तमिश्र - पुरुषोत्तमदेवैरुक्तम्। नैतद्युक्तम्। यतो ज्ञापितस्याऽर्थस्याऽन्यत्र फलं न दृश्यते। अपिच भाष्यकृत्कृन्-न्यासेनैव[5]सिद्धे हल्ग्रहणस्य चारितार्थ्यमपि नास्ति। तथ्यमिदं भट्टनागेश–श्रीनागेशाभ्यामपि स्वीकृतम्[6]।

---

1. 'आतोलोप इटि च' -अष्टा. 6/4/64, 'घुमास्थागापाजहातिसां हलि' - अष्टा. 6/4/66. इत्यनयोरित्यर्थः।
2. अष्टा. 6/4/22।
3. 'घुमास्था.' - अष्टा. 6/4/66।
4. अष्टा. 6/4/66।
5. तथाहि – "एवं तर्हि यदि व्यवस्थार्थमेतत् स्यान्नैवायं हल्ग्रहणं कुर्वीत। अविशेषेणायमीत्त्वमुक्त्वा तस्याजादौ लोपमपवादं विदधीत। तदेतत् कथम्? इदमस्ति 'आतो लोप इटि चे'ति। ततो घुमास्थागापाजहातिसां लोपो भवतीति चाऽजादौ क्ङितीति किमर्थं पुनरिदम्। ईत्त्वं वक्ष्यति तद्बाधनार्थम्। तत 'ईत्'। ईच्च भवति घ्वादीनाम्। तत 'एर्लिङि'। 'वान्यस्यसंयोगादेः'। 'नल्यपि'। 'मयतेरिदन्यतरस्याम्'। ततो 'यति'। यति च ईद्भवति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्धल्ग्रहणं करोति, गरीयांसं यत्न-मारभते तज्ज्ञापयत्याचार्यो 'भवतीह प्रतिषेध' इती"त्याह प. व्या. म. भा. 6/4/2/42।
6. तथाहि–
   (क) "परे तु ज्ञापितेऽपि पूर्वोक्तन्यासेनैव सिद्धे हल्ग्रहणस्य चारितार्थ्याऽभावात् कथं ज्ञापकत्वमिति चिन्त्यमेतत्। तस्मादत्र ज्ञापकोपन्यासपरो ग्रन्थ आचार्यदेशीयस्य। 'भवतीह विप्रतिषेध'इत्येव सिद्धान्त्युक्तिः, द्वयोरसिद्धत्वेऽपि तुल्यवलत्वाऽहानि-रित्याशयेन। उभयोः परस्परमसिद्धत्वारोपमात्रं, नैतावता सर्वथा शास्त्रयोरभावः, विप्रतिषेधे च यथोद्देशपक्ष एव। कार्यकालपक्षेऽपि तदुपस्थितसामर्थ्यादसिद्धत्वबाधो वेति तत्त्वमित्याहुः" - इत्याह भ. ना. उद्यो. 6/4/2/42।
   (ख) " 'जनसनखनाम्' (सू. 6/4/42)' आतोलोप इति च' (सू. 6/4/64)। ततो घुमास्थागापाजहातिसां लोपो भवति, इटि च अजादौ क्ङितीति। वक्ष्यमाणत्वबाधनार्थमेतत्। ततः ईत्। घ्वादयोऽनुवर्तन्ते ईच्च भवति घ्वादीनाम्। 'एर्लिङि' (सू. 6ÿ4/67) 'वान्यस्य' (सू. 6/4/68) 'नल्यपि' (सू. 6/4/69) 'मयतेरिदन्यतरस्याम् (सू. 6/4/70)। ततो 'यति', यति च ईद्भवति। एवं सिद्धे यद् गुरु सूत्रमारभते तत् ज्ञापयति भवत्याभीयेष्वसिद्धेष्वपि विप्रतिषेध इति। हल्ग्रहणं च गोद इत्यादावीत्वाभावाय। ज्ञापिते कथं चारितार्थ्यम्। तस्मादेक-देश्युक्तिरेतद्भाष्य"मित्याह श्रीना. ज्ञा. सं. 6. पृ. 110।

## 'हितसुखे'तिशब्दौ

'[1]चतुर्थीतदर्थार्थबलिहितसुखरक्षितै'रित्यत्र भाष्यकृत्कृत-योगविभाग[2]पक्षे'बलि-हितसुखरक्षितै'रिति योगे हितसुखेति शब्दौ 'तादर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्र'मितिवचनस्य ज्ञापकौ[3] । यतोऽस्य वचनस्याऽभावेऽत्रेमौ शब्दौ व्यर्थौ । 'गोभ्यो हितं गोहितम्' 'गोभ्यः सुखं गोसुखमि'त्यत्रापि हि 'चतुर्थी' इति प्रथमयोगेनैव समासः सुलभ इति 'बलिहितसुखरक्षितै'रिति योगे 'हितसुखे'ति शब्दौ व्यर्थौ । ज्ञापिते चाऽस्मिन् वचने 'गोहित'मित्यादौ न तादर्थ्ये चतुर्थी विद्यत इति प्रथमयोगेन समासाऽसिद्ध्या तत्र समाससिद्ध्यर्थं योगेऽस्मिन् शब्दाविमौ स्वांऽशे चरितार्थौ भवतः । ज्ञापितस्याऽस्य वचनस्य फलं तु 'छात्राय रुचित'मित्यत्र रुचितशब्दस्य अर्थशब्दाऽऽदेशा[4]ऽऽपत्तेरभावः । अस्य वचनस्याऽसत्त्वे हि 'तदर्थार्थे'तिद्वितीययोगेनाऽत्र रुचितशब्दस्य 'ब्राह्मणार्थ'- मित्यत्रेवाऽत्राऽपि अर्थशब्दाऽऽदेशाऽऽपत्तिर्दुर्वारा स्यात् । सति चाऽस्मिन्वचने 'छात्राय रुचित'मित्यत्र या चतुर्थी न सा तादर्थ्य इति सामासस्यैवाऽभावात् 'तदर्थार्थ'इति द्वितीययोगेन समासाऽवयवोत्तरपदस्य विधीयमानः अर्थ इत्यादेशो न प्राप्नोतीति नाऽत्र रुचितशब्दस्य अर्थशब्दाऽऽदेशाऽऽपत्तिर्भवति ।

## 'हे'रितिशब्दः

'[5]अतो हे'रित्यत्र 'हे'रितिशब्दः 'मुख्यस्यैव हेर्लुक्, न स्थानिवत्त्वात्तातङो[6]

---

1. अष्टा. 2/1/36 ।
2. 'अर्थेन नित्यसमासो वक्तव्यः' - इतिवार्तिकप्रत्याख्यानाय हि भगवता योगविभागः कृतः, तथाहि–"योगविभागः करिष्यते - 'चतुर्थी' । चतुर्थी सुबन्ते सह समस्यते । ततः 'तदर्थार्थस्य' । तदर्थस्य चोत्तरपदस्याऽर्थशब्द आदेशो भवती'ति - व्या. म. भा. 2/1/2/36 ।
3. तथाहि –
   (क) "आचार्य प्रवृत्ति र्ज्ञापयति – 'तादर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्र' मिति यदयं 'हितसुखग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? यथाजातीयकानां समासे हितसुखग्रहणेनाऽर्थस्तथाजातीयकानां समासः । यदि च तादर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्रन्ततो हितसुखग्रहणमर्थवद् भवती"त्याह पत. व्या. म. भा. 2/1/2/36 ।
   (ख) "तथा हितसुखग्रहणात् तादर्थ्यचतुर्थ्या एव तदर्थेति समास इती"त्याह श्रीना. ज्ञा. सं. 2, पृ. 54 ।
4. 'तदर्थार्थ' इति भाष्योक्तद्वितीययोगेनेतिशेषः ।
5. अष्टा. 6/4/105 ।
6. 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' - अष्टा. 7/1/35, इत्यनेन हेः स्थाने जातस्येत्यर्थः ।

भवती'तिवचनस्य ज्ञापकः[1] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः । तथाहि-'भव'[2] - इत्यादौ[3] 'हि' इतिशब्दस्य लुगर्थमारब्धे 'अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवती'त्यर्थकेऽस्मिन् सूत्रे अतः परस्य 'हि'इतिशब्दस्य लुगर्थं शब्दोऽयमुपात्तः । स चास्य वचनस्याऽभावेऽत्र व्यर्थः । '[4]हुझल्भ्यो हेर्धिरि'त्यत एवाऽनुवृत्त्याऽत्र सूत्रे 'हे'रित्यस्य लाभोहि सुलभः । ज्ञापिते चाऽस्मिन्वचने 'भवता[5]'- दित्यादौ तातङः स्थानिवद्भावेन[6] हित्वात् प्राप्तस्य लुकोऽभावाय शब्दोऽयमत्र स्वांऽशे चरितार्थो भवति । ज्ञापितस्य चाऽस्य वचनस्याऽन्यत्र फलं किमपि न दृश्यत इति पुरुषोत्तम-देवोक्तं[7] ज्ञापकमत्र न युक्तम् । 'भवता'दित्यादौ हेर्लुकोऽभावस्तु '[8]गौण-मुख्य'न्यायेनैव हि सुलभः । नाऽप्यत्राऽनुवृत्त्या[9]-' हे'रित्यस्य लाभः सुलभः, यतस्तथा सति धाराप्रवाहन्यायेन '[10]चिणोलु'गित्यत्राऽपि हेरित्यस्याऽनुवृत्त्यापत्तिः स्यादिति मन्ये ।

## 'हुश्नुवो'रितिशब्दः

'[11]हुश्नुवोः सार्वधातुके' - इत्यत्र 'हुश्नुवो'रितिशब्दः । 'भाषायामपि यङ्लुगन्तं सा'ध्विति वचनस्य ज्ञापकः[12] । यतोऽस्य वचनस्याऽभावेऽत्राऽयं शब्दो व्यर्थः ।

---

1. तथाहि– 'हुझल्भ्यो हेर्धिः (6/4/101) इत्यनुवृत्तौ 'अतोहे'रिति (6/4/105) ज्ञापकम्– 'मुख्यस्यैव हेर्लुक् न स्थानिवत्त्वात्तातङो भवतीती'त्याह पु. दे. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 87 ।
2. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोर्लोटि लस्य सिपि शपि गुणाऽवादेशयोः कृतयोः 'भव सि' - इति स्थिते 'सेर्ह्यपिच्च' - अष्टा. 3/4/87, इति सेर्ह्यादेशे 'भवहि' इतिस्थिते 'अतो हेः' अष्टा. 6/4/105, इति हेर्लुकि रूपमिदम् ।
3. अत्राऽऽदिपदेन 'पच' 'पठ' 'गच्छ' 'धाव' - इत्यादिप्रयोगा ग्राह्याः ।
4. अष्टा. 6/4/101 ।
5. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोः आशिषि लोटि लस्य सिपि सेः 'सेर्ह्यपिच्च' - अष्टा. 3/4/87, इति ह्यादेशे शपि गुणावादेशयोः 'अतो हेः' - अष्टा. 6/4/105, इतिलुक्परत्वाद्बाधित्वा 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' - अष्टा. 7/1/35, इतिपक्षे तातङि रूपमिदम् ।
6. 'स्थानिवदादेशोऽनल्विधौ' - अष्टा. 1/1/56, इत्यनेनेतिशेषः ।
7. ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 87 ।
8. 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ' प. शे. प. 16, पृ. 101 ।
9. 'हुझल्भ्योहेर्धिः' - अष्टा. 6/4/101, इत्यत इतिशेषः ।
10. अष्टा. 6/4/104 ।
11. अष्टा. 6/4/87 ।
12. तथाहि–

(क) "एवं तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो-'यङ्लुग् भाषायां भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? ।
बेभिदीति चेच्छिदीतीत्येतत् सिद्धं भवति भाषायामपी"त्याह पत. व्या. म. भा. 6/4/87 ।

(ख) "इदमेव हुश्नुग्रहणं ज्ञापकम् - 'भाषायामपि यङ्लुगस्तीति । छन्दसि 'छन्दस्युभयथा'इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्लुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तमनैकाजसंयोगपूर्वं सार्वधातुके विद्यते" - इत्याह वाम. का. 6/4/87 ।

(ग) "यदि च्छन्दस्येव यङ्लुक् स्यात्, तदा 'छन्दस्युभयथा'इत्यार्धधातुकत्वाद् एव योयुवति, रोरुवतीत्यत्र न भविष्यतीत्यनर्थकमेव हुश्नुग्रहणं स्यात् । यदा तु भाषायामपि यङ्लुगस्ति, तदार्धधातुकत्वाभावादसति हुश्नुग्रहणे योयुवतीत्यादौ प्राप्नोतीति तन्निवृत्त्यर्थमुपपद्यते हुश्नुग्रहणम् । तस्मादेतदेव ज्ञापयति – भाषायामपि यङ्लुगस्तीति । तेन बेभिदीति, चेच्छिदीत्यादि भाषायामप्युपपन्नं भवती"त्याह जि. बु. न्या. 6/4/87 ।

(घ) "इदमेव हुग्रहणं ज्ञपाकं 'भाषायामपि यङ्लुगस्ती'ति । छन्दसि हि 'छन्दस्युभयथे'ति (6/4/86) आदर्धधातुकत्वादेव यणादेशाप्रसङ्गः । नच यङ्लुगन्तादन्यत्र प्रत्युदाहरणमुवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते । यच्च विद्यते असुवन् अरुवन्निति तत्रापि अटोऽसिद्धत्वान्नानेकाजिति । तेन बोभवीति इति सिद्ध्यतीति नैर्लूरी वृत्तिः" त्याह पु. दे.ज्ञा. समु. चतुर्विंशे अङ्गपादे पृ. 87 ।

(ङ) "हुश्नुवोः किम् ?। योयुवति । अत्र युधातोर्यङ्लुकि "अदभ्यस्ता'दिति झेरदादेशे योयुअति' - इतिस्थिते अनेकाजङ्गावयवस्य असंयोगपूर्वस्य उकारस्य यण् न भवति । अत्र भाष्ये 'बहुलं छन्दसी'-त्यनुवृत्तौ 'यङोऽचि चे'ति विहितस्य यङ्लुकश्छान्दसत्वात् 'छन्दस्युभयथे'त्यादावार्धधातुकत्वाश्रयणादेव यो युवतीत्यत्र यणाभावसिद्धेर्हुश्नुग्रहणं भाषायामपि क्वचिद् यङ्लुकं ज्ञापयतीत्युक्तम् । तथा च भाषायामपि अनेकाचोऽसंयोगपूर्वकोकारान्ताद् योयुवतीत्यादौ यङ्लुक्सिद्धेस्तत्र यणभावार्थं हुश्नुग्रहणमिति फलति । ज्ञापकस्य सामान्यापेक्षत्वादुदाहृतोवर्णान्तादत्रापि क्वचिद् यङ्लुक् सिद्ध्यति । एतदेवाभिप्रेत्य भाष्ये – 'भाषायामपि यङ्लुक्भवती'-त्युक्त्वा, 'किमेतस्य ज्ञापने प्रयोजनं, बेभिदीति चेच्छिदीत्येतत् सिद्धं भवती' - त्युक्तम् । अत्र भिदिच्छिद्योरेव ग्रहणादुदाहृतोकारान्तादन्यत्र भवन् यङ्लुक् आभ्यामेव भवति, न त्वन्यत्रेत्याहुः । भिदिच्छिद्योर्ग्रहणं प्रदर्शनमात्रमित्यन्ये"इत्याह परमतम् वा. दी. बा. मनो. भ्वा. प्र. पृ. 130-131 ।

(च) "हुश्नुवोः (सू. 6/4/87) । 'हुश्नुग्रहणं भाषायामपि यङ्लुको ज्ञापकम् । तेन भाषायामपि बेभिदीति चेच्छिदीतीत्येतत् सिद्धं भवतीति भाष्योक्त्या अन्ययङन्तानां भाष्ये असाधुतैव लभ्यते" इत्याह श्रीना. ज्ञा. सं. 5, पृ. 112 ।

तथाहि–'[1]जुह्वति' 'सुन्वन्ती[2]'त्यादौ[3] [4]हुश्नु[5]वोरुकारस्य यण्सिद्ध्यर्थमारब्धे 'हु'–इत्येतस्याङ्गस्य श्नुप्रत्ययाऽन्तस्यानेकोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवती'त्यर्थकेऽस्मिन् सूत्रे[6] '[7]योयुवती'त्यादौ यणोऽभावाऽर्थं शब्दोऽयमुपात्तः । स चाऽस्य वचनस्याऽभावे व्यर्थः । यतोऽस्य वचनस्याऽभावे सार्वधातुके[8]परतः अनेकाच् उवर्णान्तं [9]चाङ्गं हुश्नुभ्यामन्यन्नास्तीति हुश्नुवोरित्यस्य शब्दस्याऽत्राऽसत्त्वेऽपि 'हुश्नुवो'रित्यर्थलाभाद् 'योयुवती'त्यादौ यणभावः सुलभः । न च 'नदं [10]योयुवतीनां वृषभम्'–इत्यादौ[11] छन्दसि 'योयु' इति यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्तीति तद्व्यावृत्त्यर्थं शब्दोऽयमत्र चरिताऽर्थो भवतीति कथमस्यैद्वचनज्ञापकत्वमितिशङ्क्यम् । [12]यतश्'छन्दस्युभयथे'तिसूत्रेण शतृप्रत्यस्य आर्धधातुकत्वाऽऽश्रयणेन सार्वधातुकत्वाऽभावादेवाऽत्र प्रयोगे सूत्राऽप्रवृत्त्या यणभावः सुलभः । न च [13]'अयुवन्' [14]'अरुवन्'–इतीदं यङ्लुगन्तादन्यत् प्रत्युदाहरणम्

---

1. 'हु दानाऽदनयोः' धा. पा. जुहो. 1083, इति 'हु' धातोर्लटि झौ शपि शपः 'जुहोत्यादिभ्यः श्लुः'–अष्टा. 2/4/75, इतिश्लौ 'श्लौ'–अष्टा. 6/1/10, इति 'हु' इत्यस्य द्वित्वेऽभ्यासकार्येषु कृतेषु 'अदभ्यस्तात्'–अष्टा. 6/1/4, इति झकारस्य अदादेशे 'जुहु अति'इतिस्थिते, 'हुश्नुवोः सार्वधातुके'–अष्टा. 6/4/87 इत्युकारस्य यणि वकारे रूपमिदम् ।
2. षुञ्अभिषवे' धा. पा. स्वा. 1248, इति 'सु' धातोर्लटि झौ 'स्वादिभ्यः श्नुः'–अष्टा. 3/1/73, इतिशपोऽपवादे श्नुप्रत्यये 'झोऽन्तः'–अष्टा. 7/1/3, इतिझकारस्य अन्तादेशे 'सुनुअन्ति'इति स्थिते 'हुश्नुवोः.'–अष्टा. 6/4/87, इति नोरुकारस्य यणि वकारे रूपमिदम् ।
3. अत्राऽऽदिपदेन 'जुह्वतु' 'अजुह्वत्' 'सुन्वन्तु' 'असुन्वन्'–इत्यादिप्रयोगा ग्राह्याः .
4. 'हु दानाऽदनयोः'–धा. पा. जुहो. 1083 ।
5. 'स्वादिभ्यः श्नुः'–अष्टा. 3/1/73.'श्रुवः शृ च'–अष्टा. 3/1/74 इत्याभ्यां विहितो गृह्यते ।
6. अत्राऽऽदिपदेन 'रोरुवती'तिग्राह्यम् ।
7. 'युमिश्रणेऽमिश्रणे च' धा. पा. अदा. 1033, इति यु धातोर्यङ्प्रत्यये यङो 'यङोऽचि च'–अष्टा. 2/4/74, इति लुकि प्रत्यलक्षणेन यङ्त्त्वात् 'सन्यङोः'–अष्टा. 6/1/9, इति युशब्दस्य द्वित्वेभ्यासत्वे 'गुणोयङ्लुकोः'–अष्टा. 7/4/82, इत्यभ्यासोकारस्य गुणेओकारे यङ्लुगन्ताल्लटि झौ 'अदभ्यस्तात्'–अष्टा. 6/1/4, इतिझस्यअदादेशे शपि शपो यङ्लुगन्तस्याऽदादित्वाल्लुकि हुश्नुभिन्नत्वाद् यणोऽप्राप्त्या 'योयु अति'–इत्यवस्थायाम् 'अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ'–अष्टा. 6/4/77, इत्युकारस्योवङि रूपमिदम् ।
8. 'तिङ्शित् सार्वधातुकम्'–अष्टा. 3/4/113 ।
9. 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'–अष्टा. 1/4/13 ।
10. 'यो यु'–इतियङ्लुगन्तात् शतृप्रत्यये उगित्वात् ङीपि तदन्तादामि विभक्तौ नदीत्वान्नुटि रूपमिदम् ।
11. अत्राऽऽदिपदेन 'बृषभं रोरुवतीना'मितिग्राह्यम् ।
12. अष्टा. 4/1/17 ।
13. 'यु मिश्रणेऽमिश्रणे च' धा. पा. अदा. 1033, इतियुधातोर्लङिअडागमे झौ झेरन्तादेशे शपि तस्य लुपि धातोरुकारस्योवङि तेरिकास्य ङित्त्वाल्लोपे तकारस्य संगान्तलोपे च कृते रूपमिदम् ।
14. 'रुशब्दे'धा. पा. अदा. 1034, इतिधातोर्लङि झौ 'अयुवन्'–इतिवद्रूपमिदम् ।

उवर्णान्तमनेकाजसंयोगपूर्वं सर्वधातुके समुपलभ्यतेऽतः श्नुवोरिति लाभाय शब्दोऽयमत्राऽऽवश्यक इति वैयर्थ्याऽभावान्नास्य ज्ञापकत्वमितिशङ्क्यम् । [1]यतोऽत्राऽटोऽसिद्ध[2]त्वादसंयोगपूर्वमपीदं न भवत्यनेकाजिति यङ्लुगन्तादन्यत् प्रत्युदाहरणसंभवम् । ज्ञापिते चाऽस्मिन्वचने भाषायां '[3]योयुवती'त्यादि यङ्लुगन्ते '[4]छन्दस्युभयथे'तिसूत्रस्याऽप्रवृत्त्या सार्वधातुके[5]शतरि परे यणादेशाऽभावार्थं शब्दोऽयमत्र स्वांऽशे चरितार्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु '[6]बोभवती'त्यादि प्रयोगाणां भाषायामपि साधुत्वसिद्धिः । अस्य वचनस्याऽसत्त्वे हि भाषायां नैतेषां प्रयोगाणां साधुत्वं सिद्ध्येत् । 'बहुलं छन्दसी[7]'त्यनुवृत्तौ 'यङोऽचि चे[8]'तिविहितस्य यङ्लुको हि छान्दसत्वम् । "हुश्नुग्रहणं ज्ञापयति–'भाषायामपि यङ्लुगभवती"त्युक्त्वा, किमेतस्य ज्ञापने प्रयोजनम् ? बेभिदीतिचेच्छिदीत्येतत् सिद्धं भवति भाषायामपी"ति [9]भाष्ये भिदिच्छिद्योरेव ग्रहणादुदाहृतोकारान्तादन्यत्र भवन् यङ्लुक् आभ्यामेव भवति, न त्वन्यत्रेति मते[10] तु वचनस्यास्य फलं 'बेभिदीति' 'चेच्छिदीति' इत्यनयोरेव साधुत्वसिद्धिः । [11]भाष्ये-'भिदिच्छिद्योर्ग्रहणं प्रदर्शनमात्र'मिति मते[12] तु 'बोभवीती'त्यादि पूर्वोक्तप्रयोगाणामपि साधुत्वसिद्धिरस्य

---

1. 'लुङ् लङ् लृङ् क्ष्वडुदात्तः'–अष्टा. 6/4/71, इति विहितस्येत्यर्थः ।
2. 'असिद्धवदत्राऽभात्'–अष्टा. 6/4/22, इत्यनेनेतिशेषः ।
3. 'योयुः'–इतियङ्लुगन्ताल्लटि शास्त्रादेशे उगित्वान् ङीपि रूपमिदम् ।
4. अष्टा. 4/1/17 ।
5. 'लटः शतृशानचावप्रथमासमानाधिकरणे'–अष्टा. 3/2/124, इतिविहित इत्यर्थः ।
6. 'भू सत्तायाम्' धा. पा. भ्वा. 1, इति भूधातोः 'पुनः पुनरतिशयेन वा भवतीति विग्रहे 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'–अष्टा. 3/1/22, इति यङ्प्रत्यये 'यङोऽचि च'–अष्टा. 2/4/74, इतिद्वित्वात्पूर्वंयङ्लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः'–अष्टा. 6/1/9, इतिभूशब्दस्य द्वित्वेऽभ्यासत्वे भस्य बत्वे 'गुणो यङ्लुकोः'–अष्टा. 7/4/82, इत्यभ्यासस्य गुणे 'बोभू'–इतियङ्लुगन्तस्य धातुत्वात्ततो लटि परस्मैपदे तिपि शपि 'चर्करीतंचे'त्यदादौ पाठाच्छपो लुकि 'यङो वा'–अष्टा. 7/3/94, इति पाक्षिके ईडागमे 'भूसुवोस्तिङि'–अष्टा. 7/3/88, इतिगुणनिषेधस्य भाषायां यङ्लुकि 'दाधर्त्तिदर्धर्त्तिदर्धर्षिबोभूतुतेतिक्तेलर्ष्यापनीफणत् संसनिष्यदत्करिक्रत कनिक्रत् कनिक्रद् भरिभ्रद्दविध्वतोदविद्युत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च'–अष्टा. 7/4/65, इति 'बोभूतु तेतिक्ते'–इति छन्दसि निपातनात् अप्रवृत्ते, गुणेऽवादेशे च कृते रूपमिदम् ।
7. अष्टा. 2/4/73 ।
8. अष्टा. 2/4/74 ।
9. व्या. म. भा. 6/4/3/87 ।
10. 'मतमिदं भट्टनागेशस्य, अनेन हि "एवं चैतत्प्रयोगद्वयातिरिक्तंयङ्लुगन्तं भाषायामसाध्वेवे'त्युक्तम्–उद्यो. 6/4/3/87 ।
11. व्या. म. भा. 6/4/3/87 ।
12. मतमिदं भट्टोजिदीक्षितस्य । अनेन हि"भूसुवोरितिगुणनिषेधो यङ्लुकि भाषायां न, 'वोभूतु तेतिक्ते'इति छन्दसि निपातनात् । अतएव यङ्लुग्भाषायामपि सिद्धः"इत्युक्तम्–वै. सि. कौ. यङ् लुक्. प्र. पृ. 275-276 ।

वचनस्य फलं बोध्यम् । अनयोर्मतयोः–'भिदिच्छिद्योर्ग्रहणं प्रदर्शनमात्र'मिति मतमेव ज्याय इति मन्ये । यतो भगवता 'भूसुवोस्तिङी'ति सूत्रे[1]भाष्ये"बोभूत्वित्येतन्नियमार्थम् । अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र । क्व माभूदबीभवतीति"यदुक्तं तत् 'भिदिच्छिदिभ्यामेव भाषायांयङ्लुग्भवती'तिमते न संगच्छेत । नह्यस्मिन्मते भूधातो र्यङि 'बोभवती'त्यस्य साधुत्वं भाषायां साधयितुं शक्यम् ।

वस्तुतस्तु सूत्रेऽस्मिन् 'हुश्नुवोरिति' शब्दस्यैतद्वचनज्ञापकत्वं वामन-जिनेन्द्रबुद्धि-पुरुषोत्तमदेव-श्रीनागेशैर्निरूपितं न युक्तम् । यतो 'यङोऽचि चे[2]'त्यत्र यङ्लुग्विधौ'–'बहुलं छन्दसी[3]'तिपूर्वसूत्राच्छन्दसीत्यनुवर्त्तनमस्य ज्ञापकत्वे निदानमेवाऽसंगतम् । तथ्यमिदं भट्टोजिदीक्षितेन[4]सूचितं, वासुदेवदीक्षितेन च चारु प्रतिपादितम्[5] । न चैतद्वचनज्ञापकत्वपरस्य भाष्यस्य विरोधोऽत्राऽस्य शब्दस्य ज्ञापकत्वाऽभावे शङ्क्यः । यतोऽस्य शब्दस्य ज्ञापकत्वपरं भाष्यमेकदेश्युक्तिः[6] । अतएव भट्टनागेश–ज्ञानेन्द्र-भिक्षुभ्यामत्रास्य शब्दस्य सार्थक्यं प्रतिपाद्य ज्ञापकत्वं [7]निराकृतम् ।

---

ग्रन्थमिमं व्याचक्षाणः " 'कृषेश्छन्दसी'त्यतश्छन्दसीत्यनुवृत्तौ 'दाधर्तिदर्धर्ति दर्धर्षि बोभुतु तेतिक्ते'–इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाऽभावो निपात्यते । 'भूसुवो'रित्येव तत्र गुणनिषेधे सिद्धे गुणाऽभावनिपातनं नियमार्थं–'यङ्लुकि छन्दस्येवाऽयं'भुसुवो'रिति गुणनिषेधो, नान्यत्रे'ति । अतो लोकेऽपि यङ्लुगस्तीति विज्ञायते । एतेन 'यङोऽचिचे'तियङ्लुग्- विधौ'बहुलं छन्दसी'तिपूर्वसूत्राच्छन्दसीत्यनुवर्तयन्तः परास्ताः"इत्याह. वा. दी. बा. मनो. यङ्लुगन्त प्र. पृ. 276 ।

1. व्या. म. भा. 7/3/2/88 ।
2. अष्टा. 2/4/74 ।
3. अष्टा. 2/4/73 ।
4. वै. सि. कौ. यङ्लुगन्तप्र. पृ. 275-276 ।
5. बा. मनो. यङ्लुगन्त प्र. पृ. 276 ।
6. तथाहि–"किंच'किमेतस्य ज्ञापने प्रयोजन'मिति प्रश्नस्य लोके उवर्णान्त-यङ्लुगन्त-प्रयोगाऽदर्शनमेव बीजम् । तत्र तत् प्रयोगाऽदर्शनेनास्योत्तरस्यैकदेश्युक्तित्वमावश्यकम् । यङोऽचिचे'तिसूत्रे चलभ्य-वाक्य-भेदलभ्यस्याऽनैमित्तिकयङ्लुको बहुलग्रहणानुवृत्त्या यथाप्रयोगं लोकेऽपि लाभेन ज्ञापकानुपयोगाच्चेति बोध्यम्–इत्याह भ. ना.. उद्यो. 6/4/3/87 ।
"भाष्ये यङ्लुको भाषायामपि प्रयोग इत्यर्थज्ञापकत्वोक्तिस्त्वेकदेशिन एव । अतएव "किमेतस्य ज्ञापने प्रयोजनम् ? वेभिदीति चेच्छिदीतीत्येतत् सिद्धं भवति भाषायामपि"इत्यत्र भाष्ये य उक्तम् । अन्यथा ज्ञापितेऽप्यस्य सार्थक्याय उवर्णान्तेभ्योऽपि यङ्लुक आवश्यकत्वेन 'इत्येत'दिति भाष्याऽसङ्गतिः, 'इत्यादि सिद्धं भवति' 'एवं सिद्धं भवति'इति वक्तव्यं स्यात् 'किमेतस्ये'त्यादिप्रश्नस्याप्यनुपपत्तेश्च । लोके उवर्णान्तप्रकृतिकप्रयोगादर्शनमेवास्य प्रश्नस्य बीजम् । तत्र तत्प्रयोगादर्शनेनोत्तरमेकदेश्युक्तिरित्यपि बोध्यम् । 'यङोऽचिचे'तिसूत्रे बहुलग्रहणानुवृत्त्या वाक्यत्वेन च लभ्यस्याऽनैमित्तिकयङ्लुको बाहुलकेनैव यथाप्रयोगं लोकेपि लाभेन ज्ञापकानुपयोगाच्चे'तिसुधियो विभावयन्तु"इति चाह. भ. ना. ल. श. शे. भ्वा. प्र. पृ. 131-132 ।
7. तथाहि–
   (क) "हुश्नुवोरिति किम् ? । अपुवन् । नचाऽनेकाच् इत्यनुवृत्त्याऽट आभीयाऽसिद्धत्वेन न दोष इति वाच्यं, तत्प्रत्याख्याने दोषवारणाय सत्त्वात् । स्पष्टा चेयं रीतिः 'धिन्विकृण्व्योर चे'तिसूत्रे भाष्ये । तत्रहि–वलोपेन सिद्धेऽकारविधानं तल्लोपे स्थानिवद्भा-

अत्र–अस्य शब्दस्य ज्ञापकत्वं वदतः [1]श्रीनागेशादस्य शब्दस्य ज्ञापकत्वं निराकुर्वतो [2]भट्टनागेशस्य पार्थक्यमपि स्फुटं सिद्धं भवतीत्यवधेयम् ।

## 'ह्री'तिशब्दः

[3]नुदविन्दोन्दत्राघ्राह्रीभ्योऽन्यतरस्या'मित्यस्य प्रतिषेधपक्षेऽत्र 'ह्री'तिशब्दः 'ह्री[4]धातोः परस्य निष्ठातस्याऽपि नत्वं भवतीति वचनस्य [5]ज्ञापकः । यतः प्रतिषेध-पक्षेऽत्राऽयं शब्दो व्यर्थः । तथाहि–'ह्रीणः[6]'–'ह्रीतः[7]'–इत्यत्र केनाऽपि सूत्रेण निष्ठा- तस्य नत्वं न प्राप्नोतीत्यप्रसक्तस्य प्रतिषेधाऽसंभवात् तत्र नत्वप्रतिषेधार्थं सूत्रेऽस्मिन्नुपात्तोऽयं शब्दोऽस्य वचनस्यास्याऽभावे व्यर्थः । ज्ञापिते चास्मिन् वचनेऽनेन 'ह्रीणः' इत्यत्राऽपि निष्ठातस्य नत्वं प्राप्नोतीति विकल्पेन

---

वाद्गुणाऽभावाय । न च वलोऽपि 'नधातुलोपे'ति निषेधसिद्धिः, 'प्रत्याख्यायते स योगः, तस्मिन् प्रत्याख्याते गुणः स्यादेवे'त्युक्तं, श्नसोर'दिति तपरत्ववत्तदनित्यत्व-बोधनेन चारितार्थ्याच्च......." इत्याह भ. ना. ल. श. शे. भ्वा. प्र. पृ. 130-131 ।

(ख) "यङ्लुकश्छान्दसत्वाद्योयुवतीत्यादौ प्रत्यस्य 'छन्दस्युभयथे'त्यनेनार्द्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन ? नच युवन्ति नुवन्ती'त्यत्रातिप्रसङ्गवा-रणार्थं तद् ग्रहणमितिवाच्यम् । 'अनेकाच' इत्यनुवर्तनेनोक्तदोषाऽभवादितिचेत् । अत्राहुः–'दाधर्ति दर्धिर्ति दर्धार्षि बोभूतु' इतिच्छन्दसि निपातनाद्भाषायां–यङ्लुकि बोभवतीत्यादौ 'भूसुवो'रिति गुणनिषेधे न प्रवर्तते, अतएव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वाद्योयुवतीत्यादावतिप्रसङ्गवारणाय हुश्नुग्रहणं कर्तव्यमेवेति । हुश्नु–ग्रहणाज्ज्ञापकाद्भाषायामपि यङ्लुग्वतीति भाष्याकाराः । एवं च सार्वधातुक-परयोर्हुश्नुवोरनेकाच्त्वाऽव्यभिचारादनेकाच् इत्यस्यानुवृत्तिरिह किमर्थेत्या शङ्काया निरवकाश एव । तदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञापकत्वाऽसंभवा"दित्याह ज्ञा. भि. त. बो. भ्वा. प्र. पृ. 130-131 ।

1. 'ज्ञापकसंग्रह'ग्रन्थकारादितिशेषः ।
2. उद्योताऽऽदि-नानाग्रन्थकारस्येति-शेषः ।
3. अष्टा. 8/2/56 ।
4. 'ह्री लज्जायाम्' धा. पा. जुहो. 1085 ।
5. तथाहि–
   (क) "अथवा पुनस्तु प्रतिषेधः । ननु चोक्तं 'ह्रीग्रहणमनर्थकं नह्येतस्मादविधिरस्ती'ति । नानर्थकम् । एतदेव ज्ञापयत्याचार्यो 'भवत्येतस्माद्विधि'रिति यदयं ह्रीग्रहणं करोति"–इत्याह पत. व्या. म. भा. 8/2/2/56 ।
   (ख) "नुदविदोन्द, (सू. 8/2/56), ह्रीग्रहणं ज्ञापयति भवत्येतस्माद्विधिरिती"त्याह एन्. एस्. रामा. ज्ञा. परि. 1. पृ. 198 ।
6. 'ह्रीलज्जायाम्'धा. पा. जुहो. 1085. इतिह्रीधातोः कर्मणि क्तप्रत्यये निष्ठातस्य 'नुदविन्दो-न्द'–अष्टा. 8/2/56-इति नत्वे नस्य णत्वे च कृते कृदन्तात्सौ सकारस्य रुत्वे विसर्गे च कृते रूपमिदम् ।
7. उपर्युक्तह्रीधातोः कर्मणि क्तप्रत्यये 'नुदविन्दोन्द.'–अष्टा. 8/2/56. इतिनत्वाऽभावपक्षे रूप-मिदम् ।

तत्प्रतिषेधाऽर्थमत्राऽयं शब्दः स्वांऽशे चरिताऽर्थो भवति । ज्ञापितस्याऽस्य वचनस्य फलं तु 'ह्रीणः'–इत्यत्र निष्ठातस्य नत्वसिद्धिरेवेतिमन्ये । अत्र सूत्रस्य विधित्वपक्षे तु नाऽस्य शब्दस्य ज्ञापकत्वमस्मिन्नूवचने । यतो 'ह्री'–इत्यस्मात्परस्याऽप्राप्तस्य निष्ठातस्य विकल्पेन नत्वविधानार्थमत्राऽयं शब्दश्चरिताऽर्थः । अस्य सूत्रस्य विधित्वपि[1]भाष्यसम्मतमिति वामन–पुरुषोत्तमदेव–भट्टोजिदीक्षितैर्विधित्वमस्य सूत्रस्य मत्वा [2]व्याख्यातम् ।

## (ग) ज्ञापकं स्वरितत्त्वाऽऽसञ्जनम्

### 'ङीषः स्वरितत्वाऽऽसञ्जनम्'

[3]'बहुव्रीहेरूधसो ङीष्' इत्यत्र 'ङीषः स्वरितत्वाऽऽसञ्जनं' 'मध्येपवादाः पूर्वान् [4]विधीन् बाधन्ते नोत्तरान्'–इति परिभाषाया ज्ञापकः[5] । यतोऽस्या अभावेऽत्र ङीषः

1. तथाहि–"अस्तु तावद्विधिः । "ननु चोक्तं–"नकारग्रहणं कर्तव्यं, न कर्तव्यं प्रकृतमनुवर्तते, क्व प्रकृतं, 'रदाभ्यां निष्ठातो नः पूर्वस्य च द' इति, तद्वा अनेकेन निपातेन व्यवच्छिन्नं न शक्यमनुवर्तयितु"मिति । संबंधमनुवर्तिष्यते । अथवा क्रियते न्यास एव द्विनकारको निर्देशः । 'नुदविन्दोदत्राघ्राह्रीभ्योन्यतारस्यान्न ध्याख्यापृमूर्च्छिमदा'मिति"–इत्याह पत. व्या. म. भा. 8/2/56 ।
2. तथाहि–
   (क) "नुद, विद, उन्दी, त्रा, घ्रा, ह्री'–इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम् । नुद–नुन्नः, नुत्तः । विद–विन्नः, वित्तः । उन्द–समुन्नः, समुत्तः । त्रा–त्राणः, त्रातः । घ्रा-घ्राणः घ्रातः । ह्री-ह्रीणः, ह्रीतः । "ह्री'इत्येतस्याप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते । 'विद विचारणे'इत्यस्य विदेरिह ग्रहणमिष्यते । एवं ह्युक्तम्–
   "वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते ।
   विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः ॥ इति" ।
   –इत्याह वाम. का. 8/2/56 ।
   (ख) "एभ्यो निष्ठातो नत्वं वा स्यात् । नुन्नम्, नुत्तं वा । विदेर्विचारणार्थस्य–विन्नः, वित्तो वा । उन्दी–समुन्नम्, समुत्तो वा । त्राणः, त्रातो वा । घ्राणः, घ्रातो वा । ह्रीणः, ह्रीतो वा"–इत्याह पु. दे. भा. वृ. 8/2/56 ।
   (ग) "एभ्यो निष्ठा तस्य नो वा स्यात् । नुन्नः । नुत्तः । विद विचारणे रौधादिक एव गृह्यते, उन्दिना परेण साहचर्यात् । विन्नः । वित्तः । वेत्तेम्तु–विदितः । विद्यतेर्विन्नः..... इत्याह भ. दी. वै. सि. कौ. पूर्वकृदन्त प्र. पृ. 431 ।
3. अष्टा. 4/1/25 ।
4. (क) व्याडिः प. पा. प. 10, पृ. 2 ।
   (ख) पु. दे. ल. प. वृ. प. 9, पृ. 116 ।
   (ग) सी. दे. बृ. प. वृ. प. 47, पृ. 214 ।
   (घ) नी. दी. प. वृ. प. 50, पृ. 302 ।
   (ङ) ह. भा. प. भास्क. प. 49, पृ. 343 ।
   (च) भ. ना. प. शे. प. 61, पृ. 276 ।
   (छ) शेषा. प. भास्क. प. 51, पृ. 427 ।
5. तथाहि–

स्वरितत्त्वाऽऽसञ्जनं व्यर्थम् । तथाहि–[1]'घटोध्नी'त्यादौ[2] भविष्यतोऽपि 'अनउपधालोपिनोन्यतरस्या'मिति[3] ङीपोऽनुवृत्तिसामर्थ्याद्बाधनार्थमत्र सूत्रे ङीषः स्वरितत्वाऽऽसञ्जनं सूत्रकारेण कृतम् । तच्चास्या असत्त्वे व्यर्थम् । कृतेऽप्यत्र ङीषः स्वरितत्वाऽऽसञ्जने हि [4]परत्वात् पूर्वस्यैव [5]ङीपो [6]डापो ङीप्[7]प्रतिषेधस्य च बाधकोऽयं ङीष्स्यात्, न तु व्यवहितस्य [8]'अन उपधालोपिनोऽन्यतरस्या'मिति ङीपः । तथा

---

(क) " 'अन उपधालोपिनः' इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते"–इतिग्रन्थेन ज्ञापकत्वमत्राऽस्य शब्दस्याऽस्यां सूचयति जया. का. 4/1/25 ।

(ख) "ज्ञापकं चात्र 'बहुव्रीहेरूधसो ङीष्' (4/1/25) इत्यत्र ङीषः स्वरितत्वासञ्जनं सूत्रकारेण वृत्तिकारप्रतिपादितम् । तद्धि अनुवृत्तिसामर्थ्यात् 'अन उपधालोपिनोऽन्यतरस्याम्' (4/1/28) इतिभविष्यतोपि ङीपो बाधनार्थम् । घटोध्नीति । अन्यथा ह्ययमनन्तरत्वात् पूर्वयोर्ङीप्प्रतिषेधयोरेव बाधकः । ङीष्ङीपोश्च स्वरेविशेषः"–इत्याह पु. दे. ल. पृ. वृ. प. 9, पृ. 116-117 ।

(ग) "ज्ञापकं चात्र 'बहुव्रीहेरूधसो ङीष्' (4/1/25) इत्यत्र स्वरितत्वासञ्जनं वृत्तिन्यासप्रतिपादितम् । तद्धि 'अन उपधालोपिनोऽन्यतरस्याम्' (4/1/28) इत्यत्र स्वरितत्वादनुवर्त्तते । तेन 'अन उपधालोपिनोऽन्यतरस्याम्' (4/1/28) इतिपरत्वाद् भविष्यन्तं ङीपं बाधित्वा 'बहुव्रीहेरूधसो ङीष्' (4/1/25) इति ङीषेव भवति । घटोध्नीति । अन्यथा ङीष् मध्येपवादत्वात्पूर्वयोरेव ङीप्प्रतिषधयोर्बाधकः स्यात् । ङीष्ङीपोश्च स्वरे भेदः "इत्याह सी. दे. ल. प. वृ. प. 47, पृ. 214 ।

(घ) "बहुव्रीहेरूधसः.' (4/1/25) इत्यस्य 'अन उपधालोपिनः' (4/1/28) इत्यत्राऽनुवृत्तये कृतं स्वरितत्वप्रतिज्ञानं ज्ञापकमपि । तद्धि अनेन न्यायेन पूर्वयोर्ङीप्प्रतिषेधयोरेव बाधकं स्यात् न तु परस्य 'अन उपधा.' (4/1/28) इत्यस्येति कुण्डोध्नीत्यादौ परत्वान्ङीष्विषये विकल्प एव स्यात्, माभूदित्येवमर्थमिती"त्याह नी. दी. प. वृ. प. 50, पृ. 302 ।

(ङ) "ज्ञापकमस्याः 'बहुव्रीहेरूधसो ङीष्' (4/1/25) इत्यत्र स्वरितत्वप्रतिज्ञानं निबन्धकृतम् । तथाहि·। 'अन उपधालोपिनोऽन्यतरस्याम्' (4/1/28) इत्यत्र स्वरितत्वप्रतिज्ञानान् ङीबनुवर्तते । तेन घटोध्नीत्यत्र परत्वात् प्राप्तं ङीपं बाधित्वा 'बहुव्रीहेः.' (4/1/25) इतिङीषेव भवति । तत्र यदीयं परिभाषा न स्यात्तदायंङीष् मध्येपवादत्वेन पूर्वयोरेव ङीप्प्रतिषेधयोर्बाधको न भविष्यतीति स्वरितत्वप्रतिज्ञानं व्यर्थं स्यादिती"त्याह ह. भा. प. भास्क. प. 49, पृ. 343-344 ।

1. घट इव ऊधोऽस्या इति विग्रहे बहुव्रीहौ 'ऊधसोऽनङ्'–अष्टा. 5/4/131, इति सकारस्य अनङि 'अतोगुणे'–अष्टा. 6/1/67, इतिपररूपे सन्धिकार्ये-'बहुव्रीहेरूधसोङीष्'–अष्टा. 4/1/25, इति ङीषि 'अल्लोपोऽनः'–अष्टा. 6/4/134, इत्यनोऽकारलोपे स्वादिकार्ये च कृते रूपमिदम् ।
2. अत्राऽऽदिपदेन 'कुण्डोध्नी'तिग्राह्यम् ।
3. अष्टा. 4/1/28 ।
4. 'विप्रतिषेधे परं कार्यम्'–अष्टा. 1/4/2, इत्यनेनेतिशेषः ।
5. 'ऋन्नेभ्योङीप्'–अष्टा. 4/1/5 ।
6. 'डाबुभाभ्यामन्यतरस्याम्'–अष्टा. 4/1/13 ।
7. 'अनो बहुव्रीहेः'–अष्टा. 4/1/12 ।
8. अष्टा. 4/1/28 ।

सति भविष्यतो ङीपोऽप्यत्राऽनुवृत्तिसामर्थ्याद्[1] बाधनार्थमत्र ङीषः स्वरितत्वाऽऽसञ्जनं व्यर्थम् । ज्ञापितायां चाऽस्यां परिभाषायामनयाऽयं [2]ङीष् [3]डापं ङीप्प्रतिषेधं[4] चैव बाधते नोपधालोपिनं ङीपं[5], ततश्चोपधालोपिनः परत्वात् स[6] एव पक्षे भवेदिति 'अन [7]उपधालोपिनोऽन्यतरस्या'मित्यत्राऽस्य ङीषोनुवृत्त्यर्थमत्र ङीषः स्वरितत्त्वाऽऽसञ्जनं स्वांऽशे चरिताऽर्थं भवति । 'अन [8]उपधालोपिनोऽन्यतरस्या'मित्यत्राऽस्य ङीषो[9]ऽनुवृत्तौ हि तदनुवृत्तिसामर्थ्यात् 'घटोध्नी'त्यादावपि उपधालोपिनोऽप्यूधोन्ताद् ङीषेव भवति । न च ङीपि ङीषि वा रूपाभेदः शङ्क्यः । [10]स्वरभेदो हि दुर्वारः[11] । ज्ञापितायाअस्याः फलं तु 'अयनम्[12]' [13]'आयकः'– इत्यत्र मध्येऽपवादेन 'इणोयण्'[14]इत्यनेन [15]वृद्धि[16]गुणयोर्बाधाऽभावः, 'श्राद्ध[17]-कारी'त्यत्र कृञो हेत्वादौ टविधिना[18]मध्येऽपवादेन ताच्छीलिकणिने[19]र्बाधाऽ-

---

1. 'अन उपधालोपिनोऽन्यतरस्याम्'–अष्टा. 4/1/28, इत्यत्रेत्यर्थः ।
2 बहुव्रीहेरूधसो ङीष्'–अष्टा.. 4/1/25 ।
3. 'डाबुभाभ्यामन्यतरस्याम्'–अष्टा. 4/1/13 ।
4 अनो बहुव्रीहेः'–अष्टा. 4/1/12 ।
5. 'अन उपधालोपिनोऽन्यतरस्याम्'–अष्टा. 4/1/28, इतिविहितमित्यर्थः ।
6. 'अन उपधा.'–अष्टा. 4/1/28, इति विहितो ङीवेवेत्यर्थः ।
7 अष्टा. 4/1/28 ।
8 अष्टा. 4/1/28 ।
9 'बहुव्रीहेरूधसोङीष्'–अष्टा. 4/1/25 ।
10. ङीपि 'अनुदात्तौ सुप्पितौ'–अष्टा. 3/1/4, इत्यनुदात्तत्वं भवेत्; ङीषि तु 'आद्युदात्तश्च'– अष्टा. 3/1/3, इत्याद्युदात्तत्वं भवतीतिशेषः ।
11. स्वरोऽपि भेदको भवति, त्रिधा हि शब्दो भिद्यते रूपतोऽर्थतः स्वरतश्चेतिशेषः ।
12. 'इण्गतौ' धा. पा. अदा. 1045, इति इधातोर्ल्युटि योरनादेशे धातोरिकारस्य आर्धधातुकलक्षणे गुणे एकारेऽयादेशे कृदन्तात्स्वादिकार्येषु कृतेषु रूपमिदम् ।
13. 'इण्गतौ' धा. पा. अदा. 1045, इति इधातोर्ण्वुलि वोरकाऽऽदेशे धातोरिकारस्य 'अचोऽञ्णिति'–अष्टा. 7/2/115, इति वृद्धावैकारे आयादेशे कृदन्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
14 अष्टा. 6/4/81 ।
15. 'अचोञ्णिति'–अष्टा. 7/2/115, इति विहितेतिशेषः ।
16. 'सार्वधातुकार्धधातुकयोः'–अष्टा. 7/3/84, इतर्तिविहितेतिशेषः ।
17. 'श्राद्धं करोति तच्छील इत्यर्थे श्राद्धमितिसुबन्तोपपदात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः ताच्छील्येऽर्थे 'सुप्यजातौ णिनिस्ताच्छील्ये'–अष्टा. 3/2/78, इति णिनिप्रत्यये धातोः ऋकारस्य 'अचोञ्णिति'–अष्टा. 7/2/115, इति वृद्धावाकारे रपरत्वे उपपदसमासे सुपो लुकि 'श्राद्धकारिन्'–इत्यस्मात् कृदन्तात् स्वादिकार्येषु कृतेषु रूपमिदम् ।
18. 'कृञो हेतु ताच्छील्यानुलोम्येषु'–अष्टा. 3/2/20, इत्यनेनेत्यर्थः ।
19. 'सुप्यजातौ णिनिस्ताच्छील्ये'–अष्टा. 3/2/78 ।

भावश्च । अस्या असत्त्वे हि 'इणो[1]यण्'–इति मध्येपवादो यथा [2]'यन्ती'त्यादौ[3] पूर्वमियङ्विधिं[4] बाधते तथा 'अयनम्' 'आयकः'–इत्यत्र परौ [5]वृद्धिगुणावपि[6]बाधेत, एवं कृञो हेत्वादौ [7]टविधिर्यथा '[8]यशस्करी विद्या' '[9]श्रद्धकरः'–'[10]वचनकरः'–इत्यत्र पूर्वमणं[11] बाधते, तथा 'श्राद्धकारी'–त्यत्र ताच्छीलिकंणिनिमपि[12] बाधेत । प्रथमाऽतिक्रमणे बीजाऽभावान् न्यायसिद्धेयं परिभाषेति विभाव्य नास्या ज्ञापकमिदमुल्लिखितं परिभाषेन्दुशेखरे, परिभाषाभास्करे च क्रमशो भट्टनागेशेन शेषाद्रिणा चेत्यवधेयम् ।



1. अष्टा. 6/4/81 ।
2. 'इण् गतौ' धा. पा. अदा. 1045, इति इधातोर्लटि झौ झेरन्तादेशे शपिशपो लुकि धातोरिकारस्य 'इणो यण्'–अष्टा. 6/4/81, इति यणि च कृते रूपमिदम् ।
3. अत्राऽऽपिपदेन 'ईयतुः'–इत्यादि ग्राह्यम् ।
4. 'अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ'–अष्टा. 6/4/77 ।
5. 'अचोऽञ्णिति'–अष्टा. 7/2/115 ।
6. 'सार्वधातुकार्धधातुकयोः'–अष्टा. 7/3/84 ।
7. 'कृञो हेतुताच्छील्यानुलोम्येषु'–अष्टा. 3/2/20 ।
8. 'यशः' इति कर्मोपपदात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः हेतौ 'कृञो हेतु.'–अष्टा. 3/2/20, इति टप्रत्यये उपपदसमासे सुपोलुकि 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य'–अष्टा. 8/3/36, इति विसर्गस्य सत्वे स्त्रियां टित्वान्ङीपि अकारलोपे ङ्यान्तात् स्वादिकार्येषु कृतेषु रूपमिदम् । विद्या यशोहेतुरिति प्रयोगाऽर्थः ।
9. श्राद्धमिति कर्मोपपदात् 'डुकृञ्करणे' धा. पा. तना. 1473, इतिकृधातोः 'कृञोहेतु.'–अष्टा. 3/2/20, इति टप्रत्यये उपपदसमासे सुपो लुकि कृदन्तात् स्वादिकार्येषु कृतेषु रूपमिदम् । श्राद्धक्रियाशील इतिप्रयोगाऽर्थः ।
10. वचनमिति कर्मोपपदात् 'डुकृञ्करणे' धा. पा. तना. 1473, इति कृधातोः 'कृञोहेतु.'–अष्टा. 3/2/20, इति टप्रत्यये उपपदसमासे सुपो लुकि कृदन्तास्वादिकार्येषु कृतेषु रूपमिदम् ।
11. 'कर्मण्यण्'–अष्टा. 3/2/1 ।
12. 'सुप्यजातौ णिनिस्ताच्छील्ये'–अष्टा. 3/2/78 ।

# उपसंहारः

अत्रोपन्यस्तानि ज्ञापक-ज्ञापितानि यानि परिभाषारूपाणि तद्व्यतिरिक्तानि च वचनानि यत्र शिष्टप्रयुक्तप्रयोग-सिद्धौ सहायकानि भवन्ति तत्रैव तान्याश्रीयन्ते, यत्र च शिष्ट-प्रयुक्त-प्रयोग-सिद्धौ बाधकानि भवन्ति तत्र तानि नाऽऽश्रीयन्ते । तथ्यमिदमनुसन्धाय पूर्वाचार्यैः "अगत्या(नु)तु परिभाषाश्रीयते[1]" "ज्ञापकसिद्धं न[2] सर्वत्रे"ति परिभाषे स्वीकृते । "अगत्या परिभाषाऽऽश्रयणं युक्तमेव । यतो ज्ञापकसिद्धाः परिभाषाः न साक्षात् पाणिनिवचनानि किन्तु नानाऽऽचार्याणाम् । अतः पाणिनीये शब्दानुशासने यत्रैव क्वचिदिष्टविषये मुख्यलक्षणेनासिद्धिस्तत्रैवैता गत्यन्तरमपश्यद्भिराश्रीयन्ते । यत्र चैतासामाश्रयणेनानिष्टाऽऽपत्तिरापतति तत्र नैता आश्रीयन्ते । तेन "राज्ञः[3]क च"–राजकीय"मित्यत्र [4]"एकदेशविकृतमनन्यवद्भवती"ति परिभाषया [5]"अल्लोपोऽनः"इति न प्रवर्तते । अत्र परिभाषापदं वचनमात्रोपलक्षणम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वमप्युचितमेव । यतो ज्ञापकं न वाचकं किन्तु इङ्गितेन सूचकम् । अतो ज्ञापकसिद्धं वचनं क्वचिदेवेष्टसिद्धावाश्रीयते न सर्वत्र । अतएव च ज्ञापकसाधितमात्मनेपदानित्यत्वाऽऽदि न सर्वत्रोपयुज्यते, किन्तु शिष्ट- प्रयोगदर्शनात् क्वचिदेवे"ति पूर्वाचार्याणामाशयः । भट्टनागेशेन तु "स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यन्ये । तेन ज्ञापकसिद्धपरिभाषया-

---

1. (क) पु. दे. ल. प. वृ. प. 119, पृ. 160
   (ख) "अगत्या हि खलु परिभाषाश्चाश्रीयन्ते"सी. दे. बृ. प. वृ. प. 123. पृ. 268 ।
2. (क) "ज्ञापकलक्षणं न सर्वत्र"–व्याडिः प. पा. प. 140, पृ. 43
   (ख) पु. दे. ल. प. वृ. पृ. 118, पृ. 160
   (ग) सी. दे. बृ. प. वृ. प. 126, पृ. 270
   (घ) नी. दी. प. वृ. प. 119, पृ. 314
   (ङ) ह. भा. प. भास्क. प. 129. पृ. 372
   (च) भ. ना. प. शे. प. 126. पृ. 359
3. अष्टा. 4/2/141 "राज्ञः ककारान्तादेशो भवति छश्च प्रत्ययः"इतिसूत्रार्थः ।
4. (क) व्याडिः प. पा. प. 16. पृ. 39
   (ख) "एकदेशविकृतमनन्यवत्"–पु. दे. ल. प. वृ. प. 14, पृ. 118
   (ग) "एकदेशविकृतमनन्यवत्"–सी. दे. बृ. प. वृ. प. 40, पृ. 210
   (घ) "एकदेशविकृतमनन्यवत्"–नी. दी. प. वृ. प. 125, पृ. 314
   (ङ) "एकदेशविकृतमनन्यवत्"–ह. भा. प. भास्क. प. 42, पृ. 341
   (च) "एकदेशविकृतमनन्यवत्"–भ. ना. प. शे. प. 38. पृ. 164
   (छ) "एकदेशविकृतमनन्यवत्"–शेषा. प. भास्क. प. 37, पृ. 411
5. अष्टा. 6/4/134 "अनित्येवमन्तस्य भस्य अकारलोपो भवति"–इतिसूत्रार्थः ।

ऽनिष्टं नापादनीय"मिति[1]ग्रन्थेन "अनुमानाद्बोधनमेव परिभाषारूपाणां तद्व्यतिरिक्तानां च वचनानामसार्वत्रिकत्वं ज्ञापयतीत्युक्तम् । न चात्र शब्दोच्चारणजन्यक्लेशानुत्पत्त्याऽनुमानाद्बोधनस्यान्यथासिद्धत्वान्नाऽनुमानबोधनस्यैतत्परिभाषाज्ञापकत्वं युक्तमिति शङ्क्यम् । यतः "नहि शब्दोच्चारणजनककण्ठताल्वाद्यभिघातरूपगौरवमेवादर्त्तव्यन्न ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ती"त्युक्त्याऽनुमानबोधनेऽपि क्लेशोऽपरिहार्यः ।

अतएवाऽऽधुनिकैः कैश्चन शिष्टैरपि "छात्री"ति[2] प्रयोगं विहाय [3]"छात्रे"ति प्रयोगः क्रियते, न पुनः [4]"तापसे"तिप्रयोगः क्रियते, अपितु [5]"तापसी"त्येव । सर्वमिदं तथ्यं यथाप्रमाणं यथास्थानमुपपाद्यैतादृशप्रयोगदर्शनाद् "व्याकरणशास्त्रे निष्ठा नास्ती"ति वदतो मुखमुद्रणाय चन्द्रगगनानल-(301)मितेषु[6] परिभाषातद्व्यतिरिक्तवचनात्मकेषु ज्ञाप्येषु प्रामाण्योपपादकानि यानि सन्ति बाणग्रहयुग (495)मितानि ज्ञापकानि[7] तेषां परिशीलनं मुनिगगनचन्द्र (107) -मितं विशेषसमीक्षास्थलं[8] चाऽऽवहन्नेष ग्रन्थाऽऽत्मकः प्रबन्धो ज्ञापकपरिशीलनमहादुर्गतारणीं दुर्गां स्मरन्नुपसंहरत्यात्मानम् । तथाहि–

"या नित्या श्रुतिशीर्षदर्शिततनुर्ब्रह्मा यदाद्यप्रजा
विश्वेषां जननस्थिती विदधती मातेति या गीयते ।
अङ्के सुप्तमिवात्मजं वहति या कल्पावसन्नं जगत्
तां दुर्गां चिदचिन्मयीं परतरानन्दाय वन्दामहे ।।"



---

1. प. शे. प. 126. पृ. 359 ।
2. गुरुदोषावरणं छत्रं तच्छीलमस्या इत्यर्थे छत्रादित्वात् छत्रशब्दात् "छत्रादिभ्यो णः"–अष्टा. 4/4/62. इति णप्रत्यये णित्त्वादाद्यचो वृद्धावकारलोपे "ताच्छीलिके णेऽण् कृतानि भवन्ति"–इतिपरिभाषया (प. शे. प. 88. पृ. 323), "टिड्ढा."–अष्टा. 4/1/15. इतिङीपि अकारलोपे स्वादिकार्येषु कृतेषु रूपमिदम् ।
3. छत्रादित्वेन णान्ताच्छत्रशब्दात् ज्ञापकसिद्धस्यासार्वत्रिकतया "टिड्ढा."–अष्टा. 4/1/15. इति ङीपोऽभावे टापि स्वादिकार्येषुकृतेषु रूपमिदम् ।
4. तपः शीलमस्या इत्यर्थे तपःशब्दात् "छत्रादिभ्यो णः"–अष्टा. 4/4/62. इति णप्रत्यये णित्त्वादाद्यचो वृद्धावकारलोपे टापि रूपमिदं संभवति । न चात्र "टिड्ढा."–अष्टा. 4/1/15. इतिङीप्प्रत्ययः शङ्क्यः, "ताच्छीलिके णेऽण्कृतानि भवन्ती"त्यस्या असार्वत्रिकत्वात् ।
5 तपःशीलमस्या इत्यर्थे तपःशब्दात् "छत्रादिभ्यो णः"–अष्टा. 4/4/62. इति णप्रत्यये णित्त्वादाद्यचो वृद्धावकारलोपे "ताच्छीलिके णेऽण् कृतानि भवन्ती"ति परिभाषया (प. शे. प. ८८. पृ. 323). "टिड्ढा."–अष्टा. 4/1/115. इति ङीपि अकारलोपे स्वादिकार्येषु कृतेषु- रूपमिदम् ।
6 द्र. ज्ञाप्यसूची ।
7 द्र. ज्ञापकसूची ।
8. द्र. विशेषसमीक्षा-सूची ।

# सहायक ग्रन्थ-सूची


1. अभिज्ञानशाकुन्तलम् – कालिदासः – चौखम्बा, वाराणसी ।
2. अभिनवचन्द्रिका(लघुशब्देन्दुशेखर-व्याख्या) – दण्डिभट्टः – भार्गवपुस्तकालय, गायघाट, काशी ।
3. अमरकोशः–अमरसिंहः – चौखम्बा, वाराणसी ।
4. अष्टाध्यायी–पाणिनिः – भार्गव पुस्तकालय, गायघाट, काशी ।
5. उणादिसूत्रम्–(वैयाकरणसिद्धान्तकौमुदीस्थम्)"सर्वं नामधातुजमिति नैरुक्त-मतानुसारिशाकटायनादिप्रणीतव्याकरणान्तरादभियुक्तैः संगृहीतम्"–ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।
6. उद्योतः–भट्टनागेशः – भार्गव पुस्तकालय, गायघाट, काशी । (व्याकरण-महाभाष्य-प्रदीप-व्याख्या)

6. (क) **कारिकावली**–विश्वनाथ न्यायपञ्चाननः– निर्णयसागर प्रेस, बम्बई ।

7. काशिका (पाणिनिसूत्रवृत्तिः)–वामनजयादित्यौ । तारा पब्लिकेशन्स, वाराणसी ।
8. काशिका (माहेश्वरसूत्रवृत्तिः)–नन्दिकेश्वरः । निर्णय सागर प्रेस, बम्बई ।
9. काव्यप्रकाशः (बालबोधिनीटीकान्वितः)–मम्मटः । भाण्डारकरइन्स्टिट्यूट, पूना ।
10. कुमारसम्भवम्–कालिदासः– निर्णय सागर प्रेस, बम्बई ।
11. गणपाठः–पाणिनिः– ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डललिमिटेड, काशी ।
12. गणसूत्रम्–पाणिनिः– ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डललिमिटेड, काशी ।

12. (क) चाणक्य नीतिशतकम्– चाणक्यः । निर्णयसागर प्रेस, बम्बई ।

13. चिदस्थिमाला (लघुशब्देशेखरव्याख्या)–वैद्यनाथ पायगुण्डे । भार्गव पुस्तकालय, गायघाट, काशी ।
14. ज्ञापकसंग्रहः–(नागेशभट्टः) श्रीनागेशः । केन्द्रीय संस्कृत विद्यापीठम्, तिरुपतिः ।
15. ज्ञापकसंग्रहविवृतिः–एन्. एस्. रामानुजताताचार्यः । केन्द्रीय संस्कृतविद्यापीठम्, तिरुपतिः ।
16. ज्ञापकसंग्रहपरिशिष्टम्–एन्. एस्. रामानुजताताचार्यः । केन्द्रीयसंस्कृत विद्यापीठम्, तिरुपतिः ।
17. ज्ञापक समुच्चयः–पुरुषोत्तमदेवः । राजशाही ।

18. तत्त्वबोधिनी (वैयाकरणसिद्धान्तकौमुदीव्याख्या)–ज्ञानेन्द्रभिक्षुः । ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डललिमिटेड, काशी ।
19. दुर्गासप्तशती (मार्कण्डेयपुराणान्तर्गता)–व्यासः । गीता प्रेस, गोरखपुर ।
20. दीपिका (व्याकरणमहाभाष्यटीका)–भर्तृहरिः । केन्द्रीय संस्कतविद्यापीठम्, तिरुपतिः ।
21. धातुपाठः (वैयाकरणसिद्धान्तकौमुदीस्थः)–पाणिनिः । ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।
22. न्यार्यसिद्धान्तमुक्तावली–विश्वनाथः । निर्णयसागर प्रेस, बम्बई ।
23. न्यासः (काशिकावृत्तिव्याख्या)–जिनेन्द्रबुद्धिः । तारा पब्लिकेशन्स, वाराणसी ।
24. पदमञ्जरी (काशिकावृत्तिव्याख्या)–हरदत्त मिश्रः । तारा पब्लिकेशन, वाराणसी ।
25. परमलघुमञ्जूषा–भट्टनागेशः । हितचिन्तक प्रेस, रामघाट, काशी ।
26. परिभाषेन्दुशेखरः–भट्टनागेशः । तीरभुक्ति प्रकाशन, प्रयाग ।
27. परिभाषापाठः (परिभाषासंग्रहस्थः)–व्याडिः । भाण्डारकर इन्स्टिट्यूट पूना ।
28. परिभाषाभास्करः (परिभाषासंग्रहस्थः)–हरिभास्करः । भाण्डारकर इन्स्टिट्यूट, पूना ।
29. परिभाषाभास्करः (परिभाषासंग्रहस्थः)–शेषाद्रिः । भाण्डारकर इन्स्टिट्यूट, पूना ।
30. परिभाषावृत्तिः (परिभाषासंग्रहस्था)–नीलकण्ठदीक्षितः । भाण्डारकर इन्स्टिट्यूट, पूना ।
31. परिभाषासूचनम् (परिभाषासंग्रहस्थम्)–व्याडिः । भाण्डारकरइन्स्टिट्यूट । पूना ।
31. (क) पाणिनीयशिक्षा–पाणिनिशिष्यः । चौखम्बा, वाराणसी ।
32. प्रदीपः (व्याकरणमहाभाष्यव्याख्या)–कैयटः । ज्ञानमण्डलयन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।
32. (क) प्रभा (प्रौढमनोरमाशब्दरत्नटिप्पणी)–सभापति शर्मा । चौखम्बा, वाराणमी ।
33. प्रौढमनोरमा (वैयाकर्णसिद्धान्तकौमुदीव्याख्या)–भट्टोजिदीक्षितः । चौखम्बा, वाराणसी ।
34. फिट्सूत्रम् (वैयाकर्णसिद्धान्नकौमुदीम्थम्)–शान्तनवाचार्यः । ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डल र्लिमिटेड, काशी ।

35. बालमनोरमा (वैयाकरणसिद्धान्तकौमुदीव्याख्या)–वासुदेवदीक्षितः – ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।
36. बृहत्परिभाषावृत्तिः (परिभाषासंग्रहस्था)–सीरदेवः – भाण्डारकर इन्स्टिट्यूट, पूना ।
37. भगवद्गीता–व्यासः – गीता प्रेस, गोरखपुर ।
38. भट्टिकाव्यम्–भट्टिः – चौखम्बा, वाराणसी ।
39. भाषावृत्तिः (पाणिनि लौकिकसूत्रव्याख्या)–पुरुषोत्तमदेवः – तारा पब्लिकेसन्स, वाराणसी ।
40. भूतितिलकम् (परिभाषेन्दुशेखरव्याख्या)–म. म. रामकृष्ण शास्त्री – मास्टर खेलाड़ीलाल, वाराणसी ।
41. भूषणकारिका– भट्टोजिदीक्षितः – चौखम्बा, वाराणसी ।
42. मनुस्मृतिः–मनुः – निर्णय सागर प्रेस, बम्बई ।
42. (क) महाभारतम्–व्यासः – भण्डारकर इन्स्टिट्यूट, पूना ।
43. मार्कण्डेयपुराणम्–व्यासः – निर्णय सागर प्रेस, बम्बई ।
44. मीमांसादर्शनम्–जैमिनिः – निर्णयसागर प्रेस, बम्बई ।
45. मुद्राराक्षसम्–विशाखदत्तः – चौखम्बा, वाराणसी ।
46. निरुक्तम्–यास्कः – निर्णय सागर प्रेस, बम्बई ।
47. रघुवंशम्–कालिदासः, चौखम्बा, वाराणसी ।
48. लघु(ललिता)परिभाषावृत्तिः(परिभाषासंग्रहस्था)–पुरुषोत्तमदेवः – भाण्डारकर इन्स्टिट्यूट, पूना ।
49. लघुशब्देन्दुशेखरः (वैयाकरणसिद्धान्तकौमुदीव्याख्या)–भट्टनागेशः – भार्गव पुस्तकालय, गाय घाट, काशी ।
50. लघुसिद्धान्तकौमुदी–वरदराज भट्टाचार्यः – चौखम्बा, वाराणसी ।
51. वाक्यपदीयम्–भर्तृहरिः – निर्णयसागर प्रेस, बम्बई ।
52. वाल्मीकिरामायणम्–वाल्मीकिः – चौखम्बा, वाराणसी ।
53. विजया (परिभाषेन्दुशेखरव्याख्या)–म. म. जयदेवमिश्रः – तीरभुक्ति प्रकाशन, प्रयाग ।
54. विषमपदविवृतिः (लघुशब्देन्दुशेखरव्याख्या)–राघवेन्द्राचार्यः – भार्गवपुस्तकालय, गायघाट, काशी ।
55. वेदान्तसारः–सदानन्दयोगीन्द्रः – निर्णयसागर प्रेस, बम्बई ।
56. वेणीसंहारनाटकम्–भट्टनारायणः – निर्णयसागर प्रेस, बम्बई ।

57. वैयाकरणभूषणकारिका (वैयाकरणभूषणसारस्था)–भट्टोजिदीक्षितः – आनन्दाश्रममुद्रणालयः, पूना ।
58. वैयांकरणभूषणसारः–कौण्डभट्टः – आनन्दाश्रम मुद्रणालयः, पूना ।
59. वैयाकरणसिद्धान्तकौमुदी (बालमनोरमातत्त्वबोधिनीशेखरविराजिता)–भट्टोजिदीक्षितः – ज्ञानमण्डल यन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।
60. व्याकरणमहाभाष्यम् (प्रदीपोद्योत शब्दकौस्तुभलक्ष्मीविराजितम्)–पतञ्जलिः – भार्गव पुस्तकालय, गाय घाट, काशी ।
61. शब्दकल्पद्रुमः–राजा राधाकान्तदेवः – मोतीलाल बनारसीदास, दिल्ली ।
62. शब्दकौस्तुभः (व्याकरणमहाभाष्यस्थः)–भट्टोजिदीक्षितः – भार्गवपुस्तकालय, गायघाट, काशी ।
63. शब्दरत्नम् (प्रौढमनोरमा व्याख्या)–हरिदीक्षितः – चौखम्बा, वाराणसी ।
64. शाङ्करी (वैयाकरणभूषणसारव्याख्या)–शङ्करशास्त्री मारुलकरः – आनन्दाश्रममुद्रणालयः, पूना ।
65. शिवमहिम्नस्तोत्रम्–पुष्पदन्तः – चौखम्बा, वाराणसी ।
66. शिशुपालवधम्–माघः – निर्णय सागर प्रेस, बम्बई ।
67. संस्कृतव्याकरणशास्त्र का इतिहास– युधिष्ठिर मीमांसक – बहालगढ़, जि. सोनीपत (हरियाणा) ।
68. सुबोधिनी (वैयाकरणसिद्धान्तकौमुदी-स्वरवैदिकी-व्याख्या)–जयकृष्णमौनिः – ज्ञानमण्डलयन्त्रालय, ज्ञानमण्डल लिमिटेड, काशी ।



# ज्ञापकसूची

## प्रथमो भागः

## चतुर्थोऽध्यायः 273

## (घ) ज्ञापका योगविभागाः 288



## (ङ) ज्ञापकानि वार्तिकानि 297



## (च) ज्ञापका वार्तिकांशाः 305



## द्वितीयो भागः

## पंचमोऽध्यायः 311

## ज्ञापिकानि सूत्राणि 312

●

# विशेष-समीक्षास्थल-सूची

## प्रथमोऽध्यायः

### (क) ज्ञापका अतिदेशाः



### (ख) ज्ञापका अनुबन्धाः



## द्वितीयोऽध्यायः

### (क) ज्ञापिका अनुवृत्तयः



### (ग) ज्ञापका गणेषु शब्दपाठः

### (घ) ज्ञापकानि तपरकरणानि



### (ङ) ज्ञापकानिनिपातनानि



## तृतीयोऽध्यायः

### ज्ञापका निर्देशाः

### (क) ज्ञापकाःशब्द-निर्देशाः

### (ख) ज्ञापका अर्थनिर्देशाः



## चतुर्थोऽध्यायः

### (ग) ज्ञापिका भाष्योक्तयः



## पञ्चमोऽध्यायः

### ज्ञापकानि सूत्राणि

## षष्ठोऽध्यायः

### ज्ञापकाः सूत्रांशाः

### (क) स्वराऽऽदिशब्दाः

# सप्तमोऽध्यायः

## ज्ञापकाः सूत्रांशाः

### (ख) व्यञ्जनाऽऽदिशब्दाः

# ज्ञाप्यसूची

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 14. | "अत्यन्तापरदृष्टाःपर-भूता लुप्यन्ते" । | 1 | - | " | 37 |
| 15. | "खन् भिन्नेभ्योऽपि धातु-भ्यो घप्रत्ययो भवति" । | " | - | " | 38 |
| 16. | "सानुबन्धकाद् यत्र षष्ठ्यु-युच्चार्यते तत्राकृतायामेवेत्सं-ज्ञायामादेशः प्रवर्तते" । | " | - | " | 39 |
| 17. | "यत्र सानुबन्धस्य आदेश-उच्यते तत्राऽऽदेशे इत्संज्ञा-प्रयुक्तानि कार्याणि न प्रवर्तन्ते" । | " | - | " | 39 |
| 18. | "अनुदात्तेत्त्वलक्षणमात्मने-पदमनित्यम्" । | " | " | - | 42 |
| 19. | "न ताताङ्ङन्त्यस्य स्थाने-भवति" । | " | - | - | 45 |
| 20. | "क्वचिद्व्याश्रयेऽपि वार्णा-दाङ्गंबलीय, इतिपरिभाषा-प्रवर्तते" । | " | - | " | 47 |
| 21. | "निर्दिश्यमानस्यादेशा भव-न्तीति परिभाषा वर्णग्रहणे न-प्रवर्तते" । | " | - | - | 51 |
| 22. | "आयन्नादय उपदेशे भवन्ति" | " | - | " | 52 |
| 23. | "अनुदात्तस्य च यत्रोदात्त-लोप इत्यत्र कर्षात्वतो घञो-ऽन्त इति सूत्रस्थस्याऽन्त इत्य-स्यासम्बन्धः" । | " | - | " | 54 |
| 24. | "न वर्णग्रहणेषु" । | " | " | - | 55 |
| 25. | "आगमटित्त्वमनिमित्तं-ङीप्प्रत्ययस्य" । | " | - | - | 58 |
| 26. | "एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य" । | " | " | - | 59 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 27. | "निरनुबन्धकग्रहणे न सानुबन्धकस्य" । | 1 | " | - | 59 |
| 28. | "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" । | " | " | - | 59 |
| 29. | "व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्" | " | " | - | 64 |
| 30. | "एकानुबन्धकृतमनित्यम्". । | " | " | - | 66 |
| 31. | "गामादाग्रहणेष्वविशेषः" | " | " | - | 67 |
| 32. | "भवति लकारस्येत्संज्ञा" । | " | - | - | 72 |
| | (क) आतृतीयाध्यायसमाप्तेर्धातोरित्यधिकारो न तु प्राग्लादेशात् । | " | - | - | 75 |
| 33. | "क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः" | | - | " | 76 |
| 34. | "नापवादे उत्सर्गकृतं कार्यंभवति" । | " | - | " | 78 |
| 35. | "गणकार्यमनित्यम्" | " | " | - | 79 |
| 36. | "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" । | 2 | " | - | 81 |
| 37. | "आदेच इत्यनेनपरनिमित्तकस्यैच आत्वंन भवति" । | " | - | - | 82 |
| 38. | "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते" । | " | " | - | 84 |
| 39. | "न परस्मैपदविषये आत्मनेपदं भवति" । | " | - | - | 90 |
| 40. | "हकारादिष्वकार उच्चारणार्थः" | " | - | " | 94 |
| 41. | "तद्धितविभक्तौ 'न विभक्तौतुस्माः' इत्ययं प्रतिषेधो नास्ति" | " | - | " | 96 |
| 42. | "क्वचिदनिणन्तस्यापि 'पूर्वपदात्संज्ञायाम्' इति णत्वं भवति" | " | - | " | 98 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 43. | "प्रातिपदिकत्वमपि कण्ड्वा-दीनाम्" | 2 | - | " | 99 |
| 44. | "नहि कार्यी निमित्तत्वेन आश्रीयते" । | " | " | - | 102 |
| 45. | द्विरुक्तप्रातिपदिकादपि तद्धितोत्पत्तिर्भवति" । | " | - | " | 103 |
| 46. | "पूर्वोऽपि वुञ् परमञं-बाधते" । | " | - | " | 104 |
| 47. | "कलापि वैशम्पायनान्तेवासि-भ्यश्चे"त्यत्रान्तेवासि-शब्देन साक्षादन्तेवासिन एव ग्रहणं न त्वन्तेवास्यन्तेवासिनः" । | " | - | " | 107 |
| 48. | "यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघातः" | " | - | " | 108 |
| 49. | "ॠवर्णान्नस्य णत्वं भवति" | " | - | " | 110 |
| 50. | "जातेरस्त्रीविषयादयोपधा-दिति ङीष् विधौ समाने-प्रवत्ति-निमित्ते अस्त्री-विषयत्वं गृह्यते" । | " | - | " | 111 |
| 51. | "प्राणिस्थादातोलजन्यतरस्या-मितिसूत्रात्सिध्मादिभ्यश्चेत्यत्रानुवृ-त्तोऽन्यतरस्यांशब्दःसमुच्चयार्थको न विकल्पार्थकः" । | " | - | " | 113 |
| 52. | "अनित्यः षिल्लक्षणो-ङीष्" | " | - | " | 117 |
| 53. | "सत्यपि सम्भवे बाधनं भवति" | " | " | - | 119 |
| 54. | "प्रत्ययलक्षणेनाव्ययसंज्ञा न भवति" । | " | - | - | 120 |
| 55. | "एकादेशशास्त्रनिमित्तं-यस्य तस्मात् परस्य विसर्गस्य-षत्वं न" । | " | - | " | 121 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 56. | "समासान्तविधिरनित्यः" | 2 | " | - | 123 |
| 57. | "नदीपौर्णमास्याग्रहाणीभ्य" इत्यनेन विधीयमानष्टच् नदी-विशेषवाचि-गङ्गादिशब्देभ्यो न भवति" । | " | - | - | 125 |
| 58. | "प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणम्" | " | " | - | 126 |
| 59. | "यदा विरोधिनां द्वन्द्वो विव-क्षितस्तदैकवद्भावः" | " | - | - | 128 |
| 60. | "नोदात्तस्वरः शुन्य-वतरति" । | " | - | " | 129 |
| 61. | "अकृतव्यूहपरिभाषाऽनित्या" | " | - | " | 133 |
| 62. | "असिद्धवदत्राभा"दित्य-सिद्धत्वमनित्यम्" | " | - | " | 134 |
| 63. | "क्वचिद्भाव्यमानोऽप्यण्-सवर्णान् गृह्णाति" । | " | " | - | 135 |
| 64. | "भाव्यमानोऽप्युकारःसव-र्णान् गृह्णाति" । | " | " | - | 136 |
| 65 | "अणुदित्सूत्रे परेण णका-रेणाणग्रहणम्" । | " | - | - | 141 |
| 66. | "अत्र ऋत इत्यङ्गविशे-षणम्" । | " | - | " | 144 |
| 67. | "स्थानिवद्भावलभ्यौत्त्व-गोत्वयोरात्वणिद्वत्त्वे न भवतः" | " | - | - | 145 |
| 68. | "गौणमुख्ययोर्मुख्ये कार्य-सम्प्रत्ययः" | " | " | - | 148 |
| 69. | "ताच्छीलिके णेऽप्यण्कृतानि-कार्याणि भवन्ति" । | " | " | - | 150 |
| 70. | सर्वो द्वन्द्वो विभाषयैकवद्-भवति" । | " | " | - | 153 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 88. | "अधिकशब्दयोगे सप्तमी-पञ्चम्याविष्येते" | 3 | - | - | 476 |
| 89. | "जस्शसोर्विषयेऽप्यष्टन-आत्वं भवति" | " | " | " | 176 |
| 90. | "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानितिपरिभाषाऽनित्या" | " | " | – | 178 |
| 91. | "नहि कार्यी निमित्तत्वेना-श्रीयते इति परिभाषाऽनित्या" | " | " | - | 179 |
| 92. | "असिद्धं बहिरङ्गमन्त रङ्गे" | " | " | - | 180 |
| 93. | "इयम् (असिद्धपरिभाषा) त्रिपाद्यां प्रवर्तते" | " | - | " | 180 |
| 94. | "स्थानित्वेन निमित्तत्व-मिको न बाध्यते" | " | - | " | 181 |
| 95. | "लक्ष्ये लक्षणस्य सकृदेव-प्रवृत्तिः" | " | " | " | 184 |
| 96. | "भवत्यहीवत्यादौ वत्वम्" | " | - | " | 186 |
| 97. | "अन्यत्र प्रादुःशब्दस्यो-पसर्गसमुदायरूपत्वेऽप्युपसर्ग-कार्यं न भवति" | " | - | " | 187 |
| 98. | "अन्तवद्भावेन पदान्तरेफस्य न विसर्गः" | " | - | " | 187 |
| 99. | "पचादिराकृतिगणः" | " | - | " | 188 |
| 100. | "सन्निपातपरिभाषाऽनित्या" | " | - | " | 189 |
| 101. | "अयोगवाहानां प्रत्याहारेषु सामान्येनोपदेशः" | " | - | " | 192 |
| 102. | "प्रकृतिवदनुकरणं भवति" | " | - | " | 193 |
| 103. | "कर्तृकर्मणोःकृती"ति षष्ठी अनित्या" |  | - | " | 194 |
| 104. | "मतिबुद्धीतिसूत्रविहितो-वर्तमानार्थक- क्तप्रत्ययो भूतार्थकक्तप्रत्ययस्य बाधको न" | " | - | " | 195 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 138. | "इत्संज्ञायां पूर्वत्रासिद्धत्वं-नाश्रीयते" | 3 | - | " | 244 |
| 139. | "कार्यमनुभवन् हि कार्यी-निमित्ततया नाश्रीयते" | " | " | - | 245 |
| | (क)."नहि कार्यी निमित्तत्वेनाश्रीयते' | | " | - | 247 |
| 140. | "वर्णाश्रये प्रत्ययलोपलक्षण-प्रतिषेधः" | " | " | - | 247 |
| 141. | "अभ्यर्हितं पूर्वमित्यनित्यम्" | " | - | " | 249 |
| 142. | "यथोद्देश्यं संज्ञापरिभाषम्" | " | " | - | 249 |
| 143. | "अनित्योऽयं गुणेन निषेधः" | " | - | " | 251 |
| 144. | "न वर्णग्रहणेषु" | " | " | - | 253 |
| 145. | "तुल्यपर्यायस्तु नेह गृह्यते" | " | - | " | 255 |
| | (क) "संपूर्वकस्य क्वचिदभूषणेऽपि सुट्" | " | - | " | 255 |
| 146. | "लुग्विकरणाऽलुग्विकरण-योरलुग्विकरणस्यैव ग्रहणम्" | " | " | - | 256 |
| 147. | "दीर्घादिति तुग् दीर्घस्य न तु छस्य" | " | - | " | 259 |
| 148. | "अनित्यमागमशासनम्" | " | | - | 260 |
| 149 | "निमित्ताभावे नैमित्तिकस्या-प्यभावो भवति" | " | " | - | 261 |
| 150. | "लिङ्गद्रव्यतौल्येऽपि वति-रस्ति" | " | " | | 262 |
| 151. | "निमित्तकार्यं न तन्निमि-त्तस्य" | " | " | - | 263 |
| 152. | "हितयोगे षष्ठी अस्ति" | " | - | " | 263 |
| 153. | "निमित्तकार्यं न तन्निमित्तस्य" | " | " | - | 264 |
| 154. | "अनेकार्था अपि धातवः" | " | - | " | 265 |
| 155. | "इरितामित्संज्ञाकार्यं न" | 4 | - | " | 273 |
| 156. | "धातुमात्रात् क्यब्भवति" | " | - | " | 274 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 157. | "कार्यमनुभवन्हि कार्यीनिमित्ततया नाश्रीयते" | 4 | " | - | 275 |
| 158. | "अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" | " | " | - | 277 |
| 159. | "लण् सूत्रेऽकार इत्" | " | - | - | 277 |
| 160. | "प्रभृत्यर्थयोगे पञ्चमी-भवति" | " | - | " | 286 |
| 161. | "प्रथमापि कारकविभक्तिः" | " | - | | 288 |
| 162. | "यदुपाधेर्विभाषा तदुपाधेरेव यस्य विभाषेति इट्प्रतिषेधः" | " | - | - | 289 |
| 163. | "चुटू" इत्तीत्संज्ञाविधिरनित्यः" | " | - | " | 290 |
| 164. | "व्यपदेशिवद्भावोऽप्रातिपदिकेन" | | " | " | 292 |
| 165. | "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" | " | " | - | 294 |
| 166. | "न कर्माधिक्ये प्रथमा भवति" | " | - | " | 296 |
| 167. | "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति-परिभाषाऽनित्या" | | " | - | 297 |
| 168. | "सनाद्यन्तानामुपदेशोऽस्ति" | " | - | " | 298 |
| 169. | "अव्ययानां भमात्रे टिलोपोऽनित्यः" | | " | - | 299 |
| 170. | "समुदायस्य संयोगसंज्ञा" | " | - | " | 300 |
| 171. | "आर्धधातुक इति-विषयसप्तमी" | " | - | - | 300 |
| 172. | "नानन्त्यस्य रुर्भवति" | " | - | " | 302 |
| 173. | "पूर्वत्रासिद्ध"मित्यधिकारः | " | - | " | 303 |
| 174. | "स्त्रीप्रत्ययप्रकरणे तदन्तविधिर्भवति" | " | - | " | 305 |
| 175. | "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" | " | " | - | 308 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 227. | "परस्य यणः पूर्वं संप्रसारणं न पूर्वस्य" | " | - | " | 394 |
| 228. | "भवत्यव्ययीभावात् परस्य-सुपो लुक्" | " | - | " | 395 |
| 229. | "ताच्छीलिकेषु वासरूप-विधिर्नास्ति" | " | " | - | 396 |
| 230. | "यदागमास्तद्गुणीभूता-स्तद्ग्रहणेन गृह्यन्ते" | " | " | - | 400 |
| 231. | "पूर्वोत्तरपदनिमित्त-कार्यात्पूर्वमन्तरङ्गोऽप्येका-देशो न" | " | " | - | 401 |
| 232. | "अहमनित्यम्" | " | - | " | 403 |
| 233. | "न सर्वे धातवोऽनेकार्थाः" | " | - | " | 405 |
| 234. | "अनेकार्थोऽपि धातु र्न सर्वार्थः" | " | - | " | 405 |
| 235. | "अन्तरङ्गानपि विधीन्-बहिरङ्गो लुग्बाधते" | " | " | - | 406 |
| 236. | "सर्वविधिभ्यो लोपविधि-र्बलवान्" | " | " | - | 409 |
| 237. | "पर्जन्यवल्लक्षणप्रवृत्तिः" | " | " | - | 411 |
| 238. | "अगुणवचनेभ्योऽप्यजादी-प्रत्ययौ भवतः" | " | - | " | 414 |
| 239. | "स्वरविधौ व्यञ्जनमविद्यमान-वत्" | " | " | - | 416 |
| 240. | "यत्रोर्ध्वं प्रकृतेस्तल्लक्षणो-विशेषस्तत्र वृद्धो यूनेत्याद्ये-कशेषः" | " | - | " | 417 |
| 241. | "पचादिराकृतिगणः" | " | - | " | 418 |
| 242. | "प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणम्ः" | " | " | - | 419 |
| 243. | "पर्यायेणानेकस्वरा न भवन्ति" | " | - | " | 420 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 244. | "वत्वन्तस्य संख्याकार्यं- भवति" | " | - | " | 422 |
| 245: | "इह शास्त्रे व्यवस्थित- विभाषा भवति" | " | " | - | 422 |
| 246. | "इतः प्राचीनानां समासानां नित्यत्वम्" | " | - | " | 425 |
| 247. | "कृत्रिमाकृत्रिमयोःकृत्रिमे कार्यसम्प्रत्ययः" | " | " | - | 425 |
| 248. | "गुणेने"ति षष्ठीसमासनिषेधो लोकप्रसिद्धेन शुक्लादिना न तु वैशेषिकसिद्धैर्गुणैः संख्या- परिमाणबुद्धिसुखादिभिरपि" | " | - | " | 428 |
| 247. | "येन नाव्यवधानं तेन व्यव- हितेऽपि वचनप्रामाण्यात्" | " | " | - | 429 |
| 250. | "आकारान्तधातुग्रहणे लक्षण- प्रतिपदोक्तपरिभाषा नाश्रीयते" | " | - | " | 430 |
| 251. | "स्तोः श्चुनाश्चु"रित्यत्र- निमित्तकार्यिणोर्यथासंख्यमनु- देशो न" | " | - | " | 433 |
| 252. | "त्यदादीनाम" इत्यत्र द्विपर्यन्तास्त्य- दादयः, ततः परे युष्मदादयः" | " | - | " | 433 |
| 253. | "अन्यत्र श्वनुग्रहणे तदादि- विधिर्भवति" | " | - | " | 436 |
| 254. | "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" | " | - | " | 437 |
| 255. | "कालः संख्या च न परिमाणम्" | " | - | " | 442 |
| 256. | "अनुबन्धलक्षणे स्वरे प्रत्यय- लक्षणं न भवति" | " | - | " | 445 |
| 257. | "क्वचिदिह स्वरविधौ प्रत्यय- लोपलक्षणं न भवति" | " | - | " | 445 |
| 258. | "सनाद्यन्तानामुपदेशपाठो- नास्ति" | " | - | " | 446 |

| क्रम सं. | ज्ञाप्यम् | अ. | प.रू.व. | प.व्य.व. | पृ. |
|---|---|---|---|---|---|
| 259. | "ग्रहणवता प्रातिपदिकेन-तदन्तविधिर्नास्ति," | 5 | " | - | 449 |
| 260. | "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" | " | " | - | 451 |
| 261. | "व्यक्तिः पदार्थः" | " | " | - | 453 |
| 262. | "अन्तोदात्तादित्यस्य स्वाङ्-गाच्चेति सूत्रेऽनुवृत्तिर्नास्ती"ति | " | - | " | 454 |
| 263. | "अतश्चे"त्यत्र तदन्तविधि र्नास्ति" | " | - | " | 454 |
| 264. | "समर्थाधिकारेऽपि न सुबन्तात् प्रत्ययः" | " | - | " | 456 |
| 265. | "संप्रसारणाच्चे"ति-भवत्पूर्वरूपं दीर्घात्मकं न" | " | - | " | 457 |
| 266. | "लादेशेषु वासरूपविधि-र्नास्ति" | " | " | - | 457 |
| 267. | "क्वचिदपवादविषयेऽ-प्युत्सर्गोऽभिनिविशते" | 6 | " | - | 459 |
| 268. | "अभ्यासविकारेषु बाध्य-बाधकभावो नास्ति" | " | " | - | 461 |
| 269. | "तदेकदेशभूतस्तद्ग्रहणेन गृह्यते" | " | " | - | 464 |
| 270. | "समर्थाधिकारेऽपि न सुबन्तात् प्रत्ययः" | " | - | " | 465 |
| 271. | "वृद्धेर्लोपो बलीयान्" | " | - | " | 467 |
| 272. | "अघशब्दाच्छन्दसि परेच्छायां-क्यच्" | " | - | " | 470 |
| 273. | "सामान्यातिदेशे विशेषा-नतिदेशः" | " | " | - | 472 |
| 274. | "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" | " | " | - | 475 |
| 275. | "साम्प्रतिकाभावे भूतपूर्वगतिः" | " | " | - | 477 |
| 276. | "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" | " | " | - | 480 |

